प्रशस्तानि साधनानि, तेभ्य. सन्यास. श्रेयान् पर. प्रशस्त , १६५० प्रजापतिमवम् — सत्यतपोदमादिषु परमेषु साधनेषु श्रेष्ठ परम साधन सन्यास., १६५१ आदित्यपुरुष' ब्रह्म, आदित्यकृतात्पर्जन्यात् अन्नलाभात् प्राणधारण तेन च ब्रह्मविद्यापर्यन्तपर्यवसान, परमपुरुषज्ञानादेव मृत्युमुक्ति , प्रणवोपासना, विद्वान् सन्यासी यज्ञरूप इत्युपासना

## नारायणोपनिषत्समाप्ता ।

---

## मैत्रायण्युपनिषत्

### ( पृ १६५३–१६६८ )

**प्रथम प्रपाठकः— ( पृ १६५३–१६५४ )**

१६५३ चयन ब्रह्माराधन, सप्रणवात्मोपासनाविधिः,

**बृहद्रथोपाख्यानम्**

( १–६ प्रपाठकान्तम् )

बृहद्रथस्य वनाश्रमस्वीकार , गुरुशाकायन्यदर्शन, आत्मज्ञानवरप्रार्थना, कामोपभोगनिन्दा शरीरदोषोपवर्णनसहिता चक्रवर्तिनां राज्ञा गन्धर्वासुरादीना महार्णवपर्वतादीना वा क्षयिष्णुत्वविचारोद्बलिता, ससारदोषदर्शन, गुर्वभिगमन ससारतितीर्षया

**द्वितीय' प्रपाठक — ( पृ १६५४–१६५५ )**

१६५४ सप्रसादः तमोनाशक ज्योति'स्वभाव आत्मा, अचेनतस्य शरीरस्य प्रचोदयिता अज' प्रपञ्चातीत आत्मा, अचेतनस्य शरीरस्य प्रचोदयिता पुरुषसज्ञः चेतामात्र विश्वाख्य प्रजापति क्षेत्रज्ञः सकल्पाध्यवसायाभिमानलिङ्ग आत्मा, प्रजापतिः स्रष्टा सृष्टप्रजासु प्रविष्ट प्राणरूपेण वैश्वानराग्निरूपो भोक्ता शरीररथस्थो रथी आत्मा, १६५५ सितासितकर्मफलैरनभिभूतो गुणावृत' ऋतभुक् आत्मा

**तृतीयः प्रपाठकः—( पृ १६५५–१६५६ )**

१६५५ नानात्वमापन्नः प्राकृतगुणैः कर्मफलैरभिभूत. शरीरी ससारी अन्तःस्थपरमात्मानभिज्ञः भूतात्मा, चतुर्जाल नानात्व, कर्मफलानभिभूतश्चिदात्मा, राजसतामसदोषपूर्ण घृणागोचर शरीरम्.

**चतुर्थ प्रपाठक —( पृ १६५६–१६५७ )**

१६५६ जीवस्य भूतात्मन. अविद्यारूपो मायामयः सदसत्कर्मफलमयो बन्ध , बन्धक्षयहेतवः आत्मविद्यासाधनानि वेदविद्या स्वधर्माचरण स्वाश्रमानुरूप तपश्चेति, तपोविद्याचिन्तनरूपसाधनत्रयवती ब्रह्मोपासना मुक्तिसाधनम्, अग्निवाय्वादित्यकालप्राणान्नब्रह्मरुद्रविष्ण्वादिरूपाणा ध्येयानां ब्रह्मैकरूपत्वम्

**पञ्चमः प्रपाठक.— ( पृ १६५७ )**

१६५७ परमात्मन कौत्सायनी स्तुति', सृष्टि तमोरजःसत्त्वमितिक्रमेण, ब्रह्मविष्णुरुद्राणां रूपैरुद्भूतः भूताधिप आत्मा.

**षष्ठ प्रपाठक —( पृ १६५८–१६६६ )**

१६५८ आत्मा द्विधाभूत. अन्तः प्राण. बहिरादित्य इति, प्रणवव्याहृतिसावित्रीभिरुपासनमात्मनः, मूर्तामूर्ते ब्रह्म, अश्वत्थनामा ब्रह्मवृक्षः, आदित्यहृदययोः स्थितः पुरुष , प्रणवद्वारा उपास्याः स्वनवत्यादय आत्मनस्तनव , व्याहृत्युपासना, प्रजापतेः व्याहृतिरूपतनोः अवयवाः, प्रजापते सूर्यरूपा तनू', १६५९ सावित्रीव्याख्यान, भर्गादित्यसवितृपवनाप्शब्दाना निर्वचनानि, द्वैतमद्वैत च आत्मनः स्वरूपम्, परमात्मा ईशानप्रजापतिविष्ण्वादिरूप., आत्मज्ञानाङ्ग सन्यासविधिः, आदित्य. प्राणरूप', आत्मोपासकस्य भोजनविधिः, भोक्तृभोज्यरूप विश्वविभागः, आत्मयाजी आत्मयज्ञश्च, १६६० अन्ने ब्रह्मदृष्टिः, अन्नमहिमा, काल. आदित्यमूलक. आदित्यात्मको वा सवत्सररूपः ब्रह्मत्वेनोपास्य., १६६१ अग्न्यादित्यहृदयेषु एकत्वेनोपास्य अनन्त आकाशात्मा परमात्मा ब्रह्म, षडङ्गो योगः ब्रह्मदर्शनोपायः, आत्मदर्शनावस्था, सुषुम्नाख्यया नाड्या ऊर्ध्वोत्क्रमणविधि. कैवल्यफलक., द्वे ब्रह्मणी शब्दब्रह्म पर ब्रह्म च विष्णुसज्ञितम्, १६६२ ब्रह्मात्मदर्शन, मुक्तिः, योगः, आत्मरूपाग्नौ होम., विष्णोः परम पदम्, हृदन्तर्ज्योति. आत्मा, चित्तलय., १६६३ ब्रह्म-

ज्ञानकारण योगविशेष , योगाधिकारः, ब्रह्मविद्याधिकार', ब्रह्मज्ञानसाधन, बद्धलक्षण, मुक्तिलक्षण, मनः स्वरूप, ब्रह्मलोकमार्ग , इन्द्रियाणा उद्गमहेतु. नियन्ता च आत्मा, इन्द्रियबुद्ध्यादीनि आत्मलिङ्गानि, १६६४ सर्वलोकभतवेदादीनां उद्भवस्थान आत्मा, सवत्सरप्राणादिरूपै चित्याग्न्युपासना, अग्नित्रयोपासना, जाठराग्न्युपासना, चित्तशुद्धि', समाधि , ब्रह्मविद्याङ्गभूता अग्न्युपासना; १६६५ अग्निवाय्वादित्यब्रह्मणामुपस्थान, आदित्ये ब्रह्मोपासना, अञ्ज्योति.प्रणवव्याहृतिरूप ब्रह्म; शान्तसमृद्धे द्वे ब्रह्मरूपे, पुण्यलोकसाधनानि अग्निहोत्रादीनि कर्माणि, अपरिमिततजस उपासना प्रणवसहिता, यज्ञेन अन्नप्राप्ति', १६६६ उपासनायुक्त ब्रह्मज्ञानपर्यवसायि अग्निहोत्र, अच्युतरूप महादेवरूप ब्रह्म.

सप्तम' प्रपाठकः— ( पृ. १६६६–१६६८ )

१६६६ सवितरि परमात्मोपासना, सत्यनभ स्थः विश्वरूप आत्मा, १६६७ ज्ञानोपसर्गा —नास्तिकप्रकाशतस्करादिभिः ससर्ग. परिहार्य , बृहस्पतिप्रणीत नास्तिकशास्त्र, विद्याऽविद्याभेदः, अवैदिकाध्ययननिषेध', परतेजोरूपस्य ब्रह्मणः सप्रणवोपासना, चाक्षुषपुरुषस्य सपत्नीकस्य हृदये स्थितिः, अवस्थात्रयातीत तुरीय ब्रह्म, द्वैत अद्वैत च ब्रह्म.

## मैत्रायण्युपनिषत्समाप्ता ।

---

## जाबालोपनिषत्

( पृ १६६९–१६७२ )

१६६९ कुरुक्षेत्रमहिमा, सर्वे गम्यमान स्थान कुरुक्षेत्रत्वेनोपास्य, अविमुक्ते कुरुक्षेत्रे तारकब्रह्मोपदेशः रुद्रकृतः मरणकाले, अविमुक्तक्षेत्रनिषेवणविधिः मुक्त्यर्थम्; अविमुक्तक्षेत्रे वाराणस्यां आत्मोपासनविधिः, वाराणसीपदनिरुक्तिः; शतरुद्रियजपविधिः; सन्यासविधिः वैराग्यकाले, सन्यासप्रयोगविधिः; १६७० यज्ञोपवीतत्यागविधिः सन्यासिनां, मरणविधिः पञ्चविधाभि , परिव्राजकधर्माः; १६७१ परमहंसस्वरूपम्; देवतात्मभावोपासना.

## जाबालोपनिषत्समाप्ता ।

---

## कैवल्योपनिषत्

( पृ १६७३–१६७६ )

परमेष्ठिप्रोक्ता ब्रह्मविद्या

१६७३ श्रद्धा भक्ति. ध्यान सन्यासश्च मोक्षसाधनम्; ध्येय' शिवः उमासहित हृदये, परमात्मनः शिवस्य ब्रह्मेन्द्रादिदेवरूपता, परमात्मज्ञान मुक्तिसाधन, प्रणवस्य ध्यानसाधनता, १६७५ जाग्रत्स्वप्नसुषुप्तिजन्मान्तररूपावस्थायुक्तः जीवः, जीव एव अखण्डबोधाश्रयः पुरत्रयलयाधार., प्राणादीनामाकाशादीना च आत्मनः सृष्टिः, मोक्षसाधन जीवपरमात्मनोरभेदज्ञानम्, १६७६ शतरुद्रीयपठनविधिः पापनाशफलः.

## कैवल्योपनिषत्समाप्ता ।

---

## अथर्वशिरउपनिषत्

( पृ. १६७७–१६८१ )

१६७७ रुद्रः सर्वरूप' सर्वतर्पकः सर्वदेवध्येयः, रुद्रज्ञान सर्वदेवसर्ववेदज्ञानरूपम्; १६७८ रुद्रनमस्कारा., रुद्रः सर्वदेवरूपः, विश्वरूपः, सूक्ष्मः पुरुष., महाग्रासः, हृदयस्थः देवः; १६७९ ओंकारः, प्रणवः, सर्वव्यापी, अनन्तः, तार, शुक्ल, सूक्ष्म, वैद्युत, पर ब्रह्म, एकः, रुद्रः, ईशानः, भगवान् महेश्वरः, इति सज्ञाना निरुक्तिसहित रुद्रचरितम्; रुद्रज्ञानात् पशुपाशमोक्षः; १६८० प्रणवमात्राचतुष्टयफलानि, हृदये देवदर्शन तृष्णादिच्छेदेन; भस्मधारणविधिः, १६८१ सर्वव्यापी

नागधारी विश्वस्रष्टा रुद्र. नमस्कार्यः, शिरः देवकोश. प्राणरक्षित , सर्वगोप्ता सहस्रपादैकमूर्धा परः रुद्रः, काल्व्यापकात् रुद्रात् सृष्टि., सत्य परम तपः, अब्ज्योतिर्व्याहृतिप्रणवरूप ब्रह्म, अथर्वशिरसः अध्ययनविधिः फलनिरूपणसहितः

## अथर्वशिरउपनिषत्समाप्ता ।

---

# अथर्वशिखोपनिषत्

( पृ. १६८२–१६८३ )

**अथर्वप्रोक्ता प्रणवोपासना**

१६८२ चतुष्पात् अक्षर प्रणवात्मक पर ब्रह्म, मात्राचतुष्टयस्वरूप, प्रणवोच्चारविधि', प्रणवे तारविष्णुब्रह्मप्रकाशमहादेवरूपतायाः सधानम् , तुरीय ब्रह्म, ध्याता ध्यान ध्येयश्च, शिवध्यानविधिः, मुक्तिफलम्.

## अथर्वशिखोपनिषत्समाप्ता ।

---

# बृहदारण्यकोपनिषत्

## प्रथमोऽध्यायः

( आश्वमेधिकाश्वविषयकोपासना )

दृश्यविश्वमेवासौ अश्वः, महिमाख्यौ ग्रहौ अहोरात्रिश्च, तस्य देवादिसम्बन्धिरूपाणि बन्धनस्थानयोनी च

ॐ उषा वा अश्वस्य मेध्यस्य शिरः । सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर आत्माऽश्वस्य मेध्यस्य । द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं दिशः पार्श्वे अवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मांसानि । ऊवध्यं सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमानि । उद्यन्पूर्वार्धो निम्लोचञ्जघनार्धः । यद्विजृम्भते तद्विद्योतते । यद्विधूनुते तत्स्तनयति । यन्मेहति तद्वर्षति । वागेवास्य वाक् ॥

( १ ) ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्यः । 'उषा वा अश्वस्य' इत्येवमाद्या वाजसनेयिब्राह्मणोपनिषत् । तस्या इयमल्पग्रन्था वृत्तिः आरभ्यते, संसारव्याविवृत्सुभ्यः संसारहेतुनिवृत्तिसाधनब्रह्मात्मैकत्वविद्याप्रतिपत्तये । सेयं ब्रह्मविद्या उपनिषच्छब्दवाच्या, तत्पराणां सहेतोः संसारस्यात्यन्तावसादनात् । उपनिपूर्वस्य सदेस्तदर्थत्वात् । तादर्थ्याद्ग्रन्थोऽप्युपनिषदुच्यते । सेयं षडध्यायी अरण्येऽनूच्यमानत्वादारण्यकम् । बृहत्त्वात् परिमाणतो बृहदारण्यकम् । तस्यास्य कर्मकाण्डेन सम्बन्धोऽभिधीयते । सर्वोऽप्ययं वेदः प्रत्यक्षानुमानाभ्यामनवगतेष्टानिष्टप्राप्तिपरिहारोपायप्रकाशनपरः, सर्वपुरुषाणां निसर्गत एव तत्प्राप्तिपरिहारयोरिष्टत्वात् । दृष्टविषये चेष्टानिष्टप्राप्तिपरिहारोपायज्ञानस्य प्रत्यक्षानुमानाभ्यामेव सिद्धत्वात् नागमान्वेषणा । न चासति जन्मान्तरसम्बन्ध्यात्मास्तित्वविज्ञाने जन्मान्तरेष्टानिष्टप्राप्तिपरिहारेच्छा स्यात् । स्वभाववादिदर्शनात् । तस्मात् जन्मान्तरसम्बन्ध्यात्मास्तित्वे जन्मान्तरेष्टानिष्टप्राप्तिपरिहारोपायविशेषे च शास्त्रं प्रवर्तते । 'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके' इत्युपक्रम्य 'अस्तीत्येवोपलब्धव्यः' इत्येवमादिनिर्णयदर्शनात् । 'यथा च मरणं प्राप्य' इत्युपक्रम्य 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥' इति च । 'स्वयं ज्योतिः' इत्युपक्रम्य 'तं विद्याकर्मणी समन्वारभेते' 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' इति च । 'ज्ञपयिष्यामि' इत्युपक्रम्य 'विज्ञानमयः' इति च व्यतिरिक्तात्मास्तित्वम् । तत्प्रत्यक्षविषयमेवेति चेत् । न । वादिविप्रतिपत्तिदर्शनात् । न हि देहान्तरसम्बन्धिन आत्मनः प्रत्यक्षेणास्तित्वविज्ञाने लोकायतिका बौद्धाश्च नः प्रतिकूलाः स्युः नास्त्यात्मेति वदन्तः । न हि घटादौ प्रत्यक्षविषये कश्चिद्विप्रतिपद्यते, नास्ति घट इति । स्थाण्वादौ पुरुषादिदर्शनान्नेति चेत् । न । निरूपिते अभावात् । न हि प्रत्यक्षेण निरूपिते स्थाण्वादौ विप्रतिपत्तिर्भवति । वैनाशिकास्त्वहमिति प्रत्यये जायमानेऽपि देहान्तरव्यतिरिक्तस्य नास्तित्वमेव प्रतिजानते । तस्मात्प्रत्यक्षविषयवैलक्षण्यात् प्रत्यक्षात्मास्तित्वसिद्धिः । तथानुमानादपि । श्रुत्या आत्मास्तित्वे लिङ्गस्य दर्शितत्वात् लिङ्गस्य च प्रत्यक्षविषयत्वात् नेति चेत् । न । जन्मान्तरसम्बन्धस्याग्रहणात् । आगमेन त्वात्मास्तित्वेऽवगते वेदप्रदर्शितलौकिकलिङ्गविशेषैश्च, तदनुसारिणो मीमांसकास्तार्किकाश्चाहंप्रत्ययलिङ्गानि च वैदिकान्येव स्वमतिप्रभवाणीति कल्पयन्तो वदन्ति प्रत्यक्षश्चानुमेयश्चात्मेति ।

(१) बृह. १।१।१; शत. १०।६।४।१। द्रष्टव्य. जघनार्धः ( अपरार्ध. ); मध्य. धूनुते ( धूनते ); विज्ञान. १।४।१०, ३।४।२६

सर्वथाप्ययमात्मा देहान्तरसम्बन्धीत्येव प्रतिपत्तुर्देहान्तरगतेष्टानिष्टप्राप्तिपरिहारोपायविशेषार्थिनस्तद्विशेषज्ञापनाय कर्मकाण्डमारब्धम्। न त्वात्मन इष्टानिष्टप्राप्तिपरिहारेच्छाकारणमात्मविषयमज्ञानं कर्तृभोक्तृस्वरूपाभिमानलक्षणं तद्विपरीतब्रह्मात्मस्वरूपविज्ञानेनापनीतम्। यावद्धि तन्नापनीयते, तावदयं कर्मफलरागद्वेषादिस्वाभाविकदोषप्रयुक्तः शास्त्रविहितप्रतिषिद्धातिक्रमेणापि प्रवर्तमानो मनोवाक्कायैर्दृष्टादृष्टानिष्टसाधनान्यधर्मसंज्ञकानि कर्माण्युपचिनोति बाहुल्येन, स्वाभाविकदोषबलीयस्त्वात्। ततः स्थावरान्ताऽधोगतिः। कदाचिच्छास्त्रकृतसंस्कारबलीयस्त्वम्। ततो मनआदिभिरिष्टसाधनं बाहुल्येनोपचिनोति धर्माख्यम्। तद्द्विविधम् — ज्ञानपूर्वकं केवलं च। तत्र केवलं पितृलोकादिप्राप्तिफलम्। ज्ञानपूर्वकं देवलोकादिब्रह्मलोकान्तप्राप्तिफलम्। तथा च शास्त्रम् —'आत्मयाजी श्रेयान्देवयाजिनः' इत्यादि। स्मृतिश्च 'द्विविधं कर्म वैदिकम्' इत्याद्या। साम्ये च धर्माधर्मयोर्मनुष्यत्वप्राप्तिः। एवं ब्रह्माद्या स्थावरान्ता स्वाभाविकाविद्यादिदोषवती धर्माधर्मसाधनकृता संसारगतिर्नामरूपकर्माश्रया। तदेवेदं व्याकृतं साध्यसाधनरूपं जगत् प्रागुत्पत्तेरव्याकृतमासीत्। स एष बीजाङ्कुरादिवदविद्याकृतः संसारः आत्मनि क्रियाकारकफलाध्यारोपलक्षणोऽनादिरनन्तोऽनर्थ इत्येतस्माद्विरक्तस्याविद्यानिवृत्तये तद्विपरीतब्रह्मविद्याप्रतिपत्त्यर्थोपनिषदारभ्यते।

अस्य त्वश्वमेधकर्मसम्बन्धिनो विज्ञानस्य प्रयोजनम् —येषामश्वमेधे नाधिकारः, तेषामस्मादेव विज्ञानात्तत्फलप्राप्तिः, 'विद्यया वा कर्मणा वा' 'तद्धैतल्लोकजिदेव' इत्येवमादिश्रुतिभ्यः। कर्मविषयत्वमेव विज्ञानस्येति चेत्। न। 'योऽश्वमेधेन यजते य उ चैनमेवं वेद' इति विकल्पश्रुतेः। विद्याप्रकरणे चाम्नानात्, कर्मान्तरे च संपादनदर्शनात्, विज्ञानात्तत्फलप्राप्तिरस्तीत्यवगम्यते। सर्वेषां च कर्मणां परः कर्माश्वमेधः, समष्टिव्यष्टिप्राप्तिफलत्वात्। तस्य चेह ब्रह्मविद्याप्रारम्भे आम्नानं सर्वकर्मणां संसारविषयत्वप्रदर्शनार्थम्। तथा च दर्शयिष्यति फलमशनायामृत्युभावम्। न नित्यानां संसारविषयफलत्वमिति चेत्। न। सर्वकर्मफलोपसंहारश्रुतेः। सर्वं हि पत्नीसंबद्धं कर्म, 'जाया मे स्यात् ...एतावान्वै कामः' इति निसर्गत एव सर्वकर्मणां काम्यत्वं दर्शयित्वा, पुत्रकर्मापरविद्यानां च 'अयं लोकः पितृलोको देवलोकः' इति फलं दर्शयित्वा त्र्यन्नात्मकतां चान्ते उपसंहरिष्यति 'त्रयं वा इदं नाम रूपं कर्म' इति सर्वकर्मणां फलं व्याकृतं संसार एवेति। इदमेव त्रयं प्रागुत्पत्तेस्तर्ह्यव्याकृतमासीत्। तदेव पुनः सर्वप्राणिकर्मवशाद्व्याक्रियते बीजादिव वृक्षः। सोऽयं व्याकृताव्याकृतरूपः संसारोऽविद्याविषयः क्रियाकारकफलात्मकतयात्मरूपत्वेनाध्यारोपितोऽविद्ययैव मूर्तामूर्ततद्वासनात्मकः। अतो विलक्षणोऽनामरूपकर्मात्मकोऽद्वयो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि क्रियाकारकफलभेदादिविपर्ययेणावभासते। अतोऽस्मात्क्रियाकारकफलभेदस्वरूपात् 'एतावदिदम्' इति साध्यसाधनरूपाद्विरक्तस्य कामादिदोषकर्मबीजभूताविद्यानिवृत्तये रज्ज्वामिव सर्पविज्ञानापनयाय ब्रह्मविद्या आरभ्यते। तत्र तावदश्वमेधविज्ञानाय 'उषा वा अश्वस्य' इत्यादि। तत्राश्वविषयमेव दर्शनमुच्यते, प्राधान्यादश्वस्य। प्राधान्यं च तन्नामाङ्कितत्वात्क्रतोः, प्राजापत्यत्वाच्च।

उषा इति, ब्राह्मो मुहूर्त उषाः। वैशब्दः स्मारणार्थः। प्रसिद्धं कालं स्मारयति। शिरः, प्राधान्यात्। शिरश्च प्रधानं शरीरावयवानाम्। अश्वस्य, मेध्यस्य मेधार्हस्य यज्ञियस्य, उषाः शिर इति सम्बन्धः। कर्माङ्गस्य पशोः संस्कर्तव्यत्वात्कालादिदृष्टयः शिरआदिषु क्षिप्यन्ते, प्राजापत्यत्वं च प्रजापतिदृष्टयध्यारोपणात्। काललोकदेवतात्वाध्यारोपणं च प्रजापतित्वकरणं पशोः, एवंरूपो हि प्रजापतिः, विष्णुत्वादिकरणमिव प्रतिमादौ। सूर्यश्चक्षुः, शिरसोऽनन्तरत्वात्सूर्याधिदैवतत्वाच्च। वातः प्राणः, वायुस्वाभाव्यात्। व्यात्तं विवृतं मुखं अग्निर्वैश्वानरः। वैश्वानर इत्यग्नेर्विशेषणम्। वैश्वानरो नामाग्निर्विवृतं मुखमित्यर्थः, मुखस्याग्निदैवतत्वात्। संवत्सर आत्मा, संवत्सरो द्वादशमासस्त्रयोदशमासो वा, आत्मा शरीरं, कालावयवानां च संवत्सरः शरीरं, शरीरं चात्मा, 'मध्यं ह्येषामङ्गानामात्मा' इति श्रुतेः। अश्वस्य मेध्यस्येति सर्वत्रानुषङ्गार्थं पुनर्वचनम्। द्यौः पृष्ठं, ऊर्ध्वत्वसामान्यात्। अन्तरिक्षमुदरं, सुषिरत्वसामान्यात्। पृथिवी पाजस्यं पादस्यं, पाजस्यमिति वर्णव्यत्ययेन, पादासनस्थानमित्यर्थः। दिशश्चतस्रोऽपि पार्श्वे,

पार्श्वेन दिशा सम्बन्धात्। पार्श्वयोर्दिशां च सख्या-वैषम्यादयुक्तमिति चेत्। न। सर्वमुखत्वोपपत्तेरश्वस्य पार्श्वाभ्यामेव सर्वदिशा सम्बन्धाददोषः। अवान्तरदिश आग्नेय्याद्या पर्शव पार्श्वास्थीनि। ऋतवोऽङ्गानि, संवत्सरावयवत्वादङ्गसाधर्म्यात्। मासाश्चार्धमासाश्च पर्वाणि सधय, सन्धिसामान्यात्। अहोरात्राणि प्रतिष्ठा., बहुवचनात्प्राजापत्यदैवत्यमानुषाणि, प्रतिष्ठाः पादा· प्रतितिष्ठत्येतैरिति। अहोरात्रैर्हि कालात्मा प्रतितिष्ठति, अश्वश्च पाद.। नक्षत्राण्यस्थीनि, शुक्लत्वसामान्यात्। नभो नभस्था मेघा, अन्तरिक्षस्योदरत्वोक्ति.। मांसानि, उदकरुधिरसेचनसामान्यात्। ऊबध्य उदरस्थमर्धजीर्णमशन सिकता, विश्लिष्टावयवत्वसामान्यात्। सिन्धवः स्यन्दनसामान्यात् नद्य. गुदा नाड्य, बहुवचनाच्च। यकृच्च क्लोमानश्च हृदयस्याधस्ताद्दक्षिणोत्तरौ मांसखण्डौ, क्लोमान इति नित्य बहुवचनमेकस्मिन्नेव, पर्वता·, काठिन्यादुच्छ्रितत्वाच्च। ओषधयश्च क्षुद्रा स्थावराः, वनस्पतयो महान्त, लोमानि केशाश्च यथा सम्भवम्। उद्यन्नुद्गच्छन्भवति सविता आ मध्याह्नात् अश्वस्य पूर्वार्ध·, नाभरू र्ध्वमित्यर्थः। निम्लोचन्नस्तं यन् आ मध्याह्नात् जघनार्धोऽपरार्ध., पूर्वापरत्वसाधर्म्यात्। यद्विजृम्भते गात्राणि विनामयति विक्षिपति, तद्विद्योतते विद्योतन, मुखघनविदारणसामान्यात्। यद्विधूनुते गात्राणि कम्पयति, तत्स्तनयति, गर्जनशब्दसामान्यात्। यन्मेहति मूत्र करोत्यश्व., तद्वर्षति वर्षण तत्, सेचनसामान्यात्। वागेव शब्द एव अस्याश्वस्य वागिति, नात्र कल्पनेत्यर्थ।

शांकर.

(२) अत्र याथामके बृहदारण्यके प्रवर्ग्योपसत्प्रतिपादकप्रथमद्वितीयाध्यायाभ्यामुपेक्ष्योत्तराध्यायगणो व्याख्यायते। यथा पुरा वा अश्वस्येत्यादिकमश्वमेधादिकर्मविषयकमेव तथापि ब्रह्मदृष्टिविधिरूपतया ब्रह्मात्मकत्वप्रतिपादनपरतया च यथाकथञ्चिद्ब्रह्मसम्बन्धित्वेन तद्व्याख्यानस्योचितत्वात्। अत एवाश्वमेधब्राह्मणादेर्ब्रह्मपरोपनिषद्भागधगतिरुपपद्यते। सर्वकर्मश्रेष्ठाश्वमेधाङ्गभूतेऽश्वे 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तर भवति' इति कर्मवीर्यवत्त्वापादिका विश्वरूपत्वोपासनोपदिश्यते। 'ब्रह्मदृष्टिरुत्कर्षात्' (ब्रसू. ४।१।५) इति सूत्रोक्तन्यायेनोत्कृष्टदृष्टेरेवापकृष्टे कर्तव्यत्वात्। अश्वस्य शिर प्रभृत्यवयवेषु कर्माङ्गभूतेष्वेवोषआदिबुद्धिः कार्या, न तूषआदौ शिरआदिबुद्धि। संवत्सरशब्देन संवत्सराभिमानी प्रजापतिर्वा विवक्षित.। पृथिवी पाजस्य, भुजान्तरमित्यर्थ.। इयमुदर इत्यग्नौ पृथिवीत्वदृष्टिदर्शनात्। अहोरात्राणि प्रतिष्ठा, पादानित्यर्थ। नभो मासानि, अस्थ्यात्मकनक्षत्रसम्पृक्तत्वात्। क्लोमान इत्येकस्मिन्व्यत्ययाद्बहुवचनम्। ओषधयश्च वनस्पतयश्च लोमानि, सूक्ष्मत्व साम्यात्। यद्विजृम्भते तद्विद्योतते, मुखव्यादानमेवान्तरप्रकाशहेतुत्वाद्विद्युत्। वागेवास्य वाक्, नात्र कल्पनापेक्षा। अस्याश्वस्य समुद्रो बन्धु। तत्र बन्धुदृष्टिः कर्तव्येत्यर्थः। तत्र हेतुमाह—समुद्रो योनिः।

* रग.

(२) श्रीमद्धनुमद्भीमम·वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नम॥

ॐ प्राणादेरीशितार परमसुखनिधिं सर्वदोषव्यपेत
मर्त्यान्तस्थ सुपूर्णं प्रकृतिपतिमज सर्वनाथ सुनित्यम्।
सर्वज्ञ सर्वशक्तिं सुरमुनिमनुजाद्यै. सदा सेव्यमान
विष्णु वन्दे सदाऽह सकलजगदनाद्यन्तमानन्ददं तम्॥

'यथा तुष्टाव लक्ष्मीश सर्गादौ चतुराननः। तथा जगाद सूर्याय याज्ञवल्क्याय सोऽब्रवीत्॥ वाजिरूपेण सूर्येण प्रोक्तं वाजसनेयकम्। कण्वाय याज्ञवल्क्योऽदात्काण्व तेन प्रकीर्तितम्॥' इति वाराहे। 'अश्वस्य रूपो ब्रह्माभूदश्वरूपाज्जनार्दनात्। तत्र संनिहितो विष्णुरश्वरूपः स्वय प्रभु.॥ तयोश्च प्रतिमा मेध्यो यतोऽश्वोऽय श्रुतौ श्रुतः। सर्वे जगत्तदङ्गेषु तस्मात्संनिहित स्मृतम्॥ तयोरङ्गेष्विद यस्माज्जगत्सर्वं प्रतिष्ठितम्॥' इति प्रध्याने। 'उच्चैःश्रवाः संनिहितो मेध्येऽश्वे तत्र केशवः। तस्मिन्निद जगत्सर्वं ब्रह्मा चोच्चैःश्रवःस्थितः॥' इति सौपर्णे। 'पर्वताः सिकताश्चैव नद्यः कूपाः सरांसि च। हविःकपालयूपाद्या देवता एव सर्वशः॥ तत्तन्नामैव नामैषा भिन्नानामभिमानतः। नामानि तान्यपि हरेः स हि सर्वगुणाधिक·॥

* शेष शांकरवत्।

इति नारदीये । 'उषा. शिरो ब्रह्मनाम तत्त्वमस्यादयोऽखिला:। सप्तम्यर्था. समुद्दिष्टा. पञ्चम्यर्थास्तथा श्रुता.॥ षष्ठ्यर्थाश्च चतुर्थ्यर्थास्तृतीयार्थाश्च सर्वश । तदैक्यवाचिवच्छब्दा अपि तद्वत्त्ववाचका. ॥ ऐक्यार्था नैव ते सर्वे भिन्नरूपा यत. सदा । ईशाङ्गवाचिनो वा स्युस्तेषामेव तदर्थत ॥ सप्तसु प्रथमा यस्मात्तत्तद्योग्यार्थता भवेत्॥' इति ब्रह्मतर्के । 'अङ्गप्रत्यङ्गशो व्याप्तो विष्णुरेव तुरङ्गमे । अतो विष्ण्वङ्गग सर्वं मेध्याङ्गस्थमुदीरितम् ॥' इति च । पुनरप्यश्वस्य मेध्यस्येति वचन कस्यचिदश्वस्यैवमासीदितीतिहासरूपेण नोच्यते किंतु सर्वमेध्यानामेवमिति ज्ञापनार्थम् । 'सर्वव्यक्तिष्वभिव्याप्त्यै तात्पर्याधिक्यवित्तये । प्रतीतानुपपत्तेरप्याभासत्वविवक्षया । पुनर्वचनमुद्दिष्ट शतशोऽपि पृथक् पृथक् ॥' इति च । 'विष्णो. पुरीषस्थानीया काठिन्यात्पृथिवी स्मृता । तत्स्थत्वात्सिकता सर्वा उवध्यस्था प्रकीर्तिता ॥ उर्व्यास्तु पादगत्वेऽपि नोवध्यत्व विरुध्यते । यतस्तदभिमानिन्यो देवता अनुकीर्तिता ॥ तासा च बहुरूपत्वादैश्वर्याच्च परेशितुः॥' इति च । 'अवान्तरदिशो विष्णोरस्थिपुच्छान्युदाहृताः। पूर्वपश्चार्धभेदेन दिश. पार्श्वे प्रकीर्तिते ॥ शिरश्च पादमूलानि पुच्छ षड्ऋतव· स्मृताः । सवत्सराभिमानी च ब्रह्मा सर्वशरीरग. ॥ क्लोमानश्च यकृच्चैव मांसौ गीर्यभिमानिन. । आन्त्रेषु नद्य. सर्वाश्च सोऽय विष्णुः सनातन. ॥' इति च । नभोभिमानी विघ्नेशो विष्णोर्मांसाश्रित· सदा । अन्तरिक्षाभिमानी च तत्सूनुरुदरे स्थित. ॥' इति च ।

मध्व

**अहर्वा अश्व पुरस्तान्महिमाऽन्वजायत । तस्य पूर्वे समुद्रे योनि । रात्रिरेन पश्चान्महिमाऽन्वजायत । तस्यापरे समुद्रे योनि । एतौ वा अश्व महिमानावभित सबभूवतु । हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वाऽसुरानश्वो मनुष्यान् । समुद्र एवास्य बन्धुः समुद्रो योनि ॥**

(१) अहर्वा इति । सौवर्णराजतौ महिमाख्यौ ग्रहावश्वस्याग्रत· पृष्ठतश्च स्थाप्येते, तद्विषयमिद दर्शनम्। अह. सौवर्णो ग्रहः, दीप्तिसामान्यात्, वै । अहरश्वं पुरस्तान्महिमाऽन्वजायतेति कथम् ? अश्वस्य प्रजापतित्वात् । प्रजापतिर्ह्यादित्यादिलक्षणोऽह्ना लक्ष्यते । अश्व लक्षयित्वाऽजायत सौवर्णो महिमा ग्रह', वृक्षमनु विद्योतते विद्युदिति यद्वत् । तस्य ग्रहस्य पूर्वे पूर्व', समुद्रे समुद्र., योनि., विभक्तिव्यत्ययेन । योनिरित्यासादनस्थानम् । तथा रात्री राजतो ग्रह', वर्णसामान्याज्जघन्यत्वसामान्याद्वा । एनमश्व पश्चात्पृष्ठतो महिमा अन्वजायत, तस्यापरे समुद्रे योनि । महिमा महत्त्वात्, अश्वस्य हि विभूतिरेषा, यत्सौवर्णो राजतश्च ग्रहावुभयतः स्थाप्येते । तावेतौ वै महिमानौ महिमाख्यौ ग्रहौ, अश्वमभित सबभूवतु उक्तलक्षणावेव सभूतौ । इत्थमसावश्वो महत्त्वयुक्त इति पुनर्वचन स्तुत्यर्थम् । तथा च हयो भूत्वेत्यादि स्तुत्यर्थमेव । हयो हिनोतेर्गतिकर्मण, विशिष्टगतिरित्यर्थ. । जातिविशेषो वा, देवानवहत् देवत्वमगमयत्, प्रजापतित्वात् । देवाना वा वोढाऽभवत् । ननु निन्द्यैव वाहनत्वम् । नैष दोषः । वाहनत्व स्वाभाविकमश्वस्य, स्वाभाविकत्वादुच्छ्रायप्राप्तिर्देवादिसबन्धोऽश्वस्य इति स्तुतिरेवैषा । तथा वाज्यादयो जातिविशेषा । वाजी भूत्वा गन्धर्वानवहदित्यनुषङ्ग. । तथाऽर्वा भूत्वाऽसुरान् । अश्वो भूत्वा मनुष्यान् । समुद्र एवेति परमात्मा, बन्धुर्बन्धन, बध्यतेऽस्मिन्निति । समुद्रो योनि. कारणमुत्पत्तिं प्रति । एवमसौ शुद्धयोनि· शुद्धस्थितिरिति स्तूयते । 'अप्सुयोनिर्वा अश्वः' इति श्रुते प्रसिद्ध एव वा समुद्रो योनि. ।

शाकर.

(२) अस्याश्वस्य समुद्रो बन्धु । तत्र बन्धुदृष्टिः कर्तव्येत्यर्थ. । तत्र हेतुमाह—समुद्रो योनि । उच्चै श्रवसोऽश्वस्य वारुणाश्वाना च तत्रोत्पत्तिदर्शनात्समुद्रो योनित्वेन ध्यातव्यः । * रग.

(३) 'अश्वपूर्वापरौ होम्यौ महिमानौ ग्रहौ स्मृतौ । अहोरात्राभिमन्तारौ तयोरप्यभिमानिनौ । कामश्चाथ रतिश्चैव विष्णुब्रह्मशरीरजौ। समुद्रेकात्समुद्रस्तु विष्णुः पूर्व उदाहृत· । उपचारेण तूद्रेकादपरश्च चतुर्मुखः । स विष्णुर्हयनामा सन्देववाहेषु सस्थितः । वाजिनामा तु

(१) बृउ १।१।२, शब्रा १०।६।४।१, रग वा अश्व महिमानावभित ( वै महिमानावश्वमभित ).

* शेष शाकरवत् ।

गान्धर्वेष्वर्वनामाऽसुरेषु च । मनुष्येष्वश्वनामाऽसौ तद्गन्धु. स्वयमेव स । तस्मादिवोत्थितिस्तस्य रूपभेदो न तस्य च । ऐश्वर्यात्स तथापीशो व्यक्तिमात्र गमिष्यति । हत्वा याति यतः शत्रून् हरिस्तस्माद्धय स्मृत. । सर्वदा युद्धकर्तृत्वाद्वाजी चापि प्रकीर्तित. । अर्वातिगमनात्कृष्ण आशुत्वादश्व उच्यते ॥' इति वचनयमे । तेषां तेषां वाह तेषु स्थित.वात्तत्कर्तृ वाह्यनामा । 'पतन्ति नियत हन्तु देवाश्च शत्रुमूर्धसु । वेगाधिका आसुराश्च वेगमात्र नृवाहने ॥' इति स्कान्दे । 'गन्धर्वास्तु सदा युद्धरता देवानुगायत. । तदशक्तौ तु देवाना युद्ध ते स्वामिनो यतः । केचिद्गानरता निन्य गन्धर्वा नर्तका. परे । केचिद्वाद्यरता नित्य चारणा देवचारका. ॥' इति च । मध्व.

( मृत्यो अशनायारूपात् सृष्टि )

अर्कदृष्टिविषया आप मृत्यो , अद्भ्य पृथिवी, पृथिव्या अग्नि प्राणरूप अग्निवाय्वादित्यरूपैर्व्याकृत , विराट्स्वरूप स एव, वाङ्मनोमिथुनद्वारा मृत्यो सवत्सर वाक् त्रयीयज्ञप्रजापश्वादयश्च, मृत्यो अदितित्व सनिरुक्त, मृत्यो अश्वस्याश्वमेधस्य चोत्पत्ति निर्वचनसहिता, अर्काश्वमेधोपासन मृत्य्वात्मभावफलम्

'नैवेह किंचनाग्र आसीत् । मृत्युनैवेदमावृतमासीदशनायया । अशनाया हि मृत्यु. । तन्मनोऽकुरुताऽऽत्मन्वी स्यामिति । सोऽर्चन्नचरत् । तस्यार्चत आपोऽजायन्त । अर्चते वै मे कमभूदिति । तदेवार्कस्यार्कत्वम् । कं ह वा अस्मै भवति य एवमेतदर्कस्यार्कत्व वेद ॥

( १ ) अथाश्वमेधोपयोगिकस्योत्पत्तिरुच्यते । तद्विषयदर्शनविरक्षयोत्पत्ति स्तुत्यर्था । नैवेह किंचनाग्र आसीत्, इह ससारमण्डले, किंचन किंचिदपि नामरूपप्रविभक्तविशेष, नैवासीन्न बभूव, अग्रे प्रागुत्पत्तेर्मनआदे ।

(१) बृउ. १।२।१, शमा १०।६।५।१ वार्कस्य ( वार्क्यस्या ) दर्कस्या ( दर्कयस्या ), रामानुज ४।१।१८, २६ नैवेह किंचनाग्र आसीत् ( इद वाग्रे नैव किंचनासीत् ), मध्व. अर्चते वै ( अर्चतो वै )

किं शून्यमेव बभूव ? शून्यमेव स्यात्, 'नैवेह किंचन' इति श्रुते. । न कार्य कारण वा आसीत् । उत्पत्तेश्च । उत्पद्यते हि घट., अतः प्रागुत्पत्तेर्घटस्य नास्तित्वम् । ननु कारणस्य, न नास्तित्व, मृत्पिण्डादिदर्शनात् । यन्नोपलभ्यते तस्यैव नास्तिता अस्तु कार्यस्य, न तु कारणस्य, उपलभ्यमानत्वात् । न, प्रागुत्पत्ते सर्वानुपलम्भात् । अनुपलब्धिश्चेदभावहेतुः, सर्वस्य जगत. प्रागुत्पत्तेर्न कारण कार्य वोपलभ्यते । तस्मात्सर्वस्यैवाभावोऽस्तु ।

न, 'मृत्युनैवेदमावृतमासीत्' इति श्रुते. । यदि हि किंचिदपि नासीत्, येनाव्रियते यच्चाव्रियते, तदा नावक्ष्यत् 'मृत्युनैवेदमावृतम्' इति । न हि भवति गगनकुसुमच्छन्नो वन्ध्यापुत्र इति । ब्रवीति च 'मृत्युनैवेदमावृतमासीत्' इति । तस्मात् येनावृत कारणेन, यच्चावृत कार्य, प्रागुत्पत्तेस्तदुभयमासीत्, श्रुते प्रामाण्यात्, अनुमेयत्वाच्च । अनुमीयते च प्रागुत्पत्ते. कार्यकारणयोरस्तित्वम् । कार्यस्य हि सतो जायमानस्य कारणे सत्युत्पत्तिदर्शनात्, असति चादर्शनात्, जगतोऽपि प्रागुत्पत्ते. कारणास्तित्वमनुमीयते, घटादिकारणास्तित्ववत् ।

कार्यस्य च अभिव्यक्तिलिङ्गत्वात् । कार्यस्य च सद्भाव. प्रागुत्पत्ते. सिद्ध । कथ, अभिव्यक्तिलिङ्गत्वात् अभिव्यक्तिर्लिङ्गमस्येति । अभिव्यक्ति. साक्षाद्विज्ञानालम्बनत्वप्राप्तिः । यद्धि लोके प्रावृत तमआदिना घटादि वस्तु, तदालोकादिना प्रावरणतिरस्कारेण विज्ञानविषयत्व प्राप्नुवत्, प्राक्सद्भाव न व्यभिचरति । तथेदमपि जगत् प्रागुत्पत्तेरित्यवगच्छामः ।

किंलक्षणेन मृत्युनावृतमित्यत आह — अशनायया, अशितुमिच्छा अशनाया, सैव मृत्योर्लक्षण, तया लक्षितेन मृत्युना अशनायया । कथमशनाया मृत्युरिति, उच्यते—अशनाया हि मृत्युः । हिशब्देन प्रसिद्ध हेतुमवद्योतयति । यो ह्यशितुमिच्छति सोऽशनायानन्तरमेव हन्ति जन्तून् । तेनासावशनायया लक्ष्यते मृत्युरिति, अशनाया हीत्याह । बुद्ध्यात्मनोऽशनाया धर्म इति स एष बुद्ध्यवस्थो हिरण्यगर्भो मृत्युरित्युच्यते । तेन मृत्युनेद कार्यमावृतमासीत्, यथा पिण्डावस्थया

मृदा घटादय आवृता स्युरिति तद्वत् । तन्मनोऽकुरुत, तदिति मनसो निर्देश । स प्रकृतो मृत्यु वक्ष्यमाणकार्यसिसृक्षया, तत् कार्यालोचनक्षम, मन-शब्दवाच्य सकल्पादिलक्षणमन्त करण, अकुरुत कृतवान् । केनाभिप्रायेण मनोऽकरोदिति उच्यते — आत्मन्वी आत्मवान् स्या मनेय, अहमनेनात्मना मनसा मनस्वी स्यामित्यभिप्राय । स प्रजापति, अभिव्यक्तेन मनसा समनस्क सन्, अर्चन् अर्चयन्पूजयन् आत्मानमेव कृतार्थोऽस्मीति, अचरत् चरणमकरोत् । तस्य प्रजापते अर्चत पूजयत आप रसात्मिका पूजाङ्गभूता अजायन्त उत्पन्ना. । अत्राकाशप्रभृतीना त्रयाणामुत्पत्त्यनन्तरमिति वक्तव्य, श्रुत्यन्तरसामर्थ्यात्, विकल्पासभवाच्च सृष्टिक्रमस्य । अर्चते पूजा कुर्वते, वै, मे मह्य, क उदक, अभूत् इति एवममन्यत यस्मान्मृत्यु, तदेव तस्मादेव हेतो., अर्कस्य अग्नेरश्वमेधक्रत्वौपयोगिकस्य अर्कत्वम् । अर्कत्वे हेतुरित्यर्थ । अग्नेरर्कनामनिर्वचनमेतत् — अर्चनात्सुखहेतुपूजाकरणादप्सबन्धाच्चाग्नेरेतद्गौण नामार्क इति । यः एव यथोक्त अर्कस्यार्कत्व वेद जानाति, क उदक सुख वा, नामसामान्यात्, ह वै इत्यवधारणार्थौ, भवत्येवेति, अस्मै एवविदे एवविदर्थ, भवति ।

शकर

( २ ) अश्वमेधाङ्गभूते चित्याग्नौ तदङ्गभूतसवत्सर काले च ब्रह्मदृष्टिं विधित्सन्प्रथमतोऽग्नेरुत्पत्तिप्रकारमाह — नैवेह किंचनाग्र आसीदित्यादि । केचित्तु नात्र ब्रह्मदृष्टिर्विधीयतेऽपि तु तात्त्विकतदात्मकत्वानुसधानसिद्धये परमात्मन उत्पत्त्यादिकमाम्नायत इत्याहु. । नोभयथाऽपि विरोध पश्यामः । इह जगति किंचन परिदृश्यमान स्थूलावस्थ वस्तु अग्रे सृष्टेः प्राङ्नैवाऽऽसीत् । अत्राग्रे नाऽऽसीदित्यनेन न शून्यत्वमुच्यतेऽसत्कार्यानभ्युपगमात् । परिदृश्यमानस्थूलावस्थाविरोध्यवस्थावत्त्वमेवार्थः । कारणवाक्यत्वादत्र मृत्युशब्देन मृत्युसज्ञकाचिच्छरीर. परमात्मोच्यते । अत्राशनाया नाम सजिहीर्षा । 'अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु' (पा सू ७।४।३४) इति बुभुक्षार्थे निपातितोऽशनायाशब्द सजिहीर्षां लक्षयित्वा तद्वति लक्षितलक्षणया वर्तते । ततश्चायमर्थ. — सजिहीर्षुणा तम.शरीरेण परमात्मना परिदृश्यमान स्थूलावस्थ जगदावृतमासीत्तिरोहितस्थूलावस्थमासीत् । स्थूलावस्थां विहाय तम शरीरकपरमात्मावस्थमासीदित्यर्थ. । लोके बुभुक्षाविशिष्टो हि पुरुषो जन्तून्हिनस्ति अतो बुभुक्षाया मरणहेतुत्वेन मृत्युत्व प्रसिद्धमित्यर्थ । यद्यपि तत्रत्याशनायामृत्युशब्दयोर्भिन्नत्वात्प्रकृते मृत्युशब्दस्य प्रतिपाद्यस्य तम शरीरकपरमात्मन सजिहीर्षावाच्याशनायाशब्दप्रयोगविषयताया न तदुपपादक तथाप्येकशब्दरूपितत्वेनार्थद्वयैकीकरणे न श्रुतिप्रवृत्तिरुपपद्यत इति द्रष्टव्यम् । तदिति लिङ्गव्यत्ययश्छान्दस. । स मृत्युस्तम.शरीरक. परमात्माऽहमात्मन्वी शरीरी चेतनाचेतन शरीरक स्यामिति सकल्प्य मन. कृतवानित्यर्थ न च सजिहीर्षो. सिसृक्षाकार्यमन.सृष्टिर्विरुद्धेति वाच्यम् । सृष्ट्वा सहरिष्यामीत्येवभूत सृष्टिसहारलक्षणविहारेच्छाया एवाशनायाशब्देन विवक्षितत्वात् । अत्र मन.शब्देन ' मनो महान्मतिर्ब्रह्म इति नामपाठान्महत्तत्त्वमुच्यते । तच्चोपलक्षणमहकारादिभूतावधिकसृष्टेरपि । मन.शब्दस्यान्त.करणार्थत्वेऽपि मन शब्द स्वपूर्वभाविमहदादीनामप्युपलक्षकः । महदादिसृष्ट्यभावे मनःसृष्ट्यभावात् । अन्यत्सर्वं पूर्ववत् आत्मन्शब्दात् 'तदस्यास्त्यस्मिन्' इत्यर्थे विनिप्रत्ययश्छान्दस. । अर्चन्प्रीणयन् । आत्मानमिति शेषः । कर्मकारक न स्वयमेव । अश्रुताध्याहारादपि प्रकृतस्यैव कर्मत्वोपपत्तेः ' लक्षणहेत्वोः क्रियायाः ' (पा सू ३।२।१२६) इति हेतौ शतृप्रत्यय. । जगद्व्यापारलीलया स्वा मान प्रीणयितुमचरदित्यर्थ' । उक्त हि भगवता बादरायणेन जगत्स्रष्टेर्लीलारस. एव प्रयोजनमिति । अर्चतः प्रीणनाय प्रवृत्तस्य परमात्मन. सकाशादाप उत्पन्ना इत्यर्थ । तत्र चापा प्राधान्यादप्शब्दप्रयोग. । सृष्टिश्च स्रष्टुर्नारायणस्य लिङ्गम् । 'एको ह वै नारायण.' इत्युपक्रम्य ता इमा आप इति श्रुतेः । वैशब्दोऽवधारणे । अर्चनप्रवृत्ताय मह्य क जलममूदिति स परमात्माऽमन्यतेत्यर्थ । यस्माद्धेतोरेवममन्यतात एतादृशमननमेवार्कशब्दितस्य परमात्मनोऽर्कशब्दप्रवृत्तौ निमित्तमित्यर्थः । अर्कशब्दितत्व च परमात्मन· 'अर्को वाजसनः शृङ्गी' इति भगवन्नामसहस्रपाठ

दिति द्रष्टव्यम् । एतत्सर्वं व्याख्यानाधिकरणे व्यासार्यैः स्पष्टमुक्तम् । * रग

( ३ ) 'असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च ' — यदुक्तं कारणे कार्यस्य सत्त्वं लोकवेदाभ्यामवगम्यत इति तदयुक्तम् । असद्व्यपदेशात् । 'असदेवेदमग्र आसीत्' ( छाउ ३।१९।१, ६।२।१ ) 'असद्वा इदमग्र आसीत्' ( तैउ २।७ ) 'इदं वाग्रे नैव किंचनासीत्' ( बृउ १।२।१ ) इति । लोके च सर्वं घटशरावादिकं पूर्वाह्णे नासीदिति । अतो यथोक्तं नोपपद्यत इति चेत्तन्न । धर्मान्तरेण तथा व्यपदेशात् । स खल्वसद्व्यपदेशस्तस्यैव कार्यद्रव्यस्य पूर्वकाले धर्मान्तरेण सस्थानान्तरेण, न भवदभिप्रेतेन तुच्छत्वेन । सत्त्वासत्त्वे हि द्रव्यधर्मावित्युक्तम् । तत्र सत्त्वधर्माद्धर्मान्तरमसत्त्वम् । इदशब्दनिर्दिष्टस्य जगतः सत्त्वधर्मो नामरूपे । असत्त्वधर्मस्तु तद्विरोधिनी सूक्ष्मावस्था । अतो जगतो नामरूपयुक्तस्य तद्विरोधिसूक्ष्मदशापत्तिरसत्त्वम् । कथमिदमवगम्यते । वाक्यशेषाद्युक्ते शब्दान्तराच्च । वाक्यशेषस्तावत् 'इदं वाग्रे नैव किंचनासीत्' ( बृउ १।२।१ ) इत्यत्र 'तदसदेव सन्मनोऽकुरुत तस्यामिति' ( बृउ १।२।१ ) इति । अनेन वाक्यशेषगतेन मनस्कारलिङ्गेनासच्छब्दार्थे तुच्छातिरिक्ते निश्चिते तदैकार्थ्यात् 'असदेवेदम्' ( छाउ ३।१९।१, ६।२।१ ) इत्यादिष्वप्यसच्छब्दस्यायमेवार्थ इति निश्चीयते । युक्तेश्चासत्त्वस्य धर्मान्तरत्वमवगम्यते । युक्तिर्हि सत्त्वासत्त्वे पदार्थधर्माववगमयति । मृद्द्रव्यस्य पृथुबुध्नोदराकारयोगो घटोऽस्तीतिव्यवहारहेतुः । तस्यैव तद्विरोध्यवस्थान्तरयोगो घटो नास्तीतिव्यवहारहेतु । तत्र कपालाद्यवस्थायास्तद्विरोधित्वेन सैव घटाद्यवस्थस्य नास्तीतिव्यवहारहेतु । न च तद्व्यतिरिक्तो घटाभावो नाम कश्चिदुपलभ्यते । न च कल्प्यते । तावतैवाभावव्यवहारोपपत्तेः । तथा शब्दान्तराच्च, पूर्वकाले धर्मान्तरयोग एवावगम्यते । शब्दान्तरं च पूर्वोदाहृतं 'सदेव सोम्येदमग्र आसीत्' ( छाउ ६।२।१ ) इत्यादिकम् । तत्र हि 'कुतस्तु खलु सोम्यैवं स्यात्' ( छाउ ६।२।२ ) इति तुच्छत्वमाक्षिप्य 'सत्त्वेव सोम्येदमग्र आसीत्' ( छाउ ६।२।२ ) इति स्थापितम् । 'तद्धेदं तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यां व्याक्रियत' ( बृउ १।४।७ ) इति सुस्पष्टमुक्तम् ।

* रामानुज. २।१।१८

( ४ ) 'सर्वसंहारकविष्णुं देवीं जीवांस्तथैव च । कालं त्रिगुणसाम्यं च कर्माणि प्राणमिन्द्रियम् । संस्कारं चैव वेदाश्च नर्ते किंचिल्लये त्वभूत् ॥' इति ब्रह्मतर्के । लयकाले परमात्मनैवावृतमासीत् । 'अशनं जगदेतद्यन्नयत्यात्मेच्छया हरिः । अशनाया ततः प्रोक्त उदन्या कर्मनायकः ॥' इति ब्राह्मे । अन्यत्र नेतृत्वप्रतीतावपि श्रुतिषु प्रसिद्धेः स एव नेतेत्याह । अशनाया हि मृत्युरिति । तत्तव एव मनोऽकुरुत यत. स्वयमेवासीन्नान्यत् । आत्मवान्स्यामित्यैच्छत् । शरीरवान्स्यामिति । अप्सृष्ट्यर्थं मनोऽकुरुत । 'ऐच्छद्विष्णुरदेहः सन् देहवान्स्यामिति प्रभुः । यतो देहं इदं सर्वं तस्य विष्णोरदेहिनः । तद्वशत्वात्स्वयं देवश्चिदानन्दशरीरकः । सोऽऽत्मानमर्चयन्नचरदप्सृष्ट्यर्थं जनार्दनः । यत्कुर्वन् यत्सृजेदीशस्तद्धवेद्धि तदात्मकम् । अतोऽर्चतो यतो जाता आपोऽतोऽर्चनसाधनाः । अन्यथा कर्तुमीशोऽपि क्रीडया तत्तदात्मकम् । कर्तुं तत्तत्प्रवृत्तिः सस्तत्करोति स्वयं प्रभुः ॥' इति ब्रह्माण्डे । मे सर्वाहेयस्य विष्णो. । 'असमच्छब्दगतैर्विष्णुर्वाच्यः सप्तविभक्तिभि. । सर्वाहेयत्वतस्त्वेक. सर्वस्य प्रतियोगितः । युष्मच्छब्दाभिधेयश्च तच्छब्दैश्च परोक्षतः । स एव बहुरूपत्वाद्बहुशब्दाभिधानवान् । जीवस्थितेन रूपेण द्वन्द्वेनापि द्विधोच्यते । भिन्नोऽपि सर्वजीवेभ्यः सर्ववस्तुभ्य एव च । पूर्णानन्दादिरूपस्य कुतोऽल्पसुखिनैकता ॥' इति ब्रह्मतर्के । 'उदकं सुखहेतुत्वात्कमित्येवाभिधीयते । तदेव ह्यर्चतो जातमतोऽर्क इति कीर्त्यते ॥' इति व्यासनिरुक्ते । अर्चतो जातं सुखसाधनं चेत्यर्क इत्यर्थं । कं सुखमस्मै भवति । 'अर्पा हि सुखहेतूना वेद विष्णोर्जनिं हि यः । स मुक्तः सुखभागेव स्याद्विष्णोस्तु प्रसादतः ॥' इति माहात्म्ये ।

‡ मध्व.

* शेष शंकरवत् ।

* श्रीकंठ रामानुजवत् ।

‡ व्रमध्व. अग्रे बृउ १।२।५ इत्यत्र द्रष्टव्यम् ।

आपो वा अर्कः । तद्यदपां शर आसीत्तत्समहन्यत । सा पृथिव्यभवत् । तस्यामश्राम्यत् । तस्य श्रान्तस्य तप्तस्य तेजोरसो निरवर्तताग्निः ॥

(१) आपो वा अर्कः । कः पुनरसावर्क इति उच्यते, आपो वै या अर्चनाङ्गभूतास्ता एव अर्कः, अग्नेरर्कस्य हेतुत्वात्, अप्सु चाग्निः प्रतिष्ठित इति । न पुनः साक्षादेवार्कस्ताः, तासामप्रकरणात् । अग्नेश्च प्रकरणम् । वक्ष्यति च — 'अयमग्निरर्कः' इति । तत् तत्र, यदपां शर इव शरो दध्न इव मण्डभूतमासीत्, तत्समहन्यत सघातमापद्यत तेजसा बाह्यान्तःपच्यमानम् । लिङ्गव्यत्ययेन वा, योऽपां शरः स समहन्यतेति । सा पृथिव्यभवत्, स सघातो येयं पृथिवी साभवत् । ताभ्योऽद्भ्योऽण्डमभिनिर्वृत्तमित्यर्थः । तस्यां पृथिव्यामुत्पादितायां, स मृत्युः प्रजापतिः अश्राम्यत् श्रमयुक्तो बभूव । सर्वो हि लोकः कार्यं कृत्वा श्राम्यति । प्रजापतेश्च तन्महत्कार्यं यत्पृथिवीसर्गः । किं तस्य श्रान्तस्येत्युच्यते — तस्य श्रान्तस्य तप्तस्य खिन्नस्य, तेजोरसः तेज एव रसस्तेजोरसः, रसः सारः, निरवर्तत प्रजापतिशरीरान्निष्क्रान्त इत्यर्थः । कोऽसौ निष्क्रान्तः? अग्निः सोऽण्डस्यान्तर्विराट् प्रजापतिः प्रथमजः कार्यकरणसघातवाञ्जातः, 'स वै शरीरी प्रथमः' इति स्मरणात् ।

शकर.

(२) अण्डस्य भगवदात्मकभूतपरिणामत्वं वक्तुमपां भगवदात्मकत्वमाह — आपो वा अर्क इति । आपोऽर्कशब्दितभगवदात्मिका इत्यर्थः । शरः सारांश आसीत् । सहन्यमानेभ्यो भूतेभ्यः सा पृथिवीरूपाऽभवत् । तस्यामण्डाकारेण परिणतायां पृथिव्यां सत्यामिति शेषः । मृत्युशब्दितः परमात्माऽश्राम्यत् । अत्र श्रान्तिशब्दः कारणलक्षणया यत्नपरः । अयततेत्यर्थः । परमात्मनः श्रान्तस्य कृतयत्नस्य तप्तस्य सृज्यवर्गं पर्यालोचनवतः शरीरात्तेजःसारभूतोऽग्निर्निरवर्तत । एवमेव व्यासार्यैरुक्तम् । * रग.

---

शेषपदार्थाः शकरवत् ।

(१) बृउ १।२।२, शाबा १०।६।५।२, भशंकर २।३।१२, भास्कर २।३।१२ शर ( रस ); श्रीकर. ३।२।११, विज्ञान २।३।१२ शर ( सर )

(३) अर्कशब्दस्यादित्ये प्रसिद्धत्वादप्शब्दोऽपि तत्रेत्याशङ्का निवर्तयितुमापो वा अर्क इति पुनर्वचनम् । नादित्येऽर्कशब्दः । किंत्वप्स्वेवार्कशब्द इत्यर्थः । शरो मण्डः । 'फेनरूपस्तु यो मण्डो जलस्थोऽसौ सुमहतः । पृथिवीत्वं समापन्नस्तस्यां शिश्ये जनार्दनः । ततः सचिन्तयामास स्यादग्निरिति वेदराट् । तच्चिन्तनात्समुत्पन्नो वायुरग्न्यभिधानवान् । अग्रजत्वादग्रणीत्वाद्वायो रग्नित्वमिष्यते ॥' इति प्रवृत्ते । 'शक्तिर्निरसने चापि शयने चापि कीर्तितः । श्रमशब्दो हरेर्नैव शक्तिरिस्रमनं क्वचित् । अतो हरेः श्रमो नाम शयनं सप्रकीर्तितम् ॥' इति ब्रह्मतर्के । तस्यामश्राम्यदिति साधिकरणत्वाच्च शयनं युक्तम् । न हि पृथिव्यां श्रमो नामान्तःकरणधर्मो युज्यते अधिकरणपरपराकल्पनं च क्लिष्टकल्पनम् । 'सृष्ट्वा स पृथिवीं विष्णुः शेतेऽनन्तेऽब्धिमध्यगः । तस्यां पृथिव्यां श्वेताख्ये द्वीपे मुक्तैरुपास्यते ॥' इति मुक्तिसहितायाम् । 'तत आलोचनायुक्तस्तस्मात्कार्यार्थकामना । तप्तता तु हरेरुक्ता कुतो दुःखं हरेः प्रभोः ॥' इति ब्रह्मतर्के । तेजोरसः जगतः सामर्थ्यसारभूतः ।

मध्व.

स त्रेधात्मानं व्यकुरुतादित्यं तृतीयं वायुं तृतीयम् । स एष प्राणस्त्रेधा विहितः । तस्य प्राची दिक्शिरोऽसौ चासौ चेर्मौ । अथास्य प्रतीची दिक्पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौः पृष्ठमन्तरिक्षमुदरमियमुरः । स एषोऽप्सु प्रतिष्ठितः । यत्र क्वचैति तदेव प्रतितिष्ठत्येवं विद्वान् ॥

(१) स च जातः प्रजापतिः त्रेधा त्रिप्रकारम् आत्मानं स्वयमेव कार्यकरणसघातं व्यकुरुत व्यभजदित्येतत् । कथं त्रेधेत्याह — आदित्यं तृतीयं, अग्निवाय्वपेक्षया त्रयाणां पूरणं, अकुरुतेत्यनुवर्तते । तथाग्न्यादित्यापेक्षया वायुं तृतीयम् । तथा वाय्वादित्यापेक्षयाग्निं तृतीयमिति द्रष्टव्यम् । सामर्थ्यस्य तुल्यत्वात्त्रयाणां सख्यापूरणत्वे । स एष प्राणः सर्व-

---

(१) बृउ १।२।३; शाबा १०।६।५।३, रंग. द्वावेव ( इति य एव )

भूतानामात्माप्यग्निवाय्वादित्यरूपेण विशेषतः स्वेनैव मूर्त्यात्मना त्रेधा विहित. विभक्त., न विराट् स्वरूपोपमर्दनेन । तस्यास्य प्रथमजस्याग्नेरश्वमेधोपयोगिकस्यार्कस्य विराजश्चित्यात्मकस्याश्वस्येव दर्शनमुच्यते । सर्वा हि पूर्वोक्तोत्पत्तिरस्य स्तुत्यर्थत्यवोचाम — इत्यमसौ शुद्धजन्मेति । तस्य प्राची दिक् शिर, विशिष्टत्वसामान्यात् । असौ चासौ च ऐशान्याग्नेय्यौ ईर्मौ बाहू, ईरयतेर्गतिकर्मण. । अथ अस्य अग्ने, प्रतीची दिक् पुच्छ जघन्यो भाग., प्राङ्मुखस्य प्रत्यग्दिक्सबन्धात् । असौ चासौ च वायव्यनैर्ऋत्यौ सक्थ्यौ सक्थिनी, पृष्ठकोणत्वसामान्यात् । दक्षिणा चोदीची च पार्श्वे, उभयदिक्सबन्धसामान्यात् । द्यौ. पृष्ठमन्तरिक्षमुदरमिति पूर्ववत् । इयमुरः अधोभागसामान्यात् । स एषोऽग्नि. प्रजापतिरूपो लोकात्यात्मकोऽग्निः अप्सु प्रतिष्ठित., 'एवमिमे लोका अप्स्वन्तः' इति श्रुते । यत्र क्व यस्मिन्कस्मिंश्चित् एति गच्छति, तदेव तत्रैव प्रतितिष्ठति स्थितिं लभते । कोऽसौ ? एव यथोक्तमप्सु प्रतिष्ठितत्वमग्नः विद्वान् विजानन्, गुणफलमेतत् । शाकर.

(२) सोऽग्निरात्मान त्रेधा व्यभजत् । अग्न्यादित्यवाय्वात्मना त्रेधा विभक्त इत्यर्थः । त्रयाणा मध्ये चित्याग्निरग्नी वाय्वादित्यावशाविति भाव. । यस्त्रेधा विभक्तोऽग्निवाय्वादित्यात्मना वाय्वादित्यांशक एषोऽग्निः स एष प्राणः परमात्मेत्यर्थः । तत्र तद्दृष्टि. कर्तव्येति यावत् । य एषोऽग्निरर्क इत्युत्तरत्राग्नावर्कशब्दितपरमात्माध्यासस्य वक्ष्यमाणत्वादिति द्रष्टव्यम् । इय पृथिवीत्यर्थ. । * रग.

(३) 'वायुरग्निरिति प्रोक्तो ह्यग्रणीत्वादथाङ्गिनाम् । नेतृत्वाददनाच्चापि तस्य स्रष्टा जनार्दनः । स वायुर्वायुरूपेण जगत्पाति शरीरगः । आदित्यस्थेन रूपेण जग द्याति प्रकाशयन् । अग्निस्थन तु रूपेण हूयते सर्व यज्ञभिः । आदाय यात्यायुरिति स एवादित्य उच्यते । तत्सबन्धात्तु तन्नाम सूर्यस्याग्नेस्तथैव च । स एष कूर्मरूपेण वायुरण्डोदके स्थितः । विष्णुना कूर्मरूपेण धारितोऽनन्तधारकः । अप्सु पादा हि चत्वारो ह्यण्डोदे कोणसंस्थिता । उरस्तु भूमिसश्लिष्टमतिरिच्य भुव पुन । पार्श्वत. पृष्ठतश्चैव शिरश्चोदकसस्थितम् । आकाशमुदरे तस्य द्यौ· पृष्ठे सस्थिता विभो । एव विद्वांस्तु यत्रैति तत्रैव प्रतितिष्ठति ॥' इति प्रभञ्जने । स्वानेच्छा चेत्तत्रैव प्रतितिष्ठति । 'उपास्ते कूर्मरूप यो वायु स्थितिमाप्नुयात् । इच्छया विनिवृत्तिं वा लोक चावृत्तिवर्जितम् ॥' इत्यध्यात्मे । स एष प्राणस्त्रेधा विहित इति वचनाच्च वायु । 'बिभर्त्यण्ड हरि. कूर्मस्त्वण्डे चाप्युदक महत् । उदके कूर्मरूपस्य वायु. पुच्छ समाश्रित । वायो. पुच्छ समाश्रित्य शेषस्तु पृथिवीमिमाम् । बिभर्ति तस्या जगदिद सर्व प्रतिष्ठितम् ॥' इति वैभवे । वायोस्तु कूर्मरूपस्य पूर्वतश्चोदकं मुखम् । आग्नेयैशानगौ बाहू पादौ निर्ऋतिवायगौ ॥' इति प्रकृष्टे । मध्व

[१]सोऽकामयत द्वितीयो म आत्मा जायेतेति । स मनसा वाच मिथुनꣳ समभवदशनाया मृत्यु· । तद्यद्रेत आसीत्स सवत्सरोऽभवत् । न ह पुरा तत सवत्सर आस । तमेतावन्तं कालमबिभर्यावान्सवत्सर. । तमेतावतः कालस्य परस्तादसृजत । तं जातमभिव्याददात् । स भाणकरोत् । सैव वागभवत् ॥

( १ ) सोऽकामयत — योऽसौ मृत्युः, सोऽब्आदिक्रमेणात्मनात्मानमण्डस्यान्तः कार्यकरणसघातवन्त विराजमग्निमसृजत, त्रेधा चात्मानमकुरुतेत्युक्तम् । स किंव्यापारः सन्नसृजतेति उच्यते — स. मृत्युः अकामयत कामितवान् , किम् ? द्वितीय. मे मम आत्मा शरीर, येनाह शरीरी स्यां, स जायेत उत्पद्येत, इति एवमेतदकामयत । सः एव कामयित्वा, मनसा पूर्वोत्पन्नेन, वाच त्रयीलक्षणां, मिथुन द्वन्द्वभाव, समभवत् सभवन कृतवान्, मनसा त्रयीमालोचितवान् । त्रयीविहित सृष्टिक्रम मनसाऽन्वालोचयदित्यर्थ. । कोऽसौ ? अशनायया लक्षितो मृत्युः । अशनाया मृत्युरित्युक्तम् । तमेव परामृशति, अन्यत्र प्रसङ्गो मा भूदिति । तद्यद्रेत आसीत् , तत् तत्र मिथुने, यद्रेत आसीत् , प्रथम

* शेषपदार्थाः शकरवत् ।

(१) बृह. १।२।४, शत्रा १०।६।५।४, प्रभाकर १।३।२८, रंग. भाण ( भाणम ), मध्व दशनाया ( दशनाया ) भाण ( भाणम ), श्रीकर. १।३।२८.

शरीरिण प्रजापतेरुत्पत्तौ कारण रेतो बीज ज्ञानकर्मरूप, त्रय्यालोचनाया यत् दृष्टवानासीज्जन्मान्तरकृत, तद्भावभावित. अप सृष्ट्वा तेन रेतसा बीजेनाप्स्वनुप्रविश्याण्डरूपेण गर्भीभूत. स., सवत्सरोऽभवत् , सवत्सरकालनिर्माता सवत्सर., प्रजापतिरभवत् । न ह पुरा पूर्वं, तत तस्मात्सवत्सरकालनिर्मातु॰ प्रजापते., सवत्सर. कालो नाम, न आस न बभूव ह । त सवत्सरकालनिर्मातारमन्तर्गर्भे प्रजापतिं, यावानिह प्रसिद्धः कालः एतावन्त एतावत्सवत्सरपरिमाण काल अबिभ॰ भृतवान् मृत्यु , यावान्सवत्सर. इह प्रसिद्ध । ततः परस्तात् किं कृतवान् ? त , एतावत. कालस्य सवत्सरमात्रस्य परस्तात् ऊर्ध्वं असृजत सृष्टवान् अण्डमभिनदित्यथ । त एव कुमार जात अग्निं प्रथमशरीरिण, अशनायावत्त्वान्मृत्यु. अभिव्याददात् मुखविदारण कृतवान् अत्तुम् । स च कुमारो भीत. स्वाभाविक्याऽविद्यया युक्त. भाणित्येव शब्द अकरोत् , सैव वागभवत् , वाक् शब्दः अभवत् ।

शकर.

( २ ) एवमर्कप्राणशब्दितपरमात्मदृष्टिविशिष्टमश्वमेधाङ्गभूतचित्याग्निमुत्पत्त्यादिप्रकारोपेतमुपवर्ण्याश्वमेधाङ्गभूतसवत्सरकाल मृत्युशब्दितपरमात्मदृष्टिविशिष्ट प्रतिपादयितुमुपक्रमते — सोऽकामयतेत्यादि । पूर्वोक्त. सजिहीर्षुर्मृत्यु॰ पूर्वसृष्टाग्निरूपापेक्षयाऽऽत्मान्तर जायतामिति सकल्प कृतवान् । सकल्प्य च त्रयीलक्षणा वाच मनसा मिथुन द्वन्द्वभाव समभवत्सभावितवान् । वक्ष्यमाणप्रपञ्चपरिज्ञानाय ‘ नाम रूप च भूताना कृत्याना च प्रपञ्चनम् । वेदशब्देभ्य एवाऽऽदौ देवादीना चकार सः ॥’ इति न्यायेन साक्षाद्वा चतुर्मुखशरीरकतया मनसा त्रयीं पर्यालोचितवानित्यर्थ । मनसा त्रयीपर्यालोचनलक्षणसभोगे यद्रेतो बीज कारणमुत्पन्नमिदमित्थ कर्तव्यमिति निश्चयात्मक तेन सवत्सरलक्षणकालशरीरक. सवत्सरो विश्वकर्मा सवत्सर. प्रजापतिः प्रजापति. सवत्सर इति सवत्सराभिमानितया द्वितीय आत्माऽभवदित्यर्थः । यद्यपि सवत्सरकालस्यैवाश्वमेधाङ्गत्व न तदभिमानिप्रजापतेस्तथाऽपि तयोरभेदोपचारेण श्रुतिप्रवृत्त्युपपत्तिरिति द्रष्टव्यम् । ततस्तस्मादिदमित्थ कर्तव्यमिति निश्चयरूपाद्रेत.शब्दितात्कारणात्पुरा प्रथमत. सद्य इति यावत् । सद्य एव सवत्सररूप आत्मा न बभूव द्वादशमासपरिमाणस्य सवत्सरस्य सद्योनिष्पत्त्यसभवादिति भाव. । ‘ तमेतावन्त कालमबिभर्यावान्सवत्सरः’ यावता कालेन सवत्सर. पूर्णोऽभवत् । तावन्त काल रेत.शब्दितकारणाकारेणाबिभर्भरण कृतवानित्यर्थ. । अबिभरिति डुभृञ् धारणपोषणयोरिति धातोर्लङि रूपम् । ‘ तमेतावत॰ कालस्य परस्तादसृजत ’ । द्वादशमासेषु पूर्णेषु सवत्सररूप द्वितीयमात्मानमसृजत । ‘ त जातमभिव्याददात् ’ । जात सवत्सरमभिमुखीकृत्य व्याददात् । विशिष्य पुत्रत्वेन परिजग्राह । ‘ स भाणकरोत् ’ । स सवत्सर आत्मा बालस्वभावत्वाद्भाणिति शब्दमकरोत् । ‘ सैव वागभवत् ’ । भूरादिभिर्व्याहृतिरूपा वागभवदित्यर्थः ।

रग.

( ३ ) आत्मा ब्रह्मा मे द्वितीयो जायेतेत्यकामयत । वायुरेव ब्रह्मा भवतीति दर्शयितु वायो. सृष्टिः प्रथममुक्ता । ‘वायुरेव यतो ब्रह्मपद नियमतो व्रजेत् । सहैव जननेऽप्यस्मात्पूर्वं वायोर्जनिं वदेत् । क्वचित्तु ब्रह्मणः पूर्वं प्राधान्यात्तत्पदस्य च ॥’ इति ब्रह्मतर्के । ‘ आत्मा विरिञ्च सुमना. सुधौतश्चेति कथ्यते । ब्रह्मा चतुर्मुखश्चेति पूर्वजो यः प्रजापतिः ॥’ इति शब्दनिर्णये । ‘स मनसा स्वेच्छया वाच श्रिय देवीं मिथुन समभवत् । मम द्वितीयो जायेत ब्रह्मेति भगवान्पर॰ । वेदाभिमानिनीं देवीं श्रिय समभवत्प्रभु॰ । स्वेच्छयैव यतः शक्तिस्ता विनाऽपि हरे सदा । तत॰ सवत्सरो नाम ब्रह्मा समभवत्प्रभो॰ । त गर्भमुदरे बिभ्रद्यावत्सवत्सर रमा । त जातमत्तु स्वमुख विदार्य पुरुषोत्तम॰ । श्रुत्वा राव पुनस्तस्य व्यदधात्सृष्टये प्रभु.॥’ इति च कारणविवेके । बिन्दुलोपेन अशनाया मृत्युरित्यर्थः । अशनाया हि मृत्युरित्युक्तम् । सर्वाशननेतेत्यर्थे बिन्दुः । ‘आधिक्येऽधिकम् ’ इति सूत्रात् । सम्यगात्मनो वत्सभूतान्देवादीन्रमयतीति सवत्सरः । ‘ब्रह्मणो भाणिति वचो नि.सृत भयतो मुखात् । तस्याभिमानिनी देवी तदैवोत्था चतुर्मुखात् । वागीश्वरीति तामाहुर्वाच चापि सरस्वतीम् ॥’ इति भावतत्त्वे । तदभिमानित्वात्सैव वागित्युच्यते । भारूपो णरूपश्चेति भग॰वान् भाण् । तद्व्यञ्जकत्वाद्भणन वाक् ।

मध्व.

सं ऐक्षत यदि वा इममभिम५स्ये कनीयोऽन्नं करिष्य इति । स तया वाचा तेनात्मनेदं५ सर्वमसृजत यदिदं किंचर्चो यजू५षि सामानि च्छन्दा५सि यज्ञान्प्रजाः पशून् । स यद्यदेवासृजत तत्तदत्तुमध्रियत । सर्वं वा अत्तीति तददितेरदितित्वम् । सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद ॥

(१) स ऐक्षत—स, एवं भीत कृतरव कुमारं दृष्ट्वा, मृत्युः ऐक्षत ईक्षितवान्, अशनायावानपि यदि कदाचिदहं इमं कुमारं अभिमंस्ये, अभिपूर्वो मन्यतिर्हिंसार्थः, हिंसिष्ये इत्यर्थः । कनीयोऽन्नं करिष्ये, कनीयः अल्पमन्नं करिष्ये इति । एवमीक्षित्वा तद्भक्षणादुपरराम । बहु ह्यन्नं कर्तव्यं दीर्घकालभक्षणाय, न कनीयः । तद्भक्षणे हि कनीयोऽन्नं स्यात्, बीजभक्षणे इव सस्याभाव । स एव प्रयोजनमन्नबाहुल्यमालोच्य, तयैव त्रय्या वाचा पूर्वोक्तया, तेनैव च आत्मना मनसा, मिथुनीभावमालोचनमुपगम्योपगम्य, इदं सर्वं स्थावरं जङ्गमं च असृजत, यदिदं किंच यत्किंचेदम् । किं तत् ? ऋचः, यजूंषि, सामानि, छन्दांसि च सप्त गायत्र्यादीनि—स्तोत्रशस्त्रादिकर्माङ्गभूतांस्त्रिविधान्मन्त्रान्गायत्र्यादिच्छन्दोविशिष्टान्, यज्ञांश्च तत्साध्यान्, प्रजास्तत्कर्त्रीः, पशूंश्च ग्राम्यानारण्यान्कर्मसाधनभूतान् । ननु त्रय्या मिथुनीभूतयाऽसृजतेत्युक्तम् । ऋगादीनीह कथमसृजतेति । नैष दोषः । मनसस्त्वव्यक्तोऽयं मिथुनीभावस्त्रय्या । बाह्यस्तु ऋगादीनां विद्यमानानामेव कर्मसु विनियोगभावेन व्यक्तीभावः सर्ग इति । सः प्रजापतिः, एवमन्नवृद्धिं बुद्ध्वा, यद्यदेव क्रियां क्रियासाधनं फलं वा किंचित् असृजत, तत्तत् भक्षयितुं अध्रियत धृतवान्मनः । सर्वं ह्यत्ति यस्मादति, तत् तस्मात् अदितेः अदितिनाम्नो मृत्योः अदितित्वं प्रसिद्धम् । तथा च मन्त्रः—'अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता' इत्यादिः । सर्वस्यैतस्य जगतोऽन्नभूतस्य अत्ता सर्वात्मनैव भवति, अन्यथा विरोधात् । न हि कश्चित्सर्वस्य-

(१) बृउ १।२।१, शब्रा १०।६।५।५ न्प्रजाः (न्प्रजा) सर्वस्यैतस्यात्ता (सर्वस्यात्ता); मनस्व. १।२।१.

कोऽत्ता दृश्यते । तस्मात्सर्वात्मा भवतीत्यर्थः । सर्वमस्यान्नं भवति । अत एव सर्वात्मनो ह्यत्तुः सर्वमन्नं भवतीत्युपपद्यते । य एवमेतत् यथोक्तं अदितेः मृत्योः प्रजापतेः सर्वस्यादनाददितित्वं वेद, तस्यैतत्फलम् ।

शंकर.

(२) स मृत्युरचिन्तयत् । 'यदि वा इममभिमंस्ये कनीयोऽन्नं करिष्य इति' । यद्यहमिमं संवत्सरं सृष्ट्वाऽऽत्मानं कृतकृत्यतयाऽभिमंस्ये तदाऽन्नमल्पीय एव स्यात् । अत्तव्यस्य भूयसोऽर्थस्याभावात् । 'स तया वाचा तेनाऽऽत्मनेदं सर्वमसृजत यदिदं किंच' । स मृत्युस्तया वाचा संवत्सरात्मनिष्पादितया भूरादिलक्षणया वाचा तेनाऽऽत्मना संवत्सररूपेणाऽऽत्मना च निमित्तभूतेन यदिदं किं च तत्सर्वमसृजतेत्यर्थः । स भूरिति व्याहरत् । 'आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतयः' इत्यादिना भूरादिशब्दस्य सृज्यमानप्रपञ्चहेतुत्वावगमात् । संवत्सराख्यकालस्यापि कार्यमात्रहेतुत्वाच्चेति भावः । यदिदं किं चेत्येतत्प्रपञ्चयति—'ऋचो यजूंषि सामानि च्छन्दांसि यज्ञान्प्रजाः पशून्' । छन्दांसि गायत्र्यादीनि । शिष्टं स्पष्टम् । ननु त्रय्या (मिथुनी)भूतया कथमृगादीनां सृष्टिस्तेषां तदभिन्नत्वादिति चेन्न । कर्मविनियुक्तत्वावस्थाविशिष्टतया ऋगादीनामुत्पत्तिसंभवात् सर्वप्रत्यक्षगोचरतया वा । 'स यद्यदेवासृजत तत्तदत्तुमध्रियत' । सृष्टं सर्वं संहर्तुमैच्छदित्यर्थः । 'सर्वं वा अत्तीति तददितेरदितित्वम्' । अदितिशब्दवाच्यस्य परमात्मनः सर्वात्तृत्वादेवादितिशब्दप्रवृत्तिनिमित्तमदितित्वमित्यर्थः । नामनिरुक्तिज्ञानस्य फलमाह—'सर्वस्यैतस्यात्ता भवति' । अनुभविता भवति । 'सर्वमस्यान्नं भवति' । अनुभाव्यं भवति । 'य एवमेतददितेरदितित्वं वेद' । न च भोक्तृ वोक्तौ तत्प्रतिसंबन्धिन इतरस्य भोग्यत्वं सिद्धमिति तत्कथनवैयर्थ्यं शङ्कनीयम् । तद्दार्ढ्यार्थतया तत्प्रपञ्चनरूपत्वेनादोषात् ।

रंग.

(३) अभिमंस्ये लीनं करिष्ये चेत् । 'मानं ज्ञानं लयश्चैव मर्यादा चैव कथ्यते । उत्पादनं च सख्यानं बलं च कश्चिदुच्यते ॥' इति शब्दनिर्णये । 'वेदाभिमानिनः

सर्वांस्तथा यज्ञाभिमानिन । गायत्र्यामसृजद्ब्रह्मा स्वभार्याया प्रजास्तथा ॥' इति प्रकाशिकायाम् । यद्यद्ब्रह्माऽसृजत्पूर्वं तत्तदत्ति जनार्दन । अदितिर्नाम तेनासौ भगवान्पुरुषोत्तम· । उपास्ते य पर देवमेवमत्तीति सर्वदा । स्वयोग्यतानुसारेण सर्वात्ताऽसौ भवत्युत । ब्रह्मरुद्रसुवर्णाना सर्वात्तृत्व विशेषत· । प्रायेणात्तृत्वमिन्द्रादेरन्येषा दर्शनादिकम् । बहुलस्येति योग्यत्वभेदादत्तृत्वमिष्यते ॥' इति मानसहितायाम् । आत्मनो यादृशा भोगा भोक्तु योग्या हि तादृशान् । भोक्ता विष्णुरिति ध्यायेत्सर्वात्तृत्व हरेः स्मरेत् । दैवताना च सर्वेषां सर्वात्तिध्यानमिष्यते ॥ इति प्रवृत्ते । मध्व

(४) 'जन्माद्यस्य यत·' इत्युक्तम् । तत्रात्तृत्व ' स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वम् ' इत्यदिते प्रतीयते । स यद्यदेवासृजतेति पुल्लिङ्ग च ' कूटस्थोऽक्षर उच्यते ' ( इत्यादि )वत् । अत्रोच्यते—

' अत्ता चराचरग्रहणात् ' — न हि चराचरस्य सर्वस्यात्तृत्वमदिते । ' स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु । वासुदेव· परः पुसामितरेऽल्पस्य वा न वा ॥' इति स्कान्दे । 'एक. पुरस्ताद्य इद बभूव यतो बभूव भुवनस्य गोप्ता( पा· ) । यमप्येति भुवन साम्पराये स नो हरिर्घृतमिहायुषेऽस्तु देव ॥' इति श्रुतिः ।

' प्रकरणाच्च '—अप्सवत्सरसृष्ट्यादिना तत्प्रकरणाच्च । ' नेहासीत्किंचनाप्यादौ मृत्युरासीद्धरिस्तदा । सोत्मनो मनसास्राक्षीदप एव जनार्दन । शयानस्तासु भगवान्निर्ममेऽण्ड महत्तरम् । तत्र सवत्सर नाम ब्रह्माणमसृजत्प्रभु. । तमत्तु व्याददादास्य तदाऽसौ विरुराव ह । अथ ( तत्क ) त कृपया विष्णु सृष्टिकर्मण्ययाजयत् । सोऽसृजद्भुवन विश्वमद्यार्थं हरये विभु· ॥ ' इति ब्रह्मवैवर्ते । ब्रमध्व १।२।९,१०

**सोऽकामयत भूयसा यज्ञेन भूयो यजेयेति । सोऽश्राम्यत् । स तपोऽतप्यत । तस्य श्रान्तस्य तप्तस्य यशो वीर्यमुदक्रामत् । प्राणा वै यशो वीर्यम् । तत्प्राणेषूत्क्रान्तेषु शरीर॰ श्वयितुमध्रियत । तस्य शरीर एव मन आसीत् ॥**

(१) बृउ १।२।६, शब्रा १०।६।५।६

(१) सोऽकामयतेत्यश्वाश्वमेधयोर्निर्वचनार्थमिद माह । भूयसा महता यज्ञेन भूयः पुनरपि यजेयेति । जन्मान्तरकरणापेक्षया भूयःशब्द. । स प्रजापतिर्जन्मान्तरेऽश्वमेधेनायजत । स तद्भावभावित एव कल्पादौ व्यवर्तत । सोऽश्वमेधक्रियाकारकफलात्मत्वेन निर्वृत्तः सन्नकामयत — भूयसा यज्ञेन भूयो यजेयेति । एव महत्कार्यं कामयित्वा लोकवदश्राम्यत् । स तपोऽतप्यत । तस्य श्रान्तस्य तप्तस्येति पूर्ववत् । यशो वीर्यमुदक्रामदिति स्वयमेव पदार्थमाह—प्राणाः चक्षुरादयो वै यश·, यशोहेतुत्वात्, तेषु हि सत्सु ख्यातिर्भवति । तथा वीर्यं बल अस्मिन् शरीरे । न ह्युत्क्रान्तप्राणो यशस्वी बलवान्वा भवति । तस्मात्प्राणा एव यशो वीर्यं चास्मिन् शरीरे । तदेव प्राणलक्षण यशो वीर्यं उदक्रामत् उत्क्रान्तवत् । तदेव यशोवीर्यभूतेषु प्राणेषूत्क्रान्तेषु शरीरान्निष्क्रान्तेषु, तच्छरीर प्रजापते, श्वयितु उच्छूनभाव गन्तु अध्रियत, अमेध्य चाभवत् । तस्य प्रजापते शरीरान्निर्गतस्यापि तस्मिन्नेव शरीरे मन आसीत् । यथा कस्यचित्प्रिये विषये दूर गतस्यापि मनो भवति, तद्वत् । शकर

(२) एवमश्वमेधाङ्गभूतयोरग्निसवत्सरयो. सृष्टिप्रकारादिकमुक्त्वाऽश्वस्य सृष्टिप्रकारमश्वमेधनिर्वचनमश्वमघो( धे ) आदित्यदृष्टिं च वक्तुमारभते — ' सोऽकामयत ' । प्रजापतिशरीरक· परमात्माऽकामयत । भूयसा महता यज्ञेन परमात्मान भूयो मुहुर्मुहुर्यजेय । यद्वा भूय शब्दो भूमवाची । भूमान परमात्मान यजेयेत्यर्थ. । ' सोऽश्राम्यत् ' । महायज्ञसामग्र्यसपत्त्या श्रान्त इवाभवत् । ' स तपोऽतप्यत ' । परमात्मानमुद्दिश्य तपश्चकारेत्यर्थ· ।

* रग.

(३) 'इच्छतो विष्णुयजन ब्रह्मण· साधनास्मृते । श्रमात्तापाच्च देह त त्यक्तुमिच्छा बभूव ह । इच्छया चाप्युदक्रामत्प्राणै· सह पितामह. । यशोवीर्यमिमि तत्वात्प्राणास्तन्नामका. स्मृताः । अत्यल्पे चापि सजाते श्रमेऽपि न तदिच्छया । तापे प्राणा निःसरन्ति सा च क्रीडा विभो स्मृता । बृहमाणशरीर तु पुनर्दृष्ट्वा

* शेष शकरवत् ।

पितामह । प्रवेष्टु तच्छरीर च कामयामास स प्रभु ॥'
मध्व.

सोऽकामयत मेध्य म इद९ स्यादात्मन्व्यनेन स्यामिति । ततोऽश्व समभवत् । यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वम् । एष ह वा अश्वमेधं वेद य एनमेव वेद । तमनवरुध्यैवामन्यत । त९ संवत्सरस्य परस्तादात्मन आलभत । पशून्देवताभ्य प्रत्यौहत् । तस्मात्सर्वदेवत्यं प्रोक्षित प्राजापत्यमालभन्ते । एष ह वा अश्वमेधो य एष तपति । तस्य संवत्सर आत्मा । अयमग्निरर्क । तस्येमे लोका आत्मान । तावेतावर्काश्वमेधौ । सो पुनरेकैव देवता भवति मृत्युरेव । अप पुनर्मृत्यु जयति । नैनं मृत्युराप्नोति । मृत्युरस्याऽऽत्मा भवति । एतासा देवतानामेको भवति ॥

(१) स तस्मिन्नेव शरीरे गतमना सन्किमकरोदिति उच्यते—सोऽकामयत । कथम् ? मेध्य मेधार्हं यज्ञिय मे मम इद शरीर स्यात्, किच आत्मन्वी आत्मवाश्च अनेन शरीरेण शरीरवान् स्यामिति प्रविवेश । यस्मात् तच्छरीर तद्वियोगाद्गतयशोवीर्य सत् अश्वत् अश्वयत्, ततः तस्मात् अश्व समभवत् । ततोऽश्वनामा प्रजापतिरेव साक्षादिति स्तूयते । यस्माच्च पुन स्तत्प्रवेशात् गतयशोवीर्यत्वादमेध्य सत् मेध्यमभूत्, तदेव तस्मादेव अश्वमेधस्य अश्वमेधनाम्न क्रतोः अश्वमेधत्व अश्वमेधनामलाभ । क्रियाकारकफलात्मको हि क्रतुः । स च प्रजापतिरेवेति स्तूयते ।

क्रतुनिर्वर्तकस्याश्वस्य प्रजापतित्वमुक्तम्—' उषा वा अश्वस्य मेध्यस्य' इत्यादिना । तस्यैवाश्वस्य मध्यस्य प्रजापतिस्वरूपस्य अग्नेश्च यथोक्तस्य क्रतुफलात्मरूपतया समस्योपासन विधातव्यमित्यारभ्यते । पूर्वत्र क्रियापदस्य विधायकस्याश्रुतत्वात्, क्रियापदापेक्षत्वाच्च प्रकरणस्य, अयमर्थोऽवगम्यते । एष ह वा अश्वमेध क्रतु वेद य एनमेव वेद — य कश्चित्, एन अश्वमग्निरूपमर्कं च यथोक्त, एव वक्ष्यमाणेन समासेन प्रदर्श्यमानेन विशेषणेन विशिष्ट वेद, स एषोऽश्वमेध वेद, नान्य । तस्मादेव वेदितव्य इत्यर्थः । कथम् ? तत्र पशुविषयमेव तावद्दर्शनमाह । तत्र प्रजापति ' भूयसा यज्ञेन भूयो यजेय ' इति कामयित्वा, आत्मानमेव पशु मेध्य कल्पयित्वा, त पशु अनवरुध्यैव, उत्सृष्ट पशुमवरोधमकृत्वैव मुक्तप्रग्रह, अमन्यत अचिन्तयत् । त संवत्सरस्य पूर्णस्य परस्तात् ऊर्ध्वं आत्मने आत्मार्थं आलभत—प्रजापतिदेवताकत्वेनेत्येतत्—आलभत आलम्भ कृतवान् । पशून् अन्यान् ग्राम्यानारण्याश्च देवताभ्य यथादैवत प्रत्यौहत् प्रतिगमितवान् । यस्माच्चैव प्रजापतिरमन्यत, तस्मादेवमन्योऽप्युक्तेन विधिना आत्मान पशुमश्व मेध्य कल्पयित्वा, ' सर्वदेवत्योऽह प्रोक्ष्यमाणः, आलभ्यमानस्त्वहं, मद्देवत्य एव स्याम्, अन्य इतरे पशवो ग्राम्यारण्या यथादैवतमन्याभ्यो देवताभ्य आलभ्यन्ते मदवयवभूताभ्य एव ' इति विद्यात् । अत एवेदानीं सर्वदेवत्यं प्रोक्षित प्राजापत्यमालभन्ते याज्ञिकाः । एव ' एष ह वा अश्वमेधो य एष तपति ' यस्त्वेव पशुसाधनकः क्रतु स एष साक्षात्फलभूतो निर्दिश्यते, एष ह वा अश्वमेधः । कोऽसौ ? य एष सविता तपति जगदवभासयति तेजसा । तस्य अस्य क्रतुफलात्मन, संवत्सर कालविशेषः, आत्मा शरीर, तन्निर्वर्त्यत्वात्संवत्सरस्य । तस्यैव क्रत्वात्मनः अग्निसाध्यत्वाच्च फलस्य क्रतुत्वरूपेणैव निर्देशः । अय पार्थिवोऽग्नि, अर्कः साधनभूतः, तस्य चार्कस्य क्रतौ चित्यस्य, इमे लोकास्त्रयोऽपि, आत्मनः शरीरावयवाः । तथा च व्याख्यातम्—' तस्य प्राची दिक् ' इत्यादिना । तावग्न्यादित्यावेतौ यथाविशेषितावर्काश्वमेधौ क्रतुफले । अर्को यः पार्थिवोऽग्निः स साक्षात्क्रतुरूपः क्रियात्मकः । क्रतोरग्निसाध्यत्वात्तद्रूपेणैव निर्देशः । क्रतुसाध्यत्वाच्च फलस्य क्रतुरूपेणैव निर्देशः—आदित्योऽश्वमेध इति । तौ साध्यसाधनौ क्रतुफलभूतावग्न्यादित्यौ—सा उ, पुनः भूयः, एकैव देवता भवति । का सा ? मृत्युरेव । पूर्वमप्येकैवासीत्क्रियासाधनफलभेदाय विभक्ता । तथा चोक्तं

(१) बृउ. १।२।७, शब्रा १०।६।५।७,८ रुध्यैवा (रुध्येवा) एष ह वा अश्वमेधो (एष वा अश्वमेधो) स्याऽऽत्मा भवति + (सर्वमायुरेति) मेको भवति+ (य एव वेद), मध्व. रुध्यैवा (रुध्येवा).

'स त्रेधात्मान व्याकुरुत' इति । सा पुनरपि क्रियानिर्वृत्त्युत्तरकालमेकैव देवता भवति —— मृत्युरेव फलरूप. । य. पुनरेवमेनमश्वमेध मृत्युमेका देवता वेद—अहमेव मृत्युरस्म्यश्वमेध एका देवता मद्रूपाश्वाग्निसाधनसाध्येति । सोऽपजयति, पुनर्मृत्यु पुनर्मरण, सकृन्मृत्वा पुनर्मरणाय न जायत इत्यर्थ. । अपजितोऽपि मृत्युरेन पुनराप्नुयादित्याशङ्क्याह—नैन मृत्युराप्नोति । कस्मात् ? मृत्युः अस्यैवविद. आत्मा भवति । किंच मृत्युरेव फलरूप सन्नेतासा देवतानामेको भवति, तस्यैतत्फलम् ।

शकर

( २ ) 'मेध्य म इद स्यादात्मन्व्यनेन स्यामिति' । मदीयमिद शरीर यज्ञार्हं स्यात् । अनेन च शरीरेणाहमात्मन्वी शरीरी स्यामिति । एव सकल्प्य पुनरपि स प्राण. सन्प्रजापति. पुनस्तत्र प्रविष्ट इति भाव । 'ततोऽश्व समभवत्' । प्रजापतिना पुनरनुप्रविष्टात्स्थूलशरीराद्रुपादानभूतादश्वरूप सन् प्रजापतिरुत्पन्न इत्यर्थ. । यस्मात्कारणात्प्रजापते शरीरमुत्क्रान्तेषु अश्व यदुच्छून तत एवामेध्य चाभवत्तदेव पश्चादश्वरूप सन्मेध्यमभूत् । तत एवास्याश्वरूपस्य प्रजापतेरश्वमेधत्वम् । अश्वयदित्यश्व । मेधार्हत्वान्मेधः । यद्यप्यश्वमेधशब्दो यागनाम तथाऽपि यागद्रव्ययोरभेदोपचारात्तथोक्तिरुपपद्यत इति द्रष्टव्यम् । यागपरत्वेऽपि न दोष । यज्ञार्थकमेधशब्दस्वारस्यादिति वदन्ति । 'एष ह वा अश्वमेध वेद य एनमेव वेद' । य एन पशु यथोक्तनिर्वचन वेद स एवाश्वमेधवेत्ता नान्य इत्यर्थ । 'तमनवरुध्यैवामन्यत' । तमश्वरूप पशुमनवरुध्याव रोधनमकृत्वा सवत्सरमात्रमुत्सृष्टबन्धनमेव कृत्वा परमात्मानमनेन यक्ष्ये इत्यमन्यतेत्यर्थ । 'त सवत्सरस्य परस्तादात्मन आलभत । पशून्देवताभ्य प्रत्यौहत्' । पूर्णे सवत्सरे प्रजापतिः स्वान्तर्यामिणे परमात्मनेऽश्वालम्भ कृतवान् । इतरान्ग्राम्यारण्यपशूनग्नीन्द्रादिदेवताभ्य प्रतिविभज्याऽऽलभतेत्यर्थ । 'तस्मात्सार्वदैवत्य प्रोक्षित प्राजापत्यमालभन्ते' । तस्माद्धेतोरिदानींतना अपि यजमाना· सर्वदेवतासमष्टिभूतप्रजापतिरूपपरमात्मदेवताकत्वेन सर्वदेवताक प्रोक्षणपर्यग्निकरणादिसस्कृत प्रजापतिदेवताकमश्वमालभन्ते । 'एष ह वा अश्वमेधो य एष तपति' । तपत आदित्यस्य दृष्टिरश्वमेधे कर्तव्येत्यर्थ. । तत्र युक्तिमाह—'तस्य सवत्सर आत्मा' । अश्वमेधशब्दितस्याश्वस्य सवत्सर आत्मा । अश्वस्य मेध्यस्येति पूर्वब्राह्मणे उक्तत्वात्सवत्सरात्मकत्व सिद्धम् । सवत्सरादिकालचक्रप्रवर्तकस्याप्यादित्यस्य सवत्सरात्मकत्वात्सवत्सरात्मके मेध्येऽश्वे सवत्सरात्मकादित्याध्यासो युज्यत इत्यर्थ. । 'अयमग्निरर्क' । अय चित्याग्निरर्क पूर्वमर्कशब्दनिर्दिष्ट परमात्मेत्यर्थ. । तत्र तदध्यास कर्तव्य इति यावत् । तत्र युक्तिं वक्ति—'तस्येमे लोका आत्मान·' । तस्याध्यस्यमानस्य परमात्मन स्वर्गाद्यालोका आत्मान इत्यर्थः । द्यौ· पृष्ठमन्तरिक्षमुदरमित्यादिना चित्याग्ने. सर्वलोकशरीरकत्वस्य प्रतिपादितत्वा(द्द्यु)लोकादिशरीरके चित्याग्नौ प्रतीके तादृशस्य परमात्मनोऽध्यसनमश्वस्य च 'सवत्सर आत्मा' इत्युक्तत्वात्तस्मिन्नश्वमेधे सवत्सरात्मकादित्याध्यसन च युज्यत इति भाव । 'तावेतावर्काश्वमेधौ' । अर्कशब्देनायमग्निरर्क इत्यर्कशब्दितश्चित्याग्निरुच्यते । तावेतौ चित्याग्न्यश्वमेधौ प्रागुक्तैतादृशप्रहिमशालिनावित्यर्थ. । 'सो पुनरेकैव देवता भवति'। अग्न्यश्वमेधाभ्यामेतादृशदृष्टिविशिष्टाभ्या प्रीणनीया देवतैकैव भवति । सा केत्याशङ्क्याऽऽह— 'मृत्युरेव' । परमात्मैवेत्यर्थः । यद्वा तावेतावग्न्यश्वमेधावप्ययकाले मृत्युशब्दित परमात्मैवेत्यर्थ· । एतादृशानुसधानविशिष्टाग्न्यश्वमेधयो प्रयोजनहमाह—— 'अप पुनर्मृत्यु जयति' । अपमृत्यु जयतीत्यर्थः । 'नैन मृत्युराप्नोति' । एन ससारो नाऽऽप्नोतीत्यर्थ । ननु ब्रह्मज्ञानसाध्यायाः ससारनिवृत्ते कथ दृष्टिविशिष्टचित्याग्न्यश्वमेधसाध्य(त्व)मित्यत्राऽऽह —— 'मृत्युरस्याऽऽत्मा भवति' । मृत्युः परमात्माऽस्याश्वमेधस्यानुष्ठातुरात्मा भवति । आत्मत्वेनावगतो भवतीत्यर्थ. । नित्यसिद्धस्याऽऽत्मत्वसाध्यत्वात् । ततश्चाग्न्यश्वमेधयोर्ब्रह्मात्मकत्वावगमद्वारा ससारनिवृत्तिहेतुत्वमुपपद्यत इति भावः । 'एतासा देवतानामेको भवति' । अग्नीन्द्रादिसायुज्यकामस्य तदपि भवतीत्यर्थः ।

रग.

(३) 'पुनस्तस्मिन्प्रवेशाय शवरूपस्य मेध्यताम्। ऐच्छत्तेनैव देही स्यामिति तस्मिन्विवेश च। तस्मिन्प्रवे (वि)-श्य स ब्रह्मा द्वितीयं वपुरग्रहीत्। दृष्ट्वोपाय महायज्ञेऽथाश्वाकारं पितामहः। श्वैतीभावात्परं यस्मात्तज्जज्ञेऽतोऽश्वनामकम्। यदर्थं श्वेततामापत्तद्देहो मेध्यतामपि। अश्वमेधः स यज्ञोऽभूत्नाम्ना तेन तदा कृतः। श्वैतीभावं गते देहे पुनर्मेध्ये यत स्थित। अतोऽश्वमेधनामाऽसौ ब्रह्मा शुभचतुर्मुखः। अश्वो भूत्वा यतो मेध्यः सोऽभवत्तेन वा स्मृत। मेधो यज्ञ. समुद्दिष्टो याज्ञीयं मेध्यमुच्यते। शुद्धं मेध्यमथापि स्यादेवंविद्योऽश्वमेधवित्। तमश्वरूपमात्मानमनिरोधिवद्विभु.। चारयामास रूपेण तदन्येन पुमात्मना। सर्वस्मिन्भुवने चाब्दं तदन्ते परमात्मने। स्वस्मिन्स्थिताय सकल्प्य यज्ञ आलभतात्मवान्। अजादिकान्पशूनन्यदेवस्थपरमात्मने। कर्तृत्वेन पशुत्वेन यत्फलं तदशेषत.। मम स्यादिति मन्वानः सोऽश्वरूपमधारयत्। अबुद्धिपूर्वमरणात्स्वर्गश्चापि पशोर्भवेत्। ज्ञानपूर्वं पशो. पुन. किमु वक्तव्यमित्यजः। एवं सूर्योऽप्यश्वमेधनामा सवत्सराभिधः। सूर्ये स्थितो यतो ब्रह्मा ह्यश्वमेधाभिधः स्वयम्। सूर्ये ततत्वात्सूर्यात्मा ब्रह्माऽसौ परिकीर्तितः। अग्नौ स्थितो यतः सोऽर्कस्तस्मादग्निरितीर्यते। ब्रह्माततो यतो लोकास्तदात्मानस्ततो मताः। ब्रह्मसूर्याग्निलोकेषु व्याप्तैका देवता हरिः। तादृशं नृहरिं ज्ञात्वा पुनर्मृत्युं जयत्यसौ। सदैव वर्तते ब्रह्मा पुनर्मृत्युर्मृतिः स्मृता। नैनं मृत्यात्मको मृत्युः प्राप्नोति हरिसेवनात्। यस्मान्नृसिंहो मृत्योश्च मृत्युरात्माऽस्य वै भवत्। आततत्वात्तथात्तृत्वादात्माऽसौ ब्रह्मणः स्मृत.। आदानादात्तनिर्माणादात्तज्ञानात्तथैव च। एतासां देवतानां च ब्रह्मेशत्वेन वर्तते। नृसिंहस्य सदा ज्ञानाद्ध्यानाच्च तदनुग्रहात्॥' इति महासहितायाम्। भूयःशब्दः पूर्णत्ववाची। परमेश्वरं परिपूर्णं यजेयेति। अश्वदित्यश्वोऽभवत्तदेव रूपं मेध्यं यज्ञ आलम्भनीयं चाभवदित्यश्वमेधः। तमनवरुध्यैवं अमन्यतेत्यादिवाक्यशेषादश्वभावः प्रतीयते। अश्वत् वृहितं पश्चान्मेध्यं चाभूत्तस्य शरीरं सोऽश्वमेध इति च। निरोधमकृत्वा चारयिष्यामीत्यमन्यत। स्वेच्छयैव स्वरूपान्तरत्वादश्वरूपस्य। मध्व.

( उद्गीथकर्तृत्वेन मुख्यप्राणोपासना सदेवासुराख्याना )

वागादिदेवानां देवोद्गातृत्वे असुरप्रयुक्तासङ्गदोषात् देवानां पराभवः, आसङ्गरहितस्य मुख्यप्राणस्य देवोद्गातृत्वे असुरनाशः, प्राणस्य आङ्गिरसत्वं, दूर्नामदेवतात्वं, प्रत्यन्ततज्जनगमननिषेधः, वागादीनां व्यापकाग्न्यादिदेवताभावप्राप्त्या मृत्य्वतिक्रमणं, मुख्यप्राणस्य सर्वेन्द्रियोपकारकत्वं, बृहस्पतित्वं ब्रह्मणस्पतित्वं सामत्वं उद्गीथत्वं च, सामात्मनः प्राणस्य स्वरसुवर्णप्रतिष्ठागुणाः, प्रस्तोतुः अभ्यारोहमन्त्रजपः

द्वया ह प्राजापत्या देवाश्चासुराश्च। ततः कानीयसा एव देवा ज्यायसा असुराः। त एषु लोकेष्वस्पर्धन्त। ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति॥

( १ ) 'द्वया ह' इत्याद्यस्य क. सबन्ध. ? कर्मणा ज्ञानसहितानां परा गतिरुक्ता मृत्य्वात्मभावः, अश्वमेधगत्युक्त्या। अथेदानीं मृत्य्वात्मभावसाधनभूतयो. कर्मज्ञानयोर्यत उद्भव., तत्प्रकाशनार्थमुद्गीथब्राह्मणमारभ्यते।

ननु मृत्य्वात्मभावः पूर्वत्र ज्ञानकर्मणो. फलमुक्तम्। उद्गीथज्ञानकर्मणोस्तु मृत्य्वात्मभावातिक्रमणं फलं वक्ष्यति। अतो भिन्नविषयत्वात्फलस्य न पूर्वकर्मज्ञानोद्भवप्रकाशनार्थं इति चेत्। नायं दोषः। अग्न्यादित्यात्मभावत्वादुद्गीथफलस्य। पूर्वत्राप्येतदेव फलमुक्तम् — 'एतासां देवतानामेको भवति' इति। ननु 'मृत्युमतिक्रान्तः' इत्यादि विरुद्धम्। न, स्वाभाविकपाप्मासङ्गविषयत्वादतिक्रमणस्य।

कोऽसौ स्वाभाविकः पाप्मासङ्गो मृत्युः ? कुतो वा तस्योद्भवः ? केन वा तस्यातिक्रमणम् ? कथं वा ? इत्येतस्यार्थस्य प्रकाशनाय आख्यायिका आरभ्यते। कथम् ? द्वया द्विप्रकाराः। हेति पूर्ववृत्तावद्योतको निपातः। वर्तमानप्रजापतेः पूर्वजन्मनि यद्वृत्तं, तदवद्योतयति

(१) बृह. १।३।१, माध्य. १४।४।१।१, २; ब्रशंकर. ३।३।६, रम. द्वया ह+ (वै), रामानुज ३।३।६, निंबार्क. ३।३।६, ७; अमध्व. ३।४।३९; श्रीकंठ ३।३।६, श्रीकर. ३।३।६,७, वल्लभ. २।४।१५, ३।३।२५.

ह–शब्देन । प्राजापत्या प्रजापतेर्वृत्तजन्मावस्थस्यापत्यानि प्राजापत्या । के ते ? देवाश्चासुराश्च । तस्यैव प्रजापते॰ प्राणा वागादय । कथ पुनस्तेषा देवासुरत्वम् ? उच्यते — शास्त्रजनितज्ञानकर्मभाविता द्योतनाद्देवा भवन्ति । त एव स्वाभाविकप्रत्यक्षानुमानजनितदृष्टप्रयोजनकर्मज्ञानभाविता असुराः, स्वेष्वेवासुषु रमणात्, सुरेभ्यो वा देवेभ्योऽन्यत्वात् । यस्माच्च दृष्टप्रयोजनज्ञान कर्मभाविता असुरा, तत तस्मात्, कानीयसा, कनीयास एव कानीयसा., स्वार्थेऽणि वृद्धि, कनीयासोऽल्पा एव देवा. । ज्यायसा असुरा ज्यायासोऽसुरा. । स्वाभाविकी हि कर्मज्ञानप्रवृत्तिर्महत्तरा प्राणाना शास्त्रजनिताया कर्मज्ञानप्रवृत्ते., दृष्टप्रयोजनत्वात् । अत एव कनीयस्त्व देवाना, शास्त्रजनितप्रवृत्तेरल्पत्वात् । अत्यन्तयत्नसाध्या हि सा । ते देवाश्चासुराश्च प्रजापतिशरीरस्था॰, एषु लोकेषु निमित्तभूतेषु स्वाभाविकेतरकर्मज्ञानसाध्येषु, अस्पर्धन्त स्पर्धां कृतवन्तः । देवानां चासुराणा च वृत्त्युद्भवाभिभवौ स्पर्धा । कदाचिच्छास्त्रजनितकर्मज्ञानभावनारूपा वृत्तिः प्राणाना मुद्भवति । यदा चोद्भवति, तदा दृष्टप्रयोजना प्रत्यक्षानुमानजनितकर्मज्ञानभावनारूपा तेषामेव प्राणाना वृत्तिरासुर्यभिभूयते । स देवाना जय, असुराणा पराजय. । कदाचित्तद्विपर्ययेण देवाना वृत्तिरभिभूयते, आसुर्या उद्भव. । सोऽसुराणा जय. देवाना पराजय. । एव देवाना जये धर्मभूयस्त्वादुत्कर्ष आ प्रजापतित्वप्राप्तेः । असुरजयेऽधर्मभूयस्त्वादपकर्ष आ स्थावरत्वप्राप्ते. । उभयसाम्ये मनुष्यत्वप्राप्ति । त एव कनीयस्त्वादभिभूयमाना असुरैर्देवा बाहुल्यादसुराणा किं कृतवन्त इति उच्यते — ते देवा., असुरैरभिभूयमाना, ह किल, ऊचु. उक्तवन्त. । कथम् ? हन्त इदानीं अस्मिन्यज्ञे ज्योतिष्टोमे, उद्गीथेन उद्गीथकर्मपदार्थकर्तृस्वरूपाश्रयणेन, अत्ययाम अतिगच्छाम॰ । असुरानभिभूय स्व देवभाव शास्त्रप्रकाशित प्रतिपद्यामहे इत्युक्तवन्तोऽन्योन्यम् । उद्गीथकर्मपदार्थकर्तृस्वरूपाश्रयण च ज्ञानकर्मभ्याम् । कर्म वक्ष्यमाण मन्त्रजपलक्षण, विधित्स्यमान 'तदेतानि जपेत्' इति । ज्ञान त्विदमेव निरूप्यमाणम् । नन्विदमभ्यारोहजपविधिशेषोऽर्थवाद., न ज्ञाननिरूपणपरम् । न । 'य एव वेद' इति वचनात् । उद्गीथप्रस्तावे पुराकल्पश्रवणादुद्गीथविधिपरमिति चेत् । न । अप्रकरणात् । उद्गीथस्य चान्यत्र विहितत्वात् । विद्याप्रकरणत्वाच्चास्य । अभ्यारोहजपस्य चानित्यत्वात् एववित्प्रयोज्यत्वात् । विज्ञानस्य च नित्यवच्छ्रवणात् । 'तद्धैतल्लोकजिदेव' इति च श्रुतेः । प्राणस्य वागादीना च शुद्ध्यशुद्धिवचनात् । न ह्यनुपास्यत्वे — प्राणस्य शुद्धिवचन, वागादीना च सद्दोपन्यस्तानामशुद्धिवचन, वागादिनिन्दया मुख्यप्राणस्तुतिश्चाभिप्रेता, उपपद्यते— 'मृत्युमतिक्रान्तो दीप्यते' इत्यादि फलवचन च । प्राणस्वरूपापत्तेर्हि फल तत्, यद्वागाद्यग्न्यादिभावः । * शकर.

(२) कर्माङ्गभूतोद्गातरि मुख्यप्राणदृष्टिं विधातुमाख्यायिकामाह—हन्तेत्यसुरविजयोपायदर्शनजहर्षे । अत्रोद्गीथशब्द उद्गातृपर. । यद्वा । नोद्गीथशब्दस्यौद्गातृलक्षकत्वम् । अपि तूद्गीथ उद्गातृविशेषणभूतोद्गीथपरः । ‡ रग.

(३) द्वया ब्रह्मसुतास्तत्र दैतेया बहवः स्मृताः । तमोरूपा. सत्त्वरूपा अल्पसख्याः सुराः स्मृताः । बहुत्वाज्जिता देवाः शकरस्य वरेण च । यज्ञेन विष्णुमभ्यर्च्य तत्रोद्गातृबलेन च । जयामै( येमै )नानिति स्मृत्वा । मध्व.

(४) 'प्राणवता शब्दात्' — प्राणवता अधिष्ठित वागादि । कुत॰ । शब्दात् । सोऽयमग्निः परेण मृत्युनाऽतिक्रान्तो दीप्यत इत्यादि । अयमर्थ. । द्वया ह प्राजापत्या इत्यत्राधिष्ठातृत्वमग्नीनामुक्तम् । देवा इत्यविशेषेणेन्द्रियाधिष्ठात्र्योऽन्याश्च । तेषा प्रतिबन्धकाऽसुरातिक्रमेण स्वर्गलोके गमनेच्छा बभूव । तत्र यज्ञेनैव स्वर्ग इति । 'तत्र जनको ह वैदेहः' इति ब्राह्मणे 'केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमत इत्युद्गात्रार्त्विजा वायुना प्राणेन' इति उद्गात्रैवाक्रमणमिति सिद्धम् । तत्रान्योन्योद्गातृत्ववरणे तथोद्गाने 'यो वाचि भोगस्त देवेभ्यः' इत्याम्नातम् ।

---

* ब्रशकर छाउ १।१।१ (पृ ७४७) इत्यत्र द्रष्टव्यम् । भास्कर रामानुज. निंबार्क श्रीकठ श्रीकर विज्ञान. ब्रशकरवत् ।

‡ शेष शकरवत् । देवासुरविवरणं शंकराचार्यस्य विशेष. ।

तदनुश्रमरूपपाप्मना वेदानन्तरमप्रतिरूप वदतीति निरूपितम्। सोऽपि दोषो देवानां प्राप्नोति। तच्छ्रुतिविप्रतिषिद्धम्। न ह वै देवान् पाप गच्छतीति। तदनु प्राण एवोद्गाता सिद्ध.। तेनान्येषामपि पापसबन्धो निवारितः। तत. परेण, तस्य चेति सूत्रेण मृत्युमतिक्रान्तो दीप्यत इति। अतो दीप्यमानस्यैवाधिष्ठातृत्वात् प्राणवतैवाधिष्ठानमिति सिद्धम्।

'तस्य च नित्यत्वात्' — अग्न्यादे. प्राणसबन्धो नित्य इति सर्वदाऽधिष्ठातृत्वम्।

* वल्लभ २।४।१५, १६

[1]ते ह वाचमूचुस्त्वं न उद्गायेति। तथेति तेभ्यो वागुदगायत्। यो वाचि भोगस्त देवेभ्य आगायत्। यत्कल्याण वदति तदात्मने। ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति। तमभिद्रुत्य पाप्मनाऽविध्यन्। स यः स पाप्मा यदेवेदमप्रतिरूप वदति। स एव स पाप्मा॥

(१) ते देवा, ह एव विनिश्चित्य, वाच वागभिमानिनीं देवतां, ऊचुः उक्तवन्तः। त्व न. अस्मभ्य, उद्गाय औद्गात्र कर्म कुरुष्व। वाग्देवतानिर्वर्त्यमौद्गात्र कर्म दृष्टवन्तः, तामेव च देवतां जपमन्त्राभिधेयाम् — 'असतो मा सद्गमय' इति। अत्र चोपासनायाः कर्मणश्च कर्तृत्वेन वागादय एव विवक्ष्यन्ते। कस्मात्? यस्मात्परमार्थतस्तत्कर्तृकस्तद्विषय एव च सर्वो ज्ञानकर्मसव्यवहारः। वक्ष्यति हि 'ध्यायतीव लेलायतीव' इत्यात्मकर्तृकत्वाभावं विस्तरतः षष्ठे। इहापि च अध्यायान्ते उपसहरिष्यति अव्याकृतादिक्रियाकारकफलजातम् — 'त्रय वा इद नाम रूप कर्म' इति — अविद्याविषयम्। अव्याकृतात्तु यत्पर परमात्माख्य विद्याविषय अनामरूपकर्मात्मक, 'नेति नेति' इति इतरप्रत्याख्यानेनोपसहरिष्यति पृथक्। यस्तु वागादिसमाहारोपाधिपरिकल्पित. ससार्यात्मा, त च वागादिसमाहारपक्षपातिनमेव दर्शयिष्यति — 'एतेभ्यो भूतेभ्य· समुत्थाय तान्येवानुविनश्यति' इति। तस्मादुक्ता वागादीनामेव ज्ञानकर्मकर्तृत्वफलप्रातिविवक्षा। तथेति तथास्त्विति देवैरुक्ता वाक् तेभ्यः अर्थिभ्य. अर्थाय, उदगायत् उद्गान कृतवती। कः पुनरसौ देवेभ्योऽर्थायोद्गानकर्मणा वाचा निर्वर्तितः कार्यविशेष इति उच्यते — यो वाचि निमित्तभूतायाम् — वागादिसमुदायस्य य उपकारो निष्पद्यते वदनादिव्यापारेण, स एव। सर्वेषा ह्यसौ वाग्वदनाभिनिर्वृत्तो भोग फलम्। त भोग सा त्रिषु पवमानेषु कृत्वा अवशिष्टेषु नवसु स्तोत्रेषु वाचनिकमार्त्विज्य फलम् — यत्कल्याण शोभन, वदति वर्णानभिनिर्वर्तयति, तत् — आत्मने मह्यमेव। तद्ध्यसाधारण वाग्देवताया. कर्म यत्सम्यग्वर्णानामुच्चारण, अतस्तदेव विशेष्यते — 'यत्कल्याण वदति' इति। यत्तु वदनकार्य सर्वसघातोपकारात्मक, तद्याजमानमेव। तत्र कल्याणवदनात्मसबन्धासङ्गावसर देवताया रन्ध्र प्रतिलभ्य ते विदु· असुरा·। कथम्? अनेनोद्गात्रा, नः अस्मान्, स्वाभाविक ज्ञान कर्म च, अभिभूय अतीत्य, शास्त्रजनितकर्मज्ञानरूपेण ज्योतिषोद्गात्रात्मना अत्येष्यन्ति अतिगमिष्यन्ति — इत्येव विज्ञाय, तमुद्गातार, अभिद्रुत्य अभिगम्य, स्वेन आसङ्गलक्षणेन पाप्मना अविध्यन् ताडितवन्तः सयोजितवन्त इत्यर्थः। स यः स पाप्मा — प्रजापतेः पूर्वजन्मावस्थस्य वाचि क्षितः स एष प्रत्यक्षीक्रियते — कोऽसौ? यदेवेदमप्रतिरूप अननुरूप शास्त्रप्रतिषिद्ध वदति, येन प्रयुक्तोऽसभ्यबीभत्सानृताद्यनिच्छन्नपि वदति। अनेन कार्येणाप्रतिरूपवदनेनानुगम्यमानः प्रजापतेः कार्यभूतासु प्रजासु वाचि वर्तते। स एवाप्रतिरूपवदनेनानुमितः, स प्रजापतेर्वाचि गतः पाप्मा, कारणानुविधायि हि कार्यमिति। शाकर.

(२) 'ते ह वाचमूचुस्त्व न उद्गायेति'। त्व न उद्गाता भवेति वागभिमानिनीं देवता प्रार्थितवन्तः। तथेत्यङ्गीकृत्य तेभ्यो देवेभ्यो वागुद्गान कृतवती। दृष्टि-

---

(१) बृउ. १।३।२, शाका १४।४।१।३ ते विदु (तेऽविदु), अशाकर. २।१।५, २।४।१८, ३।३।६, भास्कर २।४।१, श्रीकर २।१।४, वल्लभ २।१।५, २।४।१५, ३।३।२५ आगायत् (आगात्) एव स पाप्मा (एव पाप्मा), विज्ञान २।१।५ ते ह + (प्राणा)

विधिप्रकरणत्वात्, आदित्यादिमतयश्चाङ्ग उपपत्ते.' (ब्रसू ४।१।६) इति न्यायेन कत्वङ्गभूतोद्गातरि वाग्दृष्टिं कृतवन्त इत्यर्थ.। वाचि निमित्त यो भोगो गानादिजन्मा य सुखानुभवस्त भोग देवेभ्य आगायत्। देवाना भोगमुद्दिश्याऽऽगायत् गान कृतवती। गानेन देवानां भोग सपादितवतीति यावत्। यत्कल्याणवार्ताभिलपनरूप वागिन्द्रियकार्ये तदप्यात्मने वाक्सपादितवती। अय भाव.—असुरा वागिन्द्रिय क्रोधोत्पादनद्वारा परुषातिवादपैशुन्यादिदूषितमकुर्वन् इत्यर्थ.। *रग

अथ ह प्राणमूचुस्त्व न उद्गायेति। तथेति तेभ्य. प्राण उदगायत्। यः प्राणे भोगस्त देवेभ्य आगायत्। यत्कल्याण जिघ्रति तदात्मने। ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति। तमभिद्रुत्य पाप्मनाऽविध्यन्। स य स पाप्मा यदेवेदमप्रतिरूप जिघ्रति। स एव स पाप्मा ॥

अथ ह चक्षुरूचुस्त्व न उद्गायेति। तथेति तेभ्यश्चक्षुरुदगायत्। यश्चक्षुषि भोगस्तं देवेभ्य आगायत्। यत्कल्याण पश्यति तदात्मने। ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति। तमभिद्रुत्य पाप्मनाऽविध्यन्। स य स पाप्मा यदेवेदमप्रतिरूप पश्यति। स एव स पाप्मा ॥

अथ ह श्रोत्रमूचुस्त्व न उद्गायेति। तथेति तेभ्य श्रोत्रमुदगायत्। य श्रोत्रे भोगस्त देवेभ्य आगायत्। यत्कल्याणꣳ शृणोति तदात्मने। ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति। तमभिद्रुत्य पाप्मनाऽविध्यन्। स य स पाप्मा यदेवेदमप्रतिरूपꣳ शृणोति। स एव स पाप्मा ॥

अथ ह मन ऊचुस्त्व न उद्गायेति। तथेति तेभ्यो मन उदगायत्। यो मनसि भोगस्तं देवेभ्य आगायत्। यत्कल्याणꣳ सकल्पयति तदात्मने। ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति। तमभिद्रुत्य पाप्मनाऽविध्यन्। स य. स पाप्मा यदेवेदमप्रतिरूपꣳ संकल्पयति। स एव स पाप्मा। एवमु खल्वेता देवताः पाप्मभिरुपासृजन्। एवमेनाः पाप्मनाऽविध्यन् ॥

(१) तथैव घ्राणादिदेवता उद्गीथनिर्वर्तकत्वाज्जपमन्त्रप्रकाश्या उपास्याश्चेति क्रमेण परीक्षितवन्त.। देवाना चैतन्निश्चितमासीत्—वागादिदेवताः क्रमेण परीक्ष्यमाणा. कल्याणविषयविशेषात्मसबन्धासङ्गहेतोरासुरपाप्मससर्गादुद्गीथनिर्वर्तनासमर्था, अतः अनभिधेयाः, 'असतो मा सद्गमय' इत्यनुपास्याश्च, अशुद्धत्वादितराव्यापकत्वाच्चेति। एवमु खलु, अनुक्ता अप्येतास्त्वगादिदेवताः, कल्याणाकल्याणकार्यदर्शनात्, एव वागादिवदेव, एना., पाप्मना अविध्यन् पाप्मना विद्धवन्त इति यदुक्त तत्पाप्मभिरुपासृजन् पाप्मभि. ससर्गं कृतवन्त इत्येतत्। शकर.

(२) पूर्ववदर्थ.। उक्तमर्थं निगमयति—एवमिति। एवमेव खलूक्तरीत्यैता देवता. पाप्मभिरनृतवदनादिलक्षणैरुपासृजन्नुपगतवन्त.। 'एवमेता. पाप्मनाऽविध्यन्'। एवमुक्तया रीत्याऽसुरा एता वागादिदेवताः पाप्मनाऽविध्यन्। अनृतादिपाप्मना वेधन कृतवन्त। रग

(३) वह्न्यादीनप्यचूचुदन्। औद्गात्रेऽग्निमुखाः सर्वे इन्द्ररुद्रौ च वेधितौ। असुरैः पापपूगेन। मध्व.

अथ हेममासन्य प्राणमूचुस्त्वं न उद्गायेति। तथेति तेभ्य एष प्राण उदगायत्। ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति। तमभिद्रुत्य पाप्मनाऽविव्यत्सन्। स यथाऽश्मानमृत्वा लोष्टो विध्वꣳसेतैवꣳ हैव विध्वꣳसमाना विष्वञ्चो विनेशु। ततो देवा अभवन्परासुरा। भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद ॥

* शेष सरलम्।

(१) बृउ १।३।२-६, शब्रा १४।४।१।४-७ ते विदु (तेऽविदु), रग एवमेना (एवमेता)

(१) बृउ १।३।७, शब्रा १४।४।१।८ ते विदु (तेऽविदु), ब्रशकर २।४।१८, ३।३।६, भास्कर २।४।१८, ३।३।६, रग (तथेति०) हैव (हैते), रामानुज. ३।३।६, निंबार्क २।४।१८, ३।३।६ उदगायत् (उद्गायति), श्रीकठ ३।३।६, श्रीकर. २।४।१४, ३।३।६, ७, वल्लभ. ३।३।२५ अथ हेम (अथैन) विव्यत्सन् (विध्यन्) हैव (ह वै) परास्य (पराऽस्य).

( १ ) अथ अनन्तर, ह इममित्यभिनयप्रदर्शनार्थं, आसन्य आस्ये भवमासन्य मुखान्तर्बिलस्थ प्राणमूचुः — 'त्व न उद्गाय' इति । तथेत्येव शरणमुपगतेभ्य स एष प्राणो मुख्य उदगायत् इत्यादि पूर्ववत् । पाप्मना अविव्यत्सन् वेधन कर्तुमिष्टवन्त । ते च दोषासंसर्गिण सन्त मुख्य प्राण, स्वेन आसङ्ग-दोषेण वागादिषु लब्धप्रसरास्तदभ्यासानुवृत्त्या, सञ्च-क्ष्यमाणा विनेशुः विनष्टा विध्वस्ता. । कथमिवेति दृष्टान्त उच्यते—स यथा स दृष्टान्तो यथा—लोके अश्मान पाषाण ऋत्वा गत्वा प्राप्य, लोष्टः पांसुपिण्डः, पाषाणचूर्णनायाश्मनि निक्षिप्तः स्वय विध्वसेत विस्रसेत विचूर्णीभवेत् । एव हैव यथाय दृष्टान्त एवमेव, विध्व-समाना विशेषेण ध्वसमाना, विष्वञ्चः नानागतय., विनेशुः विनष्टा, यत. —तत तस्मादासुरविनाशाद्दे-वत्वप्रतिबन्धभूतेभ्यः स्वाभाविकासङ्गजनितपाप्मभ्यो वियोगात्, असंसर्गधर्मिमुख्यप्राणाश्रयबलात्, देवाः वागादयः प्रकृता., अभवन् । किमभवन् ? स्व देवता-रूपमग्न्याद्यात्मक वक्ष्यमाणम् । पूर्वमप्यग्न्याद्यात्मका एव सन्त' स्वाभाविकेन पाप्मना तिरस्कृतविज्ञाना. पिण्डमात्राभिमाना आसन् । ते तत्पाप्मवियोगादु-ज्झित्वा पिण्डमात्राभिमान शास्त्रसमर्पितवागाद्यग्न्याद्या-त्माभिमाना बभूवुरित्यर्थः । किंच ते प्रतिपक्षभूता असुरा' परा — अभवन्नित्यनुवर्तते, पराभूता विनष्टा इत्यर्थः । यथा पुराकल्पेन वर्णितः पूर्वयजमानोऽति-क्रान्तकालिकः एतामेवाख्यायिकारूपा श्रुतिं दृष्ट्वा, तेनैव क्रमेण वागादिदेवता. परीक्ष्य, ताश्चापोह्यासङ्ग-पाप्मास्पददोषवत्त्वेनादोषास्पद मुख्य प्राणमात्मत्वे-नोपगम्य, वागाद्याध्यात्मिकपिण्डमात्रपरिच्छिन्नात्माभि-मान हित्वा, वैराजपिण्डाभिमान वागाद्यग्न्या-द्यात्मविषय वर्तमानप्रजापतित्व शास्त्रप्रकाशित प्रति-पन्नः, तथैवाय यजमानस्तेनैव विधिना भवति प्रजापतिस्वरूपेणात्मना । परा च, अस्य प्रजा पतित्वप्रतिपक्षभूत पाप्मा द्विषन्भ्रातृव्य', भवति । यतोऽद्वेष्टापि भवति कश्चिद्भ्रातृव्यो भरतादितुल्यः । यस्त्विन्द्रियविषयासङ्गजनितः पाप्मा, भ्रातृव्यो द्वेष्टा च, पारमार्थिकात्मस्वरूपतिरस्करणहेतुत्वात्, स च पराभवति विशीर्यते, लोष्टवत्, प्राणपरिष्वङ्गात् । कस्यैतत्फलमित्याह — य एव वेद, यथोक्त प्राणमात्म-त्वेन प्रतिपद्यते पूर्वयजमानवदित्यर्थः ।

शकर.

( २ ) ' भेदश्रुते' ' — भेदेन वागादिभ्यः प्राण सर्वत्र श्रूयते । ' ते ह वाचमूचुः ' ( बृउ. १।३।२ ) इत्युपक्रम्य वागादीनसुरपाप्मविध्वस्तानुपन्य-स्योपसंहृत्य वागादिप्रकरण ' अथ हेममासन्य प्राणमूचु.' इत्यसुरविध्वंसिनो मुख्यस्य प्राणस्य पृथगुपक्रमणात् । तथा मन, वाच, प्राण, तान्यात्मनेऽकुरुतेत्येवमाद्या अपि भेदश्रुतय उदाहर्तव्या. । तस्मादपि तत्त्वान्तरभूता मुख्यादितरे ।

* ब्रशकर २।४।१८

( ३ ) आसन्यमासन्नं मुख्यमित्यर्थः । यद्वाऽऽस्ये भव आसन्य. । आस्यशब्दस्य 'पद्दन्' इत्यादिनाऽऽसन्ना-देश. । मुख्यमिति यावत् । त प्राण देवा उक्तवन्तः । त्व न उद्गायेति । ' तेभ्य एष प्राण उदगायत् ' । उद्गातरि मुख्यप्राणदृष्टिं कृतवन्त इत्यर्थ. । तथैव हि व्याख्यात व्यासार्यै. ' अन्यथात्व शब्दात् ' ( ब्रसू. ३।३।६ ) इत्यधिकरणे । यथाऽश्मचूर्णनाय प्रक्षिप्तो लोष्टः पांसुपिण्डोऽश्मान पाषाणमृत्वा प्राप्य विध्वसेत चूर्णीभवेत्स दृष्टान्तो यथा तथाऽध्यस्तमुख्यप्राणभावो-द्गात्रुपासनानिष्ठान्देवान्प्राप्य विध्वसमानाश्चूर्णीभवन्तो विष्वञ्चो नानागतयो विनष्टा अभवन्नित्यर्थः । ' ततो देवा अभवन्पराऽसुराः ' । ततः पर देवा देवा जाता द्योतमाना अभवन्नित्यर्थ' । यद्वा देवा अभवन्सत्ताम-लभन्तेत्यर्थ. । विजयिनोऽभवन्निति वाऽर्थः । असुरास्तु पराऽभवन्पराभूता अभवन् । ' भवत्यात्मना पराऽस्य द्विषन्भ्रातृव्यो भवति य एव वेद' इति शत्रुपराजयफला-योद्गीथे प्राणदृष्टिर्विहितेति भाष्यस्योपलक्षणतया पाप्म-पराभवस्याऽऽत्मना भवनस्य च फलस्य प्रतिपादनस्य न विरोध इति द्रष्टव्यम् । यद्वाऽस्य द्विषन्भ्रातृव्य आत्मना स्वत एव पराभवति पाप्मा च भवति निन्दादियुक्तश्च भवतीत्यर्थ. । § रग.

* भास्कर निंबार्कश्च ब्रशकरवत् ।

§ शेष सरलम् ।

(४) मुख्यवायु ततोऽब्रुवन् । दैत्यास्त वेद्धुमीप्सन्तो ध्वस्ता नेशुश्च सर्वश॰ । पांसुपिण्डो यथा वज्रशिला प्राप्यैव नश्यति । तस्मादखण्डशक्ति स मुख्यवायुरुदाहृत । शापैरथ वरैर्वापि नास्य प्रति हृतिर्भवेत् । स्वेच्छयैवानुसारेण विना कुत्रापि पुत्रका । एवंविदपि पापेभ्य. शत्रुभ्योऽपि प्रमुच्यते ।

मध्व

[१]ते होचु क नु सोऽभूद्यो न इत्थमसक्तेति । अयमास्येऽन्तरिति । सोऽयास्य आङ्गिरसोऽङ्गाना५ हि रस ॥

(१) फलमुपसंहृत्याधुनाख्यायिकारूपमेवाश्रित्याह । कस्माच्च हेतोर्वागादीन्मुक्त्वा मुख्य एव प्राण आत्मत्वेनाश्रयितव्य इति तदुपपत्तिनिरूपणाय, यस्मादय वागादीनां पिण्डादीना च साधारण आत्मा—इत्येतमर्थमाख्यायिकया दर्शयन्त्याह श्रुतिः—ते प्रजापतिप्राणा, मुख्येन प्राणेन परिप्रापितदेवस्वरूपा, ह ऊचु॰ उक्तवन्त, फलावस्थाः । किमित्याह—क न्विति वितर्के । क नु कस्मिन्नु सोऽभूत् । क ? यो नोऽस्मान्, इत्थ एव, असक्त सञ्जितवान् देवभावमात्मत्वेनोपगमितवान् । स्मरन्ति हि लोके केनचिदुपकृता उपकारिणम् । लोकवदेव स्मरन्तो विचारयमाणा. कार्यकरणसंघाते आत्मन्येवोपलब्धवन्त. । कथम् ? अयमास्येऽन्तरिति—आस्ये मुखे य आकाशस्तस्मिन्, अन्तः अय प्रत्यक्षो वर्तत इति । सर्वो हि लोको विचार्याध्यवस्यति, तथा देवाः । यस्मादयमन्तराकाशे वागाद्यात्मत्वेन विशेषमनाश्रित्य वर्तमान उपलब्धो देवैः तस्मात्—स प्राणोऽयास्य । विशेषानाश्रयत्वाच्च असक्त सञ्जितवान्वागादीन् । अत एवाङ्गिरस आत्मा कार्यकरणानाम् । कथमाङ्गिरस ? प्रसिद्ध ह्येतत्, अङ्गाना कार्यकरणलक्षणाना, रसः सार आत्मेत्यर्थ॰ । कथ पुनरङ्गरसत्वम् ? तदपाये शोषप्राप्तेरिति वक्ष्याम. । यस्माच्चायमङ्गरसत्वाद्विशेषानाश्रयत्वाच्च कार्यकरणानां साधारण आत्मा विशुद्धश्च, तस्माद्वागादीनपास्य प्राण एवात्मत्वेनाश्रयितव्य इति वाक्यार्थ । आत्मा ह्यात्मत्वेनोपगन्तव्यः । अविपरीतबोधाच्छ्रेयःप्राप्तेः, विपर्यये चानिष्टप्राप्तिदर्शनात् ।

शंकर.

(२) ते ह देवा ऊचु. । यो मुख्यप्राणो नोऽस्माकमित्थमुक्तरूप शत्रुपराजयमसक्त संयोजितवान् । यः संयोजितवान्स क नु कस्मिन्देशे प्रतिष्ठित इत्यूचुः समन्त्रयाञ्चक्रुरिति यावत् । एव समन्व्य ददृशुः ।

* रंग.

[१]सा वा एषा देवता दूर्नाम । दूर५ ह्यस्या मृत्यु । दूर५ ह वा अस्मान्मृत्युर्भवति य एवं वेद ॥

स्यान्मत प्राणस्य विशुद्धिरसिद्धेति । ननु परिहृतमेतद्वागादीना कल्याणवदनाद्यासङ्गवत्प्राणस्यासङ्गास्पदत्वाभावेन । बाढम् । किं त्वाङ्गिरसत्वेन वागादीनामात्मत्वोक्त्या वागादिद्वारेण शवस्पृष्टितत्स्पृष्टेरिवाशुद्धता शङ्क्यत इति आह—शुद्ध एव प्राण॰ । कुत ? सा वा एषा देवता दूर्नाम—य प्राण प्राप्याश्मानमिव लोष्टवद्विध्वस्ता असुरा॰ । त परामृशति—सेति । सैवैषा, येय वर्तमानयजमानशरीरस्था देवैर्निर्धारिता ‘ अयमास्येऽन्त॰ ’ इति । देवता च सा स्यात्, उपासनक्रियायाः कर्मभावेन गुणभूतत्वात् । यस्मात्सा दूर्नाम दूरित्येव ख्याता — नामशब्दः ख्यापनपर्यायः, तस्मात् प्रसिद्धास्या विशुद्धिः दूर्नामत्वात् । कुतः पुनर्दूर्नामत्वमित्याह — दूर दूरे हि यस्मात्, अस्याः प्राणदेवताया., मृत्युरासङ्गलक्षणः पाप्मा । असंश्लेषधर्मित्वात्प्राणस्य समीपस्थस्यापि दूरता मृत्यो. । तस्माद्दूरित्येव ख्याति. । एव प्राणस्य विशुद्धिर्ज्ञापिता । विदुष॰ फलमुच्यते — दूर ह वा अस्मान्मृत्युर्भवति— अस्मादेवंविदः, य एवं वेद तस्मात्, एवमिति — प्रकृत विशुद्धिगुणोपेत प्राणमुपास्त इत्यर्थ. । उपासन नाम उपास्यार्थवादे यथा देवतादिस्वरूप श्रुत्या ज्ञाप्यते तथा मनसोपगम्य, आसन चिन्तन लौकिकप्रत्ययाव्यवधानेन, यावत् तद्देवतादिस्वरूपात्माभिमानाभिव्यक्तिरिति, लौकिकात्माभिमानवत् । ‘ देवो भूत्वा देवानप्येति ’ ‘ किं देवतोऽस्या प्राच्या दिश्यसि ’ इत्येवमादिश्रुतिभ्यः ।

‡ शंकर.

(१) बृउ १।३।८, शब्रा १४।४।१।९

* शेष सरलम् ।

‡ रंग सरलार्थम् ।

(१) बृउ १।३।९, शब्रा १४।४।१।१०

**सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्राऽऽसां दिशामन्तस्तद्गमयाचकार । तदासां पाप्मनो विन्यदधात् । तस्मान्न जनमियान्नान्तमियान्नेत्पाप्मानं मृत्युमन्ववायानीति ॥**[1]

( १ ) सा वा एषा देवता — ' दूरं ह वा अस्मान्मृत्युर्भवति ' इत्युक्तम् । कथं पुनरेवंविदो दूरं मृत्युर्भवतीति ? उच्यते — एवंवित्त्वविरोधात् । इन्द्रियविषयसंसर्गासङ्गजो हि पाप्मा प्राणात्माभिमानिनो हि विरुध्यते, वागादिविशेषात्माभिमानहेतुत्वात्स्वाभाविकाज्ञानहेतुत्वाच्च । शास्त्रजनितो हि प्राणात्माभिमानः । तस्मात् एवंविदः पाप्मा दूरं भवतीति युक्तं, विरोधात् । तदेतत्प्रदर्शयति — सा वा एषा देवतेत्युक्तार्थम् । एतासां वागादीनां देवतानां, पाप्मानं मृत्युं — स्वाभाविकाज्ञानप्रयुक्तेन्द्रियविषयसंसर्गासङ्गजनितेन हि पाप्मना सर्वो म्रियते, स ह्यतो मृत्युः — तं प्राणात्माभिमानरूपाभ्यो देवताभ्यः, अपच्छिद्य अपहत्य, — प्राणात्माभिमानमात्रतयैव प्राणोऽपहन्तेत्युच्यते । विरोधादेव तु पाप्मैवंविदो दूरं गतो भवति । किं पुनश्चकार देवतानां पाप्मानं मृत्युमपहत्येत्युच्यते—यत्र यस्मिन्, आसां प्राच्यादीनां दिशां, अन्तः अवसानं, तत् तत्र, गमयांचकार गमनं कृतवानित्येतत् । ननु नास्ति दिशामन्तः, कथमन्तं गमितवानिति । उच्यते — श्रौतविज्ञानवज्जनावधिनिमित्तकल्पितत्वाद्दिशां तद्विरोधिजनाध्युषित एव देशो दिशामन्तः, देशान्तोऽरण्यमिति यद्वत्, इत्यदोषः । तत्तत्र गमयित्वा, आसां देवतानां, पाप्मन इति द्वितीयाबहुवचनं, विन्यदधात् विविधं न्यग्भावेनादधात्स्थापितवती, प्राणदेवता । प्राणात्माभिमानशून्येष्वन्त्यजनेष्विति सामर्थ्यात् । इन्द्रियसंसर्गजो हि स इति प्राण्याश्रयतावगम्यते । तस्मात्तमन्त्यं जनं, नेयात् न गच्छेत् संभाषणदर्शनादिभिर्न संसृजेत् । तत्संसर्गे पाप्मना संसर्गः कृतः स्यात् । पाप्माश्रयो हि सः । तज्जननिवासं चान्तं दिगन्तशब्दवाच्यं, नेयात्— जनशून्यमपि, जनमपि तद्देशवियुक्तं, इत्याभिप्रायः । नेदिति परिभयार्थे निपातः । इत्थं जनसंसर्गे, पाप्मानं मृत्युं, अन्ववायानीति—अनु अव अयानीति अनुगच्छेयमिति । एवं भीतो न जनमन्तं चेयादिति पूर्वेण संबन्धः ।

शंकर.

( २ ) उद्गातर्यध्यस्वो( स्यो )पासिता मृत्योर्दूरत्वेन दूर्नामिकैषा मुख्यप्राणरूपा देवता पूर्वमसुरैरनृतादिपाप्मभिः संयोजितानां वागादिदेवतानां मृत्युं मरणादिदुःखहेतुतया मृत्युशब्दितं पाप्मानमपहत्य वागादिदेवताभ्य आच्छिद्य यत्राऽऽसां दिशामन्तर्दिगन्तप्रदेशास्तद्गमयाचकार दूर्नामत्वात् दूरं मृत्युं निनायेत्यर्थः । आसां वागादिदेवतानां पाप्मनः पापानि विन्यदधाद्विशिष्य ति( नि )धानं कृतवतीत्यर्थः । यस्मात्कारणात्प्रत्यन्तदेशानां वागादिदेवताविनिर्मुक्तानृतादिलक्षणपापनिधानाश्रयतया म्लेच्छदेशत्वम् । अत एव तत्र जनं जननमुत्पत्तिमिति यावत् । अन्तं मरणं च नेयान्न प्राप्नुयात् । नत्र देशे उत्पत्तिमरणे अशोभने इति यावत् । नेन्नेवेत्यर्थः । पाप्मानं मृत्युमन्ववायानि नानुगच्छेयमिति भीतः सन्नुत्पत्तिमरणे तत्र न प्राप्नुयात् । उत्पत्तिमरणे तादृशदेशे यथा न भवतस्तथा यतेतेति यावत् ।

रंग.

( ३ ) स वायू रुद्रशक्रादेर्वासुदेवबलाश्रयः । विमुच्य ( विमोच्य ) पापसंघातं दिशामन्तेष्वथाक्षिपत् ।

मध्व.

**सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्याथैना मृत्युमत्यवहत् ॥**[1]

( १ ) सा वा एषा देवता — तदेतत्प्राणात्मज्ञानकर्मफलं वागादीनामग्न्याद्यात्मत्वमुच्यते । अथैना मृत्युमत्यवहत् — यस्मादाध्यात्मिकपरिच्छेदकरः पाप्मा मृत्युः प्राणात्मविज्ञानेनापहतः, तस्मात्स प्राणोऽपहन्ता पाप्मनो मृत्योः । तस्मात्स एव प्राणः, एना वागादिदेवताः, प्रकृतं पाप्मानं मृत्युं, अतीत्य अवहत् प्रापयत् स्वं स्वमपरिच्छिन्नमग्न्यादिदेवतात्मरूपम् ।

* शंकर.

---

(१) बृउ १।३।१०, शब्रा १४।४।१।११, मध्व यत्राऽऽसां( यत्तासां )

* रंग सरलार्थम् ।

(१) बृउ. १।३।११, शब्रा १४।४।१।१२.

( २ ) उन्मुच्य मृत्योस्ताश्चैवाथोर्ध्वलोकेषु चावहत् । मध्व

स[1] वै वाचमेव प्रथमामत्यवहत् । सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत् । सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते ॥

( १ ) स वै वाचमेव प्रथमामत्यवहत् — स प्राण , वाचमेव, प्रथमां प्रधानामित्येतत् — उद्गीथकर्मणीतरकरणापेक्षया साधकतमत्व प्राधान्य तस्याः — तां प्रथमामत्यवहत् वहन कृतवान् । तस्याः पुनर्मृत्युमतीत्योढाया' किं रूपमित्युच्यते — सा वाक्, यदा यस्मिन्काले पाप्मान मृत्यु, अत्यमुच्यत अतीत्या मुच्यत मोचिता स्वयमेव, तदा स' अग्नि' अभवत् — सा वाक् — पूर्वमप्यग्निरेव सती मृत्युवियोगेऽप्यग्निरेवाभवत् । एतावास्तु विशेषो मृत्युवियोगे — सोऽयमतिक्रान्तोऽग्नि', परेण मृत्यु परस्तान्मृत्यो, दीप्यते । प्राङ्मोक्षा·मृत्युप्रतिबद्धोऽध्यात्मवागात्मना नेदानीमिव दीप्तिमानासीत् । इदानीं तु मृत्यु परेण दीप्यते मृत्यु वियोगात् । * शकर

( २ ) स इत्यग्न्यपेक्षया पुलिङ्गनिर्देश. । यद्यपि वागभिमानिनी देवता सर्वदाऽग्निरेव तथाऽप्यवगतदोषतयाऽग्रत' परादिप्रवृत्तिनिमित्तपौष्कल्यशालितयाऽग्निरभवत् । अद्य रामस्य रामत्वमित्यादिवदिति भाव. । रग

अथ[2] प्राणमत्यवहत् । स यदा मृत्युमत्यमुच्यत स वायुरभवत् । सोऽयं वायु परेण मृत्युमतिक्रान्त पवते ॥

तथा — प्राणः घ्राण — वायुरभवत् स तु पवते मृत्यु परेणातिक्रान्त. । सर्वमन्यदुक्तार्थम् । शकर

अथ[1] चक्षुरत्यवहत् । तद्यदा मृत्युमत्यमुच्यत स आदित्योऽभवत् । सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति ॥

तथा चक्षुरादित्योऽभवत् । स तु तपति । शकर.

अथ[2] श्रोत्रमत्यवहत् । तद्यदा मृत्युमत्यमुच्यत ता दिशोऽभवन् । ता इमा दिश परेण मृत्युमतिक्रान्ताः ॥

( १ ) तथा श्रोत्र दिशोऽभवन् । दिशः प्राच्यादिविभागेनावस्थिताः । शकर

( २ ) अत्र भान्तीति शेष. । दिक्शब्दो देवतापरः । रग

अथ[3] मनोऽत्यवहत् । तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत् । सोऽसौ चन्द्र परेण मृत्युमतिक्रान्तो भाति । एवꣳ ह वा एनमेषा देवता मृत्युमतिवहति य एवं वेद ॥

( १ ) मनः चन्द्रमा — भाति । यथा पूर्वयजमान वागाद्यग्न्यादिभावेन मृत्युमत्यवहत्, एव एन वर्तमानयजमानमपि, ह वै, एषा प्राणदेवता मृत्युमतिवहति वागाद्यग्न्यादिभावेन, एव यो वागादिपञ्चकविशिष्ट प्राण वेद, 'त यथा यथोपासते तदेव भवति' इति श्रुतेः । शकर.

( २ ) यः पुमान्वागाद्यभिमान्यग्न्यादिदेवतानामत्यवहनक्रम वेद तमेनमेषा प्राणदेवता मृत्युमतिक्रामयतीत्यर्थ' । रग.

( ३ ) अग्निर्नासिक्यवायुश्च दिक्पा इन्द्रादयोऽखिलाः । सूर्य. सोमश्च रुद्रश्च तेनैव स्वपदे स्थिता. ॥ मध्व.

अथात्मने[4]ऽन्नाद्यमागायत् । यद्धि किंचान्नमद्यतेऽनेनैव तदद्यते । इह प्रतितिष्ठति ॥

---

* ऐआ २।४।२।४ ( पृ ५८३ ) इत्यत्र सगृहीत अशकरभाष्य अत्राप्यनुसधेयम् ।

(१) बृउ १।३।१२, शब्रा १४।४।१।१३, अशकर. २।४।१४, श्रीकर २।४।१२, वल्लभ. २।४।१५ मृत्युमति ( मृत्युनाऽति ), विज्ञान. ३।३।५३

(२) बृउ १।३।१३, शब्रा १४।४।१।१४

(१) बृउ १।३।१४, शब्रा १४।४।१।१५

(२) बृउ १।३।१५, शब्रा १४।४।१।१६

(३) बृउ १।३।१६, शब्रा १४।४।१।१७; रग चन्द्र ( चन्द्रमा )

(४) बृउ १।३।१७, शब्रा. १४।४।१।१८, वल्लभ. २।४।२२

(१) अथात्मने। यथा वागादिभिरात्मार्थमागान कृत, तथा मुख्योऽपि प्राणः सर्वप्राणसाधारण प्राजापत्यफलमागान कृत्वा त्रिषु पवमानेषु, अथ अनन्तर, शिष्टेषु नवसु स्तोत्रेषु, आत्मने आत्मार्थे, अन्नाद्य अन्न च तदाद्य च अन्नाद्य, आगायत्। कर्तु. कामसयोगो वाचनिक इत्युक्तम्। कथ पुनस्तदन्नाद्य प्राणेनात्मार्थमागीतमिति गम्यत इत्यत्र हेतुमाह—यत्किंचेति—सामान्यान्नमात्रपरामर्शार्थः। हीति हेतौ। यस्माल्लोके प्राणिभिर्यत्किंचिदन्नमद्यते भक्ष्यते तदनेनैव प्राणेनैव। अन इति प्राणस्याख्या प्रसिद्धा। अन'शब्द सान्त शकटवाची। यस्त्वन्य. स्वरान्तः स प्राणपर्यायः। प्राणेनैव तदद्यत इत्यर्थ। किंच, न केवल प्राणेनाद्यत एवान्नाद्य, तस्मिञ्शरीराकारपरिणतेऽन्नाद्ये इह, प्रतितिष्ठति प्राण। तस्मात्प्राणेनात्मन॰ प्रतिष्ठार्थमागीतमन्नाद्यम्। यदपि प्राणेनान्नादन तदपि प्राणस्य प्रतिष्ठार्थमेवेति न वागादिष्विव कल्याणासङ्गजपाप्मसभवः प्राणेऽस्ति।

* शकर

(२) 'यो वाचि भोगस्त देवेभ्य आगायत्। यत्कल्याण वदति तदात्मने' इति यजमानगामिफलव्यतिरिक्त कल्याणवदनादिक यथा वागाद्या देवता आगायस्तथा प्राणोऽप्यात्मनेऽन्नाद्यमागायत्। अन्नमत्तीत्यन्नादः। तस्य भावोऽन्नाद्यम्। आदिवृद्ध्यभावश्छान्दस.। अथवाऽन्न च तदाद्य चान्नाद्यम्। आद्यमदनार्ह भक्षणार्हमित्यर्थ.। आगायद्गानसामर्थ्येन आपयत्। सपादितवानित्यर्थ॰।

§ रग.

**[1]ते देवा अब्रुवन्। एतावद्वा इदꣳ सर्वं यदन्नम्। तदात्मन आगासी। अनु नोऽस्मिन्नन्न आभजस्वेति। ते वै माऽभिसविशतेति। तथेति तꣳ समन्त परिण्यविशन्त। तस्माद्यदनेनान्नमत्ति तेनैतास्तृप्यन्ति। एवꣳ ह वा एनꣳ स्वा अभिसविशन्ति भर्ता स्वानाꣳश्रेष्ठः पुर एता भवत्यन्नादोऽधिपतिर्य एव वेद। य उ हैवविदꣳस्वेषु प्रति प्रतिर्बुभूषति न हैवाल भार्येभ्यो भवति। अथ य एवैतमनु भवति यो वैतमनु भार्यान्बुभूर्षति स हैवाल भार्येभ्यो भवति॥**

(१) ते देवा। नन्ववधारणमयुक्त प्राणेनैव तदद्यते इति। वागादीनामप्यन्ननिमित्तोपकारदर्शनात्। नैष दोष.। प्राणद्वारत्वात्तदुपकारस्य। कथ प्राणद्वारकोऽन्नकृतो वागादीनामुपकार इत्येतमर्थं प्रदर्शयन्नाह—ते वागादयो देवा॰ स्वविषयद्योतनाद्देवा अब्रुवन् उक्तवन्तो मुख्य प्राण—'इद एतावत्, नातोऽधिकमस्ति। वा इति स्मरणार्थ। इद तत्सर्वमेतावदेव। किम्? यदन्न प्राणस्थितिकरमद्यते लोके, तत्सर्वं आत्मने आत्मार्थं आगासीः आगीतवानसि आगानेनात्मसात्कृतमित्यर्थ.। वय चान्नमन्तरेण स्थातु नोत्सहामहे। अतः अनु पश्चात्, न अस्मान् अस्मिन्नन्ने आत्मार्थे तवान्ने आभजस्व आभाजयस्व। णिचोऽश्रवण छान्दसम्। अस्माश्चान्नभागिनः कुरु'। इतर आह—'ते यूय यदि अन्नार्थिन. वै, मा मां, अभिसविशत समन्ततो मामाभिमुख्येन निविशत'—इति एवमुक्तवति प्राणे, तथेति एवमिति, त प्राण परिसमन्त परिसमन्तात्, न्यविशन्त निश्चयेनाविशन्त, त प्राण परिवेष्ट्य निविष्टवन्त इत्यर्थ.। तथा निविष्टाना प्राणानुज्ञया तेषा प्राणेनैवाद्यमान प्राणस्थितिकर सदन्न तृप्तिकर भवति। न स्वातन्त्र्येणान्नसबन्धो वागादीनाम्। तस्माद्युक्तमेवावधारणम्—'अनेनैव तदद्यते' इति। तदेव चाह—तस्मात् यस्मात्प्राणाश्रयतयैव प्राणानुज्ञयाऽभिसनिविष्टा वागादिदेवतास्तस्मात्, यदन्न, अनेन प्राणेन, अत्ति लोक, तेनान्नेन, एता वागाद्या॰, तृप्यन्ति। वागाद्याश्रय प्राण यो वेद — 'वागादयश्च पञ्च प्राणाश्रयाः' इति, तमप्येव, एव ह वै, स्वा॰ ज्ञातयः, अभिसविशन्ति वागादय इव प्राण, ज्ञातीनामाश्रयणीयो भवतीत्यभिप्रायः। अभिसनिविष्टानां च स्वाना, प्राणवदेव वागादीना, स्वान्नेन भर्ता भवति। तथा श्रेष्ठः, पुरोऽग्रतः एता गन्ता,

---

* वल्लभ छाउ ६।५।१ (पृ ९००) इत्यत्र द्रष्टव्यम्।

§ शेषपदार्थो शंकरवत्।

(१) बृउ १।३।१८, शब्रा १४।४।१।१९, २०, रग प्रतिर्बु (प्रति बु) स हैवाल (स एवाल), मध्व प्रतिर्बु (प्रति बु)

भवति वागादीनामिव प्राणः । तथा अन्नाद. अनामयावीत्यर्थः । अधिपतिरधिष्ठाय च पालयिता स्वतन्त्र पतिः प्राणवदेव वागादीनाम् । य एव प्राण वेद तस्यैतद्यथोक्त फल भवति । किंच य उ हैवविद प्राणविद प्रति, स्वेषु ज्ञातीनां मध्ये, प्रति. प्रतिकूल , बुभूषति प्रतिस्पर्धी भवितुमिच्छति, सोऽसुरा इव प्राणप्रतिस्पर्धिनो न हैवाल न पर्याप्त., भार्येभ्य. भरणीये-न', भवति, भर्तुमित्यर्थः । अथ पुनर्य एव ज्ञातीना मध्ये एतमेवविद वागादय इव प्राण, अनु अनुगतो भवति, यो वा एतमेवविद, अन्वेव अनुवर्तय-न्नेव, आत्मीयान्भार्यान्बुभूर्षति भर्तुमिच्छति, यथैव वागादय. प्राणानुवृत्त्यात्मबुभूर्षव आसन् । स हैवाल पर्याप्त., नार्येभ्यो भरणीयेभ्य, भवति, भर्तु, नेतर. स्वतन्त्र । सर्वमेतत्प्राणगुणविज्ञानफलमुक्तम् ।

शकर

( २ ) नोऽस्मानाभजस्व । आङीषदर्थे । अल्प-भागवतः कुर्वित्यर्थ । अनेन प्राणेन सहित सन् जीवो यदन्नमत्ति तेनैवान्नेन वागाद्यास्तृप्यन्ति ।

* रग

**सोऽयास्य आङ्गिरसोऽङ्गाना॰ हि रस । प्राणो वा अङ्गाना॰रस । प्राणो हि वा अङ्गाना॰ रस' । तस्माद्यस्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तच्छुष्यति । एष हि वा अङ्गाना॰ रसः ॥**

( १ ) कार्यकरणानामात्मत्वप्रतिपादनाय प्राण स्याङ्गिरसत्वमुपन्यस्तम्—' सोऽयास्य आङ्गिरस ' इति। 'अस्माद्धेतोरयमाङ्गिरस' इत्याङ्गिरसत्वे हेतुर्नोक्त । तद्धेतुसिद्धयर्थमारम्यते । तद्धेतुसिद्धयायत्त हि कार्यकर-णात्मत्व प्राणस्य । अनन्तर च वागादीना प्राणाधी-नतोक्ता । सा च कथमुपपादनीयेत्याह—' सोऽयास्य आङ्गिरस.' इत्यादि यथोपन्यस्तमेवोपादीयते उत्तरार्थम्। 'प्राणो वा अङ्गाना रस' ' इत्येवमन्त वाक्य यथाव्या ख्यातार्थमेव पुन' स्मारयति । कथम् ? प्राणो वा अङ्गाना रस इति । प्राणो हि, हिशब्द. प्रसिद्धौ । अङ्गाना रसः । प्रसिद्धमेतत्प्राणस्याङ्गरसत्व न वागादीनाम् । तस्माद्युक्त ' प्राणो वा ' इति स्मार-णम् । कथ पुनः प्रसिद्धत्वमित्यत आह — तस्मा-च्छब्द उपसहारार्थ उपरितेन सबध्यते । यस्माद्यतो ऽवयवात्, कस्मादनुक्तविशेषात्, यस्मात्कस्मात् यतः कुतश्चिच्च, अङ्गाच्छरीरावयवादविशेषितात्, प्राण. उत्क्रामत्यपसर्पति, तदेव तत्रैव, तदङ्ग शुष्यति नीरस भवति शोषमुपैति । तस्मादेष हि वा अङ्गाना रस इत्युपसहारः । अत' कार्यकरणानामात्मा प्राण इत्येतत्सिद्धम् । आत्मापाये हि शोषो मरण स्यात् । तस्मात्तेन जीवन्ति प्राणिन' सर्वे । तस्मादपास्य वागा-दीन्प्राण एवोपास्य इति समुदायार्थः ।

शकर.

( २ ) पूर्वमुक्तमेवायास्यत्वमाङ्गिरसत्व च विद्याभेद-भ्रमापनुत्तये पुनराह । * रग.

**एष उ एव बृहस्पति' वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पति ॥**

( १ ) एष उ । न केवल कार्यकरणयोरेवात्मा प्राणो रूपकर्मभूतयोः, किं तर्हि ? ऋग्यजु'साम्ना नाम-भूतानामात्मेति सर्वात्मकतया प्राण स्तुवन् महीकरोत्यु-पास्यत्वाय—एष उ एव प्रकृत आङ्गिरसो बृहस्पतिः । कथ बृहस्पतिरिति, उच्यते—वाग्वै बृहती बृहतीच्छन्दः षट्त्रिंशदक्षरा । अनुष्टुप च वाक् । कथ ? ' वाग्वा अनुष्टुप् ' इति श्रुतेः । सा च वागनुष्टुब्बृहत्या छन्द-स्यन्तर्भवति । अतो युक्त ' वाग्वै बृहती ' इति प्रसिद्धव द्वक्तुम् । बृहत्या च सर्वा ऋचोऽन्तर्भवन्ति, प्राणसस्तु-तत्वात् । ' प्राणो बृहती प्राण ऋच इत्येव विद्यात् ' इति श्रुत्यन्तरात् । वागात्मत्वाच्चर्चो प्राणेऽन्तर्भावः । तत्कथमित्याह—तस्या वाचो बृहत्या ऋच , एषः प्राण , पति., तस्या निर्वर्तकत्वात् । कौष्ठयाग्निप्रेरितमा-रुतनिर्वर्त्या हि ऋक् । पालनाद्वा वाचः पति' । प्राणेन हि पाल्यते वाक्, अप्राणस्य शब्दोच्चारणसामर्थ्या-भावात् । तस्मादु बृहस्पतिः ऋचा प्राण आत्मेत्यर्थः ।

शकर.

* शेषपदवाक्यार्था शकरवत् ।

(१) बृउ १।३।१९, शब्रा १४।४।१।२१, ब्रशकर २।४।११

* शेष सरलार्थ ।

(१) बृउ १।३।२०, शब्रा १४।४।१।२२

( २ ) उश्चार्थे । बृहस्पतिश्चैष एवेत्यर्थः । तत्र हेतुः—वाग्वै बृहती । बृहत्याख्यच्छन्दसो वाग्रूपत्वादिति भाव. । रग.

**एष उ एव ब्रह्मणस्पति । वाग्वै ब्रह्म तस्या एष पतिस्तस्माद्ब्रह्मणस्पतिः ॥**

( १ ) तथा यजुषाम् । कथम् ? एष उ एव ब्रह्मणस्पतिः । वाग्वै ब्रह्म—ब्रह्म यजु' । तच्च वाग्विशेष एव । तस्या वाचो यजुषो ब्रह्मण', एष पतिः । तस्माद्ब्रह्मणस्पति' — पूर्ववत् । कथ पुनरेतदवगम्यते बृहती-ब्रह्मणोर्ऋग्यजुष्ट्वं न पुनरन्यार्थत्वमिति । उच्यते—वाच' अन्ते सामसामानाधिकरण्यनिर्देशात् ' वाग्वै साम ' इति । तथा च ' वाग्वै बृहती ' ' वाग्वै ब्रह्म ' इति च वाक्समानाधिकरणयोर्ऋग्यजुष्ट्व युक्तम् । परिशेषाच्च—साम्न्यभिहिते ऋग्यजुषी एव परिशिष्टे । वाग्विशेषत्वाच्च— वाग्विशेषौ हि ऋग्यजुषी, तस्मात्तयोर्वाचा समानाधिकरणता युक्ता । अविशेषप्रसङ्गाच्च — ' साम ' ' उद्गीथः ' इति च स्पष्ट विशेषाभिधानत्वम् । तथा बृहतीब्रह्मशब्दयोरपि विशेषाभिधानत्व युक्तम् । अन्यथा अनिर्धारितविशेषयोरानर्थक्यापत्तेश्च, विशेषाभिधानस्य वाङ्मात्रत्वे चोभयत्र पौनरुक्त्यात् । ऋग्यजु.सामोद्गीथशब्दाना च श्रुतिष्वेव क्रमदर्शनात् । शकर

( २ ) ब्रह्मशब्दो वेदपर । शिष्ट पूर्ववत् । रग.

( ३ ) स्त्रीगुणैः सर्वपूर्णत्वाद्बृहती तु सरस्वती । अनन्तवेदरूपत्वात्सैव ब्रह्मेति कीर्तिता । विष्णुना बृहितत्वाद्वा तत्पतिर्वायुरीश्वर. । मध्व

**एष उ एव साम । वाग्वै सामैष सा चामश्चेति तत्साम्न· सामत्वम् । यद्वेव सम प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्माद्वेव साम । अश्नुते साम्नः सायुज्यꣳ सलोकता य एवमेतत्साम वेद ॥**

( १ ) एष उ एव साम । कथमित्याह — वाग्वै सा यत्किंचित्स्त्रीशब्दाभिधेय सा वाक् । सर्वस्त्रीशब्दाभिधेयवस्तुविषयो हि सर्वनाम—सा—शब्दः । तथा अम एष प्राण. । सर्वपुंशब्दाभिधेयवस्तुविषयोऽम.-शब्दः । ' केन मे पौंस्नानि नामान्याप्नोषीति, प्राणेनेति ब्रूयात् । केन मे स्त्रीनामानीति वाचा' इति श्रुत्यन्तरात् । वाक्प्राणाभिधानभूतोऽय सामशब्दः । तथा प्राणनिर्वर्त्यस्वरादिसमुदायमात्र गीति. सामशब्देनाभिधीयते । अतो न प्राणवाग्व्यतिरेकेण सामनामास्ति किंचित्, स्वरवर्णादेश्च प्राणनिर्वर्त्यत्वात्प्राणतन्त्रत्वाच्च । एष उ एव प्राणः साम । यस्मात् साम सामेति वाक्प्राणात्मक — सा चामश्चेति, तत् तस्मात् साम्नो गीतिरूपस्य स्वरादिसमुदायस्य सामत्व तत् प्रगीत भुवि । यत् उ एव सम. तुल्य. सर्वेण वक्ष्यमाणेन प्रकारेण, तस्माद्वा सामेत्यनेन सबन्ध । वा—शब्दः सामशब्दलाभनिमित्तप्रकारान्तरनिर्देशसामर्थ्यलभ्य' । केन पुन प्रकारेण प्राणस्य तुल्यत्वमित्युच्यते — सम. प्लुषिणा पुत्तिकाशरीरेण, समो मशकेन मशकशरीरेण, समो नागेन हस्तिशरीरेण, सम एभिस्त्रिभिर्लोकैः त्रैलोक्यशरीरेण प्राजापत्येन, समोऽनेन जगद्रूपेण हैरण्यगर्भेण । पुत्तिकादिशरीरेषु गोत्वादिवत्कार्त्स्न्येन परिसमाप्त इति समत्व प्राणस्य, न पुनः शरीरमात्रपरिमाणेनैव, अमूर्तत्वात् सर्वगतत्वाच्च । न च घटप्रासादादिप्रदीपवत्सको, चविकासितया शरीरेषु तावन्मात्र समत्वम् । ' त एते सर्व एव समाः सर्वेऽनन्ता ' इति श्रुतेः । सर्वगतस्य तु शरीरेषु शरीरपरिमाणवृत्तिलाभो न विरुध्यते । एव समत्वात्सामाख्य प्राण वेद यः श्रुतिप्रकाशितमहत्त्व तस्यैतत्फलम् — अश्नुते व्याप्नोति, साम्नः प्राणस्य, सायुज्य सयुग्भाव समानदेहेन्द्रियाभिमानत्व, सालोक्य समानलोकतां वा, भावनाविशेषतः, य एवमेतत् यथोक्त साम प्राण वेद — आ प्राणात्माभिमानाभिव्यक्तेरुपास्ते इत्यर्थ. ।

शकर.

---

(१) बृउ. १।३।२१, शब्रा १४।४।१।२३ स्तस्माद्+ ( ह ), बलदेव २।४।१३

(२) बृउ १।३।२२, शब्रा १४।४।१।२४, ब्रशकर २।४।१३, भास्कर २।४।१३, ४।२।११, रग सलोकता + ( जयति ), रामानुज २।४।१२, श्रीकठ २।४।१२, श्रीकर २।४।१०, ११, वल्लभ ३।२।१८ समो मशकेन समो नागेन ( समो नागेन समो मशकेन ), बलदेव २।४।१३

( २ ) ‘ अणुश्च ’ — अणुश्चाय मुख्य. प्राण. प्रत्येतव्य., इतरप्राणवत् । अणुत्व चेहापि सौक्ष्म्यपरिच्छेदौ, न परमाणुतुल्यत्वम् । पञ्चभिर्वृत्तिभिः कृत्स्नशरीरव्यापित्वात्सूक्ष्म प्राण । उत्क्रान्तौ पार्श्वस्थेनानुपलभ्यमानत्वात् । परिच्छिन्नश्चोत्क्रान्तिगत्यागतिश्रुतिभ्य'। ननु विभुत्वमपि प्राणस्य समाम्नायते ‘ सम प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण ’ इत्येवमादिप्रदेशेषु । तदुच्यते— आधिदैविकेन समष्टिव्यष्टिरूपेण हैरण्यगर्भेण प्राणात्मनैवैतद्विभुत्वमाम्नायते, नाऽऽध्यात्मिकेन । अपि च सम' प्लुषिणेत्यादिना साम्यवचनेन प्रतिप्राणिवर्तिन. प्राणस्य परिच्छेद एव प्रदर्श्यते तस्माददोष. ।

* श्रशकर २।४।१३

( ३ ) सूक्ष्मशरीर व्यतिरिक्तमस्तीति । सकोचविकाशात्मक चेद ‘ सम प्लुषिणा ’ इति श्रुते. ।

भास्कर ४।२।११

( ४ ) एष उ एव वाग्विशिष्टो मुख्यप्राण एव साम, सा चामश्चेति सामशब्दनिर्वचनात् । सेति स्त्रीलिङ्गेन तच्छब्देन वाक्परामृश्यते । अम गत्यादिष्विति गमनार्थादमतेर । अमति गच्छतीत्यम' प्राणः । तदुपपादयति — वाग्वै सामैष इति । समष्टिजीवभूतत्रैलोक्य शरीरकब्रह्मण शरीरेणापि समः, देवमनुष्यादिसर्वशरीरेणापि सम. । यथा घटप्रदीपप्रभा तावन्मात्रव्यापिनी, प्रासादप्रदीपप्रभा च प्रासादव्यापिनी, एव प्राणोऽपि ब्रह्मादिपिपीलिकान्तशरीरेषु तत्तच्छरीरानुरूपव्याप्तिमत्त्वेन सम. । सायुज्य प्राणदेवतासमानलोकतामश्नुते । सलोकतां जयति सालोक्य प्राप्नोति । य एव वेद साम शब्दनिरुक्तिं सर्वदाऽनुसधत्ते ।

रग

( ५ ) ‘ अणुश्च ’ — अणुश्चायम् । पूर्ववदुत्क्रान्त्यादिश्रवणात् । ‘ तमुत्क्रामन्त प्राणोऽनूत्क्रामति’ (बृउ ४।४।२ ) इत्यादिषु । अधिकाशङ्का तु ‘ सम एभिस्त्रिभिर्लोकै. समोऽनेन सर्वेण ’ ‘ प्राणे सर्वे प्रतिष्ठितम् ’ ( प्रउ २।६ ) ‘सर्वं हीद प्राणेनावृतम्’ इत्यादिश्रवणान्महापरिमाण इति । परिहारस्तूत्क्रान्त्यादिश्रवणात्परिच्छिन्नत्वे निश्चिते सर्वस्य प्राणिजातस्य प्राणायत्तस्थितित्वेन वैभववादोपपत्तिरिति ।

रामानुज. २।४।१२

( ६ ) ‘ अत एव चोपमा सूर्यकादिवत् ’— प्रपञ्चधर्मा भगवत्युच्यन्त इत्यत्र निदर्शनान्तरमाह । अत एव इममेव निर्णयमाश्रित्य, ‘ सम' प्लुषिणा समो नागेन समो मशकेन सम एभिस्त्रिभिर्लोकै' समोऽनेन सर्वेण’ इति निरुपमस्य भगवतो यदुपमान तत् तद्धर्मसबन्धात् । न चात्र स्वतन्त्रतादृशधर्मवत्त्व ब्रह्मणो वक्तु युक्तम् । नन्विदमपि विरुद्धमित्याशङ्क्य दृष्टान्तमाह—सूर्यकादिवत्। सूर्येण सहित जल सूर्यकम् । ‘ यथा ह्यय ज्योतिरात्मा विवस्वान् अपो भिन्ना बहुधैकोऽनुगच्छन् । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्’ इति यथेतरसश्लिष्टस्योपमानत्वमेव समः प्लुषिणेत्यपि । चकारस्तु विरोधाभावो वक्तव्योऽधिकरण च सपूर्णमेकदेशिन इति सूचयति । तस्माज्जडजीवधर्माणां भवत्युपचारः, निषेधस्तु मुख्य इति ।

वल्लभ ३।२।१८

**एष उ वा उद्गीथ । प्राणो वा उत् । प्राणेन हीद५ सर्वमुत्तब्धम् । वागेव गीथा । उच्च गीथा चेति स उद्गीथ ॥**

( १ ) एष उ वा उद्गीथ. । उद्गीथो नाम सामावयवो भक्तिविशेष. नोद्गान, सामाधिकारात् । कथमुद्गीथ प्राण ? प्राणो वा उत् — प्राणेन हि यस्मादिद सर्वे जगत् उत्तब्ध ऊर्ध्वे स्तब्धमुत्तम्भितं विधृतमित्यर्थ. । उत्तब्धार्थावद्योतकोऽयमुच्छब्दः प्राणगुणाभिधायक । तस्मादुत् प्राणः । वागेव गीथा, शब्दविशेषत्वादुद्गीथभक्ते । गायतेः शब्दार्थत्वात्सा वागेव । न ह्युद्गीथभक्तेः शब्दव्यतिरेकेण किंचिद्रूपमुत्प्रेक्ष्यते, तस्माद्युक्तमवधारण वागेव गीथेति । उच्च प्राण., गीथा च प्राणतन्त्रा वाक्, इत्युभयमेकेन शब्देनाभिधीयते स उद्गीथः । शकर.

( २ ) एष उ वा एष एव वाक्प्राणसमुदाय. ।

रग.

* भास्कर श्रीकठ श्रशकरवत् ।

(१) बृउ १।३।२३, शब्रा १४।४।१।२५; श्रशकर. ३।३।६

( ३ ) सारत्वात्स्त्रीषु देवी सेत्युक्ता सामरूपत । गीथेत्युक्ता तदुद्गीथ. सामाख्योऽर्धतनुस्तथा । अर्धनारीनरवपुर्वायु. कुत्रचिदीरित· । मध्व.

तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाच । अयं त्यस्य राजा मूर्धानं विपातयताद्यदितोऽयास्य आङ्गिरसोऽन्येनोदगायदिति । वाचा च ह्येव स प्राणेन चोदगायदिति ॥

( १ ) उक्तार्थदाढर्याय आख्यायिका आरभ्यते । तद्धापि । तत् तत्रैतस्मिन्नुक्तेऽर्थे, हापि आख्यायिकापि श्रूयते ह स्म । ब्रह्मदत्त. नामत·, चिकितानस्यापत्य चैकितान. तदपत्य युवा चैकितानेय., राजान यज्ञे सोम, भक्षयन्नुवाच । किम् ? 'अय चमसस्थो मया भक्ष्यमाणो राजा, त्यस्य तस्य ममानृतवादिनः, मूर्धान शिरः विपातयतात् विस्पष्ट पातयतु ' । तोरय तातङादेशः, आशिषि लोट् विपातयतादिति । यद्यहमनृतवादी स्यामित्यर्थः । कथ पुनरनृतवादित्वप्राप्तिरिति, उच्यते —' यत् यदि इतोऽस्मात्प्रकृतात्प्राणाद्वाक्सयुक्तात्, अयास्यः मुख्यप्राणाभिधायकेनायास्याङ्गिरसशब्देनाभिधीयते विश्वसृजा पूर्वर्षीणा सत्रे उद्गाता, सोऽन्येन देवतान्तरेण वाक्प्राणव्यतिरिक्तेन, उदगायत् उद्गान कृतवान् । ततोऽहमनृतवादी स्याम् । तस्य मम देवता विपरीतप्रतिपत्तुर्मूर्धान विपातयतु ' इत्येव शपथ चकारेति विज्ञाने प्रत्ययकर्तव्यतादार्ढ्यं दर्शयति । तमिममाख्यायिकानिर्धारितमर्थं स्वेन वचसोपसहरति श्रुतिः — वाचा च प्राणप्रधानया प्राणेन च स्वस्यात्मभूतेन, स· अयास्य आङ्गिरस उद्गाता, उदगायत् इत्येषोऽर्थो निर्धारित शपथेन ।

शकर

( २ ) ' अन्यस्याय राजा मूर्धान विपातयतात् ' । अय भक्ष्यमाणो राजाऽन्यस्य शिर. पातयतु । ननु किं तेनापराद्धमित्याशङ्कयाऽऽह —' यदितोऽयास्याङ्गिरसोऽन्येनोदगायदिति ' । यस्मात्कारणादितोऽस्मादयास्याङ्गिरसो मुख्यप्राणादन्येन देवतान्तरेणोदगायदुद्गान कृतवान् । अयास्याङ्गिरसशब्दितमुख्यप्राणवेदनमन्तरेण देवतान्तरदृष्टिं कृत्वा यस्तूद्गायति तस्य सोम पिबतो मूर्धा पतत्वित्यर्थ । * रंग.

( ३ ) अयास्यो विश्वसृग्यज्ञे तेनाविष्टोऽन्वगायत । मध्व.

(१) बृउ १।३।२४, शब्रा १४।४।१।२६, ब्रशकर ३।३।७, रग श्चैकितानेयो ( श्चैकिनायनेयो ) अय त्यस्य ( अन्यस्याय ) ऽयास्य आङ्गि ( ऽयास्याङ्गि ) च ह्येव ( चैव ) चोदगायदिति ( चोदगायत् ); मध्व त्यस्य ( त्वस्य ) यदितो ( यदीतो )

तस्य हैतस्य साम्नो य. स्वं वेद भवति हास्य स्वम् । तस्य वै स्वर एव स्वम् । तस्मादार्त्विज्यं करिष्यन्वाचि स्वरमिच्छेत । तया वाचा स्वरसपन्नयार्त्विज्य कुर्यात् । तस्माद्यज्ञे स्वरवन्त दिदृक्षन्त एव । अथो यस्य स्व भवति । भवति हास्य स्वं य एवमेतत्साम्नः स्व वेद ॥

( १ ) तस्य हैतस्य । तस्येति प्रकृत प्राणमभिसबध्नाति । ह एतस्येति मुख्य व्यपदिशत्यभिनयेन । साम्न. सामशब्दवाच्यस्य प्राणस्य, य स्व धन, वेद । तस्य ह किं स्यात् ? भवति हास्य स्वम् । फलेन प्रलोभ्याभिमुखीकृत्य शुश्रूषवे आह — तस्य वै साम्न· स्वर एव स्वम् । स्वर इति कण्ठगत माधुर्य, तदेवास्य स्व विभूषणम् । तेन हि भूषितमृद्धिमल्लक्ष्यते उद्गानम् । यस्मादेव तस्मात् आर्त्विज्य ऋत्विक्कर्मोद्गान, करिष्यन् , वाचि विषये, वाचि वागाश्रित स्वर इच्छेत इच्छेत्, साम्नो धनवत्तां स्वरेण चिकीर्षुरुद्गाता । इद तु प्रासङ्गिक विधीयते । साम्न सौस्वर्येण स्वरवत्त्वप्रत्यये कर्तव्ये, इच्छामात्रेण सौस्वर्यं न भवतीति,· दन्तधावनतैलपानादि सामर्थ्यात्कर्तव्यमित्यर्थ· । तयैव सस्कृतया वाचा स्वरसपन्नया आर्त्विज्य कुर्यात् । तस्मात् — यस्मात्साम्नः स्वभूत. स्वरः तेन स्वेन भूषित साम, अतो यज्ञे स्वरवन्त उद्गातार, दिदृक्षन्ते एव द्रष्टुमिच्छन्त्येव, धनिनमिव लौकिकाः । प्रसिद्ध हि लोके — अथो अपि, यस्य स्व धन भवति, त धनिन दिदृक्षन्ते — इति । सिद्धस्य गुणाविज्ञान-

* अनेन धृत पाठ प्रामादिक , सप्रदायपाठविरोधात् ।

(१) बृउ १।३।२५, शब्रा. १४।४।१।२७, रंग. तया ( स तया ).

फलसंबन्धस्योपसंहारः क्रियते — भवति हास्य स्वं, य एवमेतत्साम्नः स्वं वेदेति ।

* शंकर.

( २ ) गृहकोशादिकं यत्स्वं तद्रूप्यस्य स्वरे स्थितः ।

मध्व.

**तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णम् । तस्य वै स्वर एव सुवर्णम् । भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेद ॥**

( १ ) अथान्यो गुणः सुवर्णवत्तालक्षणो विधीयते । असावपि सौस्वर्यमेव । एतावान्विशेषः — पूर्वं कण्ठगतमाधुर्यं, इदं तु लाक्षणिकं सुवर्णशब्दवाच्यम् । तस्य हैतस्य साम्नो यः सुवर्णं वेद, भवति हास्य सुवर्णं, सुवर्णशब्दसामान्यात्स्वरसुवर्णयोः । लौकिकमेव सुवर्णं गुणविज्ञानफलं भवतीत्यर्थः । तस्य वै स्वर एव सुवर्णम् । भवति हास्य सुवर्णं य एवमेतत् साम्नः सुवर्णं वेदेति पूर्ववत्सर्वम् ।

शंकर

( २ ) कृष्टप्रथमादिलक्षणः सप्तस्वरविदः स्वर एव सुवर्णं भूषणम् । रंग

( ३ ) भूषणस्वर्णरूपी च स एवापि स्वरे स्थितः ।

मध्व

**तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति । तस्य वै वागेव प्रतिष्ठा । वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयते । अन्न इत्यु हैक आहुः ॥**

( १ ) तथा प्रतिष्ठागुणं विधित्सन्नाह — तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद, प्रतितिष्ठत्यस्यामिति प्रतिष्ठा वाक्, तां प्रतिष्ठां साम्नो गुणं यो वेद स प्रतितिष्ठति ह । 'तं यथा यथोपासते' इति श्रुतेस्तद्गुणत्वं युक्तम् । पूर्ववत्फलेन प्रतिलोभितायं का प्रतिष्ठेति शुश्रूषव आह — तस्य वै साम्नो वागेव । वागिति जिह्वामूलादीनां स्थानानामाख्या, सैव प्रतिष्ठा । तदाह — वाचि हि जिह्वामूलादिषु हि यस्मात्प्रतिष्ठितः सन्नेष प्राणः एतद्गानं गीयते गीतिभावमापद्यते, तस्मात्साम्नः प्रतिष्ठा वाक् । अन्ने प्रतिष्ठितो गीयते, इत्यु ह एके अन्ये आहुः । इह प्रतितिष्ठतीति युक्तम् । अनिन्दितत्वादेकीयपक्षस्य विकल्पेन प्रतिष्ठागुणविज्ञानं कुर्यात् — वाग्वा प्रतिष्ठा, अन्नं वेति । शंकर.

( २ ) एष मुख्यप्राणो वाचि वागिन्द्रियस्थानभूतजिह्वामूलादिस्थानेषु प्रतिष्ठितः सन्नेतत्साम गीयते सामभावमापन्नमुद्गीयत इत्येके आहुः । उशब्दोऽवधारणे । पूर्वत्रेह प्रतितिष्ठतीति प्राणस्यान्नप्रतिष्ठितत्वोक्तेर्वाक्छब्दितजिह्वामूलादिप्रतिष्ठितत्वमेकीयमतमिति भावः ।

रंग.

( ३ ) वागिन्द्रियं पीठरूपं तस्य देवस्य संस्थितम् । गानकालेऽन्यदा त्वन्नं प्राणपीठमिति स्मृतम् ॥

मध्व.

**अथातः पवमानानामेवाभ्यारोहः । स वै खलु प्रस्तोता साम प्रस्तौति । स यत्र प्रस्तुयात्तदेतानि जपेत् । असतो मा सद्गमय, तमसो मा ज्योतिर्गमय, मृत्योर्माऽमृतं गमयेति । स यदाहासतो मा सद्गमयेति । मृत्युर्वा असत्सदमृतं, मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवैतदाह । तमसो मा ज्योतिर्गमयेति । मृत्युर्वै तमो ज्योतिरमृतं, मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवैतदाह । मृत्योर्मामृतं गमयेति । नात्र तिरोहितमिवास्ति । अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत् । तस्मादु तेषु वरं वृणीत । यं कामं कामयेत तम् । स एष एवंविदुद्गातात्मने वा यजमानाय वा यं कामं कामयते तमागायति । तद्धैतल्लोकजिदेव । न हैवालोक्यताया आशाऽस्ति य एवमेतत्साम वेद ॥**

( १ ) एवं प्राणविज्ञानवतो जपकर्म विधित्स्यते । यद्विज्ञानवतो जपकर्मण्यधिकारस्तद्विज्ञानमुक्तम् । अथानन्तरं, यस्माच्चैव विदुषा प्रयुज्यमानं देवभावायाभ्यारोहफलं जपकर्म, अतः तस्मात् तद्विधीयते इह । तस्य चोद्गीथसंबन्धात्सर्वत्र प्राप्तौ पवमानानामिति वचनात्,

---

* रंग पदवाक्यार्थो शंकरवत् ।

(१) बृउ १।३।२६, शब्रा १४।४।१।२८.

(२) बृउ. १।३।२७, शब्रा १४।४।१।२९

(१) बृउ १।३।२८, शब्रा १४।४।१।३०—३३; ब्रशंकर ३।४।४४, रंग तदेतानि ( तदैतानि ), मध्व. प्रस्तुया ( प्रस्तूया )

पवमानेषु त्रिष्वपि कर्तव्यतायां प्राप्तायां, पुनः कालसंकोचं करोति — स वै खलु प्रस्तोता साम प्रस्तौति। स प्रस्तोता, यत्र यस्मिन्काले, साम प्रस्तुयात्प्रारभेत, तस्मिन्काल एतानि जपेत्। अस्य च जपकर्मण आख्या अभ्यारोह इति। आभिमुख्येनारोहत्यनेन जपकर्मणैवविद्देवभावमात्मानमित्यभ्यारोहः। एतानीति बहुवचनात्त्रीणि यजूंषि। द्वितीयानिर्देशाद्ब्राह्मणोत्पन्नत्वाच्च यथापठित एव स्वरः प्रयोक्तव्यो न मान्त्रः। याजमानं जपकर्म।

एतानि तानि यजूंषि — 'असतो मा सद्गमय' 'तमसो मा ज्योतिर्गमय' 'मृत्योर्माऽमृतं गमय' इति। मन्त्राणामर्थस्तिरोहितो भवतीति स्वयमेव व्याचष्टे ब्राह्मणं मन्त्रार्थं — सः मन्त्रः, यदाह यदुक्तवान्। कोऽसावर्थ इत्युच्यते — 'असतो मा सद्गमय' इति। मृत्युर्वा असत् — स्वाभाविककर्मविज्ञाने मृत्युरित्युच्येते। असत् अत्यन्ताधोभावहेतुत्वात्। सत् अमृतम् — सत् शास्त्रीयकर्मविज्ञाने, अमरणहेतुत्वादमृतम्। तस्मादसतः असत्कर्मणो ज्ञानाच्च, मा मां, सत् शास्त्रीयकर्मविज्ञाने, गमय देवभावसाधनात्मभावमापादयेत्यर्थः। तत्र वाक्यार्थमाह — अमृतं मां कुर्वित्येवैतदाहेति। तथा तमसो मा ज्योतिर्गमयेति। मृत्युर्वै तमः, सर्वं ह्यज्ञानमावरणात्मकत्वात्तमः तदेव च मरणहेतुत्वान्मृत्युः। ज्योतिरमृतं पूर्वोक्तविपरीतं दैवं स्वरूपम्। प्रकाशात्मकत्वात् ज्ञानं ज्योतिः, तदेवामृतं अविनाशात्मकत्वात्, तस्मात्तमसो मा ज्योतिर्गमयेति। पूर्ववन्मृत्योर्माऽमृतं गमयेत्यादि। अमृतं मा कुर्वित्येवैतदाह — दैवं प्राजापत्यं फलभावमापादयेत्यर्थः। पूर्वो मन्त्रोऽसाधनस्वभावात्साधनभावमापादयेति। द्वितीयस्तु साधनभावादप्यज्ञानरूपात्साध्यभावमापादयेति। मृत्योर्माऽमृतं गमयेति पूर्वयोरेव मन्त्रयोः समुच्चितोऽर्थस्तृतीयेन मन्त्रेणोच्यत इति प्रसिद्धार्थतैव। नात्र तृतीये मन्त्रे तिरोहितमन्तर्हितमिवार्थरूपं पूर्वयोरिव मन्त्रयोरस्ति, यथाश्रुत एवार्थः।

याजमानमुद्गानं कृत्वा पवमानेषु त्रिषु, अथानन्तरं यानीतराणि शिष्टानि स्तोत्राणि, तेष्वात्मनेऽन्नाद्यमागायेत् — प्राणविदुद्गाता प्राणभूतः प्राणवदेव। यस्मात्स एष उद्गाता एवं प्राणं यथोक्तं वेत्ति, अतः प्राणवदेवं तं कामं साधयितुं समर्थः। तस्माद्यजमानस्तेषु स्तोत्रेषु प्रयुज्यमानेषु वरं वृणीत। यं कामं कामयेत तं कामं वरं वृणीत प्रार्थयेत। यस्मात्स एष एवंविदुद्गातेति तस्माच्छन्दात्प्रागेव सबध्यते। आत्मने वा यजमानाय वा यं कामं कामयते इच्छत्युद्गाता, तमागायत्यागानेन साधयति।

एवं तावज्ज्ञानकर्मभ्यां प्राणात्मापत्तिरित्युक्तम्। तत्र नास्त्याशङ्कासंभवः। अतः कर्मापाये प्राणापत्तिर्भवति वा न वेत्याशङ्क्यते। तदाशङ्कानिवृत्त्यर्थमाह — तद्धैतल्लोकजिदेवेति। तद्ध तदेतत्प्राणदर्शनं कर्मवियुक्तं केवलमपि, लोकजिदेवेति लोकसाधनमेव। न ह एव अलोक्यतायै अलोकार्हत्वाय, आशा आशसनं प्रार्थनं, नैवास्ति ह। न हि प्राणात्मन्युत्पन्नात्माभिमानस्य तत्प्राप्त्याशसनं संभवति। न हि ग्रामस्थः कदा ग्रामं प्राप्नुयामित्यरण्यस्थ इवाशास्ते। असंनिकृष्टविषये ह्यनात्मन्याशसनं, न तस्यात्मनि संभवति। तस्मान्नाशाऽस्ति — कदाचित्प्राणात्मभावं न प्रतिपद्येयेति।

कस्यैतत्। य एवमेतत्साम प्राणं यथोक्तं निर्धारितमहिमानं वेद — 'अहमस्मि प्राण इन्द्रियविषयासङ्गैरासुरैः पाप्मभिरधर्षणीयो विशुद्धः। वागादिपञ्चकं च मदाश्रयत्वादग्न्याद्यात्मरूपं स्वाभाविकविज्ञानोत्थेन्द्रियविषयासङ्गजनितासुरपाप्मदोषवियुक्तम्। सर्वभूतेषु च मदाश्रयान्नाद्योपयोगबन्धनम्। आत्मा चाहं सर्वभूतानां, आङ्गिरसत्वात्। ऋग्यजुःसामोद्गीथभूतायाश्च वाच आत्मा, तद्व्याप्तेस्तन्निर्वर्तकत्वाच्च। मम साम्नो गीतिभावमापद्यमानस्य बाह्यं धनं भूषणं सौस्वर्यम्। ततोऽप्यन्तरतरं सौवर्ण्यं लाक्षणिकं सौस्वर्यम्। गीतिभावमापद्यमानस्य मम कण्ठादिस्थानानि प्रतिष्ठा। एवंगुणोऽहं पुत्तिकादिशरीरेषु कार्त्स्न्येन परिसमाप्तः, अमूर्तत्वात्सर्वगतत्वाच्च' — इति आ एवमभिमानाभिव्यक्तेर्वेद उपास्ते इत्यर्थः। शंकर.

(२) एवमुद्गातृप्राणविद्योपदेशानन्तरमेवंभूतं प्राणविदमुद्गातारं प्रति प्रार्थनारूपाणां ब्रह्मलोकाभ्यारोहहेतुतयाऽभ्यारोहशब्दितानां मन्त्राणां प्रयोगकालं मन्त्रार्थं



चाऽऽ६ — बहिष्पवमानमाध्यन्दिनपवमानार्भवपवमानभेदभिन्नानां त्रयाणामेव पवमानानामभ्यारोहमन्त्रा नेतरेषामापृष्ठादिस्तोत्राणामित्यर्थ. । यदा प्रस्तौति तदैतानि यजूंषि यजमानो जपेदित्यर्थः । यस्मात्कारणात्त्रिष्वपि पवमानेषूद्गातैभिर्यजुर्मन्त्रैर्यजमानेन स्वगत फल याचितोऽतो यजमानगामिफलमुद्दिश्यैवाऽऽगायेत् । पवमानत्रयव्यतिरिक्तेष्वाज्यादिषु नवस्तोत्रेष्वात्मने स्वार्थमन्नाद्यमुद्दिश्याऽऽगायेत् । पूर्वोक्त तदेतत्प्राणवेदन लोकजिदेव ब्रह्मलोकसाधनमेव । सामशब्दनिर्दिष्टमाङ्गिरसत्वादिप्रागुक्तगुणविशिष्ट यो वेद य उपास्ते, सोऽलोक्यताया लोक्यता लोकार्हता तदभावोऽलोक्यता ब्रह्मलोकार्हत्वाभावत, भीत्या न हैवाऽऽशाऽस्ति नैवाशास्ते साधनान्तर नाभिलषति, तस्य कृतार्थत्वादिति भाव. । रग.

( ३ ) 'पवमाना इति प्रोक्ता मुख्यवायुत्वयोगिनः । अनादिकालसबन्धा योग्यता सा प्रकीर्तिता । सर्वाधिक्यारोहण तु तेषामेव विमुक्तिकम् । प्रस्तावकाले प्रस्तोतु योग्यो वायुपदस्य यः । यजेद्यजूषि त्वेतानि त्रीणि विष्णु सदा स्मरन् । असतो मा सदित्यादि विष्णुप्रार्थनभाञ्जि च । द्वात्रिंशल्लक्षणैः सम्यग्युक्ता वायुत्वयोग्यका । नियमेनैव विष्णोस्तु प्रादुर्भावाविशेषतः । सहस्रारेण चक्रेण चिह्निता दक्षिणे करे । गदयाष्टाश्रया चैव शतावर्तेन कम्बुना । वामे करे तथाब्जेन सहस्रदलशोभिना । अष्टाविंशल्लक्षणाश्च गिरीशपदयोगिन । चतुर्विंशतिमारभ्य षोडशादासुरा स्मृताः । अष्टकाद्दषयश्चोक्तास्तदूनाश्चक्रवर्तिन । असद्दुःखात्मको मृत्युः सदानन्दोऽमृत स्मृतम् । तमोऽज्ञानात्मको मृत्युर्ज्योतिर्ज्ञानात्मक स्मृतम् । मृत्यतोर्माऽमृतमित्यत्र मृत्युर्मरणमेव च । एवविद्वायुपदयोग्या उद्गातार एव तु । यदा भवेयुस्तेषु तदा याजी तु वृणुयाद्वरम् । आत्मने याजिने वापि ह्युद्गातैवविधो यदि । आगायेत्तद्भवेन्नात्र कार्याभीष्टे विचारणा । एव त सामनामान वायु यो वेद सादरम् । तस्येष्टलोकराहित्ये नाशा कार्याऽरिणा क्वचित् । तस्माद्वायुत्वयोग्यैर्हि येषा लोका प्रकीर्तिताः । तेषामलोकशङ्का च नैव कार्या कदाचन । यस्मान्नारायणस्यातिप्रियाः प्राणत्वयोगिन ॥ ' इत्यादि महासंहितायाम् ।

आस्यादयत इत्ययास्य । प्रसिद्धमृत्य्वमृतत्वान्नात्र तिरोहितमिवास्ति । एष उद्गातेति वायुत्वयोग्यः । तद्धेतल्लोकजिदेवेति तस्माद्वराभियाचनम् । मध्व.

( आत्मत सर्वा वर्णाश्रमधर्मान्ता सृष्टि )

आत्मन अहनामपुरुषनाम्नोरुपपत्ति , स्रष्टरि तस्मिन् भयजननिरासौ, आत्मन स्त्रीपुम्भेदेनाविर्भाव , तत प्राणिमिथुनसृष्टि , आत्मन सृष्टित्व, मर्त्याद्ब्रह्मण अमरदेवसृष्टि , नामरूपव्याकरण, तदर्थं शरीरप्रवेश आत्मनः, तस्य कर्मनामानि, आत्मोपासनविधि , आत्मन सर्वस्मात्प्रेयस्त्व, ब्रह्मज्ञानमहिमा, चातुर्वर्ण्यस्य धर्मस्य चोत्पत्ति , आत्मज्ञानेन क्षयिष्णुकर्मणोऽक्षयता, आत्मा देवपित्रादीना लोक आश्रमाधिकारी

**आत्मैवेदमग्र आसीत्पुरुषविध । सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत् । सोऽहमस्मीत्यग्रे व्याहरत् । ततोऽहनामाभवत् । तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाऽथान्यन्नाम प्रब्रूते यदस्य भवति । स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुष । ओषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य एव वेद ॥**

( १ ) आत्मैवेदमग्र आसीत् । ज्ञानकर्मभ्या समुच्चिताभ्या प्रजापतित्वप्राप्तिर्व्याख्याता, केवलप्राणदर्शनेन च — ' तद्धैतल्लोकजिदेव ' इत्यादिना । प्रजापते. फलभूतस्य सृष्टिस्थितिसहारेषु जगत. स्वातन्त्र्यादिविभूत्युपवर्णनेन ज्ञानकर्मणोर्वैदिकयो. फलोत्कर्षो वर्णयितव्य इत्येवमर्थमारभ्यते । तेन च कर्मकाण्डविहितज्ञानकर्मस्तुतिः कृता भवेत्सामर्थ्यात् । विवक्षित त्वेतत्— सर्वमप्येतज्ज्ञानकर्मफल ससार एव, भयारत्यादियुक्तत्वश्रवणात्कार्यकरणलक्षणत्वाच्च स्थूलव्यक्तानित्यविषयत्वाच्चेति । ब्रह्मविद्याया. केवलाया वक्ष्यमाणाया मोक्षहेतुत्वमित्युत्तरार्थं चेति । न हि ससारविषयात्साध्यसाधनादिभेदलक्षणादविरक्तस्यात्मैकत्वज्ञानविषयेऽधिकारः, अतृषितस्येव पाने । तस्मात् ज्ञानकर्मफलोत्कर्षोपवर्णन

(१) बृउ १।४।१, शब्रा १४।४।२।१,२; ब्रशाकर. ३।३।१६, रग नुवीक्ष्य ( न्वीक्ष्य ), बलदेव १।१।६.

उत्तरार्थम् । तथा च वक्ष्यति—' तदेतत्पदनीयमस्य ' ' तदेतत्प्रेयः पुत्रात् ' इत्यादि ।

आत्मैव आत्मेति प्रजापतिः प्रथमोऽण्डजः शरीर्यभिधीयते । वैदिकज्ञानकर्मफलभूत. स एव—किम् ? इद शरीरभेदजात तेन प्रजापतिशरीरेणाविभक्त आत्मैवासीत् अग्रे प्राक्शरीरान्तरोत्पत्ते । स च पुरुषविध. पुरुषप्रकारः शिर पाण्यादिलक्षणो विराट् । स एव प्रथम. सभूतोऽनुवीक्ष्यान्वालोचन कृत्वा—'कोऽह किंलक्षणो वास्मि' इति नान्यद्वस्त्वन्तर आत्मनः प्राणपिण्डात्मकात्कार्यकरणरूपात् नापश्यत् न ददर्श । केवल त्वात्मानमेव सर्वात्मानमपश्यत् । तथा पूर्वजन्मश्रौतविज्ञानसस्कृत. ' सोऽह प्रजापतिः, सर्वात्माऽहमस्मि ' इत्यग्रे व्याहरत् व्याहृतवान् । ततः तस्मात्, यतः पूर्वज्ञानसस्कारादात्मानमेवाहमित्यभ्यधादग्रे तस्मात्, अहनामाभवत् । तस्योपनिषदहमिति श्रुतिप्रदर्शितमेव नाम वक्ष्यति । तस्मात्, यस्मात्कारणे प्रजापतावेव वृत्त तस्मात्, तत्कार्यभूतेषु प्राणिष्वेतर्हि एतस्मिन्नपि काले, आमन्त्रितः कस्त्वमित्युक्त. सन्, ' अहमय ' इत्येवाग्रे उक्त्वा कारणात्माभिधानेनाऽऽत्मानमभिधायाग्रे, पुनर्विशेषनामजिज्ञासवे अथ अनन्तर विशेषपिण्डाभिधान ' देवदत्त ' ' यज्ञदत्त. ' वेति प्रब्रूते कथयति—यन्नामास्य विशेषपिण्डस्य मातापितृकृत भवति, तत्कथयति । स च प्रजापतिः, अतिक्रान्तजन्मनि सम्यक्कर्मज्ञानभावनानुष्ठानैः साधकावस्थाया, यद्यस्मात्, कर्मज्ञानभावनानुष्ठानै. प्रजापतित्व प्रतिपित्सूना पूर्व. प्रथम सन्, अस्मात्प्रजापतित्वप्रतिपित्सुसमुदायात्सर्वस्मात्, आदौ औषत् अदहत् । किम् ? आसङ्गाज्ञानलक्षणान्सर्वान्पाप्मनः प्रजापतित्वप्रतिबन्धकारणभूतान् । यस्मादेव तस्मात्पुरुषः—पूर्वमौषदिति पुरुषः । अथाय प्रजापतिरोषित्वा प्रतिबन्धकान् पाप्मनः सर्वान्, पुरुषः प्रजापतिरभवत् । एवमन्योऽपि ज्ञानकर्मभावनानुष्ठानवह्निना केवल ज्ञानबलाद्वा ओषति भस्मीकरोति ह वै सः तम् । कम् ? योऽस्माद्विदुषः पूर्वः प्रथम. प्रजापतिर्बुभूषति भवितुमिच्छति तमित्यर्थ. । त दर्शयति—य एव वेदेति, सामर्थ्याज्ज्ञानभावनाप्रकर्षवान् । नन्वनर्थाय प्राजापत्यप्रतिपित्सा, एवविदा चेद्दह्यते । नैष दोषः, ज्ञानभावनोत्कर्षाभावात् प्रथम प्रजापतित्वप्रतिपत्त्यभावमात्रत्वाद्दाहस्य । उत्कृष्टसाधन प्रथम प्रजापतित्व प्राप्नुवन् न्यूनसाधनो न प्राप्नोतीति, स त दहतीत्युच्यते । न पुन. प्रत्यक्षमुत्कृष्टसाधनेनेतरो दह्यते—यथा लोके आजिसृता य प्रथममाजिमुपसर्पति तेनेतरे दग्धा इवापहृतसामर्थ्या भवन्ति, तद्वत् ।

शकर.

( २ ) इद जगदग्रे सृष्टेः प्राक् पुरुषविध आत्मैवाऽऽसीत् । अस्य वाक्यस्य कारणवाक्यत्वादात्मशब्दो नारायणपरः । ' स यो हैतमग्निं वैश्वानर पुरुषविध पुरुषेऽन्त प्रतिष्ठित वेद ' ' अन्वय पुरुषविध. ' इति पुरुषविधशब्दस्य भगवति प्रयुक्तत्वात् । पुरुषस्य विधेव विधा यस्य स पुरुषविध. । पुरुषाकार इत्यर्थः । अस्याऽऽत्मन पुरुषविधत्व चाऽऽनन्दमयत्व ज्ञापयति । ' आत्मन आकाश सभूत ' ( तैउ २।१ ) इत्युपक्रम्य ' अन्योन्तर आत्माऽऽनन्दमय ' ( तैउ २।५ ) इत्युक्त्वा तस्य पुरुषविधत्वप्रतिपादनादिति व्यासार्यैः सर्वव्याख्यानाधिकरणे ह्युक्तम् । स पुरुषोऽन्वीक्ष्यान्वीक्षमाण. साक्षात्कुर्वन्नात्मनोऽन्य विभक्त नापश्यत्सृष्टे. प्राक्तमः परे देव एकीभवतीत्युक्तरीत्याऽय पीताम्बुवच्चिदचित्प्रपञ्चस्य परमात्मनोऽविभक्तत्वादिति भावः । अहमिति हिरण्यगर्भनाम । अहमभिमानाश्रयसृष्टिपुरुषाणां प्रथमत्वाद्धिरण्यगर्भस्य । उक्त च मोक्षधर्मे भृगुभरद्वाजसवादे— ' तस्मात्पद्मात्समभवद्ब्रह्मा वेदमयो निधिः । अहकार इति ख्यातः सर्वभूतात्मभूतकृत् ॥ ' इति । तस्मादयमर्थ. । अहमस्मि, अहकार. स्या, चतुर्मुखः स्यामिति सकल्पवाक्य व्याजहार ततोऽहनामा चतुर्मुखोऽभवत् । यस्माद्धेतोर्भगवता प्रथमतश्चतुर्मुखेऽहशब्दः प्रयुक्तस्तस्माद्धेतोरेतर्ह्यप्यस्मिन्नपि काले केनचित्पुसाऽऽमन्त्रितोऽय जनोऽहमित्येवाग्र उक्त्वाऽथान्यद्यदस्य पित्रादिकृत नाम भवति तद्वदति । स आत्मा यस्मात्सर्वस्मात्पूर्वो यस्माच्च हेतोः सर्वान्पाप्मन औषददहत् । उष दाहे । तस्मात्पुरुष । अत्र स इत्यनेन नाव्यवहितस्याहनाम्नो ग्रहणमुचितम् । तस्य स्वयकर्मवश्यस्य सर्वपापप्रदाहकत्वाद्यसभवादिति द्रष्टव्यम् । सर्वकारणत्वे सति सर्वपापप्रदाहकत्व पुरुषशब्दप्रवृत्तिनिमित्तमिति भाव. । पुरिसज्ञे शरीरेऽस्मिञ्शयनात्पुरुषो हरिः । शकारस्य

प्रकारोऽय वचनेन प्रयुज्यते इति भगवदसाधारणपुरुषशब्देनोपक्रमात् इयमुपनिषन्नारायणपरेत्यवगन्तव्यम् । तद्वेदनस्य फलमाह—एव पुरुषत्वनिरुक्तिक्रम निरन्तरमनुसधत्ते स तमोषति दहति । कमित्यत्राह—योऽस्मात्पूर्वो बुभूषति । य पुमानस्मात्पुरुषविद. पूर्वो बुभूषति श्रेष्ठो भवितुमिच्छति श्रेष्ठो भूयामी( भवेयामि )तीच्छतीत्यर्थ । विजिगीषु तिरस्करोतीति फलितार्थः ।

रग

(३) इदमग्रे एतस्याग्रे परमात्मैवासीत् । तत पुरुषविघो ब्रह्मासीत् । पुरुषो विष्णुस्तद्विधत्वात्पुरुषविध. । एतस्य जगतो ह्यग्र आसीन्नारायण. पर. । एक एव श्रिया सार्धं तमात्मा पुरुषेत्यपि । आहुस्तस्मात्पुरुषविधो ब्रह्मा समभवत्प्रभो. । ब्रह्मादेश्च श्रिय श्चैव नित्य विष्णुर्गुणाधिक । यथा तथैव रुद्रादेर्ब्रह्मा यस्माद्गुणाधिक. । एतस्मात्पुरुषविधता ब्रह्मणः सप्रकीर्तिता । स तु सर्वा दिशो दृष्ट्वा नान्यद्दृष्ट्वा पितामह । अब्रवीदहमस्मीति स्वाहेयत्वमनुस्मरन् । ह्यतु शक्यमिद सर्वमासीदेकोऽभव यत. । अहेयत्व स्वरूपस्य स तत. ( स एव ) समचिन्तयत् । ततोऽभवदहनामा स चाभूत्पुरुषाभिध । ओषणात्सर्वपापाना पूर्व. पुरुष उच्यते । नारायणप्रसादेन य एव पुरुषाभिधम् । वेद स्वाभिमत यस्तु पूर्वं प्राप्तुमभीप्सति । ओषेत्सर्वमतुष्ट सन् ब्रह्मविष्णुप्रसादत. ॥ मध्व

**सोऽबिभेत्तस्मादेकाकी बिभेति । स हायमीक्षां चक्रे, यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति । तत एवास्य भय वीयाय । कस्माद्धयभेष्यत् । द्वितीयाद्वै भय भवति ॥**

(१) यदिद तुष्टूषित कर्मकाण्डविहितज्ञानकर्मफल प्राजापत्यलक्षण, नैव तत्ससारविषयमत्यक्रामदितीममर्थं प्रदर्शयिष्यन्नाह — सोऽबिभेत् । स· प्रजापति., योऽय प्रथम. शरीरी पुरुषविधो व्याख्यात स, अबिभेत् भीतवान् अस्मदादिवदेवेत्याह । यस्मादय पुरुषविधः शरीरकरणवान् आत्मनाशविषयविपरीतदर्शनवत्त्वादबिभेत्, तस्मात्तत्सामान्यादद्यत्वेऽप्येकाकी बिभेति । किंचास्मदादिवदेव भयहेतुविपरीतदर्शनापनोदकारणं यथाभूतात्मदर्शनम् । सोऽय प्रजापति , ईक्षां ईक्षण, चक्रे कृतवान्ह । कथमित्याह—यत् यस्मात् मत् मत्तोऽन्यत् आत्मव्यतिरेकेण वस्त्वन्तर प्रतिद्वन्द्वीभूत नास्ति, तस्मिन्नात्मविनाशहेत्वभावे, कस्मान्नु बिभेमि इति । तत एव यथाभूतात्मदर्शनादस्य प्रजापतेर्भय वीयाय विस्पष्टमपगतवत् । तस्य प्रजापतेर्यद्भय तत्केवलाविद्यानिमित्तमेव परमार्थदर्शनेऽनुपपन्नमित्याह — कस्माद्धयभेष्यत् ? किमित्यसौ भीतवान् ? परमार्थनिरूपणाया भयमनुपपन्नमेवेत्यभिप्राय । यस्माद्द्वितीयाद्वस्त्वन्तराद्वै भय भवति । द्वितीय च वस्त्वन्तरमविद्याप्रत्युपस्थापितमेव । न ह्यदृश्यमान द्वितीय भयजन्मनो हेतु·, ‘ तत्र को मोहः कः शोक एकत्वमनुपश्यत. ’ इति मन्त्रवर्णात् । यच्चैकत्वदर्शनेन भयमपनुनोद, तद्युक्तम् । कस्मात् ? द्वितीयाद्वस्त्वन्तराद्वै भय भवति । तदेकत्वदर्शनेन द्वितीयदर्शनमपनीतमिति नास्ति यतः ।

शाकर.

( २ ) अहनामा चतुर्मुखोऽबिभेत् । आत्मन एकाकिता दृष्ट्वाऽस्थानभयाविष्टोऽभवदित्यर्थं । अत्र स इति न परमप्रकृतस्य परमात्मन. परामर्श. सभवति, तस्यापहतपाप्मत्वेन भयसबन्धाभावादिति द्रष्टव्यम् । ‘तस्मादेकाकी बिभेति’ । अत एव हि लोकेऽद्यत्वेऽप्यसहायो बिभेति । ‘स हायमीक्षाचक्रे’ । हशब्दो वृत्तार्थस्मरणे । सोऽय चतुर्मुख एवमचिन्तयदित्यर्थः । किमिति— ‘ यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति ’ । यस्माद्धेतोर्मत्तोऽन्यत्प्रतिद्वन्द्वि वस्त्विह नास्ति कुतोऽहं बिभेमि । लोके हि प्रतिद्वन्द्विसत्त्वेऽसहायत्व भयहेतु· । तदभावे त्वसहायत्व न भयहेतुरिति भावः । ‘ तत एवास्य भय वीयाय ’ । तत एव विवेकरूपाज्ज्ञानादस्य भय वीतमित्यर्थः । उक्तमर्थं श्रुतिः स्वयमेवानुमोदते — ‘ कस्माद्धयभेष्यत् द्वितीयाद्वै भय भवति ’ । द्वितीयस्यैव भयहेतुत्वम् । तस्यैवाभावे कुतो भयं प्राप्स्यतीति भाव. । हिरण्यगर्भस्यापि शरीरपरिग्रहानन्तरमेव भयोत्पत्तेः शरीरित्व कष्टमिति भावः । अत्राद्वैतसाक्षात्काराद्भय निवृत्तमिति नार्थः । तथा सति आत्मरतेस्तस्योत्तरत्र नैव रेम इत्यरतिरिरसाप्रति-

(१) बृउ १।४।२, शब्रा १४।४।२।३, विज्ञान २।३।४६

पादनविरोध. । प्रारब्धवशादरतिरिस्यानुवृत्तौ भयमपि तद्वशात्कुतो नानुवर्ततेत्यास्तां तावत् । रंग

( ३ ) तस्य त्वेकस्य सहसा यतो भी· समजायत । तस्मादद्यापि चैकस्य निर्विवेक भय भवेत् । विममर्श ततो ब्रह्मा यस्मान्मे बाधको न हि । मया सृज्या यत. सर्वे इत. पश्चात्तनो हर· । अतः कस्माद्बिभेमीति तस्य भीतिरपोहिता । विष्णोरतिप्रियत्वात्तु तदन्येषा पितृत्वत· । कस्माद्भय भवेत्तस्य समानाद्धि भय भवेत् । विरोधिनोऽधिकाद्वाऽपि हीनाद्वा पारवश्यत. । हीनमेव यतस्तस्य सर्वमेव जगद्दृशे । न च जात तदा सर्वे हरिरेव यतः पर. ॥ मध्व

**स वै नैव रेमे । तस्मादेकाकी न रमते । स द्वितीयमैच्छत् । स हैतावानास यथा स्त्रीपुमाꣳसौ सपरिष्वक्तौ । स इममेवाऽऽत्मान द्वेधाऽपातयत् । तत पतिश्च पत्नी चाभवताम् । तस्मादिदमर्धबृगलमिव स्व इति ह स्माऽऽह याज्ञवल्क्य । तस्मादयमाकाश स्त्रिया पूर्यत एव । ताꣳ समभवत् । ततो मनुष्या अजायन्त ॥**

( १ ) इतश्च ससारविषय एव प्रजापतित्व, यतः सः प्रजापति र्वै नैव रेमे रतिं नान्वभवत् — अरत्याविष्टोऽभूदित्यर्थ. — अस्मदादिवदेव यत, इदानीमपि तस्मादेकाकित्वादिधर्मवत्त्वात् एकाकी न रमते रतिं नानुभवति । रतिर्नामेष्टार्थसयोगजा क्रीडा । तत्प्रसङ्गिन इष्टवियोगान्मनस्याकुलीभावोऽरतिरित्युच्यते । सः तस्या अरतेरपनोदाय द्वितीयमरत्यपघातसमर्थं स्त्रीवस्तु ऐच्छत् गृद्धिमकरोत् । तस्य चैव स्त्रीविषय गृध्यतः स्त्रिया परिष्वक्तस्येवात्मनो भावो बभूव । सः तेन सत्येप्सुत्वात् एतावान् एतत्परिमाण आस बभूव ह । किंपरिमाण इत्याह — यथा लोके स्त्रीपुमांसावरत्यपनोदाय सपरिष्वक्तौ यत्परिमाणौ स्याता, तथा तत्परिमाण., बभूवेत्यर्थ· । स यथा तत्परिमाणमेवेममात्मान द्वेधा द्विप्रकार अपातयत् पातितवान् । इममेवेत्यवधारण मूलकारणाद्विराजो विशेषणार्थम् । न क्षीरस्य सर्वोपमर्देन दधिभावापत्तिवद्विराट् सर्वोपमर्देनैतावानास । किं तर्हि ? आत्मना व्यवस्थितस्यैव विराज. सत्यसकल्पत्वादात्मव्यतिरिक्त स्त्रीपुसपरिष्वक्तपरिमाण शरीरान्तर बभूव । स एव च विराट् तथाभूत — ' स हैतावानास ' इति सामानाधिकरण्यात् । तत. तस्मात्पातनात् पतिश्च पत्नी चाभवतां इति दम्पत्योर्निर्वचन लौकिकयो· । अत एव तस्मात् — यस्मादात्मन एवार्धं पृथग्भूतः — येय स्त्री—तस्मात् — इद शरीरमात्मनोऽर्धबृगल — अर्ध च तत् बृगल विदल च तदर्धबृगल, अर्धविदलमिवेत्यर्थ , प्राक्स्त्र्युद्वहनात् कस्यार्धबृगलमित्युच्यते—स्व आत्मन इति । एवमाह स्म उक्तवान् किल, याज्ञवल्क्य — यज्ञस्य वल्को वक्ता यज्ञवल्कस्तस्यापत्य याज्ञवल्क्यो दैवरातिरित्यर्थ. । ब्रह्मणो वा अपत्यम् । यस्मादय पुरुषार्ध आकाश स्त्र्यर्धशून्यः, पुनरुद्वहनात्त स्मात्पूर्यते स्त्र्यर्धेन, पुनः सपुटीकरणेनेव विदलार्ध । ता स प्रजापतिर्मन्वाख्यः शतरूपाख्यामात्मनो दुहितर पत्नीत्वेन कल्पिता समभवत् मैथुनमुपगतवान् । ततः तस्मात्तदुपगमनात् मनुष्या अजायन्त उत्पन्नाः ।

शाकर.

( २ ) यथा लोके स्त्रीपुमासौ रत्यर्थे सपरिष्वक्तौ यत्परिमाणौ स्याता स तत्परिमाणो विवृद्धो बभूवेत्यर्थ. । स प्रजापतिरिम विवृद्धमात्मान शरीर द्वेधाऽपातयत् । तत. पतनादेव ( पति )पत्नीशब्दवाच्यौ दपती अभवताम् । उक्त च श्रीविष्णुपुराणे —

ब्रह्मणोऽभून्महाक्रोधस्त्रैलोक्यदहनक्षम ।
भ्रुकुटीकुटिलात्तस्य ललाटात्क्रोधदीपितात् ॥
समुत्पन्नस्तदा रुद्रो मध्यान्हार्कसमप्रभः ।
अर्धनारीनरवपु प्रचण्डोऽतिशरीरवान् ॥
विभजाऽऽत्मानमित्युक्त्वा त( त्रैवान्त )र्दधे ततः ।
तथोक्तोऽसौ द्विधा स्त्रीत्व पुरुषत्व तथाऽकरोत् ॥

श्रीभागवते च —

कस्य रूपमभूद्द्वेधा यत्कायमभिचक्षते ।
ताभ्या रूपविभागाभ्या यत्कायमभिचक्षते ॥ इति ।

* रंग.

( ३ ) न रेमे स ततो ब्रह्मा तस्मादेकस्य नो रतिः । अथापि पत्नीमैच्छच्च स स्थूलत्वमुपागत· ।

---

(१) बृउ १।४।३, शब्रा १४।४।२।४,५, वल्लभ १।१।११ (वै० )

* शेषवाक्यार्थ शाकरवत् ।

दपतीसहितौ यावद्ब्रह्मा चैव सरस्वती । तावद्देहोऽभवद्ब्रह्मा तदा देह द्विधाऽकरोत् । पातनात्पतिपत्नीत्व ( पत्नी च ) शब्द एनोरजायत । तस्मात्तयोरेकसुख भवत्येवार्धपात्रवत् । ततस्तस्यामुमेशादीन्देवान्सर्वान्मनूनपि । जनयामास बोधस्य प्राधान्य हि मनुष्यता ॥

मध्व.

[४]सो हेयमीक्षाचक्रे, कथ नु माऽऽत्मन एव जनयित्वा सभवति। हन्त तिरोऽसानीति। सा गौरभवद्दृषभ इतर । ता५ समेवाभवत्। ततो गावोऽजायन्त । वडवेतराऽभवदश्ववृष इतर । गर्दभीतरा गर्दभ इतर । ता५ समेवाभवत् । तत एकशफमजायत । अजेतराऽभवद्बस्त इतरः । अविरितरा मेष इतर । ता५ समेवाभवत् । ततोऽजावयोऽजायन्त । एवमेव यदिद किंच मिथुनमा पिपीलिकाभ्यस्तत्सर्वमसृजत ॥

( १ ) सा शतरूपा उ ह इयम् — सेय दुहितृगमने स्मार्तं प्रतिषेधमनुस्मरन्ती ईक्षाचक्रे । 'कथ न्विदमकृत्य, यन्मा मा आत्मन एव जनयित्वा उत्पाद्य सभवति उपगच्छति । यद्यप्यय निर्घृण., अह हन्तेदानीं तिरोऽसानि जात्यन्तरेण तिरस्कृत्वा भवानि ' इत्येवमीक्षित्वा असौ गौरभवत् । उत्पाद्य प्राणिकर्मभिश्चोद्यमानाया· पुन. पुन सैव मति शतरूपाया मनोश्चाभवत् । ततश्च ऋषभ इतरः । ता समेवाभवदित्यादि पूर्ववत् । ततो गावोऽजायन्त । तथा वडवेतरा अभवत् अश्ववृष इतरः । तथा गर्दभीतरा गर्दभ इतर· । तत्र वडवाश्ववृषादीनां सगमात्तत एकशफ एकखुर अश्वाश्वतरगर्दभाख्य त्रयमजायत । तथा अजा इतरा अभवत्, बस्तश्छाग इतर. । तथाविरितरा मेष इतर· । ता समेवाभवत् । तां तामिति वीप्सा, [ वीप्सा न मूलेऽस्ति, अत सा विवक्षिता—इति आनन्दगिरिटीका ] तामजा तामविं चेति समभवदेवेत्यर्थ । ततोऽजाश्चावयश्चाजावयोऽजायन्त । एवमेव यदिद किंच यत्किंचेद मिथुन स्त्रीपुसलक्षण द्वन्द्व, आ पिपीलिकाभ्यः पिपीलिकाभिः सह अनेनैव न्यायेन तत्सर्वमसृजत जगत्सृष्टवान् ।

* शकर

( २ ) सर्वज्ञाऽपि तु सा देवी विरिञ्चे भक्तिमत्यपि । तद्भार्यतामात्मनश्च नितरा धर्ममीक्षती । अनाद्यनन्तसबन्धमुभयोरपि जानती । स्त्रीस्वभाव दर्शयन्ती साऽधर्ममिव चैक्षत । नानासृष्टिप्रसिद्ध्यर्थं सा गोत्वादिकमाव्रजत् । वृषादिरूपता सोऽपि प्राप्य सृष्ट्वेदमञ्जसा ॥

मध्व.

[५]सोऽवेदहं वाव सृष्टिरस्म्यह५ हीद५ सर्वमसृक्षीति । तत सृष्टिरभवत् । सृष्ट्या५ हास्यैतस्यां भवति य एवं वेद ॥

(१) स प्रजापति. सर्वमिद जगत्सृष्ट्वा अवेत् । कथम् ? अह वाव अहमेव, सृष्टिः—सृज्यत इति सृष्टं जगदुच्यते सृष्टिरिति—यन्मया सृष्ट जगत् मदभेदत्वादहमेवास्मि, न मत्तो व्यतिरिच्यते । कुत एतत् ? अह हि यस्मात्, इद सर्वं जगत् असृक्षि सृष्टवानस्मि, तस्मादित्यर्थ. । यस्मात्सृष्टिशब्देनात्मानमेवाभ्यधात्प्रजापति ततः तस्मात् सृष्टिरभवत् सृष्टिनामाभवत् । सृष्ट्या जगति ह अस्य प्रजापतेः एतस्या एतस्मिन् जगति, स प्रजापतिवत्स्रष्टा भवति, स्वात्मनोऽनन्यभूतस्य जगत. । कः ? य एव प्रजापतिवद्यथोक्त स्वात्मनोऽनन्यभूत जगत् 'साध्यात्मादिभूताधिदैव जगदहमस्मि' इति वेद ।

शकर.

(२) यस्माद्धेतोः प्रजापतिरहमेव सृष्टिरित्यभेदोपचारेण सृष्टिशब्द प्रायुङ्क्त तत सृष्टिनामाऽभवदित्यर्थ. । य एव सृष्टिनिरुक्तिं वेद हास्य प्रजापतेरेतस्यां सृष्टौ मुख्यो भवतीत्यर्थ· ।

‡ रग.

(३) सर्जनात्सृष्टिनामाऽभूत्तद्वित्तत्पुत्रतां व्रजेत् । पिपीलिकान्तरुद्रादौ यथायोग्यत्वमात्मनः ॥

मध्व.

[६]अथेत्यभ्यमन्थत् । स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत । तस्मादेतदुभयमलोमकमन्तरतः ।

---

(१) बृउ १।४।४, शब्रा १४।४।२।६—९ ऋषभ ( वृषभ ), रग ऋषभ ( वृषभ ) मेष इतर । ता५ (मेष इतर । ता ता५)

* रग शकरवत् ।

‡ शेष शकरवत् ।

(१) बृउ १।४।५, शब्रा १४।४।२।१०

(२) बृउ १।४।६, शब्रा १४।४।२।११—१४; अशकर १।२।९, रग देवमे ( दैवमे ), श्रीकर १।२।९; बलदेव १।२।९.

**अलोमका हि योनिरन्तरत । तद्यदिदमाहुरमुं यजामु यजेत्येकैक देवमेतस्यैव सा विसृष्टि । एष उ ह्येव सर्वे देवा । अथ यत्किंचेदमार्द्रं तद्रेतसोऽसृजत । तदु सोम । एतावद्वा इद५ सर्वमन्न चैवान्नादश्च । सोम एवान्नमग्निरन्नाद । सैषा ब्रह्मणोऽतिसृष्टि । यच्छ्रेयसो देवानसृजताथ यन्मर्त्य सन्नमृतानसृजत तस्मादतिसृष्टि । अतिसृष्ट्या५ ह्यस्यैतस्या भवति य एव वेद ॥**

(१) एव स प्रजापतिर्जगदिद मिथुनात्मक सृष्ट्वा ब्राह्मणादिवर्णनियन्त्रीर्देवताः सिसृक्षुरादौ — अथइतिशब्दद्वयमभिनयप्रदर्शनार्थं—अनेन प्रकारेण मुखे हस्तौ प्रक्षिप्य अभ्यमन्थत् आभिमुख्येन मन्थनमकरोत् । स. मुख हस्ताभ्यां मथित्वा, मुखाच्च योने हस्ताभ्या च योनिभ्या, अग्निं ब्राह्मणजातेरनुग्रहकतारं, असृजत सृष्टवान् । यस्माद्दाहकस्याग्नेर्योनिरेतदुभय—हस्तौ मुख च, तस्मात् उभयमप्येतत् अलोमक लोमविवर्जितम् । किं सर्वमेव ? न, अन्तरत· अभ्यन्तरत. । अस्ति हि योन्या सामान्यमुभयस्यास्य । किम् ? अलोमका हि योनिरन्तरतः स्त्रीणाम् । तथा ब्राह्मणोऽपि मुखादेव जज्ञे प्रजापते । तस्मादेकयोनित्वात् ज्येष्ठेनेवानुजोऽनुगृह्यते, अग्निना ब्राह्मण· । तस्माद्ब्राह्मणोऽग्निदेवत्यो मुखवीर्यश्चेति श्रुति स्मृतिसिद्धम् । तथा बलाश्रयाभ्या बाहुभ्यां बलभिदादिक क्षत्रियजातिनियन्तार क्षत्रिय च । तस्मादैन्द्र क्षत्र बाहुवीर्यं चेति श्रुतौ स्मृतौ चावगतम् । तयोरुत ईहा चेष्टा तदाश्रयाद्वस्वादिलक्षण विशो नियन्तार विश च । तस्मात्कृष्यादिपरो वस्वादिदेवत्यश्च वैश्य. । तथा पूषण पृथ्वीदैवत शूद्र च पद्भ्या परीचरणक्षममसृजतेति—श्रुतिस्मृतिप्रसिद्धे । तत्र क्षत्रादिदेवतासर्गमिहानुक्त वक्ष्यमाणमप्युक्तवदुपसहरति सृष्टिसाकल्यानुकीर्त्यै । यथेयं श्रुतिर्व्यव स्थिता तथा प्रजापतिरेव सर्वे देवा इति निश्चितोऽर्थ. । स्रष्टुरनन्यत्वात्सृष्टाना, प्रजापतिनैव तु सृष्टत्वाद्देवानाम् । अथैव प्रकरणार्थे व्यवस्थिते तत्स्तुत्यभिप्रायेणाविद्वन्मतान्तरनिन्दोपन्यासः । अन्यनिन्दा अन्यस्तुतये । तत् तत्र कर्मप्रकरणे, केवलयाज्ञिका यागकाले, यदिद वच आहुः—'अमुमग्निं यजामुमिन्द्र यज' इत्यादि—नामशस्त्रस्तोत्रकर्मादिभिन्नत्वाद्भिन्नमेवाग्न्यादिदेवमेकैक मन्यमाना आहुरित्यभिप्रायः । तन्न तथा विद्यात् । यस्मादेतस्यैव प्रजापते सा विसृष्टिर्देवभेद· सर्वः, एष उ ह्येव प्रजापतिरेव प्राण सर्वे देवा· । तत्र प्रजापतेरेकस्य देवस्यात्राद्यलक्षणो भेदो विवक्षित इति—तत्राग्निरुक्तोऽत्ता, आद्य. सोम इदानीमुच्यते । अथ यत्किंचेद लोक आर्द्रं द्रवात्मक, तद्रेतस आत्मनो बीजात् असृजत, 'रेतस आपः' इति श्रुते. । द्रवात्मकश्च सोम. । तस्माद्यदार्द्रं प्रजापतिना रेतसः सृष्ट, तदु सोम एव । एतावद्वै एतावदेव, नातोऽधिक, इद सर्वम् । किं तत् ? अन्न चैव सोमो द्रवात्मकत्वादाप्यायक, अन्नादश्चाग्नि औष्ण्याद्रूक्षत्वाच्च । तत्रैवमवध्रियते—सोम एवान्न, यदद्यते तदेव सोम इत्यर्थः । य एवात्ता स एवाग्नि., अर्थबलाद्ध्यवधारणम् । अग्निरपि क्वचिद्धूयमान· सोमपक्षस्यैव । सोमोऽपीज्यमानोऽग्निरेव, अत्तृत्वात् । एवमग्नीषोमात्मक जगदात्मत्वेन पश्यन्न केनचिद्दोषेण लिप्यते, प्रजापतिश्च भवति । सैषा ब्रह्मण प्रजापतेरतिसृष्टिरात्मनोऽप्यतिशया । का सेत्याह— यच्छ्रेयस. प्रशस्यतरानात्मन. सकाशात् यस्मादसृजत देवान्, तस्माद्देवसृष्टिरतिसृष्टि. । कथ पुनरात्मनोऽतिशया सृष्टिरित्यत आह — अथ यत् यस्मात् मर्त्यः सन् मरणधर्मा सन्, अमृतान् अमरण धर्मिणो देवान् कर्मज्ञानवह्निना सर्वानात्मनः पाप्मनः ओषित्वा, असृजत तस्मादियमतिसृष्टि. उत्कृष्टज्ञानस्य फलमित्यर्थः । तस्मादेतामतिसृष्टिं प्रजापतेरात्मभूता यो वेद, स एतस्यामतिसृष्ट्या प्रजापतेरस्य, भवति प्रजापतिवदेव स्रष्टा भवति । शाकर.

( २ ) अथेति मङ्गलशब्दोच्चारणपूर्वकमभ्यमन्थत् । फूत्कारनिर्मन्थनसाधनमुखहस्तात्मकमुभयम् । अग्नेर्योनित्वादलोमकमन्तरतो मध्येऽलोमक लोमशून्यमित्यर्थः । योनेरन्तरतोऽलोमकत्वप्रसिद्धिं दर्शयति — 'अलोमका हि योनिरन्तरत· ' । स्पष्टोऽर्थ. । तस्माद्धेतोर्यज्ञे याज्ञिका अमु यजामु यजेति एकैक दैवमिन्द्रादिलक्षणमाहु. । एतस्य प्रजापतेरेव सा विसृष्टिर्विविधसृष्टि. । अत एव तत्सृष्टत्वादेव सर्वे देवा एष उ ह्येवैष एव कार्यकारणयोरभेदोपचारात्तयोक्ति. । यच्चेद कार्यमार्द्रं द्रवरूप दृश्यते तद्रेतसोऽसृजत । तद्रेतसः प्रजापतिरसृजतेत्यर्थः ।

‘ शिश्नाद्रेतो रेतस आप ’ इति श्रुते. । ‘ तदु सोम’ ’ तद्द्रवरूपमेव सोम सोमरस. । इद कार्यजातमन्नान्नादात्मकम् । सर्वस्य जगतोऽन्नान्नादात्मकत्वेऽग्नीषोमात्मकत्वमायातमित्याह । सोमस्य भक्ष्यमाणत्वादन्नत्वम् । अग्नेस्तदाहात्मकतयाऽन्नादत्वम् । अतो जगदग्नीषोमात्मकमिति भाव । यद्यस्माच्छ्रेयस. श्रेष्ठानूर्ध्वरेतस. सनन्ता( न्दा )दीन् देवानसृजत सैषा ब्रह्मणोऽतिसृष्टि । अतिशयिता सृष्टिरति सृष्टिः । कथमतिशयितसृष्टित्वमित्यत आह—प्रजापति स्वय मर्त्य सन् मरणधर्मा सन्नमृतान् मुक्तियोग्यान् ज्ञानवैराग्यादिसपन्नान्मुमुक्षून् सनन्ता(न्दा)दीन् देवानसृजत । य एव वेदैव प्रकरणज्ञानवानेतस्यामतिसृष्टौ मुख्यो भवतीत्यर्थ ।

रग

( ३ ) ‘ अथान्नादमथाप्यन्न स्रक्ष्यामीति विचिन्तयन् । ओष्ठद्वय ममन्थान्तर्हस्तौ चैव परस्परम् । तन्मुखाच्चैव हस्ताभ्यामन्तरग्निरजायत । एव सर्वस्य हेतुत्वात्सर्वस्यापि पतित्वत’ । सर्वे देवा एष एवेत्याहुर्वेदविदो जना. । स्वतन्त्रेषु यतः शब्दा वर्तेयु सर्व एव च । स रेतसः पुन’ सोममसृजद्ब्रह्मविद्वर । सर्वाधिकोऽपि योग्यत्वान्मर्त्यधर्मतया पुरा । अवमो योग्यताहीनानप्यायुर्मात्रतोऽधिकान् । यतो ह्यागतिसृष्टिस्त देव यो वेद पूरुष । विष्णो. प्रसादतः सृष्टिं देवलोके स जायते । आत्मयोग्यानुसारेण सुखज्ञानादियुक्तता ॥ ’ इति ब्रह्मतर्के ; भगवदुपासनामाहात्म्यमेतदिति दर्शयितु तद्धेदमाहुरित्याद्यारम्भः ।

मध्व

**तद्धेद तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यामेव व्याक्रियतासौनामाऽयमिद्ँरूप इति । तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौनामाऽयमिद्ँरूप इति । स एष इह प्रविष्ट आ नखाग्रेभ्यो यथा क्षुर क्षुरधानेऽवहित स्याद्विश्वभरो वा विश्वभरकुलाये । त न पश्यन्ति । अकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति । वदन्वाक्पश्यँश्चक्षु शृण्वञ्श्रोत्रं मन्वानो मन । तान्यस्यैतानि कर्मनामान्येव । स योऽत एकैकमुपास्ते न स वेद । अकृत्स्नो ह्येषोऽत एकैकेन भवति । आत्मेत्येवोपासीत । अत्र ह्येते सर्वे एकं भवन्ति । तदेतत्पदनीयमस्य सर्वस्य यदयमात्मा । अनेन ह्येतत्सर्वं वेद । यथा ह वै पदेनानुविन्देदेवं कीर्तिँश्लोक विन्दते य एव वेद ॥**

( १ ) तद्धेदम् । तदिति बीजावस्थ जगत्प्रागुत्पत्ते , तर्हि तस्मिन्काले, परोक्षत्वात्सर्वनाम्ना अप्रत्यक्षाभिधानेनाभिधीयते— भूतकालसबन्धित्वादव्याकृतभाविनो जगतः। सुखग्रहणार्थमैतिह्यप्रयोगो हशब्द. । एव ह तदा आसीदित्युच्यमाने सुख ता परोक्षामपि जगतो बीजावस्थां प्रतिपद्यते—युधिष्ठिरो ह किल राजासीदित्युक्ते यद्वत् । इदमिति व्याकृतनामरूपात्मक साध्यसाधनलक्षण यथावर्णितमभिधीयते । तदिदशब्दयो परोक्षप्रत्यक्षावस्थजगद्वाचकयोः सामानाधिकरण्यादेकत्वमेव परोक्षप्रत्यक्षावस्थस्य जगतोऽवगम्यते । तदेवेद, इदमेव च तदव्याकृतमासीत् इति । अथैव

---

(१) **बृउ** १।४।७, **शाआ** १४।४।२।१५—१८, **ब्रशकर** १।१।४ ( पृ ५४ ), १।४।२, १४,१५, २।३।१७, **भास्कर** १।४।१५, ४।१।१, **रग** ( तदिदमप्येतर्हि . मिद्ँ रूप इति० ), **रामानुज** १।१।१ ( पृ ९,१७,११९, १२१ ), १।१।४ ( पृ १५१ ), १।४।१४,१५, २।१।१८, ३५, २।३।१८, २।४।३, ४।१।३ रूपाभ्यामेव व्याक्रियता ( रूपाभ्या व्याक्रियता ), **निबार्क** १।४।१५ तद्धेद ( तदेव ) व्याक्रियतासौ ( व्याक्रियते ), **ब्रमध्व** ३।३।१,२,७, १६,१७ एक भवन्ति ( एकीभवन्ति ), **श्रीकठ** १।४।१४, १५, २।१।१८ रूपाभ्यामेव व्याक्रियता ( रूपाभ्या व्याक्रियत ), **श्रीकर** १।४।१५, २।१।१८, ३५, २।३।१६, २।४।३, ४।१।४, **वल्लभ** १।१।१ ( पृ ३६ ), १।४।१५, ३।३।१८, १९ वदन् वाक्+ ( रूप ), **विज्ञान** १।१।१, ४ ( पृ १००, ११३ ), १।४।१८, २।१।१३, १६, १८, २०, २१, २।३।४३ ( पृ ३६०, ३६२ ), ३।३।१, ४ पश्यन्ति ( पश्यति ), **बलदेव** १।४।२, १४, १५, २।४।४, ३।३।१, ६, १९, २०, ४।१।३

-सति नासत उत्पत्तिर्न सतो विनाशः कार्यस्येत्यवधृत भवति। तदेवभूत जगत् अव्याकृत सत् नामरूपाभ्यामेव नाम्ना रूपेणैव च, व्याक्रियत। व्याक्रियतेति कर्मकर्तृप्रयोगात्तत्स्वयमेवात्मैव व्याक्रियत वि आ अक्रियत विस्पष्ट नामरूपविशेषावधारणमर्याद व्यक्तीभावमापद्यत— सामर्थ्यादाक्षिप्तनियन्तृकर्तृसाधनक्रियानिमित्तम्। असौनामेति सर्वनाम्नाविशेषाभिधानेन नाम मात्र व्यपदिशति। देवदत्तो यज्ञदत्त इति वा नामास्येत्यसौनामा अयम्। तथा इदमिति शुक्लकृष्णादीनामविशेष। इद शुक्लमिद कृष्ण वा रूपमस्येतीदरूप'। तदिद अव्याकृत वस्तु, एतर्हि एतस्मिन्नपि काले, नामरूपाभ्यामेव व्याक्रियते—असौनामायमिदरूप इति। यदर्थ' सर्वशास्त्रारम्भ, यस्मिन्नविद्यया स्वाभाविक्या कर्तृक्रियाफलाध्यारोपणा कृता, य. कारण सर्वस्य जगतः, यदात्मके नामरूपे सलिलादिव स्वच्छान्मलमिव फेनमव्याकृते व्याक्रियेते, यश्च ताभ्या नामरूपाभ्या विलक्षणः स्वतो नित्यशुद्धबुद्धमुक्तस्वभाव.—स एष अव्याकृते आत्मभूते नामरूपे व्याकुर्वन्, ब्रह्मादिस्तम्बपर्यन्तेषु देहेष्विह कर्मफलाश्रयेष्वशनायादिमत्सु प्रविष्ट.।

आ नखाग्रेभ्य.—नखाग्रमर्यादमात्मनश्चैतन्यमुपलभ्यते। तत्र कथमिव प्रविष्ट इत्याह—यथा लोके, क्षुरधाने क्षुरो धीयते अस्मिन्निति क्षुरधान तस्मिन् नापितोपस्कराधाने, क्षुर. अन्तस्थ उपलभ्यते—अवहित. प्रवेशितः स्यात्। यथा वा विश्वभर अग्नि.—विश्वस्य भरणात् विश्वभरकुलाये नीडे अग्निः काष्ठादौ, अवहितः स्यादित्यनुवर्तते। तत्र हि स मथ्यमान उपलभ्यते। यथा च क्षुर. क्षुरधान एकदेशेऽवस्थित., यथा चाग्नि काष्ठादौ सर्वतो व्याप्यावस्थित', एवं सामान्यतो विशेषतश्च देह सव्याप्यावस्थित आत्मा। तत्र हि स प्राणनादिक्रियावान् दर्शनादिक्रियावाश्चोपलभ्यते। तस्मात् तत्र एव प्रविष्ट त आत्मान प्राणनादिक्रियाविशिष्ट, न पश्यन्ति नोपलभन्ते। नन्वप्राप्तप्रतिषेधोऽयम्—'त न पश्यन्ति' इति दर्शनस्याप्रकृतत्वात्। नैष दोषः। सृष्ट्यादिवाक्यानामात्मैकत्वप्रतिपत्त्यर्थपरत्वात्प्रकृतमेव तस्य दर्शन 'रूप रूप प्रतिरूपो बभूव तदस्य रूप प्रतिचक्षणाय' इति मन्त्रवर्णात्। तत्र प्राणनादिक्रियाविशिष्टस्यादर्शने हेतुमाह —अकृत्स्न असमस्त', हि यस्मात्, प्राणनादिक्रियाविशिष्ट। कुत पुनरकृत्स्नत्वमिति, उच्यते—प्राणन्नेव प्राणनक्रियामेव कुर्वन् प्राणो नाम प्राणसमाख्य प्राणाभिधानो भवति। प्राणनक्रियाकर्तृत्वाद्धि प्राणः प्राणितीत्युच्यते, नान्या क्रिया कुर्वन्—यथा लावकः पाचक इति। तस्मात्क्रियान्तरविशिष्टस्यानुपसहारादकृत्स्नो हि स.। तथा वदन् वदनक्रियां कुर्वन्, वक्तीति वाक्, पश्यन् चक्षु., चष्ट इति चक्षु. द्रष्टा, शृण्वन् शृणोतीति श्रोत्रम्। 'प्राणन्नेव प्राणो वदन्वाक्' इत्याभ्या क्रियाशक्त्युद्भव. प्रदर्शितो भवति। 'पश्यश्चक्षु शृण्वञ्श्रोत्रम्' इत्याभ्या विज्ञानशक्त्युद्भवः प्रदर्श्यते नामरूपविषयत्वाद्विज्ञानशक्तेः। श्रोत्रचक्षुषी विज्ञानस्य साधने, विज्ञान तु नामरूपसाधनम्। न हि नामरूपव्यतिरिक्त विज्ञेयमस्ति, तयोश्चोपलम्भे करण चक्षु श्रोत्रे। क्रिया च नामरूपसाध्या प्राणसमवायिनी। तस्या प्राणाश्रयाया अभिव्यक्तौ वाक् करणम्। तथा पाणिपादपायूपस्थाख्यानि। सर्वेषामुपलक्षणार्था वाक्। एतदेव हि सर्वं व्याकृतम् — त्रय वा इद नाम रूप कर्म इति हि वक्ष्यति। मन्वानो मन — मनुते इति। ज्ञानशक्तिविकासाना साधारण करण मन — मनुतेऽनेनेति। पुरुषस्तु कर्ता सन्मन्वानो मन इत्युच्यते। तान्येतानि प्राणादीनि, अस्यात्मनः कर्मनामानि, कर्मजानि नामानि कर्मनामान्येव, न तु वस्तुमात्रविषयाणि। अतो न कृत्स्नात्मवस्त्ववद्योतकानि। एव ह्यसावात्मा प्राणनादिक्रियया तत्तत्क्रियाजनितप्राणादिनामरूपाभ्यां व्याक्रियमाणोऽवद्योत्यमानोऽपि। स योऽत अस्मात्प्राणनादिक्रियासमुदायात्, एकैक प्राण चक्षुरिति वा विशिष्टमनुपसहृतेतरविशिष्टक्रियात्मक, मनसा अयमात्मेत्युपास्ते चिन्तयति, न स वेद न स जानाति ब्रह्म। कस्मात्? अकृत्स्नोऽसमस्त हि यस्मात् एष आत्मा, अस्मात्प्राणनादिसमुदायात्, अत. प्रविभक्त., एकैकेन विशेषणेन विशिष्टः, इतरधर्मान्तरानुपसहारात् भवति। यावदयमेव वेद — 'पश्यामि' 'शृणोमि'

'स्पृशामि' इति वा स्वभावप्रवृत्तिविशिष्ट वेद, तावद् असौ कृत्स्नमात्मान न वेद ।

कथ पुनः पश्यन्वेदेत्याह—आत्मेत्येव आत्मेति, प्राणादीनि विशेणानि यान्युक्तानि तानि यस्य स, आप्नुवस्तान्यात्मेत्युच्यते । स तथा कृत्स्नविशेषोपसहारी सन् कृत्स्नो भवति । वस्तुमात्ररूपेण हि प्राणाद्युपाधिविशेषक्रियाजनितानि विशेषणानि व्याप्नोति । तथा च वक्ष्यति—'ध्यायतीव लेलायतीव' इति । तस्मादात्मेत्येवोपासीत । एव कृत्स्नो ह्यसौ स्वेन वस्तुरूपेण गृह्यमाणो भवति । कस्मात्कृत्स्न इत्याशङ्क्याह—अत्रास्मिन्नात्मनि, हि यस्मात्, निरुपाधिके, जलसूर्यप्रतिबिम्बभेदा इवादित्ये, प्राणाद्युपाधिकृता विशेषा प्राणादिकर्मजनामाभिधेया यथोक्ता ह्येते (सर्वे) एकमभिन्नता भवन्ति प्रतिपद्यन्ते ।

अनिर्ज्ञातत्वसामान्यात् आत्मा ज्ञातव्य., अनात्मा च । तत्र कस्मादात्मोपासन एव यत्न आस्थीयते—'आत्मेत्येवोपासीत' इति नेतरविज्ञाने इति । अत्रोच्यते—तदेतदेव, प्रकृत, पदनीय गमनीय, नान्यत् । अस्य सर्वस्येति निर्धारणार्था षष्ठी । अस्मिन्सर्वस्मिन्नित्यर्थ । यदयमात्मा यदेतदात्मतत्त्वम् । किं न विज्ञातव्यमेवान्यत् ? न । किं तर्हि, ज्ञातव्यत्वेऽपि न पृथग्ज्ञानान्तरमपेक्ष्यते आत्मज्ञानात् । कस्मात् ? अनेनात्मना ज्ञातेन, हि यस्मात्, एतत्सर्वमनात्मजात अन्यद्यत् तत्सर्व समस्त, वेद जानाति । नन्वन्यज्ञानेनान्यन्न ज्ञायते इति । अस्य परिहार दुन्दुभ्यादिग्रन्थेन वक्ष्याम । कथ पुनरेतत्पदनीयमिति, उच्यते—यथा ह वै लोके, पदेन—गवादिखुराङ्कितो देशः पदमित्युच्यते, तेन पदेन—नष्ट विवित्सित पशु पदेनान्वेषमाण' अनुविन्देत् लभेत, एवमात्मनि लब्धे सर्वमनुलभते इत्यर्थः ।

नन्वात्मनि ज्ञाते सर्वमन्यज्ज्ञायत इति ज्ञाने प्रकृते, कथ लाभोऽप्रकृत उच्यते इति । न । ज्ञानलाभयोरेकार्थत्वस्य विवक्षितत्वात् । आत्मनो ह्यलाभोऽज्ञानमेव । तस्माज्ज्ञानमेवात्मनो लाभ । न अनात्मलाभवत् अप्राप्तप्राप्तिलक्षण आत्मलाभ', लब्धृलब्धव्ययोर्भेदाभावात् । यत्र ह्यात्मनोऽनात्मा लब्धव्यो भवति, तत्रात्मा लब्धा, लब्धव्योऽनात्मा । स चाप्राप्तः उत्पाद्यादिक्रियाव्यवहित., कारकविशेषोपादानेन क्रियाविशेषमुत्पाद्य लब्धव्यः । स त्वप्राप्तप्राप्तिलक्षणोऽनित्य, मिथ्याज्ञानजनितकामक्रियाप्रभवत्वात्—स्वप्ने पुत्रादिलाभवत् । अय तु तद्विपरीत आत्मा । आत्मत्वादेव नोत्पाद्यादिक्रियाव्यवहित. । नित्यलब्धस्वरूपत्वेऽपि सति अविद्यामात्रं व्यवधानम् । यथा गृह्यमाणाया अपि शुक्तिकाया विपर्ययेण रजताभासाया अग्रहण विपरीतज्ञानव्यवधानमात्र, तथा ग्रहण ज्ञानमात्रमेव विपरीतज्ञानव्यवधानापोहार्थत्वाज्ज्ञानस्य । एवमिहाप्यात्मनोऽलाभ' अविद्यामात्रव्यवधानम् । तस्माद्विद्यया तदपोहनमात्रमेव लाभ', नान्य कदाचिदप्युपपद्यते । तस्मादात्मलाभे ज्ञानादर्थान्तरसाधनस्य आनर्थक्य वक्ष्यामः । तस्मान्निराशङ्कमेव ज्ञानलाभयोरेकार्थत्व विवक्षन्नाह—ज्ञानं प्रकृत्य—'अनुविन्देत्' इति विन्दतेर्लाभार्थत्वात् । गुणविज्ञानफलमिदमुच्यते—यथा अयमात्मा नामरूपानुप्रवेशेन ख्यातिं गत आत्मेत्यादिनामरूपाभ्या, प्राणादिसहतिं च श्लोक प्राप्तवान्—इति—एव, यो वेद, सः कीर्तिं ख्यातिं, श्लोक च सघातमिष्टै. सह विन्दते लभते । यद्वा यथोक्त वस्तु यो वेद, मुमुक्षूणामपेक्षित कीर्तिशब्दितमैक्यज्ञान, तत्फल श्लोकशब्दिता मुक्तिमाप्नोति—इति मुख्यमेव फलम् ।

शकर.

(२) क्वचित्स्वयकर्तृकैव व्याक्रिया जगतो निगद्यते 'तद्धेद तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत' । १।४।१४

'समाकर्षात्'—'तद्धेद तर्ह्यव्याकृतमासीत्' इत्यत्रापि न निरध्यक्षस्य जगतो व्याकरण कथ्यते, 'स एष इह प्रविष्ट आ नखाग्रेभ्य' इत्यध्यक्षस्य व्याकृतकार्यानुप्रवेशित्वेन समाकर्षात् । निरध्यक्षे व्याकरणाभ्युपगमे ह्यनन्तरेण प्रकृतावलम्बिना 'स' इत्यनेन सर्वनाम्ना कः कार्यानुप्रवेशित्वेन समाकृष्येत । चेतनस्य चायमात्मनः शरीरेऽनुप्रवेशः श्रूयते । अनुप्रविष्टस्य चेतनत्वश्रवणात् 'पश्यश्चक्षुः शृण्वञ्श्रोत्र मन्वानो मन' इति । अपि च यादृशमिदमद्यत्वे

नामरूपाभ्यां व्याक्रियमाण जगत्साध्यक्ष व्याक्रियते, एवमादिसर्गेऽपीति गम्यते, इष्टविपरीतकल्पनानुपपत्ते । श्रुत्यन्तरमपि 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' ( छाउ ६।३।२ ) इति साध्यक्षामेव जगतो व्याक्रिया दर्शयति । 'व्याक्रियते' इत्यपि कर्मकर्तरि लकार सत्येव परमेश्वरे व्याकर्तरि सौकर्यमपेक्ष्य द्रष्टव्य । यथा लूयते केदार· स्वयमेवेति सत्येव पूर्णके लवितरि । यद्वा कर्मण्येवैष लकारोऽर्थाक्षिप्त कर्तारमपेक्ष्य द्रष्टव्य । यथा गम्यते ग्राम इति ।

* ब्रशकर १।४।१५

( ३ ) 'तद्धेद तर्ह्यव्याकृतमासीत्' इत्यत्रापि ईश्वरे व्याकर्तरि सत्येव कर्मकर्तृनिर्देशो द्रष्टव्य. ।

‡ भास्कर १।४।१५

( ४ ) हशब्दो वृत्तार्थस्मरणे। तदिद मिथुनादिलक्षण जगत्तर्हि तदा सृष्टेः प्रागव्याकृतमासीत्। अव्यक्तशरीरक ब्रह्माऽऽसीदित्यर्थ.। नामरूपाभ्या न व्याकृतमिति व्युत्पत्त्याऽव्याकृतशब्दस्याव्यक्तवचनत्वात्। अव्यक्तत्त्व च नामरूपविशिष्टतयाऽनभिव्यक्तत्वम्। तदव्याकृतशरीरक ब्रह्म । नामरूपाभ्यामितीत्थभावे तृतीया। नामरूपवत्तया व्याकृतमासीत्। विआङ्भ्यामुपसर्गाभ्या विविच्य समन्तात्कृतमासीदित्यर्थ । तदेव दर्शयति 'असौनामाऽयमिदरूप इति'। देवमनुष्यादिनामकरणचरणादिरूपवानित्येव व्याक्रियतेत्यर्थ. । असौनामेति च्छान्दसोऽलुक्। अदोनामेति वक्तव्येऽसौनामेति लिङ्गव्यत्ययश्छान्दस·। ततश्च नामरूपवत्त्वमव्याकृतशब्दितस्य ब्रह्मणः सिद्धमिति। सर्वाणि नामानि तत्प्रवृत्तिनिमित्त भूतानि च रूपाणि तदीयान्येव। अत इदमादिशब्दैरपि तस्यैव निर्देशसभवादात्मैवेदमग्र आसीदित्यभेदनिर्देशे नानुपपत्तिरिति भाव । नामरूपाभ्यामेवेत्यत्र एवकारो भिन्नक्रम.। तदेव नामरूपाभ्या स्वयमेव व्याक्रियतेत्यर्थ । व्याक्रियतेत्यत्र कर्मकर्तरि लकारः। कर्त्रन्तराक्षेपे गौरवात्। 'तदात्मान स्वयमकुरुत' ( तैउ २।७।१ ) इत्यनेनैकार्थ्यात्। नन्वात्मन कथ देवमनुष्यादिनामरूपवत्त्वम्। देवमनुष्यादिशरीरे तस्यावर्तमानत्वादितीमा शङ्का व्यावर्तयति— स एष इति। अन्तर्यामिरूपेणेति शेष । त नेति। यस्तिलतैलवत्सर्वस्वरूपव्याप्त परमात्मान न पश्यति सोऽकृत्स्नोऽपूर्णस्वरूपोऽसत्कल्प इति यावत्। परमात्मन एव सर्वनामरूपवत्त्वमुपपादयति — प्राणन्नेवेति । प्राणनक्रिया कुर्वन्प्राणनामा भवति, वदनक्रिया कुर्वन्वाङ्नामा भवति । वक्तीति वाक्। दर्शनक्रियां कुर्वंश्चक्षुर्नामा भवति । चष्ट इति हि चक्षु । शृण्वन्सन् श्रोत्रम्। शृणोतीति श्रोत्रम्। मनुते इति मन.। तान्येतानि प्राणादीनि नामानि पाचकलावकादिवत्कर्मनामान्येवास्यान्त प्रविष्टस्य नारायणस्यैव । अतः सर्वनामरूपाश्रयत्व परमात्मनोऽस्तीति भाव· । 'स योऽत एकैकमुपास्ते न स वेद' । यस्मान्नामरूपात्मकप्रपञ्चविशिष्ट ब्रह्मातो य एकैक विशेषणाश विशेष्याश वा पृथक्सिद्धतयोपास्ते न स वेद तदुपासनमेव न भवतीत्यर्थ.। कुत इत्यत्राह —अकृत्स्नो ह्येष इति। एष विशिष्टपदार्थ । एकैकेन विशेषणाशेन विशेष्याशेन वाऽकृत्स्नोऽपूर्णो भवति। केवलविशेषणाशेऽपि पूर्णता नास्ति केवलविशेष्याशेऽपि पूर्णता नास्ति । अतो नामरूपात्मकचिदचित्प्रपञ्चापृथक्सिद्धविशेष्यत्वेनैवोपासीतेत्यर्थः। अत्र हि विशिष्टे सर्वे पदार्था एक भवन्ति । अन्तर्भवन्तीत्यर्थ.। विशिष्टे विशेषणविशेष्ययोरन्तर्भूतत्वादिति भाव· । एतदेवाभिप्रेत्य, आत्मेति तूपगच्छन्तीत्यत्र व्यासार्यैरकृत्स्नोऽपूर्णो विशिष्ट एव हि पूर्ण इत्युक्तम्। तदेतदात्मस्वरूपमस्य सर्वस्य नामरूपात्मकप्रपञ्चस्य पदनीय प्रपदनीय प्रपत्तव्यमित्यर्थ. पदेर्णातोरनीयर्प्रत्यय·। अथवा पदनीय ज्ञातव्यमिति वाऽर्थ । तत्र हेतुमाह—अस्येति। यद्यस्मात्कारणादस्य सर्वस्यायमात्माऽत इत्यर्थ । 'तमेवैक जानथाऽऽत्मान' इत्यात्मन एव ज्ञातव्यत्वाभिधानादिति भावः। आत्मनाऽभिज्ञातेन सर्वं वेद सर्वज्ञो भवति । हवैशब्दौ प्रसिद्धौ। यथा चोराद्यपहृत वागा( गवा )दिधन तत्पदाङ्कितप्रतिपदेन लभत एव पदनीयत्वेन प्राङ्निर्दिष्टेन सर्वस्य पदभूतेन ब्रह्मणा सर्वमनुविन्दे( ? )द्वेदेत्यर्थ.। कीर्ति ख्यातिसामान्य श्लोक पुण्यश्लोकत्व च लभत इत्यर्थ.। रग.

* वल्लभ. बृउ १।४।८ इत्यत्र द्रष्टव्य ।

‡ शेष ब्रशकरवत्।

( ५ ) 'तन्नामरूपाभ्या व्याक्रियत' इति ब्रह्मैव स्वसकल्पाद्विचित्रस्थिरचरस्वरूपतया नानाप्रकारमवस्थितमिति ।

१।१।१ ( पृ १२१ )

यदुक्त 'तद्धेद तह्यव्याकृतमासीत्' इत्यत्र प्रधानमेव जगत्कारणत्वेनाभिधीयते इति । नेत्युच्यते । अत्राप्यव्याकृतशब्देनाव्याकृतशरीर ब्रह्मैवाभिधीयते । 'स एष' इत्यत्र स एष इति तच्छब्देनाव्याकृतशब्द निर्दिष्टस्यान्त प्रविश्य प्रशासितृत्वेनानुकर्षात् । 'तत्सृष्ट्वा । तदेवानुप्राविशत्' ( तैउ २।६ ) 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' ( छाउ ६।३।२ ) इति स्रष्टु सर्वज्ञस्य परस्य ब्रह्मण॰ कार्यानुप्रवेशेन नामरूपव्याकरणप्रसिद्धेश्च । 'अन्त. प्रविष्ट. शास्ता जनाना सर्वात्मा' ( तैआ ३।११।२ ) इति नियमनार्थत्वादनुप्रवेशस्य प्रधानस्याचेतनस्यैवरूपोऽनुप्रवेशो न सभवति । अतोऽव्याकृतमव्याकृतशरीर ब्रह्म, 'तन्नामरूपाभ्या व्याक्रियत' इति तदेवाविभक्तनामरूप ब्रह्म सर्वज्ञ सत्यसकल्प स्वेनैव विभक्तनामरूप स्वयमेव व्याक्रियत इत्युच्यते । एव च सतीक्षणादयो मुख्या एव भवन्ति । ब्रह्मात्मशब्दावपि निरतिशयबृहत्त्वनियमनार्थव्यापित्वाभावेन प्रधाने न कथचिदुपपद्येते । अतो ब्रह्मैककारण जगदिति स्थितम् । १।४।१५

नामरूपव्याकरणमात्रश्रवणात्क्षेत्रज्ञाना स्वरूपानादित्व सिद्धम् ।

२।१।३५

एव सर्वदा चिदचिद्वस्तुविशिष्टस्य ब्रह्मणः प्राक्सृष्टेरेकत्वावधारण च नामरूपविभागाभावादुपपद्यते । 'तद्धेद तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्या व्याक्रियत' इति हि नामरूपविभागभावाभावाभ्या नानात्वैकत्वे वदन्तीति ।

२।३।१८

अधिकस्य ब्रह्मण. प्रत्यगात्मन आत्मत्वात्तस्य च ब्रह्मशरीरत्वान्निषेधवाक्ये 'अकृत्स्नो ह्येष.' इत्युक्तम् ।

* रामानुज ४।१।३

* बृउ १।२।१ इत्यत्र अधिक द्रष्टव्यम् ।

( ६ ) 'तदेव तर्ह्यव्याकृतमासीत्त
मेव व्याक्रियत' इत्यव्याकृतशब्दोदि
'स एष इह प्रविष्ट आ नखाग्रेभ्य.' ।
कर्षादचेतनस्य प्रधानस्यान्त॰ प्रविश्य प्रश
भवात्, तदन्तरात्मभूतमव्याकृत ब्रह्मेत्युच्य
* निंब

( ७ ) विश्वभरो वायु । 'अकृत्स्नो
स्याभिप्राय॰ । स योऽत एकैकमुपास्ते न
प्राण इत्यादि नामानि परमेश्वरस्य न
वदन्ति । किंतु प्राणनादिकर्मकर्तृत्वमेव
आत्मशब्द एव सर्वगुणसपूर्णत्व वदति ।
गुणजातस्यायमात्मैव पदनीय आश्रयो
सर्वगुणवाचकेनात्मशब्देनैवोपासीत । अने
वेद यस्मात्सर्वज्ञानप्रदस्तस्मात्सर्वगुणसपूर्ण
तस्य युक्तम् । तदुपासनादेव सर्वज्ञत्वादयो
तस्येति । पद्यते अनेनेति पद साधनम् ।
धनेन तत्तत्फल प्राप्नुयादेव सर्वगुणयुक्त
दुपासनात्कीर्ति श्लोक च विन्दते । श ल
परमानन्द परम ज्ञान चेत्यर्थः । लुक्
धातो । आसीदेको हरि पूर्व देवी नारा
अन्यदव्यक्तता यात तद्व्यक्तमकरोद्धरिः ।
दिद सर्व सृष्ट्वा देहा( वा )श्च सर्वश.
दानखाग्रेभ्य. प्रविष्ट पुरुषोत्तम । यथा
क्षुरो यद्वत्क्षुरस्तुके । प्रविष्टमपि त विष
पृथग्जनाः । प्रविष्ट इति जानश्च नैन जा
यस्मात्तद्गुणभागोऽय प्रवेश. प्राणनादिति च
णादिनामानि कर्मनामानि तस्य तु । त
नाम्ना य उपास्ते हरिमव्ययम् । अकृत
स्याद्यस्मात्तद्गुणभागवित् । पूर्णत्वेऽपि परे
तद्गुणभागवित् । अकृत्स्नवित्स्यात्कृत्स्नस्य
विदेव य. । चिदानन्दादयो यस्य गुणा आत
स आत्मेति प्रविज्ञेयो गुणानामाप्तितो
नादीनि कर्माणि चात्मशब्दोदितानि तु
त्मरूप हि गुणनामाश्रयत्वत । पदनीय
यतस्तज्ज्ञोऽपि सर्ववित् । सार्वज्ञादिगुणास्त

* श्रीकठ १।४।१५ निंबार्कवत् ।

( ५ ) 'तन्नामरूपाभ्या व्याक्रियत' इति ब्रह्मैव स्वसकल्पाद्विचित्रस्थिरचरस्वरूपतया नानाप्रकारमवस्थितमिति ।

१।१।१ ( पृ १२१ )

यदुक्त 'तद्धेद तर्ह्यव्याकृतमासीत्' इत्यत्र प्रधानमेव जगत्कारणत्वेनाभिधीयते इति । नेत्युच्यते । अत्राप्यव्याकृतशब्देनाव्याकृतशरीर ब्रह्मैवाभिधीयते । 'स एष' इत्यत्र स एष इति तच्छब्देनाव्याकृतशब्द निर्दिष्टस्यान्त प्रविश्य प्रशासितृत्वेनानुकर्षात् । 'तत्सृष्ट्वा । तदेवानुप्राविशत्' ( तैउ २।६ ) 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' ( छाउ ६।३।२ ) इति स्रष्टु सर्वज्ञस्य परस्य ब्रह्मण कार्यानुप्रवेशेन नामरूपव्याकरणप्रसिद्धेश्च । 'अन्त प्रविष्ट. शास्ता जनाना सर्वात्मा' ( तैआ ३।११।२ ) इति नियमनार्थत्वादनुप्रवेशस्य प्रधानस्याचेतनस्यैवरूपोऽनुप्रवेशो न सभवति । अतोऽव्याकृतमव्याकृतशरीर ब्रह्म, 'तन्नामरूपाभ्या व्याक्रियत' इति तदेवाविभक्तनामरूप ब्रह्म सर्वज्ञ सत्यसकल्प स्वेनैव विभक्तनामरूप स्वयमेव व्याक्रियत इत्युच्यते । एव च सतीक्षणादयो मुख्या एव भवन्ति । ब्रह्मात्मशब्दावपि निरतिशयबृहत्त्वनियमनार्थव्यापित्वाभावेन प्रधाने न कथचिदुपपद्येते । अतो ब्रह्मैककारण जगदिति स्थितम् । १।४।१५

नामरूपव्याकरणमात्रश्रवणात्क्षेत्रज्ञाना स्वरूपानादित्व सिद्धम् ।

२।१।३५

एव सर्वदा चिदचिद्वस्तुविशिष्टस्य ब्रह्मण. प्राक्सृष्टेरेकत्वावधारण च नामरूपविभागाभावादुपपद्यते । 'तद्धेद तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्या व्याक्रियत' इति हि नामरूपविभागभावाभावाभ्या नानात्वैकत्वे वदन्तीति ।

२।३।१८

अधिकस्य ब्रह्मण. प्रत्यगात्मन आत्मत्वात्तस्य च ब्रह्मशरीरत्वान्निषेधवाक्ये 'अकृत्स्नो ह्येष' इत्युक्तम् ।

* रामानुज. ४।१।३

* बृउ १।२।१ इत्यत्र अधिक द्रष्टव्यम् ।

( ६ ) 'तदेव तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत' इत्यव्याकृतशब्दोदितस्योत्तरवाक्ये 'स एष इह प्रविष्ट आ नखाग्रेभ्य.' इत्यादौ समाकर्षादचेतनस्य प्रधानस्यान्त प्रविश्य प्रशासितृत्वासभवात्, तदन्तरात्मभूतमव्याकृत ब्रह्मेत्युच्यते ।

* निंबार्क १।४।१५

( ७ ) विश्वभरो वायु । 'अकृत्स्नो हि स.' इत्यस्याभिप्राय । स योऽत एकैकमुपास्ते न स वेदेत्यादि । प्राण इत्यादि नामानि परमेश्वरस्य न सर्वगुणसपूर्णता वदन्ति । किंतु प्राणनादिकर्मकर्तृत्वमेव वदन्ति । आत्मशब्द एव सर्वगुणसपूर्णत्व वदति । अस्य सर्वस्य गुणजातस्यायमात्मैव पदनीय आश्रयो यस्मादतस्त सर्वगुणवाचकेनात्मशब्देनैवोपासीत । अनेन ह्येतत्सर्वे वेद यस्मात्सर्वज्ञानप्रदस्तस्मात्सर्वगुणसपूर्ण इत्येवोपासन तस्य युक्तम् । तदुपासनादेव सर्वज्ञत्वादयो भवन्ति किमु तस्येति । पद्यते अनेनेति पद साधनम् । यथा तत्साधनेन तत्तत्फल प्राप्नुयादेव सर्वगुणयुक्तत्वेन भगवदुपासनात्कीर्ति श्लोक च विन्दते । श लोक. श्लोक. । परमानन्द परम ज्ञान चेत्यर्थः । लुक् प्रकाश इति धातो । आसीदेको हरि पूर्वे देवी नारायणी तथा । अन्यदव्यक्तता यात तद्व्यक्तमकरोद्धरिः । सृष्ट्वा जगदिद सर्वे सृष्ट्वा देहा( वा )श्च सर्वश. । आकेशादानखाग्रेभ्यः प्रविष्ट पुरुषोत्तम । यथा प्राण. शरीरेषु क्षुरो यद्वत्क्षुरस्तुके । प्रविष्टमपि त विष्णु न पश्यन्ति पृथग्जना' । प्रविष्ट इति जानश्च नैन जानाति सर्वश. । यस्मात्तद्गुणभागोऽय प्रवेश. प्राणनादिति च । तस्मात्प्राणादिनामानि कर्मनामानि तस्य तु । तस्मात्प्राणादिनाम्ना य उपास्ते हरिमव्ययम् । अकृत्स्नोपासक. स स्याद्यस्मात्तद्गुणभागवित् । पूर्णत्वेऽपि परेशस्य यस्तु तद्गुणभागवित् । अकृत्स्नवित्स्यात्कृत्स्नस्य वेत्तात्मेति विदेव यः । चिदानन्दादयो यस्य गुणा आप्ताः सदैव तु । स आत्मेति प्रविज्ञेयो गुणानामाप्तितो हरि' । प्राणनादीनि कर्माणि चात्मशब्दोदितानि तु । तदेतदात्मरूप हि गुणनामाश्रयत्वत । पदनीयमिति प्रोक्त यतस्तज्ज्ञोऽपि सर्ववित् । सार्वज्ञादिगुणास्तस्य किमुता-

* श्रीकठ १।४।१५ निंबार्कवत् ।

त्मेश्वरस्य तु । एवं सर्वगुणैर्युक्तं सर्वजीवेश्वरं हरिम् । यो वेद तत्तत्साध्यं तु यथा तैस्तैस्तु साधनैः । प्राप्नुयादेवमेवासौ कीर्तिं च परमं सुखम् । ज्ञानं च परमं विन्देन्मुक्तः सन्नात्र संशय. ।।

मध्व

( ८ ) प्रलयावस्थायां प्रपञ्चस्य सङ्कुचितत्वं सृष्टिकाले विकासकत्वं च स्पष्टमुपदिष्टम् ।

* श्रीकर २।१।१८

(९) 'आत्मेत्येवोपासीत' 'आत्मा वा अरे द्रष्टव्यः' इत्यादिविधिशेषत्व( त्वात् ) ब्रह्मण., आचार्येणापि 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' इत्यादिसूत्रै सगुणनिर्गुणसाधारण्येन सर्ववेदान्तविद्यास्वेव विधिर्वक्ष्यते।

१।१।४ (पृ ११३)

'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्यादिश्रुतितोऽप्यनभिव्यक्ततयैव प्रपञ्चसत्ता प्राक् सिद्धेति ।

२।१।२०

नित्यत्वादिना सजातीयत्वस्योपपादिततया जीवो ब्रह्मणः अंश पितुरिव पुत्र । तथा च पितापुत्रयोरिवाग्निविस्फुलिङ्गयोरिव वाविभागेनाभिव्यक्तिलक्षणः कार्यकारणभाव उपपद्यते । 'उत्पत्तिस्थित्यभिव्यक्तिविकारप्रत्ययाप्तय । वियोगान्यत्वधृतय कारणं नवधा स्मृतम् ॥' इति पातञ्जलभाष्ये व्यासदेवैरभिव्यक्तिरूपाया अपि कार्यताया उक्तत्वादिति । अभिव्यक्तिश्चात्र स्वव्यापारारूढता अंशत्वे श्रुत्यन्यथानुपपत्तिं प्रमाणयति ।

स एष इह प्रविष्ट इत्यादीन्यपि वाक्यानि विभूतिभि सह कार्यकारणाद्यभेदमेव बोधयन्ति न त्वखण्डत्वमिति ।

ननु विरुद्धौ भेदाभेदौ कथमेकत्वे संभवेतामिति चेन्न। अन्योन्याभावलक्षणभेदस्याविभागलक्षणेनाभेदेनाविरोधात् । विभागाविभागरूपयोरपि भेदाभेदयो कालभेदेन व्यवहारपरमार्थभेदेन चाविरोधाच्च । न चायमभेदो गौण इति वाच्य, लवणं जलमभूत् दुग्धं जलमभूत्, यत्र त्वस्य सर्वमात्मैवाभूत् आप एवेदमग्र आसु., वायुर्भूत्वा धूमो भवतीत्यादिलोकवेदयोः प्रयोगबाहुल्येनाविभागस्यापि मुख्याभेदत्वात् भिदिर् विदारणं इत्यनुशासनाच्च ।

विज्ञान २।३।४३

* १।४।१५ ब्रशकरवत् ।

तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा। स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियं रोत्स्यतीतीश्वरो ह तथैव स्यात् । आत्मानमेव प्रियमुपासीत । स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति ॥

( १ ) कुतश्चात्मतत्त्वमेव ज्ञेयं अनादृत्यान्यदित्याह —— तदेतदात्मतत्त्वं प्रेयः प्रियतरं, पुत्रात् । पुत्रो हि लोके प्रियं प्रसिद्ध., तस्मादपि प्रियतरं इति निरतिशयप्रियत्वं दर्शयति । तथा वित्तात् हिरण्यरत्नादेः, तथा अन्यस्मात् यद्यल्लोके प्रियत्वेन प्रसिद्धं तस्मात्सर्वस्मादित्यर्थः । तत्कस्मादात्मतत्त्वमेव प्रियतरं न प्राणादीति, उच्यते —— अन्तरतरं बाह्यात्पुत्रवित्तादे प्राणपिण्डसमुदायो हि अन्तरः अभ्यन्तरः सन्निकृष्ट आत्मन. । तस्मादप्यन्तरात् अन्तरतरं, यदयमात्मा यदेतदात्मतत्त्वम् । यो हि लोके निरतिशयप्रियं स सर्वप्रयत्नेन लब्धव्यो भवति । तथा अयमात्मा सर्वलौकिकप्रियेभ्य प्रियतम । तस्मात्तल्लाभे महान् यत्न आस्थेय इत्यर्थः —— कर्तव्यताप्राप्तमप्यन्यप्रियलाभे यत्नमुज्झित्वा । कस्मात्पुन आत्मानात्मप्रिययो. अन्यतरप्रियहानेन इतरप्रियोपादानप्राप्तौ, आत्मप्रियोपादानेनैवेतरहानं क्रियते, न विपर्यय. – इति, उच्यते —— स य कश्चित्, अन्यमनात्मविशेषं पुत्रादिकं, प्रियतरमात्मन. सकाशात्, ब्रुवाणं, ब्रूयादात्मप्रियवादी —— किम् ? ——प्रियं तवाभिमतं पुत्रादिलक्षणं, रोत्स्यति आवरणं प्राणसंरोधं प्राप्स्यति विनङ्क्ष्यतीति । स कस्मादेवं ब्रवीति ? —— यस्मादीश्वरः समर्थः पर्याप्तोऽसावेवं वक्तुं ह, यस्मात् तस्मात् तथैव स्यात् । यत्तेनोक्तम् —— 'प्राणसंरोधं प्राप्स्यति' । यथाभूतवादी हि स, तस्मात्स ईश्वरो वक्तुम् । ईश्वरशब्द. क्षिप्रवाचीति केचित् । भवेद्यदि प्रसिद्धिः स्यात् । तस्मादुज्झित्वाऽन्यप्रियं, आत्मानमेव प्रियमुपासीत । स य आत्मानमेव प्रियमुपास्ते —— आत्मैव प्रियो नान्योऽस्तीति प्रतिपद्यते, अन्यल्लौकिकं प्रियमप्रियमेवेति निश्चित्य,

(१) बृउ १।४।८, शब्रा १४।४।२।१९, रग वित्तात्प्रे ( मित्रात्प्रे ), मध्व प्रमायुकं ( प्रमायुक[ क ] ), वल्लभ ३।३।१८, १९ ह तथैव ( हि तथा )

उपास्ते चिन्तयति, न ह्यस्य एवंविद प्रियं प्रमायुक प्रमरणशील भवति । नित्यानुवादमात्रमेतत्, आत्मविदोऽन्यस्य प्रियस्याप्रियस्य च अभावात् । आत्मप्रियग्रहणस्तुत्यर्थं वा । प्रियगुणफलविधानार्थं वा मन्दात्मदर्शिन, ताच्छील्यप्रत्ययोपादानात् । शंकर.

( २ ) यत्रस्मात्कारणादय सर्वेषामन्तरोऽभ्यन्तर आप्तो मुख्य इति यावत् तादृश आत्मा तस्माद्धेतोरेतदेष पुत्रमित्रादिप्रियान्तरापेक्षयाऽतिप्रियतर इत्यर्थ । स य एवंविदात्मनोऽपि आत्मापेक्षयाऽपि अन्यत् प्रियमस्तीति ब्रुवाण प्रतीश्वर. प्रिय रोत्स्यति प्रियनिरोधमीश्वर करिष्यतीति यदि ब्रूयात् । तथैव भवेदित्यर्थ । तस्माद्धेतोर्निरतिशयप्रिय परमात्मानमेवोपासीत परमात्मनोऽनुभूयमानस्य निरतिशयानन्दतया प्रियत्वमानन्दवल्ल्यादिसिद्ध द्रष्टव्यम् ।

* रंग.

( ३ ) 'स एष विष्णुर्भगवान्पुत्राद्वित्तात्तथात्मन । अन्यस्मादपि सर्वस्मात्प्रेष्ठ एव स्वभावत' । आत्मनोऽपि प्रियत्व तु तेनैव कृतमञ्जसा । आत्मनो निरयायैव कुर्यात्कर्माणि नित्यशः । यतोऽत. स्वात्मनश्चापि स्वाप्रियत्वमुदाहृतम् । स चेदप्रियकृद्विष्णुर्नात्माऽपि प्रियता व्रजेत् । अस्मिन्प्रिये प्रिय सर्वं तस्मादेकः प्रियो हरि । स चात्मशब्देनोद्दिष्टो यस्मादात्मगुण. प्रभु । अतो विष्णो प्रिय ब्रूयाद्य. स्वात्माद्य दुरात्मवान् । प्रियरोध करोषीति त ब्रूयाद्वैष्णवो महान् । एव वदन्वैष्णवस्तु समर्थ प्रियरोधने । तस्य स्याच्च विशेषेण तदुक्त्यैवापि दु खिन । तस्मात्सर्वप्रियो विष्णुरित्युपास्ते सदा प्रिय' । नास्य प्रियमनित्य स्यादस्य प्रीति सदा भवेत् । तस्मात्सर्वप्रिय विष्णुमुपासीतैव नित्यशः । नित्यप्रियकरो विष्णुर्भवेत्तस्याऽप्यज स्वयम् ॥' इत्यध्यात्मे । मध्व.

( ४ ) 'कार्याख्यानादपूर्वम्'—अथवा वाजसनेयिशाखायाम् 'आत्मेत्येवोपासीत' इत्युपक्रम्य 'तदेतत्प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात् सर्वस्मादन्तरतर यदयमात्मा' इत्येतदग्रेऽन्यस्य प्रियत्व निराकृत्य 'ईश्वरो हि तथा स्यादात्मानमेव प्रियमुपासीत' इति पठ्यते । अत्रात्मौपाधिकत्वात् सर्वत्र प्रियत्वस्यात्मपदेन जीवात्मन एव प्रियत्वेनोपासना विधीयते । उतेश्वरपदात् परमात्मन. । इति भवति सशय. । किमत्र युक्तम् । जीवात्मन एवेति । कुत । यथा पुत्रादेरात्मोपाधिकप्रियत्वोक्त्या जीवात्मन एव प्रियत्वमुच्यतेऽन्यत्र श्रुतौ तथेहापि, प्रेय. पुत्रादित्यादिकथनाज्जीवात्मैव भवितुमर्हतीति प्राप्ते आह— कार्याख्यानादपूर्वमिति । इत' पूर्वमाम्नायते 'प्राणन्नेव प्राणो नाम भवति वदन् वाक् रूप पश्यश्चक्षु शृण्वञ्छ्रोत्र मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव' इति । तथाच प्राणनवदनादिकार्यै कृत्स्नप्राणवागादित्वेनैकस्यैवात्मन आख्यानात् कथनादपूर्वं पूर्वं तु पुत्रवित्ताद्यभिमानदशाया, 'न वारे पत्यु कामाय पति. प्रियो भवति' इत्यादिना यत्प्रियत्वेनोच्यते तस्माद्भिन्नमात्मशब्दवाच्यमत्रेत्यर्थ । लोके हि प्राणवायुवागिन्द्रियादीनामेव तत्तच्छब्दवाच्यता, न तु जीवस्यात एवाग्रे श्रुतिराह— ईश्वरो हि तथा स्यादिति । अत एव 'प्रेयोऽन्यस्मात् सर्वस्मादन्तरतर यदयमात्मा' इत्याह । अन्तरो जीवात्मा ततोऽप्यतिशयेनान्तरमन्तरतर पुरुषोत्तमस्वरूपमेव भवितुमर्हतीति । एतेन विग्रहस्यैवात्मरूपत्व सिद्ध्यति । तेन अविकृतत्वपरमानन्दत्वादयोऽपि धर्मा उपसहर्तव्या. । ३।३।१८

'समान एवञ्चाभेदात्' — ननु विग्रहे चक्षुःश्रोत्रादीना वैलक्षण्यप्रतीतेरात्मनश्चैकरसत्वात् उक्तकर्मनामवत्त्व ब्रह्मण्यनुपपन्नमित्याशङ्क्योत्तर पठति — समान इति । चोऽप्यर्थे । तथा चैवमपि सति श्रोत्रचक्षुरादिवैलक्षण्यप्रतीतावपि सति समान एकरूप एव, न तु विषम । तत्र हेतुरभेदादिति । चक्षुरादीना ब्रह्मत्वेन परस्परमभेदादित्यर्थ' । अत्रेदमाकूतम् — 'त त्वौपनिषद पुरुष पृच्छामि' इति श्रुतेरुपनिषद्वेद्यमेव ब्रह्मस्वरूपम् । ताश्च 'प्राणन्नेव प्राणो भवति वदन् वाक्' इत्यादिरूपा. । प्रतिनियतेन्द्रियग्राह्यानर्थान् स्वरूपेणैव गृह्णद्ब्रह्म तच्छब्दवाच्य भवतीति वदन्ति । तद्वाच्यता च व्यवहार्यत्वे । स च, तदेतत्प्रेय पुत्रादित्यादिवाक्यैकवाक्यतया निरुपाधिस्नेहवतामेव व्यवहार्य इति ज्ञाप्यते । स च आविर्भूतेऽवताररूप एव सभवति । एव सति तत्र भक्तैर्भगवद्विग्रहे तत्तदवयवेषु

---

* शेष सरलम् ।

भेदेन यथायथा व्यवह्रियते तथातथैव तदेकमेवाखण्डसच्चिदानन्दरूपं ब्रह्मेत्यर्थः सम्पद्यते । एवंविधो लोके न प्रसिद्ध इत्यसम्भावना स्यात्, तदभावायाग्रे श्रुतिराह— ईश्वरो हि तथा स्यादिति । एतेनाविर्भूतरूपे व्यापकत्वैकरसत्वसच्चिदानन्दत्वादयो धर्मा उपसंहर्तव्या अनाविर्भूतेऽपीति स्थितम् । एवं सत्याविर्भावेऽनाविर्भावेऽपीश्वरः समानः । न ह्याविर्भावे स्वाश्रनागन्तुकान् धर्मानादायाविर्भवतीति वक्तुं शक्यमनाविर्भूतस्यापि, एवमाविर्भूतप्रकारेणैवाभेदादित्यपि सत्रार्थं सूत्रकाराभिमत इति ज्ञातव्यम् । चकारेण विरुद्धसर्वधर्माश्रयत्वं समुच्चीयते । एवं साक्षादाविर्भूते भगवद्रूपे पूर्णानन्तधर्मास्तदुपासकेनोपसंहर्तव्या इति सिद्धम् । वल्लभ ३।३।१९

तदाहुर्यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते । किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति ॥

( १ ) सूत्रिता ब्रह्मविद्या — 'आत्मेत्येवोपासीत' इति, यदर्थोपनिषत्कृत्स्नाऽपि । तस्यैतस्य सूत्रस्य व्याचिख्यासुः प्रयोजनाभिधित्सयोपोद्घातसति — तदिति वक्ष्यमाणमनन्तरवाक्येऽवद्योत्य वस्तु — आहुः — ब्राह्मणाः ब्रह्म विविदिषवः जन्मजरामरणप्रबन्धचक्रभ्रमणकृतायासदुःखोदकापारमहोदधिप्लवभूतं गुरुमासाद्य तत्तीरमुत्तितीर्षवः धर्माधर्मसाधनतत्फललक्षणात्साध्यसाधनरूपान्निर्विण्णाः तद्विलक्षणनित्यनिरतिशयश्रेयः प्रतिपित्सवः । किमाहुरित्याह — यद्ब्रह्मविद्यया । ब्रह्म परमात्मा, तत् यया वेद्यते सा ब्रह्मविद्या तया ब्रह्मविद्यया, सर्वं निरवशेषं, भविष्यन्तः भविष्याम इत्येवं, मनुष्या यत् मन्यन्ते । मनुष्यग्रहणं विशेषतोऽधिकारज्ञापनार्थम् । मनुष्या एव हि विशेषतोऽभ्युदयनिःश्रेयससाधनेऽधिकृता इत्यभिप्रायः । यथा कर्मविषये फलप्राप्तिं ध्रुवां कर्मभ्यो मन्यन्ते, तथा ब्रह्मविद्यायाः सर्वात्मभावफलप्राप्तिं ध्रुवामेव मन्यन्ते, वेदप्रामाण्यस्योभयत्राविशेषात् । तत्र विप्रतिषिद्धं वस्तु लक्ष्यते । अतः पृच्छामः — किमु तद्ब्रह्म, यस्य विज्ञानात्सर्वं भविष्यन्तो मनुष्या मन्यन्ते ? तत्किमवेत्, यस्माद्विज्ञानात्तद्ब्रह्म सर्वमभवत् ? ब्रह्म च सर्वमिति श्रूयते, तत् यदि अविज्ञाय किंचित्सर्वमभवत्, तथान्येषामप्यस्तु । किं ब्रह्मविद्यया ? अथ विज्ञाय सर्वमभवत्, विज्ञानसाध्यत्वात्कर्मफलेन तुल्यमेवेत्यनित्यत्वप्रसङ्गः सर्वभावस्य ब्रह्मविद्याफलस्य । अनवस्थादोषश्च — तदप्यन्यद्विज्ञाय सर्वमभवत्, ततः पूर्वमप्यन्यद्विज्ञायेति । न तावदविज्ञाय सर्वमभवत्, शास्त्रार्थवैरूप्यदोषात् । फलानित्यत्वदोषस्तर्हि ? — नैकोऽपि दोषः, अर्थविशेषोपपत्तेः । शंकर

( २ ) तद्वक्ष्यमाणमाहुः । पप्रच्छुरित्यर्थः । इदं हि वाक्यं व्यासार्यैर्यद्ब्रह्मविद्यया सर्वं भविष्यन्तः सर्वशब्दवाच्यपरमात्मपर्यन्ताविर्भावकामा मनुष्या मन्यन्ते । किमु तद्ब्रह्मावेद्यस्मात्सर्वमभवदिति । तद्ब्रह्म किं वेद्यं वस्त्वन्तरमवेत् । यस्माद्वेदनात् तत्सर्वमभवत् । ब्रह्मणोऽपि परं तदुपास्यं वस्त्विति न वेति बुभुत्सोत्थापिता । रंग

(३) ब्रह्मविद्यया सर्वे भविष्यन्त आत्मयोग्यतापूर्तिमाप्नुवन्तो महान्तो यदाहुः । ब्रह्मविद्यया स्वयोग्यं सर्वं प्राप्यत इति । नित्यनिर्दुःखानन्दानुभवरूपो हि स्वत उत्तमो जीवः । तादृशं रूपमज्ञानात्तिरोहितं ब्रह्मविद्ययाऽभिव्यज्यत एव । न चान्यथाभिव्यज्यत इति सन्तो यदाहुः । तत्तत्र केचिन्मनुष्या इति मन्यन्ते । स्वरूपमपि ब्रह्मविद्ययाऽभिव्यज्यते चेत्तद्ब्रह्मापि यस्मात्सर्वमभवत्परिपूर्णमभूत्तस्मात्स्वरूपं ज्ञात्वैवाभवत्किमिति । मध्व

[1]ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेत् । अहं ब्रह्मास्मीति । तस्मात्तत्सर्वमभवत् । तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् । तथर्षीणाम् ।

(१) बृउ १।४।९, शब्रा १४।४।२।२०, रंग स्मात्तत्स ( स्मात्स )

(१) बृउ १।४।१०, शब्रा १४।४।२।२१, २२, ब्रशंकर १।१।४ ( पृ ६१, ६४, ८७ ), १।१।३०, १।३।३३, १।४।२२, २।३।१७, ३०, ४८, ३।१।१७, ३।२।२७, ३।३।३२, ४।१।३, ४।४।४, भास्कर १।१।१, ४, ३०, १।३।२६, ३३, ३।१।७, ३।३।३२, ४।४।४ ऽन्योऽसा ( ऽन्याऽसा ), रंग मेकैक ( मेवैकैक ), रामानुज १।१।१ ( पृ १७, ५२ ), १।१।४ ( पृ १४६ ), १।१।३१, ३।१।७, ३।२।२४, ४।१।३, निंबार्क १।१।३१,

**तथा मनुष्याणाम् । तद्धैतत्पश्यन्नृषिर्वामदेव प्रतिपेदेऽहं मनुरभवꣳ सूर्यश्चेति । तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदꣳ सर्वं भवति । तस्य ह न देवाश्चनाभूत्या ईशते । आत्मा ह्येषाꣳ स भवति । अथ योऽन्या देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद । यथा पशुरेवꣳ स देवानाम् । यथा ह वै बहव पशवो मनुष्य भुञ्ज्युरेवमेकैक. पुरुषो देवान्भुनक्ति । एकस्मिन्नेव पशावादीयमानेऽप्रिय भवति किमु बहुषु । तस्मादेषां तन्न प्रिय यदेतन्मनुष्या विद्यु ॥**

( १ ) यत्प्रविष्ट स्रष्टृ ब्रह्म, तद्ब्रह्म, वैशब्दोऽवधारणार्थं, इद शरीरस्थ यद्गृह्यते, अग्रे प्राक्प्रतिबोधादपि, ब्रह्मैवासीत्, सर्वं च इदम् । किं त्वप्रतिबोधात्, ' अब्रह्मास्मि असर्वं च ' इत्यात्मन्यध्यारोपात् 'कर्ताऽहं क्रियावान् फलाना च भोक्ता सुखी दु'खी ससारी ' इति च अध्यारोपयति । परमार्थस्तु ब्रह्मैव तद्विलक्षण सर्वं च । तत्कथंचिदाचार्येण दयालुना प्रतिबोधित, ' नासि ससारी ' इति आत्मानमेवावेत्स्वाभाविकम् । अविद्याध्यारोपितविशेषवर्जितमिति एव शब्दस्यार्थं । तद्ब्रह्म आत्मानमेव नित्यदृग्रूपमध्यारोपितानित्यदृष्ट्यादिवर्जितमेव अवेत् विदितवत् । अज्ञानाध्यारोपणनिवृत्तिरेव आत्मानमेवावेदित्युक्त, नात्मनो विषयीकरणम् । तत्कथमवेदित्याह—अहं दृष्टेर्द्रष्टा आत्मा ब्रह्मास्मि भवामीति । ब्रह्मेति —यत्साक्षादपरोक्षात्सर्वान्तर आत्मा अशनायाद्यतीतो नेति नेत्यस्थूलमनण्वित्येवमादिलक्षण, तदेवाहमस्मि, नान्य ससारी, यथा भवानाहेति, तस्मात् एव विज्ञानात् तद्ब्रह्म सर्वमभवत्——अब्रह्माध्यारोपणापगमात् तत्कार्यस्यासर्वत्वस्य निवृत्त्या सर्वमभवत् । तस्माद्युक्तमेव मनुष्या मन्यन्ते——यद्ब्रह्मविद्यया सर्वं भविष्याम इति । यत्पृष्ट——किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति, तन्निर्णीतम्——ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवदिति ।

तत् तत्र, यो यो देवाना प्रत्यबुध्यत प्रतिबुद्धवानात्मान यथोक्तेन विधिना, स एव प्रतिबुद्ध आत्मा तत् ब्रह्म अभवत् । तथा ऋषीणा, तथा मनुष्याणा च मध्ये । देवानामित्यादि लोकदृष्ट्यपेक्षया न ब्रह्मत्व बुद्धयोच्यते । पुर पुरुष. आविशदिति सर्वत्र ब्रह्मैवानुप्रविष्टमित्यवोचाम । अत शरीराद्युपाधिजनितलोकदृष्ट्यपेक्षया देवानामित्याद्युच्यते । परमार्थतस्तु तत्र तत्र ब्रह्मैवाग्र आसीत् प्राक् प्रतिबोधात् देवादिशरीरेषु अन्यथैव विभाव्यमान, तदात्मानमेवावेत्, तथैव च सर्वमभवत् । अस्या ब्रह्मविद्याया॰ सर्वभावापत्ति फल मित्येतस्यार्थस्य द्रढिम्ने मन्त्रानुदाहरति श्रुति. । कथम् तत् ब्रह्म एतत् आत्मानमेव अहमस्मीति पश्यन् एतस्मादेव ब्रह्मणो दर्शनात् ऋषिर्वामदेवाख्यः प्रतिपेदे ह प्रतिपन्नवान् किल । स एतस्मिन्ब्रह्मात्मदर्शनेऽवस्थित॰ एतान् मन्त्रान् ददर्श——अहं मनुरभव सूर्यश्चेत्यादीन् । तदेतद्ब्रह्म पश्यन्निति ब्रह्मविद्या परामृश्यते । अहं मनुरभव सूर्यश्चेत्यादिना सर्वभावापत्ति ब्रह्मविद्याफल परामृशति । पश्यन्सर्वात्मभाव फल प्रतिपेदे इत्यस्मात्प्रयोगात् ब्रह्मविद्यासहायसाधनसाध्य मोक्ष दर्शयति—भुञ्जानस्तृप्यतीति यद्वत् । सेय ब्रह्मविद्यया सर्वभावापत्तिरासीन्महता देवादीना वीर्यातिशयात्, नेदानीमैदयुगीनाना विशेषतो मनुष्याणा, अल्पवीर्यत्वात् ——इति स्यात्कस्यचिद्बुद्धि., तद्व्युत्थापनायाह —— तदिद प्रकृत ब्रह्म यत्सर्वभूतानुप्रविष्ट दृष्टिक्रियादिलिङ्ग, एतर्हि एतस्मिन्नपि वर्तमानकाले य कश्चित् व्यावृत्तबाह्यौत्सुक्य आत्मानमेव एव वेद अहं ब्रह्मास्मीति —— अपोह्य उपाधिजनितभ्रान्तिविज्ञानाध्यारोपितान्विशेषान् ससारधर्मानागन्धितमनन्तरमबाह्य ब्रह्मैवाहमस्मि केवलमिति—— स अविद्याकृता-

२।१।१६, ३।१।७ रेवꣳस ( रेव स), **मध्व** नेऽप्रिय ( ने प्रिय ), **ब्रमध्व** १।१।१७, ३०, २।३।२८, **श्रीकठ** १।१।३१, ३।१।७, ३।२।२४, **श्रीकर** १।१।१ ( पृ ३, ४, २६ ), १।१।२०, ३१, १।२।८, १।३।२, ९, २६, २।१।८, १६, २१, ३५, २।२।४५, २।३।२५, ३।१।१, ७, ३।२।२४, २६, ३०, ३४, ३।३।५१, ६०, ३।४।१, ४।१।३, ४, ४।२।५, १४, ४।३।७, १५, ४।४।२, ४, ६, १२, **वल्लभ** १।१।२९, १।३।२६, ३३, ३।१।७, **विज्ञान** १।१।१ ( पृ २४ ), १।१।२ ( पृ ३८, ६७ ), १।१।५ ( पृ १३०, १३६ ), १।१।३०, १।३।३३, ३।३।५४, ४४, ४।१।३, ६, ४।४।२१ तस्मादेषा तन्न प्रिय ( तदेतद्देवाना न प्रिय ), **बलदेव** १।१।३०, १।३।२६, ३।१।७, ३।४।५०

सर्वात्मनिवृत्तिर्ब्रह्मविज्ञानादि[illegible] भवति। न हि महावीर्येषु वामदेवादिषु हीनवीर्येषु वा वार्तमानिकेषु मनुष्येषु ब्रह्मणो विशेषः तद्विज्ञानस्य वाऽस्ति । वार्तमानिकेषु पुरुषेषु तु ब्रह्मविद्याफले अनैकान्तिकता आशङ्क्यते इत्यत आह — तस्य ह ब्रह्मविज्ञानं पूर्वोक्तेन विधिना देवा महावीर्या, चन अपि, अभूत्यै अभवनाय ब्रह्मसर्वभावस्य, नेशत न पर्याप्ता, ईशनार्थस्य ।

तदेतदाह — आत्मा ह्येषां स भवति [illegible] सर्वेषामेव [illegible], [illegible] देवानां, स ब्रह्मवित्, भवति ब्रह्मविज्ञानसमकालमेव [illegible] अविद्यामात्रव्यवधानापगमात् शुक्तिकाया इव रजताभासायाः शुक्तिकात्वमित्यवोचाम । अतो आत्मनः प्रतिकूलत्वे देवानां प्रयत्नमनुवति । यस्य हि अनात्मभूतं फलं देशकालनिमित्तान्तरितं, तत्रानात्मविषये सति प्रयत्नो विघ्नाचरणाय देवानाम् । न त्विह विद्यासमकाल आत्मभूते देशकालनिमित्तानन्तरिते, अवसरानुपपत्तेः ।

अथ यः कश्चिदब्रह्मवित्, अन्यामात्मनो व्यतिरिक्तां यां कांचिद्देवतां उपास्ते स्तुतिनमस्कारयागबल्युपहार प्रणिधानध्यानादिना उप आस्ते तस्याः गुणभावमुपगम्य आस्ते अन्योऽसावनात्मा मत्तः पृथक्, अन्योऽहमस्म्यधिकृतः मया अस्मै ऋणिवत्प्रतिकर्तव्यं — इत्येवं प्रत्ययः सन्नुपास्ते, न स इत्थंप्रत्ययः वेद विजानाति तत्त्वम् । न स केवलमेवं अविद्वान् अविद्यादोषवानेव, किं तर्हि, यथा पशुः गवादिः वाहनदोहनाद्युपकारैरुपभुज्यते, एवं स. इज्याद्यनेकोपकारैरुपभोक्तव्यत्वात् एकैकेन देवादीनाम् । अतः पशुरिव सर्वार्थेषु कर्मस्वधिकृत इत्यर्थ. । एतस्य हि अविदुषो वर्णाश्रमादिप्रविभागवतोऽधिकृतस्य कर्मणो विद्यासहितस्य केवलस्य च शास्त्रोक्तस्य कार्यं मनुष्यादिको ब्रह्मान्त उत्कर्ष. । शास्त्रोक्तविपरीतस्य च स्वाभाविकस्य कार्यं मनुष्यत्वादिक एव स्थावरान्तोऽपकर्षः । यथा चैतत्तथा ' अथ त्रयो वाव लोकाः ' इत्यादिना वक्ष्यामः कृत्स्नेनैवाध्यायशेषेण । विद्यायाश्च कार्यं सर्वात्मभावापत्तिरित्येतत् संक्षेपतो दर्शितम् । सर्वा हि इयमुपनिषत् विद्याविद्याविभागप्रदर्शनेनैवोपक्षीणा । यथा च एषोऽर्थः कृत्स्नस्य शास्त्रस्य तथा प्रदर्शयिष्यामः ।

यस्मादेव, तस्मादविद्यावन्त पुरुष प्रति देवा ईशत एव विघ्न कर्तुं अनुग्रह च इत्येतद्दर्शयति — यथा ह वै लोके, बहवो गोऽश्वादयः पशव मनुष्य स्वामिनमात्मन. अधिष्ठातार भुञ्ज्यु पालयेयु., एव बहुपशुस्थानीय. एकैक. अविद्वान्पुरुषः देवान् — देवानिति पित्राद्युपलक्षणार्थं — भुनक्ति पालयतीति — इमे इन्द्रादय. अन्ये मत्तो ममेशितार. भृत्य इवाहमेषा स्तुतिनमस्कारेज्यादिना आराधान कृत्वा अभ्युदय नि.श्रेयस च तत्प्रत्त फल प्राप्स्यामीत्येवमभिसधिः । तत्र लोके बहुपशुमतो यथा एकस्मिन्नेव पशावादीयमाने व्याघ्रादिना अपह्रियमाणे महदप्रिय भवति, तथा बहुपशुस्थानीय एकस्मिन्पुरुषे पशुभावात् व्युत्तिष्ठति, अप्रिय भवतीति — किं चित्र देवाना, बहुपश्वपहरण इव कुटुम्बिन. । तस्मादेषां तन्न प्रियम् । किं तत् ? यदेतद्ब्रह्मात्मतत्त्व कथचन मनुष्या विद्यु विजानीयु. । तथा च स्मरणमनुगीतासु भगवतो व्यासस्य — ' क्रियावद्भिर्हि कौन्तेय देवलोकः समावृतः । न चेतदिष्ट देवाना मर्त्यैरुपरि वर्तनम् ॥ ' इति । अतो देवा. पशूनिव व्याघ्रादिभ्यः, ब्रह्मविज्ञानाद्विघ्नमाचिकीर्षन्ति — अस्मदुपभोग्यत्वान्मा व्युत्तिष्ठेयुरिति । य तु मुमोचयिषन्ति, त श्रद्धादिभिर्योक्ष्यन्ति, विपरीतमश्रद्धादिभिः । तस्मान्मुमुक्षुर्देवाराधनपर' श्रद्धाभक्तिपरः प्रणेयोऽप्रमादी स्यात् विद्याप्राप्तिं प्रति विद्या प्रतीति वा काकैतत्प्रदर्शित भवति देवाप्रियवाक्येन । * शकर.

(२) 'अह मनुरभव सूर्यश्च' इति मुक्त्यवस्थायामपि पूर्ववत् प्रपञ्चसद्भाव दर्शयति ।

भास्कर १।१।४

( ३ ) तस्मात्तत्सर्वमभवदिति । आत्मानमेवावेन्न त्वन्यदुपास्यम् । तस्मात्तत्सर्वमभवदित्यन्यवेदनस्योपायत्वनिषेधे तात्पर्यं, न तु स्ववेदनस्योपायत्वविधाने । यथा ' स कारण करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ' ( श्वेउ. ६।९ ) इति कारणान्तरनिषेधेन परमकारणत्वसिद्धि. । एवमुपास्यान्तरनिषेधेन ब्रह्मणः परमोपास्यत्वं विवक्षितमिति सर्वव्याख्यानाधिकरणे

* ब्रशंकर समानाभिप्राय । कौउ ३।२ (पृ ६६१) इत्यत्र व्याख्यानान्तर द्रष्टव्यम् ।

विवृतम् । एवमुपास्यान्तरशून्य ब्रह्म ज्ञातवत फलमाह --तद्यो यो देवानामिति । देवाना मध्ये यो ब्रह्म प्रत्य बुध्यत स एव तदभवत्सर्वमभवत् । सर्वशब्दवाच्यपरमात्मपर्यन्ताविर्भाववान्भवतीत्यर्थ. । सर्वात्मभूतपरमात्मकोऽभवत् । सर्वेणैकात्म्य प्राप्तवानिति यावत् । ऐकात्म्यस्य नित्यप्राप्तस्य प्राप्तव्यत्वासभवात्तत्साक्षात्कार. फलमिति फलति । तद्धैतत्पश्यन्निति । हशब्दो वृत्तार्थस्मरणे । तदेतद्ब्रह्म पश्यन्नुपासीनो वामदेवर्षिः 'अह मनुर भव सूर्यश्च' इति मदात्मैव मन्वादीनामात्मेति मन्वादिना सर्वेण स्वस्यैकात्म्य साक्षात्कृतवान् । तदिदमिति । एतर्ह्यपि एतस्मिन्नपि काले तदिद ब्रह्माहमस्मीति य एव वेद स इद सर्वं भवति । ततश्च ब्रह्मात्मकत्वोपासनस्य सर्वैकात्म्यसाक्षात्कारहेतुत्व पूर्व काल एव नास्मिन्काल इति न मन्तव्यमिति भाव । तस्य ब्रह्मविदो देवाश्चन देवा अपि अभूत्यै मुक्तैश्वर्यविघाताय नेशते न समर्था. कुतोऽन्य इति भाव । तत्र हेतुमाह-- आत्मेति । स ब्रह्मविद्यस्मादेवानामप्यात्मा नियन्ता ब्रह्मविद्याप्रभावेन वशित्वादिसिद्धिमत्तया तानपि नियन्तु शक्त इत्यर्थ । एव ब्रह्मात्मत्वविदा कृतार्थतामुक्त्वाऽतादृशानामनर्थं दर्शयति--अथेति । य. पुमान्धारकत्वनियन्तृत्वादिना स्वस्मादात्मत्वेना या देवता परमात्मरूपामसौ देवतारूपो धारकत्व नियन्तृत्वादिनाऽऽत्मभूतादन्योऽह च धार्यत्वनियम्यत्वादिप्रयुक्ततच्छरीरत्वादन्यो भिन्न इत्युपास्ते न स वेद अज्ञ इत्यर्थ । यथा लोके पशुरेव स देवाना पशु. । तत्किंकरतया शेषभूत इत्यर्थ. । इवैशब्दौ प्रसिद्ध्यर्थे । यथा बहव. पशव एक मनुष्य दोहवाहादिक्रियाभिर्भुञ्ज्यु परिपालयन्ति । एवमेकैको ब्रह्मवित्पुरुषः शुश्रूषयाऽग्नीन्द्रादीन्देवान्भुनक्ति परिपालयति प्रीणयति तत्किंकरो भवतीति यावत् । एतावांस्तु विशेष --बहव. पशव एकस्य किंकरा अब्रह्मवित्पुरुषस्तु एक एव सर्वदेवानां किंकर इति । लोके हि पशुस्वामिन आच्छिद्य राजचोरादिभिरेकस्मिन्पशावादीयमानेऽप्रिय भवति किमु बहुषु तस्मादेषां देवानां तत्प्रिय न भवति यदेतन्मनुष्या ब्रह्म विदुः । अत स्वकिंकरतया पशुभूता मनुष्या ब्रह्मविद्या प्राप्य पशुभावान्मुच्येरन्निति बुद्ध्या यथाशक्ति विघ्नमाचरन्तीति भाव. । अत 'श्रेयांसि बहुविघ्नानि' इति न्यायेन विघ्नबाहुल्यजटिलेऽपि ब्रह्मज्ञाने विघ्ननिवारणक्षमभगवत्प्रणामार्चनादिक अनुतिष्ठन्नवहितो ब्रह्मविद्याया यतेतेति भाव. ।

रग.

( ४ ) स च प्रत्यगात्मा मुक्तावप्यहमित्येव प्रकाशते । स्वस्मै प्रकाशमानत्वात् । ब्रह्मात्मभावापरोक्षनिर्धूतनिरवशेषाविद्यानामपि वामदेवादीनामहमित्येवात्मानुभवदर्शनाच्च । श्रूयते हि 'तद्धैतत्पश्यन्' इत्यादि । १।१।१ ( पृ ५२ )

'प्रकाशादिवच्चावैशेष्य प्रकाशश्च कर्मण्यभ्यासात्' — इतश्च प्रकृतैतावत्त्वमेव प्रतिषेधति न मूर्तामूर्तादिविशिष्टत्वम् । यत. साक्षात्कृतपरब्रह्मस्वरूपाणां वामदेवादीना दर्शने प्रकाशादिवज्ज्ञानानन्दादिस्वरूपवन्मूर्तामूर्तादिप्रपञ्चविशिष्टताया अपि ब्रह्मगुणत्वावैशेष्य प्रतीयते 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽह मनुरभव सूर्यश्च' इत्यादि । ब्रह्मस्वरूपभूतप्रकाशानन्दादिश्च तेषा वामदेवादीना सराधनात्मके कर्मण्यभ्यासादुपलभ्यते । तद्वच्चाभ्यस्तसराधनानां तेषां मूर्तामूर्तादिविशिष्टत्वमप्यविशेषेण प्रतीयत इत्यर्थ. ।

रामानुज ३।२।२४

( ५ ) 'सत्त्वाच्चावरस्य' — 'ब्रह्म वा इदमग्र आसीत्' इति सामानाधिकरण्यनिर्देशेनावरकालीनस्य कार्यस्य कारणे सत्त्वात्तदनन्यत्वम् ।

निंबार्क २।१।१६

( ६ ) सत्य तदपि स्वरूप नित्यापरोक्षज्ञानेन सर्वदा जानात्येव । अत एव सर्वदा परिपूर्णमिति तेषा परिहार । 'तदात्मानमेवावेत्तस्मात्तत्सर्वमभवत्' इति । 'आत्मा वा इदमेक एवाग्र आसीत्' 'सदेव सोम्येदमग्र आसीत्' इत्यादिवत्सदातनज्ञान पूर्णभाव चाह । इदमग्रे अस्याग्र इति षष्ठ्यर्थे द्वितीया । अह अहेय ब्रह्मपरिपूर्णं अस्मि सर्वदाऽस्तीति मेयमित्येतैर्विशेषणैरात्मान स्वरूपमेवावेत् । यद्यहशब्दोऽस्मच्छब्दार्थवाची अस्मिशब्दश्चोत्तमपुरुषे तदाऽऽत्मानमिति व्यर्थं स्यात् । अतोऽहमस्मिशब्दावुक्तार्थावेव । अग्रे अनादिकालत एव

विद्यमानमात्मान जानाति च तद्ब्रह्मेत्यर्थ. । सर्वं नियन्तृत्वेन सर्वगतत्वादहेयम् । तद्योऽह सोऽसौ योऽसौ सोऽह योऽसावसौ पुरुष. सोऽहमस्मीत्यादिष्वप्यह शब्दोऽन्तर्यामित्वेनाहेयत्ववाची । तत्सत्य स आत्मा ऽतत्त्वमसीति भेदस्य नवकृत्वोऽभ्यासात् । तद्योऽह सोऽसौ अह ब्रह्मास्मीत्यादिवाक्यानां सम्यगर्थापरिज्ञानात् भ्रान्तिप्राप्तोऽभेदोऽतत्त्वमसीति नवकृत्वो निराक्रियते । ' तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयम् ' 'कुतस्तु खलु सोम्यैव स्यात् 'कथमसतः सज्जायेत' इत्यादिना ' असद्वा इदमग्र आसीत् ' ' असत· सद जायत ' इत्यादिश्रुत्यर्थापरिज्ञानोत्थभ्रमो यथा निवार्यते एवमतत्त्वमसीति वाक्येनापि । स आत्मेतिशब्दाच्च । आत्मशब्दस्य परमात्मनि मुख्यत्वेऽपि जीवे भ्रान्तिरुपपद्यते । तन्निवृत्त्यर्थं वाऽतत्त्वमसीत्याह । ' यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सततो भाव स्तस्मादात्मेति भण्यते ॥ ' इत्यादिना आप्त्यादिक ' ऐतदात्म्यमिद सर्वम् ' इत्यनेनोच्यते । पूर्णत्ववाच्यात्मशब्द , ' आत्मा पूर्णत्वतो हरि ' इत्यादिना ' स आत्मा ' इति पूर्णत्वमभिधीयते ।

* 'यदाहुर्ब्रह्मविज्ञानात्समग्रत्व यियासव' । ब्रह्मज्ञानात्समग्रत्व नान्यतश्चेति निश्चयात् । तत्र केचिन्मनुष्यास्तु मन्यन्ते ब्रह्म किं मते. । समग्रभावमगमदिति ब्रूयाच्च तानिति । ब्रह्माऽपि सर्वदाऽऽत्मानमहेय गुणबृहितम् । सर्वदाऽस्तीति मेय च विजानाति तथैव तु । अत एव समग्रत्व स्वत एवास्य सर्वदा । तदहेय पर ब्रह्म यो योऽवेद्गुणबृहितम् । सर्वदाऽस्तीति मेय च स स याति समग्रताम् । मुख्य समग्र तद्ब्रह्म ज्ञानस्यापि समग्रत· । किंचित्समग्रता देवास्तेषा ज्ञान हि तादृशम् । आपुस्ततोऽधमा ज्ञानतादृक्त्वादृषयोऽपि तु । ऋषिभ्योऽप्यधमा प्रापुर्मानुषाश्च समग्रताम् । अहेय च गुणैः पूर्णं नित्यास्तिज्ञानगोचरम् । ब्रह्म पश्यन्वामदेव. सूक्तमेतद्दर्श ह । अहं मनु. सूर्य इति स्वान्तर्यामिव्यपेक्षया । अहशब्दो यतो विष्णौ ततश्चोत्तमपूरुषा । वर्तन्तेऽभवमित्याद्या. सर्वान्त स्थे जनार्दने । मनुरेषोऽवबोधत्वान्मन्वन्त स्थो जनार्दन. । स ह्याचारानुवाचेश. प्रेरयन्मनुमानसम् । स एव सूरिभि प्राप्य सूर्यान्त.स्थो मुमुक्षुभि । स एव कक्षगे सेव्य कक्षीवति समाश्रित । स एव शुक्रसस्थास्तु नीती कवयति स्वयम् । यत कवि. स कामस्य प्रेरणादुशना स्मृत । स एव शबरपुरो बिभेदेन्द्रे व्यवस्थित । सर्वान्तर्यामिकत्वात्तु सर्वकर्मा स एव हि । तत सूक्ते तथोवाच वामदेव श्रियः पतिम् । यो योऽहेय पर ब्रह्म सदैवास्तीति मानगम् । इदानीमपि जानाति स्वयोग्या स समग्रताम् । प्राप्नोति तस्य देवाश्च नाभूतिं कर्तुमीशते । आत्मा हि विष्णुर्देवाना तेषु व्याप्तो यत. सदा । नियोक्तृत्वे न कार्येषु तज्ज्ञो यस्माच्च साधक । यस्य प्रीतो हरिर्नित्य तस्य प्रीताश्च देवता. । प्रीतियोगान्नैव तस्य विरुद्ध कर्तुमीशते । एव विलक्षण देवमुपास्ते जीवरूपिणम् । अहेयोऽस्तीति मेनोऽन्योऽयान्योऽसौ हरिरित्यपि । न स वेद पर विष्णु जीवरूपेण वेत्ति यत् । नाहेयत्व च वेदास्य तस्मात्पशुवदीरित. । देवाना पशुवच्चासौ यो वेदाहेयरूपिणम् । पशवो बहवो यद्वत्पुरुष भोजयन्त्युत । तत्त्वज्ञ. पुरुषस्तद्वदेकोऽपि बहुगा यथा । देवान् भोजयति ज्ञानसपत्त्या विष्णुसश्रयात् । स्वीकारे तु पशो. प्रीतिरेकस्यापि भविष्यति । बहुना हि गवा लाभे परा प्रीतिश्च किं पुन· । तस्मात्तु बाहुगोरूपे देवाना तत्त्ववेदिनि । भवेदभ्यधिका प्रीतिर्विष्णवहेयत्ववेदनात् । नित्याहेयस्तथैवान्यस्तदन्यो विष्णुरित्यपि । देवानामप्रिय ज्ञान नैव विद्यादत. पुमान् । विष्णोरहेयतां चैव नित्यत्व पूर्णतामपि । यो न वेद तथा यश्च जीवैरैक्य हरेर्वदेत् । यश्चासत्य जगद्ब्रूयात्सर्वे ते तमसि स्फुटम् । मज्जन्ति सर्ववेदैर्हि गुणै सर्वैर्हरिर्यत. । पूर्णो नित्यमपूर्णाश्च जीवा मुक्ता अपि स्फुटम् । नि.शेषदुःखमोकेन सुखैकानुभवस्तु यः । मोक्ष इत्युच्यते वेदैस्तेऽपि मुक्ता हरिं सदा । उपासते जगच्चैतत्सर्वदाद्यन्तवर्जितम् । न कदाचिज्जगन्नाशो न कदाचित्तदन्यथा । जगत्प्रवाहरूपेण सर्वदैव व्यवस्थितम् । ज्ञानत. कर्मतो वाऽपि तपसा शक्तितोऽपि वा । न कस्याप्यन्यथाभाव्य

* इत पूर्वं महान् ग्रन्थविस्तरोऽस्ति स नात्र सगृहीत , प्रकृतवाक्यार्थज्ञाने साक्षादुपकारकत्वाभावात् । मध्वमतस्य समग्रस्य सक्षेपेणान्वाख्यानपरोऽय सदर्भ अन्यत्र उद्धरिष्यते ।

जगदेतत्कदाचन । सत्यो विष्णु श्रीश्च सत्या जीवा. सत्या जड तथा । असत्य नास्ति किंचिच्च सर्वेषा ज्ञानगोचरम् । ज्ञात्वा विष्णुमतो मुक्तिं प्राप्नुयात्पुरुषोत्तमम् ॥' इति भविष्यत्पर्वणि । इदमित्यात्मनो योग्य सर्वं समग्र भवति । निर्दु.खानन्दस्यापेक्षितत्वान्मनसि स्थितत्वेनेदमिति युज्यते । तत्सर्वमभवत्सर्वे भविष्यन्त इत्यादिना समग्रभावस्य प्रस्तुतत्वात् । ब्रह्म पश्यन् वामदेवो ब्रह्मणो मन्वादिजीवैरहेयत्व प्रति पेदे । 'ब्रह्म पश्यन्वामदेवो ब्रह्मणो हेयता सदा । मन्वादिभि सर्वजीवैः प्रतिपेदे हि मन्त्रदृक्॥' इति ब्राह्मे । तदिद ब्रह्म योऽहेयत्वादिगुणमेतर्ह्यपि वेद । अहशब्दस्याहेयत्वानङ्गीकारे इदशब्दोऽपि व्यर्थ· । सर्वस्वरूपत्व हि दुर्विद्वद्भिरङ्गीक्रियते । इदशब्देन परब्रह्माविवक्षाया ब्रह्मशब्दो व्यर्थ· स्यात् । इद योऽहमिति वेदेत्येव स्यात् । एवशब्दश्च व्यर्थ । अस्मत्पक्षे तु तदात्मानमेवावेदित्यपि ज्ञातव्यमित्येव शब्दार्थ· । तत्पक्षे तदपि व्यर्थमेव। न हि तत्पक्षे तत्स्वात्मान वेत्ति । व्याख्यानव्याख्येयभावश्चागतिका गतिः । अभावे पृथगर्थाना व्याख्यामभ्यासमेव वा । कल्पयेन्नैव तद्भावे व्याख्याऽभ्यासश्च युज्यते ॥' इति भारते । 'स्वरूपज्ञ तथाहेय नित्य च ब्रह्म वेत्ति यः । समग्रभाव गच्छेत्स तत्प्रसादान्न सशय ॥' इति च । स ईश्वर एषां देवानामात्मा भवति । पुल्लिङ्ग च तत्सत्य स आत्मेत्यादिवद्भवति । 'देवाना व्यापकत्वात्तु तेषामात्मा हरि सदा । तज्ज. प्रियस्ततस्तेषा तस्य नाभूतिदास्तत· ॥' इति वामने । सर्वेभ्योऽन्यां विलक्षणा देवतां स्वगुणेभ्योऽहेयत्वादिभ्यश्चान्या य उपास्ते अहेयोऽस्तीति मेयश्चान्योऽन्यश्चासौ विष्णुरिति मत्वा यो विष्णोरन्या देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेदेति वा । 'जीवादिभ्यो हरिर्भिन्नस्त य. स्वगुणभेदत । अहेयोऽन्यो हरिश्चान्य इति मत्वाऽन्यमेव वा । य उपास्ते न स ज्ञानी मनुष्याणा पशुर्हि स. । सम्यग्ज्ञानी त देवाना पशुरित्यभिधीयते ॥' इति च । एव स देवाना नित्यत्र पूर्व. सम्यग्ज्ञानी परामृश्यते । एतन्मनुष्या विदुरित्यत्रैतच्छब्देन विष्णोरन्यदेवतोपासनमुच्यते । न ह्यज्ञान्येव देवानां भोजकः । ज्ञानी हि विशेषेण भोजक । 'अथो अय वा आत्मा सर्वेषां भूतानां लोकः' इति वचनात् । स य एववित्सर्वेषा भूताना ब्रह्मविच्च तत्रोच्यते । प्रस्तुतत्वात् । तत्त्वविद्देवगौ. प्रोक्तो नरगौश्चाप्यतत्त्ववित् । तस्माद्देवास्तत्त्वविदे प्रिय कुर्वन्त्यतन्द्रिता. ॥' इत्याग्नेये । तस्य ह न देवाश्च नाभूत्या ईशत इति देवानां तत्त्वज्ञान प्रियमित्युक्त च । 'असत्यमप्रतिष्ठ ते जगदाहुरनीश्वरम्' इति । यच्चिकेत सत्यमित्तन्न मोघ वसु स्पार्हमुत जेतोत दाता । सत्यो जीवेशयोर्भेद. सत्या विष्णोर्गुणा अपि । सत्य जगदिद सर्वं सत्येशजगतोर्भिदि ॥' इत्यादेश्च । 'भेदेनैव जगत्सर्वं भेदेनेश गुणै सह । भेदेन जीवानन्योऽन्य मुक्ता पश्यन्ति सर्वशः । नि शेषदु.खहीनाश्च केवल सुखभोगिन । जन्ममृत्युविहीनाश्च कालसबन्धवर्जिताः । रजस्तम सत्त्वहीना प्रकृत्यादिविवर्जिताः ॥' इत्यादि गारुडवचनान्न ज्ञाननिवर्त्यता वक्तु युक्ता । तिर्यङ्मानुषदेवादिविष्णुरूपेष्वशक्तता । यस्मिन्कस्मिंश्च विषये दु.खित्व भिन्नताऽपि वा । प्रकृतेर्विकारिता वाऽपि छेदभेदव्रणादि वा । अज्ञान नाशिता वाऽपि जन्मजीवैरभिन्नता । प्रकृत्यभिन्नता वाऽपि जीवाभेद. परस्परम् । जडाभेदोऽथवा विष्णोर्मिथ्यात्व जगतोऽपि वा । अगुणत्वमदेहत्वमकर्तृत्व तथा हरेः । सम्यग्भक्तिमृते मुक्तिर्विष्णोस्तद्द्वेषतस्तथा । मुक्तावभोगो जीवाना मुक्तौ साम्य तथैव च । अरूपत्व च जीवाना मुक्ताना बन्धिनामपि । नामतीर्थादिभिर्मुक्तिस्तत्त्वज्ञान विनाऽपि तु । विष्णो. सकाशात्प्रकृतेर्ब्रह्मणोऽनन्तरुद्रयो. । गरुडेन्द्रसूर्यविघ्नादेरग्निसोमगुह्यादिनाम् । प्रद्युम्नस्यानिरुद्धस्य देवविप्रादिनामपि । यै. कैश्चिदपि गुणैर्विष्णो. सकाशाद्वरता तथा । यदा कदापि यत्नैर्वा वरशापादिनाऽपि वा । तपसा वाऽप्युपायैर्वा योगज्ञानादिनाऽपि वा । साम्य वा विष्ण्वधीनत्वादन्यथैषा स्थिति कृति । असंसारित्वमेषा वाऽप्येषामीश्वरताऽपि वा । विना विष्णुप्रसादेन मुक्तिरेषा सकाशत. । विष्णोः प्रयोजनावाप्तिर्विष्णोर्दोषश्च कश्चन । विष्णो. सर्वेषु रूपेषु सपूर्णगुणहीनता । भेदो वा विष्णुरूपेषु विशेषो वा गुणेषु च । श्रिय सकाशादाधिक्य ब्रह्मादेः साम्यमेव वा । ब्रह्मवाय्वोरनन्तस्य रुद्रस्य गरुडस्य च । तेभ्यश्चैवेन्द्रसूर्यादेर्विप्रभूपादिनां ततः । बद्धाना मुक्तिगाना वा दैत्याना मोक्ष एव च । सर्वे मोहार्थमु-

द्विष्ट वेदेषु हरिणाऽपि वा । ब्रह्मणा वाऽथ रुद्रेण देवैश्च मुनिभिस्तथा । यथा सुराणा सज्ज्ञाने तात्पर्यं सर्वदा श्रुतेः। तथा दुर्ज्ञानजनने तात्पर्यमसुरेषु च । एवमेव च देवाना विष्णुब्रह्मादिनामपि । विष्णो सर्वगुणैः पूर्तिरपि मत्स्यादिरूपिण । अजेयत्वममेद्यत्व-मच्छेद्यत्व च सर्वश' । सर्वावताररूपाणामपि चित्सुख-रूपता । श्रीब्रह्मरुद्राद्याधिक्य सर्वेशत्व स्वतन्त्रन्ता । सर्वशक्तिस्तत्प्रसादान्मोक्षो ब्रह्मादिनामपि । तद्भक्त्यैव विमोक्षश्च भेदो जीवेशयोरपि । श्रीब्रह्मरुद्रशक्रादेः क्रमे-णैव निजा गुणा' । सर्वदोषव्यपेतत्व विष्णो सर्वत्र सर्वदा । एतत्सर्वं सर्ववेदैर्विष्ण्वाद्यैर्देवतागणै । ऋषिभि. क्षत्रियाद्यैश्च सम्यक्तात्पर्यत सदा । उक्त सर्वेषु शास्त्रेषु तस्माद्ग्राह्य बुभूषुभि । इद सत्यमिद सत्यमिद सत्य न सशय' । कोटिभि' शपथैश्चापि निर्णीत देवतागणै । अनादिकालतश्चाय शास्त्रार्थो नान्यथा क्वचित् । पुनश्चा-नन्तकालीन एष एव न सशय । ज्ञातव्यश्चैष एवार्थ. सर्वदैव बुभूषुभि. । एव तु स्थिरया बुद्ध्या ज्ञात्वा यास्यथ तत्परम्। एव ते हसरूपेण विष्णुना देवतागणाः। ब्रह्माद्या बोधिता सर्वे तथा ज्ञात्वा पर गता । साक्षा द्विष्णुर्हसरूप उक्त्वैव तु दिवौकसाम् । वासुदेवाख्य रूपेण तेन सर्वहृदि स्थित. । सकर्षणाख्यरूपेण विवेशानन्तमेव च । त ध्यायति सदानन्तस्तस्मान्मुक्तिपदे च्छया । प्रद्युम्नाख्येन रूपेण काममेव विवेश सः । हस-स्तद्ध्यानतो मुक्तिं काम इच्छति सर्वदा । अनिरुद्धा ख्यरूपेण सोऽनिरुद्ध विवेश ह । हसस्तद्ध्यानतो मुक्ति-मनिरुद्धस्तथेच्छति ॥' इत्यादि ब्रह्माण्डपुराणे तत्त्वनिर्ण-यगीतायाम् । मध्व

( ७ ) वामदेवो हि स्वस्य परमेश्वरात्मत्वदृष्ट्या 'अह मनुरभव सूर्यश्च' इत्युपदिदेश । अथवा — वेदान्तविज्ञानोपलब्धया ब्रह्मात्मसामरस्यभावनया ब्रह्म-भावमुपगतस्य विगलितमनुष्यादिदेहविषयकल्पिताहभाव-सकोचस्य सपन्नविश्वाकारपराहभावस्य वामदेवस्य स्वात्मन. सर्वगतत्वावगमान्मनुसूर्यादिप्रपञ्चभावोक्ति. । १।१।३१

'भाक्त वाऽनात्मवित्त्वात्तथा हि दर्शयति'—'यथा पशुरेव स देवानाम्' इति श्रुतिरनात्मविदां पशुवद्देवोप-करणत्व दर्शयति । तस्मादात्मविदा परमेश्वरोपकरणत्व वत् अनात्मविदा देवोपकरणत्वमिति मन्तव्यम् ।

३।१।७

'अह मनुरभव सूर्यश्च' 'त मामायुरमृतमित्युपास्व' इत्यादिषु ब्रह्मोपासकाना तेन भावनैक्येन तदसाधा-रणगुणप्राप्ति. । 'दिव्य ददामि ते चक्षु पश्य मे योग मैश्वरम्' इत्यादिषु हि कृष्णादीना तदैक्यभावनया तदै-श्वर्यप्रकाशन दृश्यते, ब्रह्मभावनाभ्यासेन च विश्वामि-त्रागस्त्यादीना स्वर्गान्तरकरणजलधिकवलनादिसामर्थ्यम् । लोके च मन्त्रिणा गरुडभावनया गरुडासाधारणधर्म-प्राप्ति. । तस्मात् ब्रह्माहन्ताया. प्रौढभावे सति ब्रह्मासा धारणधर्माद्यवैशिष्ट्यमुपासकानामसाधारणमित्यनवद्यम् ।

श्रीकण्ठ ३।२।२४

( ८ ) य एव प्रत्यबुद्धयत स सर्वं भवति । तत्र सर्वेषा सर्वभावे सर्वानन्त्यप्रसङ्गात् सर्वमेकमेवेति वक्त-व्यम्। १।१।२९

'भाव तु बादरायणोऽस्ति हि' — 'यो यो' एवमेवविधैर्वाक्यैर्देवानामप्यधिकारोऽस्ति । यत्र च पुनर्देवाना फलभोग एव प्रतीयते, न करण, तत्रापि तेषामधिकारोऽङ्गीकर्तव्यः ।

वल्लभ १।३।३३

( ९ ) अनुत्पन्नज्ञानस्य सत्या शक्तौ देवताराधन-रूपबाह्याभ्यन्तरसर्वकर्मत्यागे ज्ञानमेव नोत्पद्येत, देवकृत-विघ्नसभवात् । 'तदेतद्देवाना न प्रियम्०' इति श्रुते ।

१।१।१ ( पृ २४ )

'तत् यो यो देवाना प्रत्यबुध्यत स एव तदभवत्' इति श्रुतेर्विष्णुदेवताया औत्पत्तिकब्रह्मात्म भावान्मत्तः परतर नास्तीत्यादिवचनमुपपद्यते ।

१।१।५ ( पृ १३० )

वामदेवो रुद्र. ऋषिविशेषो वा स्वस्यात्मा ब्रह्मेति ज्ञात्वा ब्रह्मण्यात्मभावेन 'अह मनुरभव सूर्यश्च' इति शास्त्रीयज्ञानवानभूत् । १।१।३०

'भाव तु बादरायणोऽस्ति हि' — चेतनदेवताया भाव सत्ता बादरायणो वदति अस्ति हि 'तत् यो यो देवाना०' इत्यादिश्रुतेरित्यर्थः। जैमिनेरचेतनदेवतावादस्तु ज्योतिर्मण्डलाभिप्रायेण बोध्य. । १।३।३३

'ब्रह्मदृष्टिरुत्कर्षात्' — प्रतीके च जीवादौ ब्रह्मदृष्टिरुपासनाहार्यज्ञानरूपैव मन्तव्या किरणादौ सूर्यादिदृष्टिवत्, न पुनस्तत्त्वज्ञानरूपेत्यर्थ.। उत्कर्षादिति उत्कर्षार्थमित्यर्थ.। ब्रह्मदृष्ट्या हि जीवानामससारित्वादिरूप उत्कर्षो भवतीति। तत्त्वज्ञानप्रकरणेषु च जीवादिषु ब्रह्माभेदबोधकश्रुतिस्मृतयोऽविभागलक्षणाभेदमात्र शरीरशरीरिणोरिवाहुर्ब्रह्ममात्रार्थताबोधनायेति विशेष । व्यतिहारवाक्य चात्यन्तसाम्यपरमेवेति प्रतिपादित 'व्यतिहारो विशिंषन्ति हीतरत्' इत्यत्र ।

* विज्ञान ४।१।५

ब्रह्म वा इदमग्र आसीदेकमेव। तदेकꣳसन्न व्यभवत्। तच्छ्रेयोरूपमत्यसृजत क्षत्र, यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुण सोमो रुद्र पर्जन्यो यमो मृत्युरीशान इति। तस्मात्क्षत्रात्परं नास्ति। तस्माद्ब्राह्मण क्षत्रियमधस्तादुपास्ते राजसूये। क्षत्र एव तद्यशो दधाति। सैषा क्षत्रस्य योनिर्यद्ब्रह्म। तस्माद्यद्यपि राजा परमता गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिम्। य उ एनꣳ हिनस्ति स्वाꣳ स योनिमृच्छति स पापीयान्भवति यथा श्रेयाꣳसꣳ हिꣳसित्वा ॥

(१) सूत्रितः शास्त्रार्थ· — 'आत्मेत्येवोपासीत' इति। तस्य च व्याचिख्यासितस्य सार्थवादेन 'तदाहुर्यद्ब्रह्मविद्यया' इत्यादिना सबन्धप्रयोजने अभिहिते। अविद्यायाश्च ससाराधिकारकारणत्वमुक्तम् — 'अथ योऽन्या देवतामुपास्ते' इत्यादिना। तत्र अविद्वान् ऋणी पशुवद्देवादिकर्मकर्तव्यतया परतन्त्र इत्युक्तम्। किं पुनर्देवादिकर्मकर्तव्यत्वे निमित्तम्? वर्णा आश्रमाश्च। तत्र के वर्णा इत्यत इदमारभ्यते — यन्निमित्तसबद्धेषु कर्मसु अय परतन्त्र एवाधिकृतः ससरति। एतस्यैवार्थस्य प्रदर्शनाय अग्निसर्गानन्तरमिन्द्रादिसर्गो नोक्त। अग्नेस्तु सर्ग प्रजापतेः सृष्टिपरिपूरणाय प्रदर्शित.। अय च इन्द्रादिसर्गः तत्रैव द्रष्टव्य·, तच्छेषत्वात्। इह तु स एवाभिधीयते अविदुष· कर्माधिकारहेतुप्रदर्शनाय।

* छाउ ६।८।७ (पृ ९१३) इत्यत्रापि द्रष्टव्यम्।

(१) बृउ १।४।११, शभा १।४।१।२३, रामानुज २।१।१५ (पृ ४४६), ४।४।१७, श्रीकर ४।४।१७, विज्ञान १।१।४ (पृ १०७, १०८)

ब्रह्म वा इदमग्र आसीत्—यदग्निं सृष्ट्वा अग्निरूपापन्न ब्रह्म — ब्राह्मणजात्यभिमानात् ब्रह्मेत्यभिधीयते — वै, इद क्षत्रादिजात, ब्रह्मैव, अभिन्नमासीत्, एकमेव — न आसीत्क्षत्रादिभेद., तत् ब्रह्मैक क्षत्रादिपरिपालयित्रादिशून्य सत्, न व्यभवत् न विभूतवत् कर्मणे नालमासीदित्यर्थः। ततस्तद्ब्रह्म — ब्राह्मणोऽस्मि ममेत्थ कर्तव्यमिति ब्राह्मणजातिनिमित्त कर्म चिकीर्षु· आत्मन कर्मकर्तृत्वविभूत्यै, श्रेयोरूप प्रशस्तरूपं, अति अमृजत अतिशयेन असृजत सृष्टवत्। किं पुनस्तत्, यत्सृष्टम्? क्षत्र क्षत्रियजातिः। तद्व्यक्तिभेदेन प्रदर्शयति — यान्येतानि प्रसिद्धानि लोके, देवत्रा देवेषु, क्षत्राणीति—जात्याख्याया पक्षे बहुवचनस्मरणात् व्यक्तिबहुत्वाद्वा भेदोपचारेण — बहुवचनम्। कानि पुनस्तानीत्याह — तत्राभिषिक्ता एव विशेषतो निर्दिश्यन्ते — इन्द्रो देवाना राजा, वरुणो यादसां, सोमो ब्राह्मणानां, रुद्र पशूनां, पर्जन्यो विद्युदादीना, यम पितॄणां, मृत्यु रोगादीना, ईशानो भासां — इत्येवमादीनि देवेषु क्षत्राणि। तदनु इन्द्रादिक्षत्रदेवताधिष्ठितानि मनुष्यक्षत्राणि सोमसूर्यवश्यानि पुरूरव.प्रभृतीनि सृष्टान्येव द्रष्टव्यानि। तदर्थ एव हि देवक्षत्रसर्ग. प्रस्तुत.। यस्मात् ब्रह्मणा अतिशयेन सृष्ट क्षत्र, तस्मात्क्षत्रात्पर नास्ति ब्राह्मणजातेरपि नियन्तृ। तस्माद्ब्राह्मण· कारणभूतोऽपि क्षत्रियस्य क्षत्रिय अधस्तात् व्यवस्थित. सन् उपरि स्थित उपास्ते—क्व? राजसूये। क्षत्र एव तत् आत्मीय यश ख्यातिरूप—ब्रह्मेति—दधाति स्थापयति। राजसूयाभिषिक्तेन आसन्द्यां स्थितेन राज्ञा आमन्त्रितो ब्रह्मन्निति ऋत्विक् पुनस्त प्रत्याह—त्व राजन्ब्रह्मासीति। तदेतदभिधीयते—क्षत्र एव तद्यशो दधातीति। सैषा प्रकृता क्षत्रस्य योनिरेव, यद्ब्रह्म। तस्मात् यद्यपि राजा परमता राजसूयाभिषेकगुण गच्छति आप्नोति—ब्रह्मैव ब्राह्मणजातिमेव, अन्ततः अन्ते कर्मपरिसमाप्तौ, उपनिश्रयति आश्रयति स्वा योनिं—पुरोहित पुरो निधत्त इत्यर्थः। यस्तु पुनर्बलाभिमानात् स्वां योनिं ब्राह्मणजातिं ब्राह्मण य उ एन हिनस्ति हिंसति न्यग्भावेन पश्यति, स्वामात्मीयामेव स योनिमृच्छति—स्व प्रसव विच्छिनत्ति विनाशयति। स एतत्कृत्वा पापीयान् पापतरो

भवति। पूर्वमपि क्षत्रिय. पाप एव क्रूरत्वात्, आत्मप्रसवहिंसया सुतराम्। यथा लोके श्रेयास प्रशस्ततर हिंसित्वा परिभूय पापतरो भवति, तद्वत्।

शकर.

(२) 'स मुखाच्च योनेर्हस्ताभ्या चाग्निमसृजत' (बृउ १।४।६) इति 'तस्य श्रान्तस्य तप्तस्य तेजोरसो निरवर्तताग्नि' इति च ब्राह्मणवर्णाग्निसृष्टि' प्रागुक्ता। इन्द्रादिरूपक्षत्रादिसृष्टिं वक्तु 'आत्मैवेदमग्र आसीत्' इत्यादिनोक्तमेव प्रपञ्चस्य ब्रह्मोपादानत्व बहुकृत्वोऽपि पाठ्य पठितव्यमिति नीतिमनुसृत्य शिष्यावधानाय पुनः स्मारयति—ब्रह्म वेति। स्पष्टोऽर्थ.। न व्यभवत् वैभव प्राप्तमित्यर्थ'। न चाग्निसृष्ट्यनन्तर ब्रह्मणः कथमेकत्वोक्तिरिति वाच्यम्। तदविवक्षयैकत्वोक्त्युपपत्तेरिति द्रष्टव्यम्। क्षत्रियाख्य श्रेयः श्रेष्ठ रूप शरीरभूतम त्यसृजत ससर्जेत्यर्थ.। तदेव प्रपञ्चयति—यान्येतानीति। देवत्रा देवेषु। 'देवमनुष्य०' (पा सू ५।४।५६) इत्यादिना सप्तम्यर्थे त्राप्रत्यय। देवेष्विन्द्रवरुणादीनि यान्येतानि क्षत्राणि तानि ससर्जेत्यर्थ.। 'ब्रह्म बृहस्पति क्षत्रमिन्द्रो मरुतो वै देवाना विशः' इति श्रुतेरिन्द्रादीना क्षत्रियत्व देवेष्वपि तपोविशेषेण वर्णविशेषसभवात्तदभिमानित्वाद्वा क्षत्रियत्व द्रष्टव्यम्। उभयमपि व्यासार्यैर्वर्णितम्। यस्माद्धेतोरिन्द्रादयो देवश्रेष्ठा अपि क्षत्रियास्तस्मात्क्षत्रियाच्छ्रेष्ठ नास्तीत्यर्थः। यस्मात्क्षत्रिय. श्रेष्ठस्तस्माद्ब्राह्मणोऽपि राजसूययज्ञे क्षत्रियमधस्तात्, 'ततोऽन्यत्रापि दृश्यते' इति द्वितीया, उपास्त उपविशतीत्यर्थ। राजसूये राज्ञा ब्रह्मन्नित्यामन्त्रित ऋत्विग्राजानमाह—त्व राजन्ब्रह्मासीति श्रवणाद्ब्राह्मणत्वप्रयुक्त यशो राजसूये क्षत्रिये ब्राह्मणो यस्मात्कारणाद्दधाति तस्मात्क्षत्रिय एव श्रेष्ठ इत्यर्थ.। एवविधस्यापि क्षत्रस्य ब्राह्मण एव योनिरित्यर्थ.। राजसूये क्षत्रियगतातिशयस्यापि ब्राह्मणाधीनत्वाद्यजनाध्ययनयोस्तदधीनत्वादिति भावः। योनिशब्दाभिप्रायेण सैषेति स्त्रीलिङ्गनिर्देश.। तस्मादेव हेतोर्यद्यपि राजसूयाभिषेकदशाया परमतां श्रेष्ठता क्षत्रियो गच्छति कर्मावसाने तु स्वयोनिभूत ब्राह्मणमेवोपनिश्रयति याजनादिकार्याय ब्राह्मणसमीपमुपेत्य निहीनतयाऽऽश्रयतीत्यर्थ'। य. क्षत्रियो ब्राह्मण हिनस्ति स स्वोत्पत्तिस्थानमेव हिनस्ति मातृहा पितृहा भवतीत्यर्थ.। यथा श्रेयास पित्रादिक हिंसित्वा पापीयान्भवति, एव पापीयान्भवतीत्यर्थ।

रग.

(३) 'ब्रह्म वा' इत्यादिषु च निखिलजगन्नियमन परमपुरुष प्रकृत्यैव श्रूयते। * रामानुज ४।४।७

**स नैव व्यभवत्। स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति॥**

(१) क्षत्रे सृष्टेऽपि, स नैव व्यभवत्, कर्मणे ब्रह्म तथा न व्यभवत्, वित्तोपार्जयितुरभावात्। स विशमसृजत कर्मसाधनवित्तोपार्जनाय। क पुनरसौ विट्? यान्येतानि देवजातानि स्वार्थे निष्ठा, य एते देवजातिभेदा इत्यर्थ.। गणश गण गण, आख्यायन्ते कथ्यन्ते—गणप्राया हि विश। प्रायेण सहता हि वित्तोपार्जने समर्था, न एकैकश—वसव अष्टसख्यो गण, तथैकादश रुद्रा., द्वादश आदित्या, विश्वेदेवा त्रयोदश विश्वाया अपत्यानि—सर्वे वा देवा, मरुत सप्त सप्त गणा'।

शकर.

(२) स परमात्मा क्षत्रसृष्ट्याऽपि विभुत्व नाऽऽप। ततो वैश्यमसृजत।

रग.

**स नैव व्यभवत्। स शौद्रं वर्णमसृजत पूषणम्। इयं वै पूषा। इयꣳ हीदꣳ सर्वं पुष्यति यदिदं किंच॥**

(१) स. परिचारकाभावात्पुनरपि नैव व्यभवत्। स शौद्र वर्णमसृजत शूद्र एव शौद्र', स्वार्थेऽणि वृद्धि'। क' पुनरसौ शौद्रो वर्ण, य. सृष्ट'? पूषण— पुष्यतीति पूषा। कः पुनरसौ पूषेति विशेषतस्तन्निर्दिशति—इय पृथिवी वै पूषा। स्वयमेव निर्वचनमाह— इय हि इद सर्वं पुष्यति यदिद किंच।

शकर.

(२) पृथिव्या एव सर्वकार्यपोषकत्वात्पृथिव्येव पूषेत्यर्थ.। यथाऽग्नीन्द्रादीना ब्राह्मणक्षत्रियाश्रयत्वमेव

---

* विज्ञान रामानुजवत्।

(१) बृउ १।४।१२, शब्रा १४।४।२।२४ विश्वेदेवा (विश्वे देवा)

(२) बृउ १।४।१३, शब्रा १४।४।२।२५

पृथिव्या अपि शूद्रत्वाश्रयत्व तदभिमानित्व वा द्रष्टव्यम्।

रग

स नैव व्यभवत्। तच्छ्रेयोरूपमत्यसृजत धर्मम्। तदेतत्क्षत्रस्य क्षत्र यद्धर्मः। तस्माद्धर्मात्परं नास्ति। अथो अबलीयान्बलीयाꣳसमाशꣳसते धर्मेण। यथा राज्ञैवम्। यो वै स धर्मः सत्य वै तत्। तस्मात्सत्य वदन्तमाहुर्धर्मं वदतीति। धर्मं वा वदन्तꣳ सत्यं वदतीति। एतद्ध्येवैतदुभयं भवति ॥

(१) सः चतुर. सृष्ट्वाऽपि वर्णान् नैव व्यभवत् उग्रत्वात्क्षत्रस्यानियतताशङ्कया। तत् श्रेयोरूप अत्य सृजत — किं तत्? धर्मम्। तदेतत् श्रेयोरूप सृष्ट क्षत्रस्य क्षत्र क्षत्रस्यापि नियन्तृ, उग्रादप्युग्र—यद्धर्म यो धर्म., तस्मात् क्षत्रस्यापि नियन्तृत्वात् धर्मात्पर नास्ति, तेन हि नियम्यन्ते सर्वे। तत्कथमिति उच्यते— अथो अपि अबलीयान् दुर्बलतर बलीयासमात्मनो बलवत्तरमपि आशसते कामयते जेतु धर्मेण बलेन—यथा लोके राज्ञा सर्वबलवत्तमेनाल्पः कुटुम्बिक', एवम्। तस्मात्सिद्ध धर्मस्य सर्वबलवत्तरत्वात्सर्वनियन्तृत्वम्। यो वै स धर्मो व्यवहारलक्षणो लौकिकैर्व्यवह्रियमाण. सत्य वै तत्। सत्यमिति यथा शास्त्रार्थता। स एवानुष्ठीयमानो धर्मनामा भवति। शास्त्रार्थत्वेन ज्ञायमानस्तु सत्य भवति। यस्मादेव तस्मात्, सत्य यथाशास्त्र वदन्त व्यवहारकाल आहु समीपस्था उभयविवेकज्ञाः धर्मं वदतीति, प्रसिद्ध लौकिक न्यायं वदतीति। तथा विपर्ययेण धर्मं वा लौकिक व्यवहार वदन्तमाहु'—सत्य वदति, शास्त्रादनपेतं वदतीति। एतत् यदुक्त उभय ज्ञायमानमनुष्ठीयमान च एतत् धर्म एव भवति। तस्मात्स धर्मो ज्ञानानुष्ठानलक्षण' शास्त्रज्ञानितराश्च सर्वानेव नियमयति। तस्मात् स क्षत्रस्यापि क्षत्रम्। अतस्तदभिमानोऽविद्वान् तद्विशेषानुष्ठानाय ब्रह्मक्षत्रविट्शूद्रनिमित्तविशेषमभिमन्यते। तानि च निसर्गत' एव कर्माधिकारनिमित्तानि।

शाकर

(२) क्षत्रादपि श्रेयोभूतो धर्म सत्यवदनमेव। एतद्ध्येव सत्यवदनमेतदुभय सत्यधर्मोभयरूप भवति। तस्मात्सत्यवदन सर्वशेषिभूतमिति भावः।

रग

तदेतद्ब्रह्म क्षत्र विट्शूद्र। तदग्निनैव देवेषु ब्रह्माभवद्ब्राह्मणो मनुष्येषु, क्षत्रियेण क्षत्रिय, वैश्येन वैश्य, शूद्रेण शूद्र। तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येषु। एताभ्याꣳ हि रूपाभ्या ब्रह्माभवत् ॥

(१) तदेतच्चातुर्वर्ण्यं सृष्ट — ब्रह्म क्षत्र विट् शूद्र इति। उत्तरार्थ उपसहारः। यत्तत् स्रष्टृ ब्रह्म, तदग्निनैव, नान्येन रूपेण, देवेषु ब्रह्म ब्राह्मणजाति, अभवत्। ब्राह्मण ब्राह्मणस्वरूपेण, मनुष्येषु ब्रह्माभवत्। इतरेषु वर्णेषु विकारान्तर प्राप्य, क्षत्रियेण क्षत्रियोऽभवत् इन्द्रादिदेवताधिष्ठित, वैश्येन वैश्य., शूद्रेण शूद्र। यस्मात्क्षत्रादिषु विकारापन्न, अग्नौ ब्राह्मण एव चाविकृत स्रष्टृ ब्रह्म, तस्मादग्नावेव देवेषु देवाना मध्ये लोक कर्मफल, इच्छन्ति, अग्निसबद्ध कर्म कृत्वेत्यर्थः। तदर्थमेव हि तद्ब्रह्म कर्माधिकरणत्वेनाग्निरूपेण व्यवस्थितम्। तस्मात्तस्मिन्नग्नौ कर्म कृत्वा तत्फल प्रार्थयन्त इत्येतत् उपपन्नम्। ब्राह्मणे मनुष्येषु—मनुष्याणा पुनर्मध्ये कर्मफलेच्छाया नाग्न्यादिनिमित्तक्रियापेक्षा, किं तर्हि जातिमात्रस्वरूपप्रतिलम्भेनैव पुरुषार्थसिद्धिः। यत्र तु देवाधीना पुरुषार्थसिद्धि, तत्रैवाग्न्यादिसबद्धक्रियापेक्षा। स्मृतेश्च — 'जप्येनैव तु ससिध्येद्ब्राह्मणो नात्र सशय.। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥' इति। पारिव्राज्यदर्शनाच्च। तस्माद्ब्राह्मणत्व एव मनुष्येषु लोक कर्मफलमिच्छन्ति। यस्मादेताभ्या हि ब्राह्मणाग्निरूपाभ्यां कर्मकर्त्रधिकरणरूपाभ्या यत्स्रष्टृ ब्रह्म साक्षादभवत्।

---

(१) बृउ १।४।१४, शब्रा १४।४।२।२६

(१) बृउ १।४।१५, शब्रा १४।४।२।२७, २८, ब्रशाकर. १।१।४ (पृ ५४), भास्कर १।१।१, ३।४।२०, रामानुज १।१।१ (पृ ८), १।१।४ (पृ १५१, १६८), ब्रमध्व २।३।३६, ३।१।७, ३।२।९, ४।१।१६, १८, वल्लभ १।१।१ (पृ ३७), बलदेव ३।२।९ ३।३।२०, ३८, ३।४।३३

अत्र तु परमात्मलोकमग्नौ ब्राह्मणे चेच्छन्तीति केचित् । तदसत्, अविद्याविकारे कर्माधिकारार्थे वर्णविभागस्य प्रस्तुतत्वात्, परेण च विशेषणात् । यदि ह्यत्र लोकशब्देन पर एवात्मोच्येत, परेण विशेषणमनर्थकं स्यात् — 'स्वं लोकमदृष्ट्वा' इति । स्वलोकव्यतिरिक्तश्चेदन्यधीनतया प्रार्थ्यमानः प्रकृतो लोकः, तत स्वमिति युक्तं विशेषणं, प्रकृतपरलोकनिवृत्त्यर्थत्वात् । स्वत्वेन च अव्यभिचारात्परमात्मलोकस्य, अविद्याकृतानां च स्वत्वव्यभिचारात् — ब्रवीति च कर्मकृतानां व्यभिचार — 'क्षीयत एव' इति । शकर

( २ ) तस्मादेतद्ब्रह्म क्षत्रविट्शूद्रात्मकमिति भाव. । ननु कथं ब्रह्मणश्चातुर्वर्ण्यस्वरूपत्वम् । क्षत्रादिसृष्टिर्ह्युक्तेत्यपेक्षायामाह — 'तदग्निनैव देवेषु ब्रह्माभवत्' । अग्निनेतीत्थंभावे तृतीया । 'स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत' (बृउ १।४।६) इति 'तेजोरसो निरवर्तताग्निः' इति स्रष्टृत्वेन प्रागुक्तेनाग्निनैव विशिष्टं सद्ब्रह्माभवद्ब्राह्मणोऽभवत् । अग्निरसं ब्रह्म ब्राह्मणत्वजातिमद्ब्रह्मण्यग्निद्वारा ब्राह्मणत्वमित्यग्निरूपो ब्राह्मणोऽभवदिति पर्यवसितोऽर्थः । इन्द्रादिरूपविशिष्टं ब्रह्म तद्द्वारा क्षत्रियत्वजातिमदभूत् । वसुरुद्रादिविशिष्टं ब्रह्म तद्द्वारा वैश्यत्वजातिमदभूत् । पृथिवीरूपविशिष्टं ब्रह्म तद्द्वारा शूद्रत्वजातिमदभूदिति सिद्धम् । एवं देवेषु ब्राह्मणत्वादिजातिमत्त्वमग्नीन्द्रादिद्वारकमित्युक्त्वा मनुष्येषु ब्राह्मणत्वादिजातिमत्त्वप्रकारो ब्रह्मणो दर्शयति — ब्राह्मण इति । ब्राह्मणो मनुष्येष्वित्यत्र ब्राह्मणेनेत्यध्याहर्तव्यम् । ब्राह्मणेन ब्राह्मण इति क्षत्रियेण क्षत्रिय इत्युत्तरग्रन्थानुसारात् । ततश्च ब्राह्मणद्वारा ब्राह्मणत्वजातिमदभवत् । क्षत्रियवैश्यादिद्वारा क्षत्रियत्वादिजातिमदभूदित्यर्थः । प्रसङ्गादग्निब्राह्मणौ प्रशंसति — तस्मादिति । देवानां मध्ये लोकमग्नावेवेच्छन्ति । अग्नाविति निमित्तसप्तमी अग्नेर्निमित्तादेवेच्छन्ति । मनुष्याणां मध्ये ब्राह्मणादेव निमित्ताल्लोकमिच्छन्तीत्यर्थः । यद्वा देवेष्वग्नावेव हुत्वा मनुष्येषु ब्राह्मण एव दत्त्वा लोकमिच्छन्तीत्यर्थः । प्राशस्त्यहेतुमाह — एताभ्यामिति । प्रथमत इति शेष. । अग्निब्राह्मणरूपाभ्यां हि परं ब्रह्म प्रथमतो विशिष्टमभवदित्यर्थ. । रग.

**अथ यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतम् । यदिह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एव । आत्मानमेव लोकमुपासीत । स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते । अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते ॥**

( १ ) ब्रह्मणा सृष्टा वर्णा. कर्मार्थम् । तच्च कर्म धर्माख्यं सर्वानेव कर्तव्यतया नियन्तृ पुरुषार्थसाधनं च । तस्मात्तेनैव चेत् कर्मणा स्वो लोक. परमात्माख्य अविदितोऽपि प्राप्यते, किं तस्यैव पदनीयत्वेन क्रियत इत्यत आह — अथेति, पूर्वपक्षविनिवृत्त्यर्थः । य कश्चित् ह वै अस्मात् सांसारिकात्पिण्डग्रहणलक्षणात् अविद्याकामकर्महेतुकात् अन्यधीनकर्माभिमानतया वा ब्राह्मणजातिमात्रकर्माभिमानतया वा आगन्तुकादस्वभूताल्लोकात्, स्वं लोकमात्माख्यं आत्मत्वेनाव्यभिचारित्वात्, अदृष्ट्वा — अहं ब्रह्मास्मीति, प्रैति म्रियते । स यद्यपि स्वो लोकः, अविदित अविद्यया व्यवहित अस्व इवाज्ञातः, एन — सङ्ख्यापूरण इव लौकिकं आत्मानं — न भुनक्ति न पालयति शोकमोहभयादिदोषापनयेन, यथा लोके च वेद. अननूक्त. अनधीत. कर्माद्यवबोधकत्वेन न भुनक्ति, अन्यद्वा लौकिकं कृष्यादि कर्म अकृतं स्वात्मना अनभिव्यञ्जितं आत्मीयफलप्रदानेन न भुनक्ति, एवमात्मा स्वो लोकः स्वेनैव नित्यात्मस्वरूपेणानभिव्यञ्जितः अविद्यादिप्रहाणेन न भुनक्त्येवं । ननु किं स्वलोकदर्शननिमित्तपरिपालनेन? कर्मणः फलप्राप्तिध्रौव्यात् इष्टफलनिमित्तस्य च कर्मणो बाहुल्यात् तन्निमित्तं पालनमक्षयं भविष्यति — तन्न । कृतस्य क्षयवत्त्वादित्येतदाह — यत् इह वै संसारे अद्भुतवत् कश्चिन्महात्मापि अनेवंवित् स्वं लोकं यथोक्तेन विधिना अविद्वान् महत् बहु अश्वमेधादि पुण्यं कर्म इष्टफलमेव नैरन्तर्येण करोति — अनेनैवानन्त्यं मम भविष्यतीति, तत्कर्म ह अस्य अविद्यावतः अविद्याजनितकामहेतुत्वात् स्वप्नदर्शनवि-

(१) शब्रा यदिह ( यदि ह ), रग अस्माद्ध्येवा ( तस्माद्ध्येवा )

प्रमोद्भूतविभूतिवत् अन्ततः अन्ते फलोपभोगस्य, क्षीयत एव । तत्कारणयोरविद्याकामयोश्चलत्वात् कृतक्षयध्रौव्योपपत्तिः । तस्मान्न पुण्यकर्मफलपालनानन्त्याशा अस्त्येव। अत आत्मानमेव स्व लोक आत्मानमिति स्वं लोकमित्यस्मिन्नर्थे, स्व लोकमिति प्रकृतत्वात् इह च स्वशब्दस्याप्रयोगात् -- उपासीत। स य आत्मानमेव लोकमुपास्ते --तस्य किमित्युच्यते -- न हास्य कर्म क्षीयते, कर्माभावादेव--इति नित्यानुवाद.। यथा अविदुष कर्मक्षयलक्षण ससारदु ख सततमेव, न तथा तदस्य विद्यत इत्यर्थ. -- ' मिथिलाया प्रदीप्ताया न मे दह्यति किंचन ' इति यद्वत् ।

स्वात्मलोकोपासकस्य विदुषो विद्यासयोगात् कर्मैव न क्षीयत इत्यपरे वर्णयन्ति । लोकशब्दार्थ च कर्मसमवायिन द्विधा परिकल्पयन्ति किल--एको व्याकृतावस्थ कर्माश्रयो लोको हैरण्यगर्भाख्य., त कर्मसमवायिन लोक व्याकृत परिच्छिन्न य उपास्ते तस्य किल परिच्छिन्नकर्मात्मदर्शिनः कर्म क्षीयते। तमेव कर्मसमवायिन लोकमव्याकृतावस्थ कारणरूपमापाद्य यस्तूपास्ते, तस्यापरिच्छिन्नकर्मात्मदर्शित्वात्तस्य कर्म न क्षीयत इति। भवतीय शोभना कल्पना, न तु श्रौती, स्वलोकशब्देन प्रकृतस्य परमात्मनोऽभिहितत्वात्, स्व लोकमिति प्रस्तुत्य स्वशब्द विहाय आत्मशब्दप्रक्षेपेण पुनस्तस्यैव प्रतिनिर्देशात्-- आत्मानमेव लोकमुपासीतेति। तत्र कर्मसमवायिलोककल्पनाया अनवसर एव। परेण च केवलविद्याविषयेण विशेषणात्--' किं प्रजया करिष्यामो येषा नोऽयमात्माय लोकः ' इति पुत्रकर्मापरविद्याकृतेभ्यो हि लोकेभ्यो विशिनष्टि--अयमात्मा नो लोक इति, ' न हास्य केनचन कर्मणा लोको मीयत एषोऽस्य परमो लोक. ' इति च। तै सविशेषणै. अस्यैकवाक्यता युक्ता, इहापि स्व लोकमिति विशेषणदर्शनात्। अस्मात्कामयत इत्युक्तमिति चेत्--इह स्वो लोक. परमात्मा। तदुपासनात् स एव भवतीति स्थिते, यद्यत्कामयते तत्तदस्मादात्मन. सृजत इति तदात्मप्राप्तिव्यतिरेकेण फलवचनमयुक्तमिति चेत्, न। स्वलोकोपासनस्तुतिपरत्वात्। स्वस्मादेव लोकात्सर्वमिष्ट सपद्यत इत्यर्थ, नान्यदत. प्रार्थनीय, आप्तकामत्वात्-- ' आत्मतः प्राण आत्मत आशा ' इत्यादि श्रुत्यन्तरे यथा। सर्वात्मभावप्रदर्शनार्थो वा पूर्ववत्। यदि हि पर एव आत्मा सपद्यते, तदा युक्त ' अस्माद्ध्येवात्मन. ' इत्यात्मशब्दप्रयोग.--स्वस्मादेव प्रकृतादात्मनो लोकादित्येवमर्थ.। अन्यथा अव्याकृतावस्थात्कर्मणो लोकादिति सविशेषणमवक्ष्यत् प्रकृतपरमात्मलोकव्यावृत्तये व्याकृतावस्थाव्यावृत्तये च। न ह्यस्मिन्प्रकृते विशेषिते अश्रुतान्तरालावस्था प्रतिपत्तु शक्यते। शकर.

(२) 'तद्यथेह कर्मजितः' इति केवलस्य कर्मण' क्षयित्वमुच्यते--न ज्ञानसहकारिणः। तथा च श्रुति --' स य आत्मानमेव लोकमुपास्ते न ह्यस्य कर्म क्षीयते' इति। स्वत. क्षणिकस्यापि कर्मणो ज्ञानरसविद्धस्याक्षयिफलत्वान्न क्षीयते इत्युच्यते। कथमयमर्थो गम्यते ' तद्धास्यान्तत. क्षीयते ' इत्यनेवविदः कर्मक्षयमभिधायात्मविदस्तदभावप्रतिपादनपरत्वाद्वाक्यस्य । १।१।१ (पृ ६)

स्वतः क्षणिकमपि अक्षयफलत्वादक्षयमुच्यते ।

भास्कर ३।४।२०

(३) अथशब्दो वाक्यान्तरोपक्रमे। हवैशब्द. प्रसिद्धौ। लोक्यते दृश्यत इति लोकः। नित्यसूरिभिः सर्वदा लोक्यमानत्वात्। एवभूत स्वात्मानमदृष्ट्वा दर्शनसमानाकारेण ज्ञानेनाविषयीकृत्य य. पुमानस्माल्लोकात्प्रैति तमेन स परमात्मा स्वभूतोऽपि न भुनक्ति न परिपालयति। कस्य हेतोरित्यत आह--अविदित अनुपासित इत्यर्थ.। उपासनाभावे वस्तुगत्या शेषितयाऽऽत्मभूतोऽपि ससार न निवर्तयतीत्यर्थ.। तत्र दृष्टान्तमाह--वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतम्। वेदस्य सर्वोपकारार्थप्रवृत्ततया सर्वसाधारण्येऽप्यनधीतो न पालयति। यथा ज्योतिष्टोमादिवैदिक कर्माननुष्ठित नोपकरोति तथेत्यर्थ.। इतरत्परित्यज्याऽऽत्मानमेव लोकमुपासीत, लोक्यत इति लोक। एव सति न पूर्वोक्तो दोष इत्याह -- स य इति। कर्मशब्द उपासनपर। तदङ्गभूतकर्मपरो वा। कर्मण क्षणिकस्याक्षयित्व नामाक्षयफलकत्वमिति द्रष्टव्यम्। * रग.

(४) ' अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ' -- अग्निहोत्राद्यपि मोक्षानुभवायैव। तुशब्दात्

* शेष सरलार्थम्

ब्रह्मदर्शनवतः । स एनमविदितः इति दर्शनात् ।
४।१।१६

'अल्पमात्रकृतो धर्मो भवेज्ज्ञानवतो महान् । महानपि कृतो धर्मो ह्यज्ञाना निष्फलो भवेत् ॥ ' इति च भारते ।
ब्रमध्व ४।१।१८

**अथो अय वा आत्मा सर्वेषां भूताना लोक । स यज्जुहोति यद्यजते तेन देवाना लोक । अथ यदनुब्रूते तेन ऋषीणाम् । अथ यत्पितृभ्यो निपृणाति यत्प्रजामिच्छते तेन पितृणाम् । अथ यन्मनुष्यान्वासयते यदेभ्योऽशन ददाति तेन मनुष्याणाम् । अथ यत्पशुभ्यस्तृणोदक विन्दति तेन पशूनाम् । यदस्य गृहेषु श्वापदा वयाꣳस्या पिपीलिकाभ्य उपजीवन्ति तेन तेषा लोक । यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेवꣳ हैवविदे सर्वाणि भूतान्यरिष्टिमिच्छन्ति । तद्वा एतद्विदित मीमाꣳसितम् ॥**

( १ ) अथो अय वा आत्मा । अत्र अविद्वान्वर्णाश्रमाद्यभिमानो धर्मेण नियम्यमानो देवादिकर्मकर्तव्यतया पशुवत्परतन्त्र इत्युक्तम् । कानि पुनस्तानि कर्माणि, यत्कर्तव्यतया पशुवत्परतन्त्रो भवति, ' के वा ते देवादय', येषा कर्मभिः पशुवदुपकरोति — इति ' तदुभय प्रपञ्चयति—अथो इत्यय वाक्योपन्यासार्थ. । अय य प्रकृतो गृही कर्माधिकृत. अविद्वान् शरीरेन्द्रियसघातादिविशिष्ट पिण्ड आत्मेत्युच्यते, सर्वेषा देवादीना पिपीलिकान्ताना भूताना लोको भोग्य आत्मेत्यर्थ , सर्वेषा वर्णाश्रमादिविहितैः कर्मभिरुपकारित्वात् । कै पुन कर्मविशेषैरुपकुर्वन्केषां भूतविशेषाणा लोक. इत्युच्यते — स गृही यज्जुहोति यद्यजते — यागो देवतामुद्दिश्य स्वत्वपरित्याग, स एव आसेचनाधिको होम — तेन होमयागलक्षणेन कर्मणा अवश्यकर्तव्यत्वेन देवाना पशुवत्परतन्त्रत्वेन प्रतिबद्ध इति लोक' । अथ यदनुब्रूते स्वाध्यायमधीते अहरह तेन ऋषीणा लोकः । अथ यत्पितृभ्यो निपृणाति प्रयच्छति पिण्डोदकादि, यच्च प्रजामिच्छते प्रजार्थमुद्यम करोति — इच्छा च उत्पत्त्युपलक्षणार्था — प्रजा चोत्पादयतीत्यर्थ । तेन कर्मणा अवश्यकर्तव्यत्वेन पितृणा लोक. पितृणा भोग्यत्वेन परतन्त्रो लोकः । अथ यन्मनुष्यान्वासयते भूम्युदकादिदानेन गृहे, यच्च तेभ्यो वसद्भ्योऽवसद्भ्यो वा अर्थिभ्य अशन ददाति, तेन मनुष्याणाम् । अथ यत्पशुभ्यस्तृणोदक विन्दति लम्भयति, तेन पशूनाम् । यदस्य गृहेषु श्वापदा वयासि च पिपीलिकाभि सह कणबलिभाण्डक्षालनाद्युपजीवन्ति, तेन तेषा लोक' । यस्मादयमेतानि कर्माणि कुर्वन्नुपकरोति देवादिभ्य, तस्मात्, यथा ह वै लोके स्वाय लोकाय स्वस्मै देहाय अरिष्टिं अविनाश स्वत्वभावाप्रच्युतिं इच्छेत् स्वत्वभावप्रच्युतिभयात्पोषणरक्षणादिभि सर्वत' परिपालयेत् । एव ह, एवविदे — सर्वभूतभोग्योऽहं अनेन प्रकारेण मया अवश्यमृणिवत्प्रतिकर्तव्य — इत्येवमात्मान परिकल्पितवते, सर्वाणि भूतानि देवादीनि यथोक्तानि, अरिष्टिमविनाश इच्छन्ति स्वत्वाप्रच्युत्यै सर्वत सरक्षन्ति कुटुम्बिन इव पशून्—'तस्मादेषां तन्न प्रियम् ' इत्युक्तम् । तद्वा एतत् तदेतत् यथोक्ताना कर्मणामृणवदवश्यकर्तव्यत्व पञ्चमहायज्ञप्रकरणे विदित कर्तव्यतया, मीमासित विचारित च अवदानप्रकरणे ।

शाकर.

( २ ) नन्वात्मानमेव लोकमुपासीतेत्युक्तमयुक्त, लोको नाम प्राणिभोगस्थानविशेषस्तथात्वमात्मन' कथमित्याशङ्क्य कैमुतिकन्यायेन ब्रह्मणो लोकत्व दर्शयितु प्रत्यगात्मन एव सर्वभूतलोकत्वमाह— अथो अयमिति । ' अथ यत्पितृभ्यो निमृणाति ' । प्रयच्छतीत्यर्थ । यद्वा निमर्णनमौर्ध्वदैहिकम् । मृण हिंसायामिति हि धातु । एव स्वात्मनः सर्वलोकभूतलोकत्वपरिज्ञानस्य फलमाह — यथा ह वै इति । यथा लोके जनः स्वाय लोकाय स्वभोगस्थानायारिष्ट, रिष्ट नाश. । रिष

( १ ) बृउ १।४।१६, शब्रा १४।४।२।२९ तेन ऋषी ( तेनर्षी ) यत्पितृभ्यो निपृणाति यत्प्रजामिच्छते तेन पितृणा ( यत्प्रजामिच्छते यत्पितृभ्यो निपृणाति तेन पितृणा ) हैवविदे+( सर्वदा ), रग निपृणाति ( निमृणाति ) यारिष्टि ( यारिष्ट ) न्यरिष्टि ( न्यरिष्ट ), मध्व तेन ऋषी ( तेनर्षी ) निपृणाति ( निमृणाति ) भ्योऽशन ( भ्यो दान [ ऽशन ] )

हिंसायामिति हि धातु । अरिष्टमनाशमिच्छति । एवमात्मनि सर्वभूतलोकत्वविदे सर्वाणि भूतानि क्षेम वाञ्छन्तीत्यर्थः । परमप्रकृत परमात्मनो लोकत्व मुपसहरति — तद्वा इति । तद्वा एतत्परमात्मनो लोकत्व विदित मीमांसित कैमुतिकन्यायतर्कानुगृहीत चेत्यर्थः ।

* रग.

आत्मैवेदमग्र आसीदेक एव । सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्त मे स्यादथ कर्म कुर्वीयेति । एतावान्वै काम । नेच्छ२श्चनातो भूयो विन्देत् । तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्यादथ प्रजायेयाथ वित्त मे स्यादथ कर्म कुर्वीयेति । स यावदप्येतेषामेकैक न प्राप्नोत्य कृत्स्न एव तावन्मन्यते । तस्यो कृत्स्नता । मन एवास्यात्मा । वाग्जाया । प्राणः प्रजा । चक्षुर्मानुष वित्तम् । चक्षुषा हि तद्विन्दते । श्रोत्र दैवम् । श्रोत्रेण हि तच्छृणोति । आत्मैवास्य कर्म । आत्मना हि कर्म करोति । स एष पाङ्क्तो यज्ञ. । पाङ्क्तः पशु· । पाङ्क्त पुरुष । पाङ्क्तमिद२ सर्वं यदिद किंच । तदिद२ सर्वमाप्नोति य एव वेद ॥

( १ ) आत्मैवेदमग्र आसीत् । ब्रह्म विद्वांश्चेत् तस्मात्पशुभावात्कर्तव्यताबन्धनरूपात्प्रतिमुच्यते, केनाय कारितः कर्मबन्धनाधिकारे अवश इव प्रवर्तते, न पुनस्तद्विमोक्षणोपाये विद्याधिकार इति । ननूक्त देवा रक्षन्तीति । बाढम्— कर्माधिकारस्वगोचरारूढानेव तेऽपि रक्षन्ति, अन्यथा अकृताभ्यागमकृतनाशप्रसङ्गात्, न तु सामान्य पुरुषमात्र विशिष्टाधिकारानारूढम् । तस्माद्भवितव्य तेन, येन प्रेरितोऽवश एव बहिर्मुखो भवति स्वस्माल्लोकात् । नन्वविद्या सा । अविद्वान् हि बहिर्मुखीभूत. प्रवर्तते—साऽपि नैव प्रवर्तिका । वस्तुस्वरूपावरणात्मिका हि सा । प्रवर्तकबीजत्व तु प्रतिपद्यते अन्धत्वमिव गर्तादिपतनप्रवृत्तिहेतु· । एव तर्ह्युच्यता किं तत्, यत्प्रवृत्तिहेतुरिति । तदिहाभिधीयते—एषणा काम. स·, स्वाभाविक्यामविद्यायां वर्तमाना बालाः पराचः कामाननुयन्तीति काठकश्रुतौ, स्मृतौ च— ‘काम एष क्रोध एष’ इत्यादि, मानवे च—सर्वा प्रवृत्तिः कामहेतुक्येवेति । स एषोऽर्थः सविस्तरः प्रदर्श्यत इह आ अध्यायपरिसमाप्तेः ।

आत्मैवेदमग्र आसीत् । आत्मैव—स्वाभाविकः अविद्वान् कार्यकरणसघातलक्षणो वर्णी अग्रे प्राग्दारसबन्धात् आत्मेत्यभिधीयते । तस्मादात्मन· पृथग्भूत काम्यमान जायादिभेदरूप नासीत् । स एवैक आसीत् —जायाद्येषणाबीजभूताविद्यावानेक एवासीत् । स्वाभाविक्या स्वात्मनि कर्त्रादिकारकक्रियाफलात्मकताध्यारोपलक्षणया अविद्यावासनया वासित· स अकामयत कामितवान् । कथम् ? जाया कर्माधिकारहेतुभूता मे मम कर्तु· स्यात् । तया विना अहमनधिकृत एव कर्मणि । अत कर्माधिकारसपत्तये भवेज्जाया । अथाह प्रजायेय प्रजारूपेणाहमेवोत्पद्येय । अथ वित्त मे स्यात् कर्मसाधन गवादिलक्षणम् । अथाहमभ्युदयनिःश्रेयससाधन कर्म कुर्वीय—येनाहमनृणी भूत्वा देवादीना लोकान्प्राप्नुया, तत्कर्म कुर्वीय, काम्यानि च पुत्रवित्तस्वर्गादिसाधनानि एतावान्वै काम. एतावद्विषयपरिच्छिन्न इत्यर्थ । एतावानेव हि कामयितव्यो विषय.—यदुत जायापुत्रवित्तकर्माणि साधनलक्षणैषणा, लोकाश्च त्रय·— मनुष्यलोक. पितृलोको देवलोक इति—फलभूता. साधनैषणायाश्चास्या. । तदर्था हि जायापुत्रवित्तकर्मलक्षणा साधनैषणा । तस्मात् सा एकैव एषणा, या लोकैषणा । सा एकैव सती एषणा साधनापेक्षेति द्विधा । अतोऽवधारयिष्यति ‘उभे ह्येते एषणे एव’ इति । फलार्थत्वात्सर्वारम्भस्य लोकैषणा अर्थप्राप्ता उक्तैवेति—एतावान्वै एतावानेव काम इति अवध्रियते । भोजनेऽभिहिते तृप्तिर्न हि पृथगभिधेया, तदर्थत्वाद्भोजनस्य । ते एते एषणे साध्यसाधनलक्षणे कामः, येन प्रयुक्त. अविद्वान् अवश एव कोशकारवत् आत्मान वेष्टयति—कर्ममार्गे एवात्मान प्रणिदधत् बहिर्मुखीभूतः न स्व लोक प्रतिजानाति । तथा च तैत्तिरीयके — ‘अग्निमुग्धो हैव धूमतान्तः स्व

* शेष शकरवत् ।

(१) बृउ १।४।१७, शब्रा १४।४।२।३०, ३१ तद्विन्दते ( तद्विन्दति ) सर्वमाप्नोति + ( यदिद किंच ), रामानुज २।१।२६

लोके न प्रतिजानाति ' इति । कथं पुनरेतावत्त्वमवधार्यते कामानाम्, अनन्तत्वात् ।अनन्ता हि कामाः । इत्येतदाशङ्क्य हेतुमाह — यस्मात् — न-इच्छन्-चन — इच्छन्नपि, अतः अस्मात्फलसाधनलक्षणात् , भूयः अधिकतरं, न विन्देत् न लभेत । न हि लोके फलसाधनव्यतिरिक्तं दृष्टमदृष्टं वा लब्धव्यमस्ति । लब्धव्यविषयो हि कामः । तस्य चैतद्व्यतिरेकेणाभावादुक्तं वक्तुं एतावान्वै काम इति । एतदुक्तं भवति— दृष्टार्थमदृष्टार्थं वा साध्यसाधनलक्षणं अविद्यावत्पुरुषाधिकारविषयं एषणाद्वयं कामः । अतोऽस्माद्विदुषा व्युत्थातव्यमिति । यस्मात् एवमविद्वाननात्मकामी पूर्वः कामयामास, तथा पूर्वतरोऽपि । एषा लोकस्थितिः । प्रजापतेश्चैवमेष सर्ग आसीत् — सोऽबिभेदविद्यया, ततः कामप्रयुक्तः एकाक्यरममाणोऽरत्युपघाताय स्त्रियमैच्छत्, तां समभवत् , ततः सर्गोऽयमासीदिति हि उक्तं — तस्मात् तत्सृष्टौ एतर्हि एतस्मिन्नपि काले एकाकी सन् प्राग्दारक्रियातः कामयते — जाया मे स्यात् , अथ प्रजायेय, अथ वित्तं मे स्यात् , अथ कर्म कुर्वीयेत्युक्तार्थं वाक्यम् । स एवं कामयमानः संपादयंश्च जायादीन् यावत् स एतेषां यथोक्तानां जायादीनाम् एककमपि न प्राप्नोति, अकृत्स्नः असंपूर्णोऽहं इत्येवं तावत् आत्मानं मन्यते । पारिशेष्यात्समस्तानेवैतान्संपादयति यदा, तदा तस्य कृत्स्नता । यदा तु न शक्नोति कृत्स्नतां संपादयितुं तदा अस्य कृत्स्नत्वसंपादनाय आह — तस्यो तस्य अकृत्स्नत्वाभिमानिनः कृत्स्नतेयम् एव भवति । कथम् ? अयं कार्यकरणसंघातः प्रविभज्यते । तत्र मनोऽनुवृत्ति हि इतरत्सर्वकार्यकरणजातमिति मनः प्रधानत्वात् आत्मेव आत्मा— यथा जायादीनां कुटुम्बपतिरात्मेव तदनुकारित्वाज्जायादिचतुष्टयस्य, एवमिहापि मन आत्मा परिकल्प्यते कृत्स्नतायै । तथा वाग्जाया मनोऽनुवृत्तित्वसामान्याद्वाच । वागिति शब्दश्चोदनादिलक्षणो मनसा श्रोत्रद्वारेण गृह्यते अवधार्यते प्रयुज्यते चेति मनसो जायेव वाक् । ताभ्यां च वाङ्मनसाभ्यां जायापतिस्थानीयाभ्यां प्रसूयते प्राणः कर्मार्थमिति प्राणः प्रजेव । तत्र प्राणचेष्टादिलक्षणं कर्म चक्षुर्दृष्टवित्तसाध्यं भवतीति चक्षुर्मानुषं वित्तम् । तत् द्विविधं वित्तं—मानुषं इतरच्च । अतो विशिनष्टि इतरवित्तनिवृत्त्यर्थं मानुषमिति । गवादि हि मनुष्यसंबन्धिवित्तं चक्षुर्ग्राह्यं कर्मसाधनम् । तस्मात्तत्स्थानीयं, तेन संबन्धात् चक्षुर्मानुषं वित्तम् । चक्षुषा हि यस्मात् तन्मानुषं वित्तं विन्दते गवाद्युपलभते इत्यर्थः । किं पुनरितरद्वित्तम् ? श्रोत्रं दैवं—देवविषयत्वाद्विज्ञानस्य विज्ञानं दैवं वित्तम् । तदिह श्रोत्रमेव संपत्तिविषयम् । कस्मात् ? श्रोत्रेण हि यस्मात् तत् दैवं वित्तं विज्ञानं शृणोति । अतः श्रोत्राधीनत्वाद्विज्ञानस्य श्रोत्रमेव तदिति । किं पुनरेतैरात्मादिवित्तान्तैरिह निर्वर्त्यं कर्मेत्युच्यते— आत्मैव—आत्मेति शरीरमुच्यते । कथं पुनरात्मा कर्मस्थानीयः ? अस्य कर्महेतुत्वात् । कथं कर्महेतुत्वम् ? आत्मना हि शरीरेण यतः कर्म करोति । तस्य अकृत्स्नत्वाभिमानिन एवं कृत्स्नता संपन्ना—यथा बाह्या जायादिलक्षणा एवम् । तस्मात्स एष पाङ्क्तः पञ्चभिर्निर्वृत्तः पाङ्क्तः यज्ञः दर्शनमात्रनिर्वृत्तः अकर्मिणोऽपि । कथं पुनरस्य पाङ्क्तत्वसंपत्तिमात्रेण यज्ञत्वम् ? उच्यते— यस्मात् बाह्योऽपि यज्ञः पशुपुरुषसाध्यः । स च पशुः पुरुषश्च पाङ्क्तः एवं, यथोक्तमनआदिपञ्चत्वयोगात् । तदाह—पाङ्क्तः पशुः गवादिः, पाङ्क्तः पुरुषः — पशुत्वेऽपि अधिकृतत्वेनास्य विशेषः पुरुषस्येति पृथक्पुरुषग्रहणम् । किं बहुना पाङ्क्तमिदं सर्वं कर्मसाधनं फलं च, यदिदं किंच यत्किंचिदिदं सर्वम् । एवं पाङ्क्तं यज्ञमात्मानं यः संपादयति स तदिदं सर्वं जगत् आत्मत्वेन आप्नोति—य एवं वेद ।

शांकर.

( २ ) जायापुत्रादिविभागशून्यतयैकः पुरुषरूप एव स्थित इत्यर्थः । मम जायाऽभूत्तदनन्तरं प्रजादिरूपेण जायेय वित्तं च भवतु, तेन यज्ञादिकर्म कुर्वीय करवाणीति अकामयत । जायापुत्रवित्तकर्मव्यतिरेकेण संसारिणां कामनाविषयः कोऽपि नास्तीत्यर्थः । चशब्दोऽप्यर्थः । इच्छन्नपि चिन्तयन्नपीतोऽप्यन्यत्काम्यान्तरमस्तीति चिन्तयन्नपि ततो भूयो जायापुत्रवित्तकर्मभ्योऽधिकं त्रैगुण्यनिष्ठो न लभत इत्यर्थः । तस्माद्धेतोरेतर्ह्यपि अद्यत्वेऽपि एकाकी पुरुषो जायादिकमेव कामयते । यावन्तं कालमेषां जायादीनां चतुर्णां मध्य एकैकं न प्राप्नोति तावत्कालमकृत्स्न

एकाशहीन इत्येव स्वात्मान मन्यते । यस्तु वैराग्येण वाऽलाभेन वा जायापुत्राद्यन्यतमहीनतयाऽकृत्स्नस्तस्य कृत्स्नतासपत्तिप्रकार दर्शयति—'तस्यो कृत्स्नता'। उशब्दोऽवधारणे । तादृशस्य कृत्स्नतैवमेव भवतीत्यर्थ. । देवमानुषभेदेन वित्त च द्वेधा विभज्य दर्शयति—चक्षुरिति । हिरण्यपश्वादिकमानुषवित्तोपलम्भकत्वाच्चक्षुरेव मानुष वित्तम् । दैवशब्दितादृष्टप्रतिपादकश्रुतिस्मृत्युपलम्भकत्वाच्छ्रोत्र दैव वित्तमित्यर्थ. । आत्मशब्द शरीरपर. । 'स एष पाङ्क्तो यज्ञ'। आत्मजायापुत्रवित्तकर्मलक्षणपञ्चकनिर्वर्त्यः स एष समुदाय पञ्चाक्षरा पङ्क्तिः । पाङ्क्तो यज्ञ इति निर्दिष्टपाङ्क्तयज्ञात्मा पञ्चत्वसख्यासामान्यात् । तथा 'पाङ्क्त पशु'। पशोरपि पाञ्चभौतिकत्वात्पाङ्क्तत्वमतो मनआदिसमुदायोऽपि पञ्चत्वसख्याश्रयत्वात्पाङ्क्त. पशुरित्यर्थ । 'पाङ्क्त पुरुषः'। पुरुषस्यापि पाञ्चभौतिकत्वेन पाङ्क्तत्वमिति भावः । 'पाङ्क्तमिद सर्वे यदिद किंच'। सर्वस्यापि पाञ्चभौतिकत्वात्पाङ्क्तत्वम् । अतो मनआदिसमुदायस्यापि पञ्चत्वसख्याश्रयत्वेन पाङ्क्तत्वात्पाङ्क्तत्वयज्ञत्वपुरुषत्वपशुत्वादिदृष्टिस्तत्र कर्तव्येति भाव. । मनोवाक्प्राणचक्षु.श्रोत्रशरीरलक्षणसमुदाय आत्मजायापुत्रवित्तकर्मरूपेण पाङ्क्तयज्ञत्वपशुत्वादिरूपेण च य उपास्ते स इद सर्व पाङ्क्तशब्दित प्राप्नोतीत्यर्थ' ।

रग

(३) * 'विष्णोर्ब्राह्मणजाति' सन् ब्रह्मा जज्ञे चतुर्मुख । इतोऽग्रे जगतस्तस्मात्क्षत्रजातिरजायत । वायु' सदाशिवोऽनन्तो गरुड शक्र एव च । कामश्च वरुणश्चैव सोम सूर्यो यमस्तथा । एवमाद्या क्षत्रियास्तु देवाना ब्रह्मनिर्मिता' । श्रेयसी सर्वजातिभ्य क्षत्रजातिरिति श्रुति । नैव क्षत्रात्परा जातिर्ब्रह्मजातिं विना क्वचित् । ब्राह्मणाच्च परो राजा राजसूयाश्वमेधयो । उपास्ते राजसूयेऽतो ब्राह्मणो राजसूयिनम् । आसीन आसनाधस्तात्तथाऽपि ब्राह्मणो गुरु. । तस्मात्स राजसूयान्ते ब्राह्मणान्वन्दयीत च । यः क्षत्रियो ब्राह्मणहा पितृहा स प्रकीर्तित. । पापीयानेव भवति हत्वा स्वपितर यथा ।।' इति वामने । 'स्वतोऽधिकगुण हत्वा साक्षाच्च पितर पुन । क्षत्रस्य ब्राह्मण हत्वा तावान्दोषो भवेद्ध्रुवम् ।।' इत्याग्नेये । 'ईशानो मारुत प्राणो वायुर्जिष्णुस्तथैव च । धृष्णुश्च पवमानश्च पवनश्चेति कथ्यते ।।' इति शब्दतत्त्वे । 'मृत्युः सकर्षण शेष शेतानन्तस्तथैव च । बलिर्महाविषश्चेति भूधरश्चेति कथ्यते ।।' इति च । 'इन्द्र सुपर्णो गरुडो महाभारो धुरधर. । विश्वजिच्चाप्यवध्यश्च वैनतेयश्च कथ्यते ।।' इति च । 'पर्जन्यो मघवाश्चैव पुरुहूतः पुरन्दर. । प्राचीनबर्हिर्हर्यश्च सोमपा मेषभुक्तथा ।।' इति च । 'यशोनिधिर्ब्राह्मणस्तु तद्दातु क्षत्रिये स्वयम् । अधो ब्राह्मण आसीनो राजसूये हि सेवते ।।' इति प्रत्यये । ऋच्छति विनाशयति । रीङ् क्षय इति धातो. ।

'विवस्वदिन्द्रवरुणविष्णुभ्योऽन्ये दितेः सुताः । रुद्रादन्ये तथा रुद्रा वायोरन्ये च टा (वा ?)यव । अग्नेरन्ये च वसवो वैश्या इत्येव कीर्तिता । एक एव हरेर्जातः परिवारविवर्जित । वाय्वादीन् क्षत्रियान्सृष्ट्वा पुनरल्पपरिग्रहः । इच्छन्बहुपरीवार वैश्यान्देवान्ससर्ज ह । ततो बहुतरानिच्छन् शूद्रान्देवान्ससर्ज ह । अश्विनौ पृथिवी चैव कालमृत्यव एव च । शूद्रदेवा' समुद्दिष्टा दैववर्णा इति स्मृता । त्वष्टा स्वय समुद्दिष्टः पालका देवता इमा. । धारण कथमस्य स्याद्गतिश्चास्य कथ परा । इति मत्वा हरेर्भक्तिर्धर्मरूप पुनर्विभु । प्राणिनां धैर्यरूपं च वायो रूपान्तर पुन । ससर्ज मतिमान् ब्रह्मा विष्णोराज्ञापुर सरः । तस्माद्वायो परो नास्ति ऋते विष्णु सनातनम् । शेषादीना क्षत्रियाणा वायुरेवाधिप. स्मृतः । धारणाद्धर्म इत्याहुर्वायुर्धारयति प्रजाः । अबलोऽपि ततो वायोर्विष्णुभक्त्यादिरूपिण । प्राप्तुमिच्छति युक्तः सन्विष्णु सुबलवत्तरम् । यथैव युवराजेन महाराजमभीप्सति । प्राप्तु धर्माभिमानी स वायु' सत्याभिमानवान् । तस्मादाहुर्धर्मविद सत्य वेत्तेति वेदिन । सत्यज्ञमथ धर्मज्ञं वायुर्देवो यतस्तयो. ।।' इति नारदीये । नैव व्यभवदिति परिवारबहुत्वेन यद्विशिष्टत्व तन्नाभवदित्यर्थः । 'बृहत्त्वात्सर्ववर्णाना ब्राह्मणा. परिकीर्तिताः । क्षतत्राणात्क्षत्रियाश्च त्रिषूनत्वाद्विश स्मृता. । ऊनवाची हि विट्शब्द शुभे दत्ते त्रिभिर्यत । रमते स तत. शूद्र. स ब्राह्मण्याभिमानवान् । ब्रह्माग्निना

* बृउ १।४।११ कण्डिकामारभ्य १।४।१७ कण्डिका यावत् सर्वस्य ग्रन्थस्य व्याख्यानमेतत् द्रष्टव्यम् ।

सहैवास्ते वेदेष्वथ नरेषु च । ब्राह्मणेन सहैवास्ते ब्रह्मा शुभचतुर्मुख । क्षत्रजात्यभिमानी तु पवनो देवराजभि । सुपर्णशेषरुद्राद्यैर्मानुषेषु च राजभि । वैश्यजात्यभिमानी च नासिक्यो वायुरूर्जित । वस्त्वादिभि. सहैवास्ते देवेष्वथ नरेषु च । विड्भि शूद्राभिमानी च निर्ऋतिर्देव तासु च । नासत्ययो पृथिव्या च शूद्रेष्वेव तु मानुषे । यस्मादग्नौ विशेषेण ब्रह्मण सनिधिर्भवेत् । अतोऽग्ना वेव देवाना सर्वेषा नियमाद्धवि । हुत्वा लोकान्प्रार्थयान्ति तथा विप्रेषु मानुषे । सर्वजात्युत्तमो ब्रह्मा यतो विप्राग्निसस्थित । तस्माद्विप्रास्तथैवाग्नि तर्पयेद्ब्रह्मतुष्टिकृत् । तुष्टे ब्रह्मणि विष्णुश्च तुष्टो लोकान्प्रदास्यति । अग्निविप्रार्चितोऽप्येव यो न वेद हरि परम् । आश्रय सर्वजीवाना हरिस्त नैव भोजयेत् । यथाऽनधीतो वेदस्तु यथा कर्माकृत तथा । न सम्यक् फलदो विष्णुरज्ञातो जगदीश्वर । यत्प्रवेत्ता महदपि ह्यमवादिक हरे । कुर्यात्स विष्णुफलवान्स भवेन्नात्र सशय । आप्तकामतयाऽऽत्मेति यो विष्णु समुदीरित । सर्वाश्रयमुपासीत तमेव पुरुष सुधी । विष्णु सर्वाश्रय दाति सदोपास्ते य आत्मवान् । क्षीयन्ते नास्य कर्माणि शुभान्येव कदाचन । उपासनाव लान्मुक्तो भोगानक्षयकलान्सदा । भुङ्क्ते विष्णो समीपस्थ सर्वदोषविवर्जित ॥' इति ब्रह्माण्डे । एताभ्या रूपाभ्या सहित हि ब्रह्माभवत् । स्व लोक स्वाश्रयम् । 'योऽय सर्वेषु जीवेषु नियामकतया स्थित । स विष्णुराप्तकाम त्वादात्मेत्यभिधीयते बुधै. । स लोक सर्वभूताना सर्वजीवेषु सस्थित. । वैश्वदेवादिकान्होमान्यज्ञाश्च कुरुते विभुः । कारुण्यात्सर्वदेवेषु तन देवाश्रयो हरि. । ऋषीणामाश्रय श्चापि स्वा यायेष्वृषिसस्मृते । स हि जीवेषु सविष्ट पिण्ड पुत्रजनि तथा । तत्कगति पितॄणा च सश्रयस्तत एव स. । तृणोदकादिदानेन पशूनामन्नतो नृणाम् । उपकाराच्च सर्वेषा प्राणिनामाश्रयो हरि. । यज्ञादीन्देवतादीनामन्नत्वेन पुरा यत् । ब्रह्माद्यैरर्थितः प्रादात्क्षीराब्धेस्तट उत्तरे । अतश्च सर्वलोकानामाश्रयो विष्णुरेव स. । एव यो वेत्ति विष्णोस्तु सर्वाधारत्वमुत्तमम् । सर्वाण्यपि हि भूतानि तस्येच्छन्त्यविनाशिताम् । स्वाश्रयस्य यथा नित्यमनाश प्रार्थयन्ति हि । राजादेरपि तान्येवमुत्तमाश्रयवेदिन. । तदेतद्वासुदेवस्य सर्वाधारत्वमुत्तमम् । विदित सर्वदेवैश्च मीमासाभिश्च निश्चितम् ॥' इति भविष्यत्पर्वणि । 'किं तु ब्रह्मादिभिर्देवै. पुरा दृष्ट्वा निरहसः । निर्भयान्विष्णुनाम्नैव यथेष्ट पदमागतान् । अलब्ध्वा चात्मन पूना सम्यगाराधितो हरि । मया चास्मादपि श्रेष्ठय वाञ्छताहङ्कृतात्मना । तत. साक्षाज्जगन्नाथः प्रसन्नो भक्तवत्सल । अशांशेनात्मनैता-पूजयामास केशव । देवान् पितॄन् द्विजान् हव्यकव्याद्यै. करुणामय । तत प्रभृति पूज्यन्ते त्रैलोक्ये सचराचरे ॥' इति पाद्मे । 'एको नारायण. पूर्वमासीज्जाया स ऐच्छत । भिद्यमानामपि सदा भोगार्थ पुरुषोत्तम । नित्यत्वेऽप्युभयोर्देवो वियुक्तस्तु तया यदा । एक इत्युच्यते देव्या रममाण सुत विभु । ऐच्छद्ब्रह्मा ततो जज्ञे ततो देवाश्च सर्वश । जाते पुत्रे वित्तमैच्छद्भूतान्यण्ड ततोऽभवत् । अण्डस्यान्तस्त्विमे लोका. कुर्या कर्मेति चैच्छत । ततस्तु कृतवान्यज्ञ स्वस्मै स पुरुषोत्तम । आहुरात्मेति त देव पूर्णत्वाद्विष्णुमव्ययम् । तस्मादद्यापि य कामी स स्वैतावन्तमिच्छति । दैव वित्त सुखाय हि मित्राद्य मानुष तु यत् । इदानीमपि तस्माद्धि कामयेद्देवमेव तु । य कश्चित्पुरुषो वाऽपि तदैकस्यादकृत्स्नवान् । एकाकिनोऽप्यकैकत्य यथैव स्यात्तथा शृणु । स्वात्मनस्त्वपृथग्व्यक्तज्ञानरूप मन. परम् । मुक्तावपि न हेय यत्तत्स्वात्मेत्येव चिन्तयेत् । जायां तु तादृशीं वाच बल तादृक्स्वमात्मजम् । श्रोत्र चक्षुश्च तादृग्यद्वित्त दैव च मानुषम् । एवभूत चिन्तन यत्तत्कर्मेत्येव चिन्तयेत् । एतत्पञ्चक च हरये सर्वेशाय समर्पयेत् । एवमात्मा प्रिया पुत्रो वित्त द्विविधमित्यपि । पञ्चभि. क्रियते यज्ञ. पुरुष पशुरेव न । मातापितृभ्यामन्नेन तयो. पूर्वेण कर्मणा । जन्यस्य कर्मणा चैव साध्यः पञ्चभिरेव तु । एव हि प्राणिनोऽन्येऽपि जायन्ते नात्र सशय । एतामुपासना कुर्याद्यो ब्राह्म पदमाप्य च । सर्वस्यास्य पतिर्भूयाद्विष्णोरेव प्रसादत. ॥' ब्राह्मे पदे त्वयोग्या ये ते देव-पदमाप्नुयु. । तस्याप्ययोग्या लोकस्य भवेयुरधिकप्रियाः । क्रमान्मुक्तिं व्रजेयुश्च केशवस्य प्रसादत ॥' इति माहात्म्ये । अविशेषेण ततोऽन्यत्स्यादितीच्छन्नपि न विन्देत् । ततोऽन्यस्याऽभावात् । 'आत्मा मनश्चिन्तन च शेमुषी

बुद्धिरित्यपि। एकार्थवाचका धीश्च मनीषा तप इत्यपि ॥' इति शब्दतत्त्वे। 'सर्वाश्रय च पितर सर्वेषामधिक गुणै। अविदित्वा महत्पुण्य कृत्वा न फलभाग्भवेत्। तथा ज्ञात्वा हरिं यस्तु कुर्यात्कर्म सदोदितम्। अनन्तफलवान्स स्यात् प्राप्नोति च मनोगतम् ॥' इति बृहच्छ्रुतौ। परमात्मैव गृहस्यान्तर्यामित्वेन सर्वेषां लोक आश्रय। 'गृहस्थान्तर्गतो विष्णुर्यैश्चैर्देवाश्रयो भवेत्। स्वाध्याये ऋषिसस्मृत्या ऋषीणा च सदाश्रय। स्वाध्यायाच्छ्राद्धतश्चैव पितॄणामन्नदानतः। मनुष्यादेरतो वेत्ति य एव सतत गृही। स्वस्यान्तर्यामिण विष्णु सुरादीन्पूजयेत्तथा। तस्याविनाशमिच्छन्ति स्वाश्रयस्य यथा सुरा.। तदेतत्सर्वशास्त्रेषु ऋषिसङ्घैर्विचारितम् ॥' इति नारायणश्रुतौ। 'नराणामाश्रया देवा न देवाना नरा क्वचित्। नराणा च सुराणा च गतिरेको जनार्दन ॥' इति च। 'आत्मा तु जगता ब्रह्मा तस्यात्मा भगवान्हरि। स एव जातः प्रथम वासुदेवाच्चतुर्मुख। सोऽकामयत भार्या मे स्यात्पुत्रस्त दनन्तरम्। ततो वित्त मम स्याच्च कर्म कुर्या ततो हरे। इति सोऽपि न तान्प्राप ततोऽपूर्णत्वमात्मन। मत्वा पूर्णत्वसिद्ध्यर्थं भार्यां वाचमकल्पयत्। प्राण पुत्र तथा वित्त चक्षुर्वाह्यमथान्तरम्। ज्ञानाख्य श्रोत्रमेवाऽसौ कर्म स्वात्मानमेव तु। एव स मानसे यज्ञे त्वयजत्केशव विभुम्। ततोऽस्य वाच. सभूता भार्या तस्य सरस्वती। पुत्रः प्राणादभूद्वायुर्दिशो लोका हिरण्मया.। तस्याऽपरोक्षता यातो भगवान् पुरुषोत्तम.। सर्वविद्या ददौ ताश्च श्रोत्रेण जगृहे विभु। आत्मना सर्वकर्माणि चकार भगवत्पर·। पुरासीन्मन एवाऽस्य तेनेद पञ्चक विभु। अवाप कर्मपर्यन्त देहान्तात्पञ्चकात्स्वयम्। तस्मादद्याऽपि यो विद्वानुपास्ते पञ्चक तथा। विष्णूपकरणत्वेन स इद सर्वमाप्स्यति। मुक्तिश्चान्ते भवत्यस्य पञ्चाना देवतां हरि। नारायण वासुदेव तथा सकर्षण विभुम्। प्रद्युम्न चानिरुद्ध च स्मरतो नित्यमेव तु। सवनत्रय तथा पूर्वमुत्तर चेति पञ्चकम्। यज्ञे मध्य शिर पक्षौ पुच्छ पशुषु पूरुषे। चतुर्दिश तथा मध्यमिति सर्वत्र पञ्चकम् ॥' इति च।

मध्व.

( सप्तान्नविद्या )

१-१६

साधारण पाप्मसहितमन्न, द्वे देवान्ने, काम्येष्टिनिषेध, पशूनामन्न, देवहोमफल, अन्नानामक्षयत्व आत्मन प्रजापतेरन्नानि मनोवाक्प्राणा आधिदैविकादि रूपा, जय्यलोकत्रय तत्साधनानि च

**यत्सप्तान्नानि मेधया तपसाऽजनयत्पिता। एकमस्य साधारण, द्वे देवानभाजयत्। त्रीण्यात्मनेऽकुरुत, पशुभ्य एक प्रायच्छत्। तस्मिन्सर्व प्रतिष्ठित, यच्च प्राणिति यच्च न। कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदा। यो वैतामक्षितिं वेद, सोऽन्नमत्ति प्रतीकेन। स देवानपिगच्छति, स ऊर्जमुपजीवतीति श्लोका ॥**

यत्सप्तान्नानि मेधया। अविद्या प्रस्तुता। तत्र अविद्वान् अन्या देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति। स वर्णाश्रमाभिमान कर्मकर्तव्यतया नियतो जुहोत्यादिकर्मभि कामप्रयुक्तो देवादीनामुपकुर्वन् सर्वेषा भूतानां लोक इत्युक्तम्। यथा च स्वकर्मभिरेकैकेन सर्वैर्भूतैरसौ लोको भोज्यत्वेन सृष्टः एवमसावपि जुहोत्यादिपाङ्क्तकर्मभि. सर्वाणि भूतानि सर्व च जगत् आत्मभोज्यत्वेनासृजत। एत्र एकैक. स्वकर्मविद्यानुरूप्येण सर्वस्य जगतो भोक्ता भोज्य च, सर्वस्य सर्व. कर्ता कार्यं चेत्यर्थः। एतदेव च विद्याप्रकरणे मधुविद्याया वक्ष्याम — सर्वं सर्वस्य कार्यं मध्विति आत्मैकत्वविज्ञानार्थम्। यदसौ जुहोत्यादिना पाङ्क्तेन काम्येन कर्मणा आत्मभोज्यत्वेन जगदसृजत विज्ञानेन च तज्जगत्सर्वं सप्तधा प्रविभज्यमान कार्यकरणत्वेन सप्तान्नान्युच्यन्ते भोज्यत्वात्। तेनासौ पिता तेषामन्नानाम्। एतेषामन्नाना सविनियोगाना सूत्रभूता सक्षेपत. प्रकाशकत्वात् इमे मन्त्राः। शाकर.

**यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति। मेधया हि तपसाऽजनयत्पिता। एकमस्य साधार-**

(१) बृउ १।५।१, शब्रा १४।४।३।१ यो वैता (यो वै ता)
(२) बृउ १।५।२, शब्रा १४।४।३।२-७ यो वैता ( यो वै ता ), ब्रशकर ४।१।१८, रग प्र च जुहति ( प्रजुह्वति ) मनुष्याश्च ( मनुष्या ) प्रतिलेहयन्ति ( प्रलिलेहयन्ति ) वाऽनुधा ( वा नु धा ) जयत्येव ( जयति। य एव ) कस्मात्तानि ( तस्मात्तानि ), मध्व जुह्वति च ( जुह्वति )

णमिति । इदमेवास्य तत्साधारणमन्न यदिदमद्यते । स य एतदुपास्ते न स पाप्मनो व्यावर्तते । मिश्रꣳ ह्येतत् । द्वे देवानभाजयदिति । हुत च प्रहुत च । तस्माद्देवेभ्यो जुह्वति च प्र च जुह्वति । अथो आहुर्दर्शपूर्णमासाविति । तस्मान्नेष्टियाजुक स्यात् । पशुभ्य एक प्रायच्छदिति । तत्पय । पयो ह्येवाग्रे मनुष्याश्च पशवश्चोप जीवन्ति । तस्मात्कुमार जात घृत वै वाऽग्रे प्रतिलेहयन्ति स्तन वाऽनुधापयन्ति । अथ वत्स जातमाहुरतृणाद इति । तस्मिन्सर्वं प्रतिष्ठित यच्च प्राणिति यच्च नेति । पयसि हीदꣳ सर्वं प्रतिष्ठित यच्च प्राणिति यच्च न । तद्यदिदमाहुः संवत्सरं पयसा जुह्वदप पुनर्मृत्यु जयतीति । न तथा विद्यात् । यदहरेव जुहोति तदह पुनर्मृत्युमपजयत्येव विद्वान् । सर्वꣳ हि देवेभ्योऽन्नाद्य प्रयच्छति । कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदेति । पुरुषो वा अक्षिति स हीदमन्नं पुन पुनर्जनयते । यो वैतामक्षितिं वेदेति । पुरुषो वा अक्षिति । स हीदमन्न धिया धिया जनयते कर्मभि. । यद्धैतन्न कुर्यात्क्षीयेत ह । सोऽन्नमत्ति प्रतीकेनेति । मुख प्रतीक मुखेनेत्येतत् । स देवानपिगच्छति स ऊर्जमुपजीवतीति प्रशꣳसा ॥

( १ ) यत्सप्तान्नानि — यत् अजनयदिति क्रियाविशेषणम् । मेधया प्रज्ञया विज्ञानेन तपसा च कर्मणा । ज्ञानकर्मणी एव हि मेधातप.शब्दवाच्ये, तयो प्रकृतत्वात् । नेतरे मेधातपसी, अप्रकरणात् । पाङ्क्त हि कर्म जायादिसाधनम् । 'य एव वेद' इति च अनन्तरमेव ज्ञान प्रकृतम् । तस्मान्न प्रसिद्धयोर्मेधातपसोराशङ्का कार्या । अत. यानि सप्तान्नानि ज्ञानकर्मभ्या जनितवान् पिता, तानि प्रकाशयिष्याम इति वाक्यशेषः । तत्र मन्त्राणामर्थ. तिरोहितत्वात्प्रायेण दुर्विज्ञेयो भवतीति तदर्थव्याख्यानाय ब्राह्मण प्रवर्तते । तत्र यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेत्यस्य कोऽर्थ. ? उच्यते इति — हिशब्देनैव व्याचष्टे प्रसिद्धार्थावद्योतकेन । प्रसिद्धो ह्यस्य मन्त्रस्यार्थ इत्यर्थ । यदजनयदिति च अनुवादस्वरूपेण मन्त्रेण प्रसिद्धार्थतैव प्रकाशिता । अतः ब्राह्मण अविशङ्कयैवाह— मेधया हि तपसाऽजनयत्पितेति ।

ननु कथ प्रसिद्धता अस्यार्थस्येति, उच्यते — जायादिकर्मान्ताना लोकफलसाधनाना पितृत्व तावत्प्रत्यक्षमेव । अभिहित च — 'जाया मे स्यात्' इत्यादिना । तत्र च दैव वित्त विद्या कर्म पुत्रश्च फलभूताना लोकाना साधन स्रष्टृत्व प्रति इत्यभिहितम् । वक्ष्यमाण च प्रसिद्धमेव । तस्माद्युक्त वक्तु मेधयेत्यादि । एषणा हि फलविषया प्रसिद्धैव च लोके । एषणा च जायादीत्युक्त 'एतावान्वै काम' ' इत्यनेन । ब्रह्मविद्याविषये च सर्वैकत्वात्कामानुपपत्ते' । एतेन अशास्त्रीयप्रज्ञातपोभ्या स्वाभाविकाभ्या जगत्स्रष्टृत्वमुक्तमेव भवति । स्थावरान्तस्य च अनिष्टफलस्य कर्मविज्ञाननिमित्तत्वात् । विवक्षितस्तु शास्त्रीय एव साध्यसाधनभाव', ब्रह्मविद्याविधित्सया तद्वैराग्यस्य विवक्षितत्वात्—सर्वो ह्यय व्यक्ताव्यक्तलक्षणः ससारोऽशुद्धोऽनित्य साध्यसाधनरूपो दुःखोऽविद्याविषय इत्येतस्माद्विरक्तस्य ब्रह्मविद्या आरब्धव्येति ।

तत्र अन्नाना विभागेन विनियोग उच्यते — एकमस्य साधारणमिति मन्त्रपदम् । तस्य व्याख्यान—इद मेवास्य तत्साधारणमन्नमित्युक्त, अस्य भोक्तृसमुदायस्य । किं तत् ? यदिदमद्यते भुज्यते सर्वैः प्राणिभिरहन्यहनि, तत् साधारण सर्वभोक्त्रर्थमकल्पयत्पिता सृष्ट्वा अन्नम् । स य एतत्साधारण सर्वप्राणभृत्स्थितिकर भुज्यमानमन्नमुपास्ते तत्परो भवतीत्यर्थ. — उपासन हि नाम तात्पर्य दृष्ट लोके 'गुरुमुपास्ते' 'राजानमुपास्ते' इत्यादौ— तस्मात् शरीरस्थित्यर्थान्नोपभोगप्रधान. नादृष्टार्थकर्मप्रधान इत्यर्थ । स एवभूतो न पाप्मनोऽधर्मात् व्यावर्तते न विमुच्यत इत्येतत् । तथा च मन्त्रवर्णः— 'मोघमन्न विन्दते' इत्यादि' । स्मृतिरपि — 'नात्मार्थे पाचयेदन्न' 'अप्रदायैभ्यो यो भुङ्क्ते स्तेन एव स.' 'अन्नादे भ्रूणहा मार्ष्टि' इत्यादिः । कस्मात्पुनः पाप्मनो न व्यावर्तते ? मिश्र ह्येतत्—सर्वेषां हि स्व तत् अप्रविभक्त यत्प्राणिभिर्भुज्यते, सर्वभोज्यत्वादेव यो मुखे प्रक्षिप्यमाणोऽपि ग्रासः परस्य पीडाकरो दृश्यते— ममेद स्यादिति हि सर्वेषा तत्राशा प्रतिबद्धा । तस्मात्

न परमपीडयित्वा ग्रसितुमपि शक्यते । 'दुष्कृत हि मनुष्याणा ' इत्यादिस्मरणाच्च ।

गृहिणा वैश्वदेवाख्यमन्न यदहन्यहनि निरूप्यते इति केचित् । तन्न । सर्वभोक्तृसाधारणत्व वैश्वदेवाख्यस्यान्नस्य न सर्वप्राणभृद्भुज्यमानान्नवत्प्रत्यक्षम् । नापि यदिदमद्यत इति तद्विषय वचनमनुकूलम् । सर्वप्राणभृद्भुज्यमानान्नान्त.पातित्वाच्च वैश्वदेवाख्यस्य युक्त श्वचाण्डालाद्याद्यस्य अन्नस्य ग्रहण, वैश्वदेवव्यतिरेकेणापि श्वचाण्डालाद्याद्यान्नदर्शनात्, तत्र युक्त यदिदमद्यत इति वचनम् । यदि हि तन्न गृह्येत साधारण शब्देन पित्रा असृष्टत्वाविनियुक्तत्वे तस्य प्रसज्येयाताम् । इष्यते हि तत्सृष्टत्व तद्विनियुक्तत्व च सर्वस्यान्नजातस्य । न च वैश्वदेवाख्य शास्त्रोक्त कर्म कुर्वत पाप्मनोऽविनिवृत्तिर्युक्ता । न च तस्य प्रतिषेधोऽस्ति । न च मत्स्यबन्धनादिकर्मवत्स्वभावजुगुप्सितमेतत्, शिष्टनिर्वर्त्यत्वात्, अकरणे च प्रत्यवायश्रवणात् । इतरत्र च प्रत्यवायोपपत्तेः, 'अहमन्नमन्नम दन्तमद्मि ' इति मन्त्रवर्णात् ।

द्वे देवानभाजयदिति मन्त्रपदम् । ये द्वे अन्ने सृष्ट्वा देवानभाजयत्, के ते द्वे इत्युच्यते — हुत च प्रहुत च । हुतमित्यग्नौ हवन, प्रहुत हुत्वा बलिहरणम् । यस्मात् द्वे एते अन्ने हुतप्रहुते देवानभाजयत्पिता, तस्मात् एतर्ह्यपि गृहिण काले देवेभ्यो जुह्वति देवेभ्य इदमन्नमस्माभिर्दीयमानमिति मन्वाना जुह्वति, प्रजुह्वति च हुत्वा बलिहरण च कुर्वत इत्यर्थ । अथो अप्यन्य आहु. — द्वे अन्ने पित्रा देवेभ्य प्रत्ते न हुतप्रहुते, किं तर्हि दर्शपूर्णमासाविति । द्वित्वश्रवणाविशेषात् अत्यन्तप्रसिद्धत्वाच्च हुतप्रहुते इति प्रथम पक्ष. । यद्यपि द्वित्व हुतप्रहुतयो. सभवति, तथापि श्रौतयोरेव तु दर्शपूर्णमासयोर्देवान्नत्व प्रसिद्धतर, मन्त्रप्रकाशितत्वात् । गुणप्रधानप्राप्तौ च प्रधाने प्रथमतरा अवगतिः । दर्शपूर्णमासयोश्च प्राधान्य हुतप्रहुतापेक्षया । तस्मात्तयोरेव ग्रहण युक्त — द्वे देवानभाजयदिति । यस्माद्देवार्थमेते पित्रा प्रक्लप्ते दर्शपूर्णमासाख्ये अन्ने, तस्मात् तयोर्देवार्थत्वाविघाताय नेष्टियाजुकः इष्टियजनशीलः । इष्टिशब्देन किल काम्या इष्टय । शातपथी इय प्रसिद्धि' । ताच्छील्यप्रत्ययप्रयोगात्काम्येष्टियजनप्रधानो न स्यादित्यर्थः ।

पशुभ्य एक प्रायच्छदिति— यत्पशुभ्य एक प्रायच्छत्पिता, किं पुनस्तदन्नम् ? तत्पयः । कथ पुनरवगम्यते पशवोऽस्यान्नस्य स्वामिन इत्यत आह — पयो हि अग्रे प्रथम यस्मात् मनुष्याश्च पशवश्च पय एवोपजीवन्तीति । उचित हि तेषा तदन्न, अन्यथा कथ तदेवाग्रे नियमेनोपजीवेयु । कथमग्रे तदेवोपजीवन्तीति उच्यते — मनुष्याश्च पशवश्च यस्मात् तेनैवान्नेन वर्तन्ते अद्यत्वेऽपि यथा पित्रा आदौ विनियोग कृतः तथा । तस्मात् कुमार बाल जात घृत वा त्रैवर्णिका जातकर्मणि जातरूपसयुक्त प्रतिलेहयन्ति प्राशयन्ति, स्तन वा अनुधापयन्ति पश्चात् पाययन्ति यथासभव अन्येषाम् । स्तनमेवाग्रे धापयन्ति मनुष्येभ्योऽन्येषा पशूनाम् । अथ वत्स जातमाहु कियत्प्रमाणो वत्स इत्येव पृष्टा सन्त. — अतृणाद इति — नाद्यापि तृणमत्ति, अतीव बाल पयसैवाद्यापि वर्तत इत्यर्थः । यच्च अग्रे जातकर्मादौ घृतमुपजीवन्ति, यच्च इतरे पय एव, तत् सर्वथापि पय एवोपजीवन्ति, घृतस्यापि पयोविकारत्वात्पयस्त्वमेव । कस्मात्पुनः सप्तम सत् पश्वन्न चतुर्थत्वेन व्याख्यायते ? कर्मसाधनत्वात् । कर्म हि पय.साधनाश्रय अग्निहोत्रादि, तच्च कर्म साधन वित्तसाध्य वक्ष्यमाणस्यान्नत्रयस्य साध्यस्य, यथा दर्शपूर्णमासौ पूर्वोक्तावन्ने । अत. कर्मपक्षत्वात् कर्मणा सह पिण्डीकृत्योपदेश. । साधनत्वाविशेषात् । अर्थसबन्धात् आनन्तर्यमकारणमिति च । व्याख्याने प्रतिपत्तिसौकर्याच्च — सुख हि नैरन्तर्येण व्याख्यातु शक्यन्तेऽन्नानि, व्याख्यातानि च सुख प्रतीयन्ते । तस्मिन्सर्वं प्रतिष्ठित यच्च प्राणिति यच्च नेत्यस्य कोऽर्थ इत्युच्यते — तस्मिन् पश्वन्ने पयसि, सर्वं अध्यात्माधिभूताधिदैवलक्षण कृत्स्न जगत् प्रतिष्ठितम् — यच्च प्राणिति प्राणचेष्टावत्, यच्च न स्थावर शैलादि । तत्र हिशब्देनैव प्रसिद्धावद्योतकेन व्याख्यातम् । कथ पयोद्रव्यस्य सर्वप्रतिष्ठात्वम् ? कारणत्वोपपत्तेः । कारणत्व च अग्निहोत्रादिकर्मसमवायित्वम् । अग्निहोत्राद्याहुतिविपरिणामात्मक च जगत्कृत्स्नमिति श्रुतिस्मृतिवादाः शतशो व्यवस्थिताः । अतो युक्तमेव हिशब्देन

व्याख्यानम् । यत्तद्ब्राह्मणान्तरेष्विदमाहु —सवत्सर पयसा जुह्वदप पुनर्मृत्यु जयतीति । सवत्सरेण किल त्रीणि षष्टिशतान्याहुतीना सप्त च शतानि विंशतिश्चेति याजुष्मतीरिष्टका अभिसपद्यमानाः सवत्सरस्य च अहोरात्राणि, सवत्सरमग्निं प्रजापतिमाप्नुवन्ति । एव कृत्वा सवत्सर जुह्वत् अपजयति पुनर्मृत्युम्—इतः प्रेत्य देवेषु सभूत. पुनर्न म्रियत इत्यर्थ —इत्येव ब्राह्मण वादा आहु. । न तथा विद्यात् न तथा द्रष्टव्यम् । यदहरेव जुहोति तदह. पुनर्मृत्युमपजयति न सवत्सराभ्यासमपेक्षते । एव विद्वान्सन्—यदुक्त, पयसि हीद सर्वे प्रतिष्ठित पयआहुतिविपरिणामात्मकत्वात्सर्वस्येति, तत्—एकेनैवाह्ना जगदात्मत्व प्रतिपद्यते । तदुच्यते—अपजयति पुनर्मृत्यु पुनर्मरण सकृन्मृत्वा विद्वान् शरीरेण वियुज्य सर्वात्मा भवति न पुनर्मरणाय परिच्छिन्न शरीर गृह्णातीत्यर्थ. । क. पुनर्हेतु. , सर्वात्माप्त्या मृत्युमपजयतीति ? उच्यते, सर्वे समस्त हि यस्मात् देवेभ्य· सर्वेभ्य. अन्नाद्य अन्नमेव तदाद्य च सायप्रातराहुतिप्रक्षेपेण प्रयच्छति । तद्युक्त— सर्वमाहुतिमयमात्मान कृत्वा सर्वदेवान्नरूपेण सर्वैं देवै. एकात्मभाव गत्वा सर्वदेवमयो भूत्वा पुनर्न म्रियत इति । अथैतदप्युक्त ब्राह्मणेन—'ब्रह्म वै स्वयभु तपोऽतप्यत, तदैक्षत न वै तपस्यानन्त्यमस्ति, हन्ताह भूतेष्वात्मान जुहवानि भूतानि चात्मनीति, तत्सर्वेषु भूतेष्वात्मान हुत्वा भूतानि चात्मनि, सर्वेषा भूताना श्रैष्ठ्य स्वाराज्यमाधिपत्य पर्यैत्' ( शब्रा १३।७।१।१ ) इति ।

कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदेति । यदा पिता अन्नानि सृष्ट्वा सप्त पृथक्पृथग्भोक्तृभ्य. प्रत्तानि, तदा प्रभृत्येव तैर्भोक्तृभिरद्यमानानि—तन्निमित्तत्वात्तेषां स्थितेः—सर्वदा नैरन्तर्येण । कृतक्षयोपपत्तेश्च युक्तस्तेषा क्षयः । न च तानि क्षीयमाणानि, जगतोऽविभ्रष्टरूपेणैवावस्थानदर्शनात् । भवितव्य च अक्षयकारणेन । तस्मात् कस्मात्पुनस्तानि न क्षियन्ते इति प्रश्नः । तस्येद प्रतिवचन— पुरुषो वा अक्षिति. । यथा असौ पूर्वमन्नाना'स्रष्टाऽऽसीत् पिता मेधया जायादिसबद्धेन च पाङ्क्तकर्मणा भोक्ता च तथा येभ्यो दत्तान्यन्नानि तेऽपि तेषामन्नानां भोक्तारोऽपि सन्त. पितर एव, मेधया तपसा च यतो जनयन्ति तान्यन्नानि । तदेतदभिधीयते, पुरुषो वै योऽन्नानां भोक्ता स. अक्षितिः अक्षयहेतु । कथमस्याक्षितित्वमित्युच्यते — स. हि यस्मात् इद भुज्यमान सप्तविध कार्यकरणलक्षण क्रियाफलात्मक पुन पुन: भूयो भूयः जनयते उत्पादयति, धिया धिया तत्तत्कालभाविन्या तया तया प्रज्ञया, कर्मभिश्च वाङ्मन.कायचेष्टितैः । यत् यदि ह यद्येतत्सप्तविधमन्नमुक्त क्षणमात्रमपि न कुर्यात्प्रज्ञया कर्मभिश्च, ततो विच्छिद्येत भुज्यमानत्वात्सातत्येन क्षीयेत ह । तस्मात् यथैवाय पुरुषो भोक्ता अन्नाना नैरन्तर्येण यथाप्रज्ञ यथाकर्म च करोत्यपि । तस्मात् पुरुषोऽक्षितिः, सातत्येन कर्तृत्वात्, तस्मात् भुज्यमानान्यप्यन्नानि न क्षीयन्त इत्यर्थ. । अत. प्रज्ञाक्रियालक्षणप्रबन्धारूढ. सर्वो लोकः साध्यसाधनलक्षण· क्रियाफलात्मक सहतानेकप्राणिकर्मवासनासतानावष्टब्धत्वात् क्षणिक. अशुद्ध. असार नदीस्रोत. प्रदीपसतानकल्प. कदलीस्तम्भवदसार. फेनमायामरीच्यम्भ.स्वप्नादिसम· तदात्मगतदृष्टीनामविकीर्यमाणो नित्य. सारवानिव लक्ष्यते । तदेतद्वैराग्यार्थमुच्यते — धिया धिया जनयते कर्मभिर्यद्धैतन्न कुर्यात् क्षीयेत हेति— विरक्ताना ह्यस्मात् ब्रह्मविद्या आरब्धव्या चतुर्थप्रमुखेनेति । यो वैतामक्षितिं वेदेति । वक्ष्यमाणान्यपि त्रीण्यन्नानि अस्मिन्नवसरे व्याख्यातान्येवेति कृत्वा तेषा याथात्म्यविज्ञानफलमुपसह्रियते — यो वा एतामक्षितिं अक्षयहेतु यथोक्त वेद—पुरुषो वा अक्षिति स हीनमन्न धिया धिया जनयते कर्मभिर्यद्धैतन्न कुर्यात्क्षीयेत हेति —सोऽन्नमत्ति प्रतीकेनेत्यस्यार्थ उच्यते — मुख मुख्यत्व प्राधान्यमित्येतत्, प्राधान्येनैव, अन्नानां पितुः पुरुषस्याक्षितित्व यो वेद, सोऽन्नमत्ति, नान्न प्रति गुणभूत· सन्, यथा अज्ञ. न तथा विद्वान् अन्नानात्मभूत. — भोक्तैव भवति न भोज्यतामापद्यते । स देवानपिगच्छति स ऊर्जमुपजीवति— देवानपिगच्छति देवात्मभाव प्रतिपद्यते, ऊर्जममृत च उपजीवतीति यदुक्त, सा प्रशसा, नापूर्वार्थोऽन्योऽस्ति ।

शाकर.

( २ ) पितेतीतिरकरणान्त व्याख्येयग्रहणम् । मेधया हि तपसाऽजनयत्पितेत्यशस्तस्य व्याख्यानम् । 'तपसा

चीयते ब्रह्म यस्य ज्ञानमय तप. । तस्मादेतद्ब्रह्म नाम रूपमन्न च जायते ॥' इति । ज्ञानमयेन तपसा नामरूपलक्षणान्नजनकस्य परमात्मनोऽन्नजनकत्व प्रसिद्ध खल्वतः किमत्र व्याख्यातव्यमिति भावः । यदिद व्रीहि-यवादिरूपमद्यते तद्देवपित्रादिसाधारणमन्नम् । ईदृश साधारणमन्न देवपित्रादिभ्योऽदत्त्वा यो भुङ्क्ते स पाप्मनो न विमुच्यते । यस्माद्धेतोरेतदन्न मिश्रमन्यदीय-द्रव्येण मिश्रित साधारणमिति यावत् । गीत च भगवता — 'तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव स' ( भ गी ३।१२ ) 'यज्ञशिष्टाशिन. सन्तो मुच्यन्ते सर्वकिल्बिषै' । ते त्वघ भुञ्जते पापा ये पचन्त्यात्मकारणात् ॥' ( भ गी ३।१३ ) इति । तथा श्रुति — 'केवलाघो भवति केवलादी' । तस्माद्देवपित्रादिभ्यो निवेदित मनुष्येण भोक्तव्यमित्यर्थं । एव च प्रसिद्धमन्न मनुष्येषु विनियुज्यत इत्यर्थ । द्वे अन्ने सृष्ट्वा देवान साधारण्येनाभाजयदप्रीणयदिति । यन्मन्त्रोक्तमन्न तद्भुत च प्रहुत चेति व्याचक्षते — हुतमौपासन प्रहुतमग्नि होत्रादि । यस्माद्धुतप्रहुते देवेभ्यो दत्ते तस्माद्देवेभ्यो देवानुद्दिश्यैव जुह्वति च प्रजुह्वति च । दर्शपूर्णमासावेव हुतप्रहुताख्ये देवान्ने इत्याहु । यस्माद्दर्शपूर्णमासयोर्दे-वान्नत्व तस्मात्तदतिरिक्तकाम्येष्टियजनशीलो न स्यादि-त्यर्थं. । यद्वा दर्शपूर्णमासयोर्हुतप्रहुततया देवान्नत्वात्तत्र कियत्यप्यपचारे देवा. कुप्येयुरिति दर्शपूर्णमास योरार्त्विज्य न कुर्यादित्यर्थः । त्रीण्यात्मनेऽकुरु-तेति मन्त्र वक्तव्यबाहुल्यादन्ते व्याचिकीर्षुस्तदतिक्रम्य तदुत्तरमन्त्र व्याचष्टे — पशुभ्य इति । तत्पयः पशुभ्यो दत्तमन्न पयोरूपमत एव हि मनुष्या. पशवश्च प्रथमत पय एवोपजीवन्ति । अत्र मनुष्याश्चोपजीवन्ती-त्युक्त्या पशुभ्य एक प्रायच्छदित्यत्र पशुशब्दो द्विपाच्चतुष्पात्साधारणो द्रष्टव्यः । तस्माज्जात कुमार जातकर्मसस्कारे घृत वा पयसो विकार घृतमेवाग्रे प्रथमतः प्रलिलेहयन्ति आस्वादयन्ति । लिहेर्धातो-र्णिचि द्विर्वचन छान्दसम् । स्तन वा नु धापयन्ति जातकर्माद्यकरणे स्तन धापयन्ति पाययन्ति । नुशब्दः खल्वर्थे । अथ सजातमाहुरतृणाद इति । अथशब्दो व्याख्योपक्रमे । अतृणाद इति पयोमात्राहार इत्याहु-रिति । यत्प्राणिति चेष्टते मनुष्यपश्वादिक यच्च न चेष्टते वृक्षादिक तत्सर्वं पयसि प्रतिष्ठितम् । स्थावर-प्रतिष्ठाहेतुभूतजलस्यापि पयस्त्वादिति भाव. । 'अन्नाद्य प्रयच्छति' । अन्नाद्यमाद्यशब्देन पयआज्या-दिकमुच्यते । यद्यदन्नाद्य स्वयमत्ति तद्देवेभ्य एव ददाति । देवेभ्यस्तद्दानेन यत्फल लभते तल्लभते इति भावः । अत्र तस्मादितिशब्दार्थं व्याचष्टे—'पुरुषो वा अक्षितिः स हीदमन्न पुन. पुनर्जनयते' । वैशब्दोऽवधारणे । अक्षितिरक्षय इत्यर्थः । यस्मादक्षय. पुरुष. प्रत्यहमन्नादि जनयति तस्माद्धेतोरद्यमानान्यन्नानि न क्षीयन्त इति मन्त्रार्थ. । धिया धिया सकलेनेत्यर्थः । उत्पाद्यान्न-व्यक्त्यभिप्राया धियेति वीप्सा । कर्मभिर्जनयते प्राणिना कर्मभि सहित. सन्नन्न जनयत इत्यर्थ. । एतदन्न यद्ध यदि हि प्रत्यह न कुर्यादन्न क्षीयेत प्रत्यहमन्नकरणान्न क्षीयत इति भाव । एतादृशीमक्षितिं यो वेदेति मन्त्रार्थ. । अनुभवमात्रेऽप्यत्तीति प्रयोगसभ-वात् । मुख्यभोजनप्रतीत्यर्थं मुखेनान्नमत्तीत्युक्तम् । तस्माच्चान्नादनस्य मुखमात्रसाध्यत्वान्मुखेनेत्यस्य वैयर्थ्यं न चोदनीयम् । 'स देवानपि गच्छति स ऊर्ज-मुपजीवतीति प्रशसा' । ऊर्जमन्नमित्यर्थः । प्रशसा फलश्रुतिरिति यावत् ।

रग.

[१]त्रीण्यात्मनेऽकुरुतेति । मनो वाचं प्राणं.तान्या-त्मनेऽकुरुत । अन्यत्रमना अभूव नादर्शमन्यत्रमना अभूव नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति । काम सकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव । तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति । य कश्च शब्दो वागेव सा । एषा ह्यन्तमायत्तैषा हि न । प्राणोऽ-पानो व्यान उदान समानोऽन इत्येतत्सर्वं प्राण

(१) बृउ १।५।३, शब्रा १४।४।३।८–१०, शकर. २।३।३२, २।४।६, १२, १८, भास्कर २।३।३२; रग. कश्च ( कश्चन ), रामानुज २।४।११ समानोऽन इत्ये ( समान इत्ये ), मध्व हि न ( हि न ) समानो ऽन ( समानो न ), श्रीकर २।४।१०, विज्ञान १।१।१८, २।३।३२, २।४।१२, बलदेव २।४।६, १२,

एव । एतन्मयो वा अयमात्मा । वाङ्मयो मनोमय. प्राणमय ॥

( १ ) पाङ्क्तस्य कर्मण. फलभूतानि यानि त्रीण्यन्नान्युपक्षिप्तानि तानि कार्यत्वात् विस्तीर्णविषयत्वाच्च पूर्वेभ्योऽन्नेभ्य. पृथगुत्कृष्टानि । तेषा व्याख्यानार्थ उत्तरो ग्रन्थ आ ब्राह्मणपरिसमाप्ते. । त्रीण्यात्मनेऽकुरुतेति कोऽस्यार्थ इत्युच्यते — मन. वाक् प्राण., एतानि त्रीण्यन्नानि । तानि मन. वाच प्राण च आत्मने आत्मार्थं अकुरुत कृतवान् सृष्ट्वा आदौ पिता । तेषा मनसोऽस्तित्व स्वरूप च प्रति सशय इत्यत आह — अस्ति तावन्मन श्रोत्रादिबाह्यकरण व्यतिरिक्तम् । यत एव प्रसिद्ध — बाह्यकरणविषयात्मसबन्धे सत्यपि अभिमुखीभूत विषय न गृह्णाति, किं दृष्टवानसीद रूपमित्युक्तो वदति — अन्यत्र मे गत मन आसीत् सोऽहमन्यत्रमना आस नादर्शं, तथेद श्रुतवानसि मदीय वच इत्युक्त. अन्यत्रमना अभूव नाश्रौष न श्रुतवानस्मीति । तस्मात् यस्यासनिधौ रूपादिग्रहणसमर्थस्यापि सत. चक्षुरादेः स्वस्वविषयसबन्धे रूपशब्दादिज्ञान न भवति, यस्य च भावे भवति, तत् अन्यत् अस्ति मनो नामान्त करण सर्वकरणविषययोगीत्यवगम्यते । यस्मात्सर्वो हि लोको मनसा ह्येव पश्यति मनसा शृणोति, तद्व्यग्रत्वे दर्शनाद्यभावात्। आस्तित्वे सिद्धे मनस. स्वरूपार्थमिदमुच्यते — काम. स्त्रीव्यतिकराभिलाषादि., सकल्प. प्रत्युपस्थितविषयविकल्पन शुक्लनीलादिभेदेन, विचिकित्सा सशयज्ञान, श्रद्धा अदृष्टार्थेषु कर्मसु आस्तिक्यबुद्धि. देवतादिषु च, अश्रद्धा तद्विपरीता बुद्धि , धृति धारण देहाद्यवसादे उत्तम्भन, अधृतिः तद्विपर्यय , ह्री. लज्जा, धी. प्रज्ञा, भी. भय इत्येतदेवमादिक सर्वं मन एव, मनसोऽन्त.करणस्य रूपाण्येतानि । मनोऽस्तित्व प्रत्यन्यच्च कारणमुच्यते— तस्मान्मनो नामास्त्यन्तःकरण, यस्माच्चक्षुषो ह्यगोचरे पृष्ठतोऽप्युपस्पृष्ट केनचित् हस्तस्याय स्पर्श. जानोरयमिति विवेकेन प्रतिपद्यते । यदि विवेककृत् मनो नाम नास्ति तर्हि त्वङ्मात्रेण कुतो विवेकप्रतिपत्ति. स्यात् । यत्तत विवेकप्रतिप्रत्तिकारण तन्मन. ।

अस्ति तावन्मन., स्वरूप च तस्याधिगतम् । त्रीण्यन्नानीह फलभूतानि कर्मणा मनोवाक्प्राणाख्यानि अध्यात्ममधिभूतमधिदैव च व्याचिख्यासितानि । तत्र आध्यात्मिकाना वाङ्मन प्राणाना मनो व्याख्यातम् । अथेदानीं वाग्वक्तव्येत्यारम्भ. — य कश्च लोके शब्दो ध्वनि. ताल्वादिव्यङ्ग्यः प्राणिभि. वर्णादिलक्षण इतरो वा वादित्रमेघादिनिमित्त. सर्वो ध्वनिः वागेव सा । इद तावद्वाच. स्वरूपमुक्तम् । अथ तस्याः कार्यमुच्यते — एषा वाक् हि यस्मात् अन्त अभिधेयावसान अभिधेयनिर्णय आयत्ता अनुगता । एषा पुन. स्वय नाभिधेयवत् प्रकाश्या अभिधेयप्रकाशिकैव प्रकाशात्मकत्वात् प्रदीपादिवत् । न हि प्रदीपादिप्रकाशः प्रकाशान्तरेण प्रकाश्यते । तद्वत् वाक् प्रकाशिकैव स्वय न प्रकाश्या — इति अनवस्था श्रुति परिहरति—एषा हि न प्रकाश्या प्रकाशकत्वमेव वाच कार्यमित्यर्थ. ।

अथ प्राण उच्यते — प्राण. मुखनासिकासचारी आ हृदयवृत्ति., प्रणयनात्प्राण., अपनयनान्मूत्रपुरीषादेरपान , अधोवृत्ति· आ नाभिस्थान., व्यान. व्यायमनकर्मा, व्यान. प्राणापानयोः सधि. वीर्यवत्कर्महेतुश्च, उदान. उत्कर्षोर्ध्वगमनादिहेतुः आपादतलमस्तकस्थान ऊर्ध्ववृत्ति., समान., सम नयनाद्भुक्तस्य पीतस्य च कोष्ठस्थानोऽन्नपक्ता, अन इत्येषा वृत्तिविशेषाणा सामान्यभूता सामान्यदेहचेष्टाभिसबन्धिनी वृत्ति.—एव यथोक्त प्राणादिवृत्तिजातमेतत्सर्वं प्राण एव । प्राण इति वृत्तिमानाध्यात्मिकः अन उक्तः । कर्म च अस्य वृत्तिभेदप्रदर्शनेनैव व्याख्यातम् । व्याख्यातान्याध्यात्मिकानि मनोवाक्प्राणाख्यानि अन्नानि । एतन्मय एतद्विकार. प्राजापत्यैरेतैर्वाङ्मन प्राणैरारब्धः । कोऽसावय कार्यकरणसघात· ? आत्मा पिण्डः आत्मस्वरूपत्वेनाभिमतोऽविवेकिभिः—अविशेषेणैतन्मय इत्युक्तस्य विशेषेण वाङ्मयो मनोमयः प्राणमय इति स्फुटीकरणम् ।

शकर.

( २ ) 'नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा' — तच्चाऽऽत्मन उपाधिभूतमन्त·करण मनो बुद्धिर्विज्ञान चित्तमिति चानेकधा तत्रतत्राभि-

ल्प्यते । क्वचिच्च वृत्तिविभागेन संशयादिवृत्तिकं मन इत्युच्यते निश्चयादिवृत्तिकं बुद्धिरिति । तच्चैवंभूतमन्तःकरणमवश्यमस्तीत्यभ्युपगन्तव्यम् । यस्यावधानानवधानाभ्यामुपलब्ध्यनुपलब्धी भवतस्तन्मनः । तथा च श्रुतिः 'अन्यत्रमना.' इति । २।३।३२

सर्वार्थविषयं त्रैकाल्यवृत्ति मनस्त्वेकमनेकवृत्तिकम् । तदेव वृत्तिभेदात् क्वचिद्भिन्नवद्व्यपदिश्यते 'मनो बुद्धिरहंकारश्चित्तं च' इति । तथा च श्रुतिः कामाद्या' नानाविधाः वृत्तीरनुक्रम्याऽऽह—एतदिति । २।४।६

'पञ्चवृत्तिर्मनोवद्व्यपदिश्यते' — इतश्चास्ति मुख्यस्य प्राणस्य वैशेषिकं कार्यं यत्कारणं पञ्चवृत्तिरयं व्यपदिश्यते श्रुतिषु 'प्राणोऽपानो व्यान उदानः समानः' इति । वृत्तिभेदश्चायं कार्यभेदापेक्षः । ब्रशांकर. २।४।१२

( ३ ) मनोवाक्प्राणरूपाणि त्रीण्यन्नानि सर्वस्मै जीववर्गायाकुरुत कृतवानित्यर्थः । उक्तं च व्यासार्यैर्ज्योतिरधिकरणे सप्तान्नब्राह्मणदशायां परमात्मनः सकल्पाद्देहिनामुपजीव्यत्वेनान्नशब्दवाच्याना सप्तानामुत्पत्तिमुक्त्वा तत्रप्रसिद्धान्नदर्शपूर्णमासौ पयश्चेत्यत्र चतुष्टयस्य मानुषदेवतिर्यक्षु विनियोगमुक्त्वा त्रीण्यात्मनेऽकुरुतेत्यवशिष्टान्नत्रयस्य सर्वविधप्रवृत्तिहेतुत्वात्सामान्येन सर्वभोक्तृवर्गशेषमकरोदित्युक्त्वेत्युक्तम् । मनोवाक्प्राणानां सर्वजीवसाधारणोपकारकत्वं क्रमेणाऽऽह—अन्यत्रेति । अत्र लोकः प्रत्येतीति शेषः । मनसो व्यासङ्गदशायां विषयानुभवाभावोऽनुभूयते इति भावः । ततः किमित्यत्राऽऽह—मनसा ह्येवेति । अत्यल्पमिदमुच्यते दर्शनश्रवणे मनःकरणके इति । कामादिकमपि मनःकरणकमित्याह—काम इति । संकल्पोऽध्यवसायः । धृतिः प्रीतिः । अधृतिरप्रीतिः । ह्रीर्लज्जा । धीः प्रमाणजन्यज्ञानमात्रम् । भीरागामिदुःखशङ्का । एतत्सर्वं मनःकरणकमित्यर्थः । एवं मनस आत्मभोगार्थत्वमुक्त्वा वाचस्तदाह — यः कश्चनेति । वागिन्द्रियाधीनोच्चारणकर्मेत्यर्थः । ततश्च शब्दाभिवदनमेव वागिन्द्रियसाध्योपकार इति भावः । 'सैषा ह्यन्तमायत्ता' । सैषा वाक्सर्वस्यान्तमायत्ता इयत्तां प्राप्ता । इयत्ता प्रकाशयितुं शक्नोतीत्यर्थः । 'एषा हि न' । एषा वाग्घि स्वयं नान्तमायत्ता । अपरिच्छिन्नेत्यर्थः । वाक्स्वयमन्यापरिच्छेद्या सतीतरेषां तु परिच्छेदिकेत्यर्थः । क्रमप्राप्तं प्राणस्याऽऽत्मोपकारकत्वप्रकारमाह—प्राण इति । 'इत्येतत्सर्वं प्राण एव' । प्राणनापाननादिव्यापारद्वारोपकारक इति यावत् । प्राचुर्ये मयट् । रंग.

( ४ ) * पिता विष्णुः । यत् यदा । तपसा प्राणिनां कर्मभिः । मेधया स्वेच्छया । स हीदमन्न धिया जनयते कर्मभिरिति वचनात् । 'सप्तान्नानि यदा विष्णुः परमः पुरुषो विभुः । ससर्ज तेषां स्वार्थानि चकार त्रीणि केशवः । मनो वाचं तथा प्राणं तस्मात्तैस्तुष्टिमेति सः । तस्मात्तद्भक्तिकामः स्यात्संकल्पं तत्कृतिं प्रति । कुर्यात्तद्वेदनेच्छां च श्रद्धा तस्य गुणोन्नतौ । अश्रद्धामन्यसाम्ये वाऽप्यन्येषामुन्नतौ ततः । अन्येषां तत्स्वरूपत्वे प्राकृतत्वादिकेऽस्य च । धृतिं तन्निन्दिवागादौ प्राप्ते तत्रैव चाधृतिम् । तन्मतस्य विसर्गार्थे ह्रियं तद्भक्तिवर्जने । तद्विवेके धियं चैव तदज्ञाने भियं तथा । वाचं नित्यं तद्गुणोक्तौ प्राणं तत्कर्मणि स्फुटम् । तदन्यकर्मसत्यागे चापानं व्यानमस्य च । विरोधिना निरासे त्वथोदानं योगधारणे । मनोवागादीन्द्रियाणां समानं नियमेऽत्र हि । अन्नमुक्तेषु सुस्थैर्ये नरः कुर्यात्सदैव हि । अनेकगोचरेच्छा स्यात्कामः एकाश्रये स्थितः । प्राणः प्रवृत्तिहेतुः स्यादपानस्तु निवर्तने । बलकर्मा तथा व्यान उदानो योगकर्मकृत् । देहेन्द्रियमनोनेवा समानो नः स्थितिप्रदः । मनोवाक्प्राणसानिध्यप्राधान्याज्जीव उन्नतिः । मनोवाक्प्राणरूपोऽसौ भगवान् पुरुषोत्तमः । मनोवाक्प्राणतस्तस्य जाता अन्येऽभिमानिनः । ब्रह्मा सरस्वती वायुर्मन आद्यभिमानिनः । सर्वस्यान्तःस्थितं विष्णुमायत्ता वाग्घि नः सदा । सर्ववाचश्च घोषाश्च विष्णोर्नामेति कीर्तिताः । तज्ज्ञाना तत्फलं च स्यादज्ञाना तत्फलं न तु । सर्वेन्द्रियमतं ज्ञानं मनआयत्तमीरितम् । पृष्ठे स्पृष्टेऽप्यनेनाह स्पृष्ट इत्येव वेत्यतः । मनस्यव्याकुलेऽन्यत्र नैव वेत्ति कथंचन ॥ मध्व.

त्रयो[1] लोका एत एव । वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः ॥

* १।५।१,२ कण्डिके अपि अत्रैव व्याख्याते । द्वितीयकण्डिकाव्याख्यानं १।५।१६ कण्डिकायामपि द्रष्टव्यम् ।

(१) बृउ १।५।४, शब्रा १४।४।३।११.

तेषामेव प्राजापत्यानामन्नानामाधिभौतिको विस्तारोऽभिधीयते—त्रयो लोका भूर्भुव. स्वरित्याख्या. एत एव वाङ्मन प्राणा, तत्र विशेष — वागेवाय लोक, मनोऽन्तरिक्षलोक., प्राणोऽसौ लोकः।

शकर

[१]त्रयो वेदा एत एव। वागेवर्ग्वेदो मनो यजुर्वेदः प्राण सामवेद ॥

देवा पितरो मनुष्या एत एव। वागेव देवा मन' पितर प्राणो मनुष्या ॥

पिता माता प्रजैत एव। मन एव पिता वाङ्माता प्राण प्रजा ॥

(१) तथा त्रयो वेदा इत्यादीनि वाक्यानि ऋज्वर्थानि। शकर

(२) 'प्रजा' पुत्र इत्यर्थः। रग

[२]विज्ञातं विजिज्ञास्यमविज्ञातमेत एव। यत्किंच विज्ञात वाचस्तद्रूपम्। वाग्घि विज्ञाता। वागेन तद्भूत्वाऽवति ॥

(१) विज्ञात विजिज्ञास्य अविज्ञात एत एव। तत्र विशेष यत्किंच विज्ञात विस्पष्ट ज्ञात वाचस्तद्रूपम्। तत्र स्वयमेव हेतुमाह—वाक् हि विज्ञाता, प्रकाशात्मकत्वात्। कथमविज्ञाता भवेत् या अन्यानपि विज्ञापयति। 'वाचैव सम्राड्बन्धु प्रज्ञायते' इति हि वक्ष्यति। वाग्विशेषविद इद फलमुच्यते— वागेव एन यथोक्तवाग्विभूतिविद तत् विज्ञात भूत्वा अवति पालयति, विज्ञातरूपेणैवास्यान्न भोज्यता प्रतिपद्यत इत्यर्थः।

शकर

(२) यद्वाग्व्यवहाराद्विज्ञात तत्सर्वं वाचो रूपम्। तदेव प्रसिद्ध दर्शयति—'वाग्घि विज्ञाता'। वाचा विज्ञायमाना' सर्वेऽपि वागेव तदधीनप्रकाशत्वात्सैवेत्यर्थ। ततश्च किमित्यत्राऽऽह—'वागेवैन तद्भूत्वाऽवति'। तद्वाचा विज्ञायमान पदार्थजातमेन विज्ञातार यदवति रक्षत्युपकरोतीति यावत्। तद्वागेव भूत्वा अवति वाचा विज्ञायमानेन पदार्थेन य उपकारः स सर्वोऽपि वागाद्यधीन एव तस्माद्वाच उपकारकत्वं सिद्धमिति भावः। एवमुत्तरत्रापि द्रष्टव्यम्।

रग.

[१]यत्किंच विजिज्ञास्यं मनसस्तद्रूपम्। मनो हि विजिज्ञास्यम्। मन एन तद्भूत्वाऽवति ॥

तथा यत्किंच विजिज्ञास्य, विस्पष्ट ज्ञातुमिष्ट विजिज्ञास्य तत्सर्वं मनसो रूपम्। मनः हि यस्मात् सदिह्यमानाकारत्वाद्विजिज्ञास्यम्। पूर्ववन्मनोविभूतिविदः फलम्—मन एन तत् विजिज्ञास्य भूत्वा अवति विजिज्ञास्यस्वरूपेणैवान्नत्वमापद्यते। शाकर.

[२]यत्किंचाविज्ञात प्राणस्य तद्रूपम्। प्राणो ह्यविज्ञात। प्राण एन तद्भूत्वाऽवति ॥

(१) तथा यत्किंच अविज्ञात विज्ञानागोचर न च सदिह्यमान, प्राणस्य तद्रूपम्। प्राणो ह्यविज्ञात., अविज्ञातरूप हि यस्मात् प्राण', अनिरुक्तश्रुते। विज्ञातविजिज्ञास्याविज्ञातभेदेन वाङ्मन प्राणविभागे स्थिते त्रयो लोका इत्यादयो वाचनिका एव। सर्वत्र विज्ञातादिरूपदर्शनाद्वचनादेव नियम स्मर्तव्यः। प्राण एन तद्भूत्वाऽवति अविज्ञातरूपेणैवास्य प्राणोऽन्न भवतीत्यर्थ। शिष्यपुत्रादिभि' सदिह्यमानाविज्ञातोपकारा अप्याचार्यपित्रादयो दृश्यन्ते। तथा मन.प्राणयोरपि सदिह्यमानाविज्ञातयोरन्नत्वोपपत्ति'।

शकर.

(२) 'प्राणो ह्यविज्ञातः'। प्राणस्येन्द्रियागोचरत्वादिति भाव.। 'प्राण एन तद्भूत्वाऽवति'। पूर्वसुकृतवशादचिन्तित यदुपकरोति तद्भूत्वा प्राण उपकरोतीत्यर्थः। रग

(३) लोकवेदसुरज्ञातपित्रादेश्चाभिमानिन। *

मध्व.

[३]तस्यै वाचः पृथिवी शरीरम्। ज्योतीरूपमयमग्निः। तद्यावत्येव वाक्तावती पृथिवी तावानयमग्निः ॥

(१) बृउ १।५।५-७, शब्रा १४।४।३।१२—१४.

(२) बृउ १।५।८, शब्रा १४।४।३।१५, रंग वागेन (वागेवैन)

* बृउ १।५।४ इत्यारभ्य एतत्पर्यन्तस्येय व्याख्या।

(१) बृउ १।५।९, शब्रा १४।४।३।१६ एनं (एव).

(२) बृउ १।५।१०; शब्रा १४।४।३।१७ एन (एव).

(३) बृउ. १।५।११, शब्रा. १४।४।३।१८.

(१) व्याख्यातो वाङ्मनःप्राणानामाधिभौतिको विस्तारः। अथायमाधिदैविकार्थः आरम्भः—तस्यै तस्या वाच प्रजापतेरन्नत्वेन प्रस्तुताया पृथिवी शरीर बाह्य आधार, ज्योतीरूप प्रकाशात्मक करण पृथिव्या आधेयभूत अय पार्थिवोऽग्नि॰। द्विरूपा हि प्रजापते वाक् कार्य आधार. अप्रकाश॰, करण च आधेय प्रकाश, तदुभय पृथिव्यग्नी वागेव प्रजापते॰। तत् तत्र यावत्येव यावत्परिमाणैव अध्यात्माधिभूत भेदभिन्ना सती वाग्भवति, तत्र सर्वत्र आधारत्वेन पृथिवी व्यवस्थिता तावत्येव भवति कार्यभूता। तावानयमग्नि॰ आधेय —करणरूपो ज्योतीरूपेण पृथिवीमनुप्रविष्टस्तावानेव भवति। समानमुत्तरम्।

शकर

(२) एव प्रशस्य त्रयाणामधिष्ठातॄश्च दर्शयति— तस्यै वाच इति। तस्य वागिन्द्रियस्य पृथिवी शरीरमायतन जिह्वागोलस्थ पार्थिवाशमाश्रित्य वागिन्द्रिय तिष्ठतीत्यर्थ॰। ज्योतीरूपमयमग्निः। ज्योतिर्मयमधिष्ठातृदेवतास्वरूपमयमाग्निरित्यर्थ॰। तद्यावत्येवेति। यत्रयत्र वागिन्द्रिय तत्रतत्र तदधिष्ठानतया पृथिव्यस्ति। अधिष्ठातृतयाऽग्निरप्यस्तीत्यर्थ.।

रग

अथैतस्य मनसो द्यौ शरीरम्। ज्योतीरूपमसावादित्य॰। तद्यावदेव मनस्तावती द्यौस्तावानसावादित्य। तौ मिथुन९ समैताम्। तत प्राणोऽजायत। स इन्द्र। स एषोऽसपत्न। द्वितीयो वै सपत्न। नास्य सपत्नो भवति य एव वेद॥

(१) अथैतस्य प्राजापत्यान्नोक्तस्यैव मनसः द्यौ॰ द्युलोक शरीर कार्य आधार॰, ज्योतीरूप करण आधेय असावादित्य। तत् तत्र यावत्परिमाणमेवाध्यात्ममधिभूत वा मन., तावती तावद्विस्तारा तावत्परिमाणा मनसो ज्योतीरूपस्य करणस्य आधारत्वेन व्यवस्थिता द्यौः। तावानसावादित्यो ज्योतीरूप करणमाधेयम्। तावग्न्यादित्यौ वाङ्मनसे आधिदैविके मातापितरौ मिथुन मैथुन्य इतरेतरससर्गे समैतां समगच्छेताम् —मनसा आदित्येन प्रसूत पित्रा, वाचा अग्निना मात्रा प्रकाशित कर्म करिष्यामीति—अन्तरा रोदस्यो.। ततः तयोरेव सगमनात् प्राणो वायुरजायत परिस्पन्दाय कर्मणे। यो जातः स इन्द्रः परमेश्वर॰, न केवलमिन्द्र एव, असपत्न अविद्यमान. सपत्नो यस्य, क पुनः सपत्नो नाम? द्वितीयो वै प्रतिपक्षत्वेनोपगत. स द्वितीयः सपत्न इत्युच्यते। तेन द्वितीयत्वेऽपि सति वाङ्मनसे न सपत्नत्व भजेते। प्राण प्रति गुणभावोपगते एव हि ते अध्यात्ममिव। तत्र प्रासङ्गिकासपत्नविज्ञानफलमिदम्—नास्य विदुष सपत्नः प्रतिपक्षो भवति, य एव यथोक्त प्राण असपत्न वेद।

शकर

(२) इह द्युशब्द आकाशमात्रपर॰। न तु लोकविशेषपरः। अनुपपत्तेः। न हि स्वर्गलोक एव मनसोऽधिष्ठानमन्येषाममनस्कत्वप्रसङ्गात्। द्युशब्दो हि लोक विशेषे न भूमिमात्रे च वर्तते। सुरलोको द्योदिवौ द्वे। 'द्योदिवौ द्वे स्त्रियामभ्र व्योमपुष्करमम्बरम्' इति निघण्टूक्तेः। तत्रापि सामर्थ्याद्धृदयाकाशे पर्यवस्यति। हृदय छिद्ररूपाकाशमायतनमित्यर्थ। तावग्न्यादित्यौ मिथुन समैता मिथुनभावमगच्छताम्। 'तत॰ प्राणोऽजायत'। तस्यायमभिप्राय॰— आदित्याधिष्ठेयमन पूर्विकाऽग्न्याधिष्ठेयवाक्प्रवृत्तिस्तदुभयपूर्विका पञ्चवृत्तिप्राणाधीना शरीरप्रवृत्तिरिति। स इन्द्र परमैश्वर्यशाली। इन्द्रियान्तरापेक्षया प्राणस्येश्वरत्वादिति भावः। प्राणस्यासपत्नत्व चक्षुरादिषु स्वसदृशस्वप्रतिस्पर्धिरहितत्वम्। रग

अथैतस्य प्राणस्याऽऽप शरीरम्। ज्योतीरूपमसौ चन्द्र। तद्यावानेव प्राणस्तावत्य आपस्तावानसौ चन्द्र। त एते सर्व एव समा सर्वेऽनन्ता। स यो हैतानन्तवत उपास्तेऽन्तवन्त९ स लोक जयति। अथ यो हैताननन्तानुपास्तेऽनन्त९ स लोक जयति॥

(१) अथैतस्य प्रकृतस्य प्राजापत्यान्नस्य प्राणस्य, न प्रजोक्तस्य अनन्तरनिर्दिष्टस्य, आपः शरीर कार्य करणाधार.। पूर्ववत् ज्योतीरूपमसौ चन्द्रः। तत्र

(१) बृउ १।५।१२, शब्रा १४।४।३।१९, रग नास्य (न ह्यस्य), मध्व समैताम् ('समेताम्').

(१) बृउ १।५।१३, शब्रा १४।४।३।२०, २१, ब्रशाकर. ३।३।४३, रामानुज २।४।६, श्रीकर २।४।५.

यावानेव प्राण॰ यावत्परिमाण. अध्यात्मादिभेदेषु, तावद्व्याप्तिमत्य आप. तावत्परिमाणा॰ । तावानसौ चन्द्र अत्राधेय. तास्वप्स्वनुप्रविष्ट करणभूत॰ अध्यात्ममधिभूत च तावद्व्याप्तिमानेव । तान्येतानि पित्रा पाङ्क्तेन कर्मणा सृष्टानि त्रीण्यन्नानि वाङ्मन प्राणाख्यानि । अध्यात्ममधिभूत च जगत्समस्त एतैर्व्याप्तम् । नैतेभ्योऽन्यदतिरिक्त किंचिदस्ति कार्यात्मक करणात्मक वा । समस्तानि त्वेतानि प्रजापति । त एते वाङ्मन॰प्राणाः सर्व एव समाः तुल्यव्याप्तिमन्तः यावत्प्राणिगोचर साध्यात्माधिभूत व्याप्य व्यवस्थिता॰ । अत एवानन्ता यावत्ससारभाविनो हि ते । न हि कार्यकरणप्रत्याख्यानेन ससारोऽवगम्यते । कार्यकरणात्मका हि त इत्युक्तम् । स यः कश्चित् ह एतान् प्रजापतेरात्मभूतान् अन्तवत. परिच्छिन्नान् अध्यात्मरूपेण वा अधिभूतरूपेण वा उपास्ते, स च तदुपासनानुरूपमेव फल अन्तवन्त लोक जयति, परिच्छिन्न एव जायते, नैतेषामात्मभूतो भवतीत्यर्थः । अथ पुन य. ह एताननन्तान् सर्वात्मकान् सर्वप्राण्यात्मभूतान् अपरिच्छिन्नान् उपास्ते, सोऽनन्तमेव लोक जयति । शकर

( २ ) आप. शरीर, 'प्राणा वा आपः' इति श्रुते । पानीय प्राणिना प्राणा विश्वमेव च तन्मयमित्यायुर्वेदविद. । अत. प्राणस्याऽऽप एवाऽऽयतनम् । त एते वाङ्मन प्राणा. सर्व एव समा । हस्तिमशकादीनासर्वेषा समाना॰ । यथा दीपप्रभा घटगृहप्रासादाधारासमपरिमाणाऽपि तत्तदाधारवशेन सकोचविकासौ यातितथा प्राणा अपि मशकमातङ्गादिदेहवशेन सकोचविकासौ यान्तीत्यर्थ. । सर्वेऽनन्ता । आनन्त्य चाऽऽकल्पस्थायित्वात्, मनआदिव्यष्टिभेदाच्चेति द्रष्टव्यम् । तस्मात्फलार्थिनाऽऽनन्त्येनैवोपासनीयम् । अनन्तवत्त्वेनैवोपासनेन तत्फलप्राप्तिरित्याह — स यो हैतानन्तवत इति । अत्रानन्तशब्दश्चिरकालस्थायित्वाभिप्राय. । रग.

( ३ ) त एते सर्व एव समाः सर्वेऽनन्ताः इत्यानन्त्यश्रवणाद्विभुत्व प्राणानामिति प्राप्तेऽभिधीयते । 'प्राणमनूत्क्रामन्त सर्वे प्राणा अनूत्क्रामन्ति' ( बृउ ४।४।२ ) इत्युत्क्रान्त्यादिश्रवणात्परिमितत्वे सिद्धे सत्युत्क्रान्त्यादिषु पार्श्वस्थैरनुपलभ्यमानत्वादणवश्च प्राणा॰ । आनन्त्यश्रुतिस्तु 'अथ यो हैताननन्तानुपास्ते' इत्युपासनश्रवणादुपास्यप्राणविशेषभूतकार्यबाहुल्याभिप्राया । रामानुज २।४।६

( ४ ) 'द्युपृथिव्यग्निसूर्यापा सोमस्याप्यभिमानिन । स इन्द्र परमैश्वर्यादशत्रु समवर्जनात् । वायुरेते समा व्याप्तौ ब्रह्मेशौ गुणतोऽधिकौ । अनन्ताश्च गुणा ह्येषामन्यजीवव्यपेक्षया । तेभ्योऽप्यनन्ता विष्णोस्तु तेषामेवमुपासक । नित्यलोकोपभोगी स्यादनित्यस्यान्यथा भवेत् ॥ * मध्व.

**स एष सवत्सर प्रजापति षोडशकल । तस्य रात्रय एव पञ्चदश कला । ध्रुवैवास्य षोडशी कला । स रात्रिभिरेवाऽऽ च पूर्यतेऽप च क्षीयते । सोऽमावास्या॰ रात्रिमेतया षोडश्या कलया सर्वमिद प्राणभृदनुप्रविश्य । तत प्रातर्जायते । तस्मादेता रात्रिं प्राणभृत प्राणं न विच्छिन्द्यादपि कृकलासस्यैतस्या एव देवताया अपचित्यै ॥**

(१) पिता पाङ्क्तेन कर्मणा सप्तान्नानि सृष्ट्वा त्रीण्यन्नान्यात्मार्थमकरोदित्युक्तम् । तान्येतानि पाङ्क्तकर्मफलभूतानि व्याख्यातानि । तत्र कथ पुनः पाङ्क्तस्य कर्मण फलमेतानीति उच्यते—यस्मात्तेष्वपि त्रिष्वन्नेषु पाङ्क्तता अवगम्यते, वित्तकर्मणोरपि तत्र सभवात् । तत्र पृथिव्यग्नी माता, दिवादित्यौ पिता, योऽयमनयोरन्तरा प्राणः स प्रजेति व्याख्यातम् । तत्र वित्तकर्मणी सभावयितव्ये इत्यारम्भः । स एष सवत्सर॰—योऽयत्र्यन्नात्मा प्रजापति. प्रकृत, स एष सवत्सरात्मना विशेषतो निर्दिश्यते । षोडशकल॰ षोडश कला अवयवा अस्य सोऽय षोडशकल. सवत्सरः सवत्सरात्मा कालरूप. । तस्य च कालात्मन. प्रजापते रात्रय एव अहोरात्राणि—तिथय इत्यर्थ॰—पञ्चदश कला. । ध्रुवैव नित्यैव व्यवस्थिता अस्य प्रजापतेः षोडशी षोडशाना

* बृउ १।५।११ इत्यारभ्य एतत्पर्यन्तस्येय व्याख्या ।

(१) बृउ १।५।१४, शब्रा १४।४।३।२२, रग. रेवाऽऽ च पूर्यतेऽप ( रेव चाऽऽपूर्यते अप ), मध्व. पूर्यतेऽप ( पूर्यते अप ).

पूरणी कला। रात्रिभिरेव तिथिभि कलोक्ताभिः आपूर्यते च अपक्षीयते च प्रतिपदाद्याभिर्हि चन्द्रमा प्रजापतिः शुक्लपक्ष आपूर्यते कलाभिरुपचीयमानाभिर्वर्धते यावत्सपूर्णमण्डल. पौर्णमास्याम् । ताभिरेवापचीयमानाभि. कलाभिरपक्षीयते कृष्णपक्षे यावद्ध्रुवैका कला व्यवस्थिता अमावास्यायाम्। स प्रजापति. कालात्मा अमावास्यां अमावास्याया रात्रिं रात्रौ या व्यवस्थिता ध्रुवा कलोक्ता एतया षोडश्या कलया सर्वमिद प्राणभृत् प्राणिजात अनुप्रविश्य—यदप पिबति यच्चौषधीरश्नाति तत्सर्वमेव ओषध्यात्मना सर्वं व्याप्य—अमावास्या रात्रिमवस्थाय ततोऽपरेद्यु प्रातर्जायते द्वितीयया कलया सयुक्त । एव पाङ्क्तात्मकोऽसौ प्रजापति.—दिवादित्यौ मन. पिता, पृथिव्यग्नी वाक् जाया माता, तयोश्च प्राण· प्रजा, चान्द्रमस्यस्तिथय. कला वित्त—उपचयापचयधर्मित्वात् वित्तवत्, तासा च कलाना कालावयवाना जगत्परिमाणहेतुत्व कर्म । एवमेष कृत्स्न. प्रजापतिः—जाया मे स्यात्, अथ प्रजायेय, अथ वित्त मे स्यात्, अथ कर्म कुर्वीय—इत्येषणानुरूप एव पाङ्क्तस्य कर्मण. फलभूत सवृत्तः। कारणानुविधायि हि कार्यमिति लोकेऽपि स्थिति.। यस्मादेष चन्द्र एतां रात्रिं सर्वप्राणिजातमनुप्रविष्टो ध्रुवया कलया वर्तते, तस्माद्धेतो एताममावास्या रात्रिं प्राणभृत प्राणिनः प्राण न विच्छिन्द्यात्—प्राणिन न प्रमापयेदित्येतत्—अपि कृकलासस्य—कृकलासो हि पापात्मा स्वभावेनैव हिंस्यते प्राणिभि. दृष्टोऽप्यमङ्गल इति कृत्वा । ननु प्रतिषिद्धैव प्राणिहिंसा ‘ अहिंसन् सर्व भूतान्यन्यत्र तीर्थेभ्यः ’ इति। बाढ प्रतिषिद्धा, तथापि न अमावास्याया अन्यत्र प्रतिप्रसवार्थं वचन हिंसायाः कृकलासविषये वा, किं तर्हि एतस्या· सोमदेवताया अपचित्यै पूजार्थम्।

शकर

( २ ) चन्द्रमा· षड्भ्यो मासऋतून्कल्पयतीति प्रकारेण सर्वर्तुप्रवर्तकतया सवत्सरसज्ञको राश्यधीनोपचयापचयान्वितकलामय ‘ सौम्यो वै देवतया पुरुष. ’ इति श्रवणात्प्राणाधिदेवताभूतश्चन्द्र उच्यते। अत एव प्रजापतित्व षोडश्या· कलाया नाशाभावात् ध्रुवत्वमिति द्रष्टव्यम्।

*रग.

( ३ ) वायुः प्रजापतिः सोऽसौ चन्द्रसस्थो विशेषतः। रात्रौरात्रौ क्षयादस्य पूरणाद्रात्रिनामका. । कला पञ्चदश प्रोक्ता ध्रुवैवास्य तु षोडशी। अकलोऽपि स चन्द्रस्य कलाभि. प्रोच्यते तथा। सोऽमावास्या यतो रात्रौ प्राणभृत्सु व्यवस्थित । कल्पावेशादल्पदोष. कृकलासवधोऽपि सन्। तस्यां रात्रौ महान्दोषो देवतावेशतो भवेत्। वायु सवत्सर. प्रोक्तो वत्सो विष्णोरसौ यत.। सम्यगेव रतिं याति॥

मध्व

[1]यो वै स सवत्सर प्रजापति षोडशकलोऽयमेव स योऽयमेववित्पुरुषः । तस्य वित्तमेव पञ्चदश कला· । आत्मैवास्य षोडशी कला। स वित्तेनैवाऽऽ च पूर्यतेऽप च क्षीयते। तदेतन्नभ्य यदयमात्मा। प्रधिर्वित्तम् । तस्माद्यद्यपि सर्वज्यानिं जीयत आत्मना चेज्जीवति प्रधिनाऽगादित्येवाहु. ॥

(१) यो वै परोक्षाभिहित· सवत्सर प्रजापति. षोडशकल , स नैव अत्यन्त परोक्षो मन्तव्य., यस्मादयमेव स प्रत्यक्ष उपलभ्यते। कोऽसावयम्? यो यथोक्त त्र्यन्नात्मक प्रजापतिमात्मभूत वेत्ति स एववित्पुरुष.। केन सामान्येन प्रजापतिरिति तदुच्यते—तस्य एव विद पुरुषस्य गवादिवित्तमेव पञ्चदश कला, उपचयापचयधर्मित्वात्—वित्तसाध्य च कर्म। तस्य कृत्स्नतायै—आत्मैव पिण्ड एव अस्य विदुष· षोडशी कला ध्रुवस्थानीया। स चन्द्रवत् वित्तेनैव आपूर्यते च अपक्षीयते च । तदेतत् लोके प्रसिद्धम् । तदेतत् नभ्य नाभ्यै हित नभ्य नाभिं वा अर्हतीति—किं तत्? यदय योऽय आत्मा पिण्डः । प्रधि. वित्त परिवारस्थानीय बाह्य—चक्रस्येवारनेम्यादि। तस्मात् यद्यपि सर्वज्यानिं सर्वस्वापहरण जीयते हीयते ग्लानिं प्राप्नोति, आत्मना चक्रनाभिस्थानीयेन चेत् यदि जीवति, प्रधिना बाह्येन परिवारेण अय अगात् क्षीणोऽयम्—यथा चक्रमरनेमि-

* शेष शंकरवत्।

(१) बृउ १।५।१५, शब्रा १४।४।३।२३ दित्येवाहुः ( दित्याहु ), रग वै स स ( वै स )

विमुक्त--एवमाहु । जीवश्चेदरनेमिस्थानीयेन वित्तेन पुनरुपचीयत इत्यभिप्राय । शकर

(२) षोडशकलचन्द्रविद्याफलमाह-- यो वै स वत्सर इति । यथा चन्द्र. षोडशकल एव तद्वेत्ता पुरुषोऽपि षोडशकलो भवतीत्यर्थः । पुरुषस्य षोडशकलत्वमेवोप पादयति--तस्य वित्तमेवेति । सर्वज्यानिम् । ज्या वयोहानौ । सर्वनाशो यथा भवति तथेति यावत् । जीयते । श्यनि 'ग्रहिज्या' इति सप्रसारणम् । नश्यतीत्यर्थ. । प्रधिना प्रधिस्थानीयेन वित्तेनागात्सगतवानित्येवाऽऽहु' कान्तारे सर्वहरणेऽपि शरीरमात्र जीवति चेत्सर्वं वित्तमाप्यते वित्तस्य चन्द्रकलावदपक्षीयविनाशस्वभावत्वात् । विद्यामहिम्ना स्वयमेव पूर्णं भविष्यतीति विद्वास आहु रित्यर्थ । अत एव व्यासार्यैरेतदर्थवदनदशाया तद्वेदन-फल चोक्तमित्युक्तम् । अतोऽय सदर्भो विद्याफलप्रति पादनपरो द्रष्टव्य. । रग.

**अथ त्रयो वाव लोका मनुष्यलोक पितृलोको देवलोक इति । सोऽय मनुष्यलोक पुत्रेणैव जय्यो नान्येन कर्मणा । कर्मणा पितृलोक । विद्यया देवलोक । देवलोको वै लोकाना श्रेष्ठ । तस्माद्विद्या प्रशसन्ति ॥**

(१) एव पाङ्क्तेन दैववित्तविद्यासयुक्तेन कर्मणा त्र्यन्नात्मक. प्रजापतिर्भवतीति व्याख्यातम् । अनन्तरं च जायादिवित्त पारिवाररस्थानीयमित्युक्तम् । तत्र पुत्र-कर्मापरविद्याना लोकप्राप्तिसाधनत्वमात्र सामान्येनाव-गतम् । न पुत्रादीना लोकप्राप्तिफल प्रति विशेषसब-न्धनियम । सोऽय पुत्रादीना साधनाना साध्यविशेषस-बन्धो वक्तव्य इत्युत्तरकण्डिका प्रणीयते--अथेति वाक्योपन्यासार्थः । त्रय --वावेत्यवधारणार्थ'---त्रय एव शास्त्रोक्तसाधनार्हा लोका, न न्यूना अधिका वा । के ते इत्युच्यते--मनुष्यलोक. पितृलोको देवलोक इति । तेषा सोऽय मनुष्यलोक. पुत्रेणैव साधनेन जय्य. जेतव्यः साध्य --यथा च पुत्रेण जेतव्यस्तथोत्तरत्र वक्ष्याम --नान्येन कर्मणा, विद्यया वेति वाक्यशेषः । कर्मणा अग्निहोत्रादिलक्षणेन केवलेन पितृलोको जेतव्यः, न पुत्रेण नापि विद्यया । विद्यया देवलोक' न पुत्रेण नापि कर्मणा । देवलोको वै लोकाना त्रयाणा श्रेष्ठः प्रशस्य-तम , तस्मात् तत्साधनत्वात् विद्या प्रशसन्ति ।

शकर.

(२) लोकशब्दश्च प्राणिना भोगायतनेषु भाष्यते । प्रशकर ४।३।४

(३) मनोवाक्प्राणाना प्रकारान्तरेणापि आत्मोप-कारकत्व दर्शयितु पीठिकामारचयति-- अथ त्रय इति । केवलकर्मणाऽन्तरिक्षलोक. काम्यविद्याविशेषेण देवलोकप्राप्तिरित्यर्थ. । अत्र देवलोकशब्दस्य भगवल्लो-कपरत्वमपि स्वरसमिति द्रष्टव्यम् । यतो विद्याया एव श्रेष्ठलोकसाधनत्वमतो विद्या स्तुवन्तीत्यर्थः ।

रग.

(४)'--स एव विदुषि स्थित । अध्रुवास्तु कला यद्वत्सौम्यास्तस्य यथा धनम् । आगमापायवत्त्वात्तु ध्रुवावद्देह उच्यते । नाभिस्थान शरीर तु चक्रस्य प्रधि-वर्धनम् । सर्वस्वविजयेऽप्यस्मात्प्रधिमात्र तु गच्छति । एव महागुणान्देवानेव यो वेद पूरुषः । न चैभ्योऽति-प्रियः कश्चिद्विष्णोरस्ति कदाचन ।

* चतुर्थं भोज्यमेवान्न सर्वसाधारण स्मृतम् । आत्मनोऽतिसमीपत्व तस्य योऽन्नस्य मन्यते । अक्षय पापमस्य स्याद्देवब्रह्मस्वहारिण' । तदेव मन्त्रयुक्तत्वाद्बलि-होमा मना द्वयम् । देवानां प्रददौ विष्णुस्तस्मान्नैवे-च्छया यजेत् । यदीच्छया यजेत्तेषामपहर्ता भविष्यति । देवस्व तेन येनैव काम्यार्थे विनियोजितम् । परकीयेन वित्तेन तस्मिन्विनियमे यथा । चतुष्पाद्भ्यो द्विपाद्भ्यश्च पशुभ्यः पयआत्मकम् । प्रायच्छत्ससमाज्ञ स गोक्षीर मुख्यमत्र च । आत्मने चैव देवाना तद्धोमार्थे प्रकल्पि-तम् । सवत्सर गोपयसाऽनेन होमो हरेः कृतः । भगवत्त-त्त्वविद्बुषा तस्य मुक्तिर्न सशयः । अदृष्टभगवद्रूपस्यैत द्दर्शनकारणम् । भगवद्दृष्टिपूतस्तु विना होमेन मुच्यते । ससान्नसूचितत्त्वज्ञस्त्वेकहोमे न मुच्यते । विशेषज्ञो यतः

(१) बृउ १।५।१६, शब्रा १४।४।३।२४, प्रशकर ४।३।४

* इत आरभ्य पुन बृउ १।५।१२ कण्डिकाया भाष्य दृश्यते । सोऽय ग्रन्थ अत्र असगत एव । रघूत्तममुनि-रपि भाष्यवृत्तिकार एतामसगतिं न पश्यतीति चित्रम् ।

सोऽय भगवत्तत्त्ववेदने । को नाम भगवान्विष्णु परमानदरूपत. । प्राणिना कर्मभिश्चैव स्वेच्छया च पुन पुन । सत्तान्न सृजते यस्मादन्नानामक्षयस्तत । तस्मादक्षितिनामाऽसौ भगवान्पुरुषोत्तम. । य एवमक्षितिं वेद भगवन्त सनातनम् । अप्रयत्नेन भोगा स्युर्यथेष्टा स्तस्य सर्वदा । सत्तान्नोपासन यस्माद्देवाना योग्यमुत्तमम् । तस्माद्देवत्वमाप्नोति योग्यो देवपदस्य य । ऊर्जे देवा न्नमुद्दिष्ट ऊर्जितास्तु गुणास्तथा । तदप्याप्नोति न नरा योग्या एतदुपासने । ज्ञानमात्रेण देवाना सामीप्य प्राप्नुवन्ति ते ॥ ' इति नारायणीये । मध्व

(सम्प्रत्तिकर्म)

तत्फल, पुत्रनामनिरुक्ति , सम्प्रत्तिकर्तरि देव-प्राणप्रवेश

**अथात सम्प्रत्ति । यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह, त्व ब्रह्म त्व यज्ञस्त्व लोक इति । स पुत्र प्रत्याहाह ब्रह्माह यज्ञोऽह लोक इति । यद्वै किंचानूक्त तस्य सर्वस्य ब्रह्मेत्येकता । ये वै के च यज्ञास्तेषा५ सर्वेषा यज्ञ इत्येकता । ये वै के च लोकास्तेषा५ सर्वेषा लोक इत्येकता । एतावद्वा इद५ सर्वम् । एतन्मा सर्व५ सन्नयमितोऽभुनजदिति । तस्मात्पुत्रमनुशिष्ट लोक्यमाहु । तस्मादेनमनुशासति । स यदैवविदस्माल्लोकात्प्रैत्यथैभिरेव प्राणै सह पुत्रमाविशति । स यद्यनेन किंचिदक्ष्णयाऽकृत भवति तस्मादेन५ सर्वस्मात्पुत्रो मुञ्चति तस्मात्पुत्रो नाम । स पुत्रेणैवास्मिंल्लोके प्रतितिष्ठति । अथैनमेते दैवा प्राणा अमृता आविशन्ति ॥**

(१) एव साध्यलोकत्रयफलभेदेन विनियुक्तानि पुत्रकर्मविद्याख्यानि त्रीणि साधनानि । जाया तु पुत्रकर्मार्थत्वान्न पृथक्साधनमिति पृथक् नाभिहिता । वित्त च कर्मसाधनत्वान्न पृथक्साधनम् । विद्याकर्मणोर्लोकजयहेतुत्व स्वात्मप्रतिलाभेनैव भवतीति प्रसिद्धम् । पुत्रस्य तु अक्रियात्मकत्वात् केन प्रकारेण लोकजयहेतुत्वमिति न ज्ञायते । अतस्तद्वक्तव्यमिति अथ अनन्तरमारभ्यते—सम्प्रत्ति सम्प्रदानम् । सम्प्रत्तिरिति वक्ष्यमाणस्य कर्मणो नामधेयम् । पुत्रे हि स्वात्मव्यापारसम्प्रदान करोति अनेन प्रकारेण पिता, तेन सम्प्रत्तिसज्ञकमिद कर्म । तत् कस्मिन्काले कर्तव्यमित्याह—स पिता यदा यस्मिन्काले प्रैष्यन् मरिष्यन् मरिष्यामीत्यरिष्टादिदर्शनेन मन्यते, अथ तदा पुत्रमाहूयाऽऽह—त्व ब्रह्म त्व यज्ञस्त्व लोक इति । स एवमुक्त. पुत्र. प्रत्याह । स तु पूर्वमेवानुशिष्टो जानाति मयैतत्कर्तव्यमिति । तेनाऽऽह—अह ब्रह्म अह यज्ञ अह लोक इति एतद्वाक्यत्रयम् । एतस्यार्थस्तिरोहित इति मन्वाना श्रुतिर्व्याख्यानाय प्रवर्तते—यद्वै किंच यत्किंच अवशिष्ट अनूक्त अधीतमनधीत च, तस्य सर्वस्यैव ब्रह्मेत्येतस्मिन्पदे एकता एकत्वम् । योऽध्ययनव्यापारो मम कर्तव्य आसीदेतावन्त काल वेदविषय, स इत ऊर्ध्वं त्व ब्रह्म त्वत्कर्तृकोऽस्त्वित्यर्थ· । यथा ये वै के च यज्ञा अनुष्ठेया सन्तो मया अनुष्ठिताश्चाननुष्ठिताश्च, तेषा सर्वेषा यज्ञ इत्येतस्मिन्पदे एकता एकत्वम् । मत्कर्तृका यज्ञा ये आसन्, ते इत ऊर्ध्वं त्व यज्ञ त्वत्कर्तृका भवन्त्वित्यर्थः । ये वै के च लोका मया जेतव्या सन्तो जिता अजिताश्च, तेषा सर्वेषा लोक इत्येतस्मिन्पदे एकता । इत ऊर्ध्वं त्व लोक. त्वया जेतव्यास्ते । इत ऊर्ध्वं मया अध्ययनयज्ञलोकजयकर्तव्यक्रतु स्त्वयि समर्पितः, अह तु मुक्तोऽस्मि कर्तव्यताबन्धनविषयात्क्रतो । स च सर्वं तथैव प्रतिपन्नवान्पुत्र अनुशिष्टत्वात् । तत्र इम पितुरभिप्राय मन्वाना आचष्टे श्रुति —एतावत् एतत्परिमाण वै इद सर्वं—यद्गृहिणा कर्तव्य, यदुत वेदा अध्येतव्या., यज्ञा यष्टव्याः, लोकाश्च जेतव्या , एतन्मा सर्वं सन्नयम्—सर्वं हि इम भार मदधीन मत्तोऽपच्छिद्य आत्मनि निधाय इत. अस्माल्लोकात् मा मा अभुनजत् पालयिष्यतीति—लडर्थे लङ्, छन्दसि कालनियमाभावात् । यस्मादेव सपन्नः पुत्र पितर अस्माल्लोकात्कर्तव्यताबन्धनतो मोचयिष्यति, तस्मात्पुत्रमनुशिष्ट लोक्य लोकहित पितुः आहुर्ब्राह्मणा. । अत एव ह्येन पुत्रमनुशासति लोक्योऽय नः स्यादिति—पितर. । स पिता यदा यस्मिन्काले एववित् पुत्रसमर्पितकर्तव्यताक्रतुः अस्मा-

(१) बृउ १।५।१७, शब्रा १४।४।३।२५, २६ मितोऽभुन ( मितो भुन ), रग यदा प्रै ( स यदा प्रै ) दैवा ( देवा ), मध्व एतन्मा सर्व५ ( एतस्मात्सर्व५ ) दैवा ( देवा )

ल्लोकात् प्रैति म्रियते, अथ तदा एभिरेव प्रकृतैर्वाङ्मन.प्राणै. पुत्रमाविशति पुत्र व्याप्नोति। अध्यात्म परिच्छेदहेत्वपगमात् पितुर्वाङ्मन.प्राणा. स्वेन आधिदैविकेन रूपेण पृथिव्यग्न्याद्यात्मना भिन्नघटप्रदीप प्रकाशवत् सर्वे आविशन्ति। तै. प्राणैः सह पिताऽपि आविशति वाङ्मन प्राणात्मभावित्वात्पितु.। अहमस्म्यनन्ता वाङ्मन प्राणा अध्यात्मादिभेदविस्तारा —इत्येवभावितो हि पिता, तस्मात् प्राणानुवृत्तित्व पितु भवतीति युक्तमुक्तम्—एभिरेव प्राणै सह पुत्रमाविशतीति। सर्वेषा ह्यसावात्मा भवति पुत्रस्य च। एतदुक्त भवति—यस्य पितुरेवमनुशिष्टः पुत्रो भवति सोऽस्मिन्नेव लोके वर्तते पुत्ररूपेण नैव मृतो मन्तव्य इत्यर्थ। तथा च श्रुत्यन्तरे—'सोऽस्यायमितर आत्मा पुण्येभ्यः कर्मभ्य प्रतिधीयते' इति। अथेदानीं पुत्रनिर्वचनमाह—स पुत्र यदि कदाचित् अनेन पित्रा अक्षणया कोणच्छिद्रतोऽन्तरा अकृत भवति कर्तव्य, तस्मात् कर्तव्यतारूपात्पित्रा अकृतात् सर्वस्माल्लोकप्राप्तिप्रति बन्धरूपात् पुत्रो मुञ्चति मोचयति तत्सर्वे स्वयमनुतिष्ठन् पूरयित्वा, तस्मात्पूरणेन त्रायते स पितर यस्मात्, तस्मात्, पुत्रो नाम। इद तत्पुत्रस्य पुत्रत्व—यत्पितुश्छिद्र पूरयित्वा त्रायते। स पिता एवविधेन पुत्रेण मृतोऽपि सन् अमृत अस्मिन्नेव लोके प्रतितिष्ठति एवमसौ पिता पुत्रेणेम मनुष्यलोक जयति। न तथा विद्याकर्मभ्या देवलोकपितृलोकौ। स्वरूपलाभसत्तामात्रेण। न हि विद्या कर्मणी स्वरूपलाभव्यतिरेकेण पुत्रवत् व्यापारान्तरापेक्षया लोकजयहेतुत्व प्रतिपद्येते। अथ कृतसप्रत्तिक पितर एन एते वागादय· प्राणा दैवा हैरण्यगर्भाः अमृता. अमरणधर्माण आविशन्ति। शकर

(२) 'स पुत्रमाविशति'। पुत्रो भूत्वा यज्ञादिकमयमेव करोति। पुत्रगत सर्वे परलोकगतस्य पितु. स्वानुष्ठितसुकृतवदुपकारक भवतीत्यर्थ·। परलोकगत पुण्यकर्माण पुरुष देवा. प्राणशब्दवाच्या मनआदावाविशन्तीत्यर्थः। * रग

(३) ब्रह्मेति वेद.। स्वाध्यायादिकर्तृत्वात्पुत्रस्त्व ब्रह्मेत्याद्युच्यते। आत्मा भवति व्यापको भवति। पुन. कर्मकृतिर्मानुष्यजय उच्यते। 'जन्मान्तर विना नैव कर्मणा तत्तु युज्यते। पुत्रेण विद्यया नित्यमेकैकेनापि युज्यते। उभाभ्या किमु वक्तव्यमष्टभागफल सुतात्। विद्यया त्वर्धमाप्नोति सर्व सतान्नविल्लभेत्। पुत्रमाविश्य सामर्थ्यान्मुच्यते छिद्रकर्मण.। अक्ष्ण च पुदिति च्छिद्र पुत्रस्तत्त्राणतो भवेत्॥'

* शेष वाक्यव्याख्यान शकरवत्।

मध्व

**पृथिव्यै चैनमग्नेश्च दैवी वागाविशति। सा वै दैवी वाग्यया यद्यदेव वदति तत्तद्भवति॥**

(१) कथमिति वक्ष्यति—पृथिव्यै चैनमित्यादि। एव पुत्रकर्मापरविद्याना मनुष्यलोकपितृलोकदेवलोकसा ध्यार्थता प्रदर्शिता श्रुत्या स्वयमेव। अत्र केचिद्वावदूका श्रुत्युक्तविशेषार्थानभिज्ञा. सन्त पुत्रादिसाधनाना मोक्षार्थता वदन्ति। तेषा मुखापिधान श्रुत्येदं कृत—जाया मे स्यादित्यादि पाङ्क्त काम्य कर्मेत्युपक्रमेण, पुत्रादीना च साध्यविशेषविनियोगोपसहारेण च, तस्मात् ऋणश्रुतिरविद्वद्विषया न परमात्मविद्विषयेति सिद्धम्। वक्ष्यति च—'किं प्रजया करिष्यामो येषा नोऽयमात्माऽय लोक' इति।

केचित्तु पितृलोकदेवलोकजयोऽपि पितृलोकदेव लोकाभ्या व्यावृत्तिरेव। तस्मात् पुत्रकर्मापरविद्याभिः समुच्चित्यानुष्ठिताभि. त्रिभ्य एतेभ्यो लोकेभ्यो व्यावृत्त. परमात्मविज्ञानेन मोक्षमधिगच्छतीति परम्परया मोक्षार्थान्येव पुत्रादिसाधनानि इच्छन्ति। तेषामपि मुखापिधानाय इयमेव श्रुतिरुत्तरा कृतसप्रत्तिकस्य पुत्रिण कर्मिणः अनात्मविद्याविद. फलप्रदर्शनाय प्रवृत्ता। न च इदमेव फल मोक्षफलमिति शक्य वक्तु, अन्नसबन्धात् मेधातप·कार्यत्वाच्चान्नाना पुनः पुनर्जनयत इति दर्शनात्, 'यद्धैतन्न कुर्यात्क्षीयेत ह' इति च क्षयश्रवणात्, शरीर ज्योतीरूपमिति च कार्यकरणत्वोपपत्ते., 'त्रय वा इदम्' इति च नामरूपकर्मात्मकत्वेनोपसहारात्। न च इदमेव साधनत्रय सहतं सत् कस्यचिन्मोक्षार्थे कस्यचित् अनात्मफलमित्यस्मादेव वाक्यादवगन्तु शक्य, पुत्रादिसाधनानां अनात्मफलदर्शनेनैव उपक्षीणत्वाद्वाक्यस्य।

(१) बृउ १।५।१८, शब्रा १४।४।३।२७

पृथिव्यै पृथिव्या च एन अग्नेश्च दैवी अधिदैवात्मिका वाक् एन कृतसप्रत्तिक आविशति । सर्वेषा हि वाच उपादानभूता दैवी वाक् पृथिव्यग्निलक्षणा । सा ह्याध्यात्मिकासङ्गादिदोषैर्निरुद्धा । विदुषस्तद्दोषापगमे आवरणभङ्ग इवोदक प्रदीपप्रकाशवच्च व्याप्नोति । तदेतदुच्यते — पृथिव्या अग्नेश्चैन दैवी वागाविशतीति । सा च दैवी वाक् अनृतादिदोषरहिता शुद्धा, यया वाचा दैव्या यद्यदेव आत्मने परस्मै वा वदति तत्तत् भवति — अमोघा अप्रतिबद्धा अस्य वाग्भवतीत्यर्थः ।

शकर

( २ ) पृथिव्याश्चाग्नेश्च दैवी वाक्परलोकगत पुरुषमाविशति । एतस्यै वाचः पृथिवी शरीर ज्योतीरूपमसौ चन्द्र इति प्रागुक्तेर्वाच पृथिव्यायतनत्वादग्न्यधिष्ठितत्वाच्च ताभ्या हेतुभ्या दैवी वागाविशतीत्यर्थ. ।

रग

[१]दिवश्चैनमादित्याच्च दैव मन आविशति । तद्वै दैव मनो येनानन्द्येव भवत्यथो न शोचति ॥

(१) तच्च दैव मनः, स्वभावनिर्मलत्वात् । येन मनसा असौ आनन्द्येव भवति सुख्येव भवति । अथो अपि न शोचति, शोकादिनिमित्तासयोगात् ।

शकर

( २ ) अमोघसकल्पमानन्दैककारण मनो दैव मन इत्यर्थ ।

रग.

[२]अद्भ्यश्चैन चन्द्रमसश्च दैव. प्राण आविशति । स वै दैव. प्राणो य सचरꣳश्चासचरꣳश्च न व्यथतेऽथो न रिष्यति । स एववित्सर्वेषा भूतानामात्मा भवति । यथैषा देवतैवꣳ स । यथैता देवताꣳ सर्वाणि भूतान्यवन्त्येवꣳ हैवंविदꣳ सर्वाणि भूतान्यवन्ति । यदु किंचेमा प्रजा' शोचन्त्यमैवासा तद्भवति । पुण्यमेवामु गच्छति । न ह वै देवान्पाप गच्छति ॥

(१) तथा अद्भ्यश्चैन चन्द्रमसश्च दैवः प्राण आविशति । स वै दैव. प्राण किंलक्षण इत्युच्यते—यः सचरन् प्राणिभेदेषु असचरन् समष्टिव्यष्टिरूपेण—अथवा सचरन् जङ्गमेषु असचरन्स्थावरेषु—न व्यथते न दु'खनिमित्तेन भयेन युज्यते । अथो अपि न रिष्यति न विनश्यति न हिंसामापद्यते । स —यो यथोक्तमेव वेत्ति ज्यन्नात्मदर्शन स.—सर्वेषा भूतानामात्मा भवति, सर्वेषा भूताना प्राणो भवति, सर्वेषा भूतानां मनो भवति, सर्वेषा भूताना वाग्भवति—इत्येव सर्वभूतात्मतया सर्वज्ञो भवतीत्यर्थ —सर्वकृच्च । यथैषा पूर्वसिद्धा हिरण्यगर्भदेवता एवमेव नास्य सर्वज्ञत्वे सर्वकृत्त्वे वा क्वचित्प्रतिघातः । स इति दार्ष्टान्तिकनिर्देशः । किंच यथैता हिरण्यगर्भदेवता इज्यादिभि. सर्वाणि भूतान्यवन्ति पालयन्ति पूजयन्ति एव ह एवविद सर्वाणि भूतान्यवन्ति—इज्यादिलक्षणा पूजां सतत प्रयुञ्जत इत्यर्थः ।

अथेदमाशङ्क्यते—सर्वप्राणिनामात्मा भवतीत्युक्तम् । तस्य च सर्वप्राणिकार्यकरणात्मत्वे सर्वप्राणिसुखदुःखैः सबध्येतेति — तन्न । अपरिच्छिन्नबुद्धित्वात्—परिच्छिन्नात्मबुद्धीना ह्याक्रोशादौ दु खसबन्धो दृष्ट'—अनेनाहमाक्रुष्ट इति । अस्य तु सर्वात्मनो य आक्रुश्यते यश्चाक्रोशति तयोरात्मत्वबुद्धिविशेषाभावात् न तन्निमित्त दु खमुपपद्यते । मरणदु खवच्च निमित्ताभावात्— यथा हि कस्मिंश्चिन्मृते कस्यचिद्दु.खमुत्पद्यते — ममासौ पुत्रो भ्राता चेति — पुत्रादिनिमित्त, तन्निमित्ताभावे तन्मरणदर्शिनोऽपि नैव दु खमुपजायते, तथा ईश्वरस्यापि अपरिच्छिन्नात्मनो ममतवतादिदु.खनिमित्तमिथ्याज्ञानादिदोषाभावात् नैव दु.खमुपजायते । तदेतदुच्यते — यदु किंच यत्किंच इमा. प्रजाः शोचन्ति अमैव सहैव प्रजाभि तच्छोकादिनिमित्त दु.ख सयुक्त भवति आसां प्रजानां परिच्छिन्नबुद्धिजनितत्वात् । सर्वात्मनस्तु केन सह किं सयुक्त भवेत् वियुक्त वा । अमु तु प्राजापत्ये पदे वर्तमान पुण्यमेव शुभमव — फलमभिप्रेत पुण्यमिति — निरतिशय हि तेन पुण्य कृत, तेन तत्फलमेव गच्छति । न ह वै देवान्पाप गच्छति, पाप-

(१) बृउ १।५।१९, शब्रा १४।४।३।२८

(२) बृउ १।५।२०, शब्रा १४।४।३।२९ स एव ( स एष एव ), ब्रशकर २।४।१६, ४।४।२१, मध्व स एव ( स य एवं ), वल्लभ. २।४।१५, विज्ञान ४।४।२१ हैवविदꣳ ( हैनꣳ )

फलस्यावसराभावात् — पापफलं दुःखं न गच्छतीत्यर्थः । शंकर

(२) 'अद्भ्यश्चैनं चन्द्रमसश्च . ' अप्रतिहतगमनादिव्यापारहेतुर्हिंसानर्हः प्राणो दैवः प्राण इत्यर्थः । देवताप्रसादादेवास्य मनोवाक्प्राणा एवंविधा भवन्तीत्यर्थः । एवं जीवोपकरणानां तेषां परलोके शक्त्यतिशयमुक्त्वैवंविदः फलमाह — 'स एवंवित्सर्वेषाम्' इत्यादि । यथा वागिन्द्रियादिदेवता सर्वेषां भूतानामात्मा भवति । सर्वभूतात्मत्वं नाम सर्वभूतान्तर्वर्तित्वं तत्प्रेरणसामर्थ्यम् । एवमयमपि विद्वांस्तथा भवतीत्यर्थः ।·'स यथैतां' इत्यादि । यथा वागादिदेवतां सर्वेऽपि पूजयन्ति एवमेवंविदमपि पूजयन्तीत्यर्थः । नन्वेवंविदः सर्वभूतप्रेरकत्वे तानि-तानि भूतानि तत्तत्पापकर्मसु प्रेरयतः पापं प्रसज्येतेत्याशङ्कयाऽऽह — यदु किंचेमाः इति । शोचन्ति शोचयन्ति । तत्प्रजाशोचयितृत्वकृतं पापमासां प्रजानामेव भवति । अमा सह सद्य इत्यर्थः । तत्र हेतुमाह— 'पुण्यमेवामुं गच्छति न ह' इत्यादि । तत्तत्पापकर्मसु प्रवर्तकानामपीन्द्रियाधिष्ठातृदेवानां तत्तत्पापं न प्राप्नोति, तादृशो महिमा तेषामतस्तद्विदोऽपि न प्रेरणकृतपापप्रसक्तिरिति भावः । रंग०

(३) पृथिव्यादिस्थिता देवाः सरस्वत्यादिकास्त्रयः । अधिकावेशतो देवेष्वतो देवा इति स्मृताः । यदावेशात्सर्वमुक्तं सत्यं देवी तु वाग्धि सा । यदावेशान्न दुःखी स्यादानन्दी दैवतं मनः । यदावेशात्सर्वकार्येष्वम्लानः प्राण एव सः । सर्वसामर्थ्ययुक्तः स्यान्न म्रियेत कदाचन । एवं सप्तान्नविन्मुक्तस्त्रिभिराविष्ट एव तु । सर्वेषु व्याप्तिमन्वेति न दुःखी प्राणिषु स्थितः । सप्तान्नोपासनायोग्या देवा एकान्ततो हि यत् । देवांश्च पापं नाप्नोति तस्मात्पापं न तस्य तु । देवा मनुष्यतामंशैरासां ये पुत्रतः फलम् । स्यात्तेषामेव चामुक्तेर्मुक्तानां न तु किंचन । मुक्तानां दैववागादेरावेशः सम्प्रकीर्तितः । प्राणज्ञानं यथावन्ति रहस्यमिति सर्वदा । एवं मुक्तस्वरूपं चाप्यवन्त्येव रहस्यतः । उत्तमः सर्वदेवेषु प्राण एव हरेस्तनुः । चतुर्मुखस्य प्राणस्य न विशेषोऽस्ति कश्चन । तस्माद्विष्णोर्व्रतस्यानु नित्यं प्राणव्रतं चरेत् । हंसोपास्तिः श्वासरूपे तयोर्व्रतमुदीरितम् । हंसरूपौ हि तौ देवौ श्वासोच्छ्वासप्रवर्तकौ । तस्मात्प्राण्यादपान्याच्च तद्रूपं सस्मरेत्सदा । नान्यस्योपासनं कुर्यात्तद्भृत्यत्वं विना क्वचित् । इन्द्रियाणि ससर्जादौ वासुदेवः प्रजापतिः । अध्यात्ममिन्द्रियाण्याहुरधिदैवं तु देवताः । अध्यात्मम ग्निर्वाङ्नामा चक्षुरादित्य उच्यते । श्रोत्रं तु चन्द्रमा नाम मनः स्थूलं तु वासवः । येन यज्ञादिकं कुर्याच्छेषरुद्रविपास्तथा । मनः सूक्ष्मं ज्ञानयोग्यं शेषो व्याख्यानगोचरम् । रुद्रस्तु मननाख्यं च गरुडो ध्यानगोचरम् । वायुः प्राण इति प्रोक्तो येन सर्वं नियम्यते ॥

मध्व०

मुख्यप्राणोपासनाव्रतविशेषः

अथातो व्रतमीमाꣳसा । प्रजापतिर्ह कर्माणि ससृजे । तानि सृष्टान्यन्योन्येनास्पर्धन्त । वदिष्याम्येवाहमिति वाग्दध्रे । द्रक्ष्याम्यहमिति चक्षुः । श्रोष्याम्यहमिति श्रोत्रम् । एवमन्यानि कर्माणि यथाकर्म । तानि मृत्युः श्रमो भूत्वोपयेमे । तान्याप्नोत् । तान्याप्त्वा मृत्युरवारुन्ध । तस्माच्छ्राम्यत्येव वाक् । श्राम्यति चक्षुः । श्राम्यति श्रोत्रम् । अथेममेव नाप्नोद्योऽयं मध्यमः प्राणः । तानि ज्ञातुं दध्रिरे । अयं वै नः श्रेष्ठो यः संचरꣳश्चासंचरꣳश्च न व्यथतेऽथो न रिष्यति । हन्तास्यैव सर्वे रूपमसामेति । त एतस्यैव सर्वे रूपमभवन् । तस्मादेत एतेनाख्यायन्ते प्राणा इति । तेन ह वाव तत्कुलमाचक्षते यस्मिन्कुले भवति य एवं वेद । य उ हैवंविदा स्पर्धतेऽनुशुष्यति । अनुशुष्य हैवान्ततो म्रियत इत्यध्यात्मम् ॥

(१) अथात अनन्तरं व्रतमीमांसा उपासनकर्मविचारणेत्यर्थः । एषां प्राणानां कस्य कर्म व्रतत्वेन

(१) बृउ १।५।२१, शब्रा १४।४।३।३०-३२ रूपमसामेति (रूपं भवामेति) माचक्षते (माख्यायते) (ऽनुशुष्यति०), अशंकर २।४।१७, १९, ३।३।४३, भास्कर २।४।१७, रंग पतिर्ह (पतिर्हि) मन्यानि (मन्यान्यपि), रामानुज २।४।९, १६, मध्व रवारुन्ध (रवारुन्धत्) (ऽनुशुष्यति०), अमध्व १।३।२४, श्रीकर २।४।८, १३, १४, विज्ञान. २।४।१, बलदेव. २।४।१७.

धारयितव्यमिति मीमासा प्रवर्तते । तत्र प्रजापति ह —— हशब्द किलार्थे——प्रजापति. किल प्रजा सृष्ट्वा कर्माणि करणानि वागादीनि —— कर्मार्थानि हि तानीति कर्माणीत्युच्यन्ते —— ससृजे सृष्टवान् वागादीनि करणानीत्यर्थ. । तानि पुन. सृष्टानि अन्योन्येन इतरेतर अस्पर्धन्त स्पर्धां सघर्षं चक्रुः । कथम्? वदिष्याम्येव स्वव्यापाराद्वदनादनुपरतैव अह स्यामिति वाग्व्रत दध्रे धृतवती—- यदन्योऽपि मत्समोऽस्ति स्वव्यापारादनुपरन्तु शक्त., सोऽपि दर्शयत्वात्मनो वीर्यमिति । तथा द्रक्ष्याम्यहमिति चक्षु । श्रोष्याम्यहमिति श्रोत्रम् । एवमन्यानि कर्माणि करणानि यथाकर्म —— यत् यत् यस्य कर्म यथाकर्म —— तानि करणानि मृत्युर्मारक. श्रम श्रमरूपी भूत्वा उपयेमे सजग्राह । कथम्? तानि करणानि स्वव्यापारे प्रवृत्तानि आप्नोत् श्रमरूपेण आत्मान दर्शितवान् । आप्त्वा च तानि अवारुन्ध अवरोध कृतवान् मृत्यु. स्वकर्मभ्य. प्रच्यावितवानित्यर्थ । तस्माद्यत्वेऽपि वदने स्वकर्माणि प्रवृत्ता वाक् श्राम्यत्येव श्रमरूपिणा मृत्युना सयुक्ता स्वकर्मत प्रच्यवते । तथा श्राम्यति चक्षु । श्राम्यति श्रोत्रम् । अथेममेव मुख्य प्राण न आप्नोत् न प्राप्तवान्मृत्यु श्रमरूपी —— योऽय मध्यम प्राण तम् । तेनाद्यत्वेऽप्यश्रान्त एव स्वकर्मणि प्रवर्तते । तानीतराणि करणानि त ज्ञातु दध्रिरे धृतवन्ति मनः । अय वै न अस्माक मध्ये श्रेष्ठ. प्रशस्यतम अभ्यधिकः, यस्मात् य सचरश्चासचरश्च न व्यथते, अथो न रिष्यति, हन्त इदानीमस्यैव प्राणस्य सर्वे वय रूपमसाम प्राण मात्मत्वेन प्रतिपद्येमहि —— एव विनिश्चित्य ते एतस्यैव सर्वे रूपमभवन् प्राणरूपमेव आत्मत्वेन प्रतिपन्नाः प्राणव्रतमेव दध्रिरे—— अस्मद्व्रतानि न मृत्योर्वारणाय पर्याप्तानीति । यस्मात्प्राणेन रूपेण रूपवन्तीतराणि करणानि चलनात्मना स्वेन च प्रकाशात्मना, न हि प्राणादन्यत्र चलनात्मकत्वोपपत्ति. । चलनव्यापारपूर्वकाण्येव हि सर्वदा स्वव्यापारेषु लक्ष्यन्ते—तस्मात् एते वागादय एतेन प्राणाभिधानेन आख्यायन्ते अभिधीयन्ते——प्राणा इत्येवम् । य एव प्राणात्मता सर्वकरणाना वेत्ति प्राणशब्दाभिधेयत्व च, तेन ह वाव तेनैव विदुषा तत्कुलमाचक्षते लौकिका. । यस्मिन्कुले स विद्वान् जातो भवति——तत्कुल विद्वन्नाम्नैव प्रथित भवति—— अमुष्येद कुलमिति——यथा तापत्य इति । य एव यथोक्त वेद वागादीना प्राणरूपता प्राणाख्यत्व च, तस्यैतत्फलम् । किंच य कश्चित् उ ह एवविदा प्राणात्मदर्शिना स्पर्धते तत्प्रतिपक्षी सन् स. अस्मिन्नेव शरीरे अनुशुष्यति शोषमुपगच्छति । अनुशुष्य हैव शोष गत्वैव अन्ततः अन्ते म्रियते, न सहसा अनुपद्रुतो म्रियते । इत्येवमुक्तमध्यात्म प्राणात्मदर्शनमिति उक्तोपसहार. अधिदैवतप्रदर्शनाथ. । शकर

( २ ) 'त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्'—— यथैकस्यैव प्राणस्य प्राणाद्या पञ्चवृत्तय· एव वागाद्या अप्येकादशेत्येव प्राप्ते ब्रूम· । तत्त्वान्तराण्येव प्राणाद्वागादीनीति । कुत । व्यपदेशभेदात् । कोऽय व्यपदेशभेद । ते प्रकृता प्राणा. श्रेष्ठ वर्जयित्वाऽवशिष्टा एकादशेन्द्रियाणीत्युच्यन्ते, श्रुतावेव व्यपदेशदर्शनात् । 'एतस्माज्जायते प्राणो मन· सर्वेन्द्रियाणि च' ( मुउ २।१।३ ) इति ह्येवजातीयकेषु प्रदेशेषु पृथक्प्राणो व्यपदिश्यते पृथक् चेन्द्रियाणि । २।४।१७

वागादिषु परिस्पन्दलाभस्य प्राणायत्तत्व तद्रूप भवन वागादीनामिति मन्तव्य न तादात्म्यम् । अत एव च प्राणशब्दस्येन्द्रियेषु लाक्षणिकत्वसिद्धि· ।

ब्रशकर २।४।१९

( ३ ) धृञ् धारणे इति धातु । दध्रे धृतवती । अय मुख्य प्राणोऽत्र सचाररूप. सचारेऽपि न व्यथते । अथोशब्दोऽप्यर्थ. । न रिष्यते न हिंस्यते अपि । तस्मादस्यैव मुख्यप्राणस्य सर्वे वय रूपमसाम तदधीनप्रवृत्तयो भवेमेति निश्चित्यैतस्यैव मुख्यप्राणस्येतरे प्राणास्तदधीनप्रवृत्तयोऽभवन्नित्यर्थ. । *रग.

( ४ ) रूपमभवञ्छरीरमभवस्तदधीनप्रवृत्तयोऽभवन्नित्यर्थ· । रामानुज २।४।१६

**अथाधिदैवतम् । ज्वलिष्याम्येवाहमित्यग्निर्दध्रे । तप्स्याम्यहमित्यादित्य· । भास्याम्यहमिति चन्द्रमाः ।**

---

* शेषपदार्थवाक्यार्थौ शंकरवत् ।

(१) **बृउ** १।५।२२, **शब्रा** १४।४।३।३३ **दैवतम्** ( देवतम् ), **ब्रशाकर** २।३।८, ३।३।४३, **भास्कर.**

**एवमन्या देवता यथादैवतम् । स यथैषा प्राणानां मध्यम प्राण एवमेतासा देवताना वायु । म्लोचन्ति ह्यन्या देवता न वायु । सैषाऽनस्तमिता देवता यद्वायु॰ ॥**

(१) अथ अनन्तर अधिदैवत देवताविषय दर्शनमुच्यते । कस्य देवताविशेषस्य व्रतधारण श्रेय इति मीमास्यते । अध्यात्मवत्सर्वम् । ज्वलिष्याम्येवाहमित्यग्निर्दध्रे । तप्स्याम्यहमित्यादित्य । भास्याम्यहमिति चन्द्रमा । एव मन्या देवता यथादैवतम् । स अध्यात्म वागादीनामेषा प्राणानां मध्ये मध्यत. प्राणो मृत्युना अनात्तः स्वकर्मणो न प्रच्यावित. स्वेन प्राणव्रतेनाभग्नव्रतो यथा, एव एतासामग्न्यादीना देवताना वायुरपि । म्लोचन्ति अस्त यन्ति स्वकर्मभ्य उपरमन्ते—यथा अध्यात्म वागादयोऽन्या देवता अग्न्याद्या. । न वायुरस्त याति—यथा मध्यम प्राण. । अत सैषा अनस्तमिता देवता यद्वायु योऽय वायु । एवमध्यात्ममधिदैव च मीमासित्वा निर्धारित--प्राणवाय्वात्मनोर्व्रतमभग्नमिति ।

शकर

(२) 'एतेन मातरिश्वा व्याख्यात.' --एतेन वियद्व्याख्यानेन मातरिश्वाऽपि वियदाश्रयो वायुर्व्याख्यात॰ । न वायुरुत्पद्यते छन्दोगानामुत्पत्तिप्रकरणेऽनाम्नानादित्येकः पक्ष । अस्ति तु तैत्तिरीयाणामुत्पत्तिप्रकरणे आम्नानम् ' आकाशाद्वायु ' इति पक्षान्तरम् । ततश्च श्रुत्योर्विप्रतिषेधे सति गौणी वायोरुत्पत्तिश्रुतिसभवादित्यपरोऽभिप्राय । असभवश्च सैषाऽनस्तमिता देवता यद्वायुरित्यस्तमयप्रतिषेधादमृतत्वादिश्रवणाच्च । प्रतिज्ञानुपरोधाद्यावद्विकार च विभागाभ्युपगमादुत्पद्यते वायुरिति सिद्धान्त॰ । अस्तमयप्रतिषेधोऽपरविद्याविषय आपेक्षिकः । अग्न्यादीनामिव वायोरस्तमयाभावात् ।

ब्रशकर २।३।८

(३) अथाधिदैवतमिति । उपासनप्रकार उच्यत इति शेष. । अहमेव ज्वलिष्यामि मत्सम. कोऽपि नास्तीति धृतवानित्यर्थ. । श्रोत्राद्यभिमानिनो दिगादिदेवतास्तत्तद्देवतावृत्तिमनतिक्रम्याभिमेनिर इत्यर्थ. ।

रग.

(४) ' सैषाऽनस्तमिता देवता ' इति भौतिकवायुव्यावृत्त्यर्थमलौकिकपदम् । वल्लभ. २।३।८

**अथैष श्लोको भवति । यतश्चोदेति सूर्योऽस्तं यत्र च गच्छतीति । प्राणाद्वा एष उदेति प्राणेऽस्तमेति । त देवाश्चक्रिरे धर्मं॰ स एवाद्य स उ श्व इति । यद्वा एतेऽमुर्ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति । तस्मादेकमेव व्रत चरेत्प्राण्याच्चैवापान्याच्च । नेन्मा पाप्मा मृत्युराप्नुवदिति यद्यु चरेत्समापिपयिषेत्तेनो एतस्यै देवतायै सायुज्य॰ सलोकतां जयति ॥**

(१) अथैतस्यैवार्थस्य प्रकाशक. एष श्लोको मन्त्रो भवति । यतश्च यस्माद्वायो. उदेति उद्गच्छति सूय , अध्यात्म च चक्षुरात्मना प्राणात् — अस्त च यत्र वायौ प्राणे च गच्छति अपरसध्यासमये स्वापसमये च पुरुषस्य-- त देवा. त धर्मं देवाः चक्रिरे धृतवन्त. वागादयोऽग्न्यादयश्च प्राणव्रत वायुव्रत च पुरा विचार्य । स एव अद्य इदानीं श्वोऽपि भविष्यत्यपि काले अनुवर्त्यते अनुवर्तिष्यते च देवैरित्यभिप्राय. । तत्रेम मन्त्र सक्षेपतो व्याचष्टे ब्राह्मण— प्राणाद्वा एष सूर्य उदेति प्राणेऽस्तमेति । त देवाश्चक्रिरे धर्मं स एवाद्य स उ श्व इत्यस्य कोऽर्थ इत्युच्यते—यत् वै एते व्रत अमुर्हि अमुष्मिन्काले वागादयोऽग्न्यादयश्च प्राणव्रत वायुव्रत च अध्रियन्त, तदेवाद्यापि कुर्वन्ति अनुवर्तन्ते अनुवर्तिष्यन्ते च । व्रत तयोरभग्नमेव । यत्तु वागादिव्रत अग्न्यादिव्रत च तद्भग्नमेव, तेषां अस्तमयकाले स्वापकाले च वायौ प्राणे च निम्लुक्तिदर्शनात् । अथैतदन्यत्रोक्त — ' यदा वै पुरुष स्वपिति प्राण तर्हि वागप्येति । प्राण मन । प्राण चक्षु । प्राण श्रोत्रम् । यदा प्रबुध्यते प्राणा-

---

२।३।८; **रग** चन्ति ह्यन्या ( चन्तीह्यन्या ), **रामानुज** २।४।१, **मध्व** सैषाऽनस्त ( सैषा नास्त ), **श्रीकठ.** २।३।८, **श्रीकर** २।३।७, २।४।१, **वल्लभ** २।३।८

(१) **बृउ** १।५।२३, **शब्रा** १४।४।३।३४ राप्नुवदिति ( राप्नवदिति ) जयति+ ( य एव वेद ), **ब्रशकर** ३।३।४३, ४।४।२१, **रग** ऽस्तमेति (ऽस्तमेतीति )यद्यु चरे ( यद्युच्चरे ), **मध्व** यद्यु चरे ( यद्युच्चरे ), **विज्ञान.** ४।४।२१ तेनो ( तेन )

देवाधि पुनर्जायन्ते इत्यध्यात्मम्। अथाधिदैवतम्। यदा वा अग्निरनुगच्छति वायु तर्ह्यनूद्वाति। तस्मादेनमुदवासीदित्याहुः। वायु ह्यनूद्वाति यदादित्योऽस्तमेति वायु तर्हि प्रविशति। वायु चन्द्रमा। वायौ दिश प्रतिष्ठिताः। वायोरेवाधि पुनर्जायन्ते' (शब्रा १०।३।३।६–८) इति। यस्मात् एतदेव व्रत वागादिषु अग्न्यादिषु च अनुगत यदेतत् वायोश्च प्राणस्य च परिस्पन्दात्मकत्व सर्वै. देवैरनुवर्त्यमान व्रत —तस्मात् अन्योऽप्येकमेव व्रत चरेत्। किं तत्? प्राण्यात् प्राणनव्यापार कुर्यात् अपान्यात् अपाननव्यापार च। न हि प्राणापानव्यापारस्य प्राणनापाननलक्षणस्योपरमोऽस्ति। तस्मात्तदेव एक व्रत चरेत् हित्वेन्द्रियान्तरव्यापार—नेत् मा मा पाप्मा मृत्युः श्रमरूपी आप्नुवत् आप्नुयात् —– नेच्छब्दः परिभये —– यद्यहमस्माद्व्रतात्प्रच्युत. स्यां, ग्रस्त एवाह मृत्युनेत्येव त्रस्तो धारयेत्प्राणव्रतमित्यभिप्रायः। यदि कदाचित् उ चरेत् प्रारभेत प्राणव्रत, समापिपयिषेत् समापयितुमिच्छेत्। यदि हि अस्माद्व्रताद्रुपरमेत् प्राण. परिभूत. स्यात् देवाश्च। तस्मात्समापयेदेव। तेन उ तेन अनेन व्रतेन प्राणात्मप्रतिपत्त्या सर्वभूतेषु—–वागादय. अग्न्यादयश्च मदात्मका एव, अह प्राण आत्मा सर्वपरिस्पन्दकृत् एव तेनानेन व्रतधारणेन एतस्या एव प्राणदेवताया. सायुज्य सयुग्भाव एकात्मत्व सलोकता समानलोकता वा एकस्थानत्व, विज्ञानमान्द्यापेक्षमेतत्—–जयति प्राप्नोतीति।

शकर

(२) 'भोगमात्रसाम्यलिङ्गाच्च' — इतश्च न निरङ्कुश विकारालम्बनानामैश्वर्यं यस्माद्भोगमात्रमेषामनादिसिद्धेनेश्वरेण समानमिति श्रूयते।

ब्रशकर ४।४।२१

(३) अत्र प्राणो वायुः। वायुप्रेरणाधीनत्वादादित्याद्युदयानामिति भावः। उत्तरार्धमाह — त देवाश्च क्रिर इति। त प्राणमेव देवा धर्मं चक्रिरे प्राणोपासनमेव श्रेय.साधनमिति निश्चितवन्तः। स एव धर्मोऽद्याप्यनुष्ठेय इति। यद्वा एत इति। वैशब्दोऽवधारणे। यद्यस्मात्कारणादेते देवा वागाद्या देवा मुख्यप्राणममुर्हि अमुष्मिन्काले पूर्वकाल इति यावत्। अम्रियन्तोपास्यत्वेनावधृतवन्त। तस्मादद्यापि तदेव कुर्वन्ति। मुख्य प्राणोपासनमेवानुतिष्ठन्तीत्यर्थः। तस्मादेकमेवेति। मुख्यप्राणोपासनमेवानुतिष्ठेदित्यर्थः। प्राण्याच्चैवेति। उपासनारम्भसमये प्राणनापानने तदङ्गतया कुर्यात्। उच्छब्दोऽवधारणे। पाप्मा मृत्युर्नाऽऽप्नुवत्। शत्रन्तोऽय शब्दः। नैवाऽऽप्नुयादिति बुद्ध्येत्यर्थ.।

* रग

(४) † 'त एते भगवत्सृष्टा व्यूदिरेऽध्यात्मसंस्थिता। अधिदैवे ज्वलत्कर्मा वह्निः सूर्यस्तु तापक.। सोम कान्तौ वृष्टिकर्मा वासवः शेष एव तु। पञ्चरात्रप्रवृत्तीशो रुद्रस्तत्स्थक्रियापर.। सर्वप्रवर्तको वायुर्ज्ञानमोक्षप्रदस्तथा। वेदप्रवृत्तिकृद्वीन्द्रस्तेऽधिदैवे च पस्पृधु। अह श्रेयानह श्रेयानिति तानब्रवीद्धरिः। स्वकर्म यस्त्वविश्रान्तः कुर्याच्छ्रेयान्हि व. स्मृत। इति श्रुत्वा ततश्चक्रु कर्म स्व स्वमनारतम्। तानेताञ्छ्रमरूपेण प्राप ब्रह्मा प्रजापति। श्रान्ता स्व भगवत्कर्म न शेकु सर्वदेवताः। वायु तु समशक्तित्वान्नाप ब्रह्मा प्रजापतिः। तेनासौ भगवत्कर्म सर्वं च कृतवान्सदा। श्रमात्पापात्मको मृत्युर्भगवत्कर्मवर्जनात्। अन्यान् देवानवापाशु नैव वायु कदाचन। ते वायु ज्ञातुमैच्छन्त श्रेष्ठोऽयमिति निश्चिताः। त ज्ञात्वा तेन चाविष्टास्तद्भृत्यत्वमुपागता.। तस्मात्प्राणाश्च मरुत इत्येषा नाम संस्थितम्। वायोर्देवा हि जायन्ते लयमेष्यन्ति तत्र च। तस्मान्नित्य तद्व्रताश्च तद्व्रतोऽतो भवेत्सदा। अन्यदेव व्रतारम्भ यदि कुर्यात्समापयेत्। तेनासौ वायुना साक भगवन्तमुपेष्यति॥' इति नारायणश्रुतौ। आनन्त्यैव भवति। न शोचतीत्यतो मुक्त इत्येवावगम्यते।

मध्व

नामरूपकर्मात्मक आत्मा, सत्यस्य सत्यम्

**त्रयं वा इद नाम रूपं कर्म। तेषा नाम्ना वागित्येतदेषामुक्थम्। अतो हि सर्वाणि नामान्युत्तिष्ठन्ति। एतदेषाꣳ साम। एतद्धि सर्वैर्नामभि-**

---

* शेषशब्दार्थवाक्यार्थौ शकरवत्।

† एतद्व्याख्यान बृउ १।५।२१–२३ इत्येतेषा खण्डानाम्।

(१) बृउ १।६।१, शब्रा १४।४।४।१.

**समम् । एतदेषां ब्रह्म । एतद्धि सर्वाणि नामानि बिभर्ति ॥**

( १ ) यदेतदविद्याविषयत्वेन प्रस्तुत साध्यसाधन लक्षण व्याकृतं जगत् प्राणात्मप्राप्त्यन्तोत्कर्षवदपि फल, या चैतस्य व्याकरणात्प्रागवस्था अव्याकृतशब्दवाच्या ––वृक्षबीजवत् सर्वमेतत् त्रय, किं तत्त्रयमित्युच्यते— नाम रूप कर्म चेति अनात्मैव —. न आत्मा यत्साक्षादपरोक्षाद्ब्रह्म । तस्मादस्माद्विरज्येतेत्येवमर्थ· त्रय वा इत्याद्यारम्भ । न ह्यस्मात् अनात्मन. अव्यावृत्तचित्तस्य आत्मानमेव लोक अह ब्रह्मास्मीत्युपासितु बुद्धि प्रवर्तते, बाह्यप्रत्यगात्मप्रवृत्त्योर्विरोधात् । तथा च काठके — 'पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ्पश्यति नान्तरात्मन् । कश्चिद्धीर. प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ ' इत्यादि ।

कथ पुन अस्य व्याकृताव्याकृतस्य क्रियाकारक फलात्मन. ससारस्य नामरूपकर्मात्मकतैव, न पुनरात्मत्व — इत्येतत्सभावयितु शक्यत इति । अत्रोच्यते — तेषां नाम्नां यथोपन्यस्ताना — वागिति शब्दसामान्यमुच्यते, ' य कश्च शब्दो वागेव सा ' इत्युक्तत्वात् वागित्येतस्य शब्दस्य य. अर्थ. शब्दसामान्यमात्र एतत् एतेषा नामविशेषाणा उक्थ कारण उपादान, सैन्धवलवणकणानामिव सैन्धवाचलः । तदाह––अतो हि अस्मान्नामसामान्यात् सर्वाणि नामानि यज्ञदत्तो देवदत्त इत्येवमादिप्रविभागानि उत्तिष्ठन्ति उत्पद्यन्ते प्रविभज्यन्ते, लवणाचलादिव लवणकणाः । कार्यं च कारणेनाव्यतिरिक्तम् । तथा विशेषाणा च सामान्येऽन्तर्भावात् — कथ सामान्यविशेषभाव इति — एतत् शब्दसामान्य एषा नामविशेषाणां साम, समत्वात्साम, सामान्यमित्यर्थः । एतत् हि यस्मात् सर्वैर्नामभिः आत्मविशेषै· समम् । किंच आत्मलाभाविशेषाच्च नामविशेषाणा—यस्य च यस्मादात्मलाभो भवति, स तेनाप्रविभक्तो दृष्टः, यथा घटादीना मृदा । कथ नामविशेषाणामात्मलाभो वाच इत्युच्यते—यत एतदेषां वाक्शब्दवाच्य वस्तु ब्रह्म आत्मा, ततो ह्यात्मलाभो नाम्नां, शब्दव्यतिरिक्तस्वरूपानुपपत्ते. । तत्प्रतिपादयति—एतत् शब्दसामान्य हि यस्मात् शब्दविशेषान् सर्वाणि नामानि बिभर्ति धारयति स्वरूपप्रदानेन । एव कार्यकारणत्वोपपत्ते· सामान्यविशेषोपपत्तेः आत्मप्रदानोपपत्तेश्च नामविशेषाणा शब्दमात्रता सिद्धा । एवमुत्तरयोरपि सर्वं योज्य यथोक्तम् ।

शकर.

( २ ) तेषा नाम्नामिति । तेषामेषां नाम्ना वागितिशब्दनिर्दिष्टमेतद्वस्तूक्थमुत्पादनम् । तदेव प्रदर्शयति— अतो हीति । वागिन्द्रियाधीनत्वात्सर्वेषां नाम्नामभिलापस्य । एतदेषामिति । वागित्येतदेषा नाम्ना साम । तदुपपादयति––एतद्धीति । कार्यानुरूपत्वात्कारणस्य । समत्वमेव सामत्वमिति भाव· । एतदेषामिति । वागित्येतदेषा नाम्ना ब्रह्म । तदुपपादयति—एतद्धि सर्वाणीति । भर्तृत्वमेव बृहत्त्वरूप ब्रह्मत्वम् । भर्तृत्वाद्वा ब्रह्मत्वमिति भाव । एवमुत्तरत्र द्रष्टव्यम् ।

रग.

**अथ रूपाणां चक्षुरित्येतदेषामुक्थम् । अतो हि सर्वाणि रूपाण्युत्तिष्ठन्ति । एतदेषाᳲ साम । एतद्धि सर्वैं रूपै समम् । एतदेषा ब्रह्म । एतद्धि सर्वाणि रूपाणि बिभर्ति ॥**

( १ ) अथेदानीं रूपाणा सितासितप्रभृतीनां–– चक्षुरिति चक्षुर्विषयसामान्य चक्षःशब्दाभिधेय रूपसामान्य प्रकाश्यमात्रमभिधीयते ।

शकर

( २ ) अतो हीति । रूपज्ञानस्य चक्षुरुत्थितत्वाद्रूपस्य चक्षुरुत्थितत्वव्यवहार. । एतदेषामिति । सर्वरूपज्ञानजनकत्वाच्चक्षुष कारणस्य कार्यसमत्वोक्ति. । एतदेषा ब्रह्मेति । चक्षुषो रूपभरण ज्ञानद्वारा द्रष्टव्यम् ।

रग

**अथ कर्मणामात्मेत्येतदेषामुक्थम् । अतो हि सर्वाणि कर्माण्युत्तिष्ठन्ति । एतदेषाᳲ साम । एतद्धि सर्वैः कर्मभि समम् । एतदेषा ब्रह्म ।**

(१) बृउ १।६।२, शब्रा १४।४।४।२, रग अथ ( अथो )

(२) बृउ. १।६।३, शब्रा १४।४।४।३, रग आत्मो एक सन्नेतत्त्रयम् ( आत्मैक सन्नेतस्त्रितयम् ), मध्व आत्मो एक ( आत्मैक )

एतद्धि सर्वाणि कर्माणि बिभर्ति । तदेतत्त्रयँ सदेकमयमात्मा । आत्मो एक सन्नेतत्त्रयम् । तदेतदमृतँ सत्येन च्छन्नम् । प्राणो वा अमृतम् । नामरूपे सत्यम् । ताभ्यामय प्राणश्छन्न ॥

( १ ) अथेदानीं सर्वकर्मविशेषाणां मननदर्शनात्मकाना चलनात्मकाना च क्रियासामान्यमात्रेऽन्तर्भाव उच्यते । कथम् । सर्वेषा कर्मविशेषाणा, आत्मा शरीर सामान्य आत्मा — आत्मन. कर्म आत्मेत्युच्यते । आत्मना हि शरीरेण कर्म करोति — इत्युक्तम् । शरीरे च सर्वे कर्माभिव्यज्यते । अत. तात्स्थ्यात् तच्छब्द कर्म — कर्मसामान्यमात्र सर्वेषामुक्थमित्यादि पूर्ववत् । तदेतद्यथोक्त नाम रूप कर्म त्रय इतरेतराश्रय इतरेतराभिव्यक्तिकारण इतरेतरप्रलय सहत — त्रिदण्डविष्टम्भवत् — सत् एकम् । केनात्मनैकत्वमित्युच्यते — अयमात्मा अय पिण्ड. कार्यकरणात्मस घात तथा अन्नत्रये व्याख्यातः— ' एतन्मयो वा अयमात्मा इत्यादिना । एतावद्धीद सर्वे व्याकृतमव्याकृत च यदुत नाम रूप कर्मेति । आत्मा उ एकोऽय कार्यकरणसघात. सन् अध्यात्माधिभूताधिदैवभावेन व्यवस्थित एतदेव त्रय नाम रूप कर्मेति । तदेतत् वक्ष्यमाणम् । अमृत सत्येन छन्नमित्येतस्य वाक्याथमाह — प्राणो वा अमृत करणात्मक. अन्तरुपष्टम्भक. आत्मभूत अमृत अविनाशी । नामरूपे सत्य कार्यात्मके शरीरावस्थे । क्रियात्मकस्तु प्राण तयोरुपष्टम्भक बाह्याभ्या शरीरात्मकाभ्यामुपजनापायधर्मिभ्या मर्त्याभ्या छन्न अप्रकाशीकृत । एतदेव ससारसतत्त्वमविद्याविषय प्रदर्शितम् । अत ऊर्ध्वं विद्याविषय आत्मा अधिगन्तव्य इति चतुर्थ आरभ्यते । शकर

( २ ) अथ कर्मणामात्मेति । अत्र कर्मशब्द. पुण्यपापात्मककर्मपर । आत्मशब्दो जीवपर । तदेतत्त्रयमिति । नामरूपकर्मलक्षणमेतत्त्रितय सदेकमयमात्मा । नामरूपकर्मण्यात्मनाऽगृहीतविवेकानि पामराणामेकमिव भवन्तीत्यर्थ । तदेतद्द्रढयति — आत्मैक इति । विवेकिना त्रयमेतत् । अविवेकिनामेक आत्मेत्यर्थ । तदेतदमृतमिति । तदेतद्याचष्टे — प्राणो वेति । रग.

( ३ ) सहैव माति जानातीति समम् । आत्मा प्राण. नामरूपयोररि प्राणाधीनत्वादेकमित्युच्यते । 'प्राणो वायुरिति प्रोक्तस्तत्पत्नी नाम भारती । रूप तु तत्सुतो रुद्रो वशे प्राणस्य तद्द्वयम् । अमृतो वायुरुद्दिष्टो नित्यज्ञानात्मकत्वत । सत्य यथार्थवक्तृत्वाद्धारनी रुद्र एव च ॥' इति । 'रुद्रे वेदेषु च प्राण प्रविष्टश्छादित. सदा । सत्य इत्युच्यते नित्य स्वरूपेणामृतः स्मृत. ॥' इति च ब्राह्मणम् । मध्व.

इति प्रथमोऽध्याय ॥

---

## द्वितीयोऽध्यायः

( ब्रह्मविद्या गार्ग्याजातशत्रुसवादरूपा )

आदित्यचन्द्रविद्युदाकाशवाय्वग्न्यबादर्शासुदिक्छायात्मसु स्थिता पुरुषा न ब्रह्म, आत्मा सुषुप्तिप्रमाणलब्ध विज्ञानमय पुरुष सर्वेन्द्रियवशी ऊर्णनाभिरिव तन्तूद्गमने अग्निरिव विस्फुलिङ्गव्युच्चरणे विश्वोद्भवकारण, सत्यस्य सत्यम्

दृप्तबालाकिर्हानूचानो गार्ग्य आस । स होवाचाजातशत्रुं काश्य ब्रह्म ते ब्रवाणीति । स होवाचाजातशत्रु' सहस्रमेतस्या वाचि दद्म । जनको जनक इति वै जना धावन्तीति ॥

अविद्याविषय. सर्व एव साध्यसाधनादिभेदविशेषविनियोगेन व्याख्यातः आ तृतीयाध्यायपरिसमाप्तेः । स च व्याख्यातोऽविद्याविषय सर्व एव द्विप्रकार —अन्तःप्राण उपष्टम्भको गृहस्येव स्तम्भादिलक्षण' प्रकाशकोऽमृत , बाह्यश्च कार्यलक्षणोऽप्रकाशक उपजनापायधर्मक' तृणकुशमृत्तिकासमो गृहस्येव सत्यशब्दवाच्यो मर्त्य', तेन अमृतशब्दवाच्यः प्राणः छन्न इति च उपसहृतम् । स एव च प्राणो बाह्या-

(१) बृउ २।१।१, शब्रा १४।५।१।१, ब्रशकर. ३।२।२२.

घारभेदेष्वनेकधा॰ विस्तृत॰ । प्राण एको देव इत्युच्यते । तस्यैव बाह्य पिण्ड एक॰ साधारण.—विराट् वैश्वानर आत्मा पुरुषविध. प्रजापति क हिरण्यगर्भः—इत्यादिभिः पिण्डप्रधानै शब्दैराख्यायते सूर्यादिप्रविभक्तकरणः। एक च अनेक च ब्रह्म एतावदेव, नात॰ परमस्ति प्रत्येक च शरीरभेदेषु परिसमाप्त चेतनावत् कर्तृ भोक्तृ च इति अविद्याविषयमेव आत्मत्वेनोपगतो गार्ग्यो ब्राह्मणो वक्ता उपस्थाप्यते । तद्विपरीतात्मदृक् अजातशत्रु श्रोता। एव हि यतः पूर्वपक्षसिद्धान्ताख्यायिकारूपेण समर्प्यमाणोऽर्थ श्रोतुश्चित्तस्य वशमेति। विपर्यये हि तर्कशास्त्रवत् केवलार्थानुगमवाक्यै समर्प्यमाणो दुर्विज्ञेयः स्यात् अत्यन्तसूक्ष्मत्वाद्वस्तुन. । तथा च काठके—‘ श्रवणायापि बहुभिर्यो न लभ्य. ’ इत्यादिवाक्यै. सुसस्कृतदेवबुद्धिगम्यत्व सामान्यमात्रबुद्ध्यगम्यत्व च सप्रपञ्च दर्शितम् । ‘ आचार्यवान्पुरुषो वेद ’ ‘ आचार्याद्धैव विद्या ’ इति च छान्दोग्ये। ‘ उपदेक्ष्यन्ति ते ज्ञान ज्ञानिनस्तत्त्वदर्शिन ’ इति च गीतासु । इहापि च शाकल्ययाज्ञवल्क्यसवादेनातिगह्वरत्व महता सरम्भेण ब्रह्मणो वक्ष्यति — तस्मात् श्लिष्ट एव आख्यायिकारूपेण पूर्वपक्षसिद्धान्तरूपमापाद्य वस्तुसमर्पणार्थं आरम्भः। आचारविध्युपदेशार्थश्च — एवमाचारवतोर्वक्तृश्रोत्रोराख्यायिकानुगतोऽर्थोऽवगम्यते। केवलतर्कबुद्धिनिषेधार्था च आख्यायिका— ‘ नैषा तर्केण मतिरापनेया ’ ‘ न तर्कशास्त्र दग्धाय ’ इति श्रुतिस्मृतिभ्याम् । श्रद्धा च ब्रह्मविज्ञाने परम साधनमित्याख्यायिकार्थं । तथा हि गार्ग्याजातशत्र्वोरतीव श्रद्धालुता दृश्यत आख्यायिकायाम्। ‘ श्रद्धावाल्लभते ज्ञानम् ’ इति च स्मृति. ।

तत्र पूर्वपक्षवादी अविद्याविषयब्रह्मवित् दृप्त बालाकिः—दृप्त. गर्वितः असम्यग्ब्रह्मवित्त्वादेव—बलाकाया अपत्य बालाकि दृप्तश्चासौ बालाकिश्चेति दृप्तबालाकिः, हशब्द ऐतिह्यार्थ आख्यायिकाया, अनूचान॰ अनुवचनसमर्थ. वक्ता वाग्मी, गार्ग्यो गोत्रत , आस बभूव कस्मिंश्चित्कालविशेषे। स होवाच अजातशत्रु अजातशत्रुनामान काश्य काशिराज अभिगम्य ब्रह्म ते ब्रवाणीति ब्रह्म ते तुभ्य ब्रवाणि कथयानि। स एवमुक्तोऽजातशत्रुरुवाच—सहस्र गवां दद्म एतस्या वाचि—या मा प्रत्यवोच॰ ब्रह्म ते ब्रवाणीति, तावन्मात्रमेव गोसहस्रप्रदाने निमित्तमित्यभिप्राय । साक्षाद्ब्रह्मकथनमेव निमित्त कस्मान्नापेक्ष्यते सहस्रदाने ब्रह्म ते ब्रवाणीति इयमेव तु वाक् निमित्तमपेक्ष्यते इत्युच्यते–यत. श्रुतिरेव राज्ञोऽभिप्रायमाह—जनको दाता जनक॰ श्रोतेति च एतस्मिन्वाक्यद्वये पदद्वयमभ्यस्यते जनको जनक इति। वैशब्द॰ प्रसिद्धावद्योतनार्थ. । जनको दित्सुर्जनक॰ शुश्रूषुरिति ब्रह्म शुश्रूषवो विवक्षव प्रतिजिघृक्षवश्च जनाः धावन्ति अभिगच्छन्ति। तस्मात् तत्सर्वे मय्यपि सभावितवानसीति । * शाकर

स होवाच गार्ग्यं । य एवासावादित्ये पुरुष एतमेवाह ब्रह्मोपास इति। स होवाचाजातशत्रु । मा मैतस्मिन्संवदिष्ठा ।अतिष्ठा सर्वेषा भूताना मूर्धा राजेति वा अहमेतमुपास इति। स य एतमेवमुपास्तेऽतिष्ठा सर्वेषा भूताना मूर्धा राजा भवति ॥

( १ ) एव राजान शुश्रूषु अभिमुखीभूत स होवाच गार्ग्य—य एव असौ आदित्ये चक्षुषि च एक. अभिमानी चक्षुर्द्वारेण इह हृदि प्रविष्ट. अह भोक्ता कर्ता चेत्यवस्थित. — एतमेव अह ब्रह्म पश्यामि अस्मिन्कार्यकरणसघाते उपासे। तस्मात् तमह पुरुष ब्रह्म तुभ्य ब्रवीमि उपास्स्वेति। स एवमुक्त. प्रत्युवाच अजातशत्रु मा मेति हस्तेन विनिवारयन् — एतस्मिन् ब्रह्मणि विज्ञेये मा मवदिष्ठा॰। मा मेत्याबाधनार्थं द्विर्वचन —एव समाने विज्ञानविषय आवयोः अस्मानविज्ञानवत इव दर्शयता बाधिता स्याम , अतो मा सवदिष्ठा॰ मा सवाद कार्षी अस्मिन्ब्रह्मणि। अन्यच्चेज्जानासि, तद्ब्रह्म वक्तुमर्हसि, न तु यन्मया ज्ञायते एव । अथ चेन्मन्यसे – जानीषे त्व ब्रह्ममात्र, न तु तद्विशेषेणोपासनफलानीति – तन्न मन्तव्यम्। यतः सर्वमेतत् अह जाने, यद्ब्रवीषि । कथम्? अतिष्ठाः अतीत्य भूतानि तिष्ठतीत्यतिष्ठाः, सर्वेषा च भूताना मूर्धा शिर॰ राजेति वै — राजा दीप्तिगुणोपेतत्वात्

* रग सरलार्थम्।

(१) बृउ २।१।२, शब्रा १४।५।१।२, रग पुरुष एत ( पुरुषस्त )

एतैर्विशेषणैर्विशिष्ट एतद्ब्रह्म अस्मिन्कार्यकरणसघाते कर्तृ भोक्तृ चेति अहमेतमुपास इति । फलमप्येव विशिष्टोपासकस्य—स य एतमेवमुपास्ते अतिष्ठा· सर्वेषां भूताना मूर्धा राजा भवति । यथागुणोपासनमेव हि फल, 'त यथा यथोपासते तदेव भवति' इति श्रुते ।

शकर.

(२) स होवाचेति । आदित्यमण्डलान्तरवर्तिन पुरुषमहमुपासेऽतस्त्वमपि तद्ब्रह्मोपास्स्वेति भाव । मा मा प्रति एतस्मिन्नादित्यवर्तिपुरुषविषये मा सव दिष्ठा सवाद मा कार्षी· । अज्ञाते हि विषये सवाद· कर्तव्यः । अय तु ज्ञात एव । कथमित्यत्राऽऽह— अतिष्ठा इति । वैशब्दोऽवधारणे प्रसिद्धौ वा । अतीत्य सर्वानतीत्य तिष्ठतीत्यतिष्ठा. 'आतो मनिन्' (पा सू ३।२।७४) इत्यादिना विच्प्रत्यय । सर्वेषा भूताना च मूर्धा श्रेष्ठ. । दीप्तिगुणोपेतत्वाद्राजा ।'एतै-रतिष्ठात्वसर्वभूतमूर्धत्वराजत्वविशिष्टमेतमादित्यपुरुषमहमु-पासे । अतोऽस्य ज्ञातत्वादस्मिन्विषये सवादो न कर्तव्य । स्वोक्तस्य फल दर्शयति—स य एतमिति । यद्यप्यतिष्ठात्वादिगुणविशिष्टादित्योपासक· स्वयमपि तत्क्रतुन्यायात्तद्गुणयुक्तो भवतीति भाव. ।

रग

(३) अतीत्य जगद्धर्मवर्जितत्वेन स्थितत्वाद तिष्ठाः । उत्तमत्वान्मूर्धा ।

मध्व.

स[१] होवाच गार्ग्य· । य एवासौ चन्द्रे पुरुष एत मेवाह ब्रह्मोपास इति । स होवाचाजातशत्रु । मा मैतस्मिन्सवदिष्ठा । बृहन्पाण्डरवासा सोमो राजेति वा अहमेतमुपास इति । स य एतमेवमु-पास्तेऽहरहर्ह सुत. प्रसुतो भवति । नास्यान्न क्षीयते ॥

(१) सवादेन आदित्यब्रह्मणि प्रत्याख्यातेऽजात शत्रुणा चन्द्रमसि ब्रह्मान्तर प्रतिपेदे गार्ग्यः । य एवासौ चन्द्रे मनसि च एक· पुरुषो भोक्ता कर्ता चेति पूर्ववद्विशेषणम् । बृहन् महान् पाण्डर शुक्ल वासो यस्य सोऽय पाण्डरवासाः अप्शरीरत्वात् चन्द्राभिमा-निनः प्राणस्य, सोमो राजा चन्द्र·, यश्चान्नभूतोऽ-भिषूयते लतात्मको यज्ञे तमेकीकृत्य एतमेवाह ब्रह्मो-पासे । यथोक्तगुण य उपास्ते तस्य अहरहः सुत. सोमोऽ-भिषुतो भवति यज्ञे, प्रसुतः प्रकृष्ट सुतरा सुनो भवति विकारो— उभयविषयज्ञानुष्ठानसामर्थ्यं भवतीत्यर्थः । अन्न च अस्य न क्षीयते अन्नात्मकोपासकस्य ।

शकर.

(२) बृहन्महान्पाण्डर शुक्ल किरणरूप वासो यस्य स पाण्डरवासा । उक्त च व्यासार्यैः पाण्डरैरंशुभिर्जग-दाच्छादकत्वात्पाण्डरवासस्त्वमिति । सोमो राजा यज्ञ-साधनभूतसोमराजशब्दवाच्यलताविशेषलक्षणौषधीनामी शतयेशितव्यसब धकृताभेदेन वाऽहमुपास इत्यर्थ । सोमलताऽभिन्नत्वेनोपासनस्य फलमाह सुत. प्रसुत इति । कर्तरि क्तः । अहरहः सोम सुतवानित्यर्थ. । चन्द्र-स्यान्नभूतसोमशब्दवाच्यलतात्मकत्वेनोपास्यत्वात् नान्नस्य क्षय इत्यर्थ ।

रग.

स[१] होवाच गार्ग्य । य एवासौ विद्युति पुरुष एतमेवाह ब्रह्मोपास इति । स होवाचाजातशत्रु । मा मैतस्मिन्सवदिष्ठा । तेजस्वीति वा अहमेत-मुपास इति । स य एतमेवमुपास्ते तेजस्वी ह भवति । तेजस्विनी हास्य प्रजा भवति ॥

(१) तथा विद्युति त्वचि हृदये च एका देवता । तेजस्वीति विशेषणम् । तस्यास्तत्फल—तेजस्वी ह भवति तेजस्विनी हास्य प्रजा भवति—विद्युतां बहुत्व-स्याङ्गीकरणात् आत्मनि प्रजाया च फलबाहुल्यम् ।

शकर.

(२) प्रजा पुत्र इत्यर्थ. ।

रंग.

स[२] होवाच गार्ग्य । य एवायमाकाशे पुरुष एतमेवाहं ब्रह्मोपास इति । स होवाचाजातशत्रुः । मा मैतस्मिन्सवदिष्ठा. । पूर्णमप्रवर्तीति वा अह-

---

(१) बृउ २।१।३, शब्रा १४।५।१।३, रग पुरुष एत (पुरुषस्त) हं ब्रह्मोपा (हमुपा) रहर्ह (रहर्हि), मध्व बृहन्पाण्डर (बृहत्पाण्डुर) रहर्ह (रह)

(१) बृउ २।१।४, शब्रा १४।५।१।४ एवासौ (एवाय), रग तेजस्वी ह (तेजस्वी)

(२) बृउ २।१।५, शब्रा १४।५।१।५, रग पूर्यते+ (ह), विज्ञान १।१।२२

मेतमुपास इति। स य एतमेवमुपास्ते पूर्यते प्रजया पशुभिर्नास्यास्माल्लोकात्प्रजोद्वर्तते ॥

(१) तथा आकाशे हृद्याकाशे हृदये च एका देवता। पूर्णं अप्रवर्ति चेति विशेषणद्वयम्। पूर्णं व-विशेषणफलमिद—पूर्यते प्रजया पशुभि। अप्रवर्ति-विशेषणफल—नास्यास्माल्लोकात्प्रजोद्वर्तत इति, प्रजा सतानाविच्छित्ति.।

शकर

(२) पूर्णत्वविशिष्टोपासनाया फल प्रजापशुपूर्णत्वम्। पूर्णत्वप्रयुक्तनिर्व्यापारलक्षणाप्रवर्तित्वविशेषणविशिष्टोपासनाया फल प्रजा सतानाविच्छित्ति.। उद्वर्तन लोकान्तरगमनम्।

रग

स होवाच गार्ग्य । य एवाय वायौ पुरुष एतमेवाह ब्रह्मोपास इति। स होवाचाजातशत्रु । मा मैतस्मिन्सवदिष्ठा । इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति। स य एतमेवमुपास्ते जिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी ॥

(१) तथा वायौ प्राणे हृदि च एका देवता। तस्या विशेषण—इन्द्र परमेश्वर, वैकुण्ठः अप्रसह्य, न परैर्जितपूर्वा अपराजिता सेना मरुता गण बप्रसिद्धेः। उपासनफलमपि—जिष्णुर् जयनशील अपराजिष्णु न च परैर्जितस्वभाव भवति, अन्यतस्त्यजायी अन्यतस्त्याना सपत्नाना जयनशीलो भवति।

शकर

(२) इन्द्र परमेश्वरः। 'योऽय पवत एष देवताना ग्रह' इति वायोर्देवलोकत्वप्रसिद्धे। त मामान्याद्वैकुण्टत्वम्। मरुता गणत्वप्रसिद्धेरपराजिता सेनेत्युक्ति। जिष्णुर्जयशीलः। अपराजिष्णुरपराजित। अन्यतस्त्यजायी। अन्यतो भवा अन्यतस्त्या. शत्रव इति यावत्। तान् जेतु शीलमस्य 'सुप्यजातौ०' इति णिनि.।

रग

(३) स्वयमेवापराजितबहुरूपत्वादपराजितसेनाभवनात्। जिष्णुरुत्तम.। अन्येषा जेता अन्यतस्त्यजायी।

मध्व.

(१) बृउ २।१।६, शब्रा १४।५।१।६

स होवाच गार्ग्य । य एवायमग्नौ पुरुष एतमेवाह ब्रह्मोपास इति। स होवाचाजातशत्रु । मा मैतस्मिन्सवदिष्ठा । विषासहिरिति वा अहमेतमुपास इति। स य एतमेवमुपास्ते विषासहिर्ह भवति। विषासहिर्हास्य प्रजा भवति ॥

(१) अग्नौ वाचि हृदि च एका देवता। तस्या विशेषण – विषासहि. मर्षयिता परेषा अग्निबाहुल्यात्, बाहुल्य पूर्ववत्।

शकर.

(२) विषासहि सोढुमशक्य' शत्रुभिरित्यर्थ.। मर्षयितेति भाव.।

रग.

(३) विषासहिरमह्य।

मध्व

स होवाच गार्ग्य । य एवायमप्सु पुरुष एतमेवाह ब्रह्मोपास इति। स होवाचाजातशत्रु । मा मैतस्मिन्सवदिष्ठा । प्रतिरूप इति वा अहमेतमुपास इति। स य एतमेवमुपास्ते प्रतिरूपᳲ हैवैनमुपगच्छति नाप्रतिरूपम्। अथो प्रतिरूपोऽस्माज्जायते ॥

(१) अप्सु रेतसि हृदि च एका देवता। तस्या विशेषण– प्रतिरूप. अनुरूप श्रुतिस्मृत्यप्रतिकूल इत्यर्थ.। फल — प्रतिरूप श्रुतिस्मृतिशासनानुरूपमेव एनमुपगच्छति प्राप्नोति न विपरीत, अन्यच्च — अस्मात् तथाविध एवोपजायते।

शकर.

(२) सदृशप्रतिबिम्बोपेतत्वादपा प्रतिरूपत्वविशिष्टोपासनोपपत्ति। प्रतिरूप सदृशमेव कलत्रादिकमेनमुपगच्छति प्राप्नोति नाप्रतिरूपम्। प्रतिरूप. सदृश एव पुत्रोऽस्माज्जायते।

रग.

स होवाच गार्ग्य । य एवायमादर्शे पुरुष एतमेवाह ब्रह्मोपास इति। स होवाचाजातशत्रु । मा मैतस्मिन्सवदिष्ठा.। रोचिष्णुरिति वा अहमेतमुपास इति। स य एतमेवमुपास्ते रोचिष्णुर्ह भवति। रोचिष्णुर्हास्य प्रजा भवति। अथो यैः सनिगच्छति सर्वाᳪस्तानतिरोचते ॥

(१) बृउ २।१।७, शब्रा १४।५।१।७

(२) बृउ २।१।८, शब्रा १४।५।१।८

(३) बृउ २।१।९, शब्रा १४।५।१।९, रग रोचिष्णुर्ह भ (रोचिष्णुर्भ)

(१) आदर्शे प्रसादस्वभावे चान्यत्र खड्गादौ, हार्दे च सत्त्वशुद्धिस्वाभाव्ये च एका देवता। तस्या विशेषण — रोचिष्णु दीप्तिस्वभाव। फल च तदेव, रोचनाधारबाहुल्यात्फलबाहुल्यम्।

शकर

(२) रोचिष्णुर्भ्राजमान। यै. सनिगच्छति सगतो भवति सर्वांस्तानतिक्रम्य प्रकाशते।

रग

स[१] होवाच गार्ग्यः। य एवाय यन्तं पश्चाच्छब्दोऽनूदेत्येतमेवाह ब्रह्मोपास इति। स होवाचाजातशत्रु। मा मैतस्मिन्सवदिष्ठा। असुरिति वा अहमेतमुपास इति। स य एतमेवमुपास्ते सर्व५ हैवास्मिँल्लोक आयुरेति। नैन पुरा कालात्प्राणो जहाति॥

(१) यन्त गच्छन्त य एवाय शब्द· पश्चात् पृष्ठत अनूदेति, अध्यात्म च जीवनहेतु. प्राण.——तमेकीकृत्याह। असु प्राणो जीवनहेतुरिति गुणस्तस्य। फल—— सर्वमायुरस्मिँल्लोक एतीति—— यथोपात्त कर्मणा आयु कर्मफलपरिच्छिन्नकालात् पुरा पूर्वे रोगादिभि. पीड्यमानमप्येन प्राणो न जहाति।

शकर

(२) पश्चाच्छब्द प्रतिध्वनिरुदेति मूलशब्दान्तरमुदेति तस्य प्रतिशब्दस्य प्राणकार्यत्वादसुरित्यहमुपास इत्यर्थः। पुरा कालात्प्राणो जहाति अपमृत्युर्न प्राप्नोतीत्यर्थ।

रग

स[२] होवाच गार्ग्य। य एवायं दिक्षु पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रु। मा मैतस्मिन्सवदिष्ठा। द्वितीयोऽनपग इति वा अहमेतमुपास इति। स य एतमेवमुपास्ते द्वितीयवान्ह भवति। नास्माद्गणश्छिद्यते॥

(१) दिक्षु कर्णयो हृदि चैका देवता अश्विनौ देवाववियुक्तस्वभावौ। गुणस्तस्य द्वितीयवत्त्व अनपगत्व अवियुक्तता चान्योन्य दिशामश्विनोश्च एव धर्मित्वात्। तदेव च फलमुपासकस्य गणविच्छेद द्वितीयवत्त्व च।

शकर.

(२) दिशा युग्मभूताश्विदैवत्यत्वाद्द्वितीयत्वेनोपासनोपपत्ति। अनपगत्वमविच्छिन्नत्व दिशा परस्परविच्छेदाभावात्। द्वितीयत्वेनोपासनाफल द्वितीयवानिति सहायवानित्यर्थ। अविच्छिन्नत्वलक्षणानपगत्वोपासनाफल नास्माद्गणश्छिद्यत इति। गणो बन्धुवर्ग।

रग.

स[१] होवाच गार्ग्य.। य एवायं छायामयः पुरुष एतमेवाह ब्रह्मोपास इति। स होवाचाजातशत्रु। मा मैतस्मिन्सवदिष्ठा। मृत्युरिति वा अहमेतमुपास इति। स य एतमेवमुपास्ते सर्व५ हैवास्मिँल्लोक आयुरेति। नैन पुरा कालान्मृत्युरागच्छति॥

(१) छायाया बाह्ये तमसि अध्यात्म च आवरणात्मकेऽज्ञाने हृदि च एका देवता, तस्या विशेषण——मृत्यु। फल सर्व पूर्ववत्, मृत्योरनागमनेन रोगादिपीडाभावो विशेष.।

शकर.

(२) पुरुषच्छाया मृत्युवन्नीलत्वभयङ्करत्वान्मृत्युत्वोपासनोपपत्ति·।

रग.

स[२] होवाच गार्ग्य। य एवायमात्मनि पुरुष एतमेवाह ब्रह्मोपास इति। स होवाचाजातशत्रु.। मा मैतस्मिन्सवदिष्ठा। आत्मन्वीति वा अहमेतमुपास इति। स य एतमेवमुपास्त आत्मन्वी ह भवति। आत्मन्विनी हास्य प्रजा भवति। स ह तूष्णीमास गार्ग्य॥

(१) आत्मनि प्रजापतौ बुद्धौ च हृदि च एका देवता। तस्या आत्मन्वी आत्मवानिति विशेषणम्। फल——आत्मन्वी ह भवति आत्मवान्भवति, आत्मन्विनी हास्य प्रजा भवति, बुद्धिबहुलत्वात् प्रजायाः सपादनमिति विशेषः। स्वय परिज्ञातत्वेन एव क्रमेण

(१) बृउ २।१।१०, शब्रा १४।५।१।११ऽनूदेत्येत (ऽनूदैत्येत)

(२) बृउ २।१।११, शब्रा १४।५।१।१०, रग वान्ह भ (वान्भ)

(१) बृउ २।१।१२, शब्रा १४।५।१।१२

(२) बृउ २।१।१३, शब्रा १४।५।१।१३ य एवाय (यश्चाय)

प्रत्याख्यातेषु ब्रह्मसु स गार्ग्यः क्षीणब्रह्मविज्ञान अप्रतिभासमानोत्तर तूष्णीमवाक्शिरा आस ।

शंकर

(२) आत्मनि शरीरादा अहमित्यभिमन्यमानो य पुरुष सर्वजीवसामान्य ब्रह्मोपास्त इत्यर्थ । आत्मन्शब्दात्प्रशसाया छान्दसो विनिप्रत्यय ।

रंग

(३) आत्मनि हिरण्यगर्भे आत्मन्वी चित्तवान् । चित्ताभिमानित्वात्तस्य । मध्व

स होवाचाजातशत्रु । एतावन्नू३ इति । एतावद्धीति । नैतावता विदितं भवतीति । स होवाच गार्ग्य । उप त्वा यानीति ॥

(१) त तथाभूत आलक्ष्य गार्ग्य स होवाच अजातशत्रु —एतावन्नू३ इति—किमेतावद्ब्रह्म निर्ज्ञात, आहोस्विदधिकमप्यस्तीति इतर आह—एतावद्धीति । नैतावता विदितेन ब्रह्म विदित भवतीत्याह अजातशत्रु —किमर्थं गर्वितोऽसि ब्रह्म ते ब्रवाणीति । किमेतावद्विदित विदितमेव न भवतीत्युच्यते ? न फलवद्विज्ञानश्रवणात् । न चार्थवादत्वमेव वाक्यानामवगन्तु शक्यम् । अपूर्वविधानपराणि हि वाक्यानि प्रत्युपासनोपदेश लक्ष्यन्ते—'अतिष्ठा सर्वेषा भूतानाम्' इत्यादीनि । तदनुरूपाणि च फलानि सर्वत्र श्रूयन्ते विभक्तानि । अर्थवादत्वे एतदसमञ्जसम् । कथ तर्हि नैतावता विदित भवतीति ? नैष दोष, अधिकृतापेक्षत्वात्—ब्रह्मोपदेशार्थं हि शुश्रूषवे अजातशत्रवे अमुख्यब्रह्मवित् गार्ग्य प्रवृत्त । स युक्त एव मुख्यब्रह्मविदा अजातशत्रुणा अमुख्यब्रह्मविद्गार्ग्यो वक्तु—यन्मुख्य ब्रह्म वक्तु प्रवृत्त त्व तत् न जानीष इति । यत्त्वमुख्यब्रह्मविज्ञानमपि प्रत्याख्यायेत तदा एतावतेति न ब्रूयात्, न किंचिज्ज्ञात त्वयेत्येव ब्रूयात् । तस्माद्भवन्ति एतावन्ति अविद्याविषये ब्रह्माणि । एतावद्विज्ञानद्वारत्वाच्च परब्रह्मविज्ञानस्य युक्तमेव वक्तु—'नैतावता विदित भवति' इति ब्रुवता अधिक ब्रह्म ज्ञातव्यमस्तीति दर्शित भवति । तच्च अनुपसन्नाय न वक्तव्यमित्याचारविधिज्ञो गार्ग्य स्वयमेव आह—उप त्वा यानीति उपगच्छानीति त्वा यथाऽन्य शिष्यो गुरुम् ।

शंकर

(२) प्रश्ने प्लुत । एतावदेव किं त्वया ज्ञातमिति प्रश्न । एवमजातशत्रुणोक्तो बालाकिर्गताभिमानो नीचादप्युत्तमा विद्या, आपत्कल्पो ब्राह्मणस्याब्राह्मणाद्विद्योपयोग इति शास्त्रमनुसृत्य क्षत्रियादप्यजातशत्रोर्विद्यामुपादित्सुर्नानुपसन्नाय ब्रह्मोपदेष्टव्यमिति शास्त्रार्थं जानन्गार्ग्य स्वयमेवाऽऽह—उप त्वेति । त्वा त्वामुपयानि शिष्य सन्नुपगच्छामीत्यर्थ ।

रंग

(३) स्वहृदि स्थित स्वनियामक भगवद्रूपमुपास्यैव मोक्षो भवति । दवतासु भगवन्तमुपास्य तत्तद्देवतासमीप प्राप्य पुन स्वहृदिस्थमुपास्यैव मोक्षो भवतीत्यतो नैतावता विदित भवतीत्युक्तम् । मध्व

स होवाचाजातशत्रु । प्रतिलोम चैतद्यद्ब्राह्मण क्षत्रियमुपेयाद्ब्रह्म मे वक्ष्यतीति । व्येव त्वा ज्ञपयिष्यामीति । त पाणावादायोत्तस्थौ । तौ ह पुरुषसुप्तमाजग्मतु । तमेतैर्नामभिरामन्त्रयाचक्रे बृहन्पाण्डरवास सोम राजन्निति । स नोत्तस्थौ । त पाणिनापेष बोधयाचकार । होत्तस्थौ ॥

(१) स होवाच अजातशत्रु —प्रतिलोम विपरीत चैतत् । किं तत् ? यद्ब्राह्मण उत्तमवर्ण आचार्यत्वेऽधिकृत सन् क्षत्रियमनाचार्यस्वभाव उपेयात् उपगच्छेत् शिष्यवृत्त्या—ब्रह्म मे वक्ष्यतीति । एतदाचारविधिशास्त्रेषु निषिद्धम् । तस्मात् तिष्ठ त्व आचार्य एव सन् । विज्ञपयिष्याम्येव त्वामह— यस्मिन्विदिते ब्रह्म विदित भवति यत्तन्मुख्य ब्रह्म वेद्यम् । त गार्ग्यं सलज्जमालक्ष्य विस्रम्भजननाय पाणौ हस्त आदाय गृहीत्वा उत्तस्थौ उत्थितवान् । तौ ह गार्ग्याजातशत्रू पुरुष सुप्त राजगृहप्रदेशे क्वचित् आजग्मतु आगतौ ।

(१) बृउ २।१।१४, शब्रा १४।५।१।१४ त्वा यानीति (त्वाऽयानीति), रंग (स होवाच गार्ग्य०), मध्व शब्रावत्.

(१) बृउ २।१।१५, शब्रा १४।५।१।१५ चैतद्य (वै तद्य), रंग लोम चैतद्य (लोममेवैतद्य) ष्यामीति (ष्यामि) बृहन्पा (बृहत्पा), मध्व चैतद्य (वै तद्य) बृहन्पाण्डर (बृहत्पाण्डर)

त च पुरुष सुप्त प्राप्य एतैर्नामभि — बृहन् पाण्डरवास' सोम राजन्नित्येतैः— आमन्त्रयांचक्रे । एवमामन्त्र्यमाणोऽपि स सुप्तः नोत्तस्थौ । त अप्रतिबुध्यमान पाणिना आपेष आपिष्य आपिष्य बोधयाचकार प्रति बोधितवान् । तेन स होत्तस्थौ । तस्माद्यो गार्ग्येणाभिप्रेत , नासावस्मिञ्छरीरे कर्ता भोक्ता ब्रह्मेति ।

ननु सघात एवास्तु भोक्ता, किं व्यतिरिक्तकल्पनयेति—न, आपेषणे विशेषदर्शनात् । यदि हि प्राणशरीरसघातमात्रो भोक्ता स्यात् सघातमात्राविशेषात् सदा आपिष्टस्य अनापिष्टस्य च प्रतिबोधे विशेषो न स्यात् । सघातव्यतिरिक्ते तु पुनर्भोक्तरि सघातसब-धविशेषानेकत्वात् पेषणापेषणकृतवेदनाया. सुखदु खमोहमध्यमाधमोत्तमकर्मफलभेदोपपत्तेश्च विशेषो युक्त । न तु सघातमात्रे सबन्धकर्मफलभेदानुपपत्ते विशेषो युक्त ।तथा शब्दादिपटुमान्द्यादिकृतश्च । अस्ति चाय विशेष — यस्मात् स्पर्शमात्रेण अप्रतिबुध्यमान पुरुष सुप्त पाणिना आपेष आपिष्य आपिष्य बोधयाचकार अजातशत्रु. । तस्मात् य. आपेषणेन प्रतिबुबुधे— ज्वलन्निव स्फुरन्निव कुतश्चिदागत इव पिण्ड च पूर्वविपरीत बोधचेष्टाकारविशेषादिमत्त्वेन आपादयन् सोऽन्योऽस्ति गार्ग्याभिमतब्रह्मभ्यो व्यतिरिक्त इति सिद्धम् । सहतत्वाच्च पारार्थ्योपपत्ति प्राणस्य । गृहस्य स्तम्भादिवत् शरीरस्य अन्तरुपष्टम्भक प्राण शरीरादिभि सहत इत्यवोचाम— अरनेमिवच्च, नाभिस्थानीय एतस्मिन्सर्वमिति च । तस्मात् गृहादिवत् स्वावयवसमुदायजाती यव्यतिरिक्तार्थे सहन्यत इत्येव अवगच्छाम । स्तम्भ कुड्यतृणकाष्ठादिगृहावयवाना स्वात्मजन्मोपचयापचय विनाशनामाकृतिकार्यधर्मनिरपेक्षलब्धसत्तादितद्विषयद्रष्टृ श्रोतृमन्तृविज्ञात्रर्थत्व दृष्ट्वा, मन्यामहे, तत्सघातस्य च—तथा प्राणाद्यवयवानां तत्सघातस्य च स्वात्मजन्मोपचयापचयविनाशनामाकृतिकार्यधर्मनिरपेक्षलब्धसत्तादि – तद्विषयद्रष्टृश्रोतृमन्तृविज्ञात्रर्थत्व भवितुमर्हतीति । देवताचेतनावत्त्वे समत्वाद्गुणभावानुपगम इति चेत्— प्राणस्य विशिष्टैर्नामभिरामन्त्रणदर्शनात् चेतनावत्त्वमभ्युपगतम् । चेतनावत्त्वे च पारार्थ्योपगम समत्वादनुपपन्न इति चेत्—न, निरुपाधिकस्य केवलस्य विजिज्ञापयिषितत्वात् । क्रियाकारकफलात्मकता हि आत्मनो नामरूपोपाधिजनिता अविद्याध्यारोपिता । तन्निमित्तो लोकस्य क्रियाकारकफलाभिमानलक्षण. ससार । स निरुपाधिकात्मस्वरूपविद्यया निवर्तयितव्य इति तत्स्वरूपविजिज्ञापयिषया उपनिषदारम्भ —' ब्रह्म ते ब्रवाणि ' 'नैतावता विदित भवति ' इति च उपक्रम्य ' एतावद्दरे खल्वमृतत्वम् ' इति च उपसहारात् । न च अतोऽन्यत् अन्तराले विवक्षित उक्त वा अस्ति । तस्मादनवसर' समत्वाद्गुणभावानुपगम इति चोद्यस्य । विशेषवतो हि सोपाधिकस्य सव्यवहारार्थो गुणगुणिभावः, न विपरीतस्य । निरुपाख्यो हि विजिज्ञापयिषित सर्वस्यामुपनिषदि, ' स एष नेति नेति ' इत्युपसहारात् । तस्मात् आदित्यादिब्रह्मभ्य एतेभ्योऽविज्ञानमयेभ्यो विलक्षणः अन्योऽस्ति विज्ञानमय इत्येतत्सिद्धम् ।

शकर

( २ ) एव प्राणनामभिरामन्त्रणेऽप्यनुत्थानप्रदर्शन प्राणान्यत्वज्ञापनार्थम् । सुषुप्तिदशायामुपरतव्यापारेभ्य. शरीरेन्द्रियेभ्योऽन्यत्व सुज्ञानमिति तस्यामपि दशायामनुपरतव्यापारात्प्राणादन्यत्व ज्ञापनीयमिति प्राणनामभिरामन्त्रणेऽप्यनुत्थानेन पाणिनाऽऽपेषणेनोत्थापनप्रदर्शनेन च जीवस्य प्राणव्यतिरेक प्रदर्शितो भवति ।

रग.

( ३ ) स्वहृदिस्थभगवद्रूपस्य स्वस्मिन्विशेषसबन्धज्ञापनार्थे बृहत्पाण्डरवास इत्याद्यामन्त्रणम् । तेभ्यो नामभ्योऽप्यस्य शरीरे विशेषसबन्ध इत्यतः पाणिपेषणेन जीवमुत्थापयामास भगवान् । येषां बहिरुपासनेन मोक्ष स्तेषामपि हृद्युपासन किंचित्कर्तव्यमेव ।

मध्व.

**स होवाचाजातशत्रु' । यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमय' पुरुष. क्वैष तदाऽभूत्कुत एतदागादिति । तदु ह न मेने गार्ग्य ॥**

---

(१) **बृउ** २।१।१६, **शब्रा** १४।५।१।१६, **ब्रशाकर.** १।४।१८, ३।२।८, **भास्कर** १।४।१७ तदाऽभूत् ( एतद्वा लोके पुरुषोऽशयिष्ट क्व वा एतदभूत् ), **रामानुज** १।४।१८, **निंबार्क** १।४।१८, **श्रीकठ** १।४।१८, **श्रीकर.** १।४।१८, **वल्लभ** ३।२।९, **विज्ञान** १।१।२२.

( १ ) स एव अजातशत्रुः व्यतिरिक्तात्मास्तित्व प्रतिपाद्य गार्ग्यमुवाच—यत्र यस्मिन्काले एष. विज्ञानमयः पुरुषः एतत् स्वपन सुप्त अभूत् प्राक् पाणिपेषप्रतिबोधात् । विज्ञान विज्ञायतेऽनेनेत्यन्त करण बुद्धिः उच्यते, तन्मयः तत्प्राय. विज्ञानमय । किं पुनस्तत्प्रायत्वम् ? तस्मिन्नुपलभ्यत्व, तेन चोपलभ्यत्व, उपलब्धृत्व च । कथ पुनर्मयटोऽनेकार्थत्वे प्रायार्थतैव अवगम्यते ? 'स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमय ' इत्येवमादौ प्रायार्थ एव प्रयोगदर्शनात् पर विज्ञानविकारत्वस्याप्रसिद्धत्वात् 'य एष विज्ञानमय.' इति च प्रसिद्धवदनुवादात् अवयवोपमार्थयोश्च अत्रासभवात् पारिशेष्यात् प्रायार्थतैव । तस्मात् सकल्पविकल्पाद्यात्मकमन्त.करण तन्मय इत्येतत् । पुरुषः, पुरिशयनात् । क्वैष तदा अभूदिति प्रश्नः स्वभावविजिज्ञापयिषया—प्राक् प्रतिबोधात् क्रियाकारकफलविपरीतस्वभाव आत्मेति कार्याभावेन दिदर्शयिषितम् । न हि प्राक् प्रतिबोधात्कर्मादिकार्यं सुखादि किंचन गृह्यते । तस्मात् अकर्मप्रयुक्तत्वात् तथास्वाभाव्यमेव आत्मनोऽवगम्यते— यस्मिन्स्वाभाव्येऽभूत्, यतश्च स्वाभाव्यात्प्रच्युत ससारी स्वभावविलक्षण इति—एतद्विवक्षया पृच्छति गार्ग्यं प्रतिभानरहित बुद्धिव्युत्पादनाय । क्वैष तदाऽभूत् कुत एतदागात् — इत्येतदुभय गार्ग्येणैव प्रष्टव्यमासीत् । तथापि गार्ग्येण न पृष्टमिति नोदास्तेऽजातशत्रुः बोधयितव्य एवेति प्रवर्तते, ज्ञपयिष्याम्येवेति प्रतिज्ञातत्वात् । एवमसौ व्युत्पाद्यमानोऽपि गार्ग्यः —यत्रैष आत्माऽभूत् प्राक्प्रतिबोधात्, यतश्चैतदागमनमागात्— तदुभय न व्युत्पेदे वक्तु वा प्रष्टु वा—गार्ग्यो ह न मेने न ज्ञातवान् । शकर.

( २ ) 'अपि चैवमेके' शाखिनो वाजसनेयिनोऽस्मिन्नेव बालाक्यजातशत्रुसवादे स्पष्ट विज्ञानमयशब्देन जीवमाम्नाय तद्व्यतिरिक्त परमात्मानमामनन्ति 'य एष विज्ञानमयः पुरुष. क्वैष तदाऽभूत् कुत एतदागात्' इति प्रश्ने प्रतिवचनेऽपि 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्शेते ' इति । आकाशशब्दश्च परमात्मनि प्रयुक्तः 'दहरोऽस्मिन्नन्तराकाशः ' ( छाउ ८।१।१ ) इत्यत्र । 'सर्वं एत आत्मनो व्युच्चरन्ति ' इति चोपाधिमतामात्मनामन्यतो व्युच्चरणमामनन्त. परमात्मानमेव कारणत्वेनाऽऽमनन्तीति गम्यते । प्राणनिराकरणस्यापि सुषुप्तपुरुषोत्थापनेन प्राणादिव्यतिरिक्तोपदेशोऽभ्युच्चय । *ब्रशकर १।४।१८

( ३ ) एव देहेन्द्रियमन प्राणव्यतिरिक्त जीव प्रदर्श्य ततोऽप्यन्य परमात्मान प्रदर्शयितुमारभते—स होवाचाजातशत्रुरिति । यत्र यदा । एष एतत्सुप्तोऽभूदेतत्स्वप्न सुप्तोऽभूत् स्वप्न प्राप्तोऽभूत् । एतदित्यनेनैव स्वपिधात्वर्थस्य सिद्धत्वात्सुप्त इत्येतत्प्रत्ययार्थमात्रपर पाक पचतीतिवत् । यद्वैतदीदृश सुप्त यस्य स एतत् सुप्त । क्वैष इत्यत्राऽऽह—य एष विज्ञानमयः पुरुष । यस्तु प्रबुध्यमान एव सर्वेन्द्रियार्थविज्ञानमयतयोत्तिष्ठति स एष पुरुष पाणिपेषणोत्थापनात्प्राक् स्वापदशाया क्व स्थित. । एतदेतस्मिन् काले कुत आगात्कुत उद्गत इति । तदु हेति । एवमजातशत्रुणोक्तोऽपि गार्ग्यस्तन्न ज्ञातवान् । उशब्दोऽवधारणे । हशब्दो वृत्तार्थस्मरणे । रग.

( ४ ) स्वहृदिस्थेन भगवद्रूपेण विशेषसबन्धदर्शनार्थमेव 'यत्रैष एतत्सुप्तोऽभूत्' इत्यादि प्रश्नप्रतिवचन समस्तम् । यत्र यस्मिन्परमेश्वरे विज्ञानमये एष जीव. सुप्तोऽभूत् । यत्रेत्यधिकरणभूत एव 'य एष विज्ञानमयः' इति परामृश्यते । 'अन्योऽन्तरात्मा विज्ञानमयः' । 'विज्ञान ब्रह्म चद्वेद' इति श्रुते. । मध्व.

**स होवाचाजातशत्रु । यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषा प्राणाना विज्ञानेन**

* भास्कररामानुजनिंबार्कश्रीकठश्रीकरवल्लभविज्ञानाः ब्रशकरवत् । कौउ ४।१८ ( पृ ६८१ ) इत्यत्रापि द्रष्टव्यम् ।

(१) बृउ २।१।१७, शब्रा १४।५।१।१७, १८, ब्रशकर १।४।१८, २।३।२८, ३५, ३।२।७, भास्कर १।४।१७, २।३।२८, ३५, रग पुरुषस्तदेषा ( पुरुष एषा ), रामानुज १।४।१८ एतत्सुप्तो ( सुप्तो ) स्तदेषा ( स्तदैतेषा ), निंबार्क. १।४।१८, ३।२।७, मध्व स्तदेषा ( स्तदैषा ), श्रीकठ १।४।१८, २।३।३५, श्रीकर १।४।१८, ३।२।८, वल्लभ १।४।१८, २।३।३५, ३६, विज्ञान १।१।२२, १।४।१८, २।३।३५, २।४।५ मय. पुरुषस्त ( मयस्त ), बलदेव ३।२।७

विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते । तानि यदा गृह्णात्यथ हैतत्पुरुष स्वपिति नाम । तद्गृहीत एव प्राणो भवति । गृहीता वाक् । गृहीत चक्षु । गृहीत५ श्रोत्रम् । गृहीतं मन ॥

( १ ) स होवाच अजातशत्रुः विवक्षितार्थसमर्पणाय । यत्रैष एतत्सुप्तोऽभूत्र एष विज्ञानमय. पुरुष — क्वैष तदाऽभूत्कुत एतदागादिति यदपृच्छाम, तत् शृणु उच्यमान — यत्रैष एतत्सुप्तोऽभूत्, तत् तदा तस्मिन्काले एषा वागादीनां प्राणाना, विज्ञानेन अन्त.करणगताभिव्यक्तिविशेषविज्ञानेन उपाधिस्वभावजनितेन, आदाय विज्ञान वागादीना स्वस्वविषयगतसामर्थ्यं गृहीत्वा, य एष अन्त मध्ये हृदये हृदयस्य आकाश. — य आकाशशब्देन पर एव स्व आत्मोच्यते — तस्मिन् स्वे आत्मन्याकाशे शेते स्वाभाविकेऽसासारिके । न केवल आकाश एव, श्रुत्यन्तरसामर्थ्यात् — 'सता सोम्य तदा सपन्नो भवति' इति । लिङ्गोपाधिसम्बन्धकृत विशेषात्मस्वरूपमुत्सृज्य अविशेषे स्वाभाविके आत्मन्येव केवले वर्तत इत्यभिप्राय. । यदा शरीरेन्द्रियाध्यक्षतामुत्सृजति तदा असौ स्वात्मनि वर्तत इति कथमवगम्यते ? नामप्रसिद्ध्या । काऽसौ नामप्रसिद्धिरित्याह — तानि वागादेर्विज्ञानानि यदा यस्मिन्काले गृह्णाति आदत्ते, अथ तदा ह एतत्पुरुष स्वपितिनाम एतन्नाम अस्य पुरुषस्य तदा प्रसिद्ध भवति । गौणमेवास्य नाम भवति । स्वमेव आत्मान अपीति अपिगच्छतीति स्वपितीत्युच्यते । सत्य स्वपितीतिनामप्रसिद्ध्या आत्मनः ससारधर्मविलक्षण रूपमवगम्यते, न त्वत्र युक्तिरस्तीत्याशङ्क्याह—तत् तत्र स्वापकाले गृहीत एव प्राणो भवति । प्राण इति घ्राणेन्द्रिय, वागादिप्रकरणात् । वागादिसम्बन्धे हि सति तदुपाधित्वादस्य ससारधर्मित्व लक्ष्यते । वागादयश्च उपसहृता एव तदा तेन । कथम् ? गृहीता वाक्, गृहीत चक्षुः, गृहीत श्रोत्र, गृहीत मनः । तस्मात् उपसहृतेषु वागादिषु क्रियाकारकफलात्मताभावात् स्वात्मस्थ एव आत्मा भवतीत्यवगम्यते ।

शकर

( २ ) 'उपादानात्' — इतश्चास्य कर्तृत्व यज्जीवप्रक्रियायामेव करणानामुपादान सकीर्तयति ।

* ब्रशकर २।३।३५

( ३ ) अत्र प्राणानां विज्ञानेन विज्ञानमादाय प्राणशब्देन्द्रियवाच्यजन्य ज्ञान मनसा सहाऽऽदायेत्यर्थः । उपरतव्यापार मन. कृत्वेत्यर्थ. । अनेनेन्द्रियव्यापारोपरति. फलिता तेषा मन सापेक्षत्वादिति व्यासार्यैर्विवृतम् । य एषोऽन्तर्हृदय आकाश इत्याकाशशब्द. परमात्मपरः । तत्र च शयन नाम तदेकतानस्तिः । एकत्व च देवत्वमनुष्यत्वलक्षणभेदकाकारास्फुरणम् । स्वस्थानेभ्यो यदाऽय सहरतीन्द्रियजन्यज्ञानानुकूलयत्नवान्यदा न भवति । अथानन्तरमेव पुरुष स्वपितीति नाम भवति । पुरुष. स्वपितीतिशब्द. प्रयुज्यते इति भावः । स्वस्वस्थानेभ्य इन्द्रियाणि उपरतानि भवन्तीत्यर्थ. ।

रग.

( ४ ) बुद्धिविवक्षाया विज्ञानशब्दस्य करणविभक्तिनिर्देशो दृश्यते ।

श्रीकठ २।३।३५

स यत्रैतत्स्वप्न्यया चरति ते हास्य लोका । तदुतेव महाराजो भवत्युतेव महाब्राह्मण । उतेवोच्चावच निगच्छति । स यथा महाराजो जानपदान्गृहीत्वा स्वे जनपदे यथाकाम परिवर्तेतैवमेवैष एतत्प्राणान्गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते ॥

( १ ) ननु दर्शनलक्षणाया स्वप्नावस्थायां कार्यकरणवियोगेऽपि ससारधर्मित्वमस्य दृश्यते — यथा च जागरिते सुखी दु खी बन्धुवियुक्तः शोचति

---

* भास्करवल्लभविज्ञाना ब्रशकरवत् । छाउ ६।८।१ (पृ ९०५) इत्यत्रापि ब्रशकरभाष्य द्रष्टव्यम् ।

(१) बृउ २।१।१८, शब्रा १४।५।१।१९, २०, ब्रशकर २।३।३४, ३।२।३, भास्कर २।३।३४ स्वे शरीरे ( तस्य शरीरे ), रग स यथा ( यथा ), रामानुज २।३।३४, २।४।१३ एतत्प्राणा ( एतान्प्राणा ), निंबार्क. २।३।३३, ३४ रामानुजवत्, मध्व प्न्यया ( प्नया ); श्रीकंठ २।३।३४, २।४।१३ रामानुजवत्, श्रीकर. २।३।३२, २।४।१२ रामानुजवत्, विज्ञान. २।३।३५; बलदेव २।३।३३, २।४।१५

मुह्यते च । तस्मात् शोकमोहधर्मवानेवायम् । नास्य शोकमोहादयः सुखदु खादयश्च कार्यकरणसयोग जनितभ्रान्त्या अध्यारोपिता इति । न, मृषात्वात् —— सः प्रकृत आत्मा यत्र यस्मिन्काले दर्शनलक्षणया स्वप्न्यया स्वप्नवृत्त्या चरति वर्तते, तदा ते ह अस्य लोका. कर्मफलानि के ते ? तत् तत्र उत अपि महाराज इव भवति । सोऽय महाराजत्वमिव अस्य लोक., न महाराजत्वमेव जागरित इव । तथा महाब्राह्मण इव । उत अपि, उच्चावच —- उच्च च देवत्वादि, अवच च तिर्यक्त्वादि, उच्चमिव अवचमिव च निगच्छति । मृषैव महाराजत्वादयोऽस्य लोका., इवशब्दप्रयोगात्, व्यभिचारदर्शनाच्च । तस्मात् न बन्धुवियोगादिजनित शोकमोहादिभि स्वप्ने सबध्यत एव ।

ननु च यथा जागरिते जाग्रत्कालाव्यभिचारिणो लोका., एव स्वप्नेऽपि तेऽस्य महाराजत्वादयो लोका स्वप्नकालभाविन स्वप्नकालाव्यभिचारिण आत्मभूता एव, न तु अविद्याध्यारोपिता इति——ननु च जाग्रत्कार्यकरणात्मत्व देवतात्मत्व च अविद्याध्यारोपित न परमार्थत इति व्यतिरिक्तविज्ञानमयात्मप्रदर्शनेन प्रदर्शितम् । तत् कथ दृष्टान्तत्वेन स्वप्नलोकस्य मृत इव उज्जीविष्यन्, प्रादुर्भविष्यति——सत्य विज्ञानमये व्यतिरिक्ते कार्यकरण-देवतात्मत्वप्रदर्शन अविद्याध्यारोपित—- शुक्तिकायामिव रजतत्वदर्शन —— इत्येतत्सिध्यति व्यतिरिक्तात्मास्तित्व-प्रदर्शनन्यायेनैव, न तु तद्विशुद्धिपरतयैव न्याय उक्त इति —— असन्नपि दृष्टान्तः जाग्रत्कार्यकरणदेवतात्मत्व-दर्शनलक्षण पुनरुद्भाव्यते । सर्वो हि न्यायः किंचिद्विशेषमपेक्षमाण अपुनरुक्तीभवति । न ताव स्वप्नेऽनुभूत. महाराजत्वादयो लोका आत्मभूताः, आत्मनोऽन्यस्य जाग्रत्प्रतिबिम्बभूतस्य लोकस्य दर्शनात् । महाराज एव तावत् व्यस्तसुप्तासु प्रकृतिषु पर्यङ्के शयान. स्वप्नान्पश्यन् उपसहृतकरण. पुनरुपगतप्रकृतिं महाराजमिव आत्मानं जागरित इव पश्यति यात्रागत भुञ्जानमिव च भोगान् । न च तस्य महाराजस्य पर्यङ्क शयानात् द्वितीय. अन्यः प्रकृत्युपेतो विषये पर्यटन्नहनि लोके प्रसिद्धोऽस्ति, यमसौ सुप्तः पश्यति । न च उपसहृत-करणस्य रूपादिमतो दर्शनमुपपद्यते । न च देहे देहान्त-रस्य तत्तुल्यस्य सभवोऽस्ति । देहस्थस्यैव हि स्वप्नदर्शनम् । ननु पर्यङ्के शयानः पथि प्रवृत्तमात्मान पश्यति —— न बहि. स्वप्नान्पश्यतीत्येतदाह —— स. महाराज., जान-पदान् जनपदे भवान् राजोपकरणभूतान् भृत्यानन्याश्च, गृहीत्वा उपादाय, स्वे आत्मीय एव जयादिनो-पार्जिते जनपदे, यथाकाम यो यः कामोऽस्य यथाकाम इच्छातो यथा परिवर्ततेत्यर्थः । एवमेव एष विज्ञानमयः, एतदिति क्रियाविशेषण, प्राणान्गृहीत्वा जागरितस्थानेभ्य उपसहृत्य, स्वे शरीरे स्वे एव देहे न बहि, यथाकाम परिवर्तते——कामकर्मभ्यामुद्भासिता· पूर्वानुभूतवस्तुसदृशीर्वासना अनुभवतीत्यर्थः । तस्मात् स्वप्ने मृषाध्यारोपिता एव आत्मभूतत्वेन लोका अविद्यमाना एव सन्त, तथा जागरितेऽपि——इति प्रत्येतव्यम् । तस्माद्विशुद्ध. अक्रियाकारकफलात्मको विज्ञानमय· इत्येतत् सिद्धम् । यस्मात् दृश्यन्ते द्रष्टुर्विषयभूता क्रियाकारकफलात्मका कार्यकरणलक्षणा लोकाः, तथा स्वप्नेऽपि, तस्मात् अन्योऽसौ दृश्येभ्य· स्वप्न-जागरितलोकभ्यो द्रष्टा विज्ञानमयो विशुद्ध ।

शकर.

( २ ) स्वप्नपदार्थाना तत्तत्काले परमात्मसृष्टतया यथार्थत्वेऽपि लोकदृष्ट्यनुसारेणेवशब्द· प्रयुक्त । अत एव सूत्रकृता ' वैधर्म्याच्च न स्वप्नादिवत् ' ( ब्रसू २।२।२९ ) इति सूत्रितम् । न च बहिष्कुलायसचरणस्य ( बृउ. ४।३।१२ ) श्रुतत्वात् स्वे शरीरे इत्यनुपपन्न इति वाच्यम् । स्वप्नदृष्टव्याघ्रमनुष्यदेहान्तरस्यापि स्वीयत्वेन ' स्वे शरीरे ' इत्यस्याविरोधात् । नन्वेव स्वे शरीरे इति व्यर्थम् । इति चेन्न । स्वे शरीरे इत्यस्य स्वीयशरीरे यत्र क्वापि परिवर्तते न तु जाग्रच्छरीरे एव इत्येतदर्थपरत्वात् ।

रग

( ३ ) जीवस्य च स्वभोगसाधनानामेषामधिष्ठातृत्व लोकसिद्धम् । 'एवमेवैष एतान्प्राणान्गृहीत्वा स्वे शरीरे यथाकाम परिवर्तते ' इत्यादिश्रुतिसिद्ध च ।

रामानुज २।४।१३

( ४ ) तानि यदा परमात्मा गृह्णाति तदेतत्पुरुषो जीवः स्वपितिनाम । स यत्र परमात्मा स्वप्नया

नाड्या चरति तदा जीव उच्चावच निगच्छतीव ।

मध्व.

अथ यदा सुषुप्तो भवति । यदा न कस्यचन वेद । हिता नाम नाड्यो द्वासप्तति सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते । ताभि प्रत्यवसृप्य पुरीतति शेते । स यथा कुमारो वा महाराजो वा महाब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीत । एवमेवैष एतच्छेते ॥

( १ ) दर्शनवृत्तौ स्वप्ने वासनाराशेर्दृश्यत्वाद तद्धर्मतेति विशुद्धता अवगता आत्मन । तत्र यथाकाम परिवर्तत इति कामवशात् परिवर्तनमुक्तम् । द्रष्टुर्दृश्यसबन्धश्च अस्य स्वाभाविक इत्यशुद्धता शङ्क्यते । अतस्तद्विशुद्ध्यर्थमाह — अथ यदा सुषुप्तो भवति — यदा स्वप्न्यया चरति, तदा प्यय विशुद्ध एव । अथ पुन यदा हित्वा दर्शनवृत्तिं स्वप्न यदा यस्मिन् काले सुषुप्त सुष्ठु सुप्त. सप्रसाद स्वाभाव्य गतः भवति — सलिलमिवान्यसबन्धकालुष्य हित्वा स्वाभाव्येन प्रसीदति । कदा सुषुप्तो भवति ? यदा यस्मिन् काले, न कस्यचन न किंचनेत्यर्थ , वेद विजानाति । कस्यचन वा शब्दादे. सबन्धिवस्त्वन्तर किंचन न वेद — इत्यध्याहार्यम् । पूर्वे तु न्याय्य, सुप्ते तु विशेषविज्ञानाभावस्य विवक्षितत्वात् । एव तावद्विशेषविज्ञानाभावे सुषुप्तो भवतीत्युक्तम् । केन पुन क्रमेण सुषुप्तो भवतीत्युच्यते—हिता नाम हिता इत्येवनाम्न्यो नाड्य. शिराः देहस्यान्नरसविपरिणामभूता , ताश्च द्वासप्तति सहस्राणि — द्वे सहस्रे अधिके सप्ततिश्च सहस्राणि—ता द्वासप्तति. सहस्राणि, हृदयात् — हृदय नाम मासपिण्ड — तस्मान्मासपिण्डात्पुण्डरीकाकारात्, पुरीतत हृदयपरिवेष्टनमाचक्षते — तदुपलक्षित शरीरमिह पुरीतच्छब्देनाभिप्रेत — पुरीततमभिप्रतिष्ठन्त इति शरीर कृत्स्न व्याप्नुवत्यः अश्वत्थपर्णराजय इव बहिर्मुख्यः प्रवृत्ता इत्यर्थ । तत्र बुद्धेरन्त करणस्य हृदय स्थानम् । तत्रस्थबुद्धितन्त्राणि च इतराणि बाह्यानि करणानि । तेन बुद्धि कर्मवशात् श्रोत्रादीनि ताभिर्नाडीभि मत्स्यजालवत् कर्णशष्कुल्यादिस्थानेभ्यः प्रसारयति । प्रसार्य च अधितिष्ठति जागरितकाले । ता विज्ञानमयोऽभिव्यक्तस्वात्मचैतन्यावभासतया व्याप्नोति । सकोचनकाले च तस्या अनुसकुचति । सोऽस्य विज्ञानमयस्य स्वापः । जाग्रद्विकासानुभवो भोग' । बुद्ध्युपाधिस्वभावानुविधायी हि स., चन्द्रादिप्रतिबिम्ब इव जलाद्यनुविधायी । तस्मात् तस्या बुद्धेः जाग्रद्विषयायाः ताभि. नाडीभि. प्रत्यवसर्पणमनु प्रत्यवसृप्य पुरीतति शरीरे शेते तिष्ठति — तप्तमिव लोहपिण्ड अविशेषेण सव्याप्य अग्निवत् शरीर सव्याप्य वर्तत इत्यर्थ. । स्वाभाविक एव स्वात्मनि वर्तमानोऽपि कर्मानुगतबुद्ध्यनुवृत्तित्वात् पुरीतति शेत इत्युच्यते । न हि सुषुप्तिकाले शरीरसबन्धोऽस्ति । 'तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य ' इति हि वक्ष्यति । सर्वससारदु खवियुक्तेयमवस्थेत्यत्र दृष्टान्तः—स यथा कुमारो वा अत्यन्तबालो वा, महाराजो वा अत्यन्तवश्यप्रकृतिः यथोक्तकृत्, महाब्राह्मणो वा अत्यन्तपरिपक्वविद्याविनयसपन्न , अतिघ्नीं—अतिशयेन दु ख हन्तीत्यतिघ्नी आनन्दस्य अवस्था सुखावस्था तां प्राप्य गत्वा, शयीत अवतिष्ठेत । एषा च कुमारादीना स्वभावस्थाना सुख निरतिशय प्रसिद्ध लोके । विक्रियमाणाना हि तेषा दु ख न स्वभावत' । तन तेषा स्वाभाविक्यवस्था दृष्टान्तत्वेनोपादीयते, प्रसिद्धत्वात् । न तेषा स्वाप एवाभिप्रेतः । स्वापस्य दार्ष्टान्तिकत्वेन विवक्षितत्वात् विशेषाभावाच्च । विशेषे हि सति दृष्टान्तदार्ष्टान्तिकभेदः स्यात् । तस्मान्न तेषा स्वापो दृष्टान्तः—एवमेव, यथा अय दृष्टान्त', एष विज्ञानमय एतत् शयन शेते इति—एतच्छब्दः क्रियाविशेषणार्थ —एवमय स्वाभाविके स्व आत्मनि सर्वससारधर्मातीतो वर्तते स्वापकाल इति । *शकर.

(१) बृउ २।१।१९, शब्रा १४।५।१।२१, २२ ( महाराजो वा० ), ब्रशकर ३।२।७, भास्कर ३।२।७, रामानुज ३।२।७ कस्यचन ( कश्चन ) सप्तति स ( सप्ततिस ), निंबार्क ३।२।७, श्रीकठ ३।२।७ सप्तति स ( सप्ततिस ), श्रीकर ३।२।७, ८, विज्ञान ३।२।७, बलदेव ३।२।७

* ब्रशकरविज्ञानौ छाउ ६।८।१ ( पृ ९०५, ९०६ ) इत्यत्र द्रष्टव्यौ ।

(२) आत्मनो हितावहत्वाद्धिता इति प्रसिद्धाः। नाडीमार्गेण गत्वा पुरीतदाख्यहृदयवेष्टन(मा)स परिवृतहृदयान्तर्गतब्रह्मणि शयाने जीवे प्रासादे खट्वायां पर्यङ्के शेत इतिवन्नाडिषु शेते पुरीतति शेते ब्रह्मणि शेत इति। कुमारः स्तनधय। अतिनीमतिशय गता मात्रा गत्वैतदेतस्मिन्काले पुरीतति शेत इत्यर्थ। एत च्छब्द. पुरीतत्परो वा द्रष्टव्य।

रग

(३) सम्भवति च प्रासादखट्वापर्यङ्कवन्नाड्यादीना कार्यभेद। तत्र नाडीपुरीततौ प्रासादखट्वास्थानीयौ। ब्रह्म तु पर्यङ्कस्थानीयम्। अतो ब्रह्मैव साक्षात्सुषुप्तिस्थानम्।

रामानुज ३।२।७

(४) सर्वदा महाराजवत्प्राणान् गृही वा परमात्मा परिवर्तते। जीवस्तु कदाचिदेव स्वप्ने राजवदात्मान पश्यति कदाचिद्ब्राह्मणवच्छ्रमार्जागादिवद्वा। आनन्दस्य परमात्मनोऽतिघ्नीं समीपम्। कुमारो रुद्र। महाराजो वायु। महाब्राह्मणो ब्रह्मा। न हि जीवो विज्ञानपूरक प्राणाना विज्ञानमादत्ते। न च सर्वप्राणलोकदेवभूतानां स्रष्टा।

मत्व

स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाऽग्ने क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मन सर्वे प्राणा सर्वे लोका सर्वे देवा सर्वाणि भूतानि व्युच्चरन्ति। तस्योपनिषत्सत्यस्य सत्यमिति। प्राणा वै सत्य तेषामेष सत्यम्॥

(१) क्वैष तदाऽभूदित्यस्य प्रश्नस्य प्रतिवचनमुक्तम्। अनेन च प्रश्ननिर्णयेन विज्ञानमयस्य स्वभावतो विशुद्धिः असंसारित्व च उक्तम्। कुत एतदागादित्यस्य प्रश्नस्य पाकरणार्थ. आरम्भ। ननु यस्मिन्ग्रामे नगरे वा यो भवति, सोऽन्यत्र गच्छन् तत एव ग्रामान्नगराद्वा गच्छति, नान्यत। तथा सति क्वैष तदाऽभूदित्येतावानेवास्तु प्रश्न। यत्राभूत् तत एव आगमन प्रसिद्ध स्यात् नान्यत इति कुत एतदागादिति प्रश्नो निरर्थक एव —किं श्रुतिरुपालभ्यते भवता? न। किं तर्हि द्वितीयस्य प्रश्नस्य अर्थान्तर श्रोतुमिच्छामि, अत आनर्थक्य चोदयामि। एव तर्हि कुत इत्यपादानार्थता न गृह्यते। अपादानार्थत्वे हि पुनरुक्तता, नान्यार्थत्वे। अस्तु तर्हि निमित्तार्थ प्रश्नः—कुत एतदागात्, किंनिमित्तमिहागमनमिति। न निमित्तार्थताऽपि, प्रतिवचनवैरूप्यात्। आत्मनश्च सर्वस्य जगत अग्निविस्फुलिङ्गादिवदुत्पत्तिः प्रतिवचने श्रूयते। न हि विस्फुलिङ्गाना विद्रवणे अग्निर्निमित्त, अपादानमेव तु स। तथा परमात्मा विज्ञानमयस्य आत्मनोऽपादानत्वेन श्रूयते—'अस्मादात्मन' इत्येतस्मिन्वाक्ये। तस्मात् प्रतिवचनवैलोम्यात् कुत इति प्रश्नस्य निमित्तार्थता न शक्यते वर्णयितुम्। नन्वपादानपक्षेऽपि पुनरुक्तता दोष स्थित एव।

नैष दोष., प्रश्नाभ्यामात्मनि क्रियाकारकफलात्मतायोऽस्य विवक्षितत्वात्। इह हि विद्याविद्याविषयावुपन्यस्तौ— 'आत्मेत्येवोपासीत' 'आत्मानमेवावेत्' 'आत्मानमेव लोकमुपासीत' इति विद्याविषय.। तथा अविद्याविषयश्च पाङ्क्त कर्म तत्फल चान्नत्रय नामरूपकर्मात्मकमिति। तत्र अविद्याविषये वक्तव्य सर्वमुक्तम्। विद्याविषयस्तु आत्मा केवल उपन्यस्त. न निर्णीतः। तन्निर्णयाय च 'ब्रह्म ते ब्रवाणि' इति प्रक्रान्त, 'ज्ञपयिष्यामि' इति च। अतः तद्ब्रह्म विद्याविषयभूत ज्ञापयितव्य याथात्म्यत। तस्य च याथात्म्य क्रियाकारकफलभेदशून्य अत्यन्तविशुद्धमद्वैत —इत्येतद्विवक्षितम्। अतस्तदनुरूपौ प्रश्नावुत्थाप्येते श्रुत्या — क्वैष तदाऽभूत्कुत एतदागादिति। तत्र —

---

¹ निंबार्कश्रीकंठौ रामानुजवत्।

(१) बृउ २।१।२०, शबा १४।५।१।२३ यथोर्णनाभि (यथोर्णनाभि) विस्फु (विस्फु) भूतानि+ (सर्व एत आत्मानो), ब्रशकर २।३।१७ भूतानि+ (सर्व एत आत्मानो), २।४।१ ऽग्ने. क्षुद्रा (ऽग्नेर्ज्वलत क्षुद्रा) मेवास्मा (मेवैतस्मा), ३।२।८ मेवास्मा (मेवैतस्मा), भास्कर २।३।१७ भूतानि+ (सर्वे एत आत्मानो), २।३।४३, २।४।१, श्रीकंठ २।३।१८ भूतानि+ (सर्वे एवात्मानो), श्रीकर १।३।७, विज्ञान १।१।२२, २।१।१४ दात्मन. व्युच्चरन्ति (दात्मन सर्वे एवात्मानो व्युच्चरन्ति), २।३।६ २।३।१७, ४३ व्युच्चरन्त्ये ...व्युच्चरन्ति (व्युच्चरन्त्येवमेवैतस्मादात्मन सर्व एत आत्मानो व्युच्चरन्ति), ३।२।२८.

यत्र भवति तत् अधिकरण, यद्भवति तदधिकर्तव्य — तयोश्च अधिकरणाधिकर्तव्ययोर्भेद दृष्टो लोके । तथा — यत आगच्छति तत् अपादान — य आगच्छति स कर्ता, तस्मादन्यो दृष्ट । तथा आत्मा क्वाप्यभूदन्य स्मिन्नन्य कुतश्चिदागादन्यस्मादन्य — केनचिद्भिन्नेन साधनान्तरेण — इत्येव लोकवत्प्राप्ता बुद्धि' । सा प्रतिवचनेन निवर्तयितव्येति । नायमात्मा अन्यः अन्यत्र अभूत्, अन्यो वा अन्यस्मादागत, साधनान्तर वा आत्मन्यस्ति । किं तर्हि स्वात्मन्येवाभूत् — 'स्वमात्मानमपीतो भवति' 'सता सोम्य तदा सपन्नो भवति' 'प्राज्ञेनात्मना सपरिष्वक्त.' 'पर आत्मनि सप्रतिष्ठत' इत्यादिश्रुतिभ्य' । अत एव नान्य अन्यस्मादागच्छति । तत् श्रुत्यैव प्रदर्श्यते 'अस्मादात्मन ' इति आत्मव्यतिरेकेण वस्त्वन्तराभावात् । नन्वस्ति प्राणाद्यात्मव्यतिरिक्त वस्त्वन्तरम् । न । प्राणादेस्तत एव निष्पत्तेः । तत्कथमिति । उच्यते — तत्र दृष्टान्त — स यथा लोके ऊर्णनाभि लूताकीट एक एव प्रसिद्ध सन् स्वात्माप्रविभक्तेन तन्तुना उच्चरेत् उद्गच्छेत् । न चास्ति तस्योद्गमने स्वतोऽतिरिक्त कारकान्तरम् । यथा च एकरूपादेकस्मादग्ने' क्षुद्रा अल्पा विस्फुलिङ्गा त्रुटयः अग्न्यवयवाः व्युच्चरन्ति विविध नाना वा उच्चरन्ति । यथा इमौ दृष्टान्तौ कारकभेदाभावेऽपि प्रवृत्तिं दर्शयत, प्राक्प्रवृत्तेश्च स्वभावत एकत्व, एवमेव अस्मात् आत्मनो विज्ञानमयस्य प्राक्प्रतिबोधात् यत्स्वरूप तस्मादित्यर्थ, सर्वे प्राणा वागादय, सर्वे लोका. भरादय सर्वाणि कर्मफलानि, सर्वे देवा. प्राणलोकाधिष्ठातार. अग्न्यादय सर्वाणि भूतानि ब्रह्मादिस्तम्बपर्यन्तानि प्राणिजातानि, सर्व एत आत्मान इत्यस्मिन्पाठे उपाधिसपर्कजनितप्रबुध्यमानविशेषात्मान इत्यर्थ, व्युच्चरन्ति । यस्मादात्मनः स्थावरजङ्गम जगदिद अग्निविस्फुलिङ्गवत् व्युच्चरत्यनिश, यस्मिन्नेव च प्रलीयते जलबुद्बुदवत्, यदात्मक च वर्तते स्थितिकाले, तस्य अस्य आत्मनो ब्रह्मण', उपनिषत्— उप समीप निगमयतीति अभिधायकः शब्द उपनिषदित्युच्यते—शास्त्रप्रामाण्यादेतच्छब्दगतो विशेषोऽवसीयते उपनिगमयितृत्व नाम । काऽसावुपनिषदित्याह — सत्यस्य सत्यमिति । सा हि सर्वत्र चोपनिषत् अलौकिकार्थत्वाद्दुर्विज्ञेयार्थेति तदर्थमाचष्टे—प्राणा वै सत्य तेषामेष सत्यमिति । एतस्यैव वाक्यस्य व्याख्यानाय उत्तर ब्राह्मणद्वय भविष्यति । शकर.

( २ ) ' अत. प्रबोधोऽस्मात् ' — यस्माच्चाऽऽत्मैव सुप्तिस्थानमत एव च कारणान्नित्यवदेवास्मादात्मन. प्रबोध स्वापाधिकारे शिष्यते ' कुत एतदागात् ' ( बृउ २।१।१६ ) इत्यस्य प्रश्नस्य प्रतिवचनावसरे ' यथाऽग्ने. क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्वे प्राणाः ' इत्यादिना ।

ब्रशकर. ३।२।८

( ३ ) तत्र ' यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति ' इत्युपक्रम्याह ' सर्व एत आत्मानो व्युच्चरन्ति ' इत्यतो जीवो जायत इति प्राप्ते ब्रूमः । नात्मा जायते । भूयसीना च श्रुतीनामन्यथाकर्तुमशक्यत्वात्तदविरोधाय विस्फुलिङ्गश्रुतिर्विपरिणेया । न चात्रापि विकारभावो विवक्षित. किन्तूपाधिकृतभेदाभिप्राया हि सा । तेष्वप्यग्निसामान्यानुगमात्पार्थिवद्रव्यविश्लेषवशाद्विच्छेदमात्र नान्यत्र भेदः सुषुप्तिप्रकरणत्वान्न सृष्ट्यभिप्रायेणेति स्थितम् ।

भास्कर २।३।१७

( ४ ) सुषुप्त्याधारात्परमात्मन' सर्वे प्राणा । प्राणशब्दो जीवपरः । लोकशब्दो ज्ञानपरः । लोकन लोक इति व्युत्पत्तेः । देवशब्दः इन्द्रियपर । सर्वाणि च भूतानि व्युच्चरन्तीत्यर्थ. । अत्र सुप्तजीवमात्रस्योद्गमनापादानप्रश्ने सर्वोद्गमनापादानत्वकीर्तनस्य किं फलमिति चेन्न । सर्वभूतोद्गमनापादानस्य परमात्मनः सुप्तजीवोद्गमनापादानत्वे को भार इत्येतदर्थपरत्वात्तस्य । तस्य परमात्मन' । सत्यस्य सत्यमिति उपनिषद्रहस्यनामेत्यर्थ. । प्राणा इति । प्राणा आत्मान इत्यर्थ । तेषामचेतनवत्स्वरूपान्यथाभावात्सत्यता निर्विकारता । परमात्मनस्तु धर्मभूतज्ञानस्वभावान्यथाभावस्याप्यभावात्तदपेक्षयाऽप्यधिकसत्यतेत्यर्थः ।

* रग.

* शेष सरल व्याख्यातम् ।

( ५ ) ' आदित्यचन्द्रविद्युत्सु भूतेष्वादर्श एव च। गच्छ पश्चात्यशब्दे च चक्षुश्छायागत तथा। हिरण्यगर्भ सस्थ च सद्योपास्य हरिं परम्। तद्देवसाक्षितामेत्य हृत्पास्य हरिं पुनः। मुक्तिमेत्यथ यो बाह्यान्मुक्तिमेष्यति सोऽपि तु। हृदि किंचिदुपास्यैव विष्णु मुक्तिमनुव्रजेत्। यानि सूर्यादिनामानि विष्णोस्तानि न सशय। तदुक्तान्येव सूर्यादेराकृष्यैवोपचारत। विशेषेण तु सबन्धो यत स्वहृदि सस्थिते। जीवस्यातो न सोमादिनाम्नाऽऽहूतो हरि. परः। जीव च चारयेत्तत्र यदा विष्णु सनातन। स्वप्न पश्यति जीवोऽय यदा विज्ञानरूपिणम्। सुषुम्नासस्थित विष्णुमेति तत्सुप्तिमेष्यति। सम्यग्ज्ञानमयाद्विष्णोरुत्थान वाऽप्यय व्रजेत्। प्राणानां चैव लोकाना देवाना प्राणिनामपि। सत्यसत्यो हरि. स्रष्टा पाता विलयकृत्तथा। नियन्ता मोक्षदश्चैव विष्णुरेव सनातनः ॥ ' इति नारायणश्रुतौ। मध्व

( ६ ) विस्फुलिङ्गश्रुतिश्च तेषा नामरूपसमुन्मेषाभिप्राया, न जन्मपरा। अन्यथा कृतनाशादिदोषप्रसङ्गात्। तस्माद्ब्रह्मणो न जायत एव जीव।

श्रीकठ २।३।१८

( ७ ) सर्गकाले जीवा पितुरिव पुत्रा विभक्ता भवन्ति ' यथाऽग्ने क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मन सर्व एवात्मानो व्युच्चरन्ति ' इत्यादि श्रुतेः। २।१।१४

यदेव हि यदपेक्षया स्थिर भवति तदपेक्षया सत्य भवति। यथा देहाद्यपेक्षया प्राणा ' प्राणा वै सत्यम् ' इति श्रुतेः। २।३।६

नित्यत्वादिना सजातीयत्वस्योपपादिततया जीवो ब्रह्मण. अंशः, पितुरिव पुत्रः। तथा च पितापुत्रयोरिवाग्निविस्फुलिङ्गयोरिव वाऽविभागेनाभिव्यक्तिलक्षणः कार्यकारणभाव उपपद्यते। ' उत्पत्तिस्थित्यभिव्यक्तिविकारप्रत्ययाप्तयः। वियोगान्यत्वधृतय कारण नवधा स्मृतम् ॥ ' इति पातञ्जलभाष्ये व्यासदेवैरभिव्यक्तिरूपाया अपि कार्यताया उक्तत्वादिति। अभिव्यक्तिश्चात्र स्वव्यापारारूढता। अशत्वे श्रुत्यन्यथाऽनुपपत्तिं प्रमाणयति—नानेत्यादिना।

विज्ञान. २।३।४३

( मध्यमप्राणविद्या )

प्राण शिशुरूप सोपस्कर, तस्य परिचर्याकर्त्र्य सप्ताक्षितय रुद्रादिदेवान्वायत्ता, शिरोरूप अर्वाग्बिल ऊर्ध्वबुध्न चमस, सप्त ऋषय प्राणरूपा वाक्सहिता

**[1]यो ह वै शिशुꣳ साधानꣳ सप्रत्याधानꣳ सस्थूणꣳ सदामं वेद सप्त ह द्विषतो भ्रातृव्यानवरुणद्धि। अय वाव शिशुर्योऽय मध्यम प्राण। तस्येदमेवाधानमिद प्रत्याधान प्राण. स्थूणान्नं दाम ॥**

( १ ) 'ब्रह्म ज्ञपयिष्यामि' इति प्रस्तुतम्। तत्र यतो जगज्जात, यन्मय, यस्मिंश्च लीयते, तदेक ब्रह्म—इति ज्ञापितम्। किमात्मक पुनः तज्जगत् जायते लीयते च? पञ्चभूतात्मकम्। भूतानि च नामरूपात्मकानि। नामरूपे सत्यमिति ह्युक्तम्। तस्य सत्यस्य पञ्चभूतात्मकस्य सत्य ब्रह्म। कथ पुन भूतानि सत्यमिति मूर्तामूर्तब्राह्मणम्। मूर्तामूर्तभूतात्मकत्वात् कार्यकरणात्मकानि भूतानि प्राणा अपि सत्यम्। तेषा कार्यकरणात्मकाना भूताना सत्यत्वनिर्दिधारयिषया ब्राह्मणद्वयमारभ्यते, सैव उपनिषद्व्याख्या। कार्यकरणसत्यत्वावधारणद्वारेण हि सत्यस्य सत्य ब्रह्म अवधार्यते। अत्रोक्तम् 'प्राणा वै सत्य तेषामेष सत्यम् ' इति। तत्र के प्राणा., कियन्तो वा प्राणविषया उपनिषद का इति च — ब्रह्मोपनिषत्प्रसङ्गेन करणाना प्राणाना स्वरूपमवधारयति — पथिगतकूपारामाद्यवधारणवत्। यो ह वै शिशु साधान सप्रत्याधान सस्थूण सदाम वेद, तस्येद फलम्। किं तत्? सप्त सप्तसख्याकान् ह द्विषत. द्वेषकर्तॄन् भ्रातृव्यान् भ्रातृव्या हि द्विविधा भवन्ति, द्विषन्त. अद्विषन्तश्च—तत्र द्विषन्तो ये भ्रातृव्या. तान् द्विषतो भ्रातृव्यान् अवरुणद्धि। सप्त ये शीर्षण्या. प्राणा विषयोपलब्धिद्वाराणि तत्प्रभवा विषयरागाः सहजत्वात् भ्रातृव्याः। ते हि अस्य स्वात्मस्थां दृष्टिं विषयविषया कुर्वन्ति। तेन ते द्वेष्टारो भ्रातृव्याः, प्रत्यगात्मेक्षणप्रतिषेधकरत्वात्। काठके चोक्तम् ' पराञ्चि

(१) बृउ २।२।१, शब्रा १४।५।२।१, २, मध्व. सप्त ( स सप्त ),

खानि व्यतृणत्स्वयभूस्तस्मात्पराङ् पश्यति नान्तरात्मन्' इत्यादि । तत्र य शिश्वादीन्वेद, तेषा याथात्म्यमवधारयति, स एतान् भ्रातृव्यान् अवरुणद्धि अपावृणोति विनाशयति । तस्मै फलश्रवणेनाभिमुखीभूतायाह—अय वाव शिशु । कोऽसौ ? योऽय मध्यम. प्राण', शरीर मध्ये य' प्राणो लिङ्गात्मा, यः पञ्चधा शरीरमाविष्ट.—बृहन्पाण्डरवास सोम राजन्नित्युक्त, यस्मिन् वाङ्मन. प्रभृतीनि करणानि विषक्तानि—पड्वीशशङ्कुनिदर्शनात् स एष शिशुरिव, विषयेष्वितरकरणवदपटुत्वात् । शिशु साधानमित्युक्तम् । किं पुनस्तस्य शिशो वत्सस्थानीयस्य करणात्मन आधानम् । तस्य इदमेव शरीर आधान कार्यात्मकम् — आधीयतेऽस्मिन्नित्याधानम् । तस्य हि शिशो प्राणस्य इद शरीरमधिष्ठानम् । अस्मिन्हि करणान्यधिष्ठितानि लब्धात्मकानि उपलब्धिद्वाराणि भवन्ति, न तु प्राणमात्रे विषक्तानि । तथा हि दर्शितमजातशत्रुणा — उपसहृतेषु करणेषु विज्ञानमयो नोपलभ्यते । शरीरदेशव्यूढेषु तु करणेषु विज्ञानमय उपलभमान उपलभ्यते । तच्च दर्शित पाणिपेषप्रतिबोधनेन । इद प्रत्याधान शिरः । प्रदेशविशेषेषु प्रति प्रत्याधीयते इति प्रत्याधानम् । प्राण' स्थूणा अन्नपानजनिता शक्ति'—प्राणो बलमिति पर्याय । बलाव ष्टम्भो हि प्राण अस्मिन् शरीरे—' स यत्रायमात्माऽबल्य न्येत्य समोहमिव ' इति दर्शनात् । यथा वत्स स्थूणावष्टम्भः एवम् । शरीरपक्षपाती वायु. प्राण स्थूणति केचित् । अन्न दाम — अन्न हि भुक्त त्रेधा परिणमते । य. स्थूल' परिणामः, स एतद्द्वय भूत्वा, इमामप्येति—मूत्र च पुरीष च । यो मध्यमो रस स रसो लोहितादिक्रमेण स्वकार्ये शरीर सप्तधातुकमुप चिनोति । स्वयोन्यन्नागमे हि शरीरमुपचीयते, अन्नमयत्वात् । विपर्ययेऽपक्षीयते पतति । यस्तु अणिष्ठो रस — अमृत ऊर्क् प्रभावः इति च कथ्यते । स नाभेरूर्ध्वं हृदयदेशमागत्य, हृदयाद्विप्रसृतेषु द्वासप्ततिनाडीसहस्रेष्वनुप्रविश्य, यत्तत् करणसघातरूप लिङ्ग शिशुसज्ञक, तस्य शरीरे स्थितिकारण भवति बलमुपजनयत् स्थूणाख्यम् । तेन अन्न उभयतः पाशवत्सदामवत् प्राणशरीरयोर्निबन्धन भवति । शकर

( २ ) यो ह वै शिशुमिति । तस्येद फलम् । किं तत्—सप्त हेति । सप्तपुरुषपर्याप्तान्द्वेषयुक्ताञ्छत्रूनवरुणद्धि स्ववशीकरोतीत्यर्थ. । मन्त्रस्यार्थमाह—अय वावेति । मध्यमः शरीरमध्यवर्ती पञ्चवृत्तिर्य. प्राणः स शिशुः । इतरकरणवत्क्रियाकर्तृत्वादिशून्यत्वाच्छिशुरिव शिशुरित्यर्थ. । तस्य शिशोर्वत्सस्थानीयस्य तस्येदमेव शरीरमाधानम् । आधीयतेऽस्मिन्नित्याधानम् । गर्भगोलकमिद मध्यशब्दोपस्थापित हृदयमेवाऽऽधान गर्भगोलम् । इदमेव प्रत्याधान प्रत्यक्षोपस्थापित शरीरमेव । प्रत्याधानमाहितस्याऽऽधान प्रत्याधान गर्भ आहितो वत्स. पश्चाद्भूमावाधीयत इति प्रत्याधान, प्रसूतिभूमि । एव हृदये लब्धात्मको हि प्राण. पश्चात्सर्वशरीरव्याप्यभिव्यज्यत इति प्रत्याधान प्रसूतिभूमि. । प्राणः स्थूणा । स्थूणाया हि वत्सो भवति । एव प्राणशब्दिते जीवे हि मुख्यप्राणो बद्धो भवति जीवे शरीरे स्थित एव प्राणस्यावस्थितेर्जीवो हि प्राणस्य स्थूणा । अन्न दाम पाश इत्यर्थ. । अन्नेन पाशेन बद्धो हि प्राणोऽभितिष्ठते । 'अन्न प्राणस्य षड्विंश.' इति श्रुते. । षड्विंशो हि पाशविशेष. । रग.

**तमेता सप्ताक्षितय उपतिष्ठन्ते । तद्या इमा अक्षन्लोहिन्यो राजयस्ताभिरेन<sup></sup>रुद्रोऽन्वायत्तः । अथ या अक्षन्नापस्ताभि पर्जन्य । या कनीनका तयाऽऽदित्य । यत्कृष्ण तेनाग्नि । यच्छुक्ल तेनेन्द्र । अधरयैन वर्तन्या पृथिव्यन्वायत्ता । द्यौरुत्तरया । नास्यान्न क्षीयते य एव वेद ॥**

( १ ) इदानीं तस्यैव शिशो. प्रत्याधान ऊढस्य चक्षुषि कार्श्नोपनिषद उच्यन्ते — तमेता' सप्ताक्षितय उपतिष्ठन्ते । त करणात्मक प्राण शरीरेऽन्नबन्धन चक्षुष्यूढ एता' वक्ष्यमाणा' सप्त सप्तसख्याका' अक्षितय, अक्षितिहेतुत्वात्, उपतिष्ठन्ते । यद्यपि मन्त्रकरणे तिष्ठतिरुपपूर्वः आत्मनेपदी भवति, इहापि सप्त देवताभिधानानि मन्त्रस्थानीयानि करणानि । तिष्ठतेः अतः अत्रापि आत्मनेपद न विरुद्धम् । कास्ता अक्षितय

(१) बृउ २।२।२, शब्रा १४।५।२।२, ३ यत्कृष्णं (यच्छुक्ल) च्छुक्ल (त्कृष्ण), रग कनीनका (कनीनिका).

इत्युच्यन्ते — तत् तत्र या इमा. प्रसिद्धाः, अक्षन् अक्षणि लोहिन्य. लोहिताः राजय. रेखा., ताभि· द्वारभूताभि· एन मध्यम प्राण रुद्रः अन्वायत्त. अनुगतः। अथ या. अक्षन् अक्षणि आपः धूमादिसयोगेनाभिव्यज्यमाना., ताभि अद्भिर्द्वारभूताभि. पर्जन्यो देवतात्मा अन्वायत्त. अनुगत उपतिष्ठत इत्यर्थ.। स च अन्नभूतोऽक्षितिः प्राणस्य, 'पर्जन्ये वर्षत्यानन्दिन· प्राणा भवन्ति' इति श्रुत्यन्तरात्। या कनीनका दृक्शक्ति· तया कनीनकया द्वारेण आदित्यो मध्यम प्राणमुपतिष्ठते। यत्कृष्ण चक्षुषि, तेन एनमग्निरुपतिष्ठते। यच्छुक्ल चक्षुषि, तेन इन्द्र·। अधरया वर्तन्या पक्ष्मणा एन पृथिवी अन्वायत्ता, अधरत्वसामान्यात्। द्यौ. उत्तरया, ऊर्ध्वत्वसामान्यात्। एताः सप्त अन्नभूता प्राणस्य सततमुपतिष्ठन्ते — इत्येव यो वेद, तस्यैतत्फलम् — नास्यान्न क्षीयते, य एव वेद।

शकर.

( २ ) सप्ताक्षित्युपस्थेयचक्षुर्निष्ठप्राणज्ञानस्य फलमाह —नास्यान्नमिति। स्पष्टोऽर्थः। * रग

( ३ ) आधानमवस्थान सूक्ष्मशरीरम्। प्रत्याधान वितान स्थूलशरीरम्। प्राणो नारायणः स्थूणा। 'वायुर्गोवत्सरूपेण सर्वप्राणिषु सस्थित। सूक्ष्मदेहो गृह तस्य वितान स्थूल उच्यते। अन्न दामात्मक तस्य स्थूणा तु भगवान् हरिः। ध्यायत्येव हि यो वायु श्रोत्रादीन्मनसा सह। बुद्धिं च सप्त शत्रून्स विषयेष्वभिधावतः। असुरान्सनिरुध्यैव वेत्ति नारायण परम्। दक्षिणाक्षिस्थित वायु सप्त देवा उपासते। अक्षीणज्ञानमनस. सदाशिवपुर·सरा। उपास्यमान तैर्देवैर्मोक्षार्थं वायुमीश्वरम्। स्थूणया विष्णुना सार्धं यो विद्यात्सोऽन्नमश्नुते। अक्षय्यमेवमुक्त. सन्सर्वदु खविवर्जितः॥' मध्व

**तदेष श्लोको भवति। अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहित विश्वरूपम्। तस्याऽऽसत ऋषय· सप्त तीरे वागष्टमी ब्रह्मणा सविदानेति। अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इति। इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न.। तस्मिन्यशो निहित विश्वरूपमिति। प्राणा वै यशो विश्वरूपम्। प्राणानेतदाह। तस्याऽऽसत ऋषयः सप्त तीर इति। प्राणा वा ऋषय। प्राणानेतदाह। वागष्टमी ब्रह्मणा सविदानेति। वाग्घ्यष्टमी ब्रह्मणा संवित्ते॥**

( १ ) तत् तत्र एतस्मिन्नर्थे एष श्लोकः मन्त्रो भवति— अर्वाग्बिलश्चमस इत्यादि। तत्र मन्त्रार्थमाचष्टे श्रुति· — अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इति। क पुनरसावर्वाग्बिलश्चमस ऊर्ध्वबुध्न·? इद तत्। शिर· चमसाकार हि तत्। कथम्? एष हि अर्वाग्बिल· मुखस्य बिलरूपत्वात्, शिरसो बुध्नाकारत्वात् ऊर्ध्वबुध्नः। तस्मिन् यशो निहित विश्वरूपमिति — यथा सोम चमसे, एवं तस्मिन् शिरसि विश्वरूप नानारूप निहित स्थित भवति। किं पुनस्तत्? यशः —प्राणा वै यशो विश्वरूप—प्राणाः श्रोत्रादय· वायवश्च मरुत· सप्तधा तेषु प्रसृता यश. — इत्येतदाह मन्त्र, शब्दादिज्ञानहेतुत्वात्। तस्याऽऽसत ऋषय· सप्त तीर इति—प्राणाः परिस्पन्दात्मका·, त एव च ऋषय·, प्राणानेतदाह मन्त्र। वागष्टमी ब्रह्मणा सविदानेति— ब्रह्मणा सवाद कुर्वती अष्टमी भवति। तद्धेतुमाह — वाग्घ्यष्टमी ब्रह्मणा सवित्त इति।

शकर.

( २ ) तस्मिन्यशो निहित विश्वरूपमित्येतद्वाक्य प्राणानाह। तत्र हेतुमाह — प्राणा वै यशो विश्वरूपम्। प्राणस्य प्राणापानादिबहुरूपतया यशोवत् प्रसृमरत्वाद्यशस्त्वेन रूपणम्। वृत्तिभेदात्प्राणा इति बहुवचनम्। तस्याऽऽसत इति। साक्षिश्रोत्रनासिकास्योपाधिसबन्धिनः सप्त शीर्षण्याः प्राणास्तस्य समीपे वर्तन्त इत्यर्थ.। वागष्टमीति। ब्रह्मणा वेदेन सविदाना सवाद कुर्वती सवित्ते। समित्येकीकारे वित्तशब्दो ज्ञापनपरः। ब्रह्मणैकप्रत्ययैकबुद्धि·। ब्रह्मणा वेदेनैककण्ठा वेदवादिनीति यावत्। रग

* शेष सरल व्याख्यातम्।

(१) बृउ २।२।३, शब्रा १४।५।२।४, ५ वै यशो+ ( निहित ), अशकर १।४।८, रामानुज १।४।८, निंबार्क १।४।८, ९, मध्व सवित्ते ( सवित्ता ), अमध्व १।४।९, श्रीकठ १।४।८, श्रीकर १।४।८, वल्लभ. १।४।८, विज्ञान १।४।८, बलदेव १।४।८

( ३ ) 'विश्वरूप यशश्चेति नाम्ना विष्णू रमा तथा। वायुश्च सस्थिता नित्य सर्वेषा दक्षिणाक्षिगाः। पूर्णत्वाद्विश्वतो विष्णो रमाया. श्रीषु पूर्णत। वायोर्जीवेषु पूर्णत्वाद्यशोज्ञानसुखात्मकाः। प्राणाश्चैते प्रणेतृत्वादृषयो रुद्रपूर्वका. ॥' मध्व

( ४ ) 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' इत्यस्मिन्मन्त्रे चमसो यागशरीरत्वेनैव प्रतिपादितो न स्वातन्त्र्येण। विज्ञान १।४।८

**इमावेव गोतमभरद्वाजौ। अयमेव गोतमोऽय भरद्वाज। इमावेव विश्वामित्रजमदग्नी। अयमेव विश्वामित्रोऽय जमदग्नि। इमावेव वसिष्ठ कश्यपौ। अयमेव वसिष्ठोऽयं कश्यप। वागेवात्रि'। वाचा ह्यन्नमद्यते। अत्तिर्ह वै नामैतद्यदत्रिरिति। सर्वस्यात्ता भवति। सर्वमस्यान्न भवति य एव वेद ॥ ***

( १ ) के पुनस्तस्य चमसस्य तीर आसत ऋषय इति—इमावेव गोतमभरद्वाजौ कर्णौ—अयमेव गोतम. अय भरद्वाज दक्षिणश्च उत्तरश्च, विपर्ययेण वा। तथा चक्षुषी उपदिशन्नुवाच—इमावेव विश्वामित्रजमदग्नी दक्षिण विश्वामित्र उत्तर जमदग्नि, विपर्ययेण वा। इमावेव वसिष्ठकश्यपौ—नासिके उपदिशन्नुवाच। दक्षिण' पुटो भवति वसिष्ठः। उत्तरः कश्यप— पूर्ववत्। वागेव अत्रिः अदनक्रियायोगात् सप्तम.। वाचा ह्यन्नमद्यते। तस्मादत्तिर्ह वै प्रसिद्ध नामैतत्— अत्तृत्वादत्तिरिति, अत्तिरेव सन् यदत्रिरित्युच्यते परोक्षेण। सर्वस्य एतस्यान्नजातस्य प्राणस्य, अत्रिनिर्वचनविज्ञानादत्ता भवति। अत्तैव भवति नामुष्मिन्नन्येन पुन प्रत्यद्यते इत्येतदुक्त भवति— सर्वमस्यान्न भवतीति। य एव एतत् यथोक्त प्राणयाथात्म्य वेद, स एव मध्यम. प्राणो भूत्वा आधानप्रत्याधानगतो भोक्तैव भवति, न भोज्यम्। भोज्याद्व्यावर्तत इत्यर्थ'। शकर

* ब्रशकर छाउ ३।१।१ (पृ ७९२) इत्यत्र द्रष्टव्य।

(१) बृउ २।२।४, शब्रा १४।५।२।६, ब्रशकर १।३।३१, रग गोत (गौत) कश्य (काश्य), मध्व. अत्तिर्ह (अत्रिर्ह) दत्रिरिति (दत्तिरिति), श्रीकर १।३।३१

( २ ) अत्तृत्वादत्तिरित्येतन्नाम सदत्रिरिति परोक्षेणोच्यते। वागत्रित्वज्ञानस्य फलमाह— सर्वस्यात्तेति। अत्र सर्वस्यात्ता भवतीत्यर्थस्य सिद्धत्वात्सिद्धस्य कीर्तनमनुकूलभोग्यत्वकीर्तनमिति द्रष्टव्यम्। रग.

( ३ ) 'गौतमो नाम रुद्रस्तु सर्वज्ञत्वात्प्रकीर्तित.। भरद्वाजस्तु पर्जन्यो वाजमन्न भरेद्यतः। वृष्टयैव विश्वामित्राख्य आदित्यो यत्प्रकाशनात्। विश्व विज्ञापयन्नित्यमग्निस्तु जमदग्निक। जात मित चात्ति यस्माद्द्धशिष्ठाख्यस्तु वासव.। वसतामुत्तमो यस्मात्पृथ्वी कश्यपनामिका। मेघवृष्ट पिबेद्यत्क शयानैव हि सा सदा। द्यौरत्रिरिति सप्रोक्ता तत्स्थैर्हि हुतमद्यते। श्रोत्रदिङ्नासिकाबाहुदक्षिणाक्षिषु सस्थिता। द्वितीयेन तु रूपेण देवा एते शिवादय'। एवमेषा तु नामानि वेत्ति य सर्वभुग्भवेत्। सरस्वत्यष्टमी चैव वाचि सख्याविशेषतः। उपास्ते वायुमेवैक स स्थूण ब्रह्मवेदिता। ब्रह्मनामा सदा वायुरेनां वेत्ति विशेषत। इति ता वेद यो विद्वान् सर्वात्ता स भविष्यति ॥' इति नारायणीये। मध्व

ब्रह्मणो रूपे मूर्तामूर्ते अध्यात्माधिदैवते, पुरुषस्वरूप नेति नेति आदेशसहित, सत्यस्य सत्यम्

**[1]द्वे वाव ब्रह्मणो रूपे। मूर्तं चैवामूर्तं च। मर्त्यं चामृत च। स्थित च यच्च। सच्च त्यच्च ॥**

( १ ) तत्र प्राणा वै सत्यमित्युक्तम्। याः प्राणाना मुपनिषद., ता ब्रह्मोपनिषत्प्रसङ्गेन व्याख्याता.—

(१) बृउ २।३।१, शब्रा १४।५।३।१ त्यच्च (त्य च), ब्रशकर ३।२।२२, भास्कर ३।२।२३, रग चैवामूर्तं (चामूर्तं) यच्च। सच्च (सच्च यच्च), रामानुज ३।२।२१, २३, २६ चैवामूर्तं (चामूर्तं), निंबार्क ३।२।२२ रामानुजवत्, मध्व शब्रावत्, श्रीकठ ३।२।२१, २५, २६ रामानुजवत्, श्रीकर १।१।१ (पृ १९) १।१।१२, १।२।१४, २।१।१३, ३।२।१२, १३, १६ १९, २०, २५, २८, ३।३।११, ३।३।३३, ४।३।७ ४।४।१, ७, २२, वल्लभ ३।२।१७, विज्ञान १।४।१८ ३।२।१४, २२ रामानुजवत्, बलदेव ३।२।२२

एते ते प्राणा इति च । ते किमात्मका. कथ वा तेषा सत्यत्वमिति च वक्तव्यमिति पञ्चभूतानां सत्यानां कार्यकरणात्मकानां स्वरूपावधारणार्थं इद ब्राह्मणमारभ्यते—यदुपाधिविशेषापनयद्वारेण ‘ नेति नेति ’ इति ब्रह्मण. सतत्त्व निर्दिधारयिषितम् । तत्र द्विरूप ब्रह्म पञ्चभूतजनितकार्यकरणसबद्ध मूर्तामूर्ताख्य मर्त्यामृतस्वभाव तज्जनितवासनारूप च सर्वज्ञ सर्वशक्ति सोपाख्य भवति । क्रियाकारकफलात्मक च सर्वव्यवहारास्पदम् । तदेव ब्रह्म विगतसर्वोपाधिविशेष सम्यग्दर्शनविषय अजर अमृत अभय, वाङ्मनसयोरप्यविषय अद्वैतत्वात् ‘ नेति नेति ’ इति निर्दिश्यते । तत्र यदपोहद्वारेण ‘ नेति नेति ’ इति निर्दिश्यते ब्रह्म, ते एते द्वे वाव—वावशब्दोऽवधारणार्थ —द्वे एवेत्यर्थ.—ब्रह्मणः परमात्मन. रूपे— रूप्यते याभ्या अरूप पर ब्रह्म अविद्याध्यारोप्यमाणाभ्याम् । के ते द्वे ? मूर्तं चैव–मूर्तमेव च । तथा अमूर्तं च—अमूर्तमेव चेत्यर्थ. । अन्तर्णीतस्वात्मविशेषणे मूर्तामूर्ते द्वे एवेत्यवधार्येते । कानि पुन स्तानि विशेषणानि मूर्तामूर्तयोरित्युच्यन्ते—मर्त्यं च मर्त्यं मरणधर्मि, अमृत च तद्विपरीत, स्थित च—परिच्छिन्न गतिपूर्वक यत्स्थास्नु, यच्च—यातीति यत्—व्यापि अपरिच्छिन्न स्थितविपरीत, सच्च—सदित्यन्येभ्यो विशेष्यमाणासाधारणधर्मविशेषवत्, त्यच्च—तद्विपरीत ‘ त्यत् ’ इत्येव सर्वदा परोक्षाभिधानार्हम् ।

शकर

( २ ) द्वे वावेति । ब्रह्मणो द्वे शरीरे । वावशब्द. प्रसिद्धौ । मूर्तं कठिनममूर्तमकठिनम् । मर्त्यं मरणधर्मक विनश्वरमित्यर्थः । अमृत तदितरत् । स्थितमव्यापकम् । सत्प्रत्यक्षोपलभ्यम् । यत् व्यापकम् । एति गच्छति सर्वानिति यद्व्यापकमित्यर्थ. । त्यत्तदितरदित्यर्थ. ।

रग

( ३ ) अतो निदिध्यासनाय ब्रह्मस्वरूपमुपदिशत् ‘ द्वे वाव ब्रह्मणः ’ इत्यादि शास्त्र ब्रह्मणो मूर्तामूर्तरूपद्वयादिविशिष्टता प्रागसिद्धां नानुवदितु क्षमम् । ३।२।२३

जीववत्पृथक् सिद्ध्यनर्हविशेषणत्वेनाचिद्वस्तुनो ब्रह्माशत्वम् । विशिष्टवस्त्वेकदेशत्वेनाभेदव्यवहारो मुख्यः । विशेषणविशेष्ययोः स्वरूपस्वभावभेदेन भेदव्यवहारोऽपि मुख्य. । ब्रह्मणो निर्दोषत्व च रक्षितम् । तदेव प्रकाशजातिगुणशरीराणा मणिव्यक्तिगुण्यात्मन. पृथक्सिद्ध्यनर्हविशेषणतया यथाशत्व तथेह जीवस्याचिद्वस्तुनश्च ब्रह्मप्रत्यशत्वम् । * रामानुज ३।२।२८

( ४ ) विशरणावसादनयुक्त सत् । तत सर्वज्ञ च सत्यम् । मध्व.

**तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्च । एतन्मर्त्यम् । एतत्स्थितम् । एतत्सत् । तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रस य एष तपति । सतो ह्येष रस ॥**

( १ ) तत्र चतुष्टयविशेषणविशिष्ट मूर्तं, तथा अमूर्तं च । तत्र कानि मूर्तविशेषणानि कानि चेतराणीति विभज्यते । तदेतन्मूर्तं मूर्छितावयव इतरेतरानुप्रविष्टावयव घन सहतमित्यर्थः । किं तत् ? यदन्यत् । कस्मादन्यत् ? वायोश्चान्तरिक्षाच्च भूतद्वयात्— परिशेषात्पृथिव्यादिभूतत्रयम् । एतन्मर्त्यम्— यदेतन्मूर्ताख्य भूतत्रय इद मर्त्यं मरणधर्मि । कस्मात् ? यस्मात्स्थितमेतत् । परिच्छिन्न ह्यर्थान्तरेण सप्रयुज्यमान विरुध्यते—यथा घट स्तम्भकुड्यादिना, तथा मूर्तं स्थित परिच्छिन्न अर्थान्तरसबन्धि ततोऽर्थान्तरविरोधान्मर्त्यम् । एतत्सत् विशेष्यमाणासाधारणधर्मवत्, तस्माद्धि परिच्छिन्न, परिच्छिन्नत्वान्मर्त्यं, अतो मूर्तम् । मूर्तत्वाद्वा मर्त्यं, मर्त्यत्वात्स्थित, स्थितत्वात्सत् । अतः अन्योन्याव्यभिचारात् चतुर्णां धर्माणा यथेष्ट विशेषणविशेष्यभावो हेतुहेतुमद्भावश्च दर्शयितव्य । सर्वथाऽपि तु भूतत्रय चतुष्टयविशेषणविशिष्ट मूर्तं रूप ब्रह्मणः । तत्र चतुर्णामेकस्मिन् गृहीते विशेषणे इतरद्गृहीतमेव विशेषणमित्याह —तस्यैतस्य मूर्तस्य, एतस्य मर्त्यस्य, एतस्य स्थितस्य, एतस्य सतः — चतुष्टयविशेषणस्य भूतत्रयस्येत्यर्थ. — एष रसः सार इत्यर्थः । त्रयाणां हि भूताना सारिष्ठ. सविता । एतत्साराणि त्रीणि भूतानि, यत एतत्कृतविभज्यमानरूपविशेषणानि भवन्ति । आधिदैविकस्य कार्यस्यैतद्रूपम्—

---

* श्रीकठ रामानुजवत् ।

(१) बृउ २।३।२, शब्रा १४।५।३।२,३, बलदेव २।३।३

यत्सविता यदेतन्मण्डल तपति । सतो भूतत्रयस्य हि यस्मात् एष रस इति एतद्गृह्यते । मूर्तो ह्येष सविता तपति, सारिष्ठश्च । यत्तु आधिदैविक करण मण्डलस्याभ्यन्तर, तद्वक्ष्याम । शकर

( २ ) मूर्तामूर्ते दर्शयति––तदेतन्मूर्तमिति । वाय्वन्तरिक्षव्यतिरिक्त पृथिव्यप्तेजोलक्षण कठिनत्वविनश्वरत्वाव्यापकत्वप्रत्यक्षोपलभ्यत्वरूपधर्मयुक्ततया मूर्तमर्त्यस्थितसच्छब्दवाच्यमित्यर्थ । तस्यैतस्येति । य एष तपति मण्डल रूपेणेत्यर्थ । आदित्यमण्डल सच्छब्दितस्य तेजोबन्नस्य रस । तेजोबन्नवन्मण्डलस्य प्रत्यक्षोपलभ्यमानत्वादादित्यमण्डले मूर्तत्वादिचतुष्टययुक्ते तेजोबन्नरसत्वबुद्धि. कर्तव्येत्यर्थ' । रग

( ३ ) प्रलयेऽपि भगवदन्तरेव रता अक्षिता स्थितेति श्रीरन्तरिक्षम् । 'य एष तपति' इत्यादित्यस्थो हिरण्यगर्भ उच्यते । मध्व

**अथामूर्तम् । वायुश्चान्तरिक्ष च । एतदमृतम् । एतद्यत् । एतत्त्यत् । तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रस य एष एतस्मिन्मण्डले पुरुष । त्यस्य ह्येष रस । इत्यधिदैवतम् ॥**

( १ ) अथामूर्तम्––अथाधुना अमूर्तमुच्यते । वायुश्चान्तरिक्ष च यत्परिशेषित भूतद्वय––एतद मृत, अमूर्तत्वात्, अस्थित, अतोऽविरुध्यमान केनचित्, अमृत, अमरणधर्मि । एतत् यत् स्थितविपरीत, व्यापि, अपरिच्छिन्नम् । यस्मात् यत् एतत् अन्येभ्योऽप्रविभज्यमानविशेष, अतः त्यत् 'त्यत्' इति परोक्षाभिधानार्हमेव––पूर्ववत् । तस्यैतस्यामूर्तस्य एतस्यामृतस्य एतस्य यतः एतस्य त्यस्य चतुष्टयविशेषणस्यामूर्तस्य एष रस. । कोऽसौ ? य एष एतस्मिन्मण्डले पुरुष. करणात्मको हिरण्यगर्भ' प्राण इत्यभिधीयते य, स एष अमूर्तस्य भूतद्वयस्य रसः पूर्ववत् सारिष्ठ । एतत्पुरुषसार चामूर्ते भूतद्वयम्––हैरण्यगर्भलिङ्गारम्भाय हि भूतद्वयाभिव्यक्तिरव्याकृतात् । तस्मात् तादर्थ्यात् तत्सार भूतद्वयम् । त्यस्य ह्येष रस यस्मात् य. मण्डलस्थ पुरुषो मण्डलवन्न गृह्यते सारश्च भूतद्वयस्य, तस्मादस्ति मण्डलस्थस्य पुरुषस्य भूतद्वयस्य च साधर्म्यम् । तस्माद्युक्त प्रसिद्धवद्धेतूपादानम्–– त्यस्य ह्येष रस इति ।

रसः कारण हिरण्यगर्भविज्ञानात्मा चेतन इति केचित् । तत्र च किल हिरण्यगर्भविज्ञानात्मन' कर्म वाय्वन्तरिक्षयोः प्रयोक्तृ । तत्कर्म वाय्वन्तारिक्षाधार सत् अन्येषा भूताना प्रयोक्तृ भवति । तेन स्वकर्मणा वाय्वन्तरिक्षयो. प्रयोक्तेति तयो. रस' कारणमुच्यते इति । तन्न मूर्तरसेन अतुल्यत्वात् । मूर्तस्य तु भूतत्रयस्य रसो मूर्तमेव मण्डल दृष्ट भूतत्रयसमानजातीयम् । न चेतन. । तथा अमूर्तयोरपि भूतयोः तत्समानजातीयेनैव अमूर्तरसेन युक्त भवितु, वाक्यप्रवृत्तेस्तुल्यत्वात् । यथा हि मूर्तामूर्ते चतुष्टयधर्मवती विभज्येते, तथा रसरसवतोरपि मूर्तामूर्तयोः तुल्येनैव न्यायेन युक्तो विभाग' । न त्वर्धवैशसम् । मूर्तरसेऽपि मण्डलोपाधिश्चेतनो विवक्ष्यत इति चेत्––अत्यल्पमिदमुच्यते, सर्वत्रैव तु मूर्तामूर्तयो ब्रह्मरूपेण विवक्षितत्वात् । पुरुषशब्द अचेतनेऽनुपपन्नः इति चेत् । न । पक्षपुच्छादिविशिष्टस्यैव लिङ्गस्य पुरुषशब्ददर्शनात् । 'न वा इत्थ सन्त शक्ष्याम. प्रजा. प्रजनयितुमिमान्सप्त पुरुषानेक पुरुष करवामेति त एतान्सप्त पुरुषानेक पुरुषमकुर्वन्' इत्यादौ अन्नरसमयादिषु च श्रुत्यन्तरे पुरुषशब्दप्रयोगात् । इत्यधिदैवतमिति उक्तोपसहार अध्यात्मविभागोक्त्यर्थ' । शकर

( २ ) अथामूर्तमिति । अमूर्तत्वामृतत्वयत्त्व(त्यत्त्व)लक्षणधर्मचतुष्टयाश्रयवाय्वन्तारिक्षरसत्वबुद्धिरादित्यमण्डलस्थपुरुषे कर्तव्येत्यर्थः । रग

(१) बृउ २।३।३, शब्रा १४।५।३।४,५ त्यत् (त्यम्) दैवतम् (देवतम्), ब्रशकर २।३।४, भास्कर २।३।४, रग त्यत् (त्यम्), रामानुज १।१।१ (पृ १३२), २।३।३, ७, २।४।१, निंबार्क २।३।३, मध्व शब्रावत्, श्रीकठ. २।३।३, श्रीकर २।३।२, ३, ६, २।४।१, वल्लभ २।३।४, विज्ञान २।३।४, बलदेव २।३।३

(३) 'वायुश्चान्तरिक्षं चैतदमृतम्' इति सुराणामिव चिरकालस्थायित्वाभिप्रायम्।

रामानुज २।३।७

(४) पृथिव्यादिवदेवाकाशोऽपि नित्यानित्योभयरूप इति। वाय्वाकाशयोरमृतत्ववचनं च कार्यावस्थामादायैवापेक्षिकं देवादीनाममृतत्ववचनवदिति।

विज्ञान. २।३।७

अथाध्यात्मम्। इदमेव मूर्तं यदन्यत्प्राणाच्च यश्चायमन्तरात्मन्नाकाशः। एतन्मर्त्यम्। एतत्स्थितम्। एतत्सत्। तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो यच्चक्षुः। सतो ह्येष रसः॥

(१) अथाधुना अध्यात्मं मूर्तामूर्तयोर्विभाग उच्यते। किं तत् मूर्तम्? इदमेव। किंचेदम्? यदन्यत् प्राणाच्च वायोः, यश्चायं अन्तः अभ्यन्तरे आत्मन् आत्मनि आकाशः खं, शरीरस्थश्च यः प्राणः—एतद्द्वयं वर्जयित्वा यदन्यत् शरीरारम्भकं भूतत्रयम्। एतन्मर्त्यमित्यादि समानमन्यत्पूर्वेण। एतस्य सतो ह्येष रसः— यच्चक्षुरिति। आध्यात्मिकस्य शरीरारम्भकस्य कार्यस्य एष रसः सारः। तेन हि सारेण सारवदिदं शरीरं समस्तम्—यथा अधिदैवतमादित्यमण्डलेन। प्राथम्याच्च—चक्षुषी एव प्रथमे संभवतः संभवत इति, 'तेजो रसो निरवर्तताग्निः' इति लिङ्गात्। तैजसं हि चक्षुः। एतत्सारं आध्यात्मिकं भूतत्रयम्। सतो ह्येष रस इति मूर्तसारत्वे हेत्वर्थः।

शंकर

(२) एवमधिदैवतमुपासनप्रकार उक्तः। इतः परमध्यात्मं मूर्तामूर्तरसोपासनचिन्ताप्रकारो वर्ण्यते—अथाध्यात्ममिति। आत्मनि देहे इत्यर्थः। इदमेव मूर्तमिति। तस्माच्चेति शेषः। एतन्मर्त्यमिति। प्राणहार्दाकाशव्यतिरिक्तं शरीरान्तर्वर्तिमूर्तत्वादिधर्मचतुष्टयाधारभूतं यत्तस्य चक्षुरेव रसः।

रंग

अथामूर्तं प्राणश्च यश्चायमन्तरात्मन्नाकाशः। एतदमृतम्। एतद्यत्। एतत्त्यत्। तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो योऽयं दक्षिणेऽक्षन्पुरुषः। त्यस्य ह्येष रसः॥

(१) अथाधुना अमूर्तमुच्यते। यत्परिशेषितं भूतद्वयं प्राणश्च यश्चायमन्तरात्मन्नाकाशः, एतदमूर्तम्। अन्यत् पूर्ववत्। एतस्य त्यस्य एष रसः सारः, योऽयं दक्षिणेऽक्षन्पुरुषः— दक्षिणेऽक्षन्निति विशेषग्रहणं, शास्त्रप्रत्यक्षत्वात्। लिङ्गस्य हि दक्षिणेऽक्षिण विशेषतोऽधिष्ठातृत्वं शास्त्रस्य प्रत्यक्षं, सर्वश्रुतिषु तथा प्रयोगदर्शनात्। त्यस्य ह्येष रस इति पूर्ववत् विशेषतः ग्रहणात् अमूर्तसारत्व एव हेत्वर्थः।

शंकर.

(२) अमूर्तत्वादिचतुष्टयाश्रयप्राणहार्दाकाशयोर्दक्षिणाक्षिस्थः पुरुषः परमात्मा रस इत्यर्थः।

रंग.

(३) मण्डले पुरुष इति भगवान्विष्णुः। एवमेव चक्षुर्दक्षिणेऽक्षन्पुरुषश्च।

मध्व.

तस्य हैतस्य पुरुषस्य रूपम्। यथा माहारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाऽग्न्यर्चिर्यथा पुण्डरीकं यथा सकृद्विद्युत्तम्। सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति य एवं वेद। अथात आदेशो नेति नेति। न ह्येतस्मादिति नेत्यन्यत्परमस्ति। अथ

---

१ (१) बृउ २।३।४, शब्रा १४।५।३।६,७, रंग मर्त्यस्यै (मृतस्यै).

(१) बृउ २।३।५, शब्रा १४।५।३।८, ९ त्यत् (त्यम्), रंग शब्रावत्, मध्व प्राणश्च यश्चा (प्राणश्चा) त्यत् (त्यम्)

(२) बृउ २।३।६, शब्रा १४।५।३।१०, ११, ब्रशंकर १।१।१२, ३।२।१७, २२, ३०, भास्कर २।१।१४, ३।२।२३, रंग ह वा अस्य (ह्यस्य) सत्यमिति (सत्य) सत्यम् (सत्यमिति), रामानुज ३।२।२१, २६, ३५ हैतस्य (ह वा एतस्य) नेति। न (नेतीति न); निंबार्क ३।२।२२, श्रीकंठ ३।२।२१, २५, श्रीकर. १।१।१ (पृ १९, २०), १।१।४ (पृ ५२), २।१।७, १४, ३।२।१६, २०, २१, २६, वल्लभ ३।२।१७, विज्ञान. १।१।२ (पृ ४१, ६१), १।४।१८, ३।२।१४, २२, ३६, बलदेव ३।२।२२, ३।३।३९, ४०.

नामधेय२ सत्यस्य सत्यमिति । प्राणा वै सत्यम् । तेषामेष सत्यम् ॥

( १ ) ब्रह्मण उपाधिभूतयोर्मूर्तामूर्तयो॰ कार्यकरण-विभागेन अध्यात्माधिदैवतयो विभागो व्याख्यात सत्यशब्दवाच्ययो । अथेदानीं तस्य हैतस्य पुरुषस्य करणात्मनो लिङ्गस्य रूप वक्ष्याम , वासनामय मूर्तामूर्त-वासनाविज्ञानमयसयोगजनित विचित्र पटभित्तिचित्रवत् मायेन्द्रजालमृगतृष्णिकोपम सर्वव्यामोहास्पदम् --- एतावन्मात्रमेव आत्मेति विज्ञानवादिनो वैनाशिका यत्र भ्रान्ताः, एतदेव वासनारूप पटरूपवत् आत्मनो द्रव्यस्य गुण इति नैयायिका॰ वैशेषिकाश्च सप्रतिपन्ना । इद आत्मार्थं त्रिगुण स्वतन्त्र प्रधानाश्रय पुरुषार्थेन हेतुना प्रवर्तत इति सांख्या॰ ।

'योऽय दक्षिणेऽक्षन्पुरुष॰' इति लिङ्गात्मा प्रस्तुत अध्यात्मे, अधिदैवे च 'य एष एतस्मिन्म ण्डले पुरुष' इति 'तस्य' इति प्रकृतोपादानात् स एवोपादीयते---योऽसौ त्यस्यामूर्तस्य रसः, न तु विज्ञानमय । ननु विज्ञानमयस्यैव एतानि रूपाणि कस्मान्न भवन्ति, विज्ञानमयस्यापि प्रकृतत्वात् 'तस्य' इति च प्रकृतोपादानात् --- नैव, विज्ञानमयस्य अरू पित्वेन विजिज्ञापयिषितत्वात् । यदि हि तस्यैव विज्ञा-नमयस्य एतानि माहारजनादीनि रूपाणि स्यु , तस्यैव 'नेति नेति' इत्यनाख्येयरूपतया आदेशो न स्यात् । ननु अन्यस्यैव असावादेश॰, न तु विज्ञानमयस्येति--- न, षष्ठान्ते उपसहारात्---'विज्ञातारमरे केन विजा नीयात्' इति विज्ञानमय प्रस्तुत्य 'स एष नेति नेति'---इति । 'विज्ञपयिष्यामि' इति च प्रतिज्ञाया अर्थवत्त्वात्---यदि च विज्ञानमयस्यैव असव्यवहार्य-मात्मस्वरूप ज्ञापयितुमिष्ट स्यात् प्रध्वस्तसर्वोपाधिवि-शेष, तत इय प्रतिज्ञा अर्थवती स्यात् --- येन असौ ज्ञापितो जानात्यात्मानमेव अह ब्रह्मास्मीति, शास्त्रनिष्ठा प्राप्नोति, न बिभेति कुतश्चन । अथ पुनः अन्यो विज्ञानमय॰, अन्यः 'नेति नेति' इति व्यपदिश्यते--- तदा अन्यददो ब्रह्म अन्योऽहमस्मीति विपर्ययो गृहीत स्यात्, न 'आत्मानमेवावेदह ब्रह्मास्मि' इति । तस्मात् 'तस्य हैतस्य' इति लिङ्गपुरुषस्यैव एतानि रूपाणि । सत्यस्य च सत्ये परमात्मस्वरूपे वक्तव्ये निर-वशेष सत्य वक्तव्यम् । सत्यस्य च विशेषरूपाणि वासना । तासामिमानि रूपाण्युच्यन्ते ।

एतस्य पुरुषस्य प्रकृतस्य लिङ्गात्मन एतानि रूपाणि । कानि तानीत्युच्यन्ते---यथा लोके, महारजन हरिद्रा तया रक्त माहारजन यथा वासो लोके, एव स्त्र्यादिविषयसयोगे तादृश वासनारूप रञ्जनाकारमु त्पद्यते चित्तस्य, येनासौ पुरुषो रक्त इत्युच्यते वस्त्रा-दिवत्---यथा च लोके पाण्ड्वाविक, अवेरिद आविक ऊर्णादि, यथा च तत् पाण्डर भवति, तथा अन्य-द्वासनारूप---यथा च लोके इन्द्रगोप॰ अत्यन्तरक्तो भवति, एवमस्य वासनारूप---क्वचिद्विषयविशेषापे-क्षया रागस्य तारतम्य, क्वचित्पुरुषचित्तवृत्त्यपेक्षया--- यथा च लोके अग्न्यर्चि भास्वर भवति, तथा क्वचित् कस्यचित् वासनारूप भवति---यथा पुण्ड रीक शुक्ल, तद्वदपि च वासनारूप कस्यचिद्भवति--- यथा सकृद्विद्युत्त, यथा लोके सकृद्विद्योतन सर्वतः प्रकाशक भवति, तथा ज्ञानप्रकाशविवृद्ध्यपेक्षया कस्य-चित् वासनारूप--- उपजायते । न एषा वासना-रूपाणा आदिः अन्तः मध्य सख्या वा, देश कालो निमित्त वा अवधार्यते---असख्येयत्वाद्वासनायाः, वासनाहेतूना च आनन्त्यात् । तथा च वक्ष्यति षष्ठे 'इदमयोऽदोमयः' इत्यादि । तस्मात् न स्वरूपस-ख्यावधारणार्था दृष्टान्ता॰---'यथा माहारजन वासः' इत्यादयः । किं तर्हि प्रकारप्रदर्शनार्था ---एव प्रका-राणि हि वासनारूपाणीति । यत्तु वासनारूपमभिहि-तमन्ते--- सकृद्विद्योतनमिवेति, तत्किल हिरण्यगर्भस्य अव्याकृतात्प्रादुर्भवतः तडिद्वत् सकृदेव व्यक्तिर्भव-तीति । तत् तदीय वासनारूप हिरण्यगर्भस्य यो वेद तस्य सकृद्विद्युत्तेव, ह वै इत्यवधारणार्थौ, एवमेव अस्य श्री ख्यातिः भवतीत्यर्थ. । यथा हिरण्यग-र्भस्य --- एव एतत् यथोक्त वासनारूपमन्त्यम् यो वेद ।

एव निरवशेष सत्यस्य स्वरूपमभिधाय, यत्तत्स-त्यस्य सत्यमवोचाम तस्यैव स्वरूपावधारणार्थं ब्रह्मण इदमारभ्यते---अथ अनन्तर सत्यस्वरूपनिर्देशानन्तर,

यत् सत्यस्य सत्य तदेवावशिष्यते यस्मात्—अत तस्मात्, सत्यस्य सत्य स्वरूप निर्देक्ष्याम । आदेश. निर्देश. ब्रह्मण । क. पुनरसौ निर्देश इत्युच्यते—नेति नेतीत्येव निर्देश' ।

ननु कथ आभ्या 'नेति नेति' इति शब्दाभ्या सत्यस्य सत्य निर्दिदिक्षितमिति, उच्यते—सर्वोपाधिविशेषापोहेन । यस्मिन्न कश्चिद्विशेषोऽस्ति — नाम वा रूप वा कर्म वा भेदो वा जातिर्वा गुणो वा । तद्द्वारेण हि शब्दप्रवृत्तिर्भवति । न चैषा कश्चिद्विशेषो ब्रह्मण्यस्ति । अतो न निर्देष्टु शक्यते—इद तदिति—गौरसौ स्पन्दते शुक्लो विषाणीति यथा लोके निर्दिश्यते तथा । अध्यारोपितनामरूपकर्मद्वारेण ब्रह्म निर्दिश्यते 'विज्ञानमानन्द ब्रह्म' 'विज्ञानघन एव ब्रह्मात्मा' इत्येवमादिशब्दै. । यदा पुन. स्वरूपमेव निर्दिदिक्षित भवति निरस्तसर्वोपाधिविशेष, तदा न शक्यते केनचिदपि प्रकारेण निर्देष्टुम् । तदा अयमेवाभ्युपाय — यदुत प्राप्तनिर्देशप्रतिषेधद्वारेण 'नेति नेति' इति निर्देश ।

इद च नकारद्वय वीप्साव्याप्त्यर्थम् । यद्यत्प्राप्त तत्तत् निषिध्यते । तथा च सति अनिर्दिष्टाशङ्का ब्रह्मण परिहृता भवति । अन्यथा हि नकारद्वयेन प्रकृतद्वयप्रतिषेधे, यदन्यत् प्रकृतात्प्रतिषिद्धद्वयात् ब्रह्म, तत्र निर्दिष्ट, कीदृश नु खलु—इत्याशङ्का न निवर्तिष्यते । तथा च अनर्थकश्च स निर्देश., पुरुषस्य विविदिषाया अनिवर्तकत्वात् । 'ब्रह्म ज्ञपयिष्यामि' इति च वाक्य अपरिसमाप्तार्थ स्यात् । यदा तु सर्वदिक्कालादिविविदिषा निवर्तिता स्यात् सर्वोपाधिनिराकरणद्वारेण, तदा सैन्धवघनवत् एकरस प्रज्ञानघन अनन्तरमबाह्य सत्यस्य सत्य अह ब्रह्म अस्मीति सर्वतो निवर्तते विविदिषा, आत्मन्येवावस्थिता प्रज्ञा भवति । तस्मात् वीप्सार्थे नेति नेतीति नकारद्वयम् । ननु महता यत्नेन परिकरबन्ध कृत्वा किं युक्त एव निर्देष्टु ब्रह्म ? बाढम् । कस्मात् ? न हि—यस्मात्, 'इति न, इति न' इत्येतस्मात्—इतीति व्याप्तव्यप्रकारा नकारद्वयविषया निर्दिश्यन्ते, यथा ग्रामो ग्रामो रमणीय इति—अन्यत्पर निर्देशन नास्ति । तस्मादयमेव निर्देशो ब्रह्मण' । यदुक्तम्—'तस्योपनिषत्सत्यस्य सत्यम्' इति, एवप्रकारेण सत्यस्य सत्य तत् पर ब्रह्म । अतो युक्तमुक्त नामधेय ब्रह्मण, नामैव नामधेयम् । किं तत् सत्यस्य सत्य प्राणा वै सत्य तेषामेष सत्यमिति ।

शकर.

(२) 'प्रकृतैतावत्त्व हि प्रतिषेधति ततो ब्रवीति च भूय'—न तावदुभयप्रतिषेध उपपद्यते, शून्यवादप्रसङ्गात् । किंचिद्धि परमार्थमालम्ब्यापरमार्थः प्रतिषिध्यते, यथा रज्ज्वादिषु सर्पादय । तच्च परिशिष्यमाणे कस्मिंश्चिद्भावेऽवकल्प्यते । कृत्स्नप्रतिषेधे तु कोऽन्यो भाव परिशिष्येत ! अपरिशिष्यमाणे चान्यस्मिन्, य इतर प्रतिषेद्धुमारभ्यते प्रतिषेद्धुमशक्यत्वात्तस्यैव परमार्थत्वापत्ते. प्रतिषेधानुपपत्ति. । नापि ब्रह्मप्रतिषेध उपपद्यते 'ब्रह्म ते ब्रवाणि' (कौउ ४।१, बृउ २।१।१) इत्याद्युपक्रमविरोधात् । 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत्' (तैउ २।६।१) इत्यादिनिन्दाविरोधात्, 'अस्तीत्येवोपलब्धव्य' (काउ. ६।१३) इत्यवधारणविरोधात्, सर्ववेदान्तव्याकोपप्रसङ्गाच्च । वाङ्मनसातीतत्वमपि ब्रह्मणो नाभावाभिप्रायेणाभिधीयते । न हि महता परिकरबन्धन 'ब्रह्मविदाप्नोति परम्' (तैउ. २।१।१) 'सत्य ज्ञानमनन्त ब्रह्म' (तैउ. २।१।१) इत्येवमादिना वेदान्तेषु ब्रह्म प्रतिपाद्य तस्यैव पुनरभावोऽभिलप्येत । 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शन वरम्' इति हि न्याय. । प्रतिपादनप्रक्रिया त्वेषा 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' (तैउ. २।४।१) इति । एतदुक्त भवति—वाङ्मनसातीतमविषयान्त.पाति प्रत्यगात्मभूत नित्यशुद्धबुद्धमुक्तस्वभाव ब्रह्मेति । तस्माद्ब्रह्मणो रूपप्रपञ्च प्रतिषेधति, परिशिनष्टि ब्रह्मेत्यवगन्तव्यम् । तदेतदुच्यते—प्रकृतैतावत्त्व हि प्रतिषेधतीति । प्रकृत यदेतावदियत्तापरिच्छिन्न मूर्तामूर्तलक्षण ब्रह्मणो रूप तदेष शब्दः प्रतिषेधति । तद्धि प्रकृत प्रपञ्चित च पूर्वस्मिन्ग्रन्थेऽधिदैवतमध्यात्म च । तज्जनितमेव च वासनालक्षणमपर रूपममूर्तरसभूत पुरुषशब्दोदित लिङ्गात्मव्यपाश्रय माहारजनाद्युपमाभिर्दर्शितम् । अमूर्तरसस्य पुरुषस्य चक्षुर्ग्राह्यरूपयोगित्वानुपपत्तेः । तदे-

तत्सप्रपञ्च ब्रह्मणो रूप सनिहितालम्बनेनेति करणेन प्रतिषेधकनञा प्रत्युपनीयत इति गम्यते। ब्रह्म तु रूपविशेषणत्वेन षष्ठया निर्दिष्ट पूर्वस्मिन्ग्रन्थे न स्वप्रधानत्वेन । प्रपञ्चिते च तदीये रूपद्वये रूपवतः स्वरूपजिज्ञासायामिदमुपक्रान्त 'अथात आदेशो नेति नेति' इति । तत्र कल्पितरूपप्रत्याख्यानेन ब्रह्मण स्वरूपावेदनमिदमिति निर्णीयते । तदास्पद हीद समस्त कार्य 'नेति नेति' इति प्रतिषिद्धम् । युक्त च कार्यस्य, वाचारम्भणशब्दादिभ्योऽसत्त्वमिति, नेति नेतीति प्रतिषेधनम् । न तु ब्रह्मणः, सर्वकल्पनामूलत्वात् । न चात्रेयमाशङ्का कर्तव्या—कथ हि शास्त्र स्वयमेव ब्रह्मणो रूपद्वय दर्शयित्वा स्वयमेव पुन. प्रतिषेधति—'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शन वरम्' इति । यतो नेद शास्त्र प्रतिपाद्यत्वेन ब्रह्मणो रूपद्वय निर्दिशति, लोकप्रसिद्ध त्विद रूपद्वय ब्रह्मणि कल्पित परामृशति प्रतिषेध्यत्वाय शुद्धब्रह्मस्वरूपप्रतिपादनाय चेति निरवद्यम् । द्वौ चेतौ प्रतिषेधौ यथासख्यन्यायेन द्वे अपि मूर्तामूर्ते प्रतिषेधतः । यद्वा पूर्वः प्रतिषेधो भूत राशिं प्रतिषेधति, उत्तरो वासनाराशिम् । अथ वा 'नेति नेति' ( बृउ ३।९।२६ ) इति वीप्सेयमितीति यावत्किंचिदुत्प्रेक्ष्यते, तत्सर्वं न भवतीत्यर्थः । परिगणितप्रतिषेधे हि क्रियमाणे, यदि नैतद्ब्रह्म, किमन्यद्ब्रह्म भवेदिति जिज्ञासा स्यात् । वीप्साया तु सत्या समस्तस्य विषयजातस्य प्रतिषेधादविषय. प्रत्यगात्मा ब्रह्मेति जिज्ञासा निवर्तते । तस्मात्प्रपञ्चमेव ब्रह्मणि कल्पित प्रतिषेधति, परिशिनष्टि ब्रह्मेति निर्णयः । इतश्चैष एव निर्णय. । यतस्तत' प्रतिषेधाद्भूयो ब्रह्म ब्रवीति 'अन्यत्परमस्ति' इति । अभावावसाने हि प्रतिषेधे क्रियमाणे किमन्यत्प रमस्तीति ब्रूयात् । तत्रैषाऽक्षरयोजना 'नेति नेति' इति ब्रह्माऽऽदिश्य तमेवाऽऽदश पुनर्निर्वक्ति । नेति नेतीत्यस्य कोऽर्थ ? न ह्येतस्माद्ब्रह्मणो व्यतिरिक्तमस्तीत्यतो नेति नेतीत्युच्यते, न पुन' स्वयमेव नास्तीत्यर्थ. । तच्च दर्शयत्यन्य त्परमप्रतिषिद्ध ब्रह्मास्तीति । यदा पुनरेवमक्षराणि योज्यन्ते न ह्येतस्मादिति नेति नेति । न हि प्रपञ्चप्रतिषेधरूपादादेशनादन्यत्परमादेशन ब्रह्मणोऽस्तीति । तदा, 'ततो ब्रवीति च भूय.' इत्येतन्नामधेयविषय योजयितव्यम् । 'अथ नामधेय सत्यस्य सत्यमिति प्राणा वै सत्य तेषामेष सत्यम्' इति हि ब्रवीतीति । तच्च ब्रह्मावसाने प्रतिषेधे समञ्जस भवति । अभावावसाने तु प्रतिषधे किं 'सत्यस्य सत्यम्' इत्युच्येत । तस्माद्ब्रह्मावसानोऽय प्रतिषेध , नाभावावसान इत्यध्यवस्यामः ।

ब्रशकर ३।२।२२

( ३ ) तथा च श्रुत्यन्तरमात्मव्यतिरिक्तस्य प्रपञ्चस्य सत्यता दर्शयति 'अथ नामधेय सत्यस्य सत्यमिति प्राणा वै सत्य तेषामेष सत्यम्' इति । यदि चानृतत्वमभिप्रेयात् प्राणा असत्यमिति ब्रूयात् ।

२।१।१४

'प्रकृतैतावत्त्व हि०'— तत्र प्रथमो नेति शब्दो मूर्तामूर्तनिषेधक , द्वितीयो वासनाप्रतिषेधक. । तदेव वीप्सायुक्तेन प्रतिषेधेन भूतपञ्चक सूक्ष्म च वासनारूप यत्किञ्चिदचेतनजातमनात्मरूप पर्युदस्य शुद्धमात्मरूपमुपदिष्ट भवति, न पुन प्रपञ्चस्यैवाभाव. प्रतिपाद्यते । अत्परत्वाद्वाक्यस्य । तदेतदाह—प्रकृतैतावत्त्व प्रकृतस्य पुरुषस्य यदेतावत्त्वमुपाधिद्वयपरिच्छिन्नत्व तत्प्रतिषेधति, ततो न विकल्पक परिशिष्ट ब्रह्म भूय' पुनर्ब्रवीति अन्यत्परमस्तीति । एषा चात्राक्षरयोजना —न ह्येतस्मादिति नेति न प्रपञ्चप्रतिषेधरूपादादेशनादन्यतरमादेशन ब्रह्मणोऽस्तीति कृत्वा नेति नेत्युक्तमिति श्रुतेरभिप्रायः । ततो ब्रवीति भूय इत्येतन्नामधेयविषय योजयितव्यम् ।

भास्कर ३।२।२३

( ४ ) अथात इति । आदेश उपदेश इत्यर्थ' । अथात.शब्दौ वाक्यान्तरोपन्यासार्थौ, इतिशब्दः इयत्तालक्षणप्रकारवचनः । नैव नैवमित्यर्थः । मूर्तामूर्तात्मकद्वयवत्त्वप्रयुक्तेयत्तालक्षणप्रकारयुक्तो नेत्यर्थ. । न ह्येतस्मादितीति ।' इति नेति यद्ब्रह्म प्रतिपादित तस्मादेतस्माद्वस्तु पर न ह्यस्ति ब्रह्मणोऽन्यत्स्वरूपतो गुणतश्च पर नास्तीत्यर्थः । न त्वन्यमात्रस्य निषेधः । तथा हि सत्यन्यत्परमिति वैयर्थ्यापत्तेः । तदुपपादयति — अथ नामधेयमिति । प्राणशब्दनिर्दिष्टेभ्यः चेतनेभ्योऽपि कदाचिदपि ज्ञानादिसकोचाभावात्परमात्मा सत्य निर्विकारमित्यर्थः । रग.

( ५ ) ‘ प्रकृतैतावत्त्व हि० ’ — नैतदुपपद्यते यद्ब्रह्मण. प्रकृतिविशेषवत्त्व ‘ नेति नेति ’ इति प्रतिषिध्यत इति । तथा सति भ्रान्तजल्पितायमानत्वात् । न हि ब्रह्मणो विशेषणतया प्रमाणान्तराप्रज्ञात सर्वे तद्विशेषणत्वेनोपदिश्य पुनस्तदेवानुन्मत्त. प्रतिषेधति । यद्यपि निर्दिश्यमानेषु केचन पदार्थाः प्रमाणान्तरप्रसिद्धास्तथापि तेषा ब्रह्मण. प्रकारत्वमप्रज्ञातमेव । इतरेषा तु स्वरूप ब्रह्मण. प्रकारत्व चाप्रज्ञातम् । अतस्तेषामनुवादासभवादत्रैवोपदिश्यन्ते । अतस्तन्निषेधो नोपपद्यते । यस्मादेव तस्मात्प्रकृतैतावत्त्व ब्रह्मण॰ प्रतिषेधतीद वाक्यम् । ये ब्रह्मणो विशेषा प्रकृतास्तद्विशिष्टतया ब्रह्मण॰ प्रतीयमानेयत्ता ‘ नेति नेति ’ इति प्रतिषिध्यते । नेति नेति नैव नैवम् । उक्तप्रकारमात्रविशिष्ट न भवति ब्रह्म । उक्तप्रकारविशिष्टतया या ब्रह्मण इयत्ता प्रकृता, साऽत्रेतिशब्देन परामृश्यत इत्यर्थ. । यतश्च निषेधानन्तर ब्रह्मणो भूयो गुणजात ब्रवीति । अतश्च प्रकृतिविशेषयोगित्वमात्रता ब्रह्मण प्रतिषेधति । ब्रवीति हि भूयो गुणजात ‘ न ह्येतस्मादिति नेत्यन्यत्परमस्ति । अथ नामधेय सत्यस्य सत्यमिति । प्राणा वै सत्य तेषामेष सत्यम् ’ इति । अयमर्थ — इति नेति नेति यद्ब्रह्म प्रतिपादित तस्मादेतस्मादन्यद्वस्तु पर न ह्यस्ति । ब्रह्मणोऽन्यत् स्वरूपतो गुणतश्चोत्कृष्ट नास्तीत्यर्थ. । तस्य च ब्रह्मणः सत्यस्य सत्यमिति नामधेयम् । तस्य च निर्वचन प्राणा वै सत्य तेषामेष सत्यमिति । प्राणशब्देन प्राणसाहचर्याज्जीवाः परामृश्यन्ते । ते तावत् सत्यम् । वियदादिवत्स्वरूपान्यथाभावरूपपरिणामाभावात् । तेषामेष सत्यम् । तेभ्योऽप्येष परमपुरुष॰ सत्यम् । जीवानां कर्मानुगुण्येन ज्ञानसकोचविकासौ विद्येते । परमपुरुषस्य त्वपहतपाप्मनस्तौ न विद्येते । अतस्तेभ्योऽप्येष सत्यम् । अतश्चैव वाक्यशेषोदितगुणजातयोगात् ‘ नेति नेति ’ इति ब्रह्मणः सविशेषत्व न प्रतिषिध्यते । अपि तु पूर्वप्रकृतेयत्तामात्रम् । अत उभयलिङ्गमेव पर ब्रह्म । ३।२।२१

मूर्तामूर्तात्मकस्याचित्प्रपञ्चस्य ब्रह्मणो रूपत्व ‘ द्वे वाव ब्रह्मणो रूपे ’ ( बृउ. २।३।१ ) इत्यादिनोपदिश्यते । ‘अथात आदेशो नेति नेति ’ इति मूर्तामूर्ताचिद्वस्तुरूपतया ब्रह्मण इयत्ता प्रतिषिध्यते । ‘ न ह्येतस्मादिति नेत्यन्यत्परमस्ति ’ इति ब्रह्मणोऽन्यदुत्कृष्ट नास्तीति प्रतिपादितम् । तदुपपादनाय ‘ अथ नामधेय सत्यस्य सत्यमिति प्राणा वै सत्य तेषामेष सत्यम् ’ इति प्राणशब्दनिर्दिष्टेभ्यश्चेतनेभ्योऽप्येष सत्यमिति कदाचिदपि ज्ञानादिसकोचाभावादुक्तम् ।

* रामानुज ३।२।२६

( ६ ) तस्यैवामूर्तरसस्य भगवत. ‘नेति नेति’ इत्यादेशः । अतस्तस्मादमूर्तसारत्वादित्यर्थ । अथेत्यानन्तर्यार्थे । इति नेति नेति मूर्तामूर्तविलक्षण इत्यर्थः । उभयसादृश्यनिषेधार्थं द्विवारम् । इति नेति निषिध्यमानमप्येतस्मादन्यत्पर नास्ति । एष एव पर. मूर्तामूर्ते त्वपरमेवैतदपेक्षया । मूर्तामूर्तमेवाध्यात्म प्राणा इत्युच्यन्ते । ब्रह्मणो वायोश्चामूर्तत्वात् । ‘मूर्तामूर्तमिद रूप ब्रह्मण. प्रतिमात्मकम् । नैतत्स्वरूपमेतत्स्यात्तद्धि सर्वपर सदा । श्रियो वायोर्विरिञ्चाच्च येऽन्ये मूर्ता हि ते स्मृताः । मूर पाप हि तेनास मूर्तमित्यभिधीयते । विशीर्णे चावसन्न च तदेवातः सदुच्यते । पराधीनगतित्वाच्च स्थितमित्यभिधीयते । तस्य सारो विरिञ्चस्तु तद्विरुद्धस्वभावक. । मूर्ताद्विरुद्धरूपत्वाच्छ्रीर्वायुश्चाप्यमूर्तकौ । सर्वज्ञौ च ततौ चैव नियतौ हरिणैव तौ । तयोः सारस्तु भगवान्हरिर्नारायणः परः । आदित्यमण्डले चैव चक्षुष्वपि च सुस्थितः । तत्रैव सस्थितो ब्रह्मा मूर्तसारोऽपि तस्य च । विष्णुरेव परः सारस्तस्य रूपाण्यनेकधा । महारजनवासोवत्पाण्ड्वाविकवदेव च । विद्युत्पद्मेन्द्रगोपादिवह्निवत्सुखभास्वरः । नैवासौ मूर्तवद्विष्णुर्न च मूर्तरसोपम. । न चामूर्तोपमो देव॰ स एव परमः सदा । तस्यान्यदपर सर्वे सत्यसत्यः स एकराट् । मूर्तामूर्तात्मकाः प्राणास्तेषामन्त्यः स एव हि ।। ’ इति नारायणश्रुतौ प्रथमनिषेधेनैव मूर्तरससादृश्यमपि निषिद्धम् ।

मध्व.

( ७ ) इतिशब्दः प्रकारवाची । ब्रह्म पञ्च महाभूतानि भवति । न त्वेवप्रकारकम् । तत् साधयति । न भवत्येव ब्रह्म तादृशम् । हि युक्तोऽयमर्थः । एतस्माज्जातमिति । न हि कार्यकारणयोरेकः प्रकारो भवति ।

* निंबार्कस्य रामानुजवद्भाव । श्रीकठश्रीकरौ रामानुजव्याख्यामनुवदत ।

अतो नेति नति इति प्रकारनिषेधोपसहार । न तु समवायित्वमात्रत्वम् । किन्त्वन्यत् परमस्तीति रूप निरूप्य नाम निरूपयति । सत्यस्य सत्यमिति । तेन प्रपञ्चातिरिक्तब्रह्मणो विद्यमानत्वात् प्रपञ्चधर्मवचन तस्मिन्नौपचारिकमेव युक्तम् । श्रुत्यैव तथा प्रतिपादनात् । चकार. पूर्वयुक्त्यनुसधानार्थ. । अथो इति प्रक्रमभेदोऽपि । अथात आदेश इति भिन्नप्रक्रमेणाऽऽह ।

वल्लभ ३।२।१७

( ८ ) 'अरूपवदेव हि तत्प्रधानत्वात्' — हि यस्मात् उभयविधवाक्यसत्त्वेऽपि अरूपवदेव ब्रह्मरूप 'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च' इत्यादिश्रुयुक्त स्थूलसूक्ष्मशरीरद्वय जाग्रदाद्यवस्थाहेतुभूत तत् शून्यमेव पर ब्रह्म प्रतिपादितव्यम् । कुत । तत् प्रधानत्वात्तत्परत्वात् श्रुतीना ततो यदुत्तरतर तदरूपमनामयम् । 'य एतद्विदुरमृतास्ते भवन्त्यथेतरे दु.खमेवापियन्ति' ( श्वेउ ३।१० ) 'यन्मनसा न मनुते येनाहुर्मनो मतम् । तदेव ब्रह्म त्व विद्धि नेद यदिदमुपासते ॥' ( केउ १।५ ) इत्यादिश्रुतिभिरवस्थाधारैर्मनआदिकरणै. शून्यस्यैव ब्रह्मणः सम्यक् ज्ञानविषयत्वावधारणात् । किंचावस्थावत्ताप्रतिपादकवाक्यानां 'वासुदेवः सर्वम्' इत्यादिवाक्यवद शाशितयाऽभेदोपासापरत्वेनोपपत्तिरस्ति निषेधवाक्याना च प्रयोजनान्तराभावेन तत्त्वावेदकतया स्वपरमेवोचितम् । अपि च 'अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्ति' इति श्रुतिर्मूर्तामूर्तरूपाभावादादेशस्यैव पारमार्थिकत्व वदति, 'न ह्येतस्मादिति नेत्यन्यत्परमस्ति' इत्यनेनेति । एनेन परमेश्वरस्य लीलाविग्रहकल्पनमाधुनिकानामपसिद्धान्तः । अरूपवदेवेत्यवधारणात् । ३।२।१४

ब्रह्म प्रकाशस्वरूपमेव मन्तव्य, हि यस्मात् श्रुतिर्नेति नेतीत्याद्या प्रकृतैतावत्त्वमेव प्रतिषेधति 'द्वे वाव ब्रह्मणो रूपे मूर्तं च' इत्यादिना पूर्वप्रकृतयन्मूर्ताद्युपाधिभूत एतावत्त्व हि एतद्रूपत्वमेव प्रतिषेधति, न प्रकाशादिरूपत्व, इतिशब्दस्य प्रकृतपरामर्शकत्वात् । किंच ततो निषेधवाक्यादनन्तर भूयः पुन· वदति श्रुतिः 'प्राणा वै सत्य तेषामेष सत्यम्' ।

विज्ञान. ३।२।२२

( आत्मविद्या मैत्रेयीयाज्ञवल्क्यसवादरूपा )

अमृतत्वसाधनजिज्ञासा, आत्मन प्रियत्वोपाधिक पतिजायापुत्रादिसर्वप्रियत्व, आत्मज्ञानविधि , ब्रह्मक्षत्रादे सर्वस्य जगत आत्मरूपत्व दुन्दुभिशङ्खवीणादृष्टान्तसहित, महाभूतस्यात्मन निश्वसितरूपा एव सर्वा विद्या , विज्ञानघनस्य आत्मन सर्वेषामेकायनत्व, अद्वैतात्मनि विषयविषयिभेदलोप

[१]**मैत्रेयीति होवाच याज्ञवल्क्य । उद्यास्यन्वा अरेऽहमस्मात्स्थानादस्मि । हन्त तेऽनया कात्यायन्याऽन्त करवाणीति ॥**

( १ ) आत्मेत्येवोपासीन । तदेव एतस्मिन् सर्वस्मिन् पदनीय आत्मतत्त्व, यस्मात् प्रेय· पुत्रादे·— इत्युपन्यस्तस्य वाक्यस्य व्याख्यानविषये सबन्धप्रयोजने अभिहिते— 'तदात्मानमेवावेदह ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्' इति । एव प्रत्यगात्मा ब्रह्मविद्याया विषय इत्येतत् उपन्यस्तम् । अविद्यायाश्च विषयः— 'अन्योऽसावन्योऽहमस्मीति न स वेद' इत्यारभ्य चातुर्वर्ण्यप्रविभागादिनिमित्तपाङ्क्तकर्मसाध्यसाधनलक्षणः बीजाङ्कुरवत् व्याकृताव्याकृतस्वभाव· नामरूपकर्मात्मक. ससारः 'त्रय वा इद नाम रूप कर्म' इत्युपसहृतः शास्त्रीय उत्कर्षलक्षणो ब्रह्मलोकान्त अधोभावश्च स्थावरान्तोऽशास्त्रीय , पूर्वमेव प्रदर्शित· — 'द्वया ह' इत्यादिना । एतस्मादविद्याविषयाद्विरक्तस्य प्रत्यगात्मविषयब्रह्मविद्यायां अधिकार. कथ नाम स्यादिति — तृतीयेऽध्याये उपसहृत. समस्तोऽविद्याविषय. । चतुर्थे तु ब्रह्मविद्याविषय प्रत्यगात्मान 'ब्रह्म ते ब्रवाणि' इति 'ब्रह्म ज्ञपयिष्यामि' इति च प्रस्तुत्य, तत् ब्रह्म एक अद्वय सर्वविशेषशून्य क्रियाकारकफलस्वभावसत्यशब्दवाच्याशेषभूतधर्मप्रतिषेधद्वारेण 'नेति नेति' इति ज्ञापितम् । अस्या ब्रह्मविद्याया अङ्गत्वेन सन्यासो विधित्सितः । आत्मज्ञानाङ्गत्वेन सन्यासविधित्सयैव आख्यायिकेयमारभ्यते । मैत्रेयीति होवाच याज्ञवल्क्यः — मैत्रेयीं स्वभार्यामामन्त्रितवान् याज्ञवल्क्यो

(१) बृउ. २।४।१, शब्रा १४।५।४।१

नाम ऋषि । उद्यास्यन् ऊर्ध्वं यास्यन् पारिव्राज्याख्यमाश्रमान्तर वै । 'अरे' इति सबोधनम् । अह, अस्मात् गार्हस्थ्यात् स्थानात् आश्रमात्, ऊर्ध्वं गन्तुमिच्छन् अस्मि भवामि । अत. हन्त अनुमतिं प्रार्थयामि ते तव । किंचान्यत् —— ते तव अनया द्वितीयया भार्यया कात्यायन्या अन्त विच्छेद करवाणि । पति द्वारेण युवयोर्मया सबध्यमानयोर्य. सबन्ध आसीत्, तस्य सबन्धस्य विच्छेद करवाणि द्रव्यविभाग कृत्वा । वित्तेन सविभज्य युवा गमिप्यामि । शकर

( २ ) अमृतत्वप्राप्त्युपायत्वसर्वजगत्कारणत्वसर्वात्मत्वादिकल्याणगुणप्रतिपिपादयिषया ब्राह्मणमिदमारभ्यते— मित्राया अपत्य मैत्रेयी, ता मैत्रेयीत्यामन्त्र्याऽऽह— उद्यास्यन्वेति । रग

**सा होवाच मैत्रेयी । यन्नु म इयं भगो सर्वा पृथिवी वित्तेन पूर्णा स्यात्कथ तेनामृता स्यामिति । नेति होवाच याज्ञवल्क्य । यथैवोपकरणवता जीवित तथैव ते जीवित४ स्यात् । अमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेनेति ॥**

सा एवमुक्ता ह उवाच—— यत् यदि, 'नु' इति वितर्के, मे मम इय पृथिवी, भगो भगवन्, सर्वा सागरपरिक्षिप्ता वित्तेन धनेन पूर्णा स्यात् । कथम् ? न कथचनेत्याक्षेपार्थ., प्रश्नार्थो वा, तेन पृथिवीपूर्णवित्तसाध्येन कर्मणा अग्निहोत्रादिना —— अमृता किं स्यामिति व्यवहितेन सबन्ध· । प्रत्युवाच याज्ञवल्क्य. —— कथमिति यद्याक्षेपार्थं, अनुमोदनम् —— नेति होवाच याज्ञवल्क्य इति । प्रश्नश्चेत् प्रतिवचनार्थम् । नैव स्या. अमृता, किं तर्हि यथैव लोके उपकरणवता साधनवतां जीवित सुखोपायभोगसपन्न, तथैव तद्वदेव तव जिवित स्यात् । अमृतत्वस्य तु न आशा मनसाऽपि अस्ति वित्तेन वित्तसाध्येन कर्मणेति ।

* शकर

---

* रग सरलार्थमाह ।

(१) बृउ २।४।२, शब्रा १४।५।४।२ यन्नु म (यन्म), ब्रशकर १।४।१९, भास्कर १।४।१८, रंग नेति हो ( नेति स हो ), रामानुज १।४।१९, श्रीकठ १।४।१९, श्रीकर १।४।१९

**सा होवाच मैत्रेयी । येनाहं नामृता स्यां किमहं तेन कुर्याम् । यदेव भगवान्वेद तदेव मे ब्रूहीति ॥**

सा होवाच मैत्रेयी । एवमुक्ता प्रत्युवाच मैत्रेयी—— यत्रैव येनाह नामृता स्या, किमह तेन वित्तेन कुर्याम् ? यदेव भगवान् केवल अमृतत्वसाधन वेद, तदेव अमृतत्वसाधन मे मह्य ब्रूहि ।

* शकर.

**स होवाच याज्ञवल्क्य । प्रिया बतारे न सती प्रिय भापसे । एह्यास्स्व । व्याख्यास्यामि ते । व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥**

( १ ) स होवाच याज्ञवल्क्य । एव वित्तसाध्येऽमृतत्वसाधने प्रत्याख्याते, याज्ञवल्क्य स्वाभिप्रायसपत्तौ तुष्ट आह —— स होवाच —— प्रिया इष्टा, बतेत्यनुकम्पाह, अरे मैत्रेयि, न· अस्माक पूर्वमपि प्रिया सती भवन्ती इदानीं प्रियमेव चित्तानुकूल भाषसे । अत एहि आस्स्व उपविश व्याख्यास्यामि—— यत् ते तव इष्ट अमृतत्वसाधनमात्मज्ञान कथयिष्यामि । व्याचक्षाणस्य तु मे मम व्याख्यान कुर्वत·, निदिध्यासस्व वाक्यानि अर्थतो निश्चयेन यातुमिच्छेति ।

शकर.

( २ ) यद्वा व्याचक्षाणस्य तु मे मुख निदिध्यासस्व । निध्यानमवलोकनमवलोकयेति यावत् । इतिशब्दो वाक्यावसाने । ब्रवीतु मे भगवानिति ।

‡ रग

**स होवाच । न वा अरे पत्यु कामाय पति प्रियो भवत्यात्मनस्तु कामाय पति प्रियो भवति ।**

---

* रग सरलार्थमाह ।

‡ शेष शकरवत् ।

(१) बृउ २।४।३, शब्रा १४।५।४।३, ब्रशकर १।४।१९, रामानुज १।४।१९, श्रीकर १।४।१९, वल्लभ १।४।१९

(२) बृउ २।४।४, शब्रा १४।५।४।४ निदिध्यासस्वेति+ ( ब्रवीतु भगवानिति )

(३) बृउ २।४।५, शब्रा १४।५।४।५ होवाच+ ( याज्ञवल्क्य ), ब्रशकर. १।१।२ ( पृ ३७ ), १।१।४ ( पृ ५४, ५५, ७३ ), १।४।१९, २।१।३, २२, ३२,

न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति। न वा अरे पुत्राणा कामाय पुत्रा प्रिया भवन्त्यात्मनस्तु कामाय पुत्रा. प्रिया भवन्ति। न वा अरे वित्तस्य कामाय वित्त प्रिय भवत्यात्मनस्तु कामाय वित्त प्रिय भवति। न वा अरे ब्रह्मण कामाय ब्रह्म प्रिय भवत्यात्मनस्तु कामाय ब्रह्म प्रिय भवति। न वा अरे क्षत्रस्य कामाय क्षत्र प्रियं भवत्यात्मनस्तु कामाय क्षत्र प्रिय भवति। न वा अरे लोकाना कामाय लोका प्रिया भवन्त्यात्मनस्तु कामाय लोका प्रिया भवन्ति। न वा अरे देवाना कामाय देवा प्रिया भवन्त्यात्मनस्तु कामाय देवा प्रिया भवन्ति। न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति। न वा अरे सर्वस्य कामाय सर्वं प्रिय भवत्यात्मनस्तु कामाय सर्वं प्रिय भवति। आत्मा वा अरे द्रष्टव्य. श्रोतव्यो मन्तव्यो निदिध्यासितव्य मैत्रेयि। आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदꣳ सर्वं विदितम् ॥

(१) स होवाच — अमृतत्वसाधन वैराग्यमुपदिदिक्षुः जायापतिपुत्रादिभ्यो विरागमुत्पादयति तत्सन्यासाय। न वै वैशब्द· प्रसिद्धस्मरणार्थ। प्रसिद्ध मेव एतत् लोके। पत्युः भर्तु. कामाय प्रयोजनाय जायाया पति प्रियो न भवति, किं तर्हि आत्मनस्तु कामाय प्रयोजनायैव भार्यायाः पति. प्रियो भवति। तथा न वा अरे जायाया इत्यादि समानमन्यत्। न वा अरे पुत्राणा, न वा अरे वित्तस्य, न वा अरे ब्रह्मण., न वा अरे क्षत्रस्य, न वा अरे लोकाना, न वा अरे देवाना, न वा अरे भूताना, न वा अरे सर्वस्य। पूर्वं पूर्वं यथासन्ने प्रीतिसाधने वचन, तत्र तत्र इष्टतरत्वाद्वैराग्यस्य। सर्वग्रहण उक्तानुक्तार्थम्। तस्मात् लोकप्रसिद्धमेतत् — आत्मैव प्रिय., नान्यत्। 'तदेतत्प्रेय. पुत्रात्' इत्युपन्यस्त, तस्यैतत् वृत्तिस्थानीय प्रपञ्चितम्। तस्मात् आत्मप्रीतिसाधनत्वात् गौणी अन्यत्र प्रीतिः, आत्मन्येव मुख्या। तस्मात् आत्मा वै अरे द्रष्टव्य· दर्शनार्हः., दर्शनविषयमापादयितव्यः। श्रोतव्यः पूर्वं आचार्यत आगमतश्च। पश्चान्मन्तव्य तर्कत·। ततो निदिध्यासितव्य निश्चयेन ध्यातव्यः। एव ह्यसौ दृष्टो भवति श्रवणमनननिदिध्यासनसाधनैर्निर्वर्तितैः। यदा एकत्वमेतान्युपगतानि, तदा सम्यग्दर्शन ब्रह्मैकत्वविषय प्रसीदति, न अन्यथा श्रवणमात्रेण। यत् ब्रह्मक्षत्रादि कर्मनिमित्त वर्णाश्रमादिलक्षण आत्मन्यविद्याध्यारोपितप्रत्ययविषय क्रियाकारकफलात्मक अविद्याप्रत्ययविषयम्— रज्ज्वामिव सर्पप्रत्यय, तदुपमर्दनार्थमाह — आत्मनि खलु अरे मैत्रेयि दृष्टे श्रुते मते विज्ञाते इद सर्वं विदित विज्ञात भवति। शकर.

(२) किमर्थानि तर्हि — 'आत्मा वा अरे द्रष्टव्य. श्रोतव्य.' इत्यादीनि विधिच्छायानि वचनानि। स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः। यो हि बहिर्मुखः प्रवर्तते पुरुष. 'इष्ट मे भूयादनिष्ट मा भूत्' इति। न च तत्राऽऽत्यन्तिक पुरुषार्थं लभते तमात्यन्तिकपुरुषार्थवाञ्छिन स्वाभाविककार्यकरणसघातप्रवृत्तिगोचराद्विमुखीकृत्य प्रत्यगात्मस्रोतस्तया प्रवर्तयन्ति 'आत्मा वा अरे द्रष्टव्यः' इत्यादीनि।

१।१।४ (पृ. ७३)

'वाक्यान्वयात्' — बृहदारण्यके मैत्रेयीब्राह्मणेऽधीयते 'न वा अरे पत्यु. कामाय' इत्युपक्रम्य 'न वा अरे सर्वस्य कामाय सर्वं प्रिय भवत्यात्मनस्तु कामाय सर्वं प्रिय भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन

२।३।३९, २।४।२, ३।४।८, भास्कर १।१।१ (पृ ३, ४, ५), १।१।४ (पृ १२), १।४।१८, २।१।४, २।४।२, रग विदितम्+ (भवति), रामानुज १।१।१ (पृ ८, ९, १०८), १।१।४ (पृ १५१, १५९), १।४।१९, ३।४।२४, ४६, ४।१।१, ८, श्रीकठ १।१।४ (पृ १८३, १८४), १।४।१९, श्रीकर १।१।१ (पृ १५, १६, १८, १९, २२), १।१।२ (पृ ३१), १।१।४ (पृ ४५, ४६), १।४।१९, १।४।२२ (पृ १७७), २।१।२२, २।३।३६, ३।२।२५, ३।३।४२, ५१, ५३, ३।४।२४, ५०, ५२, ४।१।१, ४।४।२२; वल्लभ १।१।१ (पृ ३७), १।४।१९, ४।१।१ न वा अरे पत्यु· (न वारे पत्यु) आत्मा वा अरे (आत्मा वारे), बलदेव १।१।१, २

मत्या विज्ञानेद सर्वं विदितम् ' इति । तत्रैतद्विचिकित्स्यते — किं विज्ञानात्मैवाय द्रष्टव्यश्रोतव्यत्वादिरूपेणोपदिश्यते, आहोस्वित्परमात्मेति । कुत. पुनरेषा विचिकित्सा । प्रियसंसूचितेनाऽऽत्मना भोक्त्रोपक्रमाद्विज्ञानात्मोपदेश इति प्रतिभाति । तथाऽऽत्मविज्ञानेन सर्वविज्ञानोपदेशात्परमात्मोपदेश इति । किं तावत्प्राप्तम् । विज्ञानात्मोपदेश इति । कस्मात्? उपक्रमसामर्थ्यात् । पतिजायापुत्रवित्तादिक हि भोग्यभूत सर्वं जगदात्मार्थतया प्रिय भवतीति प्रियसंसूचित भोक्तारमात्मानमुपक्रम्यानन्तरमिदमात्मनो दर्शनाद्युपदिश्यमान कस्यान्यस्याऽऽत्मनः स्यात् । मध्येऽपि ' इद महद्भूतमनन्तमपार विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्ति' ( बृउ २।४।१२ ) इति प्रकृतस्यैव महतो भूतस्य द्रष्टव्यस्य भूतेभ्य समुत्थान विज्ञानात्मभावेन ब्रुवन्विज्ञानात्मन एवेद द्रष्टव्यत्व दर्शयति । तथा 'विज्ञातारमरे केन विजानीयात्' इति कर्तृवचनेन शब्देनोपसंहरन्विज्ञानात्मानमेवेहोपदिष्ट दर्शयति । तस्मादात्मविज्ञानेन सर्वविज्ञानवचन भोक्त्रर्थत्वाद्भोग्यजातस्यौपचारिक द्रष्टव्यमिति । एव प्राप्ते ब्रूम' — परमात्मोपदेश एवायम् । कस्मात्? ' वाक्यान्वयात् ' । वाक्य हीद पौर्वापर्येणावेक्ष्यमाण परमात्मान प्रत्यन्वितावयव लक्ष्यते । कथमिति, तदुपपाद्यते—'अमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेन' इति याज्ञवल्क्याद्रुपश्रुत्य 'येनाह नामृता स्या किमह तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहि ' इत्यमृतत्वमाशासानायै मैत्रेय्यै याज्ञवल्क्य आत्मविज्ञानमुपदिशति । न चान्यत्र परमात्मविज्ञानादमृतत्व मस्तीति श्रुतिस्मृतिवादा वदन्ति । तथा चाऽऽत्मविज्ञानेन सर्वविज्ञानमुच्यमान नान्यत्र परमकारणविज्ञानान्मुख्यमवकल्पते । न चैतदौपचारिकमाश्रयितु शक्य, यत्कारणमात्मविज्ञानेन सर्वविज्ञान प्रतिज्ञायानन्तरेण ग्रन्थेन तदेवोपपादयति— 'ब्रह्म त परादाद्योऽन्यत्राऽऽत्मनो ब्रह्म वेद' इत्यादिना । यो हि ब्रह्मक्षत्रादिक जगदात्मनोऽन्यत्र स्वातन्त्र्येण लब्धसद्भाव पश्यति त मिथ्यादर्शिन तदेव मिथ्यादृष्ट ब्रह्मक्षत्रादिक जगत्पराकरोतीति भेददृष्टिमपोद्य 'इद सर्वं यदयमात्मा' इति सर्वस्य वस्तुजातस्याऽऽत्माव्यतिरेकमवतारयति । दुन्दुभ्यादिदृष्टान्तैश्च तमेवाव्यतिरेक द्रढयति । ' अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः ' इत्यादिना च प्रकृतस्याऽऽत्मनो नामरूपकर्मप्रपञ्चकारणता व्याचक्षाणः परमात्मानमेनं गमयति । तथैवैकायनप्रक्रियायामपि सविषयस्य सेन्द्रियस्य सान्त.करणस्य प्रपञ्चस्यैकायनमनन्तरमबाह्य कृत्स्न प्रज्ञानघन व्याचक्षाण परमात्मानमेन गमयति । तस्मात्परमात्मन एवाय दर्शनाद्युपदेश इति गम्यते ।

१।४।१९

सम्यग्दर्शनाभ्युपायो हि योगो वेदे विहित ' श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ' इति । २।१।३

औपनिषदात्मप्रतिपत्तिप्रयोजनः समाधिरुपदिष्टो वेदान्तेषु ' आत्मा वा अरे द्रष्टव्य' श्रोतव्यो मन्तव्यो निदिध्यासितव्य' ' इत्येवलक्षण । * ब्रशकर, २।३।३९

( ३ ) अयमर्थ —परमात्मदर्शन कुर्यादिति । न च दर्शने पुरुषस्य साक्षात् स्वातन्त्र्यमस्तीति दर्शनार्थः पुरुषप्रयत्नो विधीयते । स च निर्विषयो न संभवतीति श्रवणादिरुपायो विधीयते । श्रवणादिनोपायेन प्रयतमानस्यात्मदर्शनमुपपद्यत इति ।

भास्कर १।१।१ ( पृ. ६ )

( ४ ) न वा इत्यत्र वैशब्दोऽवधारणे । नैवेत्यर्थः । पत्यु' कामाय । कामः संकल्प. । कामाय संकल्पाय संकल्प सफलीकर्तुमित्यर्थ. । ' क्रियार्थोपपदस्य च कर्मणि स्थानिनः ' ( पा. सू. २।३।१४ ) इति चतुर्थी । पत्युः प्रियत्वमहमस्याः प्रिय. स्यामिति पतिसंकल्पसाफल्याय न भवति पतिसंकल्पायत्त न भवतीति यावत् । वेदाध्ययन सफलीकर्तुं यज्ञ इत्युक्ते वेदाध्ययनस्य यज्ञः फलमिति हि सिध्यति । एव संकल्पसाफल्याय प्रियत्वमित्युक्ते संकल्पायत्त प्रियत्वमिति हि सिध्यति । ततश्चाहमस्याः प्रियः स्यामिति पतिसंकल्पायत्त न पतिप्रियत्वमपि त्वात्मनः परमात्मनः कामाय संकल्पात्प्रियो भवतीत्यर्थ. । आत्मशब्दस्य परमात्मनि मुख्यप्रवृत्तत्वात् । अत्रापि कामायेत्य(?)त्रापि पूर्ववच्चतुर्थी । एवमुत्तरत्रापि

* छाउ. ६।१४।२ (पृ. ९२२) इत्यत्रापि ब्रशंकरभाष्य द्रष्टव्यम् । ब्रसू. १।४।१९ इतिसूत्रगता भास्कररामानुजश्रीकंठश्रीकरवल्लभा ब्रशंकरवत् ।

द्रष्टव्यम् । स्वर्गाद्या लोका इत्यर्थः । यस्मात्पतिजाया दीनां प्रियत्व यत्सकल्पायत्त ( तस्मात् ) तस्य परमात्मन. प्रसादाय परमात्मा द्रष्टव्य. । स हि परमात्म दर्शनेन प्रसन्नः सन्सर्वेषामपि वस्तूना पतिजाया दिवत्ततोऽधिक वा प्रियत्वमापादयितु शक्नोति । उपायत्वदशाप्रभृति भगवद्ध्यानस्यानुकूलत्वसूचनाय निदिध्यासितव्य इति सन्नन्तपदेन निर्देश. । अत्र स्मृतिलम्भे सर्वग्रन्थीना विमोक्ष इति च ध्यानस्यैव मोक्षाव्यवहितहेतुत्वश्रवणात् । 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' ( मुड २।२।८ ) इति दर्शन स्यापि मोक्षाव्यवहितकारणत्वश्रवणादुभयोरप्येकार्थकत्वस्य वक्तव्यत्वाच्चाक्षुषज्ञानवाचितया दृशिधातोश्चाक्षुषज्ञानस्य च 'न चक्षुषा गृह्यते' इत्यचाक्षुषतया प्रतिपन्ने ब्रह्मण्यसभवाद्दर्शनशब्देनोपचाराद्दर्शनसमानाकारमतिविशद ज्ञानमभिधीयते । ततश्च द्रष्टव्यो निदिध्यासितव्य इत्याभ्यां दर्शनसमानाकार ध्यान विधीयते । 'आर्षेय वृणीत एक वृणीते द्वौ वृणीते त्रीन्वृणीते न चतुरो वृणीते न पञ्चातिवृणीते' इत्यत्राऽऽर्षेय वृणीते त्रीन्वृणीत इत्याभ्यां त्रित्वविशिष्टार्षेयवरणविधानवदिति द्रष्टव्यम् । अत्र विज्ञानेनेति विज्ञानशब्दो निदिध्यासनपर. । 'आत्मा वा अरे द्रष्टव्य श्रोतव्यो मन्तव्यो निदिध्यासितव्य.' इति स्थानप्रमाणात् । तस्मिन्परमात्मनि दर्शनसमानाकारध्यानविषयीकृते सति तत्प्रसादात्सर्वे विदित भवति । अनुकूलत्वेन विदित भवति सर्वे प्रिय भवतीति यावत् । यद्वा निदिध्यासितव्यतया निर्दिष्टस्य परमात्मनो जगत्कारणत्व लक्षणमाह— आत्मनो वा इत्यादिना । उपादानोपादेययोरभेदात्तस्मिञ्ज्ञाते सर्वे विदित भवति । अत्र सर्वमिदमिति शब्दौ स्थूलावस्थचिदचिद्विशिष्टब्रह्मपरौ । आत्मशब्दोऽपि सूक्ष्मचिदचिद्विशिष्टब्रह्मपरः । अतस्तयोरभेदात्तद्विज्ञानेन सर्वे विज्ञातमित्युपपद्यते । अनेन जगदुपादानत्वमुक्त भवति । अत्र निदिध्यासितव्य इत्युक्त्या सर्वोपादानत्वकथनाज्जगत्कारणत्व सफलपरविद्यानुयायीति वदन्ति । रग.

( ५ ) वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्य ज्ञान वेदान्तवाक्यैर्विधित्सितम् । श्रोतव्य इति चानुवाद' । स्वाध्यायस्यार्थपरत्वेनाधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात्तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तत इति श्रवणस्य प्राप्तत्वात् । श्रवणप्रतिष्ठार्थत्वान्मननस्य मन्तव्य इति चानुवादः । तस्माद्ध्यानमेव विधीयते । वक्ष्यति च 'आवृत्तिरसकृदुपदेशात्' (ब्र सू. ४।१।१ ) इति । तदिदमपवर्गोपायतया विधित्सित वेदनमुपासनमित्यवगम्यते । विद्युपास्त्योरव्यतिरेकेणोपक्रमोपसहारदर्शनात् । ध्यान च तैलधारावदविच्छिन्नस्मृतिसतानरूपम् । ध्रुवा स्मृति' । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष इति ध्रुवायाः स्मृतेरपवर्गोपायत्वश्रवणात् । सा च स्मृतिर्दर्शनसमानाकारा । 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसशया । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परापरे ॥' ( मुड २।२।८ ) इत्यनेनैकार्थ्यात् । एव च सति 'आत्मा वारे द्रष्टव्य' इत्यनेन निदिध्यासनस्य दर्शनरूपता विधीयते । भवति च स्मृतेर्भावनाप्रकर्षाद्दर्शनरूपता । वाक्यकारेणैतत्सर्वे प्रपञ्चितम् । वेदनमुपासन स्यात्तद्विषये श्रवणादिति ।

साक्षात्काररूपा स्मृति स्मर्यमाणात्यर्थप्रियत्वेन स्वयमत्यर्थप्रिया यस्य स एव परेणाऽऽत्मना वरणीयो भवतीति तेनैव लभ्यते । पर आत्मेत्युक्त भवति । एवरूपा ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते । उपासनपर्यायत्वात् भक्तिशब्दस्य ।

* रामानुज १।१।१ ( पृ ८–१० )

( ६ ) आत्मा नारायण । तस्यैव हि कामेन पत्यादि प्रियो भवति । न हि पत्यादीना जायादीनामह प्रिय' स्यामिति कामनामात्रेण प्रिय ( प्रियत्व ) भवति । भगवदिच्छयैव हि तद्भवति । अन्यथा जायार्थे पत्यर्थे इत्येव स्यात् । प्राधान्यादिद सर्वे विदितम् । सर्वकारणत्वाच्च सर्वप्राधान्य भगवत' । प्राधान्याप्राधान्ययोरपि स एव हि हेतुः । अन्यत्रात्मनो ब्रह्म वेद भगवदधीनत्वेन न वेद । तदनाश्रितत्वेन स्थानान्तरे च वेद । मध्व.

**ब्रह्म[१] त परादाद्योऽन्यत्राऽऽत्मनो ब्रह्म वेद । क्षत्र त परादाद्योऽन्यत्राऽऽत्मन. क्षत्र वेद ।**

---

* ज्ञानविधिविषये श्रीकठश्रीकरयो. रामानुजवद्भाव ।

(१) बृउ २।४।६, शब्रा १४।५।४।६, ब्रशकर. १।१।४ ( पृ. ७४ ), १।४।१९, २०, २२, २।१।७, ९;

लोकास्तं परादुर्योऽन्यत्राऽऽत्मनो लोकान्वेद । देवास्त परादुर्योऽन्यत्राऽऽत्मनो देवान्वेद । भूतानि तं परादुर्योऽन्यत्राऽऽत्मनो भूतानि वेद । सर्वं त परादाद्योऽन्यत्राऽऽत्मन सर्वं वेद । इद ब्रह्मेद क्षत्रमिमे लोका इमे देवा इमानि भूतानीद सर्वं यदयमात्मा ॥

(१) ननु कथ अन्यस्मिन्विदिते अन्यद्विदित भवति ? नैष दोष । न हि आत्मव्यतिरेकेण अन्यत्किंचिदस्ति । यद्यस्ति, न तद्विदित स्यात् । न त्वन्य दस्ति । आत्मैव तु सर्वम् । तस्मात्सर्वे आत्मनि विदिते विदित स्यात् । कथ पुनरात्मैव सर्वमित्येतत् श्रावयति — ब्रह्म ब्राह्मणजाति त पुरुष परादात् परादध्यात् पराकुर्यात् । कम्? य. अन्यत्रात्मन. आत्मस्वरूपव्यतिरेकेण — आत्मैव न भवतीय ब्राह्मणजातिरिति — ता यो वेद, त परादध्यात् सा ब्राह्मणजाति अनात्मस्व रूपेण मा पश्यतीति । परमात्मा हि सर्वेषामात्मा । तथा क्षत्र क्षत्रियजाति, तथा लोका., देवा, भूतानि, सर्वम् । इद ब्रह्मेति — यान्यनुक्रान्तानि तानि सर्वाणि, आत्मैव, यदयमात्मा — योऽयमात्मा द्रष्टव्य. श्रोतव्य इति प्रकृत — यस्मात् आत्मनो जायते आत्मन्येव लीयते आत्ममय च स्थितिकाले, आत्मव्य तिरेकेणाग्रहणात्, आत्मैव सर्वम् ।

शकर

(२) ननु कथमात्मनि विज्ञाते सर्वमिद विज्ञात स्याज्जगतस्तद्भिन्नत्वादित्याशङ्क्याऽऽह—ब्रह्म तमिति । ब्रह्म ब्राह्मणवर्ण । अस्याऽऽत्मनोऽन्यत्र परमात्मनोऽन्यत्र स्थित न तु परमात्मनि स्थितमब्रह्मात्मक स्वनिष्ठं ब्राह्मणवर्णं यो वेद त ब्रह्म परादात्पराकुर्यादभिभवत् । अन्यत्वेनावगतो ब्राह्मणवर्ण एव त ससारयतीत्यर्थ. । एवमुत्तरत्रापि द्रष्टव्यम् । क्षत्र तमिति । स्पष्टोऽर्थ. ।

ननु सर्वस्य ब्रह्माधारतया ब्रह्मात्मत्वेऽपि ब्रह्मात्मकस्य शरीरभूतस्य जगतः शरीरभूतब्रह्मभिन्नत्वेन ज्ञानेन तज्ज्ञानेन तज्ज्ञानासभवात्तस्मिन्विज्ञात इद सर्वं विदितमिति निर्देशो नोपपद्यत इत्याशङ्क्य सर्वस्यापि तच्छरीरत्वश(त्वाच्छ)रीरवाचिना च शब्दाना शरीरपर्यन्तत्वादिद सर्वमितिशब्दाभ्यामन्यैरपि शब्दैस्तच्छरीरक ब्रह्मैवाभिधीयत इत्यभिप्रेत्याऽऽह — इद ब्रह्मदमिति । ततश्चात्मनि विज्ञात इद सर्वं विदित भवति सर्वशरीरक ब्रह्म विदित भवतीत्यर्थ उपपद्यत इति भावः ।

रग.

(३) परादात्परतो लोकालोकस्यान्धे तमसि । इद ब्रह्मादिकम् । यदयमात्मा यत्रायमात्मा । अन्यत्र परिज्ञाने दोषोक्तेस्तत्र परिज्ञान युक्त भवति। अन्यथा अन्यदात्मनो ब्रह्म वेदेति स्यात् । यदित्यव्ययत्वाद्यत्रेत्यपि भवति । यथा यस्मादित्यर्थे । सतत्तु प्रथमेति सूत्रम् ।

मध्व.

(४) कार्यस्य ब्रह्मत्वश्रुतिर्ब्रह्मप्रकृतित्वे सभवति, नान्यथा । वल्लभ १।४।२४

स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्शब्दाञ्शक्नुयाद्ग्रहणाय । दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥

(१) कथ पुन इदानीं इद सर्वमात्मैवेति ग्रहीतु शक्यते ? चिन्मात्रानुगमात् सर्वत्र चित्स्वरूपतैवेति गम्यते । तत्र दृष्टान्त उच्यते — यत्स्वरूपव्यतिरेकेणाग्रहण यस्य, तस्य तदात्मत्वमेव लोके दृष्टम् । स यथा — स इति दृष्टान्तः । लोके यथा दुन्दुभेः भेर्यादे, हन्यमानस्य ताड्यमानस्य दण्डादिना, न, बाह्यान् शब्दान् बहिर्भूतान् शब्दविशेषान् दुन्दुभिशब्दसामान्यान्निष्कृष्टान् दुन्दुभिशब्दविशेषान्, न शक्नुयात् ग्रहणाय ग्रहीतुम् । दुन्दुभेस्तु ग्रहणेन, दुन्दुभिशब्दसामान्यविशेषत्वेन, दुन्दुभिशब्दा एते इति, शब्दविशेषा गृहिता भवन्ति, दुन्दुभिशब्दसामान्यव्यतिरेकेणाभावात् तेषाम् । दुन्दुभ्याघातस्य वा, दुन्दुभेराहनन आघातः— दुन्दुभ्याघातविशिष्टस्य शब्दसामान्यस्य ग्रहणेन तद्गता

१४, २।३।६, ३।२।२६, ३।४।५२, भास्कर १।१।१, १।४।१८, २।१।१४, रामानुज १।१।१ ( पृ १४, १२२ ), १।१।४ ( पृ १६७ ), १।४।२३, २।१।१५ ( पृ ४४३ ), ४।१।३, श्रीकठ १।४।१९, श्रीकर १।१।१ ( पृ २३ ), वल्लभ १।१।३ ( पृ ११९ ), १।४।२४, २७

(१) बृउ २।४।७, शश्रा १४।५।४।७ शब्दा+ ( भवति )

विशेषा गृहीता भवन्ति, न तु त एव निर्भिद्य ग्रहीतु शक्यन्ते, विशेषरूपेणाभावात् तेषाम् — तथा प्रज्ञानव्यतिरेकेण स्वप्नजागरितयो. न कश्चिद्वस्तुविशेषो गृह्यते। तस्मात् प्रज्ञानव्यतिरेकेण अभावो युक्तस्तेषाम्। शकर

(२) एव जगत्कारणत्वविशिष्टपरमात्मोपासनाविधायोपासनोपकरणभूतमन.प्रभृतिकरणनियमनमाह — स यथेति। दु दुभेरित्यनादरे षष्ठी। ग्रहणशब्द इह निरोधपरः। उपादाननिरोधयोर्द्वयोरपि ग्रहणशब्दवाच्यत्वात्। यथा गृहीतानि पुष्पाणि गृहीतश्चोर इति। यथा दुन्दुभौ हन्यमाने ततो नि सरत. शब्दान् न निरोद्धु शक्नुयात्। कथ तर्हि निरुणद्धीत्यत्राह — दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीत । दुन्दुभिनिरोधेन तदाहन्तृपुरुषनिरोधेन वा शब्दा निरुध्यन्ते भेरीदण्डयोरन्यतरनिरोधेन सयोगनिरोधद्वारा शब्दा निरुध्यन्ते। एवमिन्द्रियेषु व्याप्रियमाणेषु बाह्यार्थज्ञान दुर्निरोधम्। अतो विषयापसारणेन वेन्द्रियनिरोधेन वा परमात्मसाक्षात्कारविरोधिबाह्यार्थज्ञान निरुध्यत इत्यर्थ.। एवमुत्तरत्रापि द्रष्टव्यम्। रग

**स[१] यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्शब्दाञ्शक्नुयाद्ग्रहणाय। शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीत ॥**

तथा स यथा शङ्खस्य ध्मायमानस्य शब्देन सयोज्यमानस्य आपूर्यमाणस्य न बाह्यान् शब्दान् शक्नुयात् — इत्येवमादि पूर्ववत्। शकर

**स[२] यथा वीणायै वाद्यमानायै न बाह्याञ्शब्दाञ्शक्नुयाद्ग्रहणाय। वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीत ॥**

(१) तथा वीणायै वाद्यमानायै — वीणाया वाद्यमानायाः। अनेकदृष्टान्तोपादान इह सामान्यबहुत्वख्यापनार्थम् — अनेके हि विलक्षणाः चेतनाचेतनरूपा सामान्यविशेषा.—तेषा पारम्पर्यगत्या यथा एकस्मिन् महासामान्ये अन्तर्भाव प्रज्ञानघने, कथ नाम प्रदर्शयितव्य इति। दुन्दुभिशङ्खवीणाशब्दसामान्यविशेषाणा यथा शब्दत्वेऽन्तर्भावः, एव स्थितिकाले तावत् सामान्यविशेषाव्यतिरेकात् ब्रह्मैकत्व शक्यमवगन्तुम्। शकर.

(२) अत्र वीणाया इति चतुर्थी षष्ठयर्थे। छान्दसो विभक्तिव्यत्यय। रग

(३) दुन्दुभ्याघातादिदृष्टान्तोऽपि तदधीनत्व तत्कारणत्व च ज्ञापयति। न हि दुन्दुभ्यादिरेव तच्छब्दः। न च तदुपादानम्। स्थानान्तरे तदुपलम्भात्। न ह्युपादानादुपादेय स्थनान्तरे भवति। शब्दो हि स्थानान्तर गत्वा प्रतिश्रुतित्वमुपैति। भगवदिच्छाया दृष्टान्तो दुन्दुभ्याघातादिः न हि दुन्दुभिं पश्यन्पुरुषो दुन्दुभ्याघाते मुरजशब्दोऽयमिति गृह्णाति। मध्व

**स[१] यथाऽऽर्द्रैधाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेद. सामवेदोऽथर्वाङ्गिरस इतिहास पुराण विद्या उपनिषद श्लोका सूत्राण्यनुव्याख्यानानि व्याख्यानानि। अस्यैवैतानि निश्वसितानि ॥**

(१) एव उत्पत्तिकाले प्रागुत्पत्तेः ब्रह्मैवेति शक्यमवगन्तुम्। यथा अग्ने. विस्फुलिङ्गधूमाङ्गारार्चिषां प्राग्विभागात् अग्निरेवेति भवत्यग्न्येकत्व, एव जगत् नामरूपविकृत प्रागुत्पत्तेः प्रज्ञानघन एवेति युक्त ग्रहीतु इत्येतदुच्यते स यथा—आर्द्रैधाग्नेः आर्द्रैरेवोभिरिद्धोऽग्नि· आर्द्रैधाग्निः, तस्मात्, अभ्याहितात् पृथग्धूमाः, पृथक् नानाप्रकार, धूमग्रहण विस्फुलिङ्गादिप्रदर्शनार्थं, धूमविस्फुलिङ्गादय·, विनिश्चरन्ति विनिर्गच्छन्ति। एव— यथाऽय दृष्टान्त.। अरे मैत्रेयि अस्य परमात्मन. प्रकृतस्य महतो भूतस्य निश्वसितमेतत्। निश्वसितमिव

(१) बृउ २।४।८, शब्रा १४।५।४।९
(२) बृउ २।४।९, शब्रा १४।५।४।८

(१) बृउ २।४।१०, शब्रा १४।५।४।१० हितात्पृ (हितस्य पृ) वैतानि+ (सर्वाणि), ब्रशकर १।१।३, १।४।१९, ३।४।८, भास्कर १।४।१८, रग मेतद्यदृग्वे (मेतदृग्वे) स्यैवैतानि (स्यैव), रामानुज १।१।१ (पृ. १२२), १।१।११ ऽस्य महतो (तस्य ह वा एतस्य महतो), मध्व ङ्गिरस (ङ्गिर), श्रीकठ १।१।३ (पृ १५१, १५३), २।२।३८, श्रीकर. १।१।३ (पृ ३७), ४।४।२२.

निश्वसितम् । यथा अप्रयत्नेनैव पुरुषनिश्वासो भवति, एव वै अरे । किं तन्निश्वसितमिव ततो जातमित्युच्यते — यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः — चतुर्विध मन्त्रजात, इतिहास इति, उर्वशीपुरूरवसो. सवादादि — 'उर्वशी ह्यप्सराः' इत्यादि ब्राह्मणमेव, पुराणम् — 'असद्वा इदमग्र आसीत्' इत्यादि, विद्या देवजनविद्या — वेदः सोऽय — इत्याद्या, उपनिषदः 'प्रियमित्येतदुपासीत' इत्याद्या., श्लोकाः ब्राह्मणप्रभवा मन्त्रा. 'तदेते श्लोका' इत्यादय., सूत्राणि वस्तुसग्रह-वाक्यानि वेदे यथा— 'आत्मेत्येवोपासीत' इत्यादीनि, अनुव्याख्यानानि मन्त्रविवरणानि, व्याख्यानान्यर्थवादा., अथवा वस्तुसग्रहवाक्यविवरणान्यनुव्याख्यानानि —यथा चतुर्थाध्याये 'आत्मेत्येवोपासीत' इत्यस्य यथा वा 'अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवम्' इत्यस्य अयमेवाध्यायशेष, मन्त्रविवरणानि व्याख्यानानि — एवमष्टविध ब्राह्मणम् । एव मन्त्रब्राह्मणयोरवे ग्रहणम् । नियतरचनावतो विद्यमानस्यैव वेदस्याभिव्यक्ति. पुरुषनिश्वासवत्, न च पुरुषबुद्धिप्रयत्नपूर्वकः । अत प्रमाण निरपेक्ष एव स्वार्थे । तस्मात् यत् तेनोक्त तत्तथैव प्रतिपत्तव्य, आत्मन श्रेय इच्छद्भिः, ज्ञान वा कर्म वेति । नामप्रकाशवश्चाद्धि रूपस्य विक्रियावस्था । नामरूपयोरेव हि परमात्मोपाधिभूतयोर्व्याक्रियमाणयो. सलिलफेनवत् तत्त्वान्यत्वेनानिर्वक्तव्ययो सर्वावस्थयोः ससारत्वम् — इत्यतः नाम्नः एव निश्वसितत्वमुक्त, तद्वचनेनैव इतरस्य निश्वसितत्वसिद्धेः । अथवा सर्वस्य द्वैतजातस्य अविद्याविषयत्वमुक्तम् — 'ब्रह्म त परादात् इद सर्वं यदयमात्मा' इति । तेन वेदस्याप्रामाण्यमाशङ्क्येत । तदाशङ्कानिवृत्त्यर्थमिदमुक्तम् — पुरुषनिश्वासवत् अप्रयत्नोत्थितत्वात् प्रमाण वेदः, न यथा अन्यो ग्रन्थ इति ।

शकर

( २ ) सामान्येनोक्त कारणत्व प्रपञ्चयति — स यथेति । एधशब्दोऽकारान्त इन्धनवाची । आर्द्रैधाग्निग्रहण निमित्तोपादानयोर्ग्रहणार्थम् । अग्निर्हि धूमोत्पत्तौ निमित्तम् । इन्धन तूपादानम् । अभ्याहितात् । ध्मानवीजनादिना प्रवर्तितादित्यर्थः । पृथग्विधा धूमा निर्गच्छन्तीत्यर्थ. । एव वेति । महतो भूतस्य परमात्मनो नि.श्वसितमनायासेनोद्गतमेतद्वक्ष्यमाणमित्यर्थः । किं तदित्यत्राऽऽह — ऋग्वेद इति । भाव्यरूपाण्येतानि सर्वाणि भगवतो नि श्वसितानि । अयत्नेन तदुद्गतानीत्यर्थ । यद्यपि सूत्रस्मृतिपुराणादयो व्यासाद्युद्गता इति पुराणेषु प्रसिद्धस्तथाऽपि तेषां भगवदशत्वाद्भगवन्निःश्वसितोक्तिरुपपद्यत इति द्रष्टव्यम् । अत्र वाचकशब्द सृष्टिमात्रमुक्तम् । षष्ठे मैत्रेयीब्राह्मणे तु, 'इष्ट हुतमाशित पायितम्' इत्यादिना भोग्यभोगस्थानभोक्तृवर्गरूपवाच्यसृष्टेरुक्तत्वादनुक्तस्यान्यतो ग्राह्यत्वादत्रापि वाच्यसृष्टिरुक्तेति द्रष्टव्यम् । अनेन पूर्वं सामान्यतो निर्दिष्ट जगत्कारणत्व विवृत भवति ।

रग.

स यथा सर्वासामपाँ समुद्र एकायनम् । एवँ सर्वेषाँ स्पर्शाना त्वगेकायनम् । एवँ सर्वेषा गन्धाना नासिके एकायनम् । एवँ सर्वेषाँ रसाना जिह्वैकायनम् । एवँ सर्वेषाँ रूपाणा चक्षुरेकानयम् । एवँ सर्वेषाँ शब्दानाँ श्रोत्रमेकायनम् । एवँ सर्वेषाँ सकल्पाना मन एकायनम् । एवँ सर्वासा विद्यानाँ हृदयमेकायनम् । एवँ सर्वेषां कर्मणाँ हस्तावेकायनम् । एवँ सर्वेषामानन्दानामुपस्थ एकायनम् । एवँ सर्वेषा विसर्गाणा पायुरेकानयम् । एवँ सर्वेषामध्वनां पादावेकायनम् । एवँ सर्वेषा वेदानां वागेकायनम् ॥

( १ ) किंचान्यत् । न केवल स्थित्युत्पत्तिकालयोरेव प्रज्ञानव्यतिरेकेणाभावात् जगतो ब्रह्मत्वम् । प्रलयकाले च । जलबुद्बुदफेनादीनामिव सलिलव्यतिरेकेणाभावः, एव प्रज्ञानव्यतिरेकेण तत्कार्याणां नामरूपकर्मणा तस्मि-

---

(१) बृउ २।४।११, शब्रा १४।५।४।११ सर्वासा विद्याना ( सर्वेषा वेदाना ) सर्वेषामानन्दाना वागेकायनम् ( सर्वेषामध्वना . सर्वेषामानन्दाना सर्वेषा विसर्गाणा सर्वासा विद्याना वागेकायनम् ), ब्रशांकर. २।४।५, रग सर्वेषा गन्धाना . जिह्वैकायनम् ( सर्वेषा रसाना जिह्वैकायनम् । एव सर्वेषा गन्धानां नासिकैकायनम् ), मध्व वागेकायनम् ( वागेकायनमेवम् ) अन्यत् रगवत्, वल्लभ १।१।९ ( स० )

स्नेव लीयमानानामभावः । तस्मादेकमेव ब्रह्म प्रज्ञानघन एकरस प्रतिपत्तव्यमिति आह । प्रलयप्रदर्शनाय दृष्टान्त. । स इति दृष्टान्त । यथा येन प्रकारेण, सर्वासां नदीवापीतडागादिगतानामपा, समुद्र अब्धि एकायन, एक गमन, एकप्रलय· अविभागप्राप्तिरित्यर्थ । यथा अय दृष्टान्त·, एव सर्वेषा स्पर्शाना मृदुकर्कशकठिनपिच्छिलादीना वायोरात्मभूताना त्वक् एकायन, त्वगिति त्वग्विषय स्पर्शसामान्यमात्र, तस्मिन्प्रविष्टा· स्पर्शविशेषा.—आप इव समुद्रम् — तद्व्यतिरेकेणाभावभूता भवन्ति । तस्येव हि ते सस्थानमात्रा आसन् । तथा तदपि स्पर्शसामान्यमात्र त्वक्शब्दवाच्य मन सकल्पे मनोविषय सामान्यमात्रे, त्वग्विषय इव स्पर्शविशेषा , प्रविष्ट तद्व्यति रेकेणाभावभूत भवति । एव मनोविषयोऽपि बुद्धिविषयसामान्यमात्रे प्रविष्ट तद्व्यतिरेकेणाभावभूतो भवति । विज्ञानमात्रमेव भूत्वा प्रज्ञानघने परे ब्रह्मणि आप इव समुद्रे प्रलीयते । एव परपराक्रमेण शब्दादौ सह ग्राहकेण करणेन प्रलीने प्रज्ञानघने, उपाध्यभावात् सैन्धवघनवत् प्रज्ञानघन एकरस अनन्त अपार निरन्तर ब्रह्म व्यवतिष्ठते । तस्मात् आत्मैव एकमद्वयमिति प्रतिपत्तव्यम् । तथा सर्वेषा गन्धाना पृथिवीविशेषाणा नासिके घ्राणविषयसामान्यम् । तथा सर्वेषा रसानाम ब्विशेषाणां जिह्वेन्द्रियविषयसामान्यम् । तथा सर्वेषा रूपाणां तेजोविशेषाणा चक्षु चक्षुर्विषयसामान्यम् । तथा शब्दाना श्रोत्रविषयसामान्य पूर्ववत् । तथा श्रोत्रादिविषयसामान्याना मनोविषयसामान्ये सकल्पे । मनोविषयसामान्यस्यापि बुद्धिविषयसामान्ये विज्ञानमात्रे । विज्ञानमात्र भूत्वा परस्मिन्प्रज्ञानघने प्रलीयते । तथा कर्मेन्द्रियाणा विषया वदनादानगमनविसर्गानन्दविशेषा तत्तत्क्रियासामान्येष्वेव प्रविष्टा न विभागयोग्या भवन्ति, समुद्र इव अब्विशेषा· । तानि च सामान्यानि प्राण मात्रम् । प्राणश्च प्रज्ञानमात्रमेव—'यो वै प्राण सा प्रज्ञा या वै प्रज्ञा स प्राण· ' इति कौषीतकिनोऽधीयते । ननु सर्वत्र विषयस्यैव प्रलयोऽभिहित·, न तु करणस्य । तत्र कोऽभिप्राय इति—बाढम् । किन्तु विषयसमान जातीय करण मन्यते श्रुति , न तु जात्यन्तरम् । विषयस्यैव स्वात्मग्राहकत्वेन सस्थानान्तर करण नाम—यथा रूपविशेषस्यैव सस्थान प्रदीपः करण सर्वरूपप्रकाशने, एव सर्वविषयविशेषाणामेव स्वात्मविशेषप्रकाशकत्वेन सस्थानान्तराणि करणानि, प्रदीपवत् । तस्मात् न करणाना पृथक्प्रलये यत्न· कार्य· । विषयसामान्यात्मकत्वात् विषयप्रलयेनैव प्रलयः सिद्धो भवति करणानामिति।

शकर.

( २ ) स यथा दुन्दुभेर्हन्यमानस्येत्यादिना परोपासनोपकरणभूतकरणग्रामनियमनमुक्त विशदयति—स यथा सर्वासामपामिति । समुद्रस्यापामयनत्व नाम तदुपादातृत्वमेव त्वच स्पर्शायतनत्व नाम तदुपादातृत्वम् । ततश्चायमर्थ.—यथा समुद्रो मयूखीरपो गृह्णाति एव त्वगिन्द्रियमसख्याकान्स्पर्शविशेषान्गृह्णाति । ततश्च त्वगिन्द्रियस्पर्शविषयकव्यापारा अनन्ता इत्यर्थ· । एवमुत्तरत्रापि द्रष्टव्यम् । एव सर्वेषा रसानामिति । अवस्थाविशेषविशिष्ट मनो हृदयमित्युच्यते । एव सर्वेषा कर्मणामिति । अध्वनामध्वगमनानामित्यर्थ· । एव सर्वेषां वेदानामिति । स्पष्टोऽर्थः । ततश्चैकैकेन्द्रियवृत्तिविशेषा अनन्ता· । ततश्चाऽऽत्मसाक्षात्कारार्थिनैते वृत्तिविशेषा निरोद्धव्या इत्यभिप्रायः । ततश्च स यथा दुन्दुभेर्हन्यमानस्येत्यनेनोक्त ब्रह्मोपासनोपयोगिकरणग्रामनियमन विवृत भवति ।

रग

स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत न हास्योद्ग्रहणायेव स्यात् । यतो यतस्त्वाददीत लवणमेव । एव वा अरे इदं महद्भूतमनन्तमपारं विज्ञानघन एव । एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति । न प्रेत्य सज्ञाऽस्तीत्यरे ब्रवीमि । इति होवाच याज्ञवल्क्य. ॥

(१) बृउ २।४।१२, शब्रा १४।५।४।१२ न हास्यो ( नाहास्यो ) वा अरे इ ( वा अर इ ), ब्रशकर १।३।१, १।४।१९, २।१।२६, ४।४।१६, भास्कर १।४।१८, २१, २।३।१८, ४।४।१६, रग णायेव ( णायैव ) ( इद० ) स्तीत्यरे ब्रवीमीति हो ( स्तीति हो ),रामानुज. १।१।१ ( पृ ४२ ), १।२।१२, १।४।१९, २।३।१९, ३१, ४।४।६, ८, १६, मध्व णायेव ( णायैव ); श्रीकठ ४।४।६, ७, १६, श्रीकर १।३।१, १।४।१९, २।३।२९, ४।४।१६, वल्लभ १।१।९, विज्ञान ४।२।५.

( १ ) तत्र 'इद सर्वं यदयमात्मा' इति प्रतिज्ञातम्। तत्र हेतुरभिहित.—आत्मसामान्यत्व, आत्मजत्व, आत्मप्रलयत्व च। तस्मात् उत्पत्तिस्थितिप्रलयकालेषु प्रज्ञानव्यतिरेकेणाभावात् 'प्रज्ञान ब्रह्म' 'आत्मैवेद सर्वम्' इति प्रतिज्ञात यत्, तत् तर्कत. साधितम्। स्वाभाविकोऽय प्रलय इति पौराणिका वदन्ति। यस्तु बुद्धिपूर्वक. प्रलयः ब्रह्मविदा ब्रह्मविद्यानिमित्त', अय आत्यन्तिक इत्याचक्षते — अविद्यानिरोधद्वारेण यो भवति, तदर्थोऽय विशेषारम्भ. — तत्र दृष्टान्त उपादीयते — स यथेति। सैन्धवखिल्य —सिन्धोर्विकार सैन्धव, सिन्धुशब्देन उदकमभिधीयते, स्यन्दनात् सिन्धु उदक, तद्विकार. तत्र भवो वा सैन्धव, सैन्धवश्चासौ खिल्यश्चेति सैन्धवखिल्य, खिल एव खिल्यः, स्वार्थे यत्प्रत्यय' — उदके सिन्धौ स्वयोनौ प्रास्त' प्रक्षिप्त, उदकमेव विलीयमान अनुविलीयते। यत्तत् भौमतेजससपर्कात् काठिन्यप्राप्ति खिल्यस्य स्वयोनिसपर्कादपगच्छति—तत् उदकस्य विलयन, तत् अनु सैन्धवखिल्यो विलीयत इत्युच्यते। तदेतदाह—उदकमेवानु विलीयेतेति। न ह नैव — अस्य खिल्यस्य उद्ग्रहणाय उद्धृत्य पूर्ववद्ग्रहणाय ग्रहीतु, नैव समर्थ. कश्चित्स्यात् सुनिपुणोऽपि। इवशब्दोऽनर्थक'। ग्रहणाय नैव समर्थ। कस्मात्? यतो यत. यस्मात् देशात् तदुदकमाददीत, गृहीत्वा आस्वादयेत् लवणास्वादमेव तत् उदक, न तु खिल्यभाव.। यथा अय दृष्टान्त., एवमेव वै अरे मैत्रेयि इद परमात्माख्य महद्भूतम्—यस्मात् महतो भूतात् अविद्यया परिच्छिन्ना सती कार्यकरणोपाधिसबन्धात्खिल्यभावमापन्नाऽसि, मर्त्या जन्ममरणाशनायापिपासादिससारधर्मवत्यसि, नामरूपकार्यात्मिका — अमुष्यान्वयाऽहमिति, स खिल्यभावस्तव कार्यकरणभूतोपाधिसपर्कभ्रान्तिजनित: महति भूते स्वयोनौ महासमुद्रस्थानीये परमात्मनि अजरेऽमरेऽभये शुद्धे सैन्धवघनवदेकरसे प्रज्ञानघनेऽनन्तेऽपारे निरन्तरे अविद्याजनितभ्रान्तिभेदवर्जिते प्रवेशित.। तस्मिन्प्रविष्टे स्वयोनिग्रस्ते खिल्यभावे अविद्याकृते भेदभावे प्रणाशिते — इदमेकमद्वैत महद्भूतम्— महच्च तद्भूत च महद्भूत सर्वमहत्तरत्वात् आकाशादिकारणत्वाच्च, भूतम्—त्रिष्वपि कालेषु स्वरूपाव्यभिचारात् सर्वदैव परिनिष्पन्नमिति त्रैकालिको निष्ठाप्रत्यय। अथवा भूतशब्द. परमार्थवाची, महच्च पारमार्थिक चेत्यर्थ.। लौकिक तु यद्यपि महद्भवति, स्वप्नमायाकृत हिमवदादिपर्वतोपम न परमार्थवस्तु। अतो विशिनष्टि—इद तु महच्च तद्भूत चेति। अनन्त नास्यान्तो विद्यत इत्यनन्तम्। कदाचिदापेक्षिक स्यादित्यतो विशिनष्टि अपारमिति। विज्ञप्ति. विज्ञान, विज्ञान च तद्घनश्चेति विज्ञानघन., घनशब्दो जात्यन्तरप्रतिषेधार्थ — यथा सुवर्णघन अयोघन इति। एवशब्दोऽवधारणार्थः —नान्यत् जात्यन्तर अन्तराले विद्यत इत्यर्थ। यदि इदमेकमद्वैत परमार्थत स्वच्छ ससारदु खासपृक्त, किंनिमित्तोऽय खिल्यभाव आत्मन — जातो मृत. सुखी दु खी अह ममेत्येवमादिलक्षण अनेकससारधर्मोपद्रुत इति उच्यते—एतेभ्यो भूतेभ्यः—यान्येतानि कार्यकरणविषयाकारपरिणतानि नामरूपात्मकानि सलिलफेनबुद्बुदोपमानि स्वच्छस्य परमात्मन. सलिलोपमस्य, येषा विषयपर्यन्ताना प्रज्ञानघने ब्रह्मणि परमार्थविवेकज्ञानेन प्रविलापनमुक्त नदीसमुद्रवत् — एतेभ्यो हेतुभूतेभ्य भूतेभ्यः सत्यशब्दवाच्येभ्य., समुत्थाय सैन्धवखिल्यवत् — यथा अद्भ्य' सूर्यचन्द्रादिप्रतिबिम्ब., यथा वा स्वच्छस्य स्फटिकस्य अलक्तकाद्युपाधिभ्यो रक्तादिभावः, एव कार्यकरणभूतभूतोपाधिभ्यो विशेषात्मखिल्यभावेन समुत्थाय सम्यगुत्थाय — येभ्यो भूतेभ्य उत्थितः तानि यदा कार्यकरणविषयाकारपरिणतानि भूतानि आत्मनो विशेषात्मखिल्यहेतुभूतानि शास्त्राचार्योपदेशेन ब्रह्मविद्यया नदीसमुद्रवत् प्रविलापितानि विनश्यन्ति, सलिलफेनबुद्बुदादिवत् तेषु विनश्यत्सु अन्वेव एष विशेषात्माखिल्यभावो विनश्यति। यथा उदकालक्तकादिहेत्वपनये सूर्यचन्द्रस्फटिकादिप्रतिबिम्बो विनश्यति, चन्द्रादिस्वरूपमेव परमार्थतो व्यवतिष्ठते, तद्वत् प्रज्ञानघनमनन्तमपार स्वच्छ व्यवतिष्ठते। न तत्र प्रेत्य विशेषसज्ञाऽस्ति कार्यकरणसघातेभ्यो विमुक्तस्य — इत्येव अरे मैत्रेयि ब्रवीमि — नास्ति विशेषसज्ञेति — अहमसौ अमुष्य पुत्र. ममेदं क्षेत्र धन सुखी दु.खीत्येवमादिलक्षणा, आविद्याकृतत्वा-

त्तस्याः। अविद्यायाश्च ब्रह्मविद्यया निरन्वयतो नाशितत्वात् कुतो विशेषसंज्ञासंभवो ब्रह्मविद चैतन्यस्वभावावस्थितस्य । शरीरावस्थितस्यापि विशेषसंज्ञा नोपपद्यते किमुत कार्यकरणविमुक्तस्य सर्वतः। इति ह उवाच उक्तवान् किल परमार्थदर्शनं मैत्रेय्यै भार्यायै याज्ञवल्क्यः। शंकर

(२) विज्ञानैकरसः शरीराकारपरिणतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुभूतानि विनश्यति तत्कृतमौपाधिकं रूपं विजहातीत्यर्थः। प्रेत्य विशेषसंज्ञा निवर्तते, मुक्तः परमात्मा भवतीति समुदायार्थः। भास्कर १।४।२१

(३) सर्वावस्थास्वपि जीवस्य परमात्मनिष्ठतया स्वातन्त्र्याभावज्ञापनाय जीववाचिशब्देन परमात्मानं निर्दिशन्नमृतत्वोपायप्रवृत्तिप्रोत्साहनाय भूतसंघात्मकशरीरजन्ममरणानुविधायिनः संसरतो जीवस्यापरिच्छिन्नज्ञानैकाकारतामापादयति — स यथा सैन्धवखिल्य इति । सैन्धवखिल्यो लवणखण्डः। खिल एव खिल्यः स्वार्थे यत्। यथा सैन्धवशकलमुदके प्रक्षिप्तमुदकमनुप्रविश्य विलीयत एव। अस्य विलीनस्य लवणस्योद्ग्रहणायोदकात्पृथक्कृत्य ग्रहीतुं यथा नैव कोऽपि शक्तः स्यात्। तच्चोदकं यथा यतो यतो यस्माद्यस्माद्देशान्मध्यतः पार्श्वतो वाऽऽददीत तत्तोयं लवणमेव भवति । एवं वा अरे इति । एवमेवेदं महद्भूतमनन्तमपरिच्छेद्यमपारं गुणतोऽप्यपरिच्छेद्यं ब्रह्म विज्ञानघन एव जीवशरीरकतयैतेभ्यो भूतेभ्यः उत्थाय तान्येवानु विनश्यति भूतेषूत्पाद्यमानेषु स्वयमुत्पाद्यमानस्तेषु नश्यत्स्वनु पश्चात्स्वयं नश्यतीत्यर्थः। देहोत्पत्तिविनाशानुविधायित्वाद्विनाशवान्भवति । विनाशो नामात्यन्तज्ञानसंकोचः। विनश्यति न पश्यतीत्यर्थं इति 'स्वाप्ययसंपत्त्योः' (ब्रसू ४।४। १६) इति सूत्रे भगवता भाष्यकृतोक्तम्। उत्पत्तिर्नाम विकासः प्रादुर्भावः। न प्रेत्येति। प्रेत्य चरमदेहवियोगं प्राप्य मोक्षदशायां स्वाभाविकापरिच्छिन्नज्ञानसंकोचाभावे न संज्ञाऽस्ति । समित्येकीकारे । ज्ञाधातोर्ज्ञानमर्थः। ततश्च भूतसंघातेनैकीकृत्य ज्ञानं संज्ञाशब्दार्थ इति द्रष्टव्यम्। रंग

(४) अपि तु सर्वबन्धविनिर्मोक्षाभिप्रायम्—'यथा न प्रेत्य संज्ञाऽस्ति' इति। १।२।१२

'न प्रेत्य संज्ञाऽस्ति' इत्यपि न मुक्तस्य ज्ञानाभाव उच्यते । अपि तु 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इति संसारदशायां यद्भूतानुविधायित्वप्रयुक्तं जन्मनाशादिदर्शनं तन्मुक्तस्य न विद्यते । २।३।३१

तथा मरणे च निःसंबोधत्वम् 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इत्युक्तम् । विनश्यति न पश्यतीत्यर्थः। *रामानुज ४।४।१६

(५) एवं भगवन्तं तं जानन्नान्याधीनं जगदिति गृह्णाति। किंतु भगवदिच्छाधीनमित्येव । तदेव दर्शयति । स यथाऽऽर्द्रैन्धनाग्नेः स यथा सर्वासामपामित्यादिना। न ह्यग्निरेव धूमः। न चाप एव समुद्रः। न ह्यपामापः एवाश्रयः । किंतु वरुणोऽपां खातो वा। स एव च समुद्र इत्युच्यते। एवमेव सैन्धवखिल्यस्य विलीनस्य समस्ताम्भसश्च वरुणोऽपां खातो वा समुद्राख्य आश्रयः । वरुणवदपां खातवद्वाऽनन्तोऽपारो भगवान्। जीव एव विज्ञानघनाख्यो भूतसंबन्धाज्जातः संस्तल्लयमनुभवन्तमाप्नोति । समुद्रे प्राप्तसैन्धवखिल्यवत्। समुद्रजलस्थानीया मुक्ता बहव एकस्वभावाः। बहवो हि जलपरमाणवः। सामुद्रं जलमेकाश्रयम् । मध्व

(६) 'भूतेष्वतः श्रुतेः' — अतः परं स प्राणसंयुक्तोऽध्यक्षो बुद्धिसंभिन्नः पञ्चभूतेषु सूक्ष्मेषु संपद्यते क्रियादिरूपा भूतवृत्तिरेव तिष्ठति न त्वन्येषा वृत्तिरिति कुतः श्रुतेः। 'विज्ञानघन एवैभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्ति' इति श्रुतेरित्यर्थः। जीवस्य सोपकरणस्य भूतेषु लयः शुक्राद्यात्मकभूतेभ्योऽभिव्यक्त्याऽनुमीयते। विज्ञान. ४।२।५

**सा होवाच मैत्रेयी। अत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञाऽस्तीति। स होवाच। न वा अरेऽहं मोहं ब्रवीमि। अलं वा अर इदं विज्ञानाय॥**

(१) एवं प्रतिबोधिता सा ह किल उवाच उक्तवती मैत्रेयी—अत्रैव एतस्मिन्नेव एकस्मिन्वस्तुनि

---

* श्रीकंठश्रीकरौ रामानुजवत्।

(१) बृउ २।४।१३, शब्रा १४।५।४।१३, १४ स होवाच+ (याज्ञवल्क्य), ब्रशांकर १।४।२२.

ब्रह्मणि विरुद्धधर्मवत्त्वमाचक्षाणेन भगवता मम मोह कृत । तदाह—अत्रैव मा भगवान् पूजावान् अमूमुहत् मोह कृतवान् । कथ तेन विरुद्धधर्मवत्त्वमुक्तमित्युच्यते—पूर्वं विज्ञानघन एवेति प्रतिज्ञाय, पुन न प्रेत्य सज्ञाऽस्तीति । कथ विज्ञानघन एव ? कथ वा न प्रेत्य सज्ञास्तीति ? न हि उष्ण शीतश्च अग्निरेकौ भवति । अतो मूढाऽस्मि अत्र । स होवाच याज्ञवल्क्य—न वा अरे मैत्रेय्यह मोह ब्रवीमि—मोहन वाक्य न ब्रवीमीत्यर्थ. । ननु कथ विरुद्धधर्मत्वमवोच —विज्ञानघन सज्ञाभाव च ? न मया इद एकस्मिन्धर्मिण्यभिहितम् । त्वयैव इद विरुद्धधर्मत्वेन एक वस्तु परिगृहीत भ्रान्त्या, न तु मया उक्तम् । मया तु इदमुक्तम् — यस्तु अविद्याप्रत्युपस्थापित कार्यकरणसम्बन्धी आत्मन. खिल्यभाव, तस्मिन्विद्यया नाशिते, तन्निमित्ता या विशेषसज्ञा शरीरादिसबन्धिनी अन्यत्वदर्शनलक्षणा, सा कार्यकरण सघातोपाधौ प्रविलापिते नश्यति, हेत्वभावात्, उदकाद्याधारनाशादिव चन्द्रादिप्रतिबिम्ब तन्निमित्तश्च प्रकाशादि । न पुन परमार्थचन्द्रादि यस्यरूपवत् असंसारि ब्रह्मस्वरूपस्य विज्ञानघनस्य नाश । तत् विज्ञानघन इत्युक्तम् । स आत्मा सर्वस्य जगत. । परमार्थतो भूतनाशात् न विनाशी । विनाशी तु अविद्याकृत खिल्यभाव, 'वाचारम्भण विकारो नामधेयम्' इति श्रुत्यन्तरात् । अय तु पारमार्थिक. — अविनाशी वा अरे अयमात्मा । अत अल पर्याप्त वै अरे इद महद्भूतमनन्तमपार यथाव्याख्यात विज्ञानाय विज्ञातुम् । 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्' इति हि वक्ष्यति । शकर.

( २ ) सा होवाचेति । वाक्य एव मा माममूमुहत् । मुहेर्णौ चङि मोहयति स्मेत्यर्थः । विज्ञान शब्दस्य ज्ञानैकाकारस्याऽऽत्मनो मुक्त्यै सज्ञाभावो विरुद्ध इति मोहो मे सभूत इति भाव. । यद्यपि सज्ञाशब्दोऽपि देहात्मैक्यभ्रान्तिपर इति न विरोधस्तथाऽपि तदभिप्रायानभिज्ञानान्मुह्यन्ती मैत्रेय्येवमुक्तवतीति द्रष्टव्यम् । स होवाच नेति । न प्रेत्य सज्ञाऽस्तीति नाह वाचो ब्रवीमीद विज्ञानघनशब्दित महद्भूत पूर्वनिर्दिष्ट प्रेत्यापि विज्ञानायाल ज्ञातु पर्याप्तम् । ततश्च मुक्तावपि ज्ञानमस्ति ज्ञानिन एव सतो मुक्तस्य प्रेत्य न सज्ञाऽस्तीति पूर्वनिर्दिष्ट सज्ञाभावो देहात्मैक्यविषयकभ्रान्त्यभावाच्चेति भाव । रग.

**यत्र हि द्वैतमिव भवति तदितर इतरं जिघ्रति तदितर इतर पश्यति तदितर इतरꣳ शृणोति तदितर इतरमभिवदति तदितर इतरं मनुते तदितर इतर विजानाति । यत्र वा अस्य सर्वमात्मैवाभूत्तत्केन क जिघ्रेत्तत्केन क पश्येत्तत्केन कꣳ शृणुयात्तत्केन कमभिवदेत्तत्केन क मन्वीत तत्केन क विजानीयात् । येनेदꣳ सर्वं विजानाति त केन विजानीयात् । विज्ञातारमरे केन विजानीयादिति ॥**

( १ ) कथ तर्हि प्रेत्य सज्ञा नास्तीत्युच्यते शृणु । यत्र यस्मिन् अविद्याकल्पिते कार्यकरणसघातोपाधिजनिते विशेषात्मनि खिल्यभावे, हि यस्मात्, द्वैतमिव—परमार्थतोऽद्वैते ब्रह्मणि द्वैतमिव भिन्नमिव वस्त्वन्तरमा मन—उपलक्ष्यते—ननु द्वैतेनोपमीयमानत्वात् द्वैतस्य पारमार्थिकत्वमिति । न । 'वाचारम्भण विकारो नामधेयम्' इति श्रुत्यन्तरात् 'एकमेवाद्वितीयम्' 'आत्मैवेद सर्वम्' इति च — तत् तत्र यस्माद्द्वैतमिव तस्मादेव इतरोऽसौ परमात्मन खिल्य-

---

(१) बृउ २।४।१४, शब्रा १४।५।४।१५, १६ जिघ्रति ( पश्यति ) पश्यति ( जिघ्रति ) इतरꣳ शृणोति ( इतरमभिवदति ) इतरमभिवदति ( इतरꣳ शृणोति ) वा अस्य ( त्वस्य ) जिघ्रेत्त ( पश्येत्त ) पश्येत्त ( जिघ्रेत्त ) कꣳ शृणुया ( कमभिवदे ) कमभिवदे ( कꣳ शृणुया ), ब्रशकर १।१।४ ( पृ ४८, ६५ ), १।२।२८, १।४।२२, २।३।४०, ३।२।७, ३।४।१६, ४।३।१४, ४।४।१६, भास्कर १।४।१८, रग इतरꣳ शृणोति ( इतरमभिवदति ) मभिवदति ( मभिशृणोति ) वा अस्य ( त्वस्य ) कꣳ शृणुया ( कमभिवदे ) कमभिवदे ( कꣳ शृणुया ), रामानुज १।१।१ ( पृ १४, ४२, ६३, १२१, १२२ ), १।१।४ ( पृ १५४, १६२ ), २।१।१५ ( पृ ४२३, ४४४ ), २।३।१९, श्रीकठ १।४।१९, श्रीकर १।२।२०, १।४।१९, २।१।७, ८, २।२।२७, २८, ३।२।२६, वल्लभ १।१।९, ११, १।३।९, बलदेव ४।४।१२.

भूत आत्मा अपरमार्थ, चन्द्रादेरिव उदकचन्द्रादिप्रतिबिम्ब, इतरो घ्राता इतरेण घ्राणेन इतर घ्रातव्य जिघ्रति। इतर इतरामिति कारकप्रदर्शनार्थं, जिघ्रतीति क्रियाफलयोरभिधानम्—यथा छिनत्तीति — यथा उद्यम्य उद्यम्य निपातन छेद्यस्य च द्वैधीभावः उभय छिनत्तीत्येकेनैव शब्देन अभिधीयते—क्रियावसानत्वात् क्रियाव्यतिरेकेण च तत्फलस्यानुपलम्भात्। इतरो घ्राता इतरेण घ्राणेन इतर घ्रातव्य जिघ्रति—तथा सर्वं पूर्ववत्—विजानाति। इय अविद्यावदवस्था। यत्र तु ब्रह्मविद्यया अविद्या नाशमुपगमिता तत्र आत्मव्यतिरेकेण अन्यस्याभाव.। यत्र वै अस्य ब्रह्मविद सर्वं नामरूपादि आत्मन्येव प्रविलापित आत्मैव सवृत्तम्—यत्र एव आत्मैवाभूत्, तत् तत्र केन करणेन क घ्रातव्य को जिघ्रेत्? तथा पश्येत्? विजानीयात्। सर्वत्र हि कारकसाध्या क्रिया। अत कारकाभावेऽनुपपत्ति क्रियाया। क्रियाभावे च फलाभाव। तस्मात् अविद्यायामेव सत्या क्रियाकारकफलव्यवहार न ब्रह्मविद—आत्मत्वादेव सर्वस्य, न आत्मव्यतिरेकेण कारक क्रियाफल वाऽस्ति। न च अनात्मा सन् सर्वमात्मैव भवति कस्यचित्। तस्मात् अविद्ययैव अनात्मत्व परिकल्पितम्। न तु परमार्थत आत्मव्यतिरेकेणास्ति किंचित्। तस्मात् परमार्थात्मैकत्वप्रत्यये क्रियाकारकफलप्रत्ययानुपपत्तिः। अत विरोधात् ब्रह्मविद. क्रियाणा तत्साधनाना च अत्यन्तमेव निवृत्ति.। केन कमिति क्षेपार्थं वचन प्रकारान्तरानुपपत्तिदर्शनार्थं, केनचिदपि प्रकारेण क्रियाकरणादिकारकानुपपत्ते—केनचित् कचित् कश्चित् कथचित् न जिघ्रेदेवेत्यर्थ.। यत्रापि अविद्यावस्थाया अन्य. अन्य पश्यति, तत्रापि येनेद सर्वं विजानाति, त केन विजानीयात् — येन विजानाति, तस्य करणस्य, विज्ञेये विनियुक्तत्वात्। ज्ञातुश्च ज्ञेय एव हि जिज्ञासा, न आत्मनि। न च अग्नेरिव आत्मा आत्मनो विषय॰। न च अविषये ज्ञातु. ज्ञानमुपपद्यते। तस्मात् येन इद सर्वं विजानाति, त विज्ञातार केन करणेन को वा अन्य. विजानीयात् — यदा तु पुन. परमार्थविवेकिनो ब्रह्मविदो विज्ञातैव केवलोऽद्वयो वर्तते, त विज्ञातार अरे केन विजानीयादिति।

शकर.

(२) 'उपमर्दं च'—अपि च कर्माधिकारहेतोः क्रियाकारकफललक्षणस्य समस्तस्य प्रपञ्चस्याविद्याकृतस्य विद्यासामर्थ्यात्स्वरूपोपमर्दमामनन्ति 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन क पश्येत्तत्केन क जिघ्रेत्' इत्यादिना। वेदान्तोदितात्मज्ञानपूर्विका तु कर्माधिकारसिद्धि प्रत्याशासानस्य कर्माधिकारोच्छित्तिरेव प्रसज्येत। तस्मादपि स्वातन्त्र्य विद्याया.। ब्रशकर ३।४।१६

(३) विज्ञातारमित्यपि सर्वस्य विज्ञातार परमात्मान केनाप्यन्तरेण करणेन वा विजानीयादित्यर्थ.। न हि मुक्त्यवस्थायामात्मान्तर करणान्तर वाऽस्ति।

भास्कर १।४।२१

(४) एव मुक्तौ देहात्मभ्रमनिवृत्तिमुक्त्वा स्वनिष्ठताभ्रमनिवृत्तिं प्रतिपादयति—यत्र हीति। यत्र यस्यामवस्थाया द्वैतमिव भवति स्वनिष्ठतया परमात्मन पृथगिव भवति स्वतन्त्र इव भवतीति यावत्। स्वातन्त्र्यस्याप्रामाणिकत्वद्योतनार्थं इवशब्द॰। तदितर इतर जिघ्रति। तत्तदेतरो भिन्नात्मक इतर भिन्नात्मक जिघ्रति। अत्रेतरेणेत्यध्याहार्यम्। उत्तरत्र तत्केन क पश्येदिति दर्शनात्। इतरेण स्वतन्त्रेण करणेन जिघ्रतीत्यर्थ॰। तदितर इति। यत्र यदा सर्वं वस्तु एकात्मकमेवाभूत्तत्तदा केन भिन्नात्मकेन करणेन क भिन्नात्मक जिघ्रेदित्यर्थं। एव सर्वत्र द्रष्टव्यम्। अत्र सदैकात्मकस्य जगत. कालभेदेन भिन्नाभिन्नात्मकत्वासभवादात्मैवाभूदेकात्मकत्वेन ज्ञातमभूदित्येवार्थ। यस्याऽऽत्मभेदप्रतीतिः कियत्यप्यस्ति तस्य कर्तृकर्मकरणेषु भिन्नात्मकत्वप्रतीतिरनुवर्तते। यस्याऽऽत्मभेदप्रतीतिर्यदा सर्वथा नास्ति तदा कर्तृकर्मकरणेषु भिन्नात्मकतया प्रतीति सर्वथा नास्तीति पर्यवसितोऽर्थ। शिष्ट स्पष्टम्। येनेद सर्वमिति। येन परमात्मना प्रसन्नेनानुगृहीतः सर्वज्ञो भवति त परमात्मान केन हेतुना विजानीयात्। 'क इत्था वेद यत्र सः' (काउ १।२।२५) इतिवत्परमात्मप्रसादमन्तरेण परमात्मा दु.खबोध इत्यर्थ.।

अत्र विज्ञातृशब्देन प्रक्रमोदितजगत्कारणत्वाक्षिप्तसार्वज्ञ्याश्रयः परमात्मैव उच्यते। तादृश विज्ञातार सर्वज्ञ परमात्मान प्रक्रमोदितध्यान विना केन केवलयज्ञदानाद्युपायेन विजानीयात्। उक्त च व्यासार्यै.—

परमात्मप्रसादादृत तस्य दुरवगमत्वपर त केन विजानीयादिति पूर्ववाक्यमुपासनातिरिक्तकेवलयज्ञदानाद्युपायान्तरनिषेधपर विज्ञातारमरे केन विजानीयादित्युत्तर वाक्यमिति । ततश्च परमात्मप्रसादपरमात्मोपासनयोर्द्वयोरप्यावश्यकत्व द्वाभ्या वाक्याभ्या प्रतिपादित भवति । अत्र परमात्मोपासनतत्प्रसादसाध्यपरमात्मावगति. कि रूपेति चिन्ताया दर्शनसमानाकारध्यानरूपावगतिरेव प्रसादोपासनसाध्यत्वेन वाक्यद्वयप्रतिपन्नेति केचिदाहु । मुक्तिकालीना देशविशिष्टब्रह्मसाक्षात्कारलक्षणेत्यपरे । नोभयथाऽपि विरोध पश्याम । इतिशब्द. प्रतिवचनसमाप्तौ । रग

( ५ ) मुक्ताना सज्ञाऽप्यन्यैर्न ज्ञायते शास्त्र विना । सज्ञा नास्तीत्युक्त्वा अल वा अरे इद विज्ञानायेत्युक्तेर्न विजानातीत्युक्ते प्रतिज्ञाविरोध. । न च सर्वाज्ञान पुरुषार्थ । 'मग्नस्य हि परे ज्ञाने कि न दु.खतर भवेत्' इति च । 'नानात्वेनाभिसबन्धास्तदा तत्कालभाविना । सयोग प्रकृतेनैषा मुक्ताना तत्त्वदर्शनात् । प्रवर्तति पुन सर्गे तेषा सा न प्रवर्तते । आनन्देन विना चैव भोगेन विषयेण च । सर्वे ते ब्रह्मणस्तुल्या आधिपत्य न चैव हि ॥' इति वायुप्रोक्ते । इन शब्दस्त्वस्वातन्त्र्यार्थे । न हि तदधीन पृथगित्येवोच्यते । तस्मादमुक्तैर्न ज्ञायत इति सज्ञा नास्तीत्युक्तम् । 'पतिर्जायाप्रिया नैव स्वेच्छया तु भविष्यति । विष्णोरिच्छावशनैव स्वय च स्वप्रियो भवेत् । विष्णोरिच्छावशेनैव हन्ति ह्यात्मानमात्मना । स्वात्मानमप्रिय कृत्वा निरये पातयत्यपि । प्राधान्येन हरेर्ज्ञानात्सर्वे विदितवद्भवेत् । ब्रह्म जात्यात्मक वेत्ति नैव विष्णुवश हि यः । ब्रह्माण त ततो ब्रह्मा पातयेत्तमधि ध्रुवम् । एव क्षत्रात्मको वायुर्वित्तरूपश्च वित्तप. । पञ्चभूतानि विश्वे च देवा लोकाभिमानिन. । सर्वाभिमानिनी देवी मूलप्रकृतिरेव च । सर्वे विष्णौ स्थित विष्णोर्जात विष्णोर्वशे सदा । शङ्खशब्दो यथा शङ्खदेवतावशगस्थित: । तस्माद्वेदा: समुत्पन्ना विद्याख्या मूलिका श्रुति. । सर्वोपनिषदश्चैव पञ्चरात्राख्यसहिताः । ब्रह्मसूत्राणि वेदानां व्याख्यास्तासां च विस्तरः । सर्वमेतज्जगच्चैव नि सृत तुरगाननात् । वरुणस्य वशे यद्वदाप एव वशे हरः । सर्वे बद्धाश्च मुक्ताश्च तारतम्यात्मना स्थिता । यदि मुक्तस्य विज्ञान गन्धादिविषये न चेत् । तथैव भगवद्रूपे स्वरूपे च परस्परम् । एवमज्ञानरूपा ता मुक्ति को नाम वाञ्छति । तस्माद्विष्णोर्वशे सर्वे यथेष्टमुपभोगिन. । मुक्ताः सदा तारतम्यात्तिष्ठन्त्याब्रह्मणोऽखिला ॥' इति हयग्रीवसहितायाम् । 'सर्गे सर्गे तु यो नैव शब्दतोऽप्यन्यथा भवत् । श्रुयाख्य स तु विज्ञेय इतिहासादिरर्थत । भगवद्दृष्टमेवान्यैर्ब्रह्माद्यैर्दृश्यते यदि । ऋषिभेदस्तु तत्र स्याद्वेदो नाविष्णुनिर्गत. । वेद इत्येव विष्णूक्तस्तपसा दृश्यते परैः ॥' इति च ।

मध्व.

( मधुविद्या दध्यीचाथर्वणेन अश्विभ्या प्रोक्ता )
पृथिव्यबग्निवाय्वादित्यदिक्चन्द्रविद्युत्स्तनयित्न्वाकाशधर्मसत्यमनुष्यात्मना सर्वभूताना च अन्योन्यषा मधुभाव , उक्तपृथिव्यादिषु स्थित तेजोमयोऽमृतमय पुरुष अध्यात्म च स्थित तेजोमयोऽमृतमय पुरुष एक एव आत्मा ब्रह्म

**इयं पृथिवी सर्वेषा भूताना मधु । अस्यै पृथिव्यै सर्वाणि भूतानि मधु । यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमय पुरुषो यश्चायमध्यात्मꣳ शारीरस्तेजोमयोऽमृतमय पुरुषोऽयमेव स योऽयमात्मा । इदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥**

( १ ) यत् केवल कर्मनिरपेक्ष अमृतत्वसाधन, तद्वक्तव्यमिति मैत्रेयीब्राह्मणमारब्धम् । तच्च आत्मज्ञान सर्वसन्यासाङ्गविशिष्टम् । आत्मनि च विज्ञाते सर्वमिद विज्ञात भवति । आत्मा च प्रिय सर्वस्मात् । तस्मात् आत्मा द्रष्टव्य. । स च श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति च दर्शनप्रकारा उक्ता. । तत्र श्रोतव्यः, आचार्यागमाभ्याम् । मन्तव्य. तर्कत. । तत्र च तर्क उक्त.—'आत्मैवेद सर्वम्' इति प्रतिज्ञातस्य हेतुवचन आत्मैकसामान्यत्व आत्मैकोद्भवत्व आत्मैकप्रलयत्व च । तत्र अय हेतुः असिद्ध इत्याशङ्क्यते आत्मैकसामान्योद्भवप्र-

(१) बृउ २।५।१, शब्रा १४।५।५।१, ब्रह्मकर. ३।२।१२, भास्कर. ३।२।१२, ब्रमध्व ३।२।१२, वल्लभ. ३।२।१२, विज्ञान १।२।९

ल्याख्य । तदाशङ्कानिवृत्त्यर्थमेतद्ब्राह्मणमारभ्यते । यस्मात् परस्परोपकार्योपकारकभूत जगत्सर्वं पृथिव्यादि यच्च लोके परस्परोपकार्योपकारकभूत तत् एककारणपूर्वक एक सामान्यात्मक एकप्रलय च दृष्ट, तस्मात् इदमपि पृथिव्यादिलक्षण जगत् परस्परोपकार्योपकारकत्वात् तथाभूत भवितुमर्हति — एष ह्यर्थं अस्मिन्ब्राह्मणे प्रकाश्यते । अथवा ‘ आत्मैवेद सर्वम् ’ इति प्रतिज्ञातस्य आत्मोत्पत्तिस्थितिलयत्व हेतुमुक्त्वा , पुन आगमप्रधानेन, मधुब्राह्मणेन प्रतिज्ञातस्य अर्थस्य निगमन क्रियते । तथाहि नैयायिकैरुक्तम् — ‘ हेत्वपदेशात्प्रतिज्ञाया पुनर्वचन निगमनम् ’ इति । अन्यैर्व्याख्यातम्—आ दुन्दुभिदृष्टान्तात् श्रोतव्यार्थमागमवचन, प्राङ्मधुब्राह्मणात् मन्तव्यार्थं उपपत्तिप्रदर्शनेन, मधुब्राह्मणेन तु निदिध्यासनविधिरुच्यते इति। सर्वथाऽपि तु यथा आगमेनावधारित, तर्कतस्तथैव मन्तव्यम् । यथा तर्कतो मत, तस्य तर्कागमाभ्या निश्चितस्य तथैव निदिध्यासन क्रियत इति पृथक् निदिध्यासनविधिरनर्थक एव । तस्मात् पृथक् प्रकरणविभाग॰ अनर्थक इत्यस्मदभिप्राय श्रवणमनननिदिध्यासनानामिति । सर्वथापि तु अध्यायद्वय स्यार्थ अस्मिन्ब्राह्मणे उपसह्रियते ।

इय पृथिवी प्रसिद्धा सर्वेषा भूताना मधु — सर्वेषां ब्रह्मादिस्तम्बपर्यन्ताना भूताना प्राणिना, मधु कार्यं, माध्विव मधु । यथा एको मध्वपूप. अनेकैर्मधुकरैर्निर्वर्तित., एव इय पृथिवी सर्वभूतनिर्वर्तिता । तथा सर्वाणि भूतानि पृथिव्यै पृथिव्या. अस्याः, मधु कार्यम् । किंच यश्चाय पुरुष. अस्या पृथिव्या तेजोमय चिन्मात्र प्रकाशमयः अमृतमयोऽमरणधर्मा पुरुषः, यश्चाय अध्यात्म शारीर. शरीरे भव. पूर्ववत् तेजोमयोऽमृतमयः पुरुषः, स च लिङ्गाभिमानी — स च सर्वेषा भूतानामुपकारकत्वेन मधु, सर्वाणि च भूतान्यस्य मधु, चशब्दसामर्थ्यात् । एव एतच्चतुष्टय तावत् एक सर्वभूतकार्यं, सर्वाणि च भूतान्यस्य कार्यम् । अत. अस्य एककारणपूर्वकता । यस्मात् एकस्मात्कारणात् एतज्जात, तदेव एक परमार्थतो ब्रह्म, इतरत्कार्यं वाचारम्भण विकारो नामधेयमात्रम् — इत्येष मधुपर्यायाणा सर्वेषामर्थः सक्षेपतः । अयमेव सः, योऽय प्रतिज्ञात.— ‘ इद सर्वं यदयमात्मा ’ इति । इदममृतम् — यत् मैत्रेय्याः अमृतत्वसाधनमुक्तं आत्मविज्ञानम् — इद तदमृतम् । इद ब्रह्म — यत् ‘ ब्रह्म ते ब्रवाणि ’ ‘ ज्ञपयिष्यामि ’ इत्यध्यायादौ प्रकृत, यद्विषया च विद्या ब्रह्मविद्येत्युच्यते । इद सर्वम् — यस्मात् ब्रह्मणो विज्ञानात्सर्वं भवति ।

शकर.

( २ ) ‘ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ’ —अथापि स्याद्यदुक्त निर्विकल्पमेकलिङ्गमेव ब्रह्म नास्य स्वत. स्थानतो वोभयलिङ्गत्वमस्तीति । तन्नोपपद्यते । कस्मात् । भेदात् । भिन्ना हि प्रतिविद्य ब्रह्मण आकारा उपदिश्यन्ते । चतुष्पाद्ब्रह्म, षोडशकल ब्रह्म, वामनीत्वादिलक्षण ब्रह्म, त्रैलोक्यशरीरवैश्वानरशब्दोदित ब्रह्म इत्येवजातीयका॰ । तस्मात्सविशेषत्वमपि ब्रह्मणोऽभ्युपगन्तव्यम् । ननूक्त नोभयलिङ्गत्व ब्रह्मण. सभवतीति । अयमप्यविरोधः । उपाधिकृतत्वादाकारभेदस्य । अन्यथा हि निर्विषयमेव भेदशास्त्र प्रसज्येतेति चेत्, नेति ब्रूम । कस्मात् । प्रत्येकमतद्वचनात् । प्रत्युपाधिभेद ह्यभेदमेव ब्रह्मण. श्रावयति शास्त्रम्—‘ यश्चायमस्या पृथिव्या॰’ इत्यादि । अतश्च न भिन्नाकारयोगो ब्रह्मण शास्त्रीय इति शक्यते वक्तुम् । भेदस्योपासनार्थत्वादभेदे तात्पर्यात् । * ब्रशाकर. ३।२।१२

( ३ ) सर्वभूताना धारणान्नपानादिहेतुतया मधुत्वम् । अस्यै पृथिव्यै । अस्या पृथिव्या इत्यर्थः । सर्वभूताना पृथिवीधार्यत्वेन तत्पोष्यत्वेन तदनुकूलत्वान्मधुत्वम् । एव पृथिव्या भूतानां च परस्पर मधुत्वमित्यर्थः । सर्वभूतोपजीव्यतया मधुभूतायामस्या पृथिव्यां तेजोमय. स्वयप्रकाशज्ञानमय इति यावत् । अमृतमयो मरणधर्मशून्यः । अपहतपाप्मत्वादिगुणाश्रय इति यावत् । तत्रान्तर्यामितयाऽवस्थितो य. पुरुषो यश्चाध्यात्मम् । अत्राध्यात्ममित्यत्राऽऽत्मशब्देन देहेन्द्रियमनःप्राणजीवसघात उच्यते । तस्मिन्यः शारीरः शरीरान्तर्यामी तेजोमयोऽमृतमयश्च यः पुरुषः । अत्र शरीरस्य पृथिवीविकारत्वादधिभूत पृथिव्याः स्थानेऽध्यात्म शरीरस्य निवेशः । योऽयमात्मा । ‘ आत्मा

* विज्ञानभाष्य काउ ४।५ इत्यत्र द्रष्टव्यम् ।

वा अरे द्रष्टव्यः ' इति मैत्रेयीब्राह्मणे आत्मतया निर्दिष्टः सोऽयमेव पृथिव्यन्तर्यामी शरीरान्तर्यामी चायमेवेत्यर्थ । इदममृतमुपकोशलविद्यादौ ' एतदमृतमेतदभयमेतद्ब्रह्म ' इत्यमृतत्वब्रह्मत्वादिना निर्दिश्यमानमपीदमेव ' सर्वं खल्विदं ब्रह्म ' इत्यादौ सर्वोपादानतया निर्दिश्यमानमपीदं ब्रह्मेत्यर्थ. । एवमुत्तरत्रापि द्रष्टव्यम् । रग

( ४ ) ' न भेदादिति चेन्न प्रत्येकमतद्वचनात् '— प्रकारान्तरेण समाधानमाशङ्क्य परिहरति । न भवदुक्तो विरोधः सभवति । भेदात् । कारणकार्येषु सर्वत्र भेदाङ्गीकारात् । प्रपञ्चविलक्षण ब्रह्म भिन्नम् । प्रपञ्चधर्मवत् ब्रह्म भिन्नम् । तथाऽज्ञात ज्ञात च । एकस्य भेदस्याङ्गीकारे सर्वमुपपद्यत इति चेन्न । प्रत्येक मतद्वचनात् । अभेदवचनात् । ' इय पृथिवी सर्वेषा भूताना मधु' इति ब्राह्मणे, ' अयमेव स योऽयम्' इति सर्वत्राभेदवचनात् कार्यकारणरूपप्रकाराणा भेदनिषेधात् ।

वल्लभ. ३।२।१२

[ तत्रायमर्थः—इय प्रसिद्धा पृथिवी सर्वेषा भूतानां ब्रह्मादितृणस्तम्बान्ताना मधु मध्विव । उपकारक कार्यं भूतादृष्टजन्यत्वात् । तथा, अस्यै पृथिव्यै अस्या. पृथिव्या. सर्वाणि भूतानि पूर्वोक्तानि मधु मध्विव उपकारकाणि कारणत्वात् । किञ्च । यश्चायमस्यां पृथिव्या तेजोमयश्चिन्मात्रप्रकाशमयः, अमृतमय., अमरणधर्मा पुरुष· सोऽपि, तदभिध्यानादेव त्विति न्यायेन पृथिवीरूपतया तदुपकारकत्वात् तस्यै मध्विति चकारेण समुच्चीयते । यश्चायमध्यात्म, अधिशरीर शारीरः शरीराभिमानीत्यन्ये । वस्तुतस्तु, य· पृथिव्यामित्यादिनोक्तोऽन्तर्यामी तेजोमयोऽमृतमय पुरुषः सोऽपि तेनाभिमानेन प्रकारेण भूतोपकारकत्वात् भूतानां मध्वित्यपि चकारान्तरेण समुच्चीयते । अयमेव सः । अय तेजोमयादिरूपः पुरुष एव सः । मैत्रेयीब्राह्मणान्ते पूर्वग्रन्थ उक्तो योऽयमात्मा उक्तविधपुरुषरूप इदममृतमानन्दः, इद ब्रह्माक्षरम् । इद सर्वं पूर्वोक्तकार्यकारणरूपप्रकारात्मकमिति । एव अग्रिमेष्वपि वाक्येषु बोध्यम् ।

भाष्यप्रकाश: पृ. १०४ ]

इमा आप· सर्वेषा भूताना मधु । आसामपा॰ सर्वाणि भूतानि मधु । यश्चायमास्वप्सु तेजोमयोऽमृतमय पुरुषो यश्चायमध्यात्म॰ रैतसस्तेजोमयोऽमृतमय पुरुषोऽयमेव स योऽयमात्मा । इदममृतमिद ब्रह्मेद॰ सर्वम् ॥

( १ ) तथा आपः । अध्यात्म रेतसि अपां विशेषतोऽवस्थानम् । शकर.

( २ ) ' यो रेतसि तिष्ठन्रेतसोऽन्तर· ' ( बृउ ३।७।२३ ) इत्यन्तर्यामिब्राह्मणे रेतोन्तरतया निर्दिष्टो रैतस इत्युच्यते । रेतसो जलविकारत्वात् । ' आपो रेतो भूत्वा शिश्न प्राविशन् ' ( ऐउ २।४ ) इति श्रुतेश्च । अपा स्थानेऽध्यात्म रेतसो निवेश· ।

रग.

अयमग्नि सर्वेषा भूताना मधु । अस्याग्नेः सर्वाणि भूतानि मधु । यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमय· पुरुषो यश्चायमध्यात्म वाङ्मयस्तेजोमयोऽमृतमय. पुरुषोऽयमेव स योऽयमात्मा । इदममृतमिद ब्रह्मेद॰ सर्वम् ॥

(१ ) तथा अग्नि. । वाचि अग्नेर्विशेषतोऽवस्थानम् । शकर.

( २ ) अग्न्यभिमानिकत्वाद्वाच· । ' अग्निर्वाग्भूत्वा मुख प्राविशत् ' ( ऐउ. २।४ ) इति श्रुतेश्चाध्यात्मं तत्स्थाने वाचो निवेश उपपद्यते । एवमुत्तरपर्यायेष्वपि कश्चन सबन्धो द्रष्टव्यः ।

रग.

अयं वायु· सर्वेषा भूतानां मधु । अस्य वायोः सर्वाणि भूतानि मधु । यश्चायमस्मिन्वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजोमयोऽमृतमय. पुरुषोऽयमेव स योऽयमात्मा । इदममृतमिद ब्रह्मेद॰ सर्वम् ॥

तथा वायुः, अध्यात्म प्राण. । भूताना शरीरारम्भकत्वेनोपकारात् मधुत्वम् । तदन्तर्गतानां तेजोमयादिनां

(१) बृउ. २।५।२, शब्रा १४।५।५।२.

(२) बृउ २।५।३, शब्रा १४।५।५।३, रग मस्मिन्नग्नौ ( मग्नौ ).

(३) बृउ २।५।४; शब्रा १४।५।५।५

करणत्वेनोपकारान्मधुत्वम्। तथा चोक्तम्—'तस्यै वाचः पृथिवी शरीर ज्योतीरूपमयमग्नि' इति।

शकर

[1]अयमादित्य सर्वेषां भूतानां मधु। अस्यादित्यस्य सर्वाणि भूतानि मधु। यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमय पुरुषो यश्चायमध्यात्म चाक्षुष स्तेजोमयोऽमृतमय पुरुषोऽयमेव स योऽयमात्मा। इदममृतमिद ब्रह्मेदं सर्वम्॥

(१) तथा आदित्यो मधु, चाक्षुषः अध्यात्मम्।

शकर

(२) 'मध्वादिष्वसभवादनधिकार जैमिनि'—दहरविद्याया परमात्मन एवोपास्यतया देवादीनामप्यधिकारोऽस्तु, तथाऽपि न मध्वादिविद्यासु तेषा मधिकार, मधुविद्या हि काण्वचतुर्थाध्याये 'अय वा आदित्य सर्वेषां भूताना मधु' इत्यादिनोक्ता आदित्यादिषु मधुदृष्टिरूपा, न च तस्यामादित्यादीनामधिकार सभवति, उपास्यासभवात्। उपास्योपासकभावस्य भेदतन्त्रत्वादित्यर्थः।

१।३।३१

'भाव तु बादरायणोऽस्ति हि'—बादरायणस्त्वाचार्यो मध्वादिविद्यास्वपि देवाद्यधिकारस्य भाव वदति हि यस्मादादित्यादिरूपी प्रकृतपरमात्मैवादित्यादीनामुपास्योऽस्ति 'य आदित्ये तिष्ठन्नादित्यादन्तरोऽयमादित्यो न वेद यस्यादित्यः शरीरम्' इत्यादिश्रुते. 'येऽप्यन्य देवता भक्ता यजन्ते श्रद्धयान्विता.। तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्॥' (भ गी ९।२३) इत्यादिस्मृतेश्च। तथा च परमात्मानमेवादित्यरूप स्वसस्थमादित्यादिदेवता मधुविद्ययोपासिष्यत इति नासभवः। एव विद्यान्तरेष्वपि बोध्यम्। न चैवमपि मधुविद्याया परमात्मोपासनेति कथमवधृतमिति चेत् 'तदेतद्ब्रह्मापूर्वमनपरम्' इत्यादे' 'अयमात्मा ब्रह्म सर्वानुभू.' इत्यन्ताद्वाक्यशेषादित्यवेहि। जैमिनेरधिकारप्रतिषेधस्तु छान्दोग्यीयतृतीयप्रपाठकस्थमधुविद्यादिपर.। तस्या तत्तद्देवताभाव फलश्रवणेन ब्रह्मलिङ्गाभावेन ब्रह्मोपासनापरत्वकल्पना नौचित्यात्। अन्यथा देवतामात्रोपासनोच्छेदप्रसङ्गाच्चेति बोध्यम्। पूर्वसूत्रस्य द्वितीयव्याख्यानस्वीकारो यै क्रियते, तैर्देवतानामचेतनत्वेऽप्येवमिद सूत्र योजनीयम्।

विज्ञान १।३।३३

[2]इमा दिश सर्वेषां भूतानां मधु। आसां दिशां सर्वाणि भूतानि मधु। यश्चायमासु दिक्षु तेजोमयोऽमृतमय पुरुषो यश्चायमध्यात्मं श्रौत्रः प्रातिश्रुत्कस्तेजोमयोऽमृतमय: पुरुषोऽयमेव स योऽयमात्मा। इदममृतमिद ब्रह्मेदं सर्वम्॥

तथा दिशो मधु। दिशा यद्यपि श्रोत्रमध्यात्म, शब्दप्रतिश्रवणवेलायां तु विशेषत. सनिहितो भवतीति अध्यात्मं प्रातिश्रुत्कः— प्रतिश्रुत्काया प्रतिश्रवणवेलायां भव प्रातिश्रुत्क.।

शकर.

[3]अय चन्द्र सर्वेषां भूतानां मधु। अस्य चन्द्रस्य सर्वाणि भूतानि मधु। यश्चायमस्मिंश्चन्द्रे तेजोमयोऽमृतमय पुरुषो यश्चायमध्यात्मं मानसस्तेजोमयोऽमृतमय पुरुषोऽयमेव स योऽयमात्मा। इदममृतमिदं ब्रह्मेदं सर्वम्॥

तथा चन्द्र., अध्यात्म मानस। शकर.

[4]इय विद्युत्सर्वेषां भूताना मधु। अस्यै विद्युत' सर्वाणि भूतानि मधु। यश्चायमस्या विद्युति तेजोमयोऽमृतमय पुरुषो यश्चायमध्यात्मं तैजस स्तेजोमयोऽमृतमय. पुरुषोऽयमेव स योऽयमात्मा। इदममृतमिद ब्रह्मेदं सर्वम्॥

(१) तथा विद्युत्, त्वक्तेजसि भव. तैजसः अध्यात्मम्।

शकर.

(२) अस्यै अस्या इत्यर्थ। तैजस कौक्षेयतेज.-सबन्धीत्यर्थ.।

रग.

अयं स्तनयित्नु सर्वेषा भूतानां मधु। अस्य स्तनयित्नोः सर्वाणि भूतानि मधु। यश्चायमस्मिन्स्तनयित्नौ तेजोमयोऽमृतमय. पुरुषो यश्चायमध्यात्मं शाब्द सौवरस्तेजोमयोऽमृत-

---

(१) बृउ २।५।५, शब्रा १४।५।५।६, विज्ञान १।३।३१ अयमादित्य (अय वा आदित्य)

(१) बृउ २।५।६, शब्रा १४।५।५।८
(२) बृउ २।५।७, शब्रा १४।५।५।७
(३) बृउ २।५।८, शब्रा १४।५।५।९
(४) बृउ २।५।९, शब्रा १४।५।५।१०

मयः पुरुषोऽयमेव स योऽयमात्मा। इदममृत मिद ब्रह्मेद९ सर्वम् ॥

( १ ) तथा स्तनयित्नु । शब्दे भव. शाब्द. अध्यात्म यद्यपि, तथापि स्वरे विशेषतो भवतीति सौवर. अध्यात्मम्। शकर

( २ ) शाब्दो वागिन्द्रियोच्चार्यमाणशब्दान्तर्यामी। तस्यैव विशेषण सौवर इति। स्वरे भव' सौवर.। द्वारादित्वादैजागम. । अत्र शब्दस्याद्रव्यत्वेन शरीरत्वासभवात्तद्गुणकद्रव्यनिष्ठतया वा तदुक्तिर्द्रष्टव्या । प्रमाणबलाद्द्रव्यस्यापि शब्दस्य द्रव्यत्वघटितशरीरत्वाभावे परमात्माश्रयत्वेन प्रकारान्तरेण शरीरत्वोक्तौ न दोष इति द्रष्टव्यम्। रग

अयमाकाश सर्वेषा भूतानां मधु । अस्याकाशस्य सर्वाणि भूतानि मधु। यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमय पुरुषो यश्चायमध्यात्म९ हृद्याकाशस्तेजोमयोऽमृतमय पुरुषोऽयमेव स योऽयमात्मा। इदममृतमिद ब्रह्मेद९ सर्वम् ॥

तथा आकाश., अध्यात्म हृद्याकाश' ।

शकर

अय धर्म सर्वेषा भूताना मधु। अस्य धर्मस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन्धर्मे तेजोमयोऽमृतमय पुरुषो यश्चायमध्यात्म धार्मस्तेजोमयोऽमृतमय पुरुषोऽयमेव स योऽयमात्मा । इदममृतमिद ब्रह्मेद९ सर्वम् ॥

( १ ) आकाशान्ता पृथिव्यादयो भूतगणाः देवतागणाश्च कार्यकरणसघातात्मानः उपकुर्वन्तो मधु भवन्ति प्रतिशरीरिणमित्युक्तम् । येन ते प्रयुक्ता शरीरिभि सबध्यमाना मधुत्वेनोपकुर्वन्ति, तत् वक्तव्यमिति इदमारभ्यते—अय धर्म. 'अयम्' इति अप्रत्यक्षोऽपि धर्मः कार्येण तत्प्रयुक्तेन प्रत्यक्षेण व्यपदिश्यते—अय धर्म. इति—प्रत्यक्षवत् । धर्मश्च व्याख्यात' श्रुतिस्मृतिलक्षण , क्षत्रादीनामपि नियन्ता, जगतो वैचित्र्यकृत् पृथिव्यादीनां परिणामहेतुत्वात्, प्राणिभिरनुष्ठीयमानरूपश्च । तेन च 'अय धर्मः' इति प्रत्यक्षेण व्यपदेश । सत्यधर्मयोश्च अभेदेन निर्देश कृतः शास्त्राचारलक्षणयोः। इह तु भेदेन व्यपदेश एकत्वे सत्यपि, दृष्टादृष्टभेदरूपेण कार्यारम्भकत्वात् । यस्तु अदृष्ट' अपूर्वाख्यो धर्म', स सामान्यविशेषात्मना अदृष्टेन रूपेण कार्यमारभते—सामान्यरूपेण पृथिव्यादीना प्रयोक्ता भवति, विशेषरूपेण च अध्यात्म कार्यकरणसघातस्य । तत्र पृथिव्यादीनां प्रयोक्तरि—यश्चायमस्मिन्धर्मे तेजोमय । तथा अध्यात्म कार्यकरणसघातकर्तरि धर्मे भवो धार्मः।

शकर.

( २ ) धर्म. श्रुतिस्मृतिप्रसिद्धो ज्योतिष्टोमादिलक्षणो धर्म । धार्मस्तु तत्फलभूतसुखदुःखादिलक्षण. ।

रग.

इद९ सत्य९ सर्वेषां भूतानां मधु । अस्य सत्यस्य सर्वाणि भूतानि मधु। यश्चायमस्मिन्सत्ये तेजोमयोऽमृतमय पुरुषो यश्चायमध्यात्म९ सात्यस्तेजोमयोऽमृतमय पुरुषोऽयमेव स योऽयमात्मा । इदममृतमिद ब्रह्मेद९ सर्वम् ॥

( १ ) तथा दृष्टेनानुष्ठीयमानेन आचाररूपेण सत्याख्यो भवति, स एव धर्म.। सोऽपि द्विप्रकार एव सामान्यविशेषात्मरूपेण—सामान्यरूप' पृथिव्यादिसमवेत', विशेषरूप' कार्यकरणसघातसमवेतः। तत्र पृथिव्यादिसमवेते वर्तमानक्रियारूपे सत्ये, तथा अध्यात्म कार्यकरणसघातसमवेते सत्ये, भव. सात्यः—'सत्येन वायुरावाति' इति श्रुत्यन्तरात् ।

शकर.

( २ ) सत्य सत्यवचन सात्य तत्फलभूत सुखादिलक्षणम्। रग.

इद मानुष९ सर्वेषां भूतानां मधु। अस्य मानुषस्य सर्वाणि भूतानि मधु । यश्चायमस्मिन्मानुषे तेजोमयोऽमृतमय. पुरुषो यश्चायमध्यात्मं मानुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा। इदममृतमिद ब्रह्मेद९ सर्वम् ॥

( १ ) धर्मसत्याभ्या प्रयुक्तोऽय कार्यकरणसघातविशेष, स येन जातिविशेषेण सयुक्तो भवति, स

(१) बृउ २।५।१०, शब्रा १४।५।५।१४.
(२) बृउ २।५।११, शब्रा १४।५।५।११

(१) बृउ. २।५।१२, शब्रा १४।५।५।१२
(२) बृउ २।५।१३, शब्रा १४।५।५।१३

जातिविशेषो मानुषादिः । तत्र मानुषादिजातिविशिष्टा एव सर्वे प्राणिनिकाया. परस्परोपकार्योपकारकभावेन वर्तमाना दृश्यन्ते । अतो मानुषादिजातिरपि सर्वेषा भूताना मधु । तत्र मानुषादिजातिरपि बाह्या आध्यात्मिकी चेति उभयथा निर्देशभाक् भवति । शकर

( २ ) मानुष मनुष्यप्रसिद्धम् । अधिदैवतमग्नीन्द्रादिरूप सर्वेषा मधित्यर्थ । अध्यात्म मानुष इत्यत्र मनुष्यशब्दो मुख्यमनुष्यपरो द्रष्टव्यः । रग

**अयमात्मा सर्वेषा भूताना मधु । अस्यात्मन सर्वाणि भूतानि मधु । यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमय पुरुषो यश्चायमात्मा तेजोमयोऽमृतमय पुरुषोऽयमेव स योऽयमात्मा । इदममृतमिद ब्रह्मेद५ सर्वम् ॥**

( १ ) यस्तु कार्यकरणसघातो मानुषादिजातिविशिष्ट', सोऽयमात्मा सर्वेषा भूताना मधु । ननु अय शारीरशब्देन निर्दिष्ट पृथिवीपर्याय एव — न, पार्थिवाशस्यैव तत्र ग्रहणात् । इह तु सर्वात्मा प्रत्यस्तमिताध्यात्माधिभूताधिदैवादिसर्वविशेष सर्वभूतदेवतागणविशिष्ट कार्यकरणसघात. स. ' अयमात्मा' इत्युच्यते । तस्मिन् अस्मिन् आत्मनि तेजोमयोऽमृतमय पुरुष. अमूर्तरसः सर्वात्मको निर्दिश्यते । एकदेशेन तु पृथिव्यादिषु निर्दिष्ट, अत्र अध्यात्मविशेषाभावात् स. न निर्दिश्यते । यस्तु परिशिष्टो विज्ञानमय.—तदर्थोऽय देहलिङ्गसघात आत्मा—स. ' यश्चायमात्मा ' इत्युच्यते । शकर

( २ ) एवमध्यात्माधिदैवतभेदभिन्नसर्वाचेतनान्तर्यामित्व तद्द्वारा सर्वाचेतनवैलक्षण्य प्रतिपाद्य चेतनान्तर्यामित्वमुखेन सर्वचेतनवैलक्षण्य च प्रतिपादयति—अय मात्मा प्रत्यगात्मेत्यर्थ. । शिष्ट पूर्ववत् । यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमय' पुरुष. सर्वेषु यश्चाय तेजोमयोऽमृतमय' पुरुष इति निर्दिष्ट. सोऽस्मिन्नवस्थितोऽन्तर्यामीत्यर्थ. । सोऽपि क इत्यत्राऽऽह—यश्चायमात्मा तेजोमयोऽमृतमय पुरुषोऽयमेव स योऽयमात्मेदममृतमिद ब्रह्मेद सर्वे पूर्ववदर्थ । रग.

(१) बृउ २।५।१४, शब्रा १४।५।५।१४, मध्व यश्चायमात्मा ( यश्चायमध्यात्ममात्मा )

**स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूताना५ राजा । तद्यथा रथनाभौ च रथनेमौ चारा सर्वे समर्पिता । एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवा सर्वे लोका सर्वे प्राणा' सर्वे एत आत्मान समर्पिता ॥**

( १ ) यस्मिन्नात्मनि, परिशिष्टो विज्ञानमयः अन्त्ये पर्याये, प्रवेशित , सोऽयमात्मा । तस्मिन् अविद्याकृतकार्यकरणसघातोपाधिविशिष्टे ब्रह्मविद्यया परमार्थात्मनि प्रवेशिते, स एवमुक्तः अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनभूतः, स वै—स एव अयमात्मा अव्यवहितपूर्वपर्याये ' तेजोमयः ' इत्यादिना निर्दिष्टो विज्ञानात्मा विद्वान्, सर्वेषा भूतानामयमात्मा—सर्वैरुपास्य —सर्वेषा भूतानामधिपति. सर्वभूताना स्वतन्त्रः—न कुमारामात्यवत्—किं तर्हि सर्वेषा भूताना राजा, राजत्वविशेषण ' अधिपतिः ' इति—भवति कश्चित् राजोचितवृत्तिमाश्रित्य राजा, न तु अधिपति, अतो विशिनष्टि अधिपतिरिति । एव सर्वभूतात्मा विद्वान् ब्रह्मवित् मुक्तो भवति । यदुक्तम्—'ब्रह्मविद्यया सर्वे भविष्यन्तो मनुष्या मन्यन्ते, किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवत् ' इतीद, तत् व्याख्यात एव आत्मानमेव सर्वात्मत्वेन आचार्यागमाभ्या श्रुत्वा, मत्वा तर्केत , विज्ञाय साक्षात् एव, यथा मधुब्राह्मणे दर्शित तथा—तस्मात् ब्रह्मविज्ञानात् एवलक्षणात् पूर्वमपि, ब्रह्मैव सत् अविद्यया अब्रह्म आसीत्, सर्वमेव च सत् असर्वमासीत् — ता तु अविद्या अस्माद्विज्ञानात् तिरस्कृत्य ब्रह्मवित् ब्रह्मैव सन् ब्रह्माभवत्, सर्व' स. सर्वमभवत् । परिसमाप्तः शास्त्रार्थ , यदर्थः प्रस्तुत. । तस्मिन् एतस्मिन् सर्वात्मभूते ब्रह्मविदि सर्वात्मनि सर्वे जगत्समर्पितमित्येतस्मिन्नर्थे दृष्टान्त उपादीयते — तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता इति, प्रसिद्धोऽर्थः, एवमेव अस्मिन् आत्मनि परमात्मभूते ब्रह्मविदि सर्वाणि भूतानि ब्रह्मादिस्तम्बपर्यन्तानि सर्वे देवाः अग्न्यादयः सर्वे लोकाः

(१) बृउ २।५।१५, शब्रा. १४।५।५।१५ सर्वाणि .. प्राणा. (सर्वे प्राणा सर्वे लोका सर्वे देवा सर्वाणि भूतानि), भास्कर ३।२।१२ ( सर्वाणि भूतानि सर्वे एवाऽऽत्मान-समर्पिता ) एतावदेव

भूरादय. सर्वे प्राणा. वागादयः सर्व एत आत्मानो जलचन्द्रवत् प्रतिशरीरानुप्रवेशिन अविद्याकल्पिता. । सर्वं जगत् अस्मिन्समर्पितम् । यदुक्त, ब्रह्मवित् वामदेव प्रतिपेदे -- अह मनुरभव सूर्यश्चेति, स एष सर्वात्मभावो व्याख्यात । स एष विद्वान् ब्रह्मवित् सर्वोपाधि सर्वात्मा सर्वो भवति । निरुपाधि. निरुपाख्यः अनन्तर अबाह्यः कृत्स्न. प्रज्ञानघन अजोऽजरोऽमृतोऽभयोऽचलः नेति नेत्यस्थूलोऽनणुरित्येवविशेषण. भवति ।

शकर

( २ ) 'भेदादिति चेन्न प्रत्येकमतद्वचनात्' — 'सर्वाणि भूतानि सर्वं एवाऽऽत्मान. समर्पिताः' इति मूर्ता मूर्तेन बाह्यप्रपञ्चेन नेमिस्थानीयेन परिवेष्टिताना नेम्यवस्थानीयाना विज्ञानात्मनामन्तरतमे परमात्मनि रथचक्र नाभिस्थानीये समर्पणाद्भेदो गम्यते । अतो न भेदाद्भोग्यभोक्त्राकारवदुपास्यमिति चेन्न । प्रत्येकमतद्वचनात् । प्रत्युपाधिभेदवचनाभावादित्यर्थ । अध्यात्ममधिदैवत च ये विज्ञानात्मानस्तेषा सर्वेषामचेतनाना च भूतभौतिकाना च यत्रैकीभाव स एव परमात्मा ध्येयत्वेनोपदिश्यते मधुविद्याया 'यश्चायमस्या पृथिव्या तेजोमयोऽमृतमय. पुरुषो यश्चायमध्यात्म शारीरः तेजोमयोऽमृतमय. पुरुषोऽयमेव स योऽयमात्मा' इत्यादिना ।

भास्कर. ३।२।१२

( ३ ) इयता प्रबन्धेन प्रतिपादितश्चेतनाचेतनविलक्षण आत्मा सर्वेषा भूतानाम् । अधिपतिशब्दः शेषिणि रूढ इति व्यासार्यैः प्रथमसूत्रे प्रतिपादितत्वात् । राजा नियन्ता । रथनाभिर्नाम रथचक्रस्य मध्यवर्ति सरन्ध्र काष्ठ नेमिर्नाम बाह्य वलयाकार काष्ठम् । एतयोस्तु मध्यवर्तिदारुशलाका अरा यथा नाभिनेम्याश्रिता एवं देव लोकप्राणजीवाः परमात्माश्रिता इत्यर्थः । चेतनाचेतनः सर्वोऽपि प्रपञ्चस्तदाश्रित इति यावत् । रग.

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषि' पश्यन्नवोचत् । तद्वां नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् । दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाचेति ॥

(१) बृउ २।५।१६, शब्रा १४।५।५।१६ रंग दध्यङ् ह यन्मध्वाथर्वणो ( दध्यङ्ङाथर्वणो ह )

( १ ) परिसमाप्ता ब्रह्मविद्या अमृतत्वसाधनभूता, या मैत्रेयी पृष्टवती भर्तारं 'यदेव भगवानमृतत्वसाधन वेद तदेव मे ब्रूहि' इति । एतस्या ब्रह्मविद्यायाः स्तुत्यर्था इयमाख्यायिका आनीता । तस्या आख्यायिकायाः सक्षेपतोऽर्थप्रकाशनार्थावेतौ मन्त्रौ भवतः । एव हि मन्त्रब्राह्मणाभ्या स्तुतत्वात् अमृतत्वसर्वप्राप्तिसाधनत्व ब्रह्मविद्याया. प्रकटीकृत राजमार्गमुपनीत भवति—यथा आदित्य' उद्यन् शार्वर तमोऽपनयतीति—तद्वत् । अपि च एव स्तुता ब्रह्मविद्या—या इन्द्ररक्षिता सा दुष्प्रापा देवैरपि । यस्मात् अश्विभ्यामपि देवभिषग्भ्या इन्द्ररक्षिता विद्या महता आयासेन प्राप्ता । ब्राह्मणस्य शिरश्छित्त्वा अश्व्य शिर' प्रतिसधाय, तस्मिन्निन्द्रेण छिन्ने पुन स्वशिर एव प्रतिसधाय, तेन ब्राह्मणस्य स्वशिरसैव उक्ता अशेषा ब्रह्मविद्या श्रुता । यस्मात् तत. परतर किंचित्पुरुषार्थसाधन न भूत न भावि वा, कुत एव वर्तमानम्—इति नात. परा स्तुतिरस्ति । अपि चैव स्तूयते ब्रह्मविद्या—सर्वपुरुषार्थाना कर्म हि साधनमिति लोके प्रसिद्धम् । तच्च कर्म वित्तसाध्य, तेन आशाऽपि नास्त्यमृतत्वस्य । तदिदममृतत्व केवलया आत्मविद्यया कर्मनिरपेक्षया प्राप्यते । यस्मात् कर्मप्रकरणे वक्तु प्राप्ताऽपि सती प्रवर्ग्यप्रकरणे, कर्मप्रकरणाद्बुद्धीर्थ कर्मणा विरुद्धत्वात् केवलसन्याससहिता अभिहिता अमृतत्वसाधनाय, तस्मात् नातः पर पुरुषार्थसाधनमस्ति । अपि च एवं स्तुता ब्रह्मविद्या—सर्वो हि लोको द्वन्द्वारामः, 'स वै नैव रेमे तस्मादेकाकी न रमते' इति श्रुतेः । याज्ञवल्क्यो लोकसाधारणोऽपि सन् आत्मज्ञानबलात् भार्यापुत्रवित्तादिससाररतिं परित्यज्य प्रज्ञानतृप्त आत्मरतिर्बभूव । अपि च एव स्तुता ब्रह्मविद्या— यस्मात् याज्ञवल्क्येन ससारमार्गात् व्युत्तिष्ठताऽपि प्रियायै भार्यायै प्रीत्यर्थमेव अभिहिता, 'प्रिय भाषस एह्यास्स्व' इति लिङ्गात् ।

तत्र इय स्तुत्यर्था आख्यायिकेत्यवोचाम । का पुनः सा आख्यायिकेति उच्यते—इदमित्यनन्तरनिर्दिष्ट व्यपदिशति, बुद्धौ सनिहितत्वात् । वैशब्दः स्मरणार्थः । तदित्याख्यायिकानिर्वृत्त प्रकरणान्तराभिहित परोक्ष वै-शब्देन स्मारयन् इह व्यपदिशति । यत्

प्रवर्ग्यप्रकरणे सूचित, न आविष्कृत मधु, तदिद मधु इह अनन्तर निर्दिष्टम्—‘ इय पृथिवी ’ इत्यादिना। कथ तत्र प्रकरणान्तरे सूचितम्—दध्यङ् ह वा आभ्यामाथर्वणो मधु नाम ब्राह्मणमुवाच। तदेनयोः प्रिय धाम तदेवैनयोरेतेनोपगच्छति। स होवाचेन्द्रेण वा उक्तोऽस्म्ये तच्चेदन्यस्मा अनुब्रूयास्तत एव ते शिरश्छिन्द्यामिति। तस्माद्वै बिभेमि यद्वै मे स शिरो न च्छिन्द्यात्तद्वामुपनेष्य इति। तौ होचतुरावा त्वा तस्मात्त्रास्यावहे इति। कथ मा त्रास्येथे इति। यदा नावुपनेष्यसे। अथ ते शिरश्छित्त्वाऽन्यत्राहृत्योपनिधास्यावः। अथाश्वस्य शिर आहृत्य तत्ते प्रतिधास्याव·। तेन नावनुवक्ष्यसि। स यदा नावनुवक्ष्यसि। अथ ते तदिन्द्रः शिरश्छेत्स्यति। अथ ते स्व शिर आहृत्य तत्ते प्रतिधास्याव इति। तथेति तौ होपनिन्ये। तौ यदोपनिन्ये। अथास्य शिरश्छित्त्वा अन्यत्रोपनिदधतु·। अथाश्वस्य शिर आहृत्य तद्धास्य प्रतिदधतु.। तेन हाभ्यामनूवाच। स यदाभ्यामनूवाच अथास्य तदिन्द्र· शिरश्चिच्छेद। अथास्य स्व शिर आहृत्य तद्धास्य प्रतिदधतुरिति। यावत्तु प्रवर्ग्यकर्माङ्गभूत मधु, तावदेव तत्राभिहितम्। न तु कक्ष्यमात्मज्ञानाख्यम्। तत्र या आख्यायिका अभिहिता, सेह स्तुत्यर्था प्रदर्श्यते। इद वै तन्मधु दध्यङ्ङाथर्वण· अनेन प्रपञ्चेन अश्विभ्यामुवाच। तदेतदृषि — तदेतत्कर्म, ऋषि मन्त्र·, पश्यन् उपलभमान., अवोचत् उक्तवान्। कथम्? तत् दस· इति व्यवहितेन सबन्धः, दस इति कर्मणो नामधेयम्। तच्च दस· किंविशिष्टम्? उग्र क्रूर, वा युवयो·, हे नरा नराकारावश्विनौ। तच्च कर्म किंनिमित्तम्? सनये लाभाय। लाभलुब्धो हि लोकेऽपि क्रूर कर्म आचरति, तथैव एतावुपलभ्येते यथा लोके। तत् आवि प्रकाश कृणोमि करोमि, यत् रहसि भवद्भ्या कृतम्। किमिवेत्युच्यते — तन्यतु पर्जन्य., न इव। नकारस्तु उपरिष्टादुपचारः उपमार्थीयो वेदे, न प्रतिषेधार्थ — यथा ‘ अश्व न ’ अश्वमिवेति यद्वत्। तन्यतुरिव वृष्टिं यथा पर्जन्यो वृष्टिं प्रकाशयति स्तनयित्न्वादिशब्दैः, तद्वत् अह युवयो क्रूर कर्म आविष्कृणोमीति सबन्धः। ननु अश्विनो स्तुत्यर्थौ कथमिमौ मन्त्रौ स्याताम्? निन्दावचनौ हीमौ—नैष दोषः। स्तुतिरेवैषा, न निन्दावचनौ। यस्मात् ईदृशमप्यतिक्रूर कर्म कुर्वतोर्युवयो· न लोम च मीयत इति — न चान्यत्किंचिद्धीयत एवेति — स्तुतावेतौ भवत.। निन्दां प्रशसा हि लौकिकाः स्मरन्ति। तथा प्रशसारूपा च निन्दा लोके प्रसिद्धा। दध्यङ्नाम आथर्वण.। हेत्यनर्थको निपात.। यन्मधु कक्ष्य आत्मज्ञानलक्षण आथर्वण· वा युवाभ्या अश्वस्य शीर्ष्णा शिरसा, प्र यत् ईं उवाच— यत्प्रोवाच मधु। ईमित्यनर्थको निपातः।

शाकर

(२) तदेतदश्विनोर्वृत्तान्त योगसाक्षात्कारेण पश्यन् कश्चिदृषिरश्विनौ प्रत्युवाच।

* रग

**इद वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच। तदेतदृषिः पश्यन्नवोचत्। आथर्वणायाश्विनौ दधीचेऽश्व्य८ शिर प्रत्यैरयतम्। स वा मधु प्रवोचदृतायन्त्वाष्ट्र यद्दस्रावपि कक्ष्य वामिति॥**

इद वै तन्मध्वित्यादि पूर्ववत् मन्त्रान्तरप्रदर्शनार्थम्। तथा अन्यो मन्त्र. तामेव आख्यायिकामनुसरति स्म। आथर्वणो दध्यङ्नाम—आथर्वणोऽन्यो विद्यत इत्यतो विशिनष्टि—दध्यङ्नाम आथर्वण·, तस्मै दधीचे आथर्वणाय, हे अश्विनाविति मन्त्रदृशो वचनम्। अश्व्य अश्वस्य स्वभूत शिर., ब्राह्मणस्य शिरसि छिन्ने अश्वस्य शिरश्छित्त्वा ईदृशमतिक्रूर कर्म कृत्वा अश्व्य शिर ब्राह्मण प्रति ऐरयत गमितवन्तौ, युवाम्। स च आथर्वणः वा युवाभ्या तन्मधु प्रवोचत्, यत्पूर्वं प्रतिज्ञातम् — वक्ष्यामीति। स किमर्थमेव जीवितसदेहमारुह्य प्रवोचदित्युच्यते — ऋतायन् यत्पूर्वं प्रतिज्ञात सत्य तत्परिपालयितुमिच्छन्। जीवितादपि हि सत्यधर्मपरिपालना गुरुतरेत्येतस्य लिङ्गमेतत्। किं तन्मधु प्रवोचदित्युच्यते — त्वाष्ट्र, त्वष्टा आदित्यः, तस्य सबन्धि यज्ञस्य शिरश्छिन्न त्वष्ट्रा अभवत्, तत्प्रतिसधानार्थं प्रवर्ग्यकर्म, तत्र प्रवर्ग्यकर्माङ्गभूत यद्विज्ञान तत् त्वाष्ट्र मधु—यज्ञस्य

* शेष शाकरवत्।

(१) बृउ. २।५।१७, शब्रा १४।५।५।१७ याश्विनौ (याश्विना), रग याश्विनौ (याश्विना)ऽश्व्य९ (ऽश्विय८), मध्व. शब्रावत्

शिरश्छेदनप्रतिसधानादिविषयं दर्शन तत्त्वाष्ट्र यन्मधु । हे दस्रौ दस्राविति परबलानामुपक्षपयितारौ शत्रूणा हिंसितारौ । अपि च न केवल त्वाष्ट्रमेव मधु कर्मसबन्धि युवाभ्यामवोचत् । अपि च कक्ष्य गोप्य रहस्य परमात्मसबन्धि यद्विज्ञान मधु मधुब्राह्मणेनोक्त अध्यायद्वयप्रकाशित, तच्च वा युवाभ्या प्रवोचदित्यनुवर्तते ।

* शकर

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषि पश्यन्नवोचत् । पुरश्चक्रे द्विपद पुरश्चक्रे चतुष्पद । पुर स पक्षी भूत्वा पुर पुरुष आविशदिति । स वा अय पुरुष सर्वासु पूर्षु पुरिशय । नैनेन किंचनानावृतम् । नैनेन किंचनासवृतम् ॥

(१) इद वै तन्मध्विति पूर्ववत् । उक्तौ द्वौ मन्त्रौ प्रवर्ग्यसबन्धाख्यायिकोपसहर्तारौ । द्वयो प्रवर्ग्यकर्मार्थयोर्न्याययोरर्थ आख्यायिकाभूताभ्या मन्त्राभ्या प्रकाशित । ब्रह्मविद्यार्थयोस्त्वन्याययोरर्थ उत्तराभ्यामृग्भ्या प्रकाशयितव्य इत्यत. प्रवर्तते । यत् कक्ष्य च मधु उक्तवानाथर्वणो युवाभ्यामित्युक्तम् — किं पुनस्तन्मध्वित्युच्यते — पुरश्चक्रे, पुर. पुराणि शरीराणि — यत इयमव्याकृतव्याकरणप्रक्रिया — स परमेश्वरो नामरूपे अव्याकृते व्याकुर्वाण प्रथम भूरादीन् लोकान्सृष्ट्वा, चक्रे कृतवान्, द्विपद' द्विपादुपलक्षितानि मनुष्यशरीराणि पक्षिशरीराणि । तथा पुर' शरीराणि चक्रे चतुष्पद. चतुष्पादुपलक्षितानि पशुशरीराणि । पुरः पुरस्तात्, स ईश्वर. पक्षी लिङ्गशरीर भूत्वा पुरः शरीराणि—पुरुष आविशदित्यस्यार्थमाचष्टे श्रुति — स वा अय पुरुष' सर्वासु पूर्षु सर्वशरीरेषु पुरिशयः, पुरि शेत इति पुरिशयः सन् पुरुष इत्युच्यते । न एनेन अनेन किंचन किंचिदपि अनावृत अनाच्छादितम् । तथा न एनेन किंचनासवृत अन्तरननुप्रवेशितम्— बाह्यभूतेनान्तर्भूतेन च न अनावृतम् । एव स एव नामरूपात्मना अन्तर्बहिर्भावेन कार्यकरणरूपेण व्यवस्थित' । पुरश्चक्रे इत्यादिमन्त्र सक्षेपत आत्मैकत्वमाचष्टे इत्यर्थ. ।

शकर.

(२) द्विपद. पुरश्चक्रे पुर. पुराणि । पू शब्दोऽयं द्वितीयाबहुवचनान्त । द्विपात्पुराणि चतुष्पात्पुराणि च चक्रे इत्यर्थ. । देवमनुष्यपश्वादिशरीर सृष्ट्वा पुरः पुरस्तात्परमात्मा पक्षी भूत्वा ससारहेतुभूतकर्मावृतो भूत्वा ससारी जीवशरीरको भूत्वेति यावत् । परमात्मनस्तु अद्वारककर्मसबन्धाभावात्सृष्टानि सर्वाणि पुराणि जीवशरीरक परमात्मा प्रविष्ट इत्यर्थ. । तमिम मन्त्र श्रुतिरेव व्याचष्टे — स वेति । सर्वासु पूर्षु सर्वशरीरेषु वर्तमान. सोऽय पुरिसज्ञे शरीरेऽस्मिन् शयनात्पुरुषो हरि. । शकारस्य षकारोऽत्र व्यत्ययेन प्रयुज्यत इत्युक्तरीत्या पुरिशयनात्पुरुष इत्यर्थ. । अनावृत बहिरनावृतमित्यर्थ । असवृतमन्तरसवृतमित्यर्थ । अन्तर्बहिश्चाव्याप्त किमपि नास्तीत्यर्थ । रग.

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषि पश्यन्नवोचत् । रूपंरूपं प्रतिरूपो बभूव तदस्य रूप प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरय' शता दशेति । अय वै हरयोऽय वै दश च सहस्राणि बहूनि चानन्तानि च । तदेतद्ब्रह्मापूर्वमनपरमनन्तरम-

* रगस्य शकरवद्व्याख्यार्थ ।

(१) बृउ २।५।१८, शब्रा १४।५।५।१८, ब्रशकर १।३।१४, ३।१।२१, भास्कर ३।२।२२, रग पुर पुरुष (पुरुष), वल्लभ १।१।११ (पृ १८८)

(१) बृउ २।५।१९, शब्रा १४।५।५।१९, ब्रशकर. १।१।४ (पृ ४८, ६४, ७४), १।१।२९, २।३।१७, ३।२।१४, २१, ३०, ३६, भास्कर १।१।२९, २।१।१४, ३।२।१५, रग दश च+ (शतानि) चानन्तानि च (चानन्तानि), रामानुज १।१।१ (पृ ६, १०२), १।१।४ (पृ १५५, १६१, १६७), २।१।१५ (पृ ४२३), २।१।२१, २।३।४२, ४५, ४।४।४, निंबार्क. २।१।२०, ब्रमध्व १।१।७, २।३।५०, ३।२।१२ सहस्राणि + (च), श्रीकठ २।१।२१, २।३।४२, ४।४।२२, श्रीकर. १।२।८, २।१।२१, २३, ३०, २।३।२५, ३०, ४०, ४३, ३।१।१, ३।२।२, २६, ३०, ३१, ३।३।३५, ५१, ३।४।१, ४।१।३, ४।२।५, ४।४।४, २२, वल्लभ १।१।२९, विज्ञान १।३।३३, १।४।१४, २।१।२१, बलदेव ३।२।१२, ४।१।५

बाह्यम् । अयमात्मा ब्रह्म सर्वानुभूः । इत्यनुशासनम् ॥

(१) इदं वै तन्मध्वित्यादि पूर्ववत् । रूपं रूपं प्रतिरूपो बभूव — रूपं रूपं प्रति प्रतिरूपं रूपान्तरं बभूवेत्यर्थः । प्रतिरूपोऽनुरूपो वा यादृक्स्थानौ माता पितरौ तत्सस्थानं तदनुरूप एव पुत्रो जायते । न हि चतुष्पदो द्विपाज्जायते, द्विपदो वा चतुष्पात् । स एव हि परमेश्वरो नामरूपे व्याकुर्वाणः रूपं रूपं प्रतिरूपो बभूव । किमर्थं पुनः प्रतिरूपमागमनं तस्येत्युच्यते——तत् अस्य आत्मनः रूपं प्रतिचक्षणाय प्रतिख्यापनाय । यदि हि नामरूपे न व्याक्रियेते, तदा अस्य आत्मनो निरुपाधिकं रूपं प्रज्ञानघनाख्यं न प्रतिख्यायेत । यदा पुनः कार्यकरणात्मना नामरूपे व्याकृते भवतः, तदा अस्य रूपं प्रतिख्यायेत । इन्द्रः परमेश्वरः मायाभिः प्रज्ञाभिः नामरूपभूतकृतमिथ्याभिमानैर्वा न तु परमार्थतः, पुरुरूपः बहुरूपः, ईयते गम्यते——एकरूप एव प्रज्ञानघनः सन् अविद्याप्रज्ञाभिः । कस्मात्पुनः कारणात् ? युक्ताः रथ इव वाजिनः, स्वविषयप्रकाशनाय, हि यस्मात्, अस्य हरयः हरणात् इन्द्रियाणि, शता शतानि, दश च, प्राणिभेदबाहुल्यात् शतानि दश च भवन्ति । तस्मात् इन्द्रियविषयबाहुल्यात् तत्प्रकाशनायैव च युक्तानि तानि न आत्मप्रकाशनाय । 'पराञ्चि खानि व्यतृणत्स्वयम्भूः' इति हि काठके । तस्मात् तैरेव विषयस्वरूपैरीयते, न प्रज्ञानघनैकरसेन स्वरूपेण । एवं तर्हि अन्यः परमेश्वरः अन्ये हरय इत्येवं प्राप्ते उच्यते——अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च । प्राणिभेदस्य आनन्त्यात् । किं बहुना ? तदेतद्ब्रह्म य आत्मा, अपूर्वं नास्य कारणं पूर्वं विद्यत इत्यपूर्वं, नास्यापरं कार्यं विद्यत इत्यनपरं, नास्य जात्यन्तरमन्तराले विद्यत इत्यनन्तरं, तथा बहिरस्य न विद्यत इत्यबाह्यम् । किं पुनस्तत् निरन्तरं ब्रह्म ? अयमात्मा । कोऽसौ ? यः प्रत्यगात्मा द्रष्टा श्रोता मन्ता बोद्धा विज्ञाता सर्वानुभूः——सर्वात्मना सर्वमनुभवतीति सर्वानुभूः——इत्येतदनुशासनं सर्ववेदान्तोपदेशः । एष सर्ववेदान्तानामुपसंहृतोऽर्थः । एतदमृतमभयम् । परिसमाप्तश्च शास्त्रार्थः । शंकर,

(२) मीयते परिच्छिद्यते अनयेति प्रज्ञोच्यते यथा 'इन्द्रो मायाभिः' इति ।

भास्कर २।१।१४ (पृ १००)

(३) मन्त्रान्तरप्रदर्शनार्थोऽयमारम्भः । रूपं रूपमिति । रूप्यते इति रूपं दृश्यं वस्तु । वीप्साया द्वित्वम् । प्रतिवस्त्विति यावत् । प्रतिरूपः सदृशरूपः इत्यर्थः । तत्तद्रूपसदृशतयाऽन्तर्यामितयाऽवस्थित इति यावत् । यद्वा । प्रतिरूपं प्रतिष्ठितं रूपमस्य तथोक्तः । सर्वान्तर्यामीति फलितोऽर्थः । तदस्य रूपमिति । चक्षिङो भावे ल्युट् । प्रतिचक्षणं व्यवहारः । व्यवहाराय यद्व्यवहर्तव्यमिति यावत् । तत्सर्वमस्य परमात्मनो रूपं शरीरमित्यर्थः । यद्वा । तत्तस्मादिति वाऽर्थः । यस्मादयं प्रतिरूपो बभूव तस्मादेव सर्वं तच्छरीरमित्यर्थः । ननु शरीरसंबन्धस्य कर्माधीनत्वात्कर्मारब्धस्य व्यवह्रियमाणप्रपञ्चस्य कथं तद्रूपत्वमित्याशङ्कयाऽऽह——इन्द्रो मायाभिरिति । इन्द्रः परमेश्वरः । इदि परमैश्वर्ये इति हि धातुः । मायाभिः । 'माया वयुनं ज्ञानं' इति नैघण्टकाः । मायाभिः सकल्परूपज्ञानैर्विचित्राश्चर्यकारित्वाज्ज्ञानरूपत्वाच्च मायाशब्दितत्वं सङ्कल्पस्योपपद्यते । पुरुरूपो बहुशरीरः स्वेच्छागृहीतानन्तदेह इति यावत् । ननु रूपं रूपं प्रतिरूपो बभूवेत्येतदयुक्तम् । अनन्तेषु ब्रह्मादिस्तम्बपर्यन्तेषु रूपेष्वेकस्य परमात्मनस्तत्तदन्तर्वर्तितया अवस्थानासम्भवादित्याशङ्क्याऽऽह — युक्ता ह्यस्येति । शता शतानीत्यर्थः । सुपां सुलुगित्यादिनाऽऽकारादेशः । अस्यानन्तप्रपञ्चस्य युक्ता योग्या इत्यर्थः । तदनुरूपसंख्याशालिनः शतानि दश हरयः शतानि दशानन्ता इति यावत् । अनन्ता हरयः । अन्तर्यामिविग्रहानन्त्यादनन्ता हरय इत्युक्तिरिति द्रष्टव्यम् । अयमिति । अयमेक एव हरिः शतानि सहस्राणि बहूनि हरयो भवन्ति । विचित्रशक्तेः परमात्मनः काऽनुपपत्तिरिति भावः । एवमियता प्रबन्धेन निर्दिष्टं ब्रह्मेत्युपसंहरति——तदेतद्ब्रह्मेति । ब्रह्मशब्दितत्रिविधपरिच्छेदराहित्यमुपपादयति —— अपूर्वमनपरम् । पूर्वोत्तरकालशून्यं कालापरिच्छिन्नमित्यर्थः । अनन्तरमबाह्यम् । देशपरिच्छेदशून्यमित्यर्थः । बाह्याभ्यन्तरव्यवहारानर्हमिति भावः । सर्वोत्कृष्टत्वलक्षणवस्तुपरिच्छेदाभावमुपपादयति —— अयमात्मा ब्रह्म । सर्व-

नियन्तृतया सर्वोत्कृष्टमित्यर्थः । यद्वा । सर्वात्मत्वादेवमिद नेति निर्देशानर्हत्वलक्षणवस्तुपरिच्छेदोऽत्र विवक्षितो द्रष्टव्यः । सर्वानुभू । सर्वज्ञ. । इद जगत्कारणत्वनियन्तृत्वाक्षिप्तसर्वशक्तित्वादिगुणानामप्युपलक्षण द्रष्टव्यम् । इत्यनुशासनम् । अनुशासनमुपदेश ।

रग

( ४ ) 'इन्द्रो मायाभि पुरुरूप ईयते' इत्यत्रापि विचित्राः शक्तयोऽभिधीयन्ते । अत एव हि भूरि त्वष्टेह राजतीत्युच्यते । न हि मिथ्याभूतः काश्चिद्विराजते । 'मम माया दुरत्यया' ( भ गी. ७।१४ ) इत्यत्रापि गुणमयीति वचनात्सैव त्रिगुणात्मिका प्रकृतिरुच्यत इति न श्रुतिभिः सदसदनिर्वचनीयाज्ञानप्रतिपादनम् ।

१।१।१ ( पृ १०२ )

अभेदानिर्देशास्तु पृथक्सिद्ध्यनर्हविशेषणाना विशेष्यपर्यन्तत्वमाश्रित्य मुख्यत्वेनोपपद्यन्ते । 'तत्त्वमसि' ( छाउ ६।८।७ ) 'अयमात्मा ब्रह्म' इत्यादिषु तच्छब्दब्रह्मशब्दवत्त्वमयमात्मेति शब्दा अपि जीवशरीरकब्रह्मवाचकत्वेनैकार्थाभिधायित्वादिति ।

रामानुज. २।३।४५

( ५ ) भगवतो रूप रूप प्रति जीवाख्य. प्रतिबिम्बो बभूव । बभूवेति सदेव सोम्येदमग्र आसीदितिवदनादित्वार्थे । सुखदा सर्वभूताना पृथ्वी मधुवदुच्यते । 'पृथिव्याश्चैव भूतानि तथा सर्वाश्च देवताः । पृथिव्यादिषु देवेषु शरीरादिषु च स्थितः । एक एव परो विष्णुर्हयशीर्षस्वरूपधृक् । अनन्ततेजा नित्यश्च स एव ब्रह्म सर्वगम् । तदेव गुणपूर्णत्वाद्ब्रह्म सर्वमनूनतः । आत्मनामा परो विष्णुः सर्वगो य. प्रकीर्तित । स एव हयशीर्षाख्यस्त्वधिदैवादिषु स्थित. । अराणामाश्रयौ यद्वद्धिरन्तः-प्रतिष्ठितौ । नाभिनेमी तथा विष्णुर्जीवानामाश्रयः स्थितः । स एव दशधा प्रोक्तो विष्णुर्मत्स्यादिरूपकः । शत नारायणाद्यात्मा विश्वाद्यात्मा सहस्रकः । परादि रूपो बहुधा सोऽनन्तात्माऽजितादिक' । भूताख्या सर्वजीवानां विरिञ्चानां च सर्वशः । आत्मनाम्नां स एवैको राजाधिपतिरेव च । स्वामित्वाद्राजशब्दोऽयमाधिक्यात्पालनात्तथा । अधिपश्चेति सप्रोक्त' पुरुषः पुरुपस्थिते' । पुराख्येष्वेव देहेषु ह्यपुर्यपि वसत्यसौ । नानेन किञ्चिदव्याप्त नानेनाच्छादित न च । नैवास्मात्पूर्वक किंचिन्नैवास्मादपर तथा । सर्वस्माद्बाह्यतश्चासौ सवस्मादन्तरस्तथा । व्याप्तेरात्मेति सप्रोक्तो ब्रह्मेति गुणपूर्तित. । स सर्वस्यापरोक्षज्ञ इति वेदानुशासनम् । विरिञ्चस्त्वात्मशब्दोक्तो मानुष मनुरुच्यते । सत्य च स्तनयित्नुश्च वायो रूपान्तरे स्मृते । यत एव स्वरे सत्ये जीवे चाध्यात्मसस्थिता. । नेषा नियामको विष्णुस्तत्र तत्रैव सस्थित. । जीवे स्थितश्चात्मनामा सौवरः स्वरगः स्मृत. । सत्यग सत्यनामाऽसौ धर्मगो धर्म एव च । मनो' स्वायभुवस्याख्या मानुषेत्येव देहिषु । बहिश्च तद्गतो विष्णुर्मानुषेत्येव कथ्यते । प्रातिश्रुत्क इति श्रोत्रे तैजसो विद्युति स्थित' । इति नानाविधैर्नामसमूहैर्विष्णुरिज्यते । दध्यङ्ङाथर्वणोऽश्विभ्यामेता विद्यामदात्पुरा । हयग्रीवब्रह्मविद्येत्येषा ब्रह्मादिभिर्धृता ॥' इति । प्रत्यैरयत प्रति ( सघत्त ) समधत्तम् । ऋतायन् सत्य कुर्वन् । कक्ष्य नारायणकवचम् । त्वाष्ट्र त्वष्टुः पुत्रेण विश्वरूपेणेन्द्रायोक्त सनये लाभाय । दस कर्म । स्तनयित्नुर्वृष्टिमिव । तस्या विद्याया परस्योक्ताया तव शिरश्छेत्स्यामीतीन्द्रेण दधीच्य प्रत्युक्ते सोऽश्विभ्यामावा ब्रवीहीत्युक्त इन्द्रेणोक्तमाह । तदाऽश्विभ्यां पाव इत्युक्त्वा तच्छिरः छित्वाऽन्यत्र निधाय अश्वशिरः सधितम् । तेन विद्यायामुक्तायां तस्मिन्निन्द्रेण च्छिन्ने पूर्वशिरः सधितम् । पूर्वं जानन्नपीन्द्रः पश्चाद्विश्वरूपाच्छुश्रावेति पुनर्नवत्वायेति न विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामित्यनेन विरोध ।

* मध्व.

( ६ ) 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते । दत्त दूर्वासस सोममात्मेशब्रह्मसभवान् । चेतनस्तु द्विधा प्रोक्तो जीव आत्मेति च प्रभो । जीवा ब्रह्मादयः प्रोक्ता आत्मैकस्तु जनार्दनः । इतरेष्वात्मशब्दस्तु सोऽपचारः प्रयुज्यते । तस्यात्मनो निर्गुणस्य ज्ञानान्मोक्ष उदाहृतः । सगुणास्त्वपरे प्रोक्तास्तज्ज्ञानान्नैवमुच्यते । परो हि पुरुषो

* २।५ इत्येतस्य मधुब्राह्मणस्य सर्वस्यैव भावार्थव्याख्यानरूपमिद मध्वभाष्य खण्डभेदेनाविभज्यैव संग्रहेणास्मिन् खण्डे समुद्धृत आसन्निधानजन्यस्यार्थानुसधानस्य परिहारार्थम् । इति नास्य १९ तमस्य खण्डस्यैव व्याख्यानमित्यवधार्यम् ।

विष्णुस्तस्मान्मोक्षस्तत. स्मृतः ॥ ' इति पाद्मे ।

ब्रमध्व १।१।७

उपनिषद्विद्यावशः

अथ व९श । पौतिमाष्यो गौपवनात् । गौपवन. पौतिमाष्यात् । पौतिमाष्यो गौपवनात् । गौपवन कौशिकात् । कौशिक. कौण्डिन्यात् । कौण्डिन्य शाण्डिल्यात् । शाण्डिल्य कौशिकाच्च गौतमाच्च । गौतम — ॥

आग्निवेश्यात् । आग्निवेश्य शाण्डिल्याच्चानभिम्लाताच्च । अनभिम्लात आनभिम्लातात् । आनभिम्लात आनभिम्लातात् । आनभिम्लातो गौतमात् । गौतम' सैतवप्राचीनयोग्याभ्याम् । सैतवप्राचीनयोग्यौ पाराशर्यात् । पारशर्यो भारद्वाजात् ॥

(१) बृउ २।६।१—३, शब्रा १४।५।५।२०-२२ अथ व९श बैजवापायनात् । बैजवापायन (अथ व९श । तदिद वय९ शौर्पणाय्याच्छौर्पणाय्यो गौतमाद्गौतमो वात्स्याद्वात्स्यो वात्स्याच्च पाराशर्याच्च पाराशर्य साकृत्याच्च भारद्वाजाच्च भारद्वाज औदवाहेश्च शाण्डिल्याच्च शाण्डिल्यो वैजवापाच्च गौतमाच्च गौतमो वैजवापायनाच्च वैष्टपुरेयाच्च वैष्टपुरेय शाण्डिल्याच्च रौहिणायनाच्च रौहिणायन शौनकाच्चात्रेयाच्च रैभ्याच्च रैभ्य पौतिमाष्यायणाच्च कौण्डिन्यायनाच्च कौण्डिन्यायन कौण्डिन्यात्कौण्डिन्य कौण्डिन्यात्कौण्डिन्य कौण्डिन्याच्चाग्निवेश्याच्च ॥ अग्निवेश्य सैतवात्सैतव पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजो वैजवापायनाद्वैजवापायन ) ज्जातूकर्ण्य आसुरायणाच्च ( ज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च ) विंप्रचित्ते । विप्रचित्ति ( विंप्रजित्ते । विप्रजित्ति ), रग ( पौतिमाष्यात् । पौतिमाष्यो गौपवनात् । गौपवन ० ) ( आनभिम्लातात् । आनभिम्लात आनभिम्लातात् । आनभिम्लातो० ) द्वाजाच्च गौ ( द्वाजाद्गौ ) ( गौतमात् । गौतमो० ) कुमारहारितात् । कुमारहारितो (कुमारहारीतात् । कुमारहारीतो ) सनगात् । सनग ( सनकात् । सनक ), मध्व (आनभिम्लातात् । आभिम्लात०) त्रैवणे । त्रैवणिरौपजन्धनें । औपजन्धनि ( त्रैवर्णे । त्रैवर्णिरौपचधने औपचधनि ) ( गौतमात् । गौतमो० ) सनगात् । सनग ( सनकात् । सनक )

भारद्वाजो भारद्वाजाच्च गौतमाच्च । गौतमो भारद्वाजात् । भारद्वाज पाराशर्यात् । पाराशर्यो बैजवापायनात् । बैजवापायन कौशिकायने । कौशिकायनि —॥

घृतकौशिकात् । घृतकौशिक पाराशर्यायणात् । पाराशर्यायण पाराशर्यात् । पाराशर्यो जातूकर्ण्यात् । जातूकर्ण्य आसुरायणाच्च यास्काच्च । आसुरायणस्त्रैवणे. । त्रैवणिरौपजन्धने । औपजन्धनिरासुरेः । आसुरिर्भारद्वाजात् । भारद्वाज आत्रेयात् । आत्रेयो माण्टे । माण्टिर्गौतमात् । गौतमो गौतमात् । गौतमो वात्स्यात् । वात्स्य शाण्डिल्यात् । शाण्डिल्य कैशोर्यात्काप्यात् । कैशोर्य' काप्यः कुमारहारितात् । कुमारहारितो गालवात् । गालवो विदर्भीकौण्डिन्यात् । विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवात् । वत्सनपाद्बाभ्रव पथ सौभरात् । पन्थाः सौभरोऽयास्यादाङ्गिरसात् । अयास्य आङ्गिरस आभूतेस्त्वाष्ट्रात् । आभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्रात् । विश्वरूपस्त्वाष्ट्रोऽश्विभ्याम् । अश्विनौ दधीच आथर्वणात् । दध्यङ्ङाथर्वणोऽथर्वणो दैवात् । अथर्वा दैवो मृत्यो प्राध्व९सनात् । मृत्युः प्राध्व९सन प्रध्व९सनात् । प्रध्व९सन एकर्षे । एकर्षिर्विप्रचित्ते' । विप्रचित्तिर्व्यष्टे. । व्यष्टिः सनारो । सनारु सनातनात् । सनातन' सनगात् । सनग. परमेष्ठिन' । परमेष्ठी ब्रह्मण । ब्रह्म स्वयंभु । ब्रह्मणे नम' ॥

( १ ) अथेदानीं ब्रह्मविद्यार्थस्य मधुकाण्डस्य वशः स्तुत्यर्थो ब्रह्मविद्याया. । मन्त्रश्चाय स्वाध्यायार्थो जपार्थश्च । तत्र वश इव वशः—यथा वेणुः वशः पर्वणः पर्वणो हि भिद्यते तद्वत् अग्रात्प्रभृति आ मूलप्राप्तेः अय वश' । अध्यायचतुष्टयस्य आचार्यपरम्पराक्रमो वश इत्युच्यते । तत्र प्रथमान्तः शिष्यः पञ्चम्यन्त आचार्यः । परमेष्ठी विराट् । ब्रह्मणो हिरण्यगर्भात् । तत पर आचार्यपरम्परा नास्ति । यत्पुनर्ब्रह्म, तन्नित्य स्वयभु, तस्मै ब्रह्मणे स्वयभुवे नमः ।

* शकर.

* रग शकरवद्भाव ।

( २ ) 'पाराशर्यो जातूकर्ण्यं पराशरसुतावुभौ। विप्रायामेव भार्यायां तृतीय कृष्ण एव च ॥' इति ब्रह्माण्डे। 'परस्य ब्रह्मणो विष्णोर्हयशीर्षादधीतवान्। ब्रह्मविद्यामिमा ब्रह्मा तत. सनक एव च ॥' इति गारुडे। मध्व.

इति द्वितीयोऽध्यायः ॥

---

## तृतीयोऽध्यायः

### जनकस्य याज्ञवल्क्यप्रमुखा ब्रह्मवादिसभा

( अश्वलप्रश्न )

अतिमोक्षाख्योपासना मृत्यो अहोरात्रादिकाल विशेषाच्च अतिमोक्ष, स्वर्गाक्रमणसाधन

मन

**जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे। तत्र ह कुरुपञ्चालाना ब्राह्मणा अभिसमेता बभूवु। तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव। क स्विदेषां ब्राह्मणानामनूचानतम इति। स ह गवा५ सहस्रमवरुरोध। दश दश पादा एकैकस्या. शृङ्गयोराबद्धा बभूवु.॥**

'जनको ह वैदेह.' इत्यादि याज्ञवल्कीय काण्डमारभ्यते। उपपत्तिप्रधानत्वात् अतिक्रान्तेन मधुकाण्डेन समानार्थत्वेऽपि सति न पुनरुक्तता। मधुकाण्ड हि आगमप्रधानम्। आगमोपपत्ती हि आत्मैकत्वप्रकाशनाय प्रवृत्ते शक्नुत करतलगतबिल्वमिव दर्शयितुम्। 'श्रोतव्यो मन्तव्य.' इति ह्युक्तम्। तस्मादागमार्थस्यैव परीक्षापूर्वक निर्धारणाय याज्ञवल्कीय काण्डमुपपत्तिप्रधानमारभ्यते। आख्यायिका तु विज्ञानस्तुत्यर्था उपायविधिपरा वा। प्रसिद्धो ह्युपायो विद्वद्भि' शास्त्रेषु च दृष्टः — दानम्। दानेन ह्युपनमन्ते प्राणिनः। प्रभूत हिरण्य गोसहस्रदान च इहोपलभ्यते। तस्मात् अन्येनापि शास्त्रेण विद्याप्राप्त्युपायदानप्रदर्शनार्था आख्यायिका आरब्धा। अपि च तद्विद्यसयोग. तैश्च सह वादकरण विद्याप्राप्त्युपायो न्यायविद्याया दृष्ट.। तच्च अस्मिन्नध्याये प्राबल्येन प्रदर्श्यते। प्रत्यक्षा च विद्वत्सयोगे प्रज्ञावृद्धि.। तस्मात् विद्याप्राप्त्युपायप्रदर्शनार्थैव आख्यायिका।

जनको नाम ह किल सम्राट् राजा बभूव विदेहानाम्। तत्र भवो वैदेह। स च बहुदक्षिणेन यज्ञेन — शाखान्तरप्रसिद्धो वा बहुदक्षिणो नाम यज्ञ., अश्वमेधो वा दक्षिणाबाहुल्यात् बहुदक्षिण इहोच्यते — तेनेजे अयजत्। तत्र तस्मिन्यज्ञे निमन्त्रिता दर्शनकामा वा कुरूणा देशाना पञ्चालाना च ब्राह्मणा — तेषु हि विदुषा बाहुल्य प्रसिद्धम् — अभिसमेता' अभिसगता बभूवु। तत्र महान्त विद्वत्समुदाय दृष्ट्वा तस्य ह किल जनकस्य वैदेहस्य यजमानस्य, को नु खल्वत्र ब्रह्मिष्ठ इति विशेषेण ज्ञातुमिच्छा विजिज्ञासा, बभूव। कथम्? कःस्वित् को नु खलु एषा ब्राह्मणाना अनूचानतम.—सर्वे इमेऽनूचाना, क. स्विदेषामतिशयेनानूचान इति। स ह अनूचानतमविषयोत्पन्नजिज्ञास. सन् तद्विज्ञानोपायार्थं गवा सहस्र प्रथमवयसा अवरुरोध गोष्ठेऽवरोध कारयामास। किंविशिष्टास्ता गावोऽवरुद्धा इत्युच्यते — पलचतुर्थभाग पादः सुवर्णस्य, दश दश पादा. एकैकस्या गो. शृङ्गयोः आबद्धा बभूवुः, पञ्च पञ्च पादा एकैकस्मिन् शृङ्गे। * शकर.

**तान्होवाच। ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठ. स एता गा उदजतामिति। ते ह ब्राह्मणा न दधृषुः। अथ ह याज्ञवल्क्य स्वमेव ब्रह्मचारिणमुवाच। एता' सोम्योदज सामश्रवा३ इति। ता होदाचकार। ते ह ब्राह्मणाश्चुक्रुधु.। कथ नो ब्रह्मिष्ठो ब्रुवीतेति। अथ ह जनकस्य वैदेहस्य होताऽश्वलो बभूव। स हैनं पप्रच्छ। त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ इति। स होवाच। नमो वयं**

(१) बृउ ३।१।१, शब्रा १४।६।१।१, २, ब्रह्माकर ३।४।३, भास्कर ३।४।३ यज्ञेनेजे ( यजते ), निंबार्क ३।४।३, मध्व पञ्चालाना ( पाञ्चालाना ), वल्लभ ३।४।४, १९, विज्ञान ३।४।३, बलदेव. ३।४।३

* रंग' शकरवत्।

(१) बृउ ३।१।२, शब्रा १४।६।१।२–४ सोम्यो ( साम्यो ) कथ नो ( कथं नु नो ), मध्व. ब्रुवीतेति ( ब्रवीतीति )

ब्रह्मिष्ठाय कुर्मो गोकामा एव वयꣳस्म इति । तꣳह तत एव प्रष्टुं दध्रे होताऽश्वल ॥

( १ ) गा एवमवरुध्य ब्राह्मणास्तान्होवाच, हे ब्राह्मणा भगवन्त. इत्यामन्त्र्य — य वः युष्माक ब्रह्मिष्ठ — सर्वे यूय ब्रह्माण, अतिशयेन युष्माक ब्रह्मा य — स एता गा उदजता उत्कालयतु स्वगृह प्रति । ते ह ब्राह्मणा न दधृषु —ते ह किल एवमुक्ता ब्राह्मणाः ब्रह्मिष्ठतामात्मन. प्रतिज्ञातु न दधृषु, न प्रगल्भाः सवृत्ता । अप्रगल्भभूतेषु ब्राह्मणेषु अथ ह याज्ञवल्क्य स्व आत्मीयमेव ब्रह्मचारिण अन्तेवासिन उवाच — एता. गा. हे सोम्य उदज उद्गमय अस्मद्गृहान्प्रति, हे सामश्रव — सामविधिं हि शृणोति, अतः अर्थाच्चतुर्वेदो याज्ञवल्क्य. । ता गा. ह उदाचकार उत्कालितवानाचार्यगृह प्रति । याज्ञवल्क्येन ब्रह्मिष्ठपणस्वीकरणेन आत्मनो ब्रह्मिष्ठता प्रतिज्ञातेति ते ह चुक्रुधु. क्रुद्धवन्तो ब्राह्मणा । तेषा क्रोधाभिप्रायमाचष्टे—कथ न. अस्माक एकैकप्रधानाना ब्रह्मिष्ठोऽस्मीति ब्रुवीतेति । अथ ह एव क्रुद्धेषु ब्राह्मणेषु जनकस्य यजमानस्य होता ऋत्विक् अश्वलो नाम बभूव आसीत् । स एन याज्ञवल्क्य — ब्रह्मिष्ठाभिमानी राजाश्रयत्वाच्च धृष्ट. — याज्ञवक्य पप्रच्छ पृष्टवान् । कथम्? त्व नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ इति— प्लुति. भर्त्सनार्था । स होवाच याज्ञवल्क्यः — नमस्कुर्मो वय ब्रह्मिष्ठाय, इदानीं गोकामा स्मो वयमिति । त ब्रह्मिष्ठप्रतिज्ञ सन्त तत एव ब्रह्मिष्ठपणस्वीकरणात् प्रष्टु दध्रे धृतवान्मनो होता अश्वल. । शकर

( २ ) कथ नोऽस्माननादृत्याह ब्रह्मिष्ठ इति वदेदित्यर्थ । ब्रह्मिष्ठाय नमस्कुर्मो नास्माभिर्ब्रह्मिष्ठत्वाभिमानाद्गावो नीता गोकामा एवेति सोपहासमुक्तवानित्यर्थः । तत एव सोपहासवचनादश्वलः प्रष्टुमवस्थित. । धृङ् अवस्थान इति हि धातुः । *रग

याज्ञवल्क्येति होवाच । यदिदꣳ सर्वं मृत्युनाऽऽप्तꣳ सर्वं मृत्युनाऽभिपन्नं केन यजमानो मृत्योराप्तिमतिमुच्यत इति । होत्रर्त्विजाऽग्निना वाचा । वाग्वै यज्ञस्य होता । तद्येय वाक्सोऽयमग्नि· स होता स मुक्ति साऽतिमुक्ति ॥

( १ ) याज्ञवल्क्येति होवाच । तत्र मधुकाण्डे पाङ्क्तेन कर्मणा दर्शनसमुच्चितेन यजमानस्य मृत्योरत्ययो व्याख्यातः उद्गीथप्रकरणे सक्षेपत., तस्यैव परीक्षाविषयोऽयमिति तद्गतदर्शनविशेषार्थोऽय विस्तर आरभ्यते। यदिद साधनजात अस्य कर्मणः ऋत्विगग्न्यादि मृत्युना कर्मलक्षणेन स्वाभाविकासङ्गसहितेन आप्त व्याप्त, न केवल व्याप्त अभिपन्न च मृत्युना वशीकृत च — केन दर्शनलक्षणेन साधनेन यजमान मृत्योराप्तिमति मृत्युगोचरत्वमतिक्रम्य मुच्यते स्वतन्त्र. मृत्योरवशो भवतीत्यर्थः । ननु उद्गीथ एवाभिहित येनातिमुच्यते मुख्यप्राणात्मदर्शनेनेति — बाढमुक्तम् । योऽनुक्तो विशेषस्तत्र, तदर्थोऽयमारम्भ इत्यदोषः । होत्रा ऋत्विजा अग्निना वाचा इत्याह याज्ञवल्क्य. । एतस्यार्थं व्याचष्टे — कः पुनर्होता येन मृत्युमतिक्रामतीति उच्यते — वाग्वै यज्ञस्य यजमानस्य, 'यज्ञो वै यजमानः' इति श्रुतेः, यज्ञस्य यजमानस्य या वाक् सैव होता अधियज्ञे । कथम्? तत् तत्र येय वाक् यज्ञस्य यजमानस्य, सोऽयं प्रसिद्धोऽग्नि अधिदैवतम् । तदेतत्त्र्यन्नप्रकरणे व्याख्यातम् । स चाग्नि होता, 'अग्निर्वै होता' इति श्रुतेः । यदेतत् यज्ञस्य साधनद्वय — होता च ऋत्विक् अधियज्ञ, अध्यात्म च वाक्, एतदुभय साधनद्वय परिच्छिन्न मृत्युना आप्त स्वाभाविकाज्ञानासङ्गप्रयुक्तेन कर्मणा मृत्युना प्रतिक्षणमन्यथात्वमापद्यमान वशीकृतम् । तत् अनेनाधिदैवतरूपेणाग्निना दृश्यमान यजमानस्य यज्ञस्य मृत्योरतिमुक्तये भवति । तदेतदाह — स मुक्तिः स होता अग्नि मुक्तिः अग्निस्वरूपदर्शनमेव मुक्तिः । यदैव साधनद्वयमग्निरूपेण पश्यति, तदानीमेव हि स्वाभाविकादासङ्गान्मृत्योर्विमुच्यते आध्यात्मिकात्परिच्छिन्नरूपात् आधिभौतिकाच्च । तस्मात् स होता अग्निरूपेण दृष्टः मुक्तिः मुक्तिसाधन यजमानस्य । सा अतिमुक्ति.— यैव च मुक्ति सा अतिमुक्ति· अतिमुक्तिसाधनमित्यर्थ. । साधनद्वयस्य परिच्छिन्नस्य या अधिदैवतरूपेण अपरिच्छिन्नेन अग्निरूपेण दृष्टिः, सा मुक्तिः । या असौ मुक्तिः

* शेष शकरवत् ।

(१) बृउ ३।१।३, शब्रा १४।६।१।५ स मुक्ति ( सा मुक्ति ), रग भिपन्नम् ( भिसपन्नम् )

अधिदैवतदृष्टि. सैव— अध्यात्माधिभूतपरिच्छेदविषयाऽऽस्पदं मृत्युमतिक्रम्य अधिदेवतात्वस्य अग्निभावस्य प्राप्तिर्या फलभूता सा अतिमुक्तिरित्युच्यते । तस्या अतिमुक्तेर्मुक्तिरेव साधनमिति कृत्वा सा अतिमुक्तिरित्याह । यजमानस्य हि अतिमुक्ति· वागादीनामग्न्यादिभावः इत्युद्गीथप्रकरणे व्याख्यातम् । तत्र सामान्येन मुख्यप्राणदर्शनमात्र मुक्तिसाधनमुक्त, न तद्विशेष । वागादीनामग्न्यादिदर्शनमिह विशेषो वर्ण्यते । मृत्युप्राप्त्यतिमुक्तिस्तु सैव फलभूता, या उद्गीथब्राह्मणेन व्याख्याता — 'मृत्युमतिक्रान्तो दीप्यते' इत्याद्या । शंकर.

( २ ) यद्वा । व्याप्तमित्यस्य विवरणमभिपन्नमिति । कर्माङ्गभूते होतर्यग्न्यभिन्नत्वेन ध्याताया वाचो दृष्टीकृताया कर्मणो वीर्यवत्तरतया ब्रह्मोपासनद्वारा जीवदशायामेव विश्लिष्टाश्लिष्टपूर्वोत्तरदुरित(त)दुरत्वलक्षणा मुक्तिर्भवति शरीरवियोगानन्तर प्रकृत्यतिक्रान्तपदाधिरोहणलक्षणाऽतिमुक्तिर्भवतीत्यर्थ । तद्येय तस्या होतर्यध्यस्यमाना वागित्यर्थ· । स मुक्ति. साऽतिमुक्तिरिति कारणे कार्योपचार· ।

* रंग.

याज्ञवल्क्येति होवाच । यदिदँ सर्वमहोरात्राभ्यामाप्तँ सर्वमहोरात्राभ्यामभिपन्नं केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यत इति । अध्वर्युणर्त्विजा चक्षुषादित्येन । चक्षुर्वै यज्ञस्याध्वर्यु. । तद्यदिदं चक्षु सोऽसावादित्य सोऽध्वर्यु. स मुक्ति साऽतिमुक्ति ॥

( १ ) याज्ञवल्क्येति होवाच । स्वाभाविकात् अज्ञानासङ्गप्रयुक्तात् कर्मलक्षणान्मृत्योः अतिमुक्तिर्व्याख्याता । तस्य कर्मण. सासङ्गस्य मृत्योराश्रयभूताना दर्शपूर्णमासादिकर्मसाधनाना यो विपरिणामहेतु. कालः, तस्मात्कालात् पृथक् अतिमुक्तिर्वक्तव्येतीदमारभ्यते, क्रियानुष्ठानव्यतिरेकेणापि प्राक् ऊर्ध्वं च क्रियाया साधनविपरिणामहेतुत्वेन, व्यापारदर्शनात्कालस्य । तस्मात् पृथक् कालादतिमुक्तिर्वक्तव्येत्यत आह— यदिद सर्वमहोरात्राभ्यामाप्त, स च कालो द्विरूप. — अहोरात्रादिलक्षणः तिथ्यादिलक्षणश्च । तत्र अहोरात्रादिलक्षणात्तावदतिमुक्तिमाह — अहोरात्राभ्या हि सर्वं जायते वर्धते विनश्यति च, तथा यज्ञसाधन च—यज्ञस्य यजमानस्य चक्षु अध्वर्युश्च । शिष्टान्यक्षराणि पूर्ववन्नेयानि। यजमानस्य चक्षु. अध्वर्युश्च साधनद्वय अध्यात्माधिभूतपरिच्छेद हित्वा अधिदैवतात्मना दृष्ट यत् स मुक्तिः —सोऽध्वर्यु आदित्यभावेन दृष्टो मुक्तिः । सैव मुक्तिरेव अतिमुक्तिरिति पूर्ववत् । आदित्यात्मभावमापन्नस्य हि नाहोरात्रे सभवत· । शंकर.

( २ ) अहोरात्रयोराप्तिर्नाम कतिपयाहोरात्रैर्विनश्वरत्वम् । शिष्ट पूर्ववत् । रंग.

याज्ञवल्क्येति होवाच । यदिदँ सर्वं पूर्वपक्षापरपक्षाभ्यामाप्तँ सर्वं पूर्वपक्षापरपक्षाभ्यामभिपन्नं केन यजमान· पूर्वपक्षापरपक्षयोराप्तिमतिमुच्यत इति । उद्गात्रर्त्विजा वायुना प्राणेन । प्राणो वै यज्ञस्योद्गाता । तद्योऽयं प्राण स वायुः स उद्गाता स मुक्ति साऽतिमुक्ति ॥

( १ ) इदानीं तिथ्यादिलक्षणादतिमुक्तिरुच्यते — यदिद सर्वम् —अहोरात्रयोरविशिष्टयोरादित्य कर्ता, न प्रतिपदादीनां तिथीनाम् । तासा तु वृद्धिक्षयोपगमनेन प्रतिपत्प्रभृतीना चन्द्रमाः कर्ता । अतः तदापत्त्या पूर्वपक्षापरपक्षात्ययः, आदित्यापत्त्या अहोरात्रात्ययवत् । तत्र यजमानस्य प्राणो वायु., स एवोद्गाता—इत्युद्गीथब्राह्मणऽवगत, 'वाचा च ह्येव स प्राणेन चोदगायत्' इति च निर्धारितम् । 'अथैतस्य प्राणस्यापः शरीरं ज्योतीरूपमसौ चन्द्रः' इति च । प्राणवायुचन्द्रमसामेकत्वात् चन्द्रमसा वायुना चोपसहारे न कश्चिद्विशेषः । एवमन्यमाना श्रुतिः वायुना अधिदैवतरूपेणोपसहरति । अपि

* शेष सरलार्थम् ।

(१) बृउ ३।१।४, शब्रा १४।६।१।६ स मुक्ति ( सा मुक्ति ), रंग भ्यामाप्तँ ( भ्यां व्याप्तँ ) भिपन्नम् ( भिसपन्नम् )

(१) बृउ ३।१।५, शब्रा १४।६।१।७ इति । उद्गात्रर्त्विजा ... साऽतिमुक्ति ( इति । ब्रह्मणर्त्विजा मनसा चन्द्रेण । मनो वै यज्ञस्य ब्रह्मा । तद्यदिद मनः सोऽसौ चन्द्र स ब्रह्मा सा मुक्ति. साऽतिमुक्ति ), बलदेव. २।४।९

च वायुनिमित्तौ हि वृद्धिक्षयौ चन्द्रमस. । तेन तिथ्यादिलक्षणस्य कालस्य कर्तुरपि कारयिता वायुः । अतो वायुरूपापन्न तिथ्यादिकालादतीतो भवतीत्युपपन्नतर भवति । तेन श्रुत्यन्तरे चन्द्ररूपेण दृष्टि. मुक्तिरतिमुक्तिश्च । इह तु काण्वाना साधनद्वयस्य तत्कारणरूपेण वाय्वात्मना दृष्टिः मुक्तिरतिमुक्तिश्चेति न श्रुत्योर्विरोध । शाकर

( २ ) पूर्वपक्षापरपक्षयोरासिर्नाम कतिपयपक्षविनश्वरत्वम् । शिष्ट पूर्ववत् । रग

**याज्ञवल्क्येति होवाच । यदिदमन्तरिक्षमनारम्बणमिव केनाक्रमेण यजमान स्वर्गं लोकमाक्रमत इति । ब्रह्मणर्त्विजा मनसा चन्द्रेण । मनो वै यज्ञस्य ब्रह्मा । तद्यदिद मन सोऽसौ चन्द्रः स ब्रह्मा स मुक्ति साऽतिमुक्तिरित्यतिमोक्षा । अथ सपद ॥**

( १ ) मृत्यो कालात् अतिमुक्तिर्व्याख्याता यजमानस्य । सोऽतिमुच्यमान. केनावष्टम्भेन परिच्छेदविषय मृत्युमतीत्य फल प्राप्नोति—अतिमुच्यते —– इत्युच्यते — यदिद प्रसिद्ध अन्तरिक्ष आकाश. अनारम्बण अनालम्बन इवशब्दात् अस्त्येव तत्रालम्बन, तत्तु न ज्ञायते इत्यभिप्राय । यत्तु तत् अज्ञायमानमालम्बन, तत् सर्व नाम्ना केनेति पृच्छ्यते, अन्यथा फलप्राप्तेरसभवात् । येनावष्टम्भेन आक्रमेण यजमान कर्मफल प्रतिपद्यमान. अतिमुच्यते, किं तदिति प्रश्नविषय· । केन आक्रमेण यजमान· स्वर्गं लोकमाक्रमत इति —– स्वर्गं लोक फल प्राप्नोति अतिमुच्यत इत्यर्थ. । ब्रह्मणा ऋत्विजा मनसा चन्द्रेणेत्यक्षरन्यासः पूर्ववत् । तत्राध्यात्म यज्ञस्य यजमानस्य यदिद प्रसिद्ध मनः, सोऽसौ चन्द्र अधिदैवम् । मनोऽध्यात्म चन्द्रमा अधिदैवतमिति हि प्रसिद्धम् । स एव चन्द्रमा ब्रह्मा ऋत्विक् तेन —– अधिभूत ब्रह्मणः परिच्छिन्न रूप अध्यात्म च मनस. एतत् द्वय अपरिच्छिन्नेन चन्द्रमसो रूपेण पश्यति । तेन चन्द्रमसा मनसा अवलम्बनेन कर्मफल स्वर्ग लोक प्राप्नोति अतिमुच्यते इत्यभिप्रायः । इतीत्युपसहारार्थं वचनम् । इत्येवप्रकारा मृत्योरतिमोक्षा. । सर्वाणि हि दर्शनप्रकाराणि यज्ञाङ्गविषयाण्यस्मिन्नवसरे उक्तानीति कृत्वा उपसहार. —– इत्यतिमोक्षा. — एवप्रकारा अतिमोक्षा इत्यर्थ । अथ सपद. —– अथ अधुना सपद उच्यन्ते । सपन्नाम केनचित्सामान्येन अग्निहोत्रादीनां कर्मणा फलवता तत्फलाय सपादन, सपत्फलस्यैव वा । सर्वोत्साहेन फलसाधनानुष्ठाने प्रयतमानाना केनचिद्वैगुण्येनासभव. । तत् इदानीमाहिताग्नि सन् यत्किंचित्कर्म अग्निहोत्रादीना यथासभवमादाय आलम्बनीकृत्य कर्मफलविद्वत्ताया सत्या यत्कर्मफलकामो भवति, तदेव सपादयति । अन्यथा राजसूयाश्वमेधपुरुषमेधसर्वमेधलक्षणानामधिकृताना त्रैवर्णिकानामपि असभव. —– तेषा तत्पाठ स्वाध्यायार्थ एव केवल. स्यात्, यदि तत्फलप्राप्त्युपाय· कश्चन न स्यात् । तस्मात् तेषा सपदैव• तत्फलप्राप्तिः, तस्मात्सपदामपि फलवत्त्व, अत सपद आरभ्यन्ते । शाकर

( २ ) अत्र स्वर्गलोकशब्दस्य भगवल्लोकवाचित्वे स मुक्ति. साऽतिमुक्तिरित्युत्तरवाक्यस्वारस्य भवति । स ब्रह्मेति । इति चन्द्राभिन्नत्वेन ध्यात मनोदृष्ट्योपासितो ब्रह्मा भगवल्लोकाक्रमणसाधनमित्यर्थ· ।

रग

सपदाख्योपासना —– सर्वप्राणभृज्जयहेतवो होतु ऋच,
देवपितृमनुष्यलोकजयहेतव अध्वर्युक्षिप्ता आहुतय,
अनन्तलोकजयहेतु ब्रह्मणो देवता मन, पृथिव्यन्तरिक्षद्युलोकजयहेतव उद्गातु स्तोत्रियाः

**याज्ञवल्क्येति होवाच । कतिभिरयमद्यर्ग्भिर्होतास्मिन्यज्ञे करिष्यतीति । तिसृभिरिति । कतमास्तास्तिस्र इति । पुरोनुवाक्या च याज्या च शस्यैव तृतीया । किं ताभिर्जयतीति । यत्किंचेद प्राणभृदिति ॥**

---

(१) बृउ ३।१।६, शब्रा १४।६।१।८ मिव केना ( मिवाथ केना ) इति । ब्रह्मणर्त्विजा .. . स मुक्ति ( इति । उद्गात्रर्त्विजा वायुना प्राणेन । प्राणो वै यज्ञस्योद्गाता । तद्योऽय प्राण स वायुः स उद्गाता सा मुक्ति )

(१) बृउ ३।१।७, शब्रा १४।६।१।९ यत्किंचेदं प्राणभृदिति ( पृथिवीलोकमेव पुरोनुवाक्यया जयत्यन्तरिक्षलोक याज्यया द्यौर्लोकं शस्यया )

याज्ञवल्क्येति होवाच अभिमुखीकरणाय। कतिभिरयमद्यर्ग्भिर्होतास्मिन्यज्ञे — कतिभि. कतिसख्याभिः ऋग्भि. ऋग्जातिभि, अय होता ऋत्विक्, अस्मिन्यज्ञे करिष्यति शस्त्र शसति। आह इतर — तिसृभि ऋग्जातिभिः। इति उक्तवन्त प्रत्याह इतर.—कतमास्ता स्तिस्र इति। सख्येयविषयोऽय प्रश्न, पूर्वस्तु सख्याविषय.। पुरोनुवाक्या च प्राग्यागकालात् याः प्रयुज्यन्ते ऋचः, सा ऋग्जाति. पुरोनुवाक्येत्युच्यते। यागार्थ याः प्रयुज्यन्त ऋच, सा ऋग्जातिः याज्या। शस्त्रार्थं या· प्रयुज्यन्ते ऋच. सा ऋग्जाति. शस्या। सर्वास्तु या. काश्चन ऋचः, ताः स्तोत्रिया वा अन्या वा सर्वा. एतास्वेव तिसृषु ऋग्जातिष्वन्तर्भवन्ति। किं ताभिर्जयतीति यत्किंचेद प्राणभृदिति — अनश्च सख्यासामान्यात् यत्किंचित्प्राणभृज्जात, तत्सर्वं जयति तत्सर्वं फलजात सपादयति सख्यादिसामान्येन। *शंकर

**याज्ञवल्क्येति होवाच। कत्ययमद्याध्वर्युरस्मिन्यज्ञ आहुतीर्होष्यतीति। तिस्र इति। कतमास्तास्तिस्र इति। या हुता उज्ज्वलन्ति या हुता अतिनेदन्ते या हुता अधिशेरते। किं ताभिर्जयतीति। या हुता उज्ज्वलन्ति देवलोकमेव ताभिर्जयति। दीप्यत इव हि देवलोक.। या हुता अतिनेदन्ते पितृलोकमेव ताभिर्जयति। अतीव हि पितृलोक.। या हुता अधिशेरते मनुष्यलोकमेव ताभिर्जयति। अध इव हि मनुष्यलोक.॥**

याज्ञवल्क्येति होवाचेति पूर्ववत्। कत्ययमद्याध्वर्युरस्मिन्यज्ञे आहुतीर्होष्यतीति — कति आहुतिप्रकाराः? तिस्र इति। कतमास्तास्तिस्र इति पूर्ववत्। इतर आह—या हुता उज्ज्वलन्ति समिदाज्याहुतय, या हुता अतिनेदन्ते अतीव शब्द कुर्वन्ति मासाद्याहुतय., या हुता अधिशेरते अधि अधो गत्वा भूमे· अधिशेरते पयःसोमाहुतय। किं ताभिर्जयतीति। ताभिरेव निर्वर्तिताभिराहुतिभिः किं जयतीति। या आहुतयो हुता उज्ज्वलन्ति उज्ज्वलनयुक्ता आहुतयो निर्वर्तिताः — फल च देवलोकाख्य उज्ज्वलमेव। तेन सामान्येन या मयैता उज्ज्वलन्त्य आहुतयो निर्वर्त्यमाना., ता एता. — साक्षाद्देवलोकस्य कर्मफलस्य रूप देवलोकाख्य फलमेव मया निर्वर्त्यते — इत्येव सपादयति। या हुता अतिनेदन्ते आहुतय., पितृलोकमेव ताभिर्जयति, कुत्सितशब्दकर्तृत्वसामान्येन। पितृलोकसबद्धाया हि सयमिन्या पुर्यां वैवस्वतेन यात्यमानाना 'हा हताः स्म, मुञ्च मुञ्च' इति शब्दो भवति। तथा अवदानाहुतय.। तेन पितृलोकसामान्यात्, पितृलोक एव मया निर्वर्त्यते—इति सपादयति। या हुता अधिशेरते, मनुष्यलोकमेव ताभिर्जयति, भूम्युपरिसबन्धसामान्यात्। अध इव हि अध एव हि मनुष्यलोकः उपरितनान् साध्यान् लोकानपेक्ष्य, अथवा अधोगमनमपेक्ष्य। अत. मनुष्यलोक एव मया निर्वर्त्यते — इति सपादयति पय.सोमाहुतिनिर्वर्तनकाले। * शकर

**याज्ञवल्क्येति होवाच। कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो देवताभिर्गोपायतीति। एकयेति। कतमा सैकेति। मन एवेति। अनन्तं वै मनोऽनन्ता विश्वे देवा.। अनन्तमेव स तेन लोकं जयति॥**

(१) याज्ञवल्क्येति होवाचेति पूर्ववत्। अय ऋत्विक् ब्रह्मा दक्षिणतो ब्रह्मा आसने स्थित्वा यज्ञ गोपायति। कतिभिर्देवताभिर्गोपायतीति प्रासङ्गिकमेतद्बहुवचनम् — एकया हि देवतया गोपायत्यसौ। एव ज्ञाते बहुवचनेन प्रश्नो नोपपद्यते स्वय जानत.। तस्मात् पूर्वयो. कण्डिकयो. प्रश्नप्रतिवचनेषु — कतिभि. कति तिसृभिः तिस्रः—इति प्रसङ्ग दृष्ट्वा इहापि बहुवचनेनैव प्रश्नोपक्रम· क्रियते। अथवा प्रतिवादिव्यामोहार्थं बहुवचनम्। इतर आह — एकयेति। एका सा देवता, यया दक्षिणतः स्थित्वा ब्रह्मा आसने यज्ञ गोपायति। कतमा सैकेति — मन एवेति, मनः सा देवता। मनसा हि ब्रह्मा व्याप्रियते ध्यानेनैव, 'तस्य यज्ञस्य मनश्च

* रग शकरवत्।

(१) बृउ ३।१।८; शब्रा १४।६।१।१० नेदन्ते (नेदन्ति) पितृलोकमेव (मनुष्यलोकमेव) पितृलोकः (मनुष्यलोक) मनुष्यलोकमेव (पितृलोकमेव) मनुष्यलोक (पितृलोक), रग दीप्यत (दीव्यत).

* रंग शकरवत्।

(१) बृउ ३।१।९, शब्रा १४।६।१।११ गोपायतीति (गोपायिष्यतीति), ब्रशकर. १।१।४ (पृ ६३)

वाक्च वर्तनी तयोरन्यतरा मनसा सस्करोति ब्रह्मा' इति श्रुत्यन्तरात् । तेन मन एव देवता, तया मनसा हि गोपायति ब्रह्मा यज्ञम् । तच्च मन वृत्तिभेदेनानन्तम् । वैशब्दः प्रसिद्धावद्योतनार्थ । प्रसिद्ध मनस आनन्त्यम् । तदानन्त्याभिमानिनो देवा । अनन्ता वै विश्वे देवा.— 'सर्वे देवा यत्रैक भवन्ति' इत्यादिश्रुत्यन्तरात् । तेन आनन्त्यसामान्यात् अनन्तमेव स तेन लोक जयति । शकर.

( २ ) विहारस्य दक्षिणत उपविष्टो ब्रह्मा कतिभिर्देवताभिर्यज्ञ गोपायति । उत्तरम्—एकयेति । कतमा सैकेति । प्रश्न' सा केत्यर्थ. । उत्तरम् — मन एवेति । तेन किं जयतीति प्रश्नोऽत्राव्याहर्तव्य । उत्तरमाह — अनन्त वै मन । तदानन्त्ये हेतुमाह — अनन्ता विश्वे देवाः । देवशब्द इन्द्रियपरः । तदधीनाना सर्वेषामिन्द्रियाणामानन्त्यान्मनस आनन्त्यमिति भाव । अनन्तमेव स तेन लोक जयति । एवमानन्त्यविशिष्टतयोपासितेन ब्रह्मणा मनसाऽनन्त भगवल्लोक भगवदुपासनद्वारा जयतीत्यर्थ' । रग

**याज्ञवल्क्येति होवाच । कत्ययमद्योद्गातास्मिन्यज्ञे स्तोत्रिया स्तोष्यतीति । तिस्र इति । कतमास्तास्तिस्र इति । पुरोनुवाक्या च याज्या च शस्यैव तृतीया । कतमास्ता । या अध्यात्ममिति । प्राण एव पुरोनुवाक्याऽपानो याज्या व्यान शस्या । किं ताभिर्जयतीति । पृथिवीलोकमेव पुरोनुवाक्यया जयत्यन्तरिक्षलोकं याज्यया द्युलोक॰ शस्यया । ततो ह होताऽश्वल उपरराम ॥**

( १ ) याज्ञवल्क्येति होवाचेति पूर्ववत् । कति या. स्तोष्यतीति अयमुद्गाता । स्तोत्रिया नाम मिसमुदाय कतिपयानामृचाम् । स्तोत्रिया वा वा या काश्चन ऋच , ताः सर्वास्तिस्र एवेत्याह। व्याख्याताः — पुरोनुवाक्या च याज्या च यैव तृतीयेति । तत्र पूर्वमुक्तम् — यत्किंचेद प्राणभृत्सर्वं जयतीति तत् केन सामान्येनेति । उच्यते — कतमास्तास्तिस्र ऋच' या अध्यात्म भवन्तीति । प्राण एव पुरोनुवाक्या, पशब्दसामान्यात् । अपानो याज्या, आनन्तर्यात् — अपानेन हि प्रत्त हवि. देवता ग्रसन्ति, यागश्च प्रदानम् । व्यान' शस्या — 'अप्राणन्ननपानन्नृचमभिव्याहरति' इति श्रुत्यन्तरात् । किं ताभिर्जयतीति व्याख्यातम् । तत्र विशेषसबन्धसामान्यमनुक्तमिहोच्यते, सर्वमन्यद्व्याख्यातम् । लोकसबन्धसामान्येन पृथिवीलोकमेव पुरोनुवाक्यया जयति । अन्तरिक्षलोक याज्यया, मध्यमत्वसामान्यात् । द्युलोक शस्यया ऊर्ध्वत्वसामान्यात् । ततो ह तस्मात् आत्मन. प्रश्ननिर्णयात् असौ होता अश्वल उपरराम — नाय अस्मद्गोचर इति । शकर.

( २ ) ता. पुरोनुवाक्याद्या अध्यात्म कतमा भवन्ति । तासु किमध्यात्मदृष्टि कर्तव्येत्यर्थः । उत्तरम् —प्राण एवेति । पुरोनुवाक्यादिष्वध्यात्मभूतप्राणादिदृष्टि. कर्तव्येत्यर्थ. । पुन' पृच्छति — किं ताभिर्जयतीति । प्राणादिदृष्टिविशिष्टपुरोनुवाक्यादिभिः क लोक जयतीत्यर्थ. । रग.

( ३ ) होतर्यग्नौ वाचि चैव यो विष्णु मुक्तिद स्मरेत् । नित्य स मुच्यतेऽध्वर्यु सूर्यचक्षुष्षु य. स्मरेत् । अधिक. प्रकाश एवास्य मुक्तावन्येभ्य इष्यते । मुक्तेभ्योऽपि तथोद्गातृवायुप्राणेषु य स्मरेत् । पूर्णचन्द्र सदा पश्येदधिकाह्लादसयुतः । मनो ब्रह्मणि शेषेषु यो विष्णु सर्वदा स्मरेत् । अप्रयत्नेन लोक स विष्णोर्याति न सशय. । होत्रग्न्यादीनि नामानि विष्णो. सर्वाणि मुख्यत. । तत्सबन्धात्तदन्येषा स वै होत्रादिकर्मकृत् । तस्माद्धोत्रग्निवागादेरैक्य श्रुतिषु चोच्यते । होत्रादिष्वेव चतुर्षु वासुदेवादिरूपधृक् । व्यवस्थितो हि तज्ज्ञानादचिरान्मुक्तिमेष्यति । मुक्तिनामा स भगवान्मोक्षदत्वात्प्रकीर्तितः । मनुष्येभ्योऽधिकसुख देवेभ्यो यत्प्रयच्छति । मुक्तावप्यतिमोक्षः स तेन देवः प्रकीर्तित. । एता ह्युपासना नित्य नैव योग्या नृणा श्रुता. । अतिमुक्तिप्रदा यस्माद्देवाद्यास्तासु योगिनः । याज्याशस्यापुरोवाक्यासस्थित यो हरिं स्मरेत् । सर्वप्राणभृतामीशः स भवेन्नात्र सशय. । उज्ज्वलच्छन्दवद्द्राविष्वेकमेव हरिं स्मरेत् ।

(१) बृउ ३।१।१०, शब्रा १४।६।१।१२ तृतीया । कतमास्ता । ( तृतीयाधिदेवतम् । अथाध्यात्मम् । कतमास्ता ।) पृथिवीलोकमेव शस्यया (यत्किंचेद प्राणदिति ).

सर्वलोकाधिपत्य स लभते पुरुषोत्तमात् । मनसो देवता ब्रह्मा सर्वदेवेषु सस्थित । देवब्रह्ममनस्त्वेक यो विष्णु सर्वदा स्मरेत् । अनन्तनामक तेन तल्लोक नित्यमश्नुते । निश्चयेन विमोक्षत्वाद्विश्वे देवा अनन्तकाः । अनन्त नामक विष्णुमुपास्यापि ह्यनन्तका । पुरोवाक्यादिषु प्राणादिषूपासा करोति य. । एकमेव हरिं लोकव्याप्तमेव लभेदसौ । अत्रापि वासुदेवाद्याश्चत्वारो देवता. स्मृताः । देवाना पदहेतुत्वात्सपन्नाम्न्य उपासना. । मुक्तौ भोग विशेषस्य हेतुत्वाच्च प्रकीर्तिता । एताश्च देवता योग्या न मनुष्येषु कुत्रचित् । मनुष्याणा ज्ञानमात्राद्गुणाधिक्य भविष्यति ॥ ' इति परमश्रुतौ ।

* मध्व

( आर्तभागप्रश्न )

ग्रहा प्राणवाग्जिह्वाचक्षुश्रोत्रमनोहस्तत्वच अति
ग्रहै अपाननामरसरूपशब्दकामकर्मस्पर्शै गृहिता

**अथ हैन जारत्कारव आर्तभाग पप्रच्छ । याज्ञवल्क्येति होवाच । कति ग्रहा कत्यतिग्रहा इति । अष्टौ ग्रहा अष्टावतिग्रहा इति । ये तेऽष्टौ ग्रहा अष्टावतिग्रहा कतमे त इति ॥**

( १ ) आख्यायिकासबन्ध प्रसिद्ध एव । मृत्योरतिमुक्तिर्व्याख्याता काललक्षणात् कर्मलक्षणाच्च । क. पुनरसौ मृत्यु., यस्मात् अतिमुक्तिर्व्याख्याता ? स च स्वाभाविकाज्ञानसङ्गास्पदः अध्यात्माधिभूतविषयपरिच्छिन्न. ग्रहातिग्रहलक्षणो मृत्यु. । तस्मात्परिच्छिन्नरूपान्मृत्योरतिमुक्तस्य रूपाणि अग्न्यादित्यादीनि उद्गीथ प्रकरणे व्याख्यातानि । अश्वलप्रश्ने च तद्गतो विशेष' कश्चित् । तच्च एतत् कर्मणा ज्ञानसहितानां फलम् । एतस्मात्साध्यसाधनरूपात्ससारान्मोक्ष. कर्तव्य इत्यतः बन्धनरूपस्य मृत्यो. स्वरूपमुच्यते । बद्धस्य हि मोक्षः कर्तव्यः । यदपि अतिमुक्तस्य स्वरूपमुक्त, तत्रापि ग्रहातिग्रहाभ्यामविनिर्मुक्त एव मृत्युरूपाभ्याम् । तथा चोक्तम् — 'अशनाया हि मृत्यु.' ' एष एव मृत्यु ' इति आदित्यस्थ पुरुषमङ्गीकृत्य आह, 'एको मृत्युर्बहव.' इति च । तदात्मभावापन्नो हि मृत्योरातिमतिमुच्यत इत्युच्यते । न च तत्र ग्रहातिग्रहौ मृत्युरूपौ न स्त. । 'अथैतस्य मनसो द्यौ शरीर ज्योतीरूपमसावादित्य.' 'मनश्च ग्रह स कामेनातिग्राहेण गृहीत.' इति वक्ष्यति — 'प्राणो वै ग्रहः सोऽपानेनातिग्राहेण' इति, 'वाग्वै ग्रह. स नाम्नाऽतिग्राहेण ' इति च । तथा त्र्यन्नविभागे व्याख्यातमस्माभि । सुविचारित चैतत् — यदेव प्रवृत्तिकारण, तदेव निवृत्तिकारण न भवतीति ।

केचित्तु सर्वमेव निवृत्तिकारण मन्यन्ते । अत. कारणात् — पूर्वस्मात्पूर्वस्मात् मृत्योर्मुच्यते उत्तरमुत्तर प्रतिपद्यमानः —व्यावृत्त्यर्थमेव प्रतिपद्यते, न तु तादर्थ्यम् — इत्यतः आ द्वैतक्षयात् सर्वे मृत्युः, द्वैतक्षये तु परमार्थतो मृत्योरातिमतिमुच्यते । अतश्च आपेक्षिकी गौणी मुक्तिरन्तराले । सर्वमेतत् एव अबार्हदारण्यकम् । ननु सर्वैकत्व मोक्षः, ' तस्मात्तत्सर्वमभवत् ' इति श्रुते' — बाढ भवत्येतदपि । न तु 'ग्रामकामो यजेत ' ' पशुकामो यजेत ' इत्यादिश्रुतीना तादर्थ्यम् । यदि हि अद्वैतार्थत्वमेव आसां, ग्रामपशुस्वर्गाद्यर्थत्व नास्तीति ग्रामपशुस्वर्गादयो न गृह्येरन् । गृह्यन्ते तु कर्मफलवैचित्र्यविशेषा. । यदि च वैदिकानां कर्मणां तादर्थ्यमेव, ससार एव नाभविष्यत् । अथ तादर्थ्येऽपि अनुनिष्पादितपदार्थस्वभावः ससार इति चेत्, यथा च रूपदर्शनार्थ आलोके सर्वोऽपि तत्रस्थः प्रकाश्यत एव — न, प्रमाणानुपपत्तेः । अद्वैतार्थत्वे वैदिकाना कर्मणा विद्यासहितानां, अन्यस्यानु निष्पादितत्वे प्रमाणानुपपत्तिः — न प्रत्यक्ष, नानुमान, अत एव च न आगम' । उभय एकेन वाक्येन प्रदर्श्यत इति चेत्, कुल्याप्रणयनालोकादिवत्—तन्नैवम् । वाक्यधर्मानुपपत्तेः । न च एकवाक्यगतस्यार्थस्य प्रवृत्तिनिवृत्तिसाधनत्वमवगन्तु शक्यते । कुल्याप्रणयनालोकादौ अर्थस्य प्रत्यक्षत्वाददोषः । यदप्युच्यते मन्त्रा अस्मिन्नर्थे दृष्टा इति—अयमेव तु तावदर्थ. प्रमाणागम्यः । मन्त्राः पुनः किमस्मिन्नर्थे आहोस्विदन्यस्मि-

* सर्वस्यैवाश्वलब्राह्मणस्येद भाष्य अर्थसगत्यनुसंधानाय, अविभज्यैव खण्डभेदेन, उद्धृतम् ।

(१) बृउ ३।२।१, शब्रा १४।६।२।१ वतिग्रहा इति ( वतिग्रहा ), अशकर २।४।५, भास्कर २।४।१७; रामानुज २।४।४, मध्व ये तेऽष्टौ ( एतेऽष्टौ ), श्रीकर २।४।४, वल्लभ २।४।५, ३।१।४

र्मर्थे इति मृग्यमेतत् । तस्माद्ग्रहातिग्रहलक्षणो मृत्यु. बन्धः, तस्मात् मोक्षो वक्तव्य इत्यत इदमारभ्यते । न च जानीमो विषयसम्बन्धाविव अन्तरालेऽवस्थान अर्धजरतीय कौशलम् । यत्तु मृत्योरतिमुच्यते इत्युक्त्वा ग्रहातिग्रहावुच्येते, तत्तु अर्थसबन्धात् । सर्वोऽय साध्यसाधन लक्षणो बन्ध, ग्रहातिग्रहाविनिर्मोकात् । निगडे हि निर्ज्ञाते निगडितस्य मोक्षाय यत्न कर्तव्यो भवति । तस्मात् तादर्थ्येन आरम्भः ।

अथ हैन— हशब्द ऐतिह्यार्थ । अथ अनन्तर अश्वले उपरते प्रकृत याज्ञवल्क्य जरत्कारुगोत्रो जारत्कारव. ऋतभागस्यापत्य आर्तभाग' पप्रच्छ । याज्ञवल्क्येति होवाचेति अभिमुखीकरणाय । पूर्ववत्प्रश्न. — कति ग्रहा कत्यतिग्रहा इति । इति-शब्दो वाक्यपरिसमाप्त्यर्थ । तत्र निर्ज्ञातेषु वा ग्रहातिग्रहेषु प्रश्न स्यात्, अनिर्ज्ञातेषु वा । यदि तावत् ग्रहा अतिग्रहाश्च निर्ज्ञाता, तदा तद्गतस्यापि गुणस्य सख्याया निर्ज्ञातत्वात् कति ग्रहा' कत्यतिग्रहा इति सख्याविषय. प्रश्नो नोपपद्यते । अथ अनिर्ज्ञाताः तदा सख्येयविषयप्रश्न इति के ग्रहा. केऽतिग्रहा इति प्रष्टव्य, न तु कति ग्रहा कत्यतिग्रहा इति प्रश्न' । अपि च निर्ज्ञातसामान्येषु विशेषविज्ञानाय प्रश्नो भवति — यथा कतमेऽत्र कठा. कतमेऽत्र कालापा इति । न चात्र ग्रहातिग्रहा नाम पदार्था. केचन लोके प्रसिद्धा, येन विशेषार्थ. प्रश्न स्यात् । ननु च 'अतिमुच्यते' इत्युक्त, ग्रहगृहीतस्य हि मोक्ष., 'स मुक्ति साऽतिमुक्ति' इति हि द्विरुक्त, तस्मात्प्राप्ता ग्रहा अतिग्रहाश्च, ननु तत्रापि चत्वारो ग्रहा अतिग्रहाश्च निर्ज्ञाता. वाक्चक्षु प्राणमनासि, तत्र कतीति प्रश्नो नोपपद्यते निर्ज्ञातत्वात् — न, अनवधारणार्थत्वात् । न हि चतुष्ट्व तत्र विवक्षितम् । इह तु ग्रहातिग्रहदर्शने अष्टत्वगुणविवक्षया कतीति प्रश्न उपपद्यत एव । तस्मात् 'स मुक्ति. साऽतिमुक्तिः' इति मुक्त्यतिमुक्ती द्विरुक्ते । ग्रहातिग्रहा अपि सिद्धाः । अत' कतिसख्याका ग्रहा, कति वा अतिग्रहा इति पृच्छति । इतर आह — अष्टौ ग्रहा अष्टावतिग्रहा इति । ये ते अष्टौ ग्रहा अभिहिताः, कतमे ते नियमेन ग्रहीतव्या इति । शकर

( २ ) कचिदष्टौ प्राणा ग्रहत्वेन गुणेन सकीर्त्यन्ते— 'अष्टौ ग्रहा अष्टावतिग्रहा.' इति ।

ब्रशकर २।४।५

( ३ ) समानजातीयत्वमेका जातिं क्रिया गुण चाश्रित्य सख्यायोग प्रवर्तते — 'यथाऽष्टौ ग्रहा' इति । भास्कर २।४।१७

**प्राणो[१] वै ग्रह । सोऽपानेनातिग्राहेण गृहीत' । अपानेन हि गन्धाञ्जिघ्रति ॥**

( १ ) तत्र आह — प्राणो वै ग्रहः —प्राण इति घ्राणमुच्यते, प्रकरणात् । वायुसहितः स. । अपानेनेति गन्धेनेत्येतत् । अपानसचिवत्वात् अपानो गन्ध उच्यते । अपानोपहृत हि गन्ध घ्राणेन सर्वो लोको जिघ्रति । तदेतदुच्यते — अपानेन हि गन्धाञ्जिघ्रतीति ।

शकर

( २ ) अत्र प्राणशब्देन नस्यत्वसामान्यात्प्राणेन्द्रिय गौण्या वृत्त्याऽभिधीयते । गृह्णात्यात्मान स्ववश करोतीति ग्रह इन्द्रियम् । पचाद्यच् । अपानो गन्ध । अपानेन निश्वासवायुनाऽपानीयत्वाद्गन्धो लक्ष्यते । तेन विषयरूपेणातिग्रहेण गृहीतो व्याप्तो भवति । अतिशयेन स्वस्वविषयिणमिन्द्रियादिक गृह्णाति स्ववशीकरोतीत्यतिग्रहो विषय. । तदुपपादयति — अपानेन हि गन्धाञ्जिघ्रति । अत्र घ्राणेनेत्यध्याहर्तव्यम् । अपानेनापनीतान् गन्धान्घ्राणेन जिघ्रतीत्यर्थ. । यद्वाऽपानशब्दो घ्राणपरो द्रष्टव्यः । उत्तरसदर्भैकरूप्यात् । अतो घ्राण गन्धाधीनमिति भावः । ततश्चेन्द्रियेभ्य. परा ह्यर्था इत्युक्तरीत्या ग्रहशब्दितेऽपीन्द्रियेभ्योऽतिग्रहशब्दिताना विषयाणा प्रबलतया तद्वशीकरणे यत्न कर्तव्य इति भाव ।

रग.

**वाग्वै[२] ग्रह । स नाम्नाऽतिग्राहेण गृहीत । वाचा हि नामान्यभिवदति ॥**

**जिह्वा वै ग्रह. । स रसेनातिग्राहेण गृहीत' । जिह्वया हि रसान्विजानाति ॥**

(१) बृउ ३।२।२, शब्रा १४।६।२।२ नातिग्राहेण ( नातिग्रहेण ), रग शब्रावत्, मध्व शब्रावत्

(२) बृउ ३।२।३, ४, शब्रा १४।६।२।४, ३ ग्राहेण ( ग्रहेण ), रग शब्रावत्, मध्व शब्रावत्

चक्षुर्वै ग्रहः । स रूपेणातिग्राहेण गृहीतः । चक्षुषा हि रूपाणि पश्यति ॥

श्रोत्रं वै ग्रहः । स शब्देनातिग्राहेण गृहीतः । श्रोत्रेण हि शब्दाञ्शृणोति ॥

मनो वै ग्रहः । स कामेनातिग्राहेण गृहीतः । मनसा हि कामान्कामयते ॥

हस्तौ वै ग्रहः । स कर्मणाऽतिग्राहेण गृहीतः । हस्ताभ्यां हि कर्म करोति ॥

त्वग्वै ग्रहः । स स्पर्शेनातिग्राहेण गृहीतः । त्वचा हि स्पर्शान्वेदयते । इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः ॥

(१) वाग्वै ग्रह — वाचा हि अध्यात्मपरिच्छिन्नया आसङ्गविषयास्पदया असत्यानृतासभ्यबीभत्सादिवचनेषु व्यापृतया गृहीतो लोकः अपहृतः, तेन वाक् ग्रहः । स नाम्नाऽतिग्राहेण गृहीतः सः वागाख्यो ग्रहः, नाम्ना वक्तव्येन विषयेण, अतिग्राहेण, अतिग्राहेणेति दैर्घ्यं छान्दसम् । वक्तव्यार्था हि वाक् । तेन वक्तव्येनार्थेन तादर्थ्येन प्रयुक्ता वाक् तेन वशीकृता । तेन तत्कार्यमकृत्वा नैव तस्या मोक्षः । अतः नाम्नाऽतिग्राहेण गृहीता वागित्युच्यते । वक्तव्यासङ्गेन हि प्रवृत्ता सर्वानर्थैर्युज्यते । समानमन्यत् । इत्येते त्वक्पर्यन्ता अष्टौ ग्रहाः स्पर्शपर्यन्ताश्चैते अष्टावतिग्रहा इति । शंकर

(२) 'हस्तादयस्तु स्थितेऽतो नैवम्' — हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ता प्राणाः श्रूयन्ते 'हस्तो वै ग्रहः स कर्मणाऽतिग्राहेण गृहीतो हस्ताभ्यां हि कर्म करोति' इत्येवमाद्यासु श्रुतिषु । स्थिते च सप्तत्वातिरेके सप्तत्वमन्तर्भावाच्छक्यते सम्भावयितुम् । हीनाधिकसंख्याविप्रतिपत्तौ ह्यधिका संख्या संग्राह्या भवति तस्या हीनाऽन्तर्भवति न तु हीनायामधिका । अतश्च नैव मन्तव्यं स्तोककल्पनानुरोधात्सप्तैव प्राणा स्युरिति । उत्तरसंख्यानुरोधात्त्वेकादशैव ते प्राणाः स्युः । तथा चोदाहृता श्रुतिः 'दशेमे पुरुषे प्राणा आत्मैकादश' इति ।

हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ता प्राणा प्रतीयन्ते 'हस्तो वै ग्रह' इत्यादिश्रुतिषु । ग्रहत्वं च बन्धनभावो गृह्यते बध्यते क्षेत्रज्ञोऽनेन ग्रहसंज्ञकेन बन्धनेनेति । स च क्षेत्रज्ञो नैकस्मिन्नेव शरीरे बध्यते शरीरान्तरेष्वपि तुल्यत्वाद्बन्धनस्य । तस्माच्छरीरान्तरसंचारीदं ग्रहसंज्ञकं बन्धनमित्यर्थादुक्तं भवति । तथा च स्मृतिः — 'पुर्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते । तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन च ॥' इति प्राङ्मोक्षात् ग्रहसंज्ञकेन बन्धनेनावियोगं दर्शयति ।

* ब्रशंकर २।४।६

मृत्योरन्नता, म्रियमाणस्य प्राणानुत्क्रमणं, नाम अनन्तं, मृत्यूत्तरं पुरुषस्य स्थितिः पुण्यपापरूपा

याज्ञवल्क्येति होवाच । यदिदं सर्वं मृत्योरन्नं का स्वित्सा देवता यस्या मृत्युरन्नमिति । अग्निर्वै मृत्युः सोऽपामन्नम् । अप पुनर्मृत्युं जयति ॥

(१) उपसंहृतेषु ग्रहातिग्रहेष्वाह पुनः — याज्ञवल्क्येति होवाच । यदिदं सर्वं मृत्योरन्नम् — यदिदं व्याकृतं सर्वं मृत्योरन्नं, सर्वं जायते विपद्येत च ग्रहातिग्रहलक्षणेन मृत्युना ग्रस्तम् — का स्वित् का नु स्यात् सा देवता, यस्या देवताया मृत्युरप्यन्नं भवेत् — 'मृत्युर्यस्योपसेचनम्' इति श्रुत्यन्तरात् । अयमभिप्रायः प्रष्टुः — यदि मृत्योर्मृत्युं वक्ष्यति, अनवस्था

(१) बृउ ३।२।५, शब्रा १४।६।२।५ ग्राहेण (ग्रहेण), रंग शब्रावत्, मध्व शब्रावत्, श्रीकर २।४।१२ (द्वि०)

(२) बृउ ३।२।६, ७, शब्रा १४।६।२।६, ७ ग्राहेण (ग्रहेण), रंग शब्रावत्, मध्व शब्रावत्

(३) बृउ. ३।२।८, शब्रा १४।६।२।८ ग्राहेण (ग्रहेण), ब्रशंकर २।४।६ हस्तौ (हस्तो), भास्कर २।४।६ हस्तौ (हस्तो) (द्वि०), रंग शब्रावत्, निंबार्क २।४।६ ब्रशंकरवत्, मध्व ब्रशंकरवत्, श्रीकर. २।४।४ ब्रशंकरवत्, विज्ञान २।४।६, बलदेव २।४।६

(४) बृउ ३।२।९, शब्रा १४।६।२।९ ग्राहेण (ग्रहेण) इत्येतेऽष्टौ (इत्यष्टौ), रंग ग्राहेण (ग्रहेण) ग्रहा अष्टा (ग्रहा एतेऽष्टा), मध्व ग्राहेण (ग्रहेण).

* भास्करनिंबार्कश्रीकरविज्ञाना ब्रशंकरवत् ।

(१) बृउ ३।२।१०, शब्रा १४।६।२।१०, ब्रशंकर ३।३।५१, रामानुज ४।२।१२, बलदेव ४।२।१३

स्यात् । अथ न वक्ष्यति, अस्माद्ग्रहातिग्रहलक्षणान्मृत्यो मोक्ष नोपपद्यते । ग्रहातिग्रहमृत्युविनाशे हि मोक्ष. स्यात् । स यदि मृत्योरपि मृत्यु स्यात् भवेत् ग्रहातिग्रहलक्षणस्य मृत्योर्विनाश — अत· दुर्वचन प्रश्न मन्वान· पृच्छति 'का स्वित्सा देवता' इति । अस्ति तावन्मृत्योर्मृत्यु । ननु अनवस्था स्यात् — तस्याप्यन्यो मृत्युरिति — नानवस्था, सर्वमृत्योः मृत्य्वन्तरानुपपत्ते· । कथ पुनरवगम्यते — अस्ति मृत्योर्मृत्युरिति ? दृष्टत्वात् । अग्निस्तावत् सर्वस्य दृष्टो मृत्युः, विनाशकत्वात्, सोऽद्भिर्भक्ष्यते, सोऽग्निः अपामन्न, गृहाण तर्हि अस्ति मृत्योर्मृत्युरिति । तेन सर्वे ग्रहातिग्रहजात भक्ष्यते मृत्योर्मृत्युना । तस्मिन्बन्धने नाशिते मृत्युना भक्षिते ससारान्मोक्ष उपपन्नो भवति । बन्धन हि ग्रहातिग्रह लक्षणमुक्तम् । तस्माच्च मोक्ष उपपद्यत इत्येतत्प्रसाधितम् । अत बन्धमोक्षाय पुरुषप्रयास· सफलो भवति । अतोऽपजयति पुनर्मृत्युम् ।

शाकर

( २ ) यस्य मृत्योरिद सर्वमन्न स मृत्युः कस्या देवताया अन्नमिति । उत्तरमाह — अग्निर्वै मृत्यु सोऽपामन्नम् । अग्निना हि सर्वे दह्यते सोऽप्यद्भिर्नाश्यते । अतोऽपामग्न्यन्नकत्वमिति भाव· । अपामग्न्यन्नकत्वचिन्तनस्य फलमाह — अप पुनर्मृत्यु जयति । य एव वेद सोऽपमृत्यु जयतीत्यर्थ· । कास्वित्सा देवतेति प्रश्नानुरोधादपामित्यस्याप्त्वाभिमानिनारायणपरत्वेऽपि न दोष । तस्मिन्पक्षे 'अग्निर्वै मृत्यु.' इत्यत्राग्निशब्दस्य कालाग्निरुद्रपरत्व द्रष्टव्यम् । 'अग्निर्वै रुद्र.' इति प्रसिद्धेश्च । एतदेवाभिप्रेत्य व्यासार्यैरार्तभागप्रश्नस्य विद्वद्विषयत्वेऽपीति ग्रन्थेनास्य प्रकरणस्य परमात्मविषयत्वमपि सूचितम् । रग

**याज्ञवल्क्येति होवाच । यत्राय पुरुषो म्रियत उदस्मात्प्राणा. क्रामन्त्याहो३ नेति । नेति होवाच याज्ञवल्क्य· । अत्रैव समवनीयन्ते । स उच्छ्वयति । आध्मायति । आध्मातो मृत शेते ॥**

( १ ) परेण मृत्युना मृत्यौ भक्षिते परमात्मदर्शनेन योऽसौ मुक्तः विद्वान्, सोऽय पुरुषः यत्र यस्मिन्काले म्रियते, उत् ऊर्ध्वे, अस्मात् ब्रह्मविदो म्रियमाणात्, प्राणाः — वागादयो ग्रहा नामादयश्चातिग्रहा वासनारूपा अन्तस्थाः प्रयोजका· — क्रामन्त्यूर्ध्वे उत्क्रामन्ति, आहोस्विन्नेति । नेति होवाच याज्ञवल्क्यः — नोत्क्रामन्ति । अत्रैव अस्मिन्नेव परेणात्मना अविभाग गच्छन्ति विदुषि कार्याणि करणानि च स्वयोनौ परब्रह्मसतत्त्वे समवनीयन्ते, एकीभावेन समवसृज्यन्ते, प्रलीयन्ते इत्यर्थ. — ऊर्मय इव समुद्रे । तथा च श्रुत्यन्तर कलाशब्दवाच्याना प्राणाना परस्मिन्नात्मनि प्रलय दर्शयति – 'एवमेवास्य परिद्रष्टुरिमाः षोडश कला पुरुषायणा. पुरुष प्राप्यास्त गच्छन्ति' इति — परेणात्मना अविभाग गच्छन्तीति दर्शितम् । न तर्हि मृतः — न हि । मृतश्च अयम् — यस्मात् स उच्छ्वयति उच्छूनता प्रतिपद्यते, आध्मायति बाह्येन वायुना पूर्यते, दृतिवत्, आध्मात मृत. शेते निश्चेष्ट. । बन्धननाशे मुक्तस्य न क्वचिद्गमनमिति वाक्यार्थः ।

* शाकर.

( २ ) यत्र यदाऽय जीवो म्रियते किमस्मान्म्रियमाणात्प्राणा उत्क्रामन्ति जीव विहाय यथायथ गच्छन्त्युत तत्सयुक्ता एव सन्तस्तेन सहैवोत्क्रामन्तीति प्रश्नार्थ । उत्तरमाह– अत्रैवाऽऽत्मनि समवनीयन्ते सयोज्यन्ते । समित्येकीकारे । एकीभूततया सयुक्ता भवन्तीत्यर्थः । न त विहायोत्क्रामन्ति न हैनो(सहैवो)त्क्रामन्तीत्यर्थः । स पुरुषो मृत उत्क्रान्तप्राण सन् श्वयथु प्राप्नोति । आध्मायति बाह्यवायुना पूर्यते । आध्मातो बाह्यवायुना पूरित. सन् शेते । यद्यप्युच्छूनत्वादिर्देहधर्मो न तु तस्मादिति निर्दिष्टम्रियमाणजीवधर्मस्तथाऽपि देहात्मनोरभेदोपचा-

---

(१) बृउ ३।२।११, शब्रा १४।६।२।१२ न्त्याहो३ ( न्त्याहो ), अशकर ४।२।१३ त्प्राणा क्रामन्त्याहो३ ( त्प्राणा उत्क्रामन्त्याहो ), रामानुज ४।२।१२ न्त्याहो३

* अशकर छाउ ६।८।६ (पृ ९११) इत्यत्र द्रष्टव्यम् । (न्त्याहो ) नीयन्ते ( लीयन्ते ) ( आध्मायति० ), श्रीकर. ४।२।१२ रामनुजवत्, वल्लभ ४।२।५ न्त्याहो३ ( न्त्याहो ) उच्छ्वय ( उच्छ्रय ), विज्ञान ३।११५, ४।२।१२ न्त्याहो ३ ( न्त्याहो ) (आध्मायति०), बलदेव ४।२।१३

रेण तथानिर्देशो द्रष्टव्य. । न च ' स उछ्वयत्याध्मातो मृतः शेते ' इत्युच्छूनत्वादिविस्पष्टदेहधर्मश्रवणेन देहापादानकोत्क्रमणप्रतिषेधविषयकत्वोपपत्तौ अभेदोपचारमाश्रित्य जीवापादानकोद्गमननिषेधपरत्व कुत आश्रयणीयमिति वाच्यम् । 'योऽकामो निष्काम आत्मकाम आप्तकामो न तस्मात्प्राणा उत्क्रामन्ति ' ( बृउ. ४।४।६ ) इत्यत्र शरीरापादनकोद्गमनप्रतिषेधवादिनोऽभेदोपचारस्यावश्याश्रयणीयत्वेन दोषसाम्यात् , ' प्रतिषेधादिति चेन्न शारीरात् ' ( ब्रसू ४।२।१२ ) इति सूत्रभाष्यादावस्यार्थस्य प्रपञ्चितत्वान्नात्रास्माक वक्तव्यमवशिष्यते । रग

(३ ) आर्तभागप्रश्नोऽपि यदा विद्वद्विषयस्तदाऽयमेव परिहारः । स त्वविद्वद्विषय । तत्र प्रश्नप्रतिवचनयोर्ब्रह्मविद्याप्रसङ्गादर्शनात् । तत्र हि ग्रहातिग्रहरूपेणेन्द्रियेन्द्रियार्थस्वभावोऽपामग्न्यन्नत्व म्रियमाणस्य जीवस्य प्राणापरित्यागो मृतस्य नामवाच्यकीर्त्यनुवृत्तिस्तस्य च पुण्यपापानुगुणगतिप्राप्तिरित्येतेऽर्थाः प्रश्नपूर्वक प्रत्युक्ता । तत्र च ' अप पुनर्मृत्यु जयति '(बृउ ३।२।१०) इत्यपामग्न्यन्नत्वज्ञानादग्निजय एव मृत्युजय उच्यते । अतो नात्र विदुष प्रसङ्ग । अविदुषस्तु प्राणानुत्क्रान्तिवचन स्थूलदेहवत्प्राणा न मुञ्चन्त्यपि तु भूतसूक्ष्मवजीव परिष्वज्य गच्छन्तीति प्रतिपादयतीति निरवद्यम् ।
* रामानुज ४।२।१२

**याज्ञवल्क्येति होवाच । यत्राय पुरुषो म्रियते किमेन न जहातीति । नामेति । अनन्त वै नामानन्ता विश्वे देवा. । अनन्तमेव स तेन लोकं जयति ॥**

( १ ) मुक्तस्य किं प्राणा एव समवनीयन्ते ? आहोस्वित् तत्प्रयोजकमपि सर्वम् ? अथ प्राणा एव, न तत्प्रयोजक सर्वे, प्रयोजके विद्यमाने पुन. प्राणाना प्रसङ्गः । अथ सर्वमेव कामकर्मादि, ततो मोक्ष उपपद्यते इत्येवमर्थः उत्तरः प्रश्नः । याज्ञवल्क्येति होवाच — यत्राय पुरुषो म्रियते किमेन न जहातीति । आह इतर — नामेति । सर्वे समवनीयते इत्यर्थ. । नाममात्र तु न लीयते, आकृतिसबन्धात् । नित्य हि नाम । अनन्त वै नाम । नित्यत्वमेव आनन्त्य नाम्न. । तदानन्त्याधिकृता. अनन्ता वै विश्वे देवा । अनन्तमेव स तेन लोक जयति — तन्नामानन्त्याधिकृतान् विश्वान्देवान् आत्मत्वेनोपेत्य तेन आनन्त्यदर्शनेन अनन्तमेव लोक जयति । शाकर

( २ ) पूर्वत्र प्राण म्रियमाण न जहातीत्युक्तमिदानीं तु प्राणेभ्योऽन्यच्च किं वा म्रियमाण न जहातीति प्रश्न । उत्तरम् — नामेति । तदत्याग एव प्रदर्श्यते प्रसिद्ध्या अनन्त वै नाम । देहे नष्टेऽपि युधिष्ठिरादीनां नामानुवृत्तिदर्शनान्नाम्नो नाशो नास्तीत्यर्थ. । नामाभिमानिदेवता अप्यनन्ता इत्याह — अनन्ता विश्वे देवाः । नामानन्त्यज्ञानस्य फलमाह — अनन्तमेव स तेन लोक जयति । अनुवृत्तेन नाम्ना शाश्वतपुण्यलोक जयतीत्यर्थः। अत एव हि लोके नामानुवृत्त्यर्थं यतन्त इति भाव । रग.

**याज्ञवल्क्येति होवाच । यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वात प्राणश्चक्षुरादित्यं मनश्चन्द्र दिशः श्रोत्र पृथिवीꣳ शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन्केशा अप्सु लोहितं च रेतश्च निधीयते काय तदा पुरुषो भवतीति । आहर सोम्य हस्तमार्तभाग । आवामेवैतस्य वेदि-**

---

* शांकर विद्वत्परत्वपक्ष खण्डयन् स्वपक्ष रगव्याख्याने प्रदर्शितरूप समर्थयत्यस्मिन्भाष्ये । श्रीकरविज्ञानयो रामानुजवद्भाव ।

(१) बृउ ३।२।१२, शब्रा १४।६।२।११, मध्व नन्ता+ ( वै )

(१) बृउ ३।२।१३, शब्रा १४।६।२।१३, १४ सोम्य ( सौम्य ) आर्तभाग । आवामेवैतस्य वेदिष्यावो ( आर्तभागेति होवाच । आवमेवैतद्वेदिष्यावो ) चक्राते (चकतु ) अथ+ ( ह ), अशकर २।१।३४, ३।१।४, ४।२।६ अथ+ ( ह ), भास्कर ३।१।४, रग पुरुषस्य मृतस्याग्निं ( पुरुषस्याग्नि ) मेवैतस्य ( मेतस्यैव ), रामानुज ३।१।४, निंबार्क २।१।३३, ३।१।४ ( भवति० ), अमध्व २।४।२२, ३।१।४, श्रीकठ ३।१।४, श्रीकर ३।१।४, वल्लभ २।१।३४, ३।१।४, ४।२।५ अथ+ ( ह ), विज्ञान १।३।२, २।१।३४, ३।१।४, ३।२।४०, ४।२।६ ( कर्मणा० ), बलदेव. २।४।२१, ३।१।४, ४।२।२, ३, १५

**ष्यावो न नावेतत्सजन इति । तौ होत्क्रम्य मन्त्रयाचक्राते । तौ ह यदूचतु कर्म हैव तदूचतु । अथ यत्प्रशशꣳसतु कर्म हैव तत्प्रशशꣳसतु. । पुण्यो वै पुण्येन कर्मणा भवति पाप पापेनेति । ततो ह जारत्कारव आर्तभाग उपरराम ॥**

( १ ) ग्रहातिग्रहरूप बन्धनमुक्त मृत्युरूपम्। तस्य च मृत्यो मृत्युसद्भावान्मोक्षश्चोपपद्यते । स च मोक्ष ग्रहातिग्रहरूपाणामिहैव प्रलय', प्रदीपनिर्वाणवत् । यत्तत् ग्रहातिग्रहाख्य बन्धन मृत्युरूप, तस्य यत्प्रयोजक तत्स्वरूपनिर्धारणार्थमिदमारभ्यते –– याज्ञवल्क्येति होवाच ।

अत्र केचिद्वर्णयन्ति –– ग्रहातिग्रहस्य सप्रयोजकस्य विनाशेऽपि किल न मुच्यते । नामावशिष्ट अविद्यया ऊषरस्थानीयया स्वात्मप्रभवया परमात्मन परिच्छिन्न' भोज्याच्च जगतो व्यावृत्त उच्छिन्नकामकर्मा अन्तराले व्यवतिष्ठते । तस्य परमात्मैकत्वदर्शनेन द्वैतदर्शनमपनेतव्य मिति––अतः पर परमात्मदर्शनमारब्धव्यम् –– इति । एव अपवर्गाख्यामन्तरालावस्थां परिकल्प्य उत्तरग्रन्थसबन्ध कुर्वन्ति ।

तत्र वक्तव्यम् –– विशीर्णेषु करणेषु विदेहस्य पर मात्मदर्शनश्रवणमनननिदिध्यासनानि कथमिति । समव नीतप्राणस्य हि नाममात्रावशिष्टस्येति तैरुच्यते । 'मृत शेते' इति ह्युक्तम्। न मनोरथेनाप्येतदुपपादयितु शक्यते । अथ जीवन्नेव आविद्यामात्रावशिष्टो भोज्याद पावृत्त इति परिकल्प्यते, तत्तु किंनिमित्तमिति वक्तव्यम्। समस्तद्वैतैकत्वात्मप्राप्तिनिमित्तमिति यद्युच्येत, तत् पूर्वमेव निराकृतम् । कर्मसहितेन द्वैतैकत्वात्मदर्शनेन सपन्नो विद्वान् मृतः समवनीतप्राण. जगदात्मत्व हिरण्यगर्भ स्वरूप वा प्राप्नुयात्, असमवनीतप्राण भोज्यात् जीवन्नेव वा व्यावृत्त. विरक्तः परमात्मदर्शनाभिमुख स्यात् । न च उभय एकप्रयत्ननिष्पाद्येन साधनेन लभ्यम्। हिरण्यगर्भप्राप्तिसाधन चेत्, न ततो व्यावृत्तिसाधनम् । परमात्माभिमुखीकरणस्य भोज्याद्व्यावृत्ते. साधन चेत्, न हिरण्यगर्भप्राप्तिसाधनम् । न हि यत् गतिसाधन, तत् गतिनिवृत्तेरपि । अथ मृत्वा हिरण्यगर्भं प्राप्य तत' समवनीतप्राण. नामावशिष्टः परमात्मज्ञानेऽधिक्रियते, तत. अस्मदाद्यर्थं परमात्मज्ञानोपदेश' अनर्थकः स्यात् । सर्वेषा हि ब्रह्मविद्या पुरुषार्थायोपदिश्यते –– 'तद्यो यो देवानाम्' इत्याद्यया श्रुत्या । तस्मात् अत्यन्तनिकृष्टा शास्त्रबाह्यैव इय कल्पना । प्रकृत तु वर्तयिष्यामः ।

तत्र केन प्रयुक्त ग्रहातिग्रहलक्षण बन्धनमित्येतन्नि र्दिधारयिषया आह –– 'यत्रास्य पुरुषस्य असम्यग्दर्शिन' शिर पाण्यादिमतो मृतस्य –– वाक् अग्निमप्येति, वात प्राणोऽप्येति, चक्षुरादित्यमप्येति' –– इति सर्वत्र सबध्यते । मन. चन्द्र, दिश. श्रोत्र, पृथिवीं शरीर, आकाशमात्मेत्यत्र आत्मा अधिष्ठान हृदयाकाश मुच्यते । स आकाशमप्येति । ओषधीरपियन्ति लोमानि । वनस्पतीनपियन्ति केशा. । अप्सु लोहित च रेतश्च –– निधीयते इति –– पुनरादानलिङ्गम् । सर्वत्र हि वागादिशब्देन देवताः परिगृह्यन्ते । न तु करणान्ये वापक्रामन्ति प्राङ्मोक्षात् । तत्र देवताभिरनाधिष्ठितानि करणानि न्यस्तदात्राद्युपमानानि, विदेहश्च कर्ता पुरुषः अस्वतन्त्र. किमाश्रितो भवतीति पृच्छयते –– क्वाय तदा पुरुषो भवतीति –– किमाश्रितः तदा पुरुषो भव तीति । य आश्रयमाश्रित्य पुन' कार्यकरणसघातमुपादत्ते, येन ग्रहातिग्रहलक्षण बन्धन प्रयुज्यते तत् किमिति प्रश्न । अत्रोच्यते –– स्वभावयदृच्छाकालकर्मदैवविज्ञानमात्रशून्यानि वादिभिः परिकल्पितानि । अतः अनेकविप्रतिपत्तिस्थानत्वात् नैव जल्पन्यायेन वस्तुनिर्णयः । अत्र वस्तुनिर्णय चेदिच्छसि, आहर सोम्य हस्त आर्त भाग हे–– आवामेव एतस्य त्वत्पृष्टस्य वेदितव्य यत्, तत् वेदिष्याव निरूपयिष्याव । कस्मात् ? न नौ आवयोः एतत् वस्तु सजने जनसमुदाये निर्णेतु शक्यते । अत एकान्त गमिष्यावः विचारणाय । तौ हेत्यादि श्रुतिवचनम् । तौ याज्ञवल्क्यार्तभागौ एकान्त गत्वा किं चक्रतुरित्युच्यते –– तौ ह उत्क्रम्य सजनात् देशात् मन्त्रयाचक्राते । आदौ लौकिक वादिपक्षाणां एकैक परिगृह्य विचारितवन्तौ । तौ ह विचार्य यदूचतुः अपोह्य पूर्वपक्षान्सर्वानेव –– तच्छृणु । कर्म हैव आश्रय पुनः पुनः–– कार्यकरणोपादानहेतु तत् तत्र ऊचतुः उक्तवन्तौ –– न केवलम् । कालकर्मदैवेश्वरेष्वभ्युपगतेषु हेतुषु यत्प्रश-

शसतुस्तौ, कर्म हैव तत्प्रशशसतुः —— यस्मान्निर्धारितमेतत् कर्मप्रयुक्त ग्रहातिग्रहादिकार्यकरणोपादान पुनः पुनः, तस्मात् पुण्यो वै शास्त्रविहितेन पुण्येन कर्मणा भवति, तद्विपरीतेन विपरीतो भवति पापः पापेन —— इति एव याज्ञवल्क्येन प्रश्नेषु निर्णीतेषु, तत. अशक्य प्रकम्पत्वात् याज्ञवल्क्यस्य, ह जारत्कारव आर्तभाग उपरराम । शकर

( २ ) ' अग्न्यादिगतिश्रुतेरिति चेन्न भाक्त त्वात् ' —— स्यादेतत् । नैव प्राणा देहान्तरप्रतिपत्तौ सह जीवेन गच्छन्ति, अग्न्यादिगतिश्रुते· । तथाहि श्रुतिर्मरणकाले वागादय· प्राणा अग्न्यादीन्देवान्गच्छ न्तीति दर्शयति —— ' यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वात प्राण· ' इत्यादिनेति चेत् । न । भाक्त त्वात् । वागादीनामग्न्यादिगतिश्रुतिर्गौणी लोमसु केशेषु चादर्शनात् । ' ओषधीर्लोमानि वनस्पतीन्केशा· ' इति हि तत्राम्नायते । न हि लोमानि केशाश्चोत्प्लुत्यौषधीर्वन स्पतींश्च गच्छन्तीति सभवति । न च जीवस्य प्राणोपा धिप्रत्याख्याने गमनमवकल्पते । नापि प्राणैर्विना देहान्तर उपभोग उपपद्यते । विस्पष्ट च प्राणानां सह जीवेन गमनमन्यत्र श्रावितम् । अतो वागाद्यधिष्ठात्रीणामग्न्यादिदेवताना वागाद्युपकारिणीना मरणकाल उपकारनिवृत्तिमात्रमपेक्ष्य वागादयोऽग्न्यादीन्गच्छन्ती त्युपचर्यते । ३।१।४

तत्र कर्मप्रयुक्तस्य ग्रहातिग्रहसज्ञकस्येन्द्रियविषयात्मकस्य बन्धनस्य प्रवृत्तिरिति कर्माश्रयतोक्ता । इह पुनर्भूतोपादानाद्देहान्तरोत्पत्तिरिति भूताश्रयत्वमुक्तम् । प्रशसाशब्दादपि तत्र प्राधान्यमात्र कर्मणः प्रदर्शित न स्वाश्रयान्तर निवारितम् । तस्मादविरोधः ।

* ब्रशकर. ४।२।६

( ३ ) अत्र वागादीन्द्रियाणामाकल्पस्थायित्वादाहकारिकत्वाच्च मरणदशायामनुपादानभूताग्नौ लयासभवाच्च वाचोऽग्नावप्ययो नाम वागिन्द्रियाभिमानिदेवभूतस्याग्नेर्वागिन्द्रियाधिष्ठानानुकूलव्यापारमन्तरेणावस्थितिरेव । मरणदशाया म्रियमाणजीवसम्बन्धिवागिन्द्रिय तदभिमान्यग्निर्न व्यापारयतीति यावत् । सूत्रित च भगवता बादरायणेन ' अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ' ( ब्र सू ३।१।४ ) इति । एवमुत्तरत्रापि द्रष्टव्यम् । अप्ययश्च भाक्तो यथायोग्य द्रष्टव्य· । वातमिति । आत्मा देहान्तर्गताकाश इत्यर्थ. । ओषधीरिति । लोमाभिमानिदेवता ओषध्यभिमानिदेवतामप्येति लोमाभिमानित्व विहाय केवलमोषध्यभिमानी भवतीत्यर्थः। निधीयते प्रक्षिप्यत इत्यर्थः । क्वाय तदा पुरुषो भवतीति म्रियमाणसबन्धिषु सर्वेषु तत्तदाधाराश्रितेषु शारीरः पुरुष किमाश्रितो भवतीति प्रश्न । * रग.

( ४ ) आकाश परमात्मानमेव । ' केचित्तु मानुषा मुक्तिमनुक्रम्यैव देहत । देहपाते तु देहस्य दोषान् भुक्त्वैव सर्वशः । मरणोच्छूनतादींस्तु स्वकीयारब्धकर्मजान् । देहे क्षीणे तु गच्छन्ति दृष्ट्वा विष्णुमनुज्ञया । पुनरत्रैव तिष्ठन्ति नित्यानन्दैकभोगिनः । देहादुत्क्रम्य देवास्तु यान्ति विष्णु सनातनम् । देहादुत्क्रम्य यातानां देवा भागत एव तु । स्वाधिदैव व्रजन्त्यद्धा भागतोऽनुव्रजन्ति तान् । आकाशाख्य स्वरूप तु विष्णुस्तद्धृदि सस्थितः । भागतो भागतश्चैतानयाति जनार्दन । ज्ञानस्थितेन रूपेण देवाना मुक्तिदो हरि. । पुण्यस्थितेन रूपेण स्वर्गं निरयमन्यग. । रहस्यमेतद्देवाना विदुः कर्मेति मानुषाः । तस्मान्नैतज्जनेष्वेतद्विष्णो· कर्म प्रकाशयेत् ॥ ' इति च । अत एव याज्ञवल्क्यो न जनेषूवाच । ' कर्मनामा तु भगवान् फलकर्तृत्वतो हरिः । पातनात्पापनामासौ पुनातेः पुण्यनामवान् ॥' इति भारते ।

मध्व.

( ५ ) ' अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ' —' यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वात प्राणः' इत्यादिश्रुतेर्न प्राणाना जीवेन सह गतिरिति चेन्न । भागतोऽग्न्यादिप्राप्तेः । ' पुरुषस्य मृतौ ब्रह्मन्प्राणा भागत एव तु । अधिदैव प्राप्नुवन्ति भागतोऽनुव्रजन्ति तम् । पुनः शरीरसप्राप्तौ तमेवानुविशन्ति च ॥ ' इति ब्राह्मे । ब्रह्माण्डे च—' मृतिकाले जहात्येन प्राणा भूतानि पञ्च च । भागतो भागतस्त्वेनमनुगच्छन्ति सर्वशः ॥ ' इति । ब्रमध्व. ३।१।४

* भास्करनिंबार्कयो ब्रशकरवद्भाव ।

* शेषं ब्रशकर( ४।२।६ )वत् । रामानुज रगव्याख्याने गतम् । श्रीकर रामानुजवत् ।

( ६ ) 'अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्' —श्रुतिविरोध परिहरति । परस्परविरोधे व्यवस्था वा बोध्यते । ननु 'यत्रास्य पुरुषस्य मृतस्याग्निर्वागप्येति वात प्राण' इत्यादिना अग्न्यादिगति. प्राणाना श्रूयते । न च 'ओषधीर्लोमानि वनस्पतीन् केशा' इत्यत्र प्रत्यक्षविरोधात् बाधितविषयेय श्रुतिरिति वाच्यम् । आध्यात्मिकेन्द्रियमध्य पाताल्लोमकेशा अप्याध्यात्मिका एव ग्राह्या• । यै. कण्डूलावण्यप्रतीतिः । दृश्यमानानि तु गोलकस्थानानि । तस्मात् प्राणोत्क्रमणश्रुतिरग्न्यादिभावश्रुत्या बाध्यत इति चेन्न । भाक्तत्वात् । प्रकरणव्यतिरेकेणामुक्तविषये प्रवृत्ता भाक्ता भवति । 'अथ हैन जारत्कारव आर्तभाग. पप्रच्छ' इत्यत्र ग्रहनिरूपणानन्तर मृत्यु पृष्ट्वा म्रियमाणप्रश्ने नामैव न जहात्यन्यज्जहातीति प्रतिज्ञाते, प्राणोत्क्रमणप्रश्ने, नेति प्रतिवचने वागादीनामग्न्यादिभावानुवाद. । ततो मन्त्रणाज्जीवस्य ब्रह्मभावोऽवगम्यते । सामग्न्यागतत्वात् । तौ ह यदूचतुरिति कर्मप्रशसा भिन्नप्रश्नोत्तरा । उभयोर्वचनविधानात् । ब्रह्मविद्या च गोप्या । उत्क्रमणश्रुतिस्तु, 'स यत्रायऽ शारीर आत्मा' इति ब्राह्मणे जीवस्य परलोकविहारार्थे निष्क्रामति चक्षुषो वा मूर्ध्नो वेत्यादिना प्राणाना विहारसाधकाना निर्गमनमाह । अतो मुक्तामुक्तविषयभेदस्य व्यवस्थापकस्य विद्यमानत्वादग्न्यादिभावश्रुतिर्नोत्क्रमणश्रुतिबाधिका । तस्मादन्यत्र सिद्धो धर्मोऽन्यत्रावस्थासाम्यात् योज्यमानो भाक्तो भवति । अत प्राणोत्क्रमणमस्ति । तस्मात् सपरिष्वक्तो गच्छतीति सिद्धम् । ३।१।४

'भूतेषु तच्छ्रुतेः'—ननु मर्यादामार्गीयाणामप्येवमेव वागादिलय ? उतान्यथेति सशये निर्णयमाह । तेषा ते भूतेषु लीयन्ते, न तूक्तरीत्या भगवति । अत्र प्रमाणमाह । तच्छ्रुते• । 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वात प्राणश्चक्षुरादित्य मनश्चन्द्र दिश• श्रोत्र पृथिवीऽ शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहित च रेतश्च निधीयते' इति श्रुते । न चाविद्वद्विषयिणीय श्रुतिरिति वाच्यम् 'याज्ञवल्क्येति होवाच यत्राय पुरुषो म्रियत उदस्मात् प्राणा क्रामन्त्याहो नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायत्याध्मातो मृत. शेते' इति पूर्ववाक्यात् । न ह्यविदुष प्राणानामनुत्क्रमः । 'तमुत्क्रामन्त प्राणोऽनूत्क्रामति' इत्यादिश्रुते• । ननु 'यत्रास्य पुरुषस्य' इत्युपक्रम्य 'रेतश्च निधीयते' इत्यन्ता श्रुतिरविद्वद्विषयिणीति मन्तव्यम् । यत एतदग्रे, क्वाय तदा पुरुषो भवतीति प्रश्ने याज्ञवल्क्यार्तभागाभ्यां विचारितमुत्तरमुच्यते — 'तौ ह यदूचतुः कर्म हैव तदूचतुरथ ह यत् प्रशशऽसतु कर्म हैव तत् प्रशशऽसतु• पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' इति । एतेन कर्माश्रयस्तिष्ठतीति निर्णय. सपद्यते । एव सति प्राणानुत्क्रमणोक्त्या सपातलयोक्त्या च विद्वद्विषयत्वमत्रावसीयते यतस्तस्यैवोक्त द्वय सभवति । अग्रिमश्रुत्युक्तकर्माश्रयत्व च तस्मिन् विरुद्धमत• पूर्वोत्तरविरोधाद्विषयानिश्चये प्राप्ते प्रतिवदाम. । मर्यादामार्गीयविद्वद्विषयिण्येवेय श्रुतिरिति । अत एव प्रश्ने, क्व तदा पुरुषो भवतीत्येतावतैव चारितार्थ्येऽपि साधारणपुरुषव्यावृत्त्या मर्यादामार्गीयतत्प्रापक अयमिति पदम् । तस्यैवोपक्रान्तत्वात् । तथा तदग्रिमविचारितोऽर्थोऽपि तद्विषयक एवेति बुद्ध्यस्व । ननूक्त बाधकमिति चेत् । हन्त श्रुतिशिर. समाकलितमाकलय । मर्यादामार्गे हि विधिप्राधान्याचथैव तन्निर्माणात् । तत्र ह्येव कृत एव फल दास्ये, न त्वकृतेऽपीति भगवदिच्छा, अत. कर्म प्रधानम् । एव सत्यार्तभागस्याऽयमाशयः —— वागादिरेतोऽन्तलयेन प्रारब्धस्यापि तदा नाशाच्छुद्ध जीव विध्यविषय कदाचित् पुष्टौ प्रवेशयति, न वेति सशयेन तदाऽपि किं मर्यादामार्ग एवोत पुष्टावपि प्रवेशितो भवतीति प्रश्न । तदाऽस्यार्थस्येश्वरेच्छारीतिमविदुषो दुर्ज्ञेयत्व जानन्ती स्वयमेव यदवधारितवती तदपि रहस्यमिति स्फुटमनुक्त्वा श्रुति पर्यवसितमर्थमुक्तवती, तौ हेत्यादिना । अत्र कर्मपद मर्यादामार्गपरम् । तथा च मर्यादामार्ग एव तस्य स्थितिरित्यर्थः सपद्यते, मुक्त एव भवतीति यावत् । अत एव तत्प्रशसाऽपि । यत ईश्वरत्वेन सर्वकरणसमर्थोऽपि तद्दाने तदपेक्षते । अत्र हेतुत्वेन मर्यादामार्गस्वरूपमुक्तम् — पुण्यो वा इत्यादिना । वल्लभ ४।२।५

( ७ ) वागादीन्द्रियाणामाहङ्कारिकाणामग्न्याद्यकार्यत्वेनापृथग्वृत्तितामात्रे लयगत्यादिशब्दस्य भाक्तत्वात्

दैववृत्तिभ्य· पृथग्वृत्त्यन्तराभावात् न तु प्राकृतप्रलयवद्वागादीना प्रतिमरण विलयो भवतीत्यर्थ ।

विज्ञान ३।१।४

( भुज्युप्रश्न )

लोकपरिमाण, वायुरेव व्यष्टि समष्टिश्च

**अथ हैन भुज्युर्लाह्यायनि· पप्रच्छ । याज्ञवल्क्येति होवाच । मद्रेषु चरका पर्यव्रजाम । ते पतञ्चलस्य काप्यस्य गृहानैम । तस्याऽऽसीद्दुहिता गन्धर्वगृहीता । तमपृच्छाम कोऽसीति । सोऽब्रवीत्सुधन्वाऽऽङ्गिरस इति । त यदा लोकानामन्तान पृच्छाम । अथैनमब्रूम । क पारिक्षिता अभवन्निति । क पारिक्षिता अभवन् । स त्वा पृच्छामि याज्ञवल्क्य । क पारिक्षिता अभवन्निति ॥**

( १ ) अथ हैन भुज्युर्लाह्यायनि पप्रच्छ । ग्रहातिग्रहलक्षण बन्धनमुक्तम् । यस्मात् सप्रयोजकात् मुक्त· मुच्यते, येन वा बद्ध· ससरति, स मृत्यु । तस्माच्च मोक्ष उपपद्यते, यस्मात् मृत्योर्मृत्युरस्ति । मुक्तस्य च न गतिः क्वचित् —— सर्वोत्साद· नाममात्रावशेष· प्रदीपनिर्वाणवदिति चावधृतम् । तत्र ससरतां मुच्यमानाना च कार्यकरणाना स्वकारणससर्गे समाने, मुक्तानामत्यन्तमेव पुनरनुपादानम् —— ससरता तु पुन· पुनरुपादानम् —— येन प्रयुक्ताना भवति, तत् कर्म——इत्यवधारित विचारणापूर्वकम् । तत्क्षये च नामावशेषेण सर्वोत्सादो मोक्ष· । तच्च पुण्यपापाख्य कर्म, ‘ पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन ’ इत्यवधारितत्वात् । एतत्कृत ससार । तत्र अपुण्येन स्थावरजङ्गमेषु स्वभावदु खबहुलेषु नरकतिर्यक्प्रेतादिषु च दु ख अनुभवति पुनः पुनर्जायमानः म्रियमाणश्च इत्येतत् राजवर्त्मवत् सर्व लोकप्रसिद्धम् । यस्तु शास्त्रीयः पुण्यो वै पुण्येन कर्मणा भवति, तत्रैव आदरः क्रियत इह श्रुत्या । पुण्यमेव च कर्म सर्वपुरुषार्थसाधनमिति सर्वे श्रुतिस्मृतिवादा· । मोक्षस्यापि पुरुषार्थत्वात् तत्साध्यता प्राप्ता । यावत् यावत् पुण्योत्कर्ष· तावत् तावत् फलोत्कर्षप्राप्ति· । तस्मात् उत्तमेन पुण्योत्कर्षेण मोक्षो भविष्यतीत्याशङ्का स्यात् । सा निवर्तयितव्या । ज्ञानसहितस्य च प्रकृष्टस्य कर्मण एतावती गति , व्याकृतनामरूपास्पदत्वात् कर्मण तत्फलस्य च । न तु अकार्ये नित्ये अव्याकृतधर्मिणि अनामरूपात्मके क्रियाकारकफलस्वभाववर्जिते कर्मणो व्यापारोऽस्ति । यत्र च व्यापारः स ससार एव इत्यस्यार्थस्य प्रदर्शनाय ब्राह्मणमारभ्यते ।

कर्मफलाना ससारत्वप्रदर्शनायैव ब्राह्मणमारभ्यते । अथ अनन्तर उपरते जारत्कारवे, भुज्युरिति नामत·, लैह्यस्यापत्य लाह्यः तदपत्य लाह्यायनि·, पप्रच्छ । याज्ञवल्क्येति होवाच । आदावुक्त अश्वमेधदर्शनम् । समष्टिव्यष्टिफलश्चाश्वमेधक्रतु·, ज्ञानसमुच्चितो वा केवलज्ञानसपादितो वा, सर्वकर्मणा परा काष्ठा । भ्रूणहत्याश्वमेधाभ्यां न पर पुण्यपापयोरिति हि स्मरन्ति । तेन हि समष्टिं व्यष्टीश्च प्राप्नोति । तत्र व्यष्टयो निर्ज्ञाता अन्तरण्डविषया अश्वमेधयागफलभूता । ‘ मृत्युरस्यात्मा भवत्येतासा देवतानामेको भवति ’ इत्युक्तम् । मृत्युश्च अशनायालक्षणो बुद्ध्यात्मा समष्टि· प्रथमज वायुः सूत्र सत्य हिरण्यगर्भः । तस्य व्याकृतो विषयः — यदात्मक सर्वं द्वैतकत्व, यः सर्वभूतान्तरात्मा लिङ्ग अमूर्तरस· यदाश्रितानि सर्वभूतकर्माणि, यः कर्मणां कर्मसबद्धानां च विज्ञानानां परा गतिः पर फलम् । तस्य कियान् गोचर· कियती व्याप्तिः सर्वतः परिमण्डलीभूता, सा वक्तव्या । तस्यां उक्तायां, सर्वः ससारो बन्धगोचर उक्तो भवति । तस्य च समष्टिव्यष्ट्यात्मदर्शनस्य अलौकिकत्वप्रदर्शनार्थं आख्यायिकामात्मनो वृत्तां प्रकुरुते । तेन च प्रतिवादिबुद्धिं व्यामोहयिष्यामीति मन्यते ।

मद्रेषु——मद्रा नाम जनपदाः तेषु, चरकाः——अध्ययनार्थं व्रतचरणाच्चरकाः अध्वर्यवो वा, पर्यव्रजाम पर्यटितवन्तः । ते पतञ्चलस्य —— ते वय पर्यटन्त· , पतञ्चलस्य नामतः, काप्यस्य कपिगोत्रस्य, गृहान् ऐम गतवन्तः । तस्यासीद्दुहिता गन्धर्वगृहीता —— गन्धर्वेण अमानुषेण सत्त्वेन केनचित् आविष्टा । गन्धर्वो वा धिष्ण्योऽग्निः ऋत्विक् देवता विशिष्टविज्ञानत्वात् अव-

(१) बृउ ३।३।१, शब्रा १४।६।३।१ पतञ्ज ( पतञ्च ) थैन ( थैत ) अभवन्निति । क ( अभवन्क ) अभवन् । स त्वा ( अभवन्निति । तत्त्वा ), रग लाह्या ( लाम्या ) पतञ्ज ( पतञ्च ) अथैनमब्रूम ( अथैन ब्रूम ), मध्व पारिक्षिता ( पारीक्षिता )

सीयते । न हि सत्त्वमात्रस्य ईदृश विज्ञानमुपपद्यते । त सर्वे वय परिवारिता॰ सन्त अपृच्छाम — कोऽसीति — कस्त्वमसि किंनामा किंसतत्त्व । सोऽब्रवीद्गन्धर्वे — सुधन्वा नामत, आङ्गिरसो गोत्रत । त यदा यस्मिन्काले लोकाना अन्तान् पर्यवसानानि अपृच्छाम, अथ एन गन्धर्वे अब्रूम –– भुवनकोशपरिमाणज्ञानाय प्रवृत्तेषु सर्वेषु आत्मान श्लाघयन्त पृष्टवन्तो वयम्। कथम् ? क्व पारिक्षिता अभवन्निति । स च गन्धर्व॰ सर्वमसम्यमब्रवीत् । तेन दिव्येभ्यो मया लब्ध ज्ञानम् । तत् तव नास्ति । अतो निगृहीतोऽसि इत्यभिप्राय॰ । सोऽह विद्यासपन्नो लब्धागमो गन्धर्वात् त्वा त्वा पृच्छामि याज्ञवल्क्य क्व पारिक्षिता अभवन् तत् त्व किं जानासि ? हे याज्ञवल्क्य कथय, पृच्छामि — क्व पारिक्षिता अभवन्निति । शकर

(२) भुज्युर्नामतः । लाभ्यायनिर्गोत्रत॰ । यद्वा मद्रेषु चरन्तीत्यर्थे 'चरेष्ट' (पा सू ३।२।१६) इति टप्रत्यये तत्पुरुषे 'तत्पुरुषे कृति बहुलम्' (पा सू ६।३।१४) इत्यलुक् । स्वार्थे क॰ । पर्यव्रजाम पर्यटितवन्त । 'अस्मदो द्वयोश्च' (पा सू १।२।५९) इत्येकस्मिन्बहुवचनम् । ब्रह्मचर्यापेक्षया वा । ब्रूमेत्यत्राऽऽगमाभावश्छान्दस । * रग

**स होवाच । उवाच वै स । अगच्छन्वै ते तद्यत्राश्वमेधयाजिनो गच्छन्तीति । क्व न्वश्वमेधयाजिनो गच्छन्तीति । द्वात्रिंशत वै देवरथाह्न्यान्यय लोक॰ । तꣳ समन्त पृथिवी द्विस्तावत्पर्येति । ताꣳ समन्त पृथिवीं द्विस्तावत्समुद्र पर्येति । तद्यावती क्षुरस्य धारा यावद्वा मक्षिकाया पत्र तावानन्तरेणाकाशस्तानिन्द्र सुपर्णो भूत्वा वायवे प्रायच्छत् । तान्वायुरात्मनि धित्वा तत्रागमयद्यत्राश्वमेधयाजिनोऽभवन्निति । एवमिव वै स वायुमेव प्रशशꣳस । तस्माद्वायुरेव व्यष्टिर्वायु समष्टि । अप पुनर्मृत्यु जयति य एवं वेद । ततो ह भुज्युर्लाह्यायनिरुपरराम ॥**

(१) स होवाच याज्ञवल्क्य, उवाच वै स । वैशब्दः स्मरणार्थ., उवाच वै स गन्धर्व॰ तुभ्यम् । अगच्छन्वै ते पारिक्षिता, तत् तत्र । क्व ? यत्र यस्मिन् अश्वमेधयाजिनो गच्छन्ति, इति निर्णीते प्रश्न आह—क्व नु कस्मिन् अश्वमेधयाजिनो गच्छन्तीति । तेषा गतिविवक्षया भुवनकोशपरिमाणमाह — द्वात्रिंशत वै, द्वे अधिके त्रिंशत्, द्वात्रिंशत वै, देवरथाह्न्यानि, देव आदित्यः तस्य रथो देवरथ तस्य रथस्य गत्या अह्ना यावत्परिच्छिद्यते देशपरिमाण तत् देवरथाह्न्य, तद्द्वात्रिंशद्गुणित देवरथाह्न्यानि, तावत्परिमाणोऽय लोक. लोकालोकगिरिणा परिक्षिप्त., यत्र वैराज शरीर, यत्र च कर्मफलोपभोगः प्राणिनां, स एष लोकः । एतावान् लोकः, अतः पर अलोकः, त लोक समन्त समन्तत, लोकविस्तारात् द्विगुणपरिमाणविस्तारेण परिमाणेन, त लोक परिक्षिप्ता पर्येति पृथिवी । ता पृथिवीं तथैव समन्त, द्विस्तावत् द्विगुणेन परिमाणेन समुद्रः पर्येति, य घनोदमाचक्षते पौराणिकाः । तत्र अण्डकपालयोर्विवरपरिमाणमुच्यते, येन विवरेण मार्गेण बहिर्निर्गच्छन्तो व्याप्नुवन्ति अश्वमेधयाजिन॰ । तत्र यावती यावत्परिमाणा क्षुरस्य धारा अग्र, यावद्वा सौक्ष्म्येण युक्त मक्षिकायाः पत्र, तावान् तावत्परिमाणः, अन्तरेण मध्येऽण्डकपालयो, आकाश. छिद्र, तेन आकाशेनेत्येतत् । तान् पारिक्षितानश्वमेधयाजिनः प्राप्तान् इन्द्रः परमेश्वर.— योऽश्वमेधेऽग्निश्चितः, सुपर्ण. यद्विषय दर्शनमुक्त 'तस्य प्राची दिक्शिर' इत्यादिना, सुपर्ण. पक्षी भूत्वा, पक्षपुच्छात्मक. सुपर्णो भूत्वा, वायवे प्रायच्छत्—मूर्तत्वान्नास्त्यात्मनो गतिस्तत्रेति । तान् पारिक्षितान् वायुः आत्मनि धित्वा स्थापयित्वा स्वात्मभूतान्कृत्वा तत्र तस्मिन् अगमयत् । क्व ? यत्र पूर्वे अतिक्रान्ता. पारिक्षिता अश्वमेधयाजिनोऽभवन्निति । एवमिव वै एवमेव स गन्धर्व॰ वायुमेव प्रशशस पारि-

---

* शेष शकरवत् ।

(१) बृउ ३।३।२, शब्रा १४।६।३।२ स । अगच्छ ( स तदगच्छ ) तद्यत्रा ( तत्र यत्रा ) पृथिवी द्विस्तावत्पर्येति । ताꣳ समन्त ( लोक द्विस्तावत्पृथिवी पर्येति । ता ) यत्राश्वमेधयाजिनोऽभ ( यत्र पारिक्षिता अभ ) जयति+ ( सर्वमायुरेति ), अशकर १।३।३९, रग वायु सम ( वायुरेव सम ) लाह्या ( लाभ्या ), श्रीकठ १।३।४० वायु सम ( वायुरेव सम )

क्षिताना गतिम् । समाप्ता आख्यायिका । आख्यायिका-निर्वृत्त तु अर्थे, आख्यायिकातोऽपसृत्य स्वेन श्रुतिरूपे-णैव आचष्टेऽसम्भ्यम् । यस्मात् वायु स्थावरजङ्गमाना भूतानामन्तरात्मा, बहिश्च स एव, तस्मात् अध्यात्मा धिभूताधिदैवभावेन विविधा या अष्टिः व्याप्ति स वायुरेव । तथा समष्टि केवलेन सूत्रात्मना वायुरेव । एव वायुमात्मान समष्टिव्यष्टिरूपात्मकत्वेन उपगच्छति य एव वेद, तस्य किं फलमित्याह — अप पुनर्मृत्यु जयति, सकृन्मृत्वा पुनर्न म्रियते । तत आत्मन. प्रश्ननिर्ण-यात् भुज्युर्लाह्यायनिरुपरराम । शकर.

( २ ) तान्पारिक्षितानिन्द्र. सुपर्णो भूत्वा वाहन भूत्वा वायवे दत्तवानित्यर्थ । कश्चित्प्रदेशमिन्द्र एव वायवे दत्तवानित्यर्थ । आत्मनि धित्वाऽऽत्मनि स्थाप यित्वा यत्र ब्रह्मलोकेऽश्वमेधयाजिनो गच्छन्ति तत्रागमत् । ततश्चेन्द्रस्यापि प्रवेशयोग्यरन्ध्रद्वारा वायु पारिक्षिताश्च-तुर्मुखलोकमगमयदित्यर्थ. । एव याज्ञवल्क्य उक्त्वाऽस्यो-क्तस्य सवाद दर्शयति— एवमिव वै इति । एव खलु स गन्धर्वो वायु स्तुतवानित्यर्थ. । पञ्चीकृतव्यष्ट्यात्मकब्रह्म-लोकतदधस्तनलोकसचारितया सूत्रात्मप्राणरूपेण सर्व निर्वाहकतया व्यष्टिसमष्टिरूप इत्यर्थ. । व्यष्टिसमष्ट्यात्म-कतया वायुचिन्तनस्य फलमाह — अप पुनर्मत्यु जयतीति । * रग.

( ३ ) पारिक्षिता प्रद्युम्ना । अश्वमेधयाजिन इन्द्राः । ‘ प्रद्युम्नः कामनामासौ पारिक्षित इतीरित । सर्वेक्षणात्परो विष्णुः परीक्षिदिति कीर्तित । तत्पुत्रत्वात्कामदेवः पारिक्षित इति स्मृत । शताश्वमेधयाजित्वादिन्द्रा एवा श्वमेधिनः । अतीतानागतानां च कामाना वज्रिणा-मपि । एकमेव हि मुक्तानां स्थान वेदोदित सदा । इन्द्रनामा तु गरुड सामर्थ्यादेव कथ्यते । तस्य रूपद्वय नित्य सौपर्णे पौरुष तथा । तत्र पौरुषरूपी सन् भूत्वा सौपर्णरूपवान् । कामदेवानुपादाय मुक्तौ वायोः प्रय च्छति । वायुस्तान्स्वशरीरस्थान्कृत्वेन्द्रा यत्र मुक्तिगाः । प्रद्युम्ननामके विष्णावेव वायुर्हि मोक्षद. । तस्मात्सर्वो-त्तमो वायुर्विविध तु यदष्टकम् । देवानृषीन्पितॄन्यक्षान् गन्धर्वान्मानुषोरगान् । असुरांश्च वशे नित्य नयत्यमित पौरुष. । सपूर्णाश्च सुपर्णेशशेषेन्द्रांस्तत्स्त्रियोऽपि च । अष्टौ नयत्युन्नयति वशीकृत्य स्वय प्रभुः । अतो व्यष्टि सम-ष्टिश्च वायुरेवाभिधीयते । एव व्यष्टिं समष्टिं च यो वायु वेद तत्वत. । तत्पर च हरिं नित्य मुच्यते ससृते पुमान् ॥’ इति परमसहितायाम् । ‘ चरकस्तीर्थसचारी वित्तार्थी करक. स्मृत. ’ इत्यभिधानम् । ‘ अहर्मुहूर्ते विज्ञेय-महर्मासोऽपि भण्यते । अहर्दिन प्रकाशश्च क्वचिज्ज्ञान बल तथा ॥ ’ इति च । ‘ मुहूर्तमष्टभागो न घटिकाद्वयमिष्यते । क्वचिद्द्विघटिकाऽपि स्यात्क्वचि-त्स्यात्तावदुत्तर ॥ ’ इति कालनिर्णये । ‘ द्वात्रिंशत्तु मुहूर्ताना दिनमेक विदुर्बुधा. । त्रिंशन्मुहूर्तमथवा मुहुर्तोन्मानभेदत. ॥ ’ इति च । ‘ सप्तकोटिं च लक्षाणा चतुर्दश च नित्यश. । अष्टाविंशत्सहस्र च सप्तांशशत-पञ्चकम् । सौरो रथस्त्वहोरात्रात्परियाति दिवि स्थितः । तत्त्रिभागाधिक चक्र मानसोत्तरग चरेत् । नृणा कार्त युगानां तु योजना मानतो भवेत् । यावत्सूर्यरथो याति दिवारात्रेण पार्श्वयोः । सूर्यस्य तावदेव स्यात्प्रकाश. सर्व-तस्तथा । तमोऽन्ध द्विगुण तस्मात्काठिन्यात्पृथ्विनामकम् । ततो मण्डोदक चापि द्विगुण परिकीर्तितम् । पञ्चाशत्को-टिविस्तारमेवमण्डान्तमुच्यते । ततस्त्वण्ड सौवर्णं तद्भिन्न हरिणा पुरा । सुषिर सर्वतो दिक्षु क्षुरधारासम ततः । सुपर्णो वायवे तेन मुक्तान्कामान्प्रयच्छति ॥’ इति तत्त्व-सहितायाम् । मध्व.

( उषस्तप्रश्न )

साक्षादपरोक्षात् ब्रह्म आत्मा सर्वान्तरः

**अथ हैनमुषस्तश्चाक्रायण. पप्रच्छ । याज्ञ-वल्क्येति होवाच । यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा**

* शेष पदार्थमात्रव्याख्यान शकरवत् ।

(१) बृउ ३।४।१, शब्रा १४।६।५।१ पानीति ( पानिति ) व्यानीति ( व्यानिति ) दानिति ( दनिति ) एष त आत्मा सर्वान्तर ( य समानेन समनिति स त आत्मा सर्वान्तर ); ब्रशकर. ३।२।२७, ३।३।३२, ३५, ३।४।८, ४।१।३, ४।३।१४, भास्कर ३।३।३५, ४।१।३, रंग पानीति ( पानिति ) व्यानीति ( व्यानिति ), रामानुज. ३।३।३५ स्त मे ( स्तन्मे ) पानीति ( पानिति ), निंबार्क ३।३।३५, ४।१।३ स्त मे ( स्तन्मे ), मध्व पानीति ( पानिति ) व्यानीति ( व्यानिति ), श्रीकठ ३।३।३५ पानीति ( पानिति ),

**सर्वान्तरस्त मे व्याचक्ष्वेति । एष त आत्मा सर्वान्तर । कतमो याज्ञवल्क्य सर्वान्तर । य प्राणेन प्राणिति स त आत्मा सर्वान्तर । योऽपानेनापानीति स त आत्मा सर्वान्तर । यो व्यानेन व्यानीति स त आत्मा सर्वान्तर । य उदानेनोदानिति स त आत्मा सर्वान्तर । एष त आत्मा सर्वान्तर ॥**

( १ ) अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ । पुण्यपापप्रयुक्तैर्ग्रहातिग्रहैर्गृहीत पुन. पुन' ग्रहातिग्रहान् त्यजन् उपाददत् ससरतीत्युक्तम् । पुण्यस्य च पर उत्कर्षो व्याख्यात व्याकृतविषय समष्टिव्यष्टिरूप द्वैतैकत्वात्मप्राप्ति । यस्तु ग्रहातिग्रहैर्ग्रस्त ससरति, स अस्ति वा, न अस्ति । अस्तित्वे च किंलक्षण — इति आत्मन एव विवेकाधिगमाय उषस्तप्रश्न आरभ्यते । तस्य च निरुपाधिस्वरूपस्य क्रियाकारकविनिर्मुक्तस्वभावस्य अधिगमात् यथोक्ताद्बन्धनात् विमुच्यते सप्रयोजकात् । आख्यायिकासबन्धस्तु प्रसिद्ध । अथ ह एन प्रकृत याज्ञवल्क्य, उषस्तो नामत, चक्रस्यापत्य चाक्रायण, पप्रच्छ । यत् ब्रह्म साक्षात् अव्यवहित केनचित् द्रष्टु' अपरोक्षात् अगौण न श्रोत्रब्रह्मादिवत् । किं तत्? य आत्मा—आत्मशब्देन प्रत्यगात्मोच्यते, तत्र आत्मशब्दस्य प्रसिद्धत्वात् । सर्वस्याभ्यन्तर' सर्वान्तर । यद्.-शब्दाभ्या प्रसिद्ध आत्मा ब्रह्मेति । त आत्मान, मे मह्य, व्याचक्ष्वेति— विस्पष्ट शृङ्गे गृहीत्वा यथा गा दर्शयति तथा आचक्ष्व, सोऽयमित्येव कथयस्वेत्यर्थः । एवमुक्त. प्रत्याह याज्ञवल्क्यः — एषः ते तव आत्मा सर्वान्तरः सर्वस्याभ्यन्तर' । सर्वाविशेषणोपलक्षणार्थं सर्वान्तरग्रहणम् । यत् साक्षात् अव्यवहित अपरोक्षात् अगौण ब्रह्म बृहत्तम आत्मा सर्वस्य सर्वस्याभ्यन्तर., एतैर्गुणै. समस्तैर्युक्त. एषः । कोऽसौ तवात्मा ? योऽय कार्यकरणसघातः तव स. येनात्मना आत्मवान् स एष तव आत्मा, तव कार्यकरणसघातस्येत्यर्थः । तत्र पिण्डः, तस्याभ्यन्तरे लिङ्गात्मा करणसघात., तृतीयो यश्च सदिह्यमान', तेषु कतमो मम आत्मा सर्वान्तर. त्वया विवक्षित इत्युक्ते इतर आह — य. प्राणेन मुखनासिकासञ्चारिणा प्राणिति प्राणचेष्टा करोति, येन प्राणः प्रणीयत इत्यर्थ. । स. ते तव कार्यकरणसघातस्य आत्मा विज्ञानमय । समानमन्यत् । योऽपानेनापानीति, यो व्यानेन व्यानीतीति । छान्दस दैर्घ्यम् । सर्वाः कार्यकरणसघातगताः प्राणनादिचेष्टा दारुयन्त्रस्येव येन क्रियन्ते— न हि चेतनावदनधिष्ठितस्य दारुयन्त्रस्येव प्राणनादिचेष्टा विद्यन्ते । तस्मात् विज्ञानमयेनाधिष्ठित विलक्षणेन दारुयन्त्रवत् प्राणनादिचेष्टा प्रतिपद्यते । तस्मात् सोऽस्ति कार्यकरणसघातविलक्षण', यश्चेष्टयति ।

शकर

( २ ) 'अन्तरा भूतग्रामवत्स्वात्मन.' — 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः' इत्येत्र द्विरुषस्तकहोलप्रश्नयोर्नैरन्तर्येण वाजसनेयिन समामनन्ति । तत्र सशय. । विद्यैकत्व वा स्याद्विद्यानानात्व वेति । विद्यानानात्वमिति तावत्प्राप्तम् । अभ्याससामर्थ्यात् । अन्यथा ह्यनूनानतिरिक्तार्थे द्विराम्नानमनर्थकमेव स्यात् । तस्माद्यथाऽभ्यासात्कर्मभेद एवमभ्यासाद्विद्याभेद इत्येव प्राप्ते प्रत्याह—अन्तराऽऽम्नानाविशेषात्स्वात्मनो विद्यैकत्वमिति । सर्वान्तरो हि स्वाऽऽत्मोभयत्राप्यविशिष्टः पृच्छयते प्रत्युच्यते च । न हि द्वावात्मानावेकस्मिन्देहे सर्वान्तरौ सभवत. । तदा ह्येकस्याऽऽञ्जस सर्वान्तरत्वमवकल्प्येत । एकस्य तु भूतग्रामवन्नैव सर्वान्तरत्व स्यात् । यथा च पञ्चभूतसमूहे देहे पृथिव्या आपोऽन्तराः अद्भ्यस्तेजोऽन्तरमिति सत्यप्यापेक्षिकेऽन्तरत्वे नैव मुख्य सर्वान्तरत्व भवति तथेहापीत्यर्थः । अथ वा भूतग्रामवदिति श्रुत्यन्तर निदर्शयति । यथा — 'एको देवः सर्वभूतेषु गूढ. सर्वव्यापी सर्वभूतान्तरात्मा' ( श्वेउ ६।११ ) इत्यस्मिन्मन्त्रे समस्तेषु भूतग्रामेष्वेक एव सर्वान्तर आत्माऽऽम्नायते । एवमनयोरपि ब्राह्मणयोरित्यर्थः । तस्माद्वेद्यैक्याद्विद्यैकत्वमिति । ३।३।३५

'अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत्' — अथ यदुक्तमनभ्युपगम्यमाने विद्याभेद आम्नानभेदानुपपत्तिरिति, तत्परिहर्तव्यम् । अत्रोच्यते । नाय दोषः । उपदेशान्तरवदुपपत्ते. । यथा ताण्डिनामुपनिषदि षष्ठे प्रपाठके 'स आत्मा तत्त्वमसि श्वेतकेतो' इति नवकृत्वोऽप्यु

---

श्रीकर १।३।२, ३।३।३५, ३६ स्त मे ( स्तन्मे ) प्राणिति ( प्राणीति )

पदेशे न विद्याभेदो भवत्येवमिहापि भविष्यति । कथं च नवकृत्वोऽप्युपदेशे विद्याभेदो न भवति । उपक्रमोपसंहाराभ्यामेकार्थतावगमात् । 'भूय एव मा भगवान्विज्ञापयतु' इति चैकस्यैवार्थस्य पुनः पुनः प्रतिपिपादयिषितव्यत्वेनोपक्षेपात् । आशङ्कान्तरनिराकरणेन चासकृदुपदेशोपपत्तेः । एवमिहापि प्रश्नरूपाभेदात् 'अतोऽन्यदार्तम्' इति च परिसमाप्त्यविशेषादुपक्रमोपसंहारौ तावदेकार्थविषयौ दृश्येते । 'यदेव साक्षादपरोक्षाद्ब्रह्म' इति द्वितीये प्रश्ने एवकारं प्रयुञ्जानः पूर्वप्रश्नगतमेवार्थमुत्तरत्रानुकृष्यमाणं दर्शयति । पूर्वस्मिंश्च ब्राह्मणे कार्यकरणव्यतिरिक्तस्याऽऽत्मनः सद्भावः कथ्यते । उत्तरस्मिंस्तु तस्यैवाशनायादिसंसारधर्मातीतत्वं विशेषः कथ्यते । इत्येकार्थतोपपत्तिः । तस्मादेका विद्येति

* ब्रशांकर ३।३।३६

(३) एवमस्य कर्मकाण्डवैदुष्यं मत्वा ब्रह्मकाण्डे वाऽस्याप्रतिभा संपादयिष्याम इति मन्यमानाः प्रष्टुं प्रावर्तन्त—अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ । नाम्नोषस्तः । चक्रस्य गोत्रापत्यं 'नडादिभ्यः फक्' (पा सू ४।१।९९) चाक्रायणः । अपरोक्षादपरोक्षामित्यर्थः । 'सुपां सुलुक्०' (पा सू. ७।१।३९) इत्यादिनाऽऽदादेशः । अपरोक्षत्वं नाम सर्वदेशकालसंनिहितत्वम् । देशकालसंनिकर्षे हि अपारोक्ष्यदर्शनात् । यदपरोक्षं साक्षाद्ब्रह्माव्यवधानेन ब्रह्मागौणं मुख्यमिति यावत् । सर्वान्तरः । 'आत्मा च द्रष्टव्यः श्रोतव्यः' इति दर्शनादिकर्मत्वेनोक्तश्च यस्तादृशं वस्तु मे व्याचक्ष्व विविच्याऽऽचक्ष्व दर्शयेत्यर्थः । उत्तरत्र 'न दृष्टेर्द्रष्टारं पश्येः' इति द्रष्टव्यत्वादेरन्यत्र निषेधाद्द्रष्टव्यत्वादिकमपि प्रश्नविषय इति द्रष्टव्यम् । प्राणितीत्यादौ 'रुदश्च पञ्चभ्यः' (पा. सू. ७।३।९८) इतीट् प्राणादिव्यापारकर्ता, यः स सर्वान्तर आत्मेत्यर्थः । अत्र प्राणस्य करणतया निर्देशात्प्राणव्यतिरेकः सिद्धः । सुषुप्तौ बाह्यान्तरिन्द्रियोपरतावपि प्राणादिव्यापारदर्शनात्तद्व्यतिरेकोऽपि सिद्धः । सुषुप्तौ जीवस्याप्युपरतव्यापारतया प्राणेन प्राणयितृत्वाभावात्तद्व्यतिरेकोऽपि सिध्यतीत्याशयः ।

* भास्कर रामानुज निंबार्क. श्रीकंठ श्रीकर ब्रशांकरवत् विद्यैक्यसमर्थनम् ।

§ रग.

**स होवाचोषस्तश्चाक्रायणः । यथा विब्रूयादसौ गौरसावश्व इत्येवमेवैतद्व्यपदिष्टं भवति । यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेति । एष त आत्मा सर्वान्तरः । कतमो याज्ञवल्क्य सर्वान्तरः । न दृष्टेर्द्रष्टारं पश्येः । न श्रुतेः श्रोतारꣳ शृणुयाः । न मतेर्मन्तारं मन्वीथाः । न विज्ञातेर्विज्ञातारं विजानीयाः । एष त आत्मा सर्वान्तरः । अतोऽन्यदार्तम् । ततो होषस्तश्चाक्रायण उपरराम ॥**

(१) स होवाचोषस्तश्चाक्रायणः । यथा कश्चित् अन्यथा प्रतिज्ञाय पूर्वं पुनर्विप्रतिपन्नो ब्रूयादन्यथा — असौ गौः, असावश्वः, यश्चलति धावतीति वा, पूर्वं प्रत्यक्षं दर्शयामीति प्रतिज्ञाय, पश्चात् चलनादिलिङ्गैर्व्यपदिशति, एवमेव एतद्ब्रह्म प्राणनादिलिङ्गैर्व्यपदिष्टं भवति त्वया । किं बहुना? त्यक्त्वा गोतृष्णानिमित्तं व्याजं, यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः, तं मे व्याचक्ष्वेति । इतर आह — यथा मया प्रथमं प्रतिज्ञातः तव आत्मा एवंलक्षण इति — तां प्रतिज्ञामनुवर्त एव । तत् तथैव, यथोक्तं मया । यत्पुनरुक्तं, तमात्मानं घटादिवत् विषयीकुर्विति — तत् अशक्यत्वान्न क्रियते । कस्मात्पुनः तदशक्यमित्याह — वस्तुस्वाभाव्यात् । किं पुनः तत् वस्तुस्वाभाव्यम्? दृष्ट्यादिद्रष्टृत्वम् । दृष्टेर्द्रष्टा ह्यात्मा । दृष्टिरिति द्विविधा भवति — लौकिकी पारमार्थिकी चेति । तत्र लौकिकी चक्षुःसंयुक्तान्तःकरणवृत्तिः । सा क्रियत इति जायते विनश्यति च । या तु आत्मनो दृष्टिः अग्न्युष्णत्वप्रकाशादिवत्, सा च द्रष्टुः स्वरूपत्वात्, न जायते न विन-

§ इदं व्याख्यानं रामानुजभाष्य( ३।३।३५, ३६ )-दिशा । शेषं शांकरवत् ।

(१) बृउ ३।४।२, शब्रा. १४।६।५।१ विब्रू (वै ब्रू), ब्रशांकर १।१।४ ( पृ ६७ ), १।२।२०, १।३।१९, ३९, २।३।१७, ३।३।३६, रामानुज १।१।१ ( पृ १४, ६२* ), १।१।४ ( पृ १४८, १५४ ), ३।३।३५, श्रीकंठ. ३।३।३५, श्रीकर ४।४।९.

श्यति च । सा क्रियमाणया उपाधिभूतया ससृष्टेवेति, व्यपदिश्यते — द्रष्टेति, भेदवच्च — द्रष्टा दृष्टिरिति च । याऽसौ लौकिकी दृष्टि चक्षुर्द्वारा रूपोपरक्ता जायमानैव नित्यया आत्मदृष्ट्या ससृष्टेव, तत्प्रतिच्छाया — तया व्याप्तैव जायते, तथा विनश्यति च । तेन उपचर्यते द्रष्टा सदा पश्यन्नपि — पश्यति न पश्यति चेति । न तु पुन. द्रष्टुर्दृष्टे. कदाचिदप्यन्यथात्वम् । तथा च वक्ष्यति षष्ठे — 'ध्यायतीव लेलायतीव' 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति च । तमिममर्थमाह — लौकिक्या दृष्टे कर्मभूताया., द्रष्टार स्वकीयया नित्यया दृष्ट्या व्याप्तार, न पश्ये । याऽसौ लौकिकी दृष्टि. कर्मभूता, सा रूपोपरक्ता रूपाभिव्यञ्जिका न आत्मान स्वात्मनो व्याप्तार प्रत्यञ्च व्याप्नोति । तस्मात् त प्रत्यगात्मान दृष्टेर्द्रष्टार न पश्ये. । तथा श्रुते श्रोतार न शृणुया । तथा मते मनोवृत्ते केवलाया व्याप्तार न मन्वीथाः । तथा विज्ञाते. केवलाया बुद्धिवृत्ते व्याप्तार न विजानीया. । एष वस्तुन. स्वभाव । अतः नैव दर्शयितु शक्यते गवादिवत् ।

'न दृष्टेर्द्रष्टारम्' इत्यत्र अक्षराणि अन्यथा व्याचक्षते केचित्— न दृष्टेर्द्रष्टार दृष्टे कर्तार दृष्टिमेदमकृत्वा दृष्टिमात्रस्य कर्तार, न पश्येरिति । दृष्टेरिति कर्मणि षष्ठी । सा दृष्टि· क्रियमाणा घटवत् कर्म भवति । द्रष्टारमिति तृजन्तेन द्रष्टुर्दृष्टिकर्तृत्वमाचष्टे । तेन असौ दृष्टेर्द्रष्टा दृष्टे. कर्तेति व्याख्यातॄणामभिप्रायः । तत्र दृष्टेरिति षष्ठ्यन्तेन दृष्टिग्रहण निरर्थकमिति दोष न पश्यन्ति । पश्यता वा पुनरुक्त असार प्रमादपाठ इति वा न आदर. । कथ पुनराधिक्यम् ? तृजन्तेनैव दृष्टिकर्तृत्वस्य सिद्धत्वात् दृष्टेरिति निरर्थकम् । तदा 'न द्रष्टार न पश्ये·' इत्येतावदेव वक्तव्यम् । यस्माद्धातो. पर तृच् श्रूयते, तद्धात्वर्थकर्तरि हि तृच् स्मर्यते । 'गन्तार भेत्तार वा नयति' इत्येतावानेव हिशब्द. प्रयुज्यते । न तु 'गतेर्गन्तार भिदेर्भेत्तारम्' इति असति अर्थविशेषे प्रयोक्तव्यः । न च अर्थवादत्वेन हातव्या सत्या गतौ । न च प्रमादपाठः, सर्वेषामविगानात् । तस्मात् व्याख्यातॄणामेव बुद्धिदौर्बल्य, नाध्येतृप्रमादः । यथा तु अस्माभिर्व्याख्यातम् — लौकिकदृष्टेर्विविच्य नित्यदृष्टि विशिष्ट आत्मा प्रदर्शयितव्य.— तथा कर्तृकर्मविशेषणत्वेन दृष्टिशब्दस्य द्विः प्रयोग उपपद्यते आत्मस्वरूपनिर्धारणाय । 'न हि द्रष्टुर्दृष्टे.' इति च प्रदेशान्तरवाक्येन एकवाक्यतोपपन्ना भवति । तथा च 'चक्षुषि पश्यति' 'श्रोत्रमिद श्रुतम्' इति श्रुत्यन्तरेण एकवाक्यता उपपन्ना । न्यायाच्च — एवमेव हि आत्मनो नित्यत्वमुपपद्यते विक्रियाभावे । विक्रियावच्च नित्यमिति च विप्रतिषिद्धम् । 'ध्यायतीव लेलायतीव' 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' 'एष नित्यो महिमा ब्राह्मणस्य' इति च श्रुत्यक्षराणि अन्यथा न गच्छन्ति । ननु द्रष्टा श्रोता मन्ता विज्ञाता इत्येवमादीन्यक्षराणि आत्मनोऽविक्रियत्वे न गच्छन्तीति — न, यथाप्राप्तलौकिकवाक्यानुवादित्वात् तेषाम् । न आत्मतत्त्वनिर्धारणार्थानि तानि । 'न दृष्टेर्द्रष्टारम्' इत्येवमादीना अन्यार्थासभवात् यथोक्तार्थपरत्वमवगम्यते । तस्मात् अनवबोधादेव हि विशेषण परित्यक्त दृष्टेरिति । एष ते तव आत्मा सर्वैरुक्तैर्विशेषणैर्विशिष्ट । अतः एतस्मादात्मन. अन्यदार्तम् — कार्य वा शरीर, करणात्मक वा लिङ्गम् । एतदेव एक अनार्त अविनाशि कूटस्थम् । ततो ह उषस्तश्चाक्रायण उपरराम । शाकर.

( २ ) 'अतोऽन्यदार्तं' इति च ब्रह्मणोऽन्येषामाकाशादीनामार्तत्व दर्शयति ।

ब्रशाकर २।३।७

( ३ ) यथा गा प्रदर्शयासौ गौरसावश्व इति गव्यश्वाभेदोपदेशो विरुद्धः, एवमेव 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्त मे व्याचक्ष्व' इति मामकप्रश्न एष त आत्मा सर्वान्तर. 'य प्राणेन प्राणिति' इति प्राणनादिकर्तुर्मदात्मनो जीवस्य सर्वान्तरत्वकथन विरुद्धवचनमेव । अत. कतमो याज्ञवल्क्य सर्वान्तर. स तावदविरुद्धतया वक्तव्य इत्यर्थः । उत्तरमाह — न दृष्टेरिति । अत्र दृष्टेर्द्रष्टारमिति पाक पचतीतिवन्निर्देश. । द्रष्टार कर्तारमित्यर्थ. । दर्शनश्रवणमनननिदिध्यासनाना कर्ता जीव. स न द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः । एष त आत्मा सर्वान्तर· । दर्शनादिकर्तुर्जीवादन्य एव दर्शनादिकर्मभूत सर्वान्तर आत्मा । अतोऽन्यदार्तम् । अत. परमात्मनोऽन्यद्व्यतिरिक्त त्वदभिमत प्राणितृत्वादिमज्जीवजातमार्त दुःखीत्यर्थः । अत एव

नित्यमुक्ताना कदाऽप्यस्पृष्टदुःखत्वात् ‘ अतोऽन्यदार्तम् ’ इत्युक्तिः कथमिति शङ्का प्रत्युक्ता । तेषामिहाप्रसक्तत्वात् । रग

( ४ ) यत्तु ‘ न दृष्टेर्द्रष्टार .न मतेर्मन्तारम् ’ इति श्रुतिर्दृष्टेर्मतेर्व्यतिरिक्त द्रष्टार मन्तार च प्रतिषेधतीति । तदागन्तुकचैतन्यगुणयोगितया ज्ञातुरज्ञानस्वरूपता कुतर्कसिद्धां मत्वा न तथात्मान पश्येर्न मन्वीथा अपि तु द्रष्टार मन्तारमप्यात्मान दृष्टिमतिरूपमेव पश्येरित्यभिदधातीति परिहृतम् । अथ वा दृष्टेर्द्रष्टार मतेर्मन्तार जीवात्मान प्रतिषिध्य सर्वभूतान्तरात्मान परमात्मानमेवोपास्स्वेति वाक्यार्थः । अन्यथा ‘ विज्ञातारमरे केन विजानीयात् ’ ( बृउ. २।४।१४ ) इति ज्ञातृत्वश्रुतिविरोधश्च । रामानुज. १।१।१ (पृ. ६२–६३)

( ५ ) यत्साक्षादपरोक्षात् । साक्षादेवापरोक्षमस्ति अनुभवति स्वरूपमन्यच्च सर्व पश्यतीति साक्षादपरोक्षात् । आपरोक्ष्येण पश्यतामप्यन्येषा भगवत्प्रसादादेव दर्शन भवति । न भगवतोऽन्यापेक्षयेति साक्षादिति विशेषणम् । अनन्यापेक्षस्याप्यपूर्णत्व भवतीत्यतो ब्रह्मेति । अन्येषा नियन्तृत्व चास्तीत्यत आत्मा । अन्यनियन्तृत्वेऽप्यन्यापेक्षा नास्तीत्यतः सर्वान्तर· । सर्व सामर्थ्य स्वान्तरेऽस्तीति । जीवेश्वराभेदनिवृत्त्यर्थं त आत्मेति । साक्षादपरोक्षत्वादिगुणैरेव भेदे सिद्धेऽपि परमार्थतोऽपि जीवेश्वराभेदनिवृत्त्यर्थं त आत्मेति । तत्र प्रधानतात्पर्यज्ञापनार्थं पुन. पुनरभ्यास. । देवतान्तरस्यापीद लक्षण समानमिति पृच्छति । यथा विब्रूयादित्यादिना । चतुष्पात्त्वादिलक्षण गोरश्वस्यापि यथासममेव साक्षादपरोक्षत्वादिलक्षण तत्तद्देवतावादिभिस्तस्यास्तस्या अङ्गीक्रियत एव । अतो विशेषनाम वक्ति । अत इति । अतोऽन्यद्विष्णोरन्यदार्तम् । अ इति विष्णोर्नाम । न ते विष्णो परो मात्रयेत्यादिश्रुतिप्रसिद्ध विष्णोर्लक्षणम् । न दृष्टेर्द्रष्टारमित्यादिना वक्ति । ‘ विनैवान्यप्रसादेन पूर्णसर्वगुणात्मकम् । पश्यन्ननुभवत्येव स्वरूप केशवः प्रभुः । पश्यत्यव्यवधानेन सर्व चान्यज्जडाजडम् । साक्षादेवापरोक्षात्स विष्णुरेव तत. स्मृतः । साक्षाच्छब्दः स्वतन्त्रत्वम परोक्षस्त्वनावृतिम् । अदन भोग उद्दिष्टस्तस्माद्विष्णुस्तथा स्मृत । ब्रह्मासौ गुणपूर्णत्वादात्मा सर्वनियन्तृतः । अनियम्यत्वतो नित्य सर्वे. सर्वान्तरः स्मृत । प्राणादिपञ्चरूपो यो वायु. सर्वनियामकः । नियन्ता परमो विष्णुर्वायोस्तस्यापि सर्वदा । न दृश्यश्चक्षुषा चासौ न मनोबुद्धिगोचर । अनन्तत्वान्महाविष्णुरवाच्योऽश्राव्य एव च । यद्यप्येते गुणा. सर्वे विष्णोरेव न चान्यगा । तथाप्येतैर्गुणैर्युक्तानज्ञा· प्राहु. शिवादिकान् । अनाम्नैव ततो विष्णुमाहुर्वेदा अदोषत । अदोषत्वाद्गुणोद्रेकाद इत्युक्तो हरि स्वयम् । अगम्यत्वाच्च बुद्ध्यादेरतोऽन्ये सर्व एव तु । ब्रह्मरुद्रादयो जीवा दु खिनस्तत्प्रसादत । दु खमुक्ता निजानन्द प्राप्नुयुर्नित्यमञ्जसा । मुक्तानामपि सर्वेषा विष्णुरेव नियामकः । पूर्णानन्दस्य तस्यैव मुक्ता । विप्लुट्सुखात्मका· । तारतम्येन तिष्ठन्ति ब्रह्मा तेष्वधिक सदा । यथा चन्द्रात्सदा भिन्नाः सर्वे तुहिन बिन्दव । एव विष्णो सदा भिन्ना मुक्ता ब्रह्मादिका गणा. । एव नियन्ता भगवान्पूर्णसर्वगुणार्णव. । एक एव परो विष्णुरनियम्य सदोदित. ॥’ इत्यादिबृहच्छ्रुति. । ‘ आर्तिर्दु·ख समुद्दिष्टमनार्तो विष्णुरच्युत ’ इति च । अतोऽन्यदार्तमित्येतस्माच्च जीवाना भेद. प्रसिद्ध. । न हि जीवादन्यस्यार्तिर्युज्यते । अतो जीवेभ्योऽन्यश्च विष्णुरेव । तदन्ये ब्रह्मरुद्रादयः सर्वे जीवा एवेति सिद्धम् । ‘ प्रकृतिस्त्वतिसामीप्यादनार्ताऽपि पृथङ्न तु । उच्यते न स्त्रियो यद्वत्त्रप्रस्त्रिंशत्सु भेदिताः ॥’ इति च । मध्व.

( कहोलप्रश्न )

साक्षादपरोक्षात् ब्रह्म आत्मा सर्वान्तर, ब्रह्मज्ञानार्थं एषणात्रयादुत्थानं, पाण्डित्यबाल्यमौनब्राह्मण्यानि

**अथ हैन कहोलः कौषीतकेय पप्रच्छ । याज्ञवल्क्येति होवाच । यदेव साक्षादपरोक्षाद्ब्रह्म**

---

(१) बृउ ३।५।१, शब्रा १४।६।४।१ कहोल ( कहोड ^) यदेव सा ( यत्सा ) द्ब्राह्मण ( त्पण्डित ) एव । अतोऽन्यदार्तम् ( एव भवति य एव वेद ), ब्रशकर ३।३।३६, ३।४।८, ९, ४७, ५०, भास्कर ३।३।३५, ३६, ३।४।९, २६, ४५, ४८ यदेव सा ( यत्सा ) एत वै ( एव वै ), रग अमौन च ( अमौन ), रामानुज. ३।३।३५, ३६, ३।४।४६, ४८, ४९ स्त मे ( स्तन्मे ) एत वै त ( एव हैत ) अमौन च ' अमौन ); निंबार्क. ३।३।३५, ३।४।४६ स्त मे ( स्तन्मे ), मध्व कहोलः

य आत्मा सर्वान्तरस्त मे व्याचक्ष्वेति । एष त आत्मा सर्वान्तर । कतमो याज्ञवल्क्य सर्वान्तर । योऽशनायापिपासे शोक मोह जरा मृत्युमत्येति । एत वै तमात्मान विदित्वा ब्राह्मणा पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति । या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणा । उभे ह्येते एषणे एव भवत । तस्माद्ब्राह्मण पाण्डित्य निर्विद्य बाल्येन तिष्ठासेत् । बाल्य च पाण्डित्य च निर्विद्याथ मुनि । अमौन च मौन च निर्विद्याथ ब्राह्मण । स ब्राह्मण केन स्याद्येन स्यात्तेनेदृश एव । अतोऽन्यदार्तम् । ततो ह कहोल· कौषीतकेय उपरराम ॥

( १ ) बन्धन सप्रयोजकमुक्तम् । यश्च बद्ध, तस्यापि अस्तित्वमधिगत, व्यतिरिक्तत्व च । तस्य इदानीं बन्धमोक्षसाधन ससन्यासमात्मज्ञान वक्तव्यमिति कहोलप्रश्न आरभ्यते ।

अथ ह एन कहोलो नामत·, कुषीतकस्यापत्य कौषीतकेय, पप्रच्छ । याज्ञवल्क्येति होवाचेति, पूर्ववत् —— यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तर. त मे व्याचक्ष्वति — य विदित्वा बन्धनात्प्रमुच्यते । याज्ञवल्क्य आह — एष ते तव आत्मा ।

किं उषस्तकहोलाभ्या एक आत्मा पृष्ट·, किं वा भिन्नावात्मानौ तुल्यलक्षणाविति । भिन्नाविति युक्त, प्रश्नयोर पुनरुक्तत्वोपपत्ते । यदि हि एक आत्मा उषस्तकहोलप्रश्नयोर्विवक्षित, तत्र एकेनैव प्रश्नेन अधिगतत्वात् तद्विषयो द्वितीय प्रश्नोऽनर्थक. स्यात् । न च अर्थवादरूपत्व वाक्यस्य । तस्मात् भिन्नावेतावात्मानौ क्षेत्रज्ञपरमात्माख्याविति केचिद्व्याचक्षते । तन्न, 'ते' इति प्रतिज्ञानात् । 'एष त आत्मा' इति हि प्रतिवचने प्रतिज्ञातम् । न च एकस्य कार्यकरणसघातस्य द्वावात्मानौ उपपद्येते । एको हि कार्यकरणसघात: एकेन आत्मना आत्मवान् । न च उषस्तस्यान्य· कहोलस्यान्य जातितो भिन्न आत्मा भवति, द्वयो. अगौणत्वात्मत्वसर्वान्तरत्वानुपपत्ते । यदि एकमगौण ब्रह्म द्वयो इतरेण अवश्य गौणेन भवितव्यम् । तथा आत्मत्व सर्वान्तरत्व च — विरुद्धत्वात्पदार्थानाम् । यदि एक सर्वान्तर ब्रह्म आत्मा मुख्य, इतरेण असर्वान्तरेण अनात्मना अमुख्येन अवश्य भवितव्यम् । तस्मात् एकस्यैव द्वि· श्रवण विशेषविवक्षया । यत्तु पूर्वोक्तेन समान द्वितीये प्रश्नोत्तरे उक्त, तावन्मात्र पूर्वस्यैवानुवादः —— तस्यैव अनुक्त· कश्चिद्विशेष. वक्तव्य इति । क पुनरसौ विशेष इत्युच्यते——पूर्वस्मिन्प्रश्ने——अस्ति व्यतिरिक्त आत्मा यस्याय सप्रयोजको बन्ध उक्त इति द्वितीये तु —— तस्यैव आत्मनः अशनायादिससारधर्मातीतत्व विशेष उच्यते — यद्विशेषपरिज्ञानात् सन्याससहितात् पूर्वोक्ताद्बन्धनात् विमुच्यते । तस्मात् प्रश्नप्रतिवचनयो· 'एष त आत्मा' इत्येवमन्तयो· तुल्यार्थतैव । ननु कथ एकस्यैव आत्मन अशनायाद्यतीतत्व तद्वत्त्व चेति विरुद्धधर्मसमवायित्वमिति——न, परिहृतत्वात् । नामरूपविकारकार्यकरणलक्षणसघातोपाधिभेदसपर्कजनितभ्रान्तिमात्र हि ससारित्वमित्यसकृदवोचाम, विरुद्धश्रुतिव्याख्यानप्रसङ्गेन च । यथा रज्जुशुक्तिकागगनादय सर्परजतमलिना भवन्ति पराध्यारोपितधर्मविशिष्टाः, स्वत. केवला एव रज्जुशुक्तिकागगनादय — न च एव विरुद्धधर्मसमवायित्वे पदार्थानां कश्चन विरोध· । नामरूपोपाध्यस्तित्वे 'एकमेवाद्वितीयम्' 'नेह नानास्ति किंचन' इति श्रुतयो विरुध्येरन्निति चेत् —— न, सलिलफेनदृष्टान्तेन परिहृतत्वात् मृदादिदृष्टान्तैश्च । यदा तु परमार्थदृष्ट्या परमात्मतत्त्वात् श्रुत्यनुसारिभिः अन्यत्वेन निरूप्यमाणे नामरूपे मृदादिविकारवत् वस्त्वन्तरे तत्त्वतो न स्त·——सलिलफेनघटादिविकारवदेव, तदा तत् अपेक्ष्य 'एकमेवाद्वितीयम्' 'नेह नानास्ति किंचन' इत्यादिपरमार्थदर्शनगोचरत्व प्रतिपद्यते । रूपवदेव स्वेन रूपेण वर्तमान केनचिदस्पृष्टस्वभावमपि सत् नामरूपकृतकार्य-

---

( कहोळ ) स्त मे ( स्तमेव मे ) ( या वित्तैषणा० ), **ब्रमध्व** १।३।१४, २।१।२३, ३।४।१४, १९, २०, २३, **श्रीकठ** ३।३।३५, ३।४।४६, **श्रीकर** ३।३।३५, ३६, ३।४।४७, ४९, ५० स्त मे ( स्तन्मे ) एत वै त ( एव हैत ) ब्राह्मणा ( ब्रह्मण ), **वल्लभ** ३।४।१० ( वित्तैषणायाश्च० ), **विज्ञान** १।१।२ ( पृ ५५ ), १।२।१३, १४, १५, १६, **बलदेव** ३।४।९, १७, १८, १९

करणोपाधिभ्यो विवेकेन नावधार्यते, नामरूपोपाधिदृष्टिरेव च भवति स्वाभाविकी, तदा सर्वोऽयं वस्त्वन्तरास्तित्वव्यवहारः। अस्ति चायं भेदकृतो मिथ्याव्यवहारः, येषां ब्रह्मतत्त्वादन्यत्वेन वस्तु विद्यते, येषां च नास्ति। परमार्थवादिभिस्तु श्रुत्यनुसारेण निरूप्यमाणे वस्तुनि — किं तत्त्वतोऽस्ति वस्तु किं वा नास्तीति, ब्रह्मैकमेवाद्वितीयं सर्वसंव्यवहारशून्यमिति निर्धार्यते। तेन न कश्चिद्विरोधः। न हि परमार्थावधारणनिष्ठायां वस्त्वन्तरास्तित्वं प्रतिपद्यामहे— 'एकमेवाद्वितीयम्' 'अनन्तरमबाह्यम्' इति श्रुतेः। न च नामरूपव्यवहारकाले तु अविवेकिनां क्रियाकारकफलादिसंव्यवहारो नास्तीति प्रतिषिध्यते। तस्मात् ज्ञानाज्ञाने अपेक्ष्य सर्वः संव्यवहारः शास्त्रीयो लौकिकश्च। अतो न काचन विरोधशङ्का। सर्ववादिनामप्यपरिहार्यः परमार्थसंव्यवहारकृतो व्यवहारः।

तत्र परमार्थात्मस्वरूपमपेक्ष्य प्रश्नः पुनः — कतमो याज्ञवल्क्य सर्वान्तर इति। प्रत्याह इतरः — योऽशनायापिपासे, अशितुमिच्छा अशनाया, पातुमिच्छा पिपासा। ते अशनायापिपासे योऽत्येतीति वक्ष्यमाणेन संबन्धः। अविवेकिभिः तलमलवदिव गगनं गम्यमानमेव तलमले अत्येति— परमार्थतः ताभ्यामसंसृष्टस्वभावत्वात् — तथा मूढैः अशनायापिपासादिमद्ब्रह्म गम्यमानमपि — क्षुधितोऽहं पिपासितोऽहमिति, ते अत्येत्येव परमार्थतः— ताभ्यामसंसृष्टस्वभावत्वात्। 'न लिप्यते लोकदुःखेन बाह्यः' इति श्रुतेः— अविद्वल्लोकाध्यारोपितदुःखेनेत्यर्थः। प्राणैकधर्मत्वात् समासकरणमशनायापिपासयोः। शोकं मोहम् — शोक इति कामः। इष्टं वस्तु उद्दिश्य चिन्तयतो यत् अरमणं, तत् तृष्णाभिभूतस्य कामबीजम्। तेन हि कामो दीप्यते। मोहस्तु विपरीतप्रत्ययप्रभवः अविवेकः भ्रमः। स च अविद्या सर्वस्यानर्थस्य प्रसवबीजम्। भिन्नकार्यत्वात्तयोः शोकमोहयोः असमासकरणम्। तौ मनोऽधिकरणौ। तथा शरीराधिकरणौ जरां मृत्युं च अत्येति। जरेति कार्यकरणसंघातविपरिणामः वलीपलितादिलिङ्गः। मृत्युरिति तद्विच्छेदः विपरिणामावसानः। तौ जरामृत्यू शरीराधिकरणौ अत्येति। ये ते अशनायादयः प्राणमनःशरीराधिकरणाः प्राणिषु अनवरतं वर्तमाना अहोरात्रादिवत् समुद्रोर्मिवच्च प्राणिषु संसार इत्युच्यन्ते। योऽसौ दृष्टेर्द्रष्टेत्यादिलक्षणः साक्षादव्यवहितः अपरोक्षादगौणः सर्वान्तरः आत्मा ब्रह्मादिस्तम्बपर्यन्तानां भूतानां अशनायापिपासादिभिः संसारधर्मैः सदा न स्पृश्यते — आकाश इव घनादिमलैः — तं एतं वै आत्मानं स्वं तत्त्वं, विदित्वा ज्ञात्वा — अयमहमस्मि परं ब्रह्म सदा सर्वसंसारविनिर्मुक्तं नित्यतृप्तमिति, ब्राह्मणाः — ब्राह्मणानामेवाधिकारो व्युत्थाने, अतो ब्राह्मणग्रहणम् — व्युत्थाय वैपरीत्येनोत्थानं कृत्वा। कुत इत्याह — पुत्रैषणायाः पुत्रार्थैषणा पुत्रैषणा — पुत्रेणेमं लोकं जयेयमिति लोकजयसाधनं पुत्रं प्रति इच्छा एषणा दारसंग्रहः। दारसंग्रहमकृत्वेत्यर्थः। वित्तैषणायाश्च — कर्मसाधनस्य गवादेरुपादानम् — अनेन कर्म कृत्वा पितृलोकं जेष्यामीति, विद्यासंयुक्तेन वा देवलोकं, केवलया वा हिरण्यगर्भविद्यया दैवेन वित्तेन देवलोकम्। दैवाद्वित्तात् व्युत्थानमेव नास्तीति केचित्, यस्मात् तद्बलेन हि किल व्युत्थानमिति — तदसत्, 'एतावान्वै कामः' इति पठितत्वात् एषणामध्ये दैवस्य वित्तस्य। हिरण्यगर्भादिदेवताविषयैव विद्या वित्तमित्युच्यते, देवलोकहेतुत्वात्। न हि निरुपाधिकप्रज्ञानघनविषया ब्रह्मविद्या देवलोकप्राप्तिहेतुः, 'तस्मात्तत्सर्वमभवत्' 'आत्मा ह्येषां स भवति' इति श्रुतेः। तद्बलेन हि व्युत्थानं, 'एतं वै तमात्मानं विदित्वा' इति विशेषवचनात्। तस्मात् त्रिभ्योऽप्येतेभ्यः अनात्मलोकप्राप्तिसाधनेभ्यः एषणाविषयेभ्यो व्युत्थाय — एषणा कामः, 'एतावान्वै कामः' इति श्रुतेः— एतस्मिन् त्रिविधे अनात्मलोकप्राप्तिसाधने तृष्णामकृत्वेत्यर्थः। सर्वा हि साधनेच्छा फलेच्छैव, अतो व्याचष्टे श्रुतिः — एकैव एषणेति। कथम्? या ह्येव पुत्रैषणा सा वित्तैषणा, दृष्टफलसाधनत्वतुल्यत्वात्। या वित्तैषणा सा लोकैषणा। फलार्थैव सा। सर्वः फलार्थप्रयुक्त एव हि सर्वं साधनमुपादत्ते। अत एकैव एषणा या लोकैषणा सा साधनमन्तरेण संपादयितुं न शक्यते इति, साध्यसाधनभेदेन उभे हि यस्मात् एते एषणे एव भवतः। तस्मात् ब्रह्मविदो नास्ति कर्म कर्मसाधनं वा —अतो येऽतिक्रान्ता ब्राह्मणाः, सर्वं कर्म कर्म-

साधन च सव देवपितृमानुषनिमित्त यज्ञोपवितादि —— तेन हि दैव पित्र्य मानुष च कर्म क्रियते, ‘ निवीत मनुष्याणाम् ’ इत्यादिश्रुते । तस्मात् पूर्वे ब्राह्मणाः ब्रह्मविद् व्युत्थाय कर्मभ्य कर्मसाधनेभ्यश्च यज्ञोपवीता दिभ्यः, परमहंसपारिव्राज्य प्रतिपद्य, भिक्षाचर्यं चरन्ति— भिक्षार्थं चरण भिक्षाचर्यं, चरन्ति —— त्यक्त्वा स्मार्तं लिङ्ग केवलमाश्रममात्रशरणाना जीवनसाधन पारिव्राज्यव्यञ्जकम् । विद्वान् लिङ्गवर्जित —— ‘ तस्मादलिङ्गो धर्मज्ञोऽव्यक्तलिङ्गोऽव्यक्ताचार ’ इत्यादिस्मृतिभ्य, ‘ अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रह ’ इत्यादिश्रुते, ‘ सशिखान्केशान्निकृत्य विसृज्य यज्ञोपवीतम् ’ इति च ।

ननु ‘व्युत्थायाथ भिक्षाचर्यं चरन्ति’ इति वर्तमानापदेशात् अर्थवादोऽयम् । न विधायक प्रत्ययः कश्चित् श्रूयते लिङ्लोट्तव्यानामन्यतमोऽपि । तस्मात् अर्थवादमात्रेण श्रुतिस्मृतिविहिताना यज्ञोपवीतादीना साधनाना न शक्यते परित्याग कारयितुम् । ‘ यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा ’ । पारिव्राज्ये तावदध्ययन विहितम्—— ‘वेदसन्न्यसनाच्छूद्रस्तस्माद्वेद न सन्न्यसेत् ’ इति । ‘स्वाध्याय एवोत्सृज्यमानो वाचम्’ इति च आपस्तम्बः । ‘ब्रह्मोज्झ वेदनिन्दा च कौटसाक्ष्य सुहृद्वध॰ । गर्हितान्नाद्ययोर्जग्धिः सुरापानसमानि षट् ॥’ — इति वेदपरित्यागे दोष श्रवणात् । ‘ उपासने गुरूणां वृद्धानामतिथीना होमे जप्यकर्मणि भोजने आचमने स्वाध्याये च यज्ञोपवीती स्यात्’ इति परिव्राजकधर्मेषु च गुरूपासनस्वाध्याय भोजनाचमनादीना कर्मणां श्रुतिस्मृतिषु कर्तव्यतया चोदितत्वात् गुर्वाद्युपासनाङ्गत्वेन यज्ञोपवीतस्य विहितत्वात् तत्परित्यागो नैवावगन्तु शक्यते । यद्यपि एषणाभ्यो व्युत्थान विधीयत एव, तथापि पुत्राद्येषणाभ्यस्तिसृभ्य एव व्युत्थान, न तु सर्वस्मात्कर्मण. कर्मसाधनाच्च व्युत्थानम् । सर्वपरित्यागे च अश्रुत कृत स्यात् श्रुत च यज्ञोपवीतादि हापित स्यात् । तथा च महानपराधः विहिताकरणप्रतिषिद्धाचरणानिमित्त॰ कृत स्यात् । तस्मात् यज्ञोपवीतादिलिङ्गपरित्यागोऽन्धपरम्परैव ।

न, ‘यज्ञोपवीत वेदाश्च सर्वं तद्वर्जयेद्यतिः ’ इति श्रुतेः । अपि च आत्मज्ञानपरत्वात्सर्वस्या उपनिषदः —— आत्मा द्रष्टव्य श्रोतव्यो मन्तव्य इति हि प्रस्तुतम् । स च आत्मैव साक्षादपरोक्षात्सर्वान्तरः अशनायादिससारधर्मवर्जित इत्येव विज्ञेय इति तावत् प्रसिद्धम् । सर्वा हीयमुपनिषत् एवपरेति विध्यन्तरशेषत्व तावन्नास्ति, अतो नार्थवादः, आत्मज्ञानस्य कर्तव्यत्वात् । आत्मा च अशनायादिधर्मवान्न भवतीति साधनफलविलक्षणो ज्ञातव्यः । अतोऽव्यतिरेकेण आत्मनो ज्ञानमविद्या —— ‘ अन्योऽसावन्योऽहमस्मीति’ ‘ न स वेद ’ ‘ मृत्यो स मृत्युमाप्नोति’ ‘य इह नानेव पश्यति’ ‘एकधैवानुद्रष्टव्यम्’ ‘ एकमेवाद्वितीयम् ’ ‘तत्त्वमसि’ इत्यादिश्रुतिभ्यः । क्रियाफल साधन च अशनायादिससारधर्मातीतादात्मनोऽन्यत् अविद्याविषयम्——‘यत्र हि द्वैतमिव भवति ’ ‘अन्योऽसावन्योऽहमस्मीति’ ‘न स वेद’ ‘अथ येऽन्यथातो विदु इत्यादिवाक्यशतेभ्यः । न च विद्याविद्ये एकस्य पुरुषस्य सह भवतः, विरोधात् —— तम प्रकाशाविव । तस्मात् आत्मविद. अविद्याविषयोऽधिकारो न द्रष्टव्य॰ क्रियाकारकफलभेदरूप, ‘ मृत्योः स मृत्युमाप्नोति ’ इत्यादिनिन्दितत्वात्, सर्वक्रियासाधनफलाना च अविद्याविषयाणा तद्विपरीतात्मविद्यया हातव्यत्वेनेष्टत्वात्, यज्ञोपवीतादिसाधनानां च तद्विषयत्वात् । तस्मात् असाधनफलस्वभावादात्मनः अन्यविषया विलक्षणा एषणा । उभे ह्येते साधनफले एषणे एव भवत यज्ञोपवीतादेस्तत्साध्यकर्मणा च साधनत्वात्, ‘ उभे ह्येते एषणे एव ’ इति हेतुवचनेनावधारणात् । यज्ञोपवीतादिसाधनात् तत्साध्येभ्यश्च कर्मभ्य॰ अविद्याविषयत्वात् एषणारूपत्वाच्च जिहासितव्यरूपत्वाच्च व्युत्थान विधित्सितमेव । ननूपनिषद आत्मज्ञानपरत्वात् व्युत्थानश्रुति. तत्स्तुत्यर्था, न विधि. —— न, विधित्सितविज्ञानेन समानकर्तृकत्वश्रवणात् । न हि अकर्तव्येन कर्तव्यस्य समानकर्तृकत्वेन वेदे कदाचिदपि श्रवण सभवति । कर्तव्यानामेव हि अभिषवहोमभक्षाणां यथा श्रवणम्—— अभिषुत्य हुत्वा भक्षयन्तीति, तद्वत् आत्मज्ञानैषणाव्युत्थानभिक्षाचर्याणा कर्तव्यानामेव समानकर्तृकत्वश्रवण भवेत् । अविद्याविषयत्वात् एषणात्वाच्च अर्थप्राप्त

आत्मज्ञानविधेरेव यज्ञोपवीतादिपरित्याग , न तु विधातव्य इति चेत्——न । सुतरामात्मज्ञानविधिनैव विहितस्य समानकर्तृकत्वश्रवणेन दार्ढ्योपपत्ति , तथा भिक्षाचर्यस्य च । यत्पुनरुक्त, वर्तमानापदेशादर्थवादमात्रमिति—न, औदुम्बरयूपादिविधिसमानत्वाददोष' ।

'व्युत्थाय भिक्षाचर्यं चरन्ति' इत्यनेन पारिव्राज्य विधीयते । पारिव्राज्याश्रमे च यज्ञोपवीतादिसाधनानि विहितानि लिङ्ग च श्रुतिभि स्मृतिभिश्च । अत तत् वर्जयित्वा अन्यस्माद्व्युत्थान एषणात्वेऽपीति चेत् —— न, विज्ञानसमानकर्तृकात्पारिव्राज्यात् एषणाव्युत्थानलक्षणात् पारिव्राज्यान्तरोपपत्ते । यद्धि तत् एषणाभ्यो व्युत्थानलक्षण पारिव्राज्य, तत् आत्मज्ञानाङ्ग, आत्मज्ञानविरोध्येषणापरित्यागरूपत्वात् , अविद्याविषयत्वाच्चैषणायाः । तद्व्यतिरेकेण च अस्ति आश्रमरूप पारिव्राज्य ब्रह्मलोकादिफलप्राप्तिसाधन, यद्विषय यज्ञोपवीतादिसाधनविधान लिङ्गविधान च । न च एषणारूपसाधनोपादानस्य आश्रमधर्ममात्रेण पारिव्राज्यान्तरे विषये सभवति सति, सर्वोपनिषद्विहितस्य आत्मज्ञानस्य बाधन युक्त, यज्ञोपवीताद्यविद्याविषयैषणारूपसाधनोपादित्सायां च अवश्य असाधनफलरूपस्य अशनायादिससारधर्मवर्जितस्य अह ब्रह्मास्मीति विज्ञान बाध्यते । न च तद्बाधन युक्त, सर्वोपनिषदा तदर्थपरत्वात् । 'भिक्षाचर्यं चरन्ति' इत्येषणा ग्राहयन्ती श्रुति' स्वयमेव बाधत इति चेत् —— अथापि स्यादेषणाभ्यो व्युत्थान विधाय पुनरेषणैकदेश भिक्षाचर्यं ग्राहयन्ती तत्सबद्धमन्यदपि ग्राहयतीति चेत् ——न, भिक्षाचर्यस्याप्रयोजकत्वात् — हुत्वोत्तरकालभक्षणवत् । शेषप्रतिपत्तिकर्मत्वात् अप्रयोजक हि तत् । असस्कारकत्वाच्च ——भक्षण पुरुषसस्कारकमपि स्यात्, न तु भिक्षाचर्यम् । नियमादृष्टस्यापि ब्रह्मविदः अनिष्टत्वात् । नियमादृष्टस्यानिष्टत्वे किं भिक्षाचर्येणेति चेत् —— न, अन्यसाधनात् व्युत्थानस्य विहितत्वात् । तथापि किं तेनेति चेत् —— यदि स्यात्, बाढ अभ्युपगम्यते हि तत् । यानि पारिव्राज्येऽभिहितानि वचनानि 'यज्ञोपवीत्येवाधीयीत' इत्यादीनि, तानि अविद्वत्पारिव्राज्यमात्रविषयाणीति परिहृतानि । इतरथाऽऽत्मज्ञानबाधः स्यादिति ह्युक्तम् । 'निराशिषमनारम्भ निर्नमस्कारमस्तुतिम् । अक्षीण क्षीणकर्माण त देवा ब्राह्मण विदु' ॥' इति सर्वकर्माभाव दर्शयति स्मृति विदुषः —— 'विद्वॉल्लिङ्गविवर्जितः' 'तस्मादलिङ्गो धर्मज्ञः' इति च । तस्मात् परमहसपारिव्राज्यमेव व्युत्थानलक्षण प्रतिपद्येत आत्मवित् सर्वकर्मसाधनपरित्यागरूपमिति ।

यस्मात् पूर्वे ब्राह्मणा एतमात्मान असाधनफलस्वभाव विदित्वा सर्वस्मात् साधनफलस्वरूपात् एषणालक्षणात् व्युत्थाय भिक्षाचर्यं चरन्ति स्म, दृष्टादृष्टार्थं कर्म तत्साधन च हित्वा — तस्मात् अद्यत्वेऽपि ब्राह्मणः ब्रह्मवित्, पाण्डित्य पण्डितभाव एतदात्मविज्ञान पाण्डित्य, तत् निर्विद्य नि शेष विदित्वा, आत्मविज्ञान निरवशेष कृत्वेत्यर्थ. । आचार्यत आगमतश्च एषणाभ्यो व्युत्थाय —— एषणाव्युत्थानावसानमेव हि तत्पाण्डित्य, एषणातिरस्कारोद्भवत्वात् एषणाविरुद्धत्वात् । एषणामतिरस्कृत्य न ह्यात्मविषयस्य पाण्डित्यस्योद्भव इत्यात्मज्ञानेनैव विहितमेषणाव्युत्थान आत्मज्ञानसमानकर्तृकक्त्वाप्रत्ययोपादानलिङ्गश्रुत्या दृढीकृतम् । तस्मात् एषणाभ्यो व्युत्थाय ज्ञानबलभावेन बाल्येन तिष्ठासेत् स्थातुमिच्छेत् । साधनफलाश्रयण हि बल इतरेषामनात्मविदाम् । तद्बल हित्वा विद्वान् असाधनफलरूपात्मविज्ञानमेव बल तद्भावमेव केवल आश्रयेत्, तदाश्रयणे हि करणानि एषणाविषये एन हृत्वा स्थापयितु नोत्सहन्ते । ज्ञानबलहीन हि मूढ दृष्टादृष्टविषयायामेषणायामेव एन करणानि नियोजयन्ति । बल नाम आत्मविद्यया अशेषविषयदृष्टितिरस्करणम् । अत. तद्भावेन बाल्येन तिष्ठासेत्, तथा 'आत्मना विन्दते वीर्यम्' इति श्रुत्यन्तरात्, 'नायमात्मा बलहीनेन लभ्यः' इति च । बाल्य च पाण्डित्य च निर्विद्य निःशेष कृत्वा अथ मननान्मुनि. योगी भवति । एतावद्धि ब्राह्मणेन कर्तव्य, यदुत सर्वानात्मप्रत्ययतिरस्करणम् । एतत्कृत्वा कृतकृत्यो योगी भवति । अमौन च आत्मज्ञानानात्मप्रत्ययतिरस्कारौ पाण्डित्य बाल्यसज्ञकौ निःशेष कृत्वा, मौन नाम अनात्मप्रत्ययतिरस्करणस्य पर्यवसान फलम् —— तच्च निर्विद्य अथ ब्राह्मणः कृतकृत्यो भवति —— ब्रह्मैव सर्वमिति प्रत्यय

उपजायते। स ब्राह्मणः कृतकृत्यः, अतो ब्राह्मणः। निरुपचरितं हि तदा तस्य ब्राह्मण्यं प्राप्तम्। अत आह —— स ब्राह्मणः केन स्यात् केन चरणेन भवेत्? येन स्यात् येन चरणेन भवेत्, तेन ईदृश एवायम् —— येन केनचित् चरणेन स्यात्, तेन ईदृश एव उक्तलक्षण एव ब्राह्मणो भवति। येन केनचिच्चरणेनेति स्तुत्यर्थं —— येयं ब्राह्मण्यावस्था सेयं स्तूयते, न तु चरणेऽनादरः। अत एतस्माद्ब्राह्मण्यावस्थानात् अशनायाद्यतीतात्मस्वरूपात् नित्यतृप्तात्, अन्यत् अविद्याविषयमेषणालक्षणं वस्त्वन्तरं, आर्तं विनाशि आर्तिपरिगृहीतं स्वप्नमायामरीच्युदकसमं असारं, आत्मैव एकः केवलो नित्यमुक्त इति। ततो ह कहोलः कौषीतकेय उपरराम।

शंकर

( २ ) 'सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्' —— 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः' इति बृहदारण्यके श्रूयते। तत्र संशयो मौनं विधीयते न वेति। न विधीयत इति तावत्प्राप्तम्। बाल्येन तिष्ठासेदित्यत्रैव विधेरवसितत्वात्। न ह्यथ मुनिरित्यत्र विधायिका विभक्तिरुपलभ्यते। तस्मादयमनुवादो युक्तः। कुतः प्राप्तिरिति चेत्—मुनिपण्डितशब्दयोर्ज्ञानार्थत्वात्पाण्डित्यं निर्विद्येत्येव प्राप्तं मौनम्। अपि च 'अमौनं च मौनं च निर्विद्याथ ब्राह्मणः' इत्यत्र तावन्न ब्राह्मणत्वं विधीयते प्रागेव प्राप्तत्वात्। तस्मादथ ब्राह्मण इति प्रशंसावादः, तथैवाथ मुनिरित्यपि भवितुमर्हति, समाननिर्देशत्वादिति। एवं प्राप्ते ब्रूमः— सहकार्यन्तरविधिरिति। विद्यासहकारिणो मौनस्य बाल्यपाण्डित्यवद्विधिरेवाऽऽश्रयितव्योऽपूर्वत्वात्। ननु पाण्डित्यशब्देनैव मौनस्यावगतत्वमुक्तम्। नैष दोषः। मुनिशब्दस्य ज्ञानातिशयार्थत्वात्। मननान्मुनिरिति च व्युत्पत्तिसंभवात्। 'मुनीनामप्यहं व्यासः' ( भ. गी. १०।३७ ) इति च प्रयोगदर्शनात्। ननु मुनिशब्द उत्तमाश्रमवचनोऽपि श्रूयते 'गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थम्' इत्यत्र। न। 'वाल्मीकिर्मुनिपुङ्गवः' इत्यादिषु व्यभिचारदर्शनात्। इतराश्रमसंनिधानात्तु पारिशेष्यात्तत्रोत्तमाश्रमोपादानं, ज्ञानप्रधानत्वादुत्तमाश्रमस्य। तस्माद्बाल्यपाण्डित्यापेक्षया तृतीयमिदं मौनं ज्ञानातिशयरूपं विधीयते। यत्तु बाल्य एव विधिपर्यवसानमिति तथाऽप्यपूर्वत्वान्मुनित्वस्य विधेयत्वमाश्रीयते मुनिः स्यादिति। निर्वेदनीयत्वनिर्देशादपि मौनस्य बाल्यपाण्डित्यवद्विधेयत्वाश्रयणम्। तद्वतो विद्यावतः संन्यासिनः। कथं च विद्यावतः संन्यासिन इत्यवगम्यते। तदधिकारात् 'आत्मानं विदित्वा पुत्राद्येषणाभ्यो व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति। ननु सति विद्यावत्त्वे प्राप्नोत्येव तत्रातिशयः। किं मौनविधिनेत्यत आह—पक्षेणेति। एतदुक्तं भवति यस्मिन्पक्षे भेददर्शनप्राबल्यान्न प्राप्नोति तस्मिन्नेष विधिरिति। विध्यादिवत्— यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्येवंजातीयके विध्यादौ सहकारित्वेनाग्न्यन्वाधानादिकमङ्गजातं विधीयते। एवमविधिप्रधानेऽप्यस्मिन्विद्यावाक्ये मौनविधिरित्यर्थः।

३।४।४७

'अनाविष्कुर्वन्नन्वयात्'—'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' इति बाल्यमनुष्ठेयतया श्रूयते। तत्र बालस्य भावः कर्म वा बाल्यमिति तद्धिते सति, बालभावस्य वयोविशेषस्येच्छया संपादयितुमशक्यत्वात्। यथोपपादमूत्रपुरीषत्वादिबालचरितं, अन्तर्गता वा भावविशुद्धिरप्ररूढेन्द्रियत्वं दम्भादिरहितत्वं वा बाल्यं स्यादिति संशयः। किं तावत्प्राप्तं कामचारवादभक्षता यथोपपादमूत्रपुरीषत्वं च प्रसिद्धतरं लोके बाल्यमिति तद्ग्रहणं युक्तम्। ननु पतितत्वादिदोषप्राप्तेर्न युक्तं कामचारताद्याश्रयणम्। न। विद्यावतः संन्यासिनो वचनसामर्थ्याद्दोषनिवृत्तेः पशुहिंसादिष्विवेति। एवं प्राप्तेऽभिधीयते। न। वचनस्य गत्यन्तरसंभवात्। अविरुद्धे ह्यन्यस्मिन्बाल्यशब्दाभिलप्ये लभ्यमाने न विध्यन्तरव्याघातकल्पना युक्ता। प्रधानोपकाराय चाङ्गं विधीयते। ज्ञानाभ्यासश्च प्रधानमिह यतीनामनुष्ठेयम्। न च सकलाया बालचर्यायामङ्गीक्रियमाणायां ज्ञानाभ्यासः संभाव्यते। तस्मादान्तरो भावविशेषो बालस्याप्ररूढेन्द्रियत्वादिरिह बाल्यमाश्रीयते। तदाह—अनाविष्कुर्वन्निति। ज्ञानाध्ययनधार्मिकत्वादिभिरात्मानमविख्यापयन्दम्भदर्पादिरहितो भवेत्। यथा बालोऽप्ररूढेन्द्रियतया न परेषा-

मात्मानमाविष्कर्तुमीहते तद्वत् । एव ह्यस्य वाक्यस्य प्रधानोपकार्यार्थानुगम उपपद्यते । तथा चोक्त स्मृतिकारैः — 'य न सन्त न चासन्त नाश्रुत न बहुश्रुतम् । न सुवृत्त न दुर्वृत्त वेद कश्चित्स ब्राह्मण ॥ गूढ धर्माश्रितो विद्वानज्ञातचरित चरेत् । अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ॥' 'अव्यक्तलिङ्गोऽव्यक्ताचारः' इति चैवमादि । * ब्रशकर ३।४।५०

(३) सर्वकर्मत्यागवादिनी श्रुतिरिति । तदसत् । पुत्रादिलिङ्गाद्गार्हस्थ्याद्व्युत्थायाश्रमान्तर प्रतिपद्यन्त इति स्मृतिप्राप्तमेवानूद्यते, स्मृत्यनपेक्षत्वे तु शाक्यक्षपणादिभिक्षाचरणमपि श्रौत प्रसज्येत । स्मृतौ च मननादौ त्रिदण्डयज्ञोपवीतादिनियमादुत्तमाश्रमः स्वरूपतो धर्मतश्च निर्ज्ञात इति नातिप्रसङ्ग' । भास्कर ३।४।२६

(४) जीवस्य कर्माधीनदेहसंसर्गतयाऽशनायाद्यनतीतत्वात्तद्व्यावृत्ति सिध्यतीति भाव । यद्यपि मुक्ताना नित्याना चाशनायाद्यतीतत्वमस्ति, तथाऽपि तेषामशनायाद्यतीतत्वस्य परमात्मसकल्पायत्तत्वात् अनन्यसकल्पाधीनाशनायाद्यतीतत्व परमात्मन एव । किंच प्रकृते बद्धजीवव्यावृत्तेरेव स त आत्मेति निर्दिष्टस्योपदेष्टव्यतया नित्यमुक्तव्यावर्तकधर्मानुक्तावपि न दोष इति द्रष्टव्यम् । तमेत सर्वान्तरमशनायाद्यतीत परमात्मानमनार्ते विदित्वा । ब्राह्मणा इत्यनेन क्षत्रियादिव्यावृत्तिः । उक्तैषणात्रयाद्व्युत्थायैषणात्रय हित्वा यथाविधि सन्यस्येति यावत् । अथानन्तर देहयात्रार्थं भिक्षाटन कुर्वन्तीत्यर्थः । इद चोपलक्षणम् । सर्वसन्यासाश्रमधर्मानुष्ठानस्याप्राप्तत्वात्पारिव्राज्य विधीयते । या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणा । अवर्जनीयपरस्परसबन्धादिति भावः । उभे ह्येते एषणे एव भवत. । सर्वथा साध्यसाधनविषयकैषणाद्वयमेव पर्यवस्यतीति भावः । तस्मादिति । यद्वा वैराग्यमावश्यक तस्माद्ब्राह्मणोऽधीतवेद इत्यर्थ. । ब्रह्माधीते ब्राह्मणो जातिपरो वा । पाण्डित्य निर्विद्य । ऊहापोहक्षमा धीः पण्डा साऽस्य सजातेति पण्डितस्तस्य धर्म. पाण्डित्यम् । औपदेशिकार्थावगमरूप विवेक निर्वेदविरक्तिफलक निर्विद्य लब्ध्वा बाल्येन स्वमाहात्म्यानाविष्करणबालस्वभावेन युक्त सन्ब्रह्मणि तिष्ठासेत्तन्निष्ठा लभेतोपासीतेति यावत् । तथैव व्याख्यात च व्यासार्यैर्बाल्य च पाण्डित्य च निर्विद्याथ मुनिः । बाल्यपाण्डित्ये निर्विद्य लब्ध्वाऽथाऽऽरव( रम्ब )णसशीलनलक्षणमननशीलः स्यादित्यर्थ । ध्यानविच्छेददशायामत्यन्तविषयोन्मुखत्वराहित्याय शुभाश्रयवस्तुसशीलन कर्तव्यमित्यर्थ । अमौनमिति । अमौन मौनादन्यत् पूर्वनिर्दिष्ट बाल्यपाण्डित्यलक्षण मौन चाऽऽरव(रम्ब)णसशीलनात्मक मौन च निर्विद्याथ ब्राह्मणो ब्रह्मविद्भवति लब्धनिदिध्यासनो भवतीत्यर्थ. । स ब्राह्मण इति । लब्धनिदिध्यासनो ब्रह्मविदुक्तोपायादन्येन केन स्यादिति प्रश्न. । उत्तरम् — येन स्यात्तेनेदृश एव येन मौनपर्यन्तेन ब्राह्मण स्यादित्युक्त तेनैवेदृशः स्यान्न केनाप्यन्येनोपायेन । अतोऽन्यदार्तम् । अस्मात्परमात्मनो यदन्यत्प्राणिजात तद्दुःखीत्यर्थः । रग.

(५) 'सहकार्यन्तरविधिः पक्षेण तृतीय तद्वतो विध्यादिवत्'— यथा 'तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' ( बृउ. ४।४।२२ ) इत्यादिना 'शान्तो दान्तः' ( बृउ. ४।४।२३ ) इत्यादिना च सहकारी यज्ञादिः शमदमादिश्च विधीयते यथा च 'श्रोतव्यो मन्तव्यः' ( बृउ. २।४।५ ) इति श्रवणमनने चार्थप्राप्ते विद्यासहकारित्वेन गृह्येते तथा 'तस्माद्ब्राह्मणः पाण्डित्य निर्विद्य' इत्यादिना पाण्डित्य बाल्य मौनमिति त्रितय विद्यायाः सहकार्यन्तर विधीयत इति । मौन च पाण्डित्यादर्थान्तरमित्याह — पक्षेणेति । मुनिशब्दस्य पक्षेण प्रकृष्टमननशीले व्यासादौ प्रयोगदर्शनान्मौन पाण्डित्यबाल्ययोर्द्वयोस्तृतीयम् । यद्यपि 'अथ मुनिः' इत्यत्र विधिप्रत्ययो न श्रूयते तथापि मौनस्याप्राप्तत्वाद्विधेयत्वमङ्गीकरणीयमथ मुनिः स्यादिति । इद च मौन श्रवणप्रतिष्ठार्थमननादर्थान्तरभूतमुपासनालम्बनस्य पुन. पुन. सशीलन तद्भावनारूपम् । तदेव वाक्यार्थः । ब्राह्मणो विद्यावान्पाण्डित्य निर्विद्योपास्यं ब्रह्मतत्त्व परिशुद्ध परिपूर्णं च विदित्वा श्रवण-

* अधिक ब्रशकरव्याख्यान बृउ ३।४।१ (पृ ११३२) इत्यत्र द्रष्टव्यम् । ऐआ ३।२।६ ( पृ ६२४ ) इत्यत्र, छाउ ८।१५।१ ( पृ ९८५ ) इत्यत्र च व्याख्यानामि द्रष्टव्यानि ।

मननाभ्या प्राप्त वेदन प्रतिलभ्येत्यर्थ । तच्च भगवद्भक्तिकृतसत्त्वविशुद्धिकृतम्। यथोक्त 'नाह वेदै' ' (भ गी ११।५३ ) इत्यारभ्य 'भक्त्या त्वनन्यया शक्यो ज्ञातुम्' (भ गी ११।५४) इति। श्रुतिश्च 'यस्य देवे परा भक्ति' (श्वेउ ६।२३)। 'नायमात्मा प्रवचनेन' (काउ २।२३, मुउ ३।२।३) इत्यादिका। 'बाल्येन तिष्ठासेत्' बाल्यस्वरूप चानन्तरमेव वक्ष्यते। 'बाल्य च पाण्डित्य च निर्विद्याथ मुनि' स्यात्'। बाल्य पाण्डित्ये यथावदुपादाय परिशुद्धे परिपूर्णे ब्रह्मणि मनन शीलो भवेन्निदिध्यासनरूपविद्यावाप्तये । एव त्रितयोपादानेन लब्धविद्यो भवतीत्याह 'अमौन मौन च निर्विद्याथ ब्राह्मण' ' इति। अमौन मौनेतरसहकारि कलाप । त च मौन च यथावदुपाददानो विद्याकाष्ठा तदेकनिष्पाद्यां लभेतेत्यर्थ ।'स ब्राह्मण केन स्यात्' इत्युक्तादुपायात्किमन्योऽप्युपायोऽस्तीति पृष्टे 'येन स्यात्तेनेदृश एव' इति येन मौनपर्यन्तेन ब्राह्मणः स्यादित्युक्त तेनैवेदृश स्यान्न केनाप्यन्येनोपायेनेति परिहृतम्। अतः सर्वेष्वाश्रमेषु स्थितस्य विदुषो यज्ञादिस्वाश्रमधर्मवत्पाण्डित्यादिक मौनतृतीय विद्यायाः सहकार्यन्तर विधीयते। ३।४।४६

'मौनवदितरेषामप्युपदेशात्' — तथैतस्मिन्नपि वाक्ये 'ब्राह्मणा पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति पारिव्राज्यैकान्तधर्मं प्रतिपाद्य 'तस्माद्ब्राह्मण पाण्डित्य निर्विद्य' इत्यादिना पारिव्राज्यधर्मस्थितिहेतुकमौनतृतीयसहकारिविधान प्रदर्शनार्थमित्याह—मौनवदिति। सर्वेषणाविनिर्मुक्तस्य भिक्षाचरणपूर्वकमौनोपदेश सर्वेषामाश्रमधर्माणा प्रदर्शनार्थं । कुतः । एवविधमौनोपदेशवदितरेषामाश्रमिणामपि 'त्रयो धर्मस्कन्धा.' (छाउ २।२३।१) इत्यारभ्य 'ब्रह्मसस्थोऽमृतत्वमेति' (छाउ २।२३।१) इति ब्रह्मप्राप्त्युपदेशात्। उपपादितश्च पूर्वमेव ब्रह्मसस्थशब्द. सर्वाश्रमिसाधारण इति। अत सुष्ठूक्त यज्ञादिसर्वाश्रमधर्मवन्मौनतृतीयः पाण्डित्यादिर्विद्यासहकारित्वेन विधीयत इति। ३।४।४८

'अनाविष्कुर्वन्नन्वयात्' — अनाविष्कुर्वन्निति । बालस्य यत्स्वभावानाविष्काररूप कर्म तदुपाददानो वर्तेत विद्वान्। कुत' । अन्वयात्। तस्यैवान्वयात्। 'बाल्येन तिष्ठासेत्' इत्यस्मिन्विधौ तस्यैव ह्यन्वयसभव. । इतरेषा विद्याविरोधित्वश्रवणात् — 'नाविरतो दुश्चरितान्नाशान्तो नासमाहित. । नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥' (काउ २।२३), 'आहारशुद्धौ सत्त्वशुद्धि' (छाउ. ७।२६।२) इत्यादिषु। * रामानुज. ३।४।४९

(६) यदेव साक्षादिति पुन प्रश्नो मुक्तानामपि भगवतो भेदोऽस्तीति ज्ञापयितुम्। यदेव ब्रह्म तदन्ये ब्रह्मादयो मुक्ता अपि यन्नैव भवन्ति कदाचन। तमेव मे व्याचक्ष्व मुक्तजीववैलक्षण्येन सहेति द्वितीय एव शब्दार्थ । स तु भगवान्स्वत एवातीताशनायादिरतीतानागतवर्तमानकालेषु ब्रह्मादयस्तु त विदित्वा तत्प्रसादादेव पश्चादत्येष्यन्ति। एत वै तमित्येनाहशैर्गुणैः साक्षादपरोक्षत्वजीवभेदादिभिर्युक्तमित्यर्थः । भिक्षाचर्यं चरन्ति मुक्ता अपि ब्रह्मादयस्तस्मादेव परमेश्वराद्विप्लुडानन्दमेव भिक्षन्तो वर्तन्ते। ब्रह्माणनान्मुक्ता एव ब्राह्मणशब्देनोच्यन्ते। न हि ज्ञानादनन्तर सन्यासस्य कर्तव्यता। येषां तद्योग्यता तेषामपि ज्ञानार्थत्वेनैव सन्यास। मुक्ता अपि य भिक्षन्ते सोऽतिपूर्णमहानन्दो भगवान्स्वत एव । तदन्ये ब्रह्मादयो मुक्ता अपि तत एव विप्लुडानन्दभिक्षुका इति विशेष. । तथापि तेषामेषणातीतत्वान्न दुःखम्। पुत्रस्य वित्तस्य च लोकार्थत्वाल्लोकैषणायामन्तर्भाव । वित्तस्यापि प्राय' पुत्रार्थत्वात्पुत्रैषणाया लोकैषणाया अपि दु खरूपत्वात्साऽपि तेषा नास्त्येवेति दर्शयितुमुभे ह्येते एषणे एव भवत इत्याह। उभे अपि दृष्टादृष्टविषये एषणात्वाद्दु खरूपे एवेत्यर्थ. । पुत्रवित्तैषणे उभे अपि दृष्टविषयत्वादेकैवेत्युभे एवेत्युक्तम्। द्वितीयो ब्राह्मणो ब्रह्माणितु योग्यः। पाण्डित्यमागमज्ञानम्। बाल्य युक्तिसहितम्। बलयुक्तत्वात्। मौनम् पासनाजम्। अमौनमपरोक्षज्ञानम्। निर्विद्य नितरप्राप्य लब्ध्वा। विद्लृ लाभ इति धातो । अब्राह्मणो मुक्तो भवतीत्यर्थ.। स मुक्तो येन केनापि वर्तेयन्नीदृश एव भिक्षुक एव । न कदाचित्स्वतन्भवति । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजी

* निंबार्क श्रीकठ श्रीकर रामानुजवद्भाव ।

वन्तीति च वक्ष्यति । मुक्तविषय चैतत् । अत्र पिताऽपिता भवतीत्यादि तत्प्रस्तावे स्वाप्ययसपत्त्योरन्यतरापेक्षमाविष्कृत हीति भगवद्वचनम् । तत्रैव मुक्तानामानन्दतारतम्य चोक्तम् । स यो मनुष्याणा राद्ध. समृद्धो भवतीत्यादिना । श्रोत्रियत्वावृजिनत्वाकामहतत्वाना मुक्तेष्वेव मुख्यत्वात् । यश्च श्रोत्रिय इति ह्यभ्यास । न ह्यमुक्ता अवृजिना अकामहता वा । न च श्रुतिफल सम्यक्प्राप्ता । श्रुतिफलप्राप्तिर्हि श्रोत्रियत्वम् । 'सर्वे विमोहितधियस्तव माययेमे ब्रह्मादयस्तनुभृतो बहिरर्थभावा' ॥' इति भागवते । शरीरसबन्धिना मोहादियुतत्वम् । मोहादियुताना न श्रोत्रियत्वमदु.खत्वमकामहतत्व वा । 'वृजिन व्रजन दुख क्लेशो बाधेति चोच्यते ' इत्यभिधानम् । न च देवादिपदाकामानामिन्द्रादिपदाकामानां च कश्चिद्विशेषो दृश्यते । अतो मुक्तविषयमेवैतत् । ' परो मात्रया तन्वावृधान न ते महित्वमन्वश्नुवन्ति ' ' ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तु नैव शक्यते । तद्यत्स्वभाव' कैवल्य स भवान्केवलो हरे ॥ ' ' मुक्तानां परमा गति. ' ' कृष्णो मुक्तैरिज्यते वीतमोहै ' इत्यादिवचनैश्च भगवदनुग्राह्यत्व तदानन्दावाप्तिश्च मुक्ताना दृश्यते । ' ब्रह्मभ्यासात्त आत्मेति मुक्तौ जीवेशयोर्भिदा । प्रधानतत्परत्वेन दृश्यतेऽत्यादरात्सदा । महा तात्पर्ययोगाच्च स एवार्थोऽवगम्यते । तात्पर्यं परम विष्णोरत्युद्रेके विशेषत । सर्वश्रुतिस्मृतीनां च दृश्यतेऽन्यत्तदर्थत । स च जीवेशयोर्भेदे सर्वोद्रेको हि युज्यते । ब्रह्मभ्यासस्त आत्मेति श्रुतावादरतस्तत: । ममात्मेति वचो यत्र विष्णोरपि च दृश्यते । देहस्यापि स्वरूपत्वज्ञापन तत्प्रयोजनम् । न ह्यप्रयोजक वेदपद वर्णोऽथ वा स्वर. । देहस्वरूपता विष्णोर्न ममेति पद विना । सम्यक्ज्ञापयितु शक्या ततस्तत्पदमिष्यते । ततस्त आत्मेति वचो भेदाभावेन युज्यते । भिक्षया भक्षण तस्मादानन्दस्य ततो वदेत् । मुक्तानामेकदेशत्व ब्रह्मानन्दव्यपेक्षया । विप्लुट्त्व प्रतिबिम्बत्व श्रुतिषूक्त हि सर्वश. । तथापि पूर्णानन्दत्वममुक्ताना व्यपेक्षया । ब्रह्मादेस्तारतम्य च मुक्तावेव सदातनम् । दृष्टादृष्टेषणानाशान्निर्दु.खत्व च सर्वदा । परब्रह्मत्ववचन मुक्तानां यत्र दृश्यते । जीवेषु ब्रह्मशब्दोक्तेः परत्व तु विमुक्तित. । तत्परब्रह्मता तेषा बद्धजीवोच्चता मता । ततो ब्रह्माणने योग्यः पाण्डित्यं प्राप्नुयात्परम् । पाण्डित्यमागमज्ञत्व बाल्य युक्तिसहायता । मौन तूपासनासिद्धिरमौन भगवद्दृशिः । एतान्याप्य भवेन्मुक्तिर्मुक्तो वै भिक्षुको भवेत् । न ह्यन्यभिक्षित विष्णुर्दद्यान्नियमत. क्वचित् । मुक्तस्य भिक्षित सर्वं दद्यान्नियमतो हरि. । अयोग्यभिक्षण तेषा न कदाचित्तु युज्यते । येन केनापि नैतेषा भिक्षावृत्तिर्विनश्यति । प्रथमो ब्राह्मणो मुक्तो द्वितीयो योग्य उच्यते । अपरोक्षविन्मुक्तयोस्तु तार्तीयेनोभयोर्ग्रह । अतो मुक्ता अमुक्ताश्च न स्वतन्त्रा' कदाचन । स्वतन्त्रस्तु स एवैको भगवान्पुरुषोत्तम' ॥ ' इत्यादि ब्रह्मतर्के । ' द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षर. सर्वाणि भूतानि कुटस्थोऽक्षर उच्यते ॥ उत्तम' पुरुषस्त्वन्य. परमात्मेत्युदाहृत. ॥ ' इत्यादिना च भेदेन महोत्कर्षं परमतात्पर्यं सर्वशास्त्राणामाह । मध्व

( ७ ) ' नित्यतीर्णाशनायादिरेक एव हरि स्वत. । अशनायादिकानन्ये तत्प्रसादात्तरन्ति हि ॥' इति पाद्मे । सापेक्षनिरपेक्षयोश्च निरपेक्ष स्वीकर्तव्यम् ।

१।३।१४

'स्तुतयेऽनुमतिर्वा'—'अथ मुनि. तेनेदृश एव' इति ज्ञानिनो यथेष्टाचरण विधीयते इत्यत आह—स्तुतय इति । न विधिर्ज्ञानिनः स्तुतयेऽनुमतिमात्र वा ।

३।४।१४

' अनुष्ठेय बादरायणः साम्यश्रुते. ' — अनुष्ठेयानां मध्य एव कामतश्चरण कामतो निवृत्तिरिति बादरायणो मन्यते, ' केन स्याद्येन स्यात्तेनेदृश एव ' इति साम्यश्रुते. । ३।४।१९

' विधिर्वा धारणवत् '—केन स्याद्येन स्यादिति विधिर्वा । यथा वेदधारण त्रैवर्णिकानां विहित नान्येषाम् । एव स्वमतानुसारिणी प्रवृत्तिर्ज्ञानिनां विहिता । न तत्राधर्मशङ्का कार्या नान्येषामिति वा । ' स्वेच्छयैव प्रवृत्तिस्तु ब्रह्मणो विधिचोदिता । नाशङ्क्य तन्मत क्वापि विष्णोः प्रत्यक्षचोदना । इतरेषां न विहिता स्वेच्छावृत्तिः कथचन ॥' इति ब्राह्मे । ३।४।२०

'स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्'—स्तुतिमात्रमेव स्वेच्छाचरण न विधि. । तैरपि सामान्यविधिस्वीकारा-

दिति चेन्न। अपूर्वत्वात्। परवशत्वात्। सर्वविध्यतिक्रमेण स्तुतिमात्रविषयत्व परब्रह्मण एव हि। 'विधीना विषयास्त्वन्ये ब्रह्मण स्वेच्छया कृतौ। परस्य ब्रह्मणो ह्येव सर्व विध्यतिदूरता॥' इति ब्रह्मतर्के। ३।४।२१

'भावशब्दाच्च'—'यथाविधानमपरे विधिर्भावे प्रजापते। ब्रह्मण परमस्यैव सर्वविध्यतिदूरता॥' इति चतुरश्रुतौ। ३।४।२२

'पारिप्लवार्था इति चेन्न विशेषितत्वात्' — केन स्यान्येन स्यादित्यादय. स्थिरत्वनिवृत्त्यर्था इति चेन्न। 'त्रेधा हि ज्ञानिनो ह वाव भवन्ति विधिनियताः स्वेच्छानियता॰' इति। विधिनियता मनुष्या अनियता हि देवा ब्रह्मैव स्वेच्छानियतः' इति गौपवनश्रुतौ विशेषितत्वात्। ३।४।२३

'तथा चैकवाक्योपबन्धात्' — एव सति विधिवाक्याना स्वेच्छावृत्तिवाक्यानां च सबन्धो भवति।

ब्रमध्व ३।४।२४

(८) 'एत वै तमात्मान॰' 'एतावदरे॰' इत्यादिश्रुतयो ब्रह्मयन्तद्विदा कर्मत्यागमेवानुवदन्त्यतः त्यागपक्ष एव बलवान्। वल्लभ ३।४।१०

(९) 'अन्तर उपपत्तेः' — अन्तरोऽत्र परमात्मैव उपपत्तेः, न हि यदेवेत्यवधारण जीवेषूपपद्यते, परमात्मापेक्षया जीवानामप्यमुख्यब्रह्मत्वात्, 'य आत्मनि तिष्ठन्नात्मनोऽन्तरः' इत्यादिश्रुत्यन्तरेषु जीवानामन्तरात्मान्तरसिद्धेश्च। अत एव जीवपरे पूर्ववाक्ये यदित्येवास्ति न तु यदेवेति। तत्र च 'प्राणेन प्राणिति' इत्यादिजीवलिङ्गमप्यस्ति, ब्रह्मणि तु यदेवेत्युपपद्यते, ब्रह्मणोऽन्तरात्मान्तरस्यासिद्धेः।

१।२।१३

'स्थानादिव्यपदेशाच्च' — इतोऽप्यत्र वाक्येऽन्तर परमात्मैव, स्थानादिव्यपदेशात्स्थानमाधारः व्यपदेशौचित्यात् इत्यर्थ। पूर्ववाक्ये हि आधाराणा प्राणेन्द्रियादीना उदानाद्यन्ताना(१) तत्पूर्ववाक्योपस्थितानामन्तरस्थतया एके आत्मा प्रोक्तः 'एष त आत्मा सर्वान्तर' इत्यादिना सर्वशब्दस्य बुद्धिस्थवाचित्वात्तदनन्तर चान्योऽप्यात्मा सर्वान्तर उच्यते, अत. पूर्वोपस्थिततया अत्र तस्याप्यात्मनोऽयमन्तर इति गम्यते। पूर्ववाक्यादेवाधारक्रमेण व्यपदेशौचित्यादिति।

१।२।१४

'सुखविशिष्टाभिधानादेव च'— सुखेषु विशिष्टमुत्तम सुख, तथा च 'योऽशनापिपासे शोक मोह जरामृत्युमत्येति' इत्यनेन उत्तमसुखस्याभिधानात् इत्यर्थ.। अत्राशनाद्यतीतत्वस्य परमेश्वरगुणस्य प्रशंसार्थे सुखशब्दः सूत्रे गौण. प्रयुक्त इति मन्तव्यम्। १।२।१५

'श्रुतोपनिषत्कगत्यभिधानाच्च'—श्रुता उपनिषद. सामग्र्येण यैस्ते श्रुतोपनिषत्कास्तेषा या गति प्रव्रज्या सन्यास इति यावत्। तस्यात्र वाक्यशेषेऽभिधानाच्च परमात्मैव ग्राह्यो न जीव इत्यर्थ.। १।२।१६

'अनवस्थितेरसभवाच्च नेतर'—अनवस्थापत्त्यैवेश्वरस्यान्तरोऽन्य आत्मा न सिध्यति। यदेवेत्यवधारणासभवाच्चेत्यर्थ। श्रुतिबलात्त्वीश्वर कल्प्यते यदि ह्यनवस्थाभयात्प्रामाणिको न सेत्स्यति, तदा देहेन्द्रियाणामन्तरो जीवोऽपि प्रथमवाक्यान्न सिध्येतेति भाव॰। अथवैव व्याख्येय, ननु प्राणादीनामन्तरस्य जीवस्यान्तरोऽन्यः सिध्यति इत्येव अत्रार्थो भवतु, तत्राह— अनवस्थितेरित्यादिसूत्र कस्यापि सिद्धजीवस्य स्वातिरिक्ताखिलजीवानामन्तरवस्थानासभवात्, यदेवेत्यवधारणासभवाच्चेत्यर्थ.। सर्वान्तरत्वश्रुत्या सर्वान्तर्यामित्व लब्धमिति सर्वान्तर्यामित्वादिगुणानवधारयितु वाक्यविशेष ब्रह्मपरत्वेनावधारयति। विज्ञान १।२।१७

(गार्गीप्रश्न)

ओतप्रोतभावेनेतरेतरस्थिता लोका ब्रह्मलोकान्ता

**अथ हैन गार्गी वाचक्नवी पप्रच्छ। याज्ञवल्क्येति होवाच। यदिदꣳ सर्वमप्स्वोतं च**

---

(१) बृउ ३।६।१, शब्रा १४।६।६।१ कस्मिन्नु खल्वाप (कस्मिन्न्वाप) कस्मिन्नु खलु वा (कस्मिन्नु वा) वायुरोतश्च प्रोतश्चेति+ (आकाश एव गार्गीति। कस्मिन्न्वाकाश ओतश्च प्रोतश्चेति) कस्मिन्नु खल्वन्त (कस्मिन्न्वन्त) गन्धर्वलोकेषु गार्गीति। कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्चेति (द्यौर्लोके गार्गीति। कस्मिन्नु द्यौर्लोक ओतश्च प्रोतश्चेति) न्नु खल्वादित्य (न्वादित्य) खलु चन्द्र (चन्द्र) खलु नक्षत्र (नक्षत्र) खलु देव (देव) इन्द्रलोकेषु. प्रजापति (गन्धर्वलोकेषु

प्रोतं च कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति । वायौ गार्गीति । कस्मिन्नु खलु वायुरोतश्च प्रोत श्चेति । अन्तरिक्षलोकेषु गार्गीति । कस्मिन्नु खल्वन्तरिक्षलोका ओताश्च प्रोताश्चेति । गन्धर्वलोकेषु गार्गीति। कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्चेति । आदित्यलोकेषु गार्गीति । कस्मिन्नु खल्वादित्यलोका ओताश्च प्रोताश्चेति । चन्द्रलोकेषु गार्गीति । कस्मिन्नु खलु चन्द्रलोका ओताश्च प्रोताश्चेति । नक्षत्रलोकेषु गार्गीति । कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति । देवलोकेषु गार्गीति । कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेति । इन्द्रलोकेषु गार्गीति । कस्मिन्नु खल्विन्द्रलोका ओताश्च प्रोताश्चेति । प्रजापति लोकेषु गार्गीति । कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति । ब्रह्मलोकेषु गार्गीति । कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति । स होवाच गार्गि माऽतिप्राक्षीः । मा ते मूर्धा व्यपप्तत् । अनतिप्रश्न्यां वै देवतामतिपृच्छसि । गार्गि माऽतिप्राक्षीरिति । ततो ह गार्गी वाचक्नव्युपरराम ॥

( १ ) यत्साक्षादपरोक्षाद्ब्रह्म सर्वान्तर आत्मेत्युक्त, तस्य सर्वान्तरस्य स्वरूपाधिगमाय आ शाकल्यब्राह्मणात् ग्रन्थ आरभ्यते । पृथिव्यादीनि ह्याकाशान्तानि भूतानि अन्तर्बहिर्भावेन व्यवस्थितानि । तेषां यत् बाह्य बाह्य, अधिगम्याधिगम्य निराकुर्वन् द्रष्टु' साक्षात्सर्वान्तरोऽगौण आत्मा सर्वससारधर्मविनिर्मुक्तो दर्शयितव्य इत्यारम्भ — अथ हैन गार्गी नामत., वाचक्नवी वचक्नोदुहिता, पप्रच्छ । याज्ञवल्क्येति होवाच । यदिद सर्व पार्थिव धातुजात अप्सु उदके ओत च प्रोत च — ओत दीर्घपटतन्तुवत्, प्रोत तिर्यक्तन्तुवत्, विपरीत वा — अद्भि सर्वतोऽन्तर्बहिर्भूताभिर्व्याप्तमित्यर्थः । अन्यथा सक्तुमुष्टिव द्विशीर्येत । इद तावत् अनुमानमुपन्यस्तम् — यत् कार्य परिच्छिन्न स्थूल, कारणेन अपरिच्छिन्नेन सूक्ष्मेण व्याप्तमिति दृष्टम् — यथा पृथिवी अद्भिः । तथा पूर्वं पूर्व उत्तरेणोत्तरेण व्यापिना भवितव्यम् — इत्येष आ सर्वान्तरादात्मन प्रश्नार्थ. । तत्र भूतानि पञ्च सहतान्येव उत्तरमुत्तर सूक्ष्मभावेन व्यापकेन कारणरूपेण च व्यवतिष्ठन्ते । न च परमात्मनोऽर्वाक् तद्व्यतिरेकेण वस्त्वन्तरमस्ति, 'सत्यस्य सत्यम्' इति श्रुते. । सत्य च भूतपञ्चक, सत्यस्य सत्य च पर आत्मा ।

कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति — तासामपि कार्यत्वात् स्थूलत्वात् परिच्छिन्नत्वाच्च क्वचिद्धि ओतप्रोतभावेन भवितव्यम् । क्व तासा ओतप्रोतभाव इति । एवमुत्तरोत्तरप्रश्नप्रसङ्गो योजयितव्य । वायौ गार्गीति । ननु अग्नाविति वक्तव्यम् — नैष दोष । अग्ने पार्थिव वा आप्य वा धातुमनाश्रित्य इतरभूतवत् स्वातन्त्र्येण आत्मलाभो नास्तीति तस्मिन् ओतप्रोतभावो नोपदिश्यते । कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति । तान्येव भूतानि सहतानि अन्तरिक्षलोका । तान्यपि — गन्धर्वलोकेषु, गन्धर्वलोका आदित्य लोकेषु, आदित्यलोका चन्द्रलोकेषु, चन्द्रलोका नक्षत्र लोकेषु, नक्षत्रलोका देवलोकेषु, देवलोका इन्द्रलोकेषु, इन्द्रलोका. विराट्शरीरारम्भकेषु, भूतेषु प्रजापतिलोकेषु, प्रजापतिलोका' ब्रह्मलोकेषु, ब्रह्मलोका नाम — अण्डारम्भकाणि भूतानि । सर्वत्र हि सूक्ष्मतारतम्यक्रमेण प्राण्युपभोगाश्रयाकारपरिणतानि भूतानि सहतानि तान्येव पञ्चेति बहुवचनभाञ्जि । कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति — स होवाच याज्ञवल्क्य — हे गार्गि मातिप्राक्षी स्व प्रश्न, न्यायप्रकारमतीत्य आगमेन प्रष्टव्या देवता अनुमानेन मा प्राक्षीरित्यर्थ । पृच्छन्त्याश्च मा ते तव मूर्धा शिरः व्यपप्तत् विस्पष्ट पतेत् । देवताया स्वप्रश्न आगमविषय । त प्रश्नविषयमतिक्रान्तो गार्ग्या' प्रश्नः, आनुमानिकत्वात् । स यस्या देवताया प्रश्न सा अतिप्रश्न्या, न अतिप्रश्न्या अनतिप्रश्न्या, स्वप्रश्नविषयैव, केवलागमगम्येत्यर्थ । ता अनतिप्रश्न्यां वै देवता अतिपृच्छसि । अतो गार्गि माऽतिप्राक्षी., मर्तुं चेन्नेच्छसि । ततो ह गार्गी वाचक्नव्युपरराम ।

शाकर.

---

गार्गीति । कस्मिन्नु गन्धर्वलोका ओताश्च प्रोताश्चेति । प्रजापति ) खलु प्रजा ( प्रजा ) खलु ब्रह्म ( ब्रह्म ) अनतिप्रश्न्या वै देवतामति ( अनतिप्रश्न्या वै देवता अति ), रग प्रोत च ( प्रोत चेति ), मध्व रगवत्

(२) गर्गस्य गोत्रापत्य स्त्री गार्गी । न चाघ स्थितानामन्तरिक्षलोकानामुपरितनेषु गन्धर्वलोकादिषु ओतत्व प्रोतत्वमनुपपन्नमिति शङ्क्यम् । पर्वतानामुपरि स्थितानां क्षितिधारकत्ववदौर्ध्वस्य ज्योतिश्चक्रा( क्र )-धारकत्ववदुपपत्ते. । स होवाचेति । ब्रह्मलोकमप्यतिक्रम्य तत ऊर्ध्वस्य प्रश्न मा कुरु ते मूर्ध्न पतन मा भूत्, पृच्छसि चेत्पतिष्यतीति भाव । अपतत् । लुङि लदित्वादङ् । 'पत पुम्' इति पुमागम । प्रश्नमर्हतीति प्रश्न्या । नियमानुपेतप्रश्नमर्यादामतिक्रम्य वर्तमान प्रश्नोऽतिप्रश्न आक्षेप इति यावत् । अतिप्रश्नमर्हतीत्यति प्रश्न्याऽऽक्षेपार्हेत्यर्थ । सा न भवतीत्यनतिप्रश्न्या आक्षेपमुखेन ज्ञातुमयोग्यां देवतामाक्षेपमुखेन ज्ञातुमिच्छ सीत्यर्थ । यद्यपि ब्रह्मलोकाधारविषय प्रश्नो न परदेवताविषयोऽपि त्वव्याकृताकाशविषयस्तथाऽपि तदनन्तर प्रश्न. परदेवताविषयो भविष्यतीति दूरदृष्ट्या ब्रह्म लोकाधारप्रश्नमेव प्रतिचिक्षेपेति द्रष्टव्यम् । * रग

(३) मुक्ताना तारतम्य हि गार्गिब्राह्मणनोच्यते । लोका इति मुक्तानामानन्दानुभवाः स्वरूपभूता । अप्सु वायाविति स्वरूपस्यैव प्रस्तुतत्वात् अनतिप्रश्न्या वै देवनामतिपृच्छसीति देवतास्वरूपप्रश्नस्यैवावगम्यमानत्वाच्च । न चोपरितनलोकेष्वधस्तनलोका आश्रिता. न च वायु गन्धर्वलोकाश्रित । वाय्वाश्रयत्वश्रुते सवलोकानाम् । वायुना हि सर्वे लोका नेनीयन्त इत्यादिना । 'सप्त स्कन्धगतो लोकान्यो बिभर्ति महाबल ' इति हरिवंशेषु । न चानतिप्रश्नत्व लोकमात्रस्यास्ति । अधस्तनेषु चोप रितना लोकास्तिष्ठन्ति । न च मरुतामेकोऽपि गन्धर्वलोकादवरो विद्यते । उक्त च –'आपिबन्त्यखिलान् भोगा नित्यापश्चक्रवर्तिन । मुक्तास्तेषां वायुसुतश्चक्रो नाम व्यपाश्रय. । मुक्तस्तस्य च मुक्तस्तु मरुद्गन्धर्वनामवान् । सुतो वायोस्तत्सुखानां मौक्तानामन्तरिक्षग. । मरुताम्भेक एवासावन्तरिक्षस्तु वायुज. । तत्सुखाना तु मौक्तानामानन्दा. सूर्यरूपकाः । सौराणां चापि मौक्तानामानन्दाश्चन्द्ररूपकाः । आह्लादनाच्चन्द्रनामा देवोऽसावनिरुद्धकः । स एव चन्द्रमाविश्य स्थितस्तन्नामकोऽपि स. । अनिरुद्धसुखाना च मौक्तानामिन्द्र आश्रय' । नक्षत्रनामवानिन्द्रो नैवान्यः क्षत्रियोऽस्य हि । विद्यते त्रिषु लोकेषु ब्रह्माद्यास्तूर्ध्वलोकगा. । आनन्दानां तथेन्द्राणा मौक्ताना देव आश्रय । दवेति लिङ्गनाम स्याल्लिङ्गात्मा रुद्र उच्यते । इन्द्राश्रय शिवस्यापि सुखानां मुक्तिगामिनाम् । शिवो हीश्वरनामा स्यात्तत्पारम्यात्सरस्वती । इन्द्रेत्युक्ता तत्सुखानां ब्रह्माधिर्मुक्तिगाभिनाम् । तत्सुखाना पर ब्रह्म मुक्तिगाना पराश्रयः । एवमेव च ससारे बिम्बत्वादुत्तरोत्तरम् । न परब्रह्मण. कश्चिदाश्रयः स्वाश्रय यत. । तस्याश्रयोऽस्ति वेत्येव पृच्छतोपि शिरः सदा । भिद्यते पर्वतैरन्धे तमसिस्थस्य दैवतैः । तस्माद्ब्रह्म पर नित्य ज्ञेय पूर्णमनाश्रयम् ॥ ' इति ब्रह्माण्डे । ' रुद्र समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः । ब्रह्मा मामाश्रितो नित्य नाह कञ्चिदुपाश्रित' ॥ ' इति भारते । ' अथात आनन्दस्य मीमांसा भवति ' इत्यादेश्च । ससाराल्लुप्ताना मुक्ताना कानि सुखानि लोकाः रोचमानानि कानि लोका' । 'लीन सुख क इत्युक्त क नाम क्षीयतेऽत्र यत् ॥ ' मध्व.

(उद्दालकप्रश्न)

एतददोलोकयोः सर्वभूताना च सष्टम्भक सूत्र, एतददोलोकयो सर्वभूताना च अन्तर्यामी

**अथ हैनमुद्दालक आरुणि पप्रच्छ । याज्ञवल्क्येति होवाच । मद्रेष्ववसाम पतञ्जलस्य काप्यस्य गृहेषु यज्ञमधीयानाः । तस्यासीद्भार्या गन्धर्वगृहीता । तमपृच्छाम कोऽसीति । सोऽब्रवीत्कबन्ध आथर्वण इति । सोऽब्रवीत्पतञ्जलं काप्य याज्ञिकाꣳश्च । वेत्थ नु त्व काप्य तत्सूत्र येनायं च लोक परश्च लोक सर्वाणि च भूतानि सदृब्धानि**

* शेष शकरवत् ।

(१) बृउ ३।७।१, शब्रा १४।६।७।१–५ पतञ्ज(पतञ्च) येनाय ( यस्मिन्नय ) भूतानि योऽन्तरो ( भूतान्यन्तरो ) मिणमिति ( मिणम् ) वेदवित्स+ ( यज्ञवित्स ), ब्रशकर १।२।१८ भूतानि योऽन्तरो ( भूतान्यन्तरो ), भास्कर १।२।१८ ब्रशकरवत्, रग पतञ्ज ( पतञ्च ) सर्वाणि च ( सर्वाणि ) लोक+ ( च ) योऽन्तरो ( चान्तरो ), रामानुज १।२।१९, मध्व ष्ववसाम ( ष्वसाम ) पतञ्ज ( पतञ्च ), श्रीकर १।२।१८, वल्लभ. १।२।१८ भूतानि योऽन्तरो ( भूतान्यन्तरो )

भवन्तीति । सोऽब्रवीत्पतञ्चल काप्यो नाहं तद्भगवन्वेदेति । सोऽब्रवीत्पतञ्चल काप्य याज्ञिकाꣳश्च । वेत्थ नु त्वं काप्य तमन्तर्यामिणं य इमं च लोकं परं च लोकꣳ सर्वाणि च भूतानि योऽन्तरो यमयतीति । सोऽब्रवीत्पतञ्चलः काप्यो नाहं तं भगवन्वेदेति । सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाꣳश्च । यो वै तत्काप्य सूत्रं विद्यात्तं चान्तर्यामिणमिति स ब्रह्मवित्स लोकवित्स देववित्स वेदवित्स भूतवित्स आत्मवित्स सर्ववित् । इति तेभ्योऽब्रवीत् । तदहं वेद । तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वाꣳस्तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यतीति । वेद वा अहं गौतम तत्सूत्रं तं चान्तर्यामिणमिति । यो वा इदं कश्चिद्ब्रूयाद्वेद वेदेति यथा वेत्थ तथा ब्रूहीति ॥

(१) इदानीं ब्रह्मलोकानां अन्तरतमं सूत्रं वक्तव्यमिति तदर्थं आरम्भः । तच्च आगमेनैव प्रष्टव्यमिति इतिहासेन आगमोपन्यासः क्रियते — अथ हैनं उद्दालको नामतः, अरुणस्यापत्यं आरुणिः पप्रच्छ । याज्ञवल्क्येति होवाच । मद्रेषु देशेषु अवसाम उषितवन्तः, पतञ्चलस्य — पतञ्चलो नामतः—तस्यैव कपिगोत्रस्य काप्यस्य गृहेषु यज्ञमधीयाना यज्ञशास्त्राध्ययनं कुर्वाणाः । तस्य आसीत् भार्या गन्धर्वगृहीता । तमपृच्छाम — कोऽसीति । सोऽब्रवीत् — कबन्धो नामतः, अथर्वणोऽपत्यं आथर्वण इति । सोऽब्रवीद्गन्धर्वः पतञ्चलं काप्यं याज्ञिकांश्च तच्छिष्यान् — वेत्थ नु त्वं हे काप्य जानीषे तत्सूत्रम् । किं तत् ? येन सूत्रेण अयं च लोकः इदं च जन्म, परश्च लोकः परं च प्रतिपत्तव्यं जन्म, सर्वाणि च भूतानि ब्रह्मादिस्तम्बपर्यन्तानि, सदृब्धानि सग्रथितानि स्रगिव सूत्रेण विष्टब्धानि भवन्ति येन — तत् किं सूत्रं वेत्थ । सोऽब्रवीत् एवं पृष्टः काप्यः— नाहं तद्भगवन्वेदेति — तत् सूत्रं नाहं जाने हे भगवन्निति सपूजयन्नाह । सोऽब्रवीत् पुनर्गन्धर्वः उपाध्यायमस्मांश्च— वेत्थ नु त्वं काप्य तमन्तर्यामिणं — अन्तर्यामीति विशेष्यते — य इमं च लोकं परं च लोकं सर्वाणि च भूतानि यः अन्तरः अभ्यन्तरः सन् यमयति नियमयति, दारुयन्त्रमिव भ्रामयति, स्वं स्वमुचितव्यापारं कारयतीति । सोऽब्रवीदेवमुक्तः पतञ्चलः काप्यः— नाहं तं जाने भगवन्निति सपूजयन्नाह । सोऽब्रवीत्पुनर्गन्धर्वः । सूत्रतदन्तर्गतान्तर्यामिणोर्विज्ञानं स्तूयते — यः कश्चिद्वै तत् सूत्रं हे काप्य विद्यात् विजानीयात् तं च अन्तर्यामिणं सूत्रान्तर्गतं तस्यैव सूत्रस्य नियन्तारं विद्यात् यः इत्येवमुक्तेन प्रकारेण — स हि ब्रह्मवित् परमात्मवित्, स लोकांश्च भूरादीनन्तर्यामिणा नियम्यमानान् लोकान् वेत्ति, स देवांश्चाग्न्यादीन् लोकिनः जानाति, वेदांश्च सर्वप्रमाणभूतान्वेत्ति, भूतानि च ब्रह्मादीनि सूत्रेण ध्रियमाणानि तदन्तर्गतेनान्तर्यामिणा नियम्यमानानि वेत्ति, स आत्मानं च कर्तृत्वभोक्तृत्वविशिष्टं तेनैवान्तर्यामिणा नियम्यमानं वेत्ति, सर्वं च जगत् तथाभूतं वेत्ति— इति । एवं स्तुते सूत्रान्तर्यामिविज्ञाने प्रलुब्धः काप्योऽभिमुखीभूतः, वयं च । तेभ्यश्च अस्मभ्यं आभिमुखीभूतेभ्यः अब्रवीद्गन्धर्वः सूत्रमन्तर्यामिणं च । तदहं सूत्रान्तर्यामिविज्ञानं वेद गन्धर्वाल्लब्धागमः सन् । तच्चेत् याज्ञवल्क्य सूत्रं, तं चान्तर्यामिणं अविद्वांश्चेत्, अब्रह्मवित्सन् यदि ब्रह्मगवीरुदजसे ब्रह्मविदां स्वभूता गा उदजसे उन्नयसि त्वं अन्यायेन, ततो मच्छापदग्धस्य मूर्धा शिरः ते तव विस्पष्टं पतिष्यति । एवमुक्तो याज्ञवल्क्य आह—वेद जानामि अहं, हे गौतमेति गोत्रतः, तत्सूत्रम् — यत् गन्धर्वस्तुभ्यमुक्तवान् । यं च अन्तर्यामिणं गन्धर्वाद्विदितवन्तो यूयं, तं च अन्तर्यामिणं वेद अहम् — इति । एवमुक्ते प्रत्याह गौतमः — यः कश्चित्प्राकृत इदं यत्त्वयोक्तं ब्रूयात् — कथम्? वेद वेदेति — आत्मानं श्लाघयन्, किं तेन गर्जितेन ? कार्येण दर्शय ! यथा वेत्थ, तथा ब्रूहीति । शांकर

(२) कल्पसूत्रमधीयाना उषितवन्तः । स परब्रह्मवित्तान्नियम्य लोकदेवभूतवित्स परमात्मवित्स सर्वविदिति । उदजसे चेत् कालयसि चेत् । * रंग.

स होवाच । वायुर्वै गौतम तत्सूत्रम् । वायुना

---

* शेषं शांकरवत् ।

(१) बृउ ३।७।२, शब्रा १४।६।७।६ (स होवाच०), ब्रशांकर १।३।१, रामानुज १।२।१९, श्रीकंठ १।३।१, श्रीकर १।३।१.

वै गौतम सूत्रेणाय च लोक परश्च लोक सर्वाणि च भूतानि सद्दब्धानि भवन्ति । तस्माद्वै गौतम पुरुष प्रेतमाहुर्व्यस्र५सिषतास्याङ्गानीति । वायुना हि गौतम सूत्रेण सद्दब्धानि भवन्तीति । एवमेवैतद्याज्ञवल्क्य । अन्तर्यामिण ब्रूहीति ॥

स होवाच याज्ञवल्क्य । ब्रह्मलोका यस्मिन्नोताश्च प्रोताश्च वर्तमाने काले, यथा पृथिवी अप्सु, तत् सूत्र आगमगम्य वक्तव्यमिति — तदर्थ प्रश्नान्तरमुत्थापितम् । अतस्तन्निर्णयाय आह — वायुर्वै गौतम तत्सूत्रम् । नान्यत् । वायुरिति—सूक्ष्ममाकाशवत् विष्टम्भक पृथिव्यादीना, यदात्मक सप्तदशविध लिङ्ग कर्मवासनासमवायि प्राणिना, यत्तत्समष्टिव्यष्ट्यात्मक, यस्य बाह्या भेदा. सप्तसप्त मरुद्गणाः समुद्रस्येवोर्मय. — तदेतद्वायव्य तत्त्व सूत्रमित्यभिधीयते । वायुना वै गौतम सूत्रेण अय च लोक. परश्च लोक सर्वाणि च भूतानि सद्दब्धानि भवन्ति सग्रथितानि भवन्तीति प्रसिद्धमेतत् । अस्ति च लोके प्रसिद्धिः । कथम् ? यस्मात् वायु. सूत्र, वायुना विधृत सर्व, तस्माद्वै गौतम पुरुष प्रेतमाहु कथयन्ति—व्यस्रसिषत विस्रस्तानि अस्य पुरुषस्याङ्गानीति । सूत्रापगमे हि मण्यादीना प्रोतानामवस्रसन दृष्टम् । एव वायु सूत्रम् । तस्मिन्मणिवत्प्रोतानि यदि अप्याङ्गानि स्यु, ततो युक्तमेतत् वाय्वपगमे अवस्रसनमङ्गानाम् । अतो वायुना हि गौतम सूत्रेण सद्दब्धानि भवन्तीति निगमयति । एवमेवैतत् याज्ञवल्क्य, सम्यगुक्त सूत्रम् । तदन्तर्गत तु इदानीं तस्यैव सूत्रस्य नियन्तारमन्तर्यामिण ब्रूहीत्युक्त. आह । शकर

**य॰ पृथिव्या तिष्ठन्पृथिव्या अन्तरो य पृथिवी न वेद यस्य पृथिवी शरीरं य पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत ॥**

(१) बृउ ३।७।३, शब्रा १४।६।७।७ एष त (स त), ब्रशकर १।२।१४, १८, २।३।१३, ३।२।२७, ४।१।३, भास्कर १।२।१८, २।१।५, २।३।१३, ४।१।३, रामानुज १।१।१ ( पृ ११२, ११८ ), १।१।१३ ( पृ १९८ ), १।२।१९, १।४।२३, २७, २।१।९, २।३।१४, ३।२।११,१२,१९, ३।३।३५,३।४।२,४।४।१७

( १ ) यः पृथिव्या तिष्ठन्भवति, सोऽन्तर्यामी । सर्वे पृथिव्या तिष्ठतीति सर्वत्र प्रसङ्गो मा भूदिति विशिनष्टि—पृथिव्या अन्तर अभ्यन्तर॰ । तत्रैतत्स्यात्, पृथिवी देवतैव अन्तर्यामीति—अत आह यमन्तर्यामिण पृथिवीदेवतापि न वेद—मय्यन्य कश्चिद्वर्तत इति । यस्य पृथिवी शरीर यस्य च पृथिव्येव शरीर, नान्यत्—पृथिवीदेवताया यच्छरीर, तदेव शरीर यस्य । शरीरग्रहण च उपलक्षणार्थम् । करण च पृथिव्या. तस्य । स्वकर्मप्रयुक्त हि कार्यं करण च पृथिवीदेवताया. । तत् अस्य स्वकर्माभावात् अन्तर्यामिणो नित्यमुक्तत्वात्, परार्थकर्तव्यतास्वभावत्वात् परस्य यत्कार्यं करण च—तदेवास्य, न स्वतः । तदाह—यस्य पृथिवी शरीरमिति । देवताकार्यकरणस्य ईश्वरसाक्षिमात्रसांनिध्येन हि नियमेन प्रवृत्तिनिवृत्ती स्याताम् । य ईदृगीश्वरो नारायणाख्यः, पृथिवीं पृथिवीदेवतां, यमयति नियमयति स्वव्यापारे, अन्तर. अभ्यन्तरस्तिष्ठन्, एष त आत्मा, ते तव, मम च सर्वभूताना च इत्युपलक्षणार्थमेतत्, अन्तर्यामी यस्त्वया पृष्ट., अमृत सर्वससारधर्मवर्जित इत्येतत् । शकर

( २ ) 'स्थानादिव्यपदेशाच्च'— कथ पुनराकाशवत्सर्वगतस्य ब्रह्मणोऽक्ष्यल्प स्थानमुपपद्यत इति । अत्रोच्यते — भवेदेषाऽनवक्लृप्तिर्यद्येतदेवैक स्थानमस्य निर्दिष्ट भवेत् । सन्ति ह्यन्यान्यपि पृथिव्यादीनि स्थानान्यस्य निर्दिष्टानि — 'य. पृथिव्या तिष्ठन्' इत्यादिना । तेषु हि चक्षुरपि निर्दिष्ट — 'यश्चक्षुषि तिष्ठन्' इति । स्थानादिव्यपदेशादित्यादिग्रहणेनैतद्दर्शयति न केवल स्थानमेवैकमनुचित ब्रह्मणो निर्दिश्यमान दृश्यते ।

काण्वमाध्यन्दिनयोरुभयो पाठ, निंबार्क १।२।१९, ३।२।१२, ४।१।३, ब्रमध्व १।२।१८, ३।२।१२, श्रीकठ १।२।१९, ३।२।११, १२, २८ रामानुजवत्, श्रीकर १।१।१ ( पृ २७ ), १।१।२२, १।२।१४, १८, १।३।२, २।१।१२, १३, २२, २।३।११, १२, ३।१।१, ३।२।१२, २०, ३।३।३५, ४।४।१७, वल्लभ १।२।१८, विज्ञान. १।१।२ ( पृ ५८ ), १।१।३ ( पृ ९१ ), १।१।२०, १।२।१८, २४, २।३।४१, ३।३।३५, ३६, ४।१।३, ४।२।१६, बलदेव १।२।१८

किं तर्हि नामरूपमित्येवजातीयकमप्यनामरूपस्य ब्रह्मणोऽनुचितं निर्दिश्यमानं दृश्यते । 'तस्योदिति नाम' 'हिरण्यश्मश्रुः' (छाउ १।६।७,६) इत्यादि । निर्गुणमपि सद्ब्रह्म नामरूपगतैर्गुणैः सगुणमुपासनार्थं तत्र तत्रोपदिश्यत इत्येतदप्युक्तमेव । सर्वगतस्यापि ब्रह्मण उपलब्ध्यर्थं स्थानविशेषो न विरुध्यते शालग्राम इव विष्णोरित्येतदप्युक्तमेव ।

१।२।१४

'अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्' — योऽन्तर्याम्यधिदैवादिषु श्रूयते स परमात्मैव स्यान्नान्य इति । कुतः — तद्धर्मव्यपदेशात् । तस्य हि परमात्मनो धर्मा इह निर्दिश्यमाना दृश्यन्ते । पृथिव्यादि तावदधिदैवादिभेदभिन्नं समस्तं विकारजातमन्तस्तिष्ठन्यमयतीति परमात्मनो यमयितृत्वं धर्म उपपद्यते । सर्वविकारकारणत्वे सति सर्वशक्त्युपपत्तेः । 'एष त आत्माऽन्तर्याम्यमृतः' इति चाऽऽत्मत्वामृतत्वे मुख्ये परमात्मन उपपद्येते । यत्त्वकार्यकरणस्य परमात्मनो यमयितृत्वं नोपपद्यत इति । नैष दोषः । यान्नियच्छति तत्कार्यकरणैरेव तस्य कार्यकरणवत्त्वोपपत्तेः । तस्याप्यन्यो नियन्तेत्यनवस्थादोषश्च न संभवति भेदाभावात् । भेदे हि सत्यनवस्थादोषोपपत्तिः । तस्मात्परमात्मैवान्तर्यामी ।

१।२।१८

'न च स्मार्तमतद्धर्माभिलापात्' — न च स्मार्तं प्रधानमन्तर्यामिशब्दं भवितुमर्हति । कस्मात् अतद्धर्माभिलापात् । यद्यप्यदृष्टत्वादिव्यपदेशः प्रधानस्य संभवति तथाऽपि न द्रष्टृत्वादिव्यपदेशः संभवति प्रधानस्याचेतनत्वेन तैरभ्युपगमात् । 'अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता' (बृउ. ३।७।२३) इति हि वाक्यशेष इह भवति । आत्मत्वमपि न प्रधानस्योपपद्यते । १।२।१९

'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' — नेति पूर्वसूत्रादनुवर्तते । शारीरश्च नान्तर्यामीष्यते । कस्मात् । यद्यपि द्रष्टृत्वादयो धर्मास्तस्य संभवन्ति तथाऽपि घटकाशवदुपाधिपरिच्छिन्नत्वान्न कार्त्स्न्येन पृथिव्यादिष्वन्तरवस्थातुं नियन्तुं च शक्नोति । अपि 'उभयेऽपि हि' शाखिनः काण्वा माध्यन्दिनाश्चान्तर्यामिणो भेदेनैनं शारीरं पृथिव्यादिवदधिष्ठानत्वेन नियम्यत्वेन च अधीयते । 'यो विज्ञाने तिष्ठन्' इति काण्वाः । 'य आत्मनि तिष्ठन्' इति माध्यन्दिनाः । य आत्मनि तिष्ठन्नित्यस्मिंस्तावत्पाठे भवत्यात्मशब्दः शारीरस्य वाचकः । 'यो विज्ञाने तिष्ठन्' इत्यस्मिन्नपि पाठे विज्ञानशब्देन शारीर उच्यते । विज्ञानमयो हि शारीरः । तस्माच्छारीरादन्य ईश्वरोऽन्तर्यामीति सिद्धम् । कथं पुनरेकस्मिन्देहे द्वौ द्रष्टारावुपपद्येते यश्चायमीश्वरोऽन्तर्यामी यश्चायमितरः शारीरः । का पुनरिहानुपपत्तिः । 'नान्योऽतोऽस्ति द्रष्टा' इत्यादि श्रुतिवचनं विरुध्येत । अत्र हि प्रकृतादन्तर्यामिणोऽन्यं द्रष्टारं श्रोतारं मन्तारं विज्ञातारं चाऽऽत्मानं प्रतिषेधति । नियन्त्रन्तरप्रतिषेधार्थमेतद्वचनमिति चेत् । न । नियन्त्रन्तराप्रसङ्गादविशेषश्रवणाच्च । अत्रोच्यते — अविद्याप्रत्युपस्थापितकार्यकरणोपाधिनिमित्तोऽयं शारीरान्तर्यामिणोर्भेदव्यपदेशो न पारमार्थिकः । एको हि प्रत्यगात्मा भवति न द्वौ प्रत्यगात्मानौ संभवतः । एकस्यैव तु भेदव्यवहार उपाधीकृतः । यथा घटाकाशो महाकाश इति । ततश्च ज्ञातृज्ञेयादिभेदश्रुतयः प्रत्यक्षादीनि च प्रमाणानि संसारानुभवो विधिप्रतिषेधशास्त्रं चेति सर्वमेतदुपपद्यते । तथा च श्रुतिः — 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यविद्याविषये सर्वं व्यवहारं दर्शयति । 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इति विद्याविषये सर्वं व्यवहारं वारयति । * शंकर. १।२।२०

(३) पृथिव्यां स्थितस्तदन्तर्गतः । तद्वेत्यस्तच्छरीरकः सन् योऽन्तः प्रविश्य प्रवृत्तिनिवृत्तिलक्षणं नियमनं करोति एषोऽन्तर्यामी तेऽमृत आत्मा निरुपाधिकामृतत्वशालि आत्मेत्यर्थः । अत्र त आत्मेति व्यतिरेकनिर्देशादन्तर्यामिणो जीवस्य व्यतिरेकः सिद्धोऽमृतत्वविशेषणाच्च । तद्धि विशेषणं जीवव्यावृत्त्यर्थम् । अन्तर्यामी त आत्मेत्युक्त आत्मशब्दस्य स्वरूपवचनत्वशङ्कया जीवव्यावृत्तिर्न प्राप्नोतीति हि अमृत इत्युक्तम् । निरुपाधिकामृतत्वशालि आत्मा परमात्मैव । रंग.

* रामानुज एषु सूत्रेषु शंकरवत् । १।२।१८ इतिसूत्रगताः भास्करनिंबार्कमध्वश्रीकण्ठश्रीकरवल्लभविज्ञाना-शंकरवत् ।

( ४ ) 'ज्योतिराद्यधिष्ठान तु तदामननात्प्राणवता शब्दात्' –– प्राणवता जीवेन सह ज्योतिरादीनाम ग्न्यादिदेवताना प्राणविषयमधिष्ठान तदामननात्तस्य परमात्मन आमननाद्भवति । आमननमाभिमुख्येन मनन परमात्मन· सकल्पादेव भवतीत्यर्थ । कुत एतत्? शब्दात् । इन्द्रियाणा साभिमानिदेवताना जीवात्मनश्च स्वकार्येषु परमपुरुषमननायत्तत्वशास्त्रात् । यथाऽन्त र्यामिब्राह्मणादिषु । २।४।१३

'न स्थानतोऽपि परस्योभयलिङ्ग सर्वत्र हि'—न स्थानतोऽपि परस्येति । न पृथिव्यात्मादिस्थानतोऽपि परस्य ब्रह्मणोऽपुरुषार्थगन्ध. सभवति । कुतः । उभयलिङ्ग सर्वत्र हि । यत· सर्वत्र श्रुतिस्मृतिषु पर ब्रह्मो भयलिङ्गमुभयलक्षणमभिधीयते । निरस्तनिखिलदोषत्व-कल्याणगुणाकरत्वलक्षणोपेतमित्यर्थः ।

३।२।११

'भेदादिति चेन्न प्रत्येकमतद्वचनात्' –– यथा जीवस्य प्रजापतिवाक्यावगतापहतपाप्मत्वाद्युभयलिङ्गस्यापि देवादिदेहयोगरूपावस्थाभेदादपुरुषार्थयोगस्तथान्तर्यामिण परस्यापि स्वतोपहतपाप्मत्वाद्युभयलिङ्गस्य तत्तद्देवादिशरीरयोगरूपावस्थाभेदादपुरुषार्थयोगो वर्जनीय इति चेत्तन्न। प्रत्येकमतद्वचनात् । 'य. पृथिव्या तिष्ठन्' 'य आत्मनि तिष्ठन्' ( बृउ ३।७।२२ ) इत्यादिषु प्रतिपर्याय स त आत्माऽन्तर्याम्यमृत इत्यन्तर्यामिणोऽमृतत्ववचनेन तत्र तत्र स्वेच्छया नियमन कुर्वतस्तत्तत्स बन्धप्रयुक्तापुरुषार्थप्रतिषेधात् । जीवस्य तु तत्स्वरूप तिरोहितमिति 'पराभिध्यानात्तु तिरोहित॰' ( ब्रसू ३।२।४ ) इत्यत्रोक्तम् । ३।२।१२

'अम्बुवदग्रहणात्तु न तथात्वम्'— अत्र चोदयति । तुशब्दश्चोद्य द्योतयति । अम्बुवदिति सप्तम्यन्ताद्वतिः । अम्बुदर्पणादिषु यथा सूर्यमुखादयो गृह्यन्ते न तथा पृथिव्यादिषु स्थानेषु परमात्मा गृह्यते । अम्ब्वादिषु हि सूर्यादयो भ्रान्त्या तत्रस्था इव गृह्यन्ते न परमार्थतस्त त्रस्था । इह तु 'यः पृथिव्यां तिष्ठन्' 'योऽप्सु तिष्ठन्' 'य आत्मनि तिष्ठन्' इत्येवमादिना परमार्थत एव परमात्मा पृथिव्यादिषु स्थितो गृह्यते । अत. सूर्यादेरम्बुदर्पणादिप्रयुक्तदोषाननुषङ्गस्तत्र तत्र स्थित्यभावादेव । अतो न तथात्व दार्ष्टान्तिकस्य न दृष्टान्ततुल्यत्वमित्यर्थ. । ३।२।१९

'वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेव दर्शनाच्च' —परिहरति । पृथिव्यादिस्थानान्तर्भावात्स्थानिनः परस्य ब्रह्मण स्वरूपतो गुणतश्च पृथिव्यादिस्थानगतवृद्धिह्रासादिदोषभाक्त्वमात्र सूर्यादिदृष्टान्तेन निवर्त्यते । कथमिदमवगम्यते । उभयसामञ्जस्यादेवम् । उभयदृष्टान्तसामञ्जस्यादेवमिति निश्चीयते । 'आकाशमेक हि यथा घटादिषु पृथग्भवेत् । जलाधारेष्विवांशुमान् ॥' ( याम्मृ ३।१४४ ) इति दोषवत्स्वनेकेषु वस्तुषु वस्तुतोऽवस्थितस्याकाशस्य वस्तुतोऽनवस्थितस्यांशुमतश्चोभयस्य दृष्टान्तस्योपादान हि परमात्मनः पृथिव्यादिगतदोषभाक्त्वनिवर्तनमात्रे प्रतिपाद्ये समञ्जस भवति । दर्शनाच्च । दृश्यते चैव सर्वात्मना साधर्म्याभावेऽपि विवक्षितांशसाधर्म्याद्दृष्टान्तोपादान सिंह इव माणवक इत्यादौ । अत. स्वभावतो निरस्तनिखिलाज्ञानादिदोषगन्धस्य समस्तकल्याणगुणाकरस्य पृथिव्यादिस्थानतोऽपि न दोषसभव । *रामानुज ३।२।२०

( ५ ) 'आमनन्ति चैनमस्मिन्' — एन विष्णुमस्मिन्नग्न्यादावामनन्ति । 'योऽग्नौ तिष्ठन्य एष एतस्मिन्नग्नौ तेजोमयोऽमृतमय. पुरुषः' इत्यादिना । ब्रमध्व १।२।३२

( ६ ) 'भेदव्यपदेशाच्चान्य' — इतोऽपि सूर्यमण्डलस्थ. परमात्मा । भेदव्यपदेशात् । 'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्य शरीर य आदित्यमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' इति श्रुत्यन्तरे आधिदैविक सूर्यमण्डलाभिमानिभ्या भेदेन निर्दिष्टम् । यद्यपि तत्राकारो न श्रूयते, तथापि हिरण्मयवाक्येनैकवाक्यत्वात् सर्वत्र साकारमेव ब्रह्मेति मन्तव्यम् ।

अन्तर्यामिब्राह्मणे चत्वारोऽर्था उच्यन्ते । सर्वत्र तिष्ठ-स्तद्धर्मैर्न सबध्यते । सर्वमुक्तिपरिहाराय स्वधर्मैस्तन्न बद्धयते । स्वलीलासिद्धयर्थं तच्छरीरमिति । तस्य नियमन तदर्थमिति । चकाराद्धर्मा उच्यन्ते ।

* निंबार्क श्रीकठ ( ३।२।११, १२, १९, २० ) श्रीकर. रामानुजवत् ।

तस्मात् सर्वविलक्षणत्वादन्य एव, नाभिमानी । उप न्चारव्यावृत्त्यर्थमन्यपदेनोपसहार' ।

ब्रह्मत्वे सिद्धे ज्ञान वा, उपासना वेति, नास्मत्सिद्धान्ते कश्चन विशेष. । कारणे कार्यधर्मारोपस्त्वयुक्त एव । कार्ये पुन कारणधर्माधिकरणत्वेनोपासना अभेदात् फलायेति सर्वत्र व्यवस्थिति ।

वल्लभ १।१।२०

( ७ ) यद्धि यस्याधिष्ठातृ आधारश्च भवति, तत्तस्यात्मे युच्यते अध्यक्षत्वात्स्वरूपत्वात्, यथा जीवो लिङ्ग देहस्येति । १।१।३ ( पृ ९१ )

यथा देहेन्द्रियादीनामात्मा जीव एव जीवस्यापि चेत यितृकारयितृतया तदध्यक्ष इश्वरस्तस्यात्मेति, तथा च श्रुति — 'एष त आत्मा अन्तर्याम्यमृत.' 'तत्त्वमसि' इत्यादि । स्मृतिश्च ' तवान्तरात्मा मम च सर्वेषामेव देहिनाम् ' इत्यादिः । चेतयितृत्व चेत्थ परमेश्वरस्य मन्तव्य, सर्वे जीवा चिच्छक्तिमन्तोऽपि फलोपधानाभावात्प्रलयेऽचेतना एव मृतदेहवत्तिष्ठन्ति, तानीश्वरो देहवत्स्वसकल्पेन योगीव प्रविश्य बुद्धिसयोगेन चेतनी करोतीति प्रत्यह चैतत्सुषुप्तावनुमेयम् । 'अतः प्रबोधोऽस्मात्' ( ब्रसू ३।२।८ ) इति सूत्राच्च, तथा जीवगताशेषज्ञत्वादपीश्वरस्तस्यात्मा तथा च श्रुति.— ' नान्योऽतोऽस्ति द्रष्टा ' इत्यादिः ।

२।३।४१

' अन्तराभूतग्रामवत्स्वात्मनः ' — आमननादित्यनुवर्तते, पृथिव्यादिभूतग्रामस्येव स्वात्मनो जीवात्मनोऽप्यन्तरा तद्ब्रह्मण आमननाज्जीवस्य ब्रह्मात्मकत्वमुक्त देहस्येव जीवात्मकत्वमित्यर्थ. । अन्तरा मनन च यथा ' यः पृथिव्या तिष्ठन् पृथिव्या अन्तरो यस्य पृथिवी शरीर य आत्मनि तिष्ठन्नात्मनोऽन्तरो यस्यात्मा शरीरम् ' इत्यादि । ३।३।३५

' अन्यथा भेदानुपपत्तेरिति चेन्न उपदेशान्तरवत् ' — अन्यथा अन्त.स्थत्व विनाऽपि तद्भावो ब्रह्मात्मत्व जीवानामस्ति घटाकाशमहाकाशयोरिवाखण्डत्वेनेति यावत् । कुतः 'स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् ' इत्याद्यभेदवाक्यान्यथानुपपत्तेः । ' एष त आत्मा ' इत्यादिवाक्यानां च स्वरूपाभेदेऽप्यौपाधिकभेदेन युष्मच्छब्दस्य देहपरत्वेन वाऽप्युपपत्ते. । तथा चोभयथैव जीवाना ब्रह्मात्मत्वमिति चेन्न । उपदेशान्तरवत्, यत. पृथिव्यादिभूताना ब्रह्मात्मत्वोपदेशवदेव जीवानामपि ब्रह्मात्मत्वोपदेश उचित । सह पाठात् पृथिव्यादीना च नाह व आत्मा ब्रह्म किन्त्वन्त स्थत्वेनेति जीवेष्वपि तथोचितम् । अन्यथाऽर्धजरतीयन्यायापत्तेरिति । तत्राप्ययमेव सिद्धान्त उपदेशान्तरवदिति, यथा ' ब्रह्मैवेद सर्वम् ' ' आत्मैवेद सर्वम् ' इत्यादयो जडसाधारण्येन जीवेषु ब्रह्माभेदोपदेशा शक्तिशक्तिमदात्मभेदपरतयैव व्याख्येया' । एकवाक्यतया तस्मात् तदेकवाक्यतया तथैव स एवेत्याद्यभेदोपदेशा अपि शक्तिशक्तिमदात्मभेदपरा एव युज्यन्ते नाखण्डतापरा. । समवत्येकवाक्यत्वे वाक्यभेदानौचित्यादित्यर्थ. । *विज्ञान ३।३।३६

[1]योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्याप. शरीरं योऽपोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत ॥

[2]योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीर योऽग्निमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत ॥

[3]योऽन्तरिक्षे तिष्ठन्नन्तरिक्षादन्तरो यमन्तरिक्षं न वेद यस्यान्तरिक्षं शरीरं योऽन्तरिक्षमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत' ॥

[4]यो वायौ तिष्ठन्वायोरन्तरो य वायुर्न वेद यस्य

---

* बृउ २।५।५ ( पृ ११०६ ) इत्यत्रापि द्रष्टव्यम् ।

(१) बृउ ३।७।४, शमा. १४।६।७।८ एष त ( स त ), ब्रशाकर २।१।३, भास्कर २।२।३, २।३।१३, रामानुज. १।४।२७, २।२।२, ३।२।१९, श्रीकर. १।१।२२, २।२।२, बलदेव १।२।१८

(२) बृउ ३।७।५, शमा १४।६।७।९ एष त ( स त ), रामानुज १।४।२७, २।४।१३, ३।२।४०, ब्रमध्व १।२।३२, श्रीकर ३।४।१२, बलदेव १।२।१८

(३) बृउ ३।७।६, शमापाठे पर्यायोऽय नास्ति; रामानुज १।४।२७

(४) बृउ ३।७।७, शमा. १४।६।७।११ एष त ( स त ), रामानुज. १।४।२७, २।४।१३, ३।२।४०, श्रीकर. २।४।१२

वायु शरीरं यो वायुमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत ॥

[1]यो दिवि तिष्ठन्दिवोऽन्तरो य द्यौर्न वेद यस्य द्यौ शरीर यो दिवमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत ॥

[2]य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्य शरीरं य आदित्यमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत ॥

[3]यो दिक्षु तिष्ठन्दिग्भ्योऽन्तरो य दिशो न विदुर्यस्य दिश शरीरं यो दिशोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत ॥

---

(१) बृउ ३।७।८, शब्रापाठे पर्यायोऽय नास्ति, रामानुज १।४।२७

(२) बृउ ३।७।९, शब्रा १४।६।७।१२ एष त ( स त ), ब्रशकर १।१।२१, भास्कर १।१।२१, रामानुज १।१।२२, १।४।२७, २।४।१३, ३।२।४०, निबार्क १।१।२२, श्रीकठ १।१।२२, २।४।१३, श्रीकर १।१।२२, २।४।१२, वल्लभ १।१।२०, विज्ञान १।३।३३, ४।४।२०, बलदेव १।१।२१

(३) बृउ ३।७।१०, शब्रा १४।६।७।१४ एष त ( स त ) अस्मात्पर्यायादनन्तरमेते पर्याया अत्र अधिका — ‘ यो विद्युति तिष्ठन् विद्युतोऽन्तरो य विद्युन्न वेद यस्य विद्युच्छरीर यो विद्युतमन्तरो यमयति स त आत्माऽन्तर्याम्यमृत ॥ १५ ॥ य स्तनयित्नौ तिष्ठन् स्तनयित्नोरन्तरो यऽ स्तनयित्नुर्न वेद यस्य स्तनयित्नु शरीर य स्तनयित्नुमन्तरो यमयति स त आत्माऽन्तर्याम्यमृत इत्यधिदेवतमथाधिलोकम् ॥ १६ ॥ य सर्वेषु लोकेषु तिष्ठन् सर्वेभ्यो लोकेभ्योऽन्तरो यऽ सर्वे लोका न विदुर्यस्य सर्वे लोका शरीर य सर्वांल्लोकानन्तरो यमयति स त आत्माऽन्तर्याम्यमृत इत्यु एवाधिलोकमथाधिवेदम् ॥ १७ ॥ य सर्वेषु वेदेषु तिष्ठन् सर्वेभ्यो वेदेभ्योऽन्तरो यऽ सर्वे वेदा न विदुर्यस्य सर्वे वेदा शरीरं य सर्वान्वेदानन्तरो यमयति स त आत्माऽन्तर्याम्यमृत इत्यु एवाधिवेदमथाधियज्ञम् ॥ १८ ॥ य सर्वेषु यज्ञेषु तिष्ठन् सर्वेभ्यो यज्ञेभ्योऽन्तरो यऽ सर्वे यज्ञा न विदुर्यस्य सर्वे यज्ञा शरीर य सर्वान्यज्ञानन्तरो यमयति स त आत्माऽन्तर्याम्यमृत इत्यु एवाधियज्ञमथाधिभूतम् ॥ १९ ॥ ’, रामानुज १।४।२७ लोक यज्ञवेदपर्याया उल्लेखिता , श्रीकर. १।२।१८ लोकपर्याय-

[1]यश्चन्द्रतारके तिष्ठꣳश्चन्द्रतारकादन्तरो य चन्द्रतारक न वेद यस्य चन्द्रतारकꣳ शरीरं यश्चन्द्रतारकमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत ॥

[2]य आकाशे तिष्ठन्नाकाशादन्तरो यमाकाशो न वेद यस्याकाश शरीरं य आकाशमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत ॥

[3]यस्तमसि तिष्ठꣳस्तमसोऽन्तरो य तमो न वेद यस्य तम शरीरं यस्तमोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत ॥

[4]यस्तेजसि तिष्ठꣳस्तेजसोऽन्तरो य तेजो न वेद यस्य तेज. शरीरं यस्तेजोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत । इत्यधिदैवतम् । अथाधिभूतम् ॥

( १ ) समानमन्यत् । योऽप्सु तिष्ठन्, अग्नौ, अन्तरिक्षे, वायौ, दिवि, आदित्ये, दिक्षु, चन्द्रतारके, आकाशे, यस्तमस्यावरणात्मके बाह्ये तमसि, तेजसि तद्विपरीते प्रकाशसामान्ये —— इत्येवमधिदैवत अन्तर्यामिविषय दर्शन देवतासु । अथ अधिभूत भूतेषु ब्रह्मादिस्तम्बपर्यन्तेषु अन्तर्यामिदर्शनमधिभूतम् ।

शकर.

( २ ) ‘ भेदव्यपदेशाच्चान्य ’ —— अस्ति चाऽऽदित्यादिशरीराभिमानिभ्यो जीवेभ्योऽन्य ईश्वरोऽन्तर्यामी । ‘ य आदित्यमन्तरो यमयत्येषः ’ इति श्रुत्यन्तरे भेदव्यपदेशात् । ब्रशाकर. १।१।२१

मारभ्य भूतपर्यायान्ता पर्याया शब्राक्रमेण उल्लेखिता । तत्र वेदशब्दस्थाने देवशब्द इति विशेष ।

(१) बृउ ३।७।११, शब्रा १४।६।७।१३ एष त ( स त ), रामानुज. १।४।२७

(२) बृउ ३।७।१२, शब्रा १४।६।७।१० एष त ( स त ), रामानुज १।४।२७, ब्रमध्व १।४।१५, वल्लभ २।३।७

(३) बृउ ३।७।१३, शब्रा १४।६।७।२८ एष त ( स त ), रामानुज १।४।२७

(४) बृउ ३।७।१४, शब्रा. १४।६।७।२७ एष त ( स त ) ( इत्यधिदैवतमथाधिभूतम्० ), रामानुज. १।४।२७.

* यः सर्वेषु भूतेषु तिष्ठन्सर्वेभ्यो भूतेभ्योऽन्तरो यꣳ सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः। इत्यधिभूतम्। अथाध्यात्मम्॥

[1] यः प्राणे तिष्ठन्प्राणादन्तरो य प्राणो न वेद यस्य प्राण शरीरं य. प्राणमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत ॥

[2] यो वाचि तिष्ठन्वाचोऽन्तरो य वाङ्न वेद यस्य वाक्शरीरं यो वाचमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत॰ ॥

[3] यश्चक्षुषि तिष्ठꣳश्चक्षुषोन्तरो यं चक्षुर्न वेद यस्य चक्षु. शरीरं यश्चक्षुरन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत॰ ॥

[4] यः श्रोत्रे तिष्ठञ्छ्रोत्रादन्तरो यꣳ श्रोत्र न वेद यस्य श्रोत्रꣳ शरीरं य श्रोत्रमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत ॥

[5] यो मनसि तिष्ठन्मनसोऽन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत ॥

[6] यस्त्वचि तिष्ठꣳस्त्वचोऽन्तरो य त्वङ्न वेद यस्य त्वक्शरीर यस्त्वचमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत ॥

[7] यो विज्ञाने तिष्ठन्विज्ञानादन्तरो यं विज्ञान न वेद यस्य विज्ञानꣳ शरीर यो विज्ञानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत॰ ॥

---

* कौउ ३।८ ( पृ ६७३ ) इत्यत्रापि व्याख्यानानि द्रष्टव्यानि ।

(१) बृउ ३।७।१५, शब्रा १४।६।७।२० एष त ( स त ) इत्यधि ( इत्यु एवाधि ), अशकर ३।२।१-७, रामानुज १।४।२७, वल्लभ १।१।११ ( पृ १९० ), विज्ञान १।१।२१

(२) बृउ ३।७।१६, शब्रा १४।६।७।२१ एष त ( स त ), रामानुज १।४।२७, अमध्व २।४।१५, वल्लभ १।१।११ ( पृ १९० ), बलदेव २।४।१८

(३) बृउ ३।७।१७, शब्रा १४।६।७।२२ एष त ( स त ), रामानुज १।४।२७, वल्लभ १।१।११ ( पृ १९० )

(४) बृउ ३।७।१८, शब्रा. १४।६।७।२३ एष त ( स त ), रामानुज १।२।१४, १।४।२७, २।४।१३ ३।२।११, निबार्क १।२।१४, श्रीकठ १।२।१४, श्रीकर १।२।१४, वल्लभ १।१।११ ( पृ १९० ), बलदेव. १।२।१४

(५) बृउ ३।७।१९, शब्रा १४।६।७।२४ एष त ( स त ), रामानुज १।४।२७, वल्लभ १।१।११ ( पृ १९० )

(१) बृउ ३।७।२०, शब्रा १४।६।७।२५ एष त ( स त ), रामानुज १।४।२७, वल्लभ १।१।११ ( पृ १९० )

(२) बृउ. ३।७।२१, शब्रा १४।६।७।२६ एष त ( स त ), रामानुज १।४।२७, वल्लभ १।१।११ ( पृ १९० )

(३) बृउ ३।७।२२, शब्रा १४।६।७।३० ( य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीर य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृत ), अशकर १।२।२० शब्रापाठोऽपि, २।३।४१ शब्रावत्, भास्कर १।२।२० शब्रापाठोऽपि, २।३।४१ शब्रावत्, रामानुज १।१।१ ( पृ. ७८, ११२, ११८ ), १।१।४ ( पृ १६२ ) शब्रावत्, १।१।१३ ( पृ १८५ ) शब्रापाठोऽपि, १।१।३१ शब्रावत्, १।२।२१ शब्रापाठोऽपि, १।३।१४, १।४।१, २२, २३ शब्रावत्, १।४।२७, २।१।९ शब्रापाठोऽपि, २।१।२२, २३ शब्रावत्, २।३।१९ शब्रापाठोऽपि, २।३।२९ २।३।४०, ४६, २।४।१३, ३।२।११, १२, १९, ३।३।३५, ३।४।२, ४।१।३, ४।४।४, १७ शब्रावत्, निंबार्क १।२।२१ शब्रापाठोऽपि, २।१।२१ शब्रावत्, अमध्व १।२।२० शब्रापाठोऽपि, स त ( एष त ), २।१।२५, २।३।३७, ४८ शब्रावत्, श्रीकठ १।२।२१ शब्रापाठोऽपि, १।४।२२, २।१।९, २।३।४०, ४२, ४५, २।४।१३, ३।२।२८ शब्रावत्, श्रीकर. १।१।२ ( पृ. ३३ ) १।१।१३ ( पृ ६३ ) शब्रापाठोऽपि, १।१।२३, १।३।२, १४, १।४।२०, २२ शब्रावत्, २।१।१२, १३ शब्रापाठोऽपि, २।१।२२ २।२।३९ शब्रावत्, २।३।१७ शब्रापाठोऽपि, २।३।२६ २।३।३८, २।४।१२, ३।१।१, ३।२।११, १२, २०, २६, ३।३।३५ शब्रावत्, ३।३।५१ शब्रापाठोऽपि, ४।१।३, ४।४।९, १७

[1]यो रेतसि तिष्ठन्रेतसोऽन्तरो य९ रेतो न वेद यस्य रेत शरीर यो रेतोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः । अदृष्टो द्रष्टाऽश्रुत श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता । नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञाता । एष त आत्माऽन्तर्याम्यमृत । अतोऽन्यदार्तम् । ततो होद्दालक आरुणिरुपरराम ॥

( १ ) अथाध्यात्मम्— य. प्राणे प्राणवायुसहिते घ्राणे, यो वाचि, चक्षुषि, श्रोत्रे, मनसि, त्वचि, विज्ञाने, बुद्धौ, रेतसि प्रजनने । कस्मात्पुनः कारणात् पृथिव्यादिदेवता महाभागाः सत्य मनुष्यादिवत् आत्मनि तिष्ठन्त आत्मनो नियन्तारमन्तर्यामिण न विदुरित्यत आह — अदृष्ट· न दृष्टो न विषयीभूतश्चक्षुर्दर्शनस्य कस्यचित्, स्वय तु चक्षुषि सनिहितत्वात् दृशिस्वरूप इति द्रष्टा । तथा अश्रुतः श्रोत्रगोचरत्व मनापन्नः कस्यचित्, स्वय तु अलुप्तश्रवणशक्ति. सर्वश्रोत्रेषु सनिहितत्वात् श्रोता । तथा अमतः मनः-सकल्पविषयतामनापन्न. । दृष्टश्रुते एव हि सर्व. सकल्पयति । अदृष्टत्वात् अश्रुतत्वादेव अमत । अलुप्त मननशक्तित्वात् सर्वमन सु सनिहितत्वाच्च मन्ता । तथा अविज्ञात. निश्चयगोचरतामनापन्न· रूपादिवत् सुखादिवद्वा, स्वय तु अलुप्तविज्ञानशक्तित्वात् तत्सनिधानाच्च विज्ञाता । तत्र य पृथिवी न वेद य सर्वाणि भूतानि न विदुरिति च अन्ये नियन्तव्या विज्ञातारः अन्यो नियन्ता अन्तर्यामीति प्राप्तम् । तदन्यत्वाशङ्कानिवृत्त्यर्थमुच्यते — नान्योऽतः — नान्यः — अतः अस्मात् अन्तर्यामिण. नान्योऽस्ति द्रष्टा । तथा नान्योऽतोऽस्ति श्रोता । नान्योऽतोऽस्ति मन्ता । नान्योऽतोऽस्ति विज्ञाता । यस्मात्परो नास्ति द्रष्टा श्रोता मन्ता विज्ञाता, यः अदृष्टो द्रष्टा, अश्रुत. श्रोता, अमतो मन्ता, अविज्ञातो विज्ञाता, अमृत. सर्वससारधर्मवर्जितः सर्वससारिणा कर्मफलविभागकर्ता — एष ते आत्मा अन्तर्याम्यमृतः । अस्मादीश्वरादात्मनोऽन्यत् आर्तम् । ततो होद्दालक आरुणिरुपरराम । शकर.

( २ ) यत्त्वीक्षणश्रवणमत्तेजसोस्तत्परमेश्वरावेशवशादेव द्रष्टव्यम् ‘ नान्योऽतोऽस्ति द्रष्टा’ इतीक्षित्रन्तरप्रतिषेधात् । २।३।१३

परमार्थतस्तु न जीवो नाम बुद्ध्युपाधिपरिकल्पितस्वरूपव्यतिरेकेणास्ति । न हि नित्यमुक्तस्वरूपात्सर्वज्ञादीश्वरादन्यश्चेतनो धातुर्द्वितीयो वेदान्तार्थनिरूपणायामुपलभ्यते । २।३।३०

‘ प्रतिषेधाच्च ’ — परस्मादात्मनोऽन्य चेतन प्रतिषेधति शास्त्रम् ‘ नान्योऽतोऽस्ति द्रष्टा ’ इत्येवमादि । *ब्रशकर ३।२।३०

( ३ ) अत्र विज्ञानशब्द आत्मपर· । समानप्रकरणे माध्यदिनशाखाया विज्ञानशब्दस्थान आत्मनि तिष्ठन्नित्यात्मशब्देन निर्देशदर्शनात् । द्रष्टृत्व रूपसाक्षात्कारवत्त्व न तु चक्षुर्जन्यज्ञानवत्त्व, तस्य परमात्मन्यसभवात् । श्रोतृत्व शब्दसाक्षात्कारवत्त्वम् । मन्तृत्व मन्तव्यविषयकसाक्षात्कर्तृत्वम् । विज्ञातृत्व विज्ञानशब्दितनिदिध्यासनविषयसाक्षात्कर्तृत्वम् । द्रष्टृत्वादिक जीवस्याप्यस्तीत्यदृष्टत्वादिना द्रष्टृत्वादिक विशेषित तादृश च न जीवस्यास्तीति भाव· । अत्र च द्रष्टृत्वादावुपाध्यनुक्तेर्निरुपाधिकद्रष्टृत्वमर्थसिद्धम् । अन्यशब्दादे. सर्वनाम्नः पूर्वनिर्दिष्टसदृशान्यपरत्वस्य ‘ समाने पूर्ववत्त्वात् ’ ( जै. सू.

---

शब्रावत्, वल्लभ १।२।२० शब्रापाठोऽपि, ३।३।३६ शब्रावत्, विज्ञान १।१।२ ( पृ ३९, ५६ ), १।१।१७, २१ शब्रावत्, १।२।२० शब्रापाठोऽपि, १।३।४३, २।३।४१, ३।२।३१, ३।३।३५ शब्रावत्, बलदेव २।३।१७, २६

(१) बृउ ३।७।२३, शब्रा १४।६।७।२९, ३१ यमयत्येष त ( यमयति स त ) नान्योऽतोऽस्ति ( नान्योऽस्ति ), ब्रशकर १।१।५, १७, १।२।६, ८, १८, १९, १।४।२२, २।३।१३, ३०, ४३, ४८, ३।२।३०, भास्कर १।२।१९, २०, ३।२।३१, रामानुज १।१।४ ( पृ १६१, १६२ ), १।२।१९, १।३।१४, १।४।१, २७, २।१।१५, ३।२।११, ब्रमध्व १।३।१३, २।४।११, श्रीकर १।१।५ ( पृ ५४ ), १।२।१९, २०, ३।२।३०, वल्लभ २।३।४१, विज्ञान १।१।२ ( पृ ३८, ५५, ५७, ६८ ), १।१।३०, १।२।१८, २।३।४१, ५०, ३।३।४०, ४१, ४।१।३, बलदेव १।२।१९

---

* भास्कर ब्रशकरवत् ।

७।१।१३ ) इति साप्तमिकाधिकरणे व्यवस्थितत्वादत्राप्यन्यशब्देन पूर्वनिर्दिष्टाद्दष्टत्वादिविशेषितनिरुपाधिकरूपादिसाक्षात्कारादिति मतोऽन्यस्तत्सदृशो द्रष्टा नास्तीत्यर्थः । एवमुत्तरत्रापि । रग

( ४ ) नान्योऽतोऽस्तीत्यादिना तस्य नियन्तुर्नियन्त्रन्तर निषिध्यते । 'एष त आत्मा' । 'स त आत्मा' ( शब्रा १४।६।५।१७ ) इति च त इति व्यतिरेकविभक्तिनिर्दिष्टस्य जीवस्यात्मतयोपदिश्यमानोऽन्तर्यामी न प्रत्यगात्मा भवितुमर्हति । १।२।१९

परस्य ब्रह्मणोऽन्तरात्मतयाऽवस्थितस्य स्वनियम्याभि स्वस्मिन्वर्तमानाभि. प्रजाभिरवेदन दृष्टम् । यथाऽन्तर्यामिब्राह्मणे — य आत्मनीति । १।३।१४

'अवस्थितेरिति काशकृत्स्न' — स्वशरीरभूते जीवात्मन्यात्मतयाऽवस्थिते जीवशब्देन ब्रह्मप्रतिपादनमिति काशकृत्स्न आचार्यो मन्यते स्म । जीवशब्दश्च जीवस्य परमात्मपर्यन्तस्यैव वाचको न जीवमात्रस्येति । ¶ १।४।२२

'अधिक तु भेदनिर्देशात्' — तुशब्दः पक्ष व्यावर्तयति । आध्यात्मिकादिदु.खयोगार्हात्प्रत्यगात्मनोऽधिकमर्थान्तरभूत ब्रह्म । कुत । भेदनिर्देशात् । प्रत्यगात्मनो हि भेदेन निर्दिश्यते पर ब्रह्म । य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद ।

* रामानुज. २।१।२२

(५) पुनस्तस्यैव सर्वनियन्तृत्वमुच्यते । योऽन्तरो यमयतीति द्वितीयो यशब्दो विष्णुशब्दपर्याय । 'अकयप्र विसभूमसखहा विष्णुवाचका. । एकाक्षरा अ इत्येष निर्दोषत्वाज्जनार्दनः । आनन्दत्वात्क इत्युक्त. पूर्णत्वाद्य इतीर्यते ॥' इत्यादि शब्दनिर्णये । इति स्वप्रतिज्ञातप्रकारेण । 'ब्रह्मवित्पूर्णविज्ञानाल्लोकाना कर्तृवेदनात् । लोकविद्देवविच्चासौ देवाना देववेदनात् । वेदार्थवेदनाच्चैव वेदविद्भूतवित्तथा । तन्नियन्तृपरिज्ञानादात्मविच्चात्मवेदनात् । सर्ववित्सर्वसारज्ञो यो वेद पुरुषोत्तमम् । देशाधिष्ठातृविज्ञानाद्देशज्ञ इति चोच्यते । यथा तद्वद्धरेर्ज्ञानात्सर्वज्ञ इति वैदिकम् ॥' इति ब्रह्मतर्के । 'स्थूल जगदिद यस्मिन्सूत्र वायुरसौ स्मृतः । त चापि यमयेद्यस्मादन्तर्यामी हरि स्मृत । पृथिव्याद्या देवतास्तु देहवद्वशत्वतः । शरीरमिति चोच्यन्ते यस्य विष्णोर्महात्मनः । अन्तःस्थो देवतानां च न विदुर्ये च देवता । प्रविष्टत्वाद्देवतास्थ सोऽन्तरः स्ववशत्वतः । बाह्यापेक्षा विना यस्तु रमते सोऽन्तर. स्मृत. । अतिप्रियत्वाच्च हरेरन्तरत्वमुदाहृतम् । जीवाना स्वप्रियत्व च विष्णुना नियत यत. । तस्य प्रियत्व नान्येन देवस्य नियत क्वचित् । स्वतन्त्रः सनियन्तासावन्तर्यामी ततः स्मृतः । देवताना स्वभावोऽपि स्वरूपमपि सर्वदा । तदधीन यतो यामी वासुदेव प्रकीर्तितः । स्वभावसत्तादातृत्व यन्तृत्वमिति कथ्यते ॥' इति ब्रह्मतर्के । 'अधिभूत सर्वजीवा अध्यात्म तच्छरीरगा. । देवतास्ता. स्वलोकस्था अधिदैवाभिधा मता. । लोकाभिमानिन्यस्ता एवाधिलोका इतीरिताः । यज्ञाभिमानिनो देवा अधियज्ञा इति स्मृता. ॥' इति च । भवनाधिकारे स्थितत्वादधिभूतम् । 'पृथु नारायण वाति समादायैव पक्षिराट् । अतः स पृथिवीत्युक्तस्त्वन्तरिक्ष हरः स्मृत. । स्वान्तर्गत यत. सर्वमिच्छया क्षपयेदसौ । द्यौर्नाम देवी विद्युत्स्यात्साक्षादेव सरस्वती । द्योतनात्सर्ववस्तूना तमो दुर्गा प्रकीर्तिता । यतः सङ्कल्पयेत्सर्वास्तेज. श्रीः परिकीर्तिता । आकाशो विघ्न उद्दिष्ट काशते हि पृथूदर । आपो वरुण उद्दिष्टो यदेतत्पालयत्यसौ । आत्मा विज्ञानमिति तु सर्वजीवाभिमानवान् । ब्रह्मैवोक्तस्त्विमे सर्वेऽप्यनुक्ता याश्च देवताः । ये च जीवा. परे सर्वे नियता विष्णुनैव हि । जीवाना नियमेऽजीव किमु वाच्यमिति श्रुतिः । पृथक्तन्नियम नैषा वक्ति सिद्धत्वत. स्वत. । स एव सर्ववेत्ता हि परमात्परमो हरि । नान्यो वेत्ता स्वतन्त्रोऽस्ति जीवा. सर्वे हि दु.खिन. । यदि स्वतन्त्रा नैवैते दुःखिनः स्युः कदाचन । अत आर्तिमतामार्तिदाता मुक्तिप्रदश्च सः । भगवान्परमो विष्णुः स्वतन्त्रः सर्वैकराट् ॥' इत्यादि महामीमासायाम् ।

मध्व.

( ६ ) 'अनुज्ञापरिहारौ देहसबन्धाज्ज्योतिरादिवत्' — परानुज्ञया प्रवृत्तिः परतो बन्धनिवृत्तिश्च

¶ श्रीकठ रामानुजवत् ।

* निंबार्क रामानुजवत् ।

जीवस्य प्रतीयतेंऽशत्वेऽपि देहसबन्धात् । ‘ य आत्मान मन्तरो यमयति ’ ‘ तमेव विद्वान् ’ इत्यादिना । युज्यते च ज्योतिरादिवत् । यथाऽऽदित्यो वियद्गतस्तत्प्रकाशश्चैकप्रकार. । ब्रमध्व २।३।४८

(७) ‘आदरादलोप.’— नन्वात्मनानात्व कथमुच्यते —यतो ‘नान्योऽतोऽस्ति द्रष्टा ··’ इत्यादिश्रुतिभि· पारमार्थिकात्मपराभि अन्तर्याम्यतिरिक्तचेतनाभावोऽवधार्यत इत्याशङ्कां निराकरोति । ‘ नान्योऽतोऽस्ति द्रष्टा ’ इत्यादिश्रुतिभिरीश्वरादरस्यैव करणाचेतनान्तरस्यालोपोऽ प्रतिषेध इत्यर्थः । ३।३।४०

‘ उपस्थितेऽतस्तद्वचनात् ’ — कथ पुनश्चेतनान्तरप्रतिषेधार्थतैव न भवत्युक्तवाक्यस्येत्याशङ्काया माह — उपस्थित इति । पूर्ववाक्यादुपस्थितेऽपि ब्रह्मणि सति अतो ब्रह्मण· सकाशाद्द्रष्ट्रन्तरलोपवचनादादरार्थकता लभ्यत इत्यर्थ । अय भाव. — यदि सर्वथैव द्रष्ट्रन्तरप्रतिषेधकमिद वाक्य स्यात् तदा नान्योऽतोऽस्ति द्रष्टेत्यत्रातःशब्दो व्यर्थः स्यात् । नान्योऽस्ति द्रष्टा इत्येवोच्येत आदरार्थकत्वे तु नात· शब्दो व्यर्थो भवति । अतोऽधिको द्रष्टा नास्तीत्याधिक्यावधिप्रदर्शकत्वेनात.शब्दसाफल्यात् । अतो भक्ति श्रद्धोत्पादनार्थ एव चेतनान्तरप्रतिषेध इति सिद्धम् । विज्ञान ३।३।४१

( गार्गीप्रश्नः )

दिक्कालावच्छेद्य सर्वं आकाशे ओत च प्रोत च,
आकाशश्च अक्षरे सर्वस्य प्रशास्तरि
ओतश्च प्रोतश्च

**अथ ह वाचक्नव्युवाच । ब्राह्मणा भगवन्तो हन्ताहमिमं द्वौ प्रश्नौ प्रक्ष्यामि । तौ चेन्मे वक्ष्यति । न वै जातु युष्माकमिम कश्चिद्ब्रह्मोद्य जेतेति । पृच्छ गार्गीति ॥**

( १ ) अतः पर अशनायादिविनिर्मुक्त निरुपाधिक साक्षादपरोक्षात्सर्वान्तर ब्रह्म वक्तव्यमित्यत आरम्भः — अथ ह वाचक्नव्युवाच । पूर्वं याज्ञवल्क्येन निषिद्धा मूर्धपातभयादुपरता सती पुनः प्रष्टु ब्राह्मणानुज्ञां प्रार्थयते हे ब्राह्मणाः भगवन्तः पूजावन्त· शृणुत मम वचः । हन्त अहमिम याज्ञवल्क्य पुनर्द्वौ प्रश्नौ प्रक्ष्यामि, यद्यनुमतिर्भवतामस्ति । तौ प्रश्नौ चेत् यदि वक्ष्यति कथयिष्यति मे, कथचित् न वै जातु कदाचित्, युष्माक मध्ये इम याज्ञवल्क्य कश्चित् ब्रह्मोद्य ब्रह्मवदन प्रति जेता — न वै कश्चित् भवेत् — इति । एवमुक्ता ब्राह्मणा अनुज्ञा प्रददुः — पृच्छ गार्गीति ।

* शकर.

( २ ) पूर्वं गार्ग्या जीवानामुत्तरोत्तराश्रयत्व सर्वेषा भगवदाश्रयत्व च श्रुतम् । न तु मूलप्रकृतेराधारत्वमाधेयत्व वा । अतः पुन पृच्छति । विजिगीषुकथात्वाद्ब्राह्मणानुज्ञया ।

स्वभर्तुर्विद्याबल जानन्त्यपि युष्माकमय जेतु न शक्य इति ज्ञापयित्वा तेषामुपकारार्थं च पप्रच्छ । न त्र युक्त्या पूर्वमुपरता । भार्यात्वाद्भगवतोऽन्याधारत्व नाशङ्क्यमित्युक्ते भीत्यैवोपरता । भगवतोऽन्याधारत्व च सर्वाधारमूलप्रकृतेरपि । भगवानेवाधार इत्युक्तयुक्तित एव निवारित भवति । नान्यदतोऽस्ति द्रष्टृत्यादियुक्तिभिश्च । अस्थूलत्वादियुक्तिभिश्च । ‘वादो जल्पो वितण्डेति त्रिविधा विदुषां कथा । केवल तत्त्वविज्ञानमुद्दिश्य गुरुशिष्ययो· । अन्ययोर्वा बहुना वा निर्दुष्टमनसां कथा । वाद इत्युच्यते सद्भिर्जयस्तत्रार्थिको भवेत् । विजये शिष्यताऽन्येषां पूजा च जयिनः सदा । पुनश्च सशयो यस्यास्तेषा तस्यापि वारणम् । कर्तव्य जयिना नित्यमशक्तस्य स्वतोऽधिकात् । अन्योन्यनिर्णयश्चेत्स्यात्तदा सब्रह्मचारिणः । पृष्टेन प्रथम मान वक्तव्य वादिना शुभम् । वेदाः सर्वे शुभ मान सेतिहासपुराणका· । सपञ्चरात्रमीमांसाः स्मृतयश्चाप्यनन्तरम् । तदन्यदशुभ प्रोक्त न प्रयोज्य कथासु च । मिश्रमक्षानुमाने तु ग्राह्ये शब्दार्थनिर्णये । अदुष्टमिन्द्रिय त्वक्षमुपपत्तिस्तथानुमा । अनुमैव स्वभावाख्यो ह्यर्थापत्त्युपमे तथा । उपपत्तिभेदायत्तेऽपि वाक्यमेषा-

(१) बृउ ३।८।१, शब्रा १४।६।८।१ हन्ताहमिम+ ( याज्ञवल्क्य ) वक्ष्यति ( विवक्ष्यति ) जेतेति+ ( तौ चेन्मे न विवक्ष्यति मूर्धाऽस्य विपतिष्यतीति । पृच्छ गार्गीति ), रग ( वै० ), बलदेव ३।४।३६

* रग शकरवत् ।

-गम. शुभम् । तत्त्वनिर्णयवैलोम्य सवादो वाऽविरोधिते । पराजय इति प्रोक्त' सम. सर्वकथासु च । तत्त्वनिर्णयवै-लोम्ये दण्ड्यो वादकथास्वपि । गुरुणैव त्ववश्याना राजा दण्ड प्रयोजयेत् । गुरुदण्डस्तु वाचा स्याद्राजदण्डोऽ-र्थदेहतः । गुरुदण्डोऽप्यर्थतः स्यात्सवादे व्रततोऽपि च। राजदण्डो बलाच्च स्याद्दोषस्य गुरुलाघवात् । सवादे दण्डयता नास्ति जल्पादौ च कथचन । तत्त्वविप्लवकर्तार ससत्सु च पराजितम् । छित्त्वा जिह्वा च काकाङ्क राजा राज्याद्विवासयेत् । अन्यसाम्यमभेदो वा नीचता वा कुतश्चन । विष्णो श्रीपूर्वकाणा च व्यत्यासो गुणदोषत' । तद्भक्तेरन्यधर्मत्व पञ्चैते तत्त्वविप्लवा । तत्त्वविप्लावक शूद्र वैश्य क्षत्रियमेव वा । हन्यादेवाविचारेण विप्रजिह्वां तथोद्धरेत् । स्वसिद्धान्ते प्रमाण च परसिद्धान्ते च दूष णम् । वक्तव्यमुभय वादे जल्पे चेति सतां मतम् । अवाक्यदूषण तर्कादागमादेव साधनम् । वाक्यतात्पर्यवि ज्ञप्त्यै मानमन्यन्न चान्यथा । सतोरेव यदा स्पर्धा गुण-तोऽर्थार्थमेव वा । तदा जल्पः समुद्दिष्ट' तत्र विद्या परीक्षयेत् । विद्यापरीक्षापूर्वा हि सत्कथा जल्प उच्यते । सर्वज्ञा वैष्णवाः पञ्च सप्त वोभयसमता. । अधिका वा यथालब्धाः प्राश्निकास्तु परीक्षका. । उभयो. प्रश्नकर्तृत्वात्प्राश्निका इति कीर्तिता. । तदभावे गुणोद्रेक दर्शयेता पृथक्जने । विद्यासाम्ये कथा कार्या ह्यन्यथैकपराजय' । विद्योनो दण्डय एव स्याद्यदि नोच्चस्य शिष्यताम् । व्रजेत्पश्चाद्यथावाद एव जल्प प्रकीर्तित. । अर्थनिर्णयहेतुत्वाद्वादे प्रश्नो जयेऽपि तु । न जल्पे तु पुनः प्रश्न' सभ्यानुज्ञा विना भवेत् । स्पर्धा सतां वितण्डा स्यात्तत्त्वविप्लावकैर्यदा । मूलपक्षग्रहापेता वितण्डा कविभिर्मता । सतामेव वितण्डा स्यादसता जल्प एव तु । एव जल्पो वितण्डेति ह्युभयो. सहिता. कथा । अप्रकाश्यः स्वपक्षो हि पाषण्डानां यतस्ततः । अग्रहेणैव पक्षस्य तर्कागमबलेन तु । दूषयेदेव पाषण्डास्तत्त्वविप्लाव-कान् सदा । तत्पक्षाणा निषेध्यत्वात्तेषां पक्षग्रहो भवेत् । विष्णुभक्त्यन्यधर्माख्यस्तत्त्वविप्लव एव तु । बौद्धादीनां यतः सर्वे तत्त्वविप्लावकास्तथा । सर्वनास्ति-कवादी वा स्वमनीषामतोऽपि वा । तस्यापि पक्ष सश्रित्य दूषयेद्वाक्ययुक्तितः । यस्य नैवागमो मान त ब्रूयादागमाश्रय । धर्मार्थोऽथ वृथैवाय तव पक्षस्य सग्रहः । धर्मार्थश्चेन्न धर्मो हि शक्यो द्रष्टु विनागमात् । यथानुमीयते हिंसा पापहेतुस्तथैव हि । धर्महेतुत्वमप्यस्या अनुमातु सुशक्यते । वृथापक्ष वृथा हन्याद्यदि कश्चि-त्किमुत्तरम् । इत्यशक्तौ सता सर्वे सभ्यापि निवारणम् । कुर्युरेवासता सन्तस्तत्त्वविप्लाविना जये । येषां विष्णो. सम किंचिदधिक वा न तु क्वचित् । क्षराक्षराभ्या भिन्न च विष्णु पश्यन्ति ये सदा । तारतम्यविद सर्वजीवानां प्रकृतेरपि । भगवद्धर्मिणो नित्य ते सन्तः परिकीर्तिता । पराजितेष्वसत्सूक्त राजा दण्ड प्रपातयेत् । जितेषु सत्स्व-सद्भिस्तु राजोदासीनता व्रजेत् । यावदेषां विजेता स्यादथ दण्ड निपातयेत् ॥ ' इति ब्रह्मतर्के ।

मध्व

**सा होवाच । अह वै त्वा । याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्य धनुरधिज्य कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठेदेवमेवाह त्वा द्वाभ्यां प्रश्नाभ्यामुपो-दस्थाम् । तौ मे ब्रूहीति । पृच्छ गार्गीति ॥**

( १ ) लब्धानुज्ञा ह याज्ञवल्क्य सा ह उवाच — अह वै त्वा त्वां द्वौ प्रश्नौ प्रक्ष्यामीत्यनुषज्यते । कौ ताविति जिज्ञासायां तयोर्दुरुत्तरत्व द्योतयितु दृष्टान्तपूर्वक तावाह — हे याज्ञवल्क्य यथा लोके काश्य.— काशिषु भवः काश्य., प्रसिद्ध शौर्ये काश्ये — वैदेहो वा विदेहानां वा राजा, उग्रपुत्र. शूरान्वय इत्यर्थः । उज्ज्य अवतारितज्याक धनु. पुनरधिज्य आरोपित-ज्याक कृत्वा, द्वौ बाणवन्तौ —– बाणशब्देन शराग्रे यो वशखण्डः सधीयते, तेन विनापि शरो भवतीत्यतो विशिनष्टि बाणवन्ताविति —– द्वौ बाणवन्तौ शरौ, तयोरेव विशेषणम् —– सपत्नातिव्याधिनौ शत्रोः पीडा-करावतिशयेन, हस्ते कृत्वा उप उत्तिष्ठेत् समीपत आत्मान दर्शयेत् — एवमेव अह त्वा त्वां शरस्था-नीयाभ्या प्रश्नाभ्या द्वाभ्यां उपोदस्था उत्थितवत्यस्मि त्वत्समीपे । तौ मे ब्रूहीति —– ब्रह्मविच्चेत् । आह इतरः— पृच्छ गार्गीति । * शकर

* रग शकरवत् ।

(१) बृउ ३।८।२, शब्रा १४।६।८।२ उज्ज्य (उद्य).

( २ ) 'बाणस्त्वयोमय. प्रोक्त· शरो नालोऽस्य कीर्तित. ' इत्यभिधानम् । 'कर्मारस्तु तदा बाण तीक्ष्णमञ्जलिकाभिधम् । सदधानः शरे यान्त राजान न ददर्श ह ॥' इति पाद्मे । मध्व

**[१]सा होवाच । यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूत च भवच्च भविष्यच्चेत्याचक्षते कस्मिꣲस्तदोत च प्रोत चेति ॥**

( १ ) सा होवाच — यत् ऊर्ध्वं उपरि दिव अण्डकपालात्, यच्च अवाक् अध पृथिव्या अधोऽण्ड-कपालात्, यच्च अन्तरा मध्ये द्यावापृथिवी द्यावापृथिव्यो अण्डकपालयोः , इमे च द्यावापृथिवी, यद्भूत यच्चातीत, भवच्च वर्तमान स्वव्यापारस्थ, भविष्यच्च वर्तमानादूर्ध्वकालभावि लिङ्गगम्यम् — यत्सर्वमेतदाचक्षते कथयन्त्यागमतः— तत्सर्वं द्वैतजात यस्मिन्नेकीभवतीत्यर्थ.— तत् सूत्रसञ्ज पूर्वोक्त कस्मिन् ओत च प्रोत च पृथिवीधातुरिवाप्सु । शकर

( २ ) दिवो यदूर्ध्वं द्युलोकाद्यदूर्ध्वं लोकजात पृथिव्याश्चाधस्तन यद्वस्तुजात द्यावापृथिव्यन्तरालवर्ति कालत्रयपरिच्छिन्न यद्वस्तुजातमेतत्सर्वं कुत्र वा दीर्घतिर्यक्तन्तुवदोत प्रोत चेति । यदर्वाक्पृथिव्या इति पाठेऽप्ययमेवार्थः । रग

**[२]स होवाच । यदूर्ध्वं गार्गि दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूत च भवच्च भविष्यच्चेत्याचक्षत आकाशे तदोत च प्रोत चेति ॥**

( १ ) स होवाच इतरः— हे गार्गि, यत् त्वयोक्त 'ऊर्ध्वं दिव· ' इत्यादि, तत्सर्वम् — यत्सूत्रमाचक्षते — तत् सूत्र, आकाशे तत् ओत च प्रोत च — यदेतत् व्याकृत सूत्रात्मक जगत् अव्याकृताकाशे, अप्स्विव पृथिवीधातु , त्रिष्वपि कालेषु वर्तते उत्पत्तौ स्थितौ लये च । शकर

(१) बृउ ३।८।३, शब्रा १४।६।८।३, बलदेव ३।३।११

(२) बृउ. ३।८।४, शब्रा १४।६।८।४

( २ ) आकाशशब्देन न वायुमदम्बर गृह्यते, तस्य सर्वविकाराश्रयत्वाभावात् । किं चाव्याकृताकाश. । एतच्च 'अक्षरमम्बरान्तधृतेः' ( ब्रसू १।३।१० ) इत्यत्रापि स्थितम् । रग.

**[३]सा होवाच । नमस्तेऽस्तु याज्ञवल्क्य यो म एत व्यवोचोऽपरस्मै धारयस्वेति । पृच्छ गार्गीति ॥**

( १ ) पुनः सा होवाच । नमस्तेऽस्त्वित्यादिप्रश्नस्य दुर्वचत्वप्रदर्शनार्थम् । यः मे मम एत प्रश्न व्यवोचः विशेषेणापाकृतवानसि । एतस्य दुर्वचत्वे कारणम् — सूत्रमेव तावदगम्य इतरैर्दुर्वाच्यम् । किमुत तत्, यस्मिन्नोत च प्रोत चेति । अतो नमोऽस्तु ते तुभ्यम् । अपरस्मै द्वितीयाय प्रश्नाय धारयस्व दृढीकुरु आत्मानमित्यर्थ. । पृच्छ गार्गीति इतर आह ।

शकर.

( २ ) यस्त्व म एत व्यवोच उक्तवानसि तस्मै ते नमोऽस्तु । अपरस्मै द्वितीयप्रश्नायावधान कुरु ।

रग.

**सा होवाच । यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूत च भवच्च भविष्यच्चेत्याचक्षते कस्मिꣲस्तदोत च प्रोत चेति ॥**

व्याख्यातमन्यत् । सा होवाच यदूर्ध्वं याज्ञवल्क्येत्यादिप्रश्न. प्रतिवचन च उक्तस्यैवार्थस्यावधारणार्थं पुनरुच्यते । न किंचिदपूर्वमर्थान्तरमुच्यते ।

शकर.

**स होवाच । यदूर्ध्वं गार्गि दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूत च**

(१) बृउ ३।८।५, शब्रा १४।६।८।५ ( ऽस्तु० ), मध्व अपर ( अथापर )

(२) बृउ ३।८।६, शब्रा १४।६।८।६ कस्मिꣲस्त ( कस्मिन्नेव त )

(३) बृउ ३।८।७, शब्रा १४।६।८।७ नु खल्वा ( न्वा ), अशकर १।३।१०, भास्कर १।३।१०, रामानुज १।३।९, श्रीकठ १।३।९, श्रीकर १।३।१०, वल्लभ १।३।१०, विज्ञान १।३।१०, बलदेव १।३।१०.

भवञ्च भविष्यच्चेत्याचक्षत आकाश एव तदोत च प्रोतं चेति । कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति ॥

( १ ) सर्वं यथोक्तं गार्ग्या प्रत्युच्चार्य तमेव पूर्वोक्तमर्थमवधारितवान् आकाश एवेति याज्ञवल्क्य । गार्ग्याह — कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति । आकाशमेव तावत्कालत्रयातीतत्वात् दुर्वाच्य, ततोऽपि कष्टतर अक्षर, यस्मिन्नाकाशमोत च प्रोत च, अत अवाच्य — इति कृत्वा, न प्रतिपद्यते सा अप्रतिपत्तिर्नाम निग्रहस्थान तार्किकसमये । अथ अवाच्यमपि वक्ष्यति, तथापि विप्रतिपत्तिर्नाम निग्रहस्थानम् । विरुद्धा प्रतिपत्तिर्हि सा, यदवाच्यस्य वदनम् । अतो दुर्वचन प्रश्न मन्यते गार्गी ।

शाङ्कर

( २ ) 'दीप्तेराकाशशब्दोक्ता श्रीर्हि सर्वाश्रया मता । तदाश्रयः परो विष्णु. सोऽस्थूलादिगुणो मत ॥' इति स्कान्दे । पुन' प्रश्नः सर्वाधारा प्रकृतिरित्यनुपचरितत्वेनावधारणार्थम् । आकाश एवेत्यवधारणात् । 'पुनरुक्ति. शब्ददोषो न्यूनाधिक्यादिक तथा । न जिगीषुकथायां च कारण स्यात्पराजये । क्वचिद्धि ग्राधिकस्यापि स्खलन सभवेद्यत. । तत्त्वनिर्णयवलोम्य विलम्बो वा मुहूर्तत । विद्यादौर्बल्यहेतु स्यादतस्तस्मिन्पराजय.॥' इति ब्रह्माण्डे । अतस्तत्त्वनिर्णयविरोधिपुनरुक्त्यादीनि निग्रह. ।

माध्व

स होवाच । एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यम् । न तदश्नाति किंचन । न तदश्नाति कश्चन ॥

( १ ) तद्दोषद्वयमपि परिजिहीर्षन्नाह — स होवाच याज्ञवल्क्य । एतद्वै तत्, यत्पृष्टवत्यसि — कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति । किं तत् ? अक्षरम् — यन्न क्षीयते न क्षरतीति वा अक्षरम् — तदक्षर हे गार्गि ब्राह्मणा ब्रह्मविदः अभिवदन्ति । ब्राह्मणाभिवदनकथनेन, नाहमवाच्य वक्ष्यामि न च न प्रतिपत्स्येयमित्येव दोषद्वय परिहरति । एवमपाकृते प्रश्ने, पुनर्गार्ग्या प्रतिवचन द्रष्टव्यम् — ब्रूहि किं तदक्षर, यद्ब्राह्मणा अभिवदन्ति — इत्युक्त आह — अस्थूल तत् स्थूलादन्यत् । एव तर्ह्यणु — अनणु । अस्तु तर्हि ह्रस्व — अह्रस्वम् । एव तर्हि दीर्घ — नापि दीर्घ अदीर्घम् । एवमेतैश्चतुर्भि. परिमाणप्रतिषेधैर्द्रव्यधर्म प्रतिषिद्ध, न द्रव्य तदक्षरमित्यर्थ । अस्तु तर्हि लोहितो गुण — ततोऽप्यन्यत् अलोहितम् । आग्नेयो गुणो लोहित । भवतु तर्ह्यपां स्नेहन — न अस्नेहम् । अस्तु तर्हि छाया — सर्वथाऽपि अनिर्देश्यत्वात् छायाया अप्यन्यत् अच्छायम् । अस्तु तर्हि तम. — अतम । भवतु वायुस्तर्हि — अवायुः । भवेत्तर्ह्याकाश — अनाकाशम् । भवतु तर्हि सङ्गात्मक जतुवत् — असङ्गम् । रसोऽस्तु तर्हि — अरसम् । तथा गन्धोऽस्तु — अगन्धम् । अस्तु तर्हि चक्षु — अचक्षुष्क, न हि चक्षुरस्य करण विद्यते, अतोऽचक्षुष्क, 'पश्यत्यचक्षुः' इति मन्त्रवर्णात् । तथा आश्रोत्र, 'स

(१) बृउ ३।८।८, शब्रा १४।६।८।८ मरसमगन्ध (मस्पर्शमगन्धमरस) ममात्र (मनामागोत्रमजरममरम भयममृतमरजोऽशब्दमविवृतमसवृतमपूर्वमनपर ) तदश्नाति किंचन ( तदश्नोति कचन ) तदश्नाति ( तदश्नोति ), ब्रशाकर १।१।१२, २९, १।३।१०, १२, २।१।१४, २६, ३१, २।३।७, ३।२।११, १४, ३।३।३३, ३।४।५२, ४।१।२, ४।३।१४, भास्कर १।१।२०, १।३।१०, २।१।२६, ३।२।११, ३।३।३३, रामानुज १।१।१ (पृ १९), १।१।२१, १।३।९, ३।३।३३, निंबार्क. ३।३।३३, मध्व ममात्र + ( मगोत्रमजरमभयममृतमरजोऽशब्दमविवृतमसवृतमपूर्वमनपर ) टीका तु पाठमिम नानुसरति, ब्रमध्व १।३।१२, ३।२।१४, श्रीकंठ १।३।९, ३।२।११, २९, ३।३।३३, श्रीकर १।१।१ ( पृ ४,१९ ), १।३।१०, ३।३।३३, वल्लभ. १।३।१०, ३।२।११, ३।३।३३, ४।४।१६ न तदश्नाति किंचन । न तदश्नाति कश्चन ( न तदश्नोति कचन । न तदश्नोति कश्चन ), विज्ञान १।१।२ ( पृ. ४१ ), १।३।१०,१२,२।३।२१, ३।२।१३,३६, ३।३।३३, बलदेव १।३।१०, ३।२।२५, ३।३।३४

शृणोत्यकर्णः ' इति । भवतु तर्हि वाक् — अवाक् । तथा अमन । तथा अतेजस्क अविद्यमान तेज अस्य तत् अतेजस्कम् । न हि तेजः अग्न्यादिप्रकाश वत् अस्य विद्यते । अप्राण — आध्यात्मिको वायु प्रतिषिध्यतेऽप्राणमिति । मुख तर्हि द्वार तत् — अमुखम् । अमात्र — मीयते येन तन्मात्र, अमात्र मात्रारूप तन्न भवति, न तेन किंचिन्मी यते । अस्तु तर्हि च्छिद्रवत् — अनन्तर नास्या न्तरमस्ति । सभवेत्तर्हि बहिस्तस्य — अबाह्यम् । अस्तु तर्हि भक्षयितृ तत् — न तदश्नाति किंचन । भवेत् तर्हि भक्ष्य कस्यचित् — न तदश्नाति कश्चन । सर्वविशेषणरहितमित्यर्थः । एकमेवाद्वितीय हि तत् — केन किं विशिष्यते ।

शकर

( २ ) ' अक्षरमम्बरान्तधृतेः ' — तत्र सशयः किमक्षरशब्देन वर्ण उच्यते किंवा परमेश्वर इति । तत्राक्षरसमाम्नाय इत्यादावक्षरशब्दस्य वर्णे प्रसिद्धत्वात्प्रसिद्ध्यतिक्रमस्य चायुक्तत्वात् ' ओंकार एवेद सर्वम् ' ( छाउ २।२३।३ ) इत्यादौ च श्रुत्यन्तरे वर्णस्याप्युपा स्यत्वेन सर्वात्मकत्वावधारणाद्वर्ण एवाक्षरशब्द इत्येव प्राप्ते उच्यते — पर एवाऽऽत्माऽक्षरशब्दवाच्य । कस्मात् , ' अम्बरान्तधृते. ' पृथिव्यादेराकाशान्तस्य विकारजातस्य धारणात् । तत्र हि पृथिव्यादेः समस्तविकारजातस्य कालत्रयविभक्तस्याऽऽकाश एव तदोत च प्रोत चेत्याकाशे प्रतिष्ठितत्वमुक्त्वा — ' कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च ' इत्यनेन प्रश्नेनेदमक्षरमव तारितम् । तथा चोपसहृतम् — ' एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च ' इति । न चेयमम्बरान्तधृतिर्ब्रह्मणोऽन्यत्र सभवति । यदपि ' ओंकार एवेद सर्वम् ' इति तदपि ब्रह्मप्रतिपत्तिसाधनत्वात्स्तुत्यर्थं द्रष्टव्यम् । तस्मान्न क्षरत्यश्नुते चेति नित्यत्वव्यापित्वाभ्यामक्षर परमेव ब्रह्म । * १।३।१०

' सा च प्रशासनात् ' — कार्यस्य चेत्कारणाधीनत्वमम्बरान्तधृतिरभ्युपगम्यते प्रधानकारणवादिनोऽपीयमुपपद्यते । कथमम्बरान्तधृतेर्ब्रह्मत्वप्रतिपत्तिः । अत उत्तर पठति — सा चेति । सा चाम्बरान्तधृति. परमेश्वरस्यैव कर्म । कस्मात् ? प्रशासनात् । प्रशासन हीह श्रूयते — ' एतस्य वा अक्षरस्य प्रशासने ' इत्यादि । प्रशासन च पारमेश्वर कर्म नाचेतनस्य प्रशासन भवति । + १।३।११

' अन्यभावव्यावृत्तेश्च ' — अन्यभावव्यावृत्तेश्च कारणाद्ब्रह्मैवाक्षरशब्दवाच्य तस्यैवाम्बरान्तधृति कर्म, नान्यस्य कस्यचित् । अन्यस्य भावोऽन्यभावस्तस्माव्द्यावृत्तिरन्यभावव्यावृत्तिरिति । एतदुक्त भवति — यदन्यद्ब्रह्मणोऽक्षरशब्दवाच्यमिहाऽऽशङ्क्यते तद्भावादिदमम्बरान्तविधारणमक्षर व्यावर्तयति श्रुति.— ' तद्वा एतदक्षर गार्ग्यदृष्ट द्रष्टृश्रुत श्रोत्रमत मन्त्रविज्ञात विज्ञातृ ' ( बृउ. ३।८।११ )इति । तत्रादृष्टत्वादिव्यपदेश. प्रधानस्यापि सभवति । द्रष्टृत्वादिव्यपदेशस्तु न सभवत्यचेतनत्वात् । न शारीरस्याप्युपाधिमतोऽक्षरशब्दवाच्यत्वम् । ' अचक्षुष्कमश्रोत्रमवागमन ' इति चोपाधिमत्ताप्रतिषेधात् । + १।३।१२

' विकरणत्वान्नेति चेत्तदुक्तम् ' — स्यादेतद्विकरणां परां देवता शास्ति शास्त्र ' अचक्षुष्कमश्रोत्रमवागमना.' इत्येवजातीयकम् । कथ सा सर्वशक्तियुक्ताऽपि सती कार्याय प्रभवेत् । इति चेत् । यदत्र वक्तव्य तत्पुरस्तादेवोक्तम् । श्रुत्यवगाह्यमेवेदमतिगम्भीर ब्रह्म न तर्कावगाह्यम् । प्रतिषिद्धसर्वविशेषस्यापि ब्रह्मणः सर्वशक्तियोग. सभवतीत्येतदप्यविद्याकल्पितरूपभेदोपन्यासेनोक्तमेव । २।१।३१

'अक्षरधिया त्ववरोध. सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्'—वाजसनेयके श्रूयते ' एतद्वै तदक्षर गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहम् ' इत्यादि । तथाऽऽथर्वणे श्रूयते ' अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णम् ' ( मुउ १।१।६ ) इत्यादि । तथैवान्यत्रापि विशेषनिराकरणद्वारेणाक्षर पर ब्रह्म श्राव्यते । तत्र च क्वचित्

* निंबार्क सूत्रत्रयस्य ब्रशकरवत् यथाश्रुतव्याख्यानम् । ब्रमध्व जीवपूर्वपक्ष , शेष ब्रशकरवत् सूत्रत्रये । श्रीकठ सूत्रत्रयस्य ब्रशकरवद्व्याख्यान, प्रथमसूत्रे जीवोऽप्यधिक पूर्वपक्षे ।

+ भास्कर. विज्ञान. ब्रशकरवद्भावः ।

केचिदतिरिक्ता विशेषा प्रतिपिध्यन्ते। तासां विशेषप्रतिषेधबुद्धीनां किं सर्वासां सर्वत्र प्राप्तिरुत व्यवस्थेति संशये श्रुतिविभागाद्व्यवस्थाप्राप्तावुच्यते । अक्षरविषयास्तु विशेषप्रतिषेधबुद्धयः सर्वाः सर्वत्रावरोद्धव्या सामान्यतद्भावाभ्याम्। समानो हि सर्वत्र विशेषनिराकरणरूपो ब्रह्मप्रतिपादनप्रकार । तदेव च सर्वत्र प्रतिपाद्य ब्रह्माभिन्न प्रत्यभिज्ञायते ।

औपसदवदिति निदर्शनम्। यथा जामदग्न्येऽहीने पुरोडाशिनीषूपसत्सु चोदितासु पुरोडाशप्रदानमन्त्राणा 'अग्नेर्वैर्होत्रं वेरध्वरम्' इत्येवमादीनामुद्गातृवेदोत्पन्नानामप्यध्वर्युभिरभिसबन्धो भवति । अध्वर्युकर्तृकत्वात्पुरोडाशप्रदानस्य प्रधानतन्त्रत्वाच्चाङ्गानाम्। एवमिहाप्यक्षरतन्त्रत्वात्तद्विशेषणाना यत्र क्वचिदप्युत्पन्नानामक्षरेण सर्वत्राभिसबन्ध इत्यर्थः। तदुक्त प्रथमे काण्डे—'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसयोगः' (जै सू ३।३।८) इत्यत्र। * शंकर. ३।३।३३

(३) केचिदक्षरशब्दस्य वर्णे प्रसिद्धत्वादक्षरमोङ्कार इति पूर्वपक्षयन्ति, वैयाकरणदर्शने च स्फोटः शब्द इत्यवतार्य गकारादयो वर्णा एव शब्दा इति स्थापयन्ति। तदेतदधिकरणेनासबद्धम् । अलोहितमस्नेहमच्छायमित्येवमादिप्रतिषेधानुपपत्ते । प्रधानस्य तु युज्यते विकारधर्माणा कारणप्रसक्ते । ‡ १।३।१०

प्रशासनमाज्ञापयितृत्व चेतनधर्म. ।

‡ १।३।११

'अन्यभावव्यावृत्तेश्च' — यद्यपि प्रशासन प्रधानेऽपि कथञ्चित् प्रकल्प्यते तथापि ह्यत्र तस्य ग्रहण नास्ति कथमन्यस्य भावस्य प्रधानस्य व्यावृत्तिश्रुते । ‡ भास्कर १।३।१२

(४) हे गार्गि तदेतत्सर्वासूपनिषत्सु प्रसिद्धम्। अश्नुत इति वा न क्षरतीति वाऽक्षर ब्रह्म ब्राह्मणा ब्रह्मविदोऽभिवन्दति । अत्र ब्राह्मणाभिवदनकथनेन नाहं किंचिद्विप्रतिपन्न वक्ष्यामीति हृदयम् । अमात्र मात्रा इन्द्रियाणि। यद्वा मात्रा परिच्छेदस्तद्रहितमित्यर्थ. । अनन्तरमबाह्यम्। स्वाव्यासदेशशून्यमित्यर्थ. । रंग.

(५) 'अक्षरमम्बरान्तधृते.' — अक्षर पर ब्रह्म । कुत । अम्बरान्तधृते । अम्बरस्याकाशस्यान्त. पारभूतमव्याकृतमम्बरान्तः। तस्य धृते. । तदाधारतयाऽस्याक्षरस्योपदेशादिति यावत्। १।३।९

'सा च प्रशासनात्'—सा चाम्बरान्तधृतिरस्याक्षरस्य प्रशासनादेव भवतीत्युपदिश्यते। प्रशासन प्रकृष्ट शासनम् । न चेदृश स्वशासनाधीनसर्ववस्तुविधरण बद्धमुक्तो भयावस्थस्यापि प्रत्यगात्मन. संभवति। अतः पुरुषोत्तम एव प्रशासित्रक्षरम्। * १।३।१०

'अन्यभावव्यावृत्तेश्च'— अत्र द्रष्टृत्वश्रोतृत्वाद्युपदेशादस्याक्षरस्याचेतनभूतप्रधानभावो व्यावर्त्यते । सर्वैरदृष्टस्यैव सत सर्वस्य द्रष्टृत्वाद्युपदेशाच्च प्रत्यगात्मभावो व्यावर्त्यते । अत इयमन्यभावव्यावृत्तिरस्याक्षरस्य परमपुरुषता द्रढयति ।

एव वाऽन्यभावव्यावृत्ति.। अन्यस्य सद्भावव्यावृत्तिरन्यभावव्यावृत्ति । यथैतदक्षरमन्यैरदृष्ट सदन्येषा द्रष्टृ च सत्त्वव्यतिरिक्तस्य समस्तस्याधारभूतमेवमन्येनादृष्टमेतस्य द्रष्टृ च सदेतस्याधारभूतमन्यन्नास्तीति वदन् 'नान्यदतोऽस्ति द्रष्टृ' (बृउ ३।८।११) इत्यादिवाक्यशेषोऽन्यस्य सद्भाव व्यावर्तयन्नस्याक्षरस्य प्रधानभाव प्रत्यगात्मभाव च प्रतिषेधति ।

किंच 'एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्या प्रशसन्ति यजमान देवा दर्वी पितरोऽन्वायत्ता' (बृउ ३।८।९) इति श्रौत स्मार्त च यागदानहोमादिक सर्व कर्म यस्याज्ञया प्रवर्तते तदक्षर परब्रह्मभूत. पुरुषोत्तम एवेति विज्ञायते। अपि च 'यो वा एतदक्षरं०' (बृउ. ३।८।१०) इति। यदज्ञानात्संसारप्राप्तिर्यज्ज्ञानाच्चामृतत्वप्राप्तिस्तदक्षर पर ब्रह्मैवेति सिद्धम्। रामानुज १।३।११

(६) 'प्रसिद्धस्थूलसूक्ष्मादिवैलक्षण्याज्जनार्दनः। अस्थूलादिरिति प्रोक्तो नैव स्थौल्याद्यभावतः । अनावृतेस्तमो नास्य स्वातन्त्र्यान्नाद्यते क्वचित् ॥' मध्व.

---

* भास्कर रामानुज निंबार्क श्रीकंठ शंकरवत् सूत्रार्थ । श्रीकरस्य विकल्पेन अन्यतमोऽर्थ. शंकरवत् ।
‡ विज्ञान भास्करवत् ।

* वल्लभ रामानुजवद्भाव ।

( ७ ) 'अक्षरमम्बरान्तधृतेः' — तत्र सशय. । किमक्षरशब्देन पदार्थान्तर, ब्रह्म वेति । कयाचिदुपपत्त्या स्मरणकालभूतसूक्ष्मप्रकृतिजीवविशेषाणामन्यतरपरिग्रह इति वक्तव्यमुपासनार्थम् । अत्र हि प्रापञ्चिकसर्वधर्मराहित्य ब्रह्मधर्मत्व च प्रतीयते । तदुपासनार्थत्व उपपद्येत । ब्रह्मत्वपरिग्रहे तु वैयर्थ्यमेव । उपदेष्टृत्वाभावात् । तस्मादक्षरमन्यदेव ब्रह्मधर्मत्वेनोपास्यमित्येव प्राप्ते उच्यते — अक्षर परमात्मैव । कुतः । अम्बरान्तधृते । श्रुतिं व्याख्याय सिद्ध हेतुमाह । अत्रैक एव प्रश्न उत्तर चैकम् । आकाशस्यावान्तरत्वमेव । तेनाम्बरान्ताना पृथिव्यादीना विधारक· परमात्मैव । १।३।१०

'अन्यभावव्यावृत्तेश्च' — ननूक्तमुपासनापर भविष्यतीति । तत्राह— अन्यभावव्यावृत्तेः । अन्यस्य भावोऽन्यभाव । अब्रह्मधर्म इति यावत् । तस्यात्र व्यावृत्ते । अब्रह्मत्वे हि ब्रह्मत्वेनोपासना भवति कार्यकारणभावभेदेन । न ह्यत्र तादृशो धर्मोऽस्ति । चकारात् , 'यो वा एतदक्षरमविदित्वा गार्गि' इत्यादिना शुद्धब्रह्मप्रतिपादनमेव, नोपासनाप्रतिपादनमिति । तस्मादक्षर ब्रह्मैवेति सिद्धम् । १।३।१२

'अक्षरधिया त्ववरोध. सामान्यतस्तद्भावाभावाभ्यामौपसदवत्तदुक्तम्' — 'ब्रह्मविदाप्नोति परम्' इति श्रुतावक्षरब्रह्मविदोऽक्षरात् परस्य प्राप्तिरुच्यते । 'अक्षरादपि चोत्तम' इति भगवद्वाक्याच्चाक्षरातीतः पुरुषोत्तम. । 'भक्त्या मामभिजानाति' इति वाक्ये मामिति पदात् पुरुषोत्तमविषयक ज्ञानमुच्यते, न त्वक्षरविषयकम् । किञ्च, ब्रह्मभूतस्य भक्तिलाभोक्तेस्तस्य चानन्दांशाविर्भावात्मकत्वात्तस्य चाविद्यानाशजन्यत्वात्तस्य चाक्षरज्ञानजन्यत्वात् पूर्वकक्षाविश्रान्तमेवाक्षरज्ञानम् । एव सत्यक्षरविषयिणीना धिया श्रुतौ मुक्तिसाधनेषु योऽवरोध. प्रवेशन गणनेति यावत् , स सामान्यतद्भावाभ्या हेतुभ्या पुरुषोत्तमसबन्धिसबन्धे मुक्तिरिति सामान्यम् । मर्यादामार्गेऽङ्गीकृतानां 'ब्रह्मभूत. प्रसन्नात्मा न शोचति न काङ्क्षति । सम. सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥' ( भ. गी १८।१४ ) इति वाक्यात् ब्रह्मभावानन्तरमेव भगवद्भावसभवात्तेन पुरुषोत्तमे प्रवेशात्तत्र परम्परोपयोगो ब्रह्मभावस्येत्युभाभ्यां हेतुभ्या तथेत्यर्थ । वस्तुतस्तु पुरुषोत्तमप्राप्तिरेव मुक्तिरिति भाव. । वल्लभ. ३।३।३३

( ८ ) अत्रातम इत्यादिना प्रधानादिभ्यो जडेभ्यः कारणकार्यरूपेभ्योऽक्षरस्य व्यावृत्ति श्रूयते, अनशनेन जीवव्यावृत्तिरिति । न चेश्वरोऽप्यत्तीत्युक्त तत्कथ 'न तदश्नाति किंचन' इत्युपपद्यतामिति चेत् न, 'न लिप्यते लोकदु.खेन बाह्यः' इति श्रुत्यन्तरैकवाक्यतया जीवतुल्यस्य अभिमानगर्भमुख्यभोगस्यैवात्रापि प्रतिषेध्यत्वादिति । नन्विय व्यावृत्तिर्जीवेऽपि विवेकत उपपद्यत इति । मैव, विविक्तात्मन्येव भोगात्, अचक्षुष्कत्वादीना जीवेऽसभवाच्च, अत्र हि बहुव्रीहिसमासेन चक्षुरादिमनोन्तःकरणशून्यत्वमेवावगम्यते न तु तद्भिन्नत्व, असङ्गशब्दसाहचर्यात् कप्रत्ययवैयर्थ्याच्च, तच्च करणशून्यत्व विविक्तजीवानामपि नास्ति ।

१।३।१२

'अक्षरधिया त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्' — अक्षर कूटनित्यस्थ निर्गुण चिन्मात्रं ब्रह्म 'एतद्वै तदक्षर गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वन्ह्रस्वम्' इति । 'अथ परा यथा तदक्षरमधिगम्यते यत्तदद्रेश्यम्' ( मुउ १।५,६ ) इति च श्रुते· । 'अक्षर परम ब्रह्म' इत्यादि स्मृतेश्च । प्रधाने च परिणामिनित्ये धर्मरूपेण क्षयिण्यक्षरशब्दस्यापेक्षिकत्वात् तस्याक्षरस्य धी. 'नेति नेति' इति 'अस्थूलमनणु' इत्यादितत्त्वज्ञानरूपा, तद्गता पुसा फलमवरोध स्वज्ञानमहमर्थतत्त्वज्ञानमिति यावत् । कुतः । पुनर्ब्रह्मस्वरूपावधारणेनाहपदार्थतत्त्वज्ञानं स्यात्, तत्राह — सामान्यतद्भावाभ्यामिति । आत्मानौ हि व्यावहारिकपारमार्थिकभेदेन जीवेश्वरौ भवतस्तत्र व्यावहारिकात्मावबोधो ब्रह्मसमानत्वात्पारमार्थिकात्मतत्त्वावबोधकस्तु तदभावात् । पारमार्थिकात्मनोऽक्षरस्वरूपत्वादित्यर्थ· । तदेतदात्मद्वयतत्त्वज्ञान जीवस्य साक्षान्मोक्षहेतुस्तत्टस्थविविक्तब्रह्मज्ञानस्य दृष्ट फलमुक्तम् । अदृष्ट तु प्रतिबन्धनिवृत्तिरूप पश्चाद्वक्ष्यति । सामान्यतद्भावयोर्दृष्टान्तमाह — औपसदवदिति । उपसत् परिषत् महाराजामात्यवर्गस्य, यथा महाराजेन सह सामान्य तुल्य वेषा-

दिकं महाराजात्मत्व च करचरणादिवत्तत्करणत्वात् तथै वेत्यर्थः । ननु जीवानां ब्रह्मसाम्यतदात्मकत्वयो. किं प्रमाण तत्राह –– तदुक्तमिति । उदाहरिष्यमाणश्रुतिभिरित्यर्थः । अवरोध इति पाठे तु अक्षरधिया सामान्यतद्भावाभ्या फलाभ्यामवरोध. सबन्ध इत्यर्थ । सामान्यतद्भावाभ्या च तयोर्ज्ञानमुपलक्ष्यत इति शेष समानम् । कुत्रोक्त तदाह सूत्राभ्याम् ।

विज्ञान ३।३।३३

एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत । एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठत । एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतव सवत्सरा इति विधृतास्तिष्ठन्ति । एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्य स्यन्दन्ते श्वेतेभ्य. पर्वतेभ्यः प्रतीच्योऽन्या या या च दिशमनु । एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्या प्रशꣳसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ता ॥

( १ ) अनेकविशेषणप्रतिषेधप्रयासात् अस्तित्व तावदक्षरस्योपगमित श्रुत्या । तथापि लोकबुद्धिमपेक्ष्य आशङ्क्यते यतः, अतोऽस्तित्वाय अनुमान प्रमाणमुपन्यस्यति –– एतस्य वा अक्षरस्य । यदेतद्विगतमक्षर सर्वान्तर साक्षादपरोक्षाद्ब्रह्म, य आत्मा अशनायादिधर्मातीतः, एतस्य वा अक्षरस्य प्रशासने –– यथा राज्ञ. प्रशासने राज्यमस्फुटित नियत वर्तते, एवमेतस्याक्षरस्य प्रशासने––हे गार्गि सूर्याचन्द्रमसौ, सूर्यश्च चन्द्रमाश्च सूर्याचन्द्रमसौ अहोरात्रयोर्लोकप्रदीपौ, तादर्थ्येन प्रशासित्रा ताभ्या निर्वर्त्यमानलोकप्रयोजनविज्ञानवता निर्मितौ विधृतौ च, स्याताम् –– साधारणसर्वप्राणिप्रकाशोपकारकत्वात् लौकिकप्रदीपवत् । तस्मादस्ति तत्, येन विधृतौ ईश्वरौ स्वतन्त्रौ सन्तौ निर्मितौ तिष्ठत नियतदेशकालनिमित्तोदयास्तमयवृद्धिक्षयाभ्या वर्तेते । तदस्ति एवमेतयोः प्रशासितृ अक्षर, प्रदीपकर्तृविधारयितृवत् । एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ –– द्यौश्च पृथिवी च सावयवत्वात् स्फुटनस्वभावे अपि सत्यौ गुरुत्वात्पतनस्वभावे सयुक्तत्वाद्वियोगस्वभावे चेतनावदभिमानिदेवताधिष्ठितत्वात्स्वतन्त्रे अपि –– एतस्याक्षरस्य प्रशासने वर्तेते विधृते तिष्ठत । एतद्धि अक्षर सर्वव्यवस्थासेतु. सर्वमर्यादाविधरणम् । अतो नास्याक्षरस्य प्रशासन द्यावापृथिव्यावतिक्रामत' । तस्मात् सिद्धमस्यास्तित्वमक्षरस्य। अव्यभिचारि हि तल्लिङ्ग, यत् द्यावापृथिव्यौ नियते वर्तेते । चेतनावन्त प्रशासितारमससारिणमन्तरेण नैतद्युक्त, ' येन द्यौरुग्रा पृथिवी च दृढा ' इति मन्त्रवर्णात् । एतस्य वा अक्षरस्य प्रशासने गार्गि, निमेषा. मुहूर्ता इत्येते कालावयवाः सर्वस्यातीतानागतवर्तमानस्य जनिमतः कलयितारः–– यथा लोके प्रभुणा नियतो गणकः सर्वे आय व्यय च अप्रमत्तो गणयति, तथा प्रभुस्थानीय एषा कालावयवानां नियन्ता । तथा प्राच्य. प्रागञ्चना. पूर्वदिग्गमना. नद्य. स्यन्दन्ते स्रवन्ति, श्वेतेभ्य. हिमवदादिभ्य' पर्वतेभ्यः गिरिभ्य., गङ्गाद्या नद्य.–– ताश्च यथा प्रवर्तिता एव नियता. प्रवर्तन्ते, अन्यथाऽपि प्रवर्तितुमुत्सहन्त्य । तदेतल्लिङ्ग प्रशास्तुः । प्रतीच्योऽन्याः प्रतीचीं दिशमञ्चन्ति सिन्ध्वाद्या नद्यः । अन्याश्च या या दिशमनुप्रवृत्ताः, तां ता न व्यभिचरन्ति । तच्च लिङ्गम् । किंच ददतः हिरण्यादीन्प्रयच्छतः आत्मपीडा कुर्वतोऽपि प्रमाणज्ञा अपि

( १ ) बृउ ३।८।९, शब्रा १४।६।८।९ सूर्याचन्द्रमसौ विधृतौ ( द्यावापृथिवी विधृते ) द्यावापृथिव्यौ विधृते ( सूर्याचन्द्रमसौ विधृतौ ) ( निमेषा मुहूर्ता ० ) ( इति० ) दिशमनु ( दिशम् ) ददतो ( ददत ) दर्वीं ( दर्व्यं ) , भशकर १।३।११,२।१।३०, २।२।३,३।४।८, भास्कर १।३।११,१६, २।२।३ , रग विधृते ( विधृतौ ) प्राच्योऽन्या ( प्राच्यो ), रामानुज १।३।१०,११,१५,४०, १।४।२३,२।४।१३,३।३।३३,३।४।८, ४।४।२०, निंबार्क १।३।११ एतस्य वा अक्ष (एतस्यैवाक्ष ) , १।३।१६ एतस्य वा अक्ष (एतस्य वाऽक्ष) , प्रमध्व १।३।११,१६, २।२।३ स्यन्दन्ते + (याश्च) , श्रीकठ १।३।१० एतस्य वा अक्ष (तस्यैवाक्ष) , श्रीकर १।३।११,१६,२।४।१२, ३।३।३३,३।४।८,४।४।२० , वल्लभ १।३।११,४।४।१६ द्यावापृथिव्यौ (द्यावापृथिवी) , विज्ञान १।३।११,१६, ३।२।१३,३।३।३९, बलदेव १।३।११

मनुष्या प्रशसन्ति । तत्र यच्च दीयते, ये च ददति, ये च प्रतिगृह्णन्ति, तेषामिहैव समागमो विलयश्च अन्वक्षो दृश्यते । अदृष्टस्तु पर समागम' । तथापि मनुष्या ददतां दानफलेन सयोग पश्यन्त प्रमाणज्ञतया प्रशसन्ति । तच्च, कर्मफलेन सयोजयितरि कर्तु — कर्मफलविभागज्ञे प्रशास्तरि असति, न स्यात्, दानक्रियायाः प्रत्यक्षविनाशित्वात् । तस्मादस्ति दानकर्तॄणा फलेन सयोजयिता । अपूर्वमिति चेत्, न, तत्सद्भावे प्रमाणानुपपत्ते । प्रशास्तुरपीति चेत् । न, आगमतात्पर्यस्य सिद्धत्वात् । अवोचाम हि आगमस्य वस्तुपरत्वम् । किंचान्यत् — अपूर्वकल्पनाया च अर्थापत्ते. क्षय, अन्यथैवोपपत्ते, सेवाफलस्य सेव्यात्प्राप्तिदर्शनात् । सेवायाश्च क्रियात्वात् तत्सामान्याच्च यागदानहोमादीना सेव्यात् ईश्वरादे फलप्राप्तिरुपपद्यते । दृष्टक्रियाधर्मसामर्थ्यमपरित्यज्यैव फलप्राप्तिकल्पनोपपत्तौ दृष्टक्रियाधर्मसामर्थ्यपरित्यागो न न्याय्यः । कल्पनाधिक्याच्च — ईश्वरः कल्प्य, अपूर्वं वा । तत्र क्रियायाश्च स्वभावः सेव्यात्फलप्राप्तिः दृष्टा, न त्वपूर्वात् । न च अपूर्वं दृष्ट, तत्र अपूर्वमदृष्ट कल्पयितव्य, तस्य च फलदातृत्वे सामर्थ्ये, सामर्थ्ये च सति दान चाभ्यधिकमिति । इह तु ईश्वरस्य सेव्यस्य सद्भावमात्र कल्प्य, न तु फलदानसामर्थ्यं दातृत्व च, सेव्यात्फलप्राप्तिदर्शनात् । अनुमान च दर्शितम् — 'द्यावापृथिव्यौ विधृते तिष्ठत ' इत्यादि । तथा च यजमान देवा ईश्वराः सन्तो जीवनार्थेऽनुगताः चरुपुरोडाशाद्युपजीवनप्रयोजनेन, अन्यथापि जीवितुमुत्सहन्त. कृपणां दीना वृत्तिमाश्रित्य स्थिताः — तच्च प्रशास्तुः प्रशासनात्स्यात् । तथा पितरोऽपि तदर्थं, दर्वीं दर्वीहोम अन्वायत्ता अनुगता इत्यर्थः, समान सर्वमन्यत् । शकर.

( २ ) तदेतदव्यक्त क्वचिदाकाशशब्दनिर्दिष्टम् 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' ( बृउ ३।८।११ ) इति श्रुते. ।

* ब्रशकर १।४।३

* बृउ ३।८।८ ( पृ ११६०–६१ ) इत्यत्रापि ब्रशकर रामानुज च द्रष्टव्यम् ।

'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्य स्यन्दन्ते ' इत्येवजातीयक समस्तस्य लोकपरिस्पन्दितस्येश्वराधिष्ठितत्वं श्रावयति ।

ब्रशकर २।२।३

( ३ ) प्रकृष्ट शासन क्वचिदप्यप्रतिहतत्वमेव शासनस्य प्रकर्ष । ततश्च सर्वविषयक शासनमिति फलति । एतस्येति । एतस्य वा अक्षरस्य प्रशासने निमित्ते ददतस्तदाज्ञया दान कुर्वत आज्ञाकैङ्कर्यबुद्ध्या दान कुर्वतो जनानन्वायत्ता अनुवशाः सन्तो मनुष्या. प्रशसन्ति । प्रशासन इत्येतद्यजमान देवा दर्वीं पितर इत्यत्रापि सबध्यते । अन्वायत्ता इति पद देवमनुष्यपितृसाधारणम् । द्वितीयान्तपदाना प्रशसन्तीत्यनेनान्वयः । परमात्माज्ञया याग कुर्वाणमन्वायत्ता सन्तो देवाः प्रशसन्ति । परमात्माज्ञया प्रवृत्त दर्वीं होममन्वायत्ताः सन्तः पितर. प्रशसन्ति । एवमेव व्याख्यात व्यासार्यैः ।

‡ रग.

* [1]यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति । यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपण । अथ य एतदक्षर गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मण ॥

( १ ) इतश्चास्ति तदक्षर, यस्मात् तदज्ञाने नियता ससारोपपत्तिः । भवितव्य तु तेन, यद्विज्ञानात् तद्विच्छेद , न्यायोपपत्तेः । ननु क्रियात एव तद्विच्छित्तिः स्यादिति चेत्, न — यो वा एतदक्षर हे गार्गि अविदित्वा अविज्ञाय अस्मिन् लोके जुहोति यजते तपस्तप्यते

‡ शेष शकरवत् ।

* रामानुज बृउ ३।८।८ (पृ ११६१) इत्यत्र द्रष्टव्यम् ।

( १ ) बृउ ३।८।१०, शब्रा १४।६।८।१० यो वा कृपण ( यो वा एतदक्षरमविदित्वा गार्ग्यस्मिँल्लोके जुहोति ददाति तपस्यत्यपि बहूनि वर्षसहस्राण्यन्तवानेवास्य स लोको भवति । यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात्प्रैति स कृपण ) , रग तद्भवति (तद्भवतीति) अथ य (अथ यो वा), रामानुज. १।१।१ (पृ ४), १।३।११ , वल्लभ १।३।१२ दक्षर गार्ग्यविदित्वा ( दक्षरमविदित्वा गार्ग्य )

यद्यपि बहूनि वर्षसहस्राणि, अन्तवदेवास्य तत्फल भवति, तत्फलोपभोगान्ते क्षीयन्त एवास्य कर्माणि। अपि च यद्विज्ञानात्कार्पण्यात्ययः ससारविच्छेदः, यद्विज्ञानाभावाच्च कर्मकृत् कृपणः कृतफलस्यैवोपभोक्ता जननमरणप्रबन्धारूढः ससरति — तदस्ति अक्षर प्रशासितृ। तदेतदुच्यते — यो वा एतदक्षर गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपण., पणक्रीत इव दासादि॰। अथ य एतदक्षर गार्गि विदित्वा अस्माल्लोकात्प्रैति स ब्राह्मण॰।

शकर

( २ ) ब्रह्मज्ञानमन्तरेण क्रियमाण होमयज्ञबहुकाल तपआदिक सर्वं नश्वरफलसाधन भवति तज्ज्ञानमन्तरेण लोकान्तरगतस्यापि शोच्यता भवति। तदज्ञानात्ससारो भवतीति यावत्। ब्राह्मणः ब्रह्मविद्ब्रह्मानुभविता मुक्त इति यावत्।

रग

* तद्वा एतदक्षरं गार्ग्यदृष्ट द्रष्टृश्रुत श्रोत्रमतं मन्त्रविज्ञात विज्ञातृ। नान्यदतोऽस्ति द्रष्टृ। नान्यदतोऽस्ति श्रोतृ। नान्यदतोऽस्ति मन्तृ। नान्यदतोऽस्ति विज्ञातृ। एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति॥

( १ ) अग्नेर्दहनप्रकाशकत्ववत् स्वाभाविकमस्य प्रशास्तृत्व अचेतनस्यैवेत्यत आह — तद्वा एतदक्षर गार्गि अदृष्ट, न केनचिद्दृष्ट, अविषयत्वात् स्वय तु द्रष्टृ दृष्टिस्वरूपत्वात्। तथा अश्रुत श्रोत्राविषयत्वात्, स्वय श्रोतृ श्रुतिस्वरूपत्वात्। तथा अमत मनसोऽविषयत्वात्, स्वय मन्तृ मतिस्वरूपत्वात्। तथा अविज्ञात बुद्धेरविषयत्वात्, स्वय विज्ञातृ विज्ञानस्वरूपत्वात्। किंच नान्यत् अतः अस्मादक्षरात् अस्ति — नास्ति किंचिद्द्रष्टृ दर्शनक्रियाकर्तृ। एतदेवाक्षर दर्शनक्रियाकर्तृ सर्वत्र। तथा नान्यदतोऽस्ति श्रोतृ। तदेवाक्षर श्रोतृ सर्वत्र। नान्यदतोऽस्ति मन्तृ। तदेवाक्षर मन्तृ सर्वत्र सर्वमनोद्वारेण। नान्यदतोऽस्ति विज्ञातृ विज्ञानक्रियाकर्तृ, तदेवाक्षर सर्वबुद्धिद्वारेण विज्ञानक्रियाकर्तृ, नाचेतनं प्रधान अन्यद्वा। एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति। यदेव साक्षादपरोक्षाद्ब्रह्म, य आत्मा सर्वान्तर. अशनायादिससारधर्मातीत, यस्मिन्नाकाश ओतश्च प्रोतश्च — एषा परा काष्ठा, एषा परा गति॰, एतत्पर ब्रह्म, एतत्पृथिव्यादेराकाशान्तस्य सत्यस्य सत्यम्।

शकर.

( २ ) अयोगिभिरदृश्य द्रष्टृ रूपादिसाक्षात्कर्तृ श्रोतृ शब्दसाक्षात्कर्तृ मन्तृ मन्तव्यसाक्षात्कर्तृ विज्ञातृ अध्यवसेयसाक्षात्कर्तृ। नान्यदिति। अन्तर्यामिब्राह्मणव्याख्यानोक्तरीत्याऽत्रापि अन्यशब्दस्य तत्सदृशपरत्वमेव। यथा चोल एव भूपतिर्नान्य इत्युक्तेस्तत्सदृशभूपतिनिषेधपरत्वमेवमिहाप्यदृष्टत्वादिविशेषितनिरुपाधिकद्रष्टृत्वाश्रयस्य परमात्मनः सदृश किमपि नास्तीत्यर्थः। यद्वा यथैतदक्षरमन्यैरदृष्ट मत्स्वव्यतिरिक्तसमस्ताधारभूतमेवमनेनाक्षरेणादृष्टमेतस्याक्षरस्याऽऽधारभूतमेतस्य द्रष्टृ नास्तीत्यर्थः। पूर्वव्याख्याया समनिषेधोऽस्या व्याख्यायामधिकनिषेध॰ फलति।

रग.

( ३ ) 'द्यावापृथिव्यौ श्रीभूमी केशौ सूर्यविधू मतौ। दीप्तेः पृथुत्वाज्ज्ञानाच्च तथाल्हादविधेरपि। तदाधारो हरिर्नित्य स्वातन्त्र्येण प्रशासकः। आधारत्व श्रियो यच्च तच्च विष्णोः प्रशासनात्। तद्वशाच्च स्वतन्त्रत्वं स स्वतन्त्रो हरिः सदा॥' इति महामीमांसायाम्।

मध्व.

( ४ ) 'ईक्षतिकर्मव्यपदेशात्सः' — तदैक्षतेतीक्षतिकर्मव्यपदेशात्स एव विष्णुरत्रोच्यते। 'नान्योऽतोऽस्ति द्रष्टा नान्यदतोऽस्ति द्रष्टृ' इत्यादिना तस्यैव हि तल्लक्षणम्।

ब्रमध्व. १।३।१३

* ब्रशकर रामानुज वल्लभ विज्ञान बृउ ३।७।२३ (पृ ११५४–५६), बृउ ३।८।८ इत्यत्र द्रष्टव्यम्।

( १ ) बृउ ३।८।११, शब्रा. १४।६।८।११ दतोऽस्ति ( दस्ति ) एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ( एतद्वै तदक्षर गार्गि यस्मिन्नाकाश), ब्रशकर. १।३।१०,१२, १।४।३,२२,२।३।१०,३।४।८,४।१।२, भास्कर १।३।१२, रामानुज १।३।११, निंबार्क १।३।१२, ब्रमध्व १।३।१०,१३,१६,२।४।११ एतस्मिन्नु ख (एतस्मिन्ख), श्रीकठ. १।३।९,११ ब्रमध्ववत्; श्रीकर. १।३।१०,१२, १।४।३, विज्ञान १।३।१२, २।१।१४, ३।३।३९, बलदेव १।३।१२.

**सा होवाच । ब्राह्मणा भगवन्तस्तदेव बहु मन्येध्वं यदस्मान्नमस्कारेण मुच्येध्वम् । न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति । ततो ह वाचक्नव्युपरराम ॥**

( १ ) सा होवाच — हे ब्राह्मणा भगवन्त शृणुत मदीयं वचः । तदेव बहु मन्येध्वम् । किं तत् ? यदस्मात् याज्ञवल्क्यात् नमस्कारेण मुच्येध्वम् — अस्मै नमस्कारं कृत्वा, तदेव बहु मन्यध्वमित्यर्थः । जयस्त्वस्य मनसापि नाशंसनीयः, किमुत कार्यतः । कस्मात् ? न वै युष्माकं मध्ये जातु कदाचिदपि इमं याज्ञवल्क्यं ब्रह्मोद्यं प्रति जेता । प्रश्नौ चेन्मह्यं वक्ष्यति, न वै जेता भविता — इति पूर्वमेव मया प्रतिज्ञातम् । अद्यापि ममायमेव निश्चय — ब्रह्मोद्यं प्रति एतत्तुल्यो न कश्चिद्विद्यत इति । ततो ह वाचक्नव्युपरराम ।

अत्र अन्तर्यामिब्राह्मणे एतदुक्तम् — यं पृथिवी न वेद, यं सर्वाणि भूतानि न विदुरिति च, यमन्तर्यामिणं न विदुः, ये च न विदुः, यच्च तदक्षरं दर्शनादिक्रियाकर्तृत्वेन सर्वेषां चेतनाधातुरित्युक्तम् । कस्तु एषां विशेषः, किं वा सामान्यमिति । तत्र केचिदाचक्षते — परस्य महासमुद्रस्थानीयस्य ब्रह्मणः अक्षरस्य अप्रचलितस्वरूपस्य ईषत्प्रचलितावस्था अन्तर्यामी । अत्यन्तप्रचलितावस्था क्षेत्रज्ञः, यः तं न वेद अन्तर्यामिणम् । तथा अन्याः पञ्चावस्थाः परिकल्पयन्ति । तथा अष्टावस्था ब्रह्मणो भवन्तीति वदन्ति । अन्ये अक्षरस्य शक्तय एता इति वदन्ति, अनन्तशक्तिमदक्षरमिति च । अन्ये तु अक्षरस्य विकारा इति वदन्ति । अवस्थाशक्ती तावन्नोपपद्येते, अक्षरस्य अशनायादिसंसारधर्मातीतत्वश्रुतेः । न हि अशनायाद्यतीतत्वं अशनायादिधर्मवदवस्थावत्त्वं च एकस्य युगपदुपपद्यते । तथा शक्तिमत्त्वं च । विकारावयवत्वे च दोषाः प्रदर्शिताश्चतुर्थे । तस्मात् एता असत्याः सर्वाः कल्पनाः । कस्तर्हि भेद एषाम् ? उपाधिकृत इति ब्रूमः । न स्वतः एषां भेदः अभेदो वा, सैन्धवघनवत् प्रज्ञानघनैकरसस्वाभाव्यात्, 'अपूर्वमनपरमनन्तरमबाह्यम्' 'अयमात्मा ब्रह्म' इति च श्रुतेः — 'सबाह्याभ्यन्तरो ह्यजः' इति च आथर्वणे । तस्मात् निरुपाधिकस्य आत्मनो निरुपाख्यत्वात् निर्विशेषत्वात् एकत्वाच्च 'नेति नेति' इति व्यपदेशो भवति । अविद्याकामकर्मविशिष्टकार्यकरणोपाधिः आत्मा संसारी जीव उच्यते । नित्यनिरतिशयज्ञानशक्त्युपाधिः आत्मा अन्तर्यामी ईश्वर उच्यते । स एव निरुपाधिः केवलः शुद्धः स्वेन स्वभावेन अक्षरं परं उच्यते । तथा हिरण्यगर्भाव्याकृतदेवताजातिपिण्डमनुष्यतिर्यक्प्रेतादिकार्यकरणोपाधिभिर्विशिष्टः तदाख्यः तद्रूपो भवति । तथा 'तदेजति तन्नैजति' इति व्याख्यातम् । तथा 'एष त आत्मा' 'एष सर्वभूतान्तरात्मा' 'एष सर्वेषु भूतेषु गूढः' 'तत्त्वमसि' 'अहमेवेदं सर्वम्' 'आत्मैवेदं सर्वम्' 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतयो न विरुध्यन्ते । कल्पनान्तरेषु एता श्रुतयो न गच्छन्ति । तस्मात् उपाधिभेदेनैव एषां भेदः, नान्यथा, 'एकमेवाद्वितीयम्' इत्यवधारणात्सर्वोपनिषत्सु । * शंकर.

( २ ) 'न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसंभवा । न योगित्वादीश्वरत्वात्सत्यरूपाच्युतो विभुः ॥' इति वाराहे । 'आदित्यवर्णं तमसस्तु पारे' इत्यादेश्च 'न सत्तन्नासदुच्यते' 'अदुःखमसुखं समम्' 'न प्रज्ञं नाप्रज्ञम्' इत्यादि च । मध्व.

( शाकल्यप्रश्नः )

देवसंख्यानं एकदेवमात्रपर्यवसितम्

**अथ हैनं विदग्धः शाकल्यः पप्रच्छ । कति देवा याज्ञवल्क्येति । स हैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते । त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति । ओमिति होवाच । कत्येव देवा याज्ञवल्क्येति । त्रयस्त्रिꣳशदिति । ओमिति होवाच । कत्येव देवा याज्ञवल्क्येति । षडिति । ओमिति होवाच । कत्येव देवा याज्ञवल्क्येति । त्रय इति । ओमिति होवाच । कत्येव**

---

( १ ) बृउ ३।८।१२, शब्रा १४।६।८।१२ मन्येध्व ( मन्यध्व ) मुच्येध्वम् ( मुच्याध्वै ), मध्व मन्येध्व ( मन्यध्व ) मुच्येध्वम् ( मुच्यध्वम् )

* रंग शंकरवत् ।

(१) बृउ ३।९।१, शब्रा १४।६।९।१, २, ब्रशंकर. १।३।२७, भास्कर १।३।२७, १।३।३३, २।१।१४; रंग कतमे+ ( च ), श्रीकर १।३।२७

**देवा याज्ञवल्क्येति । द्वाविति । ओमिति होवाच । कत्येव देवा याज्ञवल्क्येति । अध्यर्ध इति । ओमिति होवाच । कत्येव देवा याज्ञवल्क्येति । एक इति । ओमिति होवाच । कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥**

( १ ) अथ हैन विदग्धः शाकल्य पप्रच्छ । पृथिव्यादीनां सूक्ष्मतारतम्यक्रमेण पूर्वस्य पूर्वस्य उत्तरस्मिन्नुत्तरस्मिन् ओतप्रोतभाव कथयन् सर्वान्तर ब्रह्म प्रकाशितवान् । तस्य च——ब्रह्मणो व्याकृतविषये सूत्रभेदेषु नियन्तृत्वमुक्तम् —— व्याकृतविषये व्यक्तर लिङ्गमिति । तस्यैव ब्रह्मण साक्षादपरोक्षत्वे नियन्तव्यदेवताभेदसकोच विकासद्वारेणाधिगन्तव्ये इति तदर्थं शाकल्यब्राह्मण मारभ्यते । अथ हैन विदग्ध इति नामतः, शकलस्यापत्य शाकल्यः, पप्रच्छ —— कतिसख्याका देवाः हे याज्ञवल्क्येति । स याज्ञवल्क्यः, ह किल, एतयैव वक्ष्यमाणया निविदा प्रतिपेदे सख्या, या सख्यां पृष्टवान् शाकल्य. । यावन्त याव सख्याका देवाः वैश्वदेवस्य शस्त्रस्य निविदि —— निविन्नाम देवतासख्यावाचकानि मन्त्रपदानि कानिचिद्वैश्वदेवे शस्त्रे शस्यन्ते, तानि निवित्सज्ञकानि । तस्या निविदि यावन्तो देवाः श्रूयन्ते, तावन्तो देवा इति । का पुनः सा निविदिति तानि निवित्पदानि प्रदर्श्यन्ते——त्रयश्च त्री च शता——त्रयश्च देवाः, देवाना त्री च त्रीणि च शतानि । पुनरप्येव त्रयश्च, त्री च सहस्रा सहस्राणि ——एतावन्तो देवा इति । शाकल्योऽपि ओमिति होवाच । एवमेषां मध्यमा सख्या सम्यक्तया ज्ञाता । पुनस्तेषामेव देवाना सकोचविषयां सख्या, पृच्छति ——कत्येव देवा याज्ञवल्क्येति । त्रयस्त्रिंशत्, षट्, त्रयः, द्वौ, अध्यर्धः, एक. —— इति । देवतासकोचविकासविषया सख्या पृष्ट्वा पुन सख्येयस्वरूप पृच्छति —— कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति । शाकर

( २ ) ' विरोध. कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ' —— स्यादेतद्यदि विग्रहवत्त्वाद्यभ्युपगमेन देवादीना विद्यास्वधिकारो वर्ण्येत । विग्रहवत्त्वाद्धृत्विगादिवदिन्द्रादीनामपि स्वरूपसनिधानेन कर्माङ्गभावोऽभ्युपगम्येत । तदा च विरोधः कर्मणि स्यात् । न हीन्द्रादीना स्वरूपसनिधानेन यागेऽङ्गभावो दृश्यते । न च सभवति । बहुषु यागेषु युगपदेकस्येन्द्रस्य स्वरूपसनिधानतानुपपत्तेरिति चेत् । नायमस्ति विरोधः । कस्मात् —— अनेकप्रतिपत्तेः । एकस्यापि देवतात्मनो युगपदनेकस्वरूपप्रतिपत्तिः सभवति । कथमेतदवगम्यते—दर्शनात् । तथा हि —— ' कति देवा. ' इत्युपक्रम्य ' त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा ' इति निरुच्य ' कतमे ते ' इत्यस्या पृच्छाया ' महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवाः ' इति ब्रुवति श्रुतिरेकैकस्य देवतात्मनो युगपदनेकरूपतां दर्शयति । तथा त्रयस्त्रिंशतोऽपि षडाद्यन्तर्भावक्रमेण ' कतम एको देवः ' इति ' प्राणः ' इति प्राणैकरूपता देवानां दर्शयन्ती तस्यैवैकस्य प्राणस्य युगपदनेकरूपता दर्शयति ।

* ब्रशकर.

( ३ ) विदग्धः समर्थमन्य इति यावत् । उक्तमङ्गीकरोति —— ओमिति होवाच । विदग्ध इति शेष. । रग.

**सं होवाच । महिमान एवैषामेते । त्रयस्त्रिꣳशत्त्वेव देवा इति । कतमे ते त्रयस्त्रिꣳशदिति । अष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिꣳशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिꣳशाविति ॥**

( १ ) स होवाच इतरः —— महिमान. विभूतय., एषा त्रयस्त्रिंशतः देवाना, एते त्रयश्च त्री च शतेत्यादयः । परमार्थतस्तु त्रयस्त्रिंशत्त्वेव देवा इति । कतमे ते त्रयस्त्रिंशदित्युच्यते —— अष्टौ वसवः, एकादश रुद्राः, द्वादश आदित्या ——ते एकत्रिंशत् —— इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति त्रयस्त्रिंशतः पूरणौ । शाकर.

( २ ) महिमान एवगुणभूता इत्यर्थ । रग.

( ३ ) ' ये येऽवरा. सुरास्ते तु परेषा महिमात्मकाः । महीत्युक्त हि माहात्म्य महिमानो हि तन्मिता. । एव हि महिमाशब्दस्तद्वशत्व वदत्ययम् । यत्र माहात्म्यवाची

* भास्कर श्रीकर ब्रशाकरवत् ।

(१) बृउ ३।९।२, शब्रा. १४।६।९।३, ब्रशाकर १।३।२७, भास्कर १।३।३३ ( अष्टौ वसव एकादश रुद्रा द्वादशादित्या प्रजापतिश्च वषट्कारश्चेति ), २।१।१४, श्रीकर १।३।२७

स्यान्महत्त्व महिमा तदा । त्रयस्त्रिंशत्सुराणां हि परिवारास्ततः परे । षण्णामेते त्रयाणा ते ते द्वयोः साधिकस्य तौ । एकस्य सोऽपि क्रमतः पराधीनस्वरूपिण । पराधीनबलाश्चैव पराधीनप्रवृत्तयः । एक एव स्वतन्त्रोऽसौ भगवान्पुरुषोत्तम ॥ '

मध्व

**कतमे वसव इति । अग्निश्च पृथिवी च वायुश्चान्तरिक्ष चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव । एतेषु हीद॑ सर्व॑ हितमिति तस्माद्वसव इति ॥**

( १ ) कतमे वसव इति तेषां स्वरूप प्रत्येक पृच्छ्यते । अग्निश्च पृथिवी चेति — अग्न्याद्या नक्षत्रान्ता एते वसव.— प्राणिना कर्मफलाश्रयत्वेन कार्यकरणसघातरूपेण तन्निवासत्वेन च विपरिणमन्त. जग दिद सर्वं वासयन्ति वसन्ति च । ते यस्माद्वासयन्ति तस्माद्वसव इति । शकर

( २ ) यस्मादग्न्यादिषु सर्वं वसुशब्दवाच्य धन हितमिति तस्माद्वसव इत्युच्यन्त इत्यर्थ ।

रग

( ३ ) ' अग्र विष्णु नयेद्यस्मात्सुपर्णोऽग्निरुदाहृत । प्रथित हरिमादाय वातीति प्रथिवः स्मृतः । तद्भार्या पृथिवी नाम यत्तदिच्छानुसारिणी । सर्वज्ञत्वात्तथायुष्ट्वात्सूत्रात्मा वायुरुच्यते । श्रद्धा नामैव तत्पत्नी सर्वस्यान्तर्निरीक्षणात् । अन्तरिक्षमिति प्रोक्ता देवेभ्योऽधिकवीक्षणात् । आदिकालस्थितो यस्मादादित्यश्च सदाशिव । द्यौरुमा च समुद्दिष्टा वाग्रूपा द्योतिका यतः । त एते सर्व देवेभ्यो विशिष्टास्तद्वशाः परे । नक्षत्रमिन्द्र उद्दिष्टश्चन्द्रः काम उदाहृतः । अत्राणात्सूर्यचन्द्राद्यैराह्लादाच्चैव हेतुत. । वासयन्ति जगद्यस्मादेतेऽष्टौ वसवः स्मृता. । ज्ञानादिषड्गुणाः षट्सु तदन्येभ्योऽधिका यतः । वसुष्वपि त एवोक्ता वीन्द्राद्याः पूर्वकीर्तिताः ॥ '

मध्व.

**कतमे रुद्रा इति । दशेमे पुरुषे प्राणा आत्मैकादशः । ते यदाऽस्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति । तद्यद्रोदयन्ति तस्माद्रुद्रा इति ॥**

( १ ) कतमे रुद्रा इति । दश इमे पुरुषे, कर्मबुद्धीन्द्रियाणि प्राणा , आत्मा मन. एकादश. — एकादशाना पूरण. । ते एते प्राणा. यदा अस्माच्छरीरात् मर्त्यात् प्राणिना कर्मफलोपभोगक्षये उत्क्रामन्ति — अथ तदा रोदयन्ति तत्सबन्धिनः । तत् तत्र यस्माद्रोदयन्ति ते सबन्धिन , तस्मात् रुद्रा इति ।

शकर.

( २ ) आत्मशब्देन चात्रान्तःकरण परिगृह्यते, करणाधिकारात् । नन्वेकादशत्वादप्यधिके द्वादशत्रयोदशत्वे उदाहृते । सत्यमुदाहृते । न त्वेकादशभ्यः कार्यजातेभ्योऽधिक कार्यजातमस्ति यदर्थमधिक करण कल्प्येत ।

* ब्रशाकर २।४।६

( ३ ) दशमे दशेमे इत्यर्थः । रग.

( ४ ) ' प्राणाद्या वायुपुत्रास्तु दशबुद्ध्यभिमानवान् । बृहस्पतिरिति ह्येते रुद्रा इत्येव कीर्तिताः ॥ '

मध्व.

**कतम आदित्या इति । द्वादश वै मासा सवत्सरस्यैत आदित्या । एते हीद॑ सर्वमाददाना यन्ति । ते यदिद॑ सर्वमाददाना यन्ति तस्मादादित्या इति ॥**

( १ ) कतम आदित्या इति । द्वादश वै मासाः संवत्सरस्य कालस्य अवयवाः प्रसिद्धाः, एते आदित्याः । कथम् ? एते हि यस्मात् पुनः पुनः परिवर्तमानाः प्राणिनामायूषि कर्मफल च आददानाः गृह्णन्तः

---

(१) **बृउ** ३।९।३; **शब्रा** १४।६।९।४ सर्व॑ हितमिति तस्माद्वसव इति ( सर्वं वसु हितम् । एते हीद॑ सर्वं वासयन्ते । तद्यदिद॑ सर्वं वासयन्ते तस्माद्वसव इति ), **रंग** हीद॑ ( हीद वसु ), **मध्व** रगवत्.

* भास्कर रामानुज निंबार्क श्रीकठ श्रीकर वल्लभ ब्रशाकरवत् ।

(१) **बृउ** ३।९।४, **शब्रा** १४।६।९।५ स्माच्छरीरान्मर्त्यादु ( स्मान्मर्त्याच्छरीरादु ), **ब्रशाकर** २।४।५, ६, **भास्कर** २।४।१६, १७, **रग** दशेमे ( दशमे ), **रामानुज** २।४।५, **निंबार्क** २।४।६, **श्रीकठ** २।४।५, **श्रीकर** २।४।४, **वल्लभ** २।४।५ दशेमे पुरुषे ( दश वै पशो ) **विज्ञान** २।४।५, ६, **बलदेव** २।४।५

(२) **बृउ** ३।९।५, **शब्रा** १४।६।९।६ ( **वै०** ) ते यदिद॑ ( तद्यदिद॑ )

उपाददत यन्ति गच्छन्ति—ते यत् यस्मात् एव इद सर्वमाददाना यन्ति, तस्मादादित्या इति । शकर

( २ ) 'मासाभिमानिनो ये तु यमचन्द्रयुता द्विषट् । धात्रर्यमाद्या आदित्या इन्द्राविष्णू विनैव तु ॥' मध्व.

**कतम इन्द्र कतम' प्रजापतिरिति । स्तनयित्नु रेवेन्द्रो यज्ञ प्रजापतिरिति । कतम स्तनयित्नु- रिति । अशनिरिति । कतमो यज्ञ इति । पशव इति ॥**

(१) कतम इन्द्रः कतम. प्रजापतिरिति, स्तनयित्नुरेवेन्द्रो यज्ञ प्रजापतिरिति, कतम. स्तनयित्नुरित्यशनिरिति । अशनिः वज्र वीर्यं बल, यत् प्राणिन' प्रमापयति, स इन्द्र. । इन्द्रस्य हि तत् कर्म । कतमो यज्ञ इति पशव इति—यज्ञस्य हि साधनानि पशव । यज्ञस्यारूपत्वात् पशुसाधनाश्रयत्वाच्च पशवो यज्ञ इत्युच्यते ।

शकर

( २ ) 'स्तनयित्नोरभीमानी वायुजस्त्विन्द्र उच्यते। स एव वज्र इन्द्रस्य सोऽशनिश्चाशनादरे । यज्ञो नामेन्द्र पुत्रो यो जयन्त इति चोच्यते । स एव पशुमानित्वात्पशवश्चेतिं कथ्यते । एव प्राधान्यतो देवास्त्रयस्त्रिंशत्प्रकीर्तिता' । दक्षाग्निप्रमुखा' सर्वे प्राणा एव हि वायुजा' । रुद्रा अपि तदावेशात् पृथङ्नोदीरिता इह । काम एवानुविष्टत्वादनिरुद्धश्च नोदित' । मन्वावेशादिन्द्रजस्तु सख्यायामनुवेशित । अश्विनौ निर्ऋतिश्चैव कुबेरश्च विनायकः । अर्यम्ण्यशादिचतुर्षु विशेषावेशसयुता ॥' अत्रोक्ता अपि पृथिव्याद्या अन्तर्यामिब्राह्मणे भवन्ति । 'षट्सु प्रधानास्तिस्रो हि वायुवीन्द्रमहेश्वरा । स्वभार्याणा स्वाश्रयत्वात्ते लोका ज्ञानरूपत । पदैक्याद्ब्रह्मवाय्वोस्तु पदसाम्याच्छिवस्य च । शेषस्यापि तु नैवोक्ति पृथक्— ॥' मध्व

**कतमे षडिति । अग्निश्च पृथिवी च वायुश्चान्तरिक्ष चाऽऽदित्यश्च द्यौश्चैते षट् । एते हीद५ सर्व५ षडिति ॥**

कतमे षडिति । त एव अग्न्यादयो वसुत्वेन पठिताः चन्द्रमस नक्षत्राणि च वर्जयित्वा षड्भवन्ति —षट्सख्याविशिष्टा. । एते हि यस्मात्, त्रयस्त्रिंशदादि यदुक्त इद सर्वं, एत एव षड्भवन्ति । सर्वो हि वस्वादिविस्तर एतेष्वेव षट्सु अन्तर्भवतीत्यर्थ. । शकर.

**कतमे ते त्रयो देवा इति । इम एव त्रयो लोका । एषु हीमे सर्वे देवा इति । कतमौ तौ द्वौ देवाविति । अन्न चैव प्राणश्चेति । कतमोऽध्यर्ध इति । योऽय पवत इति ॥**

( १ ) कतमे ते त्रयो देवा इति । इम एव त्रयो लोका इति—पृथिवीमग्निं च एकीकृत्य एको देवः, अन्तरिक्ष वायु च एकीकृत्य द्वितीय , दिवमादित्य च एकीकृत्य तृतीय'—ते एव त्रयो देवा इति । एषु, हि यस्मात् , त्रिषु देवेषु सर्वे देवा अन्तर्भवन्ति, तेन एत एव देवास्त्रय —इत्येष नैरुक्ताना केषांचित्पक्ष । कतमौ तौ द्वौ देवाविति—अन्न चैव प्राणश्च एतौ द्वौ देवौ । अनयोः सर्वेषामुक्तानामन्तर्भावः । कतमोऽध्यर्ध इति — योऽय पवते वायुः । शकर.

( २ ) सर्वदेवाश्रयत्वात्त्रय एव लोका देवा इत्यर्थ । रग.

( ३ ) 'श्रद्धा च मारुत. । द्वौ देवाविह सप्रोक्तावन्न श्रद्धा प्रकीर्तिता । अतीतत्वाद्देवताभ्यो नेतृत्वाच्चान्न- मुच्यते । श्रद्धेति वायोः पत्नी सा—॥' मध्व

**तदाहुर्यदयमेक इवैव पवते । अथ कथमध्यर्ध इति । यदस्मिन्निद५ सर्वमध्यार्ध्नोत्तेनाध्यर्ध इति । कतम एको देव इति । प्राण इति । स ब्रह्म त्यदित्याचक्षते ॥**

( १ ) तत् तत्र आहुः चोदयन्ति—यदय वायुः एक इवैव एक एव पवते । अथ कथमध्यर्ध इति । यत् अस्मिन् इद सर्वमध्याध्नोत्—अस्मिन्वायौ सति इद सर्वमध्याध्नोत्—आधि ऋद्धि प्राप्नोति—तेनाध्यर्ध इति । कतम एको देव इति, प्राण इति । स प्राणो

(१) बृउ. ३।९।६, शब्रा १४।६।९।७

(२) बृउ ३।९।७, शब्रा १४।६।९।८ षट् ( षडिति ) हीद९ ( हीवेद९ ), मध्व एते ही ( एतेषु ही )

(१) बृउ. ३।९।८, शब्रा १४।६।९।९ ( तै० )

(२) बृउ ३।९।९, शब्रा १४।६।९।१० इवैव ( एव ) ( प्राण इति० ), अशकर १।४।१६, रग. यदस्मि ( यस्मि ), श्रीकर १।४।१६.

ब्रह्म––सर्वदेवात्मकत्वान्महद्ब्रह्म, तेन स ब्रह्म त्यदित्याच क्षते––त्यदिति तद्ब्रह्माचक्षते परोक्षाभिधायकेन शब्देन। देवानामेतत् एकत्व नानात्व च––अनन्ताना देवाना निवित्सख्याविशिष्टेष्वन्तर्भाव । तेषामपि त्रयस्त्रिंशदादिषूत्तरोत्तरेषु यावदेकस्मिन्प्राणे। प्राणस्यैव चैकस्य सर्वः अनन्तसख्यातो विस्तर । एवमेकश्च अनन्तश्च अवान्तरसख्याविशिष्टश्च प्राण एव। तत्र च देवस्यैकस्य नामरूपकर्मगुणशक्तिभेदः अधिकारभेदात्। शकर

( २ ) ननु प्राण. पवमानपर्यायः स चाध्यर्ध इति कथमुक्त इत्यत्राऽऽह— स ब्रह्म त्यदित्याचक्षते। प्राणशब्देन तु ब्रह्मैवोच्यत इत्यर्थ । ततश्च ब्रह्मणो महिमान सर्वे देवा इति पर्यवसितोऽर्थ.। रग

( ३ ) 'प्राणो वै विष्णुरुत्तम । णेत्येवानन्द उद्दिष्ट आसमन्तात्प्रकृष्टत ।प्राणो हि भगवान्विष्णुरध्यर्धो वायु रुच्यते। अध्यर्धा हि गुणा नित्य वायोरध्यर्ध एव तत्। न चैकत्व भवेद्वायोस्तद्विशिष्टो यतो हरि' । न च द्वितीयता तस्मिन्प्रीतिरभ्यधिका हरेः। तेनाध्यर्धगुणो यस्मात्सर्वस्माद्देवतागणात्। न चाशक्य न चाप्राप्यमतोऽध्यर्ध इतीरितः। अत्यन्तरङ्ग यत्तस्मान्न हरे पृथगीरिता। श्री' स्वरूपविभेदेऽपि सर्वोत्कृष्टाऽपि नित्यशः । तस्या अपि परो विष्णुर्गुणैः सर्वैरदोषवान् । एक इत्युच्यते नित्य यस्मान्नान्यस्तथाविध । तत्परो वा गुणोद्रेके ब्रह्मासौ गुणपूर्तित ।तथात्वे न यतो नित्यमविकारेण याति हि। त्यदित्युक्तस्ततो विष्णु' सर्वदेवेश्वरेश्वर ॥' इति महामीमासायाम्। मध्व.

मनोज्योतिष्का शारीरकाममयादित्यस्थश्रौत्रच्छायामयादर्शस्थाप्स्थपुत्रमयपुरुषा आयतनलोकदेवताविशेषः सहिता

**पृथिव्येव यस्याऽऽयतनमग्निर्लोको मनोज्योतिर्यो वै त पुरुष विद्यात्सर्वस्याऽऽत्मन परायणꣳ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अह तं पुरुषꣳ सर्वस्याऽऽत्मनः परायण यमात्थ । य एवायꣳ शारीर पुरुषः स एष । वदैव शाकल्य तस्य का देवतेति । अमृतमिति होवाच ॥**

( १ ) इदानीं तस्यैव प्राणस्य ब्रह्मणः पुनरष्टधा भेद उपदिश्यते — पृथिव्येव यस्य देवस्य आयतन आश्रय । अग्निर्लोको यस्य — लोकयत्यनेनेति लोकः, पश्यतीति — अग्निना पश्यतीत्यर्थः । मनोज्योति.— मनसा ज्योतिषा सकल्पविकल्पादिकार्यं करोति यः सोऽय मनोज्योति । पृथिवीशरीर अग्निदर्शन. मनसा सकल्पयिता पृथिव्यभिमानी कार्यकरणसघातवान्देव इत्यर्थः। य एव विशिष्ट वै त पुरुष विद्यात् विजानीयात्, सर्वस्य आत्मन आध्यात्मिकस्य कार्यकरणसघातस्य आत्मन' परमयन पर आश्रय. त परायणम्—मातृजेन त्वङ्मांसरुधिररूपेण क्षेत्रस्थानीयेन बीजस्थानीयस्य पितृजस्य अस्थिमज्जाशुक्ररूपस्य पर अयन, करणात्मनश्च— स वै वेदिता स्यात् । य एतदेव वेत्ति स वै वेदिता पण्डित स्यादित्यभिप्राय । याज्ञवल्क्य त्व तम जानन्नेव पण्डिताभिमानीत्यभिप्राय. । यदि तद्विज्ञाने पाडित्य लभ्यते, वेद वै अह त पुरुषम् — सर्वस्य आत्मन. परायण यमात्थ य कथयसि –– तमह वेद। तत्र शाकल्यस्य वचन द्रष्टव्यम् — यदि त्वं वेत्थ त पुरुष, ब्रूहि किंविशेषणोऽसौ। शृणु, यद्विशेषणः स.––य एवाय शारीर — पार्थिवांशे शरीरे भवः शारीरः मातृजकोशत्रयरूप इत्यर्थः। स एष देवः, यस्त्वया पृष्ट., हे शाकल्य। किंतु अस्ति तत्र वक्तव्य विशेषणान्तरम् । तत् वदैव पृच्छैवेत्यर्थ', हे शाकल्य। स एव प्रक्षोभितोऽमर्षवशग आह, तोत्रार्दित इव गजः–– तस्य देवस्य शारीरस्य का देवता –– यस्मान्निष्पद्यते, यः' सा तस्य देवता ' इत्यस्मिन्प्रकरणे विवक्षित । अमृतमिति होवाच –– अमृतमिति यो भुक्तस्यान्नस्य रसः मातृजस्य लोहितस्य निष्पत्तिहेतु. । तस्माद्धि अन्नरसाल्लोहितं निष्पद्यते स्त्रियां श्रितम्। ततश्च लोहितमय शरीर बीजाश्रयम्। समानमन्यत्। शकर.

( २ ) आयतनमाधार शरीरमिति यावत्। लोक्यतेऽनेनेति लोको दर्शनसाधनमित्यर्थः। अग्निना पश्यति। मनोज्योति.। मन एव ज्योति. सकल्पविकल्पादिकार्यकारि यस्य स मनोज्योति. । पृथिव्यायतनकत्वेनाग्निदर्श-

(१) बृउ ३।९।१०, शब्रा १४।६।९।११ अग्निर्लोको ( चक्षुर्लोको ) अमृतमिति ( स्त्रिय इति ), ब्रशाकर १।२।१८, श्रीकर १।२।१८

नकत्वेन मनसा सकल्पयितृत्वेन ध्यातव्य इति प्रश्नस्य फलितार्थः। ईदृश. परमात्मा पृथिव्यायतनत्वादिना ज्ञातव्य इति यो ज्ञाता स एव ज्ञाता याज्ञवल्क्य नान्य इत्यर्थः। एवमुक्तो याज्ञवल्क्य आह -- वेद वा अहमिति। वैशब्द एवार्थे.। अह सर्वस्याऽऽत्मनः परायण पृथिव्याद्यायतनत्वादिनोपास्य य त्व वदसि तमह जानाम्येव। कोऽसावित्यत्राऽऽह -- य एवाय शारीर. पुरुष इति। शारीरो जीवस्तदन्तर्यामीति यावत्। यद्वा शारीरो जगच्छरीरक.। ततश्च जगच्छरीरकत्वविशिष्ट. सर्वात्मपरायणभूतः पुरुषशब्दित. परमात्मा पृथिव्यायतनत्वादिना ध्यातव्य.। एव तस्योत्तरमुक्त्वास्मिन्विषये ज्ञेय विशेषणान्तर स्वय पृच्छति -- वदैवेति। तस्य पृथिव्यायतनत्ववेदितुरुपास्या देवता का किंसज्ञादिविशिष्टा ध्यातव्येत्यर्थ.। उत्तरमाह -- अमृतमिति होवाच। अमृतमितिसज्ञादिविशिष्टा ध्यातव्येत्यर्थः। 'स त आत्माऽन्तर्याम्यमृतः' इत्यन्तर्यामिणो वेदनादिति द्रष्टव्यम्। यद्वा वदैव शाकल्य वदैव पृच्छैव यत्प्रष्टव्य तत्सर्वे पृच्छेत्यर्थः। तस्य का देवतेति शाकल्यप्रश्न.। एवमुत्तरत्रापि द्रष्टव्यम्।

रग

काम[1] एव यस्याऽऽयतन५ हृदयं लोको मनोज्योतिर्यो वै तं पुरुष विद्यात्सर्वस्याऽऽत्मन. परायण५ स वै वेदिता स्यात्। याज्ञवल्क्य वेद वा अह त पुरुष५ सर्वस्याऽऽत्मन परायण यमात्थ। य एवायं काममय पुरुष स एष.। वदैव शाकल्य तस्य का देवतेति। स्त्रिय इति होवाच॥

(१) काम एव यस्यायतनम्। स्त्रीव्यतिकराभिलाषः काम कामशरीर इत्यर्थ.। हृदय लोक, हृदयेन बुद्ध्या पश्यति। य एवाय काममय. पुरुष' अध्यात्ममपि काममय एव, तस्य का देवतेति -- स्त्रिय इति होवाच। स्त्रीतो हि कामस्य दीप्तिर्जायते।

शकर.

(२) स्त्रीशरीरकतया ध्यातव्येत्यर्थः। रग.

(१) बृउ ३।९।११, शब्रा १४।६।९।१४ हृदय लोको (चक्षुर्लोको) य एवाय काममय (य एवासौ चन्द्रे) स्त्रिय (मन)

रूपाण्येव[1] यस्याऽऽयतन चक्षुर्लोको मनोज्योतिर्यो वै त पुरुष विद्यात्सर्वस्याऽऽत्मन. परायण५ स वै वेदिता स्यात्। याज्ञवल्क्य वेद वा अह त पुरुष५ सर्वस्याऽऽत्मन. परायण यमात्थ। य एवासावादित्ये पुरुष स एष। वदैव शाकल्य तस्य का देवतेति। सत्यमिति होवाच॥

(१) रूपाण्येव यस्यायतनम्। रूपाणि शुक्लकृष्णादीनि। य एवासावादित्ये पुरुष --सर्वेषा हि रूपाणां विशिष्ट कार्यमादित्ये पुरुष., तस्य का देवतेति -- सत्यमिति होवाच। सत्यमिति चक्षुरुच्यते। चक्षुषो हि अध्यात्मत आदित्यस्याधिदैवतस्य निष्पत्ति।

शकर.

(२) 'तद्यत्तत्सत्यमसौ स आदित्यो य एष एव तस्मिन्मण्डले पुरुषः' इति श्रुतेरिति भावः। रग.

आकाश[2] एव यस्याऽऽयतन५ श्रोत्र लोको मनोज्योतिर्यो वै तं पुरुष विद्यात्सर्वस्याऽऽत्मन परायण५ स वै वेदिता स्यात्। याज्ञवल्क्य वेद वा अह तं पुरुष५ सर्वस्याऽऽत्मन परायण यमात्थ। य एवाय५ श्रौत्र प्रातिश्रुत्क पुरुष स एष। वदैव शाकल्य तस्य का देवतेति। दिश इति होवाच॥

(१) आकाश एव यस्यायतनम्। य एवाय श्रोत्रे भवः श्रौत्रः, तत्रापि प्रतिश्रवणवेलाया विशेषतो भवतीति प्रातिश्रुत्कः, तस्य का देवतेति -- दिश इति होवाच। दिग्भ्यो ह्यसौ आध्यात्मिको निष्पद्यते।

शकर.

(२) श्रौत्र श्रोत्रानुभूयमानः। प्रातिश्रुत्कः प्रतिध्वनिविशिष्टः पुरुषः। श्रोत्रानुभूयमानत्व च परमात्मनः प्रतिध्वनिद्वारा द्रष्टव्यम्। रग.

तम[3] एव यस्याऽऽयतन५ हृदयं लोको मनोज्योतिर्यो वै त पुरुष विद्यात्सर्वस्याऽऽत्मन.

(१) बृउ ३।९।१२, शब्रा १४।६।९।१२ सत्यमिति (चक्षुरिति)

(२) बृउ ३।९।१३, शब्रा १४।६।९।१३ श्रोत्र लोको (चक्षुर्लोको) श्रौत्र प्रातिश्रुत्क (वायौ) दिश (प्राण)

(३) बृउ ३।९।१४, शब्रा १४।६।९।१६ हृदय लोको (चक्षुर्लोको)

परायण॑ स वै वेदिता स्यात्। याज्ञवल्क्य वेद वा अहं त पुरुष॑ सर्वस्याऽऽत्मन परायण यमात्थ। य एवायं छायामय पुरुष स एष। वदैव शाकल्य तस्य का देवतेति। मृत्युरिति होवाच ॥

( १ ) तम एव यस्यायतनम्। तम इति शार्वराद्यन्धकारः परिगृह्यते। अध्यात्म छायामय· अज्ञानमय. पुरुष.। तस्य का देवतेति — मृत्युरिति होवाच। मृत्युरधिदैवत तस्य निष्पत्तिकारणम्। शकर

( २ ) बालाक्यजातशत्रुसवादे 'छायापुरुषे मृत्युरिति वा अहमेतमुपासे' इति दर्शनादिति भावः। रग

रूपाण्येव यस्याऽऽयतन चक्षुर्लोको मनोज्योतिर्यो वै त पुरुप विद्यात्सर्वस्याऽऽत्मन परायण॑ स वै वेदिता स्यात्। याज्ञवल्क्य वेद वा अह त पुरुष॑ सर्वस्याऽऽत्मन परायण यमात्थ। य एवायमादर्शे पुरुष· स एप। वदैव शाकल्य तस्य का देवतेति। असुरिति होवाच ॥

( १ ) रूपाण्येव यस्यायतनम्। पूर्वं साधारणानि रूपाण्युक्तानि, इह तु प्रकाशकानि विशिष्टानि रूपाणि गृह्यन्ते। रूपायतनस्य देवस्य विशेषायतन प्रतिबिम्बाधारमादर्शादि। तस्य का देवतेति — असुरिति होवाच। तस्य प्रतिबिम्बाख्यस्य पुरुषस्य निष्पत्ति. असो. प्राणात्। शकर

( २ ) पूर्वमादित्यपुरुषे रूपसामान्यमुक्तमिह तु तद्विशेष इति भिदा।

बालाकिब्राह्मणे प्रातिश्रुत्कपुरुषेऽसुत्वमुक्तमिह त्वादर्शपुरुषेऽसुत्व तत्राऽऽदर्शपुरुषे रोचिष्णुत्वमुक्त विधाभेदसभवादिति द्रष्टव्यम्। इयांस्तु विशेष.— बालाकिब्राह्मणे ब्रह्मलिङ्गत्वाभावात्तत्रत्यपुरुषशब्दो न ब्रह्मपर्यन्त इह तु सर्वात्मपरायणत्वादिरूपब्रह्मलिङ्गाद्ब्रह्मपर्यन्त इति विवेकः। केचित्तु बालाकिब्राह्मण इव पुरुषशब्दानां ब्रह्मपर्यन्तत्वमपि नाभ्युपगच्छन्ति ( इति ) उभयथाऽपि न विरोध·। रग

(१) बृउ ३।९।१५, शब्रा १४।६।९।१५ रूपाण्येव ( तेज एव ) य एवाय .. . . होवाच ( य एवायमग्नौ पुरुष स एष वदैव शाकल्य तस्य का देवतेति वागिति होवाच )

आप एव यस्याऽऽयतन॑ हृदय लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्याऽऽत्मन· परायण॑ स वै वेदिता स्यात्। याज्ञवल्क्य वेद वा अहं त पुरुष॑ सर्वस्याऽऽत्मन परायण यमात्थ। य एवायमप्सु पुरुष. स एषः। वदैव शाकल्य तस्य का देवतेति। वरुण इति होवाच ॥

आप एव यस्य आयतनम्। साधारणाः सर्वा आप आयतनम्। वापीकूपतडागाद्याश्रयासु अप्सु विशेषावस्थानम्। तस्य का देवतेति, वरुण इति — वरुणात् सघातकर्त्रः अध्यात्म आप एव वाप्याद्यपा निष्पत्तिकारणम्। शकर.

रेत एव यस्याऽऽयतन॑ हृदय लोको मनोज्योतिर्यो वै तं पुरुष विद्यात्सर्वस्याऽऽत्मन. परायण॑ स वै वेदिता स्यात्। याज्ञवल्क्य वेद वा अह त पुरुप॑ सर्वस्याऽऽत्मनः परायण यमात्थ। य एवाय पुत्रमय· पुरुपः स एष। वदैव शाकल्य तस्य का देवतेति। प्रजापतिरिति होवाच ॥

( १ ) रेत एव यस्यायतनम्। य एवाय पुत्रमयः विशेषायतन रेतआयतनस्य — पुत्रमय इति च अस्थिमज्जाशुक्राणि पितुर्जातानि, तस्य का देवतेति, प्रजापतिरिति होवाच — प्रजापतिः पितोच्यते, पितृतो हि पुत्रस्योत्पत्तिः। शकर.

( २ ) उक्ताष्टपुरुषेषु मनोज्योतिष्ट्व सर्वत्रानुगतम्। आयतनाना लोकानां धर्माणां च भेदः। रग.

( ३ ) 'शारीरो मनुरुद्दिष्टः काम· प्रद्युम्न उच्यते। आदित्यस्थस्तथा रुद्रः श्रौत्रश्चन्द्र उदाहृतः। छायामयस्तु निर्ऋतिरादर्शे सूर्य एव च। पर्जन्यस्त्वप्सु पुरुषः शक्र· पुत्राभिमानवान्। अमृत वायुरुद्दिष्ट. स्त्रियः श्रीर्गौरुमा तथा। सत्य ब्रह्मा समुद्दिष्टो गरुत्मच्छेषका दिशः। आदेशनाद्दिशः प्रोक्ता मृत्युर्यम उदाहृतः। अन्तर्गतेन रूपेण वायुरेव त्वसुः स्मृतः। पालकेन स्वरू-

(१) बृउ ३।९।१६; शब्रा १४।६।९।१७ हृदय लोको ( चक्षुर्लोको ).

(२) बृउ ३।९।१७, शब्रा १४।६।९।१८ हृदयं लोको ( चक्षुर्लोको )

पेण ब्रह्मैवात्र प्रजापतिः। प्रकाशस्त्वान्तरो ज्योतिर्लोको बाह्य इतीर्यते। मनःस्थिता मनोनाम्नी बोधरूपत्वतो रमा। सैवाग्निस्थाऽदनान्नित्यमग्निरित्येव गीयते। हृदय बुद्धिसंस्था सा त्वयन हृदि यत्तत। चक्षु सा दृष्टिहेतुत्वादष्टाना लोक एव सा॥' इति च। बुद्धिवृत्त्यपेक्षया बहिःप्रकाशहेतुत्वमपि देव्या न विरुध्यते। इम एव त्रयो लोका इति पूर्वोक्ताना देवानामनुक्तौ कथ लोकमात्रे सर्वदेवानामन्तर्भाव। उक्ताङ्गीकारेऽनन्तर्भाव· कथम्। कथ चाग्न्यादिषु। न चावासमात्रमत्र विवक्षितम्। प्रतिशरीरमपि सर्वदेवानामावासान्न लोकादीना विशेष। सामर्थ्याधिक्य चात्र विवक्षितम्। एतेषु हीद सर्व षडिति। यदस्मिन्निद सर्व अप्यार्गोत्। स ब्रह्म त्यदित्याचक्षते। महिमान एवैषामित्यादिषु षड्गुणोद्रेकादीनामुक्ते अन्तर्भावस्य च महिमकारणकत्वोक्तः। इद सर्वं गुणषट्क पूर्णं गुणषट्कमित्यर्थ। इन्द्रादौ विवक्षितत्वादय भगवानितिवत्। एवमेवेद सर्वम याप्नोदिति च। गुणाधिक्येन तदधीनत्वे विवक्षिते निवासत्वादिकमन्तर्भवति। उत्तमानामधिकत्वान्न्यादे। न तु निवासत्वादौ गुणाधिक्यादिकम्। कथ च तन्महिमत्वेनान्तर्भावमुक्त्वा निवासत्वमात्रेणान्तर्भाव उच्यते। कथ चान्यथा कामादीना प्रसिद्धमहिमाना स्त्रीमात्रादिक एव तोच्येत। प्रसिद्ध चैतत्। आत्मा देवानां भुवनस्य गर्भ। आत्मा ते वात। इन्द्रो वै देवानामोजिष्ठ। ब्रह्मा देवाना प्रथम. सबभूव। अय वाव शिशुर्योऽय मध्यम प्राण। तमेता· सप्ताक्षितय उपतिष्ठन्ते। तथा इमा अक्षँल्लोहिन्यो राजयस्ताभिरेन रुद्रोऽन्वायत्तो यच्छुक्र तेनेन्द्र·। अश्वमेध. क्रतुश्रेष्ठो ज्योति श्रेष्ठो दिवाकर। ब्राह्मणो द्विपदा श्रेष्ठो देवश्रेष्ठश्च मारुत। वायुर्भीमो भीमनादो महौजा सर्वेषा च प्राणिना प्राणभूत। अनावृत्तिर्देहिना देहपाते तस्माद्वायुर्देवदेवो विशिष्ट। क्रतु सचन्त मारुतस्य वेधसः। वायोरात्मान कवयो निचिक्यु। आत्मत एष प्राणो जायते। यो वायौ तिष्ठन्। देवाना देवता वायुर्वायोर्देवो जनार्दन। स प्राणमसृजत। प्राणाच्छ्रद्धाम्। एतस्माज्जायते प्राणः। 'रुद्र समाश्रिता देवा रुद्रो ब्रह्माणमाश्रित.। ब्रह्मा मामाश्रितो नित्य नाह कच्चिदुपाश्रित.॥' इत्यादिषु सर्वत्र। 'श्रिय. प्रसाद सकुशेशये शय श्रित. सचिन्त्य· प्रशशस शौरिम्॥' इत्यादि च। मध्व

**शाकल्येति होवाच याज्ञवल्क्य। त्वाऽस्विदिमे ब्राह्मणा अङ्गारावक्षयणमक्रता३ इति॥**

(१) अष्टधा देवलोकपुरुषभेदेन त्रिधा त्रिधा आत्मान प्रविभज्य अवस्थित एकैको देव प्राणभेद एव उपासनार्थं व्यपदिष्ट। अधुना दिग्विभागेन पञ्चधा प्रविभक्तस्य आत्मन्युपसहारार्थं आह। तूष्णींभूत शाकल्य याज्ञवल्क्यो ग्रहेणेव आवेशयन्नाह — शाकल्येति होवाच याज्ञवल्क्य। त्वा स्विदिति वितर्के, इमे नून ब्राह्मणा, अङ्गारावक्षयणम् — अङ्गारा अवक्षीयन्ते यस्मिन् सदशादौ तत् अङ्गारावक्षयणम् — तत् नून त्वा अक्रत कृतवन्त ब्राह्मणा, त्व तु तन्न बुद्ध्यसे आत्मान मया दह्यमानमित्यभिप्राय। शाकर

(२) इमे नून ब्राह्मणा स्वय भीता सन्तोऽङ्गारावक्षयणमङ्गारा अवक्षीयन्ते गृह्यन्ते येन पात्रेण तदङ्गारावक्षयण त नून त्वा कृतवन्तो ब्राह्मणा। रग.

सदेवा दिश सप्रतिष्ठिता, हृदयस्य सप्राणस्य
आत्मा प्रतिष्ठा, औपनिषद पुरुष

**याज्ञवल्क्येति होवाच शाकल्य। यदिदं कुरुपञ्चालाना ब्राह्मणानत्यवादी. कि ब्रह्म विद्वानिति। दिशो वेद सदेवा सप्रतिष्ठा इति। यद्दिशो वेत्थ सदेवा सप्रतिष्ठा॥**

(१) याज्ञवल्क्येति होवाच शाकल्य·— यदिद कुरुपञ्चालाना ब्राह्मणान् अत्यवादी. अत्युक्तवानसि — स्वय भीतास्त्वामङ्गारावक्षयण कृतवन्त इति — किं ब्रह्म विद्वान् सन् एवमधिक्षिपसि ब्राह्मणान्। याज्ञवल्क्य आह — ब्रह्मविज्ञान तावदिद मम। किं तत्? दिशो वेद दिग्विषय विज्ञान जाने। तच्च न केवल दिश एव, सदेवा. देवै. सह दिगधिष्ठातृभि, किंच सप्रतिष्ठाः प्रतिष्ठाभिश्च सह। इतर आह — यत् यदि दिशो

---

(१) बृउ ३।९।१८, शब्रा १४।६।९।१९, रग मक्रता३ (मृक्रता३), मध्व रगवत्

(२) बृउ ३।९।१९, शब्रा १४।६।९।२०

वेत्थ सदेवा सप्रतिष्ठा इति, सफल यदि विज्ञान त्वया प्रतिज्ञातम् । * शकर

( २ ) दिशो वेद सदेवा सप्रतिष्ठा इति याज्ञवल्क्य इतिवचन सर्वप्रतिष्ठात्वेन ब्रह्मणोऽपि ज्ञान भवतीति किं ब्रह्म विद्वानित्यस्य चोत्तरम् ।

मध्व

**[1]किंदेवतोऽस्या प्राच्यां दिश्यसीति । आदित्यदेवत इति । स आदित्य कस्मिन्प्रतिष्ठित इति । चक्षुषीति । कस्मिन्नु चक्षु प्रतिष्ठितमिति । रूपेष्विति । चक्षुषा हि रूपाणि पश्यति । कस्मिन्नु रूपाणि प्रतिष्ठितानीति । हृदय इति होवाच । हृदयेन हि रूपाणि जानाति । हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीति । एवमेवैतद्याज्ञवल्क्य ॥**

( १ ) किंदेवत. का देवता अस्य तव दिग्भूतस्य । असौ हि याज्ञवल्क्यः हृदयमात्मान दिक्षु पञ्चधा विभक्त दिगात्मभूत, तद्द्वारेण सर्वं जगत् आत्मत्वेनोपगम्य, अहमस्मि दिगात्मेति व्यवस्थित , पूर्वाभिमुख — सप्रतिष्ठावचनात् । यथा याज्ञवल्क्यस्य प्रतिज्ञा तथैव पृच्छति — किंदेवतस्त्वमस्यां दिश्यसीति । सर्वत्र हि वेदे या या देवतामुपास्ते इहैव तद्भूत ता ता प्रतिपद्यत इति । तथा च वक्ष्यति — ' देवो भूत्वा देवानप्येति ' इति । अस्या प्राच्या का देवता दिगात्मनस्तव अधिष्ठात्री, कया देवतया त्व प्राची दिग्रूपेण सपन्न इत्यर्थ. । इतर आह — आदित्यदेवत इति । प्राच्या दिशि मम आदित्यो देवता, सोऽहमादित्यदेवतः । सदेवा इत्येतत् उक्त, सप्रतिष्ठा इति तु वक्तव्यमित्याह — स आदित्यः कस्मिन्प्रतिष्ठित इति, चक्षुषीति । अध्यात्मतश्चक्षुष आदित्यो निष्पन्न इति हि मन्त्रब्राह्मणवादाः— ' चक्षो सूर्यो अजायत ' ' चक्षुष आदित्यः ' इत्यादयः । कार्यं हि कारणे प्रतिष्ठित भवति । कस्मिन्नु चक्षु, प्रतिष्ठितमिति, रूपेष्विति । रूपग्रहणाय हि रूपात्मक चक्षु. रूपेण प्रयुक्तम् । यैर्हि रूपैः प्रयुक्त तैरात्मग्रहणाय आरब्ध चक्षुः । तस्मात् सादित्य चक्षुः सह प्राच्या दिशा सह तत्स्थैः सर्वैं रूपेषु प्रतिष्ठितम् । चक्षुषा सह प्राची दिक्सर्वा रूपभूता । तानि च कस्मिन्नु रूपाणि प्रतिष्ठितानीति । हृदय इति होवाच । हृदयारब्धानि रूपाणि । रूपाकारेण हि हृदय परिणतम् । यस्मात् हृदयेन हि रूपाणि सर्वो लोको जानाति । हृदयमिति बुद्धिमनसी एकीकृत्य निर्देशः । तस्मात् हृदये ह्येव रूपाणि प्रतिष्ठितानि । हृदयेन हि स्मरण भवति रूपाणा वासनात्मनाम् । तस्मात् हृदये रूपाणि प्रतिष्ठितानीत्यर्थः । एवमेवैतद्याज्ञवल्क्य । * शकर.

( २ ) यदि दिशो वेत्थ तर्हि किंदेवतोऽस्याम् । ' आदित्यस्याश्रयश्चक्षुर्नामा स्वायभुवो मनु' । चक्षुस्थो दृष्टिशक्तीशो रूपात्मेन्द्रस्तदाश्रयः । बुद्धितत्त्वात्मिकोमा च शक्रस्यापि समाश्रयः ॥ ' मध्व

**[1]किंदेवतोऽस्यां दक्षिणायां दिश्यसीति । यमदेवत इति । स यम' कस्मिन्प्रतिष्ठित इति । यज्ञ इति । कस्मिन्नु यज्ञ' प्रतिष्ठित इति । दक्षिणायामिति । कस्मिन्नु दक्षिणा प्रतिष्ठितेति । श्रद्धायामिति । यदा ह्येव श्रद्धत्तेऽथ दक्षिणा ददाति । श्रद्धायां ह्येव दक्षिणा प्रतिष्ठितेति । कस्मिन्नु श्रद्धा प्रतिष्ठितेति । हृदय इति होवाच । हृदयेन हि श्रद्धां जानाति । हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीति । एवमेवैतद्याज्ञवल्क्य ॥**

( १ ) किंदेवतोऽस्या दक्षिणाया दिश्यसीति पूर्ववत् — दक्षिणायां दिशि का देवता तव । यमदेवत इति— यमो देवता मम दक्षिणादिग्भूतस्य । स यमः कस्मिन्प्रतिष्ठित इति, यज्ञ इति — यज्ञे कारणे प्रतिष्ठितो यमः सह दिशा । कथ पुनर्यज्ञस्य कार्यं यम इत्युच्यते — ऋत्विग्भिर्निष्पादितो यज्ञ. । दक्षिणया यजमानस्तेभ्यो यज्ञ निष्क्रीय तेन यज्ञेन दक्षिणा दिश सह यमेनाभिजयति । तेन यज्ञे यमः कार्यत्वात्प्रतिष्ठितः

* रग शकरवद्भाव ।

(१) बृउ ३।९।२०, शब्रा १४।६।९।२१ ष्ठितमिति ( ष्ठित भवतीति ) ष्ठितानीति ( ष्ठितानि भवन्तीति ) ( होवाच० )

* रग शंकरवद्भाव ।

(१) बृउ ३।९।२१, शब्रा १४।६।९।२२ ( यज्ञ इति । कस्मिन्नु यज्ञ प्रतिष्ठित इति० ) ष्ठितेति ( ष्ठिता भवतीति ) ( होवाच० ) श्रद्धा जानाति ( श्रद्धत्ते )

सह दक्षिणया दिशा। कस्मिन्नु यज्ञ प्रतिष्ठित इति, दक्षिणायामिति — दक्षिणया स निष्क्रीयते । तेन दक्षिणाकार्यं यज्ञ । कस्मिन्नु दक्षिणा प्रतिष्ठितेति, श्रद्धायामिति — श्रद्धा नाम दित्सुत्व आस्तिक्यबुद्धिर्भक्तिसहिता। कथ तस्या प्रतिष्ठिता दक्षिणा ? यस्मात् यदा ह्येव श्रद्धत्ते अथ दक्षिणा ददाति, न अश्रद्दधत् दक्षिणा ददाति । तस्मात् श्रद्धाया ह्येव दक्षिणा प्रतिष्ठितेति । कस्मिन्नु श्रद्धा प्रतिष्ठितेति, हृदय इति होवाच — हृदयस्य हि वृत्ति श्रद्धा यस्मात्, हृदयेन हि श्रद्धा जानाति। वृत्तिश्च वृत्तिमति प्रतिष्ठिता भवति। तस्मात् हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीति। एवमेवैतद्याज्ञवल्क्य ।

शकर

(२) ‘एव यमस्याश्रयश्च यज्ञमान्यनिरुद्धक । दक्षिणामानिनी देवी रतिरेव तदाश्रय । श्रद्धारूप. सदा कामस्तस्या अपि समाश्रय । हृदयात्मिकयुमा तस्य कामस्यापि समाश्रय. ॥’

मध्व

‘**किंदेवतोऽस्या प्रतीच्या दिश्यसीति । वरुण देवत इति। स वरुण कस्मिन्प्रतिष्ठित इति । अप्स्विति। कस्मिन्न्वाप प्रतिष्ठिता इति। रेतसीति। कस्मिन्नु रेत. प्रतिष्ठितमिति । हृदय इति। तस्मादपि प्रतिरूपं जातमाहुर्हृदयादिव सृप्तो हृदयादिव निर्मित इति। हृदये ह्येव रेत. प्रतिष्ठितं भवतीति। एवमेवैतद्याज्ञवल्क्य ॥**

(१) किंदेवतोऽस्या प्रतीच्या दिश्यसीति। तस्या वरुणोऽधिदेवता मम । स वरुण कस्मिन्प्रतिष्ठित इति, अप्स्विति — अपां हि वरुण कार्यं, ‘श्रद्धा वा आपः’ ‘श्रद्धातो वरुणमसृजत’ इति श्रुतेः । कस्मिन्न्वापः प्रतिष्ठिता इति, रेतसीति — ‘रेतसो ह्याप. सृष्टाः इति श्रुतेः । कस्मिन्नु रेतः प्रतिष्ठितमिति, हृदय इति — यस्मात् हृदयस्य कार्यं रेतः। कामो हृदयस्य वृत्तिः। कामिनो हि हृदयात् रेतोऽधिस्कन्दति। तस्मादपि प्रतिरूप अनुरूप पुत्र जातमाहुर्लौकिकाः— अस्य पितुर्हृदयादिव अय पुत्र सृप्त विनिसृत, हृदयादिव निर्मितो यथा सुवर्णेन निर्मित कुण्डल. । तस्मात् हृदये ह्येव रेतः प्रतिष्ठित भवतीति। एवमेवैतद्याज्ञवल्क्य ।

शकर

(२) ‘अद्देवता सदा चन्द्रो वरुणस्य समाश्रयः। रेत आत्मा सुरगुरु सोमस्यापि समाश्रय. । तस्याप्युमैवाश्रय. स्यात्तस्यैव तु दिगीशितु. ॥’

मध्व.

‘**किंदेवतोऽस्यामुदीच्या दिश्यसीति । सोमदेवत इति। स सोम कस्मिन्प्रतिष्ठित इति। दीक्षायामिति। कस्मिन्नु दीक्षा प्रतिष्ठितेति । सत्य इति। तस्मादपि दीक्षितमाहु सत्य वदेति। सत्ये ह्येव दीक्षा प्रतिष्ठितेति। कस्मिन्नु सत्य प्रतिष्ठितमिति। हृदय इति होवाच । हृदयेन हि सत्य जानाति। हृदये ह्येव सत्य प्रतिष्ठित भवतीति। एवमेवैतद्याज्ञवल्क्य ॥**

(१) किंदेवतोऽस्यामुदीच्या दिश्यसीति, सोमदेवत इति — सोम इति लता सोम देवता चैकीकृत्य निर्देश । स सोम कस्मिन्प्रतिष्ठित इति, दीक्षायामिति — दीक्षितो हि यजमान सोम क्रीणाति। क्रीतेन सोमेन इष्ट्वा ज्ञानवानुत्तरां दिश प्रतिपद्यत सोमदेवताधिष्ठिता सौम्याम्। कस्मिन्नु दीक्षा प्रतिष्ठितेति, सत्य इति — कथम् ? यस्मात्सत्ये दीक्षा प्रतिष्ठिता, तस्मादपि दीक्षितमाहु — सत्य वदेति — कारणभ्रेषे कार्यभ्रेषो मा भूदिति। सत्ये ह्येव दीक्षा प्रतिष्ठितेति। कस्मिन्नु सत्य प्रतिष्ठितमिति। हृदय इति होवाच। हृदयेन हि सत्य जानाति । तस्मात् हृदये ह्येव सत्य प्रतिष्ठित भवतीति । एवमेवैतद्याज्ञवल्क्य ।

शकर.

(२) ‘सोमस्य दीक्षारूपा तु शतरूपा समाश्रय । तस्या सत्यात्मको देवो मनुरेव समाश्रय । तस्याप्युमैवाश्रय स्यात्सष्टृरूपस्य नित्यदा ॥’

मध्व.

(१) बृउ ३।९।२२, शबा १४।६।९।२३ ष्ठिता इति (ष्ठिता भवन्तीति) ष्ठितमिति (ष्ठित भवतीति)

(१) बृउ ३।९।२३, शबा १४।६।९।२४ ष्ठितेति (ष्ठिता भवतीति) ष्ठितमिति (ष्ठित भवतीति) (होवाच०)

[1]**किंदेवतोऽस्यां ध्रुवाया दिश्यसीति । अग्निदेवत इति । सोऽग्निः कस्मिन्प्रतिष्ठित इति । वाचीति । कस्मिन्नु वाक् प्रतिष्ठितेति । हृदय इति । कस्मिन्नु हृदयं प्रतिष्ठितमिति ॥**

(१) किंदेवतोऽस्यां ध्रुवाया दिश्यसीति । मेरोः समन्ततो वसतामव्यभिचारात् ऊर्ध्वा दिक् ध्रुवेत्युच्यते । अग्निदेवत इति — ऊर्ध्वाया हि प्रकाशभूयस्त्वं, प्रकाशश्च अग्निः सोऽग्निः कस्मिन्प्रतिष्ठित इति, वाचीति । कस्मिन्नु वाक्प्रतिष्ठितेति, हृदय इति । तत्र याज्ञवल्क्यः सर्वासु दिक्षु विप्रसृतेन हृदयेन सर्वा दिश आत्मत्वेनाभिसंपन्नः । सदेवाः सप्रतिष्ठा दिश आत्मभूतास्तस्य नामरूपकर्मात्मभूतस्य याज्ञवल्क्यस्य । यत् रूपं तत् प्राच्या दिशा सह हृदयभूतं याज्ञवल्क्यस्य । यत्केवलं कर्म पुत्रोत्पादनलक्षणं च ज्ञानसहितं च सह फलेन अधिष्ठात्रीभिश्च देवताभिः दक्षिणाप्रतीच्युदीच्यः कर्मफलात्मिकाः हृदयमेव आपन्नास्तस्य । ध्रुवया दिशा सह नाम सर्वं वाग्द्वारेण हृदयमेव आपन्नम् । एतावद्धीदं सर्वम् । यदुत रूपं वा कर्म वा नाम वेति तत्सर्वं हृदयमेव । तत् सर्वात्मकं हृदयं पृच्छयते — कस्मिन्नु हृदयं प्रतिष्ठितमिति । शंकर.

(२) 'मध्यदिक्स्वामिनोऽग्नेश्च स्वाधारो वाग्बृहस्पतिः । तस्याप्युमैव हृदयरूपा नित्यं समाश्रयः ॥' मध्व

[2]**अहल्लिकेति होवाच याज्ञवल्क्यः । यत्रैतदन्यत्रास्मन्मन्यासै यद्ध्येतदन्यत्रास्मत्स्याच्छ्वानो वैनदद्युर्वयांसि वैनद्विमथ्नीरन्निति ॥**

(१) अहल्लिकेति होवाच याज्ञवल्क्यः— नामान्तरेण संबोधनं कृतवान् । यत्र यस्मिन्काले, एतत् हृदयं आत्मा अस्य शरीरस्य अन्यत्र क्वचिद्देशान्तरे, अस्मत् अस्मत्तः, वर्तत इति मन्यासै मन्यसे — यद्धि यदि हि एतद्धृदयं अन्यत्रास्मत् स्यात् भवेत्, श्वानो वा एनत् शरीरं तदा अद्युः, वयांसि वा पक्षिणो वा एनत् विमथ्नीरन् विलोडयेयुः विकर्षेरन्निति । तस्मात् मयि शरीरे हृदयं प्रतिष्ठितमित्यर्थः । शरीरस्यापि नामरूपकर्मात्मकत्वात् हृदये प्रतिष्ठितत्वम् । शंकर.

(२) अहल्लिक इति शाकल्यस्य नामान्तरमिति केचित् । अहल्लिकः षण्ढः कोपादेव शाकल्यं ब्रूत इति केचित् । यदि अस्माच्छरीराद्धृदयमन्यत्र गच्छेत्तदेदं शरीरं श्वानो भक्षयेयुः पक्षिणो वा लोडयेयुः । रंग.

(३) 'तस्याः समाश्रयो रुद्रस्त्वमहं चेति रूपवान् । अहंकारात्मको नित्यमात्मोमा परिकीर्तिता । बुद्ध्यात्मनैवाततत्वाद्यस्यानाश्रयो हरः । तदा बोधात्मिका शक्तिर्नास्या देहाभिरक्षणे । अरक्षितान्मानुषादीन् श्वानो वाऽद्युर्वयांसि वा ॥' मध्व.

[3]**कस्मिन्नु त्वं चात्मा च प्रतिष्ठितौ स्थ इति । प्राण इति । कस्मिन्नु प्राणः प्रतिष्ठित इति । अपान इति । कस्मिन्न्वपानः प्रतिष्ठित इति । व्यान इति । कस्मिन्नु व्यानः प्रतिष्ठित इति । उदान इति । कस्मिन्नूदानः प्रतिष्ठित इति । समान इति । स एष नेति नेत्यात्मा । अगृह्यो न हि गृह्यते । अशीर्यो न हि शीर्यते । असङ्गो न हि सज्यते । असितो न व्यथते । न रिष्यति ।**

---

(१) बृउ ३।९।२४, शब्रा १४।६।९।२५ ष्ठितेति (ष्ठिता भवतीति । मनसीति । कस्मिन्नु मनः प्रतिष्ठितं भवतीति) ष्ठितमिति (ष्ठितं भवतीति)

(२) बृउ ३।९।२५, शब्रा १४।६।९।२६ यद्ध्येत (यत्रैत), मध्व न्यासै (न्यासे)

(३) बृउ ३।९।२६, शब्रा १४।६।९।२७, २८ असङ्गो न हि रिष्यति (असङ्गोऽसितो न सज्यते न व्यथत इति) (अष्टौ देवा० ) निरुह्य (न्युदुह्य) क्रामत् (क्रामीत्) न मेने शाकल्य (शाकल्यो न मेने) अपि हास्य न्मन्यमाना (तस्य ह्याप्यन्यन्मन्यमाना परिमोषिणोऽस्थीन्यपजह्रु), अशाकर १।१।४ (पृ ७५, ७७), १।३।२२, २।१।३, १४, २६, २७, ३१, ३।२।२३, ३।३।३९, ३।४।५२, ४।३।१४, भास्कर २।१।१४, ३।२।११, रंग सज्यते (सज्जते) विपति (व्यपति), रामानुज १।४।२२, ३।२।१५, ३।३।३९ अगृह्यो (अग्राह्यो) सज्यते (सज्जते) असितो (अव्यथितो), निंबार्क ३।४।८, मध्व निरुह्य प्रत्युह्य (निरूह्य प्रत्यूह्य),

**एतान्यष्टावायतनान्यष्टौ लोका अष्टौ देवा अष्टौ पुरुषा । स यस्तान्पुरुषान्निरुह्य प्रत्युह्यात्यक्रामत् । त त्वौपनिषद पुरुष पृच्छामि । त चेन्मे न विवक्ष्यसि मूर्धा ते विपतिष्यतीति । त२ ह न मेने शाकल्य । तस्य ह मूर्धा विपपात । अपि हास्य परिमोषिणोऽस्थीन्यपजह्रुर्‌न्यन्मन्यमाना ॥**

(१) हृदयशरीरयोरेवमन्योन्यप्रतिष्ठा उक्ता कार्यकरणयो. । अतस्त्वा पृच्छामि — कस्मिन्नु त्व च शरीर आत्मा च तव हृदय प्रतिष्ठितौ स्थ इति । प्राण इति । देहात्मानौ प्राणे प्रतिष्ठितौ स्याता प्राणवृत्तौ । कस्मिन्नु प्राण. प्रतिष्ठित इति, अपान इति — साऽपि प्राणवृत्ति प्रागेव प्रेयात्, अपानवृत्त्या चेन्न निगृह्येत । कस्मिन्न्वपान. प्रतिष्ठित इति, व्यान इति—साऽप्यपानवृत्ति. अध एव यायात् प्राणवृत्तिश्च प्रागेव, मध्यस्थया चेत् व्यानवृत्त्या न निगृह्येत । कस्मिन्नु व्यान॰ प्रतिष्ठित इति, उदान इति—सर्वास्तिस्रोऽपि वृत्तय उदाने कीलस्थानीये चेन्न निबद्धा, विष्वगेवेयु. । कस्मिन्नूदान. प्रतिष्ठित इति, समान इति — समानप्रतिष्ठा ह्येताः सर्वा. वृत्तय॰ । एतदुक्त भवति — शरीरहृदयवायवोऽन्योन्यप्रतिष्ठा. । सघातेन नियता वर्तन्ते विज्ञानमयार्थप्रयुक्ता इति । सर्वमेतत् येन नियत यस्मिन्प्रतिष्ठित आकाशान्त ओत च प्रोत च, तस्य निरुपाधिकस्य साक्षादपरोक्षाद्ब्रह्मणो निर्देशः कर्तव्य इत्ययमारम्भ । स एष.— स यो 'नेति नेति' इति निर्दिष्टो मधुकाण्डे एष स., सोऽयमात्मा अगृह्य. न गृह्यः । कथम् ? यस्मात्सर्वकार्यधर्मातीत॰, तस्मादगृह्य. । कुतः ? यस्मान्न हि गृह्यते । यद्धि करणगोचर व्याकृत वस्तु, तद्ग्रहणगोचरम् । इद तु तद्विपरीतमात्मतत्त्वम् । तथा अशीर्य —यद्धि मूर्त सहत शरीरादि तच्छीर्यते । अय तु तद्विपरीत । अतो न हि शीर्यते । तथा असङ्ग॰—मूर्तो मूर्तान्तरेण सबध्यमान. सज्यते । अय च तद्विपरीत । अतो न हि सज्यते । तथा असित अबद्ध — यद्धि मूर्त तत् बध्यते अय तु तद्विपरीतत्वात् असितः । अबद्धत्वान्न व्यथते । अतो न रिष्यति—ग्रहणविशरणसङ्गबन्धकार्यधर्मरहितत्वान्न रिष्यति न हिंसामापद्यते न विनश्यतीत्यर्थ. । क्रममतिक्रम्य औपनिषदस्य पुरुषस्य आख्यायिकातोऽपसृत्य श्रुत्या स्वेन रूपेण त्वरया निर्देश कृत॰ । तत पुन आख्यायिकामेवाश्रित्याह— एतानि यान्युक्तानि अष्टावायतनानि 'पृथिव्येव यस्यायतनम्' इत्येवमादीनि, अष्टौ लोका अग्निलोकादय, अष्टौ देवा. 'अमृतमिति होवाच' इत्येवमादय., अष्टौ पुरुषा 'शारीर पुरुष' इत्यादय —स यः कश्चित् तान्पुरुषान् शारीरप्रभृतीन् निरुह्य निश्चयेनोह्य गमयित्वा अष्टचतुष्कभेदेन लोकस्थितिमुपपाद्य, पुन॰ प्राचीदिगादिद्वारेण प्रत्युह्य उपसहृत्य स्वात्मनि हृदये अत्यक्रामत अतिक्रान्तवानुपाधिधर्म हृदयाद्यात्मत्वम् । स्वेनैवात्मना व्यवस्थितो य औपनिषद. पुरुषः अशनायादिवर्जित उपनिषत्स्वेव विज्ञेय नान्यप्रमाणगम्य., त त्वा त्वा विद्याभिमानिन पुरुष पृच्छामि । त चेत् यदि मे न विवक्ष्यसि विस्पष्ट न कथयिष्यसि, मूर्धा ते विपतिष्यतीत्याह याज्ञवल्क्यः । त त्वौपनिषद पुरुष शाकल्यो न मेने ह न विज्ञातवान्किल । तस्य ह मूर्धा विपपात विपतित. । समाप्ता आख्यायिका । श्रुतेर्वचन, 'त ह न मेने' इत्यादि । किं च अपि ह अस्य परिमोषिण. तस्करा. अस्थीन्यपि सस्कारार्थ शिष्यैर्नीयमानानि गृहान्प्रत्यपजह्रु: अपहृतवन्तः— किं निमित्तम् — अन्यत् धन नीयमान मन्यमानाः । पूर्ववृत्ता त्वाख्यायिकेह सूचिता । अष्टाध्याय्यां किल शाकल्येन याज्ञवल्क्यस्य समानान्त एव सवादो निर्वृत्तः । तत्र याज्ञवल्क्येन शापो दत्तः— 'पुरेऽतिथ्ये मरिष्यसि न तेऽस्थीन्यपि च न गृहान्प्राप्स्यन्ति' इति 'स ह तथैव ममार । तस्य हाप्यन्यन्मन्यमानाः परिमोषिणोऽस्थीन्यपजह्रुः ।

---

अमध्व १।३।४३ स एष ( स वा एष ), श्रीकर १।१।१ ( पृ ४, ६, २२ ), १।१।३ ( पृ ३९ ), १।१।४ ( पृ ४५ ), १।३।२६, १।४।२८, २।१।२७, ३।३।१७, ३९ रामानुजवत्, वल्लभ १।१।१ ( पृ १९ ), १।१।२ ( पृ ७८ ), १।२।६, ३।२।१५, २३, ३।३।१९, २७, ३।४।२०, ४।१।३, विज्ञान १।१।२ ( पृ. ५८ ), १।१।३ (पृ ६९), १।१।२०, २।२।१० तऽ ह (तविह), बलदेव १।१।३, ४, ५, ३।२।२३.

तस्मान्नोपवादी स्यादुत ह्येववित्परो भवतीति '। सैषा आख्यायिका आचारार्थे सूचिता विद्यास्तुतये च इह। शकर.

( २ ) 'त त्वौपनिषद पुरुष पृच्छामि ' इति चौपनिषदत्त्वविशेषण पुरुषस्योपनिषत्सु प्राधान्येन प्रकाश्यमानत्वे उपपद्यते । अतो भूतवस्तुपरो वेदभागो नास्तीति वचन साहसमात्रम्। ब्रशकर १।१।४

( ३ ) स एष समानप्रतिष्ठाधारभूतः । असङ्गो न हि सज्यते। निर्लेपत्वात्पापफलं नानुभवतीत्यर्थः। असितो न व्यथते न रिष्यति। षिञ् बन्धने। कर्मबन्धशून्यत्वादेव सर्वदेहान्तरार्तोऽपि न शोचति न हिंस्यते वेत्यर्थः।

एतान्निरुह्य प्रत्युह्य सम्यङ्निर्धारणार्थो निरूहः प्रत्यूह.। आयतनदेवलोकपुरुषान्प्रति व्यक्तितर्केण तत्तत्स्वरूप निर्धार्य तान् सर्वान्योऽत्यक्रामद्यः पुरुषः प्रत्यक्रामत्सकलकार्यवर्गविलक्षणत्वेन निश्चितवान् इत्यर्थः। यद्यप्यतिक्रमणकर्तृत्वमौपनिषदात्मगत निरूहप्रत्यूहकर्तृत्व तु पुरुषगतं तथाऽपि ण्यर्थगर्भतया य ऊहयित्वाऽत्यक्रामदित्युक्तौ न विरोध इति द्रष्टव्यम्। ऊहविषयस्य परमात्मन ऊहयितृत्वसभवात्। अतिक्रमण नामेद वा परमितिसशयविषये ह्यतिक्रमण•तस्य च परमात्म कर्तृत्व सभवतीति द्रष्टव्यम्। यद्वा परिमोषिणो मुषितशरीरस्य नष्टशरीरस्येति यावत्। तस्यास्थीन्येवमन्यन्मन्यमाना और्ध्वदैहिकक्रियार्थे तत्पुत्राद्या अपहृतवन्त इत्यर्थः। रग.

( ४ ) औपनिषद उपनिषन्मूलप्रमाणक उपनिषन्महातात्पर्यविषय वा। शाखान्तर च तन्मूलकमनुमान योगिप्रत्यक्षादिकमपि ब्रह्मणि प्रमाण भवति ' आत्मा वा अरे द्रष्टव्यः श्रोतव्यः मन्तव्य. निदिध्यासितव्यः ' इत्यादिश्रुतेः। विज्ञान १।१।३ (पृ ६९,७०)

( याज्ञवल्क्यप्रश्नः अनुत्तर )

१• मृतस्य पुनर्भव अनुपपन्न, विज्ञानमानन्द ब्रह्म

अथ होवाच ब्राह्मणा भगवन्तो यो वः कामयते स मा पृच्छतु । सर्वे वा मा पृच्छत । यो व कामयते त व. पृच्छामि । सर्वान्वा वः पृच्छामीति । ते ह ब्राह्मणा न दधृषु' ॥

यस्य नेति नेतीत्यन्यप्रतिषेधद्वारेण ब्रह्मणो निर्देशः कृतः तस्य विधिमुखेन कथ निर्देशः कर्तव्य इति पुनराख्यायिकामेवाश्रित्याह मूल च जगतो वक्तव्यमिति। आख्यायिकासबन्धस्त्वब्रह्मविदो ब्राह्मणान् जित्वा गोधन हर्तव्यमिति। न्याय मत्वाह—अथ होवाच। अथ अनन्तर तूर्ष्णीभूतेषु ब्राह्मणेषु ह उवाच, हे ब्राह्मणा भगवन्त इत्येव सबोध्य — यो वः युष्माक मध्ये कामयते इच्छति — याज्ञवल्क्य पृच्छामीति, स मा मां आगत्य पृच्छतु। सर्वे वा मा पृच्छत — सर्वे वा यूय मा मा पृच्छत। यो व. कामयते — याज्ञवल्क्यो मां पृच्छत्विति, त व. पृच्छामि। सर्वान्वा वः युष्मान् अह पृच्छामि। ते ह ब्राह्मणा न दधृषुः— ते ब्राह्मणा एवमुक्ता अपि न प्रगल्भा' सवृत्ताः किंचिदपि प्रत्युत्तर वक्तुम्। शकर

तान्हैतैः श्लोकैः पप्रच्छ—
यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा।
तस्य लोमानि पर्णानि त्वगस्योत्पाटिका बहिः॥
त्वच एवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः।
तस्मात्तदातृण्णात्प्रैति रसो वृक्षादिवाहतात्॥

(१) बृउ ३।९।२७, शब्रा १४।६।९।२९ अथ होवाच ( अथ ह याज्ञवल्क्य उवाच ) पृच्छामि ( पृच्छानि ) पृच्छामीति ( पृच्छानीति )

(१) बृउ ३।९।२८, शब्रा १४।६।९।३०—३४ लोमानि पर्णानि ( पर्णानि लोमानि ) तृण्णा ( तुन्ना ) प्रजायते। + ( जात एव न जायते को न्वेन जनयेत्पुन ) इव वै वृक्षोऽञ्जसा ( उ वै वृक्षोऽन्यत ) मावृहे ( मुदृहे ) ( जात एव जनयेत्पुन ० ) रातिर्दा ( रातेर्दा ), ब्रशकर १।१।४ ( पृ ५४ ), १।१।१२, १९, २२, २।३।१८, ४।१।२ रातिर्दा ( रातेर्दा ), भास्कर १।१।१९, २।३।१८, रग ( वै० ), रामानुज १।१।१ ( पृ १७, ६३ ), १।१।२१, २।१।१५ ( पृ. ४३६ ), मध्व तृण्णा ( तृणा ) शकराणि ( शर्कराणि ) किनाटव ( कीनाटव ) स्नाव तत्स्थि ( स्नावतः स्थि ), ब्रमध्व १।२।१५, ३।२।४०, ३।३।२, १७, विज्ञान १।१।१ ( पृ २ ), १।१।२ ( पृ ६३ ), १।१।४ ( पृ १०५ ), १।१।१२, ३।२।३६, ३।३।११, ४।१।३ पोऽमृषा ( षो मृषा ), बलदेव ३।२।३८, ४०, ३।३।१.

**मां॰सान्यस्य शकराणि किनाट॰स्नाव तत्स्थिरम् ।**
**अस्थीन्यन्तरतो दारूणि मज्जा मज्जोपमा कृता ॥**
**यद्वृक्षो वृक्णो रोहति मूलान्नवतर पुन ।**
**मर्त्यः स्विन्मृत्युना वृक्ण कस्मान्मूलात्प्ररोहति ॥**
**रेतस इति मा वोचत जीवतस्तत्प्रजायते ।**
**धानारुह इव वै वृक्षोऽञ्जसा प्रेत्य सभव ॥**
**यत्समूलमावृहेयुर्वृक्ष न पुनराभवेत् ।**
**मर्त्य॰ स्विन्मृत्युना वृक्ण कस्मान्मूलात्प्ररोहति ॥**
**जात एव न जायते को न्वेन जनयेत्पुन॰ ।**
**विज्ञानमानन्द ब्रह्म रातिर्दातु॰ परायण तिष्ठमानस्य तद्विद इति ॥**

( १ ) तेष्वप्रगल्भभूतेषु ब्राह्मणेषु तान् ह एतै वक्ष्यमाणै श्लोकै पप्रच्छ पृष्टवान् । यथा लोके वृक्षो वनस्पति॰, वृक्षस्य विशेषण वनस्पतिरिति, तथैव पुरुषो ऽमृषा — अमृषा सत्यमेतत् । तस्य लोमानि — तस्य पुरुषस्य लोमानि इतरस्य वनस्पते पर्णानि । त्वगस्योत्पाटिका बहि॰— त्वक् अस्य पुरुषस्य इतरस्योत्पाटिका वनस्पते ।

त्वच एव सकाशात् अस्य पुरुषस्य रुधिर प्रस्यन्दि, वनस्पतेस्त्वच॰ उत्पट॰— त्वच एव उत्स्फुटति यस्मात् । एव सर्वं समानमेव वनस्पतेः पुरुषस्य च । तस्मात् आतृण्णात् हिंसितात् प्रैति तत् रुधिर निर्गच्छति, वृक्षादिव आहतात् छिन्नात् रसः ।

एव मासान्यस्य पुरुषस्य, वनस्पते॰ तानि शकराणि शकलानीत्यर्थ॰ । किनाट, वृक्षस्य किनाट नाम शकलेभ्योऽभ्यन्तर वल्कलरूप काष्ठसलग्न, तत् स्नाव पुरुषस्य । तत्स्थिरम् — तच्च किनाट स्नाववत् दृढ हि तत् । अस्थीनि पुरुषस्य, स्नाव्नोऽन्तरत॰ अस्थीनि भवन्ति । तथा किनाटस्याभ्यन्तरतो दारूणि काष्ठानि । मज्जा, मज्जैव वनस्पतेः पुरुषस्य च मज्जोपमा कृता, मज्जाया उपमा मज्जोपमा, नान्यो विशेषोऽस्तीत्यर्थः । यथा वनस्पतेर्मज्जा तथा पुरुषस्य, यथा पुरुषस्य तथा वनस्पतेः ।

यत् यदि वृक्षो वृक्ण॰ छिन्नः रोहति पुनः पुनः प्ररोहति प्रादुर्भवति मूलात् पुनर्नवतरः पूर्वस्मादभिनवतरः । यदेतस्माद्विशेषणात्प्राक् वनस्पतेः पुरुषस्य च, सर्वं सामान्यमवगतम् । अथ तु वनस्पतौ विशेषो दृश्यते — यत् छिन्नस्य प्ररोहणम् । न तु पुरुषे मृत्युना वृक्णे पुन॰ प्ररोहण दृश्यते । भवितव्य च कुतश्चित्प्ररोहणेन । तस्मात् व॰ पृच्छामि — मर्त्य॰ मनुष्यः स्वित् मृत्युना वृक्णः कस्मात् मूलात् प्ररोहति, मृतस्य पुरुषस्य कुतः प्ररोहणमित्यर्थ॰ ।

यदि चेदेव वदथ — रेतस॰ प्ररोहतीति, मा वोचत मैव वक्तुमर्हथ । कस्मात् ? यस्मात् जीवत॰ पुरुषात् तत् रेत॰ प्रजायते, न मृतात् । अपि च धानारुहः धाना बीज, बीजरुहोऽपि वृक्षो भवति, न केवल काण्डरुह एव । इवशब्दोऽनर्थक॰ । वै वृक्षः अञ्जसा साक्षात् प्रेत्य मृत्वा सभव॰ धानातोऽपि प्रेत्य सभवो भवेत् अञ्जसा पुनर्वनस्पते॰ ।

यत् यदि सह मूलेन धानया वा आवृहेयुः उद्यच्छेयु उत्पाटयेयु॰ वृक्ष, न पुनराभवेत् पुनरागत्य न भवेत् । तस्माद्व॰ पृच्छामि — सर्वस्यैव जगतो मूल मर्त्य॰ स्वित् मृत्युना वृक्ण॰ कस्मात् मूलात् प्ररोहति ।

जात एवेति, मन्यध्व यदि, किमत्र प्रष्टव्यमिति — जनिष्यमाणस्य हि सभवः प्रष्टव्य॰, न जातस्य । अथ तु जात एव अतोऽस्मिन्विषय प्रश्न एव नोपपद्यत इति चेत् — न । किं तर्हि ? मृतः पुनरपि जायत एव अन्यथा अकृताभ्यागमकृतनाशप्रसङ्गात् । अतो वः पृच्छामि—को न्वेन मृत पुनर्जनयेत् । तत् न विजज्ञुर्ब्राह्मणाः — यतो मृतः पुनः प्ररोहति जगतो मूल न विज्ञात ब्राह्मणैः । अतो ब्रह्मिष्ठत्वात् हृता गावः । याज्ञवल्क्येन जिता ब्राह्मणाः । समाप्ता आख्यायिका । यज्जगतो मूल, येन च शब्देन साक्षाद्व्यपदिश्यते ब्रह्म, यत् याज्ञवल्क्यो ब्राह्मणान्पृष्टवान्, तत् स्वेन रूपेण श्रुतिरस्मभ्यमाह — विज्ञान विज्ञप्तिः विज्ञान, तच्च आनन्द, न विषयविज्ञानवद्दुःखानुविद्ध, किं तर्हि प्रसन्न शिवमतुलमनायास नित्यतृप्तमेकरसमित्यर्थ॰ । किं तत् ब्रह्म उभयविशेषणवद्रातिः रातेः षष्ठ्यर्थे प्रथमा, धनस्येत्यर्थः । धनस्य दातुः कर्मकृतो यजमानस्य परायण परा गतिः कर्मफलस्य प्रदातृ । किंच व्युत्थायैषणाभ्य॰ तस्मिन्नेव ब्रह्मणि तिष्ठति अकर्मकृत् , तत् ब्रह्म वेत्तीति तद्विद्, तस्य तिष्ठमानस्य च तद्विदः, ब्रह्मविद इत्यर्थः, परायणमिति ।

'विज्ञानमानन्दम्' इति स्वरूपान्वाख्यानपरैव श्रुतिः, नात्मानन्दसवेद्यत्वार्था । शंकर.

(२) 'ज्ञोऽत एव' — ज्ञो नित्यचैतन्योऽयमात्माऽत एव यस्मादेव नोत्पद्यते परमेव ब्रह्माविकृतमुपाधिसंपर्काज्जीवभावेनावतिष्ठते । परस्य हि ब्रह्मणश्चैतन्यस्वरूपत्वमाम्नात 'विज्ञानमानन्दं ब्रह्म' ।

ब्रशंकर २।३।१८

(३) वनस्पतिः फलपुष्पोपेतः । वानस्पत्यः फलैः पुष्पैरिति निघण्टुः । अस्य पुरुषाख्यवृक्षस्य लोमान्येव पर्णानि अस्य पुरुषस्य या त्वग्बहिर्भूतोत्पाटिका वृक्षानुपमर्देनैवोत्पाट्यत इत्युत्पाटिका । चिञ्चादेरिव बहिस्त्वग्रुधिरवारकाच्चर्मणो या बहिर्भूता सा बहिस्त्वक् ।

उत्क्रम्य पटतीत्युत्पट. क्षीरादिसारः । आतृण्णात् । तृदि हिंसायाम् । आतृण्णाच्छिन्नात् । तस्मात्पुरुषरूपात् वृक्षाद्रस इव रुधिरं निर्गच्छतीत्यर्थः ।

अस्य पुरुषस्य मांसानि शकराणीव शकलानीवेत्यर्थः । स्नावेत्येतन्नान्तं नपुंसकं शिरेति यावत् । वृक्षस्य किनाट नाम दार्वस्थिभागादुपगतवल्कः । वृक्षस्य स्थिरं वल्कान्तर्गतस्थिरांशः । अस्य पुरुषस्यास्थीनि अन्तरतो दारूणि या मज्जा साऽस्य पुरुषस्य मज्जोपमा कृता भवति । तथा च वृक्षमज्जास्थाने पुरुषस्य प्रसिद्धमज्जा भवतीत्यर्थः ।

इवशब्दोऽप्यर्थः । वृक्षोऽञ्जसा साक्षात्प्रेत्य मृत्वा घातातोऽपि संभवेत् । रंग

(४) 'शिवस्य च तथोमाया प्राणात्मा शेष आश्रयः । शेषस्यापानरूपा सा भारत्येव व्यपाश्रयः । तस्या व्यानाभिधो वायुर्विशिष्टानो यतो हि सः । उन्नेतृत्वादुदानाख्या तस्य श्रीराश्रयः सदा । समनाख्यो हरिस्तस्याः सहैव ह्यानयत्यसौ । स्वावरस्थानकास्त्वन्ये सर्वेषां चेष्टको हि सः । स एष भगवानेव श्रीवदन्याश्रयो हरिः । न च ब्रह्मादिवद्विष्णुर्नैवासौ बद्धवत्क्वचित् । न च मुक्तवदीशेशः कुत एव जडोपमः । अग्राह्योऽशीर्यसङ्गोऽसावसितश्च न रिष्यति । न हि सर्वात्मना क्वापि केनचिज्ज्ञायते क्वचित् । स्वल्पोऽपि शीर्यते नैव कारणात्कार्यतोऽपि वा । न लिप्यते जगन्नाथः क्वचिद्दोषेण केनचित् । भूतपूर्वो भविष्यो वा बन्धो नास्य कुतश्चन । न च नाशो भवेत्क्वापि न न शिष्यति च क्वचित् । अन्यत्सर्वं गृहीतं हि तेन ज्ञानादिना सदा । अशीर्यत्वादयोऽन्येषां सर्वेषां तत्प्रसादतः । अतस्तस्यातिवैषम्यान्नेति नेत्याह तं श्रुतिः ॥' इत्यादि च । 'तद्गुणानां सुपूर्णानां विप्लुट्क प्रतिबिम्बितम् । श्रीर्भुङ्क्ते तद्गुणान्ब्रह्मा तस्य रुद्रादयोऽपि च ॥' इत्यादि च । अहर्ज्ञानमस्य लीनमित्यहर्लौकिक एवाहर्लिक । अञ्जेत्याक्षिपति । न हि गृह्यत इत्यादिना ग्रहणशीरणादिषु सर्वप्रमाणाभावं दर्शयति । 'नेति नेत्यादिरूपेण विज्ञापितगुणोऽपि तु । विशेषापेक्षया पृष्टो न शाकल्यो विवेद तम् ॥' इति ब्रह्माण्डे । 'तदपेक्षा विनैवासौ निर्गत्य पुरुषोत्तमः । वहत्येवानिशं सर्वं निरूढं तेन तज्जगत् । प्रतिप्रतिस्थितो रूपैर्यस्माद्धत्ते हरिः सदा । अतः प्रत्यूह्यते तेन व्यक्ताव्यक्तमिदं जगत् ॥' इति ब्रह्मतर्के । 'न विनोपनिषद्भिः स ज्ञेयः केनापि कस्यचित् । अत औपनिषत्कं तं प्राहुर्विष्णुं सनातनम् ॥' इति च । 'प्रश्नो वादे च जल्पादौ कर्तव्यः प्रतिवादिना । तदुक्तिमात्रे प्रामाण्यं यदि नास्यागमान्तरम् । अपेक्षितं यदाशङ्का दर्शनीयस्तदागमः । निःशङ्कत्वेन यो वक्ता प्रश्नानामुत्तरं सदा । आनुकूल्येनागमानां नाशङ्क्य तद्वचः क्वचित् । दशतालो दशमुखो ललाटत्रिंशकस्तथा । सार्धोन्नतश्चैव पुनः पर्यग्दशशिरास्तथा । पञ्चोराः सप्तपादो यो नाशङ्क्य तद्वचः क्वचित् । नवाङ्गुलमुखो यस्तु गले च चतुरङ्गुलः । चतुर्विंशाङ्गुलतनुस्तद्वाक्यं देवपूजितम् । प्राधान्याल्लक्षणोपेतो दुर्लक्षणयुतोऽपि सन् । तस्यापि वाक्यं मानं स्यात्किमु सर्वयुतस्य तु । प्रायो देवाश्च ऋषयो न सर्वशुभलक्षणाः । ऋते विष्णुं सुरश्रेष्ठ ब्रह्माणं वाऽप्यनन्तरम् । यस्मान्न विदुषां वाक्यमाशङ्क्य केनचित्क्वचित् । तस्माद्वेदेषु सर्वेषु कथाः प्रश्नोत्तरात्मिका । न प्रमाणान्तरं तत्र पृच्छन्ति घटनां विना । एतस्मादाश्वलाद्याश्च पप्रच्छुर्नैव कुत्रचित् । आगमं याज्ञवल्क्योक्तेरन्यं तु मिथिलोऽपि च ॥' इति ब्रह्मतर्के । 'यश्छिन्नविचिकित्सस्तु छिनत्त्यपि च संशयान् । तस्य पर्येषणं कुर्यात्प्रतीच्छन्नोत दक्षिणाम् ॥' इति च भारते । 'षण्णवत्यङ्गुलो यस्तु न्यग्रोधपरिमण्डलः । दशतालश्चतुर्हस्तः स देवैरपि पूज्यते ॥' इति वायुप्रोक्ते । अत एव च सर्वा-

गर्भेषु प्रतिसहितमाचार्यलक्षणमुच्यते । यथा वनस्पतौ वृक्ष इत्यय शब्दोऽमृषा तथैव पुरुषे पुरुष शब्दो विद्यमान एव । स च नित्यत्वे सभवति । पुरुकालेऽपि सन् पुरुष इति । स्नावमध्ये यत्स्थिर विद्यतेऽस्थि सल्लीन तद्दारुसश्लिष्टपाशवत् । वृक्षो मूलाद्रोहतीत्यङ्गीकारमात्रम् । यत्समूलमावृहेयुरिति तस्यापि दूषणात् । अन्यस्य रेतसो जननमपि जीवत पुरुषान्तरस्य भावे । प्रलये तु सर्वप्रलयात्कस्मादुत्पत्ति' । तत्पृष्टे सर्वे वक्तुमशक्तत्वात्पुरुषस्य पुनरुत्पत्तौ कारण भगवन्त जानन्तोऽपि तूष्णीमृषयो बभूवु. । पुरुषनामकत्वान्नित्यस्य जीवस्य यावन्मुक्ति पुनरुत्पत्त्या भवितव्य न शरीरेण सह नाश. '। तस्य च स्वोत्पत्तावस्वातन्त्र्यादन्येनोत्पादकेन भाव्यम् । कोऽसाविति प्रश्नाशय. । तेषु तूष्णीम्भूतेषु स्वय मेव परिहरति विज्ञानमानन्द ब्रह्मेति। तस्याप्यन्य उत्पादक इत्याशङ्का मा भूदिति जात एव न जायत इत्याह । पुरुषान्तरापेक्षया पुन.शब्दो न तु क्रियाभ्यासापेक्षया । 'एक एव हरिर्बन्धु पुनरन्यो न विद्यते ' इतिवत् । रातिरिष्टि. । तिष्ठमानस्य तद्विद. परायणम् । ' विजित्य सर्वान्पप्रच्छ याज्ञवल्क्य. पुनर्मुनीन् । यथा वनस्पतौ वृक्षशब्द एव यथार्थतः । पुरुषेऽपि हि तच्छब्दो नित्यत्वादेव युज्यते । तस्मान्नास्य शरीरेण नाशस्तस्मात्पुनर्जनिः । आमुक्तेर्भविता नित्य कुतस्तदिति चोच्यताम् । रेतसो जनन यावत्प्रलयस्तावदेव हि । निर्मूलस्य च वृक्षस्य प्रलये पुरुषस्य च । पुनरुत्पादको यस्त वदन्तु मम कृत्स्नश' । धानाजात इवाय हि दृश्यतेऽविदुषा तरु । अस्वातन्त्र्यात्तु विदुषा नैव तत्कारण भवेत् । अञ्जसा प्रेत्य सभूतिकारण तद्वदन्तु न । प्रेत्य सभूतिकर्ता हि स्वतन्त्रो घटते यतः । इति पृष्टास्तु मुनयो न वक्तु शेकुरञ्जसा । तद्वेत्तारोऽपि तत्प्रश्ननिर्मूलनबलोज्झिताः । अथाश्चर्यात्तत्प्रभावेन धर्षिता नाशकन्यदा । स्वयमेव तदोवाच याज्ञवल्क्यो महामुनिः । पूर्णानन्दो हरिर्नान्यः कारण सृज्यसर्जने । नैवास्य जनकः कश्चिन्नित्यजातो ह्यसौ हरिः । स प्रियः सर्वदातृणा ज्ञानिनां परमप्रियः । ये तु तद्भाविता नित्य तेषामेष परायणम् ॥' इति नारायणीये ।

मध्व.

( ५ ) 'श्रुतत्वाच्च'—अत एवेश्वरात्फलं भवति । न ह्यचेतनस्य स्वत. प्रवृत्तिर्युज्यते 'विज्ञानमानन्द ब्रह्म रातिर्दातु' परायणम् ' इति ।

ब्रमध्व ३।२।४०

( ६ ) ज्ञानस्वरूप परमात्मा स एव सत्यः जीवाश्चाशतया अशिन्येकीभूता' अथ वा लयवत्त्वेन परमात्मापेक्षया तेऽप्यसन्त. 'यथा वृक्षो वनस्पतिस्तथैव पुरुषो मृषा' इति श्रुतेः ।

विज्ञान. १।१।४ ( पृ. १०५ )

इति तृतीयोऽध्याय ॥

---

## चतुर्थोऽध्यायः

प्रज्ञेत्युपास्य वागायतन आकाशप्रतिष्ठ वाग्ब्रह्म, प्रियमित्युपास्य प्राणायतन आकाशप्रतिष्ठ प्राणब्रह्म, सत्यमित्युपास्य चक्षुरायतन आकाशप्रतिष्ठ चक्षुर्ब्रह्म, दिगात्मकानन्तमित्युपास्य श्रोत्रायतन आकाशप्रतिष्ठ श्रोत्रब्रह्म, आनन्द इत्युपास्य मनआयतन आकाशप्रतिष्ठ मनोब्रह्म, स्थितिरित्युपास्यं हृदयायतन आकाशप्रतिष्ठ हृदयब्रह्म

**जनको ह वैदेह आसांचक्रे । अथ ह याज्ञवल्क्य आवव्राज । तꣳ होवाच । याज्ञवल्क्य किमर्थमचारीः पशूनिच्छन्नण्वन्तानिति । उभयमेव सम्राडिति होवाच ॥**

( १ ) जनको ह वैदेह आसांचक्रे । अस्य सबन्धः—शारीराद्यानष्टौ पुरुषान् निरुह्य, प्रत्युह्य पुनर्हृदये, दिग्भेदेन च पुनः पञ्चधा व्युह्य, हृदये प्रत्युह्य, हृदय शरीर च पुनरन्योन्यप्रतिष्ठ प्राणादिपञ्चवृत्त्यात्मके समानाख्ये जगदात्मनि सूत्रे उपसहृत्य, जगदात्मान शरीरहृदयसूत्रावस्थमतिक्रान्तवान् य औपनिषदः पुरुषो नेति नेतीति व्यपदिष्टः, स साक्षाच्चोपादानकारणस्वरूपेण च

(१) बृक. ४।१।१, शबा १४।६।१०।१ तꣳ होवाच ( स होवाच जनको वैदेहो ), रग अथ ह ( अथ ).

निर्दिष्ट' 'विज्ञानमानन्द' इति। तस्यैव वागादिदेवताद्वारेण पुनरधिगम कर्तव्य इत्यधिगमनोपायान्तरार्थोऽयमारम्भो ब्राह्मणद्वयस्य। आख्यायिका तु आचारप्रदर्शनार्था — जनको ह वैदेह आसाचक्रे आसन कृत वानास्थायिका दत्तवान् इत्यर्थ', दर्शनकामेभ्यो राज्ञ.। अथ ह तस्मिन्नवसरे याज्ञवल्क्य आवव्राज आगतवान् आत्मनो योगक्षेमार्थं, राज्ञो वा विविदिषा दृष्ट्वाऽनुग्रहार्थम्। तमागत याज्ञवल्क्य यथावत्पूजा कृत्वोवाच ह उक्तवाञ्जनक.— हे याज्ञवल्क्य किमर्थमचारी आगतोऽसि। किं पशून् इच्छन्पुनरपि, आहोस्विदण्वन्तान् सूक्ष्मान्तान् सूक्ष्मवस्तुनिर्णयान्तान् प्रश्नान् मत्तः श्रोतुमिच्छन्निति। उभयमेव पशून् प्रश्नाश्च, हे सम्राट्— सम्राडिति वाजपेययाजिनो लिङ्गम्। यश्च आज्ञया राज्य प्रशास्ति, स सम्राट्। तस्यामन्त्रण हे सम्राडिति। समस्तस्य वा भारतस्य वर्षस्य राजा।

शकर

(२) अन्तो निश्चय। सूक्ष्मस्य वस्तुन प्रत्यगात्मादेरन्तान्निश्चयान्कर्तुमित्यर्थः। रग

(३) अणुर्भगवास्तद्विषयान् निर्णयान् वक्तु वा।

मध्व

**यत्ते कश्चिदब्रवीत्तच्छृणवामेति। अब्रवीन्मे जित्वा शैलिनि। वाग्वै ब्रह्मेति। यथा मातृमान् पितृमानाचार्यवान् ब्रूयात् तथा तच्छैलिनिरब्रवीद्वाग्वै ब्रह्मेति। अवदतो हि किं॰ स्यादिति। अब्रवीत्तु ते तस्याऽऽयतन प्रतिष्ठाम्। न मेऽब्रवीदिति। एकपाद्वा एतत्सम्राडिति। स वै नो ब्रूहि याज्ञवल्क्य। वागेवाऽऽयतनमाकाश प्रतिष्ठा प्रज्ञेत्येनदुपासीत। का प्रज्ञता याज्ञवल्क्य। वागेव सम्राडिति होवाच। वाचा वै सम्राड्बन्धुः प्रज्ञायते। ऋग्वेदो यजुर्वेद सामवेदोऽथर्वाङ्गिरस इतिहास पुराणं विद्या उपनिषद. श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्ट॰ हुतमाशित पायितमय च लोक परश्च लोक सर्वाणि च भूतानि वाचैव सम्राट् प्रज्ञायन्ते। वाग्वै सम्राट् परम ब्रह्म। नैन वाग्जहाति। सर्वाण्येन भूतान्यभिक्षरन्ति। देवो भूत्वा देवानप्येति। य एव विद्वानेतदुपास्ते। हस्त्यृषभ॰ सहस्रं ददामीति होवाच जनको वैदेह। स होवाच याज्ञवल्क्य.। पिता मेऽमन्यत नाननुशिष्य हरेतेति॥**

(१) किं तु यत्ते तुभ्य, कश्चिदब्रवीदाचार्य.। अनेकाचार्यसेवी हि भवान्। तच्छृणवामेति। इतर आह— अब्रवीदुक्तवान् मे ममाचार्य., जित्वा नामत., शिलिनस्यापत्य शैलिनि — वाग्वै ब्रह्मेति वाग्देवता ब्रह्मेति। आहेतर — यथा मातृमान् माता यस्य विद्यते पुत्रस्य सम्यगनुशास्त्री अनुशासनकर्त्री स मातृमान्। अत ऊर्ध्वं पिता यस्यानुशास्ता स पितृमान्। उपनयनादूर्ध्वमा समावर्तनादाचार्यो यस्यानुशास्ता स आचार्यवान्। एव शुद्धित्रयहेतुसयुक्त. स साक्षादाचार्यः स्वय न कदाचिदपि प्रामाण्याद्व्यभिचरति। स यथा ब्रूयाच्छिष्याय तथाऽसौ जित्वा शैलिनिरुक्तवान्—वाग्वै ब्रह्मेति। अवदतो हि किं स्यादिति—न हि मूकस्येहार्थममुत्रार्थं वा किंचन स्यात्।

किंतु अब्रवीदुक्तवास्ते तुभ्य तस्य ब्रह्मण आयतन प्रतिष्ठा च। आयतन नाम शरीरम्। प्रतिष्ठा त्रिष्वपि कालेषु य आश्रयः। आहेतरः — न मेऽब्रवीदिति। इतर आह — यद्येवमेकपाद्वै एतत्, एक' पादो यस्य ब्रह्मणस्तदिद एकपाद्ब्रह्म त्रिभि. पादैः शून्यमुपास्यमानमपि न फलाय भवतीत्यर्थ'। यद्येव, स त्व विद्वान् सन्नोऽस्मभ्य ब्रूहि हे याज्ञवल्क्येति। स चाह— वागेवाऽऽयतन, वाग्देवस्य ब्रह्मणो वागेव करणमायतनं शरीर, आकाशोऽव्याकृताख्यः प्रतिष्ठा उत्पत्तिस्थितिलयकालेषु। प्रज्ञेत्येनदुपासीत — प्रज्ञेतीयमुपनिषत् ब्रह्मणश्चतुर्थः पादः। प्रज्ञेति कृत्वैनद्ब्रह्मोपासीत।

---

(१) बृउ ४।१।२, शब्रा १४।६।१०।४—७ यत्ते कश्चिदब्रवीत्तच्छृणवामेति ( क एव ते किमब्रवीदिति ) शैलिनि ( शैलिन ) लिनिरब्र ( लिनोऽब्र ) स्यादिति ( स्यात् ) ( इष्ट॰ हुतमाशित च भूतानि॰ ), ब्रशाकर ३।३।५९, भास्कर १।३।३३, रग त्येनदु ( त्येतदु ) याज्ञवल्क्य+ ( इति ) क्षरन्ति ( रक्षन्ति ), मध्व शैलिनि ( शैलिन ) लिनिरब्र ( लिनोऽब्र ), श्रीकर ३।३।५८

का प्रज्ञता याज्ञवल्क्य ? किं स्वयमेव प्रज्ञा, उत प्रज्ञानिमित्ता — यथा आयतनप्रतिष्ठे ब्रह्मणो व्यतिरिक्ते, तद्वत्किम् । न । कथ तर्हि ? वागेव, सम्राट्, इति होवाच । वागेव प्रज्ञेति होवाचोक्तवान्, न व्यतिरिक्ता प्रज्ञेति । कथ पुनर्वागेव प्रज्ञेति, उच्यते — वाचा वै, सम्राट्, बन्धु प्रज्ञायतेऽस्माक बन्धुरित्युक्ते प्रज्ञायते बन्धु । तथर्ग्वेदादि, इष्ट यागनिमित्त धर्मजात, हुत होमनिमित्त च, आशितमन्नदाननिमित्त, पायित पानदाननिमित्त, अय च लोक, इद च जन्म, परश्च लोक, प्रतिपत्तव्य च जन्म, सर्वाणि च भूतानि — वाचैव, सम्राट्, प्रज्ञायन्ते । अतो वाग्वै, सम्राट्, परम ब्रह्म । नैन यथोक्तब्रह्मविद वाग्जहाति । सर्वाण्येन भूतान्यभिक्षरन्ति बलिदानादिभि । इह देवो भूत्वा पुन शरीरपातोत्तरकाल देवान् अप्येत्यपिगच्छति, य एव विद्वानेतदुपास्ते । विद्यानिष्क्रयार्थं हस्तितुल्य ऋषभो हस्त्यृषभो यस्मिन् गोसहस्रे तद्धस्त्यृषभ सहस्र ददामीति होवाच जनको वैदेह । स होवाच याज्ञवल्क्य.— अननुशिष्य शिष्य कृतार्थमकृत्वा शिष्याद्धन न हरेतेति मे मम पिताऽमन्यत । ममाप्ययमेवाभिप्राय ।   शकर

(२) वागेव ब्रह्मेति ब्रह्मप्रतीकतया वागुपास्येति स उक्तवानित्यर्थ. । देवो भूत्वोपास्यमानवागधिष्ठातृदेवो भूत्वा देवतासायुज्य प्राप्येति यावत् । देवानप्येति । आजानसिद्धदेवतान्तर्गतो भवतीत्यर्थ ।

* रग

(३) 'प्रतिष्ठा प्रतिमा प्रोक्ता प्रतिरूपेण सस्थिते । प्रतिमाधिकसादृश्यान्मुख्या विष्णो सदा रमा । दीप्तत्वादासमन्तात्सा चाकाश इति गीयते । प्रत्येक विष्णुरूपाणामन्यदायतन पृथक् ॥' इत्यध्यात्मे । 'प्रतिमानमरस्थान रहस्य नाम सार्थकम् । चतुष्टय यदा ज्ञात सम्यग्विद्याफल तदा ॥' इति च । का प्रज्ञता वागेवेत्यादेर्धर्मधर्म्यभेद । 'अमिताक्षर पञ्चरात्र विद्येत्याहुर्मनीषिण. । मिताक्षर श्लोकवाच्यमुभय वेद ईर्यते ॥' इति ब्रह्माण्डे । 'सूत्र तु ब्रह्मसूत्राख्य महामीमांसिका तथा । तथा साकर्षण सूत्र ब्रह्मतर्कादयस्तथा । प्रकाशिका निर्णयश्च तत्त्वनिर्णय एव च । व्याख्येति कथिता सर्वा स्वय भगवता कृता । बृहत्तर्कादय सर्वा अनुव्याख्या. प्रकीर्तिता. ॥' इति प्रतिसख्याने । 'वाग्विष्णुर्वाचकत्वेन प्राण. प्रणयनात्स्वयम् । मनो मन्तृत्वतो नित्य स चक्षु सर्वदर्शनात् । श्रोत्र श्रवणशक्तित्वाद्धृदय हृद्गतो यत ॥' इति प्रत्याहारे । 'अन्न प्राण चक्षु श्रोत्र मनो वाचमिति' इत्यादि च । 'वागादिषु स्थित विष्णु य उपास्ते सदैव तु । वागादिनाम्नो नैन स प्रजहाति कदाचन ॥' इति सत्तत्त्वे । अत आयतनमेव वागिन्द्रियादि । परम ब्रह्मेति वचनान्न वागिन्द्रियादिमात्रमुपास्यम् । 'प्रतिमान्त हरित्वेन पृथिव्यामप्यपि वा । इन्द्रियप्राणजीवान्यमथवा य उपासते । मिथ्योपास्तिमता तेषा निष्कृतिर्न कदाचन । अतिदुःखे पतन्त्यद्धा तमस्यन्धे पतङ्गवत् ॥' इत्युपासनानिर्णये । 'सर्वेन्द्रियेषु या विष्णोरुपास्मा युगपत्सदा । देवानामेव योग्या सा तया देवत्वमाप्नुयु । सर्व देवपदे योग्या सायुज्य स्वोत्तमेष्वथ । सप्राप्य ब्रह्मणा सार्धं प्राप्नुयु पुरुषोत्तमम् । दुहन्ति सर्वभोगांश्च तम्भोऽन्ये मुक्तिगा नरा. । स्वोत्तमेभ्यश्च देवेभ्यस्ते मुक्ता इत्यं सदा ॥' इति च । 'प्रविश्य देह यो भोग स्वरूपव्यतिरेकत । सायुज्यमिति त प्राहुः सयुक्तत्वाद्विशपतः ॥' इति च । 'इन्द्रियेषु स्थित विष्णुमुपासीत क्रमेण तु । सदा देवपदायोग्य स मानुषसुरो भवेत् । मानुषा देवलोकस्थास्ते प्रोक्ता मानुषा सुरा । मानुषा देवसायुज्य यान्त्युपासनयाऽनया ॥' इति च । 'ऋषभान् गजमिश्रांस्तु क्षत्रियो गुरुदक्षिणाम् । विप्रो दद्याद्वृषानेव वैश्यो गा प्रतिविद्यकम् ॥' इति च मानसहितायाम् । 'अन्यया विद्यया मुक्ति सुराणामन्यया नृणाम् । तत्रापि योग्यताभेदात्प्रतिभेदा अवान्तराः । यथा यस्य विमुक्ति स्यात्तद्दाता मुख्यतो गुरु. । एकदेशे गुरुर्वा स्यादन्यविद्याप्रदस्य तु ॥' इति च ।

मध्व.

**यदेव ते कश्चिदब्रवीत्तच्छृणवामेति । अब्रवीन्म उदङ्क. शौल्बायन. । प्राणो वै ब्रह्मेति । यथा**

* शेष शकरवत् ।

(१) बृउ ४।१।३, शमा १४।६।१०।१-४ यदेव ते ( यत्त ) प्राण एवाय ( स एवाय ) वधाशङ्क ( वधाशङ्का ), रग तच्छौल्बा ( शौल्बा )

मातृमान्पितृमानाचार्यवान् ब्रूयात्तथा तच्छौल्बाय नोऽब्रवीत्प्राणो वै ब्रह्मेति । अप्राणतो हि किंऽस्यादिति । अब्रवीत्तु ते तस्यायतन प्रतिष्ठाम् । न मेऽब्रवीदिति । एकपाद्वा एतत्सम्राडिति । स वै नो ब्रूहि याज्ञवल्क्य । प्राण एवाऽऽयतनमाकाश प्रतिष्ठा प्रियमित्येनदुपासीत । का प्रियता याज्ञवल्क्य । प्राण एव सम्राडिति होवाच । प्राणस्य वै सम्राट् कामायायाज्य याजयति । अप्रतिगृह्यस्य प्रतिगृह्णाति । अपि तत्र वधाशङ्क भवति या दिशमेति प्राणस्यैव सम्राट् कामाय । प्राणो वै सम्राट् परम ब्रह्म । नैन प्राणो जहाति । सर्वाण्येनं भूतान्यभिक्षरन्ति । देवो भूत्वा देवानप्येति । य एव विद्वानेतदुपास्ते । हस्त्यृषभंऽ सहस्र ददामीति होवाच जनको वैदेह । स होवाच याज्ञवल्क्य । पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥

( १ ) यदेव ते कश्चिदब्रवीदुदङ्को नामतः शुल्बस्यापत्य शौल्बायनोऽब्रवीत् । प्राणो वै ब्रह्मेति, प्राणो वायुर्देवता --- पूर्ववत् । प्राण एव आयतनमाकाश. प्रतिष्ठा । उपनिषत् — प्रियमित्येनदुपासीत । कथ पुन. प्रियत्वम् ? प्राणस्य वै, हे सम्राट्, कामाय प्राणस्यार्थायायाज्य याजयति पतितादिकमपि । अप्रतिगृह्य स्याप्युग्रादे प्रतिगृह्णात्यपि । तत्र तस्या दिशि वधनिमित्तमाशङ्क -- वधाशङ्का इत्यर्थ --यां दिशमेति तस्कराद्याकीर्णो च, तस्यां दिशि वधाशङ्का । तच्चैतत्सर्वं प्राणस्य प्रियत्वे भवति, प्राणस्यैव, सम्राट्, कामाय । तस्मात्प्राणो वै, सम्राट्, परम ब्रह्म । नैन प्राणो जहाति । समानमन्यत् ।

शाकर

( २ ) यत्र वधाशङ्क भवति वधस्याऽऽशङ्का यस्मा चौरव्याघ्रादि तद्यत्र वर्तते तत्रापि प्राणस्य कामाय याति । रग

( ३ )'प्राणसस्थस्य वै विष्णोः सप्रीत्यै भोजन भवेत् । तदिच्छयैव चौर्यादि कुर्युरज्ञा अपि ध्रुवम् । तथापि त न जानीयु प्राणात्मान जनार्दनम् ॥' इति प्रवृत्ते । मध्व.

यदेव ते कश्चिदब्रवीत्तच्छृणवामेति । अब्रवीन्मे बर्कुर्वार्ष्ण । चक्षुर्वै ब्रह्मेति । यथा मातृमान्पितृमानाचार्यवान् ब्रूयात्तथा तद्वार्ष्णोऽब्रवीच्चक्षुर्वै ब्रह्मेति । अपश्यतो हि किंऽ स्यादिति । अब्रवीत्तु ते तस्यायतन प्रतिष्ठाम् । न मेऽब्रवीदिति । एकपाद्वा एतत्सम्राडिति । स वै नो ब्रूहि याज्ञवल्क्य । चक्षुरेवायतनमाकाश. प्रतिष्ठा सत्यमित्येनदुपासीत । का सत्यता याज्ञवल्क्य । चक्षुरेव सम्राडिति होवाच । चक्षुषा वै सम्राट् पश्यन्तमाहुरद्राक्षीरिति । स आहाद्राक्षमिति तत्सत्यं भवति । चक्षुर्वै सम्राट् परमं ब्रह्म । नैनं चक्षुर्जहाति । सर्वाण्येन भूतान्यभिक्षरन्ति । देवो भूत्वा देवानप्येति । य एवं विद्वानेतदुपास्ते । हस्त्यृषभंऽ सहस्र ददामीति होवाच जनको वैदेह । स होवाच याज्ञवल्क्य । पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥

( १ ) यदेव ते कश्चिद्बर्कुरिति नामतः वृष्णस्यापत्य वार्ष्ण । चक्षुर्वै ब्रह्मेति — आदित्यो देवता चक्षुषि । उपनिषत् — सत्यम् । यस्माच्छ्रोत्रेण श्रुतमनृतमपि स्यात्, न तु चक्षुषा दृष्टम् । तस्मात् वै, सम्राट्, पश्यन्तमाहु — अद्राक्षीस्त्व हस्तिनमिति, स चेदद्राक्षमित्याह, तत्सत्यमेव भवति । यस्त्वन्यो ब्रूयात्—अहमश्रौषमिति । तद्व्यभिचरति । यत्तु चक्षुषा दृष्ट तदव्यभिचारित्वात्सत्यमेव भवति । शाकर

( २ ) चक्षुषा दृष्टे यथा सत्यत्वाध्यवसायस्तथा मानान्तरावगते न भवतीत्यर्थः । रग.

( ३ ) 'यच्चक्षुषि स्थित रूप विष्णोश्चक्षुस्तदुच्यते । शब्दादेरप्यापरोक्ष्ये तद्धेतुर्विश्वनामकम् । तद्गतस्य ततो विष्णोः कण्ठस्थानागमो यदा । तदा स्वप्नो भवेज्जाग्रद्दर्शन नैव जायते । चक्षुर्निमीलन च स्यात्सर्वेन्द्रिय-

---

त्येनदु ( त्येतदु ) प्राणस्यैव ( प्राणस्य वै ) क्षरन्ति ( रक्षन्ति ) जनको+ ( ह ), मध्व प्राणस्य वै ( प्राणस्यैव )

(१) बृउ ४।१।४, शब्रा १४।६।१०।७—१० यदेव ते कश्चिदब्रवीत्तच्छृणवामेति ( क एव ते किमब्रवीदिति ) स्यादिति ( स्यात् ), रग त्येनदु ( त्येतदु ) क्षरन्ति ( रक्षन्ति ) जनको+ ( ह ), मध्व बर्कुर्वार्ष्ण ( बट्कुवार्ष्ण ) जनको+ ( ह ), श्रीकर १।१।१ ( पृ २९ ).

गुणैः सह । चक्षुरात्मा ततो विष्णु सत्यमित्यभिधीयते ॥' इति च । मध्व.

यदेव ते कश्चिदब्रवीत्तच्छृणवामेति । अब्रवीन्मे गर्दभीविपीतो भारद्वाज । श्रोत्रं वै ब्रह्मेति । यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तद्भारद्वाजोऽब्रवीच्छ्रोत्रं वै ब्रह्मेति । अशृण्वतो हि किं स्यादिति । अब्रवीत्तु ते तस्यायतनं प्रतिष्ठाम् । न मेऽब्रवीदिति । एकपाद्वा एतत्सम्राडिति । स वै नो ब्रूहि याज्ञवल्क्य । श्रोत्रमेवाऽऽयतनमाकाशः प्रतिष्ठाऽनन्त इत्येनदुपासीत । काऽनन्तता याज्ञवल्क्य । दिश एव सम्राडिति होवाच । तस्माद्वै सम्राडपि यां कां च दिशं गच्छति नैवास्या अन्तं गच्छति । अनन्ता हि दिशः । दिशो वै सम्राट् श्रोत्रम् । श्रोत्रं वै सम्राट् परमं ब्रह्म । नैनं श्रोत्रं जहाति । सर्वाण्येनं भूतान्यभिक्षरन्ति । देवो भूत्वा देवानप्येति । य एवं विद्वानेतदुपास्ते । हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः । स होवाच याज्ञवल्क्यः । पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥

( १ ) यदेव ते गर्दभीविपीत इति नामतो भरद्वाजो गोत्रतः । श्रोत्रं वै ब्रह्मेति — श्रोत्रे दिग्देवता । अनन्त इत्येनदुपासीत । काऽनन्तता श्रोत्रस्य ? दिश एव श्रोत्रस्यानन्त्यं यस्मात्, तस्माद्वै, सम्राट्, प्राचीमुदीचीं वा यां कांचिदपि दिशं गच्छति, नैवास्या अन्तं गच्छति कश्चिदपि । अतोऽनन्ता हि दिशः, दिशो वै, सम्राट्, श्रोत्रम् । तस्माद्दिगानन्त्यमेव श्रोत्रस्याऽऽनन्त्यम् । शांकर.

( २ ) 'दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्' इति श्रुतेर्दिक्श्रोत्रयोरैक्यमित्यर्थः । रंग.

( ३ ) 'सर्वव्यापी तु भगवाननन्त इति कीर्तितः । दिङ्नामा स तु विज्ञेयो दिक्षुस्थो नित्यदेशनात् ॥' इति च । मध्व.

यदेव ते कश्चिदब्रवीत्तच्छृणवामेति । अब्रवीन्मे सत्यकामो जाबालः । मनो वै ब्रह्मेति । यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तज्जाबालोऽब्रवीन्मनो वै ब्रह्मेति । अमनसो हि किं स्यादिति । अब्रवीत्तु ते तस्याऽऽयतनं प्रतिष्ठाम् । न मेऽब्रवीदिति । एकपाद्वा एतत्सम्राडिति । स वै नो ब्रूहि याज्ञवल्क्य । मन एवायतनमाकाशः प्रतिष्ठाऽऽनन्द इत्येनदुपासीत । काऽऽनन्दता याज्ञवल्क्य । मन एव सम्राडिति होवाच । मनसा वै सम्राट् स्त्रियमभिहार्यते तस्यां प्रतिरूपः पुत्रो जायते स आनन्दः । मनो वै सम्राट् परमं ब्रह्म । नैनं मनो जहाति । सर्वाण्येनं भूतान्यभिक्षरन्ति । देवो भूत्वा देवानप्येति । य एवं विद्वानेतदुपास्ते । हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः । स होवाच याज्ञवल्क्यः । पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥

( १ ) सत्यकाम इति नामतो जबालाया अपत्यं जाबालः । चन्द्रमा मनसि देवता । आनन्द इत्युपनिषत् । यस्मान्मन एवाऽऽनन्दः, तस्मान्मनसा वै, सम्राट्, स्त्रियमभिकामयमानोऽभिहार्यते प्रार्थयते इत्यर्थः । तस्मात् यां स्त्रियमभिकामयमानोऽभिहार्यते, तस्यां प्रतिरूपोऽनुरूपः पुत्रो जायते । स आनन्दहेतुः पुत्रः । स येन मनसा निर्वर्त्यते, तन्मनः आनन्दः । शांकर.

( २ ) स्त्रियमभि स्त्रियं प्रति मनसा हार्यते स्त्रीसंभोगो मनआयत्त इति भावः । प्रतिरूपस्तुल्य इत्यर्थः । आनन्दहेतुत्वान्मनस आनन्दत्वमिति भावः । रंग.

---

(१) बृउ ४।१।५, शमा १४।६।१०।१०—१३ यदेव ते कश्चिदब्रवीत्तच्छृणवामेति ( क एव ते किमब्रवीदिति ) सम्राडपि यां ( सम्राड्यां ) दिशो वै सम्राट् श्रोत्रम् ( श्रोत्रं हि दिशः ), रंग. त्येनद्ु ( त्येतदु ) क्षरन्ति ( रक्षन्ति ) जनको + ( ह ), मध्व जनको + ( ह ), श्रीकर. १।१।१ ( पृ २६ ).

(१) बृउ ४।१।६, शमा. १४।६।१०।१३ —१६ यदेव त कश्चिदब्रवीत्तच्छृणवामेति ( क एव ते किमब्रवीदिति ) तज्जाबालो ( तत्सत्यकामो ) हार्यते ( हर्यति ), रंग. तज्जाबालो ( जाबालो ) एकपाद्वा एतत्सम्राडिति+ ( होवाच ) स वै नो ( स नो ) त्येनदु ( त्येतदु ) क्षरन्ति ( रक्षन्ति ) जनको + ( ह ), श्रीकर १।१।१ ( पृ २६ ).

( ३ ) 'मन.स्थितस्य यद्विष्णो' सबन्धादेव कामत' । जात. सुत' सुखे हेतु. परानन्दो हरि. किमु ॥ ' इति ब्रह्मतर्के ।

मध्व.

यदेव ते कश्चिदब्रवीत्तच्छृणवामेति । अब्रवीन्मे विदग्धः शाकल्य । हृदय वै ब्रह्मेति । यथा मातृमान्पितृमानाचार्यवान् ब्रूयात्तथा तच्छाकल्योऽब्रवीद्धृदय वै ब्रह्मेति । अहृदयस्य हि किꣲ स्यादिति । अब्रवीत्तु ते तस्यायतन प्रतिष्ठाम् । न मेऽब्रवीदिति । एकपाद्वा एतत्सम्राडिति । स वै नो ब्रूहि याज्ञवल्क्य । हृदयमेवायतनमाकाश प्रतिष्ठा स्थितिरित्येनदुपासीत । का स्थितता याज्ञवल्क्य । हृदयमेव सम्राडिति होवाच । हृदय वै सम्राट् सर्वेषा भूतानामायतनम् । हृदयं वै सम्राट् सर्वेषां भूताना प्रतिष्ठा । हृदये ह्येव सम्राट् सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति । हृदय वै सम्राट् परमं ब्रह्म । नैनꣳ हृदय जहाति । सर्वाण्येनं भूतान्यभिक्षरन्ति । देवो भूत्वा देवानप्येति । य एव विद्वानेतदुपास्ते । हस्त्यृषभꣲ सहस्रं ददामीति होवाच जनको वैदेह । स होवाच याज्ञवल्क्य । पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥

( १ ) विदग्ध. शाकल्यो हृदय वै ब्रह्मेति । हृदय वै, सम्राट्, सर्वेषा भूताना आयतनम् । नामरूपकर्मात्मकानि हि भूतानि हृदयाश्रयाणीत्यवोचाम शाकल्य ब्राह्मणे हृदयप्रतिष्ठानि चेति । तस्मात् हृदये ह्येव, सम्राट्, सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति । तस्मात् हृदय स्थितिरित्युपासीत । हृदये च प्रजापतिः देवता ।

शाकर

(१) बृउ ४।१।७, शब्रा १४।६।१०।१६—१९ यदेव ते कश्चिदब्रवीत्तच्छृणवामेति ( क एव ते किमब्रवीदिति ) स्थितता ( स्थितिता ) ( हृदय वै सम्राट् सर्वेषा भूतानामायतनम्० ) हृदये ह्येव सम्राट् सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति ( हृदयेन हि सर्वाणि भूतानि प्रतिष्ठन्ति ), रग त्येनदु ( त्येतदु ) सम्राट् सर्वेषा भूताना प्रतिष्ठा ( सर्वेषा भूताना प्रतिष्ठा ) क्षरन्ति ( रक्षन्ति ), मध्व ( हि० )

( २ ) सदा प्रतिष्ठितानि भवन्ति विशेषतोऽपि प्रतिष्ठितानि सुप्तौ । 'हृदये सर्वेशो व्यापी प्रादेशः पुरुषोत्तमः । जीवानां स्थानमुद्दिष्ट. सर्वदैव सनातन. । हृत्कर्णिकामूलगतः सोऽङ्गुष्ठाग्रप्रमाणकः । मूलेश इति नामास्मिन्सर्वे जीवाः प्रतिष्ठिताः । अङ्गुष्ठमात्रे पुरुषे कर्णिकाग्रस्थिते हरौ । प्रविशन्ति सुषुप्तौ तु प्रबुध्यन्ते ततस्तथा । सोऽय त्रिरूपो भगवान् हृदयाख्य. प्रकीर्तित. ॥ ' इति च । 'स्थानमायतन प्रोक्त प्रतिष्ठाधारकः पुमान्' इति च ।

मध्व.

इन्द्र इति प्रसिद्धो वस्तुत इन्धो नाम दक्षिणाक्षिस्थ पुरुष विराडाख्यपत्नीसहित हृदयाकाशस्थ आत्मा सर्वदिग्रूपप्राणक असङ्ग नेति नेति प्रतिपादित

जनको ह वैदेह कूर्चादुपावसर्पन्नुवाच । नमस्तेऽस्तु याज्ञवल्क्य । अनु मा शाधीति । स होवाच । यथा वै सम्राण्महान्तमध्वानमेष्यन् रथ वा नाव वा समाददीतैवमेवैताभिरुपनिषद्भिः समाहितात्माऽसि । एव वृन्दारक आढ्यः सन्नधीतवेद उक्तोपनिषत्क इतो विमुच्यमानः क्व गमिष्यसीति । नाह तद्भगवन्वेद यत्र गमिष्यमीति । अथ वै तेऽह तद्वक्ष्यामि यत्र गमिष्यसीति । ब्रवीतु भगवानिति ॥

( १ ) जनको ह वैदेहः । यस्मात्सविशेषणानि सर्वाणि ब्रह्माणि जानाति याज्ञवल्क्य, तस्मादाचार्यकत्व हित्वा जनक' कूर्चादासनविशेषादुत्थाय उप समीपमवसर्पन्, पादयोर्निपतन्नित्यर्थः, उवाचोक्तवान् — नमस्ते तुभ्यमस्तु हे याज्ञवल्क्य । अनु मा शाध्यनुशाधि मामित्यर्थ' । इतिशब्दो वाक्यपरिसमाप्त्यर्थ । स होवाच याज्ञवल्क्य. — यथा वै लोके, हे सम्राट्, महान्त दीर्घमध्वानमेष्यन् गमिष्यन्, रथ वा स्थलेन गमिष्यन्, नावं वा जलेन गमिष्यन्समाददीत । एवमेवैतानि ब्रह्माण्येताभिरुपनिषद्भिर्युक्तानि उपासीन' समाहितात्माऽसि,

(१) बृउ ४।२।१, शब्रा १४।६।११।१ जनको ह ( अथ ह जनको ) ( ऽस्तु० ), रग ब्रवीतु+ ( मे ), मध्व यत्र गमिष्यसीति+ ( स होवाच )

अत्यन्तमेताभिरुपनिषद्भिः सयुक्तात्माऽसि । न केवल मुपनिषत्समाहित. । एव वृन्दारक. पूज्यश्चाढयश्चेश्वरो न दरिद्र इत्यर्थ. । अधीतवेदोऽधीतो वेदो येन स त्व अधीतवेदः । उक्ताश्चोपनिषद आचार्यैस्तुभ्य स त्वमुक्तोपनिषत्कः । एव सर्वविभूतिसपन्नोऽपि सन् भयमध्यस्थ एव परमात्मज्ञानेन विनाऽकृतार्थ एव तावदित्यर्थ — यावत्पर ब्रह्म न वेत्सि । इतोऽस्माद्देहाद्विमुच्यमान एताभिर्नौरथस्थानीयाभि· समाहित क्व कस्मिन्गमिष्यसि, किं वस्तु प्राप्स्यसीति । नाह तद्वस्तु, भगवन् पूजावन्, वेद जाने, यत्र गमिष्यामीति । अथ यद्येव न जानीषे यत्र गत. कृतार्थ स्या , अह वै ते तुभ्य तद्वक्ष्यामि यत्र गमिष्यसीति । ब्रवीतु भगवानिति, यदि प्रसन्नो मा प्रति । शकर

( २ ) तत्तदाचार्योपदिष्टाभिर्देवताभिरुपनिषद्भिरत्यन्त समाहितात्माऽसि सपन्नपरलोकसाधनोऽसि । उत्क्रामन् कस्मिन्मार्गे गमिष्यसीति । यत्र गमिष्यसीति यस्मिन्वर्त्मनि गमिष्यसि । अत्रोपकोसलविद्यावद्गतिप्रश्नो गन्तव्यब्रह्मणोऽप्युपलक्षक । रग

( ३ ) स्वयोग्य ज्ञान श्रोतु सिंहासनादवरुह्योपसदन कृत्वोवाच । यत्स्वात्मना प्राप्य मुक्तौ तदुपास्येत मुक्तिर्भवतीत्यतः प्राप्य पृच्छति । 'वृन्दे प्राप्यतमत्वात्तु वृन्दारक इति स्मृतः ' इति च पाद्मे । मध्व

इन्धो ह वै नामैष योऽय दक्षिणेऽक्षन्पुरुष । तं वा एतमिन्धꣲ सन्तमिन्द्र इत्याचक्षते परोक्षेणैव । परोक्षप्रिया इव हि देवा प्रत्यक्षद्विष ॥

( १ ) शृणु । इन्धो ह वै नाम । इन्ध इत्येव नामा, यश्चक्षुर्वै ब्रह्मेति पुरोक्त आदित्यान्तर्गत पुरुष· स एष·, योऽय दक्षिणेऽक्षन्नक्षणि विशेषेण व्यवस्थित —स च सत्यनामा । त वै एत पुरुष, दीप्तिगुणत्वात् प्रत्यक्ष नाम अस्येन्ध इति, तमिन्ध सन्तमिन्द्र इत्याचक्षते परोक्षेण । यस्मात्परोक्षप्रिया इव हि देवा प्रत्यक्षद्विष· प्रत्यक्षनामग्रहण द्विषन्ति । एष त्व वैश्वानर मात्मान सपन्नोऽसि । शकर

( २ ) 'य एष एतस्मिन्मण्डले पुरुष. ' 'यश्चाय दक्षिणेऽक्षन् ' इति दक्षिणाक्षिस्थितस्याऽऽदित्यान्तरवस्थितस्य चैक्यश्रवणादादित्यान्तरवस्थितस्य पुण्डरीकाक्षत्वादिन्द्र निश्चिक्यु । 'परमे व्योमन् ' 'इन्द्रो मायाभि. ' इत्यादिषु परमपुरुषस्येन्द्रशब्दवाच्यत्वप्रसिद्धेश्च नारायण एवात्र दक्षिणाक्षिस्थितपुरुष इति द्रष्टव्यम् । रग

( ३ ) 'राजा हृदयसस्थो य इन्द्रो नाम जनार्दन । स इन्द्रे च यमे चैव सप्राप्यो मुक्तराजभि । तस्मात्ते प्रामुपास्य स विराण्नामा तदाश्रया । श्री —॥' मध्व

अथैतद्वामेऽक्षणि पुरुषरूपमेषाऽस्य पत्नी विराट् । तयोरेष सꣳस्तावो य एषो य एषोऽन्तर्हृदय आकाश । अथैनयोरेतदन्नं य एषोऽन्तर्हृदये लोहितपिण्ड । अथैनयोरेतत्प्रावरण यदेतदन्तर्हृदये जालकमिव । अथैनयोरेषा सृति सचरणी यैषा हृदयादूर्ध्वा नाड्युच्चरति । यथा केश सहस्रधा भिन्न एवमस्यैता हिता नाम नाड्योऽन्तर्हृदये प्रतिष्ठिता भवन्ति । एताभिर्वा एतदास्रवदास्रवति । तस्मादेष प्रविविक्ताहारतर इवैव भवत्यस्माच्छारीरादात्मन. ॥

( १ ) अथैतद्वामेऽक्षणि पुरुषरूप, एषा अस्य पत्नी य त्व वैश्वानरमात्मान सपन्नोऽसि तस्यास्येन्द्रस्य भोक्तुर्भोग्यपा पत्नी, विराडन्न भोग्यत्वादेव । तदेतदन्नाद्यो चैक मिथुन स्वप्ने । कथम् ? तयोरेष·—इन्द्राण्या. इन्द्रस्य चैष सस्ताव , सभूय यत्र सस्तव कुर्वाते अन्योन्य स एष सस्ताव· । कोऽसौ ? य एषोऽन्तर्हृदय आकाशोऽन्तर्हृदये हृदयस्य मासपिण्डस्य मध्ये । अथैनयोरेतद्वक्ष्यमाणमन्न भोज्य स्थितिहेतु· । किं तत् ? य एषोऽन्तर्हृदये लोहितपिण्ड — लोहित एव पिण्डाका-

(१) बृउ ४।२।२, शब्रा १४।६।११।२ इन्धो ह ( स होवाच इन्धो ) क्षेणैव ( क्षेणेव )

(१) बृउ ४।२।३, शब्रा १४।६।११।३, ४ ऽक्षणि ( ऽक्षिणि ) सृति + ( सती ) यथा केश प्रतिष्ठिता भवन्ति ( ता वा अस्यैता हिता नाम नाड्यो यथा केश सहस्रधा भिन्न. ) एतदास्र ( एतदास्र ) इवैव ( इव ), रग ( दास्रव० ), मध्व ऽक्षणि ( ऽक्षिणि )

रापन्नो लोहितपिण्ड । अन्न जग्ध द्वेधा परिणमते । यत्स्थूल तदधो गच्छति । यदन्यत्तत्पुनरग्निना पच्यमान द्वेधा परिणमते — यो मध्यमो रस स लोहितादिक्रमेण पाञ्चभौतिक पिण्ड शरीरमुपचिनोति । योऽणिष्ठो रस. स एष लोहितपिण्ड इन्द्रस्य लिङ्गात्मनो हृदये मिथुनीभूतस्य, य तैजसमाचक्षते । स तयोरिन्द्रेन्द्राण्योर्हृदये मिथुनीभूतयो. सूक्ष्मासु नाडीष्वनुप्रविष्ट स्थितिहेतुर्भवति । तदेतदुच्यते — अथैनयोरेतदन्नमित्यादि । किंचान्यत् । अथैनयोरेतत्प्रावरणम् — भुक्तवतो स्वपतोश्च प्रावरण भवति लोके, तत्सामान्य हि कल्पयति श्रुति. । किं तदिह प्रावरणम्? यदेतदन्तर्हृदये जालकमिव अनेकनाडीछिद्रबहुलत्वाज्जालकमिव । अथैनयोरेषा सृतिर्मार्ग:, सचरतोऽनयेति सचरणी, स्वप्नाज्जागरित देशागमनमार्ग । का सा सृति ? यैषा हृदयात् हृदय देशादूर्ध्वाभिमुखी सती उच्चरति नाडी । तस्या. परिमाणमिदमुच्यते — यथा लोके केश· सहस्रधा भिन्नोऽत्यन्तसूक्ष्मो भवत्येव सूक्ष्मा अस्य देहस्य सबन्धिन्यो हिता नाम हिता इत्येव ख्याता नाड्य., ताश्चान्तर्हृदये मासपिण्डे प्रतिष्ठिता भवन्ति । हृदयाद्विप्ररूढास्ता. सर्वत्र कदम्बकेसरवत् । एताभि. नाडीभिरत्यन्तसूक्ष्माभि एतदन्नमास्रवद्गच्छदास्रवति गच्छति । तदेतद्देवताशरीरमनेनान्नेन दामभूतेनोपचीयमान तिष्ठति । तस्मात् — यस्मात्स्थूलेनान्नेनोपचित. पिण्ड:, इद तु देवताशरीर लिङ्ग सूक्ष्मेणान्नेनोपचित तिष्ठति, पिण्डोपचयकरमप्यन्न प्रविविक्तमेव मूत्रपुरीषादिस्थूलमपेक्ष्य, लिङ्गस्थितिकर त्वन्न ततोऽपि सूक्ष्मतरम् — अत प्रविविक्ताहार पिण्ड । तस्मात्प्रविविक्ताहारादपि प्रविविक्ताहारतर एष लिङ्गात्मा इवैव भवति, अस्माच्छारीराच्छरीरमेव शारीर तस्माच्छारीरात्, आत्मनो वैश्वानरात् तैजस. सूक्ष्मान्नोपचितो भवति ।

शकर.

( २ ) पुरुषरूप मनुष्याकारमित्यर्थ· । इन्द्रस्य पत्नी विराड्वामाक्षिस्था मनुष्याकारा तत्पत्नी साक्षाल्लक्ष्मीरेव । तैत्तिरीयके 'विराड्बृहती श्रीरसीन्द्रपत्नी धर्मपत्नी' ( तैब्रा ३।११।१।२० ) इतीन्द्रपत्न्या. श्रीशब्दवाच्यत्वावगमात् । तयोर्दपत्योरेष वक्ष्यमाणः सस्ताव एकान्त सभोगभूमि. । 'अधिकरणे घञ्' । एष हृदयकमलमध्य आकाश इत्यर्थ । एतत्सर्वं ज्योतिरधिकरणे व्यासार्यैरुक्तम् । अथैनयोरेतदन्न भोग्य प्रसादस्थानीयम् । य एषोऽन्तर्हृदये लोहितपिण्ड. । कमलकर्णिकाकारो मासपिण्ड । अथैनयोरेतदिति । अनयोर्दपत्योरेतदेव प्रावरण यद्धृदयो लूताजालवद्वक्ष्यमाणहितनामकनाडीनिचयसपन्न जालक तदेव पट्टवस्त्रमनयोरित्यर्थ । अथैनयोरेषेति । एतस्माद्धृदयादूर्ध्ववर्तिनी या नाड्युच्चरति यैषा ब्रह्मलोकसौधगतदपतिप्राप्तिहेतुभूता सचरणी सृतिर्निरवग्रहमार्ग इत्यर्थ । यथा केश इति । हृदयादन्त· प्रतिष्ठितकेशसहस्रशोऽतिसूक्ष्महितनामकनाडीभिरेतज्जीवजातमास्रवति । आ समन्तात्स्रवति ससरति एतद्भूतजातमास्रवति ससरतीत्यर्थ । तस्मादेष इति । यस्माद्धेतोर्दक्षिणाक्षिस्थ पुरुषो विग्रहगुणादिभिर्दीप्यमानतेजोधो भवति तस्मादेवास्माच्छरीरभूताज्जीवात्मनो दक्षिणाक्षिस्थ एष पुरुष. प्रविविक्ताहारतर इवैव भवति । अतिप्रकृष्टान्नवदमृतवदिति यावत् । तद्भोग्यो भवतीत्यर्थ. । अत्रैषा सृति. सचरणीत्युक्त्या गमनमार्ग उक्तो भवति ।

रग.

( ३ ) 'तयो. स्तुतिरेषा हि प्राणेन क्रियते सदा । कर्णौ पिधाय या ज्ञेया सर्ववेदात्मिका हि सा । काशनात्सवजीवानामाकाश इति सा स्तुति. । जाग्रतां सर्वजीवाना स विष्णुर्दक्षिणाक्षिगः ॥'

मध्व

**तस्य प्राची दिक्प्राञ्च प्राणाः । दक्षिणा दिग्दक्षिणे प्राणा । प्रतीची दिक्प्रत्यञ्च प्राणा । उदीची दिगुदञ्च प्राणा· । ऊर्ध्वा दिगूर्ध्वा प्राणा. । अवाची दिगवाञ्चः प्राणा । सर्वा दिश. सर्वे प्राणा. ।**

(१) बृउ. ४।२।४, शब्रा १४।६।११।५,६ तस्य+ ( वा एतस्य पुरुषस्य ) रदक्षिणे ( रदक्षिणा ) असङ्गो न हि सज्यते । असितो न व्यथते ( असङ्गोऽसितो न सज्यते न व्यथते ) ( न रिष्यति० ) अभय त्वा गच्छताद्याज्ञवल्क्य ( नमस्ते याज्ञवल्क्याभय त्वागच्छतात् ) ( नमस्तेऽस्तु० ) मस्मि ( मस्मीति ), अशकर १।१।४ ( पृ ६० ), २।१।१४ ( पृ ४६७ ), २७, ४।३।१४ ( पृ. ११११ ), भास्कर ३।४।५०, रग सज्यते ( सज्जते ) जनको + ( ह ), मध्व रदक्षिणे ( रदक्षिणाः ) जनको + ( ह ), श्रीकर १।१।७, ३।२।१७, ४१, ४।२।१४.

*** स एष नेति नेत्यात्मा । अगृह्यो न हि गृह्यते । अशीर्यो न हि शीर्यते । असङ्गो न हि सज्यते । असितो न व्यथते । न रिष्यति । अभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्यः । स होवाच जनको वैदेहोऽभयं त्वा गच्छताद्याज्ञवल्क्य यो नो भगवन्नभयं वेदयसे । नमस्तेऽस्तु । इमे विदेहा अयमहमस्मि ॥**

( १ ) स एष हृदयभूतस्तैजसः सूक्ष्मभूतेन प्राणेन विध्रियमाणः प्राण एव भवति । तस्यास्य विदुषः क्रमेण वैश्वानरात्तैजसं प्राप्तस्य हृदयात्मानमापन्नस्य हृदयात्मनश्च प्राणात्मानमापन्नस्य प्राची दिक् प्राञ्चः प्राग्गताः प्राणाः । तथा दक्षिणा दिग्दक्षिणे प्राणाः । तथा प्रतीची दिक् प्रत्यञ्चः प्राणाः । उदीची दिगुदञ्चः प्राणाः । ऊर्ध्वा दिगूर्ध्वाः प्राणाः । अवाची दिगवाञ्चः प्राणाः । सर्वा दिशः सर्वे प्राणाः । एवं विद्वान्क्रमेण सर्वात्मकं प्राणमात्मत्वेनोपगतो भवति । तं सर्वात्मानं प्रत्यगात्मन्युपसंहृत्य द्रष्टुर्हि द्रष्टृभावं नेति नेतीत्यात्मानं तुरीयं प्रतिपद्यते । यमेष विद्वाननेन क्रमेण प्रतिपद्यते, स एष नेति नेत्यात्मेत्यादि न रिष्यतीत्यन्तं व्याख्यातमेतत् । अभयं वै जन्ममरणादिनिमित्तभयशून्यं, हे जनक, प्राप्तोऽसि—इति हैवं किलोवाचोक्तवान्याज्ञवल्क्यः । तदेतदुक्तं—अथ वै तेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति । स होवाच जनको वैदेहोऽभयमेव त्वा त्वामपि गच्छताद्गच्छतु, यस्त्वं नोऽस्मान् हे याज्ञवल्क्य भगवन्पूजावन्नभयं ब्रह्म वेदयसे ज्ञापयसि प्रापितवानुपाधिकृताज्ञानव्यवधानापनयनेन इत्यर्थः । किमन्यदहं विद्यानिष्क्रयार्थं प्रयच्छामि, साक्षादात्मानमेव दत्तवते । अतो नमस्तेऽस्तु । इमे विदेहास्तव यथेष्टं भुज्यन्तामयं चाहमस्मि दासभावे स्थितः । यथेष्टं मां राज्यं च प्रतिपद्यस्वेत्यर्थः । शंकर.

( २ ) दक्षिणाक्षिस्थस्य प्रकृतस्य पुरुषोत्तमस्य प्रकारान्तरेणापि शरीरगतजीववैलक्षण्यं द्रढयति । तस्येति । जीवस्तु सर्वासु दिक्षु प्राणेन्द्रियप्रचुरः प्राणेन्द्रियोपकरणीति यावत् । एवं जीवस्य रूपमुक्त्वैतद्वैलक्षण्यमाह—स एष इति । स एष दक्षिणाक्षिस्थितः पुरुषः इन्द्रियाद्यग्राह्यत्वविशरणशून्यत्वनिर्लेपत्वशोकमृत्युरहितत्ववान् नेति नेति इति श्रुतिभिरितरविलक्षणत्वेन निर्दिष्ट आत्मेत्यर्थः । तादृशमुपास्यत्वाभयं परमात्मानं प्राप्तोऽसि प्राप्तवानसि उपासनोपकरणवत्त्वात् । स होवाचेति । हे याज्ञवल्क्य त्वदुक्तमभयमागच्छतात् । ‘ आशिषि तातङ् ’ । ब्रह्मप्राप्तिर्भूयादित्यर्थः । रंग

( ३ ) ‘ तस्य पूर्वदिशीन्द्राग्नी सभार्यौ सप्रतिष्ठितौ । यमराक्षसौ दक्षिणस्यां वरुणो वायुरेव च । पश्चिमस्यामुत्तरस्यां सोमेशानौ प्रतिष्ठितौ । ब्रह्मा प्रधानवायुश्च तथोर्ध्वायां दिशि स्थितौ । अधरायां शेषकामौ सभार्यौ सर्व एव च । एकैकस्यां हि चत्वारो नेतृत्वात्प्राणनामकाः । इन्द्रियाभिमतेश्चैव प्राणा इत्येव शब्दिताः ॥ ’ त्वत्प्रसादाद्यदभयमस्माकं प्राप्तं तदेव तव तृप्तयेऽस्तु नान्यद्वयं प्रत्युपकर्तुं शक्नुम इत्यर्थः । स भगवान्स्वकृतेन तुष्येदितिवत् । इन्द्रो दीप्तः । ‘ जीवभोगस्य भोक्तृत्वो जीवस्तद्भागभुङ्न तु । विविक्तभुगितोऽसौ भगवान्पुरुषोत्तमः ॥ ’ इति पाद्मे । मध्व.

आत्मैवज्योतिः पुरुषः

**जनकं ह वैदेहं याज्ञवल्क्यो जगाम । स मेने न वदिष्य इति । अथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समूदाते । तस्मै ह याज्ञवल्क्यो वरं ददौ । स ह कामप्रश्नमेव वव्रे । तं हास्मै ददौ । तं ह सम्राडेव पूर्वं पप्रच्छ ॥**

( १ ) जनकं ह वैदेहं याज्ञवल्क्यो जगामेत्यस्याभिसम्बन्धः । विज्ञानमय आत्मा साक्षादपरोक्षाद्ब्रह्म सर्वान्तरः पर एव — ‘ नान्योऽतोऽस्ति द्रष्टा नान्यदतोऽस्ति द्रष्टृ ’ इत्यादिश्रुतिभ्यः । स एष इह प्रविष्टो वदनादिलिङ्गः अस्ति व्यतिरिक्त इति मधुकाण्डेऽजातशत्रुसंवादे प्राणादिकर्तृस्वभाकर्तृत्वप्रत्याख्यानेनाधिगतोऽपि सन् पुनः प्राणनादिलिङ्गमुपन्यस्य औषस्तप्रश्ने प्राणनादिलिङ्गो यः सामान्येनाधिगतः ‘प्राणेन प्राणिति’ इत्यादिना, ‘दृष्टेर्द्रष्टा’ इत्यादिना अलुप्तशक्तिस्वभावोऽधिगतः । तस्य

* ‘ स एष नेति ’ इति वाक्यस्य पाठभेदादिकं बृउ. ३।९।२६ ( पृ ११७६ ) इत्यत्र द्रष्टव्यम् ।

(१) बृउ ४।३।१, शब्रा १४।७।१।१ स मेने न ( समेनेन ) समूदाते ( समदतु ) पूर्वं ( पूर्वः ), रंग पूर्वं ( पूर्वं ), मध्व स मेने न ( समेनेन ) पूर्वं ( पूर्वं ).

च परोपाधिनिमित्त ससार. — यथा रज्जूषरशुक्तिकागगनादिषु सर्पोदकरजतमलिनत्वादि परोपाध्यारोपणनिमित्तमेव, न स्वत, तथा । निरुपाधिको निरुपाख्यो नेति नेतीति व्यपदेश्य साक्षादपरोक्षात्सर्वान्तर आत्मा ब्रह्माक्षरमन्तर्यामी प्रशास्ता औपनिषदः पुरुषो विज्ञानमानन्द ब्रह्मेत्यधिगतम् । तदेव पुनरिन्धसज्ञ' प्रविविक्ताहार । ततोऽन्तर्हृदये लिङ्गात्मा प्रविविक्ताहारतर । ततः परेण जगदात्मा प्राणोपाधि । ततोऽपि प्रविलाप्य जगदात्मानमुपाधिभूत रज्ज्वादाविव सर्पादिक विद्यया, 'स एष नेति नेति' इति साक्षात्सर्वान्तर ब्रह्माधिगतम् । एवमभय परिप्रापितो जनको याज्ञवल्क्येन आगमत. सक्षेपत. । अत्र च जाग्रत्स्वप्नसुषुप्ततुरीयाण्युपन्यस्तानि अन्यप्रसङ्गेन, इन्ध., प्रविविक्ताहारतर, सर्वे प्राणा., स एष नेति नेतीति । इदानीं जाग्रत्स्वप्नादिद्वारेणैव महता तर्केण विस्तरतोऽधिगमः कर्तव्य । अभय प्रापयितव्यम् । सद्भावश्चात्मनो विप्रतिपत्त्याशङ्कानिराकरणद्वारेण — व्यतिरिक्तत्व शुद्धत्व स्वयज्योतिष्ट्व अलुप्तशक्तिस्वरूपत्व निरतिशयानन्दस्वाभाव्य अद्वैतत्व चाधिगन्तव्यमितीदमारभ्यते । आख्यायिका तु विद्यासप्रदानग्रहणविधिप्रकाशनार्था, विद्यास्तुतये च विशेषत', वरदानादिसूचनात् । जनक ह वैदेह याज्ञवल्क्यो जगाम । स च गच्छन्नेव मेने चिन्तितवान्, न वदिष्ये किञ्चिदपि राज्ञे । गमनप्रयोजन तु योगक्षेमार्थम् । न वदिष्य इत्येवसकल्पोऽपि याज्ञवल्क्यो यद्यज्जनक. पृष्टवास्तत्तत्प्रतिपेदे । तत्र को हेतु सकल्पितस्यान्यथाकरणे — इत्यत्राख्यायिकामाचष्टे । पूर्वत्र किल जनकयाज्ञवल्क्ययो सवाद आसीदग्निहोत्रे निमित्ते । तत्र जनकस्याग्निहोत्रविषय विज्ञानमुपलभ्य परितुष्टो याज्ञवल्क्य स्तस्मै जनकाय ह किल वर ददौ । स च जनको ह कामप्रश्नमेव वर वव्रे वृतवान् । त च वर हास्मै ददौ याज्ञवल्क्य । तेन वरप्रदानसामर्थ्येन अव्याचिख्यासुमपि याज्ञवल्क्य तूष्णीं स्थितमपि सम्राडेव जनक. पूर्वे पप्रच्छ । तत्रैवानुक्तिः, ब्रह्मविद्याया कर्मणा विरुद्धत्वात् । विद्यायाश्च स्वातन्त्र्यात् । स्वतन्त्रा हि ब्रह्मविद्या सहकारिसाधनान्तरनिरपेक्षा पुरुषार्थसाधनेति च ।

शकर.

( २ ) ' याज्ञवल्क्यो वर दत्त्वा राज्ञा सवादकामुकः । वैदेहनगर प्रायात्सन्तो यच्छास्त्रलोलुपा ॥ ' इति स्कान्दे । तथापि सम्राडेव पूर्वे पप्रच्छ ।

मध्व.

**याज्ञवल्क्य किंज्योतिरय पुरुष इति । आदित्यज्योति. सम्राडिति होवाच । आदित्येनैवाय ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति । एवमेवैतद्याज्ञवल्क्य ॥**

( १ ) हे याज्ञवल्क्येत्येव सम्बोध्याभिमुखीकरणाय, किंज्योतिरय पुरुष इति — किमस्य पुरुषस्य ज्योति', येन ज्योतिषा व्यवहरति ? सोऽय किंज्योतिः ? अय प्राकृत. कार्यकरणसघातरूप. शिर.पाण्यादिमान्पुरुषः पृच्छ्यते — किमय स्वावयवसघातबाह्येन ज्योतिरन्तरेण व्यवहरति, आहोस्वित्स्वावयवसंघातमध्यपातिना ज्योतिषा ज्योतिष्कार्ये अय पुरुषो निर्वर्तयति — इत्येतदभिप्रेत्य — पृच्छति । किञ्चात., यदि व्यतिरिक्तेन यदि वाऽव्यतिरिक्तेन ज्योतिषा ज्योतिष्कार्यं निर्वर्तयति ? शृणु तत्र कारणम् । यदि व्यतिरिक्तेनैव ज्योतिषा ज्योतिष्कार्यनिर्वर्तकत्व, अस्य स्वभावो निर्धारितो भवति, ततोऽदृष्टज्योतिष्कार्यविषयेऽप्यनुमास्यामहे व्यतिरिक्तज्योतिर्निमित्तमेवेद कार्यमिति । अथाव्यतिरिक्तेनैव स्वात्मना ज्योतिषा व्यवहरति, ततोऽप्रत्यक्षेऽपि ज्योतिषि ज्योतिष्कार्यदर्शनेऽव्यतिरिक्तमेव ज्योतिरनुमेयम् । अथानियम एव — व्यतिरिक्तमव्यतिरिक्त वा ज्योतिः पुरुषस्य व्यवहारहेतु, ततोऽनध्यवसाय एव ज्योतिर्विषये — इत्येव मन्वान. पृच्छति जनको याज्ञवल्क्य — किंज्योतिरय पुरुष इति ।

ननु एवमनुमानकौशले जनकस्य किं प्रश्नेन, स्वयमेव कस्मान्न प्रतिपद्यत इति — सत्यमेतत् । तथापि लिङ्गलिङ्गिसबन्धविशेषाणा अत्यन्तसौक्ष्म्यात् दुरवबोधता मन्यते बहूनामपि पण्डिताना, किमुतैकस्य । अत एव हि धर्मसूक्ष्मनिर्णये परिषद्व्यापार इष्यते, पुरुषविशेषश्चापेक्ष्यते । दशावरा परिषत्, त्रयो वैको वेति ।

(१) बृउ ४।३।२, शब्रा १४।७।१।२ विपल्येती ( विपर्येती ), वल्लभ १।३।४२, विज्ञान १।१।२० ज्योतिरय ( ज्योतिरेवाय )

तस्माद्यद्यप्यनुमानकौशल राज्ञ., तथापि तु युक्तो याज्ञवल्क्य. प्रष्टु, विज्ञानकौशलतारतम्योपपत्तेः पुरुषाणाम् । अथवा श्रुतिः स्वयमेव आख्यायिकाव्याजेन अनुमानमार्गमुपन्यस्य अस्मान् बोधयति पुरुषमतिमनुसरन्ती ।

याज्ञवल्क्योऽपि जनकाभिप्रायाभिज्ञतया व्यतिरिक्तमात्मज्योतिर्बोधयिष्यज्ञनक व्यतिरिक्तप्रतिपादकमेव लिङ्ग प्रतिपेदे, यथा—प्रसिद्धमादित्यज्योति. सम्राडिति होवाच। कथम्? आदित्येनैव स्वावयवसघातव्यतिरिक्तेन चक्षुषोऽनुग्राहकेण ज्योतिषाऽय प्राकृत. पुरुष. आस्ते उपविशति, पल्ययते पर्येति क्षेत्रमरण्य वा, तत्र गत्वा कर्म कुरुते, विपल्येति विपर्येति च यथागतम् । अत्यन्तव्यतिरिक्तज्योतिष्ट्वप्रसिद्धताप्रदर्शनार्थं अनेकविशेषणम् । बाह्यानेकज्योति.प्रदर्शन च लिङ्गस्याव्यभिचारित्वप्रदर्शनार्थम् । एवमेवैतद्याज्ञवल्क्य । शकर

( २ ) किंज्योतिरिति बहुव्रीहि' । ' उपसर्गस्यायतौ ' ( पा. सू. ८।२।१९ ) इति लत्वम् । रग

**अस्तमित[1] आदित्ये याज्ञवल्क्य किंज्योतिरेवाय पुरुष इति ।चन्द्रमा एवास्य ज्योतिर्भवतीति। चन्द्रमसैवाय ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति । एवमेवैतद्याज्ञवल्क्य ॥**

तथाऽस्तमिते आदित्ये, याज्ञवल्क्य, किंज्योतिरेवाय पुरुष इति —— चन्द्रमा एवास्य ज्योतिः । शकर.

**अस्तमित[2] आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते किंज्योतिरेवाय पुरुप इति । अग्निरेवास्य ज्योतिर्भवतीति। अग्निनैवाय ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति । एवमेवैतद्याज्ञवल्क्य ॥**

(१) बृउ ४।३।३, शब्रा १४।७।१।३ चन्द्रमा एवास्य ज्योतिर्भवतीति । चन्द्रमसैवाय (चन्द्रज्योतिः सम्राडिति होवाच । चन्द्रेणैवाय ) विपल्येती ( विपर्येती ), रग मेवैतद्या ( मेव या )

(२) बृउ ४।३।४, शब्रा १४।७।१।४ अग्निरेवास्य ज्योतिर्भवतीति ( अग्निज्योति सम्राडिति होवाच ) विपल्येतीति ( विपर्येतीति )

अस्तमिते आदित्ये, चन्द्रमस्यस्तमितेऽग्निर्ज्योतिः । शकर.

**अस्तमित[1] आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ किंज्योतिरेवाय पुरुष इति । वागेवास्य ज्योतिर्भवतीति । वाचैवाय ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति । तस्माद्वै सम्राडपि यत्र स्व पाणिर्न विनिर्ज्ञायतेऽथ यत्र वागुच्चरत्युपैव तत्र न्येतीति । एवमेवैतद्याज्ञवल्क्य ॥**

( १ ) शान्तेऽग्नौ वाग्ज्योतिः । वागिति शब्दः परिगृह्यते । शब्देन विषयेण श्रोत्रमिन्द्रिय दीप्यते । श्रोत्रेन्द्रिये सप्रदीप्ते, मनसि विवेक उपजायते । तेन मनसा बाह्यां चेष्टा प्रतिपद्यते — 'मनसा ह्येव पश्यति मनसा शृणोति' इति ब्राह्मणम् । कथ पुनर्वाग्ज्योतिरिति, वाचो ज्योतिष्ट्वमप्रसिद्धमित्यत आह——तस्माद्वै सम्राट्, यस्माद्वाचा ज्योतिषाऽनुगृहीतोऽय पुरुषो व्यवहरति, तस्मात्प्रसिद्धमेतद्वाचो ज्योतिष्ट्वम् । कथ? अपि——यत्र यस्मिन्काले प्रावृषि प्रायेण मेघान्धकारे सर्वज्योतिःप्रत्यस्तमये स्वोऽपि पाणिर्हस्तो न विस्पष्ट निर्ज्ञायते — अथ तस्मिन्काले सर्वचेष्टानिरोधे प्राप्ते बाह्यज्योतिषोऽभावाद्यत्र वागुच्चरति, श्वा वा भषति, गर्दभो वा रौति, उपैव तत्र न्येति——तेन शब्देन ज्योतिषा श्रोत्रमनसोर्नैरन्तर्यं भवति, तेन ज्योतिष्कार्यत्व वाक् प्रतिपद्यते, तेन वाचा ज्योतिषोपन्येत्येव उपगच्छत्येव तत्र सनिहितो भवतीत्यर्थ. । तत्र च कर्म कुरुते, विपल्येति । तत्र वाग्ज्योतिषो ग्रहण गन्धादीनामुपलक्षणार्थम् । गन्धादिभिरपि हि घ्राणादिष्वनुगृहीतेषु प्रवृत्तिनिवृत्त्यादयो भवन्ति । तेन तैरप्यनुग्रहो भवति कार्यकरणसघातस्य । एवमेवैतद्याज्ञवल्क्य । शकर.

( २ ) यत्र देवदत्तस्य वा यज्ञदत्तस्य वाऽहमत्र तिष्ठामीति शब्दो निर्गच्छति तत्र तदाऽत्राऽसौ वर्तत इति ज्ञात्वोपन्येत्येव समीपे नितरामेति गच्छतीत्यर्थ । ततश्च शब्दद्वारा श्रोत्र प्रकाशक भवतीत्यर्थ' । रग

(१) बृउ ४।३।५, शब्रा १४।७।१।५ वागेवास्य ज्योतिर्भवतीति ( वाग्ज्योति सम्राडिति होवाच ) विपल्येतीति ( विपर्येतीति ) न्येती ( ण्येती ), ब्रशाकर- १।१।२४; श्रीकर. १।१।२५.

**अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुष इति । आत्मैवास्य ज्योतिर्भवतीति । आत्मनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति ॥**

(१) शान्तायां पुनर्वाचि, गन्धादिष्वपि च शान्तेषु बाह्येष्वनुग्राहकेषु, सर्वप्रवृत्तिनिरोधः प्राप्तोऽस्य पुरुषस्य । एतदुक्तं भवति — जाग्रद्विषये बहिर्मुखानि करणानि चक्षुरादीन्यादित्यादिज्योतिर्भिरनुगृह्यमाणानि यदा, तदा स्फुटतरः संव्यवहारोऽस्य पुरुषस्य भवतीति । एवं तावज्जागरिते स्वावयवसंघातव्यतिरिक्तेनैव ज्योतिषा ज्योतिष्कार्यसिद्धिरस्य पुरुषस्य दृष्टा । तस्मात्ते वयं मन्यामहे — सर्वबाह्यज्योतिःप्रत्यस्तमयेऽपि स्वप्नसुषुप्तकाले जागरिते च तादृगवस्थायां स्वावयवसंघातव्यतिरिक्तेनैव ज्योतिषा ज्योतिष्कार्यसिद्धिरस्येति । दृश्यते च स्वप्ने ज्योतिष्कार्यं सिद्धि — बन्धुसंगमनवियोगदर्शनं देशान्तरगमनादि च । सुषुप्ताच्चोत्थानं सुखमहमस्वाप्सं न किंचिदवेदिषमिति । तस्मादस्ति व्यतिरिक्तं किमपि ज्योतिः । किं पुनस्तच्छान्तायां वाचि ज्योतिर्भवतीति । उच्यते — आत्मैवास्य ज्योतिर्भवतीति । आत्मेति कार्यकरणस्वावयवसंघातव्यतिरिक्तं कार्यकरणावभासकं आदित्यादिबाह्यज्योतिर्वत्स्वयमन्येनानवभास्यमानं अभिधीयते ज्योतिः । अन्तःस्थं च तत्पारिशेष्यात् — कार्यकरणव्यतिरिक्तं तदिति तावत्सिद्धम् । यच्च कार्यकरणव्यतिरिक्तं कार्यकरणसंघातानुग्राहकं च ज्योतिस्तद्बाह्यैश्चक्षुरादिकरणैरुपलभ्यमानं दृष्टम् । न तु तथा तच्चक्षुरादिभिरुपलभ्यते, आदित्यादिज्योतिःषूपरतेषु । कार्यं तु ज्योतिषो दृश्यते यस्मात्, तस्मादात्मनैवायं ज्योतिषा आस्ते पल्ययते कर्म कुरुते विपल्येतीति । तस्मान्नूनमन्तःस्थं ज्योतिरित्यवगम्यते । किंच आदित्यादिज्योतिर्विलक्षणं तदभौतिकं च । स एव हेतुर्यच्चक्षुराद्यग्राह्यत्वं, आदित्यादिवत् । शंकर

(२) स्वप्ने आत्मैव प्रकाशको भवतीत्यर्थः । रंग.

उभयलोकस्थ विज्ञानमय आत्मा जाग्रत्स्वप्नसुषुप्तिसंचारी, स एव अपहतपाप्मा अभय स्वयंज्योति अद्वैतो द्रष्टा अविनाशी ब्रह्मलोकरूप परमानन्द, अवृजिन· अकामहत श्रोत्रिय एव परमानन्दरूप ब्रह्मलोक

*** कतम आत्मेति । योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः । स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव । स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि ॥**

(१) यद्यपि व्यतिरिक्तत्वादि सिद्धं, तथापि समानजातीयानुग्राहकत्वदर्शननिमित्तभ्रान्त्या करणानामेवान्यतमो व्यतिरिक्तो वा इत्यविवेकतः पृच्छति— कतम इति । न्यायसूक्ष्मतायां दुर्विज्ञेयत्वादुपपद्यते भ्रान्तिः । अथवा शरीरव्यतिरिक्ते सिद्धेऽपि करणानि सर्वाणि विज्ञानवन्तीव, विवेकतः आत्मनोऽनुपलब्धत्वात् । अतोऽहं पृच्छामि—कतम आत्मेति । कतमोऽसौ देहेन्द्रियप्राणमनःसु, यस्त्वयोक्तः आत्मा, येन ज्योतिषाऽऽस्ते इत्युक्तम् । अथवा योऽयमात्मा त्वयाऽभिप्रेतो विज्ञानमयः, सर्वे इमे प्राणा विज्ञानमया इव, एषु प्राणेषु कतमः — यथा समुदितेषु ब्राह्मणेषु, सर्वे इमे

(१) बृउ ४।३।६, शब्रा १४।७।१।६ आत्मैवास्य ज्योतिर्भवतीति ( आत्मज्योतिः सम्राडिति होवाच ) विपल्ये ('विपर्ये ), ब्रशंकर १।३।२२, रंग भवतीति ( भवति ) विपल्येतीति + ( एवमेवैतद्याज्ञवल्क्य )

* छाउ ६।२।१ ( पृ. ८८८ ) इत्यत्रापि भाष्याणि द्रष्टव्यानि ।

(१) बृउ ४।३।७, शब्रा. १४।७।१।७ प्राणेषु हृद्यन्तर्ज्योति पुरुष ( पुरुषः प्राणेषु हृद्यन्तर्ज्योतिः ) लोकावनुम ( लोकौ स ) स हि ( सधीः ) ( मृत्यो रूपाणि० ), ब्रशंकर १।३।४२, २।३।२४, ३०, ४० स हि ( सधीः ), ३।३।१७, भास्कर १।३।२०, ४२, २।३।३० संचर ( संसर ), ३।३।३९ प्राणेषु हृद्यन्तर्ज्योति पुरुषः ( पुरुष प्राणेषु हृद्यन्तर्ज्योतिः ), रामानुज. १।१।१ ( पृ ४२ ), १।३।४३, २।३।१९, २२, ७५ आत्मेति ( आत्मा ), ब्रमध्व. १।३।४०; श्रीकंठ २।३।७५ योऽयं ( योऽपि ), श्रीकर १।३।४२, २।३।१७, २०, २३, २८, ३।३।४१, वल्लभ १।३।४२, २।३।३९, विज्ञान. १।१।१७, २।३।३०, ४०, ४९; बलदेव. १।३।४१, २।३।२०

तेजस्विन' कतम एषु षडङ्गविदिति । पूर्वस्मिन्व्याख्याने कतम आत्मेत्येतावदेव प्रश्नवाक्य, योऽय विज्ञानमय इति प्रतिवचनम् । द्वितीये तु व्याख्याने प्राणेष्वित्ये वमन्त प्रश्नवाक्यम् । अथवा सर्वमेव प्रश्नवाक्य — विज्ञानमयो हृद्यन्तर्ज्योतिः पुरुष' कतम इत्येतदन्तम् । योऽय विज्ञानमय इत्येतस्य शब्दस्य निर्धारितार्थविशेष-विषयत्व, कतम आत्मेतीतिशब्दस्य प्रश्नवाक्यपरि-समाप्त्यर्थत्व—व्यवहितसबन्धमन्तरेण युक्तमिति कृत्वा, कतम आत्मेतीत्येवमन्तमेव प्रश्नवाक्य, योऽयमित्यादि पर सर्वमेव प्रतिवचनमिति निश्चीयते ।

योऽयमित्यात्मनः प्रत्यक्षत्वान्निर्देश. । विज्ञानमयो विज्ञानप्रायो बुद्धिविज्ञानोपाधिसपर्काविवेकाद्विज्ञानमय इत्युच्यते—बुद्धिविज्ञानसपृक्त एव हि यस्मादुपलभ्यते, राहुरिव चन्द्राऽऽदित्यसपृक्त । बुद्धिर्हि सर्वार्थकरण, तम सीव प्रदीपः पुरोऽवस्थित' । 'मनसा ह्येव पश्यति मनसा शृणोति' इति ह्युक्तम् । बुद्धिविज्ञानालोकविशिष्टमेव हि सर्वं विषयजातमुपलभ्यते, पुरोऽवस्थितप्रदीपालोकविशि ष्टमिव तमसि । द्वारमात्राणि त्वन्यानि करणानि बुद्ध । तस्मात्तेनैव विशेष्यते — विज्ञानमय इति । येषा पर-मात्मविज्ञप्तिविकार इति व्याख्यान, तेषा 'विज्ञानमय' 'मनोमय' इत्यादौ विज्ञानमयशब्दस्य अन्यार्थदर्शना दश्रौतार्थताऽवसीयते । सदिग्धश्च पदार्थोऽन्यत्र निश्चित-प्रयोगदर्शनान्निर्धारयितु शक्य, वाक्यशेषात्, निश्चि तन्यायबलाद्वा । सधीरिति चोत्तरत्र पाठात् । हृद्यन्त इति वचनाद्युक्त विज्ञानप्रायत्वमेव । प्राणेष्विति व्यतिरेकप्रदर्श नार्था सप्तमी—यथा वृक्षेषु पाषाण इति सामीप्य लक्षणा । प्राणेषु हि व्यतिरेकाव्यतिरेकता सदिह्यत आत्मन. । प्राणेषु प्राणेभ्यो व्यतिरिक्त इत्यर्थ. । यो हि येषु भवति, स तद्व्यतिरिक्तो भवत्येव—यथा पाषाणेषु वृक्षः । हृदि—तत्रैतत्स्यात्प्राणेषु प्राणजातीयैव बुद्धि' स्यादित्यत आह—हृद्यन्तरिति । हृच्छब्देन पुण्डरीकाकारो मासपिण्डः, तात्स्थ्यात् बुद्धिर्हृत्तस्यां हृदि बुद्धौ । अन्तरिति बुद्धिवृत्तिव्यतिरेकप्रदर्शनार्थम् । ज्योतिरवभासात्मकत्वादात्मोच्यते । तेन ह्यवभासकेन आत्मना ज्योतिषा आस्ते पल्ययते कर्म कुरुते, चेतना वानिव ह्यय कार्यकरणपिण्डः—यथा आदित्यप्रकाशस्थो घट । यथा वा मरकतादिर्मणि. क्षीरादिद्रव्ये प्रक्षिप्तः परीक्षणाय, आत्मच्छायमेव तत्क्षीरादिद्रव्य करोति, तादृगेतदात्मज्योतिर्बुद्धेरपि हृदयात्सूक्ष्मत्वात् हृद्यन्त-स्थमपि हृदयादिक कार्यकरणसघात चैकीकृत्य आत्म ज्योतिच्छाय करोति, पारपर्येण सूक्ष्मस्थूलतारतम्यात्, सर्वान्तरतमत्वात् ।

बुद्धिस्तावत्स्वच्छत्वात् आनन्तर्याच्च आत्मचैतन्य ज्योतिःप्रतिच्छाया भवति । तेन हि विवेकिनामपि तत्र आत्माभिमानबुद्धि प्रथमा । ततोऽप्यानन्तर्यान्मनसि चैतन्यावभासता, बुद्धिसपर्कात् । तत इन्द्रियेषु, मन-सयोगात् । ततोऽनन्तर शरीर, इन्द्रियसपर्कात् । एव पारपर्येण कृत्स्न कार्यकरणसघातमात्मा चैतन्यस्वरूप-ज्योतिषाऽवभासयति । तेन हि सर्वस्य लोकस्य कार्यकरण-सघाते तद्वृत्तिषु चानियतात्माभिमानबुद्धि यथा-विवेक जायते । तथा च भगवतोक्त गीतासु—'यथा प्रकाशयत्येक कृत्स्न लोकमिम रवि । क्षेत्र क्षेत्री तथा कृत्स्न प्रकाशयति भारत ॥' ( भ गी १३।३३ ) 'यदादित्यगत तेज' ( भ गी १५।१२ ) इत्यादि च । 'नित्योऽनित्याना चेतनश्चेतनानाम्' ( काठ ५। १३ ) इति च काठके । 'तमेव भान्तमनुभाति सर्व तस्य भासा सर्वमिद विभाति' ( काठ ५।१५ ) इति च । 'येन सूर्यस्तपति तेजसेद्धः' इति च मन्त्र-वर्ण । तेनाय हृद्यन्तर्ज्योति. । पुरुषः—आकाशवत्सर्व-गतत्वात्पूर्ण इति पुरुषः । निरतिशय चास्य स्वय-ज्योतिष्ट्व, सर्वावभासकत्वात् स्वयमन्यानवभास्यत्वाच्च । स एष पुरुष स्वयमेव ज्योति.स्वभाव, य त्व पृच्छसि—कतम आत्मेति ।

बाह्याना ज्योतिषा सर्वकरणानुग्राहकाणा प्रत्यस्त मयेऽन्त.करणद्वारेण हृद्यन्तर्ज्योति पुरुष आत्माऽनु-ग्राहक करणानामित्युक्तम् । यदापि बाह्यकरणानुग्राह काणा आदित्यादिज्योतिषा भाव, तदाप्यादित्यादि-ज्योतिषा परार्थत्वात्कार्यकरणसघातस्याचैतन्ये स्वार्थानुप-पत्ते' स्वार्थज्योतिष आत्मनोऽनुग्रहाभावेऽय कार्यकरण-सघातो न व्यवहाराय कल्पते । आत्मज्योतिरनुग्रहेणैव हि सर्वदा सर्व. सव्यवहारः, 'यदेतद्धृदय मनश्चैतत्स-ज्ञानम्' इत्यादिश्रुत्यन्तरात् । साभिमानो हि सर्वप्राणि-

सव्यवहार । अभिमानहेतु च मरकतमणिदृष्टान्तेनावोचाम ।

यद्यप्येवमेतत्तथापि जाग्रद्विषये सर्वकरणागोचरत्वादात्मज्योतिषो बुद्ध्यादिबाह्याभ्यन्तरकार्यकरणव्यवहारसन्निपातव्याकुलत्वान्न शक्यते तज्ज्योतिरात्माख्य मुञ्जेषीकावन्निष्कृष्य दर्शयितुमित्यत स्वप्ने दिदर्शयिषु प्रक्रमते––स समान सन्नुभौ लोकावनुसचरति । यः पुरुष. स्वयमेव ज्योतिरात्मा, स समानः सदृशः सन् केन ? प्रकृतत्वात्सनिहितत्वाच्च हृदयेन । 'हृदि' इति च हृच्छब्दवाच्या बुद्धि प्रकृता सनिहिता च । तस्मात्तयैव सामान्यम् । किं पुन. सामान्यम् ? अश्वमहिषवद्विवेकतोऽनुपलब्धि । अवभास्या बुद्धि', अवभासक तदात्मज्योति, आलोकवत् । अवभास्यावभासकयोः विवेकतोऽनुपलब्धि प्रसिद्धा । विशुद्धत्वाद्धि आलोकोऽवभास्येन सदृशो भवति । यथा रक्तमवभासयन् रक्तसदृशो रक्ताकारो भवति, यथा हरित नील लोहित च अवभासयन्नालोक. तत्समानो भवति, तथा बुद्धिमवभासयन् बुद्धिद्वारेण कृत्स्न क्षेत्रमवभासयति––इत्युक्त मरकतमणिनिदर्शनेन । तेन सर्वेण समानो बुद्धिसामान्यद्वारेण । 'सर्वमयः' इति चात एव वक्ष्यति । तेनासौ कुतश्चित्प्रविभज्य मुञ्जेषीकावत्स्वेन ज्योतीरूपेण दर्शयितु न शक्यत इति, सर्वव्यापार तत्राध्यारोप्य नामरूपगत, ज्योतिर्धर्मं च नामरूपयोः, नामरूपे चात्मज्योतिषि, सर्वो लोको मोमुह्यते––अयमात्मा नायमात्मा, एवधर्मा नैवधर्मा, कर्ताऽकर्ता, शुद्धोऽशुद्ध', बद्धो मुक्तः, स्थितो गत आगत, अस्ति नास्तीत्यादिविकल्पैः । अत समान सन्नुभौ लोकौ प्रतिपन्नप्रतिपत्तव्यौ इहलोकपरलोकौ उपात्तदेहेन्द्रियादिसघातत्यागान्योपादानस तानप्रबन्धवशतसनिपातै अनुक्रमेण सचरति । धीसादृश्यमेवोभयलोकसचरणहेतु, न स्वत इति । तत्र नामरूपोपाधिसादृश्य भ्रान्तिनिमित्त यत्तदेव हेतु, न स्वतः, इत्येतदुच्यते––यस्मात्स. सामानः सन्नुभौ लोकावनुक्रमेण सचरति –– तदेतत्प्रत्यक्षमित्येतद्दर्शयति––यतो ध्यायतीव ध्यानव्यापार करोतीव, चिन्तयतीव, ध्यानव्यापारवतीं बुद्धिं स. तत्स्थेन चित्स्वभावज्योतीरूपेणावभासयन् तत्सदृशस्तत्समान. सन् ध्यायतीव, आलोकवदेव । अतो भवति चिन्तयतीति भ्रान्तिर्लोकस्य । न तु परमार्थतो ध्यायति । तथा लेलायतीव अत्यर्थं चलतीव, तेष्वेव करणेषु बुद्ध्यादिषु वायुषु च चलत्सु तदवभासकत्वात्तत्सदृश तदिति––लेलायतीव, न तु परमार्थतश्चलनधर्मक तदात्मज्योतिः ।

कथ पुनरेतदवगम्यते, तत्समानत्वभ्रान्तिरेव उभयलोकसचरणादिहेतुर्न स्वत ––इत्यस्यार्थस्य प्रदर्शनाय हेतुरुपदिश्यते––सः आत्मा, हि यस्मात्स्वप्नो भूत्वा––स यया धिया समान, सा धीर्यद्यद्भवति, तत्तदसावपि भवतीव । तस्माद्यदाऽसौ स्वप्नो भवति स्वापवृत्तिं प्रतिपद्यते धी, तदा सोऽपि स्वप्नवृत्तिं प्रतिपद्यते । यदा धीर्जिजागरिषति, तदा असावपि । अत आह––स्वप्नो भूत्वा स्वप्नवृत्तिमवभासयन्धियः स्वापवृत्त्याकारो भूत्वेम लोक जागरितव्यवहारलक्षण कार्यकरणसघातात्मक लौकिकशास्त्रीयव्यवहारास्पद, अतिक्रामत्यतीत्य क्रामति विविक्तेन स्वेन आत्मज्योतिषा स्वप्नात्मिका धीवृत्तिमवभासयन्नवतिष्ठते यस्मात् –– तस्मात्स्वयज्योतिः स्वभाव एवासौ, विशुद्धः स कर्तृक्रियाकारकफलशून्य. परमार्थतः, धीसादृश्यमेव तु उभयलोकसचारादिसव्यवहारभ्रान्तिहेतुः । मृत्यो रूपाणि––मृत्युः कर्माविद्यादि', न तस्यान्यद्रूप स्वतः, कार्यकरणान्येवास्य रूपाणि, अतस्तानि मृत्यो रूपाण्यतिक्रामति क्रियाफलाश्रयाणि ।

शकर

( २ ) 'सुषुप्त्युत्क्रान्त्योर्भेदेन' –– परमेश्वरोपदेशपरमेवेदं वाक्य न शारीरमात्रान्वाख्यानपरम् । कस्मात् । सुषुप्तावुत्क्रान्तौ च शारीराद्भेदेन परमेश्वरस्य व्यपदेशात् । सुषुप्तौ तावत् 'अय पुरुष. प्राज्ञेनाऽऽत्मना सपरिष्वक्तो न बाह्य किंचन वेद नाऽऽन्तरम्' इति शारीराद्भेदेन परमेश्वर व्यपदिशति । तत्र पुरुषः शारीर स्यात्तस्य वेदितृत्वात् । बाह्याभ्यन्तरवेदनप्रसङ्गे सति तत्प्रतिषेधसभवात् । प्राज्ञः परमेश्वरः सर्वज्ञत्वलक्षणया प्रज्ञया नित्यमवियोगात् । तथोत्क्रान्तावपि 'अयं शारीर आत्मा प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सर्जन्याति' इति जीवाद्भेदेन परमेश्वर व्यपदिशति । तत्रापि शारीरो जीव. स्याच्छरीरस्वामित्वात् । प्राज्ञस्तु स एव परमेश्वरः । तस्मात् 'सुषुप्त्युत्क्रान्त्योर्भेदेन' व्यपदेशात्परमेश्वर

एवात्र विवक्षित इति गम्यते । यदुक्तमाद्यन्तमध्येषु शारीरलिङ्गात्तत्परत्वमस्य वाक्यस्येति । अत्र ब्रूम । उपक्रमे तावत् 'योऽयं विज्ञानमयः प्राणेषु' इति न संसारिस्वरूपं विवक्षितं किं तर्ह्यनूद्य संसारिस्वरूपं परेण ब्रह्मणाऽस्यैकतां विवक्षति । यतः 'ध्यायतीव लेलायतीव' इत्येवमाद्युत्तरग्रन्थप्रवृत्तिः संसारिधर्मनिराकरणपरा लक्ष्यते । तथोपसंहारेऽपि यथोपक्रममेवोपसंहरति 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' इति । 'योऽयं विज्ञानमयः प्राणेषु' संसारी लक्ष्यते 'स वा एष महानज आत्मा' परमेश्वर एवास्माभिः प्रतिपादित इत्यर्थः । यस्तु मध्ये बुद्धान्ताद्यवस्थोपन्यासात्संसारिस्वरूपविवक्षां मन्यते स प्राचीमपि दिशं प्रस्थापितः प्रतीचीमपि दिशं प्रतिष्ठेत । यतो न बुद्धान्ताद्यवस्थोपन्यासेनावस्थावत्त्वं संसारित्वं वा विवक्षति किं तर्ह्यवस्थारहितत्वमसंसारित्वं च । कथमेतदवगम्यते । यत् 'अत ऊर्ध्वं विमोक्षायैव ब्रूहि' इति पदे पदे पृच्छति । यच्च 'अनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः' (बृ० उ० ४।३।१४–१६) इति पदे पदे प्रतिवक्ति । 'अनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति' (बृ० ४।३।२२) इति च । तस्मादसंसारिस्वरूपप्रतिपादनपरमेवैतद्वाक्यमित्यवगन्तव्यम् ।

१।३।४२

'पत्यादिशब्देभ्यः'—इतश्चासंसारिस्वरूपप्रतिपादनपरमेवैतद्वाक्यमित्यवगन्तव्यम् । यदस्मिन्वाक्ये पत्यादयः शब्दा असंसारिस्वरूपप्रतिपादनपराः संसारिस्वभावप्रतिषेधनाश्च भवन्ति । 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः' (बृ० उ० ४।४।२२) इत्येवंजातीयका असंसारिस्वभावप्रतिपादनाः । 'स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्' इत्येवंजातीयकाः संसारिस्वभावप्रतिषेधनाः । तस्मादसंसारी परमेश्वर इहोक्त इत्यवगम्यते ।

१।३।४३

'यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्'—स्यादेतद्यदि बुद्धिगुणसारत्वादात्मनः संसारित्वं कल्प्येत ततो बुद्ध्यात्मनोर्भिन्नयोः संयोगावसानमवश्यंभावीत्यतो बुद्धिवियोगे सत्यात्मनो विभक्तस्यानालक्ष्यत्वादसत्त्वमसंसारित्वं वा प्रसज्येतेति । अत उत्तरं पठति—यावदात्मेति । नेयमनन्तरनिर्दिष्टदोषप्राप्तिराशङ्कनीया । कस्मात् । यावदात्मभावित्वाद्बुद्धिसंयोगस्य । यावदयमात्मा संसारी भवति यावदस्य सम्यग्दर्शनेन संसारित्वं न निवर्तते तावदस्य बुद्ध्या संयोगो न शाम्यति । यावदेव चायं बुद्ध्युपाधिसंबन्धस्तावज्जीवस्य जीवत्वं संसारित्वं च । कथं पुनरवगम्यते यावदात्मभावी बुद्धिसंयोग इति । तद्दर्शनादित्याह । तथाहि शास्त्रं दर्शयति—'योऽयं विज्ञानमयः' इत्यादि । तत्र विज्ञानमय इति बुद्धिमय इत्येतदुक्तं भवति । बुद्धिमयत्वं च तद्गुणसारत्वमेवाभिप्रेयते । * ब्रशांकर २।३।३०

(३) अत्र विज्ञानमय इति प्राचुर्यार्थमयटाऽऽत्मनो ज्ञानव्यतिरेक उक्तः । प्राणेष्विति सप्तमीनिर्देशादिन्द्रियव्यतिरेकोऽपि सिद्धः । अत्र ज्योतिःशब्दादात्मनो विज्ञानमयत्वोक्त्या धर्मभूतज्ञानद्वारा भासकत्वमादित्यादीनामिव प्रभाद्वारा ज्योतिष्ट्वमिति भावः । परमात्माधीनकर्तृत्वोऽपि जीवः 'अहंकारविमूढात्मा कर्ताऽहमिति मन्यते' (भ० गी० ३।२७) इत्युक्तरीत्या समानः सन् स्वातन्त्र्याभिमानयुक्तः सन् गोपुरधारीव ध्यायतीव लेलायतीव स्वतन्त्र एवोभौ लोकौ संचरतीत्यर्थः । लेलायति चरतीत्यनेन कर्तृत्वं परमात्मायत्तमौपाधिकं चेत्यपि विदर्शितम् । न चात्र ध्यायतीव लेलायतीवेतीवशब्दप्रयोगात्कर्तृत्वमात्मनो नास्तीत्यभ्युपगन्तव्यमिति वाच्यम् ।

स हि जीवः स्वप्नावस्थो भूत्वा स्वप्ने व्याघ्रादिशरीरगो भूत्वेत्यर्थः । इमं लोकं परिदृश्यमानं जाग्रत्प्रपञ्चं मृत्योः संसारस्य रूपाणि दुःखरूपाणीति यावत् । तादृशानि मानुषादीनि शरीराणि अतिक्रामति न पश्यतीति यावत् । ततश्च स्वप्ने जाग्रद्दशावर्तिदेहानुपलम्भाद्देहान्तरपरिग्रहदर्शनाच्च देहव्यतिरेकः प्रदर्शितो भवतीति द्रष्टव्यम् । रंग०

(४) आत्मा भगवानेवास्य ज्योतिः । 'भावेऽभावेऽपि सूर्यादेर्जीवाना विष्णुरेव हि । ज्योतिस्तथाप्यभावे तु तज्ज्ञेयं हि विशेषतः । अस्वातन्त्र्यात्तु जीवस्य

* भास्कर, रामानुज, मध्व, श्रीकंठ, वल्लभ, विज्ञान, ब्रशांकरवत् ।

द्योतयन्बुद्धिमस्य सः। प्रवर्तयति सर्वेशस्तमस्यपि जनार्दनः ॥' इति च। 'स्वातन्त्र्याद्ध्यायतीवासौ ध्यायय-ञ्जीवमञ्जसा। गृह्णातीव ग्राहयन्स जीव सर्वेश्वरेश्वरः। सदा विज्ञानपूर्णोऽसौ समानोऽसौ सदा समः। अविकारात्समान. सञ्जीवमादाय सञ्चरेत्। उभौ लोकौ स्वापकत्वाद्भूत्वाऽसौ स्वप्ननामक.। इम लोक जाग्रदाख्य मृत्युरूपात्मक सदा। बहुपापैकहेतुत्वात्तारयेत्स्वप्नमानयन्। इम लोक च भूराख्य तारयित्वान्तरिक्षगम्। जीवन्कुर्यान्मृतौ विष्णुर्भूलोकः क्षिप्रमृत्युमान्। बहवो मृत्यवश्चात्र मृत्यो रूपाण्यतस्त्वयम्। पापहेतुत्वतश्चाय भूलोको मृत्युरूपकः। जाग्रच्च पृथिवी चैव द्यौ' सुषुप्तिस्तथैव च। स्वप्नश्चैवान्तरिक्ष च ज्ञेया अन्योन्यनामका। तद्द्वयभिप्रायिका यस्मादुभौ लोकाविति श्रुतिः। स वा अय जायमान इति च द्याश्रया श्रुतिः। यस्य ज्योतिरय विष्णुः स परामृश्यते तथा। यदा तु भगवानुक्तस्तदा स्वातन्त्र्यतो विभुः। म्रियमाणो जायमान इत्युक्तस्तन्नियामक.। फलदानाय पापाना ग्रहः ससर्ग उच्यते। मोक्षदाने फलादानाद्विजहातीति चोच्यते। जीवोऽपि मुक्तिकाले तु हाता पापस्य कथ्यते। स्वर्गः सुषुप्तिरित्याख्या मुक्तेरपि यत' समा। परलोको यतो मुख्यो मुक्तिरेव न चापर'। अतो द्युसुप्तिमोक्षाणामभिप्रायादिद वचः। सुप्तिरित्यादिक स्वेति विष्णोराख्या सुखत्वतः। पुनरागमन नाम मुक्तानामपि विद्यते। प्रलये तु प्रविश्यैन भगवन्त जनार्दनम्। स्थित्वा ज्ञानाविलोपेन निर्गच्छन्ति पुनस्ततः। न च ज्ञानसुखादीना तेषा सृष्टौ लयेऽपि वा। विशेषः कश्चिदन्तश्च बहिश्चैव रमन्ति ते। स्वापयत्येनमिति स स्वपितीत्युच्यते हरि'। आनन्दपापलोकादेर्दर्शन स्वप्नसुप्तयोः। अपि विष्णोः सदैवास्ति न जीवस्य कथचन। अत्राय भगवान्विष्णुर्जीवस्य स्वयमेव तु। ज्योतिर्विशेषतो भूयान्नैवान्यज्ज्योतिरत्र यत्। न हि जीवः स्वय द्रष्टु सुप्त' शक्नोति हि ध्रुवम्। अत' स नैव जीवोऽय सर्वं पश्यति सूक्ष्मदृक्। स्वप्नेऽन्तरिक्षे स्वर्गे वा न रथाद्याः पुरा स्थिता'। तदैव तत्कर्मयोग्यान्निर्मिमीते हरिः स्वयम् ॥' इत्यादि महामीमासायाम्। जीवपक्षे प्रसिद्धत्वात्कतम आत्मेति प्रश्नो न युक्तः। न च जीवः समानः सन्नुभौ लोकौ सञ्चरति। सुखदु.खविशेषवत्त्वात्। न च सुखादेर्मिथ्यात्वे किंचिन्मानम्। 'याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्य समाभ्य' '। 'असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्'। 'वैधर्म्याच्च न स्वप्नादिवत्' इत्यादिभगवद्वचनविरुद्धत्वाच्च। न चैतन्नासीदस्ति भविष्यतीत्यनुभवः कदाचिद्भविष्यतीत्यत्र किंचिन्मानम्। किंचित्काल स्थिरत्वमात्रस्य शून्यवादिनामपि सिद्धत्वाद्वैधर्म्याच्च न स्वप्नादिवदित्यादिवचन व्यर्थं स्यात्। अतो न कदाचिदस्य नासीदस्ति भविष्यतीत्यनुभवो भविष्यतीत्यभिप्रायेणैव तद्वचनम्। न च तथानुभवे शून्यस्यानिर्वचनीयस्य च कश्चिद्विशेषः। न च शून्यवादिना तद्वादिनां च कश्चिद्विशेषो मोक्षे। न च नित्यज्ञानस्वरूपमस्तीति वचने न कश्चिद्विशेषः। ज्ञेयाभावे ज्ञानस्याप्यभावात्। न हि ज्ञेयरहित ज्ञान नामास्तीत्यत्र किंचिन्मानम्। न च स्वविषय तदिति तेषा पक्षः। तदा कर्तृकर्मविरोध आपततीति हि तेषा वचनम्। न च जानातीत्यादि कर्तृत्व ज्ञानस्य तैरङ्गीक्रियते, निर्विशेषत्वाङ्गीकारात्। अत. शून्यवादिन एव तेऽपि। स्वप्नो भूत्वा स्वापको भूत्वा। न हि जीवोऽपि स्वप्न एव भवति। स्वाप नयतीति स्वप्न इति च व्युत्पत्तिः। मध्व.

**स वा अय पुरुषो जायमान शरीरमभिसंपद्यमान पाप्मभि सꣳसृज्यते। स उत्क्रामन्म्रियमाणः पाप्मनो विजहाति ॥**

(१) यथैव इह एकस्मिन्देहे स्वप्नो भूत्वा मृत्यो रूपाणि कार्यकरणानि अतिक्रम्य स्वप्ने स्वे आत्मज्योतिषि आस्ते, एव स वै प्रकृतः पुरुष अय जायमानः— कथ जायमान इत्युच्यते— शरीर देहेन्द्रियसघातमभिसपद्यमानः, शरीरे आत्मभावमापद्यमानः इत्यर्थ', पाप्मभि. पाप्मसमवायिभिर्धर्माधर्माश्रयै. कार्यकरणैरित्यर्थः, ससृज्यते सयुज्यते। स एव उत्क्रामन् शरीरान्तर ऊर्ध्वं क्रामन् गच्छन् म्रियमाण इत्येतस्य व्याख्यानमुत्क्रामन्निति, तानेव सश्लिष्टान् पाप्मरूपान् कार्यकरणलक्षणान्, विजहाति तैर्वियुज्यते, तान्परित्यजति। यथा

(१) बृउ ४।३।८, शब्रा १४।७।१।८ विजहाति+ (मृत्यो रूपाणि), ब्रशकर २।३।१६, भास्कर. २।३।१६, बलदेव २।३।१६.

अथ स्वप्नजागरद्वृत्त्योः वर्तमाने एव एकस्मिन्देहे पाप्मरूपकार्यकरणोपादानपरित्यागाभ्या अनवरत सचरति धिया समान. सन्, तथा सोऽय पुरुषः उभाविहलोकपर लोकौ, जन्ममरणाभ्या कार्यकरणोपादानपरित्यागौ अनवरत प्रतिपद्यमान., आ ससारमोक्षात् सचरति। तस्मात् सिद्ध अस्य आत्मज्योतिष अन्यत्व कार्यकरणरूपेभ्य· पाप्मभ्य , सयोगवियोगाभ्याम्। न हि तद्धर्मत्वे सति, तैरेव सयोगः वियोगो वा युक्तः। शकर

( २ ) शरीरसबन्धोपाधिकः पापसबन्ध. स उत्क्रामन्म्रियमाण· पाप्मनो विजहाति। नित्यस्य म्रियमाणत्वाभावादाह — उत्क्रामन्निति । अत्रोत्क्रमण च चरमोत्क्रमण विवक्षितम्। पाप्मनो विजहातीति सर्वपापविधूननश्रवणादिति द्रष्टव्यम्। रग

**तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत । इद च परलोकस्थान च। सध्य तृतीय५ स्वप्नस्थानम्। तस्मिन्सध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदं च परलोकस्थान च। अथ यथाक्रमोऽय परलोकस्थाने भवति तमाक्रममाक्रम्योभयान्पाप्मन आनन्दा५श्च पश्यति । स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामपादाय स्वय विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिपा प्रस्वपिति । अत्राय पुरुष स्वय ज्योतिर्भवति ॥**

( १ ) ननु न स्तः अस्य उभौ लोकौ, यौ जन्ममरणाभ्यामनुक्रमेण सचरति स्वप्नजागरिते इव । स्वप्नजागरिते तु प्रत्यक्षमवगम्येते, न त्विहलोकपरलोकौ केनचित्प्रमाणेन। तस्मात् एते एव स्वप्नजागरिते इहलोकपरलोकाविति। उच्यते— तस्य एतस्य पुरुषस्य वै द्वे एव स्थाने भवत , न तृतीय चतुर्थे वा। के ते ? इद च यत् प्रतिपन्न वर्तमान जन्म शरीरेन्द्रियविषयवेदनाविशिष्ट स्थान प्रत्यक्षतोऽनुभूयमान, परलोक एव स्थान परलोकस्थानम् — तच्च शरीरादिवियोगोत्तरकालानुभाव्यम्। ननु स्वप्नोऽपि परलोक । तथा च सति द्वे एवेत्यवधारणमयुक्तम् — न। कथ तर्हि ? सध्य तत् इहलोकपरलोकयोर्य. सधि तस्मिन्भव सध्य, यत् तृतीय तत् स्वप्नस्थानम्। तेन स्थानाद्वित्वावधारणम्। न हि ग्रामयो. सधि तावेव ग्रामावपेक्ष्य तृतीयत्वपरिगणनमर्हति। कथ पुन तस्य परलोकस्थानस्य अस्तित्वमवगम्यते, यदपेक्ष्य स्वप्नस्थान स य भवेत् — यत. तस्मिन्सध्ये स्वप्नस्थाने तिष्ठन् भवन् वर्तमान. एते उभे स्थाने पश्यति, के ते उभे ? इद च परलोकस्थान च। तस्मात् स्त. स्वप्नजागरितव्यतिरेकेण उभौ लोकौ, यौ धिया समान सन् अनुसचरति जन्ममरणसतानप्रबन्धेन। कथ पुनः स्वप्ने स्थित सन् उभौ लोकौ पश्यति, किमाश्रय केन विधिना — इत्युच्यते — अथ कथ पश्यतीति शृणु — यथाक्रम आक्रमति अनेन इत्या क्रम आश्रय अवष्टम्भ इत्यर्थ । यादृश आक्रमोऽस्य, सोऽय यथाक्रम । अय पुरुषः, परलोकस्थाने प्रतिपत्तव्ये निमित्ते, यथाक्रमो भवति यादृशेन परलोकप्रतिपत्तिसाधनेन विद्याकर्मपूर्वप्रज्ञालक्षणेन युक्तो भवतीत्यर्थ । त आक्रम परलोकस्थानायोन्मुखीभूत प्राप्ताङ्कुरीभावमिव बीज तमाक्रम आक्रम्य अवष्टभ्य आश्रित्य उभयान्पश्यति — बहुवचन धर्माधर्मफलानेकत्वात्, उभयान् उभयप्रकारानित्यर्थ । कास्तान् ? पाप्मनः पापफलानि न तु पुन. साक्षादेव पाप्मना दर्शन सभवति, तस्मात् पापफलानि दु खानीत्यर्थ·—आनन्दांश्च धर्मफलानि सुखानीत्येतत्—तानुभयान् पाप्मन· आनन्दाश्च पश्यति जन्मान्तरदृष्टवासनामयान् । यानि च प्रतिपत्तव्यजन्मविषयाणि क्षुद्रधर्माधर्मफलानि, धर्माधर्मप्रयुक्तो देवतानुग्रहाद्वा पश्यति। तत्कथमवगम्यते परलोकस्थानभावितपाप्मानन्ददर्शन स्वप्ने — इत्युच्यते — यस्मात् इह जन्मनि अननुभाव्यमपि पश्यति बहु। न च स्वप्नो नाम अपूर्व दर्शनम्। पूर्वदृष्टस्मृतिर्हि स्वप्न. प्रायेण। तेन स्वप्नजागरितस्थानव्यतिरेकेण स्त. उभौ लोकौ।

(१) बृउ ४।३।९, शब्रा १४।७।१।९,१० तिष्ठन्नेते उभे ( तिष्ठन्नुभे ) यत्र ( यत्राय ) स्वय ज्यो ( स्वयज्यो ), ब्रशाकर २।३।१८, ३।२।१, ४, भास्कर २।३।१८, ३।२।१, रग स्वय ज्यो ( स्वयज्यो ), रामानुज १।१।१ ( पृ ४२ ) रगवत्, मध्व मपादाय ( मुपादाय ), ब्रमध्व ४।४।१३, श्रीकर ३।२।१, वल्लभ २।३।२२, ३।२।१, ४।४।१३ विहत्य ( विहृत्य ) शेष शब्रावत्, विज्ञान ३।२।१, २, ४।४।१३ ज्योतिषा प्रस्व ( ज्योतिषा च स्व ), बलदेव. ३।२।१

यदादित्यादिबाह्यज्योतिषामभावे अय कार्यकरणसघात' पुरुष येन व्यतिरिक्तेन आत्मना ज्योतिषा व्यवहरतीत्युक्त तदेव नास्ति, यत् आदित्यादिज्योतिषामभाव गमन, यत्र इद विविक्त स्वयज्योतिः उपलभ्येत। येन सर्वदैव अय कार्यकरणसघातः संसृष्ट एवोपलभ्यते । तस्मात् असत्समः असन्नेव वा स्वेन विविक्तस्वभावेन ज्योतीरूपेण आत्मेति। अथ क्वचित् विविक्तः स्वेन ज्योतीरूपेण उपलभ्येत बाह्याध्यात्मिकभूतभौतिकससर्गशून्य., तत. यथोक्त सर्वं भविष्यतीत्येतदर्थमाह — स य. प्रकृत आत्मा, यत्र यस्मिन्काले, प्रस्वपिति प्रकर्षेण स्वापमनुभवति । तदा किमुपादान केन विधिना स्वपिति सध्य स्थान प्रतिपद्यत इत्युच्यते — अस्य दृष्टस्य लोकस्य जागरितलक्षणस्य, सर्वावत सर्वमवतीति सर्वावानय लोकः कार्यकरणसघातः विषयवेदनासयुक्त.। सर्वावत्त्व अस्य व्याख्यात अन्नत्रयप्रकरणे 'अथो अय वा आत्मा' इत्यादिना— सर्वा वा भूतभौतिकमात्राः अस्य ससर्गकारणभूता विद्यन्त इति सर्ववान् सर्ववानेव सर्वावान्, तस्य सर्वावतः मात्रा एकदेश अवयव, अपादाय अपच्छिद्य आदाय गृहीत्वा दृष्टजन्मवासनावासितः सन्नित्यर्थः, स्वय आत्मनैव विहत्य देह पातयित्वा नि.सबोधमापाद्य जागरिते हि आदित्यादीनां चक्षुरादिष्वनुग्रहो देहव्यवहारार्थ, देहव्यवहारश्च आत्मनो धर्माधर्मफलोपभोगप्रयुक्त., तद्धर्माधर्मफलोपभोगोपरमण अस्मिन्देहे आत्मकर्मोपरमकृतमिति आत्मा अस्य विहन्तेत्युच्यते— स्वय निर्माय निर्माण कृत्वा वासनामय स्वप्नदेह मायामयमिव, निर्माणमपि तत्कर्मापेक्षत्वात् स्वयकर्तृकमुच्यते — स्वेन आत्मीयेन, भासा मात्रोपादानलक्षणेन भासा दीप्त्या प्रकाशेन, सर्ववासनात्मकेन अन्तःकरणवृत्तिप्रकाशेनेत्यर्थ — सा हि तत्र विषयभूता सर्ववासनामयी प्रकाशते, सा तत्र स्वय भा उच्यते— तेन स्वेन भासा विषयभूतेन, स्वेन च ज्योतिषा तद्विषयिणा विविक्तरूपेण अलुप्तदृक्स्वभावेन, तद्भारूप वासनात्मक विषयीकुर्वन् प्रस्वपिति। यत् एव वर्तन, तत् प्रस्वपितीत्युच्यते । अत्र एतस्यामवस्थाया एतस्मिन्काले, अय पुरुष आत्मा, स्वयमेव विविक्तज्योतिर्भवति बाह्याध्यात्मिकभूतभौतिकससर्गरहित ज्योतिः भवति। ननु अस्य लोकस्य मात्रोपादान कृत, कथ तस्मिन् सति अत्राय पुरुष स्वय ज्योतिर्भवतीत्युच्यते ? नैष दोषः। विषयभूतमेव हि तत्। तेनैव च अत्र अय पुरुषः स्वय ज्योतिः दर्शयितु शक्यः। न तु अन्यथा असति विषये कस्मिंश्चित् सुषुप्तकाल इव। यदा पुनः सा भा वासनात्मिका विषयभूता उपलभ्यमाना भवति, तदा असिः कोशादिव निष्कृष्ट सर्वससर्गरहित चक्षुरादिकार्यकरणव्यावृत्तस्वरूप अलुप्तदृक् आत्मज्योतिः स्वेन रूपेण अवभासयत् गृह्यते। तेन अत्राय पुरुषः स्वय ज्योतिर्भवतीति सिद्धम्। शकर.

(२) यदाऽय स्वप्नमनुभवति तदा सर्वावतः सर्वतो भोग्यभोगोपकरणादिसर्वयुक्तस्य जगतो मात्रा मीयतेऽनेनेति मात्रा प्रकाशकेन्द्रियवर्गस्तमपादाय स्वयमेव तमिन्द्रियवर्गं विहत्य निश्चेष्टतामापाद्य निर्व्यापार कारयित्वा स्वय निर्माय। जीवस्य स्वप्नपदार्थनिर्मातृत्वमदृष्टद्वारा द्रष्टव्यम्। रग.

(३) 'स्वशब्दोन्मानाभ्या च'—'स्वय विहत्य स्वय निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति' इति स्वशब्दोऽणुपरिमाण जीव बोधयति। न हि स्वप्ने व्यापकस्य वा शरीरपरिमाणस्य वा विहरण सभवति। वल्लभ. २।३।२२

**न तत्र रथा न रथयोगा न पन्थानो भवन्ति। अथ रथान्रथयोगान्पथ. सृजते। न तत्रानन्दा मुदः प्रमुदो भवन्ति। अथानन्दान्मुद. प्रमुद सृजते। न**

(१) बृउ ४।३।१०, शब्रा १४।७।१।११ पुष्करिण्य स्रवन्त्यो ( स्रवन्त्य पुष्करिण्यो ) वेशान्तान्पुष्करिणी. स्रवन्ती ( वेशान्ता स्रवन्ती. पुष्करिणी ), ब्रशकर २।१।२८, ३।२।१, ३, भास्कर २।१।२८, ३।२।१, रामानुज १।१।१ ( पृ ९७ ), ३।२।१, ४।४।१३ न्पुष्करिणी स्रवन्ती ( न्पुष्करिण्य स्रवन्त्य ), निंबार्क ३।२।१ न तत्र रथा ( अथ न तत्र रथा ) ( द्वि० ), मध्व रामानुजवत्, ब्रमध्व ३।२।१, श्रीकठ ३।२।१, ३ वेशान्तान्पुष्करिणी स्रवन्ती ( वेशान्ता पुष्करिण्य· स्रवन्त्य ), श्रीकर ३।२।१, २, ३, ४।४।१३ रामानुजवत्, वल्लभ ४।४।१३, विज्ञान १।४।२८, २।१।२८, २।३।३३, ३।२।१, ४।४।१६; बलदेव. ३।२।१.

**तत्र वेशान्ता पुष्करिण्य स्रवन्त्यो भवन्ति । अथ वेशान्तान्पुष्करिणी॰ स्रवन्ती सृजते । स हि कर्ता ॥**

( १ ) नन्वत्र कथ पुरुषः स्वय ज्योतिः ? येन जागरित इव ग्राह्यग्राहकादिलक्षणः सर्वो व्यवहारो दृश्यते, चक्षुराद्यनुग्राहकाश्च आदित्याद्या लोका. तथैव दृश्यन्ते यथा जागरिते — तत्र कथ विशेषावधारण क्रियते—अत्राय पुरुष॰ स्वय ज्योतिर्भवतीति । उच्यते— वैलक्षण्यात्स्वप्नदर्शनस्य । जागरिते हि इन्द्रियबुद्धिमनआ लोकादिव्यापारसङ्कीर्णं आत्मज्योति । इह तु स्वप्ने इन्द्रियाभावात् तदनुग्राहकादित्याद्यालोकाभावाच्च विविक्त केवल भवति तस्माद्विलक्षणम् । ननु तथैव विषया उपलभ्यन्ते स्वप्नेऽपि, यथा जागरिते । तत्र कथ इन्द्रियाभावात् वैलक्षण्यमुच्यत इति । शृणु—न तत्र विषयाः स्वप्ने रथादिलक्षणा॰ । तथा न रथयोगा॰, रथेषु युज्यन्ते इति रथयोगा अश्वादयस्तत्र न विद्यन्ते । न च पन्थानो रथमार्गाः भवन्ति । अथ रथान्रथयोगान्पथश्च सृजते स्वयम् । कथ पुनः सृजते रथादिसाधनानां वृक्षादीनामभावे । उच्यते—ननूक्त ‘ अस्य लोकस्य सर्वावतो मात्रामपादाय स्वय विहत्य स्वय निर्माय ’ इति । अन्त.करणवृत्तिरस्य लोकस्य वासना मात्रा, तामपादाय रथादिवासनारूपान्त.करणवृत्तिः तदुपलब्धिनिमित्तेन कर्मणा चोद्यमाना दृश्यत्वेन व्यवतिष्ठते । तदुच्यते— स्वय निर्मायेति । तदेवाह—रथादीन्सृजत इति । न तु तत्र करण वा, करणानुग्राहकाणि वा आदित्यादिज्योतींषि, तदवभास्या वा रथादयो विषया विद्यन्ते । तद्वासनामात्र तु केवल तदुपलब्धिकर्मनिमित्तचोदितोद्भूतान्तःकरणवृत्त्याश्रय दृश्यते । तत्रस्य ज्योतिषो दृश्यतेऽलुप्तदृश॰, तदात्मज्योतिरत्र केवलमसिरिव कोशाद्विविक्तम् ।

तथा न तत्रानन्दाः सुखविशेषाः, मुदो हर्षाः पुत्रादिलाभनिमित्ताः, प्रमुदस्ते एव प्रकर्षोपेता. । अथ चानन्दादीन्सृजते । तथा न तत्र वेशान्ताः पल्वलाः, पुष्करिण्यस्तडागाः, स्रवन्त्यो नद्यो भवन्ति । अथ वेशान्तादीन्सृजते वासनामात्ररूपान् । यस्मात्स हि कर्ता । तद्वासनाश्रयचित्तवृत्त्युद्भवनिमित्तकर्महेतुत्वेनेत्यवोचाम तस्य कर्तृत्वम् । न तु साक्षादेव तत्र क्रिया सभवति, साधनाभावात् । न हि कारकमन्तरेण क्रिया सभवति । न च तत्र हस्तपादादीनि क्रियाकारकाणि सभवन्ति । यत्र तु तानि विद्यन्ते जागरिते, तत्र आत्मज्योतिरवभासितैः कार्यकरणै॰ रथादिवासनाश्रयान्तः-करणवृत्त्युद्भवनिमित्त कर्म निर्वर्त्यते । तेनोच्यते — स हि कर्तेति । तदुक्त ‘ आत्मनैवाय ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते ’ इति । तत्रापि न परमार्थतः स्वत. कर्तृत्व चैतन्यज्योतिषोऽवभासकत्वव्यतिरेकेण — यच्चैतन्यात्मज्योतिषा अन्त करणद्वारेणावभासयति कार्यकरणानि, तदवभासितानि कर्मसु व्याप्रियन्ते कार्यकरणानि, तत्र कर्तृत्वमुपचर्यते आत्मन. । यदुक्त ‘ ध्यायतीव लेलायतीव ’ इति, तदेवानूद्यते—स हि कर्तेति इह हेत्वर्थम् । शकर.

( २ ) ‘ सध्ये सृष्टिराह हि ’ — सध्ये सृष्टिरिति । सध्यमिति स्वप्नस्थानमाचष्टे । तस्मिन्सध्ये स्थाने तथ्यरूपैव सृष्टिर्भवितुमर्हति । कुतः । यतः प्रमाणभूता श्रुतिरेवमाह ‘ अथ रथान्रथयोगान्पथः सृजते ’ ( बृउ. ४।३।९ ) इत्यादि । स हि कर्तेति चोपसहारादेवमेवावगम्यते । ३।२।१

‘मायामात्र तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्’ — एव प्राप्ते प्रत्याह — मायामात्रमिति । तुशब्दः पक्ष व्यावर्तयति । नैतदस्ति यदुक्तं सध्ये सृष्टिः पारमार्थिकीति । मायैव सध्ये सृष्टिर्न परमार्थगन्धोऽप्यस्ति । कुतः । कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् । न हि कार्त्स्न्येन परमार्थवस्तुधर्मेणाभिव्यक्तस्वरूप. स्वप्न. । किं पुनरत्र कार्त्स्न्यमभिप्रेत देशकालनिमित्तसपत्तिरबाधश्च । न हि परमार्थवस्तुविषयाणि देशकालनिमित्तान्यबाधश्च स्वप्ने सभाव्यन्ते । न तावत्स्वप्ने रथादीनामुचितो देशः सभवति । न हि सवृत्ते देहदेशे रथादयोऽवकाशं लभेरन् । * ब्रशकर ३।२।३

( ३ ) तत्तत्पुरुषकालमात्रानुभाव्यानर्थान्परमात्मा सृजते । अनुकूलदर्शनजन्या प्रीतिरानन्दः । स्वकीयत्वबुद्धिजा प्रीतिर्मुत् । विनियोगजा प्रीतिः प्रमुत् । पुष्करिण्यो वाप्यः । ननु स्वप्नदृग्यस्मिन्देशे यदा रथं

* भास्कर. ब्रशकरवत् ।

पश्यति तदानीं तत्र स्थितोऽन्यस्त न पश्यति स्वप्नदृगपि बोधनानन्तर तत्र गतस्त न पश्यति तत्र तस्यान्यत्र नयनचिह्नानि वा नाशचिह्नानि वा नोपलभ्यन्तेऽत' कथमीदृशी स्वप्नार्थसृष्टिरुपपद्यतामित्यत्राह — स हि वा कर्तेति । सकलप्रपञ्चनाटकसूत्रधार सर्वेश्वरः खलु तत्र कर्ता, स किं वा कर्तुं न शक्नुयादिति हिशब्दाभिप्रायः । * रग.

( ४ ) यद्यपि सकलेतरपुरुषानुभाव्यतया तदानीं न भवन्त्यथापि तत्तत्पुरुषमात्रानुभाव्यतया तथाविधार्थानीश्वर सृजति । स हि कर्ता । तस्य सत्यसकल्पस्याश्चर्यशक्तेस्तथाविध कर्तृत्व सभवतीत्यर्थ. ।

१।१।१ ( पृ ९७ )

सध्ये सृष्टिर्जीवेनेति । ' स हि कर्ता ' इत्याह हि ।

३।२।१

' मायामात्र तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् '— इति प्राप्तेऽभिधीयते—मायामात्रमिति । तुशब्दः पक्ष व्यावर्तयति । स्वप्ने रथपुष्करिण्याद्यर्थजात मायामात्र परमपुरुषसृष्टमित्यर्थः । मायाशब्दो ह्याश्चर्यवाची ।

¶ रामानुज. ३।२।३

( ५ ) ' स हि कर्ता ' इत्यादिश्रुतौ च जीवस्य कर्तृत्व श्रूयते । विज्ञान २।३।३३

तदेते श्लोका भवन्ति ।

**स्वप्नेन शारीरमभिप्रहत्यासुप्त सुप्तानभिचाकशीति ।**

**शुक्रमादाय पुनरैति स्थानꣳ हिरण्मय पुरुष एकहꣳसः ॥**

( १ ) तदेते एतस्मिन्नुक्तेऽर्थ एते श्लोका. मन्त्राः भवन्ति । स्वप्नेन स्वप्नभावेन, शारीर शरीर, अभिप्रहत्य निश्चेष्टमापाद्यासुप्तः स्वयमलुप्तदृगादिशक्तिस्वाभाव्यात्, सुप्तान्वासनाकारोद्भूतान् अन्तःकरणवृत्त्याश्रयान्बाह्याध्यात्मिकान्सर्वानेव भावान्स्वेन रूपेण प्रत्यस्तमितान्सुप्तान्, अभिचाकशीति अलुप्तया आत्मदृष्टया पश्यत्यवभासयतीत्यर्थ. । शुक्र शुद्ध ज्योतिष्मदिन्द्रियमात्रारूपं, आदाय गृहीत्वा, पुनः कर्मणे जागरितस्थानमैत्यागच्छति, हिरण्मयः हिरण्मय इव चैतन्यज्योतिःस्वभावः, पुरुष., एकहसः एक एव हन्तीत्येकहसः — एको जाग्रत्स्वप्नेहलोकपरलोकादीन् गच्छतीत्येकहसः ।

शकर.

( २ ) तत्सुप्तमधिकृत्यैते वक्ष्यमाणाः श्लोकाः प्रवृत्ता. । स्वप्नेनेतीत्थभावे तृतीया । स्वप्नेनोपलक्षितः शारीर शरीरमभिप्रहत्य निश्चेष्टतामापाद्यासुप्तोऽलुप्तप्रकाश एव सन्सुप्तान्प्राणानभितश्चाकशीति । कश गतिशासनयोरित्यस्माद्यङ्लुगन्तम् । पर्यटतीत्यर्थः ।

* रग.

( ३ ) जायमानो म्रियमाणः स्वपितीत्यादि तु 'कृत्वा विवाह तु कुरुप्रवीरा. ' । ' तदेतन्मे विजानीहि यथाह मन्दधीरीदृरे । सुख बुध्येय दुर्बोध येषा भवदनुग्रहात् ' । ' जज्ञे बहुज्ञ परमाभ्युदार ' ' द्रष्टुश्चक्षुषो नास्ति जिह्वा ' इत्यादिवदन्तर्णीतणिच्त्वेन भवति । 'स्वातन्त्र्यस्नेहयोरन्तर्णिच् ' इति हि सूत्रम् । कथमन्यथा स्वय निहत्य स्वय निर्माय स्वन्त्य. सृजते । ' स हि कर्ता' ' स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति ' इत्यादि युज्यते । उक्तार्थे च स्वप्नेन शारीरमित्यादिजीवेश्वरभेदमन्त्रा उक्ताः प्रमाणत्वेन । ईश्वरो जीवस्य भयानि पश्यन् 'जक्षदिव हसदिव' । 'प्राज्ञेनात्मना सपरिष्वक्तः' 'प्राज्ञेनात्मनाऽन्वारूढः' इत्यादिषु चाभ्यासेन सर्वत्र भेद एव निर्दिश्यते । 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इति च निर्णयात्मक भगवद्वचनम् । न चावस्थाभेदेन जीवभेदो व्यावहारिकोऽप्यस्तीत्यत्र किंचिन्मानम् । न हि जाग्रत्स्वप्नस्थश्च द्वावित्यत्रप्रयोगोऽपि कश्चिदस्ति लौकिकः । न च भ्रमस्तादृश. । तस्माद्भगवानेवात्रोच्यते सर्वकर्तृत्वेन । वेशान्ता वेश्यागृहाः । सुषुप्तिमोक्षोभयविवक्षयैव तद्वचनमपि भगवताऽप्युक्त 'स्वाप्ययसपत्त्योरन्यतरापेक्षमाविष्कृतं हि ' इति । उभयापेक्षमित्युक्ते मोक्षस्थसुषुप्तिरिति मन्दस्याऽऽशङ्का स्यादतो मोक्षे सुप्तिरेव नास्तीति

---

* शेष शकरवत् ।

¶ निंबार्क ब्रमध्व श्रीकठ श्रीकर रामानुजवत् ।

(१) बृउ ४।३।११, शब्रा १४।७।१।१२ तदेते ( तदप्येते ) ( भवन्ति० ) पुरुष ( पौरुष ), अशाकर ३।३।१८, २०, मध्व रैति ( रेति ), विज्ञान ३।३।१८, बलदेव. ३।२।१

* शेष शकरवत् ।

ज्ञापयितुमन्यतरापेक्षमित्युक्तम् । न त्वन्यतर एवार्थ इति। ज्ञाने विकल्पायोगात्। अतोऽवस्थाश्च लोकाश्च सर्वे विवक्षिता.। सर्वावतः आसमन्तात् सर्ववत सर्वज्ञानानि उपादाय। 'बाह्यप्रकाशो भेत्युक्तो ज्योतिरान्तर उच्यते। सुख स्वरूपभूत यदानन्द इति कथ्यते । मुन्नाम विषयोत्थ यत्प्रकृष्टविषयात्प्रमुत् ॥' इति च। शुक्र जीव मादाय। 'शोकेन रत्या युक्तत्वाच्छुक्रो जीव उदाहृत ।' इति च। 'रत्यानन्दौ पूर्णनित्यौ हितौ तेन हिरण्मय'। स्वर्णवर्णतया वाऽपि वासुदेवो हिरण्मय. । प्रधान हसरूपत्वादेकहस इतीरित ॥' इति च। 'अशेन जीवमादाय क्वचिदीशो बहिर्नयेत्। स्वप्नेषु फल्गुन यद्वत्कृष्णः कैलासमानयत् । वासनारूपकान्प्रायस्त्वन्तरेव प्रदर्शयेत् ॥' मध्व

[1]प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा।
स ईयतेऽमृतो यत्र कामꣳ हिरण्मय पुरुष एकहꣳस ॥

(१) तथा प्राणेन पञ्चवृत्तिना, रक्षन्परिपालयन्— अन्यथा मृतभ्रान्तिः स्यात्, अवर निकृष्टमनेकाशुचिसघातत्वादत्यन्तबीभत्स, कुलाय नीड शरीर, स्वय तु बहिस्तस्मात्कुलायात्, चरित्वा—यद्यपि शरीरस्थ एव स्वप्न पश्यति तथापि तत्सबन्धाभावात्तत्स्थ इव आकाशो बहिश्चरित्वेत्युच्यते । अमृतः स्वयममरणधर्मा, ईयते गच्छति, यत्र काम — यत्र यत्र कामो विषयेषु उद्भूतवृत्तिर्भवति त त काम वासनारूपेणोद्भूत गच्छति। शकर.

(२) 'विहारोपदेशात्' — इतश्च जीवस्य कर्तृत्व यज्जीवप्रक्रियाया सध्ये स्थाने विहारमुपदिशति 'स ईयतेऽमृतो यत्र कामम्'। २।३।३४

बहिष्कुलायश्रुतिर्गौणी व्याख्यातव्या बहिरिव कुलायादमृतश्चरित्वेति । यो हि वसन्नपि शरीरे न तेन प्रयोजन करोति स बहिरिव शरीराद्भवतीति।
ब्रशकर. ३।२।३

(३) यत्र भोग्य तत्र सर्वत्र चरित्वाऽमृतोऽमरणधर्मा हिरण्मय एकहस. पुरुष' पुनरपि स्वस्थानमीयते गच्छतीत्यर्थः। यद्वा यत्र काम तत्रेयते गच्छतीत्यर्थ'।
* रग.

(४) अतो बहिःकुलायादित्यपि वाङ्न विरुध्यत इति च। मध्व.

[1]स्वप्नान्त उच्चावचमीयमानो रूपाणि देव. कुरुते बहूनि।
उतेव स्त्रीभि' सह मोदमानो जक्षदुतेवापि भयानि पश्यन् ॥

(१) किंच स्वप्नान्ते स्वप्नस्थाने, उच्चावचम्—उच्च देवादिभाव अवच तिर्यगादिभाव निकृष्ट तदुच्चावच, ईयमानो गम्यमानः प्राप्नुवन्, रूपाणि, देवो द्योतनवान्, कुरुते निर्वर्तयति वासनारूपाणि बहून्यसख्येयानि । उतापि, स्त्रीभिः सह मोदमान इव, जक्षदिव हसन्निव वयस्यै, उतेवापि भयानि— बिभेत्येभ्य इति भयानि सिंहव्याघ्रादीनि, पश्यन्निव। शकर

(२) स्वप्नान्ते स्वप्नमध्य इत्यर्थः । उच्चावच पुण्यपापलक्षणमुत्कृष्टापकृष्ट सगच्छमानो देवो जीव इत्यर्थः। जक्षदिव जक्षण भक्षण हसन वा।
* रग.

(३) 'उच्चावचेषु रूपेषु प्रविशन्पुरुषोत्तम'। बहुरूपत्वमायाति स्वप्ने स जगत. प्रभु. ॥' इति च । 'मोदरूपत्वतो विष्णोस्त्रीभिर्मोदो विडम्बनम् ॥'
मध्व.

[2]आराममस्य पश्यन्ति न त पश्यति कश्चनेति।
तं नायतं बोधयेदित्याहु । दुर्भिषज्यꣳ हास्मै

* शेष शकरवत।

(१) बृउ ४।३।१२, शब्रा १४।७।१।१३ ञवर (न्नपर) यत्र कामꣳ (यत्रकामꣳ) पुरुष (पौरुष), ब्रशकर २।३।३४, २।४।११, ३।२।३, भास्कर २।३।३४ कामꣳ (काम), श्रीकर २।४।९, विज्ञान २।४।८, ३।३।१४, बलदेव ३।२।१

(१) बृउ ४।३।१३, शब्रा १४।७।१।१४, ब्रशकर २।३।४०

(२) बृउ ४।३।१४, शब्रा १४।७।१।१५, १६ पश्यति कश्चनेति (कश्चन पश्यतीति) स्यैष इति (स्यैष) तिर्भवति (तिर्भवतीति। एवमेवैतद्याज्ञवल्क्य) क्षाय (क्षायैव), . ३।२।२, ३।३।२९ यानि ह्येव

**भवति यमेष न प्रतिपद्यते। अथो खल्वाहुर्जागरितदेश एवास्यैष इति। यानि ह्येव जाग्रत्पश्यति तानि सुप्त इति। अत्राय पुरुष स्वय ज्योतिर्भवति। सोऽह भगवते सहस्र ददामि। अत ऊर्ध्वं विमोक्षाय ब्रूहीति॥**

(१) आराम आरमण आक्रीडाममेनेन निर्मिता वासनारूपा अस्यात्मन, पश्यन्ति सर्वे जना.। ग्राम नगर स्त्रिय अन्नाद्यमित्यादिवासनानिर्मित आक्रीडनरूपम्। न त पश्यति त न पश्यति कश्चन। कष्ट भो.। वर्ततेऽत्यन्तविविक्त दृष्टिगोचरापन्नमप्यहो भाग्यहीनता लोकस्य। यच्छक्यदर्शनमप्यात्मान न पश्यति—इति लोक प्रत्यनुक्रोश दर्शयति श्रुति। अत्यन्तविविक्त. स्वय ज्योतिरात्मा स्वप्ने भवतीत्यभिप्राय।

त नायत बोधयेदित्याहु.—प्रसिद्धिरपि लोके विद्यते, स्वप्ने आत्मज्योतिषो व्यतिरिक्तत्वे। का असौ? तमात्मान सुप्त, आयत सहसा भृश, न बोधयेदित्याहुरेव कथयन्ति चिकित्सकादयो जना लोके। नून ते पश्यन्ति—जाग्रद्देहादिन्द्रियद्वारतोऽपसृत्य केवलो बहिर्वर्तते इति, यत आहु.—त नायत बोधयेदिति। तत्र च दोष पश्यन्ति—भृश ह्यसौ बोध्यमानस्तानीन्द्रियद्वाराणि सहसा प्रतिबोध्यमानो न प्रतिपद्यत इति। तदेतदाह—दुर्भिषज्य हास्मै भवति यमेष न प्रतिपद्यते। यमिन्द्रियद्वारदेश—यस्माद्देशाच्छुक्रमादायापसृत तमिन्द्रियदेशमेष आत्मा पुनर्न प्रतिपद्यते, कदाचिद्व्यत्यासेनेन्द्रियमात्राः प्रवेशयति, तत आन्ध्यबाधिर्यादिदोषप्राप्तौ दुर्भिषज्य दु खभिषक्कर्मता हास्मै देहाय भवति, दु.खेन चिकित्सनीयोऽसौ देहो भवतीत्यर्थः। तस्मात्प्रसिद्ध्यापि स्वप्ने स्वयज्योतिष्ट्वमस्य गम्यते।

स्वप्नो भूत्वाऽतिक्रान्तो मृत्यो रूपाणीति तस्मात्स्वप्ने स्वय ज्योतिरात्मा। अथो अपि खल्वन्ये आहुः—जागरितदेश एवास्यैष यः स्वप्न। न सध्य स्थानान्तरमिहलोकपरलोकाभ्या व्यतिरिक्त, किं तर्हीहलोक एव जागरितदेश.। यद्येव, किंचातः? शृण्वतो यद्भवति—यदा जागरितदेश एवाय स्वप्न., तदायमात्मा कार्यकरणेभ्यो न व्यावृत्तस्तैर्मिश्रीभूत., अतो न स्वयं ज्योतिरात्मा—इत्यतः स्वय ज्योतिष्ट्वबाधनाय अन्ये आहुः—जागरितदेश एवास्यैष इति। तत्र च हेतुमाचक्षते—जागरितदेशत्वे यानि हि यस्माद्धस्त्यादीनि पदार्थजातानि, जाग्रज्जागरितदेशे, पश्यति लौकिकः, तान्येव सुप्तोऽपि पश्यतीति। तदसत्, इन्द्रियोपरमात्। उपरतेषु हीन्द्रियेषु स्वप्नान्पश्यति। तस्मान्नान्यस्य ज्योतिषस्तत्र सभवोऽस्ति। तदुक्त 'न तत्र रथा न रथयोगाः' इत्यादि। तस्मादत्राय पुरुष. स्वय ज्योतिर्भवत्येव।

स्वय ज्योतिरात्मा अस्तीति स्वप्ननिदर्शनेन प्रदर्शित, अतिक्रामति मृत्यो रूपाणीति च। क्रमेण सचरन्निहलोकपरलोकादीन् इहलोकपरलोकादिव्यतिरिक्त, तथा जाग्रत्स्वप्नकुलायाभ्या व्यतिरिक्त, तत्र च क्रमसचारान्नित्यश्चेत्येतत्प्रतिपादित याज्ञवल्क्येन। अतो विद्यानिष्क्रयार्थे सहस्र ददामीत्याह जनक। सोऽहमेव बोधितस्त्वया भगवते तुभ्य सहस्र ददामि। विमोक्षश्च कामप्रश्नो मयाऽभिप्रेतः। तदुपयोग्यय तादर्थ्यात्तदेकदेशो एव। अतस्त्वा नियोक्ष्यामि समस्तकामप्रश्ननिर्णयश्रवणेन—विमोक्षायात ऊर्ध्वं ब्रूहीति, येन ससाराद्विप्रमुच्येय त्वत्प्रसादात्। विमोक्षपदार्थैकदेशनिर्णयहेतोः सहस्रदानम्। शकर.

(२) अस्य जीवस्याऽऽराममुपकरणभूतमुद्यानादिक देहेन्द्रियादिक च सर्वेऽपि पश्यन्ति त देहेन्द्रियादिविविक्तमन्तर्बहिः सचरन्तमपि न पश्यतीति लोक प्रत्यनुक्रोश दर्शयति श्रुति.। इतिः मन्त्रसमाप्तौ। आयत गाढसुप्तम्। यम उपरमे। निष्ठा। 'अनुदात्तोपदेश०' (पा. सू ६।४।३७) इत्यनुनासिकलोपः। अथो खल्वित्यन्य आहु। किमिति जागरितदेशे जाग्रत्स्थान एवास्यैष स्वप्न इति, न स्थानान्तरमिति। तत्र च हेतुमाहुः—यान्येव हस्त्यादीनि जाग्रत्पश्यति तानि सुप्तोऽपि पश्यतीति। अत्र मतान्तरत्वेनोपन्यासस्याय भाव. — उपरतेष्विन्द्रियेषु हि स्वप्नान्पश्यति न तत्र जागरितदेशस्यावकाशोऽस्ति अतस्तृतीयस्थानमेव स्वप्नस्थानमिति। केचित्तु अथो खल्वित्यादिग्रन्थोऽपि पूर्वोक्तार्थोपपादक एव न मतान्तरम्। जागरितशब्दादीषदसमाप्तौ देश्यप्रत्यये छान्दसो यलोपः। जागरितादीषन्न्यूनमित्यर्थः। यानि

(यान्येव), भास्कर २।३।१८, ३।२।३, रग क्षाय (क्षायैव), श्रीकर. १।३।४२

स्रक्चन्दनवनितान्नपानादीनि जाग्रद्दशाया पश्यति तादृशान्येवार्थक्रियाकारीणि स्वप्ने पश्यति । अतः स्वप्नार्थाः सृष्टा एव । तस्मादिहपरलोकव्यतिरिक्तस्थानान्तरमेव स्वप्नस्थानमित्याहु. । * रग

( ३ ) ' जीवस्य मृतिकाले च स्वप्नकाले च केशव.। एवविधानि कर्माणि कुर्वाणोऽपि न दृश्यते । तथा जागरिते सुप्तौ मुक्तैरेव तु दृश्यते । तथापि नायतेभ्यस्त ज्ञानी ब्रूया ज्जनार्दनम् । यस्य गोचरता विष्णुः कदाचिन्न प्रपद्यते । तस्यायतस्य पापस्य भेषज न हि विद्यते । सुप्तिकालेऽप्यय विष्णु सदा जागरितात्मक' । यानि जागरिते पश्येत्तानि सुप्तेऽपि पश्यति । नित्यज्ञानस्वरूपत्वाद्भगवान् पुरुषोत्तम. । नित्यानन्यप्रकाशत्वेऽप्यन्यज्योतिर्यदा भवेत् । तदा स्यात्सशयोऽज्ञानामित्यत्रेति विशेषणम् ॥ ' इति च । जीवस्यापि स्वप्नावस्थाया जागरितत्वेऽस्येति विशेषण व्यर्थम् । पूर्वोक्तमपि मोक्षायैव भवति । अत ऊर्ध्वं विशिष्टमोक्षाय ब्रूहि । 'स्वयोग्यभगवद्दृष्टे. सर्वैर्मुक्तिरवाप्यते । पुनर्ज्ञानान्तराधिक्यात्सुखाधिक्ये विमोक्षगम् ॥' इति ब्रह्मतर्के । स्वप्नसुषुप्त्युभयाभिप्रायेण तानि सुप्त इत्युक्तम् । तत्र सुषुप्तिमात्राभिप्रायेण ' स वा एष एतस्मिन्सप्रसाद. ' इत्याह । ' यत्रोभयविवक्षा स्यात् परामर्शस्तदोभयोः । एकस्यापि भवेन्नैकविवक्षायां क्वचिद्द्वयो. ॥ ' इति शब्दनिर्णये । मध्व.

**स वा एष एतस्मिन्सप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्य च पाप च पुन प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नायैव । स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवति । असङ्गो ह्यय पुरुष इति । एवमेवैतद्याज्ञवल्क्य । सोऽहं भगवते सहस्र ददामि । अत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥**

( १ ) यत्प्रस्तुतम् — ' आत्मनैवाय ज्योतिषाऽऽस्ते ' इति, तत्प्रत्यक्षत. प्रतिपादित ' अत्राय पुरुष. स्वय ज्योतिर्भवति ' स्वप्ने । यत्तूक्त — ' स्वप्नो भूत्वेम लोकमतिक्रामति मृत्यो रूपाणि ' इति, तत्रैतदाशङ्क्यते— मृत्यो रूपाण्येवातिक्रामति, न मृत्युम् । प्रत्यक्ष ह्येतत्स्वप्ने कार्यकरणव्यावृत्तस्यापि मोदत्रासादिदर्शनम् । तस्मान्नून नैवाय मृत्युमतिक्रामति । कर्मणो हि मृत्यो. कार्यं मोदत्रासादि दृश्यते । यदि च मृत्युना बद्ध एवायं स्वभावत , ततो विमोक्षो नोपपद्यते । न हि स्वभावात्कश्चिद्विमुच्यते । अथ स्वभावो न भवति मृत्यु , ततस्तस्मान्मोक्ष उपपत्स्यते । यथाऽसौ मृत्युरात्मीयो धर्मो न भवति, तथा प्रदर्शनाय — अत ऊर्ध्वं विमोक्षाय ब्रूहीत्येव जनकेन पर्यनुयुक्तो याज्ञवल्क्य. तद्दिदर्शयिषया प्रववृते । स वै प्रकृत. स्वय ज्योति. पुरुष , एष यः स्वप्ने प्रदर्शित , एतस्मिन्सप्रसादे — सम्यक्प्रसीदत्यस्मिन्निति सप्रसादः । जागरिते देहेन्द्रियव्यापारशतसनिपातजं हित्वा कालुष्य तेभ्यो विप्रमुक्त ईषत्प्रसीदति स्वप्ने, इह तु सुषुप्ते सम्यक्प्रसीदतीत्यत. सुषुप्त सप्रसाद उच्यते । ' तीर्णो हि तदा सर्वाञ्शोकान् ' इति ' सलिल एको द्रष्टा ' इति हि वक्ष्यति सुषुप्तस्थमात्मानम् । स वै एष एतस्मिन्सप्रसादे क्रमेण सप्रसन्न सन्सुषुप्ते स्थित्वा । कथ सप्रसन्न. ? स्वप्नात्सुषुप्त प्रविविक्षु स्वप्नावस्थ एव रत्वा रतिमनुभूय मित्रबन्धुजनदर्शनादिना, चरित्वा विहृत्यानेकधा चरणफल श्रममुपलभ्येत्यर्थ , दृष्ट्वैव न कृत्वेत्यर्थ., पुण्य च पुण्यफल, पाप च पापफलम् । न तु पुण्यपापयोः साक्षाद्दर्शनमस्तीत्यवोचाम । तस्मान्न पुण्यपापाभ्यामनुबद्ध. । यो हि करोति पुण्यपापे, स ताभ्यामनुबध्यते । न हि दर्शनमात्रेण तदनुबद्धः स्यात् । तस्मात्स्वप्नो भूत्वा मृत्युमतिक्रामत्येव, न मृत्युरूपाण्येव केवलम् । अतो न मृत्योरात्मस्वभावत्वाशङ्का । मृत्युश्चेत्स्वभावोऽस्य, स्वप्नेऽपि कुर्यात् । न तु करोति । स्वभावश्चेत्क्रिया स्यात् । अनिर्मोक्षतैव स्यात् । न तु स्वभावः, स्वप्नेऽभावात्, अतो विमोक्षोऽस्योपपद्यते मृत्यो' पुण्यपापाभ्याम् । ननु जागरितेऽस्य स्वभाव एव । न । बुद्ध्याद्युपाधिकृत हि तत् । तच्च प्रतिपादित सादृश्यात् 'ध्यायतीव लेलायतीव' इति । तस्मादेकान्तेनैव स्वप्ने मृत्युरूपातिक्रमणान्न स्वाभाविकत्वाशङ्का अनिर्मोक्षता

* शेष शंकरवत् ।

(१) बृउ ४।३।१५, शब्रा नास्त्येष खण्ड , ब्रशकर १।१।४ ( पृ ५८ ), १।३।४२, २।१।३, २।३।१७, ३।३।३९, रामानुज १।१।४ ( पृ १५२ ), ब्रमध्व १।३।४२, श्रीकर १।३।४२, वल्लभ १।१।५, विज्ञान. १।३।१९, २।३।३७, ४९, ५०

वा । तत्र चरित्वेति चरणफल श्रममुपलभ्येत्यर्थ. । तत. सप्रसादानुभवोत्तरकाल पुन प्रतिन्याय यथान्याय यथागत, निश्चित आयो न्याय, अयनमायो निर्गमन, पुनः पूर्वगमनवैपरीत्येन यदागमन स प्रतिन्याय । यथागत पुनरागच्छतीत्यर्थ. । प्रतियोनि यथास्थानम् । स्वप्नस्थानाद्धि सुषुप्त प्रतिपन्नः सन्यथास्थानमेव पुनरागच्छति, प्रतियोनि आद्रवति, स्वप्नायैव स्वप्नस्थानायैव । ननु स्वप्ने न करोति पुण्यपापे तयो. फलमेव पश्यतीति कथमवगम्यते ? यथा जागरिते तथा करोत्येव स्वप्नेऽपि, तुल्यत्वाद्दर्शनस्य, इत्यत आह — स आत्मा, यत्किंचित्तत्र स्वप्ने पश्यति पुण्यपापफल, अनन्वागतोऽननुबद्ध स्तेन दृष्टेन भवति, नैवानुबद्धो भवति । यदि हि स्वप्ने कृतमेव तेन स्यात्, तेनानुबध्येत । स्वप्नादुत्थितोऽपि समन्वागत स्यात् । न च तल्लोके—स्वप्नकृतकर्मणा अन्वागतत्वप्रसिद्धि । न हि स्वप्नकृतेनागसा आगस्कारिणमात्मान मन्यते कश्चित् । न च स्वप्नदृश आगः श्रुत्वा लोकस्त गर्हति परिहरति वा । अतोऽनन्वागत एव तेन भवति । तस्मात्स्वप्ने कुर्वन्निवोपलभ्यते, न तु क्रियाऽस्ति परमार्थत । 'उतेव स्त्रीभि. सह मोदमान.' इति श्लोक उक्त. । आख्यातारश्च स्वप्नस्य सह इवशब्देनाचक्षते— हस्तिनोऽद्य घटीकृता धावन्तीव मया दृष्टा इति । अतो न तस्य कर्तृत्वमिति ।

कथ पुनरस्याकर्तृत्वमिति —कार्यकरणैर्मूर्तै सश्लेषो मूर्तस्य, स तु क्रियाहेतुर्दृष्ट । न ह्यमूर्त कश्चित् क्रियावान्दृश्यते । अमूर्तश्चात्मा, अतोऽसङ्ग' । यस्माच्चासङ्गोऽय पुरुष', तस्मादनन्वागतस्तेन स्वप्नदृष्टेन । अत एव न क्रियाकर्तृत्वमस्य कथचिदुपपद्यते । कार्यकरणसश्लेषेण हि कर्तृत्व स्यात् । स च सश्लेष' सङ्गोऽस्य नास्ति, यतोऽसङ्गो ह्यय पुरुष' । तस्मादमृत । एवमेवैतद्याज्ञवल्क्य । सोऽहं भगवते सहस्र ददामि । अत ऊर्ध्वं विमोक्षायैव ब्रूहि । मोक्षपदार्थैकदेशस्य कर्मप्रविवेकस्य सम्यग्दर्शितत्वात् । अत ऊर्ध्वं विमोक्षायैव ब्रूहीति ।

शकर

( २ ) 'अत ऊर्ध्वं विमोक्षायैव ब्रूहि' इति च प्रकृतस्यैव विज्ञानमयस्याऽऽत्मनः सर्वससारधर्मप्रत्याख्यानेन परमात्मभावप्रतिपादनात् । तस्मान्नैवाऽऽत्मोत्पद्यते प्रविलीयते चेति । ब्रशकर २।३।१७

( ३ ) चरित्वा भक्षयित्वा विहृत्य वा । प्रतियोनि योनिशब्दः स्थानवाची स्थान प्रत्याद्रवति आगच्छति स्वप्नानुभवायेत्यर्थः । तत्र जाग्रद्दशायां स यत्किंचिन्मनुष्यव्याघ्रशरीरादिकमात्मीयत्वेन पश्यति ।

* रग.

( ४ ) सप्रसादशब्दो हि श्रुतौ जीवे सुषुप्त्याख्यतदवस्थायां च दृश्यते 'य एष सप्रसादोऽस्माच्छरीरात्समुत्थाय' इत्यत्र 'स वा एष एतस्मिन्सप्रसाद.' इत्यत्र च तत्र जीवे सप्रसादस्यौपाधिकतया धर्मधर्म्यभेदेनौपचारिक. प्रयोगः सुषुप्तावस्थाया च प्रतिक्षण सत्त्ववृद्धया सप्रसीदति चित्तमस्यामितिव्युत्पत्त्या सप्रसादशब्दप्रयोगः प्रसादसपत्त्योः पर्यायतया च सुख एव सप्रसादशब्दो मुख्यः, सत्त्वे तु प्रसादरूपिणि सकलस्मृतिषु प्रसिद्ध एव सप्रसादशब्द इति ।

विज्ञान १।३।९

स वा एष एतस्मिन्स्वप्ने रत्वा चरित्वा दृष्ट्वैव पुण्यं च पाप च पुन प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव । स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवति । असङ्गो ह्ययपुरुष इति । एवमेवैतद्याज्ञवल्क्य । सोऽहं भगवते सहस्र ददामि । अत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥

( १ ) तत्र 'असङ्गो ह्यय पुरुषः' इत्यसगताऽकर्तृत्वे हेतुरुक्त. । उक्त च पूर्वं — कर्मवशात्स ईयते यत्र काममिति । कामश्च सङ्गः । अतोऽसिद्धो हेतुरुक्तः — 'असङ्गो ह्यय पुरुष.' इति । न त्वेतदस्ति । कथ तर्हि ? असङ्ग एवेत्येतदुच्यते — स वा एष एतस्मिन्स्वप्ने, स वै एष पुरुषः संप्रसादात्प्रत्यागतः स्वप्ने रत्वा चरित्वा यथाकाम, दृष्ट्वैव पुण्य च पापं च — इति सर्वं पूर्ववत् । बुद्धान्तायैव जागरित-

---

* शेष शकरवत् ।

(१) बृउ ४।३।१६, शब्रा १४।७।१।१७ न्स्वप्ने (न्स्वप्नान्ते) यत्तत्र ( यदत्र ), ब्रशकर २।१।३, ३।२।९, भास्कर १।३।४२, ३।२।९, रग. न्स्वप्ने (न्स्वप्नान्ते), वल्लभ ३।२।८, विज्ञान. ३।२।९

स्थानाय। तस्मादसङ्ग एवाय पुरुष.। यदि स्वप्ने सङ्गवान् स्यात्कामी, तत' तत्सङ्गजैर्दोषै. बुद्धान्ताय प्रत्यागतो लिप्येत। * शकर.

( २ ) 'असङ्गो ह्यय पुरुष.' इत्येवमादिश्रुतिप्रसिद्धमेव पुरुषस्य विशुद्धत्व निर्गुणपुरुषनिरूपणेन साख्यैरभ्युपगम्यते। २।१।३

'स एव तु कर्मानुस्मृतिशब्दविधिभ्य.' — स एव तु जीवः सुप्त स्वास्थ्य गतः पुनरुत्तिष्ठति नान्यः। कस्मात्। कर्मानुस्मृतिशब्दविधिभ्यः। विभज्य हेतु दर्शयिष्यामि। कर्मशेषानुष्ठानदर्शनात्तावत्स एवोत्थातुमर्हति नान्य। सोऽहमस्मीति चाऽऽत्मानुस्मरणमात्मान्तरोत्थाने नावकल्पते। शब्देभ्यश्च तस्यैवोत्थानमवगम्यते। तथाहि 'पुनः प्रतिन्याय प्रतियोन्याद्रवति बुद्धान्तायैव' इत्येवमादयः शब्दाः स्वापप्रबोधाधिकारपठिता नाऽऽत्मान्तरोत्थाने सामञ्जस्यमीयु। कर्मविद्याविधिभ्यश्चैवमेवावगम्यते। अन्यथा हि कर्मविद्याविधयोऽनर्थका स्यु'। ब्रशकर ३।२।९

**स वा एष एतस्मिन्बुद्धान्ते रत्वा चरित्वा दृष्ट्वैव पुण्य च पाप च पुन. प्रतिन्याय प्रतियोन्याद्रवति स्वप्नान्तायैव ॥**

(१) यथाऽसौ स्वप्नेऽसङ्गत्वात्स्वप्नप्रसङ्गजैर्दोषै जागरिते प्रत्यागतो न लिप्यते, एव जागरितसङ्गजैरपि दोषैर्न लिप्यत एव बुद्धान्ते। तदेतदुच्यते — स वै एष. एतस्मिन्बुद्धान्ते जागरिते रत्वा चरित्वेत्यादि पूर्ववत्। स यत्तत्र बुद्धान्ते किंचित्पश्यत्यनन्वागतस्तेन भवति—असङ्गो ह्यय पुरुष इति। ननु दृष्ट्वैवेति कथमवधार्यते ? करोति च तत्र पुण्यपापे। तत्फल च पश्यति, न। कारकावभासकत्वेन कर्तृत्वोपपत्तेः। 'आत्मनैवाय ज्योतिषा आस्ते' इत्यादिना आत्मज्योतिषाऽवभासित. कार्यकरणसघातो व्यवहरति। तेनास्य कर्तृत्वमुपचर्यते, न स्वतः कर्तृत्वम्। तथा चोक्त 'ध्यायतीव लेलायतीव' इति। बुद्ध्याद्युपाधिकृतमेव न स्वतः। इह तु परमार्थापेक्षयोपाधिनिरपेक्ष उच्यते—दृष्ट्वैव पुण्य च पाप च न कृत्वेति। तेन न पूर्वापरव्याघाताशङ्का, यस्मान्निरुपाधिकः परमार्थतो न करोति, न लिप्यते क्रियाफलेन। तथा च भगवतोक्त — 'अनादित्वान्निर्गुणत्वात्परमात्मायमव्यय.। शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥' ( भ गी. १३।३१ ) इति। तथा सहस्रदान तु कामप्रविवेकस्य दर्शितत्वात्। तथा 'स वा एष एतस्मिन्स्वप्ने' 'स वा एष एतस्मिन्बुद्धान्ते' इत्येताभ्या कण्डिकाभ्यामसङ्गतैव प्रतिपादिता। यस्मात् बुद्धान्ते कृतेन स्वप्नान्त गत सप्रसन्नोऽसबद्धो भवति स्तैन्यादिकार्यादर्शनात्, तस्मात्त्रिष्वपि स्थानेषु स्वतोऽसङ्ग एवायम्। अतोऽमृत' स्थानत्रयधर्मविलक्षण'। प्रतियोन्याद्रवति स्वप्नान्तायैव, सप्रसादायेत्यर्थ — दर्शनवृत्ते. स्वप्नस्य स्वप्नशब्देनाभिधानदर्शनात्, अन्तशब्देन च विशेषणोपपत्ते। 'एतस्मा अन्ताय धावति' इति च सुषुप्त दर्शयिष्यति। यदि पुनरेवमुच्यते— 'स्वप्नान्ते रत्वा चरित्वा' 'एतावुभावन्तावनुसचरति स्वप्नान्त च बुद्धान्त च' इति दर्शनात्, 'स्वप्नान्तायैव' इत्यत्रापि दर्शनवृत्तिरेव स्वप्न उच्यत इति तथापि न किंचित् दुष्यति। असङ्गता हि सिषाधयिषिता सिध्यत्येव। यस्माज्जागरिते दृष्ट्वैव पुण्य च पाप च रत्वा चरित्वा च स्वप्नान्तमागत., न जागरितदोषेणानुगतो भवति। शकर.

( २ ) एव त्रिभि. खण्डैर्जागरितात्स्वप्नान्त स्वप्नान्ताद्बुद्धान्त बुद्धान्तात्स्वप्नान्त यातीत्यारोहावरोहसचारप्रदर्शनेन ससारचक्रप्रवृत्तिर्दर्शिता। रग.

**तद्यथा महामत्स्य उभे कूले अनुसचरति पूर्वं चापरं च। एवमेवाय पुरुष एतावुभावन्तावनुसंचरति स्वप्नान्तं च बुद्धान्तं च ॥**

( १ ) एवमय पुरुष आत्मा स्वय ज्योति. कार्यकरणविलक्षणः तत्प्रयोजकाभ्यां कामकर्मभ्यां विलक्षणः यस्मात्, असङ्गो ह्यय पुरुष', असङ्गत्वादित्ययमर्थः 'स वा एष एतस्मिन्सप्रसादे' इत्याद्याभिस्तिसृभिः कण्डिकाभि. प्रतिपादितः। तत्रासङ्गतैव आत्मनः। कुतो यस्माज्जागरितात्स्वप्न, स्वप्नाच्च सप्रसाद, सप्रसादाच्च पुन स्वप्न, क्रमेण बुद्धान्त जागरित, बुद्धान्ताच्च पुनः

* रग शकरवत्।

(१) बृउ. ४।३।१७, शब्रा खण्डोऽयं न विद्यते.

(१) बृउ ४।३।१८, शब्रा. १४।७।१।१८ एतावुभा ( एता उभा )

स्वप्नान्त—इत्येवमनुक्रमसचारेण स्थानत्रयस्य व्यतिरेक साधित । पूर्वमप्युपन्यस्तोऽयमर्थ ‘ स्वप्नो भूत्वेम लोकमतिक्रामति मृत्यो रूपाणि ’ इति—त विस्तरेण प्रतिपाद्य, केवल दृष्टान्तमात्रमवशिष्ट, तद्वक्ष्यामीत्यार भ्यते—तत्तत्रैतस्मिन्यथाप्रदर्शितेऽर्थे दृष्टान्तोऽयमुपादीयते—यथा लोके महामत्स्यो महाश्वासौ मत्स्यश्च नादेयेन स्रोतसाऽहार्य इत्यर्थ , स्रोतश्च विष्टम्भयति, स्वच्छन्दचारी, उभे कूले नद्या पूर्वं चापर चानुक्रमेण सचरति। सचरन्नपि कूलद्वय तन्मध्यवर्तिना उदकस्रोतोवेगेन न परवशीक्रियते । एवमेवाय पुरुष एतावुभौ अन्तौ अनु सचरति । कौ तौ ? स्वप्नान्त च बुद्धान्त च । दृष्टान्त प्रदर्शनफल तु--मृत्युरूप कार्यकरणसघातः सह तत्प्रयोजकाभ्या कामकर्मभ्यां अनात्मधर्म॰ । अय चात्मा एतस्माद्विलक्षण —इति विस्तरतो व्याख्यातम् ।

शकर

( २ ) स्वप्नाख्यात स्थान स्वप्नान्तम् । ‘ अन्तःस्थान स्थल वास प्रदेश इति चोच्यते ’ इति च । स्वप्नान्त च बुद्धान्त चेत्यत्रापि स्वप्नान्तशब्दः स्वप्नसुषुप्त्युभयाभिप्रायेण । ‘ शुभाशुभ तु दृष्ट्वैव स्वप्ने जागरितेऽपि च । असस्पृष्ट. सदा तु खेश्वरतीशः पुनः पुन॰ । स्वप्नसुप्त्यात्मक कूलमेक बुद्धात्मक परम् । महा मत्स्य इवासङ्गी चरत्येको जनार्दन॰ ॥ ’

मध्व

**तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्त सꣳहत्य पक्षौ सलयायैव ध्रियते । एवमेवाय पुरुष एतस्मा अन्ताय धावति । यत्र सुप्तो न कचन काम कामयते न कचन स्वप्न पश्यति ॥**

( १ ) अत्र च स्थानत्रयानुसचारेण स्वयज्योतिष आत्मन॰ कार्यकरणसघातव्यतिरिक्तस्य कामकर्मभ्या विविक्ततोक्ता । स्वतो नाय ससारधर्मवानुपाधिनिमित्तमेव त्वस्य ससारित्व अविद्याध्यारोपितम्—इत्येष समुदायार्थ उक्तः । तत्र च जाग्रत्स्वप्नसुषुप्तस्थानाना त्रयाणा विप्रकीर्णरूप उक्तः, न पुञ्जीकृत्यैकत्र दर्शित — यस्माज्जागरिते ससङ्ग. समृत्यु सकार्यकरणसघात उपलक्ष्यतेऽविद्यया । स्वप्ने तु कामसयुक्तो मृत्युरूपविनिर्मुक्त उपलभ्यते । सुषुप्ते पुनः सप्रसन्नोऽसङ्गो भवतीत्यसङ्गताऽपि दृश्यते । एकवाक्यतया तूपसंह्रियमाण फल नित्यमुक्तबुद्धशुद्धस्वभावताऽस्य नैकत्र पुञ्जीकृत्य प्रदर्शितेति, तत्प्रदर्शनाय कण्डिका आरभ्यते । सुषुप्ते ह्येवरूपताऽस्य वक्ष्यमाणा ‘तद्वा अस्यैतदतिच्छन्दा अप हतपाप्माऽभय रूपम् ’ इति । यस्मादेवरूप विलक्षण, सुषुप्त प्रविविक्षति । तत्कथमित्याह— दृष्टान्तेनास्यार्थस्य प्रकटीभावो भवतीति तत्र दृष्टान्त उपादीयते— तद्यथा— अस्मिन्नाकाशे भौतिके श्येनो वा सुपर्णो वा, सुपर्णशब्देन क्षिप्र. श्येन उच्यते, यथा आकाशेऽस्मिन्विहृत्य विपरिपत्य श्रान्तो नानापरिपतनलक्षणेन कर्मणा परिखिन्न., सहत्य पक्षौ सगमय्य सप्रसार्य पक्षौ, सम्यग्लीयते अस्मिन्निति सलय , नीड. नीडायैव, ध्रियते स्वात्मनैव धार्यते स्वयमेव । यथाऽय दृष्टान्तः, एवमेवाय पुरुष एतस्मा एतस्मै, अन्ताय धावति । अन्तशब्दवाच्यस्य विशेषण — यत्र यस्मिन्नन्ते सुप्त., न कचन न कचिदपि, काम कामयते । तथा च न कचन स्वप्न पश्यति । ‘न कचन कामम् ’ इति स्वप्नबुद्धान्तयोः अविशेषेण सर्वः काम. प्रतिषिध्यते, ‘कचन’ इत्यविशेषिताऽभिधानात् । तथा ‘न कचन स्वप्नम् ’ इति जागरितेऽपि यद्दर्शन, तदपि स्वप्न मन्यते श्रुति., अत आह — न कचन स्वप्न पश्यतीति । तथा च श्रुत्यन्तरम् ‘ तस्य त्रय आवसथास्त्रय स्वप्ना.’ इति । यथा दृष्टान्ते पक्षिणः परिपतनजश्रमापनुत्तये स्वनीडोपसर्पण, एव जाग्रत्स्वप्नयोः कार्यकरणसयोगजक्रियाफलैः सयुज्यमानस्य, पक्षिणः परिपतनज इव, श्रमो भवति । तच्छ्रमापनुत्तये स्वात्मनो नीडमायतन सर्वससारधर्मविलक्षण सर्वक्रियाकारकफलायासशून्य स्वमात्मान प्रविशति ।

शकर.

( २ ) श्येनो वा गरुडो वा । समीचीननीडायैव ध्रियतेऽवतिष्ठते ।

रग.

( ३ ) ‘य विष्णु श्येनवच्छ्रान्तो जीवो जागरिते भ्रमन् । स्वप्ने च सुप्तावभ्येति सश्रान्तः सद्गृह यथा । स्वित्यानन्दः परो विष्णुस्तमातः सुप्त उच्यते । सप्राप्य तमय जीव. कामयेन्नैव किंचन । न च स्वप्नसम-

(१) बृउ ४।३।१९, शबा १४।७।१।१९ सलया ( सल्लया ), ब्रशकर ४।४।१६, मध्व शब्रावत्, वल्लभ ३।२।७

भ्रान्तिज्ञानं याति कदाचन। सुषुप्तौ च किमु ज्ञानान्मुक्तौ प्राप्तो जनार्दनम् ॥' मध्व.

**[1]ता वा अस्यैता हिता नाम नाड्यो यथा केश· सहस्रधा भिन्नस्तावताऽणिम्ना तिष्ठन्ति । शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा. । अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्तमिव पतति । यदेव जाग्रद्भय पश्यति तदत्राविद्यया मन्यते । अथ यत्र देव इव राजेवाहमेवेद sर्वोऽस्मीति मन्यते सोऽस्य परमो लोक· ॥**

( १ ) यदि अस्याय स्वभावः — सर्वससारधर्मशून्यता, परोपाधिनिमित्त चास्य ससारधर्मित्वम् । यन्निमित्त चास्य परोपाधिकृत ससारधर्मित्व, सा चाविद्या —— तस्या अविद्याया· कि स्वाभाविकत्व, आहोस्वित्कामकर्मादिवदागन्तुकत्वम् । यदि चागन्तुकत्व, ततो विमोक्ष उपपद्यते । तस्याश्चागन्तुकत्वे का उपपत्ति., कथ वा नात्मधर्मोऽविद्या, इति सर्वानर्थबीजभूताया अविद्याया सतत्त्वावधारणार्थं परा कण्डिकाऽऽरभ्यते— ता वै, अस्य शिरःपाण्यादिलक्षणस्य पुरुषस्य, एता. हिता नाम नाड्यः, यथा केश. सहस्रधा भिन्न, तावता तावत्परिमाणेनाणिम्नोऽणुत्वेन तिष्ठन्ति । ताश्च शुक्लस्य रसस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा., एतै. शुक्लत्वादिभि रसविशेषै पूर्णा इत्यर्थ. । एते च रसाना वर्णविशेषा. वातपित्तश्लेष्मणां इतरेतरसयोगवैषम्यविशेषाद्विचित्रा बहवश्च भवन्ति । तास्वेवविधासु नाडीषु सूक्ष्मासु वालाग्रसहस्रभेदपरिमाणासु शुक्लादिरसपूर्णासु सकलदेहव्यापिनीषु सप्तदशक लिङ्ग वर्तते । तदाश्रिताः सर्वा वासना उच्चावचससारधर्मानुभवजनिता. । तल्लिङ्ग वासनाश्रय सूक्ष्मत्वात्स्वच्छ स्फटिकमणिकल्प नाडीगतरसोपाधिससर्गवशात् धर्माधर्मप्रेरितोद्भूतवृत्तिविशेष स्त्रीरथहस्त्याद्याकारविशेषैर्वासनाभि प्रत्यवभासते । अथैव सति यत्र यस्मिन्काले, केचन शत्रवोऽन्ये वा तस्कराः मामागत्य घ्नन्तीति मृषैव वासनानिमित्त प्रत्ययोऽविद्याख्यो जायते, तदेतदुच्यते — एन स्वप्नदर्शं घ्नन्तीवेति । तथा जिनन्तीव वशीकुर्वन्तीव । न केचन घ्नन्ति नापि वशीकुर्वन्ति, केवल त्वविद्यावासनोद्भवनिमित्त भ्रान्तिमात्रम् । तथा हस्तीवैन विच्छाययति विच्छादयति विद्रावयति धावयतीत्यर्थ । गर्तमिव पतति गर्तं जीर्णकूपादिकमिव पतन्तमात्मानमुपलक्षयति । तादृशी ह्यस्य मृषा वासना उद्भवति अत्यन्तनिकृष्टाऽधर्मोद्भासितान्त करणवृत्त्याश्रया, दु खरूपत्वात् । किं बहुना, यदेव जाग्रद्भय पश्यति हस्त्यादिलक्षण, तदेव भयरूप अत्रास्मिन्स्वप्ने विनैव हस्त्यादिरूप भयमविद्यावासनया मृषैवोद्भूतया मन्यते । अथ पुनर्यत्राविद्याऽपकृष्यमाणा विद्या चोत्कृष्यमाणा —— किंविषया किंलक्षणा चेत्युच्यते —— अथ पुनर्यत्र यस्मिन्काले, देव इव स्वय भवति, देवताविषया विद्या यदोद्भूता जागरितकाले, तदोद्भूतया वासनया देवमिवात्मान मन्यते । स्वप्नेऽपि तदुच्यते——देव इव, राजेव राज्यस्थोऽभिषिक्त., स्वप्नेऽपि राजाऽहमिति मन्यते राजवासनावासित । एव अत्यन्तप्रक्षीयमाणाऽविद्या उद्भूता च विद्या सर्वात्मविषया यदा, तदा स्वप्नेऽपि तद्भावभावित, अहमेवेद सर्वोऽस्मीति मन्यते । स य. सर्वात्मभाव, सोऽस्यात्मन. परमो लोक परम आत्मभाव स्वाभाविक. । यत्तु सर्वात्मभावादर्वाग्वालाग्रमात्रमप्यन्यत्वेन दृश्यते——नाहमस्मीति, तदवस्थाऽविद्या । तयाऽविद्यया ये प्रत्युपस्थापिताः अनात्मभावा लोका, तेऽपरमा. स्थावरान्ता । तान्सव्यवहारविषयांल्लोकानपेक्ष्याय सर्वात्मभाव. समस्तोऽनन्तरोऽबाह्य, सोऽस्य परमो लोक । तस्मादपकृष्यमाणायामविद्यायां, विद्याया च काष्ठां गतायां, सर्वात्मभावो मोक्ष, यथा स्वयज्योतिष्ट्व स्वप्ने प्रत्यक्षत उपलभ्यते तद्वद्विद्याफलमुपलभ्यते इत्यर्थ ।

तथाऽविद्यायामप्युत्कृष्यमाणाया, तिरोधीयमानाया च विद्याया, अविद्याया. फल प्रत्यक्षत एवोपलभ्यते—'अथ यत्रैन घ्नन्तीव जिनन्तीव' इति । ते एते विद्याविद्याकार्ये, सर्वात्मभाव. परिच्छिन्नात्मभावश्च । विद्यया शुद्धया सर्वात्मा भवति । अविद्यया चासर्वो भवति । अन्यत. कुतश्चित्प्रविभक्तो भवति । यत प्रविभक्तो भवति, तेन विरुध्यते । विरुद्धत्वाद्धन्यते जीयते विच्छाद्यते च ।

(१) बृउ ४।३।२०, शब्रा १४।७।१।२० विद्यया+ ( भय ) देव इव राजेवा ( राजेव देव इवा ) सर्वोऽस्मी ( सर्वमस्मी ) लोक + ( अथ यत्र सुप्तो न कं चन काम कामयते न क चन स्वप्न पश्यति )

असर्वविषयत्वे च भिन्नत्वादेतद्भवति। समस्तस्तु सन्कुतो भिद्यते, येन विरुध्येत। विरोधाभावे केन हन्यते जीयते विच्छाद्यते च। अत इदमविद्यायाः सतत्त्वमुक्तं भवति——सर्वात्मानं सन्तमसर्वात्मत्वेन ग्राहयति, आत्मनोऽन्यद्वस्त्वन्तरमविद्यमानं प्रत्युपस्थापयति, आत्मानमसर्वमापादयति। ततस्तद्विषयः कामो भवति। यतो भिद्यते कामतः, क्रियामुपादत्ते, ततः फलम्——तदेतदुक्तम्। वक्ष्यमाणं च 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यादि। इदमविद्यायाः सतत्त्वं सह कार्येण प्रदर्शितम्। विद्यायाश्च कार्यं सर्वात्मभावः प्रदर्शितोऽविद्याया विपर्ययेण। सा चाविद्या नात्मनः स्वाभाविको धर्मः, यस्माद्विद्यायामुत्कृष्यमाणायां स्वयमपचीयमाना सती, काष्ठां गतायां विद्यायां परिनिष्ठिते सर्वात्मभावे सर्वात्मना निवर्तते, रज्ज्वामिव सर्पज्ञानं रज्जुनिश्चये। तच्चोक्तम्——'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादि। तस्मान्नात्मधर्मोऽविद्या। न हि स्वाभाविकस्योच्छित्तिः कदाचिदप्युपपद्यते, सवितुरिवौष्ण्यप्रकाशयोः। तस्मात्तस्या मोक्ष उपपद्यते।

शंकर

(२) ननु क्वचित्स्वप्नादिदर्शनं क्वचित्तदभाव इत्यत्र किं विनिगमकमित्याशङ्कायां स्थानवैषम्यकृतमित्याह — ता वेति। यत्र स्थितमेनं केचन घ्नन्तीव केचन जिनन्तीव गजो विद्रावयतीव गर्तमिव पतनमिव भाति। ताः केशसहस्राशसूक्ष्मा नान्य(म)रूपान्नरसपूर्णा हिता(त)नामिका नाड्यो भवन्तीत्यर्थः। यदेवेति। यद्यज्जाग्रद्दशायां भयसाधनं पश्यति तत्सर्वमासु नाडीष्वविद्यया कर्मवशान्मन्यते प्रत्येतीत्यर्थः। हितनामकस्वप्नवहनाडीस्थितस्य कर्मसंबन्धसत्त्वाद्भीषणस्वाप्नपदार्थप्रतिभानं संभवतीति भावः। अथेति। 'स यथा कुमारो वा महाराजो वा महाब्राह्मणो वा अतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेते' (बृउ २।१।१९) इति बालाकिब्राह्मणोक्तिरीत्या यत्र स्थाने स्थितस्य देववद्राजवच्चाऽऽनन्दानुभवः। स्वव्यतिरिक्तानुकूलप्रतिकूलवस्त्वनुपलम्भः सोऽस्य जीवस्य परमो लोको मुख्याश्रयः परमात्मेति भावः।

रंग.

(३) 'निहितो भगवान्यत्र हिता नाड्यः प्रकीर्तिताः। नानावर्णो हरिस्तासु नानारूपी व्यवस्थितः। तासां मध्ये सुषुम्ना च तत्र सुप्तिं व्रजत्ययम्। ता एव कण्ठदेशस्था जीवस्तत्र व्यवस्थितः। स्वप्नान्पश्यति जाग्रद्द्रव्यं च प्रतिपद्यते। अहृत्यादिश्यते विष्णुरविद्या तन्निरीक्षणम्। तेन स्वप्नानयं पश्येज्जीवो जागरिते तथा॥' इति महामीमांसायाम्। जिनन्तीव ताडयन्तीव। विच्छाययति भयेन विच्छायं करोति। अहमेवेदं सर्वोऽस्मि स्वयोग्यतापेक्षया पूर्णोऽस्मि। विषयभोगानन्वितस्वरूपानन्देनेत्येवशब्दः। इदमिति पूर्णत्वविशेषणम्। 'अजानता महिमानं तवेदम्' इतिवत् (भ गी ११।४१)। स्वपूर्णतामापरोक्ष्येणानुभूयेदं पूर्णोऽस्मीति मन्यते। 'क्वचित्तद्भावशेषः स्यात् क्रियाशेषः क्वचिद्भवेत्। क्वचित्पदार्थशेषः स्यादिदमादिस्त्रिधा स्मृतः॥' इति शब्दनिर्णये। न हि राजा देवो वा सर्वं जगद्भवति। राज्ञो भोगापेक्षया पूर्तिर्भवतीति देवदृष्टान्तः। प्रत्यक्षदर्शनार्थं राजदृष्टान्तः। 'स्वयोग्यपूर्तेः स्वातन्त्र्याद्राज्ञो देवगणस्य च। सर्वभावस्तथा मोक्षे न तु सर्वस्वरूपतः॥' इति ब्रह्मतर्के।

मध्व.

* तद्वा[१] अस्यैतदतिच्छन्दा अपहतपाप्माभयꣳ रूपम्। तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं

* व्याख्यानान्तराणि बृउ ४।३।७ (पृ ११९४) इत्यत्र द्रष्टव्यानि।

(१) बृउ ४।३।२१, शब्रा १४।७।१।२१, २२ तद्वा अस्यैतदति रूपम् (तद्वा अस्यैतदात्मकाममाप्तकाममकामꣳ रूपम्) पुरुष (शारीर आत्मा) तद्वा अस्यैतदाप्त शोकान्तरम् (तद्वा अस्यैतदतिच्छन्दोऽपहतपाप्माभयꣳ रूपमशोकान्तरम्), ब्रशंकर १।१।१९, १।३।४२, २।३।४०, ३।२।७ ३।२।३१ पुरुष (शारीर आत्मा), भास्कर १।३।४२, ३।२।७, ३।३।३९, रामानुज १।१।१ (पृ ७८), १।१।४ (पृ १६२), १।१।१०, १।३।४३, १।४।१८, २।१।२२, ४।४।१६, निंबार्क ४।४।१६, ब्रमध्व १।३।४२, श्रीकंठ १।३।४३, ४।४।१६, श्रीकर १।१।१०, ४२, २।१।२३, ३।२।८, २६, वल्लभ २।३।२९, ३।२।७, ३१ शब्रावत्, विज्ञान. १।१।११ (पृ १४३), १।२।११, १।३।४२, २।१।२३, बलदेव १।३।४२, ४।४।१५

**किंचन वेद नान्तरम्। एवमेवायं पुरुषः प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्। तद्वा अस्यैतदाप्तकाममात्मकाममकामꣳ रूपꣳ शोकान्तरम् ॥**

( १ ) इदानीं योऽसौ सर्वात्मभावो मोक्षो विद्याफलं क्रियाकारकफलशून्यं स प्रत्यक्षतो निर्दिश्यते, यत्राविद्याकामकर्माणि न सन्ति। तदेतत्प्रस्तुतम् — 'यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति' इति, तदेतद्वै अस्य रूपं यः सर्वात्मभावः 'सोऽस्य परमो लोकः' इत्युक्तस्तत्। अतिच्छन्दा अतिच्छन्दमित्यर्थः, रूपपरत्वात्। छन्दः कामः, अतिगतश्छन्दो यस्माद्रूपात्तदतिच्छन्दं रूपम्। अन्योऽसौ सान्तः छन्दःशब्दः गायत्र्यादिच्छन्दोवाची। अयं तु कामवचनः, अतः स्वरान्त एव। तथापि 'अतिच्छन्दा' इति पाठः स्वाध्यायधर्मो द्रष्टव्यः। अस्ति च लोके कामवचनप्रयुक्तः छन्दशब्दः स्वच्छन्दः परच्छन्द इत्यादौ। अतोऽतिच्छन्दं इत्येवमुन्नेयं, कामवर्जितमेतद्रूपमित्यस्मिन्नर्थे। तथाऽपहतपाप्म — पाप्मशब्देन धर्माधर्मावुच्येते, 'पाप्मभिः संसृज्यते' 'पाप्मनो विजहाति' इत्युक्तत्वात्। अपहतपाप्म धर्माधर्मवर्जितमित्येतत्। किंच, अभयम् — भयं हि नामाविद्याकार्यम्। 'अविद्यया भयं मन्यते' इति ह्युक्तम्। तत्कार्यद्वारेण कारणप्रतिषेधोऽयम्। अभयं रूपमित्यविद्यावर्जितमित्येतत्। यदेतद्विद्याफलं सर्वात्मभावः, तदेतदतिच्छन्दापहतपाप्माभयं रूपं — सर्वसंसारधर्मवर्जितं, अतः अभयं रूपमेतत्। इदं च पूर्वमेवोपन्यस्तं अतीतानन्तरब्राह्मणसमाप्तौ 'अभयं वै जनक प्राप्तोऽसि' इत्यागमतः। इह तु तर्कतः प्रपञ्चितं दर्शितागमार्थप्रत्ययदार्ढ्याय।

अयमात्मा स्वयं चैतन्यज्योतिःस्वभावः सर्वं स्वेन चैतन्यज्योतिषाऽवभासयति — स यत्तत्र किंचित्पश्यति, रमते, चरति, जानाति चेत्युक्तम्। स्थितं चैतन्यायतो नित्यं स्वरूपं चैतन्यज्योतिष्ट्वमात्मनः। सः यद्यात्मा अत्राविनष्टः स्वेनैव रूपेण वर्तते, कस्मादयमहमस्मीत्यात्मानं वा, बहिर्वा, इमानि भूतानीति, जाग्रत्स्वप्नयोरिव, न जानातीत्यत्रोच्यते। शृण्वत्राज्ञानहेतुम्। एकत्वमेवाज्ञानहेतुः। तत्कथमिति उच्यते। दृष्टान्तेन हि प्रत्यक्षीभवति विवक्षितोऽर्थ इत्याह — तत्तत्र यथा लोके प्रिययेष्टया स्त्रिया संपरिष्वक्तः सम्यक्परिष्वक्तः कामयन्त्या कामुकः सन्, न बाह्यमात्मनः किंचन किंचिदपि वेद, मत्तः अन्यद्वस्त्विति, न चान्तरं, अयमहमस्मि सुखी दुःखी वेति। अपरिष्वक्तस्तु तया प्रविभक्तो जानाति सर्वमेव बाह्यमाभ्यन्तरं च। परिष्वङ्गोत्तरकालं त्वेकत्वापत्तेर्न जानाति — एवमेव, यथा दृष्टान्तोऽयं पुरुषः क्षेत्रज्ञो भूतमात्रासंसर्गतः सैन्धवखिल्यवत्प्रविभक्तः, जलादौ चन्द्रादिप्रतिबिम्बवत्कार्यकरणे इह प्रविष्टः, सोऽयं पुरुषः, प्राज्ञेन परमार्थेन स्वाभाविकेन स्वेनात्मना परेण ज्योतिषा, संपरिष्वक्तः सम्यक्परिष्वक्तः एकीभूतो निरन्तरः सर्वात्मा, न बाह्यं किंचन वस्त्वन्तरं, नाप्यान्तरमात्मनि अयमहमस्मि सुखी दुःखी वेति वेद। तत्र चैतन्यज्योतिःस्वभावत्वे कस्मादिह न जानातीति यत्प्राक्षीः, तत्रायं हेतुर्मयोक्त एकत्वं, यथा स्त्रीपुंसयोः संपरिष्वक्तयोः। तत्रार्थान्नानात्वं विशेषविज्ञानहेतुरित्युक्तं भवति। नानात्वे च कारणं — आत्मनो वस्त्वन्तरस्य प्रत्युपस्थापिकाऽविद्येत्युक्तम्। तत्र चाविद्याया यदा प्रविविक्तो भवति, तदा सर्वेणैकत्वमेवास्य भवति। ततश्च ज्ञानज्ञेयादिकारकविभागेऽसति, कुतो विशेषविज्ञानप्रादुर्भावः कामो वा संभवति स्वाभाविके स्वरूपस्य आत्मज्योतिषि।

यस्मादेवं सर्वैकत्वमेवास्य रूपं, अतस्तद्वै अस्यात्मनः स्वयंज्योतिःस्वभावस्यैतद्रूपमाप्तकामं यस्मात्समस्तमेतत्तस्मादाप्ताः कामा अस्मिन्रूपे तदिदमाप्तकामम्। यस्य ह्यन्यत्वेन प्रविभक्तः कामः, तदनाप्तकामं भवति, यथा जागरितावस्थायां देवदत्तादिरूपम्। न त्विदं तथा कुतश्चित्प्रविभज्यते। अतस्तदाप्तकामं भवति। किमन्यस्माद्वस्त्वन्तरान्न प्रविभज्यते, आहोस्विदात्मैव तद्वस्त्वन्तरं, अत आह नान्यदस्त्यात्मनः। कथम्? यत आत्मकामः—आत्मैव कामाः यस्मिन्रूपे, अन्यत्र प्रविभक्ता इवान्यत्वेन काम्यमाना यथा जाग्रत्स्वप्नयोः, तस्यात्मैव अन्यत्वप्रत्युपस्थापकहेतोरविद्याया अभावादात्मकामम्। अत एवाकाममेतद्रूपं काम्यविषयाभावात्। शोकान्तरं शोकच्छिद्रं शोकशून्यमित्येतत्, शोकमध्यमिति वा, सर्वथाऽप्यशोकमेतद्रूपं शोकवर्जितमित्यर्थः। शंकर

( २ ) 'यथा च तक्षोभयथा' — तथा स्वप्नजागरितयोरात्मन उपाधिसपर्ककृत श्रम श्येनस्येवाऽऽकाशे विपरिपतत श्रावयित्वा तदभाव सुषुप्तौ प्राज्ञेनाऽऽत्मना सपरिष्वक्तस्य श्रावयति । 'तद्वा अस्यैतदाप्तकाममात्मकाममकाम रूप शोकान्तरम्' इत्यारभ्य 'एषाऽस्य परमा गतिरेषाऽस्य परमा सपदेषोऽस्य परमो लोक एषोऽस्य परम आनन्द' (बृउ ४।३।३२) इत्युपसहारात् । तदेतदाहाऽऽचार्य —यथा चेति । त्वर्थे चाय च पठित॰ । नैव मन्तव्य स्वाभाविकमेवाऽऽत्मन॰ कर्तृत्वमग्नेरिवौष्ण्यमिति । यथा तु तक्षा लोके वास्यादिकरणहस्तः कर्ता दुःखी भवति स एव स्वगृह प्राप्तो विमुक्तवास्यादिकरण स्वस्थो निर्वृतो निर्व्यापार॰ सुखी भवत्येवमविद्याप्रत्युपस्थापितद्वैतसपृक्त आत्मा स्वप्नजागरितावस्थयो कर्ता दु खी भवति स तच्छ्रमापनुत्तये स्वमात्मान पर ब्रह्म प्रविश्य विमुक्तकार्यकरणसघातोऽकर्ता सुखी भवति सप्रसादावस्थायाम् । तथा मुक्त्यवस्थायामप्यविद्याध्वान्त विद्याप्रदीपेन विधूयाऽऽत्मैव केवलो निर्वृत सुखी भवति । २।३।४०

'तदभावो नाडीषु तच्छ्रुतेरात्मनि च'—तदभावो नाडीष्वात्मनि चेति । तदभाव इति तस्य प्रकृतस्य स्वप्नदर्शनस्याभावः सुषुप्तमित्यर्थ. । नाडीष्वात्मनि चेति समुच्चयेनैतानि नाड्यादीनि स्वापायोपसर्पति न विकल्पेनेत्यर्थः । कुत । तच्छ्रुते॰ । तथाहि सर्वेषामेव नाड्यादीना तत्र तत्र सुषुप्तिस्थानत्व श्रूयते, तच्च समुच्चये सगृहीत भवति । विकल्पे ह्येषां पक्षे बाधः स्यात् । नन्वेकार्थत्वाद्विकल्पो नाड्यादीनां व्रीहियवादिवदित्युक्तम् । नेत्युच्यते । न ह्येकविभक्तिनिर्देशमात्रेणैकार्थत्व विकल्पश्च भवति । नानार्थत्वसमुच्चययोरप्येकविभक्तिनिर्देशदर्शनात् प्रासादे शेते पर्यङ्के शेत इत्येवमादिषु । तथेहापि नाडीषु पुरीतति ब्रह्मणि च स्वपितीत्येतदुपपद्यते समुच्चयः ।

* ब्रशकर ३।२।७

( ३ ) अतिच्छन्दाऽतिच्छन्दमभिलाषातिग पापप्रतिभरमभय प्रिय प्राप्य रूप परमात्मैवेत्यर्थः । एव प्रियेण प्राज्ञेन परमात्मना परिष्वक्तस्य बाह्याभ्यन्तरज्ञानाभाव उपपद्यते । अत्र च सपरिष्वङ्गो नाम तत्र लय एव । स्वाप्ययसूत्रे स्वमपीतो भवतीति वाक्यसमानार्थतयैतद्वाक्यस्योदाहृतत्वात् । अथवा जाग्रत्स्वप्नभोगप्रदकर्मसबन्धविरोधिपरिष्वङ्ग. सबन्धविशेष सुषुप्तिमात्रकालवर्तीति द्रष्टव्यम् । तदेव प्राज्ञात्मलक्षणमवाप्तसमस्तकाममात्मव्यतिरिक्तकामनाशून्य शोकान्तर शोकबाह्यम् । अन्तरशब्दो बहिर्योगवचन । प्राप्य रूप्यमित्यर्थ. । रग.

( ४ ) 'स्वाप्ययसपत्त्योरन्यतराऽपेक्षमाविष्कृत हि' — 'प्राज्ञेनात्मना परिष्वक्तो न बाह्य किञ्चन वेद नान्तरम्' इति वाक्य तु न मुक्तविषय, किन्तु सुषुप्त्युत्क्रान्त्योरन्यतरापेक्षम् । 'नाह खल्वय सप्रत्यात्मान जानात्ययमहमस्मि' इति, 'नो एवेमानि भूतानि' इति 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इति च, 'स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान्पश्यन्' इति च जीवस्योभयत्र निर्बोधत्व, मुक्त्यवस्थाया च सर्वज्ञत्व शास्त्रेणाविष्कृतम् ।

निंबार्क ४।४।१६

( ५ ) 'छन्दसामप्यवाच्यत्वादतिच्छन्दा हरिः स्मृतः । तेनाऽऽश्लिष्टो ह्यय जीव सुप्तो मुक्तोऽथ वा भवेत् । विष्णो रूप हि यन्नित्यमभय पापवर्जितम् । आप्तकाम च पूर्णत्वादात्मकाम सुखत्वत. । शोक विना सुरमणाच्छोकान्तरमितीरितम् ॥' मध्व.

**अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा अवेदा । अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चाण्डालोऽचाण्डाल. पौल्कसोऽपौल्कस श्रमणोऽश्रमणस्तापसोऽतापस. । अनन्वागत पुण्येनानन्वागत पापेन । तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति ॥**

( १ ) प्रकृत॰ स्वयज्योतिरात्माऽविद्याकामकर्मविनिर्मुक्त इत्युक्तम् । असङ्गत्वादात्मनः, आगन्तुक-

---

* भास्कर ब्रशकरवत् ।

(१) बृउ ४।३।२२, शब्रा १४।७।१।२२ अवेदा + ( यज्ञा अयज्ञा ) चाण्डालो ..ऽपौल्कस ( पौल्कसोऽपौल्कसश्चाण्डालोऽचाण्डाल ) न्वागत ( न्वागत ), ब्रशकर १।३।४२, ३।२।१०, ४।१।३, भास्कर १।३।४२; ब्रमध्व ३।३।२८, ४।४।१५, १६, श्रीकर १।३।४२.

त्वाच्च तेषाम्। तत्रैवमाशङ्का जायते। चैतन्यस्वभावत्वे सत्यप्येकीभावान्न जानाति स्त्रीपुंसयोरिव संपरिष्वक्तयोरित्युक्तम्। तत्र प्रासङ्गिकमेतदुक्तं — कामकर्मादिवत् स्वयंज्योतिष्ट्वमप्यस्यात्मनो न स्वभावः, यस्मात्संप्रसादे नोपलभ्यते — इत्याशङ्कायां प्राप्तायां, तन्निराकरणाय, स्त्रीपुंसयोः दृष्टान्तोपादानेन, विद्यमानस्यैव स्वयंज्योतिष्ट्वस्य सुषुप्तेऽग्रहणमेकीभावाद्धेतोः, न तु कामकर्मादिवदागन्तुकम्। इत्येतत्प्रासङ्गिकमभिधाय यत्प्रकृतं तदेवानुप्रवर्तयति। अत्र चैतत्प्रकृतं — अविद्याकामकर्मविनिर्मुक्तमेव तद्रूपं, यत्सुषुप्ते आत्मनो गृह्यते प्रत्यक्षत इति। तदेतद्यथाभूतमेवाभिहितं — सर्वसंबन्धातीतमेतत् रूपमिति। यस्मादत्रैतस्मिन्सुषुप्तस्थाने अतिच्छन्दापहतपाप्माभयमेतत् रूपं, तस्मादत्र पिता जनकः। तस्य च जनयितृत्वाद्यत्पितृत्वं पुत्रं प्रति, तत् कर्मनिमित्तम्। तेन च कर्मणाऽयमसंबद्धोऽस्मिन्काले। तस्मात्पितापुत्रसंबन्धनिमित्तात्कर्मणो विनिर्मुक्तत्वात्पिताऽप्यपिता भवति। तथा पुत्रोऽपि पितुरपुत्रो भवतीति सामर्थ्याद्गम्यते। उभयोर्हि संबन्धनिमित्तं कर्म, तदयमतिक्रान्तो वर्तते। 'अपहतपाप्म' इति ह्युक्तम्। तथा माताऽमाता। लोकाः कर्मणा जेतव्याः जिताश्च — तत्कर्मसंबन्धाभावाल्लोका अलोकाः। तथा देवाः कर्माङ्गभूताः — तत्कर्मसंबन्धात्ययाद्देवा अदेवाः। तथा वेदाः साध्यसाधनसंबन्धाभिधायकाः, मन्त्रलक्षणाश्चाभिधायकत्वेन कर्माङ्गभूताः, अधीता अध्येतव्याश्च — कर्मनिमित्तमेव संबध्यन्ते पुरुषेण। तत्कर्मातिक्रमणादेतस्मिन् काले वेदा अप्यवेदाः संपद्यन्ते।

न केवलं शुभकर्मसंबन्धातीतः, किं तर्हि, अशुभैरप्यत्यन्तघोरैः कर्मभिः असंबद्ध एवायं वर्तते इत्येतमर्थमाह — अत्र स्तेनो ब्राह्मणसुवर्णहर्ता, भ्रूणघ्ना सह पाठादवगम्यते। स तेन घोरेण कर्मणैतस्मिन्काले विनिर्मुक्तो भवति, येनायं कर्मणा महापातकी स्तेन उच्यते। तथा भ्रूणहाऽभ्रूणहा। तथा चाण्डालो न केवलं प्रत्युत्पन्नेनैव कर्मणा विनिर्मुक्तः, किं तर्हि सहजेनापि अत्यन्तनिकृष्टजातिप्रापकेणापि विनिर्मुक्त एवायम्। चाण्डालो नाम शूद्रेण ब्राह्मण्यामुत्पन्नः, चण्डाल एव चाण्डालः। स जातिनिमित्तेन कर्मणाऽसंबद्धत्वात् अचाण्डालो भवति। पौल्कसः, पुल्कस एव पौल्कसः, शूद्रेणैव क्षत्रियायामुत्पन्नः। सोऽप्यपुल्कसो भवति। तथा आश्रमलक्षणैश्च कर्मभिरसंबद्धो भवतीत्युच्यते। श्रमणः परिव्राट् — यत्कर्मनिमित्तो भवति, स तेन विनिर्मुक्तत्वादश्रमणः। तथा तापसो वानप्रस्थोऽतापसः। सर्वेषां वर्णाश्रमादीनां उपलक्षणार्थमुभयोर्ग्रहणम्।

किं बहुना? अनन्वागतः — नान्वागतमनन्वागतं असंबद्धमित्येतत्पुण्येन शास्त्रविहितेन कर्मणा, तथा पापेन विहिताकरणप्रतिषिद्धक्रियालक्षणेन। रूपपरत्वान्नपुंसकलिङ्गम्। 'अभयं रूपम्' इति ह्यनुवर्तते। किं पुनरसंबद्धत्वे कारणमिति तद्धेतुरुच्यते — तीर्णोऽतिक्रान्तः हि यस्मादेवंरूपस्तदा तस्मिन्काले, सर्वाञ्छोकान् शोकाः कामाः। इष्टविषयप्रार्थना हि तद्विषयवियोगे शोकत्वमापद्यते। इष्टं हि विषयमप्राप्तं वियुक्तं चोद्दिश्य चिन्तयानस्तद्गुणान्संतप्यते पुरुषः। अतः शोको रतिः काम इति पर्यायाः। यस्मात्सर्वकामातीतो ह्यत्राय भवति — 'न कंचन कामं कामयते' 'अतिच्छन्दा' इति ह्युक्तं, तत्प्रक्रियापतितोऽयं शोकशब्दः कामवचन एव भवितुमर्हति। कामश्च कर्महेतुः। वक्ष्यति हि 'स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते' इति। अतः सर्वकामातितीर्णत्वाद्युक्तमुक्तं 'अनन्वागतं पुण्येन' इत्यादि।

हृदयस्य — हृदयमिति पुण्डरीकाकारो मांसपिण्डस्तत्स्थमन्तःकरणं बुद्धिः हृदयमित्युच्यते, तात्स्थ्यान्मञ्चक्रोशनवत्। हृदयस्य बुद्धेर्ये शोकाः। बुद्धिसंश्रया हि ते, 'कामः संकल्पो विचिकित्सा' इत्यादि 'सर्वं मन एव' इत्युक्तत्वात्। वक्ष्यति च 'कामा येऽस्य हृदि श्रिताः' इति। आत्मसंश्रयभ्रान्त्यपनोदाय हीदं वचनं, 'हृदि श्रिताः' 'हृदयस्य शोकाः' इति च। हृदयकरणसंबन्धातीतश्चायं अस्मिन्काले 'अतिक्रामति मृत्यो रूपाणि' इति ह्युक्तम्। हृदयकरणसंबन्धातीतत्वात्तत्संश्रयकामसंबन्धातीतो भवतीति युक्ततरं वचनम्।

ये तु वादिनो हृदि श्रिताः कामाः वासनाश्च हृदयसंबन्धिनमात्मानमुपसृप्योपश्लिष्यन्ति, हृदयवियोगेऽपि च आत्मन्यवतिष्ठन्ते पुटतैलस्थ इव पुष्पादिगन्धः —

इत्याचक्षते। तेषा 'काम. सकल्प' 'हृदये ह्येव रूपाणि' 'हृदयस्य शोकाः' इत्यादीना वचनानामानर्थक्यमेव।

महता हि प्रयत्नेन कामाद्याश्रयत्वकल्पनाः प्रतिषेद्धव्या, आत्मनः परेणैकत्वशास्त्रार्थसिद्धये। तत्कल्पनायां पुनः क्रियमाणाया शास्त्रार्थ एव बाधित स्यात्। यथा इच्छादीनामात्मधर्मत्व कल्पयन्त वैशेषिका नैयायिकाश्च उपनिषच्छास्त्रार्थेन न सगच्छन्ते, तथा इयमपि कल्पना उपनिषच्छास्त्रार्थबाधनात् न आदरणीया।

शकर

(२) अत्र परमात्मनि सुषुप्तिस्थाने लीनस्य पित्रादयो न सन्ति। विद्यमानानामपि कर्मणा फलप्रदानाभिमुख्याभावात् कर्मणामसबन्धप्रायत्वाच्छरीरसबन्धाभावेन तदनुबन्धिमातापित्रादयो न सन्तीत्यर्थ। रग

(३) 'तेनाश्लिष्टः स्वपुत्राणां दायादाना न वै पिता। तेषा दु खाददु.खित्वान्न माता लोकमान्यपि। अलोकमानान्नो लोकः देवोऽपि स्वाधिकारतः। वर्षणादेर्व्युत्थितत्वान्न देवो वेदमान्यपि। अवेदमानान्नो वेद. पापी पापफलाप्ययात्। अपाप· श्रमणश्चापि यतिधर्मात्समुत्थितेः। अयतिस्तापसश्चैवमनिष्ट पुण्यमप्यमुम्। नान्वेत्येवविधो मुक्तो विष्णो. सप्राप्तिमात्रतः॥'

मध्व

(४) 'सापराये तर्तव्याभावात्तथा ह्यन्ये' — स्वेच्छयेत्यङ्गीकर्तव्यम्। मुक्तस्य तीर्णत्वात्। 'तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति' इति ह्यन्ये पठन्ति। ३।३।२८

'प्रदीपवदावेशस्तथा हि दर्शयति' — शरीरमनुविश्यापि तत्प्रकाशयन्त पुण्यानेव भोगाननुभवन्ति न तु दुःखादीन्। यथा प्रदीपो दीपिकादिषु प्रविष्टस्तत्स्थ तैलाद्येव भुङ्क्ते न तु कार्ष्ण्यादि। 'तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति' इति हि दर्शयति। न च 'स्वर्गे लोके न भय किंचनास्ति' इत्यादिना स्वर्गादिस्थस्यैव तदिति वाच्यम्। यत —

'स्वाप्ययसपत्त्योरन्यतरापेक्षमाविष्कृत हि' — सुप्तौ मोक्षे वा तदुच्यते। 'अत्र पिताऽपिता भवति' 'अनन्वागत पुण्येनानन्वागत पापेन' इत्याद्याविष्कृतत्वात्। ब्रमध्व ४।४।१५,१६

**यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति। न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्॥**

(१) स्त्रीपुसयोरिवैकत्वान्न पश्यतीत्युक्त स्वय ज्योतिरिति च। स्वयज्योतिष्ट्व नाम चैतन्यात्मस्वभावता। यदि हि अग्न्युष्णत्वादिवच्चैतन्यात्मस्वभाव आत्मा, स कथमेकत्वेऽपि हि स्वभाव जह्यात्, न जानीयात्? अथ न जहाति, कथमिह सुषुप्ते न पश्यति? विप्रतिषिद्धमेतत्, चैतन्यमात्मस्वभावः, न जानाति चेति। न विप्रतिषिद्ध, उभयमप्येतदुपपद्यत एव। कथम् — यद्वै सुषुप्ते तन्न पश्यति, पश्यन्वै तत्तत्र पश्यन्नेव न पश्यति। यत्तत्र सुषुप्ते न पश्यतीति जानीषे, तन्न तथा गृह्णीयाः। कस्मात्? पश्यन्वै भवति तत्र। नन्वेव न पश्यतीति सुषुप्ते जानीम·, यतो न चक्षुर्वा मनो वा दर्शने करण व्यापृतमस्ति। व्यापृतेषु हि दर्शनश्रवणादिषु, पश्यतीति व्यवहारो भवति, शृणोतीति वा। न च व्यापृतानि करणानि पश्यामः। तस्मान्न पश्यत्येवायम्। न हि। किं तर्हि पश्यन्नेव भवति। कथम्? न — हि यस्मात् द्रष्टुर्दृष्टिकर्तुर्या दृष्टि·, तस्या दृष्टेर्विपरिलोपो विनाश, स न विद्यते। यथाऽग्नेरौष्ण्य यावदग्निभावि, तथाय चात्मा द्रष्टाऽविनाशी, अतोऽविनाशित्वादात्मनो दृष्टिरप्यविनाशिनी, यावत् द्रष्टृभाविनी हि सा।

ननु विप्रतिषिद्धमिदमभिधीयते—द्रष्टुः सा दृष्टिर्न विपरिलुप्यते इति च। दृष्टिश्च द्रष्ट्रा क्रियते। दृष्टिकर्तृत्वाद्धि द्रष्टेत्युच्यते। क्रियमाणा च द्रष्ट्रा दृष्टिर्न विपरिलुप्यते इति चाशक्य वक्तुम्। ननु न विपरिलुप्यते इति वचनादविनाशिनी स्यात्। न। वचनस्य ज्ञापकत्वात्। न हि न्यायप्राप्तो विनाशः कृतकस्य वचनशतेनापि वारयितु शक्यते, वचनस्य यथाप्राप्तार्थज्ञापकत्वात्। नैष दोषः, आदित्यादिप्रकाशकत्ववत् दर्शनोपपत्ते। यथा आदित्यादयो नित्यप्रकाशस्वभावा एव

(१) बृउ ४।३।२३, शब्रा १४।७।१।२३ न्वै तन्न (न्वै तद्द्रष्टव्य न), ब्रशकर २।३।१८, ४।१।२, ४।४।४, श्रीकर १।१।३ (पृ ३७), ४।४।९, विज्ञान १।१।२ (पृ ४०, ५१), १।१।४ (पृ १०९), २।१।१४, २।३।६, ३७, ५०

सन्तः स्वाभाविकेन नित्येनैव प्रकाशेन प्रकाशयन्ति। न ह्यप्रकाशात्मानः सन्तः प्रकाशं कुर्वन्तः प्रकाशयन्तीत्युच्यन्ते, किं तर्हि स्वभावेनैव नित्येन प्रकाशेन — तथाऽयमप्यात्मा अविपरिलुप्तस्वभावया दृष्ट्या नित्यया द्रष्टेत्युच्यते। गौणं तर्हि द्रष्टृत्वम्। न। एवमेव मुख्यत्वोपपत्तेः। यदि ह्यन्यथाऽप्यात्मनो द्रष्टृत्वं दृष्टं, तदाऽस्य द्रष्टृत्वस्य गौणत्वम्। न त्वात्मनोऽन्यो दर्शनप्रकारोऽस्ति। तदेवमेव मुख्यं द्रष्टृत्वमुपपद्यते, नान्यथा। यथा आदित्यादीनां प्रकाशयितृत्वं नित्येनैव स्वाभाविकेनाक्रियमाणेन प्रकाशेन, तदेव च प्रकाशयितृत्वं मुख्यं, प्रकाशयितृत्वान्तरानुपपत्तेः। तस्मान्न द्रष्टुर्दृष्टेर्विपरिलुप्यते इति न विप्रतिषेधगन्धोऽप्यस्ति।

ननु अनित्यक्रियाकर्तृविषय एव तृच्प्रत्ययान्तस्य शब्दस्य प्रयोगो दृष्टः, यथा छेत्ता भेत्ता गन्तेति, तथा द्रष्टेत्यत्रापीति चेत्। न। प्रकाशयितेति दृष्टत्वात्। भवतु प्रकाशकेष्वन्यथाऽसम्भवान्न त्वात्मनीति चेत्। न। दृष्ट्यविपरिलोपश्रुतेः। पश्यामि न पश्यामीत्यनुभवदर्शनान्नेति चेत्। न। करणव्यापारविशेषापेक्षत्वात्। उद्धृतचक्षुषा च स्वप्ने आत्मदृष्टेः अविपरिलोपदर्शनात्। तस्मादविपरिलुप्तस्वभावैव आत्मनो दृष्टिः। अतस्तयाऽविपरिलुप्तया दृष्ट्या स्वयंज्योतिःस्वभावया पश्यन्नेव भवति सुषुप्ते।

कथं तर्हि न पश्यतीति। उच्यते—न तु तदस्ति। किं तत्? द्वितीयं विषयभूतम्। किंविशिष्टम्? ततो द्रष्टुरन्यदन्यत्वेन विभक्तं यत्पश्येद्यदुपलभेत। यद्धि तद्विशेषदर्शनकारणमन्तःकरणं चक्षू रूपं च, तदविद्ययाऽन्यत्वेन प्रत्युपस्थापितमासीत्। तदेतस्मिन्काले एकीभूतम्, आत्मनः परेण परिष्वङ्गात्। द्रष्टुर्हि परिच्छिन्नस्य विशेषदर्शनाय करणमन्यत्वेन व्यवतिष्ठते। अयं तु स्वेन सर्वात्मना संपरिष्वक्तः स्वेन परेण प्राज्ञेनात्मना, प्रिययेव पुरुषः। तेन न पृथक्त्वेन व्यवस्थितानि करणानि, विषयाश्च। तदभावाद्विशेषदर्शनं नास्ति। करणादिकृतं हि तन्नात्मकृतम्। आत्मकृतमिव प्रत्यवभासते। तस्मात्तत्कृतेयं भ्रान्तिः—आत्मनो दृष्टिः परिलुप्यते इति।

शंकर.

(२) बाह्याभ्यन्तरं न पश्येदिति यावत्। तत्पश्यत एव बाह्याभ्यन्तरादर्शनं ज्ञातुर्धर्मभूतस्य ज्ञानस्य नित्यत्वाज्ज्ञानस्वरूपाभावनिबन्धनो बाह्याभ्यन्तरद्वितीयज्ञानाभावो न भवति। अपि तु ततोऽविभक्तस्य प्राज्ञात्मनः पृथक्सिद्धस्यान्यस्य वस्तुनोऽभावादेवानुकूलप्रतिकूलपदार्थादर्शनमित्यर्थः। न च पृथक्सिद्धपदार्थाभावस्य जाग्रत्स्वप्नयोरपि समत्वात्तत्रैव सुप्तावपि पृथक्सिद्धपदार्थानुभवोऽस्तीति शङ्क्यम्। तत्र कर्मरूपदोषवशात्पृथक्सिद्धपदार्थोपलम्भसम्भवात्सुप्तौ कर्मसम्बन्धाभावात्। न चापृथक्सिद्धतया ब्रह्मात्मकत्वेनैव विषयाणामुपलम्भोऽस्त्विति शङ्क्यम्। 'एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः' (छा॰ ८।३।२) इति छान्दोग्योक्तरीत्याऽनृतशब्दितकर्मविशेषतिरोहिततया ब्रह्मण उपलम्भासम्भवेन ब्रह्मात्मकतयाऽप्युपलम्भासम्भवात्। ब्रह्मात्मकत्वाब्रह्मात्मकत्वोभयबहिर्भूतस्य पदार्थस्याभावादिति भावः। रंग.

(३) 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तम्' इत्यादिश्रुतयोऽप्यविभागलक्षणाव्यतिरेके प्रमाणानि, अत एव सूत्रकारो वक्ष्यति 'अविभागो वचनात्' इति, तथा सांख्यशास्त्रेऽप्यविभागावेव प्रलयसर्गकालयोर्विश्वस्योक्तौ यथा— 'कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य' इति। विज्ञान २।३।६

यद्वै तन्न जिघ्रति जिघ्रन्वै तन्न जिघ्रति। न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत्॥

यद्वै तन्न रसयते रसयन्वै तन्न रसयते। न हि रसयितू रसयतेर्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत्॥

यद्वै तन्न वदति वदन्वै तन्न वदति। न हि

---

(१) बृ॰ ४।३।२४, २५, शा॰ १४।७।१।२४, २५ न्वै तन्न (न्वै तद्घ्रातव्यं न) घ्रातेर्वि (घ्राणाद्वि) रसयते रसयन्वै तन्न रसयते (रसयति विजानन्वै तद्रसं न रसयति) रसयतेर्वि (रसाद्वि)

(२) बृ॰ ४।३।२६, शा॰ १४।७।१।२६ न्वै तन्न (न्वै तद्वक्तव्यं न) वक्तेर्वि (वचो वि), विज्ञान॰ २।३।५०.

वक्तुर्वक्तेर्विपरिलोपो विद्यतेऽविनाशित्वात् । न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्त यद्वदेत् ॥

यद्वै तन्न शृणोति शृण्वन्वै तन्न शृणोति । न हि श्रोतु श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वात् । न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यच्छृणुयात् ॥

यद्वै तन्न मनुते मन्वानो वै तन्न मनुते । न हि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वात् । न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्त यन्मन्वीत ॥

यद्वै तन्न स्पृशति स्पृशन्वै तन्न स्पृशति । न हि स्प्रष्टु स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् । न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्स्पृशेत् ॥

यद्वै तन्न विजानाति विजानन्वै तन्न विजानाति । न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात् । न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्त यद्विजानीयात् ॥

(१) समानमन्यत् । यद्वै तन्न जिघ्रति, यद्वै तन्न रसयते, यद्वै तन्न वदति, यद्वै तन्न शृणोति, यद्वै तन्न मनुते, यद्वै तन्न स्पृशति, यद्वै तन्न विजानातीति । मननविज्ञानयो. दृष्ट्यादिसहकारित्वेऽपि सति चक्षुरादिनिरपेक्षो भूतभविष्यद्वर्तमानविषयव्यापारो विद्यत इति पृथग्ग्रहणम् । शकर.

(२) 'पृथगुपदेशात्' — स्वशब्देनैव विज्ञान विज्ञातु पृथगुपदिश्यते 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति ।

रामानुज २।३।२८

(३) 'यत्तन्न विष्णु पश्येत पश्यन्वै तन्न पश्यति। नित्यज्ञानस्वरूपत्वात्तसम नान्यदिष्यते ॥' इति च । यत्किंचिद्वस्तु भगवता न दृष्ट तन्नास्त्येव । विद्यमान सर्वं पश्यत्येव । न हि द्वितीयो द्रष्टा । यो विभक्तत्वेन जगत्पश्यति । तद्विरोधेन पश्यत्यभ्रान्त. । तत् दृष्टाद न्यद्वा । 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुते 'यत्तद्दृष्ट भगवता तदेवास्ति न चापरम् । न ह्यन्यो विद्यते द्रष्टा य पश्येत्तददर्शितम् । ब्रह्मादिरपि यो द्रष्टा पश्येत्तस्य प्रसादत । तददृष्ट कुत पश्येदतः को वा विरोधत. ॥' इति च । यदवतारादिक द्वैतत्वेन न पश्यति न तु ततोऽद्वितीयम् । नित्यज्ञानत्वाद्भ्रमाभावात् । यद्विभक्तत्वेन विष्णुः पश्यति तत्ततोऽन्यदस्ति चेति च । यस्माद्विष्णुर्विश्व विभक्तत्वेनैव पश्यति तस्मात्तदन्यदस्त्येव । न च जगदभावोऽत्रोच्यते । अन्यद्विभक्तमिति विशेषणवैयर्थ्यात् । न च भ्रान्तिकल्पित जगदित्यत्र किंचिन्मानम् । 'असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्' (भ गी १६।८) इत्यादिनिन्दनाच्च ।

मध्व.

यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद्रसयेदन्योऽन्यद्वदेदन्योऽन्यच्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत्स्पृशेदन्योऽन्यद्विजानीयात् ॥

(१) जाग्रत्स्वप्नयोरिव यद्विजानीयात्तत् द्वितीय प्रविभक्तमन्यत्वेन नास्ती युक्तम् । अत सुषुप्ते न विजानाति विशेषम् । ननु यद्यस्यायमेव स्वभावः, किंनिमित्तमस्य विशेषविज्ञान स्वभावपरित्यागेन । अथ विशेषविज्ञानमेवास्य स्वभाव., कस्मादेष विशेष न विजानातीति ? उच्यते, शृणु । यत्र यस्मिञ्जागरिते स्वप्ने वा अन्यदिव आत्मनो वस्त्वन्तरमिवाविद्यया प्रत्युपस्थापित भवति, तत्र तस्मादविद्याप्रत्युपस्थापितादन्यः अन्यमिवात्मान मन्यमान.—असति आत्मन प्रविभक्ते वस्त्वन्तरे, असति चात्मनि ततः प्रविभक्तेः, अन्योऽन्यत्पश्येदुपलभेत । तच्च दर्शित स्वप्ने प्रत्यक्षतः 'घ्नन्तीव जिनन्तीव' इति । तथाऽन्योऽन्यज्जिघ्रेद्रसयेद्वदेच्छृणुयान्मन्वीत स्पृशेद्विजानीयादिति ।

शकर.

---

(१) बृउ ४।३।२७-२९, शब्रा १४।७।१।२७-२९ न्वै तन्न (न्वै तच्छ्रोतव्य न) वै तन्न (वै तन्मन्तव्य न) शन्वै तन्न (शन्वै तत्स्प्रष्टव्य न)

(२) बृउ ४।३।३०, शब्रा १४।७।१।३० न्वै तन्न (न्वै तद्विज्ञेय न) विज्ञातेर्वि (विज्ञानाद्वि), ब्रशकर १।३।१९, २।३।१८, ४।४।१६, भास्कर २।३।१८, रामानुज १।१।१ (पृ ४२), २।३।२८, निंबार्क २।३।२९, श्रीकठ २।३।२८ (द्वि०), बलदेव २।३।२९

(१) बृउ ४।३।३१, शब्रा नास्त्यय खण्ड; ब्रशकर १।२।१२, ३।२।७

(२) इह तु पृथक्सिद्धदृश्यपदार्थाभावात्कर्मसबन्धोपरमे सकारणभूतेन्द्रियसबन्धाभावाच्च नान्यवस्तुदर्शनमिति भावः। रग

(३) द्रष्ट्रन्तरनिषेधेन तस्यैव सर्वद्रष्टृत्वमेव च 'यत्र वा अन्यदिव स्यात्' इत्यादिनोपसह्रियते। अन्यथा 'अन्योऽन्यत्पश्येत्' इत्यादिकमनर्थकम्। न ह्येकस्यान्यत्वेऽन्यस्यानन्यत्व भवति। अतो द्वितीयोऽन्यशब्दो व्यर्थ एव स्यात्। न च तत्पक्षे दृश्यत्वादिक(रस्यत्वादिक)मात्मनो विद्यते। तस्माद्यत्र किंचिदपि स्वातन्त्र्यमन्यस्य भवति तत्रैव भगवतोऽन्यः पुरुषो भगवद्दृष्टादन्यत्पश्यतीत्यादि युज्यते तदेव नास्ति स्वत.। अतो नान्योऽन्यत्पश्येदित्यर्थः। अन्यदिवेतीवशब्दोऽल्पस्वातन्त्र्यार्थे। राज्ञः पृथगिव भृत्य इतिवत्। 'उपमार्थे तथाऽल्पत्वेऽपीवशब्द. प्रयुज्यते' इति शब्दनिर्णये। 'स्वरूपभेदे स्वातन्त्र्ये विरोधे च विलक्षणे। अन्यशब्दश्चतुर्ष्वेषु प्रयोक्तव्यो मनीषिभि'॥' इति च। 'अनन्याः सर्व एवैते योधा कुन्तीसुतादपि' इति प्रयोगाच्च। 'दशरात्रैर्भुक्तमिव न सम्यक् स्वल्पभोजनात्' इति च। 'प्रकृतेः पुरुषाणा च नाणुमात्रमपि क्वचित्। स्वातन्त्र्य विष्णुना सर्वे नियताः सर्वदैत्र हि। तदद्दृष्ट ततः को हि पश्येत्किं वाऽपि तद्भवेत्॥' इति महामीमासायाम्। अभेदेन स्वावताराज्जीवा जीवन्तु भेदतः। यदभ्रमो हरिर्वेत्ति स तदन्यच्च तद्द्वयम्॥' इति च। अन्यदप्यस्वातन्त्र्येणान्यवदवस्थित यस्मिन्पक्षेऽस्ति तत्रैवान्यदर्शनादिव्यवहारो युज्यते। सप्तमरसादिदर्शनाभावादिति च। 'सर्वेन्द्रियोपभोगोऽपि विष्णोः स्वात्मनि विद्यते'। यदि जगदेव न स्यात्तदा कथ मोक्षेऽप्यन्यानि भूतानि मात्रा उपजीवन्तीति युज्यते। मोक्षप्रकरण चैतत्। 'स्वाप्ययसपत्त्योरन्यतरापेक्षमाविष्कृत हि' इति भगवद्वचनम्। मध्व

**सलिल एको द्रष्टाऽद्वैतो भवति। एष ब्रह्मलोक सम्राट्। इति हैनमनुशशास याज्ञवल्क्यः। एषाऽस्य परमा गति। एषाऽस्य परमा सपत्। एषोऽस्य परमो लोक.। एषोऽस्य परम आनन्दः। एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति॥**

(१) यत्र पुन. साऽविद्या सुषुप्ते वस्त्वन्तरप्रत्युपस्थापिका शान्ता, तेनान्यत्वेनाविद्याप्रविभक्तस्य वस्तुनोऽभावात्, तत्केन क पश्येज्जिघ्रेद्विजानीयाद्वा। अतः स्वेनैव हि प्राज्ञेनात्मना स्वयज्योति.स्वभावेन सपरिष्वक्तः समस्तः सप्रसन्न आप्तकाम' आत्मकामः, सलिलवत्स्वच्छीभूत — सलिल इव सलिलः, एकः द्वितीयस्याभावात्। अविद्यया हि द्वितीय. प्रविभज्यते। सा च शान्ताऽत्र, अत एक.। द्रष्टा दृष्टेरविपरिलुप्तत्वादात्मज्योति.स्वभावायाः। अद्वैत' द्रष्टव्यस्य द्वितीयस्याभावात्। एतदमृतमभयम्। एष ब्रह्मलोकः, ब्रह्मैव लोकः ब्रह्मलोक। पर एवायमस्मिन्काले व्यावृत्तकार्यकरणोपाधिभेद. स्वे आत्मज्योतिषि शान्तसर्वसबन्धो वर्तते, हे सम्राट्—इति ह एव ह, एन जनकमनुशशास अनुशिष्टवान् याज्ञवल्क्यः इति श्रुतिवचनमेतत्।

कथ वाऽनुशशास? एषाऽस्य विज्ञानमयस्य परमा गतिः। यास्त्वन्याः देहग्रहणलक्षणाः ब्रह्मादिस्तम्बपर्यन्ता' अविद्याकल्पितास्ता गतयोऽतोऽपरमाः, अविद्याविषयत्वात्। इय तु देवत्वादिगतीना कर्मविद्यासाध्याना परमोत्तमा — यः समस्तात्मभाव, यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानातीति। एषैव च परमा सपत् — सर्वासा सपदां विभूतीनामिय परमा, स्वाभाविकत्वादस्याः। कृतका ह्यन्या. सपदः। तथैषोऽस्य परमो लोक। येऽन्ये कर्मफलाश्रया लोकास्तेऽस्मादपरमाः। अय तु न केनचन कर्मणा मीयते, स्वाभाविकत्वात्। एषोऽस्य परमो लोक.। तथैषोऽस्य परम आनन्द.। यान्यन्यानि विषयेन्द्रियसबन्धजनितान्यानन्दजातानि, तान्यपेक्ष्य एषोऽस्य परम आनन्दः, नित्यत्वात्। 'यो वै भूमा तत्सुखम्' इति श्रुत्यन्तरात्।

(१) बृउ ४।३।३२, शब्रा १४।७।१।३१ मनुशशास (मुवाच) (याज्ञवल्क्य। एषाऽस्य परमा गति ०), ब्रशांकर १।१।१९, १।३।९, २।३।४०, ४।४।१६, भास्कर १।१।१९, १।३।३०, रग परम आनन्द (परमानन्द), ब्रमध्व ३।२।३२, श्रीकठ १।३।८, वल्लभ १।१।११ (पृ १७०, १८३), १।१।१८, ३।४।११, २२, विज्ञान १।१।१२ (पृ १४६), १।३।४२; बलदेव ३।२।३२

यत्रान्यत्पश्यत्यन्यद्विजानाति, तदल्प मर्त्यममुख्य सुखम्। इद तु तद्विपरीतम्। अत एवैषोऽस्य परम आनन्दः। एतस्यैवानन्दस्य मात्रा कलामविद्याप्रत्युपस्थापिता विषयेन्द्रियसबन्धकालविभाव्यामन्यानि भूतान्युपजीवन्ति। कानि तानि? तत एवानन्दादविद्यया प्रविभज्यमानस्व रूपाणि, अन्यत्वेन तानि ब्रह्मणः परिकल्प्यमानान्यन्यानि सन्त्युपजीवन्ति भूतानि, विषयेन्द्रियसपर्कद्वारेण विभाव्यमानाम्। शकर.

( २ ) यदपि तस्यामवस्थाया सुखमुक्त तदप्यात्मन एव सुखरूपत्वविवक्षयोक्तम्। १।३।९

एवजातीयका श्रुतिः विशेषदर्शन वारयति। * ब्रशकर. ४।४।१६

( ३ ) यथा जले जल प्रक्षिप्तमेक भवति एव सलिलवत्स्वच्छस्वभावे परमात्मनि लीनोऽय द्रष्टा जीव. प्राज्ञात्मपरिष्वङ्गेनैकीभूत सन्नद्वैतो भवति। देवादि लक्षणभेदकाकारशून्यो भवतीत्येष सुषुप्त्याधार एव परमात्मा हे सम्राडिति याज्ञवल्क्योऽनुशिष्टवानित्यर्थः।

ननु कथ सुषुप्त्याधारस्य ब्रह्मलोकत्वम्। ब्रह्मलोको हि परमगतित्वादिना श्रूयते तत्राऽऽह — एषाऽस्येति। जीवस्यार्चिरादिगत्या प्राप्या गतिरेषैव। तत्त्वज्ञानादिना प्राप्याऽपि एषैव। एष इति। शाश्वत भोगस्थान मप्येष एव। निरतिशयानुकूलोऽप्यस्यायमेवेत्यर्थः। ननु स्वर्गादिषु भोग्येष्वनुकूलेषु जाग्रत्सु कथमेतस्य परमानन्दत्वमित्यत्राऽऽह — एतस्यैवेति। स्वर्गादिवैषयिक सुखानुभवितारः सर्वेऽप्येतदानन्दसहस्रांशानुभवितार इत्यर्थः। रग

( ४ ) ब्रह्मलोकशब्दश्च परस्मिन् ब्रह्मणि दृष्ट॰। रामानुज १।३।१४

( ५ ) ‘यदा हि सलिलत्वेन प्रकृतिर्व्याप्य तिष्ठति। तदा तस्या परो विष्णुरेको द्रष्टा व्यवस्थितः। अविरोधादद्वितीय एकोऽसौ समवर्जनात्। बृहज्ज्ञानो ब्रह्मलोकः सदैव पुरुषोत्तमः। सर्वगत्वादस्य गतिः परा विष्णो. सदैव हि। पूर्णैश्वर्यादस्य सपत्परमा सप्रकीर्तिता। सार्वज्ञ्यात्परमो लोको विष्णोरानन्द एव च। स्वातन्त्र्यात्परमो ज्ञेयः स हि पूर्णः सदोदितः। प्रतिबिम्बरूपवि

* बृउ ४।३।२१ ( पृ १२१० ) इत्यत्रापि द्रष्टव्यम्।

प्लुट्कांस्तदानन्दस्य चाखिलाः। मुक्ता ब्रह्मादयोऽश्नन्ति तारतम्येन नित्यदा॥’ सलीलः सलिल इति वा। मध्व.

( ६ ) ब्रह्मानन्दलवपरमाणवो हि विषयसुखविशेषाः। श्रीकठ १।३।८

**स यो मनुष्याणा॰ राद्धः समृद्धो भवत्यन्येषामधिपति सर्वैर्मानुष्यकैर्भोगैः सपन्नतम स मनुष्याणां परम आनन्दः। अथ ये शत मनुष्याणामानन्दा. स एकः पितृणां जितलोकानामानन्द। अथ ये शतं पितृणां जितलोकानामानन्दा स एको गन्धर्वलोक आनन्द.। अथ ये शत गन्धर्वलोक आनन्दा स एक. कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसंपद्यन्ते। अथ ये शत कर्मदेवानामानन्दा. स एक आजानदेवानामानन्दः। यश्च श्रोत्रियोऽवृजिनोऽकामहत। अथ ये शत माजानदेवानामानन्दा स एक॰ प्रजापतिलोक आनन्द। यश्च श्रोत्रियोऽवृजिनोऽकामहत। अथ ये शत प्रजापतिलोक आनन्दा स एको ब्रह्मलोक आनन्द.। यश्च श्रोत्रियोऽवृजिनोऽकामहतः। अथैष एव परम आनन्द.। एष ब्रह्मलोक सम्राद्। इति होवाच याज्ञवल्क्य। सोऽहं भगवते सहस्र ददामि। अत ऊर्ध्वं विमोक्षायैव**

(१) बृउ ४।३।३३, शब्रा १४।७।१।३२—३९ कैर्भोगै ( कै कामै ) पितृणा ( पितृणा ) ( स एको गन्धर्वलोक गन्धर्वलोक आनन्दा ० ) माजानदेवानामानन्दा + ( स एको देवलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः। अथ ये शत देवलोक आनन्दा स एको गन्धर्वलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहत। अथ ये शत गन्धर्वलोक आनन्दा ) ( अथैष एव परम आनन्द ० ) इति होवाच याज्ञवल्क्य ( इति हैनमनुशशासैतदमृत ) ( अत्र ह याज्ञवल्क्यो उदरौत्सीदिति० ), ब्रशकर ३।१।७ ( अथ ये शत पितृणा जित॰ लोकानामानन्दा स एक कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसपद्यन्ते ) एतावदेव, रग अथ ये ( अथ ते ये ) परम आनन्द ( परमानन्दः ), रामानुज १।३।१४, मध्व स यो + ( ह वै ) पितृणा ( पितृणा ), ब्रमध्व. २।१।३३, ३।२।२८, श्रीकठ १।३।१४

ब्रूहीति । अत्र ह याज्ञवल्क्यो बिभयांचकार । मेधावी राजा सर्वेभ्यो माऽन्तेभ्य उदरौत्सी-दिति ॥

(१) यस्य परमानन्दस्य मात्रा अवयवाः ब्रह्मादिभिर्मनुष्यपर्यन्तैर्भूतैरुपजीव्यन्ते, तदानन्दमात्राद्वारेण मात्रिण परमानन्दमधिजिगमयिषन्नाह, सैन्धवलवणशकलैरिव लवणशैलम् । सः य. कश्चिन्मनुष्याणा मध्ये, राद्धः ससिद्धोऽविकल समग्रावयव इत्यर्थः, समृद्धः उपभोगोपकरणसपन्नो भवति । किंचान्येषां समान जातीयानामधिपतिः स्वतन्त्र. पतिः, न माण्डलिक । सर्वै. समस्तैः, मानुष्यकैरिति दिव्यभोगोपकरणनिवृत्त्यर्थं, मनुष्याणामेव यानि भोगोपकरणानि तै —सपन्नानामप्यतिशयेन सपन्न. सपन्नतमः स मनुष्याणा परम आनन्दः । तत्रानन्दानन्दिनोरभेदनिर्देशान्न अर्थान्तरभूतत्वमित्येतत् । परमानन्दस्यैवेय विषयविषय्याकारेण मात्रा प्रसृतेति ह्युक्त ' यत्र वा अन्यदिव स्यात् ' इत्यादिवाक्येन । तस्माद्युक्तोऽय—' परम आनन्दः ' इत्यभेदनिर्देश । युधिष्ठिरादितुल्यो राजाऽत्रोदाहरणम् । इष्ट मनुष्यानन्दमादिं कृत्वा शत गुणोत्तरोत्तरक्रमेणोन्नीय परमानन्द, यत्र भेदो निवर्तते तमधिगमयति । अत्रायमानन्दः शतगुणोत्तरोत्तरक्रमेण वर्धमानो यत्र वृद्धिकाष्ठामनुभवति, यत्र गणितभेदो निवर्तते, अन्यदर्शनश्रवणमननाभावात्, त परमानन्द विवक्षन्नाह — अथ ये मनुष्याणामेवप्रकारा शतमानन्दभेदा , स एक. पितृणाम् । तेषा विशेषण — जितलोकानामिति । श्राद्धादिकर्मभिः पितॄस्तोषयित्वा तेन कर्मणा जितो लोको येषा, ते जितलोका. पितर । तेषा पितृणा जितलोकाना मनुष्यानन्दशतगुणीकृतपरिमाण एक आनन्दो भवति । सोऽपि शतगुणीकृतो गन्धर्वलोके एक आनन्दो भवति । स च शतगुणीकृतः कर्मदेवानामेक आनन्द' । अग्निहोत्रादिश्रौतकर्मणा ये देवत्व प्राप्नुवन्ति, ते कर्मदेवा । तथैव आजानदेवानामेक आनन्दः । आजानत एव उत्पत्तित एव ये देवाः, ते आजानदेवा । यश्च श्रोत्रियोऽधीतवेद , अवृजिनो वृजिन पाप तद्रहितो यथोक्तकारीत्यर्थ । अकामहतो वीततृष्णः आजानदेवेभ्योऽर्वाग्यावन्तो विषयास्तेषु — तस्य चैवंभूतस्य आजानदेवै. समान आनन्दः इत्येतदन्वाकृष्यते चशब्दात् । तच्छतगुणीकृतपरिमाण प्रजापतिलोके एक आनन्दो विराट्शरीरे । तथा तद्विज्ञानवान् श्रोत्रियोऽधीतवेदश्च अवृजिन इत्यादि पूर्ववत् । तच्छतगुणीकृतपरिमाण एक आनन्दो ब्रह्मलोके हिरण्यगर्भात्मनि । यश्चेत्यादि पूर्ववदेव । अत पर गणितनिवृत्ति. । एष परम आनन्द इत्युक्त., यस्य च परमानन्दस्य ब्रह्मलोकाद्यानन्दः मात्राः, उदधेरिव विप्रुष. । एव शतगुणोत्तरोत्तरवृद्ध्युपेता आनन्दा. यत्रैकतां यान्ति, यश्च श्रोत्रियप्रत्यक्ष अथैष एव सप्रसादलक्षण. परम आनन्द. । तत्र हि नान्यत्पश्यति नान्यच्छृणोति । अतो भूमा, भूमत्वादमृतः । इतरे तद्विपरीता । अत्र च श्रोत्रियत्वावृजिनत्वे तुल्ये । अकामहतत्वकृतो विशेषः आनन्दशतगुणवृद्धिहेतुः । अत्रैतानि साधनानि श्रोत्रियत्वावृजिनत्वाकामहतत्वानि तस्य तस्यानन्दस्य प्राप्तौ अर्थादभिहितानि, यथा कर्माण्यग्निहोत्रादीनि देवाना देवत्वप्राप्तौ । तत्र च श्रोत्रियत्वावृजिनत्वलक्षणे कर्मणी अधरभूमिष्वपि समाने इति न उत्तरानन्दप्राप्तिसाधने अभ्युपेयेते । अकामहतत्व तु वैराग्यतारतम्योपपत्ते. उत्तरोत्तरभूम्यानन्दप्राप्तिसाधनमित्यवगम्यते । स एष परम आनन्दो वितृष्णश्रोत्रियप्रत्यक्षोऽधिगत । तथा च वेदव्यासः — ' यच्च कामसुख लोके यच्च दिव्य महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥' इति ।

एष ब्रह्मलोक', हे सम्राडिति होवाच याज्ञवल्क्यः । सोऽहमेवमनुशिष्टो भगवते तुभ्य सहस्र ददामि गवाम् । अत ऊर्ध्वं विमोक्षायैव ब्रूहि—इति व्याख्यातमेतत् । अत्र ह विमोक्षायेत्यस्मिन्वाक्ये, याज्ञवल्क्यो बिभयांचकार भीतवान् । याज्ञवल्क्यस्य भयकारणमाह श्रुति'— न याज्ञवल्क्यो वक्तृत्वसामर्थ्याभावाद्भीतवान् , अज्ञानाद्वा । किं तर्हि मेधावी राजा सर्वेभ्य , मा मा, अन्तेभ्यः प्रश्ननिर्णयावसानेभ्यः, उदरौत्सीत् आवृणोदवरोध कृतवानित्यर्थ. । यद्यन्मया निर्णीत प्रश्नरूप विमोक्षार्थं, तत्तदेकदेशत्वेनैव कामप्रश्नस्य गृहीत्वा पुनः पुनर्मां पर्यनुयुङ्क्त एव, मेधावित्वादित्येतद्भयकारण सर्वं मदीय विज्ञान कामप्रश्नव्याजेनोपादित्सतीति ।

शाकर.

( २ ) 'ये कर्मणा देवत्वमभिसपद्यन्ते' इतीष्टादि कारिणां देवै· सह सवसता भोगप्राप्तिं दर्शयति ।

ब्रशकर ३।१।७

( ३ ) राध साध ससिद्धाविति हि धातुः । सिद्धो पायसिद्धः । युवत्वादिगुणै समृद्ध । अन्येषां च मनुष्याणामधिपति । सर्वमानुषभोगसपन्न· । स उत्तमलक्षण आनन्द. । मनुष्याणां मध्ये श्रेष्ठ आनन्दः । अत्र समृद्धत्वादिगुणानामनुकूलतया वेदनीयत्वादानन्दवत्त्वमस्तीति द्रष्टव्यम् । देवत्व हि द्विविध कर्मसिद्धमाजानसिद्धम् । कल्पादावेव यत्सिद्ध तदाजानसिद्धम् । तदितरत्कर्मसिद्धम् । यद्वा त्रयस्त्रिंशद्देवतासायुज्य कर्मदेवत्वम् । त्रयस्त्रिंशद्देवतात्मत्वमाजानसिद्धमिति विवेको द्रष्टव्य । श्रोत्रिय· श्रुतवेदान्त· । अत एवावृजिनोऽपापः । अत एवाकामहत । उपासनानिवृत्तसमस्त इत्यर्थः । मुक्त इति यावत् । यद्यपि मुक्तानन्दाजानदेवानन्दयोर्मेरुस र्षपवत्तारतम्यमस्ति तथाऽप्यन्यूनत्वे तात्पर्यम् । अत्र प्रजापतिशब्दश्चतुर्मुखपरः । तैत्तिरीयके समानप्रकरणे प्रजापतेरानन्द इत्येकवचनान्तप्रजापतिशब्दश्रवणात् । दक्षादिप्रजापतिपरत्वे बहुवचनान्तताप्रसङ्गेन तत्रत्यप्रजापतिशब्दस्य चतुर्मुखपरतया तदैकार्थ्येनात्रत्यप्रजापतिशब्दस्यापि तत्परत्वात् । ततश्चतुर्मुखानन्दशतगुणितो ब्रह्मलोक लक्षण आनन्दः । न च ते ये शत स एक इति निर्देशाद्ब्रह्माऽऽनन्दस्य परिच्छिन्नत्व शङ्कनीयम् । आधिक्यमात्रे वाक्यतात्पर्यात् । अण्डाना तत्र तत्र चतुर्मुखाना चासख्येयत्वावगमान्नियम्यान्नियन्तुः शतगुणितानन्दत्वे कथिते चतुर्मुखेभ्योऽप्यसख्याकेभ्यः शतगुणानन्दतयाऽवगतस्य भगवतोऽपरिच्छिन्नानन्दत्वमर्थसिद्धमिति द्रष्टव्यम् ।

रग.

( ४ ) 'अन्येभ्यस्तु विमुक्तेभ्य आनन्दश्चक्रवर्तिनाम् । मुक्ताना हि शतोद्रिक्त पितॄणा तेभ्य एव च । तेभ्योऽप्यृषीणा मुक्ताना कर्मदेवाभिधायिनाम् । तेभ्यश्च मुक्तदेवाना तेभ्यश्चोमापतेस्तथा । तस्माच्च ब्रह्मणस्त्वेव मुक्तस्य गरुडादपि । एष एव ततो विष्णु· पूर्णानन्द. प्रकीर्तित. । यस्य ब्रह्माऽपि मुक्तः सन् विप्लुण्मात्र समश्नुते ॥' इति च । राद्धो मुक्तः । मनुष्याणा योग्यतया स्वसमेभ्यः प्रयत्नाधिक्यादाधिक्य मुक्तौ प्राप्तु शक्यते इत्यतः समृद्ध इत्युक्तम् ।

यावत्साधयितु शक्यते तावत्साधनैः सपूर्णत्वेन मुक्त इत्यर्थ । स्वराष्ट्रे ज्ञानोपदेष्टृत्वान्मुक्तावपि तेषामधिपति । ज्ञानपूर्वकत्वेन मनुष्यत्वे दानादिक कृत्वा तत्फलैरपि भोगैर्मुक्तौ सपन्नतमः । 'न ह्यस्य कर्म क्षीयते' इति श्रुते. । अन्यथा राद्ध इति विशेषण व्यर्थं भवति । स मनुष्याणा परम आनन्द इति स्वरूपानन्दश्चात्रोच्यते । न ह्यमुक्ताना स्वरूपानन्दाविर्भावोऽस्ति । 'भुज्यते स्वसुख मुक्तैराभासोऽन्यैस्ततोऽपरः' इति च । जितलोका इत्यपि मुक्ता एवोच्यन्ते । गन्धर्वलोके गन्धर्वाणा ब्रह्मज्ञाने मुक्तावित्यर्थ· । तदा हि ब्रह्मज्ञान सदोदितमवतिष्ठते । एष ब्रह्मलोकः सम्राळित्यादिषु ज्ञानस्यैव लोकशब्दोदितत्वात् । यश्च श्रोत्रिय इति वचन तेषामाजानदेवादीनामपि मुक्तानामेवाय नियमेनानन्दशतगुणोद्रेक. । अन्यदा तु कदाचिद्भवति कदाचिद्व्याकुलतया न भवतीति दर्शयितुम् । चशब्दस्तु श्रोत्रियत्वावृजिनत्वाकामहतत्वादीना गुणानां मुक्तौ समुच्चयार्थ. । मुक्तस्यैवैते गुणा भवन्तीति मुक्तस्वीकारार्थं य इति विशेषणम् । 'सर्वं श्रुतिफल मुक्तैः प्राप्य नान्येन केनचित् । अतस्तु श्रोत्रियो मुक्तो ह्यन्य. श्रोत्रियको भवेत् । अदुःखत्व च तस्यैव कामैरहतता तथा । यः कामित न प्राप्नोति स कामहत उच्यते । काम्याप्राप्तेश्च पापाच्च कामात्कामहतः स्मृतः । उभयस्याप्यभावेन मुक्तोऽकामहतो मत· ॥' इति च । 'आजानदेवा इन्द्राद्या जातेभ्यस्तेऽवरा यत' इति च । प्रजापतिलोक इत्युक्तेनैव मुक्तप्रजापतिसिद्धावपि मुक्तस्यैव प्रजापतेर्ब्रह्मणश्चाय विशेष इति स्वरूपकथनार्थं यश्च श्रोत्रिय इत्यादि । अनुपचरितश्रोत्रियादित्वमिति ज्ञापयितुमभ्यासः । सर्वेषामपि मुक्तानां नियमेन तदस्तीति ज्ञापयितु च । 'प्रजास्तु पशुशब्दोक्ता पशुपस्तु प्रजापतिः' इति च । अथशब्दादेष ब्रह्मलोक इति विशेषणाच्च द्वितीयब्रह्मलोकशब्देन परब्रह्मैवोच्यते । अन्यथा 'एष एव परम आनन्द.' इत्युक्त्वा पुनरेष इति शब्दोऽनर्थक· स्यात् । तस्यैव ब्रह्मलोकशब्देन पूर्वमभ्यासाच्च । न च तैत्तिरीयादिश्रुतिविरोधः । शतशब्दस्यायुते दशलक्षादावपि समत्वात् । अतश्चक्रवर्तिभ्यो

मनुष्यगन्धर्वाः शताधिकाः। देवगन्धर्वा अयुताधिकाः। पितरो दशलक्षाधिकाः इत्यविरोधः। उत्तमगन्धर्वापेक्षया पितृभ्यो गन्धर्वाणामाधिक्यं च युज्यते। आजानदेवेभ्यो जाता आजानजा इत्येतस्तत्राप्यविरोधः। यत्राजानजा इत्युपरि पाठस्तत्राजानेभ्यो ब्रह्मादिभ्यो जाता इति भवति। इन्द्रबृहस्पत्यादीनां विशेषस्तु विशेषवचनत्वादत्राप्यङ्गीकर्तव्य एव 'सामान्यधर्मो बलवान् धर्माद्वैशेषिकाद्यथा। बलवद्विशेषवचनं सामान्यवचनात्तथा॥' इति च। 'नृपा मनुष्यगन्धर्वा देवाश्च पितरस्तथा। देवै सहितगन्धर्वा ऋषयो देवतास्तथा। इन्द्रो बृहस्पतिश्चैव प्रधानेन्द्रः पुरन्दरः। रुद्रो ब्रह्मेति क्रमशो मुक्ताः शतगुणोत्तराः॥' इति च। 'अतिप्रयत्नतो यावत्प्राप्तुं शक्यं विमुक्तिगम्। सुखाद्यन्तस्य सम्प्राप्त्यै ज्ञानश्रेण्यः क्रमात्स्मृता। एकां श्रेणीं प्रविश्याय तदुत्कृष्टां च तद्वराम्। क्रमेणैव विजिज्ञासुर्जनकः पृच्छति स्म ह। पुनः पुनर्विमोक्षाय ब्रूहीत्यद्धा वरात्पुरा॥' इति च। 'रहस्यमस्यायोग्यं च यदि मामेष पृच्छति। दत्तो मया वरोऽस्येति वक्तव्यं मे भविष्यति। इति भीतोऽभवद्राज्ञो याज्ञवल्क्यः सुमेधया॥' इति ब्रह्माण्डे। तेभ्य आश्वलादिभ्यः। मध्व

(५) 'न प्रयोजनवत्त्वात्'— 'अथैष एव परमानन्दः' इत्यादिना कृतकृत्यत्वान्न प्रयोजनाय सृष्टिः। ब्रमध्व. २।१।३३

(६) 'विभागः शतवत्'— ननु ब्रह्मवित्त्वाविशेषेऽप्येकेषां कर्मकृतिरेकेषां तत्त्याग इति विभागः कुत इत्याशङ्क्य तत्र हेतुमाह—'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेर्मानुषानन्दमारभ्य ब्रह्मानन्दपर्यन्तं ये गणिता आनन्दास्ते सर्वे पुरुषोत्तमानन्दात्मका एव। एवं सति येषु यावानानन्दो दत्तोऽस्ति तावन्तं तं निरूपयन्त्यधिकारतारतम्येन तद्दानमिति ज्ञापनाय शतोत्तरमानन्दं श्रुतिर्न्यरूपयत्। अत एव पुरुषायुःसंख्यासमानसंख्ययैवोत्कर्ष उक्तस्तेन पुरुषधर्मस्याधिकारस्यैवोत्कर्षः सूच्यते। एवं प्रकृतेऽप्यन्यभावराहित्यतारतम्येन भगवद्भावतारतम्यमत्र त्वनुग्रह एवाधिकाररूप इति तदुत्कर्षे त्यागस्तदनुत्कर्षे नेत्यर्थः। वल्लभ. ३।४।११

ब्रह्मरूपस्य विज्ञानात्मनः शरीरादुत्क्रान्तिः

**स[१] वा एष एतस्मिन्स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव ॥**

(१) अत्र विज्ञानमयः स्वयंज्योतिः आत्मा स्वप्ने प्रदर्शितः, स्वप्नान्तबुद्धान्तसंचारेण कार्यकरणव्यतिरिक्तता, कामकर्मप्रविवेकश्च असङ्गतया महामत्स्यदृष्टान्तेन प्रदर्शितः। पुनश्च अविद्याकार्यं स्वप्न एव 'घ्नन्तीव' इत्यादिना प्रदर्शितम्। अर्थात् अविद्यायाः सतत्त्वं निर्धारितं अतद्धर्माध्यारोपणरूपत्वं अनात्मधर्मत्वं च। तथा विद्यायाश्च कार्यं प्रदर्शितं, सर्वात्मभावः, स्वप्ने एव प्रत्यक्षतः — 'सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः' इति। तत्र च सर्वात्मभावः स्वभावोऽस्य, एवं अविद्याकामकर्मादिसर्वसंसारधर्मसंबन्धातीतं रूपमस्य, साक्षात् सुषुप्ते गृह्यते — इत्येतद्विज्ञापितम्। स्वयंज्योतिरात्मा एष परम आनन्दः, एष विद्याया विषयः, स एष परमः संप्रसादः, सुखस्य च परा काष्ठा — इत्येतत् एवमन्तेन ग्रन्थेन व्याख्यातम्। तच्च एतत् सर्वं विमोक्षपदार्थस्य दृष्टान्तभूतं, बन्धनस्य च। ते च एते मोक्षबन्धने सहेतुके सप्रपञ्चे निर्दिष्टे विद्याविद्याकार्ये, तत्सर्वं दृष्टान्तभूतमेव — इति, तद्दार्ष्टान्तिकस्थानीये मोक्षबन्धने सहेतुके कामप्रश्नार्थभूते त्वया वक्तव्ये इति पुनः पर्यनुयुङ्क्ते जनकः— अत ऊर्ध्वं विमोक्षायैव ब्रूहीति। तत्र महामत्स्यवत् स्वप्नबुद्धान्तौ असङ्गः संचरति एक आत्मा स्वयंज्योतिरित्युक्तम्। यथा च असौ कार्यकरणानि मृत्युरूपाणि परित्यजन् उपाददानश्च महामत्स्यवत् स्वप्नबुद्धान्तावनुसंचरति, तथा जायमानो म्रियमाणश्च तैरेव मृत्युरूपैः संयुज्यते वियुज्यते च — 'उभौ लोकावनुसंचरति' इति संचरणं स्वप्नबुद्धान्तानुसंचारस्य दार्ष्टान्तिकत्वेन सूचितम्। तदिह विस्तरेण सनिमित्तं संचरणं वर्णयितव्यमिति तदर्थोऽयमारम्भः। तत्र च बुद्धान्तात् स्वप्नान्तं अय

(१) बृउ ४।३।३४, शब्रा १४।७।१।४० न्स्वप्नान्ते (न्त्संप्रसादे) बुद्धान्तायैव + (स यदत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति).

मात्मा अनुप्रवेशितः । तस्मात् सप्रसादस्थान मोक्ष दृष्टान्तभूतम् । तत. प्रच्याव्य बुद्धान्ते ससारव्यवहारः प्रदर्शयितव्य इति तेन अस्य सबन्ध । स वै बुद्धान्तात् स्वप्नान्तक्रमेण सप्रसन्नः एष. एतस्मिन् सप्रसादे स्थित्वा, तत. पुन ईषत्प्रच्युत. — स्वप्नान्ते रत्वा चरित्वेत्यादि पूर्ववत्— बुद्धान्तायैव आद्रवति ।

शकर.

( २ ) ' सर्वदा जीवमादाय नियमाद्विष्णुरेव हि । जाग्रदादिषु सयाति नान्यथा तु कथचन । एव नियमविज्ञप्त्यै जीवा स्वातन्त्र्यवित्तये । परिवृत्तिमवस्थासु साभ्यासा वक्ति हि श्रुति ॥' इति निर्णये । अतस्तात्पर्यार्थं पुनर्वचनम् । मध्व.

**तद्यथाऽन सुसमाहितमुत्सर्जद्यायादेवमेवायꣳ शारीर आत्मा प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सर्जन्याति । यत्रैतदूर्ध्वोच्छ्वासी भवति ॥**

( १ ) इत आरभ्य अस्य ससारो वर्ण्यते । यथा अयमात्मा स्वप्नान्तात् बुद्धान्तमागत. । एव अय अस्माद्देहात् देहान्तर प्रतिपत्स्यत इति आह अत्र दृष्टान्तम् — तत् तत्र यथा लोके अन. शकट, सुसमाहित सुष्ठु भृश वा समाहित भाण्डोपस्करणेन उलूखलमुसलशूर्पपिठरादिना अन्नाद्येन च सपन्न सभारेण आक्रान्तमित्यर्थः । तथा भाराक्रान्त सत्, उत्सर्जत् शब्द कुर्वत्, यथा यायात् गच्छेत् शाकटिकेनाधिष्ठित सत् । एवमेव यथा उक्तो दृष्टान्त', अय शारीरः शरीरे भवः — कोऽसौ ? आत्मा लिङ्गोपाधिः, यः स्वप्नबुद्धान्ताविव जन्ममरणाभ्या पाप्मससर्गवियोगलक्षणाभ्यां इहलोकपरलोकावनुसचरति, यस्योत्क्रमणमनु प्राणाद्युत्क्रमणम् — स. प्राज्ञेन परेण आत्मना स्वयज्योति.स्वभावेन अन्वारूढ. अधिष्ठितः अवभास्यमान. — तथा चोक्तम् ' आत्मनैवाय ज्योतिषास्ते पल्ययते ' इति — उत्सर्जन्याति । तत्र चैतन्यात्मज्योतिषा भास्ये लिङ्गे प्राण प्रधाने गच्छति, तदुपाधिरप्यात्मा गच्छतीव । तथा श्रुत्यन्तरम् । ' कस्मिन्न्वहम् ' इत्यादि, ' ध्यायतीव ' इति च । अत एवोक्तम् — प्राज्ञेनात्मनाऽन्वारूढ इति । अन्यथा प्राज्ञेन एकीभूतः शकटवत् कथ उत्सर्जन् याति । तेन लिङ्गोपाधिरात्मा उत्सर्जन् मर्मसु निकृत्यमानेषु दुःखवेदनया आर्त. शब्द कुर्वन् याति गच्छति । तत् कस्मिन्काले इत्युच्यते — यत्र एतद्भवति, एतदिति क्रियाविशेषण, ऊर्ध्वोच्छ्वासी, यत्र ऊर्ध्वोच्छ्वासित्वमस्य भवतीत्यर्थ. । दृश्यमानस्याप्यनुवदन वैराग्यहेतोः । इदृशः कष्ट. खलु अय ससारः — येन उत्क्रान्तिकाले मर्मसु उत्कृत्यमानेषु स्मृतिलोप. दुःखवेदनार्तस्य पुरुषार्थसाधनप्रतिपत्तौ च असामर्थ्ये परवशीकृतचित्तस्य । तस्मात् यावत् इयमवस्था न आगमिष्यति, तावदेव पुरुषार्थसाधनकर्तव्यताया अप्रमत्तो भवेत्—इत्याह कारुण्यात् श्रुतिः । शकर.

( २ ) ' अधिक तु भेदनिर्देशात् ' — ' शारीर आत्मा प्राज्ञेनाऽऽत्मनाऽन्वारूढ. ' इत्येवजातीयकः कर्तृकर्मादिभेदनिर्देशो जीवादधिक ब्रह्म दर्शयति । नन्वभेदनिर्देशोऽपि दर्शितः ' तत्त्वमसि ' इत्येवजातीयक. कथ भेदाभेदौ विरुद्धौ सभवेयाताम् । नैष दोषः । आकाशघटाकाशन्यायेनोभयसभवस्य तत्र तत्र प्रतिष्ठापितत्वात् । ब्रशकर २।१।२२

( ३ ) यथाऽनः शकट सुतरा समाहित यत्रोपकरणे सभाराक्रान्त सत्पूर्वदेशमुत्सृज्य याति एवमेव शकटस्थानीयो जीवः प्राज्ञेन परमात्मना सारथिस्थानीयेन सबन्धविशेष प्राप्तः शरीरमुत्सृज्य यातीत्यर्थः । कदेत्यत्राऽऽह —यत्रैतदूर्ध्वोच्छ्वासी भवति । यदैतच्छरीरमूर्ध्वोच्छ्वासीत्यर्थः ।

रग.

( ४ ) ग्रामादिकमुत्सर्जद्यायात् । ' यथा ग्राम परित्यज्य यात्यनः पुमधिष्ठितम् । एव देह परित्यज्य विष्णुनाऽधिष्ठितः पुमान् ॥ ' इति च । मध्व.

---

(१) बृउ ४।३।३५, शब्रा १४।७।१।४२ जन्याति ( र्जयाति ) ( यत्रैतदूर्ध्वोच्छ्वासी भवति० ), ब्रशकर १।३।४२, २।१।२२, भास्कर १।३।४२, २।१।२२, रग र्जन्याति ( र्जयाति ), रामानुज १।१।१ ( पृ ७८ ), १।१।४ ( पृ १६० ), १।३।४३, २।१।२२ उत्सर्जन्याति ( उत्सृजन्याति ), मध्व रगवत्, ब्रमध्व १।३।४०, ४२ रगवत्, श्रीकठ १।३।४३ रामानुजवत्, श्रीकर १।३।४२, २।१।२३, ३।२।२६, विज्ञान १।३।४२, २।१।२२, २।३।२९, ३।१।१६ रगवत्, बलदेव १।३।४२

स यत्रायमणिमानं न्येति जरया वोपतपता वाऽणिमानं निगच्छति । तद्यथाऽऽम्रं वोदुम्बरं वा पिप्पलं वा बन्धनात्प्रमुच्यते । एवमेवायं पुरुष एभ्योऽङ्गेभ्यः सम्प्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैव ॥

(१) तदस्य ऊर्ध्वोच्छ्वासित्वं कस्मिन्काले किंनिमित्तं कथं किमर्थं वा स्यादित्येतदुच्यते — सोऽयं प्राकृतः शिरःपाण्यादिमान् पिण्डः, यत्र यस्मिन्काले अयं अणिमानं अणोर्भावं अणुत्वं कार्श्यमित्यर्थः, न्येति निगच्छति । किंनिमित्तम् ? जरया वा स्वयमेव कालपक्वफलवत् जीर्णः कार्श्यं गच्छति । उपतपतीति उपतपन् ज्वरादिरोगः तेन उपतपता वा । उपतप्यमानो हि रोगेण विषमाग्नितया अन्नं भुक्तं न जरयति, ततः अन्नरसेन अनुपचीयमानः पिण्डः कार्श्यमापद्यते, तदुच्यते — उपतपता वेति । अणिमानं निगच्छति । यदा अत्यन्तकार्श्यं प्रतिपन्नः जरादिनिमित्तैः, तदा ऊर्ध्वोच्छ्वासी भवति । यदा ऊर्ध्वोच्छ्वासी, तदा भृशाहितसंभारशकटवत् उत्सर्जन्याति । जराभिभवः रोगादिपीडनं कार्श्यापत्तिश्च शरीरवतः अवश्यंभाविन एतेऽनर्था इति वैराग्याय इदमुच्यते । यदा असौ उत्सर्जन्याति, तदा कथं शरीरं विमुञ्चतीति दृष्टान्त उच्यते — तत् तत्र यथा आम्रं वा फलं, उदुम्बरं वा फलं, पिप्पलं वा फलम् । विषमानेकदृष्टान्तोपादानं मरणस्यानियतनिमित्तत्वख्यापनार्थम् । अनियतानि हि मरणस्य निमित्तानि असंख्यातानि च । एतदपि वैराग्यार्थमेव — यस्मात् अयं अनेकमरणनिमित्तवान् तस्मात् सर्वदा मृत्योरास्ये वर्तते इति । बन्धनात् — बध्यते येन वृन्तेन सह, स बन्धनकारणो रसः, यस्मिन्वा बध्यते इति वृन्तमेव उच्यते बन्धनम् — तस्मात् रसात् वृन्ताद्वा बन्धनात् प्रमुच्यते वाताद्यनेकनिमित्तम् । एवमेव अयं पुरुषः लिङ्गात्मा लिङ्गोपाधिः एभ्योऽङ्गेभ्यः चक्षुरादिदेहावयवेभ्यः, सम्प्रमुच्य सम्यङ्निर्लेपेन प्रमुच्य — न सुषुप्तगमनकाल इव प्राणेन रक्षन्, किं तर्हि सह वायुना उपसंहृत्य, पुनः प्रतिन्यायम्—पुनःशब्दात् पूर्वमपि अयं देहात् देहान्तरं असकृत् गतवान् यथा स्वप्नबुद्धान्तौ पुनः पुनर्गच्छति तथा, पुनः प्रतिन्यायं प्रतिगमनं यथागतमित्यर्थः । प्रतियोनि योनिं योनिं प्रति कर्मश्रुतादिवशात् आद्रवति । किमर्थम् ? प्राणायैव प्राणव्यूहायैवेत्यर्थः । स प्राण एव हि गच्छति, ततः 'प्राणायैव' इति विशेषणमनर्थकम् । प्राणव्यूहाय हि गमनं देहात् देहान्तरं प्रति । तेन हि अस्य कर्मफलोपभोगार्थसिद्धिः, न प्राणसत्तामात्रेण । तस्मात् तादर्थ्यार्थं लिङ्गविशेषणम्—प्राणव्यूहायेति ।

* शंकर.

(२) आणिमानं भगवन्तम् । 'स य एषोऽणिमा तेजः परस्या देवतायाम्' इति हि श्रुतिः । उपतपता रोगादिना । 'आम्रं बाल्येऽपि पतति परिणामे ह्युदुम्बरम् । सम्यक्पाके यथाऽश्वत्थफलं जीवमृतिस्तथा । कलावाम्रोपमा जीवास्त्रेतास्वौदुम्बरोपमाः । कृतेऽश्वत्थसमाश्चैव यान्ति ब्रह्मवशाः सदा ॥' इति पाद्मे । प्राणायैव । 'वायुमेवाद्रवत्येष जीवो मोक्षाय तत्त्ववित् । तदनुज्ञयैव ज्ञानित्वमतस्तं पुनराव्रजेत् । सर्वेऽपि वायुमासाद्य जायस्व ज्ञानमाप्नुहि । इति तस्य वरादेव जायन्ते ज्ञानिनोऽखिलाः । पुनस्तं प्राप्य मुक्तिं च प्राप्नुयुस्तदनुज्ञया ॥' इति प्रवृत्ते । मध्व.

तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पन्तेऽयमायात्ययमागच्छतीति । एवꣳ हैवंविदꣳ सर्वाणि भूतानि प्रतिकल्पन्त इदं ब्रह्मायातीदमागच्छतीति ॥

(१) तत्र अस्य इदं शरीरं परित्यज्य गच्छतः न अन्यस्य देहान्तरस्योपादाने सामर्थ्यमस्ति, देहेन्द्रियवियोगात् । न च अन्ये अस्य भृत्यस्थानीयाः, गृहमिव राज्ञे, शरीरान्तरं कृत्वा प्रतीक्षमाणा विद्यन्ते । अथैवं सति, कथं अस्य शरीरान्तरोपादानमिति । उच्यते—

(१) बृउ ४।३।३६, शब्रा १४।७।१।४१ स यत्रायमणिमानं ( अत्र ह याज्ञवल्क्यो बिभयांचकार मेधावी राजा सर्वेभ्यो मान्तेभ्य उदरौत्सीदिति स यत्राणिमानं ) तद्यथा ( यथा ) त्प्रमुच्यते ( त्प्रमुच्येत ) पुरुष एभ्यो ( शारीर आत्मैभ्यो ), वल्लभ. ४।१।२ पुरुष एभ्यो ( शारीर आत्मैभ्यो )

* रंग शंकरवत् ।

(१) बृउ ४।३।३७, शब्रा १४।७।१।४३.

सर्वं ह्यस्य जगत् स्वकर्मफलोपभोगसाधनत्वाय उपात्तम्। स्वकर्मफलोपभोगाय च अयं प्रवृत्तः देहाद्देहान्तरं प्रतिपित्सु। तस्मात् सर्वमेव जगत् स्वकर्मणा प्रयुक्तं तत्कर्मफलोपभोगयोग्यं साधनं कृत्वा प्रतीक्षत एव, 'कृतं लोकं पुरुषोऽभिजायते' इति श्रुतेः—यथा स्वप्नात् जागरितं प्रतिपित्सोः। तत्कथमिति लोकप्रसिद्धो दृष्टान्त उच्यते—तत् तत्र यथा राजानं राज्याभिषिक्तं आयान्तं स्वराष्ट्रे, उग्राः जातिविशेषाः क्रूरकर्माणो वा, प्रत्येनसः—प्रति प्रति एनसि पापकर्मणि नियुक्ताः प्रत्येनसः, तस्करादिदण्डनादौ नियुक्ताः, सूताश्च ग्रामण्यश्च सूतग्रामण्यः—सूताः वर्णसंकरजातिविशेषाः, ग्रामण्यः ग्रामनेतारः, ते पूर्वमेव राज्ञ आगमनं बुद्ध्वा, अन्नैः भोज्यभक्ष्यादिप्रकारैः, पानैः मदिरादिभिः, आवसथैश्च प्रासादादिभिः, प्रतिकल्पन्ते निष्पन्नैरेव प्रतिक्षन्ते—अयं राजा आयाति अयमागच्छतीत्येवं वदन्तः। यथा अयं दृष्टान्तः, एवं ह एवंविदं कर्मफलस्य वेदितारं संसारिणमित्यर्थः। कर्मफलं हि प्रस्तुतं, तत् एवंशब्देन परामृश्यते। सर्वाणि भूतानि शरीरकर्तॄणि, करणानुग्रहीतॄणि च आदित्यादीनि, तत्कर्मप्रयुक्तानि कृतैरेव कर्मफलोपभोगसाधनैः प्रतीक्षन्ते—इदं ब्रह्म भोक्तृ कर्तृ च अस्माकं आयाति, तथा इदमागच्छतीति एवमेव च कृत्वा प्रतीक्षन्त इत्यर्थः।

शंकर

(२) एतच्छरीरत्यागसमनन्तरमेव शरीरान्तरस्य भोग्यभोगस्थानभोगोपकरणानि परमात्मसंकल्पवशेन प्रतिपुरुषं समग्राणि भवन्तीत्यर्थः। यद्वा—उक्तसंसरणप्रकाराभिज्ञस्य सर्वभूतोपजीव्यत्वं फलमुच्यते।

* रंग

(३) इदं मुक्तजीवस्वरूपमायाति। अतोऽनेन सदेहं परं ब्रह्मायातीति परब्रह्मणः पूजार्थं प्रतिकल्पन्ते। यथा राज्ञो ध्वजादिकं दृष्ट्वाऽयं ध्वज आगच्छति तस्माद्राजाऽऽयातीति पूजां प्रतिकल्पन्ते तद्वत्। अन्यथेदं ब्रह्मायातीदमागच्छतीति द्विरुक्तिर्व्यर्था स्यात्। वीप्सात्वे स्वयमायातीत्येकप्रकारेण शब्दाभ्यासः स्यात्। 'एकप्रकारशब्दानामभ्यासस्त्वादरार्थकः। स्वरवर्णादिमात्रं वाऽप्यन्यथा चेत्तदापरः। अर्थः स्यादेष नियमो वाक्ये वीप्सापदे तथा। प्रातिस्विकार्थेऽपि भवेदभ्यासे वा तथा स्थितः॥' इति शब्दनिर्णये। न च कुत्रचिदादरार्थे द्विरूपप्रयोगो दृष्टोऽनन्तरितः। 'यदा मुक्तो व्रजत्यूर्ध्वं तदा तत्सहितो हरिः। नियमाद्दृश्यते देवैर्मुक्ते नियमो न तु। यथा ध्वजादिकं दृष्ट्वा पूजां राज्ञः प्रकुर्वते। एवं विमुक्तिगं दृष्ट्वा विष्णोः पूजां प्रकुर्वते॥' इति तत्त्वनिर्णये। तस्मादणिमानं न्येतीत्यादिना जीवगतं ब्रह्मैवोच्यते। जीवोपतापादि तु नैव। 'जीवमादाय गच्छन्तमनुयान्ति दिवौकसः। प्राणाभिमानिनो विष्णुं नृपं परिजना यथा॥' इति च।

मध्व

* तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभिसमायन्ति। एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति। यत्रैतदूर्ध्वोच्छ्वासी भवति॥

(१) तमेव जिगमिषुं के सह गच्छन्ति। ये वा गच्छन्ति, ते किं तत्क्रियाप्रणुन्नाः, आहोस्वित् तत्कर्मवशात् स्वयमेव गच्छन्ति—परलोकशरीरकर्तॄणि च भूतानीति। अत्रोच्यते दृष्टान्तः—तद्यथा राजानं प्रयियासन्तं प्रकर्षेण यातुमिच्छन्तं, उग्राः प्रत्येनसः सूतग्रामण्यः तं यथा अभिसमायन्ति आभिमुख्येन समायन्ति, एकीभावेन तमभिमुखा आयन्ति अनाज्ञप्ता एव राज्ञा केवलं तज्जिगमिषाभिज्ञाः, एवमेव इममात्मानं भोक्तारं अन्तकाले मरणकाले सर्वे प्राणाः वागादयः अभिसमायन्ति। यत्रैतदूर्ध्वोच्छ्वासी भवतीति व्याख्यातम्।

शंकर

(२) 'उग्रास्तु श्रेणयः प्रोक्ता योधाः प्रत्येनसः

---

* शेषं शंकरवत्।

* ब्रशंकरादिव्याख्यानानि छाउ ६।८।६ (पृ ९१०) इत्यत्र द्रष्टव्यानि।

(१) बृउ ४।३।३८, शब्रा १४।७।१।४४ सूतग्रामण्योऽभि अभिसमायन्ति ( सूतग्रामण्य उपसमायन्त्येवं हैवंविदं सर्वे प्राणा उपसमायन्ति ), ब्रशंकर ४।२।४, भास्कर ४।२।४ च्छ्वासी ( ह्वयासी ), रामानुज ४।२।४, निंबार्क ४।२।४, श्रीकंठ ४।२।४, विज्ञान ४।२।४ मेवेममा ( मेवेतमा ), बलदेव ४।२।४.

स्मृताः। ग्रामण्यस्तु चमूपालास्ते सर्वे द्विविधा मताः। राज्ञा सह स्थिताश्चैव तथा जनपदे स्थिताः। ते सर्वेऽपि नियन्तव्याः श्रेणीभिर्द्विविधैः सदा॥' इति राजनीतौ। 'अनुयान्ति शरीरस्था अभियान्ति स्वलोकगा। मुक्तमादाय गच्छन्त विष्णु सर्वे दिवौकसः॥' इत्यध्यात्मे।

मध्व

विद्याकर्मभ्यां पूर्वप्रज्ञया च सह सविज्ञानस्य आत्मन सप्राणस्योत्क्रान्ति शरीरान्तर- प्राप्तिश्च

**स यत्रायमात्माऽबल्य न्येत्य समोहमिव न्येति। अथैनमेते प्राणा अभिसमायन्ति। स एतास्तेजोमात्रा समभ्याददानो हृदयमेवान्ववक्रामति। स यत्रैष चाक्षुष पुरुषः पराङ्पर्यावर्तते। अथारूपज्ञो भवति॥**

(१) स यत्रायमात्मा। ससारोपवर्णन प्रस्तुतम्। 'तत्राय पुरुष एभ्योऽङ्गेभ्यः सप्रमुच्य' इत्युक्तम्। तत्सप्रमोक्षण कस्मिन्काले कथ वेति सविस्तर ससरण वर्णयितव्यमित्यारभ्यते—

सोऽय आत्मा प्रस्तुत, यत्र यस्मिन्काले, अबल्य अबलभाव, नि एत्य गत्वा—यत् देहस्य दौर्बल्य, तत् आत्मन एव दौर्बल्यमित्युपचर्यते 'अबल्य न्येत्य' इति। न ह्यसौ स्वत अमूर्तत्वात् अबलभाव गच्छति—तथा समोहमिव समूढता समोह विवेकाभावः समूढतामिव न्येति निगच्छति। न चास्य स्वतः समोह असमोहो वा अस्ति, नित्यचैतन्यज्योतिःस्वभावत्वात्। तेन इवशब्द—समोहमिव न्येतीति। उत्क्रान्तिकाले हि करणोपसहारनिमित्तो व्याकुलीभाव. आत्मन इव लक्ष्यते लौकिकै। तथा च वक्तारो भवन्ति—समूढ. समूढोऽयमिति। अथ वा उभयत्र इवशब्दप्रयोगो योज्य.—अबल्यमिव न्येत्य समोहमिव न्येतीति, उभयस्य परोपाधिनिमित्तत्वाविशेषात्, समानकर्तृकनिर्देशाच्च। अथ अस्मिन्काले एते प्राणाः वागादयः एनमात्मानमभिसमायन्ति। तदा अस्य शारीरस्यात्मन अङ्गेभ्य. सप्रमोक्षणम्। कथ पुन सप्रमोक्षण, केन वा प्रकारेण आत्मानमभिसमायन्तीत्युच्यते—सः आत्मा, एतास्तेजोमात्रा तेजसो मात्रा तेजोमात्राः तेजोऽवयवाः रूपादिप्रकाशकत्वात्, चक्षुरादीनि करणानीत्यर्थ, ता एताः समभ्याददान. सम्यक् निर्लेपेन अभ्याददान आभिमुख्येन आददान सहरमाण। तत् स्वप्नापेक्षया विशेषण 'सम्' इति। न तु स्वप्ने निर्लेपेन सम्यगादानम्। अस्ति तु आदानमात्रम्। 'गृहीता वाक्' 'गृहीत चक्षु' 'अस्य लोकस्य सर्वावतो मात्रामपादाय' 'शुक्रमादाय' इत्यादिवाक्येभ्य। हृदयमेव पुण्डरीकाकाश अन्ववक्रामति अन्वागच्छति, हृदयेऽभिव्यक्तविज्ञानो भवतीत्यर्थ—बुद्ध्यादिविक्षेपोपसहारे सति। न हि तस्य स्वतश्चलन विक्षेपोपसहारादिविक्रिया वा, 'ध्यायतीव लेलायतीव' इत्युक्तत्वात्। बुद्ध्याद्युपाधिद्वारैव हि सर्वविक्रिया अध्यारोप्यते तस्मिन्। कदा पुनः तस्य तेजोमात्राभ्यादानमित्युच्यते—स यत्र एष, चक्षुषि भव. चाक्षुष पुरुष. आदित्यांशः भोक्तुः कर्मणा प्रयुक्त यावद्देहधारण तावत् चक्षुषोऽनुग्रह कुर्वन् वर्तते। मरणकाले तु अस्य चक्षुरनुग्रह परित्यजति, स्व आदित्यात्मान प्रतिपद्यते। तदेतदुक्तम्—'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वात प्राणश्चक्षुरादित्यम्' इत्यादि। पुन. देहग्रहणकाले सश्रयिष्यन्ति। तथा स्वप्स्यत प्रबुध्यतश्च। तदेतदाह—चाक्षुषः पुरुषः यत्र यस्मिन्काले, पराङ् पर्यावर्तते—परि समन्तात् पराङ् व्यावर्तते इति। अथ अत्र अस्मिन्काले अरूपज्ञो भवति, मुमूर्षु रूप न जानाति। तदा अयमात्मा चक्षुरादितेजोमात्राः समभ्याददानो भवति, स्वप्नकाल इव।

शकर.

(२) आबल्यमबलस्य भाव आबल्य बलाराहित्य न्येत्य नितरामेत्य प्राप्य समोहमिव न्येति समोहमिव प्रतिपद्यते। करणक्षोभान्मोह प्रतिपद्यते। इवशब्दोऽल्पार्थे। मोहो (मरणो) पक्रमदशायामित्यर्थः। मोहो नाम मरणायार्धसपत्ति। सर्वप्राणवियोगोपक्रमकतिपयप्राणसपत्तिर्मूर्छा। चक्षुषि सनिहितश्चाक्षुष इति प्रिय-

(१) बृउ ४।४।१, शब्रा १४।७।२।१, २ यत्रायमात्मा (यत्रायं शारीर आत्मा) न्येत्य (नीत्य), ब्रशकर २।३।२०, २।४।६, ३।१।१, ४।२।१७, भास्कर ४।२।१६, रामानुज ४।२।१२, श्रीकर ४।२।१२, वल्लभ २।४।५, ४।२।१७

माणो जीव उच्यते। स यदा रूपादिविषयपराङ्मुख सन्हृदयदेशे पर्यावर्तत इत्यर्थ । रग.

( ३ ) ' सर्वेषा बलकारित्वाद्बल्यो विष्णु प्रकीर्तित । त यदा प्राप्य जीवात्मा मृते पूर्वं विमुग्धताम् । याति विष्णु तदा देवा यान्ति तेजःस्वरूपिण । तानादाय हरिश्चक्षु स्थानाद्धृदयमाव्रजेत् । तदा न किंचिज्जानाति जीवो ब्रह्मसमाश्रित. ॥ ' इति च । एन बल्यमभिसमायन्ति । पराकुस्थितश्चाक्षुषो भगवान्प्रत्यक्पर्यावर्तते । ' इन्धो वै नामैष योऽय दक्षिणेऽक्षन्पुरुष ' इत्यादिश्रुते. । मध्व

**एकीभवति न पश्यतीत्याहु । एकीभवति न जिघ्रतीत्याहु । एकीभवति न रसयत इत्याहु । एकीभवति न वदतीत्याहु. । एकीभवति न शृणोतीत्याहु । एकीभवति न मनुत इत्याहु । एकीभवति न स्पृशतीत्याहु. । एकीभवति न विजानातीत्याहु । तस्य हैतस्य हृदयस्याग्र प्रद्योतते । तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः । तमुत्क्रामन्त प्राणोऽनूत्क्रामति । प्राणमनूत्क्रामन्त९ सर्वे प्राणा अनूत्क्रामन्ति । सविज्ञानो भवति । सविज्ञानमेवान्ववक्रामति । तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ॥ ***

(१) बृउ ४।४।२, शब्रा १४।७।२।२, ३ रसयत इत्याहु ( रसयतीत्याहु. ) सविज्ञानो न्ववक्रामति ( सज्ञानमेवान्ववक्रामति स एष ज्ञ सविज्ञानो भवति ), ब्रशकर २।३।२०, २।४।६, १६, ३।१।३, ३।४।५, ११, ४।१।१२, ४।२।४, १७, भास्कर २।३।१९, २।४।५, १६, ३।१।३, ३।३।३९, ३।४।५, ४।२।४, १२, १६ चक्षुष्टो (चक्षुषो), रग भास्करवत्, रामानुज २।३।२०, २।४।६, १२, ३।१।३, ३।४।५, ११, ४।२।४, ७, १२ भास्करवत्, निंबार्क २।३।१९, २।४।५, ७, ३।१।३, ३।४।५, ११, ४।२।४ तेन प्रद्योतेनैष ( अनेन प्रद्योतनेनैष ) चक्षुष्टो ( चक्षुषो ), मध्व भास्करवत्, अमध्व १।३।८, ४।२।१७, श्रीकठ २।३।२०, २।४।६, ७, १२, ३।१।३, ३।४।५, ११, ४।२।१०, १६, श्रीकर २।३।१८, २।४।४, ५, ६, १०, ३।१।३, ३।४।१, ११, ४।२।४, ७, १२, १६, वल्लभ २।४।५, १८, ३।१।१, ३, ३।४।५, १२, ४।१।२, ४।२।५, ६, १७ भास्करवत्, विज्ञान १।३।४२, १।४।२२, २।१।१४, ३६, २।४।१, ८, १७, ३।१।३, ५, १७, ३।२।४०, ३।४।५, १०, ४।२।४, १३, १७ भास्करवत्, बलदेव २।३।१८, २।४।१३, ३।१।३, ३।४।५, ४।२।७

(१) एकीभवति करणजात स्वेन लिङ्गात्मना, तदा एन पार्श्वस्था आहु --न पश्यतीति । तथा घ्राणदेवतानिवृत्तौ घ्राणमेकीभवति लिङ्गात्मना, तदा न जिघ्रतीत्याहुः । समानमन्यत् । जिह्वाया सोमो वरुणो वा देवता, तन्निवृत्त्यपेक्षया न रसयते इत्याहु । तथा न वदति न शृणोति न मनुते न स्पृशति न विजानातीत्याहु' । तदा उपलक्ष्यते देवतानिवृत्तिः, करणानां च हृदय एकीभावः । तत्र हृदये उपसहृतेषु करणेषु योऽन्तर्व्यापार स कथ्यते--तस्य ह एतस्य प्रकृतस्य हृदयस्य हृदयच्छिद्रस्येत्येतत्, अग्र नाडीमुख निर्गमनद्वार, प्रद्योतते, स्वप्नकाल इव, स्वेन भासा तेजोमात्रादानकृतेन, स्वेनैव ज्योतिषा आत्मनैव च । तेन आत्मज्योतिषा प्रद्योतेन हृदयाग्रेण एष आत्मा विज्ञानमयो लिङ्गोपाधि. निर्गच्छति निष्क्रामति । तथा आथर्वणे ' कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत ' इति । तत्र च आत्मचैतन्यज्योति' सर्वदा अभिव्यक्ततरम् । तदुपाधिद्वारा हि आत्मनि जन्ममरणगमनागमनादिसर्वविक्रियालक्षण' सव्यवहारः । तदात्मक हि द्वादशविध करण बुद्ध्यादि, तत् सूत्र, तत् जीवन, सोऽन्तरात्मा जगतः तस्थुषश्च । तेन प्रद्योतेन हृदयाग्रप्रकाशेन निष्क्रममाणः केन मार्गेण निष्क्रामतीत्युच्यते--चक्षुष्टो वा, आदित्यलोकप्राप्तिनिमित्त ज्ञान कर्म वा यदि स्यात् । मूर्ध्नो वा ब्रह्मलोकप्राप्तिनिमित्त चेत् । अन्येभ्यो वा शरीरदेशेभ्यः शरीरावयवेभ्य' यथाकर्म यथाश्रुतम् । त विज्ञानात्मान, उत्क्रामन्त परलोकाय प्रस्थित, परलोकाय उद्भूताकूतमित्यर्थ., प्राणः सर्वाधिकारिस्थानीय. राज्ञ इव अनूत्क्रामति । त च प्राणमनूत्क्रामन्त वागादय सर्वे प्राणा अनूत्क्रामन्ति ।

* व्याख्यानान्तराणि छाउ ६।८।६, ८।१।१ ( पृ. ९०९, ९५३ ) इत्यत्र द्रष्टव्यानि ।

यथाप्रधानान्वाचिख्यासा इय, न तु क्रमेण सार्थवत् गमन इह विवक्षितम्। तदा एष आत्मा सविज्ञानो भवति स्वप्न इव विशेषविज्ञानवान् भवति कर्मवशात्, न स्वतन्त्र'। स्वातन्त्र्येण हि सविज्ञानत्वे सर्वः कृतकृत्य. स्यात्। नैव तु तत् लभ्यते। अत एवाह व्यास.— 'सदा तद्भावभावित.' इति। कर्मणा तु उद्भाव्यमानेन अन्तःकरणवृत्तिविशेषाश्रितवासनात्मकविशेषविज्ञानेन सर्वो लोक एतस्मिन्काले सविज्ञानो भवति। सविज्ञानमेव च गन्तव्य अन्ववक्रामति अनुगच्छति विशेषविज्ञानोद्भासितमेवेत्यर्थ'। तस्मात् तत्काले स्वातन्त्र्यार्थं योगधर्मानुसेवन परिसख्यानाभ्यासश्च विशिष्टपुण्योपचयश्च श्रद्दधानै परलोकार्थिभि अप्रमत्तैः कर्तव्य इति। सर्वशास्त्राणा यत्नतो विधेयोऽर्थः— दुश्चरिताच्च उपरमणम्। न हि तत्काले शक्यते किंचित्सपादयितु, कर्मणा नीयमानस्य स्वातन्त्र्याभावात्। 'पुण्यो वै पुण्येन कर्मणा भवति पाप पापेन' इत्युक्तम्। एतस्य ह्यनर्थस्य उपशमोपायविधानाय सर्वशाखोपनिषदः प्रवृत्ता.। न हि तद्विहितोपायानुसेवन मुक्त्वा आत्यन्तिक. अस्य अनर्थस्य उपशमोपायः अस्ति। तस्मात् अत्रैव उपनिषद्विहितोपाये यत्नपरैर्भवितव्यम्—इत्येष प्रकरणार्थः।

शकटवत्सभृतसभार उत्सर्जन्यातीत्युक्त, किं पुन. तस्य परलोकाय प्रवृत्तस्य पथ्यदन शाकटिकसभारस्थानीय, गत्वा वा परलोक यत् भुङ्क्ते, शरीराद्यारम्भक च यत् तत्किं इत्युच्यते — त परलोकाय गच्छन्तमात्मान, विद्याकर्मणी — विद्या च कर्म च विद्याकर्मणी, विद्या सर्वप्रकारा विहिता प्रतिषिद्धा च अविहिता अप्रतिषिद्धा च, तथा कर्म विहित प्रतिषिद्ध च अविहितमप्रतिषिद्ध च, समन्वारभेते सम्यगन्वारभेते अन्वालभेते अनुगच्छतः। पूर्वप्रज्ञा च — पूर्वानुभूतविषया प्रज्ञा पूर्वप्रज्ञा अतीतकर्मफलानुभववासनेत्यर्थ.। सा च वासना अपूर्वकर्मारम्भे कर्मविपाके च अङ्ग भवति। तेन असावपि अन्वारभते। न हि तया वासनया विना कर्म कर्तुं फल च उपभोक्तु शक्यते। न हि अनभ्यस्ते विषये कौशल इन्द्रियाणा भवति। पूर्वानुभववासनाप्रवृत्तानां तु इन्द्रियाणा इह अभ्यासमन्तरेण कौशलमुपपद्यते। दृश्यते च केषाचित् कासुचित्क्रियासु चित्रकर्मादिलक्षणासु विनैव इह अभ्यासेन जन्मत एव कौशल, कासुचित् अत्यन्तसौकर्ययुक्तास्वपि अकौशल केषाचित्। तथा विषयोपभोगेषु स्वभावत एव केषाचित् कौशलाकौशले दृश्येते। तच्च एतत्सर्वं पूर्वप्रज्ञोद्भवानुद्भवनिमित्तम्। तेन पूर्वप्रज्ञया विना कर्मणि वा फलोपभोगे वा न कस्यचित् प्रवृत्तिरुपपद्यते। तस्मात् एतत् त्रय शाकटिकसभारस्थानीय परलोकपथ्यदन विद्याकर्मपूर्वप्रज्ञाख्यम्। यस्मात् विद्याकर्मणी पूर्वप्रज्ञा च देहान्तरप्रतिपत्त्युपभोगसाधन, तस्मात् विद्याकर्मादि शुभमेव समाचरेत्, यथा इष्टदेहसयोगोपभोगौ स्याताम् — इति प्रकरणार्थ.। * शाकर

( २ ) 'प्राणगतेश्च' — प्राणाना च देहान्तरप्रतिपत्तौ गति श्राव्यते 'तमुत्क्रामन्त प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्त सर्वे प्राणा अनूत्क्रामन्ति' इत्यादिश्रुतिभि। सा च प्राणाना गतिर्नाऽऽश्रयमन्तरेण सभवतीत्यत. प्राणगतिप्रयुक्ता तदाश्रयभूतानामपामपि भूतान्तरोपसृष्टाना गतिरवगम्यते। न हि निराश्रयाः प्राणा. क्वचिद्गच्छन्ति तिष्ठन्ति वा जीवतो दर्शनात्। ‡ ३।१।३

'समन्वारम्भणात्'— 'त विद्याकर्मणी समन्वारभेते' इति च विद्याकर्मणोः फलारम्भे सहकारित्वदर्शनान्न स्वातन्त्र्य विद्याया। + ३।४।५

'विभागः शतवत्'—यदप्युक्तम् 'त विद्याकर्मणी समन्वारभेते' इत्येतत्समन्वारम्भवचनमस्वातन्त्र्ये विद्याया लिङ्गमिति तत्प्रत्युच्यते। विभागोऽत्र द्रष्टव्यो विद्याऽन्य पुरुषमन्वारभते कर्मान्यमिति। शतवत्। यथा शतमाभ्यां दीयतामित्युक्ते विभज्य दीयते पञ्चाशदेकस्मै पञ्चाशदपरस्मै तद्वत्। न चेद समन्वारम्भवचन मुमुक्षुविषयम्। 'इति नु कामयमान' इति ससारिविषयत्वोपसहारात्। 'अथाकामयमान' इति च मुमुक्षोः पृथगुपक्रमात्। तत्र ससारिविषये विद्या विहिता प्रति-

* रंग शाकरवद्वाक्यार्थ।

‡ भास्कर रामानुज निंबार्क वल्लभ विज्ञान ब्रह्मशाकरवद्भाव।

+ भास्कर रामानुज. निंबार्क. श्रीकठ ब्रह्मशाकरवत्।

षिद्धा च परिगृह्यते विशेषाभावात् । कर्मापि विहित प्रतिषिद्ध च यथाप्राप्तानुवादित्वात् । एव सत्यविभागेनापीद समन्वारम्भवचनमवकल्पते । † ३।४।११

'आप्रायणात्तत्रापि हि दृष्टम्' — आप्रायणादेवाऽऽवर्तयेत्प्रत्ययम् । अन्त्यप्रत्ययवशाददृष्टफलप्राप्ते । कर्माण्यपि हि जन्मान्तरोपभोग्य फलमारभमाणानि तदनुरूप भावनाविज्ञान प्रायणकाल आक्षिपन्ति 'सविज्ञानो भवति' इति चैवमादिश्रुतिभ्य । तृणजलूकानिदर्शनाच्च । ४।१।१२

'तदोकोग्रज्वलन तत्प्रकाशितद्वारो विद्यासामर्थ्याच्च-च्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीत. शताधिकया'— तस्योपसहृतवागादिकलापस्योच्चिक्रमिषतो विज्ञानात्मन ओक आयतन हृदय 'स एतास्तेजोमात्रा' समभ्याददानो हृदयमेवान्ववक्रामति' इति श्रुते । तदग्रप्रज्वलनपूर्विका चक्षुरादिस्थानापादाना चोत्क्रान्ति श्रूयते । समानेऽपि हि विद्वदविदुषोर्हृदयाग्रप्रद्योतने तत्प्रकाशितद्वारे च मूर्धस्थानादेव विद्वान्निष्क्रामति स्थानान्तरेभ्यस्त्वितरे । कुत॰ । विद्यासामर्थ्यात् । यदि विद्वानपीतरवद्यतः कुतश्चिद्देहदेशादुत्क्रामन्नैवोत्कृष्ट लोक लभेत । तत्रानर्थिकैव विद्या स्यात् । तच्छेषगत्यनुस्मृतियोगाच्च । विद्याशेषभूता च मूर्धन्यनाडीसबद्धा गतिरनुशीलयितव्या विद्याविशेषेषु विहिता तामभ्यस्यस्तयैव प्रतिष्ठत इति युक्तम् । तस्माद्धृदयालयेन ब्रह्मणा सूपासितेनानुगृहीतस्तद्भाव समापन्नो विद्वान्मुर्धन्ययैव शतादतिरिक्तयैकशततम्या नाड्या निष्क्रामतीतराभिरितरे । * ब्रशाकर ४।२।१७

( ३ ) 'उत्क्रान्तिगत्यागतीनाम्' — इदमिदानीं चिन्त्यते किमणुपरिमाणः किं वा महापरिमाण इति । किं तावत्प्राप्तमणुपरिमाण इति । कस्मादुत्क्रान्तिगत्यागतीनां श्रवणादित्यध्याहार । 'तमुत्क्रामन्त प्राणोऽनूत्क्रामति' 'ये के चास्माल्लोकात्प्रयान्ति चन्द्रमसमेव ते गच्छन्ति' 'यावत् सपातमुषित्वा तथैतमेवाध्वान पुनर्निवर्तन्ते' इति । न च सर्वगतस्यैतत्त्रयमुपपद्यते । २।३।१९

'तस्य च नित्यत्वात्' — तस्य करणजातस्य शारीर प्रति नियतत्वात् 'तमुत्क्रामन्त प्राणोऽनूत्क्रामति' इति श्रुते । भास्कर २।४।१६

( ४ ) 'उत्क्रान्तिगत्यागतीनाम्' — नाय सर्वगतः । अपि त्वणुरेवायमात्मा । कुतः । उत्क्रान्तिगत्यागतीना श्रुते । उत्क्रान्तिस्तावच्छ्रूयते 'तेन प्रद्योतेनैष आत्मा निष्क्रामति' । गतिरपि 'ये वै के चास्माल्लोका त्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' ( कौउ १।२ ) इति । आगतिरपि 'तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' ( बृउ. ४।४।६ ) इति । विभुत्वे ह्येता उत्क्रान्त्यादयो नोपपद्येरन् । * रामानुज. २।३।२०

( ५ ) 'हृदये सस्थितो जीवो विशेषेण हरिस्तथा । चक्षुरादिषु रूपाणि जाग्रत्काले तयो. सदा । बहूनि सन्ति तान्येव यदैकीभावमाप्नुयु । हृदयस्थेन रूपेण तदा जीवो न किंचन । जानातीति विदु प्राज्ञास्तदा विष्णो. स्वतेजसा । द्योतते हृदयाग्र च तेन द्वारेण केशव. । निष्क्रामेज्जीवमादाय प्राण एनमनुव्रजेत् । प्राणमन्ये तथा देवा विद्या कर्म च योग्यता ॥' इति महामीमासायाम् । 'कर्माभिमानी गरुडो ब्रह्मा ज्ञानाभिमानवान् । पूर्वप्रज्ञा योग्यता स्याद्रमा तदभिमानिनी । एतेऽपि विष्णु गच्छन्तमनुयान्ति सदैव हि । वायुर्ज्ञानात्मकश्चैव प्राणात्मक इति द्विधा । अनुयाति हृषीकेश सर्वैर्देवै समन्वित. ॥' इति च । 'देवलोके चिर रत्वा यस्तु मुक्तिं व्रजिष्यति । स तु तद्देवताद्वारेणोत्क्रामति न सशय. । विष्णोर्लोक पर गच्छन्नुत्क्रामेन्मूर्ध्न एव तु । तथैव ब्रह्मणो लोक सुषुम्नाया विभेदतः ॥' इत्यध्यात्मे । सविज्ञानो भवति जीवेन सहितो भवति । सविज्ञान जीवमेवान्ववक्रामति । जीवमारुह्य गच्छति भगवान् । प्राज्ञेनात्मनाऽन्वारूढ इति उक्तम् । 'यो विज्ञाने तिष्ठन्' 'य आत्मनि तिष्ठन्' इत्युभयोर्जीवाभिप्रायेण हि पाठः । 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' इति भगवद्-

† भास्कर रामानुज निंबार्क श्रीकठ ब्रशकरवत् । वल्लभ बृउ ४।३।३३ (पृ १२१९) इत्यत्र द्रष्टव्यम् । विज्ञान छाउ ७।१।३ (पृ ९२७) इत्यत्र द्रष्टव्यम् ।

* भास्कर रामानुज निंबार्क ब्रमध्व श्रीकठ श्रीकर वल्लभ विज्ञान ब्रशकरवद्भाव ।

* निंबार्क श्रीकठ विज्ञान. रामानुजवत् । बृउ. १।३।२२, १।५।१३ (पृ १०१२, १०५५) इत्यत्रापि रामानुजभाष्य द्रष्टव्यम् ।

चनम्। 'विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सप्रतिष्ठन्ति यत्र' इति च। एष आत्मा निष्क्रामतीति जीवाङ्गीकारे 'शरीरं निहत्य अविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरं रूपं कुरुते' इत्यादिक्रमयुक्तं स्यात्। न हि जीवः शरीरं निहत्य अविद्यां गमयति रूपान्तरं वा करोति। न च सर्वमयत्वं जीवस्य। ब्रह्मेति विशेषणाच्च। मध्व

तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्याऽऽत्मानमुपसꣳहरति। एवमेवायमात्मेदꣳ शरीरं निहत्याविद्यां गमयित्वाऽन्यमाक्रममाक्रम्याऽऽत्मानमुपसꣳहरति ॥

(१) एवं विद्यादिसंभारसंभृतो देहान्तरं प्रतिपद्यमानः, मुक्त्वा पूर्वं देहं, पक्षीव वृक्षान्तरं, देहान्तरं प्रतिपद्यते। अथवा आतिवाहिकेन शरीरान्तरेण कर्मफलजन्मदेशं नीयते। किंचात्रस्थस्यैव सर्वगतानां करणानां वृत्तिलाभो भवति, आहोस्वित् शरीरस्थस्य संकुचितानि करणानि मृतस्य भिन्नघटप्रदीपप्रकाशवत् सर्वतो व्याप्य पुनः देहान्तरारम्भे संकोचमुपगच्छन्ति— किंच मनोमात्रं वैशेषिकसमय इव देहान्तरारम्भदेशं प्रति गच्छति, किं वा कल्पनान्तरमेव वेदान्तसमये— इत्युच्यते—'त एते सर्व एव समाः सर्वेऽनन्ताः' इति श्रुतेः सर्वात्मकानि तावत्करणानि, सर्वात्मकप्राणसंश्रयाच्च। तेषां आध्यात्मिकाधिभौतिकपरिच्छेदः प्राणिकर्मज्ञानभावनानिमित्तः। अतः तद्वशात् स्वभावतः सर्वगतानामनन्तानामपि प्राणानां कर्मज्ञानवासनानुरूप्येणैव देहान्तरारम्भवशात् प्राणानां वृत्तिः संकुचति विकसति च। तथा चोक्तम् 'समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण' इति। तथा च इदं वचनमनुकूलम्— 'स यो हैतानन्तानुपास्ते' इत्यादि, 'तं यथा यथोपासते' इति च। तत्र वासना पूर्वप्रज्ञाख्या विद्याकर्मतन्त्रा जलूकावत् संततैव स्वप्नकाल इव कर्मकृतं देहाद्देहान्तरं आरभते हृदयस्थैव। पुनर्देहान्तरारम्भे देहान्तरं पूर्वाश्रयं विमुञ्चति— इत्येतस्मिन्नर्थे दृष्टान्त उपादीयते—

तत् तत्र देहान्तरसंचारे इदं निदर्शनम् — यथा येन प्रकारेण तृणजलायुका तृणजलूका तृणस्य अन्तं अवसानं, गत्वा प्राप्य, अन्यं तृणान्तरं, आक्रमम् — आक्रम्यत इत्याक्रमः— तमाक्रमं, आक्रम्य आश्रित्य, आत्मानं आत्मनः पूर्वावयवं उपसंहरति अन्त्यावयवस्थाने। एवमेव अयमात्मा यः प्रकृतः संसारी इदं शरीरं पूर्वोपात्तं, निहत्य स्वप्नं प्रतिपित्सुरिव पातयित्वा अविद्यां गमयित्वा अचेतनं कृत्वा स्वात्मोपसंहारेण, अन्यं आक्रमं तृणान्तरमिव तृणजलूका शरीरान्तरं, गृहीत्वा प्रसारितया वासनया, आत्मानमुपसंहरति, तत्र आत्मभावमारभते — यथा स्वप्ने देहान्तरस्थ एव शरीरारम्भदेशे — आरभ्यमाणे देहे जङ्गमे स्थावरे वा। तत्र च कर्मवशात् करणानि लब्धवृत्तीनि संहन्यन्ते। बाह्यं च कुशमृत्तिकास्थानीयं शरीरमारभ्यते। तत्र च करणव्यूहमपेक्ष्य वागाद्यनुग्रहाय अग्न्यादिदेवताः संश्रयन्ते। एष देहान्तरारम्भविधिः। शंकर

(२) तत्राप्परिवेष्टितस्यैव जीवस्य कर्मोपस्थापितप्रतिपत्तव्यदेहविषयभावनादीर्घीभावमात्रं जलूकयोपमीयत इत्यविरोधः। ब्रशांकर. ३।१।१

(३) प्राक्तनं शरीरं निहत्य तस्यैव विवरणम्- विद्यां गमयित्वा। रंग.

(४) 'यथा तृणजलूकैव भगवान्पुरुषोत्तमः। जीवस्य सूक्ष्मरूपं तु प्राप्य स्थूलं परित्यजेत्। इदं शरीरं भूतेषु विलापयति केशवः। अविद्यां चैव जीवस्य गमयेज्ज्ञानसर्जनात् ॥' मध्व.

तद्यथा पेशस्कारी पेशसो मात्रामपादायान्यन्नवतरं कल्याणतरꣳ रूपं तनुते। एवमेवायमात्मेदꣳ शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं

(१) बृउ ४।४।३, शब्रा १४।७।२।४ त्वाऽन्यमाक्रममाक्रम्याऽऽत्मा (त्वाऽऽत्मा) यमात्मेदꣳ (यं पुरुष इदꣳ), ब्रशांकर ३।१।१, श्रीकर ४।२।१२, वल्लभ ४।१।२

(१) बृउ ४।४।४, शब्रा १४।७।२।५ यमात्मेदꣳ (य पुरुष इदꣳ) कल्याणतरꣳ रूपं कुरुते (रूपं तनुते) दैवं वा भूतानाम् (ब्राह्मं वा प्राजापत्यं वा दैवं वा मानुषं वान्येभ्यो वा भूतेभ्यः), ३।१।१, रंग मपादाय (मुपादाय) तनुते (कुरुते), रामानुज ४।२।१२, मध्व. मपादाय (मुपादाय), श्रीकर.

**कल्याणतरꣳ रूपं कुरुते । पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानाम् ॥**

( १ ) तत्र देहान्तरारम्भे नित्योपात्तमेव उपादान उपमृद्य उपमृद्य देहान्तरमारभते, आहोस्वित् अपूर्वमेव पुन पुनरादत्ते — इत्यत्र उच्यते दृष्टान्तः — तत् तत्र एतस्मिन्नर्थे, यथा पेशस्कारी — पेश सुवर्णं तत् करोतीति पेशस्कारी सुवर्णकार., पेशस. सुवर्णस्य मात्रा, अप आदाय अपच्छिद्य गृहीत्वा, अन्यत् पूर्वस्मात् रचनाविशेषात् नवतर अभिनवतर, कल्याणात् कल्याणतर, रूप तनुते निर्मिनोति । एवमेवायमात्मेत्यादि पूर्ववत् । नित्योपात्तान्येव पृथिव्यादीनि आकाशान्तानि पञ्च भूतानि यानि 'द्वे वाव ब्रह्मणो रूपे' इति चतुर्थे व्याख्यातानि, पेश'स्थानीयानि तान्येव उपमृद्य, उपमृद्य, अन्यदन्यच्च देहान्तर नवतर कल्याणतर रूप सस्थानविशेष, देहान्तरमित्यर्थः, कुरुते— पित्र्य वा पितृभ्यो हित, पितृलोकोपभोगयोग्यमित्यर्थ, गान्धर्वं गन्धर्वाणामुपभोगयोग्य, तथा देवाना दैव, प्रजापतेः प्राजापत्य, ब्रह्मण इद ब्राह्म वा, यथाकर्म यथाश्रुत, अन्येषां वा भूताना सबन्धि—शरीरान्तर कुरुते इत्यभि सबध्यते । शकर

( २ ) 'स्वर्णकारो यथा स्वर्णमलमग्नौ निहत्य च । शुद्धेन तेन चात्मेष्ट कुरुते रूपमञ्जसा । एव स भगवान्विष्णुर्जीवस्वर्णस्य यन्मलम् । अविद्याकामकर्माद्यमात्माऽग्नौ नाश्य सर्वकृत् । स्वेच्छया कुरुते रूप यद्योग्य तस्य मुक्तिगम् । पितृजीवस्य पित्र्य स गान्धर्वं तस्य चैव हि । दैव तु देवजीवस्य प्राजापत्य प्रजापते. । ब्रह्मणो ब्राह्ममेवेति नित्यानन्दस्वरूपकम् । न योग्यतां विना क्वापि पूर्वप्रज्ञाश्रुते. क्वचित् । यदा मुक्तो भवेद्ब्रह्मा तदा ब्रह्मा स मुख्यतः । एव प्रजापतिश्चैव तथैवान्येऽपि सर्वश. । यथा हि स्वर्णरूप्याद्य मलहानौ हि तद्भवेत् । पूर्वे तु योग्यतामात्र द्विजत्व बालके यथा ॥ ' इत्यादि च । न ह्यमुक्तानां कल्याणपरत्वम् । न च मृगादीना कल्याणत्वमपि । मरणमात्र चेदत्रोच्यते तदा कल्याणतरमिति विशेषण व्यर्थं स्यात् । पूर्वोक्तश्रोत्रियावृजिनाकामहतदेवादीनां चात्रोक्ति. । पूर्वाननुभूतत्वान्नवतर च भवति । ' अल्पतेजस्तथैवाल्प जीवरूप हि सस्तौ । तथैव सुमहत्तेजः करोति भगवान्महत् । अतो नवतर चैतद्ब्रह्मादीना करोत्यज ' अन्येषां वा भूताना मनुष्यादीना नासुरादीना भविष्यति च । 'मय तु मानुष स्वर्णं पीत गान्धर्वमेव च । इन्द्रगोपनिभ नाम्ना जाम्बूनदमिति स्मृतम् । दैव चानीकर नाम प्रोद्यदादित्यसनिभम् । तैजोविशेष स्वर्णानामेतेषा सर्वदैव च । नाग्न्यादिनाऽपि समता यान्ति तानि कथचन । एव मानुषगन्धर्वपितृदेवाः प्रजापति' । ब्रह्मेति क्रमशो जीवा विशिष्टा उत्तरोत्तरम् । स्वभावेनैव मुक्ताना स्वभावो व्यक्तिमाव्रजेत् ॥ ' इत्यादि च । 'स यत्राणिमान न्येति' 'तस्य ह वैतस्य हृदयस्याग्र प्रद्योतते' 'तेन धीरा अपि यन्ति ब्रह्मविद.' 'स्वर्गं लोकमित ऊर्ध्वो विमुक्ता.' 'तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च' इत्येवमादेश्च मुक्तविषयमेवैतत् । मुक्तविषयत्वेन चैतत्प्रकरण सूचयामास भगवान् 'तदोकोग्रज्वलन तत्प्रकाशितद्वारो विद्यासामर्थ्यात्' इत्यादिना । न चान्या मुक्तिरस्तीत्यत्र किंचिन्मानम् । ' सोऽश्नुते सर्वान्कामान्त्सह ब्रह्मणा विपश्चिता ' 'एतमानन्दमयमात्मानमुपसक्रम्य' 'इमाँल्लोकान्कामान्नीकामरूप्यनुसचरन् ' ' ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्र त्वो गायति शक्वरीषु ' ' पर ज्योतिरुपसपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच ' ' स तत्र पर्येति जक्षन् क्रीडन् रममाणः ' 'स य एववित्' 'एव पश्यन्नेव मन्वान.' 'तस्य सर्वेषु लोकेषु कामचारो भवति ' । ' स एकधा भवति त्रिधा भवति पञ्चधा' सप्तधा पुनश्चैकादश. स्मृतः' । ' न ह्यस्य कर्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते ' । ' यथोदक शुद्धे शुद्धमासिक्त तादृगेव भवति । एव मुनर्विजानत आत्मा भवति गौतम ।' 'तदा विद्वान्पुण्य पापे विधूय निरञ्जन परम साम्यमुपैति' । 'पर भूयः प्रवक्ष्यामि ज्ञानाना ज्ञानमुत्तमम् । यज्ज्ञात्वा मुनय सर्वे परा सिद्धिमितो गताः । इद ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ।' 'न वर्तते यत्र रजस्तमस्तयोः सत्त्व च मिश्र न च काल-

४।२।१२ कल्याणतरꣳ रूप कुरुते ( कल्याणतरꣳ रूप तनुते ) शेष शब्रावत्, विज्ञान २।४।१७, ४।२।६

विक्रम'। न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः । श्यामावदाता. शतपत्रलोचनाः पिशङ्गवस्त्रा. सुरुचः सुपेशसः' इत्यादिश्रुतिस्मृतीतिहासपुराणेषु तेषा निगुर्णमुक्तिविषयत्वेन प्रसिद्धेष्वेव स्थलेषु मुक्त्यनन्तर भोगोक्तेश्च । ' अशरीरक्रियागौणदेहादेस्ते ह्यभावत । चिदानन्दशरीरादे. सदेहाद्या विमोक्षिण. । अनिन्द्रिया अनाहारा अनिष्यन्दा. सुगन्धिन ॥' इत्यादेश्च । मध्व

सर्वमयस्यात्मन ब्रह्मण एव पुण्यपापरूपता कामक्रतुकर्मानुमारेण, आत्मविद अकामस्य तस्यैव ब्रह्मप्राप्ति

**स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमय प्राणमयश्चक्षुर्मय श्रोत्रमय' पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमय काममयोऽकाममय क्रोधमयोऽक्रोधमयो धर्ममयोऽधर्ममय. सर्वमय । तद्यदेतदिदंमयोऽदोमय इति । * यथाकारी यथाचारी तथा भवति । साधुकारी साधुर्भवति । पापकारी पापो भवति । पुण्य पुण्येन कर्मणा भवति पापः पापेन । अथो खल्वाहुः । काममय एवाय पुरुष इति । स यथाकामो भवति तत्क्रतुर्भवति । यत्क्रतुर्भवति तत्कर्म कुरुते । यत्कर्म कुरुते तदभिसंपद्यते ॥**

---

* चरणकरणभेद छाउ ५।१०।७ ( पृ ८६८ ) इत्यत्र व्याख्याने द्रष्टव्यः ।

(१) बृउ ४।४।५, शब्रा १४।७।२।६, ७ मनोमय + ( वाङ्मय ) पृथिवीमय ऽक्रोधमयो ( आकाशमयो वायुमयस्तेजोमय आपोमय पृथिवीमय क्रोधमयोऽक्रोधमयो हर्षमयोऽहर्षमयो ) तद्यदेतदिद ( तद्यदेद ) पापेन + ( इति ) तत्क्रतु ( तथाक्रतु ) यत्क्रतु ( यथाक्रतु ) सपद्यते + ( इति ), **ब्रशाकर** २।३।१७, ३०, ३।१।९, **भास्कर** २।३।३०, ४।२।६; **रामानुज** २।१।३४, ४।२।५, ६ पापेन + ( कर्मणा ), **निंबार्क** ४।२।५, **ब्रमध्व** २।३।३३, ४।३।१५, **श्रीकर** २।१।३४, ४।२।१२, **वल्लभ** २।३।३४, ३।१।९, ३।२।९, ३।४।२५, ४।१।२, १६, **विज्ञान** १।१।२०, ३।१।९, ४।२।६, ४।३।१५ पापो ( पापी ), **बलदेव** १।३।१, ४।२।५

( १ ) ये अस्य बन्धनसज्ञका उपाधिभूता, यैः सयुक्त. तन्मयोऽयमिति विभाव्यते, ते पदार्था पुञ्जीकृत्य इह एकत्र प्रतिनिर्दिश्यन्ते — स. वै अय यः एव ससरति आत्मा — ब्रह्मैव पर एव, य. अशनायाद्यतीतः । विज्ञानमय — विज्ञान बुद्धि, तेन उपलक्ष्यमाण, तन्मय । ' कतम आत्मेति योऽय विज्ञानमयः प्राणेषु' इति हि उक्तम् । विज्ञानमय विज्ञानप्राय., यस्मात् तद्धर्मत्वमस्य विभाव्यते — ' ध्यायतीव लेलायतीव ' इति । तथा मनोमय मन सनिकर्षान्मनोमय. । तथा प्राणमयः, प्राण पञ्चवृत्ति तन्मयः, येन चेतन. चलतीव लक्ष्यते । तथा चक्षुर्मय. रूपदर्शनकाले । एव श्रोत्रमय शब्दश्रवणकाले । एवं तस्य तस्य इन्द्रियस्य व्यापारोद्भवे तत्तन्मयो भवति ।

एव बुद्धिप्राणद्वारेण चक्षुरादिकरणमय. सन् शरीरारम्भकपृथिव्यादिभूतमयो भवति । तत्र पार्थिवशरीरारम्भे पृथिवीमयो भवति । तथा वरुणादिलोकेषु आप्यशरीरारम्भे आपोमयो भवति । तथा वायव्यशरीरारम्भे वायुमयो भवति । तथा आकाशशरीरारम्भे आकाशमयो भवति । एव एतानि तैजसानि देवशरीराणि । तेष्वारभ्यमाणेषु तन्मय. तेजोमयो भवति । अतो व्यतिरिक्तानि पश्वादिशरीराणि नरकप्रेतादिशरीराणि च अतेजोमयानि । तान्यपेक्ष्य आह — अतेजोमय इति । एव कार्यकरणसघातमयः सन् आत्मा प्राप्तव्य वस्त्वन्तर पश्यन् — इद मया प्राप्त, अदो मया प्राप्तव्यम् — इत्येव विपरीतप्रत्ययः तदभिलाष. काममयो भवति । तस्मिन्कामे दोष पश्यत तद्विषयाभिलाषप्रशमे चित्त प्रसन्न अकलुष शान्त भवति, तन्मयः अकाममय. । एव तस्मिन्विहते कामे केनचित्, स कामः क्रोधत्वेन परिणमते, तेन तन्मयो भवन् क्रोधमय । स क्रोध. केनचिदुपायेन निवर्तितो यदा भवति, तदा प्रसन्न अनाकुल चित्त सत् अक्रोध उच्यते, तेन तन्मयः । एव कामक्रोधाभ्या अकामक्रोधाभ्या च तन्मयो भूत्वा, धर्ममय. अधर्ममयश्च भवति । न हि कामक्रोधादिभिर्विना धर्मादिप्रवृत्तिरुपपद्यते, ' यद्यद्धि कुरुते कर्म तत्तत्कामस्य चेष्टितम् ' इति स्मरणात् ।

धर्ममय. अधर्ममयश्च भूत्वा सर्वमयो भवति— समस्त धर्माधर्मयो. कार्यं, यावत्किंचिद्व्याकृत, तत्सर्वं धर्माधर्मयो फल, तत् प्रतिपद्यमानः तन्मयो भवति । किं बहुना, तदेतत् सिद्धमस्य—यत् अय इदमय. गृह्यमाणविषयादिमय., तस्मात् अय अदोमयः। अद इति परोक्ष कार्येण गृह्यमाणेन निर्दिश्यते । अनन्ता हि अन्त.करणे भावनाविशेषा.। नैव ते विशेषतो निर्देष्टु शक्यन्ते। तस्मिंस्तस्मिन् क्षणे कार्यतोऽवगम्यन्ते—इदमस्य हृदि वर्तत, अदः अस्येति। तेन गृह्यमाणकार्येण इदमयतया निर्दिश्यते परोक्ष. अन्त स्थो व्यवहारः—अयमिदानीमदोमय इति । सक्षेपतस्तु यथा कर्तुं यथा वा चरितु शीलमस्य सोऽय यथाकारी यथाचारी, स तथा भवति। करण नाम नियता क्रिया विधिप्रतिषेधादिगम्या, चरण नाम अनियतमिति विशेष. । साधुकारी साधुर्भवतीति यथाकारीत्यस्य विशेषणम्। पापकारी पापो भवतीति च यथाचारीत्यस्य।

ताच्छील्यप्रत्ययोपादानात् अत्यन्ततात्पर्यतैव तन्मयत्व, न तु तत्कर्ममात्रेण — इत्याशङ्क्याह—पुण्यः पुण्येन कर्मणा भवति पापः पापेनेति । पुण्यपापकर्ममात्रेणैव तन्मयता स्यात्, न तु ताच्छील्यमपेक्षते । ताच्छील्ये तु तन्मयत्वातिशय इत्यय विशेष. । तत्र कामक्रोधादिपूर्वकपुण्यापुण्यकारिता सर्वमयत्वे हेतु , ससारस्य कारण, देहात् देहान्तरसचारस्य च । एतत्प्रयुक्तो हि अन्यदन्यद्देहान्तरमुपादत्ते । तस्मात् पण्य.पुण्ये ससारस्य कारणम्। एतद्विषयौ हि विधिप्रतिषेधौ । अत्र शास्त्रस्य साफल्यमिति ।

अथो अपि अन्ये बन्धमोक्षकुशला खलु आहुः—सत्य कामादिपूर्वके पुण्यापुण्ये शरीरग्रहणकारणम्। तथापि कामप्रयुक्तो हि पुरुष. पुण्यापुण्ये कर्मणी उपचिनोति । कामप्रहाणे तु कर्म विद्यमानमपि पुण्यापुण्योपचयकर न भवति । उपचिते अपि पुण्यापुण्ये कर्मणी कामशून्ये फलारम्भके न भवत. । तस्मात् काम एव ससारस्य मूलम्। तथा चोक्तमाथर्वणे— 'कामान्यः कामयते मन्यमान स कामभिर्जायते तत्र तत्र ' इति । तस्मात् काममय एवाय पुरुष , यत् अन्यमयत्व तत् अकारणं विद्यमानमपि—इत्यत. अवधारयति 'काममय एव' इति । यस्मात् स च काममयः सन् यादृशेन कामेन यथाकामो भवति, तत्क्रतुर्भवति—स काम ईषदभिलाषमात्रेणाभिव्यक्तो यस्मिन्विषये भवति, सः अविहन्यमान स्फुटीभवन् क्रतुत्वमापद्यते। क्रतुर्नाम अध्यवसाय. निश्चय., यदनन्तरा क्रिया प्रवर्तते । यत्क्रतुर्भवति—यादृक्कामकार्येण क्रतुना यथारूपः क्रतु. अस्य सोऽय यत्क्रतु भवति—तत्कर्म कुरुते—यद्विषय· क्रतुः, तत्फलनिर्वृत्तये यत् योग्य कर्म, तत् कुरुते निर्वर्तयति । यत् कर्म कुरुते, तत् अभिसपद्यते—तदीय फलमभिसंपद्यते । तस्मात् सर्वमयत्वे अस्य ससारित्वे च काम एव हेतुरिति । शकर.

( २ ) ब्रह्मैव सन्नपहतपाप्मत्वादिब्रह्मरूपयुक्तोऽपि सन्मनोमयः । उपकरणोपकरणिलक्षणसबन्धेन मनःप्रचुरो मनउपकरणक इति यावत् । एव प्राणमय इत्यादावपि द्रष्टव्यम् । अतेजोमयस्तेजोव्यतिरिक्तमहदहकारादिमय. । चतुर्विंशतितत्त्वमयत्वाच्छरीरस्येति द्रष्टव्यम् । अकाममय. कामव्यतिरिक्तसकल्पश्रद्धामय इत्यर्थः । अक्रोधमय. । प्रीतिमय. । तद्यदेतदिति ब्रह्मापेक्षया नपुसकलिङ्गनिर्देशः । इदमयोऽदोमय. । एतल्लोकपरलोकमय. ।

यथा कर्तुं यथा चर्तुं ( चरितु ) शीलमस्य सोऽयं यथाकारी यथाचारी, अग्निहोत्रादिक तु कर्म, तद्योग्यतापादक सध्यावन्दनादिक त्वाचरणम्। एतत् 'चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनि.' ( ब्र सू. ३।१।९ ) इति सूत्रभाष्ये स्पष्टम्। तथा भवति। तत्फलयुक्तो भवतीत्यर्थः। सत्कर्मकारी ब्राह्मणादी रमणीयशरीरयुक्तो भवति पापकारी च चण्डालादि कुत्सितशरीरयुक्तो भवति ।

* रग.

( ३ ) देवादीना क्षेत्रज्ञाना देवादिशरीरयोग तत्तत्कर्मसापेक्ष दर्शयन्ति हि श्रुतिस्मृतय ।

रामानुज २।१।३४

( ४ ) मयट् प्राचुर्ये स्वरूपे च । 'आत्मायमातत्वाद्धि ब्रह्म पूर्णगुणत्वतः । दूरस्थत्वात्स इत्युक्तः समीपस्थो ह्यय स्मृतः । पूर्णज्ञानस्वरूपत्वाद्विज्ञानमय ईर्यते । सर्वमन्तृस्वरूपत्वात्स एवोक्तो मनोमय. । बल-

* शेष शकरवत् वाक्यव्याख्यानम् ।

पूर्णस्वरूपत्वात्स प्राणमय ईरित. । सर्वद्रष्टृस्वरूपत्वाच्च क्षुर्मय इतीर्यते । सर्वश्रोतृस्वरूपत्वात्स श्रोत्रमय ईरित । सर्वाधारात्सुगन्धत्वात्पृथिवीमय उच्यते । सर्वतृप्तिकरत्वाच्च विष्णुरापोमयः स्मृतः । सर्वकर्तृस्वरूपत्वाच्छ्रुतो वायुमयो हरि. । अवकाशप्रदातृत्वादाकाशमय ईर्यते । पूर्णतेजः-स्वरूपत्वात्तेजोमय उदाहृत । सृष्ट्यादीच्छास्वरूपत्वा-त्स्मृत. काममयो हरि. । सर्वदुष्टप्रतीपत्वात्स हि क्रोध-मयो मतः । सुखादिधर्मरूपत्वाज्ज्ञेयो धर्ममयः प्रभु. । अप्राकृतस्वरूपत्वादनेतन्मय एव च । अपार्थिवो हरे र्गन्धो न तृप्तिश्चाप्यबात्मिका । नाग्नेय तस्य तेजोऽपि न च वायुर्बल हरे. । श्रोत्राद्या नास्य चाकाशो मनस्तत्त्व न तन्मनः । बुद्धितत्त्व न तद्बुद्धिर्नाहमस्याहमच्युते । महदात्मक न तच्चित्त प्रकृतिर्नास्य चेतना । प्रकृत्यादि-गुणा यस्मात्तद्गुणप्रतिबिम्बका. । अत सर्वमयो विष्णु. सर्वाद्यत्वादतन्मय. । चिदानन्दात्मकास्तस्य गुणा. सर्व-गुणात्मका. । सर्वदाऽत· सर्ववैलक्षण्यमेषा प्रकीर्तितम् । क्रोधः क्षमात्मको यस्य चिदानन्दात्मकस्तथा । अन्यक्रो-धसम क्रोधस्तस्य विष्णो कथ भवेत् । एव सर्वगुणा-स्तस्य सर्वेभ्योऽपि विलक्षणाः । पूर्वप्रज्ञानुसारेण विमुक्त स्तमुपेष्यति । अनादिकालसबन्धा या प्रज्ञा विष्णुस श्रया । पूर्वप्रज्ञेति सा प्रोक्ता ब्रह्मादेस्तारतम्यत. ॥' इति च महामीमासायाम् । 'वर्तमान यतो विष्णोर्वशे तस्मादिदमय. । अतीतानागत यस्मात्तद्वशेऽतो ह्यदो-मयः । प्राधान्ये च मयट् प्रोक्त. स्वरूपे च यतो भवेत् । इदरूपोऽप्यदोरूपस्ततो नित्यत्वतो हरिः । अस्य तस्य प्रधानश्च नित्यपूर्णबलत्वतः ॥' इति च । 'यथा पूर्वे तथेदानीमिति विष्णुस्तदुच्यते । यथा बाह्ये तथैवान्ते ततो यदिति चाच्यते । यथेदानीं तथा नित्य यस्मादेष भविष्यति । अत एतदिति प्रोक्तो वासुदेवो जगत्पति । स यथा करोति पुरुष तथैवाय भविष्यति । साधुर्भवति साधु चेत्करोति पुरुषोत्तमः । पापो भवति पाप चेत्स करोति जनार्दन. । तत्प्रेरितेन पुण्येन पुण्यो भवति मानवः । तत्प्रेरितेन पापेन तथा पापः पुमान् भवेत् । आहुश्च तत्कामाधीन जीवमेन सदैव हि । तत्कामादस्य कामः स्याद्यथाकामस्तथा भवेत् । कामा नुसारिणी निष्ठा कर्मनिष्ठाऽनुसारत. । फल कर्मानुसारेण विष्णो. काममयस्तत । जीवोऽयं सर्वदैव स्यान्नान्यथा तु कथचन ॥' इत्यादि च जीवेश्वराभेदाङ्गीकारे 'सुषु-प्त्युत्क्रान्त्योर्भेदेन' इति सूत्रविरोध. । 'प्राज्ञेनात्मनाऽन्वा-रूढ.' 'प्राज्ञेनात्मना सपरिष्वक्त' इत्यादिश्रुतिविरोधश्च । न च व्यावहारिकभेदो नाम कश्चिदस्तीत्यत्र किंचिन्मानम् । भ्रान्तिभेदत्वे श्रुतिसिद्धत्वमेव न स्यात् । न हि निर्दोष-श्रुतिवाक्यसिद्ध भ्रान्तमिति युक्तम् । उन्मत्तवाक्यवत्स-र्ववेदस्याप्रामाण्यप्रसक्ते. । न च स्वविषयभ्रमत्वादन्यद-प्रामाण्य नाम किंचित् । तन्मते ह्युन्मत्तवाक्यविषयस्या प्यनिर्वाच्यत्वमेव । 'सत्य सो अस्य महिमा गृणेशव' । 'त एते सत्या कामा' इत्यादिश्रुतिभिर्भगवद्गुणानां सत्यत्वमेव ज्ञायते । 'सत्यमेनमनुविश्वे मदन्ति रातिं देवस्य गृणतो मघोन.' इति सर्वजीवानां भगवदनुजीवन च सत्यमित्येवोच्यते । तदा कथ जीवेशभेदस्यासत्यता । न च सर्वविध्यर्थक्रियासिद्धस्य कुत्रचिद्बाधो दृष्टः । 'न हास्य कर्म क्षीयते' 'अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते' इति मुक्त्यनन्तरमपि तदधीनत्वप्रतीतेश्च न भेदस्यासत्यता । न हि ससारावस्थायामक्षीणकर्मता भवति । न च मुख्यार्थं परित्यज्यामुख्यो युक्त. । अत· सत्य एव भेद. । स भगवान् यथाकारी यथा कारयति यथाचारी यथा चारयति तथा भवति । स भगवान् यथाकामो भवति तथाकामो जीवो भवति । इत्थ कामोऽस्य भूयादिति भगवदिच्छावशादस्य कामो भव-तीत्यर्थ । क्रतुरितीत्थकरिष्याम्येवेति निश्चयरूप कामः । स भगवदिच्छया हि भवति । 'कामेन मे काम आगात्' इति च श्रुति. ।

मध्व.

**तदेष श्लोको भवति । तदेव सक्त सह कर्म-णैति लिङ्ग मनो यत्र निषक्तमस्य । प्राप्यान्तं**

(१) बृउ ४।४।६, शब्रा १४।७।२।८ सक्त सह (सक्तसह) आप्तकाम आत्मकामो न तस्य (आत्मकाम आप्तकामो भवति न तस्मात्) उत्क्रामन्ति + (अत्रैव समवनीयन्ते), ब्रशाकर २।३।१९, ३।१।८, ३।२।२६, ३।४।११, ४।१।१९, ४।२।७ ४।२।१२ आत्मकामो + (भवति) न तस्य (न तस्मात्) इत्यपि पाठ·,

**कर्मणस्तस्य यत्किंचेह करोत्ययम्। तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मणे। इति नु कामयमान। अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति। ब्रह्मैव सन्ब्रह्माप्येति * ॥**

(१) तत् तस्मिन्नर्थे एष श्लोक मन्त्रोऽपि भवति। तदेव एति तदेव गच्छति, सक्त आसक्त. तत्र उद्भूताभिलाष. सन्नित्यर्थः। कथमेति? सह कर्मणा—यत् कर्म फलासक्तः सन् अकरोत्, तेन कर्मणा सहैव तत् एति तत्फलमेति। किं तत्? लिङ्ग मन — मन प्रधानत्वाल्लिङ्गस्य मनो लिङ्गमित्युच्यते। अथवा लिङ्ग्यते अवगम्यते — अवगच्छति — येन, तत् लिङ्ग तत् मन. — यत्र यस्मिन् निषक्त निश्चयेन सक्त उद्भूताभिलाष अस्य ससारिण.। तदभिलाषो हि तत्कर्म कृतवान्। तस्मात्तन्मनोऽभिषङ्गवशादेव अस्य तेन कर्मणा तत्फलप्राप्ति.। तेन एतत्सिद्ध भवति, कामो मूल ससारस्येति। अत· उच्छिन्नकामस्य विद्यमानान्यपि कर्माणि ब्रह्मविद· वन्ध्यप्रसवानि भवन्ति, 'पर्याप्तकामस्य कृतात्मनश्च इहैव सर्वे प्रविलीयन्ति कामा.' इति श्रुतेः।

किंच प्राप्यान्त कर्मण. — प्राप्य भुक्त्वा अन्त अवसान यावत्, कर्मण. फलपरिसमाप्तिं कृत्वेत्यर्थ.। कस्य कर्मणोऽन्त प्राप्येत्युच्यते — तस्य, यत्किंच कर्म इह अस्मिन् लोके करोति निर्वर्तयति अय, तस्य कर्मण. फल भुक्त्वा अन्त प्राप्य, तस्मात् लोकात् पुनः ऐति आगच्छति, अस्मै लोकाय कर्मणे — अय हि लोक· कर्मप्रधानः, तेनाऽऽह 'कर्मणे' इति — पुन· कर्मकरणाय। पुनः कर्म कृत्वा फलासङ्गवशात् पुनरमु लोक याति — इत्येवम्। इति नु एव नु, कामयमान ससरति। यस्मात् कामयमान एव एव ससरति, अथ तस्मात्, अकामयमानो न क्वचित्ससरति।

फलासक्तस्य हि गतिरुक्ता। अकामस्य हि क्रियानुपपत्तेः अकामयमानो मुच्यत एव। कथ पुन. अकामयमानो भवति? य· अकामो भवति, असौ अकामयमान। कथमकामतेत्युच्यते — यो निष्काम. यस्मान्निर्गता· कामा· सोऽय निष्काम·। कथ कामा निर्गच्छन्ति? य आप्तकाम भवति आप्ता. कामा येन स आप्तकाम। कथमाप्यन्ते कामा.? आत्मकामत्वेन, यस्य आत्मैव नान्य· कामयितव्यो वस्त्वन्तरभूतः पदार्थो भवति। आत्मैव अनन्तरोऽबाह्य. कृत्स्न· प्रज्ञानघन एकरसः नोर्ध्वं न तिर्यक् नाध· आत्मनोऽन्यत् कामयितव्य वस्त्वन्तरम् — यस्य सर्वमात्मैवाभूत्तत्केन क पश्येत्, शृणुयात्, मन्वीत, विजानीयाद्वा—एव विजानन्क कामयेत। ज्ञायमानो ह्यन्यत्वेन पदार्थः कामयितव्यो भवति। न चासावन्य. ब्रह्मविद आप्तकामस्यास्ति। य एवात्मकामतया आप्तकामः, स निष्काम अकामः अकामयमानश्चेति मुच्यते। न हि यस्य आत्मैव सर्वं भवति, तस्य अनात्मा कामयितव्योऽस्ति। अनात्मा चान्यः कामयितव्य., सर्वं च आत्मैवाभूदिति विप्रतिषिद्धम्। सर्वात्मदर्शिनः कामयितव्याभावात्कर्मानुपपत्तिः।

ये तु प्रत्यवायपरिहारार्थं कर्म कल्पयन्ति ब्रह्मविदोऽपि, तेषां न आत्मैव सर्वं भवति, प्रत्यवायस्य जिहा-

---

* एतद्विषयक प्रपञ्च छाउ ६।८।६ (पृ ९१०) इत्यत्र द्रष्टव्यो व्याख्यानान्तरेषु।

४।२।१३ (न तस्मात्प्राणा उत्क्रामन्ति अत्रैव समवनीयन्ते) इति पाठ, ४।३।१४, ४।४।१६, **भास्कर** १।४।२१ ३।१।८ पुनरैत्यस्मै (पुनरेत्यसौ), ३।३।३९, ३।४।५० ४।२।१२ (न तस्मात्) इत्यपि पाठ, **रामानुज** २।३।२०, ३।१।८, ४।१।१७, ४।२।१२ पुनरैत्य (पुनरेत्य) (न तस्मात्) इत्यपि पाठ, **निंबार्क** २।३।१९, ४।२।१२ रामानुजवत्, **मध्व** पुनरैत्य (पुनरेत्य), **अमध्व** १।१।१७, **श्रीकठ** २।३।२०, ४।२।१२ पुनरैत्य (पुनरेत्य) इति नु (इति तु) (न तस्मात्) इत्यपि पाठः, **श्रीकर** २।२।४०, २।३।१८, ३।१।४, ८, ३।३।३३ ४१, ३।४।५२, ४।२।४, १२, ४।३।६, ४।४।२१ पुनरैत्य (पुनरेत्य) (न तस्मात्) इत्यपि पाठ, **वल्लभ** १।१।२९, २।३।१९, ३२, ३।४।२५, ४।१।२, ४।२।१, ४।३।१४, १७, ४।४।११ पुनरैत्य (पुनरेत्य) इति नु (इति तु) न तस्य प्राणा उत्क्रामन्ति (नास्य प्राणा उत्क्रामन्तीहैव समवली(नी)यन्ते) (न तस्मात् अत्रैव समवलीयन्ते) इत्यपि पाठ, **विज्ञान** १।३।४२, २।३।१९, ३।३।२९, ४२, ५०, ४।२।१४, ४।३।१५, १६, ४।४।२२, **बलदेव** १।१।१७, २।३।१८, ४।२।१२, १३

तव्यस्य आत्मनोऽन्यस्य अभिप्रेतत्वात् । येन च शनायाद्यतीत. नित्य प्रत्यवायासम्बद्ध विदित आत्मा, वय ब्रह्मविद ब्रूम । नित्यमेव अशनायाद्यतीतमात्मान पश्यति । यस्माच्च जिहासितव्यमन्य उपादेय वा न पश्यति, तस्य कर्म न शक्यत एव सम्बन्धुम् । तु अब्रह्मवित्, तस्य भवत्येव प्रत्यवायपरिहारार्थं नैति न विरोध । अतः कामाभावात् अकामयमानो जायते, मुच्यत एव ।

तस्य एवमकामयमानस्य कर्माभावे गमनकारणाभावात् प्राणा वागादय., नोत्क्रामन्ति नोर्ध्वं क्रामन्ति । स च विद्वान् आप्तकाम आत्मकाम इहैव ब्रह्मभूत । सर्वात्मनो हि ब्रह्मण दृष्टान्तत्वेन प्रदर्शित एतद्रूपम् — 'तद्वा अस्यैतदाप्तकाममकाम रूप' इति । तस्य हि दार्ष्टान्तिकभूतोऽयमर्थ उपसंह्रियते — अथाकामयमान इत्यादिना । स यमेवंभूतो मुच्यत इत्युच्यते — यो हि सुषुप्तावस्थामिव निर्विशेषमद्वैत अलुप्तचिद्रूपज्योति स्वभावमात्मान पश्यति, तस्यैव अकामयमानस्य कर्माभावे गमनकारणाभावात् प्राणा वागादयो नोत्क्रामन्ति । तु विद्वान् स. इहैव ब्रह्म, यद्यपि देहवानिव लक्ष्यते । ब्रह्मैव सन् ब्रह्म अप्येति । यस्मात् न हि तस्य ब्रह्मत्वपरिच्छेदहेतव कामा सन्ति, तस्मात् इहैव ब्रह्मैव सन् ब्रह्म अप्येति न शरीरपातोत्तरकालम् । न विदुषो मृतस्य भावान्तरापत्ति. जीवतोऽन्य. भाव, अन्तरप्रतिसधानाभावमात्रेणैव तु ब्रह्माप्येतीत्युच्यते । भावान्तरापत्तौ हि मोक्षस्य सर्वोपनिषद्विवक्षितोऽर्थ आत्मैकत्वाख्य स बाधितो भवेत् । कर्महेतुकश्च मोक्ष. प्राप्नोति, न ज्ञाननिमित्त इति । स चानिष्ट । अनित्यत्व च मोक्षस्य प्राप्नोति । न हि क्रियानिर्वृत्त अर्थ. नित्यो दृष्ट । नित्यश्च मोक्षोऽभ्युपगम्यते, 'एष नित्यो महिमा' इति मन्त्रवर्णात् ।

न च स्वाभाविकात् स्वभावात् अन्यत् नित्य कल्पयितु शक्यम् । स्वाभाविकश्चेत् अग्न्युष्णवत् आत्मनः भाव, स न शक्यते पुरुषव्यापारानुभावीति वक्तुम् । न हि अग्नेरौष्ण्य प्रकाशो वा अग्निव्यापारानन्तरानुभावी । अग्निव्यापारानुभावी स्वाभाविकश्चेति विप्रतिषिद्धम् । ज्वलनव्यापारानुभावित्व उष्णप्रकाशयोरिति चेत्, न, अन्योपलब्धिव्यवधानापगमाभिव्यक्त्यपेक्षत्वात् । ज्वलनादिपूर्वक अग्नि उष्णप्रकाशगुणाभ्यामभिव्यज्यते, तत् न अग्न्यपेक्षया । किं तर्हि अन्यदृष्टे अग्नेरौष्ण्यप्रकाशौ धर्मौ व्यवहितौ, कस्यचित् दृष्ट्या तु असम्बध्यमानौ, ज्वलनापेक्षया व्यवधानापगमे दृष्टेरभिव्यज्येते । तदपेक्षया भ्रान्तिरुपजायते — ज्वलनपूर्वकौ एतौ उष्णप्रकाशौ धर्मौ जाताविति । यदि उष्णप्रकाशयोरपि स्वाभाविकत्व न स्यात् — य स्वाभाविकोऽग्नेर्धर्म, तमुदाहरिष्याम । न च स्वाभाविको धर्म एव नास्ति पदार्थानामिति शक्य वक्तुम् । न च निगडभङ्ग इव अभावमात्रो मोक्ष बन्धननिवृत्तिरुपपद्यते, परमात्मैकत्वाभ्युपगमात्, 'एकमेवाद्वितीयम्' इति श्रुते । न चान्यो बद्धोऽस्ति, यस्य निगडनिवृत्तिवत् बन्धननिवृत्ति मोक्ष स्यात् । परमात्मव्यतिरेकेण अन्यस्याभाव विस्तरेण अवादिष्म । तस्मात् अविद्यानिवृत्तिमात्रे मोक्षव्यवहार इति च अवोचाम, यथा रज्ज्वादौ सर्पाद्यज्ञाननिवृत्तौ सर्पादिनिवृत्ति ।

शाङ्कर.

( २ ) 'अतोऽनन्तेन तथा हि लिङ्गम्' — अतश्च स्वाभाविकत्वादभेदस्याविद्याकृतत्वाच्च भेदस्य विद्ययाऽविद्या विधूय जीवः परेणानन्तेन प्राज्ञेनाऽऽत्मनैकतां गच्छति । तथा हि लिङ्गम् — 'ब्रह्मैव सन्ब्रह्माप्येति' इत्यादि । ब्र॰ ३।२।२६

'भोगेन त्वितरे क्षपयित्वा सपद्यते' — अनारब्धकार्ययो. पुण्यपापयोर्विद्यासामर्थ्यात्क्षय उक्त. । इतरे त्वारब्धकार्ये पुण्यपापे उपभोगेन क्षपयित्वा ब्रह्म सपद्यते 'तस्य तावदेव चिर यावन्न विमोक्ष्येऽथ सपत्स्ये' ( छान्द. ६।१४।२ ) इति 'ब्रह्मैव सन्ब्रह्माप्येति' इति चैवमादिश्रुतिभ्य. । ४।१।१९

'प्रतिषेधादिति चेन्न शारीरात्' — 'अमृतत्व चानुपोष्य' इत्यतो विशेषणादात्यन्तिकेऽमृतत्वे गत्युत्क्रान्त्योरभावोऽभ्युपगत. । तत्रापि केनचित्कारणेनोत्क्रान्तिमाशङ्क्य प्रतिषेधति 'अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो भवति न तस्य प्राणा

. शेष वृउ ४।४।२ ( पृ १२२५ ) इत्यत्र द्रष्टव्यम् ।

उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति' इत्यत. परविद्याविषयात्प्रतिषेधान्न परब्रह्मविदो देहात्प्राणानामुत्क्रान्तिरस्तीति चेत् । नेत्युच्यते । यत. शारीरादात्मन एष उत्क्रान्तिप्रतिषेध. प्राणानां न शरीरात् । कथमवगम्यते ' न तस्मात्प्राणा उत्क्रामन्ति ' इति शाखान्तरे पञ्चमीप्रयोगात् । सबन्धसामान्यविषया हि षष्ठी शाखान्तरगतया पञ्चम्या सबन्धविशेषे व्यवस्थाप्यते । तस्मादिति च प्राधान्यादभ्युदयनि.श्रेयसाधिकृतो देही सबध्यते न देह. । न तस्मादुच्चिक्रमिषोर्जीवात्प्राणा अपक्रामन्ति सहैव तेन भवन्तीत्यर्थ. ।

४।२।१२

'स्पष्टो ह्येकेषाम् '— सप्राणस्य च प्रवसतो भवत्युत्क्रान्तिर्देहादिति । एव प्राप्ते प्रत्युच्यते — नैतदस्ति यदुक्त परब्रह्मविदोऽपि देहादस्त्युत्क्रान्तिरुत्क्रान्तिप्रतिषेधस्य देह्यपादानत्वादिति । यतो देहापादान एवोत्क्रान्तिप्रतिषेध एकेषां समाम्नातॄणा स्पष्ट उपलभ्यते । तथा ह्यार्तभागप्रश्ने 'यत्राय पुरुषो म्रियत उदस्मात्प्राणा उत्क्रामन्त्याहो नेति' ( बृउ ३।२।११ ) इत्यत्र 'नेति होवाच याज्ञवल्क्य.' ( बृउ ३।२।११ ) इत्यनुत्क्रान्ति पक्ष परिगृह्य न तर्ह्ययमनुत्क्रान्तेषु प्राणेषु मृत इत्यस्या माशङ्काया ' अत्रैव समवनीयन्ते ' इति प्रविलयं प्राणाना प्रतिज्ञाय तत्सिद्धये ' स उच्छ्वयत्याध्मायत्याध्मातो मृत॰ शेते' ( बृउ ३।२।११ ) इति सशब्दपरामृष्टस्य प्रकृतस्योत्क्रान्त्यवधेरुच्छ्वयनादीनि समामनन्ति । देहस्य चैतानि स्युर्न देहिनः । तत्सामान्यात् ' न तस्मात्प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते' इत्यत्राप्यभेदोपचारेण देहा पादानस्यैवोत्क्रमणस्य प्रतिषेधः । यद्यपि प्राधान्य देहिन इति व्याख्येय येषां पञ्चमीपाठः । येषां तु षष्ठीपाठस्तेषा विद्वत्सबन्धिन्युत्क्रान्ति. प्रतिषिध्यत इति प्राप्तोत्क्रान्ति प्रतिषेधार्थत्वादस्य वाक्यस्य देहापादानैव सा प्रतिषिद्धा भवति देहादुत्क्रान्ति प्राप्ता न देहिन । अपि च 'चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्त प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्त सर्वे प्राणा अनूत्क्रामन्ति ' ( बृउ ४।४।२ ) इत्येवमविद्वद्विषय सप्रपञ्चमुत्क्रमण ससारगमन च दर्शयित्वा ' इति नु कामयमान. ' इत्युपसहृत्याविद्वत्कथाम् ' अथाकामयमान ' इति व्यापदिश्य विद्वांसं यदि तद्विषयेऽप्युत्क्रान्तिमेव प्रापयेदसमञ्जस एव व्यपदेश. स्यात् । तस्मादविद्वद्विषये प्राप्तयोर्गत्युत्क्रान्त्योर्विद्वद्विषये प्रतिषेध इत्येवमेव व्याख्येय व्यपदेशार्थवत्त्वाय । न च ब्रह्मविदः सर्वगतब्रह्मात्मभूतस्य प्रक्षीणकामकर्मण उत्क्रान्तिर्गतिर्वोपपद्यते निमित्ताभावात् । ' अत्र ब्रह्म समश्नुते ' इति चैवजातीयका॰ श्रुतयो गत्युत्क्रान्त्योरभाव सूचयन्ति ।

४।२।१३

' स्वाप्ययसपत्त्योरन्यतरापेक्षमाविष्कृत हि ' — कथ पुनर्मुक्तस्यानेकशरीरावेशादिलक्षणमैश्वर्यमभ्युपगम्यते यावता ' तत्केन क विजानीयात् ' ( बृउ ४।५।१५ ) ' न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्त यद्विजानीयात् ' ( बृउ ४।३।३० ) ' सलिल एको द्रष्टाऽद्वैतो भवति ' ( बृउ. ४।३।३२ ) इति चैवजातीयका श्रुतिर्विशेषविज्ञान वारयतीत्यत उत्तर पठति—स्वाप्ययेति । स्वाप्यय सुषुप्तम् ' स्वमपीतो भवति तस्मादेन स्वपितीत्याचक्षते ' (छाउ ६।८।१) इति श्रुतेः । सपत्ति. कैवल्य 'ब्रह्मेति सन् ब्रह्माप्येति ' इति श्रुतेः । तयोरन्यतरामवस्थामपेक्ष्यैतद्विशेषसज्ञाभाववचनम् । क्वचित्सुषुप्तावस्थामपेक्ष्योच्यते क्वचित्कैवल्यावस्थाम् । कथमवगम्यते यतस्तत्रैवैतदधिकारवशादाविष्कृतम् ' एतेभ्यो भूतेभ्य समुत्थाय तान्येवानु विनश्यति न प्रेत्य सज्ञाऽस्तीति ' ( बृउ २।४।१४ ) ' यत्र त्वस्य सर्वमात्मैवाभूत् ' ( बृउ २।४।१४ ) ' यत्र सुप्तो न कचन काम कामयते न कचन स्वप्न पश्यति ' ( बृउ. ४।३।१९ ) इत्यादिश्रुतिभ्य॰ । सगुणविद्याविपाकस्थान त्वेतत्स्वर्गादिवदवस्थान्तर यत्रैतदैश्वर्यमुपवर्ण्यते । तस्माददोष ।

ब्रशाकर ४।४।१६

( ३ ) तदेष इति । एतस्मिन्नर्थेऽय श्लोकखण्डो भवतीत्यर्थः । तदेव सक्त इति । सक्तः सन्नेति प्राप्नोति एष श्लोको भवतीत्यन्वयः । ब्रह्मैव सन्नाविर्भूतब्रह्मरूप. सन् परब्रह्मणि लीनो भवति । अपिपूर्वस्यैतेर्लयार्थकत्वात् । लयो नाम तद्विविक्ततया दर्शनाभावः । अपहतपाप्मत्वादिब्राह्मरूपसाधर्म्येण परब्रह्मविविक्ततया दर्शनायोग्यो भवतीत्यर्थः । नन्वेतन्न सभवति ब्राह्मरूपाविर्भावो हि पर ब्रह्मोपसन्नस्यैव भवति ।

'पर ज्योतिरुपसपद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रवणाद्देशविशेषविशिष्टब्रह्मप्राप्तिश्च देशविशेषेऽर्चिरादिगतिमन्तरेण न सभवति तद्गतिर्भूतसूक्ष्मप्राणादियुक्तस्यैव भवति तद्योगश्च कर्माधीनः। विधूतकर्मणश्च देहेन्द्रियप्राणयोगासभवेन देशविशेषविशिष्टब्रह्मप्राप्त्यसभवाद्ब्रह्मरूपाविर्भावाभावेन ब्रह्मैव सन्ब्रह्माप्येतीति नोपपद्यत इत्याशङ्कयाऽऽह—न तस्य प्राणा उत्क्रामन्तीति। तस्मात्प्राणा नोत्क्रामन्तीत्यर्थः। नटस्य शृणोतीतिवदपादान लक्षणसबन्धे षष्ठी। अत एव समानप्रकरणे माध्यन्दिनशाखायां 'न तस्मात्प्राणा उत्क्रामन्ति' इति स्पष्ट पञ्चमी श्रूयते। रग

(४) 'अयोग्यकामराहित्यान्मुक्तो निष्काम उच्यते। अ इत्युक्त परो विष्णुस्तत्कामोऽकाम ईरित.। तथाऽकामयमान. स योग्यकामस्य चापि तु। कादाचित्क समुद्भूतेर्भगवत्कामना विना। कामितस्याखिलस्याप्तेराप्तकामश्च मुक्तिगः। चिदानन्दात्मक रूप कामत्वेन भविष्यति। यतस्तेनैवात्मकाम इति मुक्तोऽभिधीयते। मुक्तस्य न पुनः प्राणा उत्क्रामन्ति कदाचन। जीवोऽपि ब्रह्मशब्दोक्तो जडाद्गुणबृहत्त्वतः। प्राप्नोति परम ब्रह्म प्रलये प्रलये सदा। अन्यदा स्वेच्छया विष्णोः स्वरूपाद्बहिरेष्यति। स्वेच्छयाऽन्तर्बहिश्चैव रमते मुक्त आत्मवान्॥' इत्यादि च। न चामुक्तस्य कथचिदाप्त कामता मुख्यतः। ब्रह्माप्येतीति वचनात्पूर्वब्रह्मशब्दो जीववाच्येव। यद्यज्ञाननाशात्परिज्ञानमात्र तदा स्वस्य ब्रह्मतां विजानातीत्येव स्यात् न तु ब्रह्माप्येतीति। न हि राजपुत्रः पूर्वमात्मानमजानन्पश्चाद्राजपुत्र इति विज्ञाय राजपुत्रमप्येतीत्युच्यते। किंतु राजपुत्रत्वेनात्मान व्यजानादित्येवोच्यते। विस्मृतकण्ठमणिरपि विज्ञात इत्येवोच्यते न तु प्राप्त इति। अत पूर्वब्रह्मशब्दो जीववाच्येव। मध्व

(५) ब्रह्मैव सन्नित्यपि जीव एव ब्रह्मशब्दः। उपपद्यते च विरोधे। ब्रमध्व. १।१।१७

(६) अत्र, अथाकामयमान. कर्ता निरूप्यत इति शेष.। य. पुमान् कर्मकृतावकामस्ततो निष्काम सन्नात्मकामो निरुपधिस्नेहवान् प्रभौ ततो भगवत्प्राकट्याऽऽप्तकामो भवतीत्यर्थ.। अत्र यथाकारीत्यादिना कमकर्तुरवोपक्रमादथाकामयमान इत्यनेनापि तथाभूतः स एवोच्यते। एव सति सत्कर्मणि प्रवृत्त्यर्थं विविधफलानि स्वयमेवोक्त्वा जनान् भ्रामितवानिति स्वोक्तकरणाच्चिरेण दयया निष्काम करोति सकामतयाऽपि क्रियमाणेन वैदिककर्मणाऽनेकजन्मभि सस्कारविशेषप्रचयेनापि तथा। ३।४।२५

अत्र प्राणशब्देन प्राणाः सर्वेन्द्रियाणि चोच्यन्ते। आत्मकामशब्देन भगवद्वाचकात्मपदग्रहणेन भक्तस्य स्नेहातिशयजनितप्रभुदिदृक्षार्त्यतिशयस्तादृशो येन मरणमेव सपद्येत, यदि प्रभुप्राकट्ये क्षणमपि विलम्ब स्यात्। अतो भगवत्प्राकट्येनैवात्मस्थितिरिति ध्वन्यते। भक्तिमार्गे प्राकट्यस्यैव परमफलत्वेन तद्दर्शनेनाऽऽप्तकामो भवति। तत. साक्षादाश्लेषादिकामनाया प्राचीनदेहप्राणादेस्तदयोग्यत्वात्ते तत्रैव लीना भवन्तीति। बहि. प्रकट स्यैवाऽन्तरपि प्राकट्यादुत्क्रमणाभाव उच्यते। आत्मातिरिक्तस्य गतिमुक्त्वा तस्य तामाह—'ब्रह्मैव सन् ब्रह्माप्येति' इत्यनेन। उक्तरीत्या पुरुषोत्तमात्मकतल्लीलोपयोगिदेहेन्द्रियादिसपत्त्या ब्रह्मैव सन्न तु ब्रह्मातिरिक्तदेहादिमानपि तादृश. सन् ब्रह्म बृहत्वात् बृहणत्वात् पुरुषोत्तमस्वरूप प्राप्तो भवतीत्यर्थः। अन्यथा जीवस्य ब्रह्मांशत्वेनानन्दांशाविर्भावेन च ब्रह्मत्वे प्राणादिलयोक्त्या ब्रह्म, तदितरव्यवच्छेदे चानुक्तसिद्धे सति ब्रह्मैव सन्निति वा न वदेत्। अत एवैतदग्रे श्लोकोक्ति —'अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' इति। मृतिर्धर्मवच्छरीर हि मर्त्य, तद्वत्त्वेन जीवोऽपि तथोच्यते। तथा चाय पूर्वं तादृश एव, अथ पुष्टिलीलाप्रवेशानन्तरममृत उक्तरूपशरीरवान् भवति, ततोऽत्र अस्मिन्नेव शरीरे ब्रह्म सम्यगश्नुते। भगवता क्रियमाणलीलारसमनुभवतीत्यर्थः। ४।२।१

यस्तु भगवदनुग्रहेण प्राकृतगुणरहितोऽभूत् स निर्गुणब्रह्मविद्यावानित्युच्यते। तादृशस्यैव मुक्तिप्रकारद्वयमुक्त, सद्योमुक्तिक्रममुक्तिभेदेन। 'न तस्मात् प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येति' इत्यादिश्रुतिस्तु प्रारब्धरहितविषया। निर्गुणब्रह्मविद्यावतोऽपि प्रारब्धभोगस्तु त्वयाऽपि वाच्योऽन्यथा प्रवचनासभवेन ज्ञानमार्ग एवोच्छिद्येत। ४।३।१४

'भाव जैमिनिर्विकल्पाऽऽमननात्' — जैमिनि राचार्यस्तु मुक्तस्य पुंसो देहादेर्भाव सत्ता मन्यते । तत्र हेतुर्विकल्पेत्यादि । 'ब्रह्मविदाप्नोति परम्' इति श्रुत्या ब्रह्मज्ञानस्य तत्प्राप्तिसाधनत्वमुच्यते । नायमात्मेति श्रुत्या तु वरणमात्रप्राप्यत्वम् । सोऽश्नुत इत्यादिना च परप्राप्त्युपन्यास. क्रियते । 'इहैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माऽप्येति' इति च पठ्यते । एव सति मिथो विरोधे तदभावायोक्तव्याख्यानरीत्या ज्ञानमार्गीयस्य ब्रह्मज्ञाने नाक्षरब्रह्मप्राप्ति, पुष्टिमार्गीयभक्तस्य तु सोऽश्नुत इत्यनेनोक्ता परप्राप्तिरिति व्यवस्थितविकल्प एव श्रुत्यभिमत इति ज्ञायते । तेन नायमात्मेति श्रुति परप्राप्तिविषयिणी । इहैवेत्यादिश्रुतिस्तु मर्यादामार्गीयविषयिणीति मन्तव्यम् । एव सति पुष्टिमार्गीयस्य भोगसाधनात्मकविग्रहवत्त्व निष्प्रत्यूह सिद्धयति । तत् केन क पश्येदित्यादिना तु ब्रह्मज्ञानसामयिकीं व्यवस्थामाह, न तु तदुत्तरकालीनपरप्राप्तिसामयिकीमिति किमनुपपन्नम् ।
वल्लभ ४।४।११

(७) 'ब्रह्मैव सन् ब्रह्माप्येति' इत्युक्तवाक्येष्वन्वयस्य भेदतन्त्रत्वाच्च ब्रह्मैव सन्निति च त्यक्तदेहाद्यभिमान इति प्राप्तगौणब्रह्मभाव इति वाऽर्थ., अपौनरुक्त्याय विशेषणपदस्यैव गौणतौचित्यादिति । १।३।४२

'विशेष च दर्शयति'— सकामाकामभेदेनोत्क्रान्त्यनुत्क्रान्तिरूप विशेष च विदुषा दर्शयति श्रुतिर्यथा 'इति तु कामयमानान्' इत्यन्तेन ब्रह्मान्ता गतिमुक्त्वाऽऽह — 'अथाकामयमाना योऽकामो निष्काम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' इति । तथा 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिता । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥' इति च । विज्ञान. ४।३।१६

**तदेष श्लोको भवति । यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिता । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति । तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीत । एवमेवेदं शरीरं शेते । अथायमशरीरोऽमृत प्राणो ब्रह्मैव तेज एव । सोऽहं भगवते सहस्र ददामीति होवाच जनको वैदेह ॥**

(१) स्वप्नबुद्धान्तगमनदृष्टान्तस्य दार्ष्टान्तिक ससारो वर्णित । ससारहेतुश्च विद्याकर्मपूर्वप्रज्ञा वर्णिता । यैश्च उपाधिभूतै कार्यकरणलक्षणभूतै परिवेष्टित ससारित्वमनुभवति, तानि चोक्तानि । तेषा साक्षात्प्रयोजकौ धर्माधर्माविति पूर्वपक्ष कृत्वा, काम एवेत्यवधारितम् । यथा च ब्राह्मणेन अय अर्थ अवधारित:, एव मन्त्रेणापीति बन्ध बन्धकारण च उक्त्वा उपसहृत प्रकरणम् — 'इति नु कामयमान' इति । 'अथाकामयमानः' इत्यारभ्य सुषुप्तदृष्टान्तस्य दार्ष्टान्तिकभूत सर्वात्मभावो मोक्ष. उक्त. । मोक्षकारण च आत्मकामतया यत् आप्तकामत्वमुक्त, तच्च सामर्थ्यात् न आत्मज्ञानमन्तरेण आत्मकामतया आप्तकामत्वमिति — सामर्थ्यात् ब्रह्मविद्यैव मोक्षकारणमित्युक्तम् । अत. यद्यपि कामो मूलमित्युक्त, तथापि मोक्षकारणविपर्ययेण बन्धकारण अविद्या इत्येतदपि उक्तमेव भवति । अत्रापि मोक्षः मोक्षसाधन च ब्राह्मणेनोक्तम् । तस्यैव दृढीकरणाय मन्त्र उदाह्रियते श्लोकशब्दवाच्य —

तत् तस्मिन्नेवार्थे एष श्लोक. मन्त्रो भवति । यदा यस्मिन्काले सर्वे समस्ता कामा· तृष्णाप्रभेदा. प्रमुच्यन्ते, आत्मकामस्य ब्रह्मविद· समूलतो विशीर्यन्ते, ये प्रसिद्धा लोके इहामुत्रार्था. पुत्रवित्तलोकैषणालक्षणाः अस्य प्रसिद्धस्य पुरुषस्य हृदि बुद्धौ श्रिताः आश्रिता·— अथ तदा, मर्त्य. मरणधर्मा सन्, कामवियोगात्समूलत., अमृतो भवति । अर्थात् अनात्मविषयाः कामा अविद्यालक्षणा मृत्यव इत्येतदुक्त भवति । अत मृत्युवियोगे विद्वान् जीवन्नेव अमृतो भवति । अत्र अस्मिन्नेव

(१) बृउ ४।४।७, शब्रा १४।७।२।९, १० श्रिता (स्थिता) अथायमशरीरो तेज एव (अथायमनस्थिकोऽशरीर प्राज्ञ आत्मा ब्रह्मैव लोक एव सम्राडिति होवाच याज्ञवल्क्य), ब्रशकर १।१।४ (पृ ८५), १।३।२, ३।२।७, भास्कर ३।३।३९ (अथायमनस्थिको) इत्यादि. शब्रावत्पाठः, रामानुज ४।२।७, १०, मध्व निर्ल्वयनी (निलयनी), श्रीकर. १।३।२, ३।३।४१ श्रिता (स्थिता), वल्लभ ४।२।१, विज्ञान. १।१।२०, ४।३।१६ श्रीकरवत्, बलदेव ४।२।७, ८, ९, १०

शरीरे वर्तमानः ब्रह्म समश्नुते, ब्रह्मभाव मोक्ष प्रतिपद्यते इत्यर्थः । अतः मोक्षः न देशान्तरगमनादि अपेक्षते । तस्मात् विदुषो नोत्क्रामन्ति प्राणाः, यथावस्थिता एव स्वकारणे पुरुषे समवनीयन्ते । नाममात्र हि अव शिष्यते — इत्युक्तम् ।

कथ पुनः समवनीतेषु प्राणेषु, देहे च स्वकारणे प्रलीने, विद्वान् मुक्त अत्रैव सर्वात्मा सन् वर्तमान. पुन पूर्ववत् देहित्व ससारित्वलक्षण न प्रतिपद्यते — इत्यत्रोच्यते— तत् तत्र अय दृष्टान्त । यथा लोके अहि. सर्प , तस्य निर्ल्वयनी, निर्मोक , सा अहिनिर्ल्वयनी, वल्मीके सर्पाश्रये वल्मीकादावित्यर्थः, मृता प्रत्यस्ता प्रक्षिप्ता अनात्मभावेन सर्पेण परित्यक्ता, शयीत वर्तेत — एवमेव, यथा अय दृष्टान्त , इद शरीर सर्पस्थानीयेन मुक्तेन अनात्मभावेन परित्यक्त मृतमिव शेते । अथ इतर सर्पस्थानीयो मुक्त सर्वात्मभूतः सर्पवत् तत्रैव वर्तमानोऽपि अशरीर एव, न पूर्ववत् पुन सशरीरो भवति । कामकर्मप्रयुक्तशरीरात्मभावेन हि पूर्वे सशरीर मर्त्यश्च । तद्वियोगात् अथ इदानीं अशरीर., अत एव च अमृत । प्राण., प्राणितीति प्राण· — 'प्राणस्य प्राणम्' इति हि वक्ष्यमाणे श्लोके, 'प्राणबन्धन हि सोम्य मन' इति च श्रुत्यन्तरे । प्रकरणवाक्यसामर्थ्याच्च पर एव आत्मा अत्र प्राणशब्दवाच्य । ब्रह्मैव परमात्मैव । किं पुनस्तत् ? तेज एव विज्ञान ज्योतिः, येन आत्मज्योतिषा जगत् अवभास्यमान प्रज्ञानेत्र विज्ञानज्योतिष्मत् सत् अविभ्रशत् वर्तते ।

यः कामप्रश्नो विमोक्षार्थ. याज्ञवल्क्येन वरो दत्तो जनकाय, सहेतुक· बन्धमोक्षार्थलक्षण. दृष्टान्तदार्ष्टान्तिकभूत· स एष निर्णीत सविस्तर जनकयाज्ञवल्क्याख्यायिकारूपधारिण्या श्रुत्या । ससारविमोक्षोपाय उक्त प्राणिभ्य· । इदानीं श्रुति स्वयमेवाह— विद्यानिष्क्रयाय जनकेनैव मुक्तमिति । कथम् ? सोऽहं एव विमोक्षितस्त्वया भगवते तुभ्य विद्यानिष्क्रयार्थे सहस्र ददामि—इति ह एव किल उवाच उक्तवान् जनको वैदेह. । अत्र कस्माद्विमोक्षपदार्थे निर्णीते, विदेहराज्य आत्मानमेव च न निवेदयति, एकदेशोक्ताविव सहस्रमेव ददाति ? तत्र कोऽभिप्राय इति ।

अत्र केचिद्वर्णयन्ति—अध्यात्मविद्यारसिको जनक. श्रुतमप्यर्थं पुनर्मन्त्रैः शुश्रूषति । अतो न सर्वमेव निवेदयति । श्रुत्वाऽभिप्रेत याज्ञवल्क्यात् पुनरन्ते निवेदयिष्यामीति हि मन्यते । यदि चात्रैव सर्वं निवेदयामि, निवृत्ताभिलाषोऽय श्रवणादिति मत्वा, श्लोकान् न वक्ष्यति —इति च भयात् सहस्रदान शुश्रूषालिङ्गज्ञापनायेति । सर्वमप्येतत् असत्, पुरुषस्येव प्रमाणभूताया. श्रुतेः व्याजानुपपत्तेः । अर्थशेषोपपत्तेश्च—विमोक्षपदार्थे उक्तेऽपि आत्मज्ञानसाधने, आत्मज्ञानशेषभूत सर्वैषणापरित्याग सन्यासाख्य वक्तव्योऽर्थशेष. विद्यते । तस्मात् श्लोकमात्रशुश्रूषाकल्पना अनृज्वी । अगतिका हि गति. पुनरुक्तार्थकल्पना । सा च अयुक्ता सत्या गतौ । न च तत स्तुतिमात्रमित्यवोचाम । ननु एव सति 'अत ऊर्ध्व विमोक्षायैव' इति वक्तव्यम्— —नैष दोष । आत्मज्ञानवत् अप्रयोजक सन्यास पक्षे, प्रतिपत्तिकर्मवत्— इति हि मन्यते । 'सन्यासेन तनु त्यजेत्' इति स्मृते । साधनत्वपक्षेऽपि न 'अत ऊर्ध्व विमोक्षायैव' इति प्रश्नमर्हति, मोक्षसाधनभूतात्मज्ञानपरिपाकार्थत्वात् ।

शकर.

( २ ) मर्त्योऽमृतो भवति विनष्टाश्लिष्टपूर्वोत्तराघो भवति । अत्र ब्रह्म समश्नुते । अत्रैवोपासनवेलाया ब्रह्मानुभवतीत्यर्थ । आत्मदर्शनसमानाकारब्रह्मविद्यागमोत्तरकालममृतोऽपि मरणरहितोऽपि मरणात्प्राग् शरीरकृत एवेत्यर्थ· । शरीरस्पर्शिपरपरिवादादिजनितविषादाद्यभावादिति भाव· । प्राणो ब्रह्मव । प्राणभृत्त्वेऽपि तदा( ता )त्विकब्रह्मानुभवत्वात् । आविर्भूतब्रह्मरूप इवेत्यर्थ । तेज एव । अज्ञानलक्षणान्धकारप्रतिभट एवेत्यर्थ ।

* रग.

( ३ ) 'नोपमर्देनात.' — अत. 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिता । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥' इति वचन न बन्धोपमर्देनामृतत्व वदति ।

रामानुज. ४।२।१०

* शेष शकरवत । काड ६।१४ इत्यत्र रामानुजभाष्य द्रष्टव्यम् ।

(४) अथ मर्त्योऽमृतो भवति । अथ मुक्त्यनन्तरं न कदाचिन्मृतिरस्य भवतीत्यर्थः । मुक्त एव परे ब्रह्मणी च्छया प्रविशति नि.सरति च । दर्शनादीन्ब्रह्मणो भोगांश्च करोति । स्वरूपभूता. कामा मुक्ताना भवन्ती त्यतो हृदि श्रिता इति विशेषण हृदयस्यैव मोचनात्तस्थाः कामा मुक्तानामपगच्छन्तीति युक्तमेव । न ह्यमुक्तस्यास्य कदाचित्सर्वे कामा मुच्यन्ते । सुप्त्यादावप्यभिभव एव । वासनाया विद्यमानत्वात् । वासनाया हि पुनरुद्भव. । 'यावद्विमुच्येत्पुरुषस्तावत्कामा हृदि स्थिता । चिन्ता- भावाद्विमुक्तस्य स्युः कामास्तद्गता. कुत. । स्वरूपभूत चित्तेन कामाद्या. स्यु. सुखात्मकाः । दु खात्मका प्राकृता वा मुक्ताना न कथचन ॥' इति ब्रह्मतर्के । अथ जीवोऽथ मुक्त्यनन्तरमेवाशरीरो भवति । अमृत कदापि न मृत. । प्राणाख्य परब्रह्मैव । 'कतम एको देव इति प्राण इति' । 'स ब्रह्मेत्याचक्षते' इत्यादिश्रुते. । तेज एव च तेज इति श्रीः । 'अन्येषाममृतत्व च भवेद्विष्णु- प्रसादतः । नित्यामृतः स भगवान् श्रीश्च नान्य' कथ चन ॥' इति नारदीये । 'प्राणस्तु भगवान्विष्णु. सर्वनेतृत्वतो विभु । तेजस्तु सर्वतेजस्त्वाच्छ्रीरेव समु- दाहृता ॥' इति च । मध्व

ब्रह्मविद अणु पन्था, विद्याऽविद्यासमुच्चय, भूत-
भव्येशानस्य पञ्च पञ्चजनाश्रयस्य प्राणचक्षु
श्रोत्रमनसामधिष्ठातु ब्रह्मण ज्ञान
मुक्तिसाधन, नानादर्शननिषेध

**तदेते श्लोका भवन्ति ।**

**अणु पन्था विततः पुराणो माऽ स्पृष्टोऽनुवित्तो मयैव ।**
**तेन धीरा अपियन्ति ब्रह्मविद स्वर्गं लोकमित ऊर्ध्वं विमुक्ता. ॥**

( १ ) आत्मकामस्य ब्रह्मविदो मोक्ष इत्येतस्मिन्नर्थे मन्त्रब्राह्मणोक्ते, विस्तरप्रतिपादका एते श्लोका भवन्ति । अणुः सूक्ष्म. पन्थाः दुर्विज्ञेयत्वात्, विततः विस्तीर्ण., विस्पष्टतरणहेतुत्वाद्वा 'वितरः' इति पाठान्तरात्, मोक्षसाधनो ज्ञानमार्गः पुराण. चिरन्तन. नित्यश्रुति- प्रकाशितत्वात्, न तार्किकबुद्धिप्रभवकुदृष्टिमार्गवत् अर्वाक्कालिक, मां स्पृष्ट. मया लब्ध इत्यर्थ. । यो हि येन लभ्यते, स त स्पृशतीव सबध्यते । तेन अय ब्रह्म- विद्यालक्षणो मोक्षमार्गः मया लब्धत्वात् 'मां स्पृष्टः' इत्युच्यते । न केवल मया लब्ध., किं तु अनुवित्तो मयैव । अनुवेदन नाम विद्याया परिपाकापेक्षया फला- वसानतानिष्ठा प्राप्ति, भुजेरिव तृप्त्यवसानता । पूर्वं तु ज्ञानप्राप्तिसबन्धमात्रमेवेति विशेषः । किं असावेव मन्त्रदृक् एकः ब्रह्मविद्याफल प्राप्त., नान्य प्राप्तवान्, येन 'अनुवित्तो मयैव' इत्यवधारयति — नैष दोष., अस्या. फल आत्मसाक्षिकमनुत्तममिति ब्रह्मविद्यायाः स्तुतिपरत्वात् । एव हि कृतार्थात्माभिमानकर आत्मप्र त्ययसाक्षिक आत्मज्ञान, किमत पर अन्यत्स्यात् — इति ब्रह्मविद्यां स्तौति । न तु पुन. अन्यो ब्रह्मवित् तत्फल न प्राप्नोतीति, 'तद्यो यो देवानाम्' इति सर्वार्थश्रुते. । तदेवाह — तेन ब्रह्मविद्यामार्गेण धीरा प्रज्ञावन्तः अन्येऽपि ब्रह्मविद इत्यर्थः, अपियन्ति अपिगच्छन्ति, ब्रह्मविद्याफल मोक्ष स्वर्गं लोकम् । स्वर्गलोकशब्द. त्रिवि- ष्टपवाच्यपि सन् इह प्रकरणात् मोक्षाभिधायक. । इतः अस्माच्छरीरपातात् ऊर्ध्वं जीवन्त एव विमुक्ताः सन्त. । शाकर.

( २ ) विततो वेदान्तेषु विस्तरेण प्रतिपादितः । मां स्पृष्टः । मा प्राप्त शताधिकनाडीद्वारा स्वदेहस्पर्शी- त्यर्थः । मयैवानुवित्तो भोगदशायां मयैवानुभूतश्च योऽय पन्था अर्चिरादिमार्गस्तेन मार्गेण धीराः प्रज्ञाशालिनो ब्रह्मविद इतोऽस्माद्देहाद्विमुक्ताः सर्वेभ्यो लोकेभ्य ऊर्ध्वे ( स्वर्गे ) भगवल्लोकमत्र स्वर्गशब्दः प्रकरणाद्भगवल्लो- कपरः । अपियन्ति प्राप्नुवन्तीत्यर्थ. । रग.

( ३ ) 'तत्प्राप्ते' सुखहेतुत्वात्पन्था इति हरिः श्रुतः । अणुश्च विततश्चासौ यतोऽन्तर्बहिरेव च । श्रिया स्पृष्टः श्रीपतित्वादनुवित्तस्तयैव च । तस्य प्रसादात्सयान्ति तल्लोक सर्वमोक्षिण. । ऊर्ध्वः स भगवान्सर्वविशिष्टो यत्स- दैव हि ॥' मध्व.

---

(१) बृउ ४।४।८, शब्रा १४।७।२।११ तदेते ( तदप्येते ) ( भवन्ति० ) वितत ( वितर ) ब्रह्म विद + ( उत्क्रम्य ) ( ऊर्ध्वं० ), भास्कर ३।३।२९, ४।२।१२ तेन धीरा इत्यादि शब्रावत्, मध्व ऊर्ध्व ( ऊर्ध्वो )

**तस्मिञ्छुक्लमुत नीलमाहुः पिङ्गलꣳ हरितं लोहितं च ।**
**एष पन्था ब्रह्मणा ह्यानुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च ॥**

( १ ) तस्मिन् मोक्षसाधनमार्गे विप्रतिपत्तिर्मुमुक्षूणाम् । कथम् ? तस्मिन् शुक्लं शुद्धं विमलं आहुः केचित् मुमुक्षवः । नीलं अन्ये, पिङ्गलं अन्ये, हरितं लोहितं च — यथादर्शनम् । नाड्यस्तु एताः सुषुम्नाद्याः श्लेष्मादिरससपूर्णाः — शुक्लस्य नीलस्य पिङ्गलस्येत्याद्युक्तत्वात् । आदित्यं वा मोक्षमार्गं एवंविधं मन्यन्ते — 'एष शुक्ल एष नीलः' इत्यादिश्रुत्यन्तरात् । दर्शनमार्गस्य च शुक्लादिवर्णासंभवात् । सर्वथाऽपि तु प्रकृतात् ब्रह्मविद्यामार्गात् अन्ये एते शुक्लादयः । ननु शुक्लः शुद्धः अद्वैतमार्गः — न, नीलपीतादिशब्दैः वर्णवाचकैः सह अनुद्रवणात् । यान् शुक्लादीन् योगिनो मोक्षपथान् आहुः, न ते मोक्षमार्गाः । संसारविषया एव हि ते — 'चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः' इति शरीरदेशान्निःसरणसंबन्धात्, ब्रह्मादिलोकप्रापका हि ते । तस्मात् अयमेव मोक्षमार्गः— यः आत्मकामत्वेन आप्तकामतया सर्वकामक्षये गमनानुपपत्तौ प्रदीपनिर्वाणवत् चक्षुरादीनां कार्यकरणानां अत्रैव समवनयः— इति एषः ज्ञानमार्गः पन्थाः, ब्रह्मणा परमात्मस्वरूपेणैव ब्राह्मणेन त्यक्तसर्वैषणेन, अनुवित्तः । तेन ब्रह्मविद्यामार्गेण ब्रह्मवित् अन्यः अपि एति । कीदृशो ब्रह्मवित् तेन एतीत्युच्यते — पूर्वं पुण्यकृद्भूत्वा पुनस्त्यक्तपुत्राद्येषणः, परमात्मतेजस्यात्मानं संयोज्य तस्मिन्नभिनिर्वृत्तः तैजसश्च — आत्मभूतः इहैव इत्यर्थः । ईदृशो ब्रह्मवित् तेन मार्गेण एति । न पुनः पुण्यादिसमुच्चयकारिणो ग्रहणं, विरोधादित्यवोचाम । 'अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः । शान्ताः संन्यासिनो यान्ति तस्मै मोक्षात्मने नमः ॥' इति च स्मृतेः । 'त्यज धर्ममधर्मं च' इत्यादि पुण्यापुण्यत्यागोपदेशात् । 'निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् । अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ॥' 'नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च । शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः ॥' इत्यादिस्मृतिभ्यश्च । उपदेक्ष्यति च इहापि तु — 'एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान्' इति कर्मप्रयोजनाभावे हेतुमुक्त्वा, 'तस्मादेवंविच्छान्तो दान्तः' इत्यादिना सर्वक्रियोपरमम् । तस्मात् यथा व्याख्यातमेव पुण्यकृत्त्वम् । अथवा यो ब्रह्मवित् तेन एति, स पुण्यकृत् तैजसश्च—इति ब्रह्मवित्स्तुतिरेषा । पुण्यकृति तैजसे च योगिनि महाभाग्यं प्रसिद्धं लोके, ताभ्यां अतः ब्रह्मवित् स्तूयते प्रख्यातमहाभाग्यत्वाल्लोके ।

शंकर

( २ ) तस्मिन्नर्चिरादिके मार्गे शुक्लं नीलं पिङ्गलं हरितं लोहितमित्याहुः । 'असौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः' ( छाउ. ८।६।१ ) इति श्रुत्यन्तरात् । एष पन्था एषोऽर्चिरादिः पन्था ब्रह्मणाऽनुवित्तः संबद्धः । ब्रह्मपथ इति यावत् । तेन मार्गेण पुण्यकृद्ब्रह्मवित्पूर्वं पुण्यं कृत्वा तद्द्वारेण शुद्धान्तःकरणो ब्रह्मविच्च तैजसश्च तैजसस्तैजःसंबन्धी तेजउपासकः पञ्चाग्निविद्यानिष्ठ इति यावत् ।

रंग.

( ३ ) 'रूपमाहुः पञ्चविधं तस्य विष्णोर्महात्मनः । शुक्लं तु वासुदेवाख्यमनिरुद्धं तु नीलकम् । संकर्षणं पिङ्गलं च प्रद्युम्नं हरितं स्मृतम् । नारायणं लोहितं स्यात्पञ्च रूपाण्यजे हरौ । पञ्चभेदविभिन्नो यस्त्वभिन्नोऽपि स्वरूपतः । स पन्था ब्रह्मणा ज्ञातः पद्मजेनैव संततम् । परब्रह्मस्वरूपज्ञो महातेजःश्रियस्तथा । सम्यक्स्वरूपविज्ञानात्तैजसत्वेन कीर्तितः । भगवत्कर्मकर्तृत्वात्पुण्यकृच्चाभिधीयते । एवंविधोऽपि तस्यैव प्रसादाद्याति तां गतिम् । अतः पन्थाः समुद्दिष्टो भगवान्केशवः स्वयम् । स्वगताखिलभेदेन विहीनोऽपि स सर्वदा । सर्वेषां व्यवहाराणां भेदोत्थानां स ईश्वरः । अभिन्नोऽपि ह्यतो भिन्नः पञ्चभेदादिनाऽमृषा ॥'

मध्व.

(१) बृउ ४।४।९, शब्रा १४।७।२।१२ त्पुण्यकृत्तैजसश्च ( तैजसः पुण्यकृच्च ), ब्रशंकर ३।४।३९, भास्कर ३।३।२९, ३।४।३९ शंब्रावदपि, श्रीकंठ. १।१।१ ( पृ ४५ ) त्पुण्यकृत्तैजसश्च ( त्पुण्यकृच्च ), श्रीकर १।१।१ ( पृ १५ ), बलदेव ३।४।३९

**अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायाᳪ रताः ॥**

( १ ) अन्धं अदर्शनात्मकं तमः संसारनियामकं प्रविशन्ति प्रतिपद्यन्ते । के ? ये अविद्यां विद्यातोऽन्यां साध्यसाधनलक्षणां, उपासते, कर्म अनुवर्तन्ते इत्यर्थः । ततः तस्मादपि भूय इव बहुतरमिव तमः प्रविशन्ति । के ? ये उ विद्यायां अविद्यावस्तुप्रतिपादिकायां कर्मार्थायां त्रय्यामेव विद्यायां, रताः अभिरताः । विधिप्रतिषेधपर एव वेदः, नान्योऽस्ति—इति, उपनिषदर्थानपेक्षिण इत्यर्थः । शंकर

( २ ) ब्रह्मवित्पुण्यकृदित्युक्तं कर्माङ्गकज्ञानस्य ब्रह्मप्राप्तिहेतुत्वं स्पष्टयति — अन्धं तमः इति । ये केवलं स्वर्गादिफलोद्देशेन कर्मानुतिष्ठन्ति न तु ब्रह्मज्ञानार्थितया तेऽन्धं तमः प्रविशन्ति दुस्तरं संसारलक्षणमन्धकारं प्रतिपद्यन्त इत्यर्थः । य उ विद्यायां रताः । उशब्दोऽवधारणे । नित्यनैमित्तिकं कर्म परित्यज्य विद्यायामेव यतन्ते ते 'मोहात्तस्य परित्यागस्तामसः परिकीर्तितः' इत्युक्तरीत्या तामसत्यागवशात्संसारमेव प्रविशन्तीत्यर्थः । फललेशमप्यलब्ध्वा पतिता भवन्तीत्यर्थः । नानेन वचनेन ज्ञानकर्मणोः समुच्चय इति मन्तव्यम् । रंग.

( ३ ) 'अन्यथोपासका येऽस्य ते यान्ति ह्यधरं तमः । ततः किंचिद्विशेषेण दुर्ज्ञानस्याविनिन्दकाः । सम्यगाचार्यवचनमविज्ञाय विरोधिनि । सत्त्वबुद्धिं यतः कुर्युस्ततस्तेऽधिकपापिनः । अप्राप्तत्यागिनः प्राप्तनिष्ठाहीनो हि दोषवान् ॥' मध्व

**अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः ।
ताᳪस्ते प्रेत्याभिगच्छन्त्यविद्वाᳪसोऽबुधो जनाः ॥**

( १ ) यदि ते अदर्शनलक्षणं तमः प्रविशन्ति, को दोष इत्युच्यते — अनन्दाः अनानन्दाः असुखा नाम ते लोकाः, तेन अन्धेनादर्शनलक्षणेन तमसा आवृताः व्याप्ताः— ते तस्य अज्ञानतमसो गोचराः । तान् ते प्रेत्य मृत्वा अभिगच्छन्ति अभियान्ति । के ? ये अविद्वांसः । किं सामान्येन अविद्वत्तामात्रेण ? नेत्युच्यते — अबुधः, बुधेः अवगमनार्थस्य धातोः क्विप्प्रत्ययान्तस्य रूपं, आत्मावगमवर्जिता इत्यर्थः । जनाः प्राकृता एव जननधर्माणो वा इत्येतत् । शंकर

( २ ) ये चाबुधाः प्रत्यगात्मविद्याशून्याः पञ्चाग्निविद्याशून्या इति यावत् । रंग

( ३ ) 'नित्यदुःखस्वरूपत्वादनन्दं तत्तमो मतम् । बोधके विद्यमानेऽपि ये विदुर्न परं हरिम् । तेऽपि यान्ति तमो घोरं नित्योद्रिक्तासुखात्मकम् ॥' इति च । बुधः सकाशेऽप्यविद्वांस इत्यर्थः । 'बोधनाज्ज्ञानवान् भुत्स्यात्तत्सकाशाच्च ये हरिम् । न विदुस्ते तमो यान्ति सर्वदुःखात्मकं परम् ॥' मध्व

**आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन्कस्य कामाय शरीरमनुसञ्ज्वरेत् ॥**

( १ ) आत्मानं स्वं परं सर्वप्राणिमनीषितज्ञं हृत्स्थं अशनायादिधर्मातीतं, चेत् यदि, विजानीयात् सहस्रेषु कश्चित् । चेदिति आत्मविद्यायाः दुर्लभत्वं दर्शयति । कथम् ? अयं परः आत्मा सर्वप्राणिप्रत्ययसाक्षी, यः नेति नेतीत्याद्युक्तः, यस्मान्नान्योऽस्ति द्रष्टा श्रोता मन्ता विज्ञाता, समः सर्वभूतस्थो नित्यशुद्धबुद्धमुक्तस्वभावः— अस्मि भवामि — इति । पूरुषः पुरुषः । सः किमिच्छन् — तत्स्वरूपव्यतिरिक्तं अन्यद्वस्तु फलभूतं किमिच्छन् कस्य वा अन्यस्य आत्मनो व्यतिरिक्तस्य कामाय प्रयोजनाय । न हि तस्य आत्मनः एष्टव्यं फलं, न चाप्यात्मनोऽन्यः अस्ति, यस्य कामाय इच्छति, सर्वस्य आत्मभूतत्वात् । अतः किमिच्छन् कस्य कामाय शरीरमनुसञ्ज्वरेत्, भ्रंशेत्, शरीरोपाधिकृतदुःखमनु दुःखी स्यात्, शरीरतापमनुतप्येत । अनात्मदर्शिनो हि तद्व्यतिरिक्तवस्त्वन्तरेप्सोः । 'ममेदं स्यात्, पुत्रस्य इदं, भार्याया इदं' इत्येवमीहमानः

(१) बृउ ४।४।१०, शब्रा १४।७।२।१३ ऽविद्यामु (ऽसंभूतिमु) विद्यायाᳪ (संभूत्याᳪ)

(२) बृउ ४।४।११, शब्रा १४।७।२।१४ अनन्दा (असुर्या) प्रेत्याभि (प्रेत्यापि) ऽबुधो (ऽबुधा), मध्व न्त्यविद्वाᳪ (न्ति येऽविद्वाᳪ), वल्लभ ३।४।१९ अनन्दा (असुर्या) ऽबुधो (ऽबुधा), बलदेव २।३।१८

(१) बृउ ४।४।१२; शब्रा १४।७।२।१६ पूरुषः (पुरुष) सञ्ज्वरेत् (सञ्चरेत्), ब्रशांकर १।१।४ (पृ ७४), श्रीकर ३।३।६१, ४।४।७, ८, २२, विज्ञान. ३।३।४२ पूरुष. (पुरुष).

पुनःपुनर्जननमरणप्रबन्धरूढः शरीररोगमनु रुज्यते। सर्वात्मदर्शिनस्तु तदसम्भव इत्येतदाह। * शंकर.

(२) 'यदि जीव परात्मानमयमस्मीति वेदितुम्। योग्यः शरीरच्छेदादेः कथं दुःखी तदा भवेत्। दुःखी शरीरसंबन्धाज्जीवो विष्णोः प्रसादतः। अदुःखी विष्णु-ज्ञानन्द मुक्त एव च भोक्ष्यति। नित्यमुक्तः पूर्णसुखः स्वतन्त्रः पुरुषोत्तमः। परतन्त्रः कथं जीवो योग्यः सोऽस्मीति वेदितुम्। तस्मात्सोऽस्मीति नैवायं विजानीयात्कदाचन। तदीयोऽस्मीति जानीयात्सर्वदैव बुधस्ततः॥' इति च। मध्व.

यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन्संदेह्ये गहने प्रविष्टः।
स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव॥

(१) किंच यस्य ब्राह्मणस्य, अनुवित्तः अनुलब्धः, प्रतिबुद्धः साक्षात्कृतः, कथम्? अहमस्मि परं ब्रह्मेत्येवं प्रत्यगात्मत्वेनावगतः, आत्मा अस्मिन्संदेह्ये संदेहे अनेकानर्थसंकटोपचये, गहने विषमे अनेकशतसहस्रविवेकविज्ञानप्रतिपक्षे विषमे, प्रविष्टः स यस्य ब्राह्मणस्यानुवित्तः प्रतिबोधेनेत्यर्थः। स विश्वकृत् विश्वस्य कर्ता। कथं विश्वकृत्त्वं, तस्य किं विश्वकृदिति नाम इत्याशङ्क्याह—सः हि यस्मात् सर्वस्य कर्ता, न नाममात्रम्। न केवलं विश्वकृत् परप्रयुक्तः सन्, किं तर्हि तस्य लोकः सर्वः। किमन्यो लोकः अन्योऽसावित्युच्यते—स उ लोक एव। लोकशब्देन आत्मा उच्यते। तस्य सर्वं आत्मा, स च सर्वस्यात्मेत्यर्थः। य एष ब्राह्मणेन प्रत्यगात्मा प्रतिबुद्धतया अनुवित्तः आत्मा अनर्थसंकटे गहने प्रविष्टः, स न संसारी, किं तु पर एव। यस्मात् विश्वस्य कर्ता सर्वस्य आत्मा, तस्य च सर्वं आत्मा। एक एवाद्वितीयः परः एवास्मीत्यनुसंधातव्य इति श्लोकार्थः। शंकर.

(२) प्रतिबुद्धो ध्यातश्चेत्यर्थः। स विश्वकृत्स एव लोककृदीश्वरवद्व्याप्य इति यावत्। तत्र हेतुमाह—स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव। लोकः आश्रयभूतः सर्वस्य कर्ता य ईश्वरस्तस्यापि स ब्रह्मविल्लोक एवाऽऽधार एव 'ज्ञानी त्वात्मैव मे मतं' (इति) भगवतैव गीतत्वात्। रंग.

(३) 'यस्य ज्ञातो नित्यबुद्धो भगवान्पुरुषोत्तमः। तस्य लोकः स एवैको यो लोकः परमात्मनः। स हि विष्णुः परो वायोरपि कर्ता प्रकीर्तितः। विश्वो वायुः समुद्दिष्टः पूर्णत्वाज्जीवसंघतः। तदन्यस्यापि सर्वस्य कर्तैको विष्णुरेव हि। प्रविष्टो गहने देहमध्ये संदोघनामनि। तज्ज्ञानी याति तल्लोकं तत्प्रसादाच्च वर्तते॥' मध्व.

इहैव सन्तोऽथ विद्मस्तद्वयं न चेदवेदिर्महती विनष्टिः।
ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापि यन्ति॥

(१) किं च इहैव अनेकानर्थसंकुले, सन्तः भवन्तः अज्ञानदीर्घनिद्रामोहिताः सन्तः, कथंचिदिव ब्रह्मतत्त्वं आत्मत्वेन अथ विद्मः विजानीमः, तत् एतद्ब्रह्म प्रकृतम्। अहो वयं कृतार्था इत्यभिप्रायः। यदेतद्ब्रह्म विजानीमः, तत् न चेत् विदितवन्तो वयम्—वेदनं वेदः, वेदोऽस्यास्तीति वेदी, वेद्येव वेदिः, न वेदिः अवेदिः, ततः अहं अवेदिः स्याम्। यदि अवेदिः स्यां, को दोषः स्यात्? महती अनन्तपरिमाणा जन्ममरणादिलक्षणा विनष्टिः विनशनम्। अहो वयं अस्मान्महतो विनाशात् निर्मुक्ताः, यत् अद्वयं ब्रह्म विदितवन्त इत्यर्थः। यथा च वयं ब्रह्म विदित्वा अस्माद्विनशनाद्विप्रमुक्ताः, एवं ये तद्विदुः अमृतास्ते भवन्ति। ये पुनः नैव ब्रह्म विदुः, ते इतरे ब्रह्मविद्भ्योऽन्ये अब्रह्मविद इत्यर्थः, दुःखमेव जन्ममरणादिलक्षणमेव अपियन्ति प्रतिपद्यन्ते, न कदाचिदपि अविदुषां ततो विनिवृत्ति-

---

* रंग शंकरवत् शब्दार्थं।

(१) बृह ४।४।१३, शत ब्रा १४।७।२।१७ देह्ये (देहे); रामानुज २।३।२२, मध्व देह्ये (दो (हे) घे), अमध्व. १।१।७ मध्ववत्, श्रीकंठ २।३।२२, श्रीकर. २।३।२०, बलदेव २।३।२०.

(१) बृह. ४।४।१४, शत ब्रा. १४।७।२।१५ इहैव .. द्वयं (तदेव सन्तस्तदु तद्भवामो) दवेदिर्म (दवेदी म) मेवापि (मेवोप), मध्व. दवेदिर्मे (दवेदीर्मे), वल्लभ ३।४।१६ उत्तरार्धमात्रं शतवत्.

रित्यर्थः। दुःखमेव हि ते आत्मत्वेनोपगच्छन्ति।

शंकर.

(२) वेदनं वेदिः। 'सर्वधातुभ्य' इतीन्प्रत्ययः। नः स्वरार्थः। अवेदिरज्ञानं तदेव महती विनष्टिर्महाहानिरित्यर्थः। रंग

यदैतमनुपश्यत्यात्मानं देवमञ्जसा।
ईशानं भूतभव्यस्य न ततो विजुगुप्सते॥

यदा पुनः एतं आत्मानं, कथंचित् परमकारुणिकं कंचिदाचार्यं प्राप्य ततो लब्धप्रसादः सन्, अनु पश्चात् पश्यति साक्षात्करोति स्वमात्मानं, देवं द्योतनवन्तं दातारं वा सर्वप्राणिकर्मफलानां यथाकर्मानुरूपं, अञ्जसा साक्षात्, ईशानं स्वामिनं भूतभव्यस्य कालत्रयस्येत्येतत् — न ततः तस्मादीशानाद्देवात् आत्मानं विशेषेण जुगुप्सते गोपायितुमिच्छति। सर्वो हि लोक ईश्वराद्गुप्तिमिच्छति भेददर्शी। अयं तु एकत्वदर्शी न बिभेति कुतश्चन। अतो न तदा विजुगुप्सते, यदा ईशानं देवं अञ्जसा आत्मत्वेन पश्यति। न तदा निन्दति वा कंचित्, सर्वं आत्मानं हि पश्यति, स एवं पश्यन् कं असौ निन्द्यात्।

* शंकर

यस्मादर्वाक्संवत्सरोऽहोभिः परिवर्तते।
तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्॥

(१) किं च यस्मात् ईशानात् अर्वाक्, यस्मादन्यविषय एवेत्यर्थः, संवत्सरः कालात्मा सर्वस्य जनिमतः परिच्छेत्ता, यं अपरिच्छिन्दन् अर्वागेव वर्तते, अहोभिः स्वावयवैः अहोरात्रैरित्यर्थः। तत् ज्योतिषां ज्योतिः आदित्यादिज्योतिषामप्यवभासकत्वात्, आयुरित्युपासते देवाः, अमृतं ज्योतिः — अतोऽन्यन्म्रियते, न हि ज्योतिः। सर्वस्य हि एतज्ज्योतिः आयुः। आयुर्गुणेन यस्मात् देवाः तत् ज्योतिरुपासते, तस्मात् आयुष्मन्तस्ते। तस्मात् आयुष्कामेन आयुर्गुणेन उपास्यं ब्रह्मेत्यर्थः।

शंकर.

(२) आयुः सर्वप्राणिप्राणनहेतुभूतं तं ह देवा उपासते। देवोपास्यत्वं तु तस्यैवेत्यर्थः। रंग.

(३) 'न वत्सराश्च नाहानि यस्य नित्याविकारतः। ज्योतिषां ज्योतिरचलं तद्देवाः समुपासते॥'

मध्व.

यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः।
तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्॥

(१) किं च यस्मिन् यत्र ब्रह्मणि, पञ्च पञ्चजनाः — गन्धर्वादयः पञ्चैव संख्याताः गन्धर्वाः पितरो देवा असुरा रक्षांसि — निषादपञ्चमा वा वर्णाः, आकाशश्च अव्याकृताख्यः — यस्मिन् सूत्रं ओतं च प्रोतं च — यस्मिन्प्रतिष्ठितः। 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाशः' इत्युक्तम्। तमेव आत्मानं अमृतं ब्रह्म मन्ये अहं, न चाहमात्मानं ततोऽन्यत्वेन जाने। किं तर्हि? अमृतोऽहं ब्रह्म विद्वान्सन्। अज्ञानमात्रेण तु मर्त्योऽहं आसम्। तदपगमात् विद्वानहं अमृत एव।

शंकर.

'न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च' — अस्मिन्मन्त्रे 'पञ्च पञ्चजनाः' इति पञ्चसंख्याविषयाऽपरा पञ्चसंख्या श्रूयते पञ्चशब्दद्वयदर्शनात्। त एते पञ्च पञ्चकाः पञ्चविंशतिः संपद्यन्ते। तया श्रुतिप्रसिद्धया पञ्चविंशतिसंख्यया तेषां स्मृतिप्रसिद्धानां पञ्चविंशतितत्त्वानामुपसंग्रहात्प्राप्तं पुनः श्रुतिमत्त्वमेव प्रधानादीनाम्। ततो ब्रूमः — न संख्योपसंग्रहादपि प्रधानादीनां श्रुतिमत्त्वं प्रत्याशा कर्तव्या। कस्मात्? नानाभावात्। नाना ह्येतानि पञ्चविंशतिस्तत्त्वानि

---

* रंग शंकरवत् शब्दार्थः।

(१) बृउ ४।४।१५, शब्रा १४।७।२।१८ ततो विजुगुप्सते (तदा विचिकित्सति), मध्व पश्यत्या (पश्यन्त्या)

(२) बृउ ४।४।१६, शब्रा १४।७।२।२० युर्होपा (युर्ह्योपा), ब्रशंकर १।१।२४, १।३।२२, १।४।१३, ४।४।३, भास्कर १।१।२४, १।४।१३, ४।४।३, रामानुज १।३।३१, ३२, ४१, १।४।९, १३ तद्देवा (तं देवा), ब्रमध्व १।४।१४, श्रीकंठ १।३।३१, १।४।१३, श्रीकर १।१।११, २५, १।३।२२, ३२, १।४।११, १३, ४।२।५, वल्लभ १।४।१३, विज्ञान १।४।१३, १७, बलदेव १।३।२६, ३२, १।४।९

(१) बृउ ४।४।१७, शब्रा १४।७।२।१९, ब्रशंकर १।४।११, भास्कर १।४।११, रामानुज १।४।११, १२, निंबार्क १।४।११, ब्रमध्व १।४।१२, श्रीकंठ १।४।११; श्रीकर १।४।११, वल्लभ १।४।११, विज्ञान १।१।३०, १।४।११, बलदेव १।४।११, ३।४।५२

नैषां पञ्चशः पञ्चशः साधारणो धर्मोऽस्ति येन पञ्चविंशतेरन्तराले परा. पञ्च पञ्चसख्या निविशेरन् । न ह्येकनिबन्धनमन्तरेण नानाभूतेषु द्वित्वादिकाः सख्या निविशन्ते । अथोच्येत पञ्चविंशतिसख्यैवेयमवयवद्वारेण लक्ष्यते । तदपि नोपपद्यते । अयमेवास्मिन्पक्षे दोषो यल्लक्षणाऽऽश्रयणीया स्यात् । परश्चात्र पञ्चशब्दो जनशब्देन समस्त. पञ्चजना इति । पारिभाषिकेण स्वरेणैकपदत्वनिश्चयात् । समस्तत्वाच्च न वीप्सा पञ्च पञ्चेति । न च पञ्चकद्वयग्रहण पञ्च पञ्चेति । न च पञ्चसख्याया एकस्या पञ्चसख्यया परया विशेषण पञ्च पञ्चका इति । उपसर्जनस्य विशेषणेनासयोगात् । तस्मात्पञ्च पञ्चजना इति न पञ्चविंशतितत्त्वाभिप्रायम् । अतिरेकाच्च न पञ्चविंशतितत्त्वाभिप्रायम् । अतिरेको हि भवत्यात्माकाशाभ्या पञ्चविंशतिसख्यायाः । कथ तर्हि पञ्च पञ्चजना इति । उच्यते —‘ दिक्सख्ये सज्ञायाम् ’ ( पा सू २।१।५० ) इति विशेषस्मरणात्सज्ञायामेव पञ्चशब्दस्य जनशब्देन समास । ततश्च रूढत्वाभिप्रायेणैव केचित्पञ्चजना नाम विवक्ष्यन्ते न साख्यतत्त्वाभिप्रायेण । ते कतीत्यस्यामाकाङ्क्षाया पुन. पञ्चेति प्रयुज्यते । पञ्चजना नाम ये केचित्ते च पञ्चैवेत्यर्थ । सप्तर्षय सप्तेति यथा । १।४।११

‘ प्राणादयो वाक्यशेषात् ’ — के पुनस्ते पञ्चजना नामेति तदुच्यते प्राणादय इति— ‘ यस्मिन्पञ्च पञ्चजनाः ’ इत्यत उत्तरस्मिन्मन्त्रे ब्रह्मस्वरूपनिरूपणाय प्राणादय. पञ्च निर्दिष्टा· । तेऽत्र वाक्यशेषगता. सनिधानात्पञ्चजना विवक्ष्यन्ते । जनसबन्धाच्च प्राणादयो जनशब्दभाजो भवन्ति । जनवचनश्च पुरुषशब्द प्राणेषु प्रयुक्त. ‘ते वा एते पञ्च ब्रह्मपुरुषा ’ ( छाउ ३।१३।६ ) इत्यत्र । क्वचिच्च ‘ यत्पाञ्चजन्यया विशा ’ ( ऋ स ८।५३।७ ) इति प्रजापर· प्रयोग. पञ्चजनशब्दस्य दृश्यते । तत्परिग्रहेऽपीह न कश्चिद्विरोध. ।

१।४।१२

‘ ज्योतिषैकेषामसत्यन्ने ’ — भवेयुस्तावत्प्राणादयः पञ्चजना माध्यदिनानां येऽन्न प्राणादिष्वामनन्ति । काण्वानां तु कथ प्राणादय. पञ्चजना भवेयुर्येऽन्न प्राणादिषु नाऽऽमनन्तीति । अत उत्तर पठति — ज्योतिषेति । असति अपि काण्वानामन्ने ज्योतिषा तेषा पञ्चसख्या पूर्येत । तेऽपि हि ‘ यस्मिन्पञ्च पञ्चजना ’ इत्यत पूर्वस्मिन्मन्त्रे ब्रह्मस्वरूपनिरूपणायैव ज्योतिरधीयते ‘तद्देवा ज्योतिषा ज्योति.’ इति ।

* ब्रशकर. १।४।१३

( ३ ) पञ्चजनसज्ञा पञ्चाऽऽकाशश्च यत्र प्रतिष्ठित इत्यर्थ । अत्राऽऽकाशशब्दो भूतान्तरस्याप्युपलक्षक. । पूर्वस्मिन्मन्त्रे ज्योतिषा ज्योतिरिति षष्ठ्यन्तज्योति शब्दस्यार्थनिर्णायकसापेक्षत्वात्पञ्चजनशब्दस्याप्यर्थनिर्णायकान्तरसापेक्षत्वात्पञ्चसख्यान्वययोग्यानि ज्योतीपीन्द्रियाण्येवेत्यवसीयते । तादृशमात्मानममृत ब्रह्मेत्येव विद्वानन्योऽप्यमृतो भवतीत्यर्थ । रग.

( ४ ) ‘ज्योतिषैकषामसत्यन्ने’ — एकेषा काण्वाना पाठेऽसत्यन्ने ज्योतिषा पञ्चजना इन्द्रियाणीति विज्ञायन्ते । तेषा वाक्यशेष प्रदर्शनार्थ । एतदुक्त भवति । ‘यस्मिन्पञ्च पञ्चजना ’ इत्यस्मात्पूर्वस्मिन्मन्त्रे ‘त देवा ज्योतिषा ज्योतिरायुर्होपासतेऽमृतम्’ ( बृउ ४।४।१६ ) इति ज्योतिषा ज्योतिष्ट्वेन ब्रह्मण्यभिधीयमाने ब्रह्मार्थीनस्वकार्याणि कानिचिज्ज्योतींषि प्रतिपन्नानि । तानि च विषयाणा प्रकाशकानीन्द्रियाणीति ‘यस्मिन्पञ्च पञ्चजना.’ इत्यनिर्धारितविशेषनिर्देशेनावगम्यन्ते इति ।

पञ्चजनशब्दनिर्दिष्टानीन्द्रियाण्याकाशशब्दप्रदर्शितानि महाभूतानि च ब्रह्मणि प्रतिष्ठितानीति सर्वतत्त्वाना ब्रह्माश्रयत्वप्रतिपादनान्न तन्त्रसिद्धपञ्चविंशतितत्त्वप्रसङ्ग ।

$ रामानुज १।४।१३

( ५ ) ‘ न सख्योपसग्रहादपि नानाभावादतिरेकाच्च’ — ‘यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठित.’ इत्यादिषु चतुसख्योपसग्रहेऽपि न विरोधः । तस्यैवाकाशादिषु नानाभावात्तदतिरिक्तस्वरूपत्वाच्च ।

¶ ब्रमध्व १।४।१२

( ६ ) ‘ यस्मिन् पञ्चपञ्च जना. ’ इत्युदाहृतवाक्ये प्राणादय. पञ्चैव पुरुषभेदेन व्यक्तिभेदात् पञ्चपञ्चेति

---

* भास्कर निंबार्क वल्लभ ब्रशकरवत् । रामानुज. श्रीकठ १।४।११,१२ व्याख्यान ब्रशकरवत् ।

$ श्रीकठ रामानुजवद्भाव ।

¶ अन्यत् ब्रशकरवत् ।

वीप्सयोक्ताः ते च कार्यभूता एव शक्तय इति ।

विज्ञान. १।४।१२

**प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदु ।**
**ते निचिक्युर्ब्रह्म पुराणमग्र्यम् ॥**

( १ ) किं च तेन हि चैतन्यात्मज्योतिषा अवभास्यमान. प्राणः आत्मभूतेन प्राणिति, तेन प्राणस्यापि प्राण. सः, त प्राणस्य प्राणम् । तथा चक्षुषोऽपि चक्षुः । उत श्रोत्रस्यापि श्रोत्रम् । ब्रह्मशक्त्यधिष्ठिताना हि चक्षुरादीना दर्शनादिसामर्थ्यम् । स्वत. काष्ठलोष्टसमानि हि तानि चैतन्यात्मज्योति.शून्यानि । मनसोऽपि मन' इति ये विदु. — चक्षुरादिव्यापारानुमितास्तित्व प्रत्यगात्मान, न विषयभूत ये विदुः—ते निचिक्यु निश्चयेन ज्ञातवन्त. ब्रह्म, पुराण चिरन्तन, अग्र्य अग्रे भवम् । 'तद्यदात्मविदो विदुः' इति ह्याथर्वणे ।

शंकर

( २ ) प्राणस्येति प्राणशब्देन स्पर्शेन्द्रिय गृह्यते । वायुसबन्धित्वात्स्पर्शेन्द्रियस्य । मुख्यप्राणस्य ज्योतिःशब्देन प्रदर्शनायोगात् । चक्षुष इति चक्षुरिन्द्रियम् । श्रोत्रस्येति श्रोत्रेन्द्रियम् । अन्नस्येति घ्राणरसनयोस्तन्त्रेणोपादानम् । अन्नशब्दोदितपृथिवीसबन्धित्वात् घ्राणेन्द्रियमनेन गृह्यते । अद्यतेऽनेनेत्यन्नमिति रसनेन्द्रियमपि गृह्यते । मनस इति मन । घ्राणरसनयोस्तन्त्रेणोपादानमिति पञ्चत्वमप्यविरुद्धम् । प्रकाशकानि मन.पर्यन्तानीन्द्रियाणि पञ्चजनशब्दनिर्दिष्टानि । तदविरोधाय घ्राणरसनयोस्तन्त्रेणोपादानम् ।

* रामानुज. १।४।१३

( ३ ) 'प्राणश्चक्षुस्तथैवान्न मन. श्रोत्र च पञ्चमम् । मूलप्रकृतिसयुक्त यद्वत प्रतिपूरुषम् ॥ '

मध्व.

**मनसैवानुद्रष्टव्य नेह नानाऽस्ति किंचन ।**
**मृत्यो. स मृत्युमाप्नोति य इह नानेव पश्यति ॥**

( १ ) तद्ब्रह्मदर्शने साधनमुच्यते — मनसैव परमार्थज्ञानसस्कृतेन आचार्योपदेशपूर्वक च अनुद्रष्टव्यम् । तत्र च दर्शनविषये ब्रह्मणि न इह नाना अस्ति किंचन किंचिदपि । असति नानात्वे, नानात्वमध्यारोपयति अविद्यया । सः मृत्यो. मरणात्, मृत्यु मरण आप्नोति । कोऽसौ ? य इह नानेव पश्यति । अविद्याध्यारोपणव्यतिरेकेण नास्ति परमार्थतो द्वैतमित्यर्थः ।

शकर.

( २ ) तज्ज्ञाने साधनमाह—मनसैवानुद्रष्टव्यम् । अनु पश्चाच्छ्रवणमननानन्तरमित्यर्थ. । मनसैव द्रष्टव्यम् । दर्शनसमानाकारस्मृतिसततिरूपध्यान विशुद्धेन मनसा सपाद्यमित्यर्थः ।

नन्वेकस्याऽऽत्मनः पञ्चजनभूताकाशाद्याधारत्व न सभवतीति मन्यमान प्रत्याह — नेह नानाऽस्ति किंचन । इह द्रष्टव्ये ब्रह्मणि । नानाशब्दो भावप्रधान. । नानात्वमित्यर्थः । यस्मिन्पञ्च पञ्चजना इति मन्त्रनिष्ठ आत्मनि किंचन नानात्व नास्ति भेदलेशोऽपि नास्तीत्यर्थः ।

मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति । इवशब्दोऽल्पार्थः । निखिलप्रपञ्चाधारभूत आत्मनि अल्पमपि नानात्व यः पश्यति स ससारात्ससारमाप्नोति ।

---

* रग श्रीकठ रामानुजवत् ।

(१) बृउ ४।४।१८, शब्रा १४।७।२।२१ श्रोत्र + ( अन्नस्यान्न ), ब्रशकर १।१।२३, १।३।३९ १।४।१२ शब्रावत्, भास्कर १।१।२३ १।४।१२ शब्रावत्, रामानुज १।४।१२ शब्रावत्, निबार्क १।४।११ शब्रावत्, ब्रमध्व १।४।१३ शब्रावत्, श्रीकठ १।४।१२, १३ शब्रावत्, श्रीकर १।१।२४, १।३।३९, १।४।११ १।४।१२ शब्रावत्, २।४।१०, वल्लभ १।४।१२ शब्रावत्, विज्ञान. १।४।१२ शब्रावत्, बलदेव १।२।१, १।४।१२

(१) बृउ ४।४।१९, शब्रा १४।७।२।२१, २२ मनसैवानुद्रष्टव्य ( मनसैवाप्तव्य ); ब्रशंकर १।४।२२, २।१।१४, २।३।४८, ३।२।३६, ४।१।३, भास्कर २।१।१४, रामानुज १।१।१ ( पृ १४, ६३, १२१, १२२ ), १।१।४ ( पृ १५१ ), २।१।१५ ( पृ ४२३, ४३६, ४४३ ), ३।३।३९, निंबार्क ३।३।३९, ब्रमध्व ३।२।३१, श्रीकर २।२।२७, ३।३।३८, ३९, वल्लभ १।१।४, १।४।१५, विज्ञान १।१।३ ( पृ ७२ ), १।१।४ ( पृ १११ ), १।४।२०, २।१।१४, २।३।४३, ३।२।३०, बलदेव १।२।१, ३।२।२४, ३।३।३९.

अत्यन्त ससारमाप्नोतीत्यर्थ । अस्य वाक्यस्य परैरप्येव व्याख्यातत्वान्नात्र वाक्ये प्रपञ्चमिथ्यात्वप्रतिपादन प्रका(त्या)शा कार्या । रग.

( ३ ) इति भेदनिषेधो बहुधा दृश्यत इति । तत्कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया च तदात्मकत्वेनैक्यात्तत्प्रत्यनीकनानात्व प्रतिषिध्यते । न पुन. 'बहु स्यां प्रजायेय' ( छाउ ६।२।३ ) इति बहुभवनसकल्पपूर्वक ब्रह्मणो नानात्व श्रुतिसिद्ध प्रतिषिध्यत इति परिहृतम् । नानात्वनिषेधादियमपरमार्थविषयेति चेन्न । प्रत्यक्षादिसकलप्रमाणानवगतनानात्व दुरारोह ब्रह्मण: प्रतिपाद्य तदेव बाध्यते इत्युपहास्यमिदम् ।

* रामानुज १।१।१ ( पृ ६३-६४ )

( ४ ) 'तस्य रूपगुणाद्येषु न कश्चिद्भेद इष्यते । तद्भेददर्शी सयाति मृत्योर्मृत्युमिव तम ॥' मध्व

**एकधैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम् ।**
**विरज पर आकाशादज आत्मा महान्ध्रुव' ॥**

( १ ) यस्मादेव तस्मात्, एकधैव एकेनैव प्रकारेण विज्ञानघनैकरसप्रकारेण आकाशवन्निरन्तरेण अनुद्रष्टव्यम् । यस्मात् एतद्ब्रह्म अप्रमय अप्रमेय, सर्वैकत्वात् । अन्येन हि अन्यत् प्रमीयते । इद तु एकमेव, अतः अप्रमेयम् । ध्रुव नित्य कूटस्थ अविचालीत्यर्थ. । ननु विरुद्धमिदमुच्यते—अप्रमेय ज्ञायत इति च ; 'ज्ञायते' इति प्रमाणैर्मीयत इत्यर्थ., 'अप्रमेयम्' इति च तत्प्रतिषेधः—नैष दोष., अन्यवस्तुवत् अनागमप्रमाणप्रमेयत्वप्रतिषेधार्थत्वात् । यथा अन्यानि वस्तूनि आगमनिरपेक्षै' प्रमाणैः विषयीक्रियन्ते, न तथा एतत् आत्मतत्त्व प्रमाणान्तरेण विषयीकर्तुं शक्यते । सर्वस्यात्मत्वे केन क पश्येत् विजानीयात्—इति प्रमातृप्रमाणादिव्यापारप्रतिषेधेनैव आगमोऽपि विज्ञापयति, न तु अभिधानाभिधेयलक्षणवाक्यधर्माङ्गीकरणेन । तस्मात् न आगमेनापि स्वर्गमेर्वादिवत् तत् प्रतिपाद्यते । प्रतिपादयित्रात्मभूत हि तत् । प्रतिपादयितुः प्रतिपादनस्य प्रतिपाद्यविषयत्वात्, भेदे हि सति तत् भवति । ज्ञान च तस्मिन् परात्मभावनिवृत्तिरेव । न तस्मिन् साक्षात् आत्मभाव' कर्तव्य, विद्यमानत्वादात्मभावस्य । नित्यो हि आत्मभावः सर्वस्य अतद्विषय इव प्रत्यवभासते । तस्मात् अतद्विषयाभासनिवृत्तिव्यतिरेकेण न तस्मिन्नात्मभावो विधीयते । अन्यात्मभावनिवृत्तौ, आत्मभाव स्वात्मनि स्वाभाविको यः, स केवलो भवतीति — आत्मा ज्ञायत इत्युच्यते । स्वतश्चाप्रमेय' प्रमाणान्तरेण न विषयीक्रियते इति उभयमप्यविरुद्धमेव । विरज. विगतरज', रजो नाम धर्माधर्मादिमल तद्रहित इत्येतत् । परः—परो व्यतिरिक्तः सूक्ष्मो व्यापी वा आकाशादपि अव्याकृताख्यात् । अज' न जायते । जन्मप्रतिषेधात् उत्तरेऽपि भावविकाराः प्रतिषिद्धाः, सर्वेषा जन्मादित्वात् । आत्मा, महान्परिमाणतः, महत्तर' सर्वस्मात् । ध्रुवः अविनाशी । शकर.

(२) अप्रमयमपरिच्छेद्य सर्वभूतात्मभूत ब्रह्मैकत्वेनैव द्रष्टव्यमित्यर्थ. । व्यासार्यैस्तु एकधाऽनुद्रष्टव्य केषांचित्स्वनिष्ठत्व ब्रह्मान्यपरतन्त्रत्व वा न मन्तव्यमपि तु परमात्मपरतन्त्रतयैकरूपमेव द्रष्टव्यमित्यर्थ इत्युक्तम् । 'नेह नानाऽस्ति किंचन' इत्यत्रापि अब्रह्मात्मकनानात्व निषिध्यत इत्युक्तम् । तदप्यविरुद्धमेव । एकार्थपर्यवसायित्वादुद्वयोरपीति द्रष्टव्यम् । विरज इति । विरजो रागादिदोषरहितः । आकाशादपि पर कारणभूतः । ध्रुवः स्थिरोऽविनाशीत्यर्थः । अज उत्पत्तिरहितः । एवभूतो महानात्मा । रंग

(३) 'तस्मादेकप्रकारेण द्रष्टव्यो भगवान् हरिः । परिमाणविहीनत्वादप्रमेय इतीरितः ॥' इत्यादिवचनादप्रमेयत्वमवाच्यत्वममनोविषयत्व च सर्वात्मना न । 'मनसैवानुद्रष्टव्यम्' इत्युक्तत्वात् । न च केनाप्यवाच्यस्य लक्षणा दृष्टा । क्षीरमाधुर्यविशेषादेरपि तत्तच्छब्देनैव वाच्यत्वात् । 'विशद क्षीरमाधुर्ये गुडे तीक्ष्ण घृते स्थिरम्' इत्यादि च । न च निर्गुणस्य सत्त्वमेवास्ति । गुणभेदादीनामपि सन्त्येव गुणाः । न चानवस्था । स्वनिर्वाहकत्वात् ।

---

* बृउ ४।४।२२ इत्यत्रापि द्रष्टव्यम् ।

(१) बृउ ४।४।२०, शब्रा १४।७।२।२२, २३ एकधैवा ( मनसैवा ) महान्ध्रु ( महा ध्रु ), रामानुज ३।३।३९, श्रीकर ३।३।३८, ३९, विज्ञान ११।१३ ( पृ ७१) एकधैवा ( मनसैवा ), ११।२०, २१।१४, २।३।४३ दप्रमय ( दप्रमेय )

'अवाच्यममनोगम्यमगुण चेत्कुतोऽस्ति तत् । तस्मादेव वदन्यस्तु शून्यतामर्थतो वदेत् । गुणाश्च गुणिन सर्वे स्वेनैव गुणिनो गुणा ॥' इत्यादि च ।

मध्व

**तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण । नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनꣳ हि तदिति * ॥**

(१) त ईदृशमात्मानमेव, धीर. धीमान् विज्ञाय उपदेशत. शास्त्रतश्च, प्रज्ञा शास्त्राचार्योपदिष्टविषयां जिज्ञासापरिसमाप्तिकरीं, कुर्वीत ब्राह्मण. — एव प्रज्ञाकरणसाधनानि सन्यासशमदमोपरमतितिक्षासमाधानानि कुर्यादित्यर्थ । न अनुध्यायात् नानुचिन्तयेत्, बहून् प्रभूतान् शब्दान् । तत्र बहुत्वप्रतिषेधात् केवलात्मैकत्वप्रतिपादका स्वल्पा. शब्दा अनुज्ञायन्ते । 'ओमित्येव ध्यायथ आत्मानम्' 'अन्या वाचो विमुञ्चथ' इति च आथर्वणे । वाचो विग्लापन विशेषेण ग्लानिकर श्रमकर, हि यस्मात्, तत् बहुशब्दाभिध्यानमिति ।

¶ शकर.

(२) तादृशमात्मान धीर. प्राज्ञशाली विज्ञाय श्रवणमननाभ्या ज्ञात्वा प्रज्ञा निदिध्यासन कुर्वीतेत्यर्थ. । अत्र ब्राह्मणग्रहण द्विजातेरुपलक्षणम् । यद्वा ब्रह्माधीत इति ब्राह्मणोऽधीतवेद इत्यर्थ. । इति. मन्त्रसमासौ ।

रग.

(३) 'सर्वमस्य वशे यस्माद्धरि. सर्ववशी ततः । सर्वस्य ब्रह्मरुद्रादेरन ईशान एव च । गुणाधिक. पालकश्चेत्यतोऽधिपतिरीरित ॥' इति च । 'भूत एव चाधिपतिर्नास्याधिपत्यमादिमत् । नित्यबोधात्मकत्वाद्यो मुनि. प्रोक्तो जनार्दनः । त विद्वाश्च मुनिर्नाम बोधस्तस्याप्यमुख्यत । य विदित्वा विमुक्ताश्चायुक्तकामविवर्जिता । उत्पत्तिलयहीनाश्च नित्यानन्दैकभोगिन. । आनन्दभिक्षा विष्णूत्था चरन्त्यज्ञानवर्जिताः । स एष मोक्षदो विष्णुर्यत्कल्याण कृत मया । पाप कृत मयेत्येतन्न कदाचित्करिष्यति । कृते मया पुण्यपापे इति यच्चेतनात्मनाम् । तत्सर्वमत एवोक्त विष्णो· सर्वेश्वरेश्वरात् । तीर्णो हि वर्तते नित्य पुण्यपापे जनार्दन । नैन कदाचित्तपत. पुण्यपापे जनार्दनम् ॥' इति च ।

मध्व.

(४) 'सर्वथाऽपि त एवोभयलिङ्गात्' — अत्रैवकारेण भगवदतिरिक्त प्रतिषिद्ध्य तद्विषयकज्ञानानुकूल प्रयत्न श्रवणात्मक विज्ञायेति विधाय स्मरणमपि तन्मात्रविषयकमेव प्रज्ञा कुर्वीतेति वचनेन विधाय तदेकनिष्ठताहेतुभूतानामेव शब्दानामावर्तनमर्थानुसधानमपि कर्तव्य, नान्येषामिति नानुध्यायात् बहूनित्यनेनोक्तवती । अत्रान्वित्युपसर्गेण ध्यानस्य पश्चाद्भावित्वमुच्यते । तेन योग्यतया श्रवणकीर्तने एव तत्पूर्वभाविनी प्राप्येते ।

एतेन भगवद्धर्माणामात्मधर्मत्वेनान्तरङ्गत्वादाश्रमकर्मणो देहधर्मत्वेन बहिरङ्गत्वात्तदविरोधेनैव तत् कर्तव्यमिति स्थितम् । अत एव भगवद्धर्मोऽन्यधर्मे प्रतिषिद्ध्य तेषां सर्वेभ्य आधिक्य ज्ञापयितु, 'स वा अयमात्मा' 'सर्वस्य वशी' इत्यादिना भगवन्माहात्म्यमुक्तम् ।

वल्लभ ३।४।३३

(५) इत्यादिश्च निर्गुणविद्याविधिः तमेवेत्येवकारेणोपाधितद्गुणादिविषयत्वस्य ज्ञाने प्रतिषेधादिति बोध्यम् ।

विज्ञान. ३।३।२०

वेदयज्ञदानतपसा आत्मविद्याहेतुत्व, पुत्रवित्तलोकैषणात्रयसन्यासिनो ब्रह्मज्ञानिनः, पापपुण्यतरणसाधनं आत्मज्ञान, शमदमादीना आत्मदर्शनहेतुत्व, आत्मा वसुदान, अभय ब्रह्मैव ब्रह्मज्ञ

**स वा एष महानज आत्मा योऽयं विज्ञानमय. प्राणेषु । य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते ।**

* रामानुज बृउ २।४।५ (पृ १०९४) इत्यत्र द्रष्टव्यम् ।

¶ छाउ ८।७।१ इत्यत्र (पृ ९६९) अशकर द्रष्टव्यम् ।

(१) बृउ ४।४।२१, शाबा १४।७।२।२३, अशकर १।३।२, ४।१।१, भास्कर १।१।१, ४।१।१, रामानुज १।१।१ (पृ ८, १२८), मध्व ध्यायाद्व (ध्यायेद्व), अमध्व १।१।५, श्रीकर ३।३।६१, वल्लभ ३।४।३३, विज्ञान १।१।१ (पृ १), ३।३।४, २०, ४।१।१, बलदेव २।१।३, ३।३।२७, २८, ५२

(१) बृउ ४।४।२२, शाबा. १४।७।२।२४—२७ स वा एष . न कामयन्ते ( स वा अयमात्मा सर्वस्य

सर्वस्य वशी। सर्वस्येशान·। सर्वस्याधिपति। स न साधुना कर्मणा भूयात्। नो एवासाधुना कनीयान्। एष सर्वेश्वर। एष भूताधिपति। एष भूतपाल। एष सेतुर्विधरण एषा लोकानामसभेदाय। तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन। एतमेव विदित्वा मुनिर्भवति। एतमेव प्रव्राजिनो लोकमिच्छन्त प्रव्रजन्ति। एतद्ध स्म वै तत्पूर्वे विद्वाꣳस प्रजा न कामयन्ते। कि प्रजया करिष्यामो येषा नोऽयमात्माऽय लोक इति। ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति। या ह्येव पुत्रैषणा सा वित्तैषणा। या वित्तैषणा सा लोकैषणा। उभे ह्येते एषणे एव भवत। स एष नेति नेत्यात्मा। अगृह्यो न हि गृह्यते। अशीर्यो न हि शीर्यते। असङ्गो न हि सज्यते। असितो न व्यथते। न रिष्यति। एतमु हैवैते न तरत इति। अत पापमकरवमिति। अत कल्याणमकरवमिति। उभे उ हैवैष एते तरति। नैन कृताकृते तपत *॥

(१) सहेतुकौ बन्धमोक्षौ अभिहितौ मन्त्रब्राह्मणाभ्याम्। श्लोकैश्च पुन मोक्षस्वरूप विस्तरेण प्रतिपादितम्। एव एतस्मिन् आत्मविषये सर्वो वेद. यथा उपयुक्तो भवति, तत् तथा वक्तव्यमिति तदर्थेय कण्डिका आरभ्यते। तच्च यथा अस्मिन्प्रपाठके अभिहित सप्रयोजन अनूद्य अत्रैव उपयोग कृत्स्नस्य वेदस्य काम्यराशिवर्जितस्य—इत्येवमर्थ उक्तार्थानुवाद. 'स वा एष' इत्यादि। स इति उक्तपरामर्शार्थ·। कोऽसौ उक्त परामृश्यते ? त प्रतिनिर्दिशति—एष विज्ञानमय इति—अतीतानन्तरवाक्योक्तसप्रत्ययो मा भूदिति, य: एष·। कतम एष इत्युच्यते—विज्ञानमय प्राणेष्विति। उक्तवाक्योल्लिङ्गन सशयनिवृत्त्यर्थम्। उक्त हि

वशी सर्वस्येशान सर्वस्याधिपति सर्वमिद प्रशास्ति यदिद किंच स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष भूताधिपतिरेष लोकेश्वर एष लोकपाल स सेतुर्विधरण एषा लोकानाममभेदाय ॥ तमेत वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन चैतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमीप्सन्त प्रव्रजन्ति ॥ एतद्ध स्म वै तत्पूर्वे ब्राह्मणा अनूचाना विद्वाꣳस प्रजा न कामयन्ते ) असङ्गो न हि तपत ( असङ्गोऽसितो न सज्यते न व्यथत इत्यन पापमकरवमित्यत कल्याणमकरवमित्युभे उभे ह्येष एते तरत्यमृत साध्वसाधुनी नैन कृताकृते तपतो नास्य केन चन कर्मणा लोको मीयते ), **शकर** १।१।२०, १।३।१६, ४२, ४३, २।१।१४, २।३।२१, २९, ४३, ३।३।३९, ३।४।१५, १७, १८, २६, ३२, ३३, ३४, ४।१।२, १४, १५, १६, **भास्कर** १।१।१, ४, १।३।४३, ३।३।२९, ३।४।१५, १७, २६, ३४, ४।१।१४, १६, रग प्रव्रजन्ति ( परिव्रजन्ति ) सज्यते ( सज्जते ), **रामानुज** १।१।१ ( पृ ७, ११ ), १।१।४ ( पृ १५९ ), १।२।२३, १।३।१५, ४४, २।२।३५, २।३।२२, ३।३।३८, ३९, ३।४।८, १५, १७, २५, २६, ३३, ४६, ४।१।१६, ४।३।११, ४।४।२० एवासाधुना + ( कर्मणा ), **निबार्क** १।३।४४, २।३।२१, ३।३।३८, ३।४।८, १५, २६, ३३, ४।४।२०, **मध्व** पुत्रै ( पुत्रे ) वित्तै ( वित्त ) लोकै ( लोके ) एषणे ( ईषणे ), **ब्रमध्व** १।३।१६, ४३, ३।४।२६, **श्रीकठ** १।१।१ ( पृ ३९ ), १।३।१६, ४४, २।३।२०, २१, २२, ३।३।३८, ३।४।१५, १८, १९, २५, २६, ३२, ४।१।१६, **श्रीकर** १।१।२१, १।३।१६, ४२, ४३, २।३।१८, २०, ३।१।९, ३।२।३०, ३४, ३।३।३८, ३९, ३।४।१, ८, १५, १७, २५, २६, ३३, ३६, ४।१।१६, १८, ४।४।११, २०; **वल्लभ** १।१।२ (पृ ६९), १।३।४३, २।३।२१, ३।२।६, ३८, ३।३।२७, ३५, ३।४।३, ८, १५, १८, १९, २०, ३३, ३५, ४७, ४।१।३, १४, १६, ४।२।१९, ४।४।९ 'तमेत वेदानु न कामयन्ते' इति, 'उभे उ हैवैष' इत्यादि च शब्रावदपि, **विज्ञान** १।१।१ ( पृ २४ ), १।१।२०, १।३।४३, ३।४।१७, २१, २६, ४७, **बलदेव** १।१।१, ४, १।३।१६, ४३, २।१।१, २।२।३७, २।३।१८, २०, ३।३।२९, ३।४।८, २६, ४९, ४।१।१४, १५, १६

* अथव्याख्यानानि बृउ ४।३।७ (पृ १३९४) इत्यत्र द्रष्टव्यानि। छाउ २।२३।१, ६।१४।२, ८।१।१ (पृ ७८७, ९२७, ९५३ ) इत्यत्रापि अनुसधेयम्। 'स एष नेति नेति' इति वाक्यस्य स्थलनिर्देशादि बृउ ३।९।२६ (पृ ११७६ ) इत्यत्र द्रष्टव्यम्।

पूर्वं जनकप्रश्नारम्भे 'कतम आत्मेति योऽय विज्ञानमय. प्राणेषु' इत्यादि। एतदुक्त भवति—योऽय 'विज्ञानमयः प्राणेषु' इत्यादिना वाक्येन प्रतिपादित स्वय ज्योतिरात्मा, स एष. कामकर्माविद्यानामनात्मधर्मत्व प्रतिपादनद्वारेण मोक्षित परमात्मभावमापादित.—पर एवाय नान्य इति। एष स. साक्षान्महानज आत्मेत्युक्त। योऽय विज्ञानमय प्राणेष्विति यथाव्याख्यातार्थ एव। य एष अन्तर्हृदये हृदयपुण्डरीकमध्ये य एष आकाशो बुद्धिविज्ञानसश्रय', तस्मिन्नाकाशे बुद्धिविज्ञानसहिते शेते तिष्ठति। अथवा सप्रसादकाले अन्तर्हृदये य एष आकाश पर एव आत्मा निरुपाधिकः विज्ञानमयस्य स्वस्वभाव, तस्मिन् स्वस्वभावे परमात्मनि आकाशाख्ये शेते। चतुर्थे एतद्व्याख्यात 'क्वैष तदाऽभूत्' इत्यस्य प्रतिवचनत्वेन। स च सर्वस्य ब्रह्मेन्द्रादे वशी। सर्वो हि अस्य वशे वर्तते। उक्त च 'एतस्य वा अक्षरस्य प्रशासने' इति। न केवल वशी, सर्वस्य ईशान' ईशिता च ब्रह्मेन्द्रप्रभृतीनाम्। ईशितृत्व च कदाचित् जातिकृत, यथा राजकुमारस्य बलवत्तरानपि भृत्यान्प्रति, तद्वन्मा भूदित्याह—सर्वस्याधिपति. अधिष्ठाय पालयिता, स्वतन्त्र इत्यर्थः। न राजपुत्रवत् अमात्यादिभृत्यतन्त्र। त्रयमप्येतत् वशित्वादि हेतुहेतुमद्रूपम्—यस्मात् सर्वस्याधिपतिः, ततोऽसौ सर्वस्येशान। यो हि यमधिष्ठाय पालयति, स त प्रतीष्ट एवेति प्रसिद्ध, यस्माच्च सर्वस्येशान', तस्मात् सर्वस्य वशीति। किंचान्यत् स एव भूतो हृद्यन्तर्ज्योति. पुरुषो विज्ञानमय न साधुना शास्त्रविहितेन कर्मणा भूयान्भवति, न वर्धते पूर्वावस्थात. केनचिद्धर्मेण। नो एव शास्त्रप्रतिषिद्धेन असाधुना कर्मणा कनीयान् अल्पतरो भवति, पूर्वावस्थातो न हीयते इत्यर्थः। किं च सर्वो हि अधिष्ठानपालनादि कुर्वन् परानुग्रहपीडाकृतेन धर्माधर्माख्येन युज्यते। अस्यैव तु कथ तदभाव इत्युच्यते—यस्मात् एष सर्वेश्वरः सन् कर्मणोऽपीशितु भवत्येव शीलमस्य, तस्मात् न कर्मणा संबध्यते। किंच एष भूताधिपतिः ब्रह्मादिस्तम्बपर्यन्ताना भूतानामधिपतिरित्युक्तार्थं पदम्।

एष भूताना तेषामेव पालयिता रक्षिता। एष सेतुः। किंविशिष्ट इत्याह—विधरणः वर्णाश्रमादिव्यवस्थाया विधारयिता। तदाह—एषा भूरादीना ब्रह्मलोकान्ताना लोकाना असभेदाय असभिन्नमर्यादायै। परमेश्वरेण सेतुवदविधार्यमाणा लोका. सभिन्नमर्यादाः स्यु। अतो लोकानामसभेदाय सेतुभूतोऽय परमेश्वर, य' स्वय ज्योतिरात्मैव एववित् सर्वस्य वशी—इत्यादि ब्रह्मविद्यायाः फलमेतन्निर्दिष्टम्। 'किंज्योतिरय पुरुषः' इत्येवमादिषष्ठप्रपाठकविहितायामेतस्या ब्रह्मविद्याया एवफलाया काम्यैकदेशवर्जित कृत्स्न कर्मकाण्ड तादर्थ्येन विनियुज्यते। तत् कथमित्युच्यते—तमेत एवभूतमौपनिषद पुरुष, वेदानुवचनेन मन्त्रब्राह्मणाध्ययनेन नित्यस्वाध्यायलक्षणेन, विविदिषन्ति वेदितुमिच्छन्ति। के ? ब्राह्मणा.। ब्राह्मणग्रहणमुपलक्षणार्थम्। अविशिष्टो हि अधिकार. त्रयाणा वर्णानाम्। अथवा कर्मकाण्डेन मन्त्रब्राह्मणेन वेदानुवचनेन विविदिषन्ति। कथ विविदिषन्तीत्युच्यते—यज्ञेनेत्यादि।

ये पुन. मन्त्रब्राह्मणलक्षणेन वेदानुवचनेन प्रकाश्यमान विविदिषन्ति — इति व्याचक्षते, तेषां आरण्यकमात्रमेव वेदानुवचन स्यात्। न हि कर्मकाण्डेन पर आत्मा प्रकाश्यते। 'त त्वौपनिषदम्' इति विशेषश्रुते'। वेदानुवचनेनेति च अविशेषितत्वात् समस्त ग्राहि इद वचनम्। न च तदेकदेशोत्सर्गः युक्तः। ननु त्वत्पक्षेऽपि उपनिषद्वर्जमिति एकदेशत्व स्यात्—न, आद्यव्याख्याने अविरोधात् अस्मत्पक्षे नैष दोषो भवति। यदा वेदानुवचनशब्देन नित्यः स्वाध्यायो विधीयते, तदा उपनिषदपि गृहीतैवेति, वेदानुवचनशब्दार्थैकदेशो न परित्यक्तो भवति। यज्ञादिसहपाठाच्च—यज्ञादीनि कर्माण्येव अनुक्रमिष्यन् वेदानुवचनशब्द प्रयुङ्क्ते। तस्मात् कर्मैव वेदानुवचनशब्देनोच्यत इति गम्यते। कर्म हि नित्यस्वाध्यायः।

कथ पुनः नित्यस्वाध्यायादिभिः कर्मभिः आत्मान विविदिषन्ति ? नैव हि तानि आत्मान प्रकाशयन्ति, यथा उपनिषदः—नैष दोषः, कर्मणां विशुद्धिहेतुत्वात्। कर्मभिः सस्कृता हि विशुद्धात्मानः शक्नुवन्ति आत्मानमुपनिषत्प्रकाशित अप्रतिबन्धेन वेदितुम्। तथा ह्याथर्वणे — 'विशुद्धसत्त्वस्ततस्तु त पश्यते निष्कल

ध्यायमान ’ इति । स्मृतिश्च ‘ ज्ञानमुत्पद्यते पुसा क्षयात्पापस्य कर्मणः ’ इत्यादि । 

कथ पुन. नित्यानि कर्माणि सस्कारार्थानीत्यव गम्यते ? ‘ स ह वा आत्मयाजी यो वेदेद मेऽनेनाङ्ग सस्क्रियत इद मेऽनेनाङ्गमुपधीयते ’ इत्यादिश्रुते । सर्वेषु च स्मृतिशास्त्रेषु कर्माणि सस्कारार्थान्येव आचक्षते ‘अष्टा चत्वारिंशत्सस्कारा ’ इत्यादिषु । गीतासु च—‘यज्ञो दान तपश्चैव पावनानि मनीषिणाम्’ (भ गी १८।५)‘सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषा ’ (भ गी ४।३०) इति । यज्ञेनेति—द्रव्ययज्ञा ज्ञानयज्ञाश्च सस्कारार्था. । सस्कृतस्य च विशुद्धसत्त्वस्य ज्ञानोत्पत्तिरप्रतिबन्धेन भविष्यति । अतो यज्ञेन विविदिषन्ति । दानेन —दानमपि पापक्षयहेतुत्वात् धर्मवृद्धिहेतुत्वाच्च । तपसा, तप इति अविशेषेण कृच्छ्रचान्द्रायणादिप्राप्तौ विशेषणम् — अनाशकेनेति । कामानशन अनाशक, न तु भोजननिवृत्ति । भोजननिवृत्तौ म्रियत एव, न आत्मवेदनम् । वेदानुवचनयज्ञदानतप.शब्देन सर्वमेव नित्य कर्म उपलक्ष्यते । एव काम्यवर्जित नित्य कर्मजात सर्वं आत्मज्ञानोत्पत्तिद्वारेण मोक्षसाधनत्व प्रतिपद्यते । एव कर्मकाण्डेन अस्य एकवाक्यतावगतिः । एव यथोक्तेन न्यायेन एतमेव आत्मान विदित्वा यथाप्रकाशित, मुनिर्भवति, मननान्मुनिः, योगी भवतीत्यर्थः । एतमेव विदित्वा मुनिर्भवति, नान्यम् । ननु अन्यवेदनेऽपि मुनित्व स्यात् । कथमवधार्यते—एतमेवेति—बाढ, अन्यवेदनेऽपि मुनिर्भवेत् । किं तु अन्यवेदने न मुनिरेव स्यात्, किं तर्हि कर्म्यपि भवेत् स । एत तु औपनिषद पुरुष विदित्वा, मुनिरेव स्यात्, न तु कर्मी । अत. असाधारण मुनित्व विवक्षितमस्येति अवधारयति—एतमेवेति । एतस्मिन्हि विदिते, केन क पश्येदित्येव क्रियासभवात् मननमेव स्यात् । किं च एतमेव आत्मान स्व लोक इच्छन्त. प्रार्थयन्त. प्रव्राजिन प्रव्रजनशीलाः प्रव्रजन्ति प्रकर्षेण व्रजन्ति, सर्वाणि कर्माणि सन्न्यस्यन्तीत्यर्थ. । 

‘ एतमेव लोकमिच्छन्त ’ इत्यवधारणात् न बाह्यलोकत्रयेप्सूना पारिव्राज्ये अधिकार इति गम्यते । न हि गङ्गाद्वार प्रतिपित्सुः काशीदेशनिवासी पूर्वाभिमुखः प्रैति । तस्मात् बाह्यलोकत्रयार्थिना पुत्रकर्मापरब्रह्मविद्याः साधन, ‘ पुत्रेणाय लोको जय्यो नान्येन कर्मणा ’ इत्यादिश्रुते. । अत तदर्थिभिः पुत्रादिसाधन प्रत्याख्याय, न पारिव्राज्य प्रतिपत्तु युक्त, अतत्साधनत्वात्पारिव्राज्यस्य । तस्मात् ‘ एतमेव लोकमिच्छन्तः प्रव्रजन्ति ’ इति युक्तमवधारणम् । आत्मलोकप्राप्तिर्हि अविद्यानिवृत्तौ स्वात्मन्यवस्थानमेव । तस्मात् आत्मान चेत् लोकमिच्छति य , तस्य सर्वक्रियोपरम एव आत्मलोकसाधन मुख्य अन्तरङ्ग, यथा पुत्रादिरेव बाह्यलोकत्रयस्य, पुत्रादिकर्मण आत्मलोक प्रति असाधनत्वात् । असभवेन च विरुद्धत्वमवोचाम । तस्मात् आत्मान लोकमिच्छन्तः प्रव्रजन्त्येव, सर्वक्रियाभ्यो निवर्तेरन्नेवेत्यर्थ । यथा च बाह्यलोकत्रयार्थिनः प्रतिनियतानि पुत्रादीनि साधनानि विहितानि, एवमात्मलोकार्थिनः सर्वैषणानिवृत्तिः पारिव्राज्य ब्रह्मविदो विधीयत एव । 

कुत पुनः ते आत्मलोकार्थिनः प्रव्रजन्त्येवेत्युच्यते । तत्र अर्थवादवाक्यरूपेण हेतु दर्शयति — एतद्ध स्म वै तत् । तदेतत् पारिव्राज्ये कारणमुच्यते —ह स्म वै किल पूर्वे अतिक्रान्तकालीना विद्वास. आत्मज्ञा , प्रजा कर्म अपरब्रह्मविद्या च । प्रजोपलक्षित हि त्रयमेतत् बाह्यलोकत्रयसाधन निर्दिश्यते ‘ प्रजाम् ’ इति । प्रजा किम् ? न कामयन्ते, पुत्रादिलोकत्रयसाधन न अनुतिष्ठन्तीत्यर्थः । ननु अपरब्रह्मदर्शनमनुतिष्ठन्त्येव, तद्बलाद्धि व्युत्थानम्—न अपवादात् । ‘ ब्रह्म त परादाद्योऽन्यत्रात्मनो ब्रह्म वेद ’ ‘ सर्वं त परादात्’— इति अपरब्रह्मदर्शनमपि अपवदत्येव, अपरब्रह्मणोऽपि सर्वमध्यान्तर्भावात् । ‘ यत्र नान्यत्पश्यति ’ इति च । पूर्वापरबाह्यान्तरदर्शनप्रतिषेधाच्च अपूर्वमनपरमनन्तरमबाह्यमिति । ‘ तत्केन क पश्येद्विजानीयात् ’ इति च । तस्मात् न आत्मदर्शनव्यतिरेकेण अन्यत् व्युत्थानकारणमपेक्षते । 

कः पुन तेषामभिप्राय इत्युच्यते— किं प्रयोजन फल साध्य करिष्याम. प्रजया साधनेन । प्रजा हि बाह्यलोकसाधन निर्ज्ञाता । स च बाह्यलोको नास्ति अस्माक आत्मव्यतिरिक्त । सर्वं हि अस्माक आत्मभूतमेव, सर्वस्य च वय आत्मभूता. । आत्मा च न. आत्मत्वादेव न केनचित् साधनेन उत्पाद्यः आप्य विकार्यः

संस्कार्यो वा। यदपि आत्मयाजिन संस्कारार्थं कर्मेति, तदपि कार्यकरणात्मदर्शनविषयमेव, इदं मे अनेन अङ्गं संस्क्रियते—इति अङ्गाङ्गित्वादिश्रवणात्। न हि विज्ञानघनैकरसनैरन्तर्यदर्शिन. अङ्गाङ्गिसंस्कारोपधानदर्शनं संभवति। तस्मात् न किंचित् प्रजादिसाधनैः करिष्याम'। अविदुषा हि तत् प्रजादिसाधनैः कर्तव्य फलम्। न हि मृगतृष्णिकायामुदकपानाय तदुदकदर्शी प्रवृत्त इति, तत्र ऊषरमात्रमुदकाभावं पश्यतोऽपि प्रवृत्तिर्युक्ता। एवं अस्माकमपि परमार्थात्मलोकदर्शिना प्रजादिसाधनसाध्ये मृगतृष्णिकादिसमे अविद्वद्दर्शनविषये न प्रवृत्तिर्युक्तेत्यभिप्राय।

तदेतदुच्यते—येषा अस्माकं परमार्थदर्शिनां नः, अयमात्मा अशनायादिविनिर्मुक्त. साध्वसाधुभ्यामविकार्य अयं लोक फलमभिप्रेतम्। न चास्य आत्मन. साध्यसाधनादिसर्वसंसारधर्मविनिर्मुक्तस्य साधनं किंचित् एषितव्यम्। साध्यस्य हि साधनान्वेषणा क्रियते। असाध्यस्य साधनान्वेषणायां हि, जलबुद्ध्या स्थल इव तरणं कृतं स्यात्, खे वा शाकुनपदान्वेषणम्। तस्मात् एतमात्मानं विदित्वा प्रव्रजेयुरेव ब्राह्मणा। न कर्म आरभेरन्नित्यर्थ, यस्मात् पूर्वे ब्राह्मणा एव विद्वांस. प्रजामकामयमाना। ते एव साध्यसाधनसव्यवहारं निन्दन्त. अविद्वद्विषयोऽयमिति कृत्वा, किं कृतवन्त इत्युच्यते—ते ह स्म किल पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्तीत्यादि व्याख्यातम्।

तस्मात् आत्मानं लोकमिच्छन्तः प्रव्रजन्ति प्रव्रजेयु — इत्येष विधि अर्थवादेन संगच्छते। न हि सार्थवादस्य अस्य लोकस्तुत्याभिमुख्यं उपपद्यते। प्रव्रजन्तीत्यस्यार्थवादरूपो हि 'एतद्ध स्म' इत्यादिरुत्तरो ग्रन्थ। अर्थवादश्चेत्, नार्थवादान्तरमपेक्षेत। अपेक्षते तु 'एतद्ध स्म' इत्याद्यर्थवाद 'प्रव्रजन्ति' इत्येतत्।

यस्मात् पूर्वे विद्वांस. प्रजादिकर्मभ्यो निवृत्ता. प्रव्रजितवन्त एव, तस्मात् अधुनातना अपि प्रव्रजन्ति प्रव्रजेयु — इत्येव संबध्यमानं न लोकस्तुत्यभिमुखं भवितुमर्हति। विज्ञानसमानकर्तृकत्वोपदेशादित्यादिना अवोचाम। वेदानुवचनादिसहपाठाच्च। यथा आत्मवेदनसाधनत्वेन विहितानां वेदानुवचनादीनां यथार्थत्वमेव, नार्थवादत्वं, तथा तैरेव सह पठितस्य पारिव्राज्यस्य आत्मलोकप्राप्तिसाधनत्वेन अर्थवादत्वमयुक्तम्। फलविभागोपदेशाच्च। 'एतमेवात्मानं लोकं विदित्वा' इति अन्यस्मात् बाह्यात् लोकात् आत्मानं फलान्तरत्वेन प्रविभजति, यथा — पुत्रेणैवायं लोको जय्य नान्येन कर्मणा, कर्मणा पितृलोक — इति। न च प्रव्रजन्तीत्येतत् प्राप्तवत् लोकस्तुतिपरं, प्रधानवच्च अर्थवादापेक्षम् — सकृच्छ्रुतं स्यात्। तस्मात् भ्रान्तिरेव एषा — लोकस्तुतिपरमिति।

न च अनुष्ठेयेन पारिव्राज्येन स्तुतिरुपपद्यते। यदि पारिव्राज्यं अनुष्ठेयमपि सत् अन्यस्तुत्यर्थं स्यात्, दर्शपूर्णमासादीनामपि अनुष्ठेयानां स्तुत्यर्थता स्यात्। न च अन्यत्र कर्तव्यता एतस्माद्विषयात् निर्ज्ञाता, यत इह स्तुत्यर्थो भवेत्। यदि पुन. क्वचिद्विधिः परिकल्प्येत पारिव्राज्यस्य, स इहैव मुख्य. नान्यत्र संभवति। यदपि अनधिकृतविषये पारिव्राज्यं परिकल्प्यते, तत्र वृक्षाद्यारोहणाद्यपि पारिव्राज्यवत् कल्प्येत, कर्तव्यत्वेन अनिर्ज्ञातत्वाविशेषात्। तस्मात् स्तुतित्वगन्धोऽपि अत्र न शक्य कल्पयितुम्।

यदि अयमात्मा लोक इष्यते, किमर्थं तत्प्राप्तिसाधनत्वेन कर्माण्येव न आरभेरन्, किं पारिव्राज्येन — इत्यत्रोच्यते — अस्य आत्मलोकस्य कर्मभिरसंबन्धात्। यमात्मानमिच्छन्तः प्रव्रजेयुः, स आत्मा साधनत्वेन फलत्वेन च उत्पाद्यत्वादिप्रकाराणामन्यतमत्वेनापि कर्मभिः न संबध्यते। तस्मात्—स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यते —इत्यादिलक्षणः। यस्मात् एवंलक्षण आत्मा कर्मफलसाधनासंबन्धी सर्वसंसारधर्मविलक्षणः अशनायाद्यतीत' अस्थूलादिधर्मवान् अजोऽजरोऽमरोऽमृतोऽभय' सैन्धवघनवद्विज्ञानैकरसस्वभावः स्वयं ज्योति. एक एवाद्वय अपूर्वोऽनपरोऽनन्तरोऽबाह्यः — इत्येतत् आगमतस्तर्कतश्च स्थापितं, विशेषतश्चेह जनकयाज्ञवल्क्यसंवादे अस्मिन्। तस्मात् एवंलक्षणे आत्मनि विदिते आत्मत्वेन नैव कर्मारम्भ उपपद्यते, तस्मादात्मा निर्विशेष.। न हि चक्षुष्मान् पथि प्रवृत्त. अहनि कूपे कण्टके वा पतति। कृत्स्नस्य च कर्मफलस्य विद्याफले

अन्तर्भावात् । न च अयत्नप्राप्ये वस्तुनि विद्वान् यत्न मातिष्ठति । 'अर्के चेन्मधु विन्देत किमर्थं पर्वत व्रजेत् । इष्टस्यार्थस्य सप्राप्तौ को विद्वान्यत्नमाचरेत् ॥' 'सर्वं कर्माखिल पार्थ ज्ञाने परिसमाप्यते' (भ गी ४।३३) इति गीतासु। इहापि च एतस्यैव परमानन्दस्य ब्रह्मवित्प्राप्यस्य अन्यानि भूतानि मात्रामुपजीवन्तीत्युक्तम्। अतो ब्रह्मविदां न कर्मारम्भ. ।

यस्मात् सर्वैषणाविनिवृत्त स एष नेति नेत्यात्मान-मात्मत्वेनोपगम्य तद्रूपेणैव वर्तते, तस्मात् एत एवविद नेति नेत्यात्मभूत, उ ह एव एते वक्ष्यमाणे न तरत. न प्राप्नुत — इति युक्तमेवेति वाक्यशेष । के ते इत्युच्यते — अत अस्मान्निमित्तात् शरीरधारणादि हेतो, पाप अपुण्य कर्म अकरव कृतवानस्मि — कष्ट खलु मम वृत्त, अनेन पापेन कर्मणा अह नरक प्रतिपत्स्ये — इति योऽय पश्चात् ताप कर्म कृतवत परितापः स एन नेति नेत्यात्मभूत न तरति। तथा अत कल्याण फलविषयकामान्निमित्तात् यज्ञदानादिलक्षण पुण्य शोभन कर्म कृतवानस्मि, अतोऽह अन्य फल सुखमुपभोक्ष्ये देहान्तरे—इत्येषोऽपि हर्ष त न तरति । उभे उ ह एव एष ब्रह्मवित् एते कर्मणी तरति पुण्य पापलक्षणे । एव ब्रह्मविद सन्यासिन उभे अपि कर्मणी क्षीयेते—पूर्वजन्मनि कृते ये ते, इह जन्मनि कृते ये ते च । अपूर्वे च न आरभ्येते । किं च नैन कृताकृते, कृत नित्यानुष्ठान, अकृत तस्यैव अक्रिया, ते अपि कृताकृते एन न तपत । अनात्मज्ञ हि, कृत फलदानेन, अकृत प्रत्यवायोत्पादनेन, तपत । अय तु ब्रह्मवित् आत्मविद्याग्निना सर्वाणि कर्माणि भस्मीकरोति, 'यथै धासि समिद्धोऽग्नि' (भ गी ४।३७) इत्यादिस्मृतेः । शरीरारम्भकयोस्तु उपभोगनैव क्षय । अतो ब्रह्मवित् अकर्मसबन्धी । शकर

(२) 'तद्गुणसारत्वात्तु तद्व्यपदेश प्राज्ञवत्' —तुशब्द' पक्ष व्यावर्तयति । नैतदस्त्यणुरात्मेति । उत्पत्त्यश्रवणाद्धि परस्यैव तु ब्रह्मणः प्रवेशश्रवणात्तादात्म्योपदेशाच्च परमेव ब्रह्म जीव इ युक्तम् । परमेव चेद्ब्रह्म जीवस्तस्माद्यावत्पर ब्रह्म तावानेव जीवो भवितुमर्हति । परस्य च ब्रह्मणो विभुत्वमाम्नात तस्माद्विभुर्जीव' । तथा च 'स वा एष महानज आत्मा योऽय विज्ञानमय प्राणेषु' इत्येवजातीयका जीवविषया विभुत्ववादा श्रौता. स्मार्ताश्च समर्थिता भवन्ति ।

एवमुपाधिगुणसारत्वाज्जीवस्याणुत्वादिव्यपदेश प्राज्ञवत् । यथा प्राज्ञस्य परमात्मन. सगुणेषूपासनेषूपाधिगुणसारत्वादणीयस्त्वादिव्यपदेश । २।३।२९

'कामकारेण चैके' — अपि चैके विद्वास प्रत्यक्षीकृतविद्याफला सन्तस्तदवष्टम्भात्फलान्तरसाधनेषु प्रजादिषु प्रयोजनाभाव परामृशन्ति । कामकारेणेति श्रुतिर्भवति वाजसनेयिनाम् — 'प्रजा न कामयन्ते' इति । अतोऽपि न विद्यायाः कर्मशेषत्व नापि तद्विषयाया फलश्रुतेरयथार्थत्व शक्यमाश्रयितुम् ।

* ३।४।१५

'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' —उत्पन्ना हि विद्या फलसिद्धिं प्रति न किंचिदन्यदपेक्षत उत्पत्तिं प्रति त्वपेक्षते । कुत । यज्ञादिश्रुते । तथा हि श्रुति' 'तमेत' इति यज्ञादीनां विद्यासाधनभाव दर्शयति । विविदिषासयोगाच्च एषामुत्पत्तिसाधनभावोऽवसीयते । अश्ववदिति योग्यतानिदर्शनम् । यथा च योग्यतावशेन नाश्वो न लाङ्गलाकर्षणे युज्यते रथचर्यायां तु युज्यते । एवमाश्रमकर्माणि विद्यया फलसिद्धौ नापेक्ष्यन्त उत्पत्तौ चापेक्ष्यन्ते इति । ‡ ३।४।२६

'सहकारित्वेन च' —अथ यदुक्त नैव सति विद्यासाधनत्वमेषां स्यादित्यत उत्तर पठति— विद्यासहकारीणि चैतानि स्युर्विहितत्वादेव 'तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यादिना । न चेद विद्यासहकारित्ववचनमाश्रमकर्मणां प्रयाजादिवद्विद्याफलविषय मन्तव्यम । अविधिलक्षणत्वाद्विद्याया' । असाध्यत्वाच्च विद्याफलस्य । * ३।४।३३

'सर्वथाऽपि त एवोभयलिङ्गात्' —सर्वथाप्याश्रमकर्मत्वपक्षे विद्यासहकारित्वपक्षे च त एवाग्निहोत्रादयो धर्मा अनुष्ठेयाः । त एवेत्यवधारयन्नाचार्य. किं निवर्तयति । कर्मभेदशङ्कामिति ब्रूम' । यथा कुण्डपायिनामयने 'मासमग्निहोत्र जुह्वति' इत्यत्र नित्यादग्निहोत्रात्

---

* रामानुज निंबार्क श्रीकंठ ब्रशंकरवत् ।

‡ निंबार्क ब्रमध्व. ब्रशंकरवत्सूत्रार्थ ।

कर्मान्तरमुपदिश्यते नैवमिह कर्मभेदोऽस्तीत्यर्थ.। कुतः। उभयलिङ्गात्। श्रुतिलिङ्गात्स्मृतिलिङ्गाच्च।

शंकर ३।४।३४

(३) 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्'— यद्येव केवला तर्हि विद्या पुरुषार्थं साधयेन्न कर्मात आह—सर्वापेक्षेति। सर्वेष्वाश्रमवत्सु अपेक्षा सा सर्वा पेक्षा। कुत.। 'तमेत वेदानुवचनेन ब्राह्मणा विविदि षन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतेर्ज्ञान प्रत्यपवर्गसिद्धौ यज्ञादयस्तृतीयया विभक्त्याऽङ्गत्वेन प्रया जादिवद्विधीयन्ते। अपूर्वत्वाच्च विधिरय दध्ना जुहो- तीति। सन्वाच्यायाश्चेच्छायाः प्रकृत्यर्थं प्रत्युपसर्जनत्वा द्वेदन प्रधानमीप्सिततमत्वात्। इष्टतमत्व च ज्ञानस्या- पवर्गक्षमत्वादपवर्गक्षम च परिपक्वनिरवशेषाविद्यानिव- र्तकमुदितदिनकरवत्। न च ज्ञानस्वरूपोत्पत्तौ कर्म व्याप्रियते। श्रवणमननादि तदुत्पत्तिकारकम्। तस्माद्य थैव शमादयो यावज्जीवमनुवर्तन्ते विदुषामपवर्गप्राप्तये तथाश्रमकर्माणीति नान्तराले परित्यागः।

३।४।२६

'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्'— विदुषाऽप्यग्निहोत्रादि कर्तव्यमुक्तमेतत्सहकारित्वेन वेति समुच्चिताभ्यामेव ज्ञानकर्मभ्यामविद्यानिवृत्तिद्वारेणापवर्गो व्यज्यते नान्यतरेणेति। अत आह — तत्कार्यायैव। ज्ञानकार्यमपवर्ग. तद्दर्शनाद्यज्ञेन दानेनेति। अतो याव- ज्जीवमाश्रमविहित कर्म कर्तव्यम्। भास्कर ४।१।१६

(४) योऽय निर्दिष्ट आत्माऽय कतम आत्मा। योऽय विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिरिति निर्दिष्टे जीवात्मनि शेते तदन्तर्यामितया वर्तत इत्यर्थः। अत एवोत्तरत्राऽऽत्मन्येवाऽऽत्मान पश्यतीति वक्ष्यति। तत्र हृद्यन्तरित्यस्य व्याख्यान य एषोऽन्तर्हृदय इति। ज्योतिरित्यस्य व्याख्यानमाकाश इति। ज्योतिराकाश शब्दयो· प्रकाशकत्वार्थकत्वेनैकार्थकत्वात्। अतश्चात्रा- ऽऽकाशशब्दो जीवपर एव।

प्रशासनेन धारकत्वलक्षणमात्मत्वमुक्त भवति। सर्व- स्येशान इत्यनेन नियन्तृत्वलक्षणमात्मत्वम्। सर्वस्याधि पतिरिति शेषित्वलक्षणमात्मत्वमुक्तमिति द्रष्टव्यम्। सर्वे श्वरो नियन्ता। अधिपति. शेषी। भूतपालो रक्षकः।

आशोऽशन भावे घञ्। अनाशोऽनशन स्वार्थे क। तच्चानशन कामानशनात्मक न तु सर्वात्मनाऽन- शन देहपातप्रसङ्गात्। यद्वा न विद्यते आशो यस्य तदनाश स्वार्थे कप्रत्ययः। फलाभिसधिरहितेनेति यावत्। अश्वेन जिगमिषति असिना जिघांसतीत्यादाव- श्वादे सन्प्रत्ययप्रकृत्यर्थभूतगमनादिसाधनत्वप्रतिपादन दर्शनादिहापि वेदनसाधनत्वमेव प्रतिपाद्यते। न तु विविदिषासाधनत्वम्।

अतो देहयात्रादिलक्षणाद्धेतो· पापमकार्षं पुण्यमकार्ष- मिति द्वे चिन्ते एत ब्रह्मविद न तरतो न प्राप्नुत इत्यर्थ। * रग.

(५) 'नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्'— 'योऽय विज्ञानमय प्राणेषु' इति जीव प्रस्तुत्य 'स वा एष महानज आत्मा' इति महत्त्वश्रुतेर्नाणुर्जीव इति चेन्न। इतराधिकारात्। जीवादितरस्य प्राज्ञस्य तत्राधि- कारात्। २।३।२२

'आदरादलोप.'— अथ स्याद्यदुक्त वाजसनेयके वशित्वादिभि. सह सत्यकामत्वादिसद्भावोऽवगम्यत इति तन्नोपपद्यते। वशित्वादीनामेव तत्र परमार्थत सद्भावा- भावात्। तदभावश्च 'मनसैवानुद्रष्टव्य नेह नानास्ति किंचन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति॥ एकधैवानुद्रष्टव्यमेतदप्रमेय ध्रुवम्' (बृउ. ४।४।१९ – २०) इति प्रकृतेन वाक्येन 'स एष नेति नेत्यात्मा' इत्युत्तरेण चोपास्यस्य ब्रह्मणो निर्विशे षत्वप्रतीतेरवगम्यते। अतो वशित्वादयोऽपि स्थूलत्वा- दिवन्निषेध्या इति प्रतीयन्ते। अत एव छान्दोग्येऽपि सत्यकामत्वादयो न ब्रह्मणः पारमार्थिका गुणा उच्यन्ते। अतोऽपारमार्थिकत्वादेवजातीयकानां गुणाना मोक्षार्थे- पूपासनेपु लोप इति। तत्राह — आदरादिति। ब्रह्म- गुणत्वेन प्रमाणान्तराप्रतिपन्नानां गुणानामेषा सत्यकाम- त्वादीनां मोक्षार्थोपासनोपास्यब्रह्मगुणत्वेन सादरमुप- देशादेषामलोप.। अपि तूपसहार एव कार्यः।

न च मातापितृसहस्रेभ्योऽपि वत्सलतर शास्त्र प्रतार- कवदपारमार्थिकान्निरसनीयान्गुणान्प्रमाणान्तराप्रतिपन्ना- नादरेणोपदिश्य ससारचक्रपरिवर्तनेन पूर्वमेव बम्भ्रम्य-

* शब्दार्थं शंकरवत्। व्युत्पादनं तु रामानुजवत्।

-माणान्मुमुक्षून्भूयोऽपि भ्रमयितुमलम् । ' नेह नानास्ति किंचन ' ( बृउ ४।४।१९ ) । ' एकधैवानुद्रष्टव्यम् ' ( बृउ ४।४।२० ) इति तु सर्वस्य ब्रह्मकार्यत्वेन तदात्मकत्वादेकधाऽनुदर्शन विधायाब्रह्मात्मकत्वेन पूर्वसिद्ध नानात्वदर्शन निषेधतीत्ययमर्थ. प्रागेव प्रपञ्चित । ' स एष नेति नेत्यात्मा' इत्यत्र चेतिशब्देन प्रमाणान्तरप्रतिपन्न पपञ्चाकार परामृश्य न तथाविध ब्रह्मेति सर्वात्मभूतस्य ब्रह्मण' प्रपञ्चविलक्षणत्व प्रतिपाद्यते । तदेव चानन्तरमुपपादयति 'अग्राह्यो न हि गृह्यते । अशीर्यो न हि शीर्यते । असङ्गो न हि सज्जते । अव्यथितो न व्यथते । न रिष्यति ' इति । प्रमाणान्तरग्राह्यविसजातीयत्वात्प्रमाणान्तरेण न गृह्यते । विशरणीयविसजातीयत्वान्न विशीर्यते । एवमुत्तरत्रानुसधेयम् । छान्दोग्येऽपि 'नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत्सत्य ब्रह्मपुरमस्मिन्कामाः समाहिता ' ( छाउ ८।१।५ ) इति सर्वविसजातीयत्व ब्रह्मण प्रतिपाद्य तस्मिन्सत्यकामत्वादयो विधीयन्ते । ३।३।३९

' सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ' — अग्निहोत्रादिसर्वकर्मापेक्षैव विद्या कर्मवत्सु गृहस्थेषु । कुत । यज्ञादिश्रुते. । यज्ञादिना विविदिषन्ति वेदितुमिच्छन्ति । यज्ञादिभिर्वेदन प्राप्तुमिच्छन्तीत्यर्थ. । यज्ञादीना ज्ञानसाधनत्वे सत्येव यज्ञादिभिर्ज्ञान प्राप्तुमिच्छन्तीति व्यपदेश उपपद्यते । ज्ञान च वाक्यार्थज्ञानादर्थान्तरभूत ध्यानोपासनादिशब्दवाच्य विशदतमप्रत्यक्षतापन्नस्मृतिरूप निरतिशयप्रियमहरहरभ्यासाधेयातिशयमा प्रयाणादनुवर्तमानं मोक्षसाधनमित्युक्तमस्माभि. पूर्वमेव । अश्ववत् । यथा पुरुषगमनसाधनभूतोऽश्व स्वपरिकरबन्धपरिकर्मापेक्ष एव मोक्षसाधनभूतापि विद्या नित्यनैमित्तिककर्म परिकरापेक्षा । ३।४।२६

' अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् '—अग्निहोत्राद्याश्रमधर्माः फलाश्लेषासभवादनुष्ठेया एव । तदसभवश्च तत्कार्यार्थत्वात्तेषाम् । विद्याख्यकार्यायैव हि विदुषोऽग्निहोत्राद्यनुष्ठानम् । कथमिदमवगम्यते — तद्दर्शनात् । दृश्यते हि ' तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यादिनाऽग्निहोत्रादीनां विद्यासाधनत्वम् । अन्यथाऽऽश्रमकर्मलोपे दूषितान्त.करणस्य विद्योत्पत्तिरेव न स्यात् ।

* रामानुज ४।१।१६

( ६ ) ' शान्तिस्तु भगवन्निष्ठा दमो मदविनिग्रह' । हृदिस्थविष्णौ सतोष सदैवोपरमः स्मृतः । तितिक्षा द्वन्द्वसहता क्षमा क्रोधासमुत्थितिः ।। ' इति शब्दनिर्णये । ' सर्वः पूर्ण. समुद्दिष्टस्तथा ज्ञेयो जनार्दनः । रागसदेहपापानि तथा जानस्तरिष्यति । नित्य हि रागपापादेर्मुक्तो यत्पुरुषोत्तम. । वेदाख्यब्रह्मणाऽण्यत्वाद्विष्णुर्ब्राह्मण उच्यते । पूर्णत्वाज्ज्ञानरूपत्वाद्ब्रह्मलोकश्च स प्रभु. ।। '

मध्व.

( ७ ) ' धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ' — एष सेतुर्विधृतिरिति धृते. । ' एष भूताधिपतिरेष भूतपाल इत्याद्यस्य महिम्नोऽस्मिन्नुपलब्धे' ।

ब्रमध्व १।३।१६

( ८ ) श्रुत्या ज्ञानसाधनत्वेनैवाश्रमकर्मकरणोक्तेश्च न स्वातन्त्र्य कर्मणो वक्तु शक्यम् । अत एव शुकस्य न ब्रह्मचर्यादिकमपि । फलस्य जातत्वेन तत्साधनानपेक्षणात् । ३।४।१९ ( पृ १२०० )

' अनभिभव च दर्शयति '—प्राधान्येन भगवद्धर्मा एव कर्तव्या इत्यत्रोपोद्बलकान्तरमनेन उच्यते । ' सर्वे पाप्मान तरति, नैन पाप्मा तरति, सर्वे पाप्मान तपति, नैन पाप्मा तपति ' इत्यादिना भगवद्धर्मानुरोधेनाश्रमकर्माकरणजदोषैरनभिभव च श्रुतिर्दर्शयत्यतो भगवद्धर्मा एव सर्वेभ्य उत्तमानि साधनानीत्यर्थ. ।

† वल्लभ ३।४।३४

( ९ ) ' अन्तस्तद्धर्मोपदेशात् '—अन्तरत्र ब्रह्मैव भवितुमर्हति । कुत । तद्धर्मोपदेशात्सर्ववशित्वशुभाशुभकर्मफलाभागित्वसर्वाधिपतित्वादीनां परमेश्वरधर्मणामत्रोपदेशात्, जीवाना सिद्धानामप्यसिद्धदशाया प्रतिहतेच्छतया पूर्वमुक्तान् प्रत्याधिपत्याद्यभावात्सत्कर्मणैव भूमपदप्राप्तेश्चेति ।

वस्तुतस्तु अस्मिन्नपि सवादे परब्रह्मैव महाप्रकरणिज्ञेय तत्रैवोपसहारात्फलप्रदर्शनपूर्वक ज्ञेयत्वेन विधानाच्च । जीवद्वारा च ब्रह्मण प्रतिपादनाय जीवस्यादौ विस्तारि-

* निंबार्क श्रीकंठ वल्लभ रामानुजद्भाव ।

† शेष छाउ ८।१५।१ ( पृ ९८६ ) इत्यत्र द्रष्टव्यम् ।

तत्वात्, प्रकरणित्व भ्रमादेवावगम्यते, अत एव सम स्तावस्थासहिते जीवे प्रतिपादितेऽपि पुनर्जनकेन पृष्टे 'अत ऊर्ध्वं विमोक्षायैव ब्रूहि' इति, ततो याज्ञवल्क्येन प्रतिपादिते परब्रह्मणि जनकोऽन्यत्र पप्रच्छेति, याज्ञ वल्क्यमैत्रेयीसवादे च जीवब्रह्मसाधारणात्मसामान्यस्यैव प्रकरणित्व न तु केवलब्रह्मण जडविवेकमात्रस्य ज्ञेयत्वेनो क्तत्वादतो न जीववाक्योच्छेद इति बोध्यम् ।

१।१।२०

'स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्' — ननु प्रव्रजन्तीतिवाक्यम् 'एतमेव प्रव्राजिनो लोकमिच्छन्त' इत्युपादानात् लोकस्तुतिमात्रस्तुतिपरत्वेनैव वाक्यसाफल्ये प्रव्रजन्तीत्यनुवादकप्रत्ययस्य विधित्वकल्पनाया गौरवात् उपरिधारणवचनस्य च प्रयोजनान्तराभावाद्विधिपरत्व तद्वाक्यस्य कल्प्यत इति चेन्न । अपूर्वत्वात् । प्रव्रज्याया प्रमाणान्तरानधिगतत्वेन स्तुत्यर्थमप्यनुवादासभवादित्यर्थ. । ३।४।२१

'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्'—विद्या सर्वापेक्षा च भवति सर्वानग्न्यादीन् यागाङ्गभूतानपेक्षतेऽपि, कुत — यज्ञादिश्रुते. । 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यादिश्रुते. । यज्ञाद्यपेक्षया हि तद ङ्गानामग्न्यादीनामप्यपेक्षा सिद्ध्यतीत्यर्थ. । नन्वग्नीन्ध नाद्यनपेक्षेत्युक्त, तत्कथ तस्यापेक्षा सभवेत् । तत्राह— अश्ववदिति । यथा 'उषा वा अश्वस्य मेध्यस्य शिर' इत्यश्वमेधोपासने सवत्सरे समारोपिताश्वोऽङ्गतयाऽपेक्षते, तथैव स्वशरीरब्रह्मप्रणवादौ समारोपितोऽग्न्युपवीतमन्त्रादियज्ञाद्यङ्गतयाऽपेक्षते, बाह्याग्न्यादिक च नापेक्षत इत्यविरोध इत्यर्थः । ३।४।२६

'सहकार्यन्तरविधिः पक्षेण तृतीय तद्वतो विध्यादिवत्' — काण्वे षष्ठेऽध्याये श्रूयते—'तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन । एतमेव विदित्वा मुनिर्भवति । एतमेव प्रव्राजिनो लोकमिच्छन्त प्रव्रजन्ति' इति । तत्र तृतीयवाक्य तद्वतो विद्यावतो विद्यायाः सहकार्यन्तरस्य प्रव्रज्याश्रमस्य विधि सपक्षेणैव पाक्षिक एव, यस्मिन् हि पक्षे गार्हस्थ्यादौ विक्षेपप्राबल्येन ब्रह्मैकाग्र्य न सभवति, तस्मिन् पक्षे व्यासङ्गनिवृत्तिद्वारोपकारिणी प्रव्रज्या ज्ञानाङ्गतया विधीयते न नियमेनेत्यर्थः । नियमे सति वक्ष्यमाणस्य गृहस्थेनोपसहारस्यानुपपत्तेः । 'न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रिय' । श्राद्धकृत्सत्यवादी च गृहस्थोऽपीह मुच्यते ॥ तत्त्वज्ञानेन मुच्यन्ते यत्र तत्राश्रमे रता. ॥' इत्यादिस्मृतिविरोधाच्च । तस्मात्पारिव्रज्याश्रमो ज्ञाननिष्ठाया मुख्यकल्प एव, गृहस्थोऽपीत्यपिशब्दस्य स्वरसाच्च । पाक्षिकत्वे दृष्टान्तमाह — विध्यादिवदिति । यथा गोदोहनेन पशुकामस्येति विधिः पशुकामभावसत्त्वासत्त्वाभ्या पाक्षिकस्तद्वदित्यर्थः ।

* विज्ञान ३।४।४७

**तदेतदृचाऽभ्युक्तम् । एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान् । तस्यैव**

---

* 'विविदिषन्ति' व्याख्यान रगवत् ।

(१) **बृउ** ४।४।२३, **शब्रा** १४।७।२।२८ न वर्धते कर्मणा ( न कर्मणा वर्धते ) न लिप्यते कर्मणा ( न कर्मणा लिप्यते ) समाहितो ( श्रद्धावित्तो ) पश्यति । सर्वमात्मान .. ब्राह्मणो भवति ( पश्येत्सर्वमेन पश्यति सर्वोऽस्यात्मा भवति सर्वस्यात्मा भवति सर्वं पाप्मान तरति नैन पाप्मा तरति सर्वं पाप्मान तपति नैन पाप्मा तपति विपापो विजरो विजिघत्सोऽपिपासो ब्राह्मणो भवति य एव वेद ) ( एष ब्रह्मलोक दास्यायेति० ), **ब्रशकर** १।२।११, ३।४।२७, ४।१।१३ न वर्धते कर्मणा ( न कर्मणा वर्धते ), **भास्कर** १।१।१, ३।४।२७ समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मान पश्यति ( श्रद्धावित्तो भूत्वाऽऽत्मन्येवाऽऽत्मान पश्येत्, समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मान पश्येत् ), **रग** ( एन प्रापितोऽसि० ), **रामानुज** १।१।१ ( पृ ६, १२ ), ३।४।२७, ४६, ४।१।१३ तस्यैव स्यात् ( तस्यैवाऽऽमा ) न लिप्यते कर्मणा ( न कर्मणा लिप्यते ) त्मन्येवाऽऽत्मान पश्यति ( त्मन्येवाऽऽत्मान पश्येत् ), **निंबार्क** ३।४।२७ त्मन्येवाऽऽत्मान पश्यति ( त्मन्येवाऽऽमान पश्येत् ), **मध्व** रगवत्, **ब्रमध्व** १।१।१, ५, १।३।४३ निंबार्कवत्, **श्रीकठ** १।१।४ ( पृ १८७ ), ३।४।२७ निंबार्कवत्, **श्रीकर** १।१।१ ( पृ १५ ), १।१।४ ( पृ ४७ ), १।३।२१, २।२।४२, ३।४।२७, **वल्लभ** ३।३।२७, ३।४।१५, १९, २०, २६, ३०, ३४, ४६, ४।१।१३ **शब्रावत्**, **विज्ञान** १।१।१ ( पृ ६, २८ ), ३।३।४, ३।४।२७, **बलदेव** ३।४।१५, २६, ३५, ४७

स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेनेति । तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्यति । सर्वमात्मानं पश्यति । नैनं पाप्मा तरति । सर्वं पाप्मानं तरति । नैनं पाप्मा तपति । सर्वं पाप्मानं तपति । विपापो विरजोऽविचिकित्सो ब्राह्मणो भवति । एष ब्रह्मलोकः सम्राट् । एनं प्रापितोऽसीति होवाच याज्ञवल्क्यः । सोऽहं भगवते विदेहान्ददामि मां चापि सह दास्यायेति ॥

( १ ) तदेतद्वस्तु ब्राह्मणेनोक्तं ऋचा मन्त्रेण अभ्युक्तं प्रकाशितम् । एष नेति नेत्यादिलक्षणः नित्यो महिमा । अन्ये तु महिमानः कर्मकृता इत्यनित्याः । अयं तु तद्विलक्षणो महिमा स्वाभाविकत्वान्नित्यः ब्रह्मविदः ब्राह्मणस्य त्यक्तसर्वैषणस्य । कुतोऽस्य नित्यत्वमिति हेतुमाह — कर्मणा न वर्धते शुभलक्षणेन कृतेन वृद्धिलक्षणां विक्रियां न प्राप्नोति । अशुभेन कर्मणा नो कनीयान् नाप्यपक्षयलक्षणां विक्रियां प्राप्नोति । उपचयापचयहेतुभूता एव हि सर्वा विक्रिया इति एताभ्यां प्रतिषिध्यन्ते । अतः अविक्रियत्वात् नित्य एष महिमा । तस्मात् तस्यैव महिम्नः, स्यात् भवेत्, पदवित् — पदस्य वेत्ता, पद्यते गम्यते ज्ञायत इति महिम्नः स्वरूपमेव पदं, तस्य पदस्य वेदिता । किं तत्पदवेदनेन स्यादित्युच्यते — तं विदित्वा महिमानं, न लिप्यते न सम्बध्यते कर्मणा पापकेन धर्माधर्मलक्षणेन, उभयमपि पापकमेव विदुषः । यस्मादेव अकर्मसम्बन्धी एष ब्राह्मणस्य महिमा नेति नेत्यादिलक्षणः, तस्मात् एवंवित् शान्तः बाह्येन्द्रियव्यापारत उपशान्तः, तथा दान्तः अन्तःकरणतृष्णातो निवृत्तः, उपरतः सर्वैषणाविनिर्मुक्तः संन्यासी, तितिक्षुः द्वन्द्वसहिष्णुः, समाहितः इन्द्रियान्तःकरणचलनरूपाद्व्यावृत्त्या ऐकाग्र्यरूपेण समाहितो भूत्वा । तदेतदुक्तं पुरस्तात् 'बाल्यं च पाण्डित्यं च निर्विद्य' इति । आत्मन्येव स्वे कार्यकरणसंघाते आत्मानं प्रत्यक्चेतयितारं पश्यति । तत्र किं तावन्मात्रं परिच्छिन्नम् ? नेत्युच्यते — सर्वं समस्तम् आत्मानमेव पश्यति, नान्यत् आत्मव्यतिरिक्तं वालाग्रमात्रमप्यस्तीत्येव पश्यति । मननात् मुनिर्भवति जाग्रत्स्वप्नसुषुप्ताख्यं स्थानत्रयं हित्वा । एवं पश्यन्तं ब्राह्मणं नैनं पाप्मा पुण्यपापलक्षणः तरति, न प्राप्नोति । अयं तु ब्रह्मवित् सर्वं पाप्मानं तरति आत्मभावेनैव व्याप्नोति अतिक्रामति । नैनं पाप्मा कृताकृतलक्षणः तपति इष्टफलप्रत्यवायोत्पादनाभ्याम् । सर्वं पाप्मानम् अयं तपति ब्रह्मवित् सर्वात्मदर्शनवह्निना भस्मीकरोति । स एष एवंवित् विपापः विगतधर्माधर्मः, विरजः विगतरजः, रजः कामः, विगतकामः, अविचिकित्सः छिन्नसंशयः, अहमस्मि सर्वात्मा परं ब्रह्मेति निश्चितमतिः ब्राह्मणो भवति — अयं तु एवंभूतः एतस्यामवस्थायां मुख्यो ब्राह्मणः, प्रागेतस्मात् ब्रह्मस्वरूपावस्थानात् गौणमस्य ब्राह्मण्यम् । एष ब्रह्मलोकः — ब्रह्मैव लोको ब्रह्मलोकः मुख्यो निरुपचरितः सर्वात्मभावलक्षणः, हे सम्राट् । एनं ब्रह्मलोकं परिप्रापितोऽसि अभयं नेति नेत्यादिलक्षणम्—इति होवाच याज्ञवल्क्यः । एवं ब्रह्मभूतो जनकः याज्ञवल्क्येन ब्रह्मभावमापादितः प्रत्याह—सोऽहं त्वया ब्रह्मभावमापादितः सन् भगवते तुभ्यं विदेहान् देशान् मम राज्यं समस्तं ददामि, मां च सह विदेहैः दास्याय दासकर्मणे—ददामीति चशब्दात्सम्बध्यते । परिसमापिता ब्रह्मविद्या सह संन्यासेन साङ्गा सेतिकर्तव्यताका । परिसमाप्तः परमपुरुषार्थः । एतावत् पुरुषेण कर्तव्यम्, एषा निष्ठा, एषा परा गतिः, एतन्निःश्रेयसम्, एतत्प्राप्य कृतकृत्यो ब्राह्मणो भवति, एतत् सर्ववेदानुशासनमिति ।

शांकर.

( २ ) परमात्मा तु न सुकृतस्य वा दुष्कृतस्य वा गोचरे वर्तते 'न कर्मणा वर्धते नो कनीयान्' इति श्रुतेः । १।२।११

'शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्' — यदि कश्चिन्मन्येत यज्ञादीनां विद्यासाधनभावो न न्याय्यो विध्यभावात् 'यज्ञेन विविदिषन्ति' इत्येवंजातीयका हि श्रुतिरनुवादस्वरूपा विद्याभिष्टवपरा । इत्थं महाभागा विद्या यद्यज्ञादिभिरेतामवाप्तुमिच्छन्तीति । तथाऽपि तु शमदमाद्युपेतः स्याद्विद्यार्थी 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्यति' इति विद्यासाधनत्वेन शमदमादीनां विधानाद्विहितानां चावश्या-

नुष्ठेयत्वात् । नन्वत्रापि शमाद्युपेतो भूत्वा पश्यतीति वर्तमानापदेश उपलभ्यते न विधिः । नेति ब्रूमः । तस्मादिति प्रकृतप्रशंसापरिग्रहाद्विधित्वप्रतीतेः । पश्येदिति च माध्यंदिना विस्पष्टमेव विधिमधीयते । तस्माद्यज्ञाद्यनपेक्षायामपि शमादीन्यपेक्षितव्यानि । यज्ञादीन्यपि त्वपेक्षितव्यानीति यज्ञादिश्रुतेरेव । ननूक्तं यज्ञादिभिर्विविदिषन्तीत्यत्र न विधिरुपलभ्यत इति । सत्यमुक्तं तथाऽपि त्वपूर्वत्वात्संयोगस्य विधिः परिकल्प्यते । न ह्ययं यज्ञादीनां विविदिषासंयोगः पूर्वं प्राप्तो येनानूद्येत । 'तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि' इत्येवमादिषु चाश्रुतविधिकेष्वपि वाक्येष्वपूर्वत्वाद्विधिं परिकल्प्य पौष्णं पेषणं विकृतौ प्रतीयेतेत्यादि विचारं प्रथमे तन्त्रे प्रवर्तितं । तथा चोक्तं 'विधिर्वा धारणवत्' इति । स्मृतिष्वपि भगवद्गीतादास्वनभिसंधाय फलमनुष्ठितानि यज्ञादीनि मुमुक्षोर्ज्ञानसाधनानि भवन्तीति प्रपञ्चितम् । तस्माद्यज्ञादीनि शमदमादीनि च यथाश्रमं सर्वाण्येवाऽऽश्रमकर्माणि विद्योत्पत्तावपेक्षितव्यानि । तत्राप्येवंविदिति विद्यासंयोगात्प्रत्यासन्नानि विद्यासाधनानि शमादीनि, विविदिषासंयोगात्तु बाह्यतराणि यज्ञादीनीति विवेक्तव्यम् ।

* शंकर ३।४।२७

( ३ ) ब्राह्मणस्य ब्रह्मविदो य एष महिमा स नित्यो ब्रह्मज्ञानानन्तरं यावदात्मभावितयाऽनुवर्तत इत्यर्थः । कोऽसौ महिमेत्यत्राऽऽह — न वर्धते कर्मणा नो कनीयान् ।

एवंविच्छास्त्रजन्यज्ञानवान् । शमः अन्तरिन्द्रियनियमनरूपः । दमः बहिरिन्द्रियनियमनरूपः । उपरतिः निषिद्धकाम्यादिषु कर्मसूपरतिः । तितिक्षा क्षमा । सुसमाहितः समाहितचित्त इत्यर्थः । एवंरूपः सन्नात्मनि जीवात्मनि आत्मानं परमात्मानं तदन्तर्यामिणं पश्यति पश्येदित्यर्थः । भाष्यादिषु कोषेषु 'आत्मन्येवाऽऽत्मानं पश्येत्' इति पाठो दृश्यते । अतः पाठद्वैविध्यमत्र द्रष्टव्यम् । किं चाऽऽत्मानं परमात्मानं सर्वं सर्वशरीरकं च पश्येदित्यर्थः । † रंग.

( ४ ) 'शमदमाद्युपेतः स्यात्तथापि तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात्' — गृहस्थस्य शमदमादीन्यप्यनुष्ठेयान्युत नेति चिन्तायामान्तरबाह्यकरणव्यापाररूपत्वात्कर्मानुष्ठानस्य शमदमादीनां तद्विपरीतरूपत्वाच्चानुष्ठेयानीति प्राप्ते उच्यते । यद्यपि गृहस्थः करणव्यापाररूपकर्मसु प्रवृत्तस्तथापि स विद्वाञ्छमदमाद्युपेतः स्यात् । कुतः । तदङ्गतया तद्विधेः । विद्याङ्गतया तेषां विधेः । 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत्' इति । विद्योत्पत्तेश्चित्तसमाधानरूपत्वेन दृष्टपरिकरत्वाच्छमादीनां विद्यानिर्वृत्तये तेषां शमादीनामवश्यानुष्ठेयत्वाच्च तान्यप्यनुष्ठेयानि । न च करणव्यापारतद्विपर्ययरूपत्वेन कर्मणां शमदमादीनां च परस्परविरोधः । भिन्नविषयत्वात् । विहितेषु करणव्यापारोऽविहितेषु प्रयोजनशून्येषु च तदुपशम इति । न च करणव्यापाररूपकर्मसु वर्तमानस्य वासनावशाच्छमादीनामुपादेयत्वासंभवः । विहितानां कर्मणां परमपुरुषाराधनतया तत्प्रसादद्वारेण निखिलविपरीतवासनोच्छेदहेतुत्वात् । अतो गृहस्थस्य शमदमादयोऽप्यनुष्ठेयाः । रामानुज. ३।४।२७

( ५ ) 'कामकारेण चैके' — ननु 'एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान्' इति श्रुत्या ब्रह्मविदः कर्मकृतगुणदोषौ निषिद्ध्येते । स च प्राप्तिपूर्वक इति ब्रह्मविदः कर्मकरणमावश्यकमिति प्राप्ते, उच्यते — कामकारेणेति । करणं कारः । कामेनेच्छया करणं कामकारस्तथा च परानुग्रहार्थमिच्छामात्रेण, न तु विधिवशात् यत् करणं तत् कामकार इत्युच्यते । तथा चैव कृते कर्मणि तत्कृतगुणदोषप्रसक्तौ तत्प्रतिषेधमेके शाखिनः, एष नित्य इत्यादि पठन्ति । न ह्येतावता कर्मकृत्यधिकारप्राप्तिरिति भावः । अथवा कामेन कारो यस्य स तथा । तादृशेन कर्मणा प्राप्तवृद्धिह्रासयोः संबन्धाभावं ब्रह्मविदि एके पठन्तीत्यर्थः । चकारेणेश्वराज्ञया लोकसंग्रहार्थं कृतं कर्म समुच्चीयते, 'सर्वस्य वशी सर्वस्येशानः' इति श्रुतेस्तथा ।

३।४।१५

'अनुष्ठेयं बादरायणः साम्यश्रुतेः' — न च प्रमाणवस्तुपरतन्त्रत्वान्न ज्ञानस्य विधेयतेति वाच्यम् । इतर-

* भास्कर निंबार्क विज्ञान शंकरवद्भावः ।

† शेषं रामानुजवत् ।

ज्ञानस्य तथात्वेऽपि जीवात्मलक्षणेऽधिष्ठाने परमात्मनो भगवतो दर्शनस्याऽन्यतोऽप्राप्तत्वाच्छूद्धान्तसाधनैस्तद्दर्शने स्वरूपयोग्यतासपत्तावात्मन्यधिष्ठाने परमात्म शनानुकूल-प्रयत्नविधानसभवाच्छ्रवणविधिना श्रुतिवाक्यजशाब्द ज्ञानानुकूलप्रयत्नविधानवत् । अनुष्ठेयमिति । ज्ञानमङ्ग तदङ्गित्वेनानुष्ठेय कर्मेति मत बादरायणोऽपवदतीति पूर्वेण सबन्धस्तत्र हेतुमाह — साम्यश्रुतेरिति । स्वतो ऽपुरुषार्थे कर्म फलार्थिनैवानुष्ठेयम् । तथा च ' एष नित्यो महिमा ' इति श्रुत्या ज्ञानवति विहितनिषिद्धयो. कर्मणो. फलाजनकत्वेन साम्य श्रूयत इति फलार्थिप्रवृत्त्य सभवेन ज्ञानिनस्तथात्वाभावेन कर्मोच्छेदप्रसक्त्या न ज्ञानस्याङ्गत्व वक्तु शक्यम् । कृषीवलस्य व्रीहीणा वपने भर्जनस्येव। तथा च ज्ञानिन· प्रवृत्त्यसभवेनान्येषा च, 'अथेतरे दु खमेवोपयन्ति' इति निन्दाश्रवणेन तथात्वात् सर्वार्थतत्त्वज्ञा श्रुतिर्ज्ञानबहिर्भूत कर्म कथ विदध्यादिति ज्ञानस्य पुरुषार्थोऽसाधकत्वोक्तिमसहमानेनाचार्येण प्रौढ्या निरूपितम् । ३।४।१९

' एष नित्यो महिमा ' इति श्रुतिरपि यज्ज्ञाने सति विहितनिषिद्धकर्मफलासबन्धस्तद्वित् स्यादित्यनुक्त्वा तस्यैव पदवित् स्यादिति यदुक्तवती तेन पदयोर्भक्तिमार्ग रूपत्वात् तत्र च पदयोरेव सेव्यत्वेन मुख्यत्वात्तज्ज्ञाना नुकूलप्रयत्नमेव पूर्वं विदधते ।

तस्यैव, तच्छब्दस्य प्रसिद्धार्थकत्वाल्लोकवेदप्रसिद्धस्य पुरुषोत्तमस्यैव, तत्रापि, पदविदेव, दीनभावेन भक्तिमार्गीयज्ञानवानेव स्यादेवेत्येवकार. सर्वत्रानुषज्यते । तथा सति भक्तौ जातायां स्वत एव भगवज्ज्ञान भवतीति ज्ञाप यितु, त विदित्वेति पश्चादुक्तवतीति तदाशयो ज्ञायते । अत एव पूर्वं कर्म निरूपितम् । साधनत्वात् । एतेन ' तमेव विदित्वा मुनिर्भवति ' । ' अग्राह्यो न हि गृह्यते ' इत्यादिश्रुतीना मिथोविरोधः परिहृत. । भक्त्या ग्राह्यत्वात् तदितरसाधनाग्राह्यत्वात् । अत एव विविदिषन्ति, न तु विदन्त्यपीत्याशयवती ' तमेत वेदानुवचनेन ' इति श्रुति· पठ्यते । ३।४।२०

' शमदमाद्युपेत. स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ' -- ननु ' तस्मादेवविच्छान्तो दान्तः ' इत्यादिना शमादेरेव ज्ञानसाधनत्वमुच्यते, न तु यज्ञादेरितिचेत्तत्राह — शमदमाद्युपेतो भक्तिमार्गेऽपि स्यादेव यद्यपि तथापि तदङ्गतया 'आत्मन्येवात्मान पश्येत् ' इति ज्ञानमार्गीयज्ञानाङ्गतयैव शमादिविधेर्हेतो ज्ञानमार्गे तेषामवश्यानुष्ठेयत्वात्तथा विधिरित्यर्थ । भक्ति मार्गे स्वत एव शमादीना सभवेऽप्यावश्यकत्व न तेषा मिति भाव । वल्लभ. ३।४।२६

( ६ ) ' शमदमाद्युपेत.० ' — अ तराणा राग द्वेषादीनामनाविर्भूति. शम । सर्वेषामिन्द्रियाणाम विहितव्यापारेभ्यो निवर्तन दम । निषिद्धकाम्यकर्मव्यापारोपरम उपरति. । द्वन्द्वसहिष्णुत्व तितिक्षा । निद्रा-तन्द्रादिव्याक्षेपस्य चित्तस्य परतत्त्वाभिमुख्य समाधानम् । अपुरुषार्थमफलेतरशास्त्रपराङ्मुखी परविद्यामयपरमात्म-तत्त्वोपनिषद्गोष्ठीसमुत्कण्ठारूपा सत्त्वफला श्रद्धा । विनिर्मुक्तमन्येतरदेवताराधना त्रिविधकरणसपाद्या विशिष्टा ष्टाङ्गयोगिनी परमशिवपरिचर्यामयी वैदिकी क्रिया भक्ति । परमानन्दावेशमयमहामोक्षलक्ष्मीदर्शनत्वरा मुमुक्षा । ऐहिकामुष्मिकफलभोगपराङ्मुखत्वरूपेण वैराग्येण नित्यानित्यवस्तुनिर्धारणाकारण विवेकेन च विशिष्टस्य शमादिसपत्तिक्रमेण सभवति मुमुक्षा । एते विवेकादयो मुमुक्षापर्यन्ता परमधर्मा. सर्वेषामाश्रमिणा विद्यार्थमविशेषेणानुष्ठेया इति ।

† श्रीकट. ३।४।२७

स वा एष महानज आत्माऽन्नादो वसुदान. । विन्दते वसु य एव वेद * ॥

(१) योऽय जनकयाज्ञवल्क्याख्यायिकाया व्याख्यात आत्मा स वै एष महान् अज, आत्मा अन्नादः सर्व-

† शेष रामानुजवत् ।

* छाउ ६।२।१ (पृ ८८८) इत्यत्रापि व्याख्यानं द्रष्टव्यम् ।

(१) बृउ ४।४।२४, शब्रा १४।७।२।२९, ३० विन्दते वसु य एव वेद ( स यो हैवमेत महान्तमजमात्मा नमन्नाद वसुदानं वेद विन्दते वसु ॥ स वा एष महानज आत्माऽजरोऽमरोऽभयोऽमृतो ब्रह्माभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्य सोऽह भगवते विदेहा ददामि मा चापि सह दास्यायेति ), ब्रह्मकर १।१।२४, ३।२।३९, भास्कर ३।२।३९, रामानुज १।३।४४, ३।२।३८, निंबार्क ३।२।३९, श्रीकर ३।२।३८, वल्लभ ३।२।३९, बलदेव ३।२।४०

भूतस्थः सर्वान्नानामत्ता, वसुदान.—वसु धन सर्वप्राणिकर्मफल—तस्य दाता, प्राणिनां यथाकर्म फलेन योजयितेत्यर्थ. । तमेत अजमन्नाद वसुदानमात्मान अन्नादवसुदानगुणाभ्या युक्त यो वेद, स. सर्वभूतेष्वात्मभूत. अन्नमत्ति, विन्दते च वसु सर्वे कर्मफलजात लभते सर्वात्मत्वादेव, य एव यथोक्त वेद । अथवा दृष्टफलार्थिभिरपि एवगुण उपास्य । तेन अन्नाद. वसोश्च लब्धा, दृष्टेनैव फलेन अन्नात्तृत्वेन गोऽश्वादिना च अस्य योगो भवतीत्यर्थ । शकर

( २ ) 'श्रुतत्वाच्च'—न केवलमुपपत्तेरेवेश्वर फलहेतु कल्पयाम , किं तर्हि श्रुतत्वादपीश्वरमेव फलहेतु मन्यामहे । तथाच श्रुतिर्भवति 'स वा एष महानज आत्माऽन्नादो वसुदान.' इत्येवजातीयका ।

* ब्रशकर. ३।२।३९

( ३ ) 'न मरिष्यतीति ह्यमरो न मृता यत्ततोऽमृत । ब्रह्मायमाप्तकामत्वादेव यो वेद त परम् । आप्तकामोऽभयश्चैव भवेद्विष्णोरनुग्रहात् ॥' इति च । परमार्थेऽविचिकित्सो ब्राह्मणो भवतीति नित्यमेव तथा भवतीत्यर्थ. । 'अभूद्भविष्यति भवत्येवमाद्यनदानि तु । नित्याभावाभिधायीनि यत्र वाच्या हरेर्गुणा. ॥' इति शब्दनिर्णये ।

मध्व

**स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म । अभय वै ब्रह्म । अभय हि वै ब्रह्म भवति य एवं वेद ॥**

---

* भास्कर रामानुज निंबार्क वल्लभ ब्रशकरवत् ।

(१) **बृउ** ४।४।२५, **शब्रा** १४।७।२।३१ ऽमृतोऽभयो ( ऽभयोऽमृतो ), **ब्रशकर** १।४।२२, २।१।१४ ( पृ ४६६ ), २।३।१७, ३।३।१७, ३।४।१२, ४।३।१४, **भास्कर** १।३।२०, ४२, १।४।२१, २।३।२१, ३।३।३९, **रामानुज** १।३।४४, १।४।२३, २७, २।३।१८, ३।२।२९, ३।३।३८ ऽजरोऽमरोऽमृतोऽभयो ब्रह्म ( ऽजरोऽमृतोऽभय आनन्दो ब्रह्म ऽजरोऽमरोऽमृतो ब्रह्म ), **श्रीकर** २।३।१६, ३।३।३८, **वल्लभ** १।३।४२, २।३।१७ स वा एष महानज आत्मा ( अयमात्मा ) हि ( ह ), **विज्ञान** ३।२।२२ (ऽमृतो० ), **बलदेव** १।३।४१

( १ ) इदानीं समस्तस्यैव आरण्यकस्य योऽर्थ उक्तः, स समुच्चित्य अस्या कण्डिकाया निर्दिश्यते, एतावान्समस्तारण्यकार्थ इति । स वा एष महानज आत्मा अजर न जीर्यत इति, न विपरिणमत इत्यर्थ. । अमर:—यस्माच्च अजर., तस्मात् अमर:, न म्रियत इत्यमरः । यो हि जायते जीर्यते च, स विनश्यति म्रियते वा । अय तु अजत्वात् अजरत्वाच्च अविनाशी यत:, अत एव अमृत । यस्मात् जनिप्रभृतिभि: त्रिभिर्भावविकारै: वर्जितः, तस्मात् इतरैरपि भावविकारैस्त्रिभि तत्कृतैश्च कामकर्ममोहादिभिर्मृत्युरूपैर्वर्जित इत्येतत् । अभय अत एव । यस्माच्च एव पूर्वोक्तविशेषण:, तस्माद्भयवर्जित । भय च हि नाम अविद्याकार्यम् । तत्कार्यप्रतिषेधेन भावविकारप्रतिषेधेन च अविद्यायाः प्रतिषेध सिद्धो वेदितव्य: । अभय आत्मा एवगुणविशिष्ट किमसौ ? ब्रह्म परिवृढ निरतिशय महदित्यर्थः । अभय वै ब्रह्म । प्रसिद्धमेतत् लोके — अभयं ब्रह्मेति । तस्मादुक्त एवगुणविशिष्ट आत्मा ब्रह्मेति । य एव यथोक्तमात्मानमभय ब्रह्म वेद, स अभय हि वै ब्रह्म भवति । एष सर्वस्या उपनिषद सक्षिप्तोऽर्थ उक्तः । एतस्यैवार्थस्य सम्यक्प्रबोधाय उत्पत्तिस्थितिप्रलयादिकल्पना क्रियाकारकफलाध्यारोपणा च आत्मनि कृता । तदपोहेन च नेति नेतीत्यध्यारोपितविशेषापनयद्वारेण पुनः तत्त्वमावेदितम् । यथा एकप्रभृत्यापरार्धसख्यास्वरूपपरिज्ञानाय रेखाध्यारोपण कृत्वा — एकेय रेखा, दशेय, शतेय, सहस्रेय—इति ग्राहयति, अवगमयति सख्यास्वरूप केवल, न तु सख्याया रेखात्मत्वमेव । यथा च अकारादीन्यक्षराणि विजिग्राहयिषु: पत्रमषीरेखादिसयोगोपायमास्थाय वर्णाना सतत्त्वमावेदयति, न पत्रमष्याद्यात्मतामक्षराणा ग्राहयति — तथा चेह उत्पत्त्याद्यनेकोपायमास्थाय एक ब्रह्मतत्त्वमावेदित, पुन: तत्कल्पितोपायजनितविशेषपरिशोधनार्थं नेति नेतीति तत्त्वोपसहार. कृतः । तदुपसहृत पुन. परिशुद्ध केवलमेव सफल ज्ञान अन्तेऽस्यां कण्डिकायामिति ।

शकर.

( २ ) ब्रह्म भवति आविर्भूतब्रह्मरूपो भवतीत्यर्थ. ।

रग.

( आत्मविद्या मैत्रेयीयाज्ञवल्क्यसंवादरूपा )

अमृतत्वसाधनजिज्ञासा, आत्मन एव परमार्थतः प्रियत्वं पतिजायापुत्रादीनां सर्वेषां आत्मोपाधिकं प्रियत्वं, आत्मज्ञानविधिः, ब्रह्मक्षत्रादेः सर्वस्य आत्मरूपत्वं दुन्दुभिशंखवीणादृष्टान्तसहितं, महाभूतस्यात्मनः निश्वसितरूपमेव विद्याकर्मलोकभूतरूपं सर्वं, विज्ञानघन आत्मा सर्वेषामेकायनं, स एव अनुच्छित्तिधर्मा, अद्वैतात्मनि विषयविषयीभेदलोपः, नेति नेति प्रतिपादितः असङ्गः आत्मा

अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च । तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव । स्त्रीप्रज्ञैव तर्हि कात्यायनी । अथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन् * ॥

( १ ) आगमप्रधानेन मधुकाण्डेन ब्रह्मतत्त्वं निर्धारितम् । पुनः तस्यैव उपपत्तिप्रधानेन याज्ञवल्कीयेन काण्डेन पक्षप्रतिपक्षपरिग्रहं कृत्वा विगृह्यवादेन विचारितम् । शिष्याचार्यसंबन्धेन च षष्ठे प्रश्नप्रतिवचनन्यायेन सविस्तरं विचार्योपसंहृतम् । अथेदानीं निगमनस्थानीयं मैत्रेयीब्राह्मणमारभ्यते । अयं च न्यायः वाक्यकोविदैः परिगृहीतः — 'हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम्' इति । अथवा आगमप्रधानेन मधुकाण्डेन यत् अमृतत्वसाधनं ससंन्यासमात्मज्ञानमभिहितं, तदेव तर्केणापि अमृतत्वसाधनं ससंन्यासमात्मज्ञानमधिगम्यते । तर्कप्रधानं हि याज्ञवल्कीयं काण्डम् । तस्मात् शास्त्रतर्काभ्यां निश्चितमेतत् — यदेतत् आत्मज्ञानं ससंन्यासं अमृतत्वसाधनमिति । तस्मात् शास्त्रश्रद्धावद्भिः अमृतत्वप्रतिपित्सुभिः एतत् प्रतिपत्तव्यमिति । आगमोपपत्तिभ्यां हि निश्चितोऽर्थः श्रद्धेयो भवति अव्यभिचारादिति । अक्षराणां तु चतुर्थे यथा व्याख्यातोऽर्थः, तथा प्रतिपत्तव्योऽत्रापि । यान्यक्षराणि अव्याख्यातानि तानि व्याख्यास्यामः ।

अथेति हेतूपदेशानन्तर्यप्रदर्शनार्थः । हेतुप्रधानानि हि वाक्यानि अतीतानि । तदनन्तरं आगमप्रधानेन प्रतिज्ञातोऽर्थः निगम्यते मैत्रेयीब्राह्मणेन । हशब्दः वृत्तावद्योतकः । याज्ञवल्क्यस्य ऋषेः किल द्वे भार्ये पत्न्यौ बभूवतुः आस्ताम्—मैत्रेयी च नामतः एका, अपरा कात्यायनी नामतः । तयोर्भार्ययोः मैत्रेयी ह किल ब्रह्मवादिनी ब्रह्मवदनशीला बभूव आसीत् । स्त्रीप्रज्ञा— स्त्रियां या उचिता सा स्त्रीप्रज्ञा—सैव यस्याः प्रज्ञा गृहप्रयोजनान्वेषणालक्षणा, सा स्त्रीप्रज्ञैव तर्हि तस्मिन्काले आसीत् कात्यायनी । अथ एवं सति ह किल याज्ञवल्क्यः अन्यत् पूर्वस्माद्गार्हस्थ्यलक्षणाद्वृत्तात् पारिव्राज्यलक्षणं वृत्तं उपाकरिष्यन् उपाचिकीर्षुः सन् । शंकरः

( २ ) ननु किमर्थोऽस्य पठितस्य मैत्रेयीब्राह्मणस्य पुनः पाठः उच्यते । पूर्वं याज्ञवल्क्यः प्रविव्रजिषायां मैत्रेय्याः आत्मतत्त्वमुपदिश्य पारिव्राज्याय प्रकृतः स्ववैराग्यमान्द्यं दृष्ट्वा किंचित्कालं धनार्जनं कृत्वा गृह एवानिषिद्धान्कामाननुभूय निष्पन्नदृढवैराग्यो गृहकृत्यव्यापृतचित्ततया विस्मृतात्मतत्त्वायै मैत्रेय्यै पुनरुपदेष्टुमारभत । अनया चाऽऽख्यायिकया वैराग्यमान्द्ये संन्यासेऽनधिकार इति प्रदर्शितं भवति । अत्र विशेषपदानि व्याकुर्मः । यद्वा मैत्रेयीब्राह्मणोक्तस्य ब्राह्मणस्यैकार्थत्वप्रदर्शनाय पुनरप्यारभतेति द्रष्टव्यम् ।

* रंग

'मैत्रेयीति होवाच याज्ञवल्क्यः । प्रव्रजिष्यन्वा अरेऽहमस्मात्स्थानादस्मि । हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥

हे मैत्रयीति ज्येष्ठां भार्यामामन्त्रयामास । आमन्त्र्य चोवाच ह — प्रव्रजिष्यन् पारिव्राज्यं करिष्यन् वै अरे मैत्रेयि अस्मात् स्थानात् गार्हस्थ्यात् अहं अस्मि

---

* छाउ ४।१।१ ( पृ ८२३ ) इत्यत्र अशंकर द्रष्टव्यम् । एतद्ब्राह्मणगततुल्यवाक्यानां स्थलनिर्देशादि सर्वं शब्रारगमध्वस्थलनिर्देशादिवर्जं बृउ २।४ ( पृ १०९० ) इत्यस्मिन्ब्राह्मणेऽपि द्रष्टव्यम् ।

(१) बृउ ४।५।१, शब्रा १४।७।३।१ प्रज्ञैव (प्रज्ञेव ) ( तर्हि० ) अथ ह याज्ञवल्क्योऽन्य ( सोऽन्य ) करिष्यन् ( करिष्यमाण ), अशंकर ३।४।२३; रंग त्रेयी च ( त्रेयी ), बलदेव ३।४।२३, २४

* शेषं शंकरवत् ।

(२) बृउ ४।५।२, शब्रा १४।७।३।२ मैत्रेयीति होवाच याज्ञवल्क्य ( याज्ञवल्क्यो मैत्रेयीति होवाच )

भवामि । मैत्रेयि अनुजानीहि माम् । हन्त इच्छसि यदि, ते अनया कात्यायन्या अन्त करवाणि— इत्यादि व्याख्यातम् । शकर

सा होवाच मैत्रेयी । यन्नु म इयं भगो सर्वा पृथिवी वित्तेन पूर्णा स्यात्स्या न्वहं तेनामृताहो३ । नेति नेति होवाच याज्ञवल्क्य । यथैवोपकरणवता जीवित तथैव ते जीवित९ स्यात् । अमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेनेति ॥

सा होवाच मैत्रेयी । येनाहं नामृता स्यां किमहं तेन कुर्याम् । यदेव भगवान्वेद तदेव मे ब्रूहीति ॥

सा एवमुक्ता उवाच मत्रयी — सर्वेय पृथिवी वित्तेन पूर्णा स्यात्, नु किं स्या, किमह वित्तमाध्येन कर्मणा अमृता, आहो न स्यामिति । नेति होवाच याज्ञवल्क्य इत्यादि समानमन्यत् । शकर

स होवाच याज्ञवल्क्य । प्रिया वै खलु नो भवती सती प्रियमवृधत् । हन्त तर्हि भवत्येतद्व्याख्यास्यामि ते । व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥

( १ ) स ह उवाच —प्रियैव पूर्वं खलु न. अस्मभ्य भवती, भवन्ती सती, प्रियमेव अवृधत् वर्धितवती निर्धारितवती असि । अतः तुष्टोऽहम् । हन्त इच्छसि चेत् अमृतत्वसाधन ज्ञातु, हे भवति, ते तुभ्य तत् अमृतत्वसाधन व्याख्यास्यामि । शकर.

( २ ) प्रियमेवावृधद्वर्धितवती । अनुकूलभाषणादिति भाव. । निदिध्यासस्व सावधान शृण्वित्यर्थ. । रग

(१) बृउ ४।५।३, शब्रा १४।७।३।३

(२) बृउ ४।५।४, शब्रा १४।७।३।४, मध्व न्वेद ( न्वेत्थ ), विज्ञान ३।३।४२

(३) बृउ ४।५।५, शब्रा १४।७।३।५ ( वै० ) मवृधत् ( मवृतत् ) तर्हि .निदिध्यासस्वेति ( खलु भवति तेऽह तद्वक्ष्यामि । व्याख्यास्यामि ते । वाच तु मे व्याचक्षाणस्य निदिध्यासस्वेति । ब्रवीतु भगवानिति ), रग भवती ( भवति ) ( ते० ), मध्व भवती ( भवति) प्रियमवृधत् ( प्रियामवृधम् ) ( हन्त० ) ( ते० ).

( ३ ) प्रियां वाचमवर्धयद्भवती । मध्व

स होवाच । न वा अरे पत्यु कामाय पति. प्रियो भवत्यात्मनस्तु कामाय पति प्रियो भवति । न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति । न वा अरे पुत्राणा कामाय पुत्रा. प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति । न वा अरे वित्तस्य कामाय वित्त प्रिय भवत्यात्मनस्तु कामाय वित्त प्रियं भवति । न वा अरे पशूना कामाय पशव प्रिया भवन्त्यात्मनस्तु कामाय पशव प्रिया भवन्ति । न वा अरे ब्रह्मणः कामाय ब्रह्म प्रिय भवत्यात्मनस्तु कामाय ब्रह्म प्रिय भवति । न वा अरे क्षत्रस्य कामाय क्षत्र प्रिय भवत्यात्मनस्तु कामाय क्षत्र प्रिय भवति । न वा अरे लोकाना कामाय लोका प्रिया भवन्त्यात्मनस्तु कामाय लोका प्रिया भवन्ति । न वा अरे देवाना कामाय देवा प्रिया भवन्त्यात्मनस्तु कामाय देवा. प्रिया भवन्ति । न वा अरे वेदाना कामाय वेदा प्रिया भवन्त्यात्मनस्तु कामाय वेदा. प्रिया भवन्ति । न वा अरे भूताना कामाय

(१) बृउ ४।५।६, शब्रा १४।७।३।६ होवाच+ ( याज्ञवल्क्य ) ( न वा अरे पशूना पशव प्रिया भवन्ति० ) वेदा प्रिया भवन्ति + ( न वा अरे यज्ञाना कामाय यज्ञा प्रिया भवन्त्यात्मनस्तु कामाय यज्ञा प्रिया भवन्ति ) आत्मा वा अरे ( आत्मा न्वरे ) खल्वरे ( वा अरे ), ब्रशकर १।४।२३, २।३।६, ३।४।१, २४, ४।१।१, २, भास्कर २।३।३९, ४।१।१, रामानुज. १।४।२२, २।१।१५ ( पृ ४४३ ), निंबार्क १।४।१९, ४।१।१, ब्रमध्व १।१।१, ३।२।२६, ३।३।४३, ३।४।५०, ४।१।१, श्रीकंठ १।४।१९, २०, श्रीकर १।१।१ ( पृ २२, २३ ), १।४।१९, २०, २३, वल्लभ १।४।२२, ३।३।१८, विज्ञान १।१।१ ( पृ २७ ), १।१।३ ( पृ ७० ), १।१।४ ( पृ ११३, ११६ ), ३।२।२३, ३।३।४, २१ आत्मनि खल्वरे विदितम् ( आत्मनि वा अरे दृष्टे श्रुते मते इद सर्वं दृष्ट श्रुत मत भवति ), बलदेव १।४।१९, २।२।३७, ३।३।३२, ३।४।२४, ४७, ४।१।१, ११.

भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति। न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति। आत्मा वा अरे द्रष्टव्य श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेयि। आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्॥

आत्मनि खलु अरे मैत्रेयि दृष्टे, कथ दृष्ट आत्मनीति, उच्यते--पूर्वं आचार्यागमाभ्या श्रुते, पुन तर्केणोपपत्त्या मते विचारिते, श्रवण तु आगममात्रेण, मते उपपत्त्या, पश्चात् विज्ञाते--एवमेतत् नान्यथेति निर्धारिते। किं भवतीत्युच्यते--इद विदित भवति। इद सर्वमिति यत् आत्मनोऽन्यत्, आत्मव्यतिरेकेणाभावात्।

शकर

[१]ब्रह्म तं परादाद्योऽन्यत्राऽऽत्मनो ब्रह्म वेद। क्षत्र त परादाद्योऽन्यत्राऽऽत्मन क्षत्र वेद। लोकास्त परादुर्योऽन्यत्रात्मनो लोकान्वेद। देवास्त परादुर्योऽन्यत्राऽऽत्मनो देवान्वेद। वेदास्त परादुर्योऽन्यत्राऽऽत्मनो वेदान्वेद। भूतानि त परादुर्योऽन्यत्राऽऽत्मनो भूतानि वेद। सर्वं त परादाद्योऽन्यत्राऽऽत्मन सर्वं वेद। इद ब्रह्मेद क्षत्रमिमे लोका इमे देवा इमे वेदा इमानि भूतानीदं सर्वं यदयमात्मा॥

[२]स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय। दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीत.॥

[३]स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय। शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीत॥

(१) बृउ ४।५।७, शब्रा १४।७।३।७ वेदान्वेद। + (यज्ञास्त परादुर्योऽन्यत्रात्मनो यज्ञान्वेद) इमे वेदा+ (इमे यज्ञा), अशकर ४।१।३, भास्कर १।३।१, रामानुज १।४।१९, श्रीकर १।४।२०, वल्लभ १।४।१९, विज्ञान १।१।५ (पृ १२१)

(२) बृउ ४।५।८, शब्रा १४।७।३।८ शब्दो + (भवति), अशकर १।४।२३, श्रीकर १।४।२३.

(३) बृउ ४।५।९, १०, शब्रा १४।७।३।१० स

स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय। वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीत॥

त अयथार्थदर्शिन परादात् पराकुर्यात्, कैवल्यासंबन्धिन कुर्यात् — अयमनात्मस्वरूपेण मा पश्यतीत्यपराधादिति भावः। शकर.

[१]स यथाऽऽर्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेद. सामवेदोऽथर्वाङ्गिरस इतिहास पुराण विद्या उपनिषद. श्लोका सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टं हुतमाशित पायितमयं च लोक परश्च लोक सर्वाणि च भूतानि। अस्यैवैतानि सर्वाणि निश्वसितानि॥

[२]स यथा सर्वासामपां समुद्र एकायनम्। एवं सर्वेषां स्पर्शाना त्वगेकायनम्। एवं सर्वेषा गन्धानां नासिके एकायनम्। एवं सर्वेषां रसाना जिह्वैकायनम्। एवं सर्वेषां रूपाणा चक्षुरेकायनम्। एवं सर्वेषां शब्दानां श्रोत्रमेकायनम्। एवं सर्वेषां सकल्पानां मन एकायनम्। एवं सर्वासां विद्यानां हृदयमेकायनम्। एवं सर्वेषा कर्मणां हस्तावेकायनम्। एवं सर्वेषामानन्दानामुपस्थ एकायनम्। एवं सर्वेषां विसर्गाणा पायुरेकायनम्। एवं सर्वेषा-

(१) बृउ ४।५।११, शब्रा १४।७।३।११ नीष्टं (नि दत्तं), रग हास पुराण (हासपुराण), रामानुज १।४।१९, २२ ऽस्य महतो (तस्य ह वा एतस्य महतो), मध्व सितमेतद्य (सितमेवैतद्य), विज्ञान १।४।७.

(२) बृउ ४।५।१२, शब्रा १४।७।३।१२ सर्वासां विद्यानां (सर्वेषां वेदानां) हस्तावेकायनम् + (एवं सर्वेषामध्वनां पादावेकायनम्) (एवं सर्वेषामध्वनां पादावेकायनम्०) सर्वेषां वेदानां (सर्वासां विद्यानां), रग एवं सर्वेषां गन्धाना. . । एवं सर्वेषां रसानां . (एवं सर्वेषां रसाना .. । एवं सर्वेषा गन्धानां .), रामानुज. १।४।२२, मध्व. गन्धानां नासिके एका (रसाना जिह्वैका) रसानां जिह्वैका (गन्धाना नासिकैका), विज्ञान. २।४।६.

मध्वनां पादावेकायनम्। एवꣳ सर्वेषां वेदानां वागेकायनम् ॥

( १ ) चतुर्थे शब्दनिश्वासेनैव लोकाद्यर्थनिश्वासः सामर्थ्यात् उक्तो भवतीति पृथक् नोक्त । इह तु सर्वशास्त्रार्थोपसहार इति कृत्वा अर्थप्राप्तोऽप्यर्थ. स्पष्टी कर्तव्य इति पृथगुच्यते । शकर

( २ ) 'अवस्थितेरिति काशकृत्स्नः' — यदप्युक्त प्रकृतस्यैव महतो भूतस्य द्रष्टव्यस्य भूतेभ्य समुत्थान विज्ञानात्मभावेन दर्शयन्विज्ञानात्मन एवेद द्रष्टव्यत्व दर्शयतीति, तत्रापीयमेव त्रिसूत्री योजयितव्या । 'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्य.' —इदमत्र प्रतिज्ञातम्—'आत्मनि विदिते सर्वं विदित भवति' (इति) 'इद सर्वं यदयमात्मा' इति च । उपपादित च सर्वस्य नाम रूपकर्मप्रपञ्चस्यैकप्रसवत्वादेकप्रलयत्वाच्च । दुन्दुभ्यादिदृष्टान्तैश्च कार्यकारणयोरव्यतिरेकप्रतिपादनात् । तस्या एव प्रतिज्ञाया सिद्धिं सूचयत्येतल्लिङ्ग, यन्महतो भूतस्य भूतेभ्य. समुत्थान विज्ञानात्मभावेन कथितमित्याश्मरथ्य आचार्यो मन्यते । अभेदे हि सत्येकविज्ञानेन सर्वविज्ञान प्रतिज्ञातमवकल्पत इति । 'उत्क्रमिष्यत एव भावादित्यौडुलोमि.'—उत्क्रमिष्यतो विज्ञानात्मनो ज्ञानध्यानादिसामर्थ्यात्सप्रसन्नस्य परेणाऽऽत्मनैक्यसभवादिदमभेदाभिधानमित्यौडुलोमिराचार्यो मन्यते । 'अवस्थितेरिति काशकृत्स्न'—अस्यैव परमात्मनोऽनेनापि विज्ञानात्मभावेनावस्थानादुपपन्नमिदमभेदाभिधानमिति काशकृत्स्न आचार्यो मन्यते। ननूच्छेदाभिधानमेतत् 'एतेभ्यो भूतेभ्य. समुत्थाय तान्येवानु विनश्यति न प्रेत्य सज्ञाऽस्ति' इति कथमेतदभेदाभिधानम् । नैष दोषः । विशेषविज्ञानविनाशाभिप्रायमेतद्विनाशाभिधान नाऽऽत्मोच्छेदाभिप्रायम् । 'अत्रैव मा भगवानमूमुहन्न प्रेत्य सज्ञाऽस्ति' इति पर्यनुयुज्य स्वयमेव श्रुत्याऽर्थान्तरस्य दर्शितत्वात् । 'न वा अरेऽह मोह ब्रवीम्य विनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा मात्राऽससर्ग स्त्वस्य भवति' (बृउ ४।५।१५) इति । एतदुक्त भवति — कूटस्थनित्य एवाय विज्ञानघन आत्मा । नास्योच्छेदप्रसङ्गोऽस्ति । मात्राभिस्त्वस्य भूतेन्द्रिय लक्षणाभिरविद्याकृताभिरससर्गो विद्यया भवति । ससर्गाभावे च तत्कृतस्य विशेषविज्ञानस्याभावात् 'न प्रेत्य सज्ञाऽस्ति' इत्युक्तमिति । यदप्युक्तम् — 'विज्ञातारमरे केन विजानीयात्' इति कर्तृवचनेन शब्देनोपसहाराद्विज्ञानात्मन एवेद द्रष्टव्यमिति तदपि काशकृत्स्नीयेनैव दर्शनेन परिहरणीयम् । अपि च 'यत्र हि द्वैतमिव भवति तदितर इतर पश्यति' इत्यारभ्याविद्याविषये तस्यैव दर्शनादिलक्षण विशेषविज्ञान प्रपञ्च्य 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन क पश्येत्' इत्यादिना विद्याविषये तस्यैव दर्शनादिलक्षणस्य विशेषविज्ञानस्याभावमभिदधाति । पुनश्च विषयाभावेऽप्यात्मान विजानीयादित्याशङ्क्य 'विज्ञातारमरे केन विजानीयात्' इत्याह । ततश्च विशेषविज्ञानाभावोपपादनपरत्वाद्वाक्यस्य विज्ञानधातुरेव केवलः सन्भूतपूर्वगत्या कर्तृवचनेन तृचा निर्दिष्ट इति गम्यते । दर्शित तु पुरस्तात्काशकृत्स्नीयस्य पक्षस्य श्रुतिमत्त्वम् । अतश्च विज्ञानात्मपरमात्मनोरविद्याप्रत्युपस्थापितनामरूपरचितदेहाद्युपाधिनिमित्तो भेदो न पारमार्थिक इत्येषोऽर्थः सर्वैर्वेदान्तवादिभिरभ्युपगन्तव्यः ।

ब्रशकर १।४।२२

( ३ ) 'अवस्थितेरिति काशकृत्स्न' — अमृतत्वोपाये मैत्रेय्या पृष्टे याज्ञवल्क्यः 'आत्मा वा अरे द्रष्टव्य.' (बृउ ४।५।६) इत्यादिना परमात्मोपासनममृतत्वोपायमुक्त्वा 'आत्मनि खल्वरे दृष्टे' (बृउ. ४।५।६) इत्यादिनोपास्यलक्षण दुन्दुभ्यादिदृष्टान्तैश्चोपासनोपकरणभूतमन प्रभृतिकरणग्रामनियमन च सामान्येनाभिधाय 'स यथार्द्रैधाग्ने.' इत्यादिना 'स यथा सर्वासामपा समुद्र एकायनम्' इत्यादिना चोपास्यभूतस्य परस्य ब्रह्मणो निखिलजगदेककारणत्व सकलविषयप्रवृत्तिमूलकरणग्रामनियमन च विस्तीर्णमुपदिश्य 'स यथा सैन्धवघन.' (बृउ. ४।५।१३) इत्यादिनाऽमृतत्वोपायप्रवृत्तिप्रोत्साहनाय जीवात्मस्वरूपेणावस्थितस्य परमात्मनोऽपरिच्छिन्नज्ञानैकाकारतामुपपाद्य तस्यैवापरिच्छिन्नज्ञानैकाकारस्य ससारदशायां भूतपरिणामानुवृत्तिं 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' (बृउ ४।५।१३) इत्यभिधाय 'न प्रेत्य सज्ञाऽस्ति' (बृउ ४।५।१३) इति मोक्षदशायां स्वाभाविकापरिच्छिन्नज्ञानसकोचाभावेन भूतसघातैनैकीकृत्यात्मनि

देवादिरूपज्ञानाभावमुक्त्वा — पुनरपि 'यत्र हि द्वैत मिव भवति' (बृउ ४।५।१५) इत्यादिना ब्रह्मात्मक त्वेन नानाभूतवस्तुदर्शनमज्ञानकृतमिति निरस्तनिखिला ज्ञानस्य ब्रह्मात्मक कृत्स्न जगदनुभवतो ब्रह्मव्यतिरिक्त वस्त्वन्तराभावेन भेददर्शन निरस्य 'येनेद सर्वं विजानाति त केन विजानीयात्' (बृउ ४।५।१५) इति च जीवात्मा स्वात्मतयाऽवस्थितेन येन परमात्मनाहितज्ञानः सन्निद सर्वं येन विजानात्यय त केन विजानीयान्न केनापीति परमात्मनो दुरवगमत्वमुपपाद्य 'स एष नेति नेति' (बृउ ४।५।१५) इत्यादिनाऽय सर्वेश्वर स्वेतरसमस्तचिदचिद्वस्तुविलक्षणरूप एव सर्वशरीर. सन् सर्वस्यात्मतयाऽवस्थित इति स्वशरीरभूतचिदचिद्वस्तु गतैर्दोषैर्न सस्पृश्यत इत्यभिधाय 'विज्ञातारमरे केन विजानीयादित्युक्तानुशासनासि मैत्रेय्येतावदरे खल्वमृतत्वम्' (बृउ ४।५।१५) इति समस्तवस्तुविसजातीय निरस्तनिखिलदोष निखिलजगदेककारणभूत सर्वस्य विज्ञातार पुरुषोत्तममुक्तप्रकारादुपासनादृते केन विजानीयादितीदमेवोपासनममृतत्वोपायो ब्रह्मप्राप्तिरेव चामृतत्वमभिधीयत इत्युक्तवान्। अत पर ब्रह्मैवास्मिन्वाक्ये प्रतिपाद्यत इति परमेव ब्रह्म जगत्कारण पुरुषस्तदधिष्ठाता च प्रकृतिरिति स्थितम्।

रामानुज १।४।२२

स[१] यथा सैन्धवघनोऽनन्तरोऽबाह्य कृत्स्नो रसघन एव। एवं वा अरेऽयमात्माऽनन्तरोऽबाह्य कृत्स्न प्रज्ञानघन एव। एतेभ्यो भूतेभ्य समुत्थाय तान्येवानुविनश्यति। न प्रेत्य सज्ञाऽस्तीत्यरे ब्रवीमि। इति होवाच याज्ञवल्क्य. ॥

(१) बृउ ४।५।१३, शबा १४।७।३।१३ रसघन एव + (स्यात्) अरेऽयमात्माऽनन्तरोऽबाह्य (अर इद महद्भूतमनन्तमपार) अशकर १।३।१, २।३।१७, १८, ३।२।१६, ४।४।६, भास्कर ३।२।१७, ४।४।६ रसघन एव (रसघन), रामानुज १।१।१ (पृ ४२), १।४।२२, ४।४।६, निंबार्क ४।४।६, १६, श्रीकंठ ४।४।६ भास्करवत, श्रीकर ३।२।१६, ४।४।७, वल्लभ १।४।१९, ३।२।१६, ४।४।६ भास्करवत्, विज्ञान २।३।५०, ३।२।१६, बलदेव ४।४।६

(१) सर्वकार्यप्रलये विद्यानिमित्ते, सैन्धवघनवत् अनन्तरः अबाह्यः कृत्स्न. प्रज्ञानघन एक आत्मा अवतिष्ठते। पूर्वं तु भूतमात्रासंसर्गविशेषात् लब्धविशेष विज्ञान सन्। तस्मिन् प्रविलापिते विद्यया विशेषविज्ञाने तन्निमित्ते च भूतसंसर्गे न प्रेत्य सज्ञा अस्ति— इत्येव याज्ञवल्क्येनोक्ता। शकर.

(२) यथा सैन्धवघनो लवणखण्डोऽनन्तरोऽन्तरावयवव्यतिरिक्तोऽबाह्यो बाह्यावयवव्यतिरिक्तश्च सर्वोऽप्यवयवो यथा रसघनो भवति। अत्रान्तरो बाह्यश्च रसघन इति वक्तव्येऽन्तरत्वबाह्यत्वशून्यानां मध्यवर्तिनामपि ग्रहण यथा स्यादिति अनन्तरोऽबाह्य इति व्यतिरेकमुखेण निर्देशः। एव च सति निरवयवात्मसाधारण्यमपि फलित भवतीति द्रष्टव्यम्। एवमेवायमात्मा सर्वत्र विज्ञानघनजीवशरीरक इत्यर्थ। जीवपरयो· स्वरूपेणैक्याभावाच्छरीरात्मभाव इद सामानाधिकरण्य द्रष्टव्यम्। रग.

(३) बाह्याभ्यन्तरविशेषाभावेन सर्वत्र लवणरसघन एव। मध्व.

सा[१] होवाच मैत्रेयी। अत्रैव मा भगवान्मोहान्तमापीपिपत्। न वा अहमिम विजानामीति।

(१) बृउ. ४।५।१४, शबा १४।७।३।१४, १५ पीपिपत् (पापदत्) मिम विजानामीति (मिद विजानामि न प्रेत्य सज्ञास्तीति) स होवाच+ (याज्ञवल्क्य.) धर्मो + (मात्रासंसर्गस्त्वस्य भवति) अत पर— "यद्वै तन्न पश्यति पश्यन्वै तद्द्रष्टव्य न पश्यति। न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्॥ १६॥ यद्वै तन्न जिघ्रति जिघ्रन्वै तद्घ्रातव्य न जिघ्रति। न हि घ्रातुर्घ्राणाद्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत्॥ १७॥ यद्वै तन्न रसयति विजानन्वै तद्रसं न रसयति। न हि रसयितु रसाद्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत्॥ १८॥ यद्वै तन्न वदति वदन्वै तद्वक्तव्य न वदति। न हि वक्तुर्वचो विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्त यद्वदेत्॥ १९॥ यद्वै तन्न शृणोति शृण्वन्वै तच्छ्रोतव्य न शृणोति। न हि श्रोतु श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वात्।

**स होवाच । न वा अरेऽहं मोहं ब्रवीमि । अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा ॥**

(१) स होवाच— अत्रैव मा भगवान् एतस्मिन्नेव वस्तुनि प्रज्ञानघन एव, न प्रेत्य सज्ञास्तीति, मोहान्त मोहमध्य, आपीपिपत् आपीपदत् अवगमितवानसि, समोहितवानसीत्यर्थः । अत. न वा अह इममात्मान उक्तलक्षण विजानामि विवेकत इति । स होवाच — नाह मोह ब्रवीमि, अविनाशी वा अरेऽयमात्मा यत. । विनष्टु शीलमस्येति विनाशी, न विनाशी अविनाशी, विनाशशब्देन विक्रिया, अविनाशीति अविक्रिय आत्मेत्यर्थ । अरे मैत्रेयि, अयमात्मा प्रकृत अनुच्छित्तिधर्मा । उच्छित्तिरुच्छेद', उच्छेद' अन्त. विनाश , उच्छित्तिः धर्म. अस्य इति उच्छित्तिधर्मा, न उच्छित्तिधर्मा अनुच्छित्तिधर्मा, नापि विक्रियालक्षण., नाप्युच्छेदलक्षण. विनाश. अस्य विद्यत इत्यर्थ. । शकर.

(२) न विद्यते उच्छित्तिर्यस्य सोऽनुच्छित्तिः । अविनाशीति यावत् । अनुच्छित्तिर्धर्मो यस्य सोऽनुच्छित्तिधर्मा । एव बहुव्रीहिगर्भो बहुव्रीहिः । तस्य ज्ञानलक्षणो धर्मोऽप्यविनाशीत्यर्थ. । न तूच्छित्त्यभावोऽनुच्छित्तिः । स धर्मो यस्येति बहुव्रीहि । अविनाशीत्यनेन पौनरुक्त्यप्रसङ्गादिति द्रष्टव्यम् । रग

(३) न वा अहमिम विजानातीति । अहेयमिम परमात्मान जीवो न जानातीत्यत्रैव भगवान्मोहान्त मोहाख्य नाशमापीपिपत् प्रापयामास । अतोऽह ब्रह्मास्मीत्यादिष्वहशब्दोऽहेयत्ववाचीति सिद्धम् । अन्यथा कथमह विजानातीति युज्यते । मध्व.

**यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरꣳ रसयते तदितर इतरमभिवदति तदितर इतरꣳ शृणोति तदितर इतरं मनुते तदितर इतरꣳ स्पृशति तदितर इतरं विजानाति । यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन क पश्येत्तत्केन क जिघ्रेत्तत्केन कꣳ रसयेत्तत्केन कमभिवदेत्तत्केन कꣳ शृणुयात्तत्केन कं मन्वीत तत्केन कꣳ स्पृशेत्तत्केन क विजानीयात् । येनेदꣳ सर्वं विजानाति तं केन विजानीयात् । * स एष नेति नेत्यात्मा । अगृह्यो न हि गृह्यते । अशीर्यो न हि शीर्यते । असङ्गो न हि सज्यते । असितो न व्यथते । न रिष्यति । विज्ञातारमरे केन**

---

न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्त यच्छृणुयात् ॥ २० ॥ यद्वै तन्न मनुते. मन्वानो वै तन्मन्तव्य न मनुते । न हि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वात् । न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्त यन्मन्वीत ॥ २१ ॥ यद्वै तन्न स्पृशति स्पृशन्वै तत्स्प्रष्टव्य न स्पृशति । न हि स्प्रष्टु स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् । न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्त यत्स्पृशेत् ॥ २२ ॥ यद्वै तन्न विजानाति विजानन्वै तद्विज्ञेय न विजानाति । न हि विज्ञातुर्विज्ञानाद्विपरिलोपो विद्यतेऽविनाशित्वात् । न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात् ॥ २३ ॥" इत्येता कण्डिका अधिका , **ब्रशाकर** २।३।१७ मापीपिपत् ( मापीपदत् ) विजानामीति ( विजानामि ) धर्मा + ( मात्राऽसꣳसर्गस्त्वस्य भवति ), **भास्कर.** २।३।१७, **रग** मापीपिपत् ( मापीपद ), **निंबार्क** २।३।२९, **मध्व** मापीपिपत् ( मापिपत् ) नाशी वा अरे ( नाशी वाऽरे ), **विज्ञान** २।३।४०, ४९, ५०, **बलदेव** २।३।२५

* 'स एष नेति नेत्यात्मा' इति वाक्यस्य स्थलनिर्देशादि बृउ ३।९।२६ । ( पृ '११७६ ) इत्यत्र द्रष्टव्यम् ।

(१) **बृउ** ४।५।१५, **शब्रा** १४।७।३।२४, २५ यत्र हि द्वैतमिव इतर विजानाति ( यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत् । अन्योऽन्यज्जिघ्रेत् । अन्योऽन्यद्रसयेत् । अन्योऽन्यदभिवदेत् । अन्योऽन्यच्छृणुयात् । अन्योऽन्यन्मन्वीत । अन्योऽन्यत्स्पृशेत् । अन्योऽन्यद्विजानीयात् ) ( स एष नेति न रिष्यति० ) विजहार ( प्रवव्राज ), **ब्रशाकर** १।१।४ ( पृ ७४ ), १।१।१२, १।२।१२, १।३।९, १।४।२२, २।१।१४, ३।४।१, १६, ५२, ४।१।३, ४।३।१४, ४।४।१६, **भास्कर** १।४।१८, २।१।१४, ३।४।१६, **रग** ( तत्केन कꣳ रसये० ) ( त्केन क मन्वीत त० ) ( एष० ) नेत्यात्मा ( नेतीत्यात्मा ), **रामानुज** १।१।१ ( पृ ६३ ), १।४।१९, २२, २३, २।१।१५ ( पृ ४२३, ४४४ ), **मध्व** सज्यते ( सज्जते ), **श्रीकर** १।१।१ ( पृ २२ ), १।३।९, १।४।१९, २।३।१७, ४।४।७, **वल्लभ** १।४।१९, २२, ३।४।१०, १६, ४।४।१० विजहार ( प्रवव्राज ), **विज्ञान.** १।१।३ ( पृ ८१ ), २।३।४३, ३।२।१०, ३।३।४२

विजानीयादिति । उक्तानुशासनाऽसि मैत्रेयि । एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार ॥

( १ ) चतुर्ष्वपि प्रपाठकेषु एक आत्मा तुल्यो निर्धारित. पर ब्रह्म । उपायविशेषस्तु तस्याधिगमे अन्यश्चान्यश्च । उपेयस्तु स एव आत्मा, य चतुर्थे— 'अथात आदेशो नेति नेति' इति निर्दिष्ट. । स एव पञ्चमे प्राणपणोपन्यासेन शाकल्ययाज्ञवल्क्यसवादे निर्धारित', पुन. पञ्चमसमाप्तौ, पुनर्जनकयाज्ञवल्क्यसवादे, पुनः इह उपनिषत्समाप्तौ । चतुर्णामपि प्रपाठकाना एतदात्मनिष्ठता, नान्योऽन्तराले कश्चिदपि विवक्षितोऽर्थ. —इत्येतत्प्रदर्शनाय अन्ते उपसहार. — स एष नेति नेत्यादि. । यस्मात् प्रकारशतेनापि निरूप्यमाणे तत्त्वे, नेति नेत्यात्मैव निष्ठा, न अन्या उपलभ्यते तर्केण वा आगमेन वा । तस्मात् एतदेवामृतत्वसाधन, यदेतत् नेति नेत्यात्मपरिज्ञान सर्वसन्यासश्च इत्येतमर्थमुपसजिहीर्षन्नाह — एतावत् एतावन्मात्र यदेतत् नेति नेत्यद्वैतात्मदर्शनम् । इद च अन्यसहकारिकारणनिरपेक्ष मेव अरे मैत्रेयि अमृतत्वसाधनम् । यत्पृष्टवत्यसि — यदेव भगवान्वेद तदेव मे ब्रूह्यमृतत्वसाधनमिति, तत् एतावदेवेति विज्ञेय त्वया — इति ह एव किल अमृतत्वसाधनमात्मज्ञान प्रियायै भार्यायै उक्त्वा याज्ञवल्क्यः — किं कृतवान्? यत्पूर्वं प्रतिज्ञात 'प्रव्रजिष्यन्नस्मि' इति, तच्चकार विजहार प्रव्रजितवानित्यर्थ. । परिसमाप्ता ब्रह्मविद्या सन्यासपर्यवसाना । एतावान् उपदेश , एतत् वेदानुशासन, एषा परमनिष्ठा, एष पुरुषार्थकर्तव्यतान्त इति । शकर

( २ ) एतावद्विज्ञातु परमात्मनो विज्ञानादिकमत्र ह्यमृतत्व मोक्ष । 'विष्णोर्ज्ञानादिक मोक्षस्तदभावे कुतः सुखम् । ज्ञेयाभावान्न हि ज्ञान ज्ञानाभावे हि शून्यता । तस्माज्ज्ञेययुतो मोक्षः सुखरूपत्वत' सदा ॥' इति ब्रह्मतर्के । मध्व.

उपनिषद्विद्यावंश

अथ वंशः । पौतिमाष्यो गौपवनात् । गौपवन. पौतिमाष्यात् । पौतिमाष्यो गौपवनात् । गौपवन. कौशिकात् । कौशिक कौण्डिन्यात् । कौण्डिन्य शाण्डिल्यात् । शाण्डिल्य. कौशिकाच्च गौतमाच्च । गौतम — ॥

अग्निवेश्यात् । आग्निवेश्यो गार्ग्यात् । गार्ग्यो गार्ग्यात् । गार्ग्यो गौतमात् । गौतम सैतवात् । सैतव पाराशर्यायणात् । पाराशर्यायणो गार्ग्यायणात् । गार्ग्यायण उद्दालकायनात् । उद्दालकायनो जाबालायनात् । जाबालायनो माध्यन्दिनायनात् । माध्यन्दिनायन सौकरायणात् । सौकरायण. काषायणात् । काषायण सायकायनात् । सायकायनः कौशिकायने । कौशिकायनि — ॥

घृतकौशिकात् । घृतकौशिक पाराशर्यायणात् । पाराशर्यायण. पाराशर्यात् । पाराशर्यो जातूकर्ण्यात् । जातूकर्ण्य आसुरायणाच्च यास्काच्च । आसुरायणस्त्रैवणेः । त्रैवणिरौपजन्धनेः । औपजन्धनिरासुरे' । आसुरिर्भारद्वाजात् । भारद्वाज आत्रेयात् । आत्रेयो माण्टे । माण्टिर्गौतमात् । गौतमो गौतमात् । गौतमो वात्स्यात् । वात्स्य शाण्डिल्यात् । शाण्डिल्यः कैशोर्यात्काप्यात् । कैशोर्य. काप्य. कुमारहारितात् । कुमारहारितो गालवात् । गालवो विदर्भीकौण्डिन्यात् । विदर्भीकौण्डिन्यो वत्सन-

अथ वंश . जातूकर्ण्य आसुरायणाच्च यास्काच्च ( अथ वंश । तदिदं वयं शौर्पणाय्यात् । शौर्पणाय्यो गौतमात् । गौतमो वात्स्यात् । वात्स्यो वात्स्याच्च पाराशर्याच्च । पाराशर्य सांकृत्याच्च भारद्वाजाच्च । भारद्वाज औदवाहेश्च शाण्डिल्याच्च । शाण्डिल्यो बैजवापाच्च गौतमाच्च । गौतमो बैजवापायनाच्च वैष्टपुरेयाच्च । वैष्टपुरेय शाण्डिल्याच्च रौहिणायनाच्च । रौहिणायन शौनकाच्च जैवन्तायनाच्च रैभ्याच्च । रैभ्य पौतिमाष्यायणाच्च कौण्डिन्यायनाच्च । कौण्डिन्यायन कौण्डिन्याभ्याम् । कौण्डिन्या और्णवाभेभ्य. । और्णवाभा कौण्डिन्यात् । कौण्डिन्य कौण्डिन्यात् । कौण्डिन्य कौण्डिन्याच्चाग्निवेश्याच्च ॥ आग्निवेश्य सैतवात् । सैतव पाराशर्यात् । पाराशर्यो जातूकर्ण्यात् । जातूकर्ण्यो भारद्वाजात् । भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च । गौतमो भारद्वाजात् । भारद्वाजो वलाकाकौशिकात् । वलाकाकौशिक काषायणात् । , काषायण सौकरायणात् ।

(१) बृउ ४।६।१—३, शब्रा १४।७।३।२६—२८

पातो बाभ्रवात् । वत्सनपाद्बाभ्रव पथ सौभरात् । पन्था सौभरोऽयास्यादाङ्गिरसात् । अयास्य आङ्गिरस आभूतेस्त्वाष्ट्रात् । आभूतिस्त्वाष्ट्रो विश्व रूपात्त्वाष्ट्रात् । विश्वरूपस्त्वाष्ट्रोऽश्विभ्याम् । अश्विनौ दधीच आथर्वणात् । दध्यङ्ङाथर्वणोऽथर्वणो दैवात् । अथर्वा दैवो मृत्यो. प्राध्वꣳसनात् । मृत्युः प्राध्वꣳसन. प्रध्वꣳसनात् । प्रध्वꣳसन एकर्षेः । एकर्षिर्विप्रचित्ते । विप्रचित्तिर्व्यष्टेः । व्यष्टि सनारो. । सनारुः सनातनात् । सनातन सनगात् । सनगः परमेष्ठिन॰ । परमेष्ठी ब्रह्मण. । ब्रह्म स्वयभु । ब्रह्मणे नमः ॥

( १ ) अथ अनन्तर याज्ञवल्कीयस्य काण्डस्य वश आरम्यते, यथा मधुकाण्डस्य वश॰ । व्याख्यान तु पूर्ववत् । ब्रह्म स्वयभु ब्रह्मणे नम ओमिति ।

शकर

( २ ) अवरेभ्योऽपि शृण्वन्ति परमाश्च क्वचित्क्वचित् । लीलयैव न चैतेषां परमत्व विहीयते ॥ ' इति च । मध्व

इति चतुर्थोऽध्याय॰ ॥

---

सौकरायणस्त्रैवणे । त्रैवणिरौपजन्धने । औपजन्धनि सायकायनात् । सायकायन कौशिकायने । कौशिकायनिर्घृतकौशिकात् । घृतकौशिक पाराशर्यायणात् । पाराशर्यायण पाराशर्यात् । पाराशर्यो जातूकर्ण्यात् । जातूकर्ण्यो भारद्वाजाद् । भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्च ।) चित्ते (जित्ते ) चित्ति (जित्ति), रग जन्धने ( चन्धने ) जन्धनि ( चन्धनि ) आभूते ( आहूते ) आभूति ( आहूति ) सनगात् । सनग ( सनकात् । सनक ), मध्व त्रैवणे । त्रैवणिरौपजन्धने । औपजन्धनि ( त्रैवर्णे । त्रैवर्णिरौपञ्चधने । औपञ्चधनि ) ( गौतमो गौतमात्० ) विदर्भीकौण्डिन्यात् ( विदर्भात्कौण्डिन्यात् ) अयास्य आङ्गि ( अयास्याङ्गि ) एकर्षे । एकर्षि ( एकऋषे । एकऋषि ) सनगात् । सनग (सनकात् । सनक.)

# पञ्चमोऽध्यायः

इद रूपमदोरूपं च पूर्णं ब्रह्म, ख ब्रह्म

पूर्णमद. पूर्णमिद पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते । ॐ खं ब्रह्म । खं पुराणम् । वायुरं खम् । इति ह स्माह कौरव्यायणीपुत्र । वेदोऽय ब्राह्मणा विदु. । वेदैनेन यद्वेदितव्यम् ॥

( १ ) पूर्णमद इत्यादि खिलकाण्डमारभ्यते । अध्यायचतुष्टयेन यदेव साक्षादपरोक्षाद्ब्रह्म, य आत्मा सर्वान्तरः निरुपाधिकः अशनायाद्यतीतः नेति नेतीति व्यपदेश्य. निर्धारित., यद्विज्ञान केवलममृतत्वसाधनम्— अधुना तस्यैव आत्मन॰ सोपाधिकस्य शब्दार्थादिव्यवहारविषयापन्नस्य पुरस्तादनुक्तानि उपासनानि कर्मभिरविरुद्धानि प्रकृष्टाभ्युदयसाधनानि क्रममुक्तिभाञ्जि च । तानि वक्तव्यानीति पर सदर्भः । सर्वोपासनशेषत्वेन ओंकारो दम दान दया इत्येतानि च विधित्सितानि । पूर्णमद.—पूर्णं न कुतश्चित् व्यावृत्त व्यापीत्येतत् । निष्ठा च कर्तरि द्रष्टव्या । अद इति परोक्षाभिधायि सर्वनाम, तत् पर ब्रह्मेत्यर्थ. । तत् सपूर्णं आकाशवद्व्यापि निरन्तर निरुपाधिक च । तदेव इद सोपाधिक नामरूपस्थ व्यवहारापन्न पूर्णं स्वेन रूपेण परमात्मना व्याप्त्येव, न उपाधिपरिच्छिन्नेन विशेषात्मना । तदिद विशेषापन्न कार्यात्मक ब्रह्म पूर्णात्कारणात्मन. उदच्यते उद्रिच्यते, उद्गच्छतीत्येतत् । यद्यपि कार्यात्मना उद्रिच्यते तथापि यत्स्वरूप पूर्णत्व परमात्मभाव तन्न जहाति, पूर्णमेव उद्रिच्यते । पूर्णस्य कार्यात्मनो ब्रह्मणः, पूर्णं पूर्णत्व, आदाय गृहीत्वा आत्मस्वरूपैकरसत्वमापद्य विद्यया, अविद्याकृत भूतामात्रोपाधिससर्गज अन्यत्वावभास तिरस्कृत्य, पूर्णमेव अनन्तरमबाह्य प्रज्ञानघनैकरसस्वभाव केवल ब्रह्म अविशिष्यते ।

यदुक्तम् — 'ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेत् तस्मात्तत्सर्वमभवत् ' इति — एषः अस्य मन्त्रस्यार्थ । तत्र ' ब्रह्म ' इत्यस्यार्थः ' पूर्णमद. '

---

(१) बृउ ५।१।१, शब्रा १४।८।१।१, ब्रशकर १।१।२२, मध्व वेदैनेन ( वेदेनैन ), श्रीकर ४।३।६; बलदेव १।१।९, २।३।४७

इति। इदं पूर्णं इति 'ब्रह्म वा इदमग्र आसीत्' इत्यस्यार्थः। तथा च श्रुत्यन्तरम् — 'यदेवेह तदमुत्र यदमुत्र तदन्विह' इति। अत अदःशब्द-वाच्यं पूर्णं ब्रह्म, तदेव इदं पूर्णं कार्यस्थं नामरूपोपाधि-संयुक्तं अविद्यया उद्रिक्तं तस्मादेव परमार्थस्वरूपात् अन्यदिव प्रत्यवभासमानं — तत्, यत् आत्मानमेव परं पूर्णं ब्रह्म विदित्वा — अहं अदः पूर्णं ब्रह्मास्मि इत्येवं, पूर्णमादाय, तिरस्कृत्य अपूर्णस्वरूपतां अविद्या-कृतां नामरूपोपाधिसंपर्कजां एतया ब्रह्मविद्यया पूर्णमेव केवलं अवशिष्यते। तथा चोक्तम् — 'तस्मात्तत्सर्व-मभवत्' इति। यः सर्वोपनिषदर्थो ब्रह्म, स एषः अनेन मन्त्रेण अनूद्यते, उत्तरसंबन्धार्थम्। ब्रह्मविद्यासा-धनत्वेन हि वक्ष्यमाणानि साधनानि ओंकारदमदानदया-ख्यानि विधित्सितानि, खिलप्रकरणसंबन्धात् सर्वोपास-नाङ्गभूतानि च।

अत्रैके वर्णयन्ति— पूर्णात् कारणात् पूर्णं कार्यं उद्रिच्यते। उद्रिक्तं कार्यं वर्तमानकालेऽपि पूर्णमेव परमा-र्थवस्तुभूतं द्वैतरूपेण। पुनः प्रलयकाले पूर्णस्य कार्यस्य पूर्णतां आदाय आत्मनि धित्वा पूर्णमेव अवशिष्यते कारणरूपम्। एवं उत्पत्तिस्थितिप्रलयेषु त्रिष्वपि कालेषु कार्यकारणयोः पूर्णतैव। सा च एकैव पूर्णता कार्यकार-णयोर्भेदेन व्यपदिश्यते। एवं च द्वैताद्वैतात्मकमेकं ब्रह्म। यथा किल समुद्रो जलतरङ्गफेनबुद्बुदाद्यात्मक एव, यथा च जलं सत्यं तदुद्भवाश्च तरङ्गफेनबुद्बुदा-दयः समुद्रात्मभूता एव आविर्भावतिरोभावधर्मिणः परमार्थसत्या एव — एवं सर्वमिदं द्वैतं परमार्थ-सत्यमेव जलतरङ्गादिस्थानीयं, समुद्रजलस्थानीयं तु परं ब्रह्म। एवं च किल द्वैतस्य सत्यत्वे कर्मकाण्डस्य प्रामाण्यं, यदा पुनर्द्वैतं द्वैतमिवाविद्याकृतं मृगतृष्णिका-वदनृतं, अद्वैतमेव परमार्थतः, तदा किल कर्मकाण्डं विषयाभावात् अप्रमाणं भवति। तथा च विरोध एव स्यात्। वेदैकदेशभूता उपनिषत् प्रमाणं, परमार्थाद्वैतव-स्तुप्रतिपादकत्वात्। अप्रमाणं कर्मकाण्डं, असद्द्वैतविषय-त्वात्। तद्विरोधपरिजिहीर्षया श्रुत्या एतदुक्तं कार्यकारणयोः सत्यत्वं समुद्रवत् 'पूर्णमदः' इत्यादिना इति। तदसत्, विशिष्टविषयापवादविकल्पयोरसंभवात्। न हि इयं सुविवक्षिता कल्पना। कस्मात्? यथा क्रियाविषये उत्स-र्गप्राप्तस्य एकदेशे अपवादः क्रियते, यथा 'अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः' इति हिंसा सर्वभूतविषया उत्सर्गेण निवारिता तीर्थे विशिष्टविषये ज्योतिष्टोमादाव-नुज्ञायते, न च तथा वस्तुविषये इह अद्वैतं ब्रह्म उत्स-र्गेण प्रतिपाद्य पुनः तदेकदेशे अपवदितुं शक्यते, ब्रह्मणः अद्वैतत्वादेव एकदेशानुपपत्तेः।

ॐ खं ब्रह्म इति मन्त्रः। अयं च अन्यत्र अवि-नियुक्तः इह ब्राह्मणेन ध्यानकर्मणि विनियुज्यते। अत्र च ब्रह्मेति विशेष्याभिधानं, खमिति विशेषणम्। विशे-षणविशेष्ययोश्च सामानाधिकरण्येन निर्देशः नीलो-त्पलवत् — खं ब्रह्मेति ब्रह्मशब्दो बृहद्वस्तुमात्रास्पदः अविशेषितः, अतः विशेष्यते — खं ब्रह्मेति। यत्तत् खं ब्रह्म, तत् ओंशब्दवाच्यं, ओंशब्दस्वरूपमेव वा। उभयथापि सामानाधिकरण्यं अविरुद्धम्। इह च ब्रह्मोपासनसाधनत्वार्थं ओंशब्दः प्रयुक्तः, तथा च श्रुत्य-न्तरात् 'एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्' 'ओमि-त्यात्मानं युञ्जीत' 'ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्या-यीत' 'ओमित्येवं ध्यायथ आत्मानम्' इत्यादेः। अन्या-र्थासंभवाच्च उपदेशस्य। यथा अन्यत्र 'ओमिति शंसति' 'ओमित्युद्गायति' इत्येवमादौ स्वाध्यायारम्भापवर्गयोश्च ओंकारप्रयोगः विनियोगादवगम्यते, न च तथा अर्था-न्तरं इह अवगम्यते। तस्मात् ध्यानसाधनत्वेनैव इह ओंकारशब्दस्य उपदेशः। यद्यपि ब्रह्मात्मादिशब्दा ब्रह्मणो वाचकाः, तथापि श्रुतिप्रामाण्यात् ब्रह्मणो नेदि-ष्ठमभिधानं ओंकारः। अत एव ब्रह्मप्रतिपत्तौ इदं परं साधनम्। तच्च द्विप्रकारेण, प्रतीकत्वेन अभिधानत्वेन च। प्रतीकत्वेन — यथा विष्ण्वादिप्रतिमा अभेदेन, एवं ओंकारः ब्रह्मेति प्रतिपत्तव्यः। तथा ह्योंकारालम्बनस्य ब्रह्म प्रसीदति, 'एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्। एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते॥' इति श्रुतेः।

तत्र खमिति भौतिके खे प्रतीतिर्मा भूत् इत्याह—खं पुराणं चिरन्तनं खं परमात्माकाशमित्यर्थः। यत्तत्परमा-त्माकाशं पुराणं खं, तत् चक्षुराद्यविषयत्वात् निरालम्बनं अशक्यं ग्रहीतुमिति श्रद्धाभक्तिभ्यां भावविशेषेण च ओंकारे आवेशयति—यथा विष्ण्वङ्गाङ्कितायां शिलादि-

प्रतिमाया विष्णु लोकः, एवम् । वायुर ख, वायु. अस्मिन्विद्यते इति वायुर ख खमात्र खमित्युच्यते, न पुराण ख—इत्येव आह स्म । कोऽसौ ? कौरव्यायणीपुत्रः । वायुरे हि खे मुख्य. खशब्दव्यवहारः । तस्मान्मुख्ये सप्रत्ययो युक्त इति मन्यते । तत्र यदि पुराण ख ब्रह्म निरुपाधिस्वरूप, यदि वा वायुर ख सोपाधिक ब्रह्म, सर्वथापि ओंकार' प्रतीकत्वेनैव प्रतिमावत् साधनत्व प्रतिपद्यते, 'एतद्वै सत्यकाम पर चापर च ब्रह्म यदोंकार' इति श्रुत्यन्तरात् । केवल खशब्दार्थे विप्रतिपत्ति । वेदोऽय ओंकार., वेद विजानाति अनेन यद्वेदितव्य तस्माद्वेद ओंकारः वाचक. अभिधानम् । तेनाभिधानेन यद्वेदितव्य ब्रह्म प्रकाश्यमान अभिधीयमान वेद साधको विजानाति उपलभते, तस्मात् वेदोऽयमिति ब्राह्मणा विदु । तस्मात् ब्राह्मणानामभिधानत्वेन साधनत्वमभिप्रेत ओंकारस्य । अथवा वेदोऽयमित्यादि अर्थवाद । कथ ओंकारः ब्रह्मण. प्रतीकत्वेन विहित । ॐ ख ब्रह्म इति सामानाधिकरण्यात् तस्य स्तुति. इदानीं वेदत्वेन । सर्वो हि अय वेद ओंकार एव । एतत्प्रभव. एतदात्मकः सर्वः ऋग्यजु सामादिभेदभिन्नः एष ओंकारः, 'तद्यथा शङ्कुना सर्वाणि पर्णानि' इत्यादिश्रुत्यन्तरात् । इतश्चाय वेद ओंकार', यद्वेदितव्य, तत्सर्वं वेदितव्य ओंकारेणैव वेद एनेन । अत अयमोंकारो वेदः । इतरस्यापि वेदस्य वेदत्व अत एव । तस्मात् विशिष्टोऽयमोंकार' साधनत्वेन प्रतिपत्तव्य इति । अथवा वेदः सः । कोऽसौ ? य ब्राह्मणा विदु ओंकारम् । ब्राह्मणाना हि असौ प्रणवोद्गीथादिविकल्पैर्विज्ञेय । तस्मिन्हि प्रयुज्यमाने साधनत्वेन सर्वो वेद. प्रयुक्तो भवतीति । शकर.

( २ ) प्रणवोपासन विधित्सन्प्रणव परोक्षरूपेण स्तौति — पूर्णमद इति । अद परोक्षलोकः पर-रूप । इदमय च लोकः पूर्णे वेद पूर्णमित्यर्थ' । शब्दप्रभवत्वात्सर्वस्य लोकस्य स भूरिति व्याहरत्स भूमिमसृजतेति लोकानां व्याहृतिप्रभवत्वाम्नानात्कारणेन च कार्यस्य व्याप्तत्वात् । पूर्णात्पूर्णमुदच्यते । पूर्णात्पूर्यमाणाल्लोकात्पूर्णे पूरणकर्तृ उदच्यते उद्गत भवति । अञ्चु गतिपूजनयोः । कर्मणि प्रत्ययः । उद्गत भवति श्रेष्ठं भवतीत्यर्थ । तत्पूर्यमाणलोकापेक्षया पूरणकर्तृव्याहृतिरूपशब्द. उत्कृष्ट इत्यर्थः । पूर्णस्य पूर्णमादाय पूर्णस्य लोकस्य पूर्णे पूरणकर्तृव्याहृतिरूप वस्त्वादायोपसहृत्य तस्यापि यत्पूर्णे पूरयितृ ओंकारात्मक वस्तु परिशिष्यत इत्यर्थ' । 'ओंकारेण सर्वा वाक्सतृण्णा' ( छाउ. २।२३।३ ) इति श्रुते' । ओंकारस्य सर्वव्यापकत्वेन पूर्णत्वात्तदेव कारण व्याहृत्यादिशब्देषु निर्दिष्टेषु परिशिष्यत इत्यर्थः । ओंकाराद्व्याहृतिर्भवति व्याहृत्या गायत्री भवतीति सर्वशब्दनिदानत्वात्तदेव परिशिष्यते इत्यर्थः ।

यत्पुराण देशकालापरिच्छिन्न ब्रह्म तदेव खसादृश्यात्खमित्युच्यते । खमपरिच्छिन्नमित्यर्थः । कौरव्यायणीपुत्रस्तु आकाशशरीरक ब्रह्म प्रणवेऽध्यास्योपास्यमित्याहेत्यर्थ. । * रग.

( ३ ) 'अवतारा महाविष्णो' सर्वे पूर्णाः प्रकीर्तिताः । पूर्णे च तत्पर रूप पूर्णात्पूर्णा समुद्गता. । परा-(प)वरत्व तेषां तु व्यक्तिमात्रविशेषतः । न देशकालसामर्थ्यै. पारावर्यं कथचन । पूर्णरूपस्य पूर्णस्य पूर्णे यदवतारगम् । रूप तदात्मन्यादाय पूर्णमेवावतिष्ठते । लौकिकव्यवहारो यो भूभारक्षपणादिकः । तदद्दष्टिं विना नान्यो लय कृष्णादिना क्वचित् । ओताः सर्वगुणा यस्मादस्मिन्नों विष्णुरुच्यते । ख प्रकाशस्वरूपत्वाद्ब्रह्म तद्व्याप्तरूपतः । पुनः ख सुखरूपत्वात्पुराण तदनादितः । वायोश्चरतिदं यस्माद्वायुर ब्रह्म तत्परम् । ख्यातत्वाच्चापि तत्ख स्याद्रौहिणेयस्तथाऽवदत् । वेदोऽय ज्ञानरूपत्वादिति य ब्राह्मणा विदुः । निर्दोषत्वाद इत्युक्तस्तेन वेद्य सदाऽखिलम् ॥' इति च । बाह्लीकसुता हि रोहिणी अतो बलभद्रः कौरव्यायणीपुत्रः ।

मध्व.

दमदानदयानुशासन प्राजापत्यम्

त्रैया[१] प्राजापत्या प्रजापतौ पितरि ब्रह्मचर्यमूषु । देवा मनुष्या असुरा । उषित्वा ब्रह्मचर्यं देवा ऊचुर्ब्रवीतु नो भवानिति । तेभ्यो हैतदक्षर-

* शेष शकरवत् ।

(१) बृउ ५।२।१, शब्रा १४।८।२।१, २, बलदेव. ३।३।१०.

मुवाच द इति । व्यज्ञासिष्टा३ इति । व्यज्ञासिष्मेति होचुः । दाम्यतेति न आत्थेति । ओमिति होवाच व्यज्ञासिष्टेति ॥

अधुना दमादिसाधनत्रयविधानार्थोऽयमारम्भः — त्रयाः, त्रिसंख्याकाः प्राजापत्याः प्रजापतेरपत्यानि प्राजापत्याः, ते किम्? प्रजापतौ पितरि ब्रह्मचर्यं शिष्यत्ववृत्तेर्ब्रह्मचर्यस्य प्राधान्यात् शिष्याः सन्तो ब्रह्मचर्यं ऊषुः उषितवन्त इत्यर्थः । के ते? विशेषतः देवा मनुष्या असुराश्च । ते च उषित्वा ब्रह्मचर्यं किमकुर्वन्नित्युच्यते—तेषां देवा ऊचुः पितरं प्रजापतिम् । किमिति? ब्रवीतु कथयतु, नः अस्मभ्यं यदनुशासनं भवानिति । तेभ्यः एवमर्थिभ्यः ह एतदक्षरं वर्णमात्रं उवाच—द इति । उक्त्वा च तान् पप्रच्छ पिता—किं व्यज्ञासिष्टा३ इति, मया उपदेशार्थमभिहितस्याक्षरस्य अर्थं विज्ञातवन्तः आहोस्विन्नेति । देवा ऊचुः—व्यज्ञासिष्मेति, विज्ञातवन्तो वयम् । यद्येवं, उच्यतां किं मयोक्तमिति । देवा ऊचुः—दाम्यत, अदान्ता यूयं स्वभावतः अतो दान्ता भवतेति नः अस्मान् आत्थ कथयसि । इतर आह— ओमिति सम्यग्व्यज्ञासिष्टेति । * शांकर.

अथ[1] हैनं मनुष्या ऊचुर्ब्रवीतु नो भवानिति । तेभ्यो हैतदेवाक्षरमुवाच द इति । व्यज्ञासिष्टा३ इति । व्यज्ञासिष्मेति होचुः । दत्तेति न आत्थेति । ओमिति होवाच व्यज्ञासिष्टेति ॥

समानमन्यत् । स्वभावतो लुब्धा यूयं, अतो यथाशक्ति संविभजत दत्तेति नः अस्मान् आत्थ, किमन्यद्ब्रूयात् नो हितमिति मनुष्याः । शांकर.

अथ[2] हैनमसुरा ऊचुर्ब्रवीतु नो भवानिति । तेभ्यो हैतदेवाक्षरमुवाच द इति । व्यज्ञासिष्टा३ इति । व्यज्ञासिष्मेति होचुः । दयध्वमिति न आत्थेति । ओमिति होवाच व्यज्ञासिष्टेति । तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्द द द इति । दाम्यत दत्त दयध्वमिति । तदेतत्त्रयꣳ शिक्षेद्दमं दानं दयामिति ॥

(१) तथा असुराः दयध्वमिति । क्रूरा यूयं हिंसादिपराः, अतो दयध्वं प्राणिषु दयां कुरुतेति । तदेतत्प्रजापतेरनुशासनं अद्याप्यनुवर्तत एव । यः पूर्वं प्रजापतिर्देवादीननुशशास सोऽद्यापि अनुशास्त्येव दैव्या स्तनयित्नुलक्षणया वाचा । कथमेषा श्रूयते दैवी वाक्? कासौ स्तनयित्नुः? द द द इति, दाम्यत दत्त दयध्वमिति — एषां वाक्यानामुपलक्षणाय त्रिर्दकारं उच्चार्यते अनुकृतिः । न तु स्तनयित्नुशब्दः त्रिरेव, संख्यानियमस्य लोके अप्रसिद्धत्वात् । यस्मात् अद्यापि प्रजापतिः दाम्यत दत्त दयध्वमित्यनुशास्त्येव, तस्मात्कारणात् एतत्त्रयम् । किं तत् त्रयमित्युच्यते — दमं दानं दयामिति शिक्षेत् उपाददीत् प्रजापतेरनुशासनमस्माभिः कर्तव्यमित्येवं मतिं कुर्यात् । तथा च स्मृतिः — 'त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥' (भ. गी. १६।२१) इति । अस्य हि विधेः शेषः पूर्वः । तथापि देवादीनुद्दिश्य किमर्थं दकारत्रयमुच्चारितवान् प्रजापतिः पृथगनुशासनार्थिभ्यः । ते वा कथं विवेकेन प्रतिपन्नाः प्रजापतेर्मनोगतं समानेनैव दकारवर्णमात्रेणेति पराभिप्रायज्ञा विकल्पयन्ति । अत्रैके आहुः—अदान्तत्वादातृत्वादयालुत्वैः अपराधित्वमात्मनो मन्यमानाः शङ्किता एव प्रजापतावूषुः, किं नो वक्ष्यतीति । तेषां च दकारश्रवणमात्रादेव आत्माशङ्कावशेन तदर्थप्रतिपत्तिरभूत् । लोकेऽपि हि प्रसिद्धम्—पुत्राः शिष्याश्चानुशास्याः सन्तो दोषात् निवर्तयितव्या इति । अतो युक्तं प्रजापतेर्दकारमात्रोच्चारणम् । दमादित्रये च दकारान्वयात् आत्मनो दोषानुरूप्येण देवादीनां विवेकेन प्रतिपत्तुं चेति । फलं तु एतत् आत्मदोषज्ञाने सति दोषात् निवर्तयितुं शक्यते अल्पेनाप्युपदेशेन, यथा देवादयो दकारमात्रेणेति । ननु एतत् त्रयाणां देवादीनामनुशासनं देवादिभिरपि एकैकमेव उपादेयं, अद्यत्वेऽपि न तु त्रयं मनुष्यैः शिक्षितव्य-

* रंग शंकरवद्भावः ।

(१) बृउ ५।२।२, शब्रा १४।८।२।३, रंग भवानिति ( भगवानिति )

(२) बृउ ५।२।३, शब्रा १४।८।२।४; रंग भवानिति ( भगवानिति ), शतपथब्राह्मणे अस्माद्ब्राह्मणादनन्तरं 'वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् । ओ३म् क्रतो स्मर क्लिबे स्मराग्ने नय सुपथा रायेऽस्मान्विश्वानि देव वयुनानि विद्वान् युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेमेति' इत्यधिकम् ।

मिति । अत्रोच्यते—पूर्वैर्देवादिभिर्विशिष्टैरनुष्ठित एतत्त्रय, तस्मात् मनुष्यैरेव शिक्षितव्यमिति । तत्र दयालुत्वस्यानुष्ठेयत्व स्यात्, कथम्? असुरैरप्रशस्तैरनुष्ठितत्वादिति चेत्—न, तुल्यत्वात् त्रयाणाम् । अत. अन्योऽत्राभिप्राय—प्रजापते पुत्रा देवादयस्त्रय । पुत्रेभ्यश्च हितमेव पित्रा उपदेष्टव्यम् । प्रजापतिश्च हितज्ञ. नान्यथा उपदिशति । तस्मात् पुत्रानुशासन प्रजापतेः परम एतत् हितम् । अतो मनुष्यैरेव एतत् त्रय शिक्षितव्यमिति । अथवा न देवा असुरा वा अन्ये केचन विद्यन्ते मनुष्येभ्य. । मनुष्याणामेव अदान्ता॰ ये अन्यैरुत्तमैर्गुणै. सपन्ना॰ । ते देवाः । लोभप्रधाना मनुष्या. । तथा हिंसापरा॰ क्रूरा असुराः । ते एव मनुष्या अदान्तत्वादिदोषत्रयमपेक्ष्य देवादिशब्दभाजो भवन्ति, इतरांश्च गुणान् सत्त्वरजस्तमासि अपेक्ष्य । अत मनुष्यैरेव शिक्षितव्य एतत्त्रयमिति, तदपेक्ष्यैव प्रजापतिनोपदिष्टत्वात् । तथा हि मनुष्या अदान्ता लुब्धाः क्रूराश्च दृश्यन्ते । तथा च स्मृति.— 'कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रय त्यजेत्' इति । शकर

( २ ) 'ज्ञानदान तु देवाना फलदान च कर्मणाम् । विष्णुना विहित पूर्वं पुनर्देवनरासुराः । ब्रह्माणमपि पप्रच्छुर्देवाना सद्गुणोच्छ्रिते । अनहकारमात्र तु ब्रह्मणा विहित तदा । सर्वोत्तमोक्षसप्राप्त्यै नराणा ज्ञानसाधनम् । देवादीना दानमेव हविरादेः प्रकीर्तितम् । तम॰प्राप्तिविलम्बाय दैत्यानां विहिता दया ॥ ' इति प्रवृत्ते । मध्व

हृदय ब्रह्म

**एष प्रजापतिर्यद्धृदयम् । एतद्ब्रह्म । एतत्सर्वम् । तदेतत्त्र्यक्षरꣳ हृदयमिति । हृ इत्येकमक्षरम् । अभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद । द इत्येकमक्षरम् । ददत्यस्मै स्वाश्चान्ये च य एव वेद । यमित्येकमक्षरम् । एति स्वर्गं लोकं य एव वेद ॥**

( १ ) दमादिसाधनत्रय सर्वोपासनशेष विहितम् । दान्त. अलुब्ध दयालुः सन् सर्वोपासनेष्वधिक्रियते । तत्र निरुपाधिकस्य ब्रह्मणो दर्शन अतिक्रान्तम् । अथ अधुना सोपाधिकस्य तस्यैव अभ्युदयफलानि वक्तव्या नीत्येवमर्थोऽयमारम्भः— एष प्रजापतिः यद्धृदय, प्रजापतिः अनुशास्तीत्यनन्तरमेवाभिहितम् । क. पुनरसौ अनुशास्ता प्रजापतिरित्युच्यते — एष प्रजापतिः । कोऽसौ? यद्धृदय, हृदयमिति हृदयस्था बुद्धिरुच्यते । यस्मिन् शाकल्यब्राह्मणान्ते नामरूपकर्मणामुपसहार उक्तो दिग्विभागद्वारेण, तदेतत् सर्वभूतप्रतिष्ठ सर्वभूतात्मभूत हृदय प्रजापति प्रजाना स्रष्टा । एतत् ब्रह्म, बृहत्त्वात् सर्वात्मत्वाच्च ब्रह्म । एतत्सर्वम् । उक्त पञ्चमाध्याये हृदयस्य सर्वत्वम् । तत्सर्वं यस्मात्, तस्मादुपास्य हृदय ब्रह्म । तत्र हृदयनामाक्षरविषयमेव तावत् उपासनमुच्यते । तदेतत् हृदयमिति नाम क्षर, त्रीणि अक्षराणि अस्येति त्र्यक्षरम् । कानि पुनस्तानि त्रीण्यक्षराण्युच्यन्ते । हृ इत्येकमक्षरम् । अभिहरन्ति, हृतेराहृतिकर्मण॰ हृ इत्येतद्रूपमिति यो वेद, यस्मात् हृदयाय ब्रह्मणे स्वाश्च इन्द्रियाणि अन्ये च विषयाः शब्दादयः स्व स्व कार्यमभिहरन्ति, हृदय च भोक्त्रर्थमभिहरति — अतः हृदयनाम्नः हृ इत्येतदक्षरमिति यो वेद — अस्मै विदुषे अभिहरन्ति स्वाश्च ज्ञातयः अन्ये चासबद्धाः, बलिमिति वाक्यशेषः । विज्ञानानुरूप्येण एतत्फलम् । तथा द इत्येतदप्येकमक्षरम् । एतदपि दानार्थस्य ददातेः द इत्येतद्रूप हृदयनामाक्षरत्वेन निबद्धम् । अत्रापि — हृदयाय ब्रह्मणे स्वाश्च करणानि अन्ये च विषया॰ स्व स्व वीर्यं ददति, हृदय भोक्त्रे ददाति स्व वीर्यं, अतो दकार इत्येव यो वेद, अस्मै ददति स्वाश्च अन्ये च । तथा यमित्येतदप्येकमक्षरम् । इणो गत्यर्थस्य यमित्येतद्रूप अस्मिन्नाम्नि निबद्धमिति यो वेद, स स्वर्गं लोकमेति । एव नामाक्षरादपि ईदृश विशिष्ट फल प्राप्नोति, किमु वक्तव्य हृदयस्वरूपोपासनात् — इति हृदयस्तुतये नामाक्षरोपन्यास॰ ।

* शकर

( २ ) 'हरणाद्यशभागादेर्शनादेर्दानतस्तथा । यानादव्यवधानेन परस्य ब्रह्मणस्तथा । ब्रह्म हृदय इत्युक्तस्तस्यैवविदपि ध्रुवम् । हृतिदानस्वर्गयानपात्र स्यात्तत्प्र-

---

(१) बृउ ५।३।१, शब्रा १४।८।४।१ ददत्यस्मै ( ददन्त्यस्मै ), मध्व एतत्सर्वम् ( एतत्सत्यम् )

* रग शकरवत् ।

-सादत. । इत्यैवास्मै ददत्यद्धा स्वकीयाश्चान्य एव च ॥ ' इति निर्णये । परमात्मा च प्रजापतिः ।

मध्व

सत्य ब्रह्म

**तद्वै तदेतदेव तदास । सत्यमेव । स यो हैत महद्यक्ष प्रथमज वेद सत्य ब्रह्मेति जयतीमाँल्लोकान् । जित इन्न्वसावसत् । य एवमेतन्महद्यक्ष प्रथमज वेद सत्य ब्रह्मेति । सत्यᳬ ह्येव ब्रह्म ॥**

( १ ) तस्यैव हृदयाख्यस्य ब्रह्मणः सत्यमित्युपासन विधित्सन्नाह — तत्, तदिति हृदय ब्रह्म परामृष्टम् । वै इति स्मरणार्थम् । तत् यत् हृदय ब्रह्म स्मयत इत्येकः तच्छब्द. । तदेतदुच्यते प्रकारान्तरेणेति द्वितीय तच्छब्द । किं पुन. तत्प्रकारान्तरम् ? एतदेव तदिति एतच्छब्देन सबध्यते तृतीयस्तच्छब्दः । एतदिति वक्ष्यमाण बुद्धौ सनिधीकृत्य आह । आस बभूव । किं पुनः एतदेव आस ? यदुक्त हृदय ब्रह्मेति, तत् इति, तृतीय तच्छब्दो विनियुक्त. । किं तदिति विशेषतो निर्दिशति । सत्यमेव, सच्च त्यच्च मूर्त चामूर्त च सत्य ब्रह्म, पञ्चभूतात्मकमित्येतत् । स य. कश्चित् सत्यात्मान एत, महत् महत्त्वात्, यक्ष पूज्य, प्रथमज प्रथमजात, सर्वस्मात्ससारिण एतदेवाग्रे जात ब्रह्म अत प्रथमज, वेद विजानाति सत्य ब्रह्मेति । तस्येद फलमुच्यते — यथा सत्येन ब्रह्मणा इमे लोका आत्मसात्कृता जिता, एव सत्यात्मान ब्रह्म महद्यक्ष प्रथमज वेद, स जयति इमान् लोकान् । किं च जितो वशीकृतः, इन्नु इत्थ, यथा ब्रह्मणा असौ शत्रुरिति वाक्यशेष । असच्च असद्भवेत् असौ शत्रु जितो भवेदित्यर्थः । कस्य एतत्फलमिति पुनर्निगमयति — य एवमेतन्महद्यक्ष प्रथमज वेद सत्य ब्रह्मेति । अतो विद्यानुरूप फल युक्त, सत्य ह्येव यस्माद्ब्रह्म । * शकर.

( २ ) 'सैव हि सत्यादय '—'स यो हैत महद्यक्ष प्रथमज वेद सत्य ब्रह्म' इत्यादिना वाजसनेयके सत्यविद्या सनामाक्षरोपासना विधायानन्तरमाम्नायते 'तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चाय दक्षिणेऽक्षन्पुरुषः' (बृउ ५।५।२) इत्यादि । तत्र सशय । किं द्वे एते सत्यविद्ये किंवैकैवेति । एकैवेय सत्यविद्येति । कुत । 'तद्यत्तत्सत्यम्' ( बृउ ५।५।२ ) इति प्रकृताकर्षणात् ।

अत्र तूभयथा सभवे तद्यत्तत्सत्यमिति प्रकृताकर्षणात्पूर्वविद्यासबद्धमेव स यमुत्तरत्राऽऽकृष्यत इत्येकविद्यात्वनिश्चय । तस्मात्सैवेयमेका सत्यविद्या तेन तेन विशेषेणोपेताऽऽम्नातेत्यत सर्व एव सत्यादयो गुणा एकस्मिन्प्रयोग उपसहर्तव्या ।

ब्रशकर ३।३।३८

( ३ ) 'तत्सामैकरूप चात्त पर ब्रह्म कीर्तितम् । तदेव तादृश प्रोक्त नैवान्यत्तादृश क्वचित् । तदेतत्सत्यमेवासीद्वासुदेवाख्यमव्ययम् ॥' इति ब्रह्मतर्के । तदेव हि तत् । तन्नारायणाख्य पर ब्रह्मैतदेव सत्य वासुदेवाख्यमासीदित्यर्थ. । 'स्वसामर्थ्य समुत्पन्नो वासुदेवात्मना प्रभु । सत्य ब्रह्मेति यो वेद महायाज्य तु त परम् । प्राप्नोत्येव हि तल्लोकाञ्जीवन्मुक्तमो भवेत् ॥' इति प्रस्थाने । 'हरभागहरणाद्दानात्सत्त्वानां यापनान्नृणाम् । हृदय भगवान्विष्णु सत्य सद्गुणरूपत. ॥' इति सत्तत्वे । 'प्रजापतिरिति ब्रह्मा वेदैरुक्तो ह्यमुख्यतः । यस्मिन्नपूर्वं ससर्जै देवासुरनरोऽब्जजे । एष वै भगवान्विष्णुर्मुख्यतस्तु प्रजापति । यज्ज्ञानान्मुक्तिमायान्ति स्वर्गाख्या हृदय च स. । इति सदानयानेऽस्य सत्य सद्गुणरूपत । यत्तद्धृदयमित्युक्त ब्रह्म तत्सत्यतामगात् । सत्यञ्च सदनीय समासाद्य यन्मुमुक्षुभिः । एव तद्ब्रह्म यो वेद स हि लोकानिमाञ्जयेत् । एतल्लोकजयो नाम धर्मज्ञानादिपूर्णता । जित एव ह्यसौ लोको यदा वेद जनार्दनम् ॥' इति गुणपरमे । परलोको जित एवाभवदित्यर्थ. । मध्व.

(१) बृउ ५।४।१, शब्रा १४।८।५।१ हैत महद्यक्ष ( हैवमेतन्महद्यक्ष ), ब्रशकर ३।३।३८, भास्कर ३।३।२०, ३८ हैत ( हैतत् ), रग हैतं म ( हैतन्म ), रामानुज ३।३।३७ हैत ( ह वै तत् ), मध्व तद्वै ( तद्वै ) यक्ष ( यज्ञ ), श्रीकर ३।३।३७ हैत ( ह वै त, ह वै तत् )

* रग शकरवत् ।

सत्यब्रह्मानुषङ्गीविचार —अबादिसृष्टि , सत्याक्षरोपासना, सत्याख्यमण्डलस्थपुरुषचाक्षुषपुरुषयो अन्योन्यप्रतिष्ठितत्व भूर्भुव स्व इति व्याहृतिशरीरत्व च

**आप एवेदमग्र आसु । ता आप· सत्यमसृजन्त । सत्य ब्रह्म । ब्रह्म प्रजापतिम् । प्रजापतिर्देवान् । ते देवाः सत्यमेवोपासते । तदेतत्त्र्यक्षर॰ सत्यमिति । स इत्येकमक्षरम् । तीत्येकमक्षरम् । यमित्येकमक्षरम् । प्रथमोत्तमे अक्षरे सत्य मध्यतोऽनृतम् । तदेतदनृतमुभयत सत्येन परिगृहीतम् । सत्यभूयमेव भवति । नैव विद्वा॰समनृत॰ हिनस्ति ॥**

( १ ) सत्यस्य ब्रह्मण. स्तुत्यर्थमिदमाह । महद्यक्ष प्रथमजमित्युक्त, तत्कथ प्रथमजत्वमित्युच्यते—-आप एवेदमग्र आसु' । आप इति कर्मसमवायिन्य अग्निहोत्राद्या हुतय. । अग्निहोत्राद्याहुते द्रवात्मकत्वात् अप्त्वम् । ताश्च आप अग्निहोत्रादिकर्मापवर्गोत्तरकाल केनचिददृष्टेन सूक्ष्मेण आत्मना कर्मसमवायित्वमपरित्यजन्त्यः इतरभूतसहिता एव न केवला', कर्मसमवायित्वात्तु प्राधान्यमपाम् —इति सर्वाण्येव भूतानि प्रागुत्पत्ते. अव्याकृतावस्थानि कर्तृसहितानि निर्दिश्यन्ते ' आप. ' इति । ता आप. बीजभूता जगतः अव्याकृतात्मना अवस्थिता. । ता एव इद सर्वं नामरूपविकृत जगत् अग्रे आसु', नान्यत्किंचिद्विकारजातमासीत् । ताः पुनः आप. सत्यमसृजन्त । तस्मात्सत्य ब्रह्म प्रथमजम् । तदेतत् हिरण्यगर्भस्य सूत्रात्मनो जन्म, यदव्याकृतस्य जगतो व्याकरण, तत् सत्य ब्रह्म कुत. ? महत्त्वात् । कथ महत्त्वमित्याह—यस्मात् सर्वस्य स्रष्टृ । कथम् ? यत्सत्य ब्रह्म, तत् प्रजापतिं प्रजानां पतिं विराज सूर्यादिकरण असृजतेत्यनुषङ्ग । प्रजापतिः देवान्, स विराट् प्रजापतिः देवानसृजत । यस्मात् सर्वमेव क्रमेण सत्याद्ब्रह्मणो जात, तस्मान्महत्सत्य ब्रह्म । कथ पुनर्यक्षमित्युच्यते—ते एवं सृष्टा देवा पितरमपि विराजमतीत्य, तदेव सत्य ब्रह्म उपासते । अत एतत् प्रथमज महत् यक्षम् । तस्मात् सर्वात्मना उपास्य तत् । तस्यापि सत्यस्य ब्रह्मणो नाम सत्यमिति । तदेतत् त्र्यक्षरम् । कानि तान्यक्षराणीत्याह —स इत्येकमक्षरम् । तीत्येकमक्षर, तीति ईकारानुबन्धो निर्देशार्थ । यमित्येकमक्षरम् । तत्र तेषा प्रथमोत्तमे अक्षरे सकारयकारौ सत्य, मृत्युरूपाभावात् । मध्यत मध्ये अनृतम् । अनृत हि मृत्यु । मृत्य्वनृतयो तकारसामान्यात् । तदेतत् अनृत तकाराक्षर मृत्युरूप उभयतः सत्येन सकारयकारलक्षणेन परिगृहीतं व्याप्त अन्तर्भावित सत्यरूपाभ्यां, अत अकिंचित्कर तत्, सत्यभूयमेव सत्यबाहुल्यमेव भवति । एव सत्यबाहुल्य सर्वस्य मृत्योरनृतस्य अकिंचित्करत्व च यो विद्वान्, तमेव विद्वास अनृत कदाचित् प्रमादोक्त न हिनस्ति ।

शकर.

( २ ) आप इति । इद व्याकृत जगदग्रेऽण्डसृष्टेः प्रागाप एवाऽऽसुः । अव्याकृतपञ्चभूतात्मनाऽवर्ततेत्यर्थ' । ता आप इति । पञ्चीकृतपञ्चभूतात्मक कार्यमसृजन्तेत्यर्थ । सत्यमिति । तच्च सत्य ब्रह्म चतुर्मुखमसृजतेत्यर्थः । ब्रह्मेति । दक्षादिप्रजापतिमसृजतेत्यर्थः ।

* रग

( ३ ) ' सदा सर्वगुणापानादापो नारायणः स्मृतः । द्वितीय रूपमसृजद्वासुदेव स आत्मन. । ब्रह्म सत्यमिति प्राहुर्वासुदेवाभिध प्रभुम् । तस्माद्ब्रह्माऽजनि ततो देवाः सर्वेऽपि जज्ञिरे । तस्माद्ब्रह्मादयो देवा वासुदेवमुपासते । ततत्वादन्यथा ज्ञान तीत्येव समुदीर्यते । तस्याधस्तात्सदात्मा तु सादयन्ननृत हरि । उपरिष्टाच्च य नामा नाशयन्ननृत स्थितः । एव यो वेद त विष्णु नास्य मिथ्या दृशिर्भवेत् । योग्यतापेक्षयोपासाऽथापरोक्ष्याच्च तत्फलम् । सम्यग्ददात्यन्यथा च भवेदेवोपकारिणी । अत्ययोग्याय चेत्सा स्याद्विपरीतफलप्रदा । वैपरीत्य तु विघ्नः स्यान्न तु पाप कथचन ॥' इत्याधारे । मध्व.

(१) बृउ ५।५।१, शब्रा १४।८।६।१, २ सत्य ब्रह्म ( सत्य ) सत्यमेवोपा ( सत्यमित्युपा ) क्षरम् । यमि ( क्षरममि ) ( उभयत ० ), ब्रशकर. ३।३।२०, भास्कर ३।३।३८, रग नैव (नैन), रामानुज ३।३।२०, निंबार्क ३।३।२०, मध्व स इत्येक ( सदित्येक ), श्रीकर ३।३।२०, विज्ञान १।१।४ ( पृ १०७, १०८ ), २।३।११, ४३

* खण्डप्रयोजन शकरवत् ।

तद्यत्तत्सत्यमसौ स आदित्य । य एष एतस्मिन्मण्डले पुरुषो यश्चाय दक्षिणेऽक्षन्पुरुषस्तावेतावन्योन्यस्मिन्प्रतिष्ठितौ । रश्मिभिरेषोऽस्मिन्प्रतिष्ठित' प्राणैरयममुष्मिन् । स यदोत्क्रमिष्यन्भवति शुद्धमेवैतन्मण्डल पश्यति । नैनमेते रश्मय प्रत्यायन्ति ॥

( १ ) अस्याधुना सत्यस्य ब्रह्मण. स्थानविशेषे उपासनमुच्यते—तद्यत् । किम् ? तत् सत्य ब्रह्म प्रथमजम् । किम् ? असौ स. । कोऽसौ ? आदित्यः । क' पुनरसावादित्य. ? य एषः । क एषः ? य. एतस्मिन् आदित्यमण्डले पुरुष' अभिमानी, सोऽसौ सत्य ब्रह्म । यश्चाय अध्यात्म योऽय दक्षिणेऽक्षन् अक्षणि पुरुषः । चशब्दात् स च सत्य ब्रह्मेति सम्बन्ध. । तावेतौ आदित्याक्षिस्थौ पुरुषौ एकस्य सत्यस्य ब्रह्मणः सस्थानविशेषौ यस्मात्, तस्मात् अन्योन्यस्मिन् इतरेतरस्मिन् आदित्यश्चाक्षुषे चाक्षुषश्च आदित्ये प्रतिष्ठितौ, अध्यात्माधिदैवतयो. अन्योन्योपकार्योपकारकभावात् । कथ प्रतिष्ठितावित्युच्यते—रश्मिभि. प्रकाशेन अनुग्रह कुर्वन् एष आदित्य. अस्मिश्चाक्षुषे अध्यात्मे प्रतिष्ठित. । अय च चाक्षुष. प्राणैरादित्यमनुगृह्णन् अमुष्मिन् आदित्ये अधिदैवे प्रतिष्ठितः । स' अस्मिन् शरीरे विज्ञानमयो भोक्ता यदा यस्मिन्काल उत्क्रमिष्यन्भवति, तदा असौ चाक्षुष आदित्यपुरुष: रश्मीनुपसहृत्य केवलेन औदासीन्येन रूपेण व्यवतिष्ठते । तदा अय विज्ञानमय पश्यति शुद्धमेव केवल विरश्मि एतन्मण्डल चन्द्रमण्डलमिव । तदेतत् अरिष्टदर्शन प्रासङ्गिक प्रदर्श्यते, कथ नाम पुरुष. करणीये यत्नवान्स्यादिति । न—एन चाक्षुष पुरुषमुररीकृत्य त प्रत्यनुग्रहाय एते रश्मयः स्वामिकर्तव्यवशात्पूर्वमागच्छन्तोऽपि, पुन तत्क्षयमनुरुध्यमाना इव नोपयन्ति न प्रत्यागच्छन्ति एनम् । अतोऽवगम्यते परस्परोपकार्योपकारकभावात् सत्यस्यैव एकस्य आत्मन अशौ एताविति ।

शकर.

( २ ) 'सबन्धादेवमन्यत्रापि '— बृहदारण्यके 'सत्य ब्रह्म ' ( बृउ. ५।४।१ ) इत्युपक्रम्य तस्यैव सत्यस्य ब्रह्मणोऽधिदैवतमध्यात्म चाऽऽयतनविशेषमुपदिश्य व्याहृतिशरीरत्व च सपाद्य द्वे उपनिषदावादिश्येते । यथा शाण्डिल्यविद्याया विभागेनाप्यधीताया गुणोपसहार उक्त एवमन्यत्राप्येवजातीयके विषये भवितुमर्हति । एकविद्याभिसम्बन्धात् । एका हीय सत्यविद्याऽधिदैवमध्यात्म चाधीता । उपक्रमाभेदाद्व्यतिषक्तपाठाच्च । कथ तस्यामुदितो धर्मस्तस्यामेव न स्यात् ।

३।३।२०

'न वा विशेषात् '— एव प्राप्ते प्रतिविधत्ते—नवोभयोरुभयत्र प्राप्ति. । कस्मात् । विशेषात् । उपासनस्थानविशेषोपनिबन्धादित्यर्थ. । कथ स्थानविशेषोपनिबन्ध इत्युच्यते 'य एष एतस्मिन्मण्डले पुरुष ' इति । ह्याधिदैविक पुरुष प्रकृत्य तस्योपनिषदहरिति श्रावयति । 'योऽय दक्षिणेऽक्षन्पुरुषः ' इति चाध्यात्मिक पुरुष प्रकृत्य तस्योपनिषदहमिति । तस्येति चैतत्सनिहितावलम्बन सर्वनाम तस्मादायतनविशेषव्यपाश्रयेणैवैत उपनिषदावुपदिश्येते । कुत उभयोरुभयत्र प्राप्ति' ।

ब्रशकर ३।३।२१

( ३ ) एव विद्वानुत्क्रान्तिवेलाया द्वारभूतमादित्यमण्डल द्रष्टु शक्नोति, न सूर्यरश्मयश्चक्षुष' प्रतिघाताय भवन्ति । चक्षुरादित्यमण्डलस्थयोः परस्परोपकार्योपकारकभावज्ञानवैभवादिति भाव. ।

* रग.

( ४ ) 'न वा विशेषात् '— न वैतदस्ति यद्विद्यैक्याद्गुणोपसहार इति । कुत. । विशेषात् । उपास्यरूपविशेषात् । ब्रह्मण एकत्वेऽप्येकत्रादित्यमण्डलस्थतयोपास्यत्वमितरत्राक्ष्याधारतयोपास्यत्वमिति स्थानसबन्धित्वभेदेन रूपभेदाद्विद्याभेदः ।

रामानुज ३।३।२१

(१) बृउ ५।५।२, शबा १४।८।६।३ रश्मिभिरेषो ( रश्मिभिर्वा एषो ), ब्रशंकर. १।२।१३, १७, ३।३।२०, ३८, भास्कर १।२।१३, ३।३।२०, ३८, रंग प्रत्यायन्ति ( प्रत्याययन्ति ), रामानुज. १।२।१३, १८, ३।३।२०, ३७ तद्यत्तत्स ( तद्यस ), मध्व. रगवत्; श्रीकर १।२।१३, १७, ३।३।२०, ३७ रामानुजवत्, बलदेव १।२।१३.

* शेष शकरवत् ।

५ ) ' स वासुदेवो भगवानादित्यस्थो जनार्दन. । त्यनामा सप्रोक्त आदानाद्धविषा सदा । स एव ाक्षिस्थस्तच्च रूपद्वय हरे' । अन्योन्यस्मिंस्थित नित्य ॥ सह रश्मिभि । दक्षिणाक्षिस्थितो विष्णुर्यदास्मादु- ष्यति । तदैव म्रियमाणस्तु जीवः पश्येद्धि कम् । सूर्यस्य मण्डल नास्य प्रतीयन्ते हि रश्मयः । ो नियमेनैव केषाचित्सप्तभिर्दिनैः ॥ '

मध्व.

। एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति :। एक९ शिर एकमेतदक्षरम् । भुव इति । द्वौ बाहू द्वे एते अक्षरे । स्वरिति प्रतिष्ठा । तिष्ठे द्वे एते अक्षरे । तस्योपनिषदहरिति । ा पाप्मानं जहाति च य एव वेद ॥

' ( १ ) तत्र य, असौ क' १ य एष. एतस्मिन्म , पुरुष सत्यनामा । तस्य व्याहृतय अवयवा. । ् १ भूरिति येय व्याहृति , सा तस्य शिर., प्राथ- ् । तत्र सामान्य स्वयमेवाह श्रुतिः—एक एकस- युक्त शिर , तथा एतत् अक्षर एक भूरिति । भुव बाहू , द्वित्वसामान्यात् । द्वौ बाहू , द्वे एते अक्षरे । । स्वरिति प्रतिष्ठा । द्वे प्रतिष्ठे द्वे एते अक्षरे । ष्ठे पादौ प्रतितिष्ठत्याभ्यामिति । तस्यास्य व्याहृत्य- त्मस्य सत्यस्य ब्रह्मण उपनिषत् रहस्य अभिधान, ाभिधानेन अभिधीयमान तद्ब्रह्म अभिमुखीभवति ाक्वत् । काऽसावित्याह—अहरिति । अहरिति चैतत् हन्तेर्जहातेश्चेति यो वेद, स हन्ति जहाति च पाप्मान एव वेद ।

* शकर

( २ ) ' तस्य विष्णो' शिरोनाम भावनाद्भूरिति तम् । भावन रक्षण प्रोक्त दृष्ट्या वाचा च रक्षति । ादनाद्भुनामा स्याद्दक्षिणो बाहुरस्य तु । विनाश- द् इत्युक्त' सव्यो बाहु परात्मन. । स्वित्यानन्दः समुद्दिष्टो वरिति ज्ञानमुच्यते । मुक्तिदानेन तद्दानात्सु- वरस्य पदद्वयम् । दक्षिणश्चैव सव्यश्च क्रमाद्वर्णद्वयो- दितौ । पादावस्य हि तत्प्राप्तिर्मुक्तिरित्यभिधीयते । अह- मेषो ह्यहेयत्वाज्जीवेन सह भावत । असावहरिति प्रोक्त सर्वलोकप्रकाशनात् । तद्वेदनात्सर्वपाप हन्ति चैव जहाति च । कानिचिद्धन्ति पापानि कल्पादीन्सज- हाति च ॥ ' इति प्रवृत्ते ।

* मध्व

[1]योऽय दक्षिणेऽक्षन्पुरुषस्तस्य भूरिति शिरः । एक९ शिर एकमेतदक्षरम् । भुव इति बाहू । द्वौ बाहू द्वे एते अक्षरे । स्वरिति प्रतिष्ठा । द्वे प्रतिष्ठे द्वे एते अक्षरे । तस्योपनिषदहमिति । हन्ति पाप्मान जहाति च य एव वेद ॥

एव योऽय दक्षिणेऽक्षन्पुरुष., तस्य भूरिति शिर इत्यादि सर्वं समानम् । तस्योपनिषत्—अहमिति, प्रत्यगात्मभूतत्वात् । पूर्ववत् हन्ते. जहातेश्चेति ।

† शकर.

हृदयस्थ भारूप सूक्ष्म पुरुष एव सर्वस्येशानः

[2]मनोमयोऽयं पुरुषो भा सत्यः । तस्मिन्नन्त- र्हृदये यथा व्रीहिर्वा यवो वा । स एष सर्वस्ये- शानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिद किं च ॥

( १ ) उपाधीनामनेकत्वादनेकविशेषणत्वाच्च तस्यैव प्रकृतस्य ब्रह्मणो मनउपाधिविशिष्टस्योपासन विधित्सन्

* रग शकरवत् ।

(१) बृउ ५।५।३, शब्रा १४।८।६।४, अशकर १।२४, ३।३।२१, ३८, भास्कर ३।३।२०, ३८, ानुज ३।३।२०, ३७, निंबार्क ३।३।२०, मध्व रिति ( सुवरिति ), श्रीकंठ ३।३।२०, श्रीकर १।२५, ३।३।२०, ३७

* खण्डद्वयस्य व्याख्यानमिदम् ।

† रग शकरवत् ।

(१) बृउ ५।५।४, शब्रा १४।८।६।५ योऽय ( अथ योऽय ), अशकर ३।३।२१, ३८, भास्कर ३।३।२०, ३८, रामानुज ३।३।२०, निंबार्क ३।३।२०, मध्व स्वरिति ( सुवरिति ); श्रीकंठ ३।३।२०, श्रीकर ३।३।२०

(२) बृउ ५।६।१; शब्रा. १४।८।८।१ यवो वा + ( एवमयमन्तरात्मन्पुरुषः ) स एष + ( सर्वस्य वशी ) किं च + ( य एव वेद ), अशंकर ३।३।१९, भास्कर. ३।३।१९, रग सत्य' ( सत्यम् ), रामानुज ३।३।१९ सत्य ( सत्यम् ) स एष + ( सर्वस्य वशी ), श्रीकठ ३।३।१९ स एष + ( सर्वस्य वशी ), श्रीकर. ३।३।१९

आह- त्वात् भा. स भाः स त्वात् हृदये वा पा दृश्यत जातस मात्या अधिष्ठ यत्कि स्योपा प्रासते ( शाख तत्र प्राण शाख यथा वमेव तदेव भिन्न समा इति कार च्छे प्रश शेषि मह सव —

आह—मनोमयः मन प्राय., मनसि उपलभ्यमान त्वात् । मनसा चोपलभत इति मनोमयोऽय पुरुष । भाः सत्यः, भा एव सत्य सद्भाव स्वरूप यस्य सोऽय भाः सत्यः, भास्वर इत्येतत् । मनस सर्वार्थावभासकत्वात् मनोमयत्वाच्च अस्य भास्वरत्वम् । तस्मिन् अन्तर्हृदये हृदयस्यान्त तस्मिन्नित्येतत् । यथा व्रीहिर्वा यवो वा परिमाणत', एवपरिमाणः तस्मिन्नन्तर्हृदये योगिभिर्दृश्यत इत्यर्थ । स एष' सर्वस्येशान' सर्वस्य स्वभेद जालस्य ईशानः स्वामी । स्वामित्वेऽपि सति कश्चिदमात्यादितन्त्र, अय तु न तथा । किं तर्हि अधिपति' अधिष्ठाय पालयिता । सर्वमिद प्रशास्ति, यदिद किंच यत्किञ्चित्सर्वं जगत्, तत्सर्वं प्रशास्ति । एव मनोमयस्योपासनात् तथारूपापत्तिरेव फलम् । ' त यथा यथोपासते तदेव भवति ' इति ब्राह्मणम् ।

शकर

( २ ) ' समान एव चाभेदात् ' —वाजसनेयिशाखायामग्निरहस्ये शाण्डिल्यनामाङ्किता विद्या विज्ञाता तत्र च गुणा श्रूयन्ते ' स आत्मानमुपासीत मनोमय प्राणशरीरं भारूपम् ' इत्येवमादय । तस्यामेव शाखायां बृहदारण्यके पुन पठ्यते ' मनोमयोऽय० ' । यथा भिन्नासु शाखासु विद्यैकत्व गुणोपसहारश्च भवत्येवमेकस्यामपि शाखायां भवितुमर्हति । उपास्याभेदात् । तदेव हि ब्रह्म मनोमयत्वादिगुणकमुभयत्राप्युपास्यमभिन्नं प्रत्यभिजानीम । उपास्य च रूप विद्याया' ।

* ब्रशाकर. ३।३।१९

'( ३ ) मनोमयो विशुद्धमनोग्राह्य' । भा भारूपः । समानप्रकरणे छान्दोग्ये ' मनोमय' प्राणशरीरो भारूप.' इति श्रवणात् । सत्य निर्विकार देहादिध्वसेऽपि निर्विकार इति यावत् । तस्मिन्निति । हृदयान्तर्गतस्तदवच्छेदनिबन्धनस्वल्पपरिमाण इत्यर्थ. । स एष इति । प्रशासनेन धारक इत्यर्थ. । अत्र नियन्तृत्वधारकत्वशेषित्वानि त्रीण्यप्युक्तानि ।

रग.

( ४ ) ' मनोमयो ज्ञानमय. प्रधान मय उच्यते । महाज्ञानात्मकश्चैव भारूपः सद्गुणात्मकः । सर्वप्रशासको विष्णुः ॥'

मध्व

* भास्कररामानुजश्रीकठा ब्रशकरवत् ।

विद्युद्ब्रह्म

[1]विद्युद्ब्रह्मेत्याहु । विदानाद्विद्युत् । विद्यत्येनं पाप्मनो य एवं वेद विद्युद्ब्रह्मेति । विद्युद्ध्येव ब्रह्म ॥

( १ ) तथैव उपासनान्तर सत्यस्य ब्रह्मणो विशिष्टफलमारभ्यते — विद्युद्ब्रह्मेत्याहुः । विद्युतो ब्रह्मणो निर्वचनमुच्यते—विदानात् अवखण्डनात् तमसो, मेघान्धकार विदार्य हि अवभासते, अतो विद्युत् । एवगुण विद्युत् ब्रह्मेति यो वेद, असौ विद्यति अवखण्डयति विनाशयति पाप्मन. एनमात्मान प्रति प्रतिकूलभूता. पाप्मानो ये तान् सर्वान् पाप्मन अवखण्डयतीत्यर्थ' । य एव वेद विद्युद्ब्रह्मेति तस्यानुरूप फल, विद्युत् हि यस्मात् ब्रह्म ।

* शाकर.

( २ ) ' विद्युत्सर्वस्य वेदनात् । य एनं वेद वेत्तार सर्वस्य परमेश्वरम् । पापेभ्यो मोचयित्वैन स्वात्मान वेदयेद्धरि' ॥ ' इति माहात्म्ये ।

मध्व.

वाग्धेनूपासना

वाचं धेनुमुपासीत । तस्याश्चत्वार स्तनाः । स्वाहाकारो वषट्कारो हन्तकार स्वधाकार. । तस्यै द्वौ स्तनौ देवा उपजीवन्ति । स्वाहाकारं च वषट्कारं च । हन्तकार मनुष्या । स्वधाकारं पितर' । तस्या. प्राण ऋषभो मनो वत्सः ॥

( १ ) पुनः उपासनान्तर तस्यैव ब्रह्मण. वाग्वै ब्रह्मेति । वागिति शब्दः त्रयी । तां वाच धेनु, धेनुरिव धेनु', यथा धेनु. चतुर्भिः स्तनैः स्तन्य पयः क्षरति वत्साय एव वाग्धेनु. वक्ष्यमाणै. स्तनै पय इव अन्न क्षरति देवादिभ्यः । के पुन ते स्तना. ? के वा ते, येभ्यः क्षरति ? तस्याः एतस्या वाचो धेन्वाः, द्वौ स्तनौ देवा उपजीवन्ति वत्सस्थानीयाः । कौ तौ ? स्वाहाकारं च वषट्कार च । आभ्यां हि हवि दीयते देवेभ्यः । हन्तका

* रग शकरवत् ।

(१) बृउ ५।७।१, शब्रा १४।८।७।१ त्येन – (सर्वस्मात्)

(२) बृउ ५।८।१, शब्रा १४।८।९।१, श्रीकर १।३।२ १।४।१०, २।१।१३, विज्ञान १।१।४ (पृ ११९ १।३।३२, १।४।१०, बलदेव. १।१।२८, ३।३।१

मनुष्याः । हन्तेति मनुष्येभ्य अन्न प्रयच्छन्ति । स्वधाकार पितरः । स्वधाकारेण हि पितृभ्य. स्वधां प्रयच्छन्ति । तस्या धेन्वा वाच. प्राण. ऋषभः । प्राणेन हि वाक्प्रसूयते । मनो वत्सः । मनसा हि प्रस्राव्यते । मनसा ह्यालोचिते विषये वाक् प्रवर्तते । तस्मात् मनः वत्सस्थानीयम् । एव वाग्धेनूपासकः ताद्भाव्यमेव प्रति पद्यते । * शकर.

( २ ) 'सरस्वती तु गोरूपा तस्या देवादयोऽखिला. । स्तनानेवोपजीवन्ति तस्या वायुः पति. प्रभु । वत्सो मनोभिमान्यस्या सरस्वत्या सदाशिव ॥' इति प्रभञ्जने । मध्व

वैश्वानराग्न्युपासना

**अयमग्निर्वैश्वानरो योऽयमन्त पुरुषे । येनेदमन्न पच्यते । यदिदमद्यते । तस्यैष घोषो भवति । यमेतत्कर्णावपिधाय शृणोति । स यदोत्क्रमिष्यन्भवति नैन घोष शृणोति ॥**

( १ ) अयमग्निर्वैश्वानर, पूर्ववदुपासनान्तरम् । अय अग्निः वैश्वानरः । कोऽयमग्निरित्याह — योऽयमन्तः पुरुषे । किं शरीरारम्भकः ? नेत्युच्यते — येन अग्निना वैश्वानराख्येन इदमन्न पच्यते । किं तदन्नम् ? यदिद अद्यते भुज्यते अन्न प्रजाभि, जाठरोऽग्निरित्यर्थ. । तस्य साक्षादुपलक्षणार्थमिदमाह — तस्याग्ने अन्न पचत जाठरस्य एष घोषो भवति । कोऽसौ ? य घोष, एतदिति क्रियाविशेषण, कर्णावपिधाय अङ्गुलीभ्यामपि धान कृत्वा शृणोति । त प्रजापतिमुपासीत वैश्वानरमग्निम् । अत्रापि ताद्भाव्य फलम् । तत्र प्रासङ्गिकमिदमरिष्टलक्षणमुच्यते — सोऽत्र शरीरे भोक्ता यदा उत्क्रमिष्यन्भवति, नैन घोष शृणोति । * शकर

( २ ) 'अग्निनामा तु भगवानौदर्याग्नौ प्रतिष्ठितः । विश्वैर्गुणैः समेतत्वादनन्तत्वाच्च स प्रभु । वैश्वानर इति प्रोक्तः सोऽग्निरङ्गप्रणेतृतः । तस्य विष्णोः स्तुतिरिय क्रियते वायुना सदा । कर्णौ पिधाय या नित्य श्रोतु शक्याऽखिलै. सदा ॥' इति तन्त्रमालायाम् । मध्व.

मृतस्य क्रमेण वाय्वादित्यचन्द्रद्वारा ब्रह्मलोकगतिः

*** यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति । तस्मै स तत्र विजिहीते । यथा रथचक्रस्य खम् । तेन स ऊर्ध्व आक्रमते । स आदित्यमागच्छति । तस्मै स तत्र विजिहीते । यथा लम्बरस्य खम् । तेन स ऊर्ध्व आक्रमते । स चन्द्रमसमागच्छति । तस्मै स तत्र विजिहीते । यथा दुन्दुभे खम् । तेन स ऊर्ध्व आक्रमते । स लोकमागच्छत्यशोकमहिमम् । तस्मिन्वसति शाश्वती समा' ॥**

( १ ) सर्वेषामस्मिन्प्रकरणे उपासनानां गतिरियं फल चोच्यते—यदा वै पुरुषः विद्वान् अस्मात् लोकात् प्रैति शरीर परित्यजति, सः तदा वायु आगच्छति, अन्तरिक्षे तिर्यग्भूतो वायुः स्तिमित अभेद्यस्तिष्ठति । स वायुः तत्र स्वात्मनि तस्मै सप्राप्ताय विजिहीते स्वात्मावयवान् विगमयति छिद्रीकरोत्यात्मानमित्यर्थ । किंपरिमाण छिद्रमित्युच्यते—यथा रथचक्रस्य ख छिद्रं प्रसिद्धपरिमाणम् । तेन छिद्रेण स विद्वान् ऊर्ध्वः आक्रमते ऊर्ध्वः सन् गच्छति । स आदित्यमागच्छति । आदित्य ब्रह्मलोक जिगमिषोर्मार्गनिरोध कृत्वा स्थितः ।

---

* रग शकरवत् ।

(१) बृउ ५।९।१, शब्रा १४।८।१०।१ नैन ( नैत ), ब्रशंकर १।२।२४, भास्कर १।२।२४, रामानुज १।२।२५, ब्रमध्व १।२।२६, श्रीकठ १।२।२५, श्रीकर १।२।२४.

* छाउ ४।१५।५ ( पृ ८४१-४६ ) व्याख्यानानि द्रष्टव्यानि ।

(१) बृउ ५।१०।१, शब्रा १४।८।१२।१ लम्बरस्य ( डम्बरस्य ), ब्रशंकर ४।३।१, २ ऊर्ध्व आ ( ऊर्ध्वमा ), भास्कर ४।३।१, २ वायुमा ( वायुलोकमा ) खम् । तेन ( चान्तेन ) ऊर्ध्व आक्रमते ( ऊर्ध्वमाक्रमत् ), रग ऊर्ध्व आ ( ऊर्ध्वमा ) लोकमा ( ब्रह्मलोकमा ), रामानुज. ४।३।१, २ ऊर्ध्व आ ( ऊर्ध्वमा ) लम्बरस्य ( डम्बरस्य ); निबार्क ४।३।२ ब्रशकरवत्, ब्रमध्व ४।३।१ यदा वै ( यदा ह वै ), श्रीकठ ४।३।२ ब्रशकरवत्, श्रीकर ४।३।१, २ यदा ( यथा ) विजिहीते ( जिह्वीर्षते ) ऊर्ध्व आ ( ऊर्ध्व चा ) स आदित्य ( स वाऽऽदित्य ), बलदेव ४।३।१, २

सोऽपि एवंविदे उपासकाय द्वारं प्रयच्छति । तस्मै स तत्र विजिहीते । यथा लम्बरस्य ख वादित्रविशेषस्य छिद्रपरिमाणम् । तेन स ऊर्ध्वं आक्रमते । स चन्द्रमसं आगच्छति । सोऽपि तस्मै तत्र विजिहीते । यथा दुन्दुभेः खं प्रसिद्धम् । तेन स ऊर्ध्वं आक्रमते । स लोकं प्रजापतिलोकं आगच्छति । किंविशिष्टम् ? अशोकं मानसेन दुःखेन विवर्जितमित्येतत् । अहिमं हिमवर्जितं शारीरदुःखवर्जितमित्यर्थः । तं प्राप्य तस्मिन् वसति शाश्वतीः नित्याः समाः संवत्सरानित्यर्थः । ब्रह्मणो बहून्कल्पान् वसतीत्येतत् ।

$ शंकर.

( २ ) 'प्रवह वायुपुत्रं च सूर्यसोमौ च विद्युतम् । प्राप्य प्रधानवायुं च याति तत्परमं पदम् ॥ ' इति ब्रह्माण्डे ।

मध्व.

परमलोकजयहेतुस्तपोविशेषः

एतद्वै परमं तपो यद्व्याहितस्तप्यते । परमꣳ हैव लोकं जयति य एवं वेद । एतद्वै परमं तपो यं प्रेतमरण्यꣳ हरन्ति । परमꣳ हैव लोकं जयति य एवं वेद । एतद्वै परमं तपो यं प्रेतमग्नावभ्यादधति । परमꣳ हैव लोकं जयति य एवं वेद ॥

( १ ) एतद्वै परमं तपः । किं तत् ? यत् व्याहितः व्याधितः ज्वरादिपरिगृहीतः सन् यत् तप्यते तदेतत् परमं तप इत्येवं चिन्तयेत्, दुःखसामान्यात् । तस्य एवं चिन्तयतो विदुषः कर्मक्षयहेतुः तदेव तपो भवति अनिन्दतः अविषीदतः । स एव च तेन विज्ञानतपसा दग्धकिल्बिषः परमं हैव लोकं जयति, य एवं वेद । तथा मुमूर्षुः आदावेव कल्पयति । किम् ? एतद्वै परमं तपः, यं प्रेतं मां ग्रामादरण्यं हरन्ति ऋत्विजः अन्त्यकर्मणे, तत् ग्रामादरण्यगमनसामान्यात् परमं मम तत् तपो भविष्यति । ग्रामादरण्यगमनं परमं तप इति हि प्रसिद्धम् । परमं हैव लोकं जयति, य एवं वेद । तथा एतद्वै परमं तपः यं प्रेतमग्नावभ्यादधति, अग्निप्रवेश- सामान्यात् । परमं हैव लोकं जयति य एवं वेद ।

* शंकर.

( २ ) 'व्याधीञ्छवहृतिं चैव शवदाहादिकं तथा । विष्णवे तप इत्येव चिन्तयन्याति तत्परम् ॥ ' इति च । 'अक्लेशितोऽपि क्लेशादीनतीतैष्यानपीह यः । विष्णवे तप इत्येव प्रार्पयेत्स परं व्रजेत् । विष्णोः स्वरूपवेत्ता चेद- न्यथा न कथंचन । यथा स्वरूपवेत्तुः स्यादेकैकाऽपि ह्युपासना । मोक्षाय सहिताः सर्वा अप्यज्ञस्य न तु क्वचित् । यथावत्केशवं ज्ञात्वा स्वयोग्यैकामुपासनाम् । अपि कृत्वा हरिं दृष्ट्वा मुच्यते नात्र संशयः ॥ ' इति ब्रह्मतर्के ।

मध्व.

अन्नप्राणविषयिणी उपासना

अन्नं ब्रह्मेत्येक आहुः । तन्न तथा । पूयति वा अन्नमृते प्राणात् । प्राणो ब्रह्मेत्येक आहुः । तन्न तथा । शुष्यति वै प्राण ऋतेऽन्नात् । एते ह त्वेव देवते एकधाभूयं भूत्वा परमतां गच्छतः । तद्ध स्माह प्रातृदः पितरम् । किꣳ स्विदेवैवं विदुषे साधु कुर्यां किमेवास्मा असाधु कुर्यामिति । स ह स्माह पाणिना मा प्रातृद । कस्त्वेनयोरेकधा- भूयं भूत्वा परमतां गच्छतीति । तस्मा उ हैत- दुवाच वीति । अन्नं वै वि । अन्ने हीमानि सर्वाणि भूतानि विष्टानि । रमिति । प्राणो वै रम् । प्राणे हीमानि सर्वाणि भूतानि रमन्ते । सर्वाणि ह वा अस्मिन्भूतानि विशन्ति सर्वाणि भूतानि रमन्ते य एवं वेद ॥

( १ ) अन्नं ब्रह्मेति, तथा एतत् उपासनान्तरं विधित्सन्नाह — अन्नं ब्रह्म, अन्नं अद्यते यत् तत् ब्रह्मेत्येके आचार्या आहुः । तत् न तथा ग्रहीतव्यं अन्नं ब्रह्मेति । अन्ये चाहुः — प्राणो ब्रह्मेति । तच्च तथा न ग्रहीतव्यम् । किमर्थं पुनः अन्नं ब्रह्मेति न ग्राह्यम् ?

---

$ रंग वाक्यार्थ शंकरवत् ।

(१) बृउ ५।११।१, शब्रा १४।८।११।१; रंग यद्व्याहित ( यद्व्याधित ); मध्व. यद्व्याहित ( यद्व्याधित ) हैव लोकं ( हैव स लोकं ).

* रंग शंकरवत् ।

(१) बृउ ५।१२।१, शब्रा १४।८।१३।१-३ कुर्यां ( कुर्यात् ) रमन्ते । सर्वाणि ( रतानि सर्वाणि ) विशन्ति ( विशन्ते ); मध्व एते ह त्वेव ( एते त्वेव ), श्रीकर. ११३।२.

यस्मात् पूयति क्लिद्यते पूतिभावमापद्यते ऋते प्राणात्, तत्कथ ब्रह्म भवितुमर्हति। ब्रह्म हि नाम तत्, यदविनाशि। अस्तु तर्हि प्राणो ब्रह्म। नैवम्। यस्मात् शुष्यति वै प्राणः शोषमुपैति ऋते अन्नात्। अत्ता हि प्राणः। अत. अन्नेन आद्येन विना न शक्नोति आत्मान धारयितुम्। तस्मात् शुष्यति वै प्राण. ऋतेऽन्नात्। अतः एकैकस्य ब्रह्मता नोपपद्यते यस्मात्, तस्मात् एते ह तु एव अन्नप्राणदेवते एकधाभूय एकधाभाव भूत्वा गत्वा परमतां परमत्व गच्छत. ब्रह्मत्व प्राप्नुत॰। तदेतत् एवमध्यवस्य ह स्म आह — स्म प्रातृदो नाम पितरमात्मन.। किंस्वित् स्विदिति वितर्के। यथा मया ब्रह्म परिकल्पित, एव विदुषे किंस्वित् साधु कुर्यां, साधु शोभन पूजां, का तु अस्मै पूजां कुर्यामित्यभिप्राय.। किमेव अस्मै विदुषे असाधु कुर्यां, कृतकृत्योऽसौ इत्यभिप्राय.। अन्नप्राणौ सहभूतौ ब्रह्मेति विद्वान् नासौ असाधुकरणेन खण्डितो भवति, नापि साधुकरणेन महीकृत॰। त एववादिन स पिता ह स्म आह पाणिना हस्तेन निवारयन्, मा प्रातृद मैव वोच.। कस्तु एनयो अन्नप्राणयो. एकधाभूय भूत्वा परमता कस्तु गच्छति? न कश्चिदपि विद्वान् अनेन ब्रह्मदर्शनेन परमतां गच्छति। तस्मात् नैव वक्तुमर्हसि कृतकृत्योऽसाविति। यद्येव, ब्रवीतु भवान् कथ परमता गच्छतीति। तस्मै उ ह एतत् वक्ष्यमाण वच उवाच। किं तत्? वीति। किं तत् वि इत्युच्यते—अन्न वै वि। अन्ने हि यस्मात् इमानि सर्वाणि भूतानि विष्टानि आश्रितानि, अत. अन्न वि इत्युच्यते। किंच र इति। रमिति च उक्तवान्पिता। किं पुनस्तत् रम्? प्राणो वै रम्। कुत इत्याह। प्राणे हि यस्मात् बलाश्रये सति सर्वाणि भूतानि रमन्ते, अतो र प्राण.। सर्वभूताश्रयगुणमन्न, सर्वभूतरतिगुणश्च प्राण। न हि कश्चिदनायतनः निराश्रय. रमते। नापि सत्यप्यायतने अप्राणो दुर्बलो रमते। यदा तु आयतनवान्प्राणी बलवांश्च तदा कृतार्थमात्मान मन्यमानो रमते लोक। 'युवा स्यात्साधुयुवाऽध्यायकः' इत्यादिश्रुते.। इदानीं एवविदः फलमाह — सर्वाणि ह वै अस्मिन् भूतानि विशन्ति अन्नगुणज्ञानात्, सर्वाणि भूतानि रमन्ते प्राणगुणज्ञानात्, य एव वेद।

* शकर.

(२) 'अन्नाभिमानी ब्रह्मैव प्राणो वायुरुदाहृतः। अन्योन्यानुप्रविष्टौ तौ सर्वदैव सुसस्थितौ। वायु विना ब्रह्मणोऽपि शरीर पूतिमेष्यति। वायुश्च शोषमायाति विना ब्रह्माणमञ्जसा। तयोरेव परिज्ञानी वासिष्ठ. पाणिनामक.। ब्रह्मवायुविदे कार्यं किं मया साध्वसाधु वा। नासाधु नासाधयितु शक्योऽसौ साधुनाऽपि वा। नार्थोऽस्य कृतकृत्यत्वाद्यदि वेद पर हरिम्। इति प्रश्नस्य तज्ज्ञान वसिष्ठ प्राब्रवीत्ततः। अन्योन्यानुप्रवेशेन ब्रह्मवाय्वोर्विशेषत। प्रयोजन कस्य भवेदिति त प्रतृदोऽब्रवीत्। ब्रह्मा निवेशनीयः स्याद्वायुश्चास्य रतिप्रदः। अतः प्रयोजन तुल्यमन्योन्यात्मप्रवेशनात्॥' इति सधाने।

मध्व.

उक्थयजु सामक्षत्ररूपै प्राणविषयिणी उपासना

**उक्थम्। प्राणो वा उक्थम्। प्राणो हीदꣳ सर्वमुत्थापयति। उद्धास्मादुक्थविद्वीरस्तिष्ठति। उक्थस्य सायुज्यꣳ सलोकता जयति य एव वेद॥**

(१) उक्थम्—तथा उपासनान्तरम्। उक्थ शस्त्रम्। तद्धि प्रधान महाव्रते क्रतौ। किं पुनस्तदुक्थम्। प्राणो वै उक्थम्। प्राणश्च प्रधान इन्द्रियाणा, उक्थ च शस्त्राणा, अत उक्थमित्युपासीत। कथ प्राण उक्थमित्याह—प्राणः हि यस्मात् इद सर्वं उत्थापयति। उत्थापनात् उक्थ प्राणः। न हि अप्राणः कश्चिदुत्तिष्ठति। तदुपासनफलमाह—उत् ह अस्मात् एवविदः उक्थवित् प्राणवित् वीर. पुत्रः उत्तिष्ठति ह— दृष्ट एतत्फलम्। अदृष्ट तु उक्थस्य सायुज्य सलोकता जयति, य एव वेद। * शकर.

(२) 'उत्थापनादुक्थनामा मोक्षे प्राप्यो यतोऽखिलै। यजुश्चाथ क्षतत्राणात्क्षत्र सम्यक्त्वकारणात्। सर्वेषा साम च प्रोक्तो वायुरेव जगत्पतिः॥' इति च।

¶ मध्व.

---

* रंग शकरवत्।

¶ खण्डचतुष्टयभाष्यमिदम्।

(१) बृउ ५।१३।१, शब्रा १४।८।१४।१ स्मादुक्थ (सा उक्थ), मध्व शब्रावत्

**यजु । प्राणो वै यजु । प्राणे हीमानि सर्वाणि भूतानि युज्यन्ते । युज्यन्ते हास्मै सर्वाणि भूतानि श्रैष्ठ्याय । यजुषः सायुज्यꣳ सलोकतां जयति य एवं वेद ॥**

( १ ) यजुरिति चोपासीत प्राणम् । प्राणो वै यजु. । कथ यजु. प्राणः ? प्राणे हि यस्मात् सर्वाणि भूतानि युज्यन्ते । न हि असति प्राणे केनचित् कस्यचित् योग सामर्थ्यम् । अतो युनक्तीति प्राणो यजु । एवंविदः फलमाह—युज्यन्ते उद्यच्छन्ते इत्यर्थः, ह अस्मै एवंविदे, सर्वाणि भूतानि, श्रैष्ठ्य श्रेष्ठभाव. तस्मै श्रैष्ठ्याय श्रेष्ठभावाय, अय न. श्रेष्ठो भवेदिति । यजुष. प्राणस्य सायुज्यमित्यादि सर्वं समानम् ।

शकर

( २ ) युज्यन्ते सनह्यन्त उद्युञ्जते ।

* रग.

**साम । प्राणो वै साम । प्राणे हीमानि सर्वाणि भूतानि सम्यञ्चि । सम्यञ्चि हास्मै सर्वाणि भूतानि । श्रैष्ठ्याय कल्पन्ते । साम्न. सायुज्यꣳ सलोकतां जयति य एवं वेद ॥**

सामेति चोपासीत प्राणम् । प्राणो वै साम । कथ प्राण. साम ? प्राणे हि यस्मात् सर्वाणि भूतानि सम्यञ्चि सगच्छन्ते, सगमनात् साम्यापत्तिहेतुत्वात् साम प्राणः । सम्यञ्चि सगच्छन्ते ह अस्मै सर्वाणि भूतानि । न केवल सगच्छन्त एव, श्रेष्ठभावाय च अस्मै कल्पन्ते समर्थ्यन्ते । साम्नः सायुज्यमित्यादि पूर्ववत् ।

† शकर.

**क्षत्रम् । प्राणो वै क्षत्रम् । प्राणो हि वै क्षत्रम् । त्रायते हैनं प्राणः क्षणितोः । प्र क्षत्रमत्रमाप्नोति । क्षत्रस्य सायुज्यꣳ सलोकतां जयति य एवं वेद ॥**

त प्राण क्षत्रमित्युपासीत । प्राणो वै क्षत्रम् । प्रसिद्ध एतत् — प्राणो हि वै क्षत्रम् । कथ प्रसिद्धतेत्याह —त्रायते पालयति एन पिण्डं देह प्राणः, क्षणितोः शस्त्रादिहिंसितात् पुन मासेन आपूरयति यस्मात्, तस्मात् क्षतत्राणात् प्रसिद्ध क्षत्रत्व प्राणस्य । विद्वत्फलमाह — प्र क्षत्रमत्र, न त्रायते अन्येन केनचिदित्यत्र, क्षत्र प्राण , त अत्र क्षत्रं प्राण प्राप्नोतीत्यर्थः । शाखान्तरे वा पाठात् क्षत्रमात्र प्राप्नोति, प्राणो भवतीत्यर्थ. । क्षत्रस्य सायुज्य सलोकता जयति, य एव वेद ।

* शकर.

गायत्र्युपासनम्

**भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराणि । अष्टाक्षरꣳ ह वा एक गायत्र्यै पदम् । एतदु हैवास्या एतत् । स यावदेषु त्रिषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पद वेद ॥**

( १ ) ब्रह्मणो हृदयाद्यनेकोपाधिविशिष्टस्य उपासनमुक्तम् । अथ इदानीं गायत्र्युपाधिविशिष्टस्य उपासन वक्तव्यमित्यारभ्यते । सर्वच्छन्दसा हि गायत्रीछन्द प्रधानभूतम् । तत्प्रयोक्तृगयत्राणात् गायत्रीति वक्ष्यति । न च अन्येषा छन्दसा प्रयोक्तृप्राणत्राणसामर्थ्यम् । प्राणात्मभूता च सा । सर्वच्छन्दसा च आत्मा प्राणः । प्राणश्च क्षतत्राणात् क्षत्रमित्युक्तम् । प्राणश्च गायत्री । तस्मात् तदुपासनमेव विधित्स्यते । द्विजोत्तमजन्महेतुत्वाच्च — ' गायत्र्या ब्राह्मणमसृजत त्रिष्टुभा राजन्य जगत्या वैश्यम् ' इति द्विजोत्तमस्य द्वितीय जन्म गायत्रीनिमित्तम् । तस्मात् प्रधाना गायत्री । ' ब्राह्मणा व्युत्थाय ' ' ब्राह्मणा अभिवदन्ति' 'स ब्राह्मण.' 'विपापो विरजोऽविचिकित्सो ब्राह्मणो भवति' इत्युत्तमपुरुषार्थसबन्ध ब्राह्मणस्य दर्शयति । तच्च ब्राह्मणत्व गायत्रीजन्ममूलम् । अतो वक्तव्य गायत्र्याः सतत्त्वम् । गायत्र्या हि य सृष्टो द्विजोत्तमः निरङ्कुश एव उत्तमपुरुषार्थसाधने अधिक्रियते । अतः तन्मूलः परमपुरुषार्थसबन्ध । तस्मात् तदुपासनविधानाय आह—भूमिरन्तरिक्ष द्यौरित्येतानि अष्टावक्ष-

---

* शेष शकरवत् ।

† रग शकरवत् ।

(१) बृउ ५।१३।२, शब्रा १४।८।१४।२

(२) बृउ ५।१३।३, शब्रा. १४।८।१४।३ हास्मै ( हास्मिन् ), मध्व कल्पन्ते ( कल्प्यन्ते ).

(३) बृउ ५।१३।४, शब्रा. १४।८।१४।४ मत्र ( मात्र ), मध्व क्षत्रमत्रमा ( क्षत्रमक्षत्रं प्रा ).

* रग शंकरवत् ।

(१) बृउ ५।१४।१, शब्रा १४।८।१५।१ हैवास्या ( हास्या ) ( त्रिषु० )

राणि । अष्टाक्षर अष्टावक्षराणि यस्य तत् इदमष्टाक्षरम् । ह वै प्रसिद्धावद्योतकौ । एक प्रथम, गायत्र्यै गायत्र्याः, पदम् । यकारेणैव अष्टत्वपूरणम् । एतत् उ ह एव एतदेव अस्या गायत्र्याः पद पादः प्रथमः भूम्यादि लक्षणः त्रैलोक्यात्मा, अष्टाक्षरत्वसामान्यात् । एव एतत् त्रैलोक्यात्मक गायत्र्याः प्रथम पद यो वेद, तस्यैतत्फ लम्—स विद्वान् यावत्किंचित् एषु त्रिषु लोकेषु जेतव्य, तावत्सर्वं ह जयति, य अस्यै एतदेव पद वेद । * शाकर

( २ ) ' ऋग्यजुःसामसस्थो यो भगवान्पुरुषोत्तम । स द्वितीयपदेनोक्तो गायत्र्या प्रथमेन तु । भूम्यन्तरिक्षस्वर्गस्थ' तृतीयेन समीरगः । चतुर्थपादो गायत्र्या प्रणव. समुदीरितः । तद्वाच्यो भगवान्सूर्यमण्डलस्था तु या रमा । स त्वात्मिक्येव तत्सस्थो रजआख्यप्रधानतः । पर परोरजास्तस्माद्य एव वेद त प्रभुम् । लोकाना चैव वेदानां सर्वेषा प्राणिनामपि । स दैवाधिपतिर्भूत्वा यश.- श्रीमांश्च जायते । गायत्र्युपासने योग्यो ब्रह्मैव हि चतु र्मुख । तस्मादुक्तफल सर्वं सर्वोपासा च तस्य हि । अशेनोपासनान्येषा फलमल्प च योग्यत । गायत्र्या न ह्ययोग्योऽपि द्विजो योग्योऽपि न क्वचित् । ऋते विरिञ्च तस्मात्तु तस्यैव ह्यखिल फलम् ॥ ' य. परोरजास्तपति स तुरीयपदेन प्रणवेन पद्यते । तुरीय पदम् । ददृश इव दृष्ट इव । तदधीनतेज'पुञ्जस्य सूर्यमण्डलस्य दृष्टत्वात् । ' सूर्यमण्डलगो विष्णु सर्वेषा दृष्टवत्स्थित । यस्मात्तदु- त्थित तेजोमण्डल दृश्यतेऽखिलै. ॥ ' इति त्रैविद्ये । सर्वे रज सर्वो प्रकृतिम् । ' रञ्जनात्प्रकृति' प्रोक्ता रज इत्येव वैदिकै. । तस्या अप्युत्तमो विष्णुर्यतोऽत. स परो- रजाः । अभिमानिनी तु गायत्र्या मुख्या श्री परिकी- र्तिता । ब्रह्माण्यमुख्यतो ज्ञेया सा तु ब्रह्माणमाश्रिता । ब्रह्मा तु मुख्यगायत्रीं सा परोरज आश्रयेत् ॥ ' इति च । तद्वा एतज्जगत्सत्ये प्रतिष्ठितम् । भूमिरन्तरिक्ष द्यौरित्यादिना प्रस्तुतत्वात् । ' तद्वा एतज्जगत्सर्वं चक्षु - सूर्याभिमानिनि । विराण्नामनि शेषाख्ये सर्वदा सप्रति ष्ठितम् ! शेष. प्रतिष्ठितो वायौ स ह्यस्माद्बलवत्तर. । स सत्य इति सप्रोक्त. सत्रस्मिन्याति यद्धरि. । वायुः समाश्रितो देवीं मुख्या गायत्रिनामिकाम् । सा चात्मनामधिपतिमेव परममाश्रिता । प्राणानां रक्षणादेव गायत्री सा प्रकीर्तिता । सावित्रीति च यामाह स विष्णुः परतो रजाः । एषैव सा हि गायत्री सविता हि जनार्दन । तस्माद्धि सूयते सर्वं सावित्री च तदाश्रिता । आदित्यस्तत्प्रतीकत्वात्सवितेति प्रकीर्तितः । प्रतिमाया च तच्छब्दः प्रयोज्यो ह्युपचारत. । यस्मा आह स विष्णुस्तां गायत्रीं जगदीश्वरः । ब्रह्मणे तस्य सा प्राणान्सर्वदा पाति पुत्रवत् । ब्रह्मा हि पुत्रस्तस्यास्तु तत्पुत्रा इतरेऽखिला. । तामाहु परमा देवीं वृणीमह ऋगात्मिकाम् । नैव सा प्रतिमा मुख्या गायत्री परमा स्मृता । गायत्रीमुख्यवेत्तारो योग्या ब्रह्मपदस्य ये । तेषा- प्रतिग्रहाद्दोषो न कश्चन भविष्यति । न चैकपदविज्ञान- फलायाल सुखानि च । विष्णोर्यदा भगवतो लोकान्वे दाश्च चेतनात् । विरिञ्चजन्मन्यखिलान्प्रतिगृह्णन्ति कृत्स्नश । गायत्रीपदविज्ञानफलमात्र तदा भवेत् । प्रणव प्रतिपाद्य यत्तुरीय भगवत्पदम् । सर्वग वासुदेवाख्य न तत्केनचिदाप्यते । गायत्रीत्रिपदज्ञेयमनिरुद्धादिक त्रयम् । ब्रह्मा प्राप्नोति मुक्तः सन्वासुदेव न कश्चन । लोकस्थम- निरुद्ध च प्रद्युम्न वेदग तथा । सकर्षण वायुसस्थ व्या (प्य)- प्त्या ब्रह्माविमुक्तिगः । गायत्रीज्ञानसामर्थ्यात्प्रणवज्ञान- शक्तित. । वासुदेव च सपश्येन्न व्याप्नोति कथचन । अनन्त- त्वाद्वासुदेव. कथ व्याप्यो भवेत्प्रभु. । वर्णत्रयात्मकप्रकृति- मतीतः सूर्यमण्डले । गुणत्रयात्मिका बाह्ये यतोऽतः स परो- रजाः । यतो न व्याप्यते सोऽसौ ब्रह्मणाऽपि कथचन । अतः प्रतिग्रहो नास्य वासुदेवस्य विद्यते ॥' इति प्रकाशि- कायाम् । तावदेतावत्प्रतिगृह्णीयादिति तस्यैव सामस्त्येन ग्रहणार्थम् । एतावदेव मम हस्ते विद्यत इतिवत् । न ह्यन्यदेवतावत्प्रतिग्राह्यमस्ति । 'अष्टाक्षरत्वाद्गायत्र्याः प्रोक्ता सैकपदीति च । प्रणवेन सहैतास्तु गायत्र्यश्चतुरस्तदा । अकाराद्यतिशान्तान्त. प्रणवोऽष्टाक्षरो यत. । पादः प्रणव- सयुक्तो गायत्री सा पृथग्यदा । द्विपदीति तदा प्रोक्ता त्रिपदी स्वपदैस्त्रिभिः । चतुष्पदी सप्रणवा ब्रह्मणोऽन्यैर्न गम्यते । अपदी च तत' प्रोक्ता गायत्र्येवमुपस्थिता । क्रमाप्रातिमपूर्तीं वा शत्रवे सा करिष्यति । असावदो मैव प्रापन्नास्मै कामः समृध्यताम् । उपस्थिता चेदित्थ सा

* रग शंकरवत् ।

यद्यदोऽहं समाप्नुयाम् । इति सा कामपूर्तिं च स्वस्य सम्यक्करिष्यति । सम्यग्ब्राह्मपदावाप्तिं तद्योग्या मुक्तिमेव च । ब्रह्मणोपासिता दद्याद्गायत्र्या. पुरुषोत्तम । अलेप सर्वपापेभ्यो विशेषेण प्रतिग्रहात् । तद्योग्यां मुक्तिमन्येषा यथायोग्यमुपासितः । वक्तव्यो भगवान् विष्णुर्गायत्र्या मुखसंस्थितः । अग्निमण्डलगो नित्यमग्निनामाग्रणीत्वत· । गायत्र्यास्तु परिज्ञान ज्ञाते मुखगते हरौ । सफल भवे दन्यथा तु न सम्यक्फलद भवेत् । गायत्रीमुखगो विष्णुर्ज्ञेयः सर्वात्मना तत. । संहर्ता सर्वदोषाणामग्निस्थः सर्वदाहक । नित्यानन्दोऽग्निवर्णश्च राम. परशुभृत्सदा ॥ ' इति गायत्रीसंहितायाम् ।

* म-व.

[1]ऋचो यजूꣳषि सामानीत्यष्टावक्षराणि । अष्टाक्षरꣳ ह वा एकं गायत्र्यै पदम् । एतदु हैवास्या एतत् । स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥

( १ ) तथा ऋच. यजूंषि सामानीति त्रयीविद्यानामाक्षराणि एतान्यपि अष्टावेव । तथैव अष्टाक्षर ह वै एक गायत्र्यै पद द्वितीय, एतत् उ ह एव अस्या एतत् ऋग्यजुःसामलक्षण अष्टाक्षरत्वसामान्यादेव । स: यावती इय त्रयी विद्या त्रय्या विद्यया यावत्फलजात आप्यते, तावत् ह जयति, योऽस्या एतत् गायत्र्या· त्रैविद्यलक्षण पद वेद ।

शकर.

( २ ) इय त्रयी विद्या यावती वाक्फलप्रकाशिका तत्फल सर्वं जयतीत्यर्थ. । त्रयीप्रतिपाद्य सर्वं फलमाप्नोतीति यावत् । रग

[2]प्राणोऽपानो व्यान इत्यष्टावक्षराणि । अष्टाक्षरꣳ ह वा एकं गायत्र्यै पदम् । एतदु हैवास्या एतत । स यावदिदं प्राणि तावद्ध जयति योऽस्या एतदेव पदं वेद । अथास्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति । यद्वै चतुर्थं तत्तुरीयम् । दर्शतं पदमिति ददृश इव ह्येषः । परोरजा इति सर्वमु ह्येवैष रज उपर्युपरि तपति । एवꣳ हैव श्रिया यशसा तपति योऽस्या एतदेव पदं वेद ॥

तथा प्राणः अपान. व्यानः एतान्यपि प्राणाद्यभिधानाक्षराणि अष्टौ । तच्च गायत्र्यास्तृतीय पदम् । यावदिद प्राणिजात, तावत् ह जयति, योऽस्या एतदेव गायत्र्यास्तृतीय पद वेद । अथ अनन्तर गायत्र्यास्त्रिपदाया शब्दात्मिकायास्तुरीय पदमुच्यते अभिधेयभूत, अस्याः प्रकृताया गायत्र्या. एतदेव वक्ष्यमाण तुरीय दर्शत पद परोरजा य एष तपति । तुरीयमित्यादिवाक्यपदार्थं स्वयमेव व्याचष्टे श्रुति. — यद्वै चतुर्थं प्रसिद्ध लोके, तदिह तुरीयशब्देनाभिधीयते । दर्शत पदमित्यस्य कोऽर्थ इत्युच्यते — ददृशे इव दृश्यते इव हि एष. मण्डलान्तर्गत· पुरुष. । अतो दर्शत पदमुच्यते । परोरजा इत्यस्य पदस्य कोऽर्थ इत्युच्यते — सर्वं समस्त उ हि एव एषः मण्डलस्थ. पुरुषः रजः रजोजात समस्त लोकमित्यर्थः, उपर्युपरि आधिपत्यभावेन सर्वं लोक रजोजात तपति । उपर्युपरीति वीप्सा सर्वलोकाधिपत्यख्यापनार्था । ननु सर्वशब्देनैव सिद्धत्वात् वीप्सा अनर्थिका — नैष दोष. । येषा उपरिष्टात् सविता दृश्यते तद्विषय एव सर्वशब्द स्यादित्याशङ्कानिवृत्त्यर्था वीप्सा, 'ये चामुष्मात्पराञ्चो लोकास्तेषा चेष्टे देवकामानां च ' इति श्रुत्यन्तरात् । तस्मात् सर्वावरोधार्था वीप्सा । यथा असौ सविता सर्वाधिपत्यलक्षणया श्रिया यशसा च ख्यात्या तपति, एव हैव श्रिया यशसा च तपति, योऽस्या एतदेव तुरीय दर्शत पद वेद ।

* शकर.

[1]सैषा गायत्र्येतस्मिꣳस्तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता । तद्वै तत्सत्ये प्रतिष्ठितम् । चक्षुर्वै सत्यम् । चक्षुर्हि वै सत्यम् । तस्माद्यदिदानीं

---

* खण्डाष्टकभाष्यमिदम् ।

(१) बृउ ५।१४।२, शबा. १४।८।१५।२.

(२) बृउ ५।१४।३, शबा १४।८।१५।३, ४ ह्येवैष ( ह्येष ), मध्व ह्येवैष ( ह्येवैव )

* रग शंकरवत् ।

(१) बृउ ५।१४।४, शबा १४।८।१५।५–७ प्रतिष्ठितम् । च ( प्रतिष्ठिता च ) मदर्श ( मद्राक्ष ) श्रद्दध्याम ( श्रद्दध्यात् ) दोगीय ( दोजीय ) ( सावित्रीं० ), ब्रशांकर. १।१।२९, रग ओगीय ( ओजीय ) म्वेषा ( मु हैषा ); मध्व. चक्षुर्हा ( चक्षुर्ह ) एवं ब्रू ( एव ब्रू ) दोगीय

द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति । य एव ब्रूयादहमदर्शमिति तस्मा एव श्रद्दध्याम । तद्वै तत्सत्य बले प्रतिष्ठितम् । प्राणो वै बलम् । तत्प्राणे प्रतिष्ठितम् । तस्मादाहुर्बलꣳ सत्यादोगीय इति । एवम्वेषा गायत्र्यध्यात्मं प्रतिष्ठिता । सा हैषा गयाꣳस्तत्रे । प्राणा वै गया । तत्प्राणाꣳस्तत्रे । तद्यद्गयाꣳस्तत्रे तस्माद्गायत्री नाम । स यामेवामूꣳ सावित्रीमन्वाहैषैव सा । स यस्मा अन्वाह तस्य प्राणाꣳस्त्रायते ॥

सैषा त्रिपदा उक्ता या त्रैलोक्यत्रैविद्यप्राणलक्षणा गायत्री एतस्मिन् चतुर्थे तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता, मूर्तामूर्तरसत्वात् आदित्यस्य । रसापाये हि वस्तु नीरस अप्रतिष्ठित भवति, यथा काष्ठादि दग्धसार, तद्वत् । तथा मूर्तामूर्तात्मक जगत् त्रिपदा गायत्री आदित्ये प्रतिष्ठिता तद्रसत्वात् सह त्रिभि पादै । तद्वै तुरीय पद सत्ये प्रतिष्ठितम् । किं पुनः तत् सत्यमित्युच्यते—चक्षुर्वै सत्यम् । कथ चक्षु' सत्यमित्याह—प्रसिद्धमेतत्, चक्षुर्हि वै सत्यम् । कथ प्रसिद्धतेत्याह —तस्मात्--यत् यदि इदानीमेव द्वौ विवदमानौ विरुद्ध वदमानौ एयाता आगच्छेयाताम् । अह अदर्शं दृष्टवानस्मीति अन्य आह । अह अश्रौष—त्वया दृष्ट न तथा तद्वस्त्विति । तयो य एव ब्रूयात्—अहमद्राक्षमिति, तस्मै एव श्रद्दध्याम । न पुन. य ब्रूयात् अहमश्रौषमिति । श्रोतु मृषा श्रवणमपि सभवति । न तु चक्षुषो मृषा दर्शनम् । तस्मात् न अश्रौषमित्युक्तवते श्रद्दध्याम । तस्मात् सत्यप्रतिपत्तिहेतुत्वात् सत्य चक्षु । तस्मिन् सत्ये चक्षुषि सह त्रिभि. इतरै. पादै. तुरीय पद प्रतिष्ठितमित्यर्थ' । उक्त च 'स आदित्य' कस्मिन्प्रतिष्ठित इति चक्षुषीति' । तद्वै तुरीयपदाश्रय सत्य बले प्रतिष्ठितम् । किं पुन. तत् बलमित्याह—प्राणो वै बलम् । तस्मिन्प्राणे बले प्रतिष्ठित सत्यम् । तथा चोक्तम्—'सूत्रे तदोत च प्रोत च' इति । यस्मात् बले सत्य प्रतिष्ठित, तस्मादाहु.—बल सत्यादोगीयः ओजीयः ओजस्तरमित्यर्थ. । लोकेऽपि यस्मिन्हि यदाश्रित भवति, तस्मादाश्रितात् आश्रयस्य बलवत्तरत्व प्रसिद्धम् । न हि दुर्बल बलवतः क्वचित् आश्रयभूत दृष्टम् । एव उक्तन्यायेन उ एषा गायत्री अध्यात्म अध्यात्मे प्राणे प्रतिष्ठिता । सैषा गायत्री प्राणः । अतो गायत्र्यां जगत्प्रतिष्ठितम् । यस्मिन्प्राणे सर्वे देवा एक भवन्ति, सर्वे वेदा, कर्माणि फल च । सैव गायत्री प्राणरूपा सती जगतः आत्मा । सा ह एषा गयान् तत्रे त्रातवती । के पुनर्गया. ? प्राणा वागादय वै गया., शब्दकरणात् । तान् तत्रे सैषा गायत्री । तत् तत्र यत् यस्मात् गयान् तत्रे, तस्मात् गायत्री नाम । गयत्राणात् गायत्रीति प्रथिता । स. आचार्य. उपनीय माणवकमष्टवर्षं यामेव अमू गायत्रीं सावित्रीं सवितृदेवताकां अन्वाह पच्छः अर्धर्चश समस्तां च, एषैव स साक्षात् प्राणः जगतः आत्मा माणवकाय समर्पिता इह इदानीं व्याख्याता, नान्या । स आचार्य यस्मै माणवकाय अन्वाह अनुवक्ति, तस्य माणवकस्य गयान् प्राणान् त्रायते नरकादिपतनात् ।

* शकर.

ताꣳ हैतामेके सावित्रीमनुष्टुभमन्वाहु । वागनुष्टुप् । एतद्वाचमनुब्रूम इति । न तथा कुर्यात् । गायत्रीमेव सावित्रीमनुब्रूयात् । यदि ह वा अप्येवविद्बह्विव प्रतिगृह्णाति न हैव तद्गायत्र्या एकचन पद प्रति ॥

(१) तामेतां सावित्रीं ह एके शाखिनः अनुष्टुभ अनुष्टुप्प्रभवा अनुष्टुप्छन्दस्का अन्वाहुरुपनीताय । तदभिप्रायमाह—वाक् अनुष्टुप्, वाक्च शरीरे सरस्वती, तामेव हि वाच सरस्वतीं माणवकायानुब्रूम इत्येतद्वदन्त । न तथा कुर्यात् न तथा विद्यात्, यत् ते आहु' मृषैव तत् । किं तर्हि गायत्रीमेव सावित्रीमनुब्रूयात् । कस्मात् ? यस्मात् प्राणो गायत्रीत्युक्तम् । प्राणे उक्ते, वाक्च सरस्वती च अन्ये च प्राणाः सर्वे माणवकाय समर्पित भवति । किंचेद प्रासङ्गिकमुक्त्वा गायत्रीविद स्तौति—यदि ह वै अपि एववित् बह्विव—

(दोजीय) एवम्वेषा (एवमेषा) तद्यद्ग (तद्ग), श्रीकर १।१।३०, ३२, बलदेव १।१।२८

* रग शकरवत् ।

(१) बृउ ५।१४।५, शबा १४।८।१५।८ हैतामेके (हैके) (सावित्रीं०) अप्येवविद्ब (अपि ब), मध्व. एतद्वा (तद्वा) न तथा (तन्न तथा) हैव (ह वै).

न हि तस्य सर्वात्मनो बहु नामास्ति किंचित्, सर्वात्मकत्वाद्विदुष —— प्रतिगृह्णाति, न हैव तत् प्रतिग्रहजात गायत्र्या एकचन एकमपि पद प्रति पर्याप्तम् ।

शाकर

(२) एव पादविद प्रतिग्रहे दोषा. शम यान्तीत्यर्थ ।

* रग

स य इमा्ँस्त्रींल्लोकान्पूर्णान्प्रतिगृह्णीयात्सोऽस्या एतत्प्रथम पदमाप्नुयात् । अथ यावतीयं त्रयी विद्या यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतद्द्वितीयं पदमाप्नुयात् । अथ यावदिद प्राणि यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतत्तृतीय पदमाप्नुयात् । अथास्या एतदेव तुरीय दर्शत पद परोरजा य एष तपति । नैव केनचनाप्यम् । कुत उ एतावत्प्रतिगृह्णीयात् ॥

(१) स य इमांस्त्रीन् —— स य गायत्रीवित् इमान् भूरादीन् त्रीन् गोश्वादिधनपूर्णान् लोकान् प्रतिगृह्णीयात्, स प्रतिग्रह , अस्या गायत्र्या एतत्प्रथम पद यद्व्याख्यात आप्नुयात् प्रथमपदविज्ञानफल, तेन भुक्त स्यात् , न त्वधिकदोषोत्पादक. स प्रतिग्रह. । अथ पुन यावती इय त्रयी विद्या, यस्तावत् प्रतिगृह्णीयात्, सोऽस्या एतद्द्वितीय पदमाप्नुयात्, द्वितीयपदविज्ञानफल तेन भुक्त स्यात् । तथा यावदिद प्राणि, यस्तावत्प्रतिगृह्णीयात्, सोऽस्या एतत्तृतीय पदमाप्नुयात्, तेन तृतीयपदविज्ञानफल भुक्त स्यात् । कल्पयित्वेदमुच्यते । पादत्रयसममपि यदि कश्चित्प्रति गृह्णीयात्, तत्पादत्रयविज्ञानफलस्यैव क्षयकारण, न त्वन्यस्य दोषस्य कर्तृत्वे क्षमम् । न चैव दाता प्रतिग्रहीता वा । गायत्रीविज्ञानस्तुतये कल्प्यते । दाता प्रतिग्रहीता च यद्यप्येव सभाव्यते, नासौ प्रतिग्रह. अपराधक्षम' । कस्मात् ? यतः अभ्यधिकमपि पुरुषार्थविज्ञान अवशिष्टमेव चतुर्थपादविषय गायत्र्याः । तद्दर्शयति—— अथ अस्याः एतदेव तुरीय दर्शत पद परोरजा य एष तपति । यच्चैतत् नैव केनचन केनचिदपि प्रतिग्रहेण आप्य नैव प्राप्यमित्यर्थ., यथा पूर्वोक्तानि त्रीणि पदानि । एतान्यपि नैव आप्यानि केनचित् । कल्पयित्वा एवमुक्तम् । परमार्थतः कुत उ एतावत् प्रतिगृह्णीयात् त्रैलोक्यादिसमम् । तस्मात् गायत्री एवप्रकारा उपास्येत्यर्थ ।

शाकर.

(२) प्रथमपादज्ञानस्य लोकत्रयभोक्तृत्व फलमित्यर्थ । त्रयीप्रकाश्यसकलफलानुभवो द्वितीयपादज्ञानस्य फलमित्यर्थ । सर्वप्राणिशेषित्व तृतीयपादज्ञानस्य फलमित्यर्थः ।

रग

तस्या[1] उपस्थानम् । गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पदी । अपदसि । न हि पद्यसे । नमस्ते तुरीयाय दर्शताय पदाय परोरजसे । असावदो मा प्रापदिति । य द्विष्यादसावस्मै कामो मा समृद्धीति वा । न हैवास्मै स कामः समृध्यते यस्मा एवमुपतिष्ठते । अहमद' प्रापमिति वा ॥

(१) तस्या उपस्थानम्-–तस्या गायत्र्या. उपस्थान उपेत्य स्थान नमस्करण अनेन मन्त्रेण । कोऽसौ मन्त्र इत्याह— हे गायत्रि असि भवसि त्रैलोक्यपादेन एकपदी, त्रयीविद्यारूपेण द्वितीयेन द्विपदी, प्राणादिना तृतीयेन त्रिपद्यसि, चतुर्थेन तुरीयेण चतुष्पद्यसि । एव चतुर्भि. पादै· उपासकै. पद्यसे ज्ञायसे । अतः पर परेण निरुपाधिकेन स्वेन आत्मना अपदसि—अविद्यमान पद यस्यास्तव, येन पद्यसे—सा त्व अपत् असि, यस्मात् न हि पद्यसे, नेति नेत्यात्मत्वात् । अतो व्यवहारविषयाय नमस्त तुरीयाय दर्शताय पदाय परोरजसे । असौ शत्रुः पाप्मा त्वत्प्राप्तिविघ्नकरः, अद. तत् आत्मनः कार्यं यत् त्वत्प्राप्तिविघ्नकर्तृत्व, मा प्रापत् मैव प्राप्नोतु । इतिशब्दो मन्त्रपरिसमाप्त्यर्थः । यं द्विष्यात् य प्रति द्वेष कुर्यात् स्वय विद्वान्, त प्रति अनेनोपस्थानम् । असौ शत्रु. अमुकनामेति नाम गृह्णीयात् । अस्मै यज्ञदत्ताय अभिप्रेतः काम' मा समृद्धि समृद्धिं मा प्राप्नोत्विति वा उपतिष्ठते । न हैवास्मै देवदत्ताय स कामः समृध्यते । कस्मै ? यस्मै एवमुपतिष्ठते । अह अद. देवदत्ताभिप्रेत प्रापमिति वा उपतिष्ठते । असा-

* शेष शाकरवत् ।

(१) बृउ ५।१४।६, शब्रा १४।८।१५।९.

(१) बृउ ५।१४।७, शब्रा १४।८।१५।१० समृद्धीति ( समर्द्धीति ), रग काम समृ ( काम ऋ ), मध्व. पद्यसे ( सपद्यसे ) काम समृ ( काम ऋ )

वदो मा प्रापदित्यादित्रयाणां मन्त्रपदानां यथाकाम विकल्प' ।

शकर.

( २ ) अपदसि । तदुपपादयति—न हि पद्यस इति । पद्यसे गम्यसे ज्ञायस इत्यर्थ । अपरिच्छिन्न-महिमत्वात्परिच्छिन्नतया ज्ञातु न शक्यस इत्यर्थ. ।

* रग.

एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वतराश्वि-मुवाच । यन्नु हो तद्गायत्रीविद्ब्रूथा । अथ कथ॰ हस्तीभूतो वहसीति । मुख॰ ह्यस्या सम्राण्न विदाचकारेति होवाच । तस्या अग्निरेव मुखम् । यदि ह वा अपि बह्विवाग्नावभ्यादधति सर्वमेव तत्सदहति । एव॰ हैवैवविद्यद्यपि बह्विव पाप कुरुते सर्वमेव तत्सप्साय शुद्ध पूतोऽजरोऽमृतः सभवति ॥

( १ ) गायत्र्या मुखविधानाय अर्थवाद उच्यते — एतत् ह किल वै स्मर्यते, तत् तत्र गायत्रीविज्ञानवि-षये । जनको वैदेहः, बुडिलो नामत', अश्वतराश्वस्यापत्य आश्वतराश्विः, त किल उक्तवान् । यत् नु इति वितर्के, हो अहो इत्येतत् , तत् यत् त्व गायत्रीविद्ब्रूथा', 'गायत्री विदस्मीति यदब्रूथा., किमिद तस्य वचसोऽननुरूपम् । अथ कथ, यदि गायत्रीवित्, प्रतिग्रहदोषेण हस्तीभूतो वहसीति । स प्रत्याह राज्ञ स्मारितः— मुख गायत्र्या हि यस्मात् अस्या , हे सम्राट् , न विदाचकार न विज्ञा-तवानस्मि — इति होवाच । एकाङ्गविकलत्वात् गाय त्रीविज्ञान मम अफल जातम् । शृणु तर्हि । तस्या गायत्र्या अग्निरेव मुखम् । यदि ह वै अपि बह्विवेन्धन अग्नावभ्यादधति लौकिका , सर्वमेव तत्सदहत्येवेन्धन अग्नि'— एव हैव एववित् गायत्र्या अग्निर्मुखमित्येव वेत्तीत्येववित् स्यात् स्वय गायत्र्यात्मा अग्निमुख. सन् । यद्यपि बह्विव पाप कुरुते प्रतिग्रहादिदोष, तत्सर्वे पाप-जात सप्साय भक्षयित्वा शुद्धः अग्निवत्पूतश्च तस्मात्प्र-तिग्रहदोषात् गायत्र्यात्मा अजरोऽमृतश्च सभवति ।

शकर.

( २ ) एवमेववविद्बह्वपि कृत पाप ससाय, सोऽन्त-कर्मणि, दग्ध्वेत्यर्थः । पूतो ब्रह्मविद्याप्रतिबन्धकपापरहितः सपन्नब्रह्मविद्यो जरामरणशून्यो भवतीत्यर्थः ।

* रग.

अन्तकाले आदित्यादिप्रार्थना

[१]हिरण्मयेन पात्रेण सत्यस्यापिहित मुखम् । तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये । पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् । समूह तेजो यत्ते रूप कल्याणतमं तत्ते पश्यामि । योऽसावसौ पुरुष. सोऽहमस्मि । वायुरनिलममृतमथेदं भस्मा-न्त॰ शरीरम् । ॐ क्रतो स्मर, कृत॰ स्मर, क्रतो स्मर, कृत॰ स्मर । अग्ने नय सुपथा राये अस्मा-न्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जु-हुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥

( १ ) यो ज्ञानकर्मसमुच्चयकारी स. अन्तकाले आदित्य प्रार्थयति । अस्ति च प्रसङ्गः । गायत्र्यास्तुरीयः पादो हि स. । तदुपस्थान प्रकृतम् । अत. स एव प्रार्थ्यते । हिरण्मयेन ज्योतिर्मयेन पात्रेण, यथा पात्रेण इष्ट वस्तु अपिधीयते, एवमिद सत्याख्य ब्रह्म ज्योतिर्म-येन मण्डलेनापिहितमिव असमाहितचेतसामदृश्यत्वात् । तदुच्यते— सत्यस्यापिहित मुख मुख्य स्वरूपम् । तत् अपिधान पात्रमपिधानमिव दर्शनप्रतिबन्धकारण, तत् त्व, हे पूषन्, जगतः पोषणात्पूषा सविता, अपावृणु अपावृत कुरु दर्शनप्रतिबन्धकारणमपनयेत्यर्थः । सत्यधर्माय सत्य धर्मोऽस्य मम सोऽह सत्यधर्मा, तस्मै त्वदात्मभूतायेत्यर्थ. । दृष्टये दर्शनाय ।

पूषन्नित्यादीनि नामानि आमन्त्रणार्थानि सवितुः । एकर्षे, एकश्चासावृषिश्च एकर्षि., दर्शनादृषिः । स हि सर्वस्य जगत आत्मा चक्षुश्च सन् सर्वे पश्यति । एको वा गच्छतीत्येकर्षिः, 'सूर्य एकाकी चरति' इति मन्त्र-वर्णात् । यम, सर्वे हि जगतः सयमन त्वत्कृतम् । सूर्य, सुष्ठु ईरयते रसान् रश्मीन् प्राणान् धियो वा जगत इति ।

---

* शेष शकरवत् ।

(१) बृउ ५।१४।८, शब्रा १४।८।१५।११, १२ कुरुते ( करोति ), रग दधति ( दधाति ) मेव त ( मेवैत ) त्सप्साय ( त्ससाय )

* शेष शकरवत् ।

(१) बृउ ५।१५।१; विज्ञान ४।३।४

प्राजापत्य, प्रजापतेरीश्वरस्यापत्य हिरण्यगर्भस्य वा, हे प्राजापत्य । व्यूह विगमय रश्मीन् । समूह सक्षिप आत्मनस्तेजः, येनाह शक्नुयां द्रष्टुम् । तेजसा ह्यप हृतदृष्टि न शक्नुयां त्वत्स्वरूपमञ्जसा द्रष्टु, विद्योतन इव रूपाणाम् । अत उपसहर तेज. । यत् ते तव रूप सर्वकल्याणानामतिशयेन कल्याण कल्याणतमम् । तत् ते तव पश्यामि ( पश्यामो वय, वचनव्यत्ययेन ) । योऽसौ भूर्भुव.स्वर्व्याहृत्यवयव. पुरुषः, पुरुषाकृतित्वात्पुरुष', सोऽहमस्मि भवामि । 'अहरहम्' इति च उपनिषद उक्तत्वादादित्यचाक्षुषयो' तदेवेद परामृश्यते । सोऽहमस्म्यमृतमिति सबन्ध' । ममामृतस्य सत्यस्य शरीरपाते, शरीरस्थो य प्राणो वायु' स अनिल बाह्य वायुमेव प्रतिगच्छतु । तथा अन्या देवता. स्वा स्वा प्रकृतिं गच्छन्तु । अथ इदमपि भस्मान्त सत् पृथिवीं यातु शरीरम् ।

अथेदानीं आत्मनः सकल्पभूता मनसि व्यवस्थिता अग्निदेवता प्रार्थयते—ॐ क्रतो । ओमिति क्रतो इति च सबोधनार्थावेव । ओंकारप्रतीकत्वात् ओम् । मनोमयत्वाच्च क्रतु. । हे ॐ , हे क्रतो, स्मर स्मर्तव्यम् । अन्तकाले हि त्वत्स्मरणवशात् इष्टा गति प्राप्यते । अतः प्रार्थ्यते — यत् मया कृत , तत् स्मर । पुनरुक्तिः आदरार्था । किंच हे अग्ने, नय प्रापय, सुपथा शोभनेन मार्गेण, राये धनाय कर्मफलप्राप्तये इत्यर्थः । न दक्षिणेन कृष्णेन पुनरावृत्तियुक्तेन, किं तर्हि शुक्लेनैव सुपथा । अस्मान् विश्वानि सर्वाणि, हे देव, वयुनानि प्रज्ञानानि सर्वप्राणिनां विद्वान् । किंच युयोधि अपनय वियोजय अस्मत् अस्मत्त., जुहुराण कुटिल, एनः पाप पापजात सर्वम् । तेन पापेन वियुक्ता वय एष्याम उत्तरेण पथा त्वत्प्रसादात् । किन्तु वय तुभ्य परिचर्यां कर्तुं न शक्नुम. । भूयिष्ठा बहुतमां ते तुभ्यं नमउक्तिं नमस्कारवचन विधेम नमस्कारोक्त्या परिचरेमेत्यर्थ., अन्यत्कर्तुमशक्ताः सन्त इति । शकर.

(२) आर्चिराद्यातिवाहिकानुप्रविष्टादित्यप्रार्थनामन्त्रः —हिरण्मयेनेति । सत्यस्य ब्रह्मणो मुख द्वार ब्रह्मगमनमार्गमिति यावत् । सत्यधर्मायेति । सत्य ब्रह्म धर्म आश्रयः साधन यस्य तस्मै ब्रह्मैकनिष्ठाय ब्रह्मदर्शनार्थिने मह्य दृष्टये ब्रह्मदर्शनायेत्यर्थः । योऽसावसौ पुरुषः सोऽहमस्मि । आत्मा यादृगूरूपस्तादृगूरूपोऽहमस्मि । तादृगूरूपतया वेद्मि आत्मतत्त्वविदस्मीत्यर्थः । ओं क्रतो स्मरेति । ओमिति प्रणवप्रतिपाद्यत्वादादित्यस्य सबोधनम् । ' अधीगर्थदयेशा कर्मणि ' ( पा सू २।३।५२ ) इति कर्मणि षष्ठी । क्रतूपासन मदनुष्ठित स्मर तदङ्गतया कृत कर्मापि स्मर । देहविलक्षणात्मज्ञानी कर्माङ्गकब्रह्मविद्यानिष्ठश्चातस्तत्स्वरूप प्रदर्शय मुक्तिमार्गं च प्रयच्छेत्यर्थः । अग्ने नयेति । हेऽग्ने सुपथा शोभनेनार्चिरादिमार्गेण राय ऐश्वर्याय स्वाराज्याय मोक्षायेति यावत् । वयुनानि सर्वाणि ज्ञानानि विद्वान्भवसि । अतो मदीयमप्यात्मज्ञान त्व जानासीत्यर्थः । रग.

( ३ ) 'सूर्यमण्डलनाम्ना तु पात्रेण स्वमुख हरिः । पिधायैव जगत्सर्वं पश्यत्यमितविक्रम । उदक पीयते तेन तमसस्त्रायते जगत् । यतोऽत' पात्रमुद्दिष्ट विद्वद्भिः सूर्यमण्डलम् । पूषा पूर्णत्वतो विष्णुर्दृष्टये विष्णुधर्मिण. । स्वमुख प्रकाशयेदेक नान्यथा तु कथचन । नान्यो यत्तादृशो ज्ञाता तस्मादेक ऋषिर्हरि । यमो नियमनात्प्रोक्तः सूर्य ऊरीकृतेरयम् । ज्ञेय प्रजापतेरेव प्राजापत्यस्ततः स्मृत. । प्राणे स्थितो यः पुरुषः सोऽसावहमिति स्मृतः । अहेयत्वादसुत्वाच्च मेयत्वादस्मिनामकः । अदोषत्वाद इत्युक्तो वायुस्त्वनिलयो यत: । अनिल तत एवासावमृत चेति कीर्त्यते । तदाश्रयोऽपि ह्यमृतः किमु साक्षात्स्वय हरिः । क्रतुश्च ज्ञानरूपत्वात्स एव हि जनार्दन । सोऽग्निरङ्गप्रणेतृत्वाद्विश्वज्ञानविदां वरः ॥' इति च । जुहुराणमलर कुर्वत् । न वा अहमिम जानातीतिवत् सर्वत्राप्यहशब्दोऽहेयवाच्येव । मध्व.

इति पञ्चमोऽध्याय. ॥

---

## षष्ठोऽध्यायः

प्राणेषु वागादिषु प्रधान. मुख्य प्राण एव ज्येष्ठश्रेष्ठत्वादिरूपै उपास्य , मुख्यप्राणस्य सर्वप्रतिष्ठाहेतुत्वद्योतिनी आख्यायिका

**'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च श्रेष्ठश्च**

---

(१) बृह. ६।१।१, छान्दो ५।१।१।२।१, ब्रह्मकर. ३।३।१, रामानुज. ३।३।१०, श्रीकर ३।३।१०, १८.

स्वाना भवति । प्राणो वै ज्येष्ठश्च श्रेष्ठश्च । ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति । अपि च येषा बुभूषति, य एव वेद * ॥

( १ ) प्राणो गायत्रीत्युक्तम् । कस्मात्पुन कारणात् प्राणभाव. गायत्र्या', न पुनर्वागादिभाव इति, यस्मात् ज्येष्ठश्च श्रेष्ठश्च प्राण, न वागादयो ज्येष्ठ्यश्रैष्ठ्यभाजः । कथ ज्येष्ठत्व श्रेष्ठत्व च प्राणस्येति तन्निर्दिधारयिषया इदमारभ्यते । अथवा उक्थयजु सामक्षत्रादिभावै प्राणस्यैव उपासनमभिहित, सत्स्वपि अन्येषु चक्षुरादिषु । तत्र हेतुमात्रमिह आनन्तर्येण सबध्यते । न पुन पूर्वशेषता । विवक्षित तु खिलत्वादस्य काण्डस्य पूर्वत्र यदनुक्त विशिष्टफल प्राणविषयमुपासन तद्वक्तव्यमिति । य कश्चित्, ह वै इत्यवधारणार्थौ । यो ज्येष्ठश्रेष्ठगुण वक्ष्यमाण यो वेद असौ भवत्येव ज्येष्ठश्च श्रेष्ठश्च । एव फलेन प्रलोभित. सन् प्रश्नाय अभिमुखीभूत. । तस्मै चाह—प्राणो वै ज्येष्ठश्च श्रेष्ठश्च । कथ पुनरवगम्यते प्राणो ज्येष्ठश्च श्रेष्ठश्चेति, यस्मात् निषेककाल एव शुक्रशोणितसबन्ध' प्राणादिकलापस्याविशिष्टः ? तथापि न अप्राण शुक्र विरोहतीति प्रथमो वृत्तिलाभ. प्राणस्य चक्षुरादिभ्य' । अतो ज्येष्ठो वयसा प्राण । निषेककालादारभ्य गर्भं पुष्यति प्राणः । प्राणे हि लब्धवृत्तौ पश्चाच्चक्षुरादीना वृत्तिलाभ । अतो युक्त प्राणस्य ज्येष्ठत्व चक्षुरादिषु । भवति तु कश्चित्कुले ज्येष्ठ, गुणहीनत्वात्तु न श्रेष्ठ. । मध्यम कनिष्ठो वा गुणाढ्यत्वात् भवेत् श्रेष्ठ', न ज्येष्ठः । न तु तथा इहेत्याह—प्राण एव तु ज्येष्ठश्च श्रेष्ठश्च । कथ पुनः श्रैष्ठ्यमवगम्यते प्राणस्य ? तदिह सवादेन दर्शयिष्याम. । सर्वथापि तु प्राण ज्येष्ठश्रेष्ठगुण यो वेद उपास्ते, स स्वानां ज्ञातीना ज्येष्ठश्च श्रेष्ठश्च भवति, ज्येष्ठश्रेष्ठगुणोपासनसामर्थ्यात् । स्वव्यतिरेकेणापि च येषां मध्ये ज्येष्ठश्च श्रेष्ठश्च भविष्यामीति बुभूषति भवितुमिच्छति, तेषामपि ज्येष्ठश्रेष्ठप्राणदर्शी ज्येष्ठश्च श्रेष्ठश्च भवति । न तु वयोनिमित्त ज्येष्ठत्व, तत् इच्छात' कथ भवतीत्युच्यते— नैष दोष', प्राणवत् वृत्तिलाभस्यैव ज्येष्ठत्वस्य विवक्षितत्वात् ।

* शकर.

( २ ) ' अहश्रेयोविवाद तु येन कृत्वाऽखिलाः सुरा । असमर्था. स्वरक्षाया स वायुः सुरनायक. । विवदन्तोऽखिला देवा ययुर्नारायण प्रभुम् । अहश्रेयानहश्रेयानिति वायुपुर सरा. । उक्त भगवता तेन येन त्यक्तेऽखिला अपि । स्थातु न शक्ताः स श्रेयानित्युक्ताः पुनरागता. । उत्क्रान्ताश्च पुन. सर्वे तद्विज्ञप्त्यै पृथक्पृथक् । सुपर्णशेषरुद्रेन्द्रसूर्यादिषु पृथक्पृथक् । उत्क्रान्तेषु ब्रह्मदेहाच्छरीर न पपात ह । ऋत उत्क्रान्तमेक तु तदन्ये निवसन्ति च । प्राण उच्चिक्रमिषति स्थातु नाशक्नुवन्परे । प्राण विना न च ब्रह्मा त विना प्राण एव च । अन्योन्यापाश्रयाच्छक्तौ स्थातुमन्ये कुतस्ततः । तस्मात्प्राणो वरो देवेष्विति सर्वेऽपि मेनिरे ॥ ' इति पवमाने । † मध्व.

यो ह वै वसिष्ठा वेद वसिष्ठ स्वानां भवति । वाग्वै वसिष्ठा । वसिष्ठ स्वानां भवति । अपि च येषा बुभूषति, य एव वेद ॥

( १ ) यो ह वै वसिष्ठा वेद वसिष्ठ. स्वाना भवति । तद्दर्शनानुरूप्येण फलम् । येषा च ज्ञातिव्यतिरेकेण वसिष्ठो भवितुमिच्छति, तेषां च वसिष्ठो भवति । उच्यता तर्हि, कोऽसौ वसिष्ठेति । वाग्वै वसिष्ठा । वासयत्यतिशयेन वस्ते वेति वसिष्ठा । वाग्मिनो हि धनवन्तो वसन्त्यतिशयेन । आच्छादनार्थस्य वा वसेर्वसिष्ठा । अभिभवन्ति हि वाचा वाग्मिन. अन्यान् । तेन वसिष्ठगुणवत्परिज्ञानात् वसिष्ठगुणो भवतीति दर्शनानुरूप फलम् । शकर.

( २ ) अतिशयेन वसुमत्त्व वसिष्ठत्वम् । रग.

यो ह वै प्रतिष्ठां वेद प्रतितिष्ठति समे । प्रतितिष्ठति दुर्गे । चक्षुर्वै प्रतिष्ठा । चक्षुषा हि समे च

* अस्मिन् ब्राह्मणे यत्र रग नोद्धृत तत्र तत् शकरवत् । कौउ २।१४ ( पृ ६५४ ) इत्यत्र व्याख्यान द्रष्टव्य अस्या प्राणविद्याया ।

* रग शकरवत् ।

† सर्वस्य ब्राह्मणस्यास्य भाष्यमिद न खण्डमात्रस्यादिमस्य ।

(१) बृउ ६।१।२, शब्रा १४।९।२।२ ( अपि च येषा बुभूषति० )

(२) बृउ ६।१।३, शब्रा. १४।९।२।३.

**दुर्गे च प्रतितिष्ठति । प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे, य एवं वेद ॥**

यो ह वै प्रतिष्ठां वेद, प्रतितिष्ठत्यनयेति प्रतिष्ठा, ता प्रतिष्ठा प्रतिष्ठागुणवतीं यो वेद, तस्य एतत्फलम् । प्रतितिष्ठति समे देशे काले च। तथा दुर्गे विषमे च दुर्गमने च देशे दुर्भिक्षादौ वा काले विषमे । यद्येवमुच्यतां, काऽसौ प्रतिष्ठा । चक्षुर्वै प्रतिष्ठा । कथं चक्षुषः प्रतिष्ठात्वमित्याह — चक्षुषा हि समे च दुर्गे च दृष्ट्वा प्रतितिष्ठति । अतोऽनुरूपं फलं, प्रतितिष्ठति समे, प्रतितिष्ठति दुर्गे, य एवं वेदेति । शंकर.

[१]**यो ह वै संपदं वेद सꣳ हास्मै पद्यते यं कामं कामयते । श्रोत्रं वै संपत् । श्रोत्रे हीमे सर्वे वेदा अभिसंपन्नाः । सꣳ हास्मै पद्यते यं कामं कामयते, य एवं वेद ॥**

यो ह वै संपदं वेद, संपद्गुणयुक्तं यो वेद, तस्य एतत्फलम् । अस्मै विदुषे संपद्यते ह । किम् ? यं कामं कामयते, स कामः । किं पुनः संपद्गुणकम् ? श्रोत्रं वै संपत् । कथं पुनः श्रोत्रस्य संपद्गुणत्वमित्युच्यते — श्रोत्रे सति हि यस्मात् सर्वे वेदा अभिसंपन्नाः, श्रोत्रेन्द्रियवतोऽध्येयत्वात् । वेदविहितकर्मायत्ताश्च कामाः । तस्मात् श्रोत्रं संपत् । अतो विज्ञानानुरूपं फलं, सं हास्मै पद्यते, यं कामं कामयते, य एवं वेद । शंकर.

[२]**यो ह वा आयतनं वेदायतनꣳ स्वानां भवत्यायतनं जनानाम् । मनो वा आयतनम् । आयतनꣳ स्वानां भवत्यायतनं जनानां, य एवं वेद ॥**

(१) यो ह वा आयतनं वेद । आयतनं आश्रयः, तत् यो वेद, आयतनं स्वानां भवति, आयतनं जनानामन्येषामपि । किं पुनः तत् आयतनमित्युच्यते — मनो वै आयतनं आश्रयः इन्द्रियाणां विषयाणां च । मनआश्रिता हि विषया आत्मनो भोग्यत्वं प्रतिपद्यन्ते । मनःसंकल्पवशानि च इन्द्रियाणि प्रवर्तन्ते निवर्तन्ते च । अतो मन आयतनं इन्द्रियाणाम् । अतो दर्शनानुरूप्येण फलं, आयतनं स्वानां भवति, आयतनं जनानां, य एवं वेद । शंकर.

(२) इन्द्रियाणां मनोधीनप्रवृत्तिकत्वादिन्द्रियान्तरापेक्षया मनस आयतनत्वम् । अत एव जनानामप्यायतनत्वम् । रंग

[१]**यो ह वै प्रजातिं वेद, प्रजायते ह प्रजया पशुभिः । रेतो वै प्रजातिः । प्रजायते ह प्रजया पशुभिर्य एवं वेद ॥**

यो ह वै प्रजातिं वेद, प्रजायते ह प्रजया पशुभिश्च संपन्नो भवति । रेतो वै प्रजातिः । रेतसा प्रजननेन्द्रियमुपलक्ष्यते । तद्विज्ञानानुरूपं फलं, प्रजायते ह प्रजया पशुभिः, य एवं वेद । शंकर.

[२]**ते हेमे प्राणा अहꣳश्रेयसे विवदमाना ब्रह्म जग्मुः । तद्धोचुः को नो वसिष्ठ इति । तद्धोवाच यस्मिन्व उत्क्रान्त इदꣳशरीरं पापीयो मन्यते स वो वसिष्ठ इति * ॥**

ते हेमे प्राणा वागादयः, अहंश्रेयसे अहं श्रेयानित्येतस्मै प्रयोजनाय, विवदमाना विरुद्धं वदमानाः, ब्रह्म जग्मुः ब्रह्म गतवन्तः, ब्रह्मशब्दवाच्यं प्रजापतिम् । गत्वा च तद्ब्रह्म ह ऊचुः उक्तवन्तः — कः नः अस्माकं मध्ये, वसिष्ठः, कोऽस्माकं मध्ये वसति च वासयति च । तद्ब्रह्म तैः पृष्टं सत् ह उवाच उक्तवत् — यस्मिन् वः युष्माकं मध्ये उत्क्रान्ते निर्गते शरीरात्, इदं शरीरं पूर्वस्मादतिशयेन पापीयः पापतरं मन्यते लोकः । शरीरं हि नाम अनेकाशुचिसंघातत्वात् जीवतोऽपि पापमेव, ततोऽपि कष्टतरं यस्मिन् उत्क्रान्ते भवति । वैराग्यार्थमिदमुच्यते — पापीय इति । स वः युष्माकं मध्ये वसिष्ठो भविष्यति । जानन्नपि वसिष्ठं प्रजापतिः नोवाच

(१) बृउ ६।१।४, शब्रा १४।९।२।४, मध्व यं कामं ( तं कामं )

(२) बृउ ६।१।५, शब्रा १४।९।२।५.

* कौउ २।१४ ( पृ ६५४ ) इत्यत्र व्याख्यानं द्रष्टव्यम् ।

(१) बृउ ६।१।६, शब्रा १४।९।२।६ ते ह प्र ( ते प्र ), ब्रशंकर ३।३।२; भास्कर ३।३।२, रंग प्रजातिं ( प्रजापतिं ) प्रजातिः ( प्रजापतिः ), मध्व रंगवत्

(२) बृउ ६।१।७, शब्रा १४।९।२।७ ( तद्धोचुः० ) ( तद्धोवाच० ), ब्रशंकर २।१।५, रामानुज २।१।४, ३।३।१०, निंबार्क २।१।५, श्रीकर २।१।४.

अथ वसिष्ठ इति । इतरेषा अप्रियपरिहाराय ।

शकर.

वाग्घोच्चक्राम । सा संवत्सरं प्रोष्यागत्योवाच । कथमशकत मदृते जीवितुमिति । ते होचु । यथाऽकला अवदन्तो वाचा प्राणन्त प्राणेन पश्यन्तश्चक्षुषा शृण्वन्त श्रोत्रेण विद्वा॑ंसो मनसा प्रजायमाना रेतसैवमजीविष्मेति । प्रविवेश ह वाक् ॥

ते एवमुक्ता ब्रह्मणा प्राणाः आत्मनो वीर्यपरीक्षणाय क्रमेण उच्चक्रमु. । तत्र वागेव प्रथम ह अस्मात् शरीरात् उच्चक्राम उत्क्रान्तवती । सा चोत्क्रम्य, सवत्सर प्रोष्य प्रोषिता भूत्वा, पुनरागत्योवाच — कथ अशकत शक्तवन्तः यूय, मदृते मां विना, जीवितुमिति । ते एवमुक्ताः ऊचु — यथा लोके अकला. मूका., अवदन्तः वाचा, प्राणन्तः प्राणनव्यापार कुर्वन्त. प्राणेन, पश्यन्तः दर्शन व्यापार चक्षुषा कुर्वन्त, तथा शृण्वन्त. श्रोत्रेण, विद्वास. मनसा कार्याकार्यादिविषय, प्रजायमानाः रेतसा पुत्रान् उत्पादयन्त, एवमजीविष्म वय—इत्येव प्राणैः दत्तोत्तरा वाक् आत्मनः अस्मिन् अवसिष्ठत्व बुद्ध्वा, प्रविवेश ह वाक् । शकर.

[2]चक्षुर्होच्चक्राम । तत्सवत्सरं प्रोष्यागत्योवाच । कथमशकत मदृते जीवितुमिति । ते होचु । यथाऽन्धा अपश्यन्तश्चक्षुषा प्राणन्त' प्राणेन वदन्तो वाचा शृण्वन्त. श्रोत्रेण विद्वा॑ंसो मनसा प्रजायमाना रेतसैवमजीविष्मेति । प्रविवेश ह चक्षु ॥

[3]श्रोत्र॑ं होच्चक्राम । तत्सवत्सरं प्रोष्यागत्योवाच । कथमशकत मदृते जीवितुमिति । ते होचु । यथा बधिरा अशृण्वन्त श्रोत्रेण प्राणन्त प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा विद्वा॑ंसो मनसा प्रजायमाना रेतसैवमजीविष्मेति । प्रविवेश ह श्रोत्रम् ॥

[4]मनो होच्चक्राम । तत्सवत्सरं प्रोष्यागत्योवाच । कथमशकत मदृते जीवितुमिति । ते होचु । यथा मुग्धा अविद्वा॑ंसो मनसा प्राणन्त. प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण प्रजायमाना रेतसैवमजीविष्मेति । प्रविवेश ह मन. ॥

[1]रेतो होच्चक्राम । तत्सवत्सरं प्रोष्यागत्योवाच । कथमशकत मदृते जीवितुमिति । ते होचु । यथा क्लीबा अप्रजायमाना रेतसा प्राणन्त. प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्त श्रोत्रेण विद्वा॑ंसो मनसैवमजीविष्मेति । प्रविवेश ह रेत ॥

तथा चक्षुर्होच्चक्रामेत्यादि पूर्ववत् । श्रोत्र मनः प्रजातिरिति । शकर.

[2]अथ ह प्राण उत्क्रमिष्यन्यथा महासुहय सैन्धवः पड्वीशशङ्कून्संवृहेदेव॑ं हैवेमान्प्राणान्सववर्ह । ते होचु । मा भगव उत्क्रमी. । न वै शक्ष्यामस्त्वदृते जीवितुमिति । तस्यो मे बलिं कुरुतेति । तथेति ॥

अथ ह प्राण उत्क्रमिष्यन् उत्क्रमण करिष्यन् । तदानीमेव स्वस्थानात्प्रचलिता वागादयः । किमिवेत्याह — यथा लोके, महाश्चासौ सुहयश्च महासुहय, शोभनो हयः लक्षणोपेत., महान् परिमाणत., सिन्धुदेशे भव सैन्धवः अभिजनत., पड्वीशशङ्कून् पादबन्धनशङ्कून् पड्वीशाश्च ते शङ्कवश्च तान्, सवृहेत् उद्यच्छेत् युगपदुत्खनेत् अश्वारोहे आरूढे परीक्षणाय । एव ह एव इमान् वागादीन् प्राणान् सववर्ह उद्यतवान् स्वस्थानात् भ्रंशितवान् । ते वागादयः ह ऊचु.— हे भगवः भगवन् मा उत्क्रमी. । यस्मात् न वै शक्ष्यामः त्वदृते त्वा विना जिवितुमिति । यद्येव मम श्रेष्ठता विज्ञाता भवद्भिः, अहमत्र श्रेष्ठः, तस्य उ मे मम बलिं कर कुरुत कर प्रयच्छतेति । अय च प्राणसवादः कल्पित. विदुषः श्रेष्ठत्वपरीक्षणप्रकारोपदेशः । अनेन हि प्रकारेण विद्वान् को नु खलु अत्र श्रेष्ठ इति परीक्षण

(१) बृउ ६।१।८, शब्रा १४।९।२।८ कला ( कडा )
(२) बृउ ६।१।९, शब्रा १४।९।२।९
(३) बृउ ६।१।१०, शब्रा १४।९।२।१०
(४) बृउ ६।१।११, शब्रा १४।९।२।११

(१) बृउ ६।१।१२, शब्रा १४।९।२।१२
(२) बृउ ६।१।१३, शब्रा १४।९।२।१३ तस्यो मे ( तस्य वै मे ), अशाकर २।४।८, मध्व संववर्ह ( सबवर्ह )

करोति । स एष परीक्षणप्रकार सवादभूत. कथ्यते । न हि अन्यथा सहत्यकारिणा सतां एषां अङ्गसैव सवत्सर मात्रमेव एकैकस्य निर्गमनादि उपपद्यते । तस्मात् विद्वानेव अनेन प्रकारेण विचारयति वागादीनां प्रधान-बुभुत्सुः उपासनाय । बलिं प्रार्थिताः सन्तः प्राणा', तथेति प्रतिज्ञातवन्तः । शकर.

**सा ह वागुवाच । यद्वा अहं वसिष्ठाऽस्मि त्व तद्वसिष्ठोऽसीति । यद्वा अह प्रतिष्ठाऽस्मि त्व तत्प्रतिष्ठोऽसीति चक्षु । यद्वा अह५ सपदस्मि त्व तत्सपदसीति श्रोत्रम् । यद्वा अहमायतनमस्मि त्व तदायतनमसीति मन । यद्वा अह प्रजातिरस्मि त्व तत्प्रजातिरसीति रेत । तस्यो मे किमन्न किं वास इति । यदिद किंचा श्वभ्य आ कृमिभ्य आ कीटपतङ्गेभ्यस्तत्तेऽन्नम् । आपो वास इति । न ह वा अस्यानन्न जग्ध भवति, नानन्न प्रतिगृहीत, य एवमेतदनस्यान्न वेद । तद्विद्वा५स श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वाऽऽचामन्ति । एतमेव तदनमनग्न कुर्वन्तो मन्यन्ते * ॥**

( १ ) सा ह वाक् प्रथम बलिदानाय प्रवृत्ता ह किल उवाच उक्तवती — यत् वै अह वसिष्ठाऽस्मि, यत् मम वसिष्ठत्व, तत् तवैव । तेन वसिष्ठगुणेन त्व तद्वसिष्ठोऽसीति । यत् वै अह प्रतिष्ठाऽस्मि, त्व तत्प्रतिष्ठोऽसि, या मम प्रतिष्ठा सा त्वमसीति चक्षु. । समान अन्यत् । सपदायतनप्रजातित्वगुणान् क्रमण समर्पितवन्त. । यद्येव, साधु बलिं दत्तवन्तो भवन्तः । ब्रूत — तस्य उ मे एवगुणविशिष्टस्य किमन्न, किं वास इति । आहुरितरे — यदिद लोके किंचित् अन्न नाम आ श्वभ्य आ कृमिभ्य आ कीटपतङ्गेभ्य, यच्च श्वान्न कृम्यन्न कीटपतङ्गान्न च, तेन सह सर्वमेव यत्किंचित् प्राणिभिरद्यमान अन्न, तत्सर्वं तवान्नम् । सर्वं प्राण स्यान्नमिति दृष्टि. अत्र विधीयते ।

केचित्तु सर्वभक्षणे दोषाभाव वदन्ति प्राणान्नविद' । तत् असत्, शास्त्रान्तरेण प्रतिषिद्धत्वात् । तेनास्य विकल्प इति चेत्, न, अविधायकत्वात् । न ह वा अस्यानन्न जग्ध भवतीति — सर्वं प्राणस्यान्नमित्येतस्य विज्ञानस्य विहितस्य स्तुत्यर्थमेतत् । तेनैकवाक्यतापत्ते. । न तु शास्त्रान्तरविहितस्य बाधने सामर्थ्यं, अन्यपरत्वादस्य । प्राणमात्रस्य सर्वमन्न इत्येतद्दर्शन इह विधित्सित, न तु सर्वं भक्षयेदिति । यत्तु सर्वभक्षणे दोषाभावज्ञान, तत् मिथ्यैव, प्रमाणाभावात् । विदुषः प्राणत्वात् सर्वान्नोपपत्तेः सामर्थ्यात् अदोष एवेति चेत्, न, अशेषान्नत्वानुपपत्ते. । सत्य यद्यपि विद्वान् प्राणः, येन कार्यकरणसघातेन विशिष्टस्य विद्वत्ता तेन कार्यकरणसघातेन कृमिकीटदेवाद्यशेषान्नभक्षण नोपपद्यते । तेन तत्र अशेषान्नभक्षणे दोषाभावज्ञापनमनर्थकं, अप्राप्तत्वादशेषान्नभक्षणदोषस्य । ननु प्राणः सन् भक्षयत्येव कृमिकीटाद्यन्नमपि । बाढ, किन्तु न तद्विषयः प्रतिषेधोऽस्ति । तस्मात् — देवरक्त किंशुकम् — तत्र दोषाभावः । अतः तद्रूपेण दोषाभावज्ञापनमनर्थक, अप्राप्तत्वात् अशेषान्नभक्षणदोषस्य । येन तु कार्यकरणसघातसबन्धेन प्रतिषेधः क्रियते, तत्सबन्धेन तु इह नैव प्रतिप्रसवोऽस्ति । तस्मात् तत्प्रतिषेधातिक्रमे दोष एव स्यात्, अन्यविषयत्वात् ‘ न ह वै ’ इत्यादेः । न च ब्राह्मणादिशरीरस्य सर्वान्नत्वदर्शनमिह विधीयते, किंतु प्राणमात्रस्यैव । यथा

---

* छाउ ५।२।१, २ ( पृ ८५३ ) इत्यत्र व्याख्यान द्रष्टव्यम् ।

(१) बृउ ६।१।१४, शब्रा १४।९।२।१४, १५ द्वसिष्ठोऽसीति + ( चक्षु ) चक्षु । य ( श्रोत्र य ) श्रोत्रम् ( मनो ) मन ( रेत ) ( रेत ० ) कृमिभ्य ( क्रिमिभ्य ) मन्यन्ते + ( तस्मादेवविदशिष्यन्नाचामेदशित्वाचामेदेतमेव तदनमनग्न कुरुते ), ब्रशकर. ३।३।१०, १८, ३।४।२८, भास्कर ३।३।१८ एतमेव ( एतदेव ) मन्यन्ते + ( तस्मा देवविदशिष्यन्नाचामेत्तदेव तदन्नमनग्न कुरुते), रग प्रजाति ( प्रजापति ) दनस्यान्न ( दन्नस्यान्न ), रामानुज ३।३।१८ ‘ तदनमनग्न कुरुते ’ इति शब्रापाठ , ३।४।२८ प्रतिगृहीत ( परिगृहीत ) प्रतिगृहीत + (भवति ), निम्बार्क ३।३।१८ ‘ अशिष्यन्नाचामेदशित्वा चाचामेदेतमेव तदनमनग्न कुरुते’ इति शब्रापाठ , मध्व प्रतिगृहीतं ( परिगृहीत ) शित्वाऽऽचा ( शित्वा चाचा ) मन्यन्ते + ( तस्मादेवविद्वानशिष्यन्नाचामेदशित्वा चाचामेत् ), श्रीकठ ३।३।१८ शित्वाऽऽचा ( शित्वा चाचा ) शब्रापाठः, श्रीकर ३।४।२८, वल्लभ ३।४।२७, विज्ञान. २।४।११, ३।४।२८ प्रतिगृहीत + ( भवति ), बलदेव ३।४।२८

न्न सामान्येन सर्वान्नस्य प्राणस्य किंचित् अन्नजात कस्यचित् जीवनहेतु, यथा विष विषजस्य क्रिमे., तदेव अन्यस्य प्राणान्नमपि सत् दृष्टमेव दोषमुत्पादयति मरणादिलक्षण — तथा सर्वान्नस्यापि प्राणस्य प्रतिषिद्धान्नभक्षणे ब्राह्मणत्वादिदेहसबन्धात् दोष एव स्यात्। तस्मात् मिथ्याज्ञानमेव अभक्ष्यभक्षणे दोषाभावज्ञानम्।

आपो वास इति। आप भक्ष्यमाणा वासस्थानीयास्तत्र। अत्र च प्राणस्य आपो वास इत्येतद्दर्शन विधीयते। न तु वास.कार्ये आपो विनियोक्तु शक्याः। तस्मात् यथाप्राप्ते अभक्षणे दर्शनमात्र कर्तव्यम्। न ह वै अस्य सर्व प्राणस्यान्नमित्येवविद. अनन्न अनदनीय जग्ध भुक्त न भवति ह। यद्यपि अनेन अनदनीय भुक्त, अदनीयमेव भुक्त स्यात्, न तु तत्कृतदोषेण लिप्यते — इत्येतत् विद्यास्तुतिरित्यवोचाम। तथा न अनन्न प्रतिगृहीतम्। यद्यपि अप्रतिग्राह्य हस्त्यादि प्रतिगृहीत स्यात्, तदपि अन्नमेव प्रतिग्राह्य प्रतिगृहीत स्यात्, तत्रापि अप्रतिग्राह्यप्रतिग्रहदोषेण न लिप्यत इति स्तुत्यर्थमेव। य एव एतत् अनस्य प्राणस्य अन्न वेद। फल तु प्राणात्मभाव एव। न त्वेतत् फलाभिप्रायेण, किं तर्हि स्तुत्यभिप्रायेणेति। ननु एतदेव फल कस्मान्न भवति? न, प्राणात्मदर्शिन· प्राणात्मभाव एव फलम्। तत्र च प्राणात्मभूतस्य सर्वात्मनः अनदनीयमपि आद्यमेव, तथा अप्रतिग्राह्यमपि प्रतिग्राह्यमेव — इति यथाप्राप्तमेव उपादाय विद्या स्तूयते। अतो नैव फलविधिसरूपता वाक्यस्य। यस्मात् आपो वासः प्राणस्य, तस्मात् विद्वासः ब्राह्मणा श्रोत्रिया अधीतवेदा., अशिष्यन्त. भोक्ष्यमाणा·, आचामन्ति अपः। अशित्वा आचामन्ति भुक्त्वा च उत्तरकाल अप भक्षयन्ति। तत्र तेषामाचामता कोऽभिप्राय इत्याह—एतमेवान प्राण अनग्न कुर्वन्तो मन्यन्ते। अस्ति चैतत्—यो यस्मै वासो ददाति, स त अनग्न करोमीति हि मन्यते। प्राणस्य च आपो वास इति ह्युक्तम्। यदप पिबामि तत्प्राणस्य वासो ददामि इति विज्ञान कर्तव्यमित्येवमर्थमेतत्। ननु भोक्ष्यमाण भुक्तवाश्च प्रयतो भविष्यामीत्याचामति। तत्र च प्राणस्यानग्नताकरणार्थत्वे च द्विकार्यता आचमनस्य स्यात्। न च कार्यद्वय आचमनस्य एकस्य युक्तम्। यदि प्रायत्यार्थे, न अनग्नतार्थम्। अथ अनग्नतार्थे, न प्रायत्यार्थम्। यस्मादेव, तस्मात् द्वितीय आचमनान्तर प्राणस्यानग्नताकरणाय भवतु—न, क्रियाद्वित्वोपपत्ते·। द्वे ह्येते क्रिये। भोक्ष्यमाणस्य भुक्तवतश्च यत् आचमन स्मृतिविहित, तत् प्रायत्यार्थे भवति क्रियामात्रमेव। न तु तत्र प्रायत्य दर्शनादि अपेक्षते। तत्र च आचमनाङ्गभूतास्वप्सु वासोविज्ञान प्राणस्य इतिकर्तव्यतया चोद्यते। न तु तस्मिन्क्रियमाणे आचमनस्य प्रायत्यार्थता बाध्यते, क्रियान्तरत्वादाचमनस्य। तस्मात् भोक्ष्यमाणस्य भुक्तवतश्च यत् आचमन, तत्र आपो वास प्राणस्येति दर्शनमात्र विधीयते, अप्राप्तत्वादन्यतः। शकर.

पञ्चाग्निविद्या — उत्तरमार्गसाधन, अर्चिरादिमार्ग. ब्रह्मलोकग अपुनरावृत्तिसाधन, धूमादिमार्ग सोमलोकग पुनरावृत्तिकारण, मार्गद्वयानधिग तु गति

**[1]श्वेतकेतुर्ह वा आरुणेय पञ्चालाना परिषदमाजगाम। स आजगाम जैवलिं प्रवाहणं परिचारयमाणम्। तमुदीक्ष्याभ्युवाद कुमारा३ इति। स भो३ इति प्रतिशुश्राव। अनुशिष्टोऽन्वसि पित्रेति। ओमिति होवाच * ॥**

(१) श्वेतकेतुर्ह वा आरुणेय इत्यस्य सबधः। खिलाधिकारोऽयम्। तत्र यदनुक्त तदुच्यते। ससमाध्यायान्ते ज्ञानकर्मसमुच्चयकारिणा अग्नेर्मार्गयाचन कृतम् — अग्ने नय सुपथेति। तत्र अनेकेषाँ पथां सद्भाव मन्त्रेण सामर्थ्यात्प्रदर्शित·, सुपथेति विशेषणात्। पन्थानश्च कृतविपाकप्रतिपत्तिमार्गा.। वक्ष्यति च 'यत्कृत्वा' इत्यादि। तत्र च कति कर्मविपाकप्रतिपत्तिमार्गा इति सर्वससारगत्युपसहारार्थोऽयमारम्भ· — एतावती हि ससारगति, एतावान् कर्मणो विपाकः स्वाभाविकस्य शास्त्रीयस्य च सविज्ञानस्येति। यद्यपि 'द्वया ह प्राजापत्या·' इत्यत्र स्वाभाविकः पाप्मा सूचित·, न च तस्येद कार्यमिति विपाकः प्रदर्शित।

---

* अस्मिन् ब्राह्मणे यत्र रग नोद्धृत तत्र तत् शकरवत्।

(१) बृउ ६।२।१, शब्रा. १४।९।१।१ जैवलिं (जैवल)

शास्त्रीयस्यैव तु विपाकः प्रदर्शितः अनात्मप्रतिपत्त्यन्तेन, ब्रह्मविद्यारम्भे तद्वैराग्यस्य विवक्षितत्वात् । तत्रापि केवलेन कर्मणा पितृलोक, विद्यया विद्यासयुक्तेन च कर्मणा देवलोक इत्युक्तम् । तत्र केन मार्गेण पितृलोक प्रतिपद्यते, केन वा देवलोकमिति नोक्तम् । तच्च इह खिलप्रकरणे अशेषतो वक्तव्यमित्यत आरभ्यते । अन्ते च सर्वोपसहार शास्त्रस्येष्ट । अपि च एतावदमृतत्वमित्युक्त, न कर्मण. अमृतत्वाशा अस्तीति च । तत्र हेतु नोक्त. । तदर्थश्चायमारम्भ । यस्मात् इय कर्मणो गति, न नित्येऽमृतत्वे व्यापारोऽस्ति, तस्मात् एताव देवामृतत्वसाधनमिति सामर्थ्यात् हेतुत्व सपद्यते । अपि च उक्तमग्निहोत्रे — न त्वेवैतयोस्त्वमुत्क्रान्तिं न गतिं न प्रतिष्ठां न तृप्तिं न पुनरावृत्तिं न लोक प्रत्युत्थायिन वेत्थेति । तत्र प्रतिवचने 'ते वा एते आहुती हुते उत्क्रामत' इत्यादिना आहुते कार्यमुक्तम् । तच्चैतत् कर्तु आहुतिलक्षणस्य कर्मणः फलम् । न हि कर्तारमनाश्रित्य आहुतिलक्षणस्य कर्मण' स्वातन्त्र्येण उत्क्रान्त्यादिकार्यारम्भ उपपद्यते, कर्त्रर्थत्वात्कर्मण कार्यारम्भस्य, साधनाश्रयत्वाच्च कर्मण । तत्र अग्निहोत्रस्तुत्यर्थत्वात् अग्निहोत्रस्यैव कार्यमित्युक्त षट्प्रकारमपि । इह तु तदेव कर्तु' फलमित्युपदिश्यते षट्प्रकारमपि, कर्मफलविज्ञानस्य विवक्षितत्वात् । तद्द्वारेण च पञ्चाग्निदर्शन इह उत्तर मार्गप्रतिपत्तिसाधन विधित्सितम् । एव, अशेषससारगत्युपसहारः, कर्मकाण्डस्य एषा निष्ठा — इत्येतद्द्वय दिदर्शयिषुः आख्यायिका प्रणयति ।

श्वेतकेतु. नामत', अरुणस्यापत्य आरुणि., तस्यापत्य आरुणय । हशब्द ऐतिह्यार्थ । वे निश्चयार्थ । पित्रा अनुशिष्ट. सन् आत्मनो यश.प्रथनाय पञ्चालानां परिषदमाजगाम । पञ्चाला. प्रसिद्धा. । तेषां परिषदमागत्य, जित्वा, राज्ञोऽपि परिषद जेष्यामीति गर्वेण स आजगाम । जीवलस्यापत्य जैवलि पञ्चालराज प्रवाहणनामान स्वभृत्यैः परिचारयमाण आत्मनः परिचरण कारयन्तमित्येतत् । स राजा पूर्वमेव तस्य विद्याभिमानगर्वं श्रुत्वा, विनेतव्योऽयमिति मत्वा, तमुद्वीक्ष्य उत्प्रेक्ष्य आगतमात्रमेव अभ्युवाद अभ्युक्तवान्, कुमारा३ इति सबोध्य । भर्त्सनार्था प्लुतिः । एवमुक्तः सः प्रतिशुश्राव — भो३ इति । भो३ इति अप्रतिरूपमपि क्षत्रिय प्रति उक्तवान् क्रुद्ध' सन् । अनुशिष्ट. अनुशासितोऽसि भवसि किं पित्रा — इत्युवाच राजा । प्रत्याह इतरः — ओमिति, बाढमनुशिष्टोऽस्मि, पृच्छ यदि सशयस्ते ।

शाकर.

(२) 'अपर्जन्यधरापुस्त्रीसस्थित पञ्चरूपिणम् । नारायण वासुदेव तथा सकर्षण प्रभुम् । प्रद्युम्न चानिरुद्ध च क्रमाद्ध्यायस्तु सर्वदा । पञ्चाग्निविन्नाम भवेत्स याति परम पदम् । नास्य ससर्गदोषोऽपि कदाचन भविष्यति ॥' इति त्रैविध्ये । दृष्टादृष्टमहत्त्वम् । अनेनोपनिषदुक्तविधानेन जात. पुत्र प्राय स्वर्गापवर्गयोग्यो भवतीति प्रजातिकर्म वचनम् । 'यथापनिषद जातो योग्यः स्वर्गापवर्गयो. । भवेद्यदि मन' पित्रोर्विष्णोर्नान्यत्र गच्छति । न कुर्या न्यदि कर्मैतन्मनः पित्रोस्तु विष्णुगम् । दृष्टसामर्थ्यहीनश्च मोक्षयोग्य स्थिर यदि । दृष्टसामर्थ्यवांश्च स्यादाशाद्यैः कारणैः क्वचित् । विशेषकारणाभावे यथोक्त नान्यथा भवेत् ॥' इति च । 'नारायणो द्युशब्दोक्तः सर्वदा द्युतिहेतुतः । वासुदेवस्तु पर्जन्य. पर स जनयेद्यत । सकर्षणस्त पृथिवी प्रथित वात्सदैव हि । प्रद्युम्न. पुरुषेत्युक्त. पूर्यत्स जगद्यत. । स्त्रीशब्दोक्तोऽनिरुद्ध स्यात्सहितस्त्रिषु यत्सदा । अनिरुद्धो हि देवेषु सर्वदा त्रिषु सस्थित. । द्युवादिषु प्रसिद्धेषु तत्सबन्धाद्द्युवादिकः । शब्दो भवत्तथाऽग्न्यादिरदनात्परमो भवेत् । अङ्गत्वेनार्यते यस्मादङ्गारस्तेन कीर्तितः । अर्च्यत्वादर्चिरुद्दिष्टो विष्वक्त्वाद्विष्फुलिङ्गक. । समेधनाच्च समिधस्तत्र तत्र स्थितो हरिः । तत्तच्छब्दैः सदा वाच्य इतरे तु तदन्वयात् । आदित्यो रश्मिरित्याद्याः शब्दाश्चैवमवस्थिताः । एकैकस्मिन्पञ्चभेदा अर्चिरादिविभागतः । नारायणादिभेदेन तथैव प्रतिपादिताः ॥' इति प्रवृत्ते । 'धूकाराद्धूम उद्दिष्ट. शत्रूणा पुरुषोत्तमः । अर्चिरर्च्यतमत्वाच्च स्वाङ्गाऽङ्गार इतीर्यते । अङ्गित्वेनाङ्गरूपेण यत एको व्यवस्थित' ॥' इत्यादि त्रैविध्ये । 'नीचादप्युत्तमा ज्ञान शृणुयुर्लीलया क्वचित् । श्रोतृवक्तृविभेदोऽय नाधिक्यज्ञापकस्तत' । यस्याधिक्य तु वेदोक्त पञ्चरात्रेऽथवा भवेत् । इतिहासपुराणे वा सोऽधिको नेतर' क्वचित् ॥' इति ब्रह्मतर्के । आदानादादित्यः रमणाच्छामनाच्च रश्मयः

अहीनत्वादहः चन्दनाच्चन्द्रः अस्य क्षत्रमन्यन्नास्तीति नक्षत्र बहुरूपत्वाद्बहुवचनम् । ज्ञानादायुष्ट्वाच्च वायुः अन्यैरभरणीयत्वादभ्र विद्योतनाद्विद्युत् अशनादशनिः निर्ह्रादनाद्ध्रादुनिः । आसमन्तात्काशनादाकाशः सम्यग्वत्सात्रमयतीति सवत्सर आदेशनाद्दिशः अवान्तरमादिशतीत्यवान्तरदिशः रतिकरत्वाद्रात्रिः वचनाद्वाक् प्रणयनात्प्राण जह्नाति गमयतीति जिह्वा चष्ट इति चक्षुः शृणोतीति श्रोत्र उपस्थितत्वादुपस्थः यापयति नयति चेति योनि । अभिनन्दयतीत्यभिनन्दः । उपमन्त्रणमन्त करण च स एव करोति । 'तदधीन यत सर्वे सर्वशब्दैस्ततो हरि । मुख्याभिधेयस्त्वन्यानि तत्सङ्गादुपचारतः ॥' इति ब्रह्मतर्के। तदधीनत्वादर्थवदिति भगवद्वचनम् । समाकर्षादिति च । 'पञ्चाग्निविद्यया चैव तथैव प्राणविद्यया । प्रजातिकर्मणा चैव तथा ज्ञानप्रदानत । आचार्यवशविज्ञानाद्य पूज्यः पुरुषोत्तमः । सर्वान्तर्यामिको नित्यो नमस्तस्मै परात्मने ॥' इति सद्भावे ।

* मध्व

[1]'वेत्थ यथेमा प्रजा प्रयत्यो विप्रतिपद्यन्ता३ इति । नेति होवाच । वेत्थो यथेम लोक पुनराप द्यन्ता३ इति । नेति हैवोवाच । वेत्थो यथाऽसौ लोक एव बहुभि पुन पुन प्रयद्भिर्न सपूर्यता३ इति । नेति हैवोवाच । वेत्थो यतिथ्यामाहुत्याऽ हुतायामाप पुरुषवाचो भूत्वा समुत्थाय वदन्ती३ इति । नेति हैवोवाच । वेत्थो देवयानस्य वा पथ प्रतिपद पितृयाणस्य वा । यत्कृत्वा देवयान वा पन्थान प्रतिपद्यन्ते पितृयाण वा । अपि हि न ऋषेर्वच श्रुतम् । द्वे सृती अशृणवं पितॄणामह देवानामुत मर्त्यानाम् । ताभ्यामिद विश्वमेजत्समेति यदन्तरा पितरं मातरं चेति । नाहमत एकचन वेदेति होवाच ॥

(१) यद्येव, वेत्थ विजानासि किं, यथा येन प्रकारेण इमाः प्रजाः प्रसिद्धा , प्रयत्यः म्रियमाणा , विप्रतिपद्यन्ता३ इति विप्रतिपद्यन्ते । विचारणार्था प्लुतिः । समानेन मार्गेण गच्छन्तीना मार्गद्वैविध्य यत्र भवति, तत्र काश्चित्प्रजा अन्येन मार्गेण गच्छन्ति काश्चिदन्येनेति विप्रतिपत्तिः । यथा ता प्रजा विप्रतिपद्यन्ते, तत् किं वेत्थेत्यर्थः । नेति होवाच इतरः । तर्हि वेत्थ उ यथा इम लोक पुनः आपद्यन्ता३ इति, पुनरापद्यन्ते, यथा पुनरागच्छन्ति इम लोकम् । नेति हैवोवाच श्वेतकेतुः । वेत्थ उ यथा असौ लोक एव प्रसिद्धेन न्यायेन पुनः पुनरसकृत् प्रयद्भिः म्रियमाणैः यथा येन प्रकारेण न सपूर्यता३ इति, न सपूर्यतेऽसौ लोक , तत्किं वेत्थ । नेति हैवोवाच । वेत्थ उ यतिथ्या यत्सख्याकायां आहुत्या आहुतौ हुतायां आपः पुरुषवाचः, पुरुषस्य या वाक् सैव यासा वाक्, ताः पुरुषवाचो भूत्वा पुरुषशब्दवाच्या वा भूत्वा । यदा पुरुषाकारपरिणताः, तदा पुरुषवाचो भवन्ति । समुत्थाय सम्यगुत्थाय उद्भूताः सत्यः वदन्ती३ इति । नेति हैवोवाच । यद्येव वेत्थ उ देवयानस्य पथो मार्गस्य प्रतिपद, प्रतिपद्यते येन सा प्रतिपत् तां प्रतिपद, पितृयाणस्य वा प्रतिपदम् । प्रतिपच्छब्दवाच्यमर्थमाह— यत्कर्म कृत्वा यथाविशिष्ट कर्म कृत्वेत्यर्थः, देवयान वा पन्थान मार्गं प्रतिपद्यन्ते, पितृयाण वा यत्कर्म कृत्वा प्रतिपद्यन्ते, तत्कर्म प्रतिपदुच्यते । तां प्रतिपद किं वेत्थ, देवलोकपितृलोकप्रतिपत्तिसाधन किं वेत्थेत्यर्थः । अप्यत्र अस्यार्थस्य प्रकाशक ऋषे मन्त्रस्य वच वाक्य न श्रुतमस्ति, मन्त्रोऽपि अस्यार्थस्य प्रकाशको विद्यत इत्यर्थः । कोऽसौ मन्त्र इत्युच्यते— द्वे सृती द्वौ मार्गावशृणव श्रुतवानस्मि । तयोः एका पितॄणा प्रापिका पितृलोकसबद्धा, तया सृत्या पितृलोक प्राप्नोतीत्यर्थः । अहमशृणवमिति व्यवहितेन सबन्धः । देवाना उत अपि देवाना सबन्धिनी अन्या, देवान्प्रापयति सा । के पुनः उभाभ्यां सृतिभ्यां पितॄन् देवाश्च गच्छन्तीत्युच्यते — उत अपि मर्त्याना मनुष्याणां सबन्धिन्यौ । मनुष्या एव हि सृतिभ्या गच्छन्तीत्यर्थः । ताभ्यां सृतिभ्या इद विश्व समस्त एजत् गच्छत् समेति

---

* इद भाष्य पञ्चाग्निविद्यापरस्य ब्राह्मणस्य वशब्राह्मणस्यान्तस्यास्याध्यायस्य च समुच्चित्य ।

(१) बृउ ६।२।२, शब्रा १४।९।१।२–४ पद्यन्ता३ ( पद्यान्ता३ ) वेत्थो य ( वे थ य ) प्रतिपद्यन्ते ( प्रतिपद्यते) पितृणा ( पितॄणा ), रग यतिथ्या ( यावतिथ्या ) प्रतिपद्यन्ते ( प्रतिपद्यते ), मध्व पितृणा ( पितॄणा ).

सगच्छते । ते च द्वे सृती यदन्तरा ययोरन्तरा यदन्तरा, पितर मातर च, मातापित्रो अन्तरा मध्ये इत्यर्थ । कौ तौ मातापितरौ ? द्यावापृथिव्यौ अण्डकपाले । 'इय वै माता असौ पिता' इति हि व्याख्यात ब्राह्मणेन । अण्डकपालयोर्मध्ये ससारविषये एव एते सृती, न आत्यन्तिकामृतत्वगमनाय । इतर आह— न अह अत अस्मात् प्रश्नसमुदायात् एकचन एकमपि प्रश्न, न वेद, नाह वेदेति होवाच श्वेतकेतु. ।

शकर.

( २ ) वेत्थ यथेमा इति । यथा येन प्रकारेण विशिष्टदेश प्रतिपद्यन्ते प्रश्ने प्लुति । वेत्थो यावतिथ्या मिति । यावता पूरणी यावतिथी । 'तस्य पूरणे डट्' (पा सू ५।२।४८) इति डटि 'वतोरिथुक्' (पा. सू ५।२।५३) इतीथुगागम । यावत्संख्याका-यामाहुत्यां हुतायाम् । द्वे सृतीति । द्वे सृती गती अशृणवमह श्रुतवानस्मि पितृणा मनुष्याणा देवाना च । एजदगच्छत्प्राणिजात ताभ्या सृतीभ्या समेति ब्रह्माण्डा न्तर्गत लोकजात समेति मातापितृशून्य भगवल्लोक च समेतीत्यर्थ । पितृयाणेन पथाऽण्डान्तर्वर्तिलोक समेति उत्तरेण पथा भगवल्लोक समेतीत्यर्थ· । रग

अथैन वसत्योपमन्त्रयाचक्रे । अनादृत्य वसतिं कुमार प्रदुद्राव । स आजगाम पितरम् । तꣳ होवाच । इति वाव किल नो भवान्पुरानुशिष्टा नवोच इति । कथꣳ सुमेध इति । पञ्च मा प्रश्नान्राजन्यबन्धुरप्राक्षीत् । ततो नैकचन वेदेति । कतमे त इति । इम इति ह प्रतीकान्युदाजहार ॥

( १ ) अथ अनन्तर अपनीय विद्याभिमानगर्वं एन प्रकृत श्वेतकेतु, वसत्या वसतिप्रयोजनेन उपमन्त्रयाचक्रे । इह वसन्तु भवन्तः, पाद्यमर्घ्यं च आनीयताम्— इत्युपमन्त्रण कृतवान्राजा । अनादृत्य ता वसतिं कुमारः श्वेतकेतुः प्रदुद्राव प्रतिगतवान् पितर प्रति । स च आजगाम पितर, आगत्य च उवाच त, कथमिति — वाव किल एव किल, नः अस्मान् भवान् पुरा समावर्तनकाले अनुशिष्टान् सर्वाभिर्विद्याभि. अवोच अवोचदिति । सोपालम्भ पुत्रस्य वच· श्रुत्वा आह पिता—कथ केन प्रकारेण तव दुःखमुपजात, हे सुमेध, शोभना मेधा यस्येति सुमेधा· । शृणु, मम यथा वृत्तम् । पञ्च पञ्चसख्याकान् प्रश्नान् मा मां राजन्यबन्धु राजन्या बन्धवो यस्येति । परिभववचनमेतत् राजन्यबन्धुरिति । अप्राक्षीत् पृष्टवान् । तत. तस्मात् न एकचन एकमपि न वेद न विज्ञातवानस्मि । कतमे ते राज्ञा पृष्टा· प्रश्ना इति पित्रा उक्त पुत्र 'इमे ते' इति ह प्रतीकानि मुखानि प्रश्नाना उदाजहार उदाहृतवान् । शकर

( २ ) इम इति ह प्रतीकान्युदाजहार । इम इत्येवमेकदेशान्सूचितवानित्यर्थ । रग.

स होवाच । तथा नस्त्वं तात जानीथा यथा यदहं किंच वेद सर्वमहं तत्तुभ्यमवोचम् । प्रेहि । तु तत्र प्रतीत्य ब्रह्मचर्यं वत्स्याव इति । भवानेव गच्छत्विति । स आजगाम गौतमो यत्र प्रवाहणस्य जैवलेराम । तस्मा आसनमाहृत्योदकमाहारयाचकार । अथ हास्मा अर्घ्यं चकार । तꣳ होवाच । वरं भगवते गौतमाय दद्म इति ॥

स होवाच पिता पुत्र क्रुद्धमुपशमयन्—तथा तेन प्रकारेण न अस्मान् त्व, हे तात वत्स, जानीथा गृह्णीथा., यथा यदह किंच विज्ञानजात वेद सर्वं तत् तुभ्य अवोच इत्येव जानीथाः । कोऽन्यो मम प्रियतरोऽस्ति त्वत्तः, यदर्थं रक्षिष्ये । अहमपि एतत् न जानामि, यत् राज्ञा पृष्टम् । तस्मात् प्रेहि आगच्छ । तत्र प्रतीत्य गत्वा राज्ञि ब्रह्मचर्यं वत्स्यावो विद्यार्थमिति । स आह— भवानेव गच्छत्विति, नाह तस्य मुख निरीक्षितुमुत्सहे । स आजगाम, गौतमः गोत्रतो गौतम·, आरुणि·, यत्र प्रवाहणस्य जैवलेरास आसन आस्थायिका । षष्ठीद्वय प्रथमाख्याने । तस्मै गौतमाय आगताय आसन अनुरूप आहृत्य

---

(१) बृउ ६।२।३, शब्रा १४।९।१।५ अथैन ( अथ हैन ) वेदेति + ( होवाच ), रग अथैन ( अथ हैन ) नवोच इति ( नवोचदिति )

(१) बृउ ६।२।४, शब्रा १४।९।१।६-८ माहृत्योद ( माहार्योद ) अर्घ्यं ( अर्घं ) तꣳ होवाच ( स होवाच ) भगवते ( भवते ), मध्व किंच ( किंचन ) भगवते ( भवते )

उदक भृत्यैराहारयाचकार। अथ ह अस्मै अर्घ्यं पुरोधसा कृतवान् मन्त्रवत्, मधुपर्कं च। कृत्वा चैव पूजा त होवाच — वर भगवते गौतमाय तुभ्य दद्म इति गोश्वादिलक्षणम्। शकर

स होवाच। प्रतिज्ञातो म एष वरः। यां तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति॥

स होवाच गौतम — प्रतिज्ञातः मे मम एष वर. त्वया। अस्यां प्रतिज्ञाया दृढीकुरु आत्मानम्। या तु वाच कुमारस्य मम पुत्रस्य अन्ते समीपे वाचमभाषथा प्रश्नरूपां, तामेव मे ब्रूहि। स एव नो वर इति। शकर

स होवाच। दैवेषु वै गौतम तद्वरेषु। मानुषाणा ब्रूहीति॥

स होवाच राजा — दैवेषु वरेषु तद्वै गौतम, यत् त्व प्रार्थयस। मानुषाणामन्यतम प्रार्थय वरम्। शकर.

स होवाच। विज्ञायते हास्ति हिरण्यस्यापात्त गोअश्वाना दासीना प्रवाराणा परिधानस्य। मा नो भवान्बहोरनन्तस्यापर्यन्तस्याभ्यवदान्यो भूदिति। स वै गौतम तीर्थेनेच्छासा इति। उपैम्यहं भवन्तमिति। वाचा ह स्मैव पूर्व उपयन्ति। स होपायनकीर्त्योवास॥

स होवाच गौतम — भवतापि विज्ञायते ह ममास्ति स.। न तेन प्रार्थितेन कृत्य मम, य त्व दित्सपि मानुष वरम्। यस्मात् ममाप्यस्ति हिरण्यस्य प्रभूतस्य अपात्त प्राप्तम्। गोअश्वाना अपात्तमस्तीति सर्वत्रानुषङ्गः। दासीना, प्रवाराणां परिवाराणा, परिधानस्य च। न च यत् मम विद्यमान, तत् त्वत्तः प्रार्थनीय, त्वया वा देयम्। प्रतिज्ञातश्च वर त्वया। त्वमेव जानीषे, यदत्र युक्त, प्रतिज्ञा रक्षणीया तवेति। मम पुन. अयमभिप्राय.— मा भूत् नः अस्मान् अभि, अस्मानेव केवलान्प्रति, भवान् सर्वत्र वदान्यो भूत्वा, अवदान्यो मा भूत् कदर्यो मा भूदित्यर्थ.। बहो· प्रभूतस्य, अनन्तस्य अनन्तफलस्येत्येतत्, अपर्यन्तस्य अपरिसमाप्तिकस्य पुत्रपौत्रादिगामिकस्येत्येतत्, ईदृशस्य वित्तस्य, मां प्रत्येव केवल अदाता मा भूद्भवान्। न च अन्यत्र अदेयमस्ति भवत.। एवमुक्त आह— स त्व वै हे गौतम तीर्थेन न्यायेन शास्त्रविहितेन विद्या मत्तः इच्छासे इच्छ अन्वाप्तुम्। इत्युक्तो गौतम आह— उपैमि उपगच्छामि शिष्यत्वेन अह भवन्तमिति। वाचा ह स्मैव किल पूर्वे ब्राह्मणा. क्षत्रियान् विद्यार्थिन· सन्तः वैश्यान्वा, क्षत्रिया वा वैश्यान् आपदि उपयन्ति शिष्यवृत्त्या हि उपगच्छन्ति, न उपायनशुश्रूषादिभिः। अत स गौतम ह उपायन कीर्त्या उपगमनकीर्तनमात्रेणैव उवास उषितवान्, न उपायन चकार। शकर

स होवाच। तथा नस्त्वं गौतम मापराधास्तव च पितामहा। यथेय विद्येत पूर्वं न कस्मिꣳश्चन ब्राह्मण उवास। ता त्वह तुभ्य वक्ष्यामि। को हि त्वैव ब्रुवन्तमर्हति प्रत्याख्यातुमिति॥

एव गौतमेन आपदन्तरे उक्ते, स होवाच राजा पीडित मत्वा क्षामयन्— तथा न. अस्मान् प्रति, मा अपराधाः अपराध मा कार्षीः। अस्मदीयोऽपराधः न ग्रहीतव्य इत्यर्थः। तव च पितामहा. अस्मत्पितामहेषु यथा अपराध न जगृहु, तथा पितामहानां वृत्त अस्मास्वपि भवता रक्षणीयमित्यर्थ.। यथा इय विद्या त्वया प्रार्थिता इतः त्वत्सप्रदानात्पूर्वं प्राक् न कस्मिन्नपि ब्राह्मणे उवास उषितवती, तथा त्वमपि जानीषे। सर्वदा क्षत्रियपरम्परया इय विद्या आगता। सा स्थितिः मयापि रक्षणीया, यदि शक्यते इति — उक्त 'दैवेषु गौतम तद्वरेषु मानुषाणां ब्रूहि' इति। न पुनः तव अदेयो वर इति। इतः पर न शक्यते रक्षितुम्। तामपि विद्यां अह तुभ्य वक्ष्यामि। को हि अन्योऽपि हि यस्मात् एव ब्रुवन्त त्वां अर्हति प्रत्याख्यातुम् — न

(१) बृउ ६।२।५, शब्रा १४।९।१।८

(२) बृउ ६।२।६, शब्रा १४।९।१।९

(३) बृउ ६।२।७, शब्रा १४।९।१।१०, ११ परिधानस्य (परिधानाना) कीर्त्योवास (कर्ता उवाच), मध्व हास्ति (हस्ति) नेच्छासा (नेच्छसी३) स्मैव (स्मै)

(१) बृउ ६।२।८, शब्रा १४।९।१।११ (स होवाच॰), मध्व राधास्तव (राध्यस्तव)

वक्ष्यामीति । अह पुनः कथ न वक्ष्ये तुभ्यमिति ।

शकर

**असौ वै लोकोऽग्निर्गौतम । तस्यादित्य एव समित् । रश्मयो धूम । अहरर्चि । दिशोऽङ्गारा । अवान्तरदिशो विस्फुलिङ्गा । तस्मिन्नेतस्मिन्नग्नौ देवा. श्रद्धा जुह्वति । तस्या आहुत्यै सोमो राजा सभवति ॥**

( १ ) असौ वै लोकोऽग्निर्गौतमेत्यादि — चतुर्थ. प्रश्न प्राथम्येन निर्णीयते । क्रमभङ्गस्तु एतन्निर्णयायत्तत्वादितरप्रश्ननिर्णयस्य । असौ द्यौर्लोक अग्नि हे गौतम । द्युलोके अग्निदृष्टि अनग्नौ विधीयते, यथा योषित्पुरुषयो । तस्य द्युलोकाग्नेः आदित्य एव समित्, समिन्धनात् । आदित्येन हि समिध्यते असौ लोक । रश्मयो धूम , समिध उत्थानसामान्यात् । आदित्याद्धि रश्मयो निर्गताः, समिधश्च धूमो लोके उत्तिष्ठति । अह अर्चिः, प्रकाशसामान्यात् । दिश. अङ्गारा. उपशम सामान्यात् । अवान्तरदिशो विस्फुलिङ्गाः, विस्फुलिङ्गवद्विक्षेपात् । तस्मिन् एतस्मिन् एवगुणविशिष्टे द्युलोकाग्नौ, देवा. इन्द्रादय , श्रद्धा जुह्वति आहुतिद्रव्यस्थानीया प्रक्षिपन्ति । तस्यै आहुत्यै आहुते. सोमो राजा पितॄणा ब्राह्मणाना च सभवति ।

तत्र के देवा. कथ जुह्वति किं वा श्रद्धाख्य हविरित्यत उक्तमस्माभि सबन्धे । 'न त्वेवैनयोस्त्वमुत्क्रान्तिं' इत्यादिपदार्थषट्कनिर्णयार्थं अग्निहोत्रे उक्तम् । 'ते वा एते अग्निहोत्राहुती हुते सत्यावुत्क्रामतः ' 'ते अन्तरिक्षमाविशत.' 'ते अन्तरिक्षमाहवनीय कुर्वाते वायु समिध मरीचीरेव शुक्रामाहुतिम् ' 'ते अन्तरिक्ष तर्पयत ' 'ते तत उत्क्रामत ' 'ते दिवमाविशत ' 'ते दिवमाहवनीय कुर्वाते आदित्य समिध ' इत्येवमादि उक्तम् । तत्र अग्निहोत्राहुती ससाधने एव उत्क्रामत. । यथा इह यै साधनैर्विशिष्टे ये ज्ञायेते आहवनीयाग्निसमिद्धूमाङ्गारविस्फुलिङ्गाहुतिद्रव्यै., ते तथैव उत्क्रामत. अस्माल्लोकात् अमु लोकम् । तत्र

अग्नि अग्नित्वेन, समित् समित्त्वेन, धूमो धूमत्वेन, अङ्गारा. अङ्गारत्वेन, विस्फुलिङ्गा विस्फुलिङ्गत्वेन, आहुतिद्रव्यमपि पयआद्याहुतिद्रव्यत्वेनैव सर्गादौ अव्याकृतावस्थायामपि परेण सूक्ष्मेण आत्मना व्यवतिष्ठते । तत् विद्यमानमेव ससाधन अग्निहोत्रलक्षण कर्म अपूर्वेणात्मना व्यवस्थित सत्, तत्पुन व्याकरणकाले तथैव अन्तरिक्षादीना आहवनीयाद्यग्न्यादिभाव कुर्वत् विपरिणमते । तथैव इदानीमपि अग्निहोत्राख्य कर्म । एव अग्निहोत्राहुत्यपूर्वपरिणामात्मक जगत् सर्वमिति आहुत्योरेव स्तुत्यर्थत्वेन उत्क्रान्त्याद्या लोक प्रत्युत्थायितान्ता षट् पदार्था कर्मप्रकरणे अवस्तान्निर्णीता । इह तु कर्तु. कर्मविपाकविवक्षाया द्युलोकाग्न्याद्यारभ्य पञ्चाग्निदर्शन उत्तरमार्गप्रतिपत्तिसाधन विशिष्टकर्मफलोपभोगाय विधित्सितमिति द्युलोकाग्न्यादिदर्शन प्रस्तूयते । तत्र ये आध्यात्मिका. प्राणा. इह अग्निहोत्रस्य होतार, ते एव आधिदैविकत्वेन परिणता सन्त इन्द्रादयो भवन्ति । त एव तत्र होतारो द्युलोकाग्नौ । ते च इह अग्निहोत्रस्य फलभोगाय अग्निहोत्र हुतवन्त. । ते एव फलपरिणामकालेऽपि तत्फलभोक्तृत्वात् तत्र तत्र होतृत्व प्रतिपद्यन्ते, तथा तथा विपरिणममाना देवशब्दवाच्याः सन्त. । अत्र च यत् पयोद्रव्य अग्निहोत्रकर्माश्रयभूत इह आहवनीये प्रक्षिप्त अग्निना भक्षित अदृष्टेन सूक्ष्मेण रूपेण विपरिणत सह कर्त्रा यजमानेन अमु लोक धूमादिक्रमेण अन्तरिक्ष अन्तरिक्षात् द्युलोक आविशति । ता सूक्ष्मा आप आहुतिकार्यभूता अग्निहोत्रसमवायिन्य. कर्तृसहिता. श्रद्धाशब्दवाच्या. सोमलोके कर्तु. शरीरान्तरारम्भाय द्युलोक प्रविशन्त्य. हूयन्ते इत्युच्यन्ते । ता. तत्र द्युलोक प्रविश्य सोममण्डल कर्तु. शरीरमारभन्ते । तदेतदुच्यते—'देवा श्रद्धां जुह्वति, तस्या आहुत्यै सोमो राजा सभवति' इति, 'श्रद्धा वा आप.' इति श्रुते. ।

'वेत्थ यतिथ्यामाहुत्या हुतायामाप. पुरुषवाचो भूत्वा समुत्थाय वदन्ति' इति प्रश्न. । तस्य च निर्णयविषये 'असौ वै लोकोऽग्नि' इति प्रस्तुतम् । तस्मात् आप. कर्मसमवायिन्य. कर्तु शरीरारम्भिका. श्रद्धाशब्दवाच्या इति निश्चीयते । भूयस्त्वात् 'आपः पुरुषवाच.'

(१) बृउ ६।२।९, शब्रा १४।९।१।१२ दिशोऽङ्गारा । अवान्तरदिशो ( चन्द्रमा अङ्गारा नक्षत्राणि ) विस्फु ( विष्फु ) आहुत्यै (आहुते ), मध्व विस्फु (विष्फु)

इति व्यपदेश., न तु इतराणि भूतानि न सन्तीति । कर्मप्रयुक्तश्च शरीरारम्भ. । कर्म च अप्समवायि । ततश्च अपां प्राधान्यं शरीरकर्तृत्वे । तेन च 'आपः पुरुषवाच' इति व्यपदेश । कर्मकृतो हि जन्मारम्भ सर्वत्र । तत्र यद्यपि अग्निहोत्राहुतिस्तुतिद्वारेण उत्क्रान्त्यादय. प्रस्तुता. षट्पदार्था अग्निहोत्रे, तथापि वैदिकानि सर्वाण्येव कर्माणि अग्निहोत्रप्रभृतीनि लक्ष्यन्ते । दाराग्निसबद्ध हि पाङ्क्त कर्म प्रस्तुत्योक्तम् — 'कर्मणा पितृलोक.' इति । वक्ष्यति च — 'अथ ये यज्ञेन दानेन तपसा लोकाञ्जयन्ति' इति । शकर

(२) तस्मिन्नेतस्मिन्नग्नौ आदित्यादिलक्षणसमिदाद्युपेतेऽग्नौ देवा इन्द्रियाणि श्रद्धा जुह्वति । 'श्रद्धा वा आप' इति श्रद्धाशब्देनाऽऽप उच्यन्ते । आत्मधर्मभूतायाः श्रद्धाया होतव्यत्वासभवात् । एतच्च 'प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्ते' (ब्र सू ३।१।५) इति सूत्रभाष्ययोः स्पष्टम् । तत्रापि न जलमात्र किंतु भूतसूक्ष्माणां सर्वेषामुपलक्ष(णम्)कम् । एतच्च 'त्र्यात्मकत्वात्तु भूयस्त्वात्' (ब्रसू ३।१।२) इति भाष्ये स्पष्टम् । न चेन्द्रियाणा द्युलोकाग्नौ भूतसूक्ष्मरूपाहुतिप्रक्षेपे कथ होतृत्वमिति वाच्यम् । इन्द्रियाणामभावे भूतसूक्ष्माणां जीव परिष्वज्य द्युलोकादिगमनासभवात्त स्मिन्नग्नौ देवाः श्रद्धा जुह्वतीति देवशब्दितानामिन्द्रियाणां होतृत्वोक्तिर्न विरुध्यत इति द्रष्टव्यम् । सोमो राजा सभवति देवभोग्यदिव्यदेहयुक्तो भवतीत्यर्थः । रग

**पर्जन्यो वा अग्निर्गौतम । तस्य सवत्सर एव समित् । अभ्राणि धूमः । विद्युदर्चि । अशनिरङ्गारा । ह्रादुनयो विस्फुलिङ्गा । तस्मिन्नेतस्मिन्नग्नौ देवा सोमꣳ राजान जुह्वति । तस्या आहुत्यै वृष्टि. सभवति ॥**

(१) पर्जन्यो वा अग्निर्गौतम, द्वितीय आहुत्याधारः आहुत्योरावृत्तिक्रमेण । पर्जन्यो नाम वृष्ट्युपकरणाभिमानी देवतात्मा । तस्य सवत्सर एव समित् । सवत्सरेण हि शरदादिभिर्ग्रीष्मान्तैः स्वावयवैर्विपरिवर्तमानेन पर्जन्योऽग्निर्दीप्यते अभ्राणि धूम, धूमप्रभवत्वात् धूमवद्वुपलक्ष्यत्वाद्वा । विद्युत् अर्चि', प्रकाशसामान्यात् । अशनि. अङ्गाराः, उपशान्तकाठिन्यसामान्याभ्याम् । ह्रादुनय ह्रादुनयः स्तनयित्नुशब्दा' विस्फुलिङ्गाः, विक्षेपानेकत्वसामान्यात् । तस्मिन्नेतस्मिन्निति आहुत्यधिकरणनिर्देशः । देवा इति, ते एव होतार' सोम राजान जुह्वति । योऽसौ द्युलोकाग्नौ श्रद्धायां हुतायामभिनिर्वृत्तः सोम, स द्वितीये पर्जन्याग्नौ हूयते । तस्याश्च सोमाहुतेर्वृष्टि सभवति । शकर.

(२) कर्मफलभोगावसानेऽमृतमयदिव्यदेहो द्रवीभूत सन् देवशब्दवाच्यैरिन्द्रियै सह पर्जन्ये पततीत्यर्थ. । रग.

**अय वै लोकोऽग्निर्गौतम । तस्य पृथिव्येव समित् । अग्निर्धूम । रात्रिरर्चि । चन्द्रमा अङ्गारा । नक्षत्राणि विस्फुलिङ्गा. । तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टि जुह्वति । तस्या आहुत्या अन्नꣳ सभवति ॥**

अय वै लोकोऽग्निर्गौतम । अय लोक इति प्राणिजन्मोपभोगाश्रय. क्रियाकारकफलविशिष्ट., स तृतीयोऽग्नि । तस्याग्ने. पृथिव्येव समित् । पृथिव्या हि अय लोकः अनेकप्राण्युपभोगसपन्नया समिध्यते । अग्निः धूमः, पृथिव्याश्रयोत्थानसामान्यात् । पार्थिव हि इन्धनद्रव्य आश्रित्य अग्नि उत्तिष्ठति, यथा समिदाश्रयेण धूम' । रात्रि. अर्चि., समित्सबन्धप्रभवसामान्यात् । अग्नेः समित्सबन्धेन हि अर्चि. सभवति, तथा पृथिवीसमित्सबन्धेन शर्वरी । पृथिवीछाया हि शार्वर तम आचक्षते । चन्द्रमा अङ्गारा., तत्प्रभवत्वसामान्यात् । अर्चिषो हि अङ्गारा. प्रभवन्ति, तथा रात्रौ चन्द्रमा. । उपशान्तत्वसामान्याद्वा । नक्षत्राणि विस्फुलिङ्गाः, विस्फुलिङ्गवद्विक्षेपसामान्यात् । तस्मिन्नेतस्मिन्नित्यादि पूर्ववत् । वृष्टिं जुह्वति, तस्या आहुतेः अन्न सभवति, वृष्टिप्रभवत्वस्य प्रसिद्धत्वात् व्रीहियवादेरन्नस्य । शकर.

(१) बृउ ६।२।१०, शब्रा १४।९।१।१३ विस्फु (विष्फु) (राजान०) आहुत्यै (आहुते), मध्व विस्फु (विष्फु)

(१) बृउ ६।२।११, शब्रा १४।९।१।१४ अग्नि (वायु) चन्द्रमा अ (दिशोऽ) नक्षत्राणि (अवान्तरदिशो) विस्फु (विष्फु) आहुत्या अ (आहुतेर), मध्व. विस्फु (विष्फु)

**[1]पुरुषो वा अग्निर्गौतम । तस्य व्यात्तमेव समित् । प्राणो धूम । वागर्चि । चक्षुरङ्गारा. । श्रोत्र विस्फुलिङ्गा । तस्मिन्नेतस्मिन्नग्नौ देवा अन्न जुह्वति । तस्या आहुत्यै रेत सभवति ॥**

पुरुषो वा अग्निर्गौतम । प्रसिद्धः शिरःपाण्यादिमान् पुरुष. चतुर्थोऽग्नि. तस्य व्यात्त विवृत मुख समित् । विवृतेन हि मुखेन दीप्यते पुरुष वचनस्वाध्यायादौ, यथा समिधा अग्निः । प्राणो धूम , तदुत्थानसामान्यात् । मुखाद्धि प्राण उत्तिष्ठति । वाक् शब्द आर्चि , व्यञ्जकत्व-सामान्यात् । आर्चिश्च व्यञ्जक, तथा वाक शब्द. अभिधेयव्यञ्जक । चक्षु अङ्गाराः, उपशमसामान्यात् प्रकाशाश्रयत्वाद्वा । श्रोत्र विस्फुलिङ्गा , विक्षेपसा-मान्यात् । तस्मिन् अन्न जुह्वति । ननु नैव देवा अन्नमिह जुह्वतो दृश्यन्ते— नैष दोषः, प्राणाना देवत्वोपपत्ते. । अधिदैव इन्द्रादयो देवाः । ते एव अध्यात्म प्राणा. । ते च अन्नस्य पुरुषे प्रक्षेतारः । तस्या आहुते. रेतः सभवति । अन्नपरिणामो हि रेत. ।

शाकर

**[2]योषा वा अग्निर्गौतम । तस्या उपस्थ एव समित् । लोमानि धूम । योनिरर्चि. । यदन्तः करोति तेऽङ्गारा । अभिनन्दा विस्फुलिङ्गा. । तस्मिन्नेत-स्मिन्नग्नौ देवा रेतो जुह्वति । तस्या आहुत्यै पुरुष सभवति । स जीवति यावज्जीवति । अथ यदा म्रियते—॥**

योषा वा अग्निर्गौतम । योषेति स्त्री पञ्चमो होमाधिकरण अग्निः तस्या· उपस्थ एव समित् । तेन हि सा समिध्यते । लोमानि धूमः, तदुत्थानसामान्यात् । योनिः आर्चि., वर्णसामान्यात् । यदन्त. करोति, तेऽङ्गारा· । अन्त करण मैथुनव्यापारः, तेऽङ्गारा., वीर्योपशम-हेतुत्वसामान्यात् । वीर्याद्युपशमकारण मैथुन, तथा अङ्गारभाव· अग्नेरुपशमकारणम् । अभिनन्दाः सुखलवाः

(१) बृउ. ६।२।१२, शब्रा. १४।९।१।१५ विस्फु ( विष्फु ) आहुत्यै ( आहुते ), मध्व विस्फु ( विष्फु )

(२) बृउ ६।२।१३, शब्रा १४।९।१।१६ विस्फु ( विष्फु ) आहुत्यै ( आहुते ) समवति+ ( स जायते ), मध्व विस्फु ( विष्फु )



क्षुद्रत्वसामान्यात् विस्फुलिङ्गाः । तस्मिन् रेतो जुह्वति । तस्या आहुते पुरुष. सभवति । एव द्युपर्जन्यायलोकपुरु-षयोषाग्निषु क्रमेण हूयमाना. श्रद्धासोमवृष्ट्यन्नरेतोभावेन स्थूलतारतम्यक्रममापद्यमानाः श्रद्धाशब्दवाच्या आपः पुरुषशब्दमारभन्ते । य. प्रश्न· चतुर्थः 'वेत्थ यतिथ्यामाहुत्या हुतायामाप. पुरुषवाचो भूत्वा समुत्थाय वदन्ती३' इति, स एष निर्णीतः— पञ्चम्यामाहुतौ योषाग्नौ हुताया रेतोभूता आप. पुरुषवाचो भवन्तीति । स पुरुष एव क्रमेण जातो जीवति । कियन्त कालमि-त्युच्यते— यावज्जीवति यावदस्मिन् शरीरे स्थिति-निमित्त कर्म विद्यते, तावदित्यर्थ । अथ तत्क्षये यदा यस्मिन्काले म्रियते ।

शाकर.

**[1]अथैनमग्नये हरन्ति । तस्याग्निरेवाग्निर्भवति । समित्समित् । धूमो धूम· । अर्चिरर्चि । अङ्गारा अङ्गारा । विस्फुलिङ्गा विस्फुलिङ्गा. । तस्मिन्नेत-स्मिन्नग्नौ देवा पुरुष जुह्वति । तस्या आहुत्यै पुरुषो भास्वरवर्ण सभवति ॥**

अथ तदा एन मृत अग्नये अग्न्यर्थमेव अन्त्याहुत्यै हरन्ति ऋत्विजः । तस्य आहुतिभूतस्य प्रसिद्धः अग्निरेव होमाधिकरण, न परिकल्प्योऽग्निः । प्रसिद्धैव समित् समित् । धूमो धूम. । अर्चि· अर्चि । अङ्गारा अङ्गाराः । विस्फुलिङ्गा विस्फुलिङ्गा. । यथाप्रसिद्धमेव सर्वमित्यर्थः । तस्मिन् पुरुष अन्त्याहुतिं जुह्वति । तस्यै आहुत्यै आहुतेः, पुरुषः भास्वरवर्ण· अतिशयदीप्तिमान्, निषेकादिभिरन्त्याहुत्यन्तैः कर्मभिः सस्कृतत्वात्, सभ वति निष्पद्यते ।

शाकर.

(२) 'भेदान्नेति चेन्नैकस्यामपि'— स्यादेतत् । सर्ववेदान्तप्रत्ययत्व विज्ञानानां गुणभेदान्नोपपद्यते । तथाहि । वाजसनेयिनः पञ्चाग्निविद्यां प्रस्तुत्य षष्ठमपरम-ग्निमामनन्ति 'तस्याग्निरेवाग्निर्भवति' इत्यादिना ।

(१) बृउ. ६।२।१४, शब्रा १४।९।१।१६, १७ विस्फु ( विष्फु ) आहुत्यै ( आहुते ), ब्रशांकर. ३।३।२; भास्कर ३।३।२, रंग वर्ण सभ ( वर्णो भ ), मध्व. विस्फु ( विष्फु ); वल्लभ. ३।३।१.

छन्दोगास्तु त नाऽऽमनन्ति पञ्चसख्ययैव च त उपसहरन्ति 'अथ ह य एतानेव पञ्चाग्नीन्वेद' (छाउ ५।१०।१०) इति। येषा च स गुणोऽस्ति येषा च नास्ति कथमुभयेषामेका विद्योपपद्येत। न चात्र गुणोपसंहार शक्यते प्रत्येतु पञ्चसख्याविरोधात्। तथा प्राणसवादे श्रेष्ठादन्याश्चतुरः प्राणान्वाक्चक्षुश्रोत्रमनासि छन्दोगा आमनन्ति। वाजसनेयिनस्तु पञ्चममप्यामनन्ति 'रेतो वै प्रजाति. प्रजायते ह प्रजया पशुभिर्य एव वेद' (बृउ ६।१।६) इति। आवापोद्वापभेदाच्च वेद्यभेदो भवति वेद्यभेदाच्च विद्याभेदो द्रव्यदेवताभेदादिव यागस्येति चेत्। नैष दोषः। यत एकस्यामपि विद्यायामेवजातीयको गुणभेद उपपद्यते। यद्यपि षष्ठस्याग्नेरुपसहारो न सभवति तथाऽपि द्युप्रभृतीना पञ्चानामग्नीनामुभयत्र प्रत्यभिज्ञायमानत्वान्न विन्द्याभेदो भवितुमर्हति। न हि षोडशिग्रहणाग्रहणयोरतिरात्रो भिद्यते। पठ्यतेऽपि च षष्ठोऽग्निश्छन्दोगै 'त प्रेत दिष्टमितोऽग्नय एव हरन्ति' (छाउ ५।२।९) इति। वाजसनेयिनस्तु सापादिकेषु पञ्चस्वग्निष्वनुवृत्ताया. समिद्धूमादिकल्पनाया निवृत्तये 'तस्याग्निरेवाग्निर्भवति समित्समित्' इत्यादि समामनन्ति स नित्यानुवादः। अथाप्युपासनार्थ एष वादस्तथाऽपि स गुण शक्यते छन्दोगैरप्युपसहर्तुम्। न चात्र पञ्चसख्याविरोध आशङ्क्य. सापादिकाग्न्यभिप्राया ह्येषा पञ्चसख्या नित्यानुवादभूता न विधिसमवायिनीत्यदोष। एव प्राणसवादादिष्वप्यधिकस्य गुणस्येतरत्रोपसहारो न विरुध्यते। न चाऽऽवापोद्वापभेदाद्वेद्यभेदो विद्याभेदश्चाऽऽशङ्क्यः। कस्यचिद्वेद्याशस्याऽऽवापोद्वापयोरपि भूयसो वेद्यराशेरभेदावगमात्। तस्मादैकविद्यमेव।

ब्रशकर ३।३।२

[1]ते य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धा सत्यमुपासते तेऽर्चिरभिसभवन्ति। आर्चिषोऽह्न। अह्न आपूर्यमाणपक्षम्। आपूर्यमाणपक्षाद्यान्षण्मासानुदङ्ङादित्य एति। मासेभ्यो देवलोकम्। देवलोकादादित्यम्। आदित्याद्वैद्युतम्। तान्वैद्युतान्पुरुषो मानस एत्य ब्रह्मलोकान्गमयति। ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति। तेषा न पुनरावृत्ति *॥

(१) इदानीं प्रथमप्रश्ननिराकरणार्थमाह—ते। के? ये एव यथोक्त पञ्चाग्निदर्शनमेतत् विदु। एवशब्दात् अग्निसमिद्धूमार्चिरङ्गारविस्फुलिङ्गश्रद्धादिविशिष्टाः पञ्चाग्नयो निर्दिष्टा। तान् एव एतान्पञ्चाग्नीन् विदुरित्यर्थः।

ननु अग्निहोत्राहुतिदर्शनविषयमेव एतद्दर्शनम्। तत्र हि उक्त उत्क्रान्त्यादिपदार्थषट्कनिर्णये 'दिवमेवाहवनीय कुर्वाते' इत्यादि। इहापि अमुष्य लोकस्याग्नित्व, आदित्यस्य च समित्त्वमित्यादि बहु साम्यम्। तस्मात् तच्छेषमेव एतद्दर्शनमिति—न, यतिथ्यामिति प्रश्नप्रतिवचनपरिग्रहात्। यतिथ्यामित्यस्य प्रश्नस्य प्रतिवचनस्य च यावदेव परिग्रह', तावदेव एवशब्देन परामष्टु युक्त, अन्यथा प्रश्नानर्थक्यात्। निर्ज्ञातत्वाच्च सख्यायाः अग्नय एव वक्तव्याः। अथ निर्ज्ञातमप्यनूद्यते, यथाप्राप्तस्यैव अनुवदन युक्त, न तु 'असौ लोकोऽग्नि' इति। अथ उपलक्षणार्थ, तथापि आद्येन अन्त्येन च उपलक्षणं युक्तम्। श्रुत्यन्तराच्च। समाने हि प्रकरणे छान्दोग्यश्रुतौ 'पञ्चाग्नीन्वेद' इति पञ्चसख्याया एवोपादानात् अनग्निहोत्रशेष एतत् पञ्चाग्निदर्शनम्। यत्तु अग्निसमि-

* व्याख्यानानि छाउ ४।१५।५ (पृ ८४१), ५।१०।१, २ (पृ ८६२) इत्यत्र च द्रष्टव्यानि।

(१) बृउ ६।२।१५, शब्रा १४।९।१।१८ तान्पु (तात्पु) तेषा न (तेषामिह न) वृत्ति + (अस्ति), ब्रशकर ३।३।३१, ४।३।१, २, ५, ६, ८, ४।४।२२ तेऽर्चिरभि (तेऽर्चिषमभि) तान्वैद्यु गमयति (तान्वैद्युतात्पुरुषोऽमानव स एत्य ब्रह्मलोक गमयति), भास्कर ४।३।५, ७, रग तान्पु (तात्पु), रामानुज ३।३।३२, ४।२।२० तेऽर्चिरभि (तेऽर्चिषमभि), ४।३।१ तेऽर्चिरभि (तेऽर्चिषमभि) (तान्०) तान्पुरुषो मानस एत्य (तात्पुरुषोऽमानव स एत्य), ४।३।२ पुरुषो मानस एत्य (पुरुषोऽमानव स एत्य), ४।३।११, निंबार्क ३।३।३१ तेऽर्चिरभि (तेऽर्चिषमभि), ४।३।१ तेऽर्चिरभि (तेऽर्चिषमभि) षण्मासानुद (षडुद) द्वैद्युतम्+ (एति) (तान्०) पुरुषो मानस (पुरुषोऽमानव), ४।३।७, श्रीकठ ४।३।२, श्रीकर ३।३।३२, ४।३।१ तेऽर्चिरभि (तेऽर्चिषमभि), ४।३।२, वल्लभ ४।३।२, ७, ९, विज्ञान. ४।३।२, बलदेव ४।३।२,९

दादिसामान्य, तत् अग्निहोत्रस्तुत्यर्थमित्यवोचाम । तस्मात् न उत्क्रान्त्यादिपदार्थषट्कपरिज्ञानात् आर्चिरादिप्रतिपत्तिः, एवमिति प्रकृतोपादानेन आर्चिरादिप्रतिपत्तिविधानात् ।

के पुनस्ते, ये एव विदु.? गृहस्था एव । ननु तेषा यज्ञादिसाधनेन धूमादिप्रतिपत्ति· विधित्सिता—न, अनेववि‍दामपि गृहस्थाना यज्ञादिसाधनोपपत्ते, भिक्षु वानप्रस्थयोश्च अरण्यसबन्धेन ग्रहणात्, गृहस्थकर्म सबद्धत्वाच्च पञ्चाग्निदर्शनस्य । अतः नापि ब्रह्मचारिण. 'एव विदु.' इति गृह्यन्ते । तेषा तु उत्तरे पथि प्रवेश स्मृतिप्रामाण्यात्—'अष्टाशीतिसहस्राणामृषीणामूर्ध्वरेतसाम् । उत्तरेणार्यम्ण· पन्थास्तेऽमृतत्व हि भेजिरे ॥' इति । तस्मात् ये गृहस्था· एव — अग्निजोऽह, अग्न्यपत्य- — इति, एव क्रमेण अग्निभ्यो जातः अग्निरूप इत्येव, ये विदु, ते च, ये च अमी अरण्ये वानप्रस्था परिव्राज काश्चारण्यनित्या, श्रद्धा श्रद्धायुक्ता सन्त, सत्य ब्रह्म हिरण्यगर्भात्मानमुपासते, न पुन. श्रद्धा च उपासते, ते सर्वेऽर्चिरभिसभवन्ति । यावत् गृहस्था पञ्चाग्निविद्या सत्य वा ब्रह्म न विदु, तावत् श्रद्धाद्याहुतिक्रमेण पञ्चम्यामाहुतौ हुताया ततो योषाग्नेर्जाता, पुनर्लोक प्रत्यु त्थायिन अग्निहोत्रादिकर्मानुष्ठातारो भवन्ति । तेन कर्मणा धूमादिक्रमेण पुन. पितृलोक, पुन पर्जन्यादिक्रमेण इम आवर्तन्ते । तत. पुनर्योषाग्नेर्जाताः पुन कर्म कृत्वा— इत्येवमेव घटीयन्त्रवत् गत्यागतिभ्या पुन पुन आव र्तन्ते । यदा तु एव विदुः, ततो घटीयन्त्रभ्रमणाद्विनिर्मुक्ता· सन्त अर्चिरभिसभवन्ति । आर्चिरिति न अग्निज्वालामात्र, किं तर्हि आर्चिरभिमानिनी अर्चि.शब्द वाच्या देवता उत्तरमार्गलक्षणा व्यवस्थितैव । तामभिस भवन्ति । न हि परिव्राजकाना अग्न्यार्चिषैव साक्षात्स बन्धोऽस्ति । तेन देवतैव परिगृह्यते आर्चिःशब्दवाच्या । अत. अहर्देवताम् । मरणकालनियमानुपपत्तेः अहःशब्दोऽपि देवतैव । आयुष क्षये हि मरणम् । न हि एवविदा अहन्येव मर्तव्यमिति अह मरणकालो नियन्तु शक्यते । न च रात्रौ प्रेताः सन्तः अहः प्रतीक्षन्ते, 'स यावत्क्षिप्येन्मनस्तावदादित्य गच्छति' इति श्रुत्यन्तरात् । अह्न आपूर्यमाणपक्ष, अहर्देवतया अतिवाहिता आपूर्यमाणपक्षदेवता प्रतिपद्यन्ते, शुक्लपक्षदेवतामित्येतत् । आपूर्यमाणपक्षात् यान् षण्मासान् उदङ् उत्तरां दिश आदित्य सविता एति, तान्मासान्प्रतिपद्यन्ते शुक्लपक्षदेवतया अतिवाहिता सन्त· । मासानिति बहुवचनात् सञ्चारिण्य. षट् उत्तरायणदेवता । तेभ्यो मासेभ्य. षण्मासदेवताभिरतिवाहिता देवलोकाभिमानिनीं देवता प्रतिपद्यन्ते । देवलोकात् आदित्यम् । आदित्यात् वैद्युत विद्युदभिमानिनी देवता प्रतिपद्यन्ते । विद्युद्देवता प्राप्तान् ब्रह्मलोकवासी पुरुष ब्रह्मणा मनसा सृष्टो मानस कश्चित् एत्य आगत्य ब्रह्मलोकान्गमयति । ब्रह्मलोकानिति अधरोत्तरभूमिभेदेन भिन्ना इति गम्यन्ते, बहुवचनप्रयोगात्, उपासनतारतम्योपपत्तेश्च । ते तेन पुरुषेण गमिता· सन्त, तेषु ब्रह्मलोकेषु परा. प्रकृष्टा सन्त, स्वय परावत. प्रकृष्टा समा सवत्सराननेकान् वसन्ति, ब्रह्मणोऽनेकान्कल्पान्वसन्ती यर्थ. । तेषा ब्रह्मलोक गताना नास्ति पुनरावृत्ति अस्मिन् ससारे न पुनरागमन, 'इह' इति शाखान्तरपाठात् । इहेति आकृतिमात्रग्रहणमिति चेत्, 'श्वोभूते पौर्णमासीम्' इति यद्वत्—न, इहेतिविशेषणानर्थक्यात्, यदि हि नावर्तन्त एव इहग्रहणमनर्थकमेव स्यात् । 'श्वोभूते पौर्णमासीम्' इत्यत्र पौर्णमास्याः श्वोभूतत्वमनुक्त न ज्ञायत इति युक्त विशेषयितुम् । न हि तत्र श्वआकृति· शब्दार्थो विद्यत इति श्व शब्दो निरर्थक एव प्रयुज्यते । यत्र तु विशेषणशब्दे प्रयुक्ते अन्विष्यमाणे विशेषणफल चेन्न गम्यते, तत्र युक्तो निरर्थकत्वेन उत्स्रष्टु विशेषणशब्द । न तु सत्या विशेषणफलावगतौ । तस्मात् अस्मात्कल्पादूर्ध्वं आवृत्तिर्गम्यते ।

शंकर.

( २ ) ते य इति । येऽनेन प्रकारेण पञ्चाग्नीन्विदु । नुपर्जन्यपृथिवीपुरुषयोषिद्रूपेष्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोनुपक्ततया सञ्चरन्त प्रत्यगात्मान ब्रह्मात्मकत्वेन य उपासत इति यावत् । ये चामी पुरुषा अरण्ये स्थित्वा श्रद्धां पुरस्कृत्य सत्यशब्दित परमात्मान प्रत्यगात्मनि उपासते । अत्र देवलोकशब्दो वायुपर । 'योऽय पवत एष देवाना गृहे' इति प्रसिद्धे. । वैद्युताद्वैद्युत इत्यर्थ. । वद्युतः पुरुषोऽमानव· परेण ब्रह्मणा मनसा

सृष्टोऽमानवशब्दितः पुरुष स एनान् ब्रह्मलोकान् गमयति। ब्रह्मलोकान्। अत्र निषादस्थपतिन्यायेन ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयस्यैव युक्ततयाऽर्थस्यैकत्वे निश्चिते बहुवचनस्यादितिपाशानितिवदुपपत्ते.। षष्ठीतत्पुरुष इति पक्षेऽपि न दोष.।न च भगवल्लोकस्यैकतया बहुवचनानुपपत्तिरिति वाच्यम्। परस्य ब्रह्मण' परिपूर्णस्य सर्वगतस्य सत्यसकल्पस्य श्रुतिस्मृतीतिहासपुराण प्रामाण्यानुसारेण स्वेच्छापरिकल्पितस्वासाधारणाप्राकृत लोकानन्त्यसभवेऽनुपपत्त्यभावात्। अर्चिरादिना गतास्ते सर्वे तेषु लोकेषु परा निरतिशयानन्दैश्वर्यशालिन' परावतो नाथवन्त इति यावत्। रग

अथ ये यज्ञेन दानेन तपसा लोकाञ्जयन्ति ते धूममभिसभवन्ति। धूमाद्रात्रिम्। रात्रेरपक्षीयमाणपक्षम्। अपक्षीयमाणपक्षाद्यान्षण्मासान्दक्षिणादित्य एति। मासेभ्य पितृलोकम्। पितृलोकाचन्द्रम्। ते चन्द्रं प्राप्यान्न भवन्ति। ताऽस्तत्र देवा यथा सोमऽराजानमाप्यायस्वापक्षीयस्वेत्येवमेनाऽस्तत्र भक्षयन्ति। तेषा यदा तत्पर्यवैत्यथेममेवाकाशमभिनिष्पद्यन्ते। आकाशाद्वायुम्। वायोर्वृष्टिम्। वृष्टे. पृथिवीम्। ते पृथिवीं प्राप्यान्न भवन्ति। ते पुन पुरुषाग्नौ हूयन्ते। ततो योषाग्नौ जायन्ते। लोकान्प्रत्युत्थायिनस्त एवमेवानुपरिवर्तन्ते। अथ य एतौ पन्थानौ न विदुस्ते कीटा. पतङ्गा यदिदं दन्दशूकम् *॥

(१) अथ पुन ये नैव विदु', उत्क्रान्त्याद्यग्निहोत्रसबद्धपदार्थषट्कस्यैव वेदितारः केवलकर्मिण', यज्ञेनाग्निहोत्रादिना, दानेन बहिर्वेदि भिक्षमाणेषु द्रव्यसविभागलक्षणेन, तपसा बहिर्वेद्येव दीक्षादिव्यतिरिक्तेन कृच्छ्रचान्द्रायणादिना, लोकान् जयन्ति। लोकानिति बहुवचनात् तत्रापि फलतारतम्यमभिप्रेतम्। ते धूममभिसभवन्ति। उत्तरमार्ग इव इहापि देवता एव धूमादिशब्दवाच्या, धूमदेवता प्रतिपद्यन्त इत्यर्थः। आतिवाहिकत्व च देवताना तद्वदेव। धूमात् रात्रिं रात्रिदेवता, ततः अपक्षीयमाणपक्ष अपक्षीयमाणपक्षदेवता, ततो यान्षण्मासान् दक्षिणा दिशमादित्य एति तान् मासदेवताविशेषान् प्रतिपद्यन्ते। मासेभ्यः पितृलोक, पितृलोकाचन्द्रम्। ते चन्द्र प्राप्य अन्न भवन्ति। तान् तत्रान्नभूतान्, यथा सोम राजानमिह यज्ञे ऋत्विजः आप्यायस्व अपक्षीयस्वेति भक्षयन्ति, एव एनान् चन्द्र प्राप्तान् कर्मिण. भत्यानिव स्वामिन. भक्षयन्ति उपभुञ्जते देवा.। 'आप्यायस्वापक्षीयस्व' इति न मन्त्र। किं तर्हि आप्याय्य आप्याय्य चमसस्थ, भक्षणेन अपक्षय च कृत्वा, पुन पुनर्भक्षयन्तीत्यर्थ। एव देवा अपि सोमलोके लब्धशरीरान् कर्मिणः उपकरणभूतान् पुन' पुनः विश्रामयन्तः कर्मानुरूप फल प्रयच्छन्त.—तद्धि तेषामाप्यायन सोमस्य आप्यायनमिव उपभुञ्जते उपकरणभूतान् देवाः। तेषां कर्मिणा यदा यस्मिन्काले, तत् यज्ञदानादिलक्षण सोमलोकप्रापक कर्म, पर्यवैति परिगच्छति परिक्षीयत इत्यर्थः, अथ तदा इममेव प्रसिद्धमाकाशमभिनिष्पद्यन्ते। यास्ता श्रद्धाशब्दवाच्या द्युलोकाग्नौ हुता आप सोमाकारपरिणता', याभि. सोमलोके कर्मिणामुपभोगाय शरीरमारब्ध अम्मय, ताः कर्मक्षयात् हिमपिण्ड इवातपसपर्कात् प्रविलीयन्ते। प्रविलीनाः सूक्ष्मा आकाशभूता इव भवन्ति। तदिदमुच्यते—'इममेवाकाशमभिनिष्पद्यन्ते' इति। ते पुनरपि कर्मिणः तच्छरीरा सन्त. पुरोवातादिना इतश्च अमुतश्च नीयन्ते अन्तरिक्षगा.। तदाह—आकाशाद्वायुमिति। वायोर्वृष्टिं प्रतिपद्यन्ते। तदुक्तम्—पर्जन्याग्नौ सोम राजान जुह्वतीति। ततो वृष्टिभूता इमा पृथिवीं पतन्ति। ते पृथिवीं प्राप्य व्रीहियवादि अन्न भवन्ति। तदुक्तम्—अस्मिँल्लोकेऽग्नौ वृष्टिं जुह्वति तस्या आहुत्या अन्न सभवतीति। ते पुनः पुरुषाग्नौ हूयन्ते अन्नभूता रेत सिचि। ततो रेतोभूता योषाग्नौ हूयन्ते। ततो

---

* व्याख्यान छाउ ५।१०।५ (पृ ८६५) इत्यत्र द्रष्टव्यम्।

(१) बृउ ६।२।१६, शब्रा १४।९।१।१९ लोकान् (लोक) (ते पुन पुरुषाग्नौ हूयन्ते। ततो योषाग्नौ जायन्ते। लोकान्प्रत्युत्थायिन ०), ब्रशकर ३।१।७ मेनाऽस्तत्र (मेताऽस्तत्र), ३।१।८, ३।३।३१, रग वैत्यथेम (वैति। इम) लोकान्प्र (ते लोकान्प्र), रामानुज ४।२।१९, मध्व ते पुन पु (पुन. पु) योषाग्नौ + (ततो) लोकान्प्र (ते लोकान्प्र), वल्लभ ३।१।१८

जायन्ते। लोकं प्रत्युत्थायिनः ते लोकं प्रत्युत्तिष्ठन्त. अग्निहोत्रादिकर्म अनुतिष्ठन्ति। ततो धूमादिना पुनः पुनः सोमलोकं, पुनरिमं लोकमिति—ते एवं कर्मिणः अनुपरिवर्तन्ते घटीयन्त्रवत् चक्रीभूता बम्भ्रमतीत्यर्थः, उत्तरमार्गाय सद्योमुक्तये वा यावद्ब्रह्म न विदुः। 'इति नु कामयमानः संसरति' इत्युक्तम्। अथ पुनः ये उत्तरं दक्षिणं च एतौ पन्थानौ न विदुः, उत्तरस्य दक्षिणस्य वा पथः प्रतिपत्तये ज्ञानं कर्म वा नानुतिष्ठन्तीत्यर्थः। ते किं भवन्तीत्युच्यते—ते कीटाः पतङ्गाः, यदिदं यच्चेदं दन्दशूकं दंशमशकमित्येतत्, भवन्ति। एवं हि इयं संसारगतिः कष्टा, अस्यां निमग्नस्य पुनरुद्धार एव दुर्लभः। तथा च श्रुत्यन्तरम्—'तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्व' इति। तस्मात्सर्वोत्साहेन यथाशक्ति स्वाभाविककर्मज्ञानहानेन दक्षिणोत्तरमार्गप्रतिपत्तिसाधनं शास्त्रीयं कर्म ज्ञानं वा अनुतिष्ठेदिति वाक्यार्थः। तथा चोक्तम्—'अतो वै खलु दुर्निष्प्रपतरं तस्माज्जुगुप्सेत' इति श्रुत्यन्तरात् मोक्षाय प्रयतेतेत्यर्थः। अत्रापि उत्तरमार्गप्रतिपत्तिसाधन एव महान् यत्नः कर्तव्य इति गम्यते, 'एवमेवानुपरिवर्तन्ते' इत्युक्तत्वात्। एवं प्रश्नाः सर्वे निर्णीताः। 'असौ वै लोकः' इत्यारभ्य 'पुरुषः संभवति' इति चतुर्थः प्रश्नः 'यतिथ्यामाहुत्याम्' इत्यादिः प्राथम्येन। पञ्चमस्तु द्वितीयत्वेन देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वेति दक्षिणोत्तरमार्गप्रतिपत्तिसाधनकथनेन। तेनैव च प्रथमोऽपि—अग्नेरारभ्य केचिदर्चिः प्रतिपद्यन्ते केचिद्धूममिति विप्रतिपत्तिः। पुनरावृत्तिश्च द्वितीयः प्रश्नः—आकाशादिक्रमेणेमं लोकमागच्छन्तीति। तेनैव — असौ लोको न संपूर्यते कीटपतङ्गादिप्रतिपत्तेश्च केषांचिदिति, तृतीयोऽपि प्रश्नो निर्णीतः। शंकर

(२) 'भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति'—वाशब्दश्चोदितदोषव्यावर्तनार्थः। भाक्तमेषामन्नत्वं न मुख्यम्। अनात्मवित्त्वाच्चेष्टादिकारिणां देवोपभोग्यभाव उपपद्यते। तथा हि श्रुतिरनात्मविदां देवोपभोग्यतां दर्शयति 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्' (बृउ. १।४।१०) इति। अनात्मवित्त्वात्तथाहि दर्शयतीत्यस्यापरा व्याख्या। अनात्मविदो ह्येते केवलकर्मिण इष्टादिकारिणो न ज्ञानकर्मसमुच्चयानुष्ठायिनः। पञ्चाग्निविद्यामिहाऽऽत्मविद्येत्युपचरन्ति प्रकरणात्। पञ्चाग्निविद्याविहीनत्वाच्चेदमिष्टादिकारिणां गुणवादेनान्नत्वमुद्भाव्यते पञ्चाग्निविज्ञानप्रशंसायै। पञ्चाग्निविद्येह विधित्सिता। वाक्यतात्पर्यावगमात्। तथाहि श्रुत्यन्तरं चन्द्रमण्डले भोगसद्भावं दर्शयति 'स सोमलोके विभूतिमनुभूय पुनरावर्तते' (प्रउ ५।४) इति। ब्रशांकर ३।१।७

(३) ते पुरुषाः पुण्यलोकान्प्रत्युत्थायिन उत्थानशीला भवन्ति। रंग.

महत्त्वप्राप्तिसाधनं श्रीमन्थाख्यं कर्म

**स[१] यः कामयेत महत्प्राप्नुयामित्युदगयन आपूर्यमाणपक्षस्य पुण्याहे द्वादशाहमुपसद्व्रती भूत्वौदुम्बरे कंसे चमसे वा सर्वौषधं फलानीति संभृत्य परिसमुह्य परिलिप्याग्निमुपसमाधाय परिस्तीर्याऽऽवृताज्यं संस्कृत्य पुंसा नक्षत्रेण मन्थं संनीय जुहोति। यावन्तो देवास्त्वयि जातवेदस्तिर्यञ्चो घ्नन्ति पुरुषस्य कामान्। तेभ्योऽहं भागधेयं जुहोमि, ते मा तृप्ताः सर्वैः कामैस्तर्पयन्तु स्वाहा। या तिरश्ची निपद्यतेऽहं विधरणी इति, तां त्वा घृतस्य धारया यजे संराधनीमहं स्वाहा *॥**

स यः कामयेत। ज्ञानकर्मणोर्गतिरुक्ता। तत्र ज्ञानं स्वतन्त्रम्। कर्म तु दैवमानुषवित्तद्वयायत्तम्। तेन कर्मार्थं वित्तमुपार्जनीयम्। तच्च अप्रत्यवायकारिणोपायेनेति तदर्थं मन्थाख्यं कर्म आरभ्यते महत्त्वप्राप्तये। महत्त्वे च सति अर्थसिद्धं हि वित्तम्। तदुच्यते—स यः कामयेत, स यो वित्तार्थी कर्मण्यधिकृतः यः कामयेत। किम्? महत्, महत्त्वं प्राप्नुयां, महान्स्यामितीत्यर्थः। तत्र मन्थकर्मणो विधित्सितस्य कालोऽभिधीयते — उदगयने आदित्यस्य।

---

* अत्र ब्राह्मणे रंग प्रायः शंकरवत्।

(१) बृउ ६।३।१, शब्रा १४।९।३।१—३ कामयेत (कामयते) पक्षस्य (पक्षे) (परिस्तीर्य०) महं स्वाहा + (प्रजापते न त्वदेतान्यन्य इति तृतीयां जुहोति), रंग. कामयेत (कामयते)

तत्र सर्वत्र प्राप्तौ आपूर्यमाणपक्षस्य शुक्लपक्षस्य । तत्रापि सर्वत्र प्राप्तौ, पुण्याहे अनुकूले आत्मनः कर्मसिद्धिकर इत्यर्थः । द्वादशाह, यस्मिन्पुण्येऽनुकूले कर्म चिकीर्षति तत प्राक् पुण्याहमेवारभ्य द्वादशाह, उपसद्व्रती, उप सत्सु व्रत, उपसद प्रसिद्धा ज्योतिष्टोमे, तत्र च स्तनोपचयापचयद्वारेण पयोभक्षण तद्व्रतम् । अत्र च तत्कर्मानुपसहारात् केवलमितिकर्तव्यताशून्य पयोभक्षणमात्रमुपादीयते । ननु उपसदो व्रतमिति यदा विग्रहः, तदा सर्वमितिकर्तव्यतारूप ग्राह्य भवति, तत् कस्मात् न परिगृह्यत इत्युच्यते—स्मार्तत्वात्कर्मण. । स्मार्त हीद मन्थकर्म । ननु श्रुतिविहित सत् कथ स्मार्त भवितुमर्हति — स्मृत्यनुवादिनी हि श्रुतिरियम् । श्रौतत्वे हि प्रकृतिविकारभावः । ततश्च प्राकृतधर्मग्राहित्व विकारकर्मण । न तु इह श्रौतत्वम् । अत एव च आवसथ्याग्नौ एतत्कर्म विधीयते, सर्वा च आवृत् स्मार्तैवेति ।

उपसद्व्रती भूत्वा पयोव्रती सन्नित्यर्थः । औदुम्बरे उदुम्बरवृक्षमये, कसे चमसे वा, तस्यैव विशेषणम्— कसाकारे चमसाकारे वा औदुम्बर एव । आकारे तु विकल्पः, न औदुम्बरत्वे । अत्र सर्वौषध सर्वासामोषधीना समूह यथासभव यथाशक्ति च सर्वा ओषधी. समाहृत्य । तत्र ग्राम्याणां तु दश नियमेन ग्राह्या व्रीहियवाद्या वक्ष्यमाणा. । अधिकग्रहणे तु न दोषः ग्राम्याणाम् । फलानि च यथासभव यथाशक्ति च । इतिशब्दः समस्तसभारोपचयप्रदर्शनार्थः । अन्यदपि यत्सभरणीय तत्सर्व सभृत्येत्यर्थ. । क्रमस्तत्र गृह्योक्तो द्रष्टव्यः । परिसमूहनपरिलेपने भूमिसस्कार । अग्निमुपसमाधायेति वचनात् आवसथ्येऽग्नाविति गम्यते, एकवचनात् उपसमाधानश्रवणाच्च । विद्यमानस्यैव उपसमाधानम् । परिस्तीर्य दर्भान् । आवृता—स्मार्तत्वात्कर्मणः स्थालीपाकावृत् परिगृह्यते तया आज्य सस्कृत्य । पुसा नक्षत्रेण पुनाम्ना नक्षत्रेण पुण्याहसयुक्तेन, मन्थ सर्वौषधफलपिष्ट तत्रौदुम्बरे चमसे दधनि मधुनि घृते च उपसिच्य एकया उपमन्थन्या उपसमथ्य, सनीय मध्ये सस्थाप्य, औदुम्बरेण स्रुवेण आवापस्थाने आज्यस्य जुहोति एतैर्मन्त्रैः 'यावन्तो देवाः' इत्याद्यैः । शकर.

[1]ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । चक्षुषे स्वाहा सपदे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । श्रोत्राय स्वाहाऽऽयतनाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । मनसे स्वाहा प्रजात्यै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । रेतसे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥

[2]अग्नये स्वाहेत्यग्नौ हुत्वा मन्थे. सꣳस्रवमवनयति । सोमाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । भू. स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । भुव स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रव-

(१) बृउ ६।३।२, शब्रा १४।९।३।४

(२) बृउ ६।३।३, शब्रा १४।९।३।५—८ ( भूताय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । भविष्यते स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । सर्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ५ ॥ पृथिव्यै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । अन्तरिक्षाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । दिवे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । दिग्भ्यः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । क्षत्राय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ६ ॥ भू स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । भुव स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । स्व स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । भूर्भुवः स्व स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ७ ॥ अग्नये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । सोमाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । तेजसे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । श्रियै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । लक्ष्म्यै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । सवित्रे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । सरस्वत्यै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । विश्वेभ्यो देवेभ्य स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ८ ॥ ).

मवनयति । स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । भूर्भुवः स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । क्षत्राय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । भूताय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । भविष्यते स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । सर्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति । प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥

ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यारभ्य द्वे द्वे आहुती हुत्वा मन्थे सस्रवमवनयति, स्रुवावलेपनमाज्य मन्थे सस्रावयति । एतस्मादेव ज्येष्ठाय श्रेष्ठायेत्यादिप्राणलिङ्गात् ज्येष्ठश्रेष्ठादिप्राणविद एव अस्मिन् कर्मण्यधिकारः । 'रेतसे' इत्यारभ्य एकैकामाहुतिं हुत्वा मन्थे सस्रवमवनयति, अपरया उपमन्थन्या पुनर्मश्नाति ।

शकर

अथैनमभिमृशति[१] भ्रमदसि । ज्वलदसि । पूर्णमसि । प्रस्तब्धमसि । एकसभमसि । हिंकृतमसि । हिंक्रियमाणमसि । उद्गीथमसि । उद्गीयमानमसि । श्रावितमसि । प्रत्याश्रावितमसि । आर्द्रे सन्दीप्तमसि । विभूरसि । प्रभूरसि । अन्नमसि । ज्योतिरसि । निधनमसि । संवर्गोऽसीति ॥

अथैनमभिमृशति 'भ्रमदसि' इत्यनेन मन्त्रेण ।

शकर

अथैनमुद्यच्छत्यामꣳस्यामꣳहि[२] ते महि । स हि राजेशानोऽधिपतिः । स माꣳ राजेशानोऽधिपतिं करोत्विति ॥

अथैनमुद्यच्छति सह पात्रेण हस्ते गृह्णाति 'आमस्यामहि ते महि' इत्यनेन ।

शकर.

अथैनमाचामति[१] तत्सवितुर्वरेण्यम् । मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । भूः स्वाहा । भर्गो देवस्य धीमहि । मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः । मधु द्यौरस्तु नः पिता । भुवः स्वाहा । धियो यो नः प्रचोदयात् । मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः । स्वः स्वाहेति । सर्वां च सावित्रीमन्वाह सर्वाश्च मधुमतीरहमेवेदꣳ सर्वं भूयासं भूर्भुवः स्वः स्वाहेत्यन्तत आचम्य पाणी प्रक्षाल्य जघनेनाग्निं प्राक्शिराः संविशति । प्रातरादित्यमुपतिष्ठते । दिशामेकपुण्डरीकमसि । अहं मनुष्याणामेकपुण्डरीकं भूयासमिति । यथेतमेत्य जघनेनाग्निमासीनो वꣳशं[२] जपति ॥

(१) अथैनं आचामति भक्षयति, गायत्र्याः प्रथमपादेन मधुमत्या एकया व्याहृत्या च प्रथमया प्रथमग्रासमाचामति । तथा गायत्रीद्वितीयपादेन मधुमत्या द्वितीयया द्वितीयया च व्याहृत्या द्वितीयं ग्रासम् । तथा तृतीयेन गायत्रीपादेन तृतीयया मधुमत्या तृतीयया च व्याहृत्या तृतीयं ग्रासम् । सर्वां सावित्रीं सर्वाश्च मधुमतीरुक्त्वा 'अहमेवेदं सर्वं भूयासम्' इति च अन्ते 'भूर्भुवः स्वः स्वाहा' इति समस्तं भक्षयति । यथा चतुर्भिर्ग्रासैः तद्द्रव्यं सर्वं परिसमाप्यते, तथा पूर्वमेव निरूपयेत् । यत् पात्रावलिप्तं, तत् पात्रं सर्वं निर्णिज्य तूष्णीं पिबेत् । पाणी प्रक्षाल्य आपः आचम्य जघनेनाग्निं पश्चादग्नेः प्राक्शिराः संविशति । प्रातः सन्ध्यामुपास्य आदित्यमुपतिष्ठते 'दिशामेकपुण्डरीकम्' इत्यनेन मन्त्रेण । यथेतं यथागतं, एत्य आगत्य जघनेनाग्निं आसीनो वंशं जपति ।

शकर.

( २ ) वंशं ब्राह्मणं जपेदित्यर्थः ।

रग

---

(१) बृउ ६।३।४; शब्रा १४।९।३।९ भ्रमदसि ( भ्रमसि ) अन्नमसि । ज्योतिरसि ( ज्योतिरसि । अन्नमसि ), मध्व एकसभमसि ( एकशफमसि )

(२) बृउ ६।३।५, शब्रा १४।९।३।१० त्यामꣳस्यामꣳहि ( त्यामो स्यामꣳहि ) महि ( मयि ) माꣳ ( मा ), रंग त्यामꣳस्यामꣳहि ( त्यामꣳ स्यामꣳ हि ), मध्व त्यामꣳस्यामꣳहि (त्यामꣳ स्यामꣳ हि).

(१) बृउ ६।३।६, शब्रा १४।९।३।११—१४ मधुमती + ( सर्वाश्च व्याहृती ) पाणी प्रक्षाल्य ( प्रक्षाल्य पाणी), मध्व मधुमती + ( सर्वाश्च व्याहृती )

त[1] हैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वोवाच । अपि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखा· प्ररोहेयु पलाशानीति ॥

एतमु[2] हैव वाजसनेयो याज्ञवल्क्यो मधुकाय पैङ्ग्यायान्तेवासिन उक्त्वोवाच । अपि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखा प्ररोहेयु पलाशानीति ॥

एतमु[3] हैव मधुकः पैङ्ग्यश्चूलाय भागवित्तये ऽन्तेवासिन उक्त्वोवाच । अपि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखा प्ररोहेयु पलाशानीति ॥

एतमु[4] हैव चूलो भागवित्तिर्जानकय आयस्थूणायान्तेवासिन उक्त्वोवाच । अपि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखा प्ररोहेयु पलाशानीति ॥

एतमु[5] हैव जानकिरायस्थूण सत्यकामाय जाबालायान्तेवासिन उक्त्वोवाच । अपि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखा· प्ररोहेयु पलाशानीति ॥

एतमु[6] हैव सत्यकामो जाबालोऽन्तेवासिभ्य उक्त्वोवाच । अपि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखा प्ररोहेयु पलाशानीति । तमेत नापुत्राय वाऽनन्तेवासिने वा ब्रूयात् ॥

'त हैतमुद्दालकः' इत्यादि । सत्यकामो जाबालोऽन्तेवासिभ्य उक्त्वा उवाच— अपि यः एन शुष्के स्थाणौ निषिञ्चेत्, जायेरन्नेव अस्मिन् शाखा प्ररोहेयुः पलाशानि — इत्येवमन्त एन मन्थ उद्दालकात्प्रभृति एकैकाचार्यक्रमागत सत्यकाम आचार्यो बहुभ्योऽन्तेवासिभ्य उक्त्वोवाच । किमन्यदुवाचेत्युच्यते — अपि य एन शुष्के स्थाणौ गतप्राणेऽपि एन मन्थ भक्षणाय सस्कृत निषिञ्चेत् प्रक्षिपेत्, जायेरन् उत्पद्येरन्नेव अस्मिन् स्थाणौ शाखा अवयवा वृक्षस्य, प्ररोहेयुश्च पलाशानि पर्णानि, यथा जीवत स्थाणो । किमुत अनेन कर्मणा काम सिध्येदिति । ध्रुवफलमिद कर्मेति कर्मस्तुत्यर्थमेतत् । विद्याधिगमे षट् तीर्थानि । तेषामिह सप्राणदर्शनस्य मन्थविज्ञानस्याधिगमे द्वे एव तीर्थे अनुज्ञायेते, पुत्रश्चान्तेवासी च । शकर

चतुरौदुम्बरो[1] भवति । औदुम्बरः स्रुव औदुम्बरश्चमस औदुम्बर इध्म औदुम्बर्या उपमन्थन्यौ । दश ग्राम्याणि धान्यानि भवन्ति । व्रीहियवास्तिलमाषा अणुप्रियगवो गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्च । तान्पिष्टान्दधनि मधुनि घृत उपसिञ्चति । आज्यस्य जुहोति ॥

चतुरौदुम्बरो भवतीति व्याख्यातम् । दश ग्राम्याणि धान्यानि भवन्ति, ग्राम्याणा तु धान्याना दश नियमेन ग्राह्या इत्यवोचाम । के त इति निर्दिश्यन्ते—व्रीहियवाः, तिलमाषाः, अणुप्रियगवः अणवश्च अणुशब्दवाच्या, क्वचिद्देशे प्रियगवः प्रसिद्धाः कङ्गुशब्देन, खल्वा निष्पावाः वल्लशब्दवाच्या लोके, खलकुलाः कुलत्थाः । एतद्व्यतिरेकेण यथाशक्ति सर्वौषधयो ग्राह्याः फलानि च इत्यवोचाम, अयाज्ञिकानि वर्जयित्वा ।

शकर.

पुत्रमन्थाख्य कर्म इष्टगुणपुत्रप्राप्तिसाधन, गर्भाधानकर्म, सोष्यन्तीकर्म, जातकर्म, नामकरण, स्तनप्रदानम्

एषा[2] वै भूताना पृथिवी रसः । पृथिव्या

---

(१) बृउ ६।३।७, शब्रा १४।९।३।१५

(२) बृउ ६।३।८, शब्रा १४।९।३।१६, रग एतमु (एवमु)

(३) बृउ ६।३।९, शब्रा १४।९।३।१७ श्चूलाय (श्चूडाय)

(४) बृउ ६।३।१०, शब्रा १४।९।३।१८ चूलो (चूडो)

(५) बृउ ६।३।११, शब्रा १४।९।३।१९

(६) बृउ ६।३।१२, शब्रा १४।९।३।२०, रग य वाऽनन्ते (यानन्ते)

(१) बृउ ६।३।१३, शब्रा १४।९।३।२१ औदुम्बरः स्रुव औदुम्बरश्चमस (औदुम्बरश्चमस औदुम्बर स्रुव) तान्पिष्टान्दधनि मधुनि घृत उप (तान् सार्धं पिष्ट्वा दध्ना मधुना घृतेनोप), रग तान्पिष्टान्दधनि (तान् पिष्ट्वा दध्नि), मध्व खलकुलाश्च (खल्वकुलाश्च)

(२) बृउ ६।४।१, शब्रा. १४।९।४।१

आप. । अपामोषधयः । ओषधीनां पुष्पाणि । पुष्पाणां फलानि । फलानां पुरुष । पुरुषस्य रेत ॥

यादृग्जन्मा यथोत्पादित. यैर्वा गुणैर्विशिष्टः पुत्र आत्मनः पितुश्च लोक्यो भवतीति, तत्सपादनाय ब्राह्मणमारभ्यते । प्राणदर्शिनः श्रीमन्थ कर्म कृतवतः पुत्रमन्थेऽधिकारः । यदा पुत्रमन्थ चिकीर्षति तदा श्रीमन्थ कृत्वा ऋतुकाल पत्न्याः प्रतीक्षत इत्येतत् रेतस ओषध्यादिरसतमत्वस्तुत्या अवगम्यते । एषा वै चराच राणा भूताना पृथिवी रस. सारभूतः, सर्वभूतानां मध्विति श्रुतम् । पृथिव्या आपो रस, अप्सु हि पृथिव्योता च प्रोता च । अपामोषधयो रस, कार्यत्वात् रसत्वमोषध्यादीनाम् । ओषधीना पुष्पाणि । पुष्पाणां फलानि । फलानां पुरुष. । पुरुषस्य रेत., 'सर्वेभ्योऽङ्गेभ्यस्तेजः सभूतम्' इति श्रुत्यन्तरात् । शकर

स[१] ह प्रजापतिरीक्षाचक्रे । हन्तास्मै प्रतिष्ठा कल्पयानीति स स्त्रियꣳ ससृजे । ताꣳ सृष्ट्वाऽध उपास्त । तस्मात्स्त्रियमध उपासीत । स एत प्राञ्च ग्रावाणमात्मन एव समुदपारयत् । तेनैनामभ्यसृजत् ॥

यत एव सर्वभूताना सारतम एतत् रेतः, अत का नु खल्वस्य योग्या प्रतिष्ठेति स ह स्रष्टा प्रजापतिरीक्षाचक्रे । ईक्षा कृत्वा स स्त्रिय ससृजे । तां च सृष्ट्वा अध उपास्त मैथुनाख्य वर्म अधउपासन नाम कृतवान् । तस्मात्स्त्रियमध उपासीत । श्रेष्ठानुश्रयणा हि प्रजाः । अत्र वाजपेयसामान्यक्लृप्तिमाह — स एत प्राञ्च प्रकृष्टगतियुक्त आत्मनो ग्रावाण सोमाभिषवोपल स्थानीय काठिन्यसामान्यात् प्रजननेन्द्रिय, उदपारयत् उत्पूरितवान् स्त्रीव्यञ्जन प्रति । तेन एनां स्त्रिय अभ्यसृजत् अभिससर्गं कृतवान् । शकर

तस्या[२] वेदिरुपस्थ । लोमानि बर्हिः । चर्माधिषवणे समिद्धो मध्यतस्तौ मुष्कौ । स यावान्ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति । य एवं विद्वानधोपहासं चरत्यासाꣳ स्त्रीणाꣳ सुकृतं वृङ्क्ते । अथ य इदमविद्वानधोपहास चरत्याऽस्य स्त्रिय सुकृत वृञ्जते ॥

तस्या वेदिरित्यादि सर्वं सामान्य प्रसिद्धम् । समिद्धोऽग्नि. मध्यतः स्त्रीव्यञ्जनस्य । तौ मुष्कौ अधिषवणफलके इति व्यवहितेन सबध्यते । वाजपेययाजिनो यावान् लोक प्रसिद्धः, तावान् विदुष. मैथुनकर्मणो लोकः फलमिति स्तूयते । तस्मात् बीभत्सा नो कार्येति । य एव विद्वानधोपहास चरति आसा स्त्रीणां सुकृत वृङ्क्ते आवर्जयति । अथ पुनः य वाजपेयसपत्तिं न जानाति अविद्वान् रेतसो रसतमत्व च अधोपहास चरति, आ अस्य स्त्रिय. सुकृतं आवृञ्जते अविदुष ।

शकर.

एतद्ध[१] स्म वै तद्विद्वानुद्दालक आरुणिराह । एतद्ध स्म वै तद्विद्वान्नाको मौद्गल्य आह । एतद्ध स्म वै तद्विद्वान्कुमारहारित आह । बहवो मर्या ब्राह्मणायना निरिन्द्रिया विसुकृतोऽस्माल्लोकात्प्रयन्ति य इदमविद्वाꣳसोऽधोपहास चरन्तीति । बहु वा इदꣳ सुप्तस्य वा जाग्रतो वा रेतः स्कन्दति—॥

एतद्ध स्म वै तत् विद्वान् उद्दालक आरुणिः आह अधोपहासाख्य मैथुनकर्म वाजपेयसपन्न विद्वानित्यर्थः । तथा नाको मौद्गल्य. कुमारहारितश्च । किं त आहुरित्युच्यते — बहवो मर्या मरणधर्मिणो मनुष्या, ब्राह्मणा अयन येषां ते ब्राह्मणायनाः ब्रह्मबन्धवः, जातिमात्रोपजीविन इत्येतत्, निरिन्द्रियाः विश्लिष्टेन्द्रिया, विसुकृतः विगतसुकृतकर्माणः, अविद्वांस मैथुनकर्मासक्ता इत्यर्थ. । ते किम् ? अस्मात् लोकात् प्रयन्ति परलोकात् परिभ्रष्टा इति । मैथुनकर्मणोऽत्यन्तपापहेतुत्व दर्शयति —य इदमविद्वांसोऽधोपहास चरन्तीति ।

शकर.

(१) बृउ ६।४।२, शब्रा १४।९।४।२ उपासीत + ( श्रीर्योषा )

(२) बृउ ६।४।३, शब्रा १४।९।४।३ त्यासाꣳ स्त्रीणाꣳ ( स्या स स्त्रीणाꣳ ), रग. यावान्ह वै ( यावान् वै ), मध्व अथ य ( अथ च य ) चरत्याऽस्य (चरत्यस्य)

(१) बृउ ६।४।४, शब्रा १४।९।४।४, ५, मध्व. हारित ( हारीत )

तँदभिमृशेदनु वा मन्त्रयेत । यन्मेऽद्य रेत पृथिवीमस्कान्त्सीद्यदोषधीरप्यसरद्यदपः । इदमहं तद्रेत आददे । पुनर्मामैत्विन्द्रिय पुनस्तेज पुनर्भग । पुनरग्निर्धिष्ण्या यथास्थान कल्पन्ताम् । इत्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ वा निमृज्यात् ॥

श्रीमन्थ कृत्वा पत्न्या ऋतुकाल ब्रह्मचर्येण प्रतीक्षते। यदि इद रेत स्कन्दन्ति, बहु वा अल्प वा, सुप्तस्य वा जाग्रतो वा, रागप्राबल्यात् तदभिमृशेत्, अनुमन्त्रयेत वा अनुजपेदित्यर्थः । यदा अभिमृशति, तदा अनामिकाङ्गुष्ठाभ्या तद्रेत आदत्ते 'आददे' इत्येवमन्तेन मन्त्रेण। 'पुनर्माम्' इत्येतेन निमृज्यात् अन्तरेण मध्ये भ्रुवौ भ्रुवोर्वा, स्तनौ स्तनयोर्वा ।

शकर

अँथ यद्युदक आत्मान पश्येत्तदभिमन्त्रयेत । मयि तेज इन्द्रिय यशो द्रविणऽ सुकृतमिति । श्रीर्ह वा एषा स्त्रीणां यन्मलोद्वासा । तस्मान्मलोद्वासस यशस्विनीमभिक्रम्योपमन्त्रयेत ॥

( १ ) अथ यदि कदाचित् उदके आत्मान आत्मच्छाया पश्येत्, तत्रापि अभिमन्त्रयेत अनेन मन्त्रेण 'मयि तेज.' इति। श्रीर्ह वा एषा पत्नी स्त्रीणा मध्ये यत् यस्मात् मलोद्वासा उद्गतमलवद्वासाः, तस्मात् ता मलोद्वासस यशस्विनीं श्रीमतीमभिक्रम्य अभिगत्य उपमन्त्रयेत इदम्—अद्य आवाभ्या कार्यं यत्पुत्रोत्पादनमिति, त्रिरात्रान्ते आप्लुताम् ।

शकर

( २ ) स्त्रीणां मध्ये या रजस्वला सा श्रीः। उत्कृष्टेत्यर्थः। स्त्रीणामृतुप्राप्तिरेव यशः । तादृशयशोयुक्ता मलोद्वाससमभिगम्याऽऽवाभ्यां पुत्र उत्पादयितव्य इत्युपमन्त्रयेतेत्यर्थ ।

रग

सा चेदस्मै न दद्यात्काममेनामवक्रीणीयात्। सा चेदस्मै नैव दद्यात्काममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेत्। इन्द्रियेण ते यशसा यश आददे इति । अयशा एव भवति ॥

( १ ) सा चेद अस्मै न दद्यात् मैथुन कर्तुं, काम एना अवक्रीणीयात् आभरणादिना ज्ञापयेत्। तथापि सा नैव दद्यात्, काममेना यष्ट्या वा पाणिना वा उपहत्य अतिक्रामेत् मैथुनाय । शप्स्यामि त्वा दुर्भगा करिष्यामीति प्रख्याप्य, तामनेन मन्त्रेणोपगच्छेत्—'इन्द्रियेण ते यशसा यश आददे' इति । सा तस्मात् तदभिशापात् वन्ध्या दुर्भगेति ख्याता अयशा एव भवति ।

शकर

( २ ) सा च तदाप्रभृति अरजस्का भवति ।

रग.

सा चेदस्मै दद्यादिन्द्रियेण ते यशसा यश आदधामीति । यशस्विनावेव भवत ॥

सा चेदस्मै दद्यात्, अनुगुणैव स्याद्भर्तुः, तदा अनेन मन्त्रेण उपगच्छेत् 'इन्द्रियेण ते यशसा यश आदधामि' इति । तदा यशस्विनावेव उभावपि भवत । शकर.

स यामिच्छेत्कामयेत मेति तस्यामर्थं निष्ठाय मुखेन मुखऽ संधायोपस्थमस्या अभिमृश्य जपेत् । अङ्गादङ्गात्सभवसि हृदयादधिजायसे । स त्वमङ्ग कषायोऽसि दिग्धविद्धामिव मादयेमाममू मयीति ॥

स या स्वभार्यामिच्छेत् — इय मां कामयेतेति, तस्या अर्थं प्रजननेन्द्रिय निष्ठाय निक्षिप्य, मुखेन मुख सधाय, उपस्थमस्या अभिमृश्य, जपेदिम मन्त्रम् — 'अङ्गादङ्गात्' इति ।

शकर.

(१) बृउ ६।४।५, शब्रा १४।९।४।५ रग्निर्धि (रग्नयो धि) निमृज्यात् (निमृञ्ज्यात्), मध्व मामैत्वि (मामेत्वि)

(२) बृउ ६।४।६, शब्रा १४।९।४।६, ७, मध्व न पश्ये (न परिपश्ये)

(१) बृउ ६।४।७, शब्रा १४।९।४।७ मवक्री (मपक्री)

(२) बृउ ६।४।८, शतपथब्राह्मणे कण्डिकेय नास्ति

(३) बृउ ६।४।९, शब्रा १४।९।४।८ निष्ठाय (निष्ठाप्य) मादयेमाममू मयीति (मादयेति), रग. विद्धामिव (विद्धमिव)

[१]अथ यामिच्छेन्न गर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ सधायाभिप्राण्यापान्यात् । इन्द्रियेण ते रेतसा रेत आदद इति । अरेता एव भवति ॥

(१) अथ यामिच्छेत् — न गर्भं दधीत न धारयेत् गर्भिणी मा भूदिति, तस्यां अर्थमिति पूर्ववत् । अभिप्राण्य अभिप्राणन प्रथम कृत्वा, पश्चात् अपान्यात् — 'इन्द्रियेण ते रेतसा रेत आददे' इत्यनेन मन्त्रेण । अरेता एव भवति, न गर्भिणी भवतीत्यर्थः । शकर

(२) अभिप्राण्यापान्यात् । श्वास गृहीत्वा विसृजेदित्यर्थः । रग

[२]अथ यामिच्छेद्दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ सधायापान्याभिप्राण्यात् । इन्द्रियेण ते रेतसा रेत आदधामीति । गर्भिण्येव भवति ॥

अथ यामिच्छेत् — दधीत गर्भमिति, तस्यामर्थमित्यादि पूर्ववत् । पूर्वविपर्ययेण अपान्य अभिप्राण्यात् 'इन्द्रियेण ते रेतसा रेत आदधामि' इति । गर्भिण्येव भवति । शकर.

[३]अथ यस्य जायायै जारः स्यात्तं चेद्द्विष्यादामपात्रेऽग्निमुपसमाधाय प्रतिलोमꣳ शरबर्हिस्तीर्त्वा तस्मिन्नेता शरभृष्टी प्रतिलोमाः सर्पिषाक्ता जुहुयात् । मम समिद्धेऽहौषी । प्राणापानौ त आददेऽसाविति । मम समिद्धेऽहौषी । पुत्रपशूꣳस्त आददेऽसाविति । मम समिद्धेऽहौषी । इष्टासुकृते त आददेऽसाविति । मम समिद्धेऽहौषी । आशापराकाशौ त आददेऽसाविति । स वा एष निरिन्द्रियो विसुकृतोऽस्माल्लोकात्प्रैति यमेवंविद्ब्राह्मण शपति । तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेत् । उत ह्येवंवित्परो भवति ॥

अथ पुनर्यस्य जायायै जार उपपतिः स्यात्, त चेत् द्विष्यात्, अभिचरिष्याम्येनमिति मन्येत, तस्येद कर्म । आमपात्रे अग्निमुपसमाधाय सर्वं प्रतिलोम कुर्यात् । तस्मिन् अग्नौ एताः शरभृष्टीः शरेषीकाः प्रतिलोमाः सर्पिषा अक्ताः घृताभ्यक्ताः जुहुयात् 'मम समिद्धेऽहौषी' इत्याद्या आहुतीः । अन्ते सर्वासा असाविति नामग्रहण प्रत्येकम् । स एषः एवंवित्, य ब्राह्मणः शपति, सः विसुकृतः विगतपुण्यकर्मा प्रैति । तस्मात् एवंवित् श्रोत्रियस्य दारेण नोपहासमिच्छेत् नर्मापि न कुर्यात्, किमुत अथोपहासम् । हि यस्मात् एवंविदपि तावत् परो भवति शत्रुर्भवतीत्यर्थः । शकर

[१]अथ यस्य जायामार्तवं विन्देत्त्र्यहं कꣳसेन पिबेत् । अहतवासा । नैना वृषलो न वृषल्युपहन्यात् । त्रिरात्रान्त आप्लुत्य व्रीहीनवघातयेत् ॥

अथ यस्य जाया आर्तवं विन्देत् ऋतुभाव प्राप्नुयात्—इत्येवमादिग्रन्थः 'श्रीर्ह वा एषा स्त्रीणाम्' इत्यत पूर्वं द्रष्टव्य, सामर्थ्यात् । त्र्यह कसेन पिबेत्, अहतवासाश्च स्यात् । नैनां स्नातां अस्नाता च वृषलो वृषली वा नोपहन्यात् नोपस्पृशेत् । त्रिरात्रान्ते त्रिरात्रव्रतसमाप्तौ आप्लुत्य स्नात्वा अहतवासाः स्यादिति व्यवहितेन सबन्ध । ताम् आप्लुतां व्रीहीन् आवघातयेत् व्रीह्यवघाताय तामेव विनियुञ्ज्यात् । शकर

[२]स य इच्छेत्पुत्रो मे शुक्लो जायेत, वेदमनु ब्रुवीत, सर्वमायुरियादिति, क्षीरौदन पाचयित्वा सर्पिष्मन्तमश्नीयाताम् । ईश्वरौ जनयितवै ॥

---

(१) बृउ ६।४।१०, शब्रा १४।९।४।९ निष्ठाय (निष्ठाप्य)

(२) बृउ ६।४।११, शब्रा १४।९।४।१० मिच्छेद्द (मिच्छेद्गर्भं द) निष्ठाय (निष्ठाप्य), रग मिच्छेद्द (मिच्छेद्गर्भं द), मध्व रगवत्

(३) बृउ ६।४।१२, शब्रा १४।९।४।११ तस्मिन्नेता + (तिस्र) प्राणापानौ त पराकाशौ त आददेऽसाविति (आशापराकाशौ त आददेऽसाविति नाम गृह्णाति । मम समिद्धेऽहौषी पुत्रपशूꣳस्त आददेऽसाविति नाम गृह्णाति । मम समिद्धेऽहौषी प्राणापानौ त आददेऽसाविति नाम गृह्णाति) सुकृतोऽस्मा (सुकृदस्मा) दारेण नोपहासमिच्छेत् (जायाया उपहास नेच्छेत्), मध्व विद्ब्राह्मण (विद्वान्ब्राह्मण).

(१) बृउ ६।४।१३, शब्रा. १४।९।४।१२ आप्लुत्य (आप्लूय)

(२) बृउ ६।४।१४, शब्रा १४।९।४।१३ शुक्लो (गौरो), मध्व शुक्लो+ (गौरो)

स य इच्छेत्—पुत्रो मे शुक्लो वर्णतो जायेत, वेदमेकमनुब्रुवीत, सर्वमायुरियात्—वर्षशत क्षीरौदन पाचयित्वा सर्पिष्मन्तमश्नीयाताम् । ईश्वरौ समर्थौ जनयितवै जनयितुम् । शकर

**अथ य इच्छेत्पुत्रो मे कपिल पिङ्गलो जायेत द्वौ वेदावनुब्रुवीत सर्वमायुरियादिति, दध्योदन पाचयित्वा सर्पिष्मन्तमश्नीयाताम् । ईश्वरौ जनयितवै ॥**

दध्योदन दध्ना चरु पाचयित्वा । द्विवेद चेदिच्छति पुत्र, तदा एवमशननियम । शकर

**अथ य इच्छेत्पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन्वेदाननुब्रुवीत सर्वमायुरियादित्युदौदन पाचयित्वा सर्पिष्मन्तमश्नीयाताम् । ईश्वरौ जनयितवै ॥**

केवलमेव स्वाभाविकमोदनम् । उदग्रहण अन्यप्रसङ्गनिवृत्त्यर्थम् । शकर

**अथ य इच्छेद्दुहिता मे पण्डिता जायेत सर्वमायुरियादिति, तिलौदन पाचयित्वा सर्पिष्मन्तमश्नीयाताम् । ईश्वरौ जनयितवै ॥**

दुहितुः पाण्डित्य गृहतन्त्रविषयमेव, वेदेऽनधिकारात् । तिलौदन कृशरम् । शकर

**अथ य इच्छेत्पुत्रो मे पण्डितो विगीत समितिंगम शुश्रूषिता वाचं भाषिता जायेत सर्वान्वेदाननुब्रुवीत सर्वमायुरियादिति, मांसौदन पाचयित्वा सर्पिष्मन्तमश्नीयाताम् । ईश्वरौ जनयितवै । औक्षेण वार्षभेण वा ॥**

विविध गीतो विगीत· प्रख्यात इत्यर्थः । समितिंगमः सभा गच्छतीति प्रगल्भ इत्यर्थः, पाण्डित्यस्य पृथग्ग्रहणात् । शुश्रूषितां श्रोतुमिष्टा रमणीया वाच भाषिता सस्कृताया अर्थवत्या वाचो भाषितेत्यर्थ. । मांसमिश्रमोदन मांसौदनम् । तन्मांसनियमार्थमाह — औक्षेण वा मांसेन । उक्षा सेचनसमर्थः पुगव, तदीय मासम् । ऋषभ. ततोऽप्यधिकवयाः, तदीय आर्षभ मासम् । शकर.

**अथाभिप्रातरेव स्थालीपाकावृताऽऽज्य चेष्टित्वा स्थालीपाकस्योपघातं जुहोत्यग्नये स्वाहाऽनुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेति । हुत्वोद्धृत्य प्राश्नाति । प्राश्येतरस्या प्रयच्छति । प्रक्षाल्य पाणी उदपात्र पूरयित्वा तेनैना त्रिरभ्युक्षति । उत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रपूर्व्यां स जाया पत्या सहेति ॥**

अथाभिप्रातरेव काले अवघातनिर्वृत्तान् तण्डुलानादाय स्थालीपाकावृता स्थालीपाकविधिना, आज्य चेष्टित्वा, आज्यसस्कार कृत्वा, चरु श्रपयित्वा, स्थालीपाकस्य आहुतीः जुहोति, उपघात उपहत्योपहत्य 'अग्नये स्वाहा' इत्याद्याः । गार्ह्य सर्वो विधिः द्रष्टव्य. अत्र । हुत्वा उद्धृत्य चरुशेष प्राश्नाति । स्वय प्राश्य इतरस्याः पत्न्यै प्रयच्छति उच्छिष्टम् । प्रक्षाल्य पाणी आचम्य उदपात्र पूरयित्वा तेनोदकेन एना त्रिरभ्युक्षति अनेन मन्त्रेण 'उत्तिष्ठातः' इति, सकृन्मन्त्रोच्चारणम् । शकर.

**अथैनामभिपद्यते । अमोऽहमस्मि सा त्वम् सा त्वमस्यमोऽहम् । सामाहमस्मि ऋक्त्वम् । द्यौरह पृथिवी त्वम् । तावेहि सꣳरभावहै । सह रेतो दधावहै पुꣳसे पुत्राय वित्तय इति ॥**

अथैनामभिमन्त्र्य क्षीरौदनादि यथापत्यकाम भुक्त्वेति क्रमो द्रष्टव्यः । सवेशनकाले—'अमोऽहमस्मि इत्यादिमन्त्रेणाभिपद्यते ।

शकर

---

(१) **बृउ** ६।४।१५, **शब्रा** १४।९।४।१४, **मध्व.** ब्रुवीत ( ब्रवीत )

(२) **बृउ** ६।४।१६, **शब्रा** १४।९।४।१५, **मध्व** ब्रुवीत ( ब्रवीत )

(३) **बृउ** ६।४।१७, **शब्रा** १४।९।४।१६.

(४) **बृउ** ६।४।१८, **शब्रा** १४।९।४।१७ विगीत ( विजिगीथ ) औक्षेण ( आक्ष्णेन ), **मध्व** विगीत ( विजिगीथ )

(१) **बृउ** ६।४।१९, **शब्रा** १४।९।४।१८ प्रपूर्व्या ( प्रफर्व्यं ), **मध्व** चेष्टित्वा ( वेष्टित्वा ) प्रपूर्व्या ( प्रभर्व्यां ) सहेति ( सजेति )

(२) **बृउ** ६।४।२०, **शब्रा** १४।९।४।१९

[1]अथास्या ऊरू विहापयति। विजिहीथां द्यावापृथिवी इति। तस्यामर्थं निष्ठाय मुखेन मुखꣳ सधाय त्रिरेनामनुलोमामनुमार्ष्टि। विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु। आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते। गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके। गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ॥

अथास्या ऊरू विहापयति 'विजिहीथा द्यावापृथिवी' इत्यनेन। तस्यामर्थमित्यादि पूर्ववत्। त्रि एना शिर.प्रभृति अनुलोमामनुमार्ष्टि 'विष्णुर्योनिम्' इत्यादि प्रतिमन्त्रम्। शकर

[2]हिरण्मयी अरणी याभ्या निर्मन्थतामश्विनौ। तं ते गर्भं हवामहे दशमे मासि सूतये। यथाऽग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी। वायुर्दिशा यथा गर्भ एव गर्भं दधामि तेऽसाविति॥

अन्ते नाम गृह्णाति—असाविति तस्या.।

शकर

[3]सोष्यन्तीमद्भिरभ्युक्षति। यथा वायु. पुष्करिणीꣳ समिङ्गयति सर्वत। एवा ते गर्भ एजतु सहावैतु जरायुणा। इन्द्रस्यायं व्रज कृत सार्गल. सपरिश्रय। तमिन्द्र निर्जहि गर्भेण सावराꣳ सहेति॥

सोष्यन्तीं अद्भिरभ्युक्षति प्रसवकाले सुखप्रसवनार्थं अनेन मन्त्रेण—'यथा वायु पुष्करिणीं समिङ्गयति सर्वत.। एवा ते गर्भ एजतु इति'।

शकर

(१) बृउ ६।४।२१, शब्रा १४।९।४।२० निष्ठाय (निष्ठाप्य), मध्व विजिहीथा (विजिहाथा)

(२) बृउ ६।४।२२, शब्रा १४।९।४।२१ मश्विनौ+ (देवौ) हवामहे (दधामहे) सूतये (सूतवे) साविति + (नाम गृह्णाति), रग सूतये (सूतवे), मध्व रगवत्

(३) बृउ ६।४।२३, शब्रा १४।९।४।२२ वायु (वात) सार्गल (सार्गड) सावराꣳ (सावरꣳ), मध्व समिङ्गयति (समिजयति) एवा (एव) सावराꣳ (सावरꣳ)

[1]जातेऽग्निमुपसमाधायाङ्क आधाय कꣳसे पृषदाज्यꣳ सनीय पृषदाज्यस्योपघातं जुहोति। अस्मिन्सहस्रं पुष्यासमेधमान स्वे गृहे। अस्योपसन्द्यां मा च्छैत्सीत्प्रजया च पशुभिश्च स्वाहा। मयि प्राणाꣳस्त्वयि मनसा जुहोमि स्वाहा। यत्कर्मणाऽत्यरीरिच यद्वा न्यूनमिहाकरम्। अग्निष्टत्स्विष्टकृद्विद्वान्स्विष्टꣳ सुहुत करोतु न स्वाहेति॥

अथ जातकर्म। जातेऽग्निमुपसमाधाय अङ्के आधाय पुत्र, कसे पृषदाज्य सनीय सयोज्य दधिघृते, पृषदाज्यस्य उपघात जुहोति 'अस्मिन्सहस्रम्' इत्याद्यावापस्थाने। शकर

अथास्य दक्षिण कर्णमभिनिधाय वाग्वागिति त्रि। अथ दधि मधु घृतꣳ सनीयानन्तर्हितेन जातरूपेण प्राशयति। भूस्ते दधामि, भुवस्ते दधामि, स्वस्ते दधामि, भूर्भुव स्व सर्वं त्वयि दधामीति॥

अथास्य दक्षिण कर्णमभिनिधाय स्व मुख 'वाग्वाक्' इति त्रिर्जपेत्। अथ दधि मधु घृत सनीय अनन्तर्हितेन अव्यवहितेन जातरूपेण हिरण्येन प्राशयति एतैर्मन्त्रै. प्रत्येकम्। शकर.

[3]अथास्य नाम करोति वेदोऽसीति। तदस्य तद्गुह्यमेव नाम भवति॥

(१) बृउ ६।४।२४, शब्रा १४।९।४।२३, २४ ज्यꣳ सनीय (ज्यमानीय) स्वे गृहे (स्वगृहे) सन्द्या (सद्या) अग्निष्ट (अग्निष्ट) न. स्वाहेति (स्वाहेति), रग. द्वान्स्विष्टꣳ (द्वान्सर्वं स्विष्टꣳ), मध्व सन्द्या (सद्या) च्छैत्सीत्प्र (च्छैत्सी प्र) अग्निष्टत् (अग्निष्ट)

(२) बृउ ६।४।२५, शब्रा १४।९।४।२५ अथास्य दक्षिण (अथास्यायुष्य करोति दक्षिण) सनीयान (सꣳसृज्यान) भूस्ते दधामि भुवस्ते दधामि स्वस्ते (भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि).

(३) बृउ ६।४।२६, शब्रा १४।९।४।२५ नाम (नामधेय) स्य तद्गु (स्यैतद्गु) भवति (स्यात्) 'अथैनमभिमृशत्यश्मा भव परशुर्भव हिरण्यमस्तुत भव आत्मा वै पुत्रनामासि स जीव शरद शतमिति॥ २६॥' इत्यधिक शतपथब्राह्मणे

अथास्य नामधेयं करोति 'वेदोऽसि' इति । तदस्य तद्गुह्यं नाम भवति — वेद इति । शंकर

[1] अथैनं मात्रे प्रदाय स्तनं प्रयच्छति । यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः । येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवे करिति ॥

अथैनं मात्रे प्रदाय स्वाङ्कस्थ, स्तनं प्रयच्छति 'यस्ते स्तनः' इत्यादिमन्त्रेण ।

शंकर

[2] अथास्य मातरमभिमन्त्रयते । इलासि मैत्रावरुणी वीरे वीरमजीजनत् । सा त्वं वीरवती भव याऽस्मान्वीरवतोऽकरदिति । तं वा एतमाहुः । अतिपिता बताभूः । अतिपितामहो बताभूः । परमां बत काष्ठां प्रापच्छ्रिया यशसा ब्रह्मवर्चसेन । य एवंविदो ब्राह्मणस्य पुत्रो जायत इति ॥

अथास्य मातरं अभिमन्त्रयते 'इलासि' इत्यनेन । तं वा एतमाहुरिति—अनेन विधिना जातः पुत्रः पितरं पितामहं च अतिशेते इति श्रिया यशसा ब्रह्मवर्चसेन परमां निष्ठां प्रापत्—इत्येवं स्तुत्यो भवतीत्यर्थः । यस्य च एवंविदो ब्राह्मणस्य पुत्रो जायते, स च एवं स्तुत्यो भवतीत्यध्याहार्यम् । शंकर

वेदविद्यावंश

[3] अथ वंशः । पौतिमाषीपुत्रः कात्यायनीपुत्रात् । कात्यायनीपुत्रो गौतमीपुत्रात् । गौतमीपुत्रो भारद्वाजीपुत्रात् । भारद्वाजीपुत्रः पाराशरीपुत्रात् । पाराशरीपुत्र औपस्वस्तीपुत्रात् । औपस्वस्तीपुत्रः पाराशरीपुत्रात् । पाराशरीपुत्रः कात्यायनीपुत्रात् । कात्यायनीपुत्रः कौशिकीपुत्रात् । कौशिकीपुत्र आलम्बीपुत्राच्च वैयाघ्रपदीपुत्राच्च । वैयाघ्रपदीपुत्रः काण्वीपुत्राच्च कापीपुत्राच्च । कापीपुत्रः— ॥

आत्रेयीपुत्रात् । आत्रेयीपुत्रो गौतमीपुत्रात् । गौतमीपुत्रो भारद्वाजीपुत्रात् । भारद्वाजीपुत्रः पाराशरीपुत्रात् । पाराशरीपुत्रो वात्सीपुत्रात् । वात्सीपुत्रः पाराशरीपुत्रात् । पाराशरीपुत्रो वार्कारुणीपुत्रात् । वार्कारुणीपुत्रो वार्कारुणीपुत्रात् । वार्कारुणीपुत्र आर्तभागीपुत्रात् । आर्तभागीपुत्रः शौङ्गीपुत्रात् । शौङ्गीपुत्रः साङ्कृतीपुत्रात् । साङ्कृतीपुत्र आलम्बायनीपुत्रात् । आलम्बायनीपुत्र आलम्बीपुत्रात् । आलम्बीपुत्रो जायन्तीपुत्रात् । जायन्तीपुत्रो माण्डूकायनीपुत्रात् । माण्डूकायनीपुत्रो माण्डूकीपुत्रात् । माण्डूकीपुत्रः शाण्डलीपुत्रात् । शाण्डलीपुत्रो राथीतरीपुत्रात् । राथीतरीपुत्रो भालुकीपुत्रात् । भालुकीपुत्रः क्रौञ्चिकीपुत्राभ्याम् । क्रौञ्चिकीपुत्रौ वैदभृतीपुत्रात् । वैदभृतीपुत्रः कार्शकेयीपुत्रात् । कार्शकेयीपुत्रः प्राचीनयोगीपुत्रात् । प्राचीनयोगीपुत्रः साजीवीपुत्रात् । साजीवीपुत्रः प्राश्नीपुत्रादासुरिवासिनः । प्राश्नीपुत्र आसुरायणात् । आसुरायण आसुरेः । आसुरिः— ॥

---

(१) बृउ ६।४।२७, शब्रा १४।९।४।२८

(२) बृउ ६।४।२८, शब्रा १४।९।४।२७, २९ इलासि ( इडासि ) जनत् ( जनथाः ) वतोऽक (वताऽक) प्रापच्छ्रिया ( प्राप श्रिया )

(३) बृउ ६।५।१-४, शब्रा १४।९।४।३०-३३ ( अथ वंशः । तदिदं वयं भारद्वाजीपुत्रात् । भारद्वाजीपुत्रो वात्सीमाण्डवीपुत्रात् । वात्सीमाण्डवीपुत्रः पाराशरीपुत्रात् । पाराशरीपुत्रो गार्गीपुत्रात् । गार्गीपुत्रः पाराशरीकौण्डिनीपुत्रात् । पाराशरीकौण्डिनीपुत्रो गार्गीपुत्रात् । गार्गीपुत्रो गार्गीपुत्रात् । गार्गीपुत्रो बाडेयीपुत्रात् । बाडेयीपुत्रो मौषिकीपुत्रात् । मौषिकीपुत्रो हारिकर्णीपुत्रात् । हारिकर्णीपुत्रो भारद्वाजीपुत्रात् । भारद्वाजीपुत्रः पैङ्गीपुत्रात् । पैङ्गीपुत्रः शौनकीपुत्रात् । शौनकीपुत्रः — ॥ काश्यपीबालाक्यामाठरीपुत्रात् । काश्यपीबालाक्यामाठरीपुत्रः कौत्सीपुत्रात् । कौत्सीपुत्रो बौधीपुत्रात् । बौधीपुत्रः शालङ्कायनीपुत्रात् । शालङ्कायनीपुत्रो वार्षगणीपुत्रात् । वार्षगणीपुत्रो गौतमीपुत्रात् । गौतमीपुत्र आत्रेयीपुत्रात् । आत्रेयीपुत्रो गौतमीपुत्रात् । गौतमीपुत्रो वात्सीपुत्रात् । वात्सीपुत्रो भारद्वाजीपुत्रात् । भारद्वाजीपुत्रः पाराशरीपुत्रात् । पाराशरीपुत्रो वार्कारुणीपुत्रात् । वार्कारुणीपुत्र आर्तभागीपुत्रात् । आर्तभागीपुत्रः शौङ्गीपुत्रात् । शौङ्गीपुत्रः साङ्कृतीपुत्रात् । साङ्कृतीपुत्र —॥ आलम्बीपुत्रात् । आलम्बीपुत्र आलम्बायनीपुत्रात् । आलम्बायनीपुत्रो जायन्तीपुत्रात् । जायन्ती-

याज्ञवल्क्यात् । याज्ञवल्क्य उद्दालकात् । उद्दालकोऽरुणात् । अरुण उपवेशे । उपवेशि कुश्रे । कुश्रिर्वाजश्रवस । वाजश्रवा जिह्वावत बाध्योगात् । जिह्वावान्बाध्योगोऽसिताद्वार्षगणात् । असितो वार्षगणो हरितात्कश्यपात् । हरित कश्यप शिल्पात्कश्यपात् । शिल्प कश्यप कश्यपान्नैध्रुवे । कश्यपो नैध्रुविर्वाच । वागम्भिण्या । अम्भिण्यादित्यात् । आदित्यानीमानि शुक्लानि यजूꣳषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥

समानमा सांजीवीपुत्रात् । सांजीवीपुत्रो माण्डूकायने । माण्डूकायनिर्माण्डव्यात् । माण्डव्य. कौत्सात् । कौत्सो माहित्थे । माहित्थिर्वामकक्षायणात् । वामकक्षायण शाण्डिल्यात् । शाण्डिल्यो वात्स्यात् । वात्स्यः कुश्रे । कुश्रिर्यज्ञवचसो राजस्तम्बायनात् । यज्ञवचा राजस्तम्बायनस्तुरात्कावषेयात् । तुर कावषेय प्रजापते । प्रजापतिर्ब्रह्मण. । ब्रह्म स्वयभु । ब्रह्मणे नम ॥

( १ ) अथेदानीं समस्तप्रवचनवश. स्त्रीप्राधान्यात् । गुणवान्पुत्रो भवतीति प्रस्तुतम् । अतः स्त्रीविशेषणेनैव पुत्रविशेषणात् आचार्यपरम्परा कीर्त्यते । तानीमानि शुक्लानीति अव्यामिश्राणि ब्राह्मणेन । अथवा यानीमानि यजूंषि तानि शुक्लानि शुद्धानीत्येतत् । प्रजापतिमारभ्य यावत्पौतिमाषीपुत्र, तावत् अधोमुखो नियताचार्यपूर्वक्रमो वश॰ समान आ सांजीवीपुत्रात् । ब्रह्मण प्रवचनाख्यस्य । तच्चैतत् ब्रह्म प्रजापतिप्रबन्धपरम्परया आगत्य अस्मास्वनेकधा विप्रसृत अनाद्यनन्त स्वयभु ब्रह्म नित्यम् । तस्मै ब्रह्मणे नम । नमस्तदनुवर्तिभ्यो गुरुभ्य॰ ।

शकर.

( २ ) स्वयभु स्वतः सर्वज्ञमित्यर्थः ।

रग.

( ३ ) 'नित्यानन्दमनौपम परमज सर्वत्रग सुस्थिर, सर्वज्ञ प्रतिबोधमात्रममल पूर्ण गुणैरच्युतै. । विश्वोत्पत्तिलयस्थितिप्रमतिसन्मोक्षे पर कारण, प्रेष्ठ मे सतत प्रियाप्रियतम नित्य सदोपास्महे ॥ यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यल, बट् तद्दर्शतमित्यमेव निहित देवस्य भर्गो महत् । वायो रामवचोनय प्रथमक पृक्षो द्वितीय वपुर्मध्वो यत्तु तृतीयक कृतमिदं भाष्य हि तेन प्रभौ ॥' 'हनुशब्दो ज्ञानवाची हनुमान्मतिशब्दित. । रामस्य स्वृतरूपस्य वाचस्तेना नयन्त हि । भृतमो भीम इत्युक्तो वाचो मा मातर.

---

पुत्रो माण्डूकायनीपुत्रात् । माण्डूकायनीपुत्रो माण्डूकीपुत्रात् । माण्डूकीपुत्र शाण्डिलीपुत्रात् । शाण्डिलीपुत्रो राथीतरीपुत्रात् । राथीतरीपुत्र क्रौञ्चिकीपुत्राभ्याम् । क्रौञ्चिकीपुत्रौ वैदभृतीपुत्रात् । वैदभृतीपुत्रो भालुकीपुत्रात् । भालुकीपुत्र प्राचीनयोगीपुत्रात् । प्राचीनयोगीपुत्र साञ्जीवीपुत्रात् । साञ्जीवीपुत्र कार्शकेयीपुत्रात् । कार्शकेयीपुत्र —॥ प्राश्नीपुत्रादासुरिवासिन । प्राश्नीपुत्र आसुरायणात् । आसुरायण आसुरे । आसुरिर्याज्ञवल्क्यात् । याज्ञवल्क्य उद्दालकात् । उद्दालकोऽरुणात् । अरुण उपवेशे । उपवेशि कुश्रे । कुश्रिर्वाजश्रवस । वाजश्रवा जिह्वावतो बाध्योगात् । जिव्हावान् बाध्योगोऽसिताद्वार्षगणात् । असितो वार्षगणो हरितात्कश्यपात् । हरित कश्यप शिल्पात् कश्यपात् । शिल्प कश्यप कश्यपान्नैध्रुवे । कश्यपो नैध्रुविर्वाच । वागम्भिण्या । अम्भिण्यादित्यात् । आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥ ), रग औपस्वस्तीपुत्रात् । औपस्वस्तीपुत्र ( औपस्वस्थीपुत्रात् । औपस्वस्थीपुत्र ) ( माण्डूकीपुत्रात् । माण्डूकीपुत्र ॰ ) क्रौञ्चिकीपुत्राभ्याम् । क्रौञ्चिकीपुत्रौ ( क्रौञ्चिकीपुत्रात् । क्रौञ्चिकीपुत्र ) ( आसुरिवासिन ॰ ) वागम्भिण्या । अभिण्यादित्यात् ( वागम्भिण्यात् । अम्भिण्य आदित्यात् ), मध्व औपस्वस्तीपुत्रात् । औपस्वस्तीपुत्र ( औपस्वस्थीपुत्रात् । औपस्वस्थीपुत्र ) पाराशरीपुत्रात् । पाराशरीपुत्र कात्यायनीपुत्रात् ( कात्यायनीपुत्रात् ) वात्सीपुत्र पाराशपुत्रात् । पाराशरीपुत्र वार्कारुणीपुत्रात् ( वात्सीपुत्र वार्कारुणीपुत्रात् ) ( वार्कारुणीपुत्रो वार्कारुणीपुत्रात्॰ ) आलम्बीपुत्रात् । आलम्बीपुत्रो ( आलम्बिनीपुत्रात् । आलम्बिनीपुत्रो ) वैदभृतीपुत्रात् । वैदभृतीपुत्र कार्शकेयीपुत्रात् । कार्शकेयीपुत्र ( वैधृतीपुत्रात् । वैधृतीपुत्र कार्षकेयीपुत्रात् । कार्षकेयीपुत्र ) दासुरि ( दासुरी ) वाजश्रवस. । वाजश्रवा ( वाजस्रवस । वाजस्रवा ) समानमा ( समान ) माहित्थे । माहित्थिर्वा ( माहित्थे । माहित्थिर्वा ) वचसो ( वर्चसो ) यज्ञवचा ( यज्ञवर्चा ).

स्मृताः । ऋगाद्या इतिहासश्च पुराण पञ्चरात्रकम् । प्रोक्ताः सप्त शिवास्तत्र शयो भीमस्ततः स्मृतः । मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम्। मध्व आनन्द तीर्थः स्यात्तृतीया मारुती तनुः । इति सूक्तगत रूपत्रय-मेतन्महात्मनः। यो वेद वेदवित्स स्यात्तत्त्ववित्तत्प्रसादतः । साधको रामकार्याणां तत्समीपगत· सदा । हनुमान्प्रथमो ज्ञेयो भीमस्तु बहुभुक्पितो. । पूतनाक्षयकारी च द्विती यस्तु तृतीयकः । पूर्णप्रज्ञस्तथाऽऽनन्दतीर्थनामा प्रकीर्तितः । दशेति सर्वमुद्दिष्ट सर्वे पूर्णमिहोच्यते । प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञस्तत. स्मृतः । आसमतात्पतित्वे तु गूढ कलियुगे हरिम् । असत्यमप्रतिष्ठ तु जगदेतदनीश्वरम् । वदद्भिर्गूहित सन्त तृतीयोऽसुर्मथायति । येन विष्णोर्हि वर्पाख्यान् गुणानज्ञासिषु. परान् । ईशानासः सूरयश्च निगूढान्निर्गुणोक्तिभिः । त्रेताया द्वापरे चैव कलौ चैते क्रमात्त्रयः । एतेषां परमो विष्णुर्नेता सर्वेश्वरेश्वरः । स्वयमुब्रह्मसज्ञोऽसौ परस्मै ब्रह्मणे नमः ॥ ' २ति च । ३० । बळित्था तद्वपुषे धायि दर्शत देवस्य भर्गः सहसो यतो जनि । यदीमुप ह्वरते साधते मतिर्ऋतस्य धेना अनयन्त सस्रुतः ॥ पृक्षो वपुः पितुमान्नित्य आ शये द्वितीयमा सप्तशिवासु मातृषु । तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषणः ॥ निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः शवसा क्रन्त सूरय. । यदीमनु प्रदिवो मध्व आधवे गुहा सन्त मातरिश्वा मथायति । प्र यत्पितुः परमान्नीयते पर्या पृक्षुधो वीरुधो दसु रोहति । उभा यदस्य जनुष यदिन्वत आदिद्यविष्ठो अभवद्घृणा शुचिः । आदिन्मातॄराविशद्यास्वा शुचिरहिंस्यमान उर्विया वि वावृधे । अनु यत्पूर्वा अरुहत्सनाजुवो नि नव्यसीष्ववरासु धावते ॥ पूर्णागण्यगुणोदारधाम्ने नित्याय वेधसे । अमन्दानन्दसान्द्राय प्रेयसे विष्णवे नम. ॥ मध्व.

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविर
चिते श्रीमद्बृहदारण्यकोपनिषद्भाष्येऽ
ष्टमोऽध्याय. ॥

इति षष्ठोऽध्याय ॥

# बृहदारण्यकोपनिषत्समाप्ता ।



# ईशोपनिषत्

ईश्वरस्य सर्वव्यापित्व, धनैषणात्याग

[1]ईशा वास्यमिदᳲ सर्वं यत्किंच जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृध कस्य स्विद्ध
नम् ॥

( १ ) ईशा वास्यमित्यादयो मन्त्रा· कर्मस्वविनियुक्ताः । तेषामकर्मशेषस्याऽऽत्मनो याथात्म्यप्रकाशकत्वात्। तस्मादेते मन्त्रा आत्मनो याथात्म्यप्रकाशनेनाऽऽत्मविषय स्वाभाविकमज्ञान निवर्तयन्त. शोकमोहादिससारधर्मविच्छित्तिसाधनमात्मैकत्वादिविज्ञानमुत्पादयन्ति — ईशा वास्यमित्यादि । ईष्टे इतीट्, तेन ईशा । ईशिता परमेश्वरः परमात्मा सर्वस्य । स हि सर्वमीष्टे सर्वजन्तूनामात्मा सन् प्रत्यगात्मतया । तेन स्वेन रूपेणा त्मनेशा वास्य आच्छादनीयम् । किम् । इद सर्वं, यत्किंच यत्किंचिज्जगत्यां पृथिव्या जगत्तत्सर्वं, स्वेनात्मनेशेन प्रत्यगात्मतयाऽहमेवेदं सर्वमिति परमार्थसत्यरूपेणानृतमिद सर्वं चराचरमाच्छादनीय, स्वेन परमात्मना। यथा चन्दनागर्वादेरुदकादिसबन्धजक्लेदादिजमौपाधिक दौर्गन्ध्य तत्स्वरूपनिघर्षणेनाऽऽच्छाद्यते स्वेन पारमार्थिकेन गन्धेन, तद्वदेव हि स्वात्मन्यध्यस्त स्वाभाविक कर्तृत्वभोक्तृत्वादिलक्षण जगद्द्वैतरूप जगत्यां पृथिव्यां, जगत्यामित्युपलक्षणार्थत्वात्सर्वमेव नामरूपकर्माख्य विकारजात परमार्थसत्यात्मभावनया त्यक्त स्यात् । एवमीश्वरात्मभावनया युक्तस्य पुत्राद्येषणात्रयसन्यासे एवाधिकारो न कर्मसु । तेन त्यक्तेन त्यागेनेत्यर्थ । न हि त्यक्तो मृत· पुत्रो वा भृत्यो वा आत्मसबन्धिताया अभावादात्मान पालयति, अतस्त्यागेनेत्ययमेव वेदार्थः । भुञ्जीथाः पालयेथाः । एव त्यक्तैषणस्त्व मा गृधः, गृधिमाकाङ्क्षां मा कार्षीः. धनविषयाम् । कस्य स्विद्धन कस्यचित्परस्य स्वस्य वा धन, मा काङ्क्षीरित्यर्थः । स्विदित्यनर्थको निपात । अथवा, मा गृध । कस्मात् । कस्य स्विद्धनमित्याक्षेपार्थ., न कस्यचिद्धनमस्ति यद्गृध्येत । आत्मैवेद सर्वमितीश्वरभावनया सर्वं त्यक्त, अत आत्मन एवेद सर्वं, आत्मैव च सर्वं, अतो मिथ्याविषया गृधिं मा कार्षीरित्यर्थः । एवमात्मविद. पुत्राद्येषणात्रयसन्यासेनाऽऽत्मज्ञाननिष्ठतया आत्मा रक्षितव्य इत्येष वेदार्थः।

* शकर

( २ ) दध्यङ्ङाथर्वण ऋषि· स्वशिष्य पुत्र वा गर्भाधानादिभि. सस्कारै. सस्कृतशरीरमधीतवेदमुत्पादितपुत्र यथाशक्त्यनुष्ठितयज्ञमपाप नि.स्पृह यमनियमवन्तमतिथिपूजापनीतकिल्बिष मुमुक्षुमुपसन्न शिक्षयन्नाह— ईशा वास्य इद सर्वम् । ईशा ' ईश ऐश्वर्ये ' तृतीयान्तस्यैतद्रूपम् । यदीशनेन, वास्य वसनीय ममेदमित्यनया भावनया आच्छादनीय इद सर्वम् ।

यत्किञ्च । यत्किञ्चशब्दो भिन्नक्रमः । किञ्च, यत् जगत्या पृथिव्यां जगत् जङ्गमादि स्वस्वामिसबन्धाभिलक्षित स्यात्, तेनानेन सर्वेण त्यक्तेन त्यक्तस्वस्वामिसबन्धेन भोगान् भुञ्जीथा. अनुभावयस्व । मा गृधः । ' गृधु अभिकाङ्क्षायाम् ' । माभिकाङ्क्षीः ममेदमिति धिय त्यज ।

¶ उवट

( ३ ) चिदचिदात्मकस्य प्रपञ्चस्य परमपुरुषायत्तस्वरूपस्थितिप्रवृत्तित्वमुपदिशति — तेन वास्य वसनीय व्याप्यमिति भावः ।

यद्वा सर्वाधारे स्वस्मिन्नेव सर्वं वास्य प्रतिष्ठापनीयम् ।

(१) ईउ १, शुस ४०।१, रामानुज ३।४।१४, मध्व ईशा वा ( ईशावा ), श्रीकठ ३।४।१३, श्रीकर १।२।७, २।२।४१, ३।४।१४ ईशा वा ( ईशावा ) स्विद्ध ( चिद्ध ).

* महीधर यत्किञ्चेत्यादि उवटवत् । शेष शंकरवत् ।

¶ शेष शकरवत् । उवटमहीधरकृतभाष्ये ईशोपनिषद· माध्यन्दिनपाठे स्त , न काण्वपाठे ।

जगदन्यथात्व गच्छत् । तत्राचिदशस्य भोग्यत्वाय स्वरूपविकाररूपमन्यथात्वम् । चिदशस्य तु भोक्तृत्वाय ज्ञानसकोचविकासादिस्वभावविकारेणान्यथात्वमिति भेदोऽनुसधेयः ।

जगत्यादिषु लोकेषु यत्किञ्चिद्भोक्तृभोग्यरूप जगदस्ति, तदिद सर्वमीशा वासुदेवेन वास्य धार्य चेति वाक्यार्थ ।

एव मुमुक्षोरीश्वरपारतन्त्र्यबोधमुत्पाद्य वैराग्यभूषितां वृत्तिमुपदिशति — तेन त्यक्तेन भुञ्जीथा । तेन जगता भोग्यताभ्रमविषयेणेति भाव· । त्यक्तेनाल्पत्वास्थिरत्वदु.खमूलत्वदु.खमिश्रत्वदु खोदर्कत्वदेहाभिमानमूलत्वादिस्वाभाविकब्रह्मानन्दानुभवविरुद्धरूपविषयदोषनिरूपण·पूर्वकपरित्यक्तेनोपलक्षित. सन् भुञ्जीथा. । भगवदुपासोपयुक्तदेहस्य धारणमात्रौपयिकमन्नपानादिक यागदानहोमार्चनाद्युपयोगिपरिजनपरिच्छदादिक च वर्ग भुञ्जीथा इत्यर्थ. । यद्वा, दोषसतकनिरूपणात्त्यक्तेन भोग्याभासेनोपलक्षितः सन् भुञ्जीथा । सर्वावासत्वेन प्रकरणप्राप्त प्रकृतमुक्तदोषप्रतिभट निरतिशयभोग्य वक्ष्यमाणोपायमूढेन (१) भुञ्जीथा इति योज्यम् । * नारायण

(४) स्वायभुवो मनुरेतैर्मन्त्रैर्भगवन्तमाकूतिसूनु यज्ञनामान विष्णु तुष्टाव । 'स्वायभुव· स्वदौहित्र विष्णु यज्ञाभिध मनु । ईशावास्यादिभिर्मन्त्रैस्तुष्टावाऽवहितात्मना । रक्षोभिरुग्रै सप्राप्तः खादितु मोचितस्तदा । स्तोत्र श्रुत्वैव यज्ञेन तान्हत्वाऽवध्यता गतान् । प्रादाद्धि भगवांस्तेषामवध्यत्व हरः प्रभु. । तैर्वध्यत्व तथाऽन्येषामतः कोऽन्यो हरे. प्रभुः ॥' इति ब्रह्माण्डे । भागवते चायमेवार्थ उक्तः । ईशस्यावासयोग्य ईशावास्यम् । जगत्या प्रकृतौ । तेन इशेन त्यक्तेन दत्तेन भुञ्जीथा· । 'स्वतःप्रवृत्त्यशक्तत्वादीशावास्यमिद जगत् । प्रवृत्तये प्रकृतिग यस्मात्स प्रकृतीश्वरः । तदधीनप्रवृत्तित्वात्तदीय सर्वमेव यत् । तद्दत्तेनैव भुञ्जीथा अतो नान्य प्रयाचयेत् ॥' इति ब्रह्माण्डे । मध्व

(५) इद सर्वं स्थावरात्मक जगत् जगत्या यत्किञ्चिज्जङ्गमात्मक प्राणिजात च सर्व ईशावास्य ईशेन शिवलिङ्गेन आवास्य आवासयोग्यम् । सर्वत्र धारण योग्यमित्यर्थ. । 'सर्वलिङ्ग स्थापयति पाणिमन्त्र पवित्रम्' (नाउ ३९) इति श्रुतेः । तस्मात्तेन शिवलिङ्गेन त्यक्तेन भुक्तशेषप्रसादेन भुञ्जीथाः । भुज पालनाभ्यवहारयोः इति धातो·( तुः ) । शिवोक्तप्रसाद एव भोक्तव्य इत्यर्थ. । मा गृधः कस्यचिद्धनमिति परमेश्वरेतरदेवता·प्रसादनिषेध. श्रौतानां विधीयते ।

श्रीकर १।२।७

कर्मनिष्ठा, कर्मलेपाभाव

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छत समा । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥**

(१) अथ इतरस्यानात्मज्ञतया आत्मग्रहणायाशक्तस्येदमुपदिशति मन्त्रः— कुर्वन्नेवेति । कुर्वन्नेवेह निर्वर्तयन्नेव कर्माण्यग्निहोत्रादीनि जिजीविषेज्जीवितुमिच्छेत् शत शतसख्याका. समाः सवत्सरान् । तावद्धि पुरुषस्य परमायुर्निरूपितम् । तथा च प्राप्तानुवादेन यज्जिजीविषेच्छत वर्षाणि तत्कुर्वन्नेव कर्माणीत्येतद्विधीयते । एव एवप्रकारेण त्वयि जिजीविषति नरे नरमात्राभिमानिनि इतः एतस्मादग्निहोत्रादीनि कर्माणि कुर्वतो वर्तमानात्प्रकारात् अन्यथा प्रकारान्तर नास्ति, येन प्रकारेणाशुभ कर्म न लिप्यते, कर्मणा न लिप्यते इत्यर्थः । अत. शास्त्रविहितानि कर्माण्यग्निहोत्रादीनि कुर्वन्नेव जिजीविषेत् । * शकर

(२) 'नाविशेषात्'—यद्यप्युक्तम् 'नियमाच्च' (ब्रसू. ३।४।७) इत्यत्राभिधीयते — 'कुर्वन्नेवेह कर्माणि जिजीविषेत्' इत्येवमादिषु नियमश्रवणेषु न विदुष इति विशेषोऽस्ति । अविशेषेण नियमविधानात् ।

३।४।१३

'स्तुतयेऽनुमतिर्वा'—यद्यप्यत्र प्रकरणसामर्थ्याद्विद्वानेव कुर्वन्निति सबध्येत, तथाऽपि विद्यास्तुतये कर्मानुज्ञान-

* शेष शकरवत् । 'कस्य स्वित्' इत्यस्य शकरकृतद्वितीयार्थो न कृत ।

* महीधर अर्थद्वय, शकरवत् उवटवच्च ।

(१) ईउ २, शुस ४०।२, **अशकर भास्कर रामानुज निंबार्क** ३।४।७, १३, १४, **ब्रमध्व** ३।४।७, **श्रीकठ** ३।४।७, १३, **श्रीकर** ३।४।१, १३, १४, **विज्ञान** ३।४।७, १३, १४, **बलदेव** ३।४।७, १३, १४, १८

मेतद्द्रष्टव्यम्। 'न कर्म लिप्यते नरे' इति हि वक्ष्यति। एतदुक्तं भवति — यावज्जीवं कर्म कुर्वत्यपि विदुषि पुरुषे न कर्म लेपाय भवति विद्यासामर्थ्यादिति। तदेव विद्या स्तूयते।

* ब्रशाकर. ३।४।१४

( ३ ) विदुषोऽध्ययनस्य ज्ञानार्थत्वात्, तेन च कर्माधिकारोपपत्तेर्विदुषः अविदुषश्चाविशेषात्कुर्वन्नेवेति।

× भास्कर ३।४।१३

( ४ ) निःस्पृहस्यापि योगिनो ज्ञाननिमित्ते कर्मण्यधिकार इत्येतमर्थमाह — कुर्वन्नेव। कुर्वन्नेव कर्माणि मुक्तिहेतुकानि इह लोके जिजीविषेत्। जिजीविषेरिति पुरुषव्यत्ययः। प्रत्यक्षकृतत्वान्मन्त्रस्य। जीवितुमिच्छेः पथ्यहितमितभक्षणेन। शतं समा इत्युपलक्षणार्थम्। यावदायुःपर्यवसानमित्यर्थः। एवं त्वयि, तवेति विभक्तिव्यत्ययः। मुक्तिरस्तीति शेषः। नान्यथेतोऽस्ति, इतः प्रकारादन्यथा मुक्तिर्नास्ति। एतदुक्तं भवति — यथा स्वर्गप्राप्तौ नानाभूताः प्रकाराः सन्ति, न तथा मुक्तावित्यर्थः। ननु कर्मणः फलेन भवितव्यं, अथ कथं मुक्तिप्राप्तिरित्येतदाशङ्क्याह— न कर्म लिप्यते नरे। न हि मुक्त्यर्थं क्रियमाणं कर्म नरे मनुष्ये सम्बध्यते। मुक्तिप्रदानेनोपक्षीणशक्तित्वात्। अनेनैतद्दर्शयति—यावदिच्छाप्रवृत्तिस्तावत्कर्मस्वधिकार इति।

§ उवट

( ५ ) एवं विरक्तस्य विदुषः फलसङ्गकर्तृत्वादिरहितो ब्रह्मविद्याङ्गभूतः कर्मयोगो यावज्जीवमनुष्ठेय इत्याह— न कदाचिदपि विद्याङ्गं कर्म परित्यजेदित्येवकाराभिप्रायः। त्वयि, ईश्वरपरतन्त्ररूपज्ञानतया तदाज्ञापरिपालनरूपकर्मानुष्ठानेऽधिकारपूर्तिमतीति भावः। एवमेवानुष्ठानमित्यर्थः। उक्तमर्थं व्यतिरेकेण दृढीकरोति—नान्यथेतोऽस्तीति। इतः कर्मानुष्ठानादन्यथा प्रकारान्तरं नास्तीत्यर्थः। 'नान्यः पन्थास्तत्तोषकारणम्' इति स्मृतेः।

नन्वीश्वरवेदिनोऽपि कर्मानुष्ठानादवश्यभावी बन्धः स्यादित्याशङ्क्याह—न कर्म लिप्यते नर इति। ब्रह्मविद्याविरुद्धेषु कर्मफलेषु न रमते इति नरः। प्रस्तुतब्रह्मविदि नरे विद्याङ्गतया क्रियमाणं कर्म न लिप्यते न स्वर्गादिहेतुर्भवति। प्रत्युत शुद्धप्रत्यगात्मसाक्षात्कारमेवोत्पादयतीति भावः। यत्तु 'कुर्वन्नेवेह कर्माणि' इत्ययं विधिरविद्वद्विषय एव, न तु ब्रह्मविद्विषयः, तस्य विधिनिषेधशास्त्रवश्यत्वाभावादिति व्याख्यानं, तत्प्रकरणविरुद्धम् 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह' इत्याद्युपरितनविध्यन्तरविरुद्धं चेति न वेदविदो बहु मन्वते।

* नारायण.

( ६ ) यच्चोक्तं 'कुर्वन्नेव' इत्यात्मविद ज्ञानाद्यावर्त्य यावज्जीवं कर्मानुष्ठाने नियमयतीति, तन्नोपपद्यते। कुतः, अविशेषात्। न ह्ययं नियमः फलसाधनभूतस्वतन्त्रकर्मविषयः, इति विशेषहेतुरस्ति। विद्याङ्गभूतकर्मविषयतयाऽप्युपपत्तेः।

‡ रामानुज ३।४।१३

( ७ ) अकुर्वतः कर्म न लिप्यते इति नास्ति। 'अज्ञस्य कर्म लिप्येत कृष्णोपास्तिमकुर्वतः। ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद्ध्रुवम्। अतोऽलेपेऽपि लेपः स्यादतः कार्यैव सा सदा॥' इति नारदीये।

मध्व.

आत्महन्तु तमोल्लोक.

**असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः।**
**तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः॥**

( १ ) अथेदानीमविद्वन्निन्दार्थोऽयं मन्त्र आरभ्यते — असुर्याः, परमात्मभावमद्वयमपेक्ष्य देवादयोऽप्यसुराः, तेषां च स्वभूता लोका असुर्या नाम। नामशब्दोऽनर्थको निपातः। ते लोकाः, कर्मफलानि लोक्यन्ते दृश्यन्ते भुज्यन्त इति जन्मानि। अन्धेन अदर्शनात्मकेनाज्ञानेन तमसा आवृता आच्छादिताः। तान्स्थावरान्तान्

---

* निंबार्क ३।४।१३, १४, विज्ञान ३।४।१४ ब्रशाकरवत्।

× ३।४।१४ ब्रशाकरवत्।

§ तात्पर्यं शंकरवत्।

* विधिस्व शंकरवत्।

‡ ३।४।१४ ब्रशाकरवत्। श्रीकंठ, श्रीकर ३।४।१३ रामानुजवत्।

(१) ईउ ३, शुसं ४०।३ प्रेत्याभि ( प्रेत्यापि ); बलदेव ३।१।१३.

प्रेत्य त्यक्त्वेम देह अभिगच्छन्ति यथाकर्म यथाश्रुतम् । ये के चात्महन. । आत्मान घ्नन्तीत्यात्महन: । के ते, जना· ये अविद्वास । कथ ते आत्मान नित्य हिंसन्ति । अविद्यादोषेण विद्यमानस्याऽऽत्मनस्तिरस्करणात् । विद्यमानस्याऽऽत्मनो यत्कार्यं फल अजरामरत्वादिसवेदनलक्षण, तत् हतस्येव तिरोभूत भवतीति प्राकृता अविद्वासो जना आत्महन उच्यन्ते । तेन ह्यात्महननदोषेण ससरन्ति ते । शकर

( २ ) इदानीं स्वर्गादिप्राप्तिहेतुभूतानि कर्माणि ये कुर्वन्ति ते निन्द्यन्ते — असुर्या नामेति ।

ये के चात्महनो जना:, आत्मान घ्नन्ति ये जनास्ते आत्महन. । आत्मान च ते घ्नन्ति ये स्वर्गप्राप्तिहेतूनि कर्माणि कुर्वन्ति । ते हि जनित्वा म्रियन्ते मृत्वा च जायन्ते । एवमहर्निश नाश प्राप्नुवन्ति ।

* उवट.

( ३ ) नामेति प्रसिद्धौ । असुरस्वभावानुभाव्या निरयसज्ञिता लोका: सन्तीति शास्त्रप्रसिद्धमिति भाव: । तान्विशिनष्टि—अन्धेन तमसाऽऽवृता इति । अन्धेन अतिगाढेन तमसा अन्धकारेण आवृता व्याप्ता । आलोकप्रसङ्गरहिता इति भाव ।

तान्, पृथिव्यन्तरिक्षस्वर्गरौरवादिसज्ञितान्निरयान्निरन्तर गच्छन्तीति भाव: ।

† नारायण.

( ४ ) सुष्ठुरमणविरुद्धत्वादसुराणा प्राप्यत्वाद्वा सुर्या: । 'न च रमन्त्यहो असदुपासनयाऽऽत्महन:' इत्युक्तत्वात् । 'महादु.खैकहेतुत्वात्प्राप्यत्वादसुरैस्तथा । असुर्या नाम ते लोकास्तान्यान्ति विमुखा हरौ ॥' इति वामने । ये के चेत्यनेन नियम उक्त: । 'नियमेन तमो यान्ति सर्वेऽपि विमुखा हरौ' इति च ।

मध्व.

( ५ ) नाम प्रसिद्धम् । ते ये, यत्तदोर्व्यत्यय: ।

$ महीधर.

आत्मस्वरूपम्

अनेजदेक मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्षत् ।
तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥

( १ ) यस्याऽऽत्मनो हननादविद्वास. ससरन्ति, तद्विपर्ययेण विद्वासो जना मुच्यन्ते, ते नात्महन., तत्कीदृशमात्मतत्त्वमित्युच्यते—अनेजदिति । अनेजत् न एजत् । एजृ कम्पने । कम्पन चलन स्वावस्थाप्रच्युति:, तद्वर्जित, सर्वदैकरूपमित्यर्थ: । तच्चैक सर्वभूतेषु । मनस· सकल्पादिलक्षणाज्जवीयो जववत्तरम् । कथ विरुद्धमुच्यते—ध्रुव निश्चलमिद, मनसो जवीय इति च । नैष दोष· । निरुपाध्युपाधिमत्त्वेनोपपत्ते: । तत्र निरुपाधिकेन स्वेन रूपेणोच्यते अनेजदेकमिति । मनसोऽन्त.करणस्य सकल्पविकल्पलक्षणस्योपाधेरनुवर्तनादिह देहस्थस्य मनसो ब्रह्मलोकादिदूरगमन सकल्पेन क्षणमात्राद्भवतीत्यतो मनसो जविष्ठत्व लोके प्रसिद्धम् । तस्मिन्मनसि ब्रह्मलोकादीन्द्रुत गच्छति सति प्रथम प्राप्त इवाऽऽत्मचैतन्यावभासो गृह्यते, अतो मनसो जवीय इत्याह । नैनद्देवा:, द्योतनाद्देवाश्चक्षुरादीनीन्द्रियाणि एतत् प्रकृतमात्मतत्त्व नाऽऽप्नुवन् । न प्राप्तवन्त: ।

यस्माज्जवनान्मनसोऽपि पूर्वमर्षत् पूर्वमेव गत, व्योमवद्व्यापित्वात् । सर्वव्यापि तत् आत्मतत्त्व सर्वससारधर्मवर्जित स्वेन निरुपाधिकेन स्वरूपेणाविक्रियमेव सदुपाधिकृता: सर्वा. ससारविक्रिया अनुभवतीव, अविवेकिनां मूढानामनेकमिव च प्रतिदेह प्रत्यवभासते इत्येतदाह — तद्धावत: द्रुत गच्छत: अन्यान् आत्मविलक्षणान्मनोवागिन्द्रियप्रभृतीन् अत्येति अतीत्य गच्छतीव । इवार्थं स्वयमेव दर्शयति—तिष्ठदिति । स्वयमविक्रियमेव सदित्यर्थ. । तस्मिन्नात्मतत्त्वे सति नित्यचैतन्यस्वभावे मातरिश्वा, मातरि अन्तरिक्षे श्वयति गच्छतीति मातरिश्वा वायु: सर्वप्राणभृत्क्रियात्मक:, यदाश्रयाणि कार्यकरणजातानि यस्मिन्नोतानि प्रोतानि च, यत्सूत्रसज्ञक सर्वस्य जगतो विधारयितृ, स मातरिश्वा । अप: कर्माणि प्राणिना चेष्टालक्षणानि, अग्न्यादित्यपर्जन्यादीना ज्वलन-

---

* शेष शंकरवत् । अशेषसदर्भतात्पर्य शकरवद्भाति ।

† शेष शंकरवत् । व्याख्यानगतान्धकारालोकशब्दौ अज्ञानज्ञानपरावेवेति भासते ।

$ शेष शकरोवटयो: समन्वयपरम् ।

(१) ईउ ४, शुम ४०१४ मर्षत् ( मर्शत् )

दहनप्रकाशाभिवर्षणादिलक्षणानि, दधाति विभजतीत्यर्थः। धारयतीति वा। शकर

(२) इदानीमधस्तनयमनियमवता मुमुक्षूणां यथाभूत परब्रह्म आत्मत्वेनोपास्य तदाह — एकमद्वितीय विज्ञानघनरूपेण।

मनस्तावच्छीघ्र भवति, ततोऽपि शीघ्रतर, प्रसवदानेन कारणभूतत्वात्। नैनद्देवा अप्नुवन् न चैतत्तत्त्व देवा अपि प्राप्तु शक्ता., सूक्ष्मत्वात्। पूर्वमर्शत्। रिशतिर्हिंसाकर्मा। अविनश्यदास्ते, अनादिनिधनमित्यर्थः। तद्धावत., तदः स्थाने यदो वृत्तिरुद्देश्यत्वात्। यच्च धावतोऽन्यान्पुरुषादीनत्येति अतिक्रम्य गच्छति। तथा च तिष्ठत् सर्वत्र स्थितम्। सर्वशक्तित्व सर्वगतत्व चानेन व्याख्यायते। तस्मिन्नपः। अत्रापि यदो वृत्तिः। अ(य)स्मिंश्चापः कर्माणि मातरिश्वा वायु॰ दधाति स्थापयति। सर्वाणि कर्माणि यज्ञदानहोमादीनि समिष्टयजूंषि वायौ स्थाप्यन्ते। 'स्वाहा वातेधा' इति वायो प्रतिष्ठत्वाभिधानात्। समष्टिव्यष्टिरूपो ह्यसाविति वायुरपि यस्मिन्कर्माणि स्थापयति। यागहोमादीना परम निधानमित्यर्थः। * उवट.

(३) एक प्रधानतमम्। स्वाधिकसमानद्वितीय रहितमिति वा। परमसाम्यमापन्ना अपि मुक्ता ईशाधीना एवेति भाव। निष्कम्प वेगवत्तर चेति विरोध॰ प्रतीयते। परिहारस्तु, विभुत्वाद्वस्तुतो नैजति, तत एव मनसो गोचरदेशे वर्तत इति मनसो जवीय इत्युपचर्यत इति। किञ्च देवा ब्रह्मरुद्रादयः। पूर्वमर्षत्, प्रागेव सर्वान्देवान्प्राप्नुवदित्यर्थ.। पूर्वमेव प्राप्त, न प्राप्नुवन्निति च विरोधः। विभुतया प्राप्तमपि कर्मसकुचितज्ञाना क्षेत्रज्ञा आचार्योपदेशमन्तरेण स्वबुद्ध्या नाऽऽप्नुवन्तीति परिहार.।

तस्मिन्सर्वावासेऽवस्थितो मातरिश्वा वायुः। अप इत्युपलक्षण, पयोधरग्रहनक्षत्रतारकादिक बिभर्तीत्यर्थः। सर्वाधारभूतेन सर्वेश्वरेण विधृतो वायुस्तत्तत्तयैव बिभर्तीत्यभिप्रायः। नारायण.

(४) 'अनेजन्निर्भयत्वाच्चदेक प्राधान्यतस्तथा। सम्यग्ज्ञातुमशक्यत्वादगम्य तत्सुरैरपि। स्वय तु सर्वान गमत्पूर्वमेव स्वभावतः। अचिन्त्यशक्तितश्चैव सर्वगत्वाच्च तत्परम्। द्रवतोऽत्येति सतिष्ठत्तस्मिन्कर्माण्यधान्मरुत्। मारुत्येव यतश्रेष्ठा सर्वा ता हरयेऽर्पयेत्॥' इति ब्रह्माण्डे। ऋष ज्ञाने। मध्व

(५) आप्यन्ते प्राप्यन्ते सुखदुःखानि याभिस्ता आप. कर्माणि। 'आप्नोतेर्ह्रस्वश्च' इति क्विप् धातोर्ह्रस्वश्च। * महीधर

तदेजति तन्नैजति तद्दूरे तद्वन्तिके।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः॥

(१) न मन्त्राणां जामितास्तीति पूर्वमन्त्रोक्तमप्यर्थं पुनराह—तदेजतीति। तत् आत्मतत्त्व यत्प्रकृत, तदेजति चलति, तदेव च नैजति स्वतो नैव चलति, स्वतोऽचलमेव सच्चलतीवेत्यर्थ.। किञ्च तद्दूरे वर्षकोटिशतैरप्यविदुषामप्राप्यत्वाद्दूर इव। तत् उ अन्तिक इति च्छेद.। तद्वन्तिके समीपेऽत्यन्तमेव विदुषामात्मत्वात्। न केवल दूरेऽन्तिके च। तदन्तः अभ्यन्तरे अस्य सर्वस्य 'य आत्मा सर्वान्तर.' इति श्रुतेः। अस्य सर्वस्य जगतो नामरूपक्रियात्मकस्य तत् उ अपि सर्वस्यास्य बाह्यतः, व्यापकत्वादाकाशवत्। निरतिशयसूक्ष्मत्वादन्त। 'प्रज्ञानघन एव' इति च शासनान्निरन्तर च। शकर.

(२) एव कारणरूपमात्मानमुद्दिश्य अथेदानीं कार्यरूपेणोद्दिशति — तदेजति। तदेव सर्वप्राणिरूपेणावस्थित सदेजति कम्पवद्भवति क्रियावद्भवति। तन्नैजति तदेव च न चलति स्थावररूपावस्थित सत्। तद्दूरे तदेव च दूरे आदित्यनक्षत्रादिरूपेणावस्थितम्। तत् उ अन्तिके। उ॰ समुच्चये। तदेव च अन्तिके पृथिव्यादिरूपेणावस्थितम्। 'सर्वं खल्विद ब्रह्म' इत्येतद्दर्शनार्थो ग्रन्थः। तदन्तरस्य सर्वस्य। तदेव चास्य सर्वस्य प्राणिजातस्य विज्ञानघनरूपेणावस्थित सदन्तर्मध्यत आस्ते। तदु सर्वस्यास्य बाह्यतः। तदेव च सर्वस्यास्य प्राणिजातस्य बाह्यतः जनरूपेणावस्थितमास्ते।

* शेष शंकरवत्

* 'पूर्वमर्शत्' इति 'तस्मिन्नप' इत्यादि च शकरवत् उवटवच्च। 'तद्धावत' इत्यत्र तच्छब्दार्थ उवटवत्। शेष शकरवत्।

(१) ईउ ५, शुस ४०।५, विज्ञान ४।४।१९

चेतनाचेतनरूपमनन्त सर्वग ब्रह्मेत्यर्थः । अस्या उपासनाया अर्चिराद्यनुचिन्तन नास्तीत्येव केचिदाहुः, इहैव ब्रह्मप्राप्तेः । * उवट

( ३ ) तदितरेषा गृहान्तर्वर्तिना तदानीं बहिष्ठत्व न सभवति, बहिर्वसतां च नान्तर्वर्तित्वमिति ब्रह्मणि वैचित्र्यमिति भाव. । यद्यप्यणुषु नान्तर्वर्तिता सभवति, तथापि प्रतिघातादविभक्तदेशतया वर्तित्वमात्रेणान्तर्वर्तित्वोक्ति । एव बहिर्व्याप्तिरप्यविभुद्रव्यापेक्षयैव, न तु विभुद्रव्यापेक्षयापीति द्रष्टव्यम् । † नारायण

( ४ ) तदेजति तत एव एजत्यन्यत् । तत्स्वय नैजति। ‘ ततो बिभेति सर्वोऽपि न बिभेति हरि. स्वयम्। सर्वगत्वात्स दूरे च बाह्येऽन्तश्च समीपग ॥ ’ इति तत्त्वसहितायाम् । मध्व

आत्मदर्शनजन्य नि श्रेयसम्

**यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।**
**सर्वभूतेषु चाऽऽत्मान ततो न विजुगुप्सते ॥**

( १ ) यस्तु । य. परिव्राट् मुमुक्षुः सर्वाणि भूतान्यव्यक्तादीनि स्थावरान्तानि आत्मन्येवानुपश्यति, आत्मव्यतिरिक्तानि न पश्यतीत्यर्थः । सर्वभूतेषु च तेष्वेव च आत्मान तेषामपि भूताना स्वमात्मान आत्मत्वेन, यथाऽस्य देहस्य कार्यकरणसघातस्यात्माऽह सर्वप्रत्ययसाक्षिभूतश्चेतयिता केवलो निर्गुणोऽनेनैव स्वरूपेणाव्यक्तादीना स्थावरान्तानामहमेवाऽऽत्मेति सर्वभूतेषु चाऽऽत्मान निर्विशेष यस्त्वनुपश्यति स ततस्तस्मादेव दर्शनान्न विजुगुप्सते विजुगुप्सा घृणा न करोति । प्राप्तस्यैवानुवादोऽयम् । सर्वा हि घृणाऽऽत्मनोऽन्यद्दुष्ट पश्यतो भवति, आत्मानमेवात्यन्तविशुद्ध निरन्तर पश्यतो न घृणानिमित्तमर्थान्तरमस्तीति प्राप्तमेव, ततो न विजुगुप्सत इति । शकर

( २ ) सर्वभूतेषु चात्मान अवस्थित तद्व्यतिरिक्त (न) पश्यति । ततो न विचिकित्सति न सशेते । एव पश्यतो योगिन परब्रह्मरूपाण्यात्मसस्थानि भवन्ति विज्ञानघनानन्दैकत्वादिति । अतो विचारात् न(?) विनिवर्तते । * उवट.

( ३ ) एव सर्वस्य ब्रह्मात्मकत्वमुक्तम् । अथ सर्वं जगद्ब्रह्मात्मकमित्यनुसधानस्यैहिकं प्रयोजनमाह—य पर मात्मज्ञानाधिकृतः सर्वाणि भूतानि ब्रह्मादिस्तम्बपर्यन्तानि आत्मन्येव परमात्मन्येव अनुस्यूतानि पश्यति ध्यायतीत्यर्थ. । पृथिव्यादिभ्रियमाणमपि तन्मुखेन परमात्मन्येव स्थितमित्येवकाराभिप्रायः । तुशब्देनास्याऽधिकारिणो माहात्म्यविशेषो द्योत्यते । किञ्च सर्वभूतेषु चाऽऽत्मान परमात्मान य. पश्यतीति । इद व्याप्तिमात्रपरम्। परमपुरुषस्याऽनन्याधारत्वादिति भाव. । यच्छब्दस्य स इति प्रतिनिर्देशोऽध्याहार्य. । स उक्तविधज्ञानी । ततस्तेषु, सप्तम्यर्थे तसि. । ब्रह्मात्मकतया दृष्टेषु सर्वेषु भूतेष्वित्यर्थः । न विजुगुप्सते कुतश्चिदपि न बीभत्सते । स्वात्मविभूतिन्यायेन क्वचिदपि निन्दा न करोतीति भावः । नारायण.

( ४ ) ‘ सर्वग परमात्मान सर्वं च परमात्मनि । यः पश्येत्स भयाभावान्नात्मान गोप्तुमिच्छति ॥ ’ इति सौकरायणश्रुतिः । मध्व.

( ५ ) अथोपासनप्रकारमाह — यस्तु । अत आत्मज्ञस्य विचारनिवृत्तिः ।

§ महीधर.

**यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानत ।**
**तत्र को मोह क. शोक एकत्वमनुपश्यतः ॥**

( १ ) इममेवार्थमन्योऽपि मन्त्र आह — यस्मिन्सर्वाणि भूतानि । यस्मिन्काले यथोक्तात्मनि वा, तान्येव भूतानि सर्वाणि परमार्थात्मदर्शनादात्मैवाऽभूत् आत्मैव सवृत्तः परमार्थवस्तु विजानतः तत्र तस्मिन्काले, तत्रात्मनि वा, को मोहः कः शोकः । शोकश्च मोहश्च कामकर्मबीजमजानतो भवति, न त्वात्मैकत्व विशुद्ध गगनोपमं

* महीधर अर्थद्वयं, शकरवत् उवटवच्च ।
† शेष शकरवत् ।

(१) ईड ६ , शुस ४०।६ त्मन्येवा ( त्मन्नेवा ) विजुगुप्सते ( विचिकित्सति ), विज्ञान १।२।१

* शेष शकरवत् ।
§ ‘ ततो न ’ इत्यादि उवटवत् । शेष शकरवत् ।

(१) ईड ७ , शुस ४०।७ , ब्रशकर १।१।४, १।४।२२, २।१।१, ४।३।१४, निंबार्क १।१।३१ को मोह क शोक ( क शोक को मोह ), विज्ञान. १।२।१.

पश्यतः । को मोह कः शोक इति शोकमोहयोरविद्याकार्ययोराक्षेपेणासंभवप्रदर्शनात्सकारणस्य संसारस्यात्यन्तमेवोच्छेदः प्रदर्शितो भवति ।

* शंकर.

( २ ) 'तत्र को मोह ' इत्येवमाद्याः श्रुतयो ब्रह्मविद्यानन्तरं मोक्षं दर्शयन्त्यो मध्ये कार्यान्तरं वारयन्ति । ब्रशंकर १।१।४

( ३ ) एवं वैयधिकरण्येनोक्तं सर्वस्य ब्रह्मात्मकत्वं सामानाधिकरण्येनापि द्रढयस्तदनुध्यानस्य सद्यः शोकनिवर्तकत्वमाह—यस्मिन्प्रणिधानसमये विजानत 'ईशावास्यम्' इत्यारभ्य 'ततो न विजुगुप्सते' इत्यन्तेनोपदिष्टं स्वतन्त्रं परतन्त्रं वस्तुभेदं यथोपदेशं विविच्य जानत इत्यर्थः । नन्वेवमत्यन्तभेदाभ्युपगमे सर्वाणि भूतान्यात्मैवाऽभूदिति सामानाधिकरण्यं भज्येतेत्याशङ्कावारणाय 'यस्य पृथिवी शरीरम्' ( बृउ ३।२।१३ ) 'यस्य शरीरम्' ( बृउ ३।७।३ ) इत्यादिघटकश्रुतिसिद्धसंबन्धविशेषमाह—एकत्वमनुपश्यत इति । आकृतिव्यक्त्योरिव गुणगुणिनोरिव चात्यन्तभिन्नयोरेव जगद्ब्रह्मणोरेकत्वं विभागानर्हसंबन्धविशेषं पश्यतो विशदमनुध्यायत इत्यर्थः । एवं च सर्वाणि भूतान्यात्मैवाऽभूदिति सर्वभूतशरीरकः प्रतीतोऽभूदित्यर्थः । तत्राऽऽदौ प्रणिधानसमये को मोहः, स्वतन्त्रत्वादिभ्रमादिलक्षणो मोहो न संभवति । कः शोकः, परमात्मविभूतितयाऽवगते सर्वस्मिन्निर्ममत्वसिद्धौ पुत्रादिमरणराज्यादिहरणादावपि न कश्चिच्छोकः स्यादित्यर्थः । नारायण

( ४ ) यस्मिन्परमात्मनि सर्वभूतानि, स परमात्मैव तत्र सर्वभूतेष्वभूत् । एवं सर्वभूतेष्वेकत्वेन परमात्मानं विजानतः को मोह । ' यस्मिन्सर्वाणि भूतानि स आत्मा सर्वभूतगः । एवं सर्वत्र यो विष्णुं पश्येत्तस्य विजानतः । को मोहः कोऽथवा शोकः स विष्णुं पर्यगाद्यतः ' इति पिप्पलादशाखायाम् । पूर्वोक्तानुवादेन शोकमोहाभावोऽपि विजानतश्चात्रोच्यते । अभ्यासश्च सर्वगतत्वस्य तात्पर्यद्योतनार्थः । मध्व

* उवट, महीधर शंकरवत् । ' यस्मिन् ' ' तत्र ' इत्यनयो शंकरकृतद्वितीयार्थो न कृत । निंबार्के सर्वस्य ब्रह्मात्मकत्वं वाक्यार्थ ।

परमात्मस्वरूपम्

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् ।
कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥

( १ ) योऽयमतीतैर्मन्त्रैरुक्त आत्मा, स स्वेन रूपेण किंलक्षण इत्याहाय मन्त्रः । स पर्यगात्स यथोक्त आत्मा पर्यगात्परि समन्तादगाद्गतवान् आकाशवद्व्यापीत्यर्थं । शुक्रं शुद्धं ज्योतिष्मद्दीप्तिमानित्यर्थ । अकायमशरीरं, लिङ्गशरीरवर्जित इत्यर्थः । अव्रणमक्षतम् । अस्नाविरं, स्नावाः शिरा यस्मिन्न विद्यन्ते इत्यस्नाविरम् । अव्रणमस्नाविरमित्याभ्यां स्थूलशरीरप्रतिषेध । शुद्धं निर्मलमविद्यामलरहितमिति कारणशरीरप्रतिषेधः । अपापविद्धं धर्माधर्मादिपापवर्जितम् । शुक्रमित्यादीनि वचांसि पुंलिंगत्वेन परिणेयानि, स पर्यगादित्युपक्रम्य कविर्मनीषीत्यादिना पुंलिंगत्वेनोपसंहारात् । कविः क्रान्तदर्शी सर्वदृक् । ' नान्योऽतोऽस्ति द्रष्टा ' इत्यादिश्रुतेः । मनीषी मनस ईषिता, सर्वज्ञ ईश्वर इत्यर्थः । परिभूः सर्वेषां परि उपरि भवतीति परिभूः । स्वयंभूः स्वयमेव भवतीति, येषामुपरि भवति यश्चोपरि भवति स सर्वः स्वयमेव भवतीति स्वयंभूः । स नित्यमुक्त ईश्वरो याथातथ्यतः सर्वज्ञत्वाद्यथातथाभावो याथातथ्यं तस्माद्यथाभूतकर्मफलसाधनतः अर्थान्कर्तव्यपदार्थान्व्यदधाद्विहितवान्, यथानुरूपं व्यभजदित्यर्थः । शाश्वतीभ्यो नित्याभ्यः समाभ्यः संवत्सराख्येभ्यः प्रजापतिभ्य इत्यर्थः । शंकर.

( २ ) य एवमात्मानमुपास्ते स पर्यगात्परिगच्छति शुक्रं शुक्रं विज्ञानानन्दस्वभावमचिन्त्यशक्तिम् । अकायं, न विद्यते कायः शरीरं यस्य स तथोक्तः । अव्रणं कायरहितत्वादेव अस्नाविरं स्नायुरहितमकायत्वादेव, शुद्धमनुपहतं सत्त्वरजस्तमोभिः अपापविद्धं क्लेशकर्मविपाकाशयैरसंस्पृष्टम् । अकायमव्रणमस्नाविरमिति पुनरुक्तानि ' अभ्यासे भूयांसमर्थं मन्यते ' इत्यदोषः । इत्थंभूतं ब्रह्म प्रतिपद्यते । अथात्मोपासनायुक्तस्य फलमाह—यश्च कविः ।

( १ ) ईउ ८, शुसं ४०।८, ब्रशंकर १।१।४, रामानुज १।१।४, श्रीकर १।१।१२, १।३।२, विज्ञान २।२।२९

क्रान्तदर्शन., मनीषी मेधावी, परिभू. सर्वतो भविता विज्ञानबलात्, स्वयभू' स्वय ज्ञानबलाद्ब्रह्मरूपेण भविता, स याथातथ्यतोऽर्थान्व्यदधाद्यथास्वरूपमर्थान्विहितवान् त्यक्तस्वस्वामिसबन्धैरर्थैश्चेतनाचेतनैरुपभोग कृतवान् । शाश्वतीभ्योऽनन्ताभ्य. समाभ्योऽर्थाय, अनन्तवर्षप्राप्तये च कर्म कृतवान् । ननु कर्मजाड्याल्लोक. कर्मवान् भवति । सत्यम् । आत्मसस्कारक तु कर्म ब्रह्मभावजनक स्यात् । तस्मात्सोऽपि गच्छति शुक्रमकाय ब्रह्म इति ।

* उवट

( ३ ) पुनरप्येनमीशेशितव्यवेदिन वेदितव्येश्वरस्वहेयशोधनेन विशिष्टज्ञानयोगादिकमप्युपदिशति --य सर्वभूतान्तरात्मब्रह्मदर्शी स पर्यगात्प्राप्नुयादित्यर्थ । यद्वा, समाधिलब्धेनानुभवेन प्राप्नुयादिति सिद्धानुवाद । शुक्रमवदात स्वप्रकाशमित्यर्थ । अकाय, सर्वशरीरकमपि कर्मकृतहेयशरीररहितमित्यर्थ. । न तु दिव्यमङ्गलविग्रहरहितमित्यर्थ. । शुद्ध अनाघ्राताज्ञानादिदोषगन्धम् । अशनपानादिषडूर्मिरहित च । अपापविद्धम् । अज्ञानादे. कार्यकरणभूतैः पुण्यपापरूपकर्मभिरलीढमित्यर्थ' । एवमहेयहेयप्रत्यनीक परमात्मान स विद्वान्पर्यगादिति पूर्वेण सबन्ध. । एवरूपः परमात्मा प्राप्य., प्रापक, उपास्यश्च यस्य त ब्रह्मविद विशिनष्टि--कवि', व्यासादिवद्ब्रह्मस्वरूपदिव्यगुणादिप्रकाशकप्रबन्धविशेषाणा निर्मातेत्यर्थः । अथ वा, क्रान्तदर्शी । अथ ज्ञानयोगसाध्यप्रत्यगात्मसाक्षात्कारहेतुभूत जीवात्मयोगमाह--मनीषी, मनस ईशित्री बुद्धिर्मनीषा, तद्वान्मनीषी भगवत्स्वरूपगुणस्मृत्यभ्यासेन तदितरविषयवैराग्येण च प्रतिष्ठितप्रज्ञ इत्यर्थ । परिभूः, कामक्रोधादीन्परिभवतीति परिभूः । अनेन विरोधिनिवृत्तिरूपयोगाङ्गसेवनमुक्तम् । योगाभ्यासफलमाह — स्वयभूः । अन्यनिरपेक्षसत्ताक' सुख रूपतया स्वात्मदर्शीति यावत् । याथातथ्यतः यथावद्विविच्य । अर्थान्प्रष्टव्यार्थान्, ' तस्य वाचकः प्रणवस्तज्जपस्तदर्थभावनम्' इतिसूत्रोक्तान्व्यदधाद्धृदयेन धृतवानित्यर्थ. । सर्वान्तरायप्रशमनार्थमिति भावः । यद्वा, शुक्रमित्यादि द्वितीयान्तपदजात परिशुद्धजीवपरम् । तमपि स परमात्मा पर्यगात्परितो व्याप्य स्थित' इति प्रथमान्त पदजातं परमात्मपर योजनीयम् । तथा हि--कविः सर्वदर्शी, श्रीपञ्चरात्रादिप्रणेतेति वा । मनीषी मनःप्रभृतीनां जीवकरणानां नियन्ता । परितो भवतीति परिभूः सर्वव्यापी । स्वयमेव भवतीति स्वयभूः ' बहुधा विजायते ' इतिश्रुत्युक्तप्रसिद्धावतारशाली । अर्थान्कार्यपदार्थान् शाश्वतीभ्यः समाभ्यो यावद्विलयमवस्थातु याथातथ्यतो यथावद्विविच्योत्पादितवान्, न पुनरैन्द्रजालिकत्वेन बल प्रकाशितवानिति भाव. । नारायण.

( ४ ) ' शुक्र तच्छोकराहित्यादव्रण नित्यपूर्णतः । पावनत्वात्सदा शुद्धमकाय लिङ्गवर्जनात् । स्थूलदेहस्य राहित्यादस्नाविरमुदाहृतम् । एवभूतोऽपि सार्वज्ञ्यात्कविरित्येव शब्द्यते । ब्रह्मादिसर्वमनसा प्रकृतेर्मनसोऽपि च । ईशितृत्वान्मनीषी स परिभू. सर्वतो वर । सदानन्याश्रयत्वाच्च स्वयभू. परिकीर्तित । स सत्य जगदेतादृङ्नित्यमेव प्रवाहत. । अनाद्यनन्तकालेषु प्रवाहैकप्रकारत । नियमेनैव ससृजे भगवान्पुरुषोत्तम' ॥ 'सज्ज्ञानानन्दशीर्षोऽसौ सज्ज्ञानानन्दबाहुक' । सज्ज्ञानानन्ददेहश्च सज्ज्ञानानन्दपादवान् । एवभूतो महाविष्णुर्यथार्थे जगदीदृशम् । अनाद्यनन्तकालीन ससर्जात्मेच्छया प्रभुः ॥' इति वाराहे ।

मध्व

[ततश्चाय मन्त्रार्थ. । पूर्वमन्त्रे ज्ञानिन. शोकाद्यभाव उक्त, तत्र हेत्वाकाङ्क्षायामाह—स पर्यगादिति । यतो ज्ञानी परमेश्वरप्रसादाद्विष्णु पर्यगात् सम्यक्प्राप्नोत्येव । परमेश्वरसारूप्यलक्षणां गतिं गतो भवतीति यावत् । अतः शोकाद्यभावो युक्तः । परमेश्वरसारूप्येऽपि कुतस्तदभाव., राजादिसारूप्यवतस्तदभावादित्यत उक्त — शुक्रमिति । शुच शोक रहति त्यजतीति शुक्रम् । शोकादिरहितब्रह्मसारूप्य गतस्य शोकाद्यभावो युक्त इति भावः । ब्रह्मणः शोकादिराहित्यमेव कुतः, यतोऽकायम् । शोकहेतुलिङ्गदेहवर्जितम् । तथा अस्नाविर स्नावोपलक्षितसप्तधातुमयस्थूलशरीरवर्जितम् । अकायत्वादिकमपि कुतः, यतोऽपापविद्ध देहारम्भकपापशून्यम् । तदपि कुत', यत. शुद्ध जगत्पावित्र्यनिमित्तम् । न ह्येवभूते पाप सभावनार्हम् । किंच यतोऽव्रण नित्यत्व( त्वे ? )-सत्यानन्दादिगुणपूर्णं, अतोऽपि शुक्रम् । ननु ब्रह्मणो

---

* महीधर अर्थद्वय, शकरवत् उवटवच्च ।

देहशून्यत्वे श्रुत्यादिसिद्धसर्वजगत्सर्जनादिविरोधः, तस्य देहसापेक्षताया घटादौ दृष्टत्वादित्यतः — कविरित्याद्युत्तरार्धः। तत्रादौ सज्ज्ञानानन्ददेहवानित्युपस्कर्तव्यम्। यतः सज्ज्ञानानन्ददेहवान् अतोऽर्थान्महदादीन्व्यदधात् उत्पादयामास। स्थित्याद्युपलक्षणमेतत्। ननु जगदारोपाधिष्ठानत्वरूपजगत्स्रष्टृत्वस्य शरीरानपेक्षत्वात्किं तदङ्गीकारेण, इत्यतोऽर्थान्विशिनष्टि — याथातथ्यत इति। तृतीयान्तात्तसिः। वर्तमानानिति शेषः। अबाधितप्रत्यक्षादिसिद्धतया याथार्थ्येन वर्तमानानित्यर्थः। न च अदेहत्वस्य जगत्सृष्ट्यादेश्च कालभेदेन व्यवस्था। जगत्सृष्ट्यादिप्रवाहस्य अनाद्यनन्ततया प्रमितत्वात्। तदेतदुक्त—शाश्वतीभ्य· समाभ्य इति। पञ्चमी सप्तम्यर्थे। अनाद्यनन्तवत्सरेषु व्यदधात्। सज्ज्ञानाद्यात्मकदेहवत्त्वमन्येषामविद्यमान परमेश्वरस्योपपादयितु सार्वज्ञ्यादिमाहात्म्यमुक्त कविरित्यादिविशेषणैः। कविः सर्वज्ञः। मनीषी रमाब्रह्मादिमनसामीशिता। परिभवति सर्वं वशीकरोति इति परिभूः सर्वतो वर। स्वयमेव परमनपेक्ष्य भवतीति स्वयभूः सदाऽनन्याश्रय इति।

रघुनाथतीर्थीया ]

( ५ ) 'कविर्मनीषी' इत्यादिश्रुतिभि· प्रपञ्चस्य स्वप्नव्यावृत्तयाथार्थ्यसिद्धेश्चेति।

विज्ञान· २।२।२९

विद्याकर्मणो समुच्चय

अन्धं तम प्रविशन्ति येऽविद्यामुपासते।
ततो भूय इव ते तमो य उ विद्यायाँ रता ॥

( १ ) अत्राद्येन मन्त्रेण सर्वैषणापरित्यागेन ज्ञाननिष्ठा उक्ता प्रथमो वेदार्थः 'ईशावास्य मा गृध·' इति। अज्ञानां जिजीविषूणां ज्ञाननिष्ठाऽसभवे 'कुर्वन्नेवेह' इति कर्मनिष्ठा उक्ता द्वितीयो वेदार्थः। ये तु ज्ञाननिष्ठा· सन्यासिनस्तेभ्य· 'असुर्या नाम ते' इत्यादिनाऽविद्वन्निन्दाद्वारेणाऽऽत्मनो याथात्म्य 'स पर्यगात्' इत्येतदन्तैर्मन्त्रैरुपदिष्टम्। ते ह्यत्राऽधिकृताः, न कामिन इति। ये तु कर्मिणः कर्मनिष्ठा· कर्म कुर्वन्त एव जिजीविषवस्तेभ्य इदमुच्यते — अन्ध तम इत्यादि।

कथ पुनरेवमवगम्यते न तु सर्वेषामिति, उच्यते— अकामिन साध्यसाधनभेदोपमर्देन 'यस्मिन्सर्वाणि भूतान्यात्मैवाऽभूद्विजानत। तत्र को मोहः कः शोक एकत्वमनुपश्यत ॥' इति यदात्मैकत्वविज्ञान तन्न केनचित्कर्मणा, ज्ञानान्तरेण वा ह्यमूढः समुच्चिचीषति। इह तु समुच्चिचीषयाऽविद्वदादिनिन्दा क्रियते। तत्र च यस्य येन समुच्चय सभवति न्यायत शास्त्रतो वा तदिहोच्यते। यद्दैव वित्त देवताविषय ज्ञान कर्मसम्बन्धित्वेनोपन्यस्त न परमात्मज्ञानम्। 'विद्यया देवलोकः' इति पृथक्फलश्रवणात्। तयोर्ज्ञानकर्मणोरिह एकैकानुष्ठाननिन्दा समुच्चिचीषया, न निन्दापरैव। एकैकस्य पृथक्फलश्रवणात्। 'विद्यया तदारोहन्ति' 'विद्यया देवलोकः' 'न तत्र दक्षिणा यन्ति' 'कर्मणा पितृलोक·' इति। न हि शास्त्रविहित किञ्चिदकर्तव्यतामियात्।

तत्रान्ध तमोऽदर्शनात्मक तम प्रविशन्ति। के, येऽविद्यां विद्याया अन्याऽविद्या, ता, कर्मेत्यर्थ·। कर्मणो विद्याविरोधित्वात्। तामविद्यामग्निहोत्रादिलक्षणामेव केवलामुपासते, तत्पराः सन्तोऽनुतिष्ठन्तीत्यभिप्रायः। ततस्तस्मादन्धात्मकात्तमसो भूय इव बहुतरमेव ते तमः प्रविशन्ति। के, कर्म हित्वा ये उ ये तु विद्यायामेव देवताज्ञान एव रता अभिरताः।

* शकर·

( २ ) इवोऽनर्थकः। विद्यायामेव रताः आत्मज्ञान एवाकृतकर्माणो रता नराः। + उवट·

( ३ ) एव विचित्रशक्तिकपरमात्मविषयां कर्मयोगाद्यङ्गि(ङ्ग)का विद्यामुपदिश्यानन्तर त्रिभिर्मन्त्रैः केवलकर्मावलम्बिन· केवलविद्यावलम्बिनश्च पुरुषान्विनिन्दन् वर्णाश्रमधर्मानुगृहीतया विद्ययैव निःश्रेयसावाप्तिमाह— ये भोगैश्वर्यप्रसक्ता अविद्या विद्यान्यां क्रियां, केवल कर्मेत्यर्थः। विद्याविधुर कर्मेति यावत्। अन्ध तमोऽतिगाढ तमः, अज्ञानमित्यर्थः। त्रिवर्गाभिलङ्घ्याक्रान्त-

(१) ईउ ९, शुस ४०।१२

* महीधर शकरवत्। विद्यापद आत्मज्ञानपरं उवटवत् व्युत्पाद्य देवताज्ञानमिति तन्निष्कर्ष पुन कथयति शंकरोवटयोर्विरोधपरिहारार्थम्।

+ शेष शंकरवत्।

रीय नरकमन्ध तमो वा । य उ विद्यायां रताः । उकार उत्तरपदेनान्वेतव्य । स्वाधिकारोचितकर्मपरित्यागेन विद्यायामेव रताः । ते ततः कर्ममात्रनिष्ठाः प्राप्यादन्धतमसाद्भूय इव तमस्तदधिकमज्ञान प्रविशन्ति ।

इवशब्दस्तमस इयत्ताया दुर्ग्रहत्व द्योतयति ।

नारायण

( ४ ) 'अन्यथोपासका ये तु तमोऽन्ध यान्त्यसशयम् । ततोऽधिकमिव व्यक्त यान्ति तेषामनिन्दका ॥'

मध्व.

[ 'अन्धं तम. प्रविशन्ति' इत्यादिमन्त्रान् अप्रतीत्यन्यथाप्रतीतिनिरासाय स्मृत्यैव व्याचष्टे— अन्यथोपासका इति । यथावत्परमात्मज्ञान मोक्षसाधनमित्युक्तम् । न केवल तत् । किं नाम, अन्यथाज्ञाननिन्दासमुचितमेव, इत्येतदर्थप्रतिपादकमाद्यमन्त्रत्रयम् । तत्र तावद्यथावज्ज्ञानस्यैव अन्यथाज्ञाननिन्दाया अप्यावश्यकत्वोपपादनाय अन्यथाज्ञानस्योक्तमसुर्यलोकसाधनत्वमनूद्य अन्यथाज्ञानाऽनिन्दनस्य ततोऽधिकानर्थसाधनत्व आद्येन मन्त्रेणोच्यते । तस्यार्थोऽन्ययेति । उपासकाः, विष्णोरिति शेष. । सर्वत्र ज्ञानशब्दस्योपासनापर्यन्तत्वाद्या मिश्रोक्ति । तत्र अविद्यापद विषयिवाचक विषयस्यान्य थाकारस्य लक्षकमित्यभिप्रेत्य 'अविद्यामुपासते ' इत्येतत् 'अन्यथोपासकाः' इति व्याख्यातम् । तत. अन्यथाज्ञानिप्राप्यात्तमसोऽधिकमिव । इवार्थमाह— व्यक्तमिति । उशब्दोऽवधारणार्थः विद्यायामित्यनेन सबध्यते । तेन विद्यायां यथार्थज्ञाने एव रता., न त्वन्यथाज्ञाननिन्दा कुर्वन्तीत्येषोऽर्थो लभ्यते । अत उक्त तेषामनिन्दका इति । जयतीर्थीया ]

अन्यदेवाहुर्विद्ययाऽन्यदाहुरविद्यया ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥

( १ ) तत्रावान्तरफलभेद विद्याकर्मणोः समुच्चयकारणमाह । अन्यथा फलवदफलवतोः सनिहितयोरङ्गाङ्गितैव स्यादित्यर्थः — अन्यदेवेत्यादि । अन्यत्पृथगेव विद्यया क्रियते फलमित्याहुर्वदन्ति । 'विद्यया देवलोकः' 'विद्यया तदारोहन्ति' इति श्रुतेः । अन्यदाहुरविद्यया कर्मणा क्रियते 'कर्मणा पितृलोक.' इति श्रुते. । इत्येव शुश्रुम श्रुतवन्तो वय धीराणा धीमतां वचनम् । ये आचार्या नोऽस्मभ्य तत्कर्म च ज्ञान च विचचक्षिरे व्याख्यातवन्त । तेषामयमागम. पारम्पर्यागत इत्यर्थ ।

* शकर

( २ ) अन्यदेवं फलमाहु·— विद्याया आत्मज्ञानात् । अविद्यायाः कर्मणः । उवट.

( ३ ) किं तर्हि मोक्षसाधनमित्यत्राह— विद्ययेति पञ्चम्यर्थे तृतीया । यथाश्रुतेऽन्यशब्दानन्वयात्, 'अन्यदेवाहु सभवात्' इति वक्ष्यमाणानुरोधाच्च । तथा च विद्याया.'कर्मरहितविद्यात अन्यन्मोक्षसाधनमित्याहु । उपनिषद इति शेषः । अविद्यया अविद्याया ब्रह्मविद्याविधुरकर्मण. अन्यदेव मोक्षसाधनमित्याहुः । ये पूर्वाचार्यास्ते प्रणिपातादिभि. सम्यगुपसन्नानामस्माक तन्मोक्षसाधन विचचक्षिरे विविच्योपदिदिशुः । तेषा धीराणां धीमता परमात्मध्यानपराणां, वचनमित्यध्याहार्यम् । यद्वा धीराणामिति पञ्चम्यर्थे षष्ठी । तेभ्यो धीरेभ्य इति योज्यम् । नटस्य शृणोतीतिवत् ।

नारायण.

[1]विद्या चाविद्यां च यस्तद्वेदोभयꣳ सह ।
अविद्यया मृत्यु तीर्त्वा विद्ययाऽमृतमश्नुते ॥

( १ ) यत एवमतो विद्यां चाविद्या च देवताज्ञान कर्म चेत्यर्थ. । यस्तदेतदुभय सह एकेन पुरुषेणानुष्ठेय वेद तस्यैव समुच्चयकारिण एव एकपुरुषार्थसबन्ध. क्रमेण स्यादित्युच्यते — अविद्यया कर्मणा अग्निहोत्रादिना मृत्यु स्वाभाविक कर्म ज्ञान च मृत्युशब्दवाच्यमुभय तीर्त्वाऽतिक्रम्य विद्यया देवताज्ञानेन अमृत देवतात्मभावमश्नुते प्राप्नोति । तद्ध्यमृतमुच्यते यद्देवतात्मगमनम् । शकर.

(१) ईउ १०, शुस ४०।१३ विद्यया ( विद्याया ) रविद्यया ( रविद्याया )

* महीधर शकरवत् । शकरोवटयोरेकतात्पर्यं सूचयति पूर्ववत् ।

(१) ईउ ११, शुस ४०।१४, रामानुज १।१।१ ( पृ १२ ), श्रीकठ १।१।१ ( पृ ४५ ), ३।४।३३, श्रीकर १।१।१ ( पृ १५ ), १।४।२२ ( पृ १७६ ), ३।३।८, ३।४।२५, ३३, ४।१।६, विज्ञान १।१।१ ( पृ १६ ), ३।४।५, ८, ३३, ३५

( २ ) विद्या च आत्मज्ञान च अविद्या कर्म च यस्तदुभय वेद जानाति सह एकीभूत कर्मकाण्ड ज्ञानकाण्डस्य गुणभूतम् । अथ कर्मकाण्ड ज्ञानकाण्ड च एकीकृत्य अविद्यया कर्मकाण्डेन मृत्यु तीर्त्वा उत्तीर्य कृतकृत्यो भूत्वा विद्यया ब्रह्मपरिज्ञानेनामृतत्व मोक्षमश्नुते प्राप्नोति । उवट

( ३ ) अन्यदिति सामान्येनोक्त मोक्षसाधन विवृणोति — 'कुर्वन्नेवेह कर्माणि ' इति मन्त्रे कर्मयोगस्य प्रत्यगात्मदर्शनद्वारा परभक्त्युत्पादकत्वमुक्तम् । इह भक्तियोगेन विदुषा पूर्वोक्तकर्मयोगवेष परित्यज्य अहरहरनुष्ठीयमानाना नित्यनैमित्तिककर्मणा कल्मषनिबर्हणद्वारा भक्त्युपचायकत्वमुच्यते । सहशब्दस्वारस्यात् । अतो न पुनरुक्तता । यो यथावस्थितविद्योपदेशवान् विद्यां ब्रह्मोपासनरूपां तदङ्गभूतकर्मरूपामविद्या च एतदुभय सह वेद अङ्गाङ्गिभावेन सहानुष्ठेय वेदेत्यर्थ । अविद्यया विद्याङ्गतया चोदितेन कर्मणा मृत्यु विद्योत्पत्तिप्रतिबन्धकीभूत पुण्यपापरूप प्राक्तन कर्म तीर्त्वा निर्विशेषमुल्लङ्घ्य विद्यया परमात्मोपासनरूपया अमृत मश्नुते । मोक्ष प्राप्नोतीत्यर्थ । तीर्त्वेत्यत्रोपायविरोधितरणमुच्यते । अमृतमश्नुत इत्युपेयब्रह्मप्राप्तिविरोधिभूतेभ्य सर्वपापेभ्यो मोक्ष इति भेद. ।

नारायण

( ४ ) 'तस्माद्यथास्वरूप तु नारायणमनामयम् । अयथार्थस्य निन्दा च ये विदु. सह सज्जना । ते निन्दयाऽयथार्थस्य दु:खाऽज्ञानादिरूपिण । दु.खाऽज्ञानादिसतीर्णा. सुखज्ञानादिरूपिण । यथार्थस्य परिज्ञानात्सुखज्ञानादिरूपताम् । यान्ति ' । * मध्व

( ५ ) सह वेद — कर्मकाण्ड ज्ञानकाण्डस्य गुण भूतमित्यर्थ । § महीधर

( ६ ) तस्माद्विद्या चाविद्या चेत्यादिपरब्रह्मप्रकरणस्थवाक्यविरोधात्सर्वकर्माणि सन्यस्य श्रवण कुर्यादित्याधुनिकाना विधिकल्पन कुकल्पनमेवेति द्रष्टव्यम् । १।१।१ (पृ. १६ )

योगारुरुक्षुयुञ्जमानयोगारूढरूपाधिकारिभेदात्त्रिविधा विद्या भवति कर्माङ्गभूता, कर्मसमुच्चिता, प्रधाना चेति । तत्र कर्मकाण्डविचारप्रवृत्तेन जैमिनिना ' यदेव विद्यया करोति ' 'विद्या चाविद्या च ' इत्यादिश्रुत्यनुसारत आद्यविद्याद्वयस्यैव स्वातन्त्र्येण फलहेतुत्व निराकृतमुक्तहेतुभि । ३।४।८

विद्यया स्वनिष्पत्त्यर्थ कर्माऽपेक्ष्यते, किन्तु सहकारित्वेन च स्वफलोपकार्यङ्गतया चापेक्ष्यते ' विद्या चाविद्या च' इत्यादिवाक्येभ्य । विज्ञान ३।४।३३

व्याकृताव्याकृतोपासनयो समुच्चय

अन्ध तम प्रविशन्ति येऽसभूतिमुपासते ।
ततो भूय इव ते तमो य उ सभूत्या९ रता ॥

( १ ) अधुना व्याकृताव्याकृतोपासनयो समुच्चिचीषया प्रत्येक निन्दोच्यते — अन्ध तम प्रविशन्ति येऽसभूतिं, सभवन सभूति, सा यस्य कार्यस्य सा सभूति., तस्या अन्या असभूति. प्रकृतिः कारणमविद्याऽव्याकृताख्या, तामसभूतिमव्याकृताख्या, प्रकृतिं, कारणमविद्यां कामकर्मबीजभूतामदर्शनात्मिकामुपासते ये, ते तदनुरूपमेवान्ध तमोऽदर्शनात्मक प्रविशन्ति । ततस्तस्मादपि भूयो बहुतरमिव तम' प्रविशन्ति ये उ सभूत्यां कार्यब्रह्मणि हिरण्यगर्भाख्ये रता. । शकर.

( २ ) इत उत्तरमुपासनामन्त्राः प्रोच्यन्ते । लोकायतिका प्रस्तूय विन्द्यन्ते । येषामेतद्दर्शन, जलबुद्बुदवज्जीवा , मदशक्तिवद्विज्ञानमिति । अन्ध तम प्रविशन्ति येऽसभूतिमुपासते । मृतस्य सत पुन. सभवो नास्ति । अत शरीरग्रहणाद(शरीरप्रहाणात्)स्माक मुक्तिरेव । न हि विज्ञानात्मा कश्चिदनुच्छित्तिधर्माऽस्ति, यो यमनियमै सबध्यते । एव ये उपासते तेऽन्ध अज्ञानलक्षण तम प्रविशन्ति । ततो भूय इव ते तम , ततो बहुतर, इवोऽनर्थक., ते तम प्रविशन्ति, ये उ, उकार. कर्मोपसग्रहार्थीय., ये सभूत्यामेव रता' । आत्मैवाऽस्मि, नान्यत्किञ्चिदस्तीत्ययमभिप्राय. । कर्मपराङ्मुखाय तत्कर्मकाण्डज्ञानकाण्डयोरसभव इत्यय(इत्यर्थ)मभिप्रेत्य स्वबुद्धिमद्भुतां विभावयन्त आत्मज्ञान एव रता. । उवट.

---

* नवमैकादशमन्त्रद्वयव्याख्यान एकादशमन्त्रव्याख्यामुखेन सूचयति ।

§ शेषं शकरवत् ।

(१) ईउ १२, शुस ४०।९

( ३ ) एव समाधिनिष्पत्तेर्नित्यनैमित्तिककर्मसाध्य-त्वमुक्त्वाऽथ त्रिभिर्मन्त्रैर्निषिद्धनिवृत्तिरूपयोगाङ्गसाध्यत्व-माह—तत्र तावत्प्राग्वदेकैकमात्र विनिन्दति—'एतमित प्रेत्याऽभिसभविताऽस्मि' (छाउ ३।१४।४) 'ब्रह्मलोकमभिसभवामि' ( छाउ ८।१३।१ ) इत्या-दिषु ब्रह्मप्राप्तिरूपाऽनुभूति सभूतिशब्देनोक्ता । इह तु समाधिरूपा सभूतिशब्देनोच्यते । असभूतिशब्दस्तु समाध्यङ्गभूता निषिद्धनिवृत्तिमाह । 'सभूतिं च विनाश च' इत्युत्तरत्र विनाशशब्देनाऽसभूतेरनुविधानात् । तथा च ये विद्याधिकारिणोऽसभूतिमेव मानदम्भहिंसाऽस्ते-यादीनां योगविरुद्धाना निवृत्तिमेवोपासते, निवृत्तिमात्र-निष्ठा इत्यर्थ. । तेऽन्ध तम. प्रविशन्तीति पूर्ववदर्थ. । ये पुनः समाधिरूपसभूत्यामेव रतास्ते ततो भूय इव तम प्रविशन्तीत्यर्थ. । नारायण

( ४ ) 'एव सृष्टिकर्तृत्व नाङ्गीकुर्वन्ति ये हरे' । तेऽपि यान्ति तमो घोर तथा सहारकर्तृताम् । नाङ्गी-कुर्वन्ति तेऽप्येवम् —॥' मध्व

( ५ ) ( प्रथमार्धेन ) * बौद्धाः प्रस्तूय निन्द्यन्ते । ये उ ये च सभूत्यामेव रता., सभवत्यस्या इति सभूतिरात्मा, तत्रैवासक्ता । × महीधर

**[१]अन्यदेवाहु सभवादन्यदाहुरसभवात् ।**
**इति शुश्रुम धीराणा ये नस्तद्विचचक्षिरे ॥**

( १ ) अधुना उभयोरुपासनयोः समुच्चयकारण-मवयवफलभेदमाह—अन्यदेवेति । अन्यदेव पृथगेवाहुः फल सभवात्सभूते. कार्यब्रह्मोपासनात् अणिमाद्यैश्वर्य लक्षण, व्याख्यातवन्त इत्यर्थः। तथा च अन्यदाहुरसभवा दसभूतेरव्याकृतादव्याकृतोपासनात् यदुक्त 'अन्ध तमः प्रविशन्ति' इति । प्रकृतिलय इति च पौराणिकैरुच्यते । इत्येव शुश्रुम धीराणां वचन, ये नस्तद्विचचक्षिरे, व्याकृताऽव्याकृतोपासनफल व्याख्यातवन्त इत्यर्थः । + शकर.

( २ ) सभवात्सभवपरिज्ञानात् । अन्यच्चाऽऽहुः फलमसभवपरिज्ञानात् । नः अस्माकम् । * उवट.

**[१]सभूतिं च विनाश च यस्तद्वेदोभय५ सह ।**
**विनाशेन मृत्यु तीर्त्वाऽसभूत्याऽमृतमश्नुते ॥**

( १ ) यत एवमत. समुच्चय सभूत्यसभूत्युपासन-योर्युक्त एव, एकपुरुषार्थत्वाच्च, इत्याह — सभूतिं च विनाश च यस्तद्वेदोभय सह । विनाशेन, विनाशो धर्मो यस्य कार्यस्य स., तेन । धर्मिणाऽभेदेनोच्यते विनाश इति । तेन तदुपासनेनानैश्वर्यमधर्मकामादिदोष-जात च मृत्यु तीर्त्वा । हिरण्यगर्भोपासनेन ह्यणिमा-दिप्राप्ति. फलम् । तेन अनैश्वर्यादिमृत्युमतीत्य, असभूत्या अव्याकृतोपासनया अमृत प्रकृतिलयलक्षणमश्नुते। सभूतिं च विनाश चेत्यत्राऽवर्णलोपेन निर्देशो द्रष्टव्यः । प्रकृतिलयफलश्रुत्यनुरोधात् । शकर.

( २ ) सभूतिं च समस्तस्य जगत सभवैकहेतु च पर ब्रह्म । विनाश च विनाशिशरीर च । यः योगी तदुभय वेद जानाति । सह एकीभूतम् । शरीरग्रहणेन ज्ञानोत्पत्तिहेतूनि कर्माणि करोति । स विनाशेन विना-शिना शरीरेण । मृत्यु तीर्त्वा उत्तीर्य । सभूत्या आत्मवि-ज्ञानेन । अमृतमश्नुते अमृतत्वमश्नातीत्यर्थः । उवट.

( ३ ) अन्यदित्युक्त विवृणोति — सभूतिं, समा-धिरूपब्रह्मानुभूतिं, विनाश च योगविरोधिना वर्जन चेत्येतदुभय यो विद्वानङ्गाङ्गिभावेन सह वेद, स विद्वा-न्विनाशेन , निषेव्यमाणेनेति शेषः । विरोधिनिवृत्ति-रूपयोगाङ्गसेवनेनेत्यर्थ. । मृत्यु समाधिविरोधिपाप तीर्त्वा अपाकृत्य निष्पन्नया सभूत्या अमृतमश्नुते । ब्रह्मप्राप्तिरूपा सभूतिमश्नुत इति भाव । नारायण.

( ४ ) '—तस्मात्सर्वगुणात्मकम् । सर्वकर्तारमीशेश सर्वसहारकारकम् । यो वेद सद्वतिज्ञानादेहबन्धाद्वि-मुच्यते । सुखज्ञानादिकर्तृत्वज्ञानात्तद्व्यक्तिमात्रजेत् । सर्व-

---

* लोकायतिका इति वक्तव्य, उवटवत्तन्मतोपन्यास-सदर्भात् ।

× उवटवच्छकरवच्च व्याख्याद्वयम् ।

+ नारायण सभवाऽसभवपदार्थौ पूर्वमन्त्रे उक्तौ । मही-धर शकरवत् ।

(१) ईउ १३, शुस. ४०।१०

* शेष शकरवत् ।

(१) ईउ १४, शुस ४०।११ शकरभिन्नेषु ऽसभूत्या इत्यत्र सभूत्या इति पाठ ।

-दोषविनिर्मुक्तं गुणरूपं जनार्दनम् । जानीयान्न गुणानां च भागहानिं प्रकल्पयेत् । न मुक्तानामपि हरेः साम्यं विष्णोरभिन्नताम् । न वै प्रचिन्तयेत्तस्माद्ब्रह्मादेः साम्यमेव वा । मानुषादिविरिञ्चान्तं तारतम्यं विमुक्तिगम् । ततो विष्णोः परोत्कर्षं सम्यग्ज्ञात्वा विमुच्यते ॥' इति कौर्मे । मध्व

( ५ ) अत्र विनाशशब्दद्वये अवर्णलोपो द्रष्टव्यः पृषोदरादित्वात् । अन्यदाहुरसंभवादित्युक्तेः । '

स योगी अविनाशेनाऽव्याकृतोपासनेन मृत्युं अनैश्वर्यं, अधर्मकामादिदोषजातं च तीर्त्वा अतिक्रम्य संभूत्या हिरण्यगर्भोपासनेन अमृतं प्रकृतिलयलक्षणमश्नुते । * महीधर.

आदित्यस्थसत्यात्मकपरमपुरुषप्राप्तिप्रार्थना

[1]हिरण्मयेन पात्रेण सत्यस्याऽपिहितं मुखम् ।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥

( १ ) तत्र निषेकादिश्मशानान्तं कर्म कुर्वञ्जिजीविषेद्यो विद्यया सह अपरब्रह्मविषयया । तदुक्तं ' विद्यां चाऽविद्यां च ऽमृतमश्नुते ' इति । तत्र केन मार्गेणाऽमृतत्वमश्नुत इत्युच्यते— ' तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः ' एतदुभयं सत्यं ब्रह्मोपासीनो यथोक्तकर्मकृच्च यः, सोऽन्तकाले प्राप्ते सत्यात्मानमात्मनः प्राप्तिद्वारं याचते — हिरण्मयेन पात्रेण । हिरण्मयमिव हिरण्मयं ज्योतिर्मयमित्येतत् । तेन पात्रेणेवाऽपिधानभूतेन सत्यस्यैवाऽऽदित्यमण्डलस्थस्य ब्रह्मणोऽपिहितमाच्छादितं मुखं द्वारं, तत् हे पूषन् त्वं, अपावृणु अपसारय सत्यधर्माय, तव सत्यस्योपासनात्सत्यं धर्मो यस्य मम सोऽहं सत्यधर्मा, तस्मै मह्यम् । अथ वा, यथाभूतस्य धर्मस्यानुष्ठात्रे दृष्टये तव सत्यात्मन उपलब्धये ।

शंकर.

( २ ) इदानीमादित्योपासनमाह—यद्यपि, हिरण्मयरूपेण पात्रेण, येन रौप्यमयेन पात्रेण । पिबन्त्यस्मिन्नवस्थितान् रसान् रश्मय इति पात्रं मण्डलं, तेन पात्रेण मण्डलेन सत्यस्याऽविनाशिनः पुरुषस्याऽपिहितमन्तर्हितं मुखं शरीरम् । तथाऽपि यः असौ आदित्यः पुरुषः योगिभिरुपलक्ष्यते, सः असौ अहमस्मि । एतां चोपासनां कुर्यात् । ॐ खं ब्रह्म । ओमिति नामनिर्देशः । आकाशस्वरूपं ब्रह्म ध्यायेदात्मत्वेन ।

उवट.

( ३ ) एवं साङ्गमगवद्भक्तिमुपदिश्य तन्निष्ठस्याऽनुसंधेयमन्त्रद्वयमुपदिशति— हे पूषन्नादित्यान्तर्यामिन् । यद्वा, पूषन् आश्रितपोषणस्वभावेत्यर्थः । सत्यस्य । सत्यशब्देन स्वरूपविकाररहितजीवात्मोच्यते । तस्य मुखं मुखवत् । अनेकेन्द्रियावष्टम्भकतया मुखसदृशं मन इत्यर्थः । हिरण्मयेन हिरण्यसदृशेन, भोग्यवर्गेणेति यावत् । पात्रेण परमात्मविषयकवृत्तिप्रतिरोधकेन अपिहितं आच्छादितम् । हृदि निहिते परमात्मनि निरुद्धवृत्तिकं जातमित्यर्थः । तज्जीवस्य मुखस्थानीयं मनो हृषीकाणामीशस्त्वमपावृणु निरस्ततिरोधानं कुर्वित्यर्थः । तत्कस्य हेतोस्तत्राऽऽह—सत्यधर्माय सत्यस्य जीवस्य धर्मभूताय । दृष्टिर्दर्शनम् । त्वद्दर्शनायेति भावः । नारायण.

( ४ ) ' पात्रं हिरण्मयं सूर्यमण्डलं समुदाहृतम् । विष्णोः सत्यस्य तेनैव सर्वदाऽपिहितं मुखम् । तच्च पूर्णत्वतः पूषा विष्णुर्दर्शयति स्वयम् । सत्यधर्माय भक्ताय— ॥' मध्व

[एवं प्राप्ताधिकारं शिष्यं प्रति परमात्मस्वरूपं निरूप्य तत्साक्षात्कारो मोक्षसाधनमित्यतीतग्रन्थेनोक्तम् । स चेश्वरसाक्षात्कारो न श्रवणादिमात्रेण भवति । नाऽपि मोक्षः साक्षात्कारमात्रेण । किंतु भगवत्प्रसादादेव । इत्यतः अनुष्ठितश्रवणादिकेनापि साक्षात्कारार्थं, प्राप्तसाक्षात्कारेणापि च मोक्षार्थं यथा भगवत्प्रार्थनं कार्यं, तत्प्रकारप्रदर्शनार्थो हिरण्मयेन पात्रेणेत्याद्युत्तरो ग्रन्थः । जयतीर्थीया. ]

( ५ ) हिरण्मयमिव हिरण्मयं ज्योतिर्मयं यत्पात्रम् । * महीधर.

* उवटवदेका व्याख्या । अन्या व्याख्या उपर्युद्धृता शांकरच्छाया भिन्नार्था ।

(१) ईउ १५, शुस ४०।१७ उत्तरार्धे (योऽसावादित्ये पुरुषः सोऽसावहम् । ॐ खं ब्रह्म । )

* शेषं उवटवत् । अन्ते च ' अथ विचारः ' इत्युपक्रम्य ' विद्यां चाऽविद्यां च ' इत्यत्र विद्या उपासना, अमृतं चाऽऽपेक्षिकमिति निर्णीतम् ।

पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्स-
मूह ।
तेजो यत्ते रूप कल्याणतम तत्ते पश्यामि
योऽसावसौ पुरुष सोऽहमस्मि * ॥

( १ ) पूषन्निति । हे पूषन् । जगतः पोषणात्पूषा रविः । तथा एक एव ऋषति गच्छतीत्येकर्षिः, हे एकर्षे । तथा सर्वस्य सयमनाद्यमः, हे यम । तथा रश्मीनां प्राणाना रसाना च स्वीकरणात्सूर्य, हे सूर्य । प्रजापतेरपत्य प्राजापत्यः, हे प्राजापत्य । व्यूह विगमय रश्मीन्स्वान् । समूह एकीकुरु उपसहर तेजस्तापक ज्योतिः । यत्ते तव रूप कल्याणतम अत्यन्तशोभन तत्ते तव आत्मन. प्रसादात्पश्यामि । किञ्च अह न तु त्वां भृत्यवद्याचे । योऽसावादित्यमण्डलस्थो व्याहृत्यवयवः पुरुष', पुरुषाकारत्वात्पूर्णं वाऽनेन प्राणबुद्ध्यात्मना जगत्समस्तमिति पुरुष', पुरि शयनाद्वा पुरुष, सोऽहमस्मि भवामि । शकर

( २ ) पुनरपि तया दृष्ट्या द्रष्टव्य विशिंषन्दर्शन तत्साधन चाभ्यर्थयते—पूषन् आश्रितपोषक । एकश्चासावृषिश्चैकर्षिः, अद्वितीयातीन्द्रियार्थद्रष्टा । यम, यम यति सर्वानिति यम. । सर्वान्तर्यामिन् । सूर्य स्वोपासक धिया सुष्ठु प्रेरक । प्राजापत्य, प्रजापतिश्चतुर्मुख, तस्य सुताः प्राजापत्या', तेषामन्तर्यामिन् । यद्वा, प्रजापतिरेव प्राजापत्य । प्रजाना पतिरिति व्युत्पत्त्या प्रजापतिर्विष्णु. । व्यूह रश्मीन् । भवदीयदिव्यरूपदर्शनानुपयुक्तान्स्वोग्र रश्मीन् व्यूह व्यपोह विगमयेत्यर्थः । यत्ते दर्शनौपयिक प्रभात्मक तेजस्तत्समूह समूहीकुरु । तत्किमर्थमित्याशङ्क्य द्रष्टुमिच्छामि ते रूपमित्याह—यदिति । यत् ‘ आदित्यवर्णं तमस परस्तात् ’ इत्यादिश्रुतिषु प्रसिद्धमित्यर्थः । ते, ‘ आनन्दो ब्रह्म ’ इति निरतिशयभोग्यस्य तवापि । कल्याणतम, सौन्दर्यादिगुणातिशयेन कल्याणेभ्योऽतिशयित कल्याण, शुभाश्रयमिति भाव । ते यद्दिव्यरूप तत्पश्यामि, पश्येयमिति लकारव्यत्ययश्छान्दस' । द्रष्टुमिच्छामीति भाव. । अथाऽन्तर्यामिणमहमहेणाऽनुसधत्ते—योऽसावसौ पुरुष. सोऽहमस्मि । असावसाविति वीप्सा आदरार्था । यद्वा, अदःशब्दौ विभज्य यत्तच्छब्दाभ्यामन्वेतव्यौ, योऽसौ पुरुषः प्रसिद्धः सोऽसावहमस्मीति । नारायण

( ३ ) ‘ — प्रधानज्ञानरूपतः । विष्णुरेक ऋषिर्ज्ञेयो यमो नियमनाद्धरिः । सूर्यः स सूरिगम्यत्वात्प्राजापत्य. प्रजापते. । विशेषेणैव गम्यत्वादह चासावहेयतः । अस्मि नित्यास्तितामानात्सर्वजीवेषु सस्थितः । स्वय तु सर्वजीवेभ्यो व्यतिरिक्तः परो हरिः । स क्रतुर्ज्ञानरूपत्वा दग्निरङ्गप्रणेतृतः ॥’ सत्य ब्रह्म हृदये धारयतीति सत्यधर्मा । एकोऽसौ शब्दः प्राणे स्थित इति । मध्व.

[ अहेयत. अहेयत्वत. । न हीयत इत्यहमित्यर्थः । नित्यास्तितामानादिति । नित्यसत्त्वेन प्रमितत्वादित्यर्थः । अनेन ‘ अस् भुवि ’ ‘ माङ् माने ’ इत्येतयोरिद रूपमित्युक्त भवति । अहमस्मिशब्दोक्तत्वेऽपि न जीवैक्य हरेराशङ्कनीयमित्याह — स्वय त्विति । सर्वजीवेभ्यो व्यतिरिक्तोऽपि अहेयत्वादियोगेनैव अहमस्मिशब्दाभ्यामुच्यते इत्यर्थः । एतेन ‘ नाह त्वा भृत्यवद्याचे । किं नाम, योऽसावादित्ये पुरुषः सोऽहमस्मि ’ इत्यपव्याख्यानमित्युक्त भवति । अहमस्मिशब्दाभिधेयत्वे हरेर्मूर्तिनियमोऽप्यस्तीत्याह — सर्वजीवेष्विति । उपासकेष्वित्यर्थ । उपलक्षण चैतत् । पूषादिशब्दैरपि आदित्याद्यन्तर्गत एवोच्यते । अधिकारियोग्यताभेदेन खलु नानाप्रतीकेषु भगवदापरोक्ष्यमत्र प्रार्थ्यते । क्रतुर्मतिर्मनीषेत्यभिधानात् ‘ स क्रतुर्ज्ञानरूपत्वात् ’ इत्युक्तम् । अङ्ग शरीर, अप्रधान जगद्वा नयतीत्यग्निरित्यर्थ । एव पुराणवाक्येन तात्पर्यतो व्याख्यातान्मन्त्रानिदानीं स्ववाक्येन विशदयन् सत्यधर्मपद कथ भक्तस्य वाचकमित्यतस्तद्विवक्ति—सत्यमिति । भक्त उच्यते इति शेष. । अत्र सत्य ब्रह्म धारयतीति सत्यधर्मा इत्युक्ते कथमनाधार ब्रह्म अय धारयतीति शङ्का स्यात्, तन्निवृत्त्यर्थं हृदये धारयतीत्युक्तम् । हृदये ब्रह्मधारण च आदरनैरन्तर्योपेत तद्ध्यानादिकमेव, तच्च भक्तस्यैव सभवतीति भावः । सत्यस्य च तथाभूतस्य धर्मस्यानुष्ठातेति व्याख्याने ‘ सत्यस्याऽपिहितम् ’ इतिप्रकृतपरित्यागो दोषः ।

* मन्त्रस्यास्य माध्यन्दिनपाठे अपठितत्वादुवटमहीधरभाष्ये न स्त ।

(१) ईउ १६, बलदेव ३।३।४६

'योऽसावसौ पुरुषः' इत्यत्र द्विरसाविति किमर्थमित्यत आह—एक इति । असौशब्द. असाविति शब्द. । इति वक्तीति शेष । यदि असु प्राणः, तस्मिन् इत्यर्थः स्यात् तर्हि अस्यान्वयो नास्ति, क्रियापेक्षत्वादधिकरणस्य, इत्यतः क्रियाध्याहारेणान्वय दर्शयति—स्थित इति । 'असावसौ' इति वीप्सार्थतया किं न व्याख्यायते इति चेन्न । एव व्याख्याने प्राणाख्यप्रतीकान्तरस्याऽप्युक्तिलाभात् । एकेनाऽपि शब्देन वीप्सासिद्धे. । तथा च योऽसौ प्रसिद्धः असौ प्राणे स्थित. पुरुषः स एवाऽहेयत्वनित्यसत्तामानाभ्यामहमस्मिशब्दाभिधेय., त च पश्यामीति वाक्यार्थ । अथ वा पूषादिशब्दैरुपलक्षणया प्राणाद्यनेकप्रतीकस्थत्व विष्णोरुक्तम् । तत्र भेदशङ्कायामिदमाह । सर्वप्रतीकेषु स्थित एक एवेत्यर्थ. ।

जयतीर्थीया ]

मरिष्यत मार्गप्रार्थना

**वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् ।**
**ॐ क्रतो स्मर कृतꣳ स्मर क्रतो स्मर कृतꣳ स्मर ॥**

( १ ) वायुरिति । अथेदानीं मम मरिष्यतो वायु प्राणोऽध्यात्मपरिच्छेद हित्वाऽधिदैवतात्मान सर्वात्मकमनिलममृत सूत्रात्मान, प्रतिपद्यतामिति वाक्यशेषः । लिङ्ग चेद ज्ञानकर्मसस्कृतमुत्क्रामत्विति द्रष्टव्यम् । मार्गयाचनसामर्थ्यात् । अथेद शरीरमग्नौ हुत भस्मान्त भूयात् । ओमिति यथोपासनमोंप्रतीकात्मकत्वात्सत्यात्मकमग्न्याख्यं ब्रह्माभेदेनोच्यते । हे क्रतो सकल्पात्मक, स्मर, यन्मम स्मर्तव्य तस्य कालोऽय प्रत्युपस्थितोऽतः स्मरैतावन्तं काल भावित, कृतमग्ने, स्मर, यन्मया बाल्यप्रभृत्यनुष्ठित कर्म, तच्च स्मर । क्रतो स्मर कृत स्मरेति पुनर्वचनमादरार्थम् । शकर

( २ ) इदानीमित्थ कृतब्रह्मोपासनस्य योगिनः शरीरपातोत्तरकाले यद्भवति तदाह —वायुरनिलम् । वायुग्रहणमिन्द्रियाण्येकादश, महाभूतानि पञ्च, जीवात्मा एकः, एव सप्तदशकलिङ्गोपलक्षणार्थम् । वायु प्राणोऽनिल स्वकीया प्रकृतिमापद्यते । अमृत पर ब्रह्म, तद्विज्ञाय सपद्यते । अथेद स्थूलशरीर कीदृश तदा भवति । भस्मान्त, भस्मैव भवति, कृतप्रयोजनत्वात् । इदानीं योगिन. आलम्बनभूतमक्षर कथ्यते — ॐ इति नाम वा प्रतिमा वा ब्रह्मणः । इदानीमन्तकाले योगी स्मरण करोति — क्रतो स्मर । योऽग्निर्ब्रह्मचर्यादारभ्य परिचरित स मनःश्वासरूपेणावस्थितः सबोध्यते । हे क्रतो, मा स्मर, इदानीमुपस्थित. प्रत्युपकारस्य काल इत्यभिप्राय । क्रतुर्वा यज्ञ. सबोध्यते, क्रतो स्मर । क्लीबे स्मर, क्लृप्ताय लोकाय स्मर । कृत स्मर, मया यत्कृत तत्स्मर । उवट

( ३ ) एव परापरतत्त्वविवेक नि·श्रेयससाधनभूतभक्तियोग ( च उपदिश्य) तन्निष्ठस्याऽनुसधेयमन्त्रविस्तार ( उक्तः ) इत्यादिशास्त्रैः ( १ ) प्रोक्षणादिभि. समिदादिकमिव परिशुद्धस्वरूपयाथात्म्यज्ञानेन सस्मृत्या ( सस्कृत्या )ऽऽत्महविः समर्पणीयमित्युक्तत्वादिहापि शरीरेन्द्रियादिभ्योऽतिरिक्त स्वात्मान प्रथम विशोध्य तं ब्रह्मणि समर्प्य स्वाधिकारानुगुणमर्थयते — 'भोक्ता भोग्य प्रेरितार च मत्वा' इत्यादिश्रुत्यन्तरप्रसिद्धचिदचिदीश्वरतत्त्वत्रयमिहापि द्रष्टव्यम् । वायुः, विद्याकर्माऽनुगुणभगवत्सकल्पवशेन तत्र तत्र गन्तृत्वाद्वा(जीवो) वायु. । अनेन जीवस्याणुपरिमाणत्व परमात्माधीनत्व च सिध्यति । वा गतिगन्धनयोरिति धातुः । निलयरहितत्वात्क्वचिदपि व्यवस्थितत्वाभावाच्चानिल. । अमृत प्रीयमाणोऽपि ( म्रियमाणेऽपि ) देहसताने स्वयममृत, स्वरूपतो धर्मतश्चाविनाशीत्यर्थः । अनिलममृतमिति पुलिङ्गत्वेन विवरणीय, वायुरिति पुलिङ्गत्वेनोपक्रमात् । एव प्रत्यगात्मनोऽमृतत्वमभिधाय तच्छरीरस्य मृतत्वमवश्यमित्याह — अथेद भस्मान्त शरीरमिति । प्रकृतादर्थादर्थान्तरविवक्षायामथशब्दः । इद शरीरमिति विशेष्यमीश्वरशरीरव्यवच्छेदार्थम् । कर्मवश्यशरीर भस्मान्तमित्यर्थ. । एव चिदचिद्विवेकमुक्त्वा प्रेरितार महापुरुष प्रणवेनोपादत्ते — ओमिति । यद्वा, शरीरमात्मान च विविच्य विविक्तमात्मानमोंकारवाच्ये परमपुरुषे समर्पयति । ओमिति । अथ क्रतुरूपिण विष्णु ज्ञानयज्ञगोचरमभिमुखीकुर्वेस्तदनुग्रह प्रार्थयते — क्रतो स्मर । क्रतो, ज्योतिष्टोमादिक्रत्वात्मक ।

(१) ईउ १७, शुस ४०।१५ क्रतो स्मर कृतꣳ स्मर क्रतो स्मर कृतꣳ स्मर (क्रतो स्मर क्लीबे स्मर कृतꣳ स्मर)

स्मर, स्मरणानुग्रहया बुद्ध्या विषयीकुरु । कृत स्मर, यत्कृत यत्किञ्चिदानुकूल्यमनुसधाय कृतशस्त्व मा रक्षेति वा । एतावदन्त त्वत्कृत्यनयाऽऽनुकूल्य प्रतिसधाय त्वमेव शेषपूरण कुर्विति भाव । उक्तार्थ आदराति शयात्क्रतो स्मर कृत स्मरेत्यावृत्ति ।

* नारायण

( ४ ) यस्मिन्नय स्थित सोऽप्यमृत., किमु पर. । अ' ब्रह्मैव निलयन यस्य वायो. सोऽनिलम् । 'अतिरोहितविज्ञानाद्वायुरप्यमृतः स्मृतः। मुख्यामृतः स्वय रामः परमात्मा सनातनः ॥' इति रामसहितायाम् । 'भक्ताना स्मरण विष्णोर्नित्यज्ञप्तिस्वरूपत । अनुग्रहोन्मुखत्व तु नैवान्यत्क्वचिदिष्यते ॥ ' इति ब्रह्मतर्के । मध्व

[ यस्मिन्निति । यस्मिन्वायौ अय परमेश्वर. सोऽपि वायुरपि अमृत , किमु परोऽमृत इति वक्तव्यमिति शेष । नन्वस्मिन्वाक्ये वायुरमृतमित्येवोच्यते, न तु यस्मिन्वायौ अय स्थित इति, तत्कुत. कैमुत्य लभ्यते । न हि वायोरमृतत्वमात्रेण ईश्वरामृतत्वसिद्धि , इति चेन्मैवम् । अस्यार्थस्याऽनिलपदेनोक्तत्वात् । तत्कथ, इत्यतस्तात्पर्यतो व्याख्यात तदिदानीं निर्वक्ति — अ. ब्रह्मैवेति । निल निलयन आश्रय । यथाश्रुतस्याऽनुवादोऽय, इत्यत अनिलमित्युक्तम् । अनेन पुनरुक्तिरपि परिहृता भवति । ननु यस्मिन्नय स्थित. इत्यनेन वायुरीश्वराश्रय इत्युक्तम् । अनेन निर्वचनेन ईश्वरो वायोराश्रय इति लक्ष्यते । तत्कथ अनिलपदार्थोऽसौ, इति चेन्मैवम् । यस्मिन्नय स्थित इत्यनेनापि यस्मिन्वायौ अय परमेश्वरो नियामकत्वेन स्थित इति वायोरीश्वराश्रितत्वस्यैव कथितत्वात् । अथ वा यस्मिन्परमेश्वरे अय वायु. स्थित., यदधीनो वर्तत इति यावत् । स वायुरपि यदा अमृत', तदा किमु वक्तव्य स परोऽमृत इति व्याख्येयम् । ततश्चेदमुक्त भवति — सोऽहमस्मीति जीवान्तर्गतस्य परमेश्वरस्य नित्यास्तित्व कल्याणतमरूपत्व चोक्त, तन्न युक्तम् । प्रत्यक्षत एव देहस्य भस्मान्तत्वदर्शनात्, देहनाशे च तदन्तर्गतस्य परमेश्वरस्य जीववन्मरणाद्यवश्यभावात्, इत्याशङ्क्येदमुक्त — वायुरनिलमिति । अयमर्थः — यद्यपीद शरीर भस्मान्त, तथापि तदन्तर्गतस्य परमेश्वरस्य न मरणादिदोषप्रसङ्ग । कुत , अनिल. परमेश्वराश्रितो वायुरपि यदाऽमृत , अथ तदा परमेश्वरः किं वक्तव्य इति तदमृतत्वस्य कैमुत्यसिद्धत्वादिति । ननु ससारिणो वायोः कथममृतत्व सभवति । यद्युपचारेण, तर्हि ईश्वरस्याऽपि किं तथाविधममृतत्वमस्ति, इत्याशङ्का स्मृत्यैव परिहरति — अतिरोहितेति। देहनाशेऽपि तत्कार्यविज्ञानतिरोभावाभावसादृश्यादित्यर्थ. । 'अतिरोहितविज्ञानात्' इति भावप्रधानो निर्देश.। मुख्यामृत. देहनाशादिरहितः । 'परमात्मा सनातन' इति तत्र युक्तिद्वयम् । अथ प्रणवप्रतीक प्रार्थयते — ओमिति । ओतत्वादिगुणयुक्त क्रतो, मां स्मर, मया कृत च ध्यानादिक च स्मरेति । अभ्यासस्तात्पर्यार्थ' । अत्र स्मरण नाम प्रसिद्धमेवेति प्रतीतिं स्मृत्यैव परिहरति — भक्तानामिति । भक्तकर्मक यद्विष्णो स्मरण तत् अनुग्रहोन्मुखत्वमेव । विष्णौ य' स्मरणशब्द प्रयुज्यते स स्मरणकार्यानुग्रहोन्मुखत्वे एव लक्षणया वर्तते इति यावत् । नैवान्यत्सस्कारकारणक ज्ञानमित्यर्थ. । न केवल भक्तविषये एव, किंतु सर्वत्रापीत्युक्त — क्वचिदिति । कुत , नित्यज्ञप्तिस्वरूपतः । स्मरण ह्यनुभवनाशे तज्जन्यसस्कारसहकृतेन मनसा जायते । ईश्वरश्च नित्यज्ञान स्वरूप इति तस्य स्मरणासभवात् लक्षणाश्रयणमिति भावः । जयतीर्थीया ]

( ५ ) क्लिबे स्मर, कल्प्यते भोगायेति क्लप् लोकः, तस्मै स्मर । जशादेश आर्षः । ' छन्दस्युभयथा ' इति पदान्तत्वात् । मयाऽस्मै अय लोको दातव्यस्तस्मै क्लसाय लोकाय स्मर । * महीधर.

[१]अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥

( १ ) पुनरन्येन मन्त्रेण मार्गं याचते — अग्ने नयेति । हे अग्ने, नय गमय, सुपथा शोभनेन मार्गेण । सुपथेति विशेषण दक्षिणमार्गनिवृत्त्यर्थम् । निर्विण्णोऽह

* मन्त्रावतरणवाक्यसाधुत्व चिन्तनीयम् । ( ) इति-चिह्नान्तर्गतोंऽश कल्पनया निवेशित ।

* शिष्टमुत्तरार्धं उवटवत् , पूर्वार्धं शंकरवत् ।

(१) ईश. १८ , शुसं. ४०।१६, भास्कर १।३।२६.

दक्षिणेन मार्गेण गतागतलक्षणेन, अतो याचे त्वां पुनःपुनर्गमनागमनवर्जितेन शोभनेन पथा नय। राये धनाय, कर्मफलभोगायेत्यर्थः। अस्मान् यथोक्तधर्मफलविशिष्टान् विश्वानि सर्वाणि हे देव, वयुनानि कर्माणि प्रज्ञानानि वा विद्वान् जानन्। किञ्च, युयोधि वियोजय विनाशय अस्मत् अस्मत्तः जुहुराणं कुटिलं वञ्चनात्मकं एनः पापम्। ततो वयं विशुद्धाः सन्त इष्टं प्राप्स्याम इत्यभिप्रायः। किंतु वयमिदानीं ते न शक्नुमः परिचर्यां कर्तुं, भूयिष्ठां बहुतरां ते तुभ्यं नमउक्तिं नमस्कारवचनं विधेम। नमस्कारेण परिचरेमेत्यर्थः।

* शंकर

(२) राये मुक्तिलक्षणाय धनाय। देव दानादिगुणयुक्त। वयुनानि प्रज्ञानानि। जुहुराणं प्रतिबन्धकम्। यतो भूयिष्ठां . ।

¶ उवट.

(३) अग्नेऽग्निशरीरक, 'यस्याग्निः शरीरम्' इति श्रुतेः। यद्वा, 'साक्षादप्यविरोधं जैमिनिः' (ब्रसू १।२।२८), अग्रं नयतीत्यग्नि। अग्रनयनादिगुणयुक्त, नय प्रवर्तयेत्यर्थः। अस्मान्, न केवलं मां अपि तु अनुबन्धिजनानपीति बहुवचनस्याभिप्राय.। देव मम बुद्धौ द्योतमान। वयुनानि चतुर्विधपुरुषार्थोपायान्। 'मुमुक्षुर्वै शरणमहं प्रपद्ये' इतिमन्त्रगतं मुमुक्षुपदं विवृण्वन्नाह — युयोधि। एतावदेव याचे त्वा, जुहुराणमेनोऽस्मत्तः प्रथमं वियोजयेति। तत्पश्चाद्यथामनोरथं विनाशय, पुरुषान्तरे सङ्क्रामय वा, न तत्रास्माकं निर्बन्ध इति भाव.।

† नारायण.

(४) वयुनं ज्ञानं, 'त्वद्दत्तया वयुनयेदमचष्ट विश्वम्' इतिवचनात्। जुहुराणं अस्मानल्पीकुर्वत्। युयोधि वियोजय। 'यदस्मान्कुरुतेऽत्यल्पांस्तदेनोऽस्मद्वियोजय। नय नो मोक्षवित्तायेत्यस्तौद्यं मनुः स्वराट्॥' इति स्कान्दे। युयु(?)वियोग इति धातु.। भक्तिज्ञानाभ्यां भूयिष्ठां नमउक्तिं विधेम।

मध्व.

[साक्षात्कारप्रार्थनानन्तरं अग्निप्रतीकं भगवन्तं मोक्षार्थं प्रार्थयते—अग्ने इति। वयुनानि कर्माणि इति केषांचिद्व्याख्यानं, तदसत्। मोक्षस्य कर्मसाध्यत्वाभावेन तदुक्तेर्वैयर्थ्यप्रसङ्गादित्यभिप्रेत्य वयुनशब्दार्थमाह—वयुनमिति। वयुनशब्दस्य ज्ञानवाचित्वं कुतः इति चेत्प्रयोगं दर्शयति—त्वद्दत्तयेति। जुहुराणं कुटिलमित्यन्यथाप्रतीतिनिरासायाह—जुहुराणमिति। अस्मानित्यन्वयसिद्ध्यर्थमावर्तितम्। युयोधीत्यप्रतीतार्थपदं व्याख्याति—युयोधीति। कुतोऽयं पदद्वयार्थ इत्यतः समाख्यानादित्याह—यदिति। युयोधीत्यस्य वियोगार्थसिद्धये धातुसूत्रमपि पठति—युयु वियोग इति धातुरिति। धातुव्याख्यानमित्यर्थः। नमउक्तेर्भूयिष्ठत्वमभ्यस्तत्वमतोऽभ्यधिकार्थं वदन् नमस्कारस्य कथं उक्तित्वमित्याशङ्कां परिहरति — भक्तीति। ततश्चाऽयमर्थः — हे अग्ने, अस्मान्सुपथा पुनरावर्तिवर्जितेन अर्चिरादिमार्गेण राये मोक्षाख्यवित्ताय नय। कुतः, हे देव, अस्मदनुष्ठितानि विश्वानि संपूर्णानि मोक्षाय पर्याप्तानीति यावत्, वयुनानि ज्ञानानि भवान् वेद। प्रारब्धकर्मभिर्बद्धस्य कथं मोक्ष इत्यत उक्तम् — युयोधीति। अस्मान् जुहुराणमल्पीकुर्वत्, संसारे परिवर्तयदिति यावत्। एन. पापं, अनिष्टं कर्मेति यावत्। अस्मद्युयोधि। अस्मत्तो वियोजय। वयं तुभ्यं भूयिष्ठां नमउक्तिं विधेम। न तु तत्प्रतिकर्तुं शक्नुम इति।

जयतीर्थीया.]

* महीधरः शंकरोवटयो. समन्वयपरम्।

¶ शेषं शंकरवत्।

† शेषं उवटवत्। 'यतः' इति हेतुत्वेन चतुर्थचरणो नावतारित.।

# ईशोपनिषत्समाप्ता।

# * तलवकारब्राह्मणोपनिषत्

गायत्रसाम्नि पृथिव्यग्न्यन्तरिक्षवायुद्युसूर्यवाक्प्राणानां सपत्तिः ब्रह्मसपत्तिश्च उपास्या उद्गात्रा

१।१।१

प्रजापतिर्वा इद त्रयेण वेदेनाऽजयद्यदस्येदं जित तत् ॥ १ ॥ स ऐक्षतेत्थ चेद्वा अन्ये देवा अनेन वेदेन यक्ष्यन्त इमां वाव ते जितिं जेष्यन्ति येय मम । हन्त त्रयस्य वेदस्य रसमाददा इति ॥ २ ॥ स भूरित्येवर्ग्वेदस्य रसमादत्त । सेय पृथिव्यभवत् । तस्य यो रस. प्राणेदत् सोऽग्निरभवद्रसस्य रस. ॥ ३ ॥ भुव इत्येव यजुर्वेदस्य रसमादत्त । तदिदमन्तरिक्षमभवत् । तस्य यो रस प्राणेदत् स वायुरभवद्रसस्य रस ॥ ४ ॥ स्वरित्येव सामवेदस्य रसमादत्त । सोऽसौ द्यौरभवत् । तस्य यो रस प्राणेदत् स आदित्योऽभवद्रसस्य रस ॥ ५ ॥ अथैकस्यैवाक्षरस्य रस नाऽशक्नोदादातु ओमित्येतस्यैव ॥ ६ ॥ सेय वागभवत् । ओमेव नामैषा । तस्या उ प्राण एव रस ॥ ७ ॥ तान्येतान्यष्टौ । अष्टाक्षरा गायत्री । गायत्र साम ब्रह्मो गायत्री । तदु ब्रह्माऽभिसपद्यते । अष्टाशफाः पशवस्तेनो पशव्यम् ॥ ८ ॥

प्रणवात्मिकाया वाचि पृथिव्यादिषड्देवताना सपद्रूपोपासना उद्गातु , वायो अपा चानुसारेण गायत्र साम गेयम्

१।१।२

स यदोमिति सोऽग्निर्वागिति पृथिवी । ओमिति वायुर्वागित्यन्तरिक्षम् । ओमित्यादित्यो वागिति द्यौ । ओमिति प्राणो वागित्येव वाक् ॥ १ ॥ स य एव विद्वानुद्गायत्योमित्येवाऽग्निमादाय पृथिव्या प्रतिष्ठापयति । ओमित्येव वायुमादायाऽन्तरिक्षे प्रतिष्ठापयति । ओमित्येवाऽऽदित्यमादाय दिवि प्रतिष्ठापयति । ओमित्येव प्राणमादाय वाचि प्रतिष्ठापयति ॥ २ ॥ तद्धैतच्छैलना गायत्र गायन्त्योवा३च् ओवा३च् ओवा३च् हु भा ओवा इति ॥ ३ ॥ तदु ह तत्पराङिवाऽनायुष्यमिव । तद्वा योऽश्वाऽपा चानुवर्त्म गेयम् ॥ ४ ॥ यद्वै वायु. पराङेव पवेत क्षीयेत ( सः ) । स पुरस्ताद्वाति स दक्षिणत स पश्चात्स उत्तरत स उपरिष्टात्स सर्वा दिशोऽनुसवाति ॥ ५ ॥ तदेतदाहुरिदानीं वा अयमितोऽवासीदथेत्थाद्वातीति । स यद्वेष्माण जनमानो निवेष्टमानो वाति क्षयादेव बिभ्यत् ॥६॥ यदु ह वा आप पराचीरेव प्रसृता' स्यन्देरन् क्षीयेरॅस्ता । यदङ्कासि कुर्वाणा निवेष्टमाना आवर्तान् सृजमाना यन्ति क्षयादेव बिभ्यती. । तदेतद्वायोश्चैवाऽपा चानु वर्त्म गेयम् ॥ ७ ॥

अष्टदेवताद्वन्द्वानुसधानोपासना, हिंकारे चन्द्रमस प्रणवे आदित्यस्य सर्वासा च देवताना ऐक्यानुसधानोपासना औद्गात्राङ्गम्

१।१।३

ओवा ओवा ओवा हुं भा ओवा इति करोत्येव । एताभ्या सर्वमायुरेति ॥ १ ॥ स यथा वृक्षमाक्रमणैराक्रममाण इयादेवमेवैते द्वे-द्वे देवते सधायेमान् लोकान् रोहन्नेति ॥ २ ॥ एक उ एव मृत्युरन्वेत्यशनयैव ॥ ३ ॥ अथ हिङ्करोति । चन्द्रमा वै हिङ्कारोऽन्नमु वै चन्द्रमा' । अन्नेनाशनया घ्नन्ति ॥ ४॥ ता-तामशनयामन्नेन हृत्वोमित्येतमेवाऽऽदित्य समयातिमुच्यते । एतदेव दिवश्छिद्रम् ॥ ५ ॥ यथा खं वाऽनस. स्याद्रथस्य वैव-

---

* एतदेव ' जैमिनीयोपनिषद्ब्राह्मण ' ' तलवकारोपनिषद्ब्राह्मण ' इति वा सज्ञित प्रथमसपादकेन Dr Hanns Oertel इत्यनेन Journal of the American Oriental Society Vol XVI इत्यस्मिन् ग्रन्थे बहुमूलपुस्तकानुसधानेन । अस्य 'गायत्रोपनिषत्' इति सज्ञा अत्र चतुर्थाध्याये नवमेऽनुवाके प्रथमखण्डारम्भे उपलभ्यते ।

मेतद्दिवश्छिद्रम्। तद्रश्मिभि संछन्न दृश्यते ॥ ६॥ यद्गायत्रस्योर्ध्वं हिङ्कारात्तदमृतम्। तदात्मान दध्याद्थो यजमानम्। अथ यदितरत् सामोर्ध्वं तस्य प्रतिहारात् ॥ ७ ॥ स यथाऽद्भिराप ससृज्येरन् यथाऽग्निनाऽग्नि ससृज्येत यथा क्षीरे क्षीरमासिच्यादेवमेवैतदक्षरमेताभिर्देवताभि ससृज्यते ॥ ८ ॥

हिंकारे भाकरण श्रीरूप आदित्यरूप चेत्युपास्य उद्गात्रा, हिंकारस्य बहिर्धाकरणनिषेध

१।१।४

तं वा एतं हिङ्कारं हिं भा इति हिङ्कुर्वन्ति। श्रीर्वै भा। असौ वा आदित्यो भा इति ॥ १ ॥ एत ह वा एत न्यङ्गमनु गर्भ इति। यद्ध इति स्त्रीणा प्रजननं निगच्छति तस्मात्ततो ब्राह्मण ऋषिकल्पो जायतेऽतिव्याधी राजन्य शूर ॥ २ ॥ एत ह वा एत न्यङ्गमनु वृषभ इति। यद्ध इति निगच्छति तस्मात्तत पुण्यो बलीवर्दो दुहाना धेनुरुक्षा दशवाजी जायन्ते ॥ ३ ॥ एत ह वा एतं न्यङ्गमनु गर्दभ इति। यद्ध इति निगच्छति तस्मात्स पापीयाञ्छ्रेयसीषु चरति। तस्मादस्य पापीयस श्रेयो जायतेऽश्वतरो वाऽश्वतरी वा ॥४॥ एतं ह वा एतं न्यङ्गमनु कुष्ठ इति। यद्ध इति निगच्छति तस्मात् सोऽनार्य' सन्नपि राज्ञ प्राप्नोति ॥ ५ ॥ तं हैतमेके हिङ्कारं हिं भा ओवा इति बहिर्धेव हिङ्कुर्वन्ति। बहिर्धेव वै श्री। श्रीर्वै साम्नो हिङ्कार इति ॥ ६ ॥ स य एन तत्र ब्रूयाद्बहिर्धा न्वा अय श्रियमधित पापीयान् भविष्यति। 'स यदा वै म्रियतेऽथाग्नौ प्रास्तो भवति। क्षिप्रे बत मरिष्यत्यग्नावेन प्रासिष्यन्ति' इति। तथा हैव स्यात् ॥ ७ ॥ तस्मादु हैत हिङ्कारं हिं वो इत्यन्तरिवैवाऽऽत्मन्नर्जयेत्। तथा ह न बहिर्धा श्रियं कुरुते सर्वमायुरेति ॥ ८ ॥

बहिष्पवमानकाले गायत्रसाम्नि गीयमाने आदित्यस्थ-सत्यरूपदेवताया स्वकृतसर्वपुण्यपापादिकर्तृत्व-दृष्टि चात्वालखाते द्युभवीयाकाश-दृष्टिश्च स्वर्गप्रतिबन्धनिवारिणी अमृतप्रापिका च

१।१।५

सा हैषाऽखला देवताऽपसेधन्ती तिष्ठति। इद वै त्वमत्र पापमकर्णे हैष्यसि। यो वै पुण्यकृत् स्यात् स इहेयादिति ॥ १ ॥ स ब्रूयादपश्यो वै त्व यद्यदह तदकरवं तद्वै मा त्व नाकारयिष्यस्त्व वै तस्य कर्ताऽसीति ॥ २ ॥ सा ह वेद सत्य माऽऽहेति। सत्य हैषा देवता। सा ह तस्य नेशे यदेनमपसेधेत्। सत्यमुपैव ह्वयते ॥ ३ ॥ अथ होवाचैक्ष्वाको वा वार्ष्णोऽनुवक्ता वा सात्यकीर्त.। उतैषाऽखला देवताऽपसेद्धुमेव ध्रियतेऽस्यै दिश ॥ ४ ॥ (तद्) दिवोऽन्त.। तदिमे द्यावापृथिवी सश्लिष्यत। यावती वै वेदिस्तावतीय पृथिवी। तद्यत्रैतच्चात्वाल खात तत्सप्रति स दिव आकाश ॥ ५ ॥ तद्बहिष्पवमाने स्तूयमाने मनसोद्गृह्णीयात् ॥ ६ ॥ स यथोच्छ्रायं प्रत्यस्य प्रपद्येतैवमेवैतया देवतयेदममृतमभिपर्येति यत्रायमिद तपतीति ॥ ७ ॥ अथ होवाच— ॥ ८ ॥

१।१।६

गोबलो वार्ष्ण। क एतमादित्यमर्हति समयैतुम्। दूराद्वा एष एतत्तपति न्यङ्। तेन वा एत पूर्वेण सामपथस्तदेव मनसाऽऽहृत्योपरिष्टादेतस्यैतस्मिन्नमृते निदध्यादिति ॥ १ ॥ तदु होवाच शाट्यायनि. समयैवैतदेन कस्तद्वेद। यद्येता आपो वा अभित, यद्वायु वा एष उपह्वयते, रश्मीन्वा, एष तदेतस्मै व्यूहतीति ॥ २ ॥ अथ होवाचोलुक्यो जानश्रुतेयः। यत्र वा एष एतत्तपत्येतदेवामृतम्। एतच्चेद्वै प्राप्नोति ततो मृत्युना पाप्मना व्यावर्तते ॥ ३ ॥ कस्तद्वेद यत्परेणाऽऽदित्यमन्तरिक्षमिदमनालयनमवरेण ॥ ४ ॥ अथैतदेवामृतम्। एतदेव मा यूय प्रापयिष्यथ। एतदेवाहं नातिमन्य इति ॥ ५ ॥ तान्येतान्यष्टौ। अष्टाक्षरा गायत्री। गायत्र साम ब्रह्मो गायत्री। तदु ब्रह्माभिसंपद्यते। अष्टाशफाः पशवस्तेनो पशव्यम् ॥ ६ ॥

गायत्रसाम्नि सपादनीयाष्टदेवतासु सर्वरूपत्वदृष्टि भ्रातृव्यशून्यतागुणवि-षयिणी

१।१।७

ता एता अष्टौ देवता । एतावदिद सर्वम् । ते ( .) करोति ॥१॥ स नैषु लोकेषु पाप्मने भ्रातृव्यायावकाश कुर्यात् । मनसैन निर्भजेत् ॥ २॥ तदेतदृचाऽभ्यनूच्यते । 'चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिण । गुहा त्रीणि निहिता नेऽङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति' इति ॥ ३ ॥ तद्यानि तानि गुहा त्रीणि निहिता नेऽङ्गयन्ती( ति । इ )म एव ते लोका ॥ ४ ॥ तुरीय वाचो मनुष्या वदन्तीति । चतुर्भागो ह वै तुरीय वाच' । सर्वयाऽस्य वाचा सर्वैरेभिर्लोकै सर्वेणास्य कृत भवति य एवं वेद ॥ ५ ॥ स यथाऽश्मानमाखणमृत्वा लोष्टो विध्वसत एवमेव स विध्वसते य एव विद्वॉसमुपवदति ॥ ६ ॥

सरसत्वेन वेदाप्यायकत्वेन च प्रणवमहिमोपासना तत्सहितेनैव वेदेन प्रयुक्तेन यज्ञो भवतीति

१।२।१

प्रजापतिर्वा इद त्रयेण वेदेनाजयद्यदस्येद जित तत् ॥ १ ॥ स ऐक्षतेत्थ चेद्वा अन्ये देवा अनेन वेदेन यक्ष्यन्त इमा वाव ते जितिं जेष्यन्ति येय मम ॥ २ ॥ हन्तेम त्रय वेदं पीळयानीति ॥ ३ ॥ स इमं त्रय वेदमपीळयत् । तस्य पीळयन्नेकमेवाक्षरं नाशक्नोत्पीळयितुमोमिति यदेतत् ॥४॥ एष उ ह वाव सरस. । सरसा ह वा एवविद्-त्रयीविद्या भवति ॥ ५ ॥ स इम रस पीळयित्वाऽपनिधायोर्ध्वोऽद्रवत् ॥ ६ ॥ तं द्रवन्त चत्वारो देवानामन्वपश्यन्निन्द्रश्चन्द्रो रुद्र समुद्र. । तस्मा देते श्रेष्ठा देवानाम् । एते ह्येनमन्वपश्यन् ॥७॥ स योऽय रस आसीत्तदेव तपोऽभवत् ॥ ८ ॥ त इम रस देवा अन्वैक्षन्त । तेऽभ्यपश्यन् । स तपो वा अभूदिति ॥ ९ ॥ इममु वै त्रय वेद मरीमृशित्वा तस्मिन्नेतदेवाक्षरमपीळितमविन्दन्नोमिति यदेतत् ॥ १० ॥ एष उ ह वाव सरस' । तेनैनं प्रायुवन् । यथा मधुना लाजान् प्रयुयादेवम् ॥ ११ ॥ तेऽभ्यतप्यन्त । तेषां तप्यमानानामाप्यायत वेद । तेऽनेन च तपसाऽऽपीनेन च वेदेन तासु एव जितिमजयन् यां प्रजापतिरजयत् । त एते सर्वं एव प्रजापतिमात्रा अया३म् अय३म् (?) इति ॥ १२ ॥ तस्मात्तप्यमानस्य भूयसी कीर्तिर्भवति भूयो यश । स य एतदेवं वेदैवमेवाऽऽपीनेन वेदेन यजते । यदो याजयत्येवमेवाऽऽपीनेन वेदेन याजयति ॥ १३ ॥ तस्य हैतस्य नैव काचनाऽऽर्तिरस्ति य एव वेद । स य एवैनमुपवदति स आर्तिमृच्छति ॥ १४ ॥

'प्रणव एव इन्द्र, इन्द्रनामानि परब्रह्मताबोधकानि, प्रणवाक्षरात्मिका वागेव सर्वजननी कामधुक्, प्रणव एव सत्य सर्वजगदाश्रय' इत्याकारा प्रणवोपासना उद्गात्रानुष्ठेया, सत्ये आप अप्सु भूमि भूम्या सूर्यं सूर्ये द्यौ आश्रिता इति सर्वलोकरचना

१।२।२

तदाहुर्येदोवा ओवा इति गीयते काऽत्रगर्भवति क सामेति ॥ १ ॥ ओमिति वै साम वागित्यृक् । ओमिति मनो वागिति वाक् । ओमिति प्राणो वागित्येव वाक् । ओमितीन्द्रो वागिति सर्वे देवा । तदेतदिन्द्रमेव सर्वे देवा अनुयन्ति ॥ २ ॥ ओमित्येतदेवाक्षरम् । एतेन वै ससवे परस्येन्द्र वृञ्जीत । एतेन ह वै तद्बको दाल्भ्य आजकेशिनामिन्द्र ववृजे । ओमित्येतेनैवाऽऽनिनाय ॥ ३ ॥ तान्येतान्यष्टौ । अष्टाक्षरा गायत्री । गायत्रं साम ब्रह्मो गायत्री । तदु ब्रह्माभिसपद्यते । अष्टाशफा पशवस्तेनो पशव्यम् ॥ ४ ॥ तस्यैतानि नामानि । इन्द्र. कर्मोक्षितिरमृत व्योमान्तो वाच । बहोर्भूय सर्व सर्वस्मादुत्तरं ज्योति । ऋत सत्य विज्ञानं विवाचनमप्रतिवाच्यम् । पूर्वं सर्वम् । सर्वा वाक् सर्वमिदमपि धेनु पिन्वते परागर्वाक् ॥ ५ ॥

१।२।३

सा पृथक्सलिलं कामदुघाऽक्षिति प्राणसहित चक्षु'श्रोत्र वाक्प्रभूतं मनसा व्याप्तं हृदयाग्रं

ब्राह्मणभक्तमन्नशुभ वर्षपवित्र गोभग पृथिव्युपरं तपस्तनु वरुणपरियतनमिन्द्रश्रेष्ठं सहस्राक्षरमयुतधारममृतं दुहाना सर्वानिमाँल्लोकानभिविक्षरतीति ॥ १ ॥ तदेतत्सत्यमक्षरं यदोमिति । तस्मिन्नाप प्रतिष्ठिता अप्सु पृथिवी पृथिव्यामिमे लोका ॥ २ ॥ यथा सूच्या पलाशानि सतृण्णानि स्युरेवमेतेनाक्षरेणेमे लोका सतृण्णा ॥ ३ ॥ तदिदमिमानतिविध्य दशधा क्षरति शतधा सहस्रधाऽयुतधा प्रयुतधा ( नियुतधा )ऽर्बुदधा न्यर्बुदधा निखर्वधा पद्ममक्षितिर्व्योमान्त ॥ ४ ॥ यथौघो विष्यन्दमान पर:परोवरीयान् भवत्येवमेवैतदक्षरं पर परोवरीयो भवति ॥ ५ ॥ ते हैते लोका ऊर्ध्वा एव श्रिता । इम एव त्रयोदशमासा ॥ ६ ॥ स य एव विद्वानुद्गायति स एवमेवैताँल्लोकानतिवहति । ओमित्येतेनाक्षरेणामुमादित्य मुख आधत्ते । एष ह वा एतदक्षरम् ॥ ७ ॥ तस्य सर्वमाप्त भवति, सर्वं जितं, न हाऽस्य कश्चन कामोऽनाप्तो भवति, य एव वेद ॥ ८ ॥ तद्ध पृथुर्वैन्यो दिव्यान् व्रात्यान् पप्रच्छ ।

‘स्थूणा दिवस्तम्भनी सूर्यमाहुरन्तरिक्षे सूर्य पृथिवीप्रतिष्ठ ।
अप्सु भूमी शिश्रियरे भूरिभारा किंस्विन्महीरधितिष्ठन्त्याप’ इति ॥ ९ ॥

ते ह प्रत्यूचु —

‘स्थूणामेव दिवस्तम्भनीं सूर्यमाहुरन्तरिक्षे सूर्य पृथिवीप्रतिष्ठ । अप्सु भूमी शिश्रियरे भूरिभारा सत्य महीरधितिष्ठन्त्याप’ इति ॥ १० ॥ ओमित्येतदेवाक्षरं सत्यम् । तदेतदापोऽधितिष्ठन्ति ॥ ११ ॥

सर्वप्रजोपजीवनस्य आदित्यरूपत्व ऋतुपर्जन्ययज्ञरूपत्व च साम्न उपास्य, पुरुषस्यैव सामत्वोपासना प्रशस्ततमा, सर्वदेवताश्रयत्वेन सामत्वेन च आत्मोपासना प्रशस्ततमा

१।३।१

प्रजापतिः प्रजा असृजत । ता एन सृष्टा अन्नकाशिनीरभित समन्तं पर्यविशन् ॥ १ ॥ ता अन्नवीत्किकामा स्थेति । अन्नाद्यकामा इत्यब्रुवन् ॥ २ ॥ सोऽब्रवीदेक वावेदमन्नाद्यमसृक्षि सामैव । तद्व प्रयच्छानीति । तन्न. प्रयच्छेत्यब्रुवन् ॥ ३ ॥ सोऽब्रवीदिमान्वै पशून् भूयिष्ठमुपजीवाम । एभ्य प्रथम प्रदास्यामीति ॥ ४ ॥ तेभ्यो हिङ्कार प्रायच्छत् । तस्मात्पशवो हिङ्कारिक्रतो विजिज्ञासमाना इव चरन्ति ॥ ५ ॥ प्रस्ताव मनुष्येभ्य । तस्मादु ते स्तुवत इवेद मे भविष्यत्यदो मे भविष्यतीति ॥ ६ ॥ आदिं वयोभ्य । तस्मात्तान्यादददानान्युपापपातमिव चरन्ति ॥ ७ ॥ उद्गीथ देवेभ्योऽमृतम् । तस्मात्तेऽमृता ॥ ८ ॥ प्रतिहारमारण्येभ्यः पशुभ्य । तस्मात्ते प्रतिहृतास्तन्तस्यमाना इव चरन्ति ॥ ९ ॥

१।३।२

उपद्रव गन्धर्वाप्सरोभ्य. । तस्मात्त उपद्रव गृह्णन्त इव चरन्ति ॥ १ ॥ निधन पितृभ्य । तस्मादु ते निधनसस्था ॥ २ ॥ तद्यदेभ्यस्तत् साम प्रायच्छदेतमेवैभ्यस्तदादित्य प्रायच्छत् ॥ ३ ॥ स यदनुदित स हिङ्कारोऽर्धोदित प्रस्ताव आसङ्गवमादिर्माध्यन्दिन उद्गीथोऽपराह्ण प्रतिहारो यदुपास्तमयं लोहितायति स उपद्रवोऽस्तमित एव निधनम् ॥ ४ ॥ स एष सर्वैर्लोकै सम । तद्यदेष सर्वैर्लोकै समस्तस्मादेष एव साम । स ह वै सामवित् स साम वेद य एव वेद ॥ ५ ॥ तेऽब्रुवन् दूरे वा इदमस्मत् । तत्रेदं कुरु यत्रोपजीवामेति ॥ ६ ॥ तदृतूनभ्यत्यनयत् । स वसन्तमेव हिङ्कारमकरोद्ग्रीष्म प्रस्ताव वर्षामुद्गीथ शरद प्रतिहारं हेमन्त निधनम् । मासार्धमासावेव सप्तमावकरोत् ॥ ७ ॥ तेऽब्रुवन्नेदीयो न्वावैतर्हि । तत्रैव कुरु यत्रोपजीवामेति ॥ ८ ॥ तत् पर्जन्यमभ्यत्यनयत् । स पुरोवातमेव हिङ्कारमकरोत् ॥ ९ ॥

१।३।३

जीमूतान् प्रस्ताव स्तनयित्नुमुद्गीथ विद्युतं प्रतिहार वृष्टिं निधनम् । यद्वृष्टात्प्रजाश्चौषधयश्च जायन्ते ते सप्तम्यावकरोत् ॥ १ ॥ तेऽब्रुवन्नेदीयो न्वावैतर्हि । तत्रैव कुरु यत्रोपजीवामेति

॥ २ ॥ तद्यज्ञमभ्यत्यनयत् । स यजूंष्येव हिङ्कारमकरोदृच प्रस्तावं सामान्युद्गीथ स्तोमं प्रतिहारं छन्दो निधनम् । स्वाहाकारवषट्कारावेव सप्तमावकरोत् ॥३॥ तेऽब्रुवन् नेदीयो न्वावैतर्हि । तत्रैव कुरु यत्रोपजीवामेति ॥ ४ ॥ तत्पुरुषमभ्यत्यनयत् । स मन एव हिङ्कारमकरोद्वाच प्रस्तावं प्राणमुद्गीथ चक्षु प्रतिहार श्रोत्र निधन रेतश्चैव प्रजा च सप्तमावकरोत् ॥ ५ ॥ तेऽब्रुवन्नत्र वा एनत्तदकर्यत्रोपजीविष्याम इति ॥ ६ ॥ स विद्यादहमेव सामास्मि मय्येता देवता इति ॥ ७ ॥

१।३।४

न ह दूरेदेवत स्यात् । यावद्ध वा आत्मना देवानुपास्ते तावदस्मै देवा भवन्ति ॥ १ ॥ अथ य एतदेव वेदाऽहमेव सामाऽस्मि मय्येता सर्वा देवता इत्येव ह्याऽस्मिन्नेता सर्वा देवता भवन्ति ॥ २ ॥ तदेतद्देवश्रुत्साम । सर्वा ह वै देवता शृण्वन्त्येवविद पुण्याय साधवे । ता एन पुण्यमेव साधु कारयन्ति ॥ ३ ॥ स ह स्माऽऽह सुचित्त शैलनो यो यज्ञकामो मामेव स वृणीताम् । तत एवैन यज्ञ उपनंस्यति । एवविद ह्युद्गायन्तं सर्वा देवता अनुसतृप्यन्ति । ता अस्मै तृप्तास्तथा करिष्यन्ति यथैनं यज्ञ उपनंस्यतीति ॥ ४ ॥

अनृचस्य साम्न प्रसामाख्यस्य प्रशसा, माध्यन्दिने तृतीये च सवने ऋचि गेयस्य साम्न प्रशसा

१।४।१

देवा वै स्वर्गं लोकमैप्सन् । त न शयाना नाऽऽसीना न तिष्ठन्तो न धावन्तो नैव केनचन कर्मणाऽऽप्नुवन् ॥ १ ॥ ते देवा प्रजापतिमुपा धावन् स्वर्गं वै लोकमैप्सिष्म । तं न शयाना नाऽऽसीना न तिष्ठन्तो न धावन्तो नैव केनचन कर्मणाऽऽपाम । तथा नोऽनुशाधि यथा स्वर्गं लोकमाप्नुयामेति ॥ २ ॥ तानब्रवीत् साम्नाऽनृचेन स्वर्गं लोक प्रयातेति । ते साम्नाऽनृचेन स्वर्गं लोकं प्रायन् ॥ ३ ॥ प्र वा इमे साम्नाऽगुरिति । तस्मात्प्रसामि तस्माद्ध प्रसाम्यन्नमत्ति॥ ४ ॥ देवा वै स्वर्गं लोकमायन् । त एतान्यृक्पदानि शरीराणि धून्वन्त आयन् । ते स्वर्गं लोकमजयन् ॥ ५ ॥ तान्या दिवः प्रकीर्णान्यशेरन् । अथेमानि प्रजापतिर्ऋक्पदानि शरीराणि सचित्याऽभ्यर्चत् । यदभ्यर्चत्ता एवर्चोऽभवन् ॥ ६ ॥

१।४।२

सैवर्गेभवदियमेव श्री । अतो देवा अभवन् ॥ १ ॥ अथैषामिमामसुरा श्रियमविन्दन्त । तदेवाऽऽसुरमभवत् ॥ २ ॥ ते देवा अब्रुवन् या वै न' श्रीरभूदविदन्त तामसुरा । कथं न्वेषामिमा श्रिय पुनरेव जयेमेति ॥ ३ ॥ तेऽब्रुवन्नृच्येव साम गायामेति । ते पुन प्रत्याद्रुत्यर्चि सामाऽगायन् । तेनाऽस्माल्लोकादसुराननुदन्त ॥ ४ ॥ तद्वै माध्यन्दिने च सवने तृतीयसवने च नर्चोऽपराधोऽस्ति। स यत्ते ऋचि गायति तेनाऽस्माल्लोकाद्द्विषन्त भ्रातृव्य नुदते । अथ यदनृचे देवतासु प्रात सवनःगायति तेन स्वर्गं लोकमेति ॥ ५ ॥ प्रजापतिर्वै साम्नेमा जितिमजयद्यास्येय जितिस्ताम् । स स्वर्गं लोकमारोहत् ॥ ६ ॥ ते देवाः प्रजापति मुपेत्याऽब्रुवन्नस्मभ्यमपीद साम प्रयच्छेति । तथेति । तदेभ्य साम प्रायच्छत् ॥ ७ ॥ तदेनानिदं साम स्वर्गं लोक नाऽकामायत वोढुम् ॥ ८ ॥ ते देवाः प्रजापतिमुपेत्याऽब्रुवन् यद्वै न साम प्रादा इदं वै नस्तत्स्वर्गं लोक न कामयते वोढुमिति ॥ ९ ॥ तद्वै पाप्मना संसृजतेति । कोऽस्य पाप्मेति । ऋगिति । तदृचा समसृजन् ॥ १० ॥ तदिद प्रजापतेर्गर्ह्यमाण मतिष्ठदिद वै मा तत्पाप्मना समस्राक्षुरिति । सोऽब्रवीद्यस्त्वैतेन व्यावर्तयाद्धयेव स पाप्मना वर्तोता इति ॥ ११ ॥ स य एतदृचा प्रात सवने व्यावर्तयति व्येवं स पाप्मना वर्तते ॥ १२ ॥

प्रस्तावे गायत्रीसपदुपासना

१।४।३

तदाहुर्यदोवा ओवा इति गीयते क्वात्रर्गभवति क्व सामेति ॥ १ ॥ प्रस्तुवन्नेवाष्टाभिरक्षरै' प्रस्तौति । अष्टाक्षरा गायत्री । अक्षरमक्षरं त्र्यक्षरम् । तच्चतुर्विंशति संपद्यन्ते । चतुर्विंशत्यक्षरा गायत्री

॥ २ ॥ तामेतां प्रस्तावेनर्चमाप्त्वा या श्रीर्योऽपचितिर्यः स्वर्गो लोको यद्यशो यदन्नाद्य तान्यागायमान आस्ते ॥ ३ ॥

देवाना प्रणवाश्रयेण मृत्युनिवारण, 'प्रणव सर्वदेवाश्रय अमृतादित्यप्रापक' इत्युपासना औद्गात्राङ्गम्

१।४।४

प्रजापतिर्देवानसृजत । तान् मृत्यु पाप्माऽन्वसृज्यत ॥ १ ॥ ते देवाः प्रजापतिमुपेत्याब्रुवन् कस्मा उ नोऽसृष्ठा मृत्यु चेन्न. पाप्मानमन्ववस्रक्ष्यन्नासिथेति ॥ २ ॥ तानब्रवीत् । छन्दसि सभरत । तानि यथायतन प्रविशत । ततो मृत्युना पाप्मना व्यावर्त्स्यथेति ॥ ३ ॥ वसवो गायत्रीं समभरन् । ता ते प्राविशन् । तान् साऽच्छादयत् ॥ ४ ॥ रुद्रास्त्रिष्टुभ समभरन् । ता ते प्राविशन् । तान् साऽच्छादयत् ॥ ५ ॥ आदित्या जगतीं समभरन् । ता ते प्राविशन् । तान् साऽच्छादयत् ॥ ६ ॥ विश्वेदेवा अनुष्टुभ समभरन् । ता ते प्राविशन् । तान् साऽच्छादयत् ॥ ७ ॥ तानस्यामृच्यस्वराया मृत्युर्निरजानाद्यथा मणौ मणिसूत्र परिपश्येदेवम् ॥ ८ ॥ ते स्वरं प्राविशन् । तान् स्वरे सतो न निरजानात् । स्वरस्य तु घोषेणाऽन्वैत् ॥ ९ ॥ त ओमित्येतदेवाक्षर समारोहन् । एतदेवाक्षरं त्रयी विद्या । यददोऽमृत तपति तत्प्रपद्य ततो मृत्युना पाप्मना व्यावर्तन्त ॥ १० ॥ एवमेवैव विद्वान् ओमित्येतदेवाक्षरं समारुह्य यददोऽमृत तपति तत्प्रपद्य ततो मृत्युना पाप्मना व्यावर्ततेऽथो यस्यैवं विद्वानुद्गायति ॥ ११ ॥

साम्नि त्रयीलोकत्रयश्रद्धाद्येकविंशत्वसपद्रूपोपासना औद्गात्राङ्गम्

१।५।१

अथैतदेकविंश साम ॥ १ ॥ तस्य त्रय्येव विद्या हिङ्कारः । अग्निर्वायुरसावादित्य एष प्रस्ताव । इम एव लोका आदि. । तेषु हीद लोकेषु सर्वमाहितम् । श्रद्धा यज्ञो दक्षिणा एष उद्गीथः । दिशोऽवान्तरदिश आकाश एष प्रतिहार । आपः प्रजा ओषधय एष उपद्रव । चन्द्रमा नक्षत्राणि पितर एतन्निधनम् ॥ २ ॥ तदेतदेकविंश साम । स य एवमेतदेकविंश साम वेदैतेन हास्य सर्वेणोद्गीतं भवत्येतस्माद्वेव सर्वस्मादावृश्च्यते य एव विद्वासमुपवदति ॥ ३ ॥

'प्रणव सर्वलोकाश्रयान्तरिक्षरूप' इत्युपासना, आगाऽऽगीतविभूतिप्रतिष्ठाप्रगसस्थास्तोभरूपाणा अष्टसामाङ्गानां लोकदेवतादिगादिषु सपद्रूपोपासना च औद्गात्राङ्ग, साम्न स्वररूपता, प्राणाना गातृत्वोपासना, वायो रसरूपत्वोपासना

१।६।१

इदमेवेदमग्रेऽन्तरिक्षमासीत् । तद्वेवाप्येतर्हि ॥ १ ॥ तद्यदेतदन्तरिक्ष य एवाऽयं पवत एतदेवान्तरिक्षम् । एष ह वा अन्तरिक्षनाम ॥ २ ॥ एष उ एवैष वितत । तद्यथा काष्ठेन पलाशे विष्कब्धे स्यातामक्षेण वा चक्रावेवमेतेनेमौ लोकौ विष्कब्धौ ॥ ३ ॥ तस्मिन्निद सर्वमन्त । तद्यदस्मिन्निदं सर्वमन्तस्तस्मादन्तर्यक्षम् । अन्तर्यक्षं ह वै नामैतत् । तदन्तरिक्षमिति परोक्षमाचक्षते ॥ ४ ॥ तद्यथा मूता प्रबद्धा प्रलम्बेरन्नेव हैतस्मिन्सर्वे लोका प्रबद्धा. प्रलम्बन्ते ॥ ५ ॥ तस्यैतस्य साम्नस्तिस्र आगास्त्रीण्यागीतानि षड्विभूतयश्चतस्र प्रतिष्ठा दश प्रगा सप्त सस्था द्वौ स्तोभावेकं रूपम् ॥ ६ ॥ तद्यास्तिस्र आगा इम एव ते लोका ॥ ७ ॥ अथ यानि (त्रीण्य्)आगीतान्यग्निर्वायुरसावादित्य एतान्यागीतानि । न ह वै काचन श्रियमपराध्नोति य एवं वेद ॥ ८ ॥

१।६।२

अथ या षड्विभूतय ऋतवस्ते ॥ १ ॥ अथ याश्चतस्र प्रतिष्ठा इमा एव ताश्चतस्रो दिश ॥२॥ अथ ये दश प्रगा इम एव ते दश प्राणा. ॥ ३ ॥ अथ या सप्त सस्था या एवैताः सप्त होत्रा प्राचीर्वषट्कुर्वन्ति ता एव ताः ॥ ४ ॥ अथ यौ द्वौ स्तोभावहोरात्रे एव ते ॥ ५ ॥ अथ यदेक रूप कर्मैव तत् । कर्मणा हीदं सर्वं विक्रियते ॥ ६ ॥

तस्यैतस्य साम्नो देवा आजिमायन्। स प्रजापति-र्हरसा हिङ्कारमुदजयदग्निस्तेजसा प्रस्ताव रूपेण बृहस्पतिरुद्गीथं स्वधया पितर प्रतिहारं वीर्येणेन्द्रो निधनम् ॥ ७ ॥ अथेतरे देवा अन्तरिता इवाऽऽसन्। त इन्द्रमब्रुवन् । तव वै वयं स्मोऽनु न एतस्मिन् सामन्नाभजेति ॥ ८ ॥ तेभ्य' स्वरं प्रायच्छत्। त प्रजापतिरब्रवीत्कथेत्थमक । सर्वं वा एभ्य. साम प्रादा' । एतावद्वाव साम यावान् स्वर. । ऋग्वा एषर्ते स्वराद्भवतीति ॥ ९ ॥ सोऽब्रवीत् पुनर्वो अहमेषामेत रसमादास्य इति । तानब्रवीदुप मा गायत । अभि मा स्वरतेति । तथेति ॥ १० ॥ तमुपागायन्। तमभ्यस्वरन्। तेषां पुना रसमादत्त ॥ ११ ॥

१।६।३

स यथा मधुधाने मधुनाळीभिर्मध्वासिञ्चादेवमेव तत्सामन् पुना रसमासिञ्चत् ॥ १ ॥ तस्मादु ह नोपगायेत्। इन्द्र एष यदुद्गाता । स यथाऽसावमीषा रसमादत्त एवमेष तेषां रसमादत्ते ॥ २ ॥ काम ह तु यजमान उपगायेत्। यजमानस्य हि तद्भवति । अथो ब्रह्मचार्याचार्योक्त' ॥ ३ ॥ तदु वा आहु । उपैव गायेत् । दिशो ह्युपगायन् दिशामेव सलोकता जयतीति ॥ ४ ॥ ते य एवेमे मुख्या प्राणा एत एवोद्गातारश्चोपगातारश्च। इमे ह त्रय उद्गातार इम उ चत्वार उपगातार ॥ ५ ॥ तस्मादु चतुर एवोपगातॄन् कुर्वीत । तस्मादु होपगातॄन् प्रत्यभिमृशेत् । दिश स्थ श्रोत्र मे मा हिंसिष्टेति ॥ ६ ॥ स य स रस आसीद्य एवाय पवत एष एव स रस ॥ ७ ॥ स यथा मध्वालोपमद्यादिति ह स्माह सुचित्त शैलन. । एवमेतस्य रसस्यात्मानं पूरयेत । स एवोद्गाताऽऽत्मानं च यजमान चामृतत्व गमयतीति ॥ ८ ॥

'प्रणव अक्षयपर्यायाक्षर रसतम सर्वतर्पक'

इत्युपासना प्रणवगानाङ्गम्

१।७।१

अयमेवेदमग्र आकाश आसीत्। स उ एवाप्येतर्हि ॥ १ ॥ स य स आकाशो वागेव सा। तस्मादाकाशाद्वाग्वदति ॥ २ ॥ तामेतां वाचं प्रजापतिरभ्यपीळयत् । तस्या अभिपीळितायै रस' प्राणेदत्। त एवेमे लोका अभवन् ॥ ३ ॥ स इमॉल्लोकानभ्यपीळयत् । तेषामभिपीळिताना रस प्राणेदत्। ता एवैता देवता अभवन्नग्निर्वायुरसावादित्य इति ॥ ४ ॥ स एता देवता अभ्यपीळयत् । तासामभिपीळिताना रसः प्राणेदत् । सा त्रयी विद्याऽभवत् ॥ ५ ॥ स त्रयीं विद्यामभ्यपीळयत् । तस्या अभिपीळितायै रस. प्राणेदत्। ता एवैता व्याहृतयोऽभवन् भूर्भुव. स्वरिति ॥ ६ ॥ स एता व्याहृतीरभ्यपीळयत्। तासामभिपीळिताना रस प्राणेदत्। तदेतदक्षरमभवदोमिति यदेतत् ॥ ७ ॥ स एतदक्षरमभ्यपीळयत्। तस्याऽभिपीळितस्य रस प्राणेदत् ॥ ८ ॥

१।७।२

तदक्षरदेव। यदक्षरदेव तस्मादक्षरम् ॥ १ ॥ यद्वेवाक्षर नाक्षीयत तस्मादक्षयम्। अक्षय ह वै नामैतत् । तदक्षरमिति परोक्षमाचक्षते ॥ २ ॥ तद्वैतदेक ओमिति गायन्ति। तत्तथा न गायेत। ईश्वरो हैनदेतेन रसेनान्तर्धातो । अथो द्वे इवैव भवत ओमिति। ओ इत्यु हैके गायन्ति। तदु ह तन्न गीतम्। नैव तथा गायेत। ओमित्येव गायेत्। तदेनदेतेन रसेन सदधाति ॥ ३ ॥ तदेत रस तर्पयति। रसस्तृप्तोऽक्षर तर्पयति । अक्षर तृप्त व्याहृतीस्तर्पयति। व्याहृतयस्तृप्ता वेदॉस्तर्पयन्ति। वेदास्तृप्ता देवतास्तर्पयन्ति। देवतास्तृप्ता लोकाँस्तर्पयन्ति। लोकास्तृप्ता अक्षर तर्पयन्ति। अक्षर तृप्तं वाच तर्पयति । वाक् तृप्ताऽऽकाशं तर्पयति । आकाशस्तृप्त प्रजास्तर्पयति। तृप्यति प्रजया पशुभिर्य एतदेव वेदाथो यस्यैव विद्वानुद्गायति ॥४॥

शुक्लकृष्णपुरुषेतित्रिवृद्रूपस्य आकाशरूपादित्यस्य प्रणवस्य

अध्यात्म अधिदैवत अधिविद्युच्च उपासना

१।८।१

अयमेवेदमग्र आकाश आसीत्। स उ एवाप्येतर्हि ॥ १ ॥ स यः स आकाश आदित्य एव स । एतस्मिन् (ह्य)उदिते सर्वमिदमाकाशते ॥ २ ॥

तस्य मर्त्यामृतयोर्वै तीराणि समुद्र एव। तद्यत्समुद्रेण परिगृहीत तन्मृत्योराप्तमथ यत्पर तदमृतम् ॥ ३ ॥ स यो ह स समुद्रो य एवाय पवत एष एव स समुद्र। एत हि सद्रवन्त सर्वाणि भूतान्यनुसद्रवन्ति ॥ ४ ॥ तस्य द्यावापृथिवी एव रोधसी। अथ यथा नद्या कसानि वा प्रहीणानि स्यु सरॉसि वैवमस्याय पार्थिव समुद्र ॥ ५ ॥ स एष पार एव समुद्रस्योदेति। स उद्यन्नेव वायो पृष्ठ आक्रमते। सोऽमृतादेवोदेति। अमृतमनुसचरति। अमृते प्रतिष्ठित· ॥ ६ ॥ तस्यैतत् त्रिवृद्रूप मृत्योरनाप्त शुक्ल कृष्ण पुरुष ॥ ७ ॥ तद्यच्छुक्ल तद्वाचो रूप मृचोऽग्नेर्मृत्यो। सा या सा वागृक् सा। अथ योऽग्निर्मृत्यु· स ॥ ८ ॥ अथ यत्कृष्ण तदपा रूपमन्नस्य मनसो यजुष। तद्यास्ता आपोऽन्न तत्। अथ यन्मनो यजुष्टत् ॥ ९ ॥ अथ य. पुरुष स प्राणस्तत्साम तद्ब्रह्म तदमृतम्। स य प्राणस्तत्साम। अथ यद्ब्रह्म तदमृतम् ॥ १० ॥

१।८।२

अथाध्यात्मम्। इदमेव चक्षुस्त्रिवृच्छुक्ल कृष्ण पुरुष· ॥ १ ॥ तद्यच्छुक्ल तद्वाचो रूपमृचोऽग्ने मृत्यो। सा या सा वागृक् सा। अथ योऽग्निर्मृत्यु. स· ॥ २ ॥ अथ यत्कृष्ण तदपा रूपमन्नस्य मनसो यजुष·। तद्यास्ता आपोऽन्न तत्। अथ यन्मनो यजुष्टत् ॥ ३ ॥ अथ य पुरुष स प्राणस्तत्साम तद्ब्रह्म तदमृतम्। स य· प्राणस्तत्साम। अथ यद्ब्रह्म तदमृतम् ॥ ४ ॥ सैषोत्क्रान्तिर्ब्रह्मण। अथात. पराक्रान्ति ॥ ५ ॥ सा या साऽऽक्रान्तिर्विद्युदेव सा। स यदेव विद्युतो विद्योतमानायै श्येत रूप भवति तद्वाचो रूपमृचोऽग्नेर्मृत्यो. ॥ ६ ॥ यद्वेव विद्युत. सद्रवन्त्यै नील रूपं भवति तदपा रूपमन्नस्य मनसो यजुष ॥ ७ ॥ य एवैष विद्युति पुरुष. स प्राणस्तत्साम तद्ब्रह्म तदमृतम्। स य. प्राणस्तत्साम। अथ यद्ब्रह्म तदमृतम् ॥ ८ ॥

उद्गानाङ्गोपासना पुरुषत्रयविषयिणी

१।८।३

स हैषोऽमृतेन परिवृढो मृत्युमध्यास्तेऽन्नं कृत्वा। १ ॥ अथैष एव पुरुषो योऽय चक्षुषि। य आदित्ये सोऽतिपुरुष। यो विद्युति स परमपुरुष ॥ २ ॥ एते ह वाव त्रय पुरुषा। आ हाऽस्यैते जायन्ते ॥ ३ ॥ स योऽय चक्षुष्येषोऽनुरूपो नाम। अन्वङ् ह्येष सर्वाणि रूपाणि। तमनुरूप इत्युपासीत। अन्वञ्चि हैन सर्वाणि रूपाणि भवन्ति ॥ ४ ॥ य आदित्ये स प्रतिरूप। प्रत्यङ् ह्येष सर्वाणि रूपाणि। त प्रतिरूप इत्युपासीत। प्रत्यञ्चि हैन सर्वाणि रूपाणि भवन्ति ॥ ५ ॥ यो विद्युति स सर्वरूप। सर्वाणि ह्येतस्मिन् रूपाणि। त सर्वरूप इत्युपासीत। सर्वाणि हाऽस्मिन् रूपाणि भवन्ति ॥ ६ ॥ एते ह वाव त्रय पुरुषा। आ हाऽस्यैवे जायन्ते य एतदेव वेदाथो यस्यैव विद्वानुद्गायति ॥ ७ ॥

सामरूपस्य आकाशात्मकादित्यरूपस्य इन्द्रस्य सप्तभी रश्मिभि अध्यात्म वाङ्मनश्चक्षु श्रोत्रप्राणास्वन्नरूपा- · पञ्चै युक्तस्य भ्रातृव्यशून्यतागुणस्योपासना उद्गातु

१।९।१

अयमेवेदमग्र आकाश आसीत्। स उ एवाप्ये तर्हि ॥ १ ॥ स य. स आकाश इन्द्र एव स। स यः स इन्द्र एष एव स य एष एव तपति। स एष सप्तरश्मिर्वृषभस्तुविष्मान् ॥ २ ॥ तस्य वाङ्मयो रश्मि प्राङ् प्रतिष्ठितः। सा या सा वागग्नि स.। स दशधा भवति शतधा सहस्रधाऽयुतधा प्रयुतधा नियुतधाऽर्बुदधा न्यर्बुदधा निखर्वधा पद्ममक्षितिर्व्योमान्त. ॥ ३ ॥ स एष एतस्य रश्मिर्वाग्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः। स यः कश्च वदत्येतस्यैव रश्मिना वदति ॥ ४ ॥ अथ मनोमयो दक्षिणा प्रतिष्ठित। तद्यत्तन्मनश्चन्द्रमाः स·। स दशधा भवति ॥ ५ ॥ स एष एतस्य रश्मिर्मनो भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थित·। स य कश्च मनुत एतस्यैव रश्मिना मनुते ॥ ६ ॥ अथ चक्षुर्मयः प्रत्यङ् प्रतिष्ठित। तद्यत्तच्चक्षुरादित्यः स.। स दशधा भवति ॥ ७ ॥ स एष एतस्य रश्मिश्चक्षुर्भूत्वा सर्वास्वासु प्रजासु प्रत्यव-

स्थित । स य कश्च पश्यत्येतस्यैव रश्मिना पश्यति ॥ ८ ॥ अथ श्रोत्रमय उदङ् प्रतिष्ठित । तद्यत्तच्छ्रोत्र दिशस्ता । स दशधा भवति ॥ ९ ॥ स एष एतस्य रश्मि श्रोत्र भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थित । स य कश्च शृणोत्येतस्यैव रश्मिना शृणोति ॥ १० ॥

१।९।२

अथ प्राणमय ऊर्ध्व. प्रतिष्ठितः । स य. स प्राणो वायु. स । स दशधा भवति ॥ १ ॥ स एष एतस्य रश्मि. प्राणो भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थित. । स य कश्च प्राणित्येतस्यैव रश्मिना प्राणिति ॥ २ ॥ अथाऽसुमयस्तिर्यङ् प्रतिष्ठित । स ह स ईशानो नाम । स दशधा भवति ॥ ३ ॥ स एष एतस्य रश्मिरसुर्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स य कश्चाऽसुमानेतस्यैव रश्मिनाऽसुमान् ॥ ४ ॥ अथाऽन्नमयोऽर्वाङ् प्रतिष्ठित. । तद्यत्तदन्नमापस्ताः । स दशधा भवति शतधा सहस्रधाऽयुतधा प्रयुतधा नियुतधाऽर्बुदधा न्यर्बुदधा निखर्वधा पद्ममक्षितिर्व्योमान्त ॥ ५ ॥ स एष एतस्य रश्मिरन्न भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स य कश्चाश्नात्येतस्यैव रश्मिनाऽश्नाति ॥ ६ ॥ स एष सप्तरश्मिर्वृषभस्तुविष्मान् । तदेतदृचाऽभ्यनूच्यते--

'यः सप्तरश्मिर्वृषभस्तुविष्मानवासृजत्सर्तवे सप्त सिन्धून् ।
यो रौहिणमस्फुरद्वज्रबाहुर्द्यामारोहन्त स जनास इन्द्र ' इति ॥ ७ ॥

यः सप्तरश्मिरिति । सप्त ह्येत आदित्यस्य रश्मय । वृषभ इति । एष ह्येवाऽऽसा प्रजानामृषभः । तुविष्मानिति । महीयैवाऽस्यैषा ॥ ८ ॥ अवासृजत् सर्तवे सप्त सिन्धूनिति । सप्त ह्येते सिन्धवः । तैरिद सर्व सितम् । तद्यदेतैरिद सर्व सित तस्मात्सिन्धवः ॥ ९ ॥ यो रौहिणमस्फुरद्वज्रबाहुरिति । एष (हि) रौहिणमस्फुरद्वज्रबाहु ॥ १० ॥ द्यामारोहन्तं स जनास इन्द्र इति । एष हीन्द्र ॥ ११ ॥

१।९।३

तद्यथा गिरिं पन्थान. समुदियुरिति ह स्माऽऽह शाट्यायनिरेवमेत आदित्यस्य रश्मय एतमादित्यं सर्वतोऽपियन्ति । स हैव विद्वानोमित्याददान एतैरेतस्य रश्मिभिरेतमादित्य सर्वतोऽप्येति ॥ १ ॥ तदेतत् सर्वतोद्वारमनिषेध साम । अन्यतोद्वारं हैनदेक एवाऽभ्रङ्गमुपासते । अतोऽन्यथा विदुः ॥ २ ॥ अथ य एनदेव वेद स एवैतत् सर्वतोद्वारमनिषेध साम वेद ॥ ३ ॥ सा एषा विद्युत् । (यद्) एतन्मण्डलं समन्त परिपतति तत्साम । अथ यत्परमतिभाति स पुण्यकृत्यायै रस. । तमभ्यतिमुच्यते ॥ ४ ॥ तदेतदभ्रातृव्यं साम । न ह वा इन्द्र. कचन भ्रातृव्यं पश्यते । स यथेन्द्रो न कचन भ्रातृव्य पश्यत एवमेव न कचन भ्रातृव्यं पश्यते य एतदेव वेदाथो यस्यैव विद्वानुद्गायति ॥ ५ ॥

'सप्तविध सामैव आकाशरूपादित्यात्मक इन्द्र सप्त दिग्रूप च' इत्युपासना औद्गात्राङ्गम्

१।१०।१

अयमेवेदमग्र आकाश आसीत् । स उ एवाऽप्येतर्हि । स य स आकाश इन्द्र एव स । स य स इन्द्र सामैव तत् ॥ १ ॥ तस्यैतस्य साम्न इयमेव प्राचीदिग्घिङ्कार इयं प्रस्ताव इयमादिरियमुद्गीथोऽसौ प्रतिहारोऽन्तरिक्षमुपद्रव इयमेव निधनम् ॥ २ ॥ तदेतत्सप्तविध साम । स य एवमेतत्सप्तविध साम वेद यत्किञ्च प्राच्या दिशि या देवता ये मनुष्या ये पशवो यदन्नाद्य तत्सर्वं हिङ्कारेणाप्नोति ॥ ३ ॥ अथ यद्दक्षिणायां दिशि तत्सर्वं प्रस्तावेनाप्नोति ॥ ४ ॥ अथ यत्प्रतीच्या दिशि तत्सर्वमादिनाप्नोति ॥ ५ ॥ अथ यदुदीच्या दिशि तत्सर्वमुद्गीथेनाप्नोति ॥ ६ ॥ अथ यदमुष्यां दिशि तत्सर्वं प्रतिहारेणाप्नोति ॥ ७ ॥ अथ यदन्तरिक्षे तत्सर्वमुपद्रवेणाप्नोति ॥ ८ ॥ अथ यदस्या दिशि या देवता ये मनुष्या ये पशवो यदन्नाद्य तत्सर्वं निधनेनाप्नोति ॥ ९ ॥ सर्वं हैवाऽस्याऽऽप्त भवति सर्वं जित न ह्यस्य कश्चन

कामोऽनाप्तो भवति य एवं वेद ॥ १० ॥ स यद्ध किञ्च किञ्चैव विद्वानेषु लोकेषु कुरुते स्वस्य हैव तत्स्वतः कुरुते । तदेतदृचाऽभ्यनूच्यते ॥ ११ ॥

१।१०।२

'यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।
न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी'
इति ॥ १ ॥

यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युरिति । यच्छतं द्याव स्युः शतं भूम्यस्ताभ्य एष एवाऽऽकाशो ज्यायान् ॥ २ ॥ न त्वा वज्रिन्त्सहस्रं सूर्या अन्विति । न ह्येतं सहस्रं चन सूर्या अनु ॥ ३ ॥ न जातमष्ट रोदसी इति । न ह्येतं जातं रोदन्ति । इमे ह वाव रोदसी ताभ्यामेष एवाकाशो ज्यायान् । एतस्मिन् ह्येवैते अन्तः ॥ ४ ॥ स यः स आकाश इन्द्र एव सः । स यः स इन्द्र एष एव स य एष तपति ॥ ५ ॥ स एषोऽभ्राण्यतिमुच्यमान एति । तद्यथैषोऽभ्राण्यतिमुच्यमान एत्येवमेव स सर्वस्मात्पाप्मनोऽतिमुच्यमान एति य एवं वेदाथो यस्यैवं विद्वानुद्गायति ॥ ६ ॥

त्रिवृतः साम्नः चतुष्पात्त्वं अध्यात्मं अधिदैवतं च
उपास्यं औद्गात्राङ्गं, गायत्रसाम्नि च चन्द्रमसः
आदित्यस्य च चतुष्पात्त्वं अष्टत्वसख्यया
सपाद्य, 'वायुरूपः प्रजापतिः आदित्यः
अग्निः चन्द्रमा नक्षत्राणि च
सामैव' इत्युपासना
औद्गात्राङ्गम्

१।११।१

त्रिवृत्साम चतुष्पात् । ब्रह्म तृतीयमिन्द्रस्तृतीयं प्रजापतिस्तृतीयमन्नमेव चतुर्थः पादः ॥ १ ॥ तद्यद्वै ब्रह्म स प्राणोऽथ य इन्द्रः सा वागथ यः प्रजापतिस्तन्मनोऽन्नमेव चतुर्थः पादः ॥ २ ॥ मन एव हिङ्कारो वाक्प्रस्तावः प्राण उद्गीथोऽन्नमेव चतुर्थः पादः ॥ ३ ॥ करोत्येव वाचा, नयति प्राणेन, गमयति मनसा । तदेतन्निरुद्धं यन्मनः । तेन यत्र कामयते तदात्मानं च यजमानं च दधाति ॥ ४ ॥ अथाधिदैवतम् । चन्द्रमा एव हिङ्कारोऽग्निः प्रस्ताव आदित्य उद्गीथ आप एव चतुर्थः पादः । तद्धि प्रत्यक्षमन्नम् ॥ ५ ॥ ता वा एता देवता अमावास्यां रात्रिं संयन्ति । चन्द्रमा अमावास्यां रात्रिमादित्यं प्रविशत्यादित्योऽग्निम् ॥ ६ ॥ तद्यत्संयन्ति तस्मात्साम । स ह वै सामवित्स साम वेद य एवं वेद ॥ ७ ॥ तासां वा एतासां देवतानामेकैकैव देवता साम भवति ॥ ८ ॥ एष एवादित्यस्त्रिवृच्चतुष्पाद्रश्मयो मण्डलं पुरुषः । रश्मय एव हिङ्कारः । तस्मात्ते प्रथमत एवोद्यतस्तायन्ते । मण्डलं प्रस्तावः पुरुष उद्गीथो या एता आपोऽन्तः स एव चतुर्थः पादः ॥ ९ ॥ एवमेव चन्द्रमसो रश्मयो मण्डलं पुरुषः । रश्मय एव हिङ्कारो मण्डलं प्रस्तावः पुरुष उद्गीथो या एता आपोऽन्तः स एव चतुर्थः पादः ॥ १० ॥ चत्वार्यन्यानि चत्वार्यन्यानि । तान्यष्टौ । अष्टाक्षरा गायत्री । गायत्रं साम ब्रह्मो गायत्री । तदु ब्रह्माऽभिसंपद्यते । अष्टाशफाः पशवस्तेनो पशव्यम् ॥ ११ ॥

१।११।२

अथाऽध्यात्मम् । इदमेव चक्षुस्त्रिवृच्चतुष्पाच्छुक्लं कृष्णं पुरुषः । शुक्लमेव हिङ्कारः कृष्णं प्रस्तावः पुरुष उद्गीथो या इमा आपोऽन्तः स एव चतुर्थः पादः ॥ १ ॥ इदमादित्यस्यायनमिदं चन्द्रमसः । चत्वारीमानि चत्वारीमानि । तान्यष्टौ । अष्टाक्षरा गायत्री । गायत्रं साम ब्रह्मो गायत्री । तदु ब्रह्माभिसंपद्यते । अष्टाशफाः पशवस्तेनो पशव्यम् ॥ २ ॥ स योऽयं पवते स एष एव प्रजापतिः । तद्धेव साम । तस्याय देवो योऽयं चक्षुषि पुरुषः । स एष आहुतिमतिमत्योत्क्रान्तः ॥ ३ ॥ अथ यावेतौ चन्द्रमाश्चादित्यश्च यावेतावप्सु दृश्येते एतावेतयोर्देवौ ॥ ४ ॥ यद्ध वा इदमाहुर्देवानां देवा इति । एते ह ते । त एत आहुतिमतिमत्योत्क्रान्ताः ॥ ५ ॥

तद्ध पृथुर्वैन्यो दिव्यान्व्रात्यान्पप्रच्छ—

'येभिर्वातः इषितः प्रवाति ये ददन्ते पञ्च दिशः समीचीः ।
य आहुतीरत्यमन्यन्त देवा अपां नेतारः कतमे त आसन्' इति ॥ ६ ॥

ते ह प्रत्यूचु —
'इमामेषा पृथिवीं वस्त एकोऽन्तरिक्षं पर्येको बभूव ।
दिवमेको ददते यो विधर्ता विश्वा आशा प्रतिरक्षन्त्यन्ये ' इति ॥ ७ ॥
इमामेषां पृथिवीं वस्त एक इत्यग्निर्है स' ॥ ८ ॥ अन्तरिक्षं पर्येको बभूवेति वायुर्ह सः ॥ ९ ॥ दिवमेको ददते यो विधर्तेत्यादित्यो ह स. ॥ १० ॥ विश्वा आशा प्रतिरक्षन्त्यन्य इति । एता ह वै देवता विश्वा आशा प्रतिरक्षन्ति चन्द्रमा नक्षत्राणीति । ता एता सामैव सत्यो व्यूढोऽन्नाद्याय ॥ ११ ॥

१।१२।१

'सवत्सरात्मक ऋतुचक्ररूप अनन्त साम' इत्युपासना औद्गात्राङ्गम्

अथैतत्साम । तदाहु सवत्सर एव सामेति ॥ १ ॥ तस्य वसन्त एव हिङ्कार । तस्मात्पशवो वसन्ता हिङ्करिक्रत समुदायन्ति ॥ २ ॥ ग्रीष्म. प्रस्ताव. । अनिरुक्तो वै प्रस्तावोऽनिरुक्त ऋतूना ग्रीष्म ॥ ३ ॥ वर्षा उद्गीथ । उदिव वै वर्ष गायति ॥ ४ ॥ शरत् प्रविहार । शरदि ह खलु वै भूयिष्ठा ओषधय पच्यन्ते ॥ ५ ॥ हेमन्तो निधनम् । निधनकृता इव वै हेमन्प्रजा भवन्ति ॥ ६ ॥ तावेतावन्तौ सधत्त । एतदन्वनन्त सवत्सर । तस्यैतावन्तौ यद्धेमन्तश्च वसन्तश्च । एतदनु ग्रामस्यान्तौ समेत. । एतदनु निष्कस्यान्तौ समेत । एतदन्वहिर्भोगान्पर्योह्य शये ॥ ७ ॥ तद्यथा ह वै निष्क समन्त ग्रीवा अभिपर्येत्त एवमनन्तं साम । स य एवमेतदनन्त साम वेदानन्ततामेव जयति ॥ ८ ॥

'पर्जन्यात्मक पुरुषात्मक देवतात्मक च साम' इत्युपासना औद्गात्राङ्गम्

१।१२।२

अथैतत्पर्जन्ये साम । तस्य पुरोवात एव हिङ्कार । अथ यदभ्राणि सप्लावयति स प्रस्ताव । अथ यत् स्तनयति स उद्गीथः । अथ यद्विद्योतते स प्रतिहार । अथ यद्वर्षति तन्निधनम् ॥ १ ॥ तदेतत्पर्जन्ये साम । स य एवमेतत्पर्जन्ये साम वेद वर्षुको हास्मै पर्जन्यो भवति ॥ २ ॥ अथैतत् पुरुषे साम । तस्यायमेव हिङ्कारोऽय प्रस्तावोऽयमुद्गीथोऽयं प्रतिहार इद निधनम् ॥३॥ तदेतत्पुरुषे साम । स य एवमेतत्पुरुषे साम वेदोर्ध्व एव प्रजया पशुभिरारोहन्नेति ॥ ४ ॥ य उ एनत्प्रत्यग्वेद ये प्रत्यञ्चो लोकास्ताञ्जयति । तस्यायमेव हिङ्कारोऽय प्रस्तावोऽयमुद्गीथोऽय प्रतिहार इद निधनम् । ये प्रत्यञ्चो लोकास्ताञ्जयति ॥५॥ य उ एनत्तिर्यग्वेद ये तिर्यञ्चो लोकास्ताञ्जयति । तस्य लोमैव हिङ्कारस्त्वक्प्रस्तावो मासमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनम् ॥ ६ ॥ तस्य त्रीण्याविर्गायति प्रस्ताव प्रतिहारं निधनम् । तस्मात्पुरुषस्य त्रीण्यस्थीन्याविर्दन्ताश्च द्वयाश्च नखा । ये तिर्यञ्चो लोकास्ताञ्जयति ॥ ७ ॥ य उ एनत्सम्यग्वेद ये सम्यञ्चो लोकास्ताञ्जयति । तस्य मन एव हिङ्कारो वाक्प्रस्ताव. प्राण उद्गीथश्चक्षुः प्रतिहार श्रोत्र निधनम् । ये सम्यञ्चो लोकास्ताञ्जयति ॥८॥ अथैतद्देवतासु साम । तस्य वायुरेव हिङ्कारोऽग्नि प्रस्ताव आदित्य उद्गीथश्चन्द्रमा प्रतिहारो दिश एव निधनम् ॥ ९ ॥ तदेतद्देवतासु साम । स य एवमेतद्देवतासु साम वेद देवतानामेव सलोकता जयति ॥ १० ॥

सवनत्रये उद्गेया साम्न तिस्र आगा, वाङ्मध्याश्रिता एकैव वा, क्रौञ्चा वा आगा, गायत्रसाम्न एव आगा

१।१२।३

तस्यैतास्तिस्र आगा आग्नेय्यैकैन्द्र्येका वैश्वदेव्येका ॥ १ ॥ सा या मन्द्रा साऽऽग्नेयी । तया प्रात सवनस्योद्गेयम् । आग्नेय वै प्रात.सवनमाग्नेयोऽय लोक । स्वयाऽऽगया प्रात सवनस्योद्गायत्पृथ्नोतीम लोकम् ॥ २ ॥ अथ या घोषिण्युपब्दिमती सैन्द्री । तया माध्यन्दिनस्य सवनस्योद्गेयम् । ऐन्द्रं वै माध्यन्दिन सवनम् । ऐन्द्रोऽसौ लोक । स्वयाऽऽगया माध्यन्दिनस्य सवनस्यो-

द्गायत्यृध्नोत्यमु लोकम् ॥ ३ ॥ अथ या वीङ्खयन्निव प्रथयन्निव गायति सा वैश्वदेवी । तया तृतीयसवनस्योद्गेयम् । वैश्वदेवं वै तृतीयसवनम् । वैश्वदेवोऽयमन्तरालोक । स्वयाऽऽगया तृतीयसवनस्योद्गायत्यृध्नोतीममन्तरालोकम् ॥ ४ ॥ अथो उद्वा खल्वाहुरेकयैवाऽऽगयोद्गेय यदेवास्य मध्य वाच इति । तद्यया वै वाचा व्यायच्छमान उद्गायति तदेवास्य मध्यं वाच । तया वा एतया वाचा सर्वा वाच उपगच्छति । अव्याभिक्तामे कस्या श्रियमृध्नोति य एव वेद ॥ ५ ॥ अथ या क्रौञ्चा सा बार्हस्पत्या । स यो ब्रह्मवर्चसकाम स्यात्स तयोद्गायेत् । तद्ब्रह्म वै बृहस्पति । तद्वै ब्रह्मवर्चसमृध्नोति तथा ह ब्रह्मवर्चसी भवति ॥ ६ ॥ अथ ह चैकितानेय एकस्यैव साम्न आगा गायति गायत्रस्यैव । तदनवान गेयम् । तत् साम्न एवा प्रतिहारादनवान गेयम् । तत्प्राणो वै गायत्रम् । तद्वै प्राणमृध्नोति । तथा ह सर्वमायुरेति ॥ ७ ॥

साम्न स्वरहिंकाराभ्या गानमेव
सामगानम्

१।१२।४

अथ ह ब्रह्मदत्त चैकितानेयमुद्गायन्त कुरव उपोदुरुज्जहिहि साम दाल्भ्येति ॥ १ ॥ स होपोद्यमानो नितरा जगौ । त होचु किमुपोद्यमानो नितरामगासीरिति ॥ २ ॥ स होवाचेद वै लोमेत्येतदेवैतत्प्रत्युपश्रृणम । तस्मादु ये न एतदुपावादिषुर्लोमशानीव तेषा श्मशानानि भवितार । अथ वयमुदेव गातार स्म इति ॥ ३ ॥ अथ ह राजा जैवलिर्गल्लूनसमार्क्षाकायण शामूलपर्णाभ्यामुत्थित पप्रच्छर्चाऽऽगाता शालावत्या३ साम्ना३ इति ॥ ४ ॥ नैव राजन्नृचेति होवाच न साम्नेति । तद्यूय तर्हि सर्वे एव पणाय्या भविष्यथ य एव विद्वासोऽगायतेति ॥ ५ ॥ अथ यद्वाऽवक्ष्यदृचा च साम्ना चाऽऽगामेति धीतेन वै तद्यातयाम्नाऽमलाकाण्डेनाऽऽगातेति हैनॉस्तद्वक्ष्यत् । तद्ध तदुवाच स्वरेण चैव हिङ्कारेण चाऽऽगामेति ॥ ६ ॥

अथ साम्न श्रीप्रतिष्ठासुवर्णापचितिश्रुतिविषयिणी सामोपासना औद्गात्राङ्गम्

१।१२।५

अथ ह सत्याधिवाकश्चैत्ररथि सत्ययज्ञं पौलुषितमुवाच प्राचीनयोगेति मम चेद्वै त्व साम विद्वान् साम्नाऽऽर्त्विज्य करिष्यसि नैव तर्हि पुनर्दीक्षामभिध्यातासीति । मुहुर्दीक्षी ह्याम ॥ १ ॥ स होवाच । यो वै साम्न श्रियं विद्वान्साम्नाऽऽर्त्विज्य करोति श्रीमानेव भवति । मनो वाव साम्न श्रीरिति ॥ २ ॥ यो वै साम्न प्रतिष्ठा विद्वान्साम्नाऽऽर्त्विज्य करोति प्रत्येव तिष्ठति । वाग्वाव साम्न प्रतिष्ठेति ॥ ३ ॥ यो वै साम्न सुवर्णं विद्वान् साम्नाऽऽर्त्विज्य करोत्यस्य गृहे सुवर्णं गम्यते । प्राणो वाव साम्न सुवर्णमिति ॥ ४ ॥ यो वै साम्नोऽपचितिं विद्वान् साम्नाऽऽर्त्विज्यं करोत्यपचितिमानेव भवति । चक्षुर्वाव साम्नोऽपचितिरिति ॥ ५ ॥ यो वै साम्न श्रुतिं विद्वान्साम्नाऽऽर्त्विज्य करोति श्रुतिमानेव भवति । श्रोत्र वाव साम्नः श्रुतिरिति ॥ ६ ॥

'चतुष्पात् साम वागात्मक प्राणरूप असुस्वरूप'
इत्युपासना वाच अदितित्वगुणा
औद्गात्राङ्गम्

१।१३।१

'चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिण. ।
गुहा त्रीणि निहिता नेऽङ्गयन्ति तुरीय वाचो मनुष्या वदन्ति' इति ॥ १ ॥

वागेव साम । वाचा हि साम गायति । वागेवोक्थम् । वाचा ह्युक्थ शमति । वागेव यजु । वाचा हि यजुरनुवर्तते ॥ २ ॥ तद्यत्किं चाऽर्वाचीनं ब्रह्मणस्तद्वागेव सर्वम् । अथ यदन्यत्र ब्रह्मोपदिश्यते । नैव हि तेनाऽऽर्त्विज्य करोति । परोक्षेणैव तु कृतं भवति ॥ ३ ॥ तस्या एतस्यै

वाचो मन पादश्चक्षु पाद श्रोत्र पादो वागेव चतुर्थ पाद ॥ ४ ॥ तद्यद्वै मनसा ध्यायति तद्वाचा वदति । यच्चक्षुषा पश्यति तद्वाचा वदति । यच्छ्रोत्रेण शृणोति तद्वाचा वदति ॥ ५ ॥ तद्यदे-तत्सर्वं वाचमेवाऽभिसमयति तस्माद्वागेव साम । स ह वै सामवित्स साम वेद य एव वेद ॥ ६ ॥ तस्या एतस्यै वाच प्राणा एवाऽसु' । एषु ह्यीद सर्वमसूतेति ॥ ७ ॥

१।१३।२

तेन हैतेनाऽसुना देवा जीवन्ति पितरो जीवन्ति मनुष्या जीवन्ति पशवो जीवन्ति गन्धर्वाप्सरसो जीवन्ति सर्वमिद जीवति ॥ १ ॥ तदाहुर्यदसुनेद सर्वं जीवति क साम्नोऽसुरिति । प्राण इति ब्रूयात् । प्राणो ह वाव साम्नोऽसु ॥ २ ॥ स एष प्राणो वाचि प्रतिष्ठितो वागु प्राणे प्रतिष्ठिता । तावेतावेवमन्योऽन्यस्मिन्प्रतिष्ठितौ । प्रतितिष्ठति य एव वेद ॥ ३ ॥

तदेतदृचाऽभ्यनूच्यते--

'अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्र ।
विश्वे देवा अदिति· पञ्च जना अदितिर्जातमदि-तिर्जनित्वम् ' इति ॥ ४ ॥

अदितिर्द्यौरदितिरन्तरिक्षमिति । एषा वै द्यौरेषाऽन्तरिक्षम् ॥ ५ ॥ अदितिर्माता स पिता स पुत्र इति । एषा वै मातैषा पितैषा पुत्र ॥ ६ ॥ विश्वे देवा अदिति पञ्च जना इति । ये देवा असुरेभ्य पूर्वे पञ्च जना आसन् य एवासावादित्ये पुरुषो यश्चन्द्रमसि यो विद्युति योऽप्सु योऽयमक्षन्नन्तरेष एव ते । तदेषैव ॥ ७ ॥ अदितिर्जातमदितिर्जनित्वमिति । एषा ह्येव जातमेषा जनित्वम् ॥ ८ ॥

' सामैव देवता ज्योति प्रतिष्ठादिरूपै अङ्गै अग्नि-पृथिव्यादिषु स्थित अक्षररूप, तदेव सर्वत्र सम सर्वरूप अक्षिपुरुष , तदेव सर्वत्र स्थित एक पुरुष , भ्रातृव्यरहित इन्द्रश्च तदेव '
इत्युपासना औद्गात्राङ्गम्

१।१४।१

आरुणिर्ह वासिष्ठ चैकितानेय ब्रह्मचर्यमुपे-याय । त होवाचाऽऽजानासि सौम्य गौतम यदिद वयं चैकितानेया सामैवोपास्महे । का त्व देवता मुपास्स इति । सामैव भगवन्त इति होवाच ॥ १ ॥ त ह पप्रच्छ यदग्नौ तद् वेत्था३ इति । ज्योतिर्वा एतत्तस्य साम्नो यद्वय सामोपास्मह इति ॥ २ ॥ यत्पृथिव्या तद् वेत्था३ इति । प्रतिष्ठा वा एषा तस्य साम्नो यद्वय सामोपास्मह इति ॥ ३ ॥ यद-प्सु तद् वेत्था३ इति । शान्तिर्वा एषा तस्य साम्नो यद्वय सामोपास्मह इति ॥ ४ ॥ यदन्तरिक्षे तद् वेत्था३ इति । आत्मा वा एष तस्य साम्नो यद्वय सामोपास्मह इति ॥५॥ यद्वायौ तद् वेत्था३ इति । श्रीर्वा एषा तस्य साम्नो यद्वय सामोपा-स्मह इति ॥ ६ ॥ यद्दिक्षु तद् वेत्था३ इति । व्याप्तिर्वा एषा तस्य साम्नो यद्वय सामोपास्मह इति ॥ ७ ॥ यद्दिवि तद् वेत्था३ इति । विभूति र्वा एषा तस्य साम्नो यद् वय सामोपास्मह इति ॥ ८ ॥

१।१४।२

यदादित्ये तद् वेत्था ३ इति । तेजो वा एत-त्तस्य साम्नो यद्वय सामोपास्मह इति ॥ १ ॥ यच्च-न्द्रमसि तद् वेत्था३ इति । भा वा एषा तस्य साम्नो यद्वय सामोपास्मह इति ॥ २ ॥ यन्न-क्षत्रेषु तद् वेत्था३ इति । प्रज्ञा वा एषा तस्य साम्नो यद्वय सामोपास्मह इति ॥ ३ ॥ यदन्ने तद् वेत्था ३ इति । रेतो वा एतत्तस्य साम्नो यद्वय सामोपास्मह इति ॥ ४ ॥ यत्पशुषु तद् वेत्था३ इति । यशो वा एतत्तस्य साम्नो यद्वय सामोपास्मह इति ॥ ५ ॥ यदृचि तद्वेत्था३ इति । स्तोमो वा एष तस्य साम्नो यद्वय सामोपा स्मह इति ॥ ६ ॥ यद्यजुषि तद्वेत्था३ इति । कर्म वा एतत्तस्य साम्नो यद्वय सामोपास्मह इति ॥ ७ ॥ अथ किं उपास्स इति । अक्षरमिति ।

कतमत्तदक्षरमिति । यत्क्षरन्नाऽक्षीयतेति । कतम त्तत् क्षरन्नाऽक्षीयतेति । इन्द्र इति ॥ ८ ॥ कतम स इन्द्र इति । योऽक्षन्नमत इति । कतम स योऽक्षन्नमत इति । इय देवतेति होवाच ॥ ९ ॥ योऽय चक्षुषि पुरुष एष इन्द्र एष प्रजापति । (स) सम पृथिव्या सम आकाशेन समो दिवा सम सर्वेण भूतेन । एष परो दिवो दीप्यते । एष एवेद सर्वमित्युपासितव्य ॥ १० ॥ स य एतदेव वेद ज्योतिष्मान् प्रतिष्ठावाञ्छान्तिमानात्मवा ञ्छ्रीमान् व्याप्तिमान् विभूतिमास्तेजस्वी भावान् प्रज्ञावान्नेतस्वी यशस्वी स्तोमवान् कर्मवानक्षरवा निन्द्रियवान् सामन्वी भवति ॥ ११ ॥ तद्वेतदृचाऽभ्यनूच्यते—॥ १२ ॥

१।१४।३

'रूपरूप प्रतिरूपो बभूव तदस्य रूप प्रतिचक्षणाय ।
इन्द्रो मायाभि पुरुरूप ईयते युक्ता ह्यस्य हरय शता दश' इति ॥ १ ॥

रूपरूपं प्रतिरूपो बभूवेति । रूपरूपं ह्येष प्रतिरूपो बभूव ॥२॥ तदस्य रूपं प्रतिचक्षणायेति । प्रतिचक्षणाय ह्यास्यैतद्रूपम् ॥ ३ ॥ इन्द्रो मायाभि पुरुरूप ईयत इति । मायाभिर्ह्येष एतत्पुरुरूप ईयते ॥ ४ ॥ युक्ता ह्यस्य हरय. शता दशेति । सहस्र हैत आदित्यस्य रश्मय । तेऽस्य युक्तास्तैरिद सर्वं हरति । तन्यदेतैरिद सर्वं हरति तस्मा द्धरय ॥ ५ ॥

'रूपरूप मघवा बोभवीति मायाः कृण्वान परि तन्व स्वाम् ।
त्रिर्यद्दिव परि मुहूर्तमागात् स्वैर्मन्त्रैरनृतुपा ऋतावा' इति ॥ ६ ॥

रूपरूपं मघवा बोभवीतीति । रूपरूप ह्येष मघवा बोभवीति ॥ ७ ॥ माया कृण्वान' परि तन्व स्वामिति । मायाभिर्ह्येष एतत्स्वा तनुं गोपायति ॥८॥ त्रिर्यद्दिव परिमुहूर्तमागादिति । त्रिर्हि वा एष एतस्य मुहूर्तस्येमा पृथिवीं समन्त' पर्येतीमा प्रजा सचक्षाण ॥ ९ ॥ स्वैर्मन्त्रैरनृतुपा ऋतावेति । अनृतुपा ह्येष एतदृतावा ॥ १० ॥

१।१४।४

तद्ध पृथुर्वैन्यो दिव्यान्व्रात्यान्पप्रच्छ—
'इन्द्रमुक्थमृचमुद्गीथमाहुर्ब्रह्म साम प्राणं व्यानम् ।
मनो वा चक्षुरपानमाहु श्रोत्र श्रोत्रिया बहुधा वदन्ति' इति ॥ १ ॥

ते प्रत्यूचु —
'ऋषय एते मन्त्रकृत पुराजा पुनराजायन्ते वेदाना गुप्त्यैकम् ।
ते वै विद्वासो वैन्य तद्वदन्ति समानं पुरुष बहुधा निविष्टम्' इति ॥ २ ॥

इमा ह वा तद्देवता त्रय्या विद्यायामिमा सामानामभ्येक आपयन्ति, नैके । यो ह वावैतदेव वेद, स एवैता देवता सप्रति वेद ॥ ३ ॥ स एष इन्द्र उद्गीथ । स यदैष इन्द्र उद्गीथ आगच्छति नैवोद्गातुश्चोपगातृणा च विज्ञायते । इत एवोर्ध्व स्वरुदेति । स उपरि मूर्ध्नो लेलायति ॥ ४ ॥ स विद्यादागमदिन्द्र, नेह कश्चन पाप्मा न्यङ्ग परिशेक्ष्यत इति । तस्मिन् ह न कश्चन पाप्मा न्यङ्गः परिशिष्यते ॥ ५ ॥ तदेतदभ्रातृव्य साम । न ह वा इन्द्र कचन भ्रातृव्यं पश्यते । स यथेन्द्रो न कचन भ्रातृव्य पश्यत एवमेव न कचन भ्रातृव्यं पश्यते, य एतदेव वेदाथो यस्यैव विद्वानुद्गायति ॥ ६ ॥

आत्मना षोडशधाऽऽविर्भूत प्रजापति हिरण्मय पुरुष सामैवेत्युपासना

१।१५।१

प्रजापतिर्वावेदमग्र आसीत् । सोऽकामयत । बहु स्या, प्रजायेय, भूमानं गच्छेयमिति ॥ १ ॥ स षोडशधाऽऽत्मान व्यकुरुत भद्र च समाप्तिश्चाऽऽभूतिश्च सभूतिश्च भूतं च सर्वं च रूपं चाऽपरिमित च श्रीश्च यशश्च नाम चाऽग्रं च सजाताश्च पयश्च महीया च रसश्च ॥ २ ॥ तद्यद्भद्र हृदयमस्य तत् । तत सवत्सरमसृजत ।

तदस्य संवत्सरोऽनूपतिष्ठते ॥ ३ ॥ समाप्ति कर्मास्य तत् । कर्मणा हि समाप्नोति । तत ऋतूनसृजत । तदस्यर्तवोऽनूपतिष्ठन्ते ॥ ४ ॥ आभूतिरन्नमस्य तत् । ( तच् ) चतुर्धा भवति । ततो मासानर्धमासानहोरात्राण्युषसोऽसृजत । तदस्य मासा अर्धमासा अहोरात्राण्युषसोऽनूपतिष्ठन्ते ॥ ५ ॥ सभूती रेतोऽस्य तत् । रेतसो हि सभवति ॥ ६ ॥

१।१५।२

ततश्चन्द्रमसमसृजत । तदस्य चन्द्रमा अनूपतिष्ठते । तस्मात्स रेतसः प्रतिरूप ॥ १ ॥ भूत प्राणोऽस्य स । ततो वायुमसृजत । तदस्य वायुरनूपतिष्ठते ॥ २ ॥ सर्वमपानोऽस्य स । तत पशूनसृजत । तदस्य पशवोऽनूपतिष्ठन्ते ॥ ३ ॥ रूप व्यानोऽस्य स । तत प्रजा असृजत । तदस्य प्रजा अनूपतिष्ठन्ते । तस्मादासु प्रजासु रूपाण्यधिगम्यन्ते ॥ ४ ॥ अपरिमित मनोऽस्य तत् । ततो दिशोऽसृजत । तदस्य दिशोऽनूपतिष्ठन्ते । तस्मात्ता अपरिमिता । अपरिमितमिव हि मन. ॥ ५ ॥ श्रीर्वागस्य सा । तत समुद्रमसृजत । तदस्य समुद्रोऽनूपतिष्ठते ॥ ६ ॥ यशस्तपोऽस्य तत् । ततोऽग्निमसृजत । तदस्याऽग्निरनूपतिष्ठते । तस्मात्स मथितादिव सतप्तादिव जायते ॥ ७ ॥ नाम चक्षुरस्य तत् ॥ ८ ॥

१।१५।३

तत आदित्यमसृजत । तदस्यादित्योऽनूपतिष्ठते ॥ १ ॥ अग्र मूर्धास्य स । ततो दिवमसृजत । तदस्य द्यौरनूपतिष्ठते ॥ २ ॥ सजाता अङ्गान्यस्य तानि । अङ्गैर्हि सह जायते । ततो वनस्पतीनसृजत । तदस्य वनस्पतयोऽनूपतिष्ठन्ते ॥ ३ ॥ पयो लोमान्यस्य तानि । तत ओषधीरसृजत । तदस्यौषधयोऽनूपतिष्ठन्ते ॥ ४ ॥ महीया मॉसान्यस्य तानि । मॉसैर्हि सह महीयते । ततो वयॉस्यसृजत । तदस्य वयॉस्यनूपतिष्ठन्ते । तस्मात्तानि प्रपतिष्णूनि । प्रपतिष्णूनीव महामॉसानि ॥ ५ ॥ रसो मज्जाऽस्य स' । तत पृथिवीमसृजत । तदस्य पृथिव्यनूपतिष्ठते ॥ ६ ॥ स हैवं षोडशधाऽऽत्मान विकृत्य सार्धं समैत् । तद्यत्सार्धं समैत् तत्साम्न सामत्वम् ॥ ७ ॥ स एवैष हिरण्मय. पुरुष उदतिष्ठत्प्रजाना जनिता ॥ ८ ॥

१।१५।४

देवासुरा अस्पर्धन्त । ते देवा प्रजापतिमुपाधावञ्जयामाऽसुरानिति ॥ १ ॥ सोऽब्रवीन्न वै मा यूय वित्थ नाऽसुरा । यद्वै मा यूय विद्यात ततो वै यूयमेव स्यात पराऽसुरा भवेयुरिति ॥ २ ॥ तद्वै ब्रूहीत्यब्रुवन् । सोऽब्रवीत्पुरुष प्रजापति सामेति मोपाध्वम् । ततो वै यूयमेव भविष्यथ पराऽसुरा भविष्यन्तीति ॥ ३ ॥ तं पुरुषः प्रजापति सामेत्युपासत । ततो वै देवा अभवन् पराऽसुरा । स यो हैव विद्वान् पुरुष प्रजापति सामेत्युपास्ते भवत्यात्मना पराऽस्य द्विषन् भ्रातृव्यो भवति ॥ ४ ॥

गाथादीना दोषहरत्व, ' साम सर्वदेवसहायभूत द्यावापृथिवीसृष्ट अग्नीन्द्रादीनामिष्टम् ' इत्युपासना, साम्न सप्त गानप्रकारा गेया , अष्टम प्रकार अगेय

१।१६।१

देवा वै विजिग्याना अब्रुवन्द्वितीय करवामहै । माऽद्वितीया भूमेति । तेऽब्रुवन् सामैव द्वितीय करवामहै । सामैव नो द्वितीयमस्त्विति ॥ १ ॥ त इमे द्यावापृथिवी अब्रुवन् । समेत साम प्रजनयतमिति ॥ २ ॥ सोऽसावस्या अबीभत्सत । सोऽब्रवीत् बहु वा एतस्यां किं च किं च कुर्वन्त्यधिष्ठीवन्त्यधिचरन्त्यध्यासते । पुनीत न्वेनामपूता वा इति ॥ ३ ॥ ते गाथामब्रुवन्त्वया पुनामेति । किं तत स्यादिति । शतसनि' स्या इति । तथेति । ते गाथयाऽपुनन् । तस्मादुत गाथया शत सुनोति ॥ ४ ॥ ते कुम्ब्यामब्रुवन् त्वया पुनामेति । किं तत स्यादिति । शतसनि' स्या इति । तथेति । ते कुम्ब्ययाऽपुनन् । तस्मादुत कुम्ब्यया शत सुनोति ॥ ५ ॥ ते नाराशॅसीमब्रुवन् त्वया पुनामेति । किं तत स्यादिति । शतसनि. स्या इति । तथेति । ते नाराशॅस्याऽपुनन् । तस्मादुत नाराशॅस्या शत

सुनोति ॥ ६ ॥ ते रैभीमब्रुवन् त्वया पुनामेति । किं तत स्यादिति । शतसनि स्या इति । तथेति । ते रैभ्याऽपुनन् । तस्मादुत रैभ्या शत सुनोति ॥ ७ ॥ सेय पूता । अथाऽमुमब्रवीद्वहु वै किं च किं च पुमाँश्चरति । त्वमनुपुनीष्वेति ॥ ८ ॥

१।१६।२

स ऐलवेनाऽपुनीत । पूतानि ह वा अस्य सामानि, पूता ऋच., पूतानि यजूँषि, पूतमनूक्त, पूत सर्वं भवति य एव वेद ॥ १ ॥ ते संमेत्य साम प्राजनयताम् । तद्यत्समेत्य साम प्राजनयता तत्साम्न सामत्वम् ॥ २ ॥ तदिद साम सृष्टमद उत्क्रम्य लेलायदतिष्ठत् । तस्य सर्वे देवा मम त्विन आसन्मम ममेति ॥ ३ ॥ तेऽब्रुवन् वीद भजामहा इति । तस्य विभागे न समपादयन् । तान्प्रजापतिरब्रवीदपेत । मम वा एतत् । अहमेव वो विभक्ष्यामीति ॥ ४ ॥ सोऽग्निमब्रवीत् त्व वै मे ज्येष्ठ पुत्राणामसि । त्व प्रथमो वृणीष्वेति ॥ ५ ॥ सोऽब्रवीन्मन्द्र साम्नो वृणेऽन्नाद्यमिति । स य एतद्गायादन्नाद एव सोऽसत् । मामु स देवानामृच्छाद्य एव विद्वाँसमेतद्गायन्तमुपवदादिति ॥ ६ ॥ अथेन्द्रमब्रवीत् त्वमनुवृणीष्वेति ॥ ७ ॥ सोऽब्रवीदुग्र साम्नो वृणे श्रियमिति । स य एतद्गायाच्छ्रीमानेव सोऽसत् । मामु स देवानामृच्छाद्य एव विद्वाँसमेतद्गायन्तमुपवदादिति ॥ ८ ॥ अथ सोममब्रवीत् त्वमनुवृणीष्वेति ॥ ९ ॥ सोऽब्रवीद्वल्गु साम्नो वृणे प्रियमिति । म य एतद्गायात्प्रिय एव स कीर्ते प्रियश्चक्षुष प्रिय सर्वेषामसत् । मामु स देवानामृच्छाद्य एवं विद्वासमेतद्गायन्तमुपवदादिति ॥ १० ॥ अथ बृहस्पतिमब्रवीत् त्वमनुवृणीष्वेति ॥ ११ ॥ सोऽब्रवीत्क्रौञ्च साम्नो वृणे ब्रह्मवर्चसमिति । स य एतद्गायाद्ब्रह्मवर्चस्येव सोऽसत् । मामु स देवानामृछाद्य एवं विद्वाँसमेतद्गायन्तमुपवदादिति ॥ १२ ॥

१।१६।३

अथ विश्वान् देवानब्रवीद्यूयमनुवृणीध्वमिति ॥ १ ॥ तेऽब्रुवन् वैश्वदेवं साम्नो वृणीमहे प्रजननमिति । स य एतद्गायात्प्रजावानेव सोऽसत् । अस्मानु देवानामृच्छाद्य एव विद्वाँसमेतद्गायन्तमुपवदादिति ॥ २ ॥ अथ पशूनब्रवीद्यूयमनुवृणीध्वमिति ॥ ३ ॥ तेऽब्रुवन् वायुर्वा अस्माकमीशे । स एव नो वरिष्यत इति । ते वायुश्च पशवश्चाब्रुवन् निरुक्त साम्नो वृणीमहे पशव्यमिति । स य एतद्गायात्पशुमानेव सोऽसत् । अस्मानु च स वायु च देवानामृच्छाद्य एव विद्वासमेतद्गायन्तमुपवदादिति ॥ ४ ॥ अथ प्रजापतिरब्रवीदहमनु वरिष्य इति ॥ ५ ॥ सोऽब्रवीदनिरुक्त साम्नो वृणे स्वर्ग्यमिति । स य एतद्गायात् स्वर्गलोक एव सोऽसत् । मामु स देवानामृच्छाद्य एवं विद्वाँसमेतद्गायन्तमुपवदादिति ॥ ६ ॥ अथ वरुणमब्रवीत् त्वमनुवृणीष्वेति ॥ ७ ॥ सोऽब्रवीद्यद्वो न कश्चनाऽऽवृतस्तदहं परिहरिष्य इति । किमिति । अपध्वान्त साम्नो वृणेऽपशव्यमिति । स य एतद्गायादपशुरेव सोऽसत् । मामु स देवानामृच्छाद्य एतद्गायादिति ॥ ८ ॥ तानि वा एतान्यष्टौ गीतागीतानि साम्न । इमान्यु ह वै सप्तगीतानि । अथेयमेव वारुण्यागाऽगीता ॥ ९ ॥ स या ह कां चैव विद्वानेतासां सप्तानामागाना गायति गीतमेवास्य भवेत्येतानु कामान्राध्नोति य एतासु कामा । अथेमामेव वारुणीमागा न गायेत् ॥ १० ॥

ऋक्सामयो मन प्राणाभ्या वागपानाभ्या च अभेद उपास्य, गाथाकुम्भ्यानाराशसीपुराणेतिहासाना भरण्डकेष्णस्य च यज्ञे प्रयोग ऋक्सामयोर्दोष हर, तृचे आश्रितसाम्न प्रशस्तता, साम्न उद्गीतानुगीताऽऽगीताना प्रशस्तता साख्याना

१।१७।१

द्वय वावेदमग्र आसीत्सच्चैवासच्च ॥ १ ॥ तयोर्यत् सत् तत्साम तन्मन' स प्राणः । अथ यदसत्सर्क् सा वाक् सोऽपान ॥ २ ॥ तद्यन्मनश्च प्राणश्च तत्समानम् । अथ या वाक् चापानश्च तत्समानम् । इदमायतनं मनश्च प्राणश्चेदमायतनं

वाक् चापानश्च । तस्मात्पुमान्दक्षिणतो योपामुपशेते ॥ ३ ॥ सेयमृगस्मिन् सामन् मिथुनमैच्छत् । तामपृच्छत् का त्वमसीति । साऽहमस्मीत्यब्रवीत् । अथ वा अहममोऽस्मीति ॥ ४ ॥ तद्यत्सा चाऽमश्च तत् सामाऽभवत् तत्साम्न सामत्वम् ॥ ५ ॥ तौ वै सभवावेति । नेत्यब्रवीत्स्वसा वै मम त्वमस्यन्यत्र मिथुनमिच्छस्वेति ॥ ६ ॥ साऽब्रवीन्न वै तं विन्दामि येन सभवेयम् । त्वयैव सभवानीति । सा वै पुनीष्वेत्यब्रवीत् । अपूता वा असीति ॥ ७ ॥ साऽपुनीत यदिद विप्रा वदन्ति तेन । साऽब्रवीत् क्वेदं भविष्यतीति । प्रत्यूहेत्यब्रवीत् । धीर्वा एषा । प्रजाना जीवन वा एतद्भविष्यतीति । तथेति । तत्प्रत्यौहत । तस्मादेषा धीरेव प्रजानां जीवनमेव ॥ ८ ॥ पुनीष्वेत्यब्रवीत् । साऽपुनीत गाथया, साऽपुनीत कुम्ब्यया, साऽपुनीत नाराशँस्या, साऽपुनीत पुराणेतिहासेन, साऽपुनीत यदिदमादाय नाऽऽगायन्ति तेन ॥ ९ ॥ साऽब्रवीत् केद भविष्यतीति । प्रत्यूहेत्यब्रवीत् । धीर्वा एषा । प्रजाना जीवन वा एतद्भविष्यतीति । तथेति । तत् प्रत्यौहत् । तस्मादेषा धीर्वेव प्रजाना जीवनम्वेव ॥ १० ॥ पुनीष्वैवेत्यब्रवीत् ॥ ११ ॥

१।१७।२

सा मधुनाऽपुनीत । तस्मादुत ब्रह्मचारी मधु नाऽश्नीयाद्वेदस्य पलाव इति । कामं ह त्वाचार्यदत्तमश्नीयात् ॥ १ ॥ अथर्क् सामाब्रवीद्वह्व वै किं च किं च पुमाँश्चरति । त्वमनुपुनीष्वेति । स भरण्डकेष्णेनाऽपुनीत । पूतानि ह वा अस्य सामानि, पूता ऋच , पूतानि यजूँषि, पूतमनूक्त, पूतं सर्वं भवति य एवं वेद ॥ २ ॥ ताभ्यां सदो मिथुनाय पर्यश्रयन् । तस्मादुपवसथीयां रात्रिं सदसि न शयीत । अत्र ह्येतावृक्सामे उपवसथीया रात्रिं सदसि संभवत । स यथा श्रेयस उपद्रष्टैव हि शश्वदीश्वरोऽनुलब्ध. पराभवितो ॥ ३ ॥ अथो आहुरुद्गातुर्मुखे संभवतः । उद्गातुरेव मुख नेक्षेतेति ॥ ४ ॥ तदु वा आहु. काममेवोद्गातुर्मुखमीक्षेत । उपवसथीयामेवैतां रात्रिं सदसि न शयीत । अत्र ह्येवैतावृक्सामे उपवसथीया रात्रिं सदसि संभवत इति ॥ ५ ॥ ता सभविष्यन्नाहाऽमोऽहमस्मि सा त्व सा त्वमस्यमोऽहम् । सा मामनुव्रता भूत्वा प्रजा प्रजनयावहै । एहि सभवावहा इति ॥ ६ ॥ तां सभवन्नत्यरिच्यत सोऽब्रवीन्न वै त्वाऽनुभवामि । विराड् भूत्वा प्रजनयावेति । तथेति ॥ ७ ॥ तौ विराड् भूत्वा प्राजनयताम् । हिङ्कारश्चाऽऽहावश्च प्रस्तावश्च प्रथमा चोद्गीथश्च मध्यमा च प्रतिहारश्चोत्तमा च निधन च वषट्कारश्चर्वं विराड् भूत्वा प्राजनयताम् । ते अमुमजनयतां योऽसौ तपति । ते व्यद्रवताम् ॥ ८ ॥

१।१७।३

मदध्यभू३न्मदध्यभू३दिति । तस्मादाहुर्मधुपुत्र इति ॥ १ ॥ तस्मादुत स्त्रियो मधु नाऽश्नन्ति पुत्राणामिद व्रत चराम इति वदन्ती ॥ २ ॥ तदय तृचोऽनूदश्रयत । इयमेव गायत्र्यन्तरिक्षं त्रिष्टुबसौ जगती । तस्यैतत् तृच ॥ ३ ॥ स उपरिष्टात्सामाऽध्याहित तपति । सोऽध्रुव इवासीद्लेलायदिव । स नोर्ध्वोऽतपत् ॥ ४ ॥ स देवानब्रवीदुन्मा गायतेति । कि तत स्यादिति । श्रिय व प्रयच्छेयम् । मामिह दृँहेतेति ॥ ५ ॥ तथेति । तमुदगायन् । तमेतदत्राऽदृँहन् । तेभ्य श्रिय प्रायच्छत् । सैषा देवाना श्री ॥ ६ ॥ तत एतदूर्ध्वस्तपति । स नार्वाङ्तपत् ॥ ७ ॥ स ऋषीनब्रवीदनुमा गायतेति । किं तत स्यादिति । श्रिय व प्रयच्छेयम् । मामिह दृँहेतेति ॥ ८ ॥ तथेति । तमन्वगायन् । तमेतदत्राऽदृँहन् । तेभ्य श्रियं प्रायच्छत् । सैषा ऋषीणा श्री ॥ ९ ॥ तत एतदर्वाङ् तपति । स न तिर्यङ्ङतपत् ॥ १० ॥ स गन्धर्वाप्सरसोऽब्रवीदा मा गायतेति । किं ततः स्यादिति । श्रिय व प्रयच्छेयम् । मामिह दृँहेतेति ॥ ११ ॥ तथेति । तमागायन् । तमेतदत्राऽदृँहन् । तेभ्य श्रिय प्रायच्छत् । सैषा गन्धर्वाप्सरसां श्रीः ॥ १२ ॥ तत एतत् तिर्यङ् तपति ॥ १३ ॥ तानि वा एतानि त्रीणि साम्न उद्गीतमनुगीतमागीतम् ।

तद्यथेद वयमागायोद्गायाम एतदुद्गीतम् । अथ यद्यथागीत तदनुगीतम् । अथ यत्किंचेति साम्न-स्तदागीतम् । एतानि ह्येव त्रीणि साम्न• ।। १४ ।।

तृचे गीतस्य साम्न प्रशस्तता साख्याना, गाथानाराशसीरैभीना ऊर्ध्वगणस्य च प्रयोग ऋक्साम्नोर्दोषहर, ऋच व्यापक साम इत्युपासना, उद्गीथाक्षरविषयिणी अध्यात्माधिदैवतोपासना, साम्न ऋग्याश्च आदित्यैकविषयत्व इत्युपासना, हिरण्यदक्षिणा सर्वदेवतारूपा इत्युपासना औद्गात्राङ्ग, सामवैर्योपासना, सामवैर्यदेवतोपासना, प्राणस्योद्गातृरूपत्वोपासना साख्याना

१।१८।१

आपो वा इदमग्रे महत्सलिलमासीत् । स ऊर्मिरूर्मिमस्कन्दत् । ततो हिरण्मयौ कुक्ष्यौ समभवता ते एवर्क्सामे ।। १ ।। सेयमृगिद सामाऽभ्यप्लवत । तामपृच्छत् का त्वमसीति । साऽहमस्मी-त्यब्रवीत् । अथ वा अहममोऽस्मीति । तद्यत्सा चाऽमश्च तत्साम्न सामत्वम् ।। २ ।। तौ वै सभबावेति । नेत्यब्रवीत्स्वमा वै मम त्वमसि । अन्यत्र मिथुनमिच्छस्वेति ।। ३ ।। सा पराप्लवत मिथुनमिच्छमाना । सा समा॰ सहस्र सप्तती पर्यप्लवत ।। ४ ।। तदेष श्लोक —

' स्त्री स्मैवाऽग्रे सचरन्तीच्छन्ती सलिले पतिम् ।
समा सहस्र सप्ततीस्ततोऽजायत पश्यत '
इति ।। ५ ।।

असौ वा आदित्य पश्यत । एष एव तदजायत । एतेन हि पश्यति ।। ६ ।। साऽविस्वा न्यप्लवत । साऽब्रवीन्न वै त विन्दामि येन संभवेयम् । त्वयैव सभवानीति ।। ७ ।। सा वै द्वितीयामिच्छस्वेत्यब्रवीन्न वै मैकोयस्यसीति । सा द्वितीयां वित्त्वा न्यप्लवत ।। ८ ।। ( तृतीयाम् ) इच्छस्वैवेत्यब्रवीन्नो वाव मा द्वे उद्यस्थ इति । सा तृतीया वित्त्वा न्यप्लवत । सोऽब्रवीदत्र वै मोद्यस्थेति ।। ९ ।। स यदेकयाऽग्रे समवदत तस्मादेकर्चे साम । अथ यद्द्वे अपासेवत्तस्मा-द्द्वयोर्न कुर्वन्ति । अथ यत् तिसृभि समपादयत् तस्माद्‌ तृचे साम ।। १० ।। ता अब्रवीत्पुनीध्व न पूता वै स्थेति ।। ११ ।।

१।१८।२

सा गायत्री गाथयाऽपुनीत नाराशंस्या त्रिष्टु-ब्रैभ्या जगती । भीम बत मलमपावविपतेति । तस्माद्भीमला वियो वा एता । वियो वा इमा मलमपावविपतेति । तस्माद्‌ भीमला । तस्माद्‌ गायता नाऽश्नीयात् । मलेन ह्येते जीवन्ति ।। १ ।। अथर्क् सामाऽब्रवीद्बहु वै किं च किं च पुमाँश्चरति । त्वमनुपुनीष्वेति । स ऊर्ध्वगणेनाऽपुनीत ।। २ ।। पूतानि ह वा अस्य सामानि, पूता ऋच, पूतानि यजूँपि, पूतमनूक्त, पूत सर्व भवति य एव वेद ।। ३ ।। ताभ्या दिशो मिथुनाय पर्यौहन् । ता सभविष्यन्नह्वयताऽमोऽहमस्मि सा त्व सा त्वमस्यमोऽहमिति ।। ४ ।। तामेतदुभयतो वाचाऽत्यरिच्यत हिङ्कारेण पुरस्तात् स्तोभेन मध्यतो निधनेनोपरिष्टात् । अतितिस्रो ब्राह्मणायनी सदृशी रिच्यते य एव वेद ।। ५ ।। तयोर्थ॰ सभवतोरूर्ध्वं शूपोऽद्रवत् ( प्राणास् ) ते । ते प्राणा एवोर्ध्वा अद्रवन् ।। ६ ।। सोऽसावादित्य स एष एव उदग्निरेव गी, चन्द्रमा एव थम् । सामान्येव उदृच एव गी, यजूँष्येव थमित्यधि-देवतम् ।। ७ ।। अथाऽध्यात्मम् । प्राण एव उद्वागेव गी, मन एव थम् । स एषोऽधिदैवत चाऽध्यात्मं चोद्गीथः ।। ८ ।। स य एवमेतदधिदैवत चाऽध्यात्मं चोद्गीथं वेदैतेन ह्यस्य सर्वेणोद्गीत भवत्येत-स्माद्‌ एव सर्वस्मादावृश्च्यते य एव विद्वाँसमुपवदति ।। ९ ।।

१।१८।३

तद्यदिदमाहु क उदगासीरिति क एतमादित्य-मगासीरिति ह वा एतत्पृच्छन्ति ।। १ ।। एत ह वा एतं त्रय्या विद्यया गायन्ति । यथा वीणा-

गाथिनो गापयेयुरेवम् ॥ २ ॥ स एष ह्रद कामानां पूर्णो यन्मन । तस्यैषा कुल्या यद्वाक् ॥ ३ ॥ तद्यथा वा अपो ह्रदात्कुल्ययोपरामुपनयन्त्येवमेवैतन्मनसोऽधि वाचोद्गाता यजमान यस्य कामान् प्रयच्छति ॥ ४ ॥ स य उद्गातार दक्षिणाभिराराधयति तं सा कुल्योपधावति । य उ एन नाऽऽराधयति स उ तामपिहन्ति ॥ ५ ॥ अथ वा अत प्रत्तिश्चैव प्रतिग्रहश्च । तद्भूममिति वै प्रदीयते । तद्वाचा यजमानाय प्रदेय मनसाऽऽत्मने । तथा ह सर्वं न प्रयच्छति ॥ ६ ॥ तद्यदिद संभवतो रेतोऽसिच्यत तदशयत् । यथा हिरण्य मविकृतं लेलायदेव ॥ ७ ॥ तस्य सर्वे देवा ममत्विन आसन्मम ममेति । तेऽब्रुवन्वीद करवामहा इति । तेऽब्रुवञ्छ्रेयो वा इदमस्मत् । आत्मभिरेवैनद्विकरवामहा इति ॥ ८ ॥ तदात्मभिरेव व्यकुर्वत । तेषा वायुरेव हिङ्कार आमाग्नि प्रस्ताव इन्द्र आदि सोमबृहस्पती उद्गीथोऽश्विनौ प्रतिहारो विश्वे देवा उपद्रव' प्रजापतिरेव निधनम् ॥ ९ ॥ एता वै सर्वा देवता एता हिरण्यम् । अस्य सर्वाभिर्देवताभि' स्तुत भवति य एव वेद । एताभ्य उ एव स सर्वाभ्यो देवताभ्य आवृश्च्यते य एव विद्वाँसमुपवदति ॥ १० ॥

१।१८।४

अथ ह ब्रह्मदत्तश्चैकितानेय कुरु जगामाऽभिप्रतारिण काक्षसेनिम् । स हाऽस्मै मधुपर्कं ययाच ॥ १ ॥ अथ हास्य वै प्रपद्य पुरोहितोऽन्ते निषसाद शौनक । त हाऽनामन्त्र्य मधुपर्कं पपौ ॥ २ ॥ त होवाच किं विद्वान्नो दाल्भ्याऽनामन्त्र्य मधुपर्कं पिबसीति । सामवैर्यं प्रपद्येति होवाच ॥ ३ ॥ त ह तत्रैव पप्रच्छ यद्वायौ तद्वेत्था३ इति । हिङ्कारो वा अस्य स इति ॥ ४ ॥ यदग्नौ तद्वेत्था३ इति । प्रस्तावो वा अस्य स इति ॥ ५ ॥ यदिन्द्रे तद्वेत्था३ इति । आदिर्वा अस्य स इति ॥६॥ यत्सोमबृहस्पत्योस्तद्वेत्था३ इति । उद्गीथो वा अस्य स इति ॥ ७ ॥ यदश्विनोस्तद्वेत्था३ इति । प्रतिहारो वा अस्य स इति ॥ ८ ॥ यद्विश्वेषु देवेषु तद्वेत्था३ इति । उपद्रवो वा अस्य स इति ॥ ९ ॥ यत्प्रजापतौ तद्वेत्था३ इति । निधन वा अस्य तदिति होवाच । आर्षेयं वा अस्य तद्बन्धुता वा अस्य सेति ॥ १० ॥ स होवाच नमस्तेस्तु भगवो विद्वानपा मधुपर्कमिति ॥ ११ ॥ अथ हेतर' पप्रच्छ किं देवत्य सामवैर्यं प्रपद्येति । यद्देवत्यासु स्तुवत इति होवाच तद्देवत्यमिति ॥ १२ ॥ तदेतत् साध्वेव प्रत्युक्तम् । व्याप्तिर्वा अस्यैषेति होवाच ब्रूह्येवेति । मेद ते नमोऽकमिति होवाच । मैव नोऽतिप्राक्षीरिति ॥ १३ ॥ स होवाचाऽप्रक्ष्य वाव त्वा देवतामप्रक्ष्य वाव त्वा देवतायै देवता । वाग्देवत्य साम वाचो मनो देवता मनस पशव पशूनामोषधय ओषधीनामाप. । तदेतदद्भ्यो जात सामाऽप्सु प्रतिष्ठितमिति ॥ १४ ॥

१।१८।५

देवासुरा अस्पर्धन्त । ते देवा मनसोदगायन् । तदेषामसुरा अभिद्रुत्य पाप्मना समसृजन् । तस्माद्धहु किं च किं च मनसा ध्यायति । पुण्य चैनेन ध्यायति पाप च ॥१॥ ते वाचोदगायन् । ता तथैवाऽकुर्वन् । तस्माद्धहु किं च किं च वाचा वदति । सत्य चैनया वदत्यनृत च ॥ २ ॥ ते चक्षुषोदगायन् । तत्तथैवाऽकुर्वन् । तस्माद्धहु किं च किं च चक्षुषा पश्यति । दर्शनीय चैनेन पश्यत्यदर्शनीय च ॥ ३ ॥ ते श्रोत्रेणोदगायन् । तत्तथैवाऽकुर्वन् । तस्माद्धहु किं च किं च श्रोत्रेण शृणोति । श्रवणीय चैनेन शृणोत्यश्रवणीय च ॥ ४ ॥ तेऽपानेनोदगायन् । त तथैवाकुर्वन् । तस्माद्धहु किं च किं चाऽपानेन जिघ्रति । सुरभि चैनेन जिघ्रति दुर्गन्धि च ॥ ५ ॥ ते प्राणेनोदगायन् । अथासुरा आद्रवंस्तथा करिष्याम इति मन्यमाना ॥ ६ ॥ स यथाऽश्मानमृत्वा लोष्टो विध्वंसेतैवमेवाऽसुरा व्यध्वँसन्त । स एषोऽश्माऽऽखणो यत्प्राणः ॥ ७ ॥ स यथाऽश्मानमाखणमृत्वा लोष्टो विध्वंसत एवमेव स विध्वंसते य एवं विद्वाँसमुपवदति ॥ ८ ॥

इति प्रथमोऽध्याय. ॥

## द्वितीयोऽध्यायः

'प्राण एव उद्गाता दीक्षाप्रद' इत्युपासना देवोद्गातॄणां षण्णामाख्यानसहिता

२।१।१

देवाना वै षडुद्गातार आसन् वाक् च मनश्च चक्षुश्च श्रोत्र चाऽपानश्च प्राणश्च ॥ १ ॥ तेऽध्रियन्त तेनोद्गात्रा दीक्षामहै येनाऽपहत्य मृत्युमपहत्य पाप्मान स्वर्ग लोकमियामेति ॥ २ ॥ तेऽब्रुवन् वाचोद्गात्रा दीक्षामहा इति । ते वाचोद्गात्राऽदीक्षन्त । स यदेव वाचा वदति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्य ॥ ३ ॥ ता पाप्माऽन्वसृज्यत । स यदेव वाचा पाप वदति स एव स पाप्मा ॥ ४ ॥ तेऽब्रुवन् न वै नोऽय मृत्यु न पाप्मानमत्यवाक्षीत् । मनसोद्गात्रा दीक्षामहा इति ॥ ५ ॥ ते मनसोद्गात्राऽदीक्षन्त । स यदेव मनसा ध्यायति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्य ॥ ६ ॥ तत्पाप्माऽन्वसृज्यत । स यदेव मनसा पाप ध्यायति स एव स पाप्मा ॥ ७ ॥ तेऽब्रुवन् नो न्वाव नोऽय मृत्यु न पाप्मानमत्यवाक्षीत् । चक्षुषोद्गात्रा दीक्षामहा इति ॥ ८ ॥ ते चक्षुषोद्गात्राऽदीक्षन्त । स यदेव चक्षुषा पश्यति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्य ॥ ९ ॥ तत्पाप्माऽन्वसृज्यत । स यदेव चक्षुषा पाप पश्यति ( स एव स पाप्मा ) ॥ १० ॥ तेऽब्रुवन्नो न्वाव नोऽय मृत्यु न पाप्मानमत्यवाक्षीत् । श्रोत्रेणोद्गात्रा दीक्षामहा इति ॥ ११ ॥ ते श्रोत्रेणोद्गात्राऽदीक्षन्त । स यदेव श्रोत्रेण शृणोति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्य ॥ १२ ॥ तत्पाप्माऽन्वसृज्यत । स यदेव श्रोत्रेण पाप शृणोति स एव स पाप्मा ॥ १३ ॥ तेऽब्रुवन्नो न्वाव नोऽय मृत्यु न पाप्मानमत्यवाक्षीत् । अपानेनोद्गात्रा दीक्षामहा इति ॥ १४ ॥ तेऽपानेनोद्गात्राऽदीक्षन्त । स यदेवाऽपानेनाऽपानिति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्य ॥ १५ ॥ त पाप्माऽन्वसृज्यत । स यदेवाऽपानेन पाप गन्धमपानिति स एव स पाप्मा ॥ १६ ॥ तेऽब्रुवन् नो न्वाव नोऽय मृत्युं न पाप्मानमत्यवाक्षीत् । प्राणेनोद्गात्रा दीक्षामहा इति ॥ १७ ॥ ते प्राणेनोद्गात्राऽदीक्षन्त । स यदेव प्राणेन प्राणिति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्य ॥१८॥ तं पाप्मा नाऽन्वसृज्यत । न ह्येतेन प्राणेन पापं वदति, न पाप ध्यायति, न पाप पश्यति, न पापं शृणोति, न पाप गन्धमपानिति ॥ १९ ॥ तेनाऽपहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमायन् । अपहत्य हैव मृत्युमपहत्य पाप्मान स्वर्गं लोकमेति य एवं वेद ॥ २० ॥

पापपरिहारानन्तर वागादीना अग्न्यादिदेवताभावप्राप्ति, 'प्राण प्रजावानुद्गीथ' इत्युपासना, 'सप्तविध साम प्रजाति.' इत्युपासना

२।१।२

सा या सा वागासीत्सोऽग्निरभवत् ॥ १ ॥ अथ यत्तन्मन आसीत् स चन्द्रमा अभवत् ॥ २ ॥ अथ यत्तच्चक्षुरासीत् स आदित्योऽभवत् ॥ ३ ॥ अथ यत्तच्छ्रोत्रमासीत्ता इमा दिशोऽभवन् । ता उ एव विश्वे देवा. ॥ ४ ॥ अथ य सोऽपान आसीत्स बृहस्पतिरभवत् । यदस्यै वाचो बृहत्यै पतिस्तस्माद्बृहस्पति ॥ ५ ॥ अथ य स प्राण आसीत्स प्रजापतिरभवत् । स एष पुत्री प्रजावानुद्गीथो य· प्राण । तस्य स्वर एव प्रजा । प्रजावान्भवति य एवं वेद ॥ ६ ॥ त हैतमेके प्रत्यक्षमेव गायन्ति प्राणा३ प्राणा३ प्राणा३ हु भा ओवा इति ॥ ७ ॥ तदु होवाच शाट्यायनिस्तत एतमर्हति प्रत्यक्ष गातुम् । यद्वाव वाचा करोति तदेतदेवाऽस्य कृत भवतीति ॥ ८ ॥ अथ वा अत ऋक्साम्नोरेव प्रजाति. । स यद्धिङ्करोत्यभ्येव तेन क्रन्दति । अथ यत्प्रस्तौत्यैव तेन प्लवते । अथ यदादिमादत्ते रेत एव तेन सिञ्चति । अथ यदुद्गायति रेत एव तेन सिक्त सभावयति । अथ यत्प्रतिहरति रेत एव तेन सभूत प्रवर्धयति । अथ यदुपद्रवति रेत एव तेन प्रवृद्ध विकरोति । अथ यन्निधनमुपैति रेत एव तेन विकृत प्रजनयति । सैषा

ऋक्साम्नो. प्रजाति ॥ ९ ॥ स य एवमेतामृक्साम्नो प्रजातिं वेद प्र हैनमृक्सामनी जनयत. ॥ १० ॥

'एकाक्षररूप आदित्य देवर्षिभि प्राप्य प्राणद्वारा'

इत्युपासना

२।२।१

एप एवेदमग्र आसीद्य एष तपति । स एष सर्वेषा भूताना तेजो हर इन्द्रिय वीर्यमादायोर्ध्व उदक्रामत् ॥ १ ॥ सोऽकामयतैकमेवाऽक्षरं स्वादु मृदु देवाना वनामेति ॥ २ ॥ स तपोऽतप्यत । स तपस्तप्त्वैकमेवाऽक्षरमभवत् ॥ ३ ॥ त देवाश्चर्षयश्चोपसमैप्सन् । अथेपोऽसुरान् भूतहनोऽसृजतैतस्य पाप्मनोऽनन्वागमाय ॥ ४ ॥ तं वाचोपसमैप्सन् । ते वाच समारोहन् । तेषां वाच पर्यादत्त । तस्मात्पर्यादत्ता वाक् । सत्य च ह्येनया वदत्यनृत च ॥ ५ ॥ त मनसोपसमैप्सन् । ते मन समारोहन् । तेषा मन पर्यादत्त । तस्मात्पर्यादत्त मन । पुण्य च ह्येनेन ध्यायति पापं च ॥ ६ ॥ त चक्षुषोपसमैप्सन् । ते चक्षुः समारोहन् । तेषा चक्षु पर्यादत्त । तस्मात्पर्यात्त चक्षु । दर्शनीय च ह्येनेन पश्यत्यदर्शनीय च ॥ ७ ॥ तं श्रोत्रेणोपसमैप्सन् । ते श्रोत्र समारोहन् । तेषा श्रोत्र पर्यादत्त । तस्मात्पर्यात्तं श्रोत्रम् । श्रवणीय चैनेन शृणोत्यश्रवणीयं च ॥ ८ ॥ तमपानेनोपसमैप्सन् । तेऽपानं समारोहन् । तेषामपान पर्यादत्त । तस्मात्पर्यात्तोऽपानः । सुरभि च ह्येनेन जिघ्रति दुर्गन्धि च ॥ ९ ॥ तं प्राणेनोपसमैप्सन् । तं प्राणेनोपसमाप्नुवन् ॥ १० ॥ अथाऽसुरा भूतहन आद्रवन्मोहयिष्याम इति मन्यमाना ॥ ११ ॥ स यथाऽश्मानमृत्वा लोष्टो विध्वंसेतैवमेवाऽसुरा व्यध्वंसन्त । स एषोऽश्माऽऽखणो यत्प्राण. ॥ १२ ॥ स यथाऽश्मानमाखणमृत्वा लोष्टो विध्वसत एतमेव स विध्वंसते य एवं विद्वांसमुपवदति ॥ १३ ॥

प्राण एवोद्गीथ वशी दीप्ताग्र, आभूति, सभूति इत्यादिरूपै उपास्य

२।२।२

स एप वशी दीप्ताग्र उद्गीथो यत् प्राण । एष हीद सर्वं वशे कुरुते ॥ १ ॥ वशी भवति वशे स्वान् कुरुते य एव वेद । अस्य ह्यरावग्रे दीप्यते३ अमुष्य वास ॥ २ ॥ त हैतमुद्गीथ शाट्यायनि राचष्टे वशी दीप्ताग्र इति । दीप्ताग्रा ह वा अस्य कीर्तिर्भवति य एव वेद ॥ ३ ॥ आभूतिरिति कारीरादय. । प्राणं वा अनु प्रजा. पशव आभवन्ति । स य एवमेतमाभूतिरित्युपास्त प्रैव प्राणेन प्रजया पशुभिर्भवति ॥ ४ ॥ सभूतिरिति सात्ययज्ञय । प्राणं वा अनु प्रजा पशव सभवन्ति । स य एवमेत सभूतिरित्युपास्ते ममे( व ) प्राणेन प्रजया पशुभिर्भवति ॥ ५ ॥ प्रभूतिरिति शैलना' । प्राण वा अनु प्रजा पशव प्रभवन्ति । स य एवमेत प्रभूतिरित्युपास्ते प्रैव प्राणेन प्रजया पशुभिर्भवति ॥ ६ ॥ भूतिरिति भाल्लविन । प्राणं वा अनु प्रजा पशवो भवन्ति । स य एवमेत भूतिरित्युपास्ते भवत्येव प्राणेन प्रजया पशुभि. ॥ ७ ॥ अपरोधोऽनपरुद्ध इति पार्ष्णि. शैलन. । एष ह्यन्यमपरुणद्धि नैतमन्यः । एष ह वाऽस्य द्विषन्त भ्रातृव्यमपरुणद्धि य एव वेद ॥ ८ ॥

२।२।३

एकवीर इत्यारुणेय. । एको ह्येवैष वीरो यत् प्राण । आ ह्याऽस्यैको वीरो वीर्यवाञ्जायते य एवं वेद ॥ १ ॥ एकपुत्र इति चैकितानेयः । एको ह्येवैष पुत्रो यत् प्राण' ॥ २ ॥ स उ एव द्विपुत्र इति । द्वौ हि प्राणापानौ ॥ ३ ॥ स उ एव त्रिपुत्र इति । त्रयो हि प्राणोऽपानो व्यान. ॥ ४ ॥ स उ एव चतुष्पुत्र इति । चत्वारो हि प्राणोऽपानो व्यान समान ॥ ५ ॥ स उ एव पञ्चपुत्र इति । पञ्च हि प्राणोऽपानो व्यान. समानोऽवान ॥ ६ ॥ स उ एव षट्पुत्र इति । षड्ढि प्राणोऽपानो व्यान. समानोऽवान उदान' ॥ ७ ॥ स उ एव

सप्तपुत्र इति । सप्त हीमे शीर्षण्या प्राणा. ॥ ८ ॥ स उ एव नवपुत्र इति । सप्त हि शीर्षण्या प्राणा द्वाववाञ्चौ ॥ ९ ॥ स उ एव दशपुत्र इति । सप्त शीर्षण्याः प्राणा द्वाववाञ्चौ नाभ्या दशमः ॥ १०॥ स उ एव बहुपुत्र इति । एतस्य हीयं सर्वाः प्रजा. ॥ ११ ॥ एत ह स्म वैतदुद्गीथ विद्वांस पूर्वे ब्राह्मणा कामागायिन आहु· कति ते पुत्रानागास्याम इति ॥ १२ ॥

प्राण उद्गीथ एक द्वौ त्रय इत्यादिसख्याभिरुपास्य

२।२।४

स यदि ब्रूयादेकं म आगायेति प्राण उद्गीथ इति विद्वानेक मनसा ध्यायेत् । एको हि प्राण । एको ह्याऽस्याऽऽजायते ॥ १ ॥ स यदि ब्रूयाद्द्वौ म आगायेति प्राण उद्गीथ इत्येव विद्वान्द्वौ मनसा ध्यायेत् । द्वौ हि प्राणापानौ द्वौ हैवाऽस्याऽऽजायेते ॥ २ ॥ स यदि ब्रूयात्त्रीन्म आगायेति प्राण उद्गीथ इत्येव विद्वांस्त्रीन्मनसा ध्यायेत् । त्रयो हि प्राणोऽपानो व्यान । त्रयो हैवाऽस्याऽऽजायन्ते ॥ ३ ॥ स यदि ब्रूयाच्चतुरो म आगायेति प्राणा उद्गीथ इत्येव विद्वाँश्चतुरो मनसा ध्यायेत् । चत्वारो हि प्राणोऽपानो व्यान समान. । चत्वारो हैवाऽस्याऽऽजायन्ते ॥ ४ ॥ स यदि ब्रूयात्पञ्च म आगायेति प्राण उद्गीथ इत्येव विद्वान् पञ्च मनसा ध्यायेत् । पञ्च हि प्राणोऽपानो व्यान समानोऽवान. । पञ्च हैवाऽस्याऽऽजायन्ते ॥ ५ ॥ स यदि ब्रूयात् षण्म आगायेति प्राण उद्गीथ इत्येव विद्वान् षण्मनसा ध्यायेत् । षड्ढि प्राणोऽपानो व्यान समानोऽवान उदानः । षड्ढैवाऽस्याऽऽजायन्ते ॥ ६ ॥ स यदि ब्रूयात्सप्त म आगायेति प्राण उद्गीथ इत्येव विद्वान् सप्त मनसा ध्यायेत् । सप्त हीमे शीर्षण्या· प्राणा. । सप्त हैवाऽस्याऽऽजायन्ते ॥ ७ ॥ स यदि ब्रूयान्नव म आगायेति प्राण उद्गीथ इत्येव विद्वान्नव मनसा ध्यायेत् । सप्त शीर्षण्या· प्राणा द्वाववाञ्चौ । नव हैवाऽस्याऽऽजायन्ते ॥ ८ ॥ स यदि ब्रूयाद्दश म आगायेति प्राण उद्गीथ इत्येव विद्वान् दश मनसा ध्यायेत् । सप्त शीर्षण्या प्राणा द्वाववाञ्चौ नाभ्या दशम· । दश हैवाऽस्याऽऽजायन्ते ॥ ९ ॥ स यदि ब्रूयात्सहस्रं म आगायेति प्राण उद्गीथ इत्येव विद्वान् सहस्र मनसा ध्यायेत् । सहस्र हैत आदित्यरश्मय । तेऽस्य पुत्रा· । सहस्र हैवाऽस्याऽऽजायन्ते ॥ १० ॥ एव हैवैतमुद्गीथं पर आट्णार कक्षीवाँस्त्रसदस्युरिति पूर्वे महाराजा श्रोत्रियाः सहस्रपुत्रमुपनिषेदु । ते ह सर्वे एव सहस्रपुत्रा आसु ॥ ११ ॥ स य एवैवं वेद सहस्रं हैवाऽस्य पुत्रा भवन्ति ॥ १२ ॥

शर्यातमानवस्य आख्यान, ' प्राण एव अयास्य आङ्गिरस ' इत्युपासना

२।३।१

शर्यातो वै मानव प्राच्यां स्थल्यामयजत । तस्मिन् ह भूतान्युद्गीथेऽपित्वमेषिरे ॥ १ ॥ त देवा बृहस्पतिनोद्गात्रा दीक्षामहा इति पुरस्तादागच्छन्नय त उद्गायत्विति बम्बेनाऽऽजद्विषेण पितरो दक्षिणतोऽय त उद्गायत्वित्युशनसा काव्येनाऽसुरा पश्चादय त उद्गायत्वित्ययास्येनाऽऽङ्गिरसेन मनुष्या उत्तरतोऽयं त उद्गायत्विति ॥ २ ॥ स ईक्षांचक्रे, हन्तैनान् पृच्छानि, कियतो वा एक ईशे कियत एक कियत एक इति ॥ ३ ॥ स होवाच बृहस्पतिं यन्मे त्वमुद्गाये किं तत स्यादिति ॥ ४ ॥ स होवाच देवेष्वेव श्री. स्याद्देवेष्वीशा स्वर्गमु त्वा लोक गमयेयमिति ॥ ५ ॥ अथ होवाच बम्बमाजद्विष यन्मे त्वमुद्गाये. किं तत स्यादिति ॥ ६ ॥ स होवाच पितृष्वेव श्रीः स्यात्पितृष्वीशा स्वर्गमु त्वां लोकं गमयेयमिति ॥ ७ ॥ अथ होवाचोशनस काव्यं, यन्मे त्वमुद्गाये. किं तत स्यादिति ॥ ८ ॥ स होवाचाऽसुरेष्वेव श्री स्यादसुरेष्वीशा स्वर्गमु त्वां लोक गमयेयमिति ॥ ९ ॥ अथ होवाचाऽयास्यमाङ्गिरस, यन्मे त्वमुद्गाये किं तत स्यादिति ॥ १० ॥ स होवाच देवानेव देवलोके दध्यां, मनुष्यान्मनुष्य-

लोके, पितॄन् पितृलोके, नुदेयाऽस्माल्लोकादसुरान्, स्वर्गमु त्वा लोक गमयेयमिति ॥ ११ ॥

२।३।२

स होवाच त्व मे भगव उद्गाय य एतस्य सर्वस्य यशो(ऽसी)ति ॥ १ ॥ तस्य ह्याऽयास्य एवोज्जगौ। तस्मादुद्गाता वृत उत्तरतो निवेशन लिप्सेत। एतद्धानारुद्धनिवेशन यदुत्तरत ॥ २ ॥ उत्तरत आगतोऽयास्य आङ्गिरस शर्यातस्य मान वस्योज्जगौ। स प्राणेन देवान्देवलोकेऽदधादपानेन मनुष्यान् मनुष्यलोके, व्यानेन पितॄन् पितृलोके, हिङ्कारेण वज्रेणाऽस्माल्लोकादसुराननुदत ॥ ३ ॥ तान् होवाच दूरं गच्छतेति। स दूरो ह नाम लोक। त ह जग्मु। त एतेऽसुरा असभाव्य पराभूता ॥ ४ ॥ छन्दोभिरेव वाचा शर्यात मानव स्वर्ग लोक गमयाचकार ॥ ५ ॥ ते होचुरसुरा एत त वेदाम यो नोऽयमित्थमधत्तेति। तत आगच्छन्। तमेत्याऽपश्यन् ॥ ६ ॥ तेऽब्रुवन्नय वा आस्य इति। यदब्रुवन्नय वा आस्य इति तस्मा दयमास्यः। अयमास्यो ह वै नामैष। तमयास्य इति परोक्षमाचक्षते ॥ ७ ॥ स प्राणो वा अयास्य। प्राणो ह वा एनान् स नुनुदे ॥ ८ ॥ स य एव विद्वानुद्गायति प्राणेनैव देवान् देवलोके दधात्य-पानेन मनुष्यान् मनुष्यलोके, व्यानेन पितॄन् पितृलोके, हिङ्कारेणैव वज्रेणाऽस्माल्लोकाद्‌द्विषन्त भ्रातृव्य नुदते ॥ ९ ॥

प्राणापानब्रह्मादित्यैकवीररूपै व्याहृत्युपासना, 'बहुपुत्र एष उद्गीथ' इत्युपासना

२।३।३

तं ह ब्रूयाद्दूरं गच्छेति। स यमेव लोकमसुरा अगच्छस्त हैव गच्छति ॥ १ ॥ छन्दोभिरेव वाचा यजमान स्वर्गं लोकं गमयति ॥ २ ॥ ता एता व्याहृतयः। प्रेत्येति वाग्(इति) भूर्भुव स्वरित्यु (उदिति) ॥ ३ ॥ तद्यत्प्रेति तत्प्राण-स्तदयं लोकस्तदिमं लोकमस्मिँल्लोक आभजति ॥ ४ ॥ प्रत्यपानस्तदसौ लोकस्तदमुं लोकममुष्मिँ-ल्लोक आभजति ॥ ५ ॥ वागिति तद्ब्रह्म तदिदम-न्तरिक्षम् ॥ ६ ॥ भूर्भुव स्वरिति सा त्रयी विद्या ॥ ७ ॥ उदिति सोऽसावादित्य। तद्यदुदित्युदिव श्लेषयति ॥ ८ ॥ तद्यदेकमेवाऽभिसपद्यते तस्मादे-कवीर। एको ह तु सन्वीरो वीर्यवान् भवति। आ ह्याऽस्यैको वीरो वीर्यवान् जायते य एव वेद ॥ ९ ॥ तदु होवाच शाट्यायनिर्बहुपुत्र एष उद्गीथ इत्येवोपासितव्यम्। बह्वो ह्येत आदित्य-रश्मयस्तेऽस्य पुत्रा। तस्माद्बहुपुत्र एष उद्गीथ इत्येवोपासितव्यमिति ॥ १० ॥

मुख्य. प्राण एव उद्गाता इत्युपासना देवासुराख्यान-सहिता इन्द्रियपापापह्वा

२।४।१

देवासुराः समयतन्तेत्याहु। न ह वै तद्देवा-सुरा सम्येतिरे। प्रजापतिश्च ह वै तन्मृत्युश्च सम्येताते ॥ १ ॥ तस्य ह प्रजापतेर्देवाः प्रिया पुत्रा अन्त आसुः। तेऽध्रियन्त। तेनोद्गात्रा दी-क्षामहै येनाऽपहत्य मृत्युमपहत्य पाप्मान स्वर्ग-लोकमियामेति ॥ २ ॥ तेऽब्रुवन्वाचोद्गात्रा दीक्षामहा इति ॥ ३ ॥ ते वाचोद्गात्राऽदीक्षन्त। तेभ्य इद वागागायद्यदिद वाचा वदति, यदिद वाचा भुञ्जते ॥ ४ ॥ ता पाप्माऽन्वसृज्यत। स यदेव वाचा पाप वदति स एव स पाप्मा ॥ ५ ॥ तेऽब्रुवन् न वै नोऽय मृत्यु न पाप्मानमत्यवाक्षीत्। मनसोद्गात्रा दीक्षामहा इति ॥ ६ ॥ ते मनसोद्गात्राऽ-दीक्षन्त। तेभ्य इद मन आगायद्यदिद मनसा ध्यायति यदिद मनसा भुञ्जते ॥ ७ ॥ तत्पाप्माऽ-न्वसृज्यत। स यदेव मनसा पापं ध्यायति स एव स पाप्मा ॥ ८ ॥ तेऽब्रुवन्नो न्वाव नोऽय मृत्यु न पाप्मानमत्यवाक्षीत्। चक्षुषोद्गात्रा दीक्षा-महा इति ॥ ९ ॥ ते चक्षुषोद्गात्राऽदीक्षन्त। तेभ्य इद चक्षुरागायद्यदिद चक्षुषा पश्यति, यदिद चक्षुषा भुञ्जते ॥ १० ॥ तत्पाप्माऽन्वसृ-ज्यत। स यदेव चक्षुषा पाप पश्यति स एव स पाप्मा ॥ ११ ॥ तेऽब्रुवन्नो न्वाव नोऽय मृत्यु न पाप्मानमत्यवाक्षीत्। श्रोत्रेणोद्गात्रा दीक्षामहा इति ॥ १२ ॥ ते श्रोत्रेणोद्गात्राऽदीक्षन्त। तेभ्य

इद श्रोत्रमागायद्यदिद श्रोत्रेण शृणोति यदिद श्रोत्रेण भुञ्जते ॥ १३ ॥ तत्पाप्माऽन्वसृज्यत । स यदेव श्रोत्रेण पाप शृणोति स एव स पाप्मा ॥ १४ ॥ तेऽब्रुवन्नो न्वाव नोऽयं मृत्यु न पाप्मानमत्यवाक्षीत् । प्राणेनोद्गात्रा दीक्षामहा इति ॥ १५ ॥ ते प्राणेनोद्गात्राऽदीक्षन्त । तेभ्य इद प्राण आगायद्यदिद प्राणेन प्राणिति यदिद प्राणेन भुञ्जते ॥ १६ ॥ त पाप्माऽन्वसृज्यत । स यदेव प्राणेन (पाप) प्राणिति स एव स पाप्मा ॥ १७ ॥ तेऽब्रुवन्नो न्वाव नोऽयं मृत्युं न पाप्मानमत्यवाक्षीत् । अनेन मुख्येन प्राणेनोद्गात्रा दीक्षामहा इति ॥ १८ ॥ तेऽनेन मुख्येन प्राणेनोद्गात्राऽदीक्षन्त ॥ १९ ॥ सोऽब्रवीन्मृत्युरेष एषां स उद्गाता येन मृत्युमत्येष्यन्तीति ॥ २० ॥ न ह्येतेन प्राणेन पाप वदति, न पापं ध्यायति, न पाप पश्यति, न पापं शृणोति, न पापं गन्धमपानिति ॥ २१ ॥ तेनाऽपहत्य मृत्युमपहत्य पाप्मान, स्वर्गं लोकमायन् । अपहत्य हैव मृत्युमपहत्य पाप्मानं, स्वर्गं लोकमेति य एव वेद ॥ २२ ॥

मुख्यप्राणद्वारा पापापहारेण वागादीना अग्न्यादिदेवभावप्राप्ति, ‘मुख्य प्राण एव अयास्य आङ्गिरसः’ इत्युपासना, आध्यात्मिकी दैवी परिषत्

२।४।२

स यथा हत्वा प्रमृद्याऽतीयादेवमेवैत मृत्युमत्यायत् ॥ १ ॥ स वाच प्रथमामत्यवहत् । ता परेण मृत्यु न्यदधात् । सोऽग्निरभवत् ॥ २ ॥ अथ मनोऽत्यवहत् । तत्परेण मृत्यु न्यदधात् । स चन्द्रमा अभवत् ॥ ३ ॥ अथ चक्षुरत्यवहत् । तत्परेण मृत्यु न्यदधात् । स आदित्योऽभवत् ॥ ४ ॥ अथ श्रोत्रमत्यवहत् । तत्परेण मृत्युं न्यदधात् । ता इमा दिशोऽभवन् । ता उ एव विश्वे देवा' ॥ ५ ॥ अथ प्राणमत्यवहत् । त परेण मृत्युं न्यदधात् । स वायुरभवत् ॥ ६ ॥ अथाऽऽत्मने केवलमेवाऽन्नाद्यमागायत् ॥ ७ ॥ स एष एवाऽयास्य' । आस्ये धीयते । तस्मादयास्यः । यद्वेवा(ऽयम्) आस्ये रमते तस्माद्वेवाऽयास्य. ॥ ८ ॥ स एष एवाऽऽङ्गिरसः । अतो ह्रीमान्यङ्गानि रसं लभन्ते । तस्मादाङ्गिरस' । यद्वेवैषामङ्गानां रस. तस्माद्वेवाऽऽङ्गिरस ॥ ९ ॥ त देवा अब्रुवन् केवल वा आत्मनेऽन्नाद्यमागासीः । अनु न एतस्मिन्नन्नाद्य आभज । एतदस्याऽनामयत्वमस्तीति ॥ १० ॥ तं वै प्रविशतेति । स वा आकाशान् कुरुष्वेति । स इमान् प्राणानाकाशानकुरुत ॥ ११ ॥ त वागेव भूत्वाऽग्नि' प्राविशन्मनो भूत्वा चन्द्रमाश्चक्षुर्भूत्वाऽऽदित्य. श्रोत्र भूत्वा दिश प्राणो भूत्वा वायु' ॥ १२ ॥ एषा वै दैवी परिषद्दैवी सभा दैवी ससत् ॥ १३ ॥ गच्छति ह वा एता दैवीं परिषद दैवीं सभा दैवीं ससद य एव वेद ॥ १४ ॥

अग्न्यादीना देवताना ऐहिकामुष्मिकहितकरत्वोपासना

२।४।३

यत्रो ह वै क चैता देवता निस्पृशन्ति न हैव तत्र कश्चन पाप्मा न्यङ्ङ्. परिशिष्यते ॥ १ ॥ स विद्यान्नेह कश्चन पाप्मा न्यङ्ङ् परिशेक्ष्यते सर्वमेवैता देवता' पाप्मानं निधक्ष्यन्तीति । तथा हैव भवति ॥ २ ॥ य उ ह वा एवंविदमृच्छति यथैता देवता ऋत्वा नीयादेव न्येति । एतासु ह्येवैनं देवतासु प्रपन्नमेतासु वसन्तमुपवदति ॥ ३ ॥ तस्य हैतस्य नैव काचनाऽऽर्तिरस्ति य एव वेद । य एवैनमुपवदति स आर्तिमार्च्छति ॥ ४ ॥ स य एनमृच्छादेव ता देवता उपसृत्य ब्रूयादयं माऽऽरत् स इमामार्तिं न्येत्विति । तां हैवाऽऽर्तिं न्येति ॥ ५ ॥ यावदावासा उ हाऽस्येमे प्राणा अस्मिँल्लोक एतावदावासा उ हाऽस्यैता देवता अमुष्मिँल्लोके भवन्ति ॥ ६ ॥ तस्मादु हैवं विद्वान्नैवागृहतायै बिभीयान्नालोकतायै । एता मे देवता अस्मिँल्लोके गृहान् करिष्यन्ति । एता अमुष्मिँल्लोके भवन्ति । तस्मादु लोक प्रदास्यन्तीति ॥ ७ ॥ तस्मादु हैवं विद्वान्नैवागृहतायै बिभीयान्नालोकतायै । एता मे देवता अस्मिँल्लोके गृहेभ्यो गृहान् करिष्यन्ति स्वेभ्य आयतनेभ्य इति हैव विद्याद् (एता) देवता अमुष्मिँल्लोके लोकं

प्रदास्यन्तीति ॥ ८ ॥ तस्मादु हैव विद्वान्नैवागृहतायै बिभीयान्नालोकतायै एता म एतदुभय सनंस्यन्तीति हैव विद्यान् । तथा हैव भवति ॥ ९ ॥

'वाक् धेनु अग्निर्वत्स' इत्युपासना

२।५।१

देवा वै ब्रह्मणो वत्सेन वाचमदुह्रन् । अग्निर्ह वै ब्रह्मणो वत्स ॥१॥ सा या सा वाग्ब्रह्मैव तत् । अथ योऽग्निर्मृत्यु स ॥ २ ॥ तामेता वाच यथा धेनु वत्सेनोपसृज्य प्रत्ता दु हीतैवमेव देवा वाच सर्वान्कामानदुह्रन् ॥ ३ ॥ दुहे ह वै वाच सर्वान्कामान् य एव वेद । स हैपोऽनमृतो वाच देवीमुदित्वे वद वद वदेति ॥ ४ ॥ तद्यदिह पुरुषस्य पाप कृत भवति तदाविष्करोति । यद्दिहैनदपि रहसीव कुर्वन्मन्यतेऽथ हैनदाविरेव करोति । तस्माद्वाव पाप न कुर्यान् ॥ ५ ॥

अग्न उपचर्या, 'साम नाग्नेव एक अ' इत्युपासना

२।५।२

एप उ ह वाव देवानां नेदिष्ठमुपचर्यो यदग्नि ॥ १ ॥ त साधूपचरेत् । य एनमस्मिँल्लोके साधूपचरति तमेपोऽमुष्मिँल्लोके साधूपचरति । अथ य एनमस्मिँल्लोके नाऽऽद्रियते तमेपोऽमुष्मिँल्लोके नाद्रियते । तस्माद्वा अग्नि साधूपचरेत् ॥ २ ॥ त नैव हस्ताभ्या स्पृशेन्न पादाभ्या न दण्डेन ॥ ३ ॥ हस्ताभ्या स्पृशति यदस्याऽन्तिकमत्रनेनिक्ते । अथ यदभिप्रसारयति तत्पादाभ्याम ॥ ५ ॥ स एनमास्पृष्ट ईश्वरो दुर्धाया धातोः । तस्माद्वा अग्नि साधूपचरति । सुधायां हैवैन दधाति ॥ ६ ॥

२।५।३

एप उ ह वाव देवाना महाशनतमो यदग्नि ॥ १ ॥ तन्न व्रत्यमददानोऽश्नीयान् । यो वै महाशनेऽनश्नत्यश्नातीश्वरो हैनमभिपङ्क्तोः । पूतिमिव हाऽश्नीयान् ॥ २ ॥ अथो ह प्रोक्तेऽशने ब्रूयान् समिन्त्स्वाऽग्निमिति । स यथा प्रोक्तेऽशने श्रेयांस परिवेष्टवै ब्रूयात्तादृक् तत् ॥ ३ ॥ एतदु ह वाव साम यद्वाक् । यो वै चक्षु साम श्रोत्र सामेत्युपास्ते न ह तेन करोति ॥ ४ ॥ अथ य आदित्य साम चन्द्रमा सामेत्युपास्ते न हैव तेन करोति ॥ ५ ॥ अथ यो वाक् सामेत्युपास्ते स एवाऽनुष्ठया साम वेद । वाचा हि साम्नाऽऽर्त्विज्य क्रियते ॥ ६ ॥ स यो वाच स्वरो जायते सोऽग्निर्वाग्वेव वाक् । तदत्रैकया साम भवति ॥ ७ ॥ स य एव मेतदेकया साम भवद्वेदैव हैतदेकया साम भवती त्येकयेव श्रेष्ठ स्वाना भवति ॥ ८ ॥ तस्मादु हैवविदमेव साम्नाऽऽर्त्विज्य कारयेत । स ह वाव साम वेद य एव वेद ॥ ९ ॥

इति द्वितीयोऽध्यायः ॥

---

## तृतीयोऽध्यायः

सर्वाभिपन्नाग्निरोगाद्यानसहिता 'साम कृत्स्नदेवता वायुरेव' इति 'साम प्राण एव' इति चोपासना सर्वदेवतात्मविषयिणी

३।१।१

एप ह वाव कृत्स्ना देवताऽर्वदेवता एवाऽन्या । अयमेव योऽय पवते ॥ १ ॥ एप एव सर्वेषा देवाना सहा ॥ २ ॥ स हैपोऽस्त नाम । अस्तमिति हैह पश्चाद्ग्रहानाचक्षते ॥ ३ ॥ स यदादित्योऽस्तमगादिति ग्रहानगादिति हैतत् । तेन सोऽसर्व । स एतमेवाऽप्येति ॥ ४ ॥ अस्त चन्द्रमा एति । तेन सोऽसर्व । स एतमेवाऽप्येति ॥ ५ ॥ अस्त नक्षत्राणि यन्ति । तेन तान्यसर्वाणि । तान्येतमेवाऽपियन्ति ॥ ६ ॥ अन्वग्निर्गच्छति । तेन सोऽसर्वः । स एतमेवाऽप्येति ॥ ७ ॥ एत्यह । एति रात्रिः । तेन ते असर्वे । ते एतमेवाऽपीत ॥ ८ ॥ मुह्यन्ति दिशो न वै ता रात्रिं प्रज्ञायन्ते । तेन ता असर्वा । ता एतमेवाऽपियन्ति ॥ ९ ॥ वर्षति च पर्जन्य उच्च गृह्णाति । तेन सोऽसर्वः । स एतमेवाऽप्येति ॥ १० ॥ क्षीयन्त आप एवमो-

षधय एवं वनस्पतयः । तेन तान्यसर्वाणि । तान्येतमेवाऽपियन्ति ॥ ११ ॥ तद्यदेतत्सर्वं वायुमेवाऽप्येति तस्माद्वायुरेव साम ॥ १२ ॥ स ह वै सामवित्स ( कृत्स्न ) साम वेद य एवं वेद ॥१३॥ अथाऽध्यात्मम् । न वै स्वपन् वाचा वदति । सेयमेव प्राणमप्येति ॥ १४ ॥ न मनसा ध्यायति । तदिदमेव प्राणमप्येति ॥ १५ ॥ न चक्षुषा पश्यति । तदिदमेव प्राणमप्येति ॥ १६ ॥ न श्रोत्रेण शृणोति । तदिदमेव प्राणमप्येति ॥ १७ ॥ तद्यदेतत्सर्वं प्राणमेवाऽभिसमेति तस्मात्प्राण एव साम ॥ १८ ॥ स ह वै सामवित्स कृत्स्नं साम वेद य एव वेद ॥ १९ ॥ तद्यदिदमाहुर्न बताऽद्य वातीति ( स ) हैतत्पुरुषेऽन्तर्निरमते स पूर्ण. स्वेदमान आस्ते ॥ २० ॥ तद्ध शौनक च कापेयमभिप्रतारिण च ( काक्षसेनिम् ) ब्राह्मणः परिवेविष्यमाणा उपावव्राज ॥ २१ ॥

३।१।२

तौ ह बिभिक्षे । त ह नाऽऽदद्राते को वा को वेति मन्यमानौ ॥ १ ॥

तौ होपजगौ—

'महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपा ।
तं कापेय न विजानन्त्येकेऽभिप्रतारिन् बहुधा निविष्टम्' इति ॥ २ ॥

स होवाचाऽभिप्रतारीम वाव प्रपद्य प्रतिब्रूहीति । त्वया वा अयं प्रत्युच्य इति ॥ ३ ॥

तं ह प्रत्युवाच—

'आत्मा देवानामुत मर्त्यानां हिरण्यदन्तो रपसो न सूनु. ।
महान्तमस्य महिमानमाहुरनद्यमानो यददन्तमत्ति' इति ॥ ४ ॥

महात्मनश्चतुरो ( देव ) एक इति । वाग्वा अग्नि. । स महात्मा देवः । स यत्र स्वपिति तद्वाचं प्राणो गिरति ॥ ५ ॥ मनश्चन्द्रमाः स महात्मा देव । स यत्र स्वपिति तन्मन. । प्राणो गिरति ॥ ६ ॥ चक्षुरादित्यः स महात्मा देव. । स यत्र स्वपिति तच्चक्षु. प्राणो गिरति ॥ ७ ॥ श्रोत्र दिशस्ता महात्मानो देवा । स यत्र स्वपिति तच्छ्रोत्र प्राणो गिरति ॥ ८ तद्यन्महात्मनश्चतुरो देव एक इत्येतद्ध तत् ॥ ९ ॥ क. स जगारेति । प्रजापतिर्वै क । स हैतज्जगार ॥ १० ॥ भुवनस्य गोपा इति । स उ वाव भुवनस्य गोपाः ॥ ११ ॥ त कापेय न विजानन्त्येक इति । न ह्येतमेके विजानन्ति ॥ १२ ॥ अभिप्रतारिन् बहुधा निविष्टमिति । बहुधा ह्येवैष निविष्टो यत्प्राण. ॥ १३ ॥ आत्मा देवानामुत मर्त्यानामिति । आत्मा ह्येष देवानामुत मर्त्यानाम् ॥ १४ ॥ हिरण्यदन्तो रपसो न सूनुरिति । न ह्येष सूनु । सूनुरूपो ह्येष सन्न सूनु ॥ १५ ॥ महान्तमस्य महिमानमाहुरिति । महान्त ह्येतस्य महिमानमाहु' ॥ १६ ॥ अनद्यमानो यददन्तमत्तीति । अनद्यमानो ह्येषोऽदन्तमत्ति ॥ १७ ॥

उक्थे सप्तविधोक्थेषु च उपासनाविशेषा

३।१।३

तस्यैष श्रीरात्मा समुद्गूढो यदसावादित्य. । तस्माद्गायत्रस्य स्तोत्रेणाऽवान्याञ्छेच्छ्रिया अवछिद्या इति ॥ १ ॥ स एष एवोक्थम् । यत्पुरस्तादवानिति । तदेतदुक्थस्य शिर, यद्दक्षिणत स दक्षिण. पक्ष, यदुत्तरतः स उत्तर. पक्ष, यत्पश्चात् ( तत् ) पुच्छम् ॥ २ ॥ अयमेव प्राण उक्थस्याऽऽत्मा । स य एवमेतमुक्थस्याऽऽत्मानमात्मन्प्रतिष्ठित वेद स हाऽमुष्मिँल्लोके साङ्ग सतनु ( सर्वस् ) सभवति ॥ ३ ॥ शश्वद्ध वा अमुष्मिँल्लोके यदिद पुरुषस्याऽऽण्डौ शिश्न कर्णौ नासिके यत्किंचाऽनस्थिक न सभवति ॥ ४ ॥ अथ य एवमेतमुक्थस्याऽऽत्मानमात्मन्प्रतिष्ठितं वेद स हैवाऽमुष्मिँल्लोके साङ्ग सतनु. सर्वं संभवति ॥ ५ ॥ तदेतद्वैश्वामित्रमुक्थम् । तदन्नं वै विश्व प्राणो मित्रम् ॥ ६ ॥ तद्ध विश्वामित्रः श्रमेण तपसा ब्रतचर्येणेन्द्रस्य प्रिय धामोपजगाम ॥ ७ ॥ तस्मा उ हैतत्प्रोवाच यदिद मनुष्यानागतम् ॥८॥ तद्ध स उपनिषसाद ज्योतिरेतदुक्थमिति ॥ ९ ॥ ज्योतिरिति

द्वे अक्षरे, प्राग इति द्वे, अन्नमिति द्वे । तदेतदन्न एव प्रतिष्ठितम् ॥ १० ॥ अथ हैनं जमदग्नि रुपनिपसादाऽऽयुरेतदुक्थमिति ॥ ११ ॥ आयुरिति द्वे अक्षरे, प्राण इति द्वे, अन्नमिति द्वे। तदेतदन्न एव प्रतिष्ठितम् ॥ १२ ॥ अथ हैन वसिष्ठ उपनिपसाद गौरेतदुक्थमिति । तदेतदन्नमेव । अन्न हि गौ ॥ १३ ॥ तदाहुर्यदस्य प्राणस्य पुरुष शरीरमथ केनाऽन्ये प्राणा शरीरवन्तो भवन्तीति ॥ १४ ॥ स ब्रूयाद्यद्वाचा वदति तद्वाच शरीर, यन्मनसा ध्यायति तन्मनस शरीर, यच्चक्षुषा पश्यति तच्चक्षुष. शरीर, यच्छ्रोत्रेण शृणोति तच्छ्रोत्रस्य शरीरम् । एवमु हाऽन्ये प्राणा शरीरवन्तो भवन्तीति ॥ १५ ॥

३।१।४

तदेतदुक्थ सप्तविध शस्यते । स्तोत्रियोऽनुरूपो धाय्या प्रगाथ. सूक्त निवित्परिधानीया ॥ १ ॥ इयमेव स्तोत्रियोऽग्निरनुरूपो वायुर्धाय्याऽन्तरिक्ष प्रगाथो द्यौ. सूक्तमादित्यो निवित् । तस्माद्बृहदृचा उदिते निविदमधीयन्त । आदित्यो हि निवित् । दिश परिधानीयेत्यधिदैवतम् ॥ २ ॥ अथाध्यात्मम् । आत्मैव स्तोत्रिय. प्रजाऽनुरूप प्राणो धाय्या मन प्रगाथ शिर सूक्त चक्षुर्निविच्छ्रोत्र परिधानीया ॥ ३ ॥ तद्धैतदेके त्रिष्टुभा परिदधत्यनुष्टुभैके । त्रिष्टुभा त्वेव परिदध्यात् ॥ ४ ॥ तद्वै- तदेक एता व्याहृतीरभिव्याहृत्य शंसन्ति । महान्महा समधत्त, देवो देव्या समधत्त, ब्रह्म ब्राह्मण्या समधत्त । तद्यत्समधत्त समधत्तेति ॥ ५ ॥ तस्मादिदानीं पुरुषस्य शरीराणि प्रतिसंहितानि । पुरुषो ह्येतदुक्थम् ॥ ६ ॥ महान्मह्या समधत्तेति । अग्निर्वै महानियमेव मही ॥ ७ ॥ देवो देव्या समधत्तेति । वायुर्वै देवोऽन्तरिक्षं देवी ॥ ८ ॥ ब्रह्म ब्राह्मण्या समधत्तेति । आदित्यो वै ब्रह्म द्यौर्ब्राह्मणी ॥ ९ ॥ तासां वा एतासां देवतानां द्वयोर्द्वयोर्देवतयोर्नव-नवाऽक्षराणि सपद्यन्ते एतदिमे लोकास्त्रिणवा भवन्ति ॥ १० ॥ तद्ब्रह्म वै त्रिवृत् । तद्ब्रह्माऽभिव्याहृत्य शंसन्ति । एष उ एव स्तोम सोऽनुचर ॥ ११ ॥ यदिममाहुरेकस्तोम इत्ययमेव योऽयं पवते । एषोऽधिदैवतम् । प्राणोऽध्यात्मम् । तस्य शरीरमनुचर ॥ १२ ॥ तद्यथा ह वै मणौ मणिसूत्र सप्रोत स्यात् — ॥ १३ ॥

बहिष्पवमाने स्तोमयुक्ति

३।१।५

एव हैतस्मिन्सर्वमिद सप्रोत गन्धर्वाप्सरसः पशवो मनुष्याः ॥ १ ॥ तद्ध सुश्र. सामश्रवस प्रययौ । तस्मै ह श्वाजनिवदय प्रेयाय ॥ २ ॥ तस्य हाऽन्तरिक्षात्पतित्वा नवनीतपिण्ड उरसि निपपात । त हाऽऽदायाऽनुदधौ ॥ ३ ॥ ततो हैव स्तोम ददर्शाऽन्तरिक्षे वितत बहुशोभमानम् । तस्यो ह युक्तिं ददर्श ॥ ४ ॥ बहिष्पवमानमामन्त्र टीत्र ( ? ) त्रियि ( ? ) प्राण्य इति कुर्यात् टीत्र ( ? ) गृहित्र ( ? ) अपान्य इति वाचा । दिन्क्षेतेवाऽक्षिभ्यां शुश्रूषेतैव कर्णाभ्याम् । मनसैव मनोयुक्तम् ॥ ५ ॥ तद्यत्र वा इषुरत्यग्रो भवति न वै स ततो हिनस्ति । तदु वा एत नोपाप्नुयात् । प इलेयाऽऽनयात् । तद्यथा बिम्बेन मृगसानयेदेवमेवैनमेतया देवतयाऽऽनयति । स युक्तः करोति । एष एनापि युक्त ॥ ६ ॥

साम पदार्थविषयिणी परम्परा, बन्धुमत्सामोपासना

३।२।१

योऽसौ साम्न प्रत्ति वेद, प्र हास्मै दीयते ॥ १ ॥ ददा इति ह वा अयमग्निर्दीप्यते, तथेति वायु. पवते, हन्तेति चन्द्रमा ओमित्यादित्य ॥ २ ॥ एषा ह वै साम्न प्रत्ति । एता ह वै साम्न प्रत्ति सुदक्षिण क्षैमिर्विदाचकार ॥ ३ ॥ ता हैता होतुर्वाऽऽज्ये गायेन्मैत्रावरुणस्य वा, ता ददा३ तथा३ हन्ता३ हिं भा ओवा इति । प्र ह वा अस्मै दीयते ॥ ४ ॥ ( सो ) ऽप्यन्यान् बहूनुपर्युपरि य एवमेतां साम्नः प्रत्तिं वेद ॥ ५ ॥ य उ ह वा अबन्धुर्बन्धुमत्साम वेद, यत्र हाऽप्येनं न विदुर्यत्र रोचन्ति, यत्र परीव चक्षते, तद्धाऽपि श्रैष्ठ्यमाधिपत्यमन्नाद्यं पुरोधा पर्येति ॥ ६ ॥ अग्निर्ह वा अबन्धुर्बन्धुमत्साम । कस्माद्धा ह्येन

दार्वो॰ कस्माद्वा पर्यावृत्य मन्थन्ति स श्रैष्ठ्यायाऽऽधिपत्यायाऽन्नाद्याय पुरोधायै जायते ॥ ७ ॥ स यत्र ह वा अप्येवविद न विदुर्यत्र रोषन्ति यत्र परीव चक्षते तद्वाऽपि श्रैष्ठ्यमाधिपत्यमन्नाद्य पुरोधां पर्येति ॥ ८ ॥

साख्याना प्रणवादिविषयिणी मृत्युत्रयातिवाहनविद्या, जन्मत्रय मृत्युत्रय च

३।२।२

स्वयमु तत्र यत्रैनं विदु॰ ॥ १ ॥ सुदक्षिणो ह वै क्षैमि॰ प्राचीनशालिर्जाबालौ ते ह सब्रह्मचारिण आसु॰ ॥ २ ॥ ते हेमे बहु जप्यस्य चाऽन्यस्य चाऽनूचिरे प्राचीनशालिश्च जाबालौ च ॥ ३ ॥ अथ ह स्म सुदक्षिणः क्षैमिर्यदेव यज्ञस्याञ्जो यत्सुविदित तद्ध स्मैव पृच्छति ॥ ४ ॥ त उ ह वा अपोदिता व्याक्रोशमानाश्चेरुः । शूद्रो दुरनूचान इति ह स्म सुदक्षिण क्षैमिमाक्रोशन्ति प्राचीनशालिश्च जाबालौ च ॥ ५ ॥ स ह स्माऽऽह सुदक्षिण क्षैमिः । यत्र भूयिष्ठाः कुरुपञ्चालाः स्मागता भवितारस्तन्न एष संवाद॰ । नाऽनुपदृष्टे शूद्रा इव संवदिष्यामह इति ॥ ६ ॥ ता उ ह वै जाबालौ दिदीक्षाते शुक्रश्च गोश्रुश्च । तयोर्ह प्राचीनशालिर्वृत उद्गाता ॥ ७ ॥ स तद्ध सुदक्षिणोऽनुबुबुधे जाबालौ ह्याऽदीक्षिषातामिति । स ह सग्रहीतारमुवाचाऽऽनयस्वाऽरे जाबालौ ह्याऽदीक्षिषातां तद्गमिष्याव इति ॥ ८ ॥

३।२।३

तस्य ह ज्ञातिका अश्रुमुखा इवाऽऽसुरन्यतरां वा अयमुपागादिति ॥ १ ॥ अथ ह स्म वै य॰ पुरा ब्रह्मवाद्य वदत्यन्यतरामुपागादिति ह स्मैनं मन्यन्ते । अथो ह स्मैन मृतमिवैवोपासते ॥ २ ॥ तं ह संग्रहीतोवाचाऽथ यद्भगवस्ते ताभ्यां न कुशलं कथेत्थमात्थेति ॥ ३ ॥ ओमिति होवाच गन्तव्य म आचार्य॰ सुयमानमन्यतेति ॥ ४ ॥ स ह रथमास्थाय प्रधावयांचकार । तं ह स्म प्रतीक्षन्ते ॥ ५ ॥ क जानीतेति । सुदक्षिण इति । न वै नून स इदमभ्यवेयादिति । स एवेति ॥ ६ ॥ स ह सोपानादेवाऽन्तर्वेद्यवस्थायोवाचाऽङ्ग न्वित्थं गृहपता३ इति । त ह नाऽनूदतिष्ठासत् । स होवाचाऽनूत्थाता म एधि । कृष्णाजिनोऽसी (ति)। तदिमे कुरुपञ्चाला अविदुरनूत्थातैव त इति होचु ॥ ७ ॥ त ह कनीयान्भ्रातोवाचाऽनूत्तिष्ठ भगव उद्गातारमिति । त ह्याऽनूत्तस्थौ ॥ ८ ॥ स होवाच त्रिर्वै गृहपते पुरुषो जायते । पितुरेवाऽग्रेऽधि जायतेऽथ मातुरथ यज्ञात् ॥ ९ ॥ त्रिर्वेव म्रियत इति । स यद्ध वा एनमेतत्पिता योन्या रेतो भूत सिञ्चति— ॥ १० ॥

३।२।४

—तत्प्रथम म्रियते ॥ १ ॥ अन्धमिव वै तमो योनि॰ । लोहितस्तोको वा वै स तदाभवत्यपा वा स्तोक । किं हि स तदा भवति ॥ २ ॥ स यस्ता देवता वेद, या च स ततोऽनुसभवति, या चैनं त मृत्युमतिवहति, स उद्गाता मृत्युमतिवहतीति ॥ ३ ॥ अथ य एनमेतद्दीक्षयन्ति तद्द्वितीयं म्रियते । वपन्ति केशश्मश्रूणि । निकृन्तन्ति नखान् । प्रत्यञ्जन्त्यङ्गानि । प्रत्यचत्यङ्गुली॰ । अपवृतोऽपवेष्टित आस्ते । न जुहोति । न यजते । न योषितं चरति । अमानुषीं वाचं वदति । मृतस्य वावैष तदा रूपं भवति ॥ ४ ॥ स यस्तां देवता वेद, यां च स ततोऽनुसभवति, या चैन त मृत्युमतिवहति, स उद्गाता मृत्युमतिवहतीति ॥ ५ ॥ अथ य एनमेतदस्माल्लोकात्प्रेतं चित्यामादधति तत् तृतीयं म्रियते ॥ ६ ॥ स यस्ता देवतां वेद, यां च स ततोऽनुसभवति, या चैनं तं मृत्युमतिवहति, स उद्गाता मृत्युमतिवहतीति ॥ ७ ॥ एतावद्धैवोक्त्वा रथमास्थाय प्रधावयाचकार ॥ ८ ॥ तं ह जाबालं प्रत्येतं कनीयान् भ्रातोवाच कां भवाञ्छूद्रको वाचमवादीति । हस्तिना गाधमैषीरिति ॥ ९ ॥ प्र हैवैनं तच्छशस य॰ कथमवोचद्भगव इति । यस्त्रयाणां मृत्यूनां साम्नाऽतित्राहं वेद स उद्गाता मृत्युमतिवहतीति ॥ १० ॥

३।२।५

त वाव भगवस्ते पितोद्गातारममन्यतेति
होवाच । तद्धु ह प्राचीनशाला विदुर्य एषामयं
वृत उद्गाताऽऽस । तस्मिन् ह नाऽनुविदु ॥ १ ॥
ते होचुरनुधावत काण्ड्वियमिति । त हाऽनुसस्नु ।
ते ह काण्ड्वियमुद्गातारं चक्रिरे, ब्रह्माण प्राचीन
शालिम् ॥ २ ॥ त हाऽभ्यवेक्ष्योवाचैवमेष ब्राह्मणो
मोघाय वादाय नाऽग्लायत् । स नाऽणु साम्नोऽ
न्विच्छतीति । अति हैवैन तच्चक्रे ॥ ३ ॥ स
यद्ध वा एनमेतत्पिता योन्यां रेतो भूत सिञ्चत्या
दित्यो हैनं तद्योन्यां रेतो भूत सिञ्चति । स
हाऽस्य तत्र मृत्योरीशे ॥ ४ ॥ अथो यदेवैनमे-
तत्पिता योन्या रेतो भूतं सिञ्चति, तद्ध वाव स
ततोऽनुसभवति प्राणं च । यदा ह्येव रेत सिक्त
प्राण आविशत्यथ तत्संभवति ॥ ५ ॥ अथो
यदेवैनमेतद्दीक्षयन्त्यग्निर्हैवैन तद्योन्या रेतो भूत
सिञ्चति । स हैवाऽस्य तत्र मृत्योरीशे ॥ ६ ॥
अथो यामेवैता वैसर्जनीयामाहुतिमध्वर्युर्जुहोति,
तामेव स ततोऽनुसभवति छन्दासि चैव
॥ ७ ॥ अथ य एनमेतदस्माल्लोकात्प्रेतं चित्यामा-
दधति, चन्द्रमा हैवैन तद्योन्या रेतो भूत सिञ्चति ।
स उ हैवाऽस्य तत्र मृत्योरीशे ॥ ८ ॥ अथो
यदेवैनमेतदस्माल्लोकात् प्रेत चित्यामादधत्यथो
या एवैता अवोक्षणीया आपस्ता एव स ततोऽनु-
सभवति प्राणम्वेव । प्राणो ह्याप ॥ ९ ॥ तं ह
वा एवविदुद्गाता यजमानमोमित्येतेनाक्षरेणाऽऽ-
दित्य मृत्युमतिवहति, वागित्यग्नि, हुमिति वायु,
भा इति चन्द्रमसम् ॥ १० ॥ तान्वा एतान्मृत्यून्
साम्नोद्गाताऽऽत्मान च यजमान चाऽतिवहत्योमि-
त्येतेनाक्षरेण प्राणेनाऽमुनादित्येन ॥ ११ ॥

तस्यैष श्लोक --

'उतैषा ज्येष्ठ उत वा कनिष्ठ उतैषां पुत्र उत
वा पितैषाम् ।
एको ह देवो मनसि प्रविष्ट पूर्वो ह जज्ञे स
उ गर्भेऽन्त ' इति ॥ १२ ॥

तद्यदेषोऽभ्युक्त इममेव पुरुष योऽयमाच्छन्नोऽ
न्तरोमित्येतेनैवाक्षरेण प्राणेनैवाऽमुनैवाऽऽदि-
त्येन [ . . . ] ॥ १३ ॥

जन्मत्रय मृत्युत्रय च, त्र्यावृद्गायत्रसामोपासना,
काम्या हिङ्कारा, निधनोपासना प्रणव-
सहिता, यजमानस्य स्वर्गति

३।३।१

त्रिर्ह वै पुरुषो म्रियते त्रिर्जायते ॥ १ ॥ स
हैतदेव प्रथम म्रियते यद्रेत सिक्त संभूतं
भवति । स प्राणमेवाऽभिसभवति । आशामभि-
जायते ॥ २ ॥ अथैतद्द्वितीय म्रियते यद्दीक्षते ।
स छन्दास्येवाऽभिसभवति । दक्षिणामभिजायते
॥ ३ ॥ अथैतत् तृतीय म्रियते यन्म्रियते । स
श्रद्धामेवाऽभिसभवति । लोकमभिजायते ॥ ४ ॥
तदेतत् त्र्यावृद्गायत्र गायति । तस्य
प्रथमयाऽऽवृतेममेव लोकं जयति यदु चाऽस्मिं-
ल्लोके । तदेतेन चैन प्राणेन समर्धयति यमभिस-
भवत्येता चाऽस्मा आशां प्रयच्छति यामभिजा-
यते ॥ ५ ॥ अथ द्वितीययाऽऽवृतेदमेवाऽन्तरिक्ष
जयति यदु चान्तरिक्षे । तदेतैश्चैन छन्दोभि. सम
र्धयति यान्यभिसभवति । एता चास्मै दक्षिणा प्रय-
च्छति यामभिजायते ॥ ६ ॥ अथ तृतीययाऽऽ-
वृताऽमुमेव लोक जयति यदु चाऽमुष्मिँल्लोके ।
तदेतया चैन श्रद्धया समर्धयति ययैवैनमेतच्छ्र-
द्धयाऽग्नावभ्यादधति समयमितो भविष्यतीति ।
एत चास्मै लोक प्रयच्छति यमभिजायते ॥ ७ ॥

३।३।२

एतद्वै तिसृभिरावृद्भिरिमाँश्च लोकाञ्जयत्येतै-
श्चैन भूतै. समर्धयति यान्यभिसभवति ॥ १ ॥
अथ वा अतो हिङ्कारस्यैव । त ह स्वर्गे लोके
सन्तं मृत्युरन्वेत्यशनया ॥ २ ॥ श्रीर्वा एषा प्रजा
पति साम्नो यद्धिङ्कार । तमिदुद्गाता श्रिया
प्रजापतिना हिङ्कारेण मृत्युमपसेधति ॥ ३ ॥ हुं
मेत्याह, माऽत्र नु गा यत्रैतद्यजमान इति हैतत्
॥ ४ ॥ स यथा श्रेयसा सिद्ध पापीयान् प्रतिवि-
जित एव हैवाऽस्मान्मृत्यु पाप्मा प्रतिविजते ॥ ५॥
यन्मेत्याह, चन्द्रमा वै मा मास । एष ह वै मा
मासः । तस्मान्मेत्याह । भा इति हैतत्परोक्षेणेव ।

यस्माद्वेव मेत्याह यद्वेव मेत्याहैतानि त्रीणि । तस्मान्मेति ब्रूयात् ॥ ६ ॥

३।३।३

हु भा इति ब्रह्मवर्चसकामस्य । भातीव हि ब्रह्मवर्चसम् ॥ १ ॥ हु बो इति पशुकामस्य । बो इति ह पशवो वाश्यन्ते ॥ २ ॥ हु बगिति श्रीकामस्य । बगिति ह श्रिय पणायन्ति ॥ ३ ॥ हु भा ओवा इत्येतद्देवोपगीतम् ॥ ४ ॥ महद्दिवाऽभिपरिवर्तयन् गायेदिति ह स्माऽऽह नाक, महाग्रामो महानिवेशो भवतीति । स यथा स्थाणुमर्पयित्वेतरेण वेतरेण वा परियायात् तादृक् तत् ॥ ५ ॥ तदु होवाच शाट्यायनि कस्मै कामाय स्थाणुमर्पयेत् । अथोपगीतमेवैतत् । नैवैतदाद्रियेतेति ॥ ६ ॥ [ इति ] नु हिङ्काराणाम् । अथ वा अतो निधनमेव । ओ वा इति द्वे अक्षरे । अन्तो वै साम्नो निधनमन्त स्वर्गो लोकानामन्तो ब्रध्नस्य विष्टपम् ॥ ७ ॥ तमेतदुद्गाता यजमानमोमित्येतेनाक्षरेणान्ते स्वर्गे लोके दधाति ॥ ८ ॥ य उ ह वा अपक्षो वृक्षाग्र गच्छत्यव वै स ततः पद्यते । अथ यद्वै पक्षी वृक्षाग्रे यदसिधाराया यत्क्षुरधारायामास्ते, न वै स ततोऽवपद्यते । पक्षाभ्या हि सयत आस्ते ॥ ९ ॥ तमेतदुद्गाता यजमानमोमित्येतेनाक्षरेण स्वरपक्ष कृत्वाऽन्ते स्वर्गे लोके दधाति । स यथा पक्ष्यबिभ्यदासीतैवमेव स्वर्गे लोकेऽबिभ्यदास्तेऽथाऽऽचरति ॥ १० ॥ ते ह वा एते अक्षरे देवलोकश्चैव मनुष्यलोकश्च । आदित्यश्च ह वा एते अक्षरे चन्द्रमाश्च ॥ ११ ॥ आदित्य एव देवलोकश्चन्द्रमा मनुष्यलोक । ओमित्यादित्यो वागिति चन्द्रमा ॥ १२ ॥ तमेतदुद्गाता यजमान मोमित्येतेनाक्षरेणाऽऽदित्य देवलोक गमयति ॥ १३ ॥

३।३।४

त हाऽऽगतं पृच्छति कस्त्वमसीति । स यो ह नाम्ना वा गोत्रेण वा प्रब्रूते तं हाऽऽह यस्तेऽय मय्यात्माऽभूदेष ते स इति ॥ १ ॥ तस्मिन् हाऽऽत्मन् प्रतिपत् । त ऋतव' संप्रधार्य पद्गृहीतमपकर्षन्ति । तस्य हाऽहोरात्रे लोकमाप्नुत' ॥ २ ॥ तस्मा उ हैतेन प्रब्रुवीत, कोऽहमस्मि सुवस्त्वम् । स त्वा स्वर्ग्यं स्वरगामिति ॥ ३ ॥ को ह वै प्रजापति । अथ हैवविदेव सुवर्ग' । स हि सुवर्गच्छति ॥ ४ ॥ तं हाऽऽह, यस्त्वमसि सोऽहमस्मि, योऽहमस्मि स त्वमस्येहीति ॥ ५ ॥ स एतमेव सुकृतरस प्रविशति । यदु ह वा अस्मिँल्लोके मनुष्या यजन्ते यत्साधु कुर्वन्ति तदेषामूर्ध्वमन्नाद्यमुत्सीदति । तदमुं चन्द्रमस मनुष्यलोक प्रविशति ॥ ६ ॥ तस्येदं मानुषनिकाशनमण्डमुदरेऽन्त संभवति । तस्योर्ध्वमन्नाद्यमुत्सीदति स्तनावभि । स यदाजायतेऽथाऽस्मै माता स्तनमन्नाद्य प्रयच्छति ॥ ७ ॥ अजातो ह वै तावत्पुरुषो यावन्न यजते, स यज्ञेनैव जायते । स यथाऽण्ड प्रथमनिर्भिण्णमेवमेव ॥ ८ ॥ तदा त ह वा एवविदुद्गाता यजमानमोमित्येतेनाऽक्षरेणाऽऽदित्य देवलोकं गमयति । वागित्यस्मा उत्तरेणाक्षरेण चन्द्रमसमन्नाद्यमक्षितिं प्रयच्छति ॥ ९ ॥ अथ यस्यैतदविद्वानुद्गायति, न हैवैनं देवलोक गमयति, नो एनमन्नाद्येन समर्धयति ॥ १० ॥ स यथाऽण्ड विदिग्ध शयीताऽन्नाद्यमलभमानमेवमेव विदिग्ध शेतेऽन्नाद्यमलभमान. ॥ ११ ॥ तस्मादु हैवविदमेवोद्गापयेत । एवविदि हैवोद्गातरिति हूत प्रतिशृणुयात् ॥ १२ ॥

उक्थाङ्गोपासना, ब्रह्माख्यस्य ऋत्विजो धर्मो,

' मयीद ' इत्यादि ब्रह्मत्वाङ्गोपासना

३।४।१

वागिति हेन्द्रो विश्वामित्रायोक्थमुवाच । तदेतद्विश्वामित्रा उपासते वाचमेव ॥ १ ॥ मनुर्ह वसिष्ठाय ब्रह्मत्वमुवाच । तस्मादाहुर्वासिष्ठमेव ब्रह्मेति ॥२॥ तदु वा आहुरेवविदेव ब्रह्मा । क उ एवविद वासिष्ठमर्हतीति ॥ ३ ॥ प्रजापति प्राजिजनिषत । स तपोऽपप्यत । स ऐक्षत, हन्त नु प्रतिष्ठां जनयै, ततो या' प्रजा. स्रक्ष्ये ता एतदेव प्रतिष्ठास्यन्ति, नाऽप्रतिष्ठाश्चरन्ती प्रदघिष्यन्त इति ॥ ४ ॥ स इमं लोकमजनयदन्तरिक्षलोकममु

लोकमिति । तानिमाँस्त्रींल्लोकाञ्जनयित्वाऽभ्यश्राम्यत् ॥ ५ ॥ तान् समतपत् । तेभ्य सतप्तेभ्यस्त्रीणि शुक्राण्युदायन्नग्नि पृथिव्या वायुरन्तरिक्षादादित्यो दिव ॥ ६ ॥ स एतानि शुक्राणि पुनरभ्येवाऽतपत् । तेभ्य सतप्तेभ्यस्त्रीण्येव शुक्राण्युदायन्नृग्वेद एवाऽग्नेर्यजुर्वेदो वायो सामवेद आदित्यात् ॥ ७ ॥ स एतानि शुक्राणि पुनरभ्येवातपत् । तेभ्य. सतप्तेभ्यस्त्रीण्येव शुक्राण्युदायन्, भूरित्येवर्ग्वेदात् भुव इति यजुर्वेदात्स्वरिति सामवेदात्तदेव ॥ ८ ॥ तद्ध वै त्रय्यै विद्यायै शुक्रम् । एतावदिद सर्वम् । स यो वै त्रयीं विद्या विदुषो लोक. सोऽस्य लोको भवति य एवं वेद ॥ ९ ॥

३।४।२

अय वाव यज्ञो योऽय पवते । तस्य वाक् च मनश्च वर्तन्यौ । वाचा च ह्येष एतन्मनसा च वर्तते ॥ १ ॥ तस्य होताऽध्वर्युरुद्गातेत्यन्यतरां वाचा वर्तनिं सस्कुर्वन्ति । तस्मात्ते वाचा कुर्वन्ति । ब्रह्मैव मनसाऽन्यतराम् । तस्मात्स तूष्णीमास्ते ॥ २ ॥ स यद्ध सोऽपि स्तूयमाने वा शस्यमाने वा वावद्यमान आसीताऽन्यतरामेवाऽस्यापि तर्हि स वाचा वर्तनिं सस्कुर्यात् ॥ ३ ॥ स यथा पुरुष एकपाद् यन् भ्रेषन्नेति रथो वैकचक्रो वर्तमानः एवमेव तर्हि यज्ञो भ्रेषन्नेति ॥ ४ ॥ एतद्ध तद्विद्वान् ब्राह्मण उवाच ब्रह्माण प्रातरनुवाक उपाकृते वावद्यमानमासीनमर्धं वा इमे तर्हि यज्ञस्याऽन्तरगुरिति । अर्धं हि ते तर्हि यज्ञस्याऽन्तरीयु ॥ ५ ॥ तस्माद्ब्रह्मा प्रातरनुवाक उपाकृते वाचयम आसीताऽऽपरिधानीयाया आ वषट्कारादितरेषा स्तुतशस्त्राणामेवाऽऽसस्थायै पवमानानाम् ॥ ६ ॥ स यथा पुरुष उभयापाद् यन् भ्रेष न न्येति रथो वोभयाचक्रो वर्तमान , एवमेतर्हि यज्ञो भ्रेष न न्येति ॥ ७ ॥

३।४।३

स यदि यज्ञ ऋक्तो भ्रेषन्नियात्, ब्रह्मणे प्रब्रूतेत्याहु । अथ यदि यजुष्ट , ब्रह्मणे प्रब्रूतेत्याहु । अथ यदि सामत , ब्रह्मणे प्रब्रूतेत्याहु । अथ यद्यनुपस्मृतात् कुत इदमजनीति, ब्रह्मणे प्रब्रूतेत्येवाऽऽहु ॥ १ ॥ स ब्रह्मा प्राङ् उदेत्य स्रुवेणाऽऽग्नीध्र आज्यं जुहुयाद्भूर्भुव स्वरित्येताभिर्व्याहृतिभि' ॥ २ ॥ एता वै व्याहृतय' सर्वप्रायश्चित्तय. । तद्यथा लवणेन सुवर्णं सदध्यात् सुवर्णेन रजत रजतेन त्रपु त्रपुणा लोहायस लोहायसेन कार्ष्णायस कार्ष्णायसेन दारु दारु च चर्म च श्लेष्मणैवमेवैव विद्वाँस्तत्सर्वं भिषज्यति ॥ ३ ॥ तदाहुर्यदहौषीन्मे ग्रहान्मेऽग्रहीदित्यध्वर्यवे दक्षिणा नयन्त्यशसीन्मे वषट् अकर्म इति होत्र उदगासीन्म इत्युद्गात्रेऽथ किं चक्रुषे ब्रह्मणे तूष्णीमासीनाय समावतीरेवेतरैर्ऋत्विग्भिर्दक्षिणा नयन्तीति ॥ ४ ॥ स ब्रूयादर्धभाग्घ वै स यज्ञस्याऽर्धं ह्येष यज्ञस्य वहतीति । अर्धा ह स्म वै पुरा ब्रह्मणे दक्षिणा नयन्तीति । अर्धा इतरेभ्य ऋत्विग्भ्य ॥ ५ ॥ तस्यैष श्लोक.—

'मयीद मन्ये भुवनादि सर्वं, मयि लोका मयि दिशश्चतस्रः ।
मयीद मन्ये निमिषद्यदेजति, मय्याप ओषधयश्च सर्वा ' इति ॥ ६ ॥

मयीद मन्ये भुवनादि सर्वमित्येवविद ह वावेद सर्वं भुवनमन्वायत्तम् ॥ ७ ॥ मयि लोका मयि दिशश्चतस्र इत्येवंविदि ह वाव लोकाः, एव विदि दिशश्चतस्र ॥ ८ ॥ मयीद मन्ये निमिषद्यदेजति मय्याप ओषधयश्च सर्वा इत्येवविदि ह वावेदं सर्वं भुवन प्रतिष्ठितम् ॥ ९ ॥ तस्मादु हैवविदमेव ब्रह्माण कुर्वीत । स ह वाव ब्रह्मा य एव वेद ॥ १० ॥

स्तोमभागानुमन्त्रणम्

३।४।४

अथ वा अत' स्तोमभागानामेवाऽनुमन्त्रा ॥१॥ तद्धैतदेके स्तोमभागैरेवाऽनुमन्त्रयन्ते । तत्तथा न कुर्यात् ॥ २ ॥ देवेन सवित्रा प्रसूत प्रस्तोतर्देवेभ्यो वाचमिष्यत्यु हैकेऽनुमन्त्रयन्ते सविता वै देवानां प्रसविता सवित्रा प्रसूता इदमनु मन्त्रयामह इति वदन्त । तदु तथा न कुर्यात् ॥ ३ ॥

भूर्भुवः स्वरित्यु हैकेऽनुमन्त्रयन्त एषा वै त्रयी विद्या त्रय्यै वेद विद्ययाऽनुमन्त्रयामह इति वदन्त । तदु तथा नो एव कुर्यात् ॥ ४ ॥ ओमित्येवानुमन्त्रयेत ॥ ५ ॥ अथैष वसिष्ठस्यैकस्तोमभागानुमन्त्र । तेन हैतेन वसिष्ठ प्रजातिकामोऽनुमन्त्रयाचक्रे देवेन सवित्रा प्रसूत प्रस्तोतर्देवेभ्यो वाचमिष्य भूर्भुव स्वरोमिति । ततो वै स बहु प्रजया पशुभि प्राजायत ॥ ६ ॥ स एव तेन वसिष्ठस्यैकस्तोमभागानुमन्त्रेणाऽनुमन्त्रयेत । बहुरेव प्रजया पशुभि प्रजायते । इय त्वेव स्थितिरोमित्येवाऽनुमन्त्रयेत ॥ ७ ॥

३।४।५

अथैष वाचा वज्रमुद्गृह्णाति । यदाह सोम पवत इति वोपावर्तध्वमिति वा वाचैव तद्वाचो वज्र विगृह्यते, वाच सत्येनातिमुच्यते । तस्मादोमित्येवाऽनुमन्त्रयेत ॥ १ ॥ देवा वा अनया त्रय्या ( विद्यया ) सरसयोर्ध्वा स्वर्गं लोकमुदक्रामन् । ते मनुष्याणामन्वागमाद्बिभ्यतस्त्रय वेदमपीळयन् ॥२॥ तस्य पीळयन्त एकमेवाक्षर नाऽशक्नुवन्पीळयितुमोमिति यदेतत् ॥३॥ एष उ ह वाव सरस. । सरसा ह वा एवविदस्त्रयी विद्या भवति ॥ ४ ॥ स या ह वै त्रय्या विद्यया सरसया जितिं जयति यामृद्धिमृध्नोति जयति तां जितिमृध्नोति तामृद्धि य एव वेद ॥ ५ ॥ एतद्ध वा अक्षर त्रय्यै विद्यायै प्रतिष्ठा । ओमिति वै होता प्रतिष्ठित, ओमित्यध्वर्यु, ओमित्युद्गाता ॥६॥ एतद्ध वा अक्षरं वेदाना त्रिविष्टपम् । एतस्मिन्वा अक्षर ऋत्विजो यजमानमाधाय स्वर्गे लोके समुदूहन्ति तस्मादोमित्येवानुमन्त्रयेत ॥ ७ ॥

ब्रह्मलोकमार्गविद्यायजमानस्य पृथिव्यग्न्यादिद्वारा ब्रह्मलोकप्राप्ति

३।५।१

गुहाऽसि देवोऽस्युपवास्युप त वायस्व योऽस्मान्द्वेष्टि य च वय द्विष्म. ॥ १ ॥ महिनासि बहुलासि बृहत्यसि रोहिण्यस्यपन्नाऽसि ॥ २ ॥ संभूर्देवोऽसि समहं भूयासम् । आभूतिरस्याभूयासम् । भूतिरसि भूयासम् ॥ ३ ॥ यास्ते प्रजा उपदिष्टा नाह तव ता पर्येमि । उप ते ता दिशामि ॥ ४ ॥ नाम मे शरीरं मे प्रतिष्ठा मे । तन्मे त्वयि तन्मे मोपहृथा इतीमा पृथिवीमवोचत् ॥ ५ ॥ तमियमागत पृथिवी प्रतिनन्दत्यय ते भगवो लोक' । सह नावय लोक इति ॥ ६ ॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥ ७ ॥ कि नु ते मयीति । नाम मे शरीर मे प्रतिष्ठा मे । तन्मे त्वयि तन्मे पुनर्देहीति । तदस्मा इय पृथिवी पुनर्ददाति ॥ ८ ॥ तामाह प्र मा वहेति । किमभीति । अग्निमिति । तमग्निमभिप्रवहति ॥ ९ ॥ सोऽग्निमाहाऽभिजिदस्यभिजय्यासम् । लोकजिदसि लोक जय्यासम् । अत्तिरस्यन्नमद्यासम् । अन्नादो भवति यस्त्वैव वेद ॥ १० ॥ सभूर्देवोऽसि समह भूयासम् । आभूतिरस्याभूयासम् । भूतिरसि भूयासम् ॥ ११ ॥ यास्ते प्रजा उपदिष्ट नाह तव ता पर्येमि । उप ते ता दिशामि ॥ १२ ॥ तपो मे तेजो मेऽन्न मे वाङ् मे । तन्मे त्वयि । तन्मे मोपहृथा इत्यग्निमवोचन् ॥ १३ ॥ त तथैवाऽऽगतमग्नि. प्रतिनन्दत्यय ते भगवो लोक । सह नावय लोक इति ॥ १४ ॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥ १५ ॥ किं नु ते मयीति । तपो मे तेजो मेऽन्न मे वाङ् मे । तन्मे त्वयि । तन्मे पुनर्देहीति । ( तद् ) अस्मा अग्निः पुनर्ददाति ॥ १६ ॥ तमाह प्र मा वहेति ॥ १७ ॥

३।५।२

किमभीति । वायुमिति । त वायुमभिप्रवहति ॥ १ ॥ स वायुमाह यत्पुरस्ताद्वासीन्द्रो राजा भूतो वासि । यद्दक्षिणतो वासीशानो भूतो वासि । यत्पश्चाद्वासि वरुणो राजा भूतो वासि । यदुत्तरतो वासि सोमो राजा भूतो वासि । यदुपरिष्टादववासि प्रजापतिर्भूतोऽववासि ॥ २ ॥ व्रात्योऽस्येकव्रात्योऽनवसृष्टो देवानां बिलमप्यधा ॥ ३ ॥ तव प्रजास्त्वौषधयस्त्वाऽऽपो विचलितमनुविचलन्ति ॥ ४ ॥ संभूर्देवोऽसि समह भूयासम् । आभूतिरस्याभूयासम् । भूतिरसि भूयासम्

॥ ५ ॥ यास्ते प्रजा उपदिष्टा नाऽह तव ता. पर्येमि । उप ते ता दिशामि ॥ ६ ॥ प्राणापानौ मे श्रुत मे । तन्मे त्वयि । तन्मे मोपहृथा इति वायुमवोचत् ॥ ७ ॥ तं तथैवागतं वायु प्रतिनन्दत्यय ते भगवो लोक । सह नावय लोक इति ॥ ८ ॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥ ९ ॥ कि नु ते मयीति । प्राणापानौ मे श्रुत मे । तन्मे त्वयि । तन्मे पुनर्देहीति । तदस्मै वायु पुनर्ददाति ॥ १० ॥ तमाह प्र मा वहेति । किमभीति । अन्तरिक्षलोकमिति । तमन्तरिक्षलोकमभिप्रवहति ॥ ११ ॥ त तथैवाऽऽगतमन्तरिक्षलोक प्रतिनन्दत्यय ते भगवो लोक । सह नावय लोक इति ॥ १२ ॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥ १३ ॥ किं नु ते मयीति । अय म आकाश स मे त्वयि । तन्मे पुनर्देहीति । तमस्मा आकाशमन्तरिक्षलोक पुनर्ददाति ॥ १४ ॥ तमाह प्र मा वहेति ॥ १५ ॥

३।५।३

किमभीति । दिश इति । त दिशोऽभिप्रवहति ॥ १ ॥ त तथैवागतं दिश. प्रतिनन्दन्त्यय ते भगवो लोक । सह नोऽय लोक इति ॥ २ ॥ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ॥ ३ ॥ किं नु तेऽस्मास्विति । श्रोत्रमिति । तदस्मै श्रोत्र दिश. पुनर्ददति ॥ ४ ॥ ता आह प्र मा वहतेति । किमभीति । अहोरात्रयोर्लोकमिति । तमहोरात्रयो र्लोकमभिप्रवहन्ति ॥ ५ ॥ तं तथैवागतमहोरात्रे प्रतिनन्दतोऽयं ते भगवो लोक' । सह नोऽय लोक इति ॥ ६ ॥ यद्वाव मे युवयोरित्याह तद्वाव मे पुनर्दत्तमिति ॥ ७ ॥ किं नु त आवयो रिति । अक्षितिरिति । तामस्मा अक्षितिमहोरात्रे पुनर्दत्त. ॥ ८ ॥ ते आह प्र मा वहतमिति ॥ ९ ॥

३।५।४

किमभीति । अर्धमासानिति । तमर्धमासानभिप्रव हृत ॥१॥ तं तथैवागतमर्धमासा प्रतिनन्दन्त्ययं ते भगवो लोक' । सह नोऽयं लोक इति ॥२॥ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ॥ ३ ॥ किं नु तेऽस्मास्विति । इमानि क्षुद्राणि पर्वाणि । तानि मे युष्मासु । तानि मे प्रतिसधत्तेति । तान्यस्यार्धमासा पुन प्रतिसदधति ॥ ४ ॥ तानाह प्र मा वहतेति । किमभीति । मासानिति । त मासानभिप्रवहन्ति ॥ ५ ॥ त तथैवागत मासा प्रतिनन्दन्त्ययं ते भगवो लोक । सह नोऽयं लोक इति ॥ ६ ॥ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ॥ ७ ॥ किं नु तेऽस्मास्विति । इमानि स्थूलानि पर्वाणि । तानि मे युष्मासु । तानि मे प्रतिसध त्तेति । तान्यस्य मासा पुन प्रतिसदधति ॥ ८ ॥ तानाह प्र मा वहतेति ॥ ९ ॥

३।५।५

किमभीति । ऋतूनिति । तमृतूनभिप्रवहन्ति ॥ १ ॥ त तथैवाऽऽगतमृतव प्रतिनन्दन्त्यय ते भगवो लोक । सह नोऽय लोक इति ॥ २ ॥ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ॥ ३ ॥ किं नु तेऽस्मास्विति । इमानि ज्यायासि पर्वाणि । तानि मे युष्मासु तानि मे प्रतिसंधत्तेति । तान्यस्यर्तव पुन. प्रतिसदधति ॥ ४ ॥ तानाह प्र मा वहतेति । किमभीति । सवत्सर मिति । त सवत्सरमभिप्रवहन्ति ॥ ५ ॥ तं तथैवाऽऽगतं सवत्सर प्रतिनन्दत्ययं ते भगवो लोक' । सह नावय लोक इति ॥ ६ ॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥ ७ ॥ किं नु ते मयीति । अय म आत्मा । स मे त्वयि तन्मे पुनर्देहीति । तमस्मा आत्मान सवत्सरः पुनर्ददाति ॥ ८ ॥ तमाह प्र मा वहेति ॥ ९ ॥

३।५।६

किमभीति । दिव्यान् गन्धर्वानिति । त दिव्यान् गन्धर्वानभिप्रवहति ॥ १ ॥ तं तथैवाऽऽगत दिव्या गन्धर्वा प्रतिनन्दन्त्यय ते भगवो लोक । सह नोऽय लोक इति ॥ २ ॥ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ॥ ३ ॥ किं नु तेऽस्मास्विति । गन्धो मे मोदो मे प्रमोदो मे । तन्मे युष्मासु । तन्मे पुनर्दत्तेति । तदस्मै दिव्या

गन्धर्वा. पुनर्ददति ॥ ४ ॥ तानाह प्र मा वहतेति । किमभीति । अप्सरस इति । तमप्सरसोऽभिप्रवहन्ति ॥ ५ ॥ तं तथैवाऽऽगत मप्सरस प्रतिनन्दन्त्यय ते भगवो लोक । सह नोऽय लोक इति ॥ ६ ॥ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ॥ ७ ॥ किं नु तेऽस्मास्विति । हसो मे क्रीळ्या मे मिथुन मे । तन्मे युष्मासु । तन्मे पुनर्दत्तेति । तदस्मा अप्सरस पुनर्ददति ॥ ८ ॥ ता आह प्र मा वहतेति ॥ ९ ।

३।५।७

किमभीति । दिवमिति । त दिवमभिप्रवहन्ति ॥ १ ॥ त तथैवाऽऽगत द्यौ प्रतिनन्दत्यय ते भगवो लोक· । सह नावय लोक इति ॥ २ ॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥ ३ ॥ किं नु ते मयीति । तृप्तिरिति। सकृत् तृप्तेव ह्येषा। तामस्मै तृप्तिं द्यौ पुनर्ददाति ॥ ४ ॥ तमाह प्र मा वहेति । किमभीति । देवानिति । त देवानभिप्रवहति ॥ ५ ॥ त तथैवाऽऽगत देवा प्रतिनन्दन्त्यय ते भगवो लोक. । सह नोऽयं लोक इति ॥ ६ ॥ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ॥ ७ ॥ किं नु तेऽस्मास्विति । अमृतमिति । तदस्मा अमृत देवा पुनर्ददति ॥ ८ ॥ तानाह प्र मा वहतेति ॥ ९ ॥

३।५।८

किमभीति । आदित्यमभिप्रवहन्ति ॥ १ ॥ स आदित्यमाह विभू पुरस्तात्सपत् पश्चात् । सम्यङ् त्वमसि । समीचो मनुष्यानरोषी । रुषतस्त ऋषि पाप्मान हन्ति । अपहतपाप्मा भवति यस्त्वैवं वेद ॥ २ ॥ संभूर्देवोऽसि समहं भूयासम् । आभूतिरस्या भूयासम् । भूतिरसि भूयासम् ॥ ३ ॥ यास्ते प्रजा उपदिष्टा नाह तव ताः पर्येमि । उप ते ता दिशामि ॥ ४ ॥ ओजो मे बल मे चक्षुर्मे । तन्मे त्वयि मोपहृथा इत्यादित्यमवोचत् ॥ ५ ॥ त तथैवाऽऽगतमादित्य. प्रतिनन्दत्यय ते भगवो लोकः । सह नावयं लोक इति ॥ ६ ॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति । ॥ ७ ॥ किं नु ते मयीति । ओजो मे बलं मे चक्षुर्मे । तन्मे त्वयि । तन्मे पुनर्देहीति । तदस्मा आदित्य पुनर्ददाति ॥ ८ ॥ तमाह प्र मा वहेति । किमभीति । चन्द्रमसमिति । त चन्द्रमसमभिप्रवहति ॥ ९ ॥ स चन्द्रमसमाह । सत्यस्य पन्था न त्वा जहाति । अमृतस्य पन्था न त्वा जहाति ॥ १० ॥ नवो नवो भवसि जायमानो भरो नाम ब्राह्मण उपास्से । तस्मात्ते सत्या उभये देवमनुष्या अन्नाद्य भरन्ति । अन्नादो भवति यस्त्वैवं वेद ॥ ११ ॥ सभूर्देवोऽसि समह भूयासम् । आभूतिरस्या भूयासम् । भूतिरसि भूयासम् ॥ १२ ॥ यास्ते प्रजा उपदिष्टा नाह तव ता पर्येमि । उप ते ता दिशामि ॥ १३ ॥ मनो मे रेतो मे प्रजा मे पुनःसभूतिर्मे । तन्मे त्वयि तन्मे मोपहृथा इति चन्द्रमसमवोचत् ॥१४॥ त तथैवाऽऽगत चन्द्रमा प्रतिनन्दत्यय ते भगवो लोक· । सह नावय लोक इति ॥ १५ ॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥ १६ ॥ किं नु ते मयीति । मनो मे रेतो मे प्रजा मे पुन सभूतिर्मे । तन्मे त्वयि । तन्मे पुनर्देहीति । तदस्मै चन्द्रमा पुनर्ददाति ॥ १७ ॥ तमाह प्र मा वहेति ॥ १८ ॥

३।५।९

किमभीति । ब्रह्मणो लोकमिति । तमादित्यमभिप्रवहति ॥ १ ॥ स आदित्यमाह प्र मा वहेति । किमभीति । ब्रह्मणो लोकमिति । त चन्द्रमसमभिप्रवहति । स एवमेते देवते अनुसचरति ॥ २ ॥ एषोऽन्तोऽत पर. प्रवाहो नास्ति । यानु काँश्चाऽत प्राचो लोकानभ्यवादिष्म ते सर्वे आप्ता भवन्ति ते जितास्तेष्वस्य सर्वेषु कामचारो भवति य एव वेद ॥ ३ ॥ स यदि कामयेत पुनरिहाऽऽजायेयेति, यस्मिन्कुलेऽभिध्यायेद्यदि ब्राह्मणकुले यदि राजकुले, तस्मिन्नाजायते । स एतमेव लोक पुन प्रजानन्नभ्यारोहन्नेति ॥ ४ ॥ तदु होवाच शाट्यायनिर्बहुव्याहितो वा अय बहुशो लोक । एतस्य वै कामाय नु ब्रुवते ( वा ) श्राम्यन्ति वा, क एतत्प्रास्य पुनरिहेयादत्रैव स्यादिति ॥ ५ ॥

प्रजापतिप्रोक्ता अशरीरसामविद्या साख्याना

३।६।१

उच्चै श्रवा ह कौपयेय· कौरव्यो राजाऽऽस । तस्य ह केशी दार्भ्य· पाञ्चालो राजा स्वस्रीय आस । तौ हाऽन्योन्यस्य प्रियावासतु ॥ १ ॥ स होच्चै श्रवा कौपयेयोऽस्माल्लोकात् प्रेयाय । तस्मिन् ह प्रेते केशी दार्भ्योऽरण्ये मृगयाचचाराऽप्रिय विनिनीषमाणः ॥ २ ॥ स ह तथैव पल्ययमानो मृगान् प्रसरन्नन्तरेणैवोच्चै·श्रवस कौपयेयमधिजगाम ॥ ३ ॥ त होवाच दृप्यामि स्वी३ज्जानामीति । न दृप्यसीति होवाच जानासि । स एवास्मि य मा मन्यस इति ॥ ४ ॥ अथ यद्भगव आहुरिति होवाच य आविर्भवत्यन्येऽस्य लोकमुपयन्तीत्यथ कथमशको म आविर्भवितुमिति ॥ ५ ॥ ओमिति होवाच यदा वै तस्य लोकस्य गोप्तारमविदेऽतस्त आविरभूवमप्रिय चास्य विनेष्याम्यनु चैन शासिष्यामीति ॥ ६ ॥ तथा भगव इति होवाच । त वै नु त्वा परिष्वजा इति । त ह स्म परिष्वजमानो यथा धूम वाऽपीयाद्वायु वाकाश वाग्न्यर्चि वाऽपो वैव ह स्मैन व्येति । न ह स्मैन परिष्वङ्गायोपलभते ॥ ७ ॥

३।६।२

स होवाच यद्वै ते पुरा रूपमासीत्तत्ते रूपम् । न तु त्वा परिष्वङ्गायोपलभ इति ॥ १ ॥ ओमिति होवाच ब्राह्मणो वै मे साम विद्वान् साम्नोद्गायत् । स मेऽशरीरेण साम्ना शरीराण्यधूनोत् । तद्यस्य वै किल साम विद्वान् साम्नोद्गायति देवतानामेव सलोकतां गमयति ॥ २ ॥ पतङ्ग· प्राजापत्य इति होवाच प्रजापते प्रिय पुत्र आस । स तस्मा एतत्सामाब्रवीत् । तेन स ऋषीणामुदगायत् । त एत ऋषयो धूतशरीरा इवि ॥ ३ ॥ एतेनो एव साम्नेति होवाच प्रजापतिर्देवानामुदगायत् । त एत उपरि देवा धूतशरीरा इति ॥ ४ ॥ तस्मिन् हैनमनुशशास । त हानुशिष्योवाच य· स्मैवैतत् साम विद्यात् स स्मैव त उद्गायत्विति ॥ ५ ॥ स हानुशिष्ट आजगाम । स ह स्म कुरुपञ्चालानां ब्राह्मणानुपपृच्छमानश्चरति ॥ ६ ॥

व्यूढच्छन्दोद्वादशाहे गीयमान साम ' अलम्म ' सञ्ज्ञितम्

३।६।३

व्यूढच्छन्दसा वै द्वादशाहेन यक्ष्यमाणोऽस्मि । स यो वस्तत्साम वेद यदह वेद स एव मे उद्गास्यति । मीमासध्वमिति ॥ १ ॥ तस्मै ह मीमासमानानामेकश्चन ( न ) सप्रत्यभिदधाति ॥ २ ॥ स ह तथैव पल्ययमान श्मशाने वा वने वाऽऽवृतीशयानमुपाधावयाचकार । त ह याचमान प्रजहौ ॥ ३ ॥ त होवाच कोऽसीति । ब्राह्मणोऽस्मि प्रातृदो भाल्ल इति ॥ ४ ॥ स किं वेत्थेति सामेति ॥ ५ ॥ ओमिति होवाच । व्यूढच्छन्दसा वै द्वादशाहेन यक्ष्यमाणोऽस्मि । स यदि तत्साम वेत्थ यदह वेद त्वमेव म उद्गास्यसि । मीमासस्वेति ॥ ६ ॥ तस्मै ह मीमांममानस्तदेव सप्रत्यभिदधौ ॥ ७ ॥ त होवाचाऽय म उद्गास्यतीति ॥ ८ ॥ तस्मै ह कुरुपञ्चालानां ब्राह्मणा असूयन्त आहुरेषु ह वा अय कुल्येषु सत्सूद्गास्यति । कस्मा अयमलमिति ॥ ९ ॥ * अल न्वै मह्यमिति ह स्माह । सैवालम्म स्याऽलम्मता । यदुद्गातास्य हालम्ममेवोज्जगौ । तस्मादलम्मो राजोद्गातेत्याख्यापयन्ति ॥ १० ॥

एकैव देवता अध्यात्म प्राण इति अधिदैवत च वायुरिति उपास्या, प्राणादिचतुष्टयरूप सामेत्युपासना

३।६।४

तद्ध सात्यकीर्ता आहुर्या वय देवतामुपास्मह एकमेव वयं तस्यै देवतायै रूप गव्यादिशाम एक वाहन एक हस्तिन्येक पुरुष एक सर्वेषु भूतेषु । तस्या एवेदं देवतायै सर्वं रूपमिति ॥ १ ॥ तदेतदेकमेव रूपं प्राण एव । यावद्ध्येव प्राणेन प्राणिति तावद्रूपं भवति यद्रूप भवति ॥ २ ॥ तदथ यदा प्राण उत्क्रामति दार्वेवेव भूतोऽनर्थ्य· परिशिष्यते

* ' अलम्म ' सञ्ज्ञक साम ताण्ड्यब्राह्मणे १३।१०।८ इत्यत्र द्रष्टव्यम् ।

न किंचन रूपम् ॥ ३ ॥ तस्यान्तरात्मा तप । तस्मात्तप्यमानस्योष्णतर प्राणो भवति ॥ ४ ॥ तपसोऽन्तरात्माऽग्नि । स निरुक्त । तस्मात्स दहति ॥ ५ ॥ अथाधिदेवतम् । इयमेवैषा देवता योऽय पवते । तस्मिन्नेतस्मिन्नापोऽन्त । तदन्नम् । सोऽरूक्ष उपासितव्य । यदस्मिन्नापोऽन्तस्तेनाऽरूक्ष ॥ ६ ॥ तस्याऽन्तरात्मा तपः । तस्मादेष आतपत्युष्णतर पवते ॥ ७ ॥ तपसोऽन्तरात्मा विद्युत् । स निरुक्तः । तस्मात्सोऽपि दहति ॥ ८ ॥ तानि वा एतानि चत्वारि साम प्राणो वाङ् मन स्वर. । स एष प्राणो वाचा करोति मनोनेत्र । तस्य स्वर एव प्रजा' । प्रजावान् भवति य एव वेद ॥ ९ ॥

सामोपासना वायुप्राणयोरग्निवाचो चन्द्रमोमनसो आदित्यस्वरयोश्च तादात्म्यविषयिणी ब्रह्मण आवर्तगुणसहिता मुखे देवताद्वन्द्वाधान-विषयिणी च

३।६।५

स यो वायु प्राण एव स. । योऽग्निर्वागेव सा । यश्चन्द्रमा मन एव तत् । य आदित्य स्वर एव स । तस्मादेतमादित्यमाहु' स्वर एतीति ॥ १ ॥ स यो ह वा अमूर्देवता उपास्ते या अमूरधिदेवत दूरूपा वा एता दुरनुसप्राप्या इव । कस्तद्वेद यद्येता अनु वा सप्राप्नुयान्न वा ॥ २ ॥ अथ य एना अध्यात्ममुपास्ते स ह्याऽन्तिदेवो भवति । निर्जीर्यन्तीव वा इत एता । [ त् ] अस्य वा एता शरीरस्य सह प्राणेन निर्जीर्यन्ति । क उ एव तद्वेद यद्येता अनु वा सप्राप्नुयान्न वा ॥ ३ ॥ अथ य एना उभयीरेकधा भवन्तीर्वेद स एवानुष्ठया साम वेद स आत्मानं वेद स ब्रह्म वेद ॥ ४ ॥ तदाहु प्रादेशमात्राद्वा इत एता एक भवन्ति । अतो ह्यय प्राण' स्वयं उपर्युपरिवर्तन इति ॥ ५ ॥ अथ हैक आहुश्चतुरङ्गुलाद्वा इत एता एकं भवन्तीति । अतो ह्येवायं प्राण स्वयं उपर्युपरि वर्तत इति ॥ ६ ॥ स एष ब्रह्मण आवर्तः । स य एवमेतं ब्रह्मण आवर्तं वेदाऽभ्येन प्रजा पशव आवर्तन्ते सर्वमायुरेति ॥ ७ ॥ स यो हैवं विद्वान् प्राणेन प्राण्याऽपानेनाऽपान्य मनसैता उभयीर्देवता आत्मन्येत्य मुख आधत्ते तस्य सर्वमाप्त भवति सर्वं जितम् । न हास्य कश्चन कामोऽनाप्तो भवति य एवं वेद ॥ ८ ॥

मिथुनकल्पनया सप्तविधसामसबन्ध्युपासना

३।६।६

तदेतन्मिथुन यद्वाक् च प्राणश्च । मिथुनमृक्सामे । आचतुरं वाव मिथुन प्रजननम् ॥ १ ॥ तद्यत्राऽद आह सोम. पवत इति वोपावर्तध्वमिति वा तत्सहैव वाचा मनसा प्राणेन स्वरेण हिङ्कुर्वन्ति । तद् हिङ्कारेण मिथुन क्रियते ॥ २ ॥ सहैव वाचा मनसा प्राणेन स्वरेण निधनमुपयन्ति । तन्निधनेन मिथुन क्रियते ॥ ३ ॥ तत्सप्तविध साम्न' । सप्तकृत्व उद्गाताऽऽत्मानं च यजमान च शरीरात्प्रजनयति ॥ ४ ॥ यादृशस्यो ह वै रेतो भवति तादृश सभवति, यदि वै पुरुषस्य पुरुष एव, यदि गोर्गौरेव, यद्यश्वस्याश्व एव, यदि मृगस्य मृग एव । यस्यैव रेतो भवति तदेव सभवति ॥ ५ ॥ तद्यथा ह वै सुवर्णं हिरण्यमग्नौ प्रास्यमानं कल्याणतरं कल्याणतर भवति, एवमेव कल्याणतरेण कल्याणतरेणात्मना सभवति य एव वेद ॥ ६ ॥ तदेतदृचाभ्यनूच्यते ॥ ७ ॥

प्राणविषयिणी पुनर्मृत्युनानन्वितसामोपासना, पतङ्गत्वेन भुवनेषु सचरणशीलगोपात्वेन इन्द्रत्वेन च प्राणविषयिणी अभ्रातृव्यसामोपासना

३।६।७

'पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति
मनसा विपश्चित. ।
समुद्रे अन्त कवयो विचक्षते मरीचीना पदमिच्छन्ति वेधस ' इति ॥ १ ॥

पतङ्गमक्तमिति । प्राणो वै पतङ्ग । पतन्निव ह्येष्वङ्गेष्वति रथमुदीक्षते । पतङ्ग इत्याचक्षते ॥२॥ असुरस्य माययेति । मनो वा असुरम् । तद्धयसुषु

रमते । तस्यैष माययाक्त ॥ ३ ॥ हृदा पश्यन्ति मनसा विपश्चित इति । हृदैव ह्येते पश्यन्ति यन्मनसा विपश्चित ॥४॥ समुद्रे अन्त कवयो विचक्षत इति । पुरुषो वै समुद्र एवविद उ कवय । त इमां पुरुषेऽन्तर्वाचं विचक्षते ॥ ५ ॥ मरीचीनां पदमिच्छन्ति वेधस इति । मरीच्य इव वा एता देवता यदग्निर्वायुरादित्यश्चन्द्रमा ॥ ६ ॥ न ह वा एतासा देवताना पदमस्ति । पदेनो ह वै पुनर्मृत्युरन्वेति ॥ ७ ॥ तदेतदनन्वित साम पुनर्मृत्युना । अति पुनर्मृत्यु तरति य एव वेद ॥ ८ ॥

३।६।८

'पतङ्गो वाचं मनसा बिभर्ति ता गन्धर्वोऽवदद्गर्भे अन्त ।
तां द्योतमाना स्वर्यं मनीषामृतस्य पदे कवयो निपान्ति ' इति ॥ १ ॥

पतङ्गो वाचं मनसा बिभर्तीति । प्राणो वै पतङ्गः । स इमा वाच मनसा बिभर्ति ॥ २ ॥ ता गन्धर्वोऽवदद्गर्भे अन्तरिति । प्राणो वै गन्धर्व पुरुष उ गर्भ । स इमां पुरुषेऽन्तर्वाच वदति ॥ ३ ॥ ता द्योतमानां स्वर्यं मनीषामिति । स्वर्या ह्येषा मनीषा यद्वाक् ॥ ४ ॥ ऋतस्य पदे कवयो निपान्तीति । मनो वा ऋतमेवविद उ कवय । ओमित्येतदेवाक्षरमृतम् । तेन यदृच मीमासन्ते यद्यजुर्यत्साम तदेना निपान्ति ॥ ५ ॥

३।६।९

'अपश्य गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीची स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः ' इति ॥ १ ॥

अपश्यं गोपामनिपद्यमानमिति । प्राणो वै गोपाः । स हीदं सर्वमनिपद्यमानो गोपायति ॥ २ ॥ आ च परा च पथिभिश्चरन्तमिति । तद्ये च ह वा इमे प्राणा अमी च रश्मय एतैर्ह वा एष एतदा च परा च पथिभिश्चरति ॥ ३ ॥ स सध्रीची स विषूचीर्वसान इति । सध्रीचीश्च ह्येष एतद्विषूचीश्च प्रजा वस्ते ॥ ४ ॥ आ वरीवर्ति भुवनेष्वन्तरिति । एष ह्येवैषु भुवनेष्वन्तरावरीवर्ति ॥ ५ ॥ स एष इन्द्र उद्गीथः । स यदैष इन्द्र उद्गीथ आगच्छति नैवोद्गातुश्चोपगातॄणा च विज्ञायते । इत एवोर्ध्वः स्वरुदेति । स उपरि मूर्ध्नो लेलायति ॥ ६ ॥ स विद्यादागमदिन्द्रो नेह कश्चन पाप्मा न्यङ्ग परिशेक्ष्यत इति । तस्मिन् ह न कश्चन पाप्मा न्यङ्ग परिशिष्यते ॥ ७ ॥ तदेतदभ्रातृव्यं साम । न ह वा इन्द्र कचन भ्रातृव्यं पश्यते । स यथेन्द्रो न कचन भ्रातृव्य पश्यत एवमेव (न) कचन भ्रातृव्य पश्यते य एतदेव वेदाथो यस्यैवं विद्वानुद्गायति ॥ ८ ॥

ब्रह्मरूपप्राणविषयिणी अमृतगायत्रसामोपासना गायत्रपदनिरुक्तिसहिता अशरीरसामोपासनारूपा

३।७।१

प्रजापतिं ब्रह्माऽसृजत । तमपश्यममुखमसृजत ॥ १ ॥ तमप्रपश्यममुख शयान ब्रह्माऽऽविशत् । पुरुष्य तत् । प्राणो वै ब्रह्म । प्राणो वावैन तदाविशत् ॥२॥ स उदतिष्ठत् प्रजाना जनयिता । त रक्षास्यन्वसचन्त ॥ ३ ॥ तमेतदेव साम गायन्नत्रायत । यद्गायन्नत्रायत तद्गायत्रस्य गायत्रत्वम् ॥ ४ ॥ त्रायत एन सर्वस्मात्पाप्मनो मुच्यते य एव वेद ॥ ५ ॥ तमुपाऽस्मै गायता नर इत्यृचाऽऽश्रवणीयेनोपागायन् ॥ ६ ॥ यदुपाऽस्मै गायता नर इति तेन गायत्रमभवत् । तस्मादेषैव प्रतिपत्कार्या ॥ ७ ॥ पवमानायेन्दावा अभि देवमिया–हुं–भाक्षाता इति षोडशाक्षराण्यभ्यगायन्त । षोडशकल वै ब्रह्म । कलाश एवैन तद्ब्रह्माऽऽविशत् ॥ ८ ॥ तदेतच्चतुर्विंशत्यक्षरं गायत्रम् । अष्टाक्षर प्रस्ताव । षोडशाक्षरं गीतम् । तच्चतुर्विंशति संपद्यते । चतुर्विंशत्यर्धमास' सवत्सर. । संवत्सर साम ॥ ९ ॥ ता ऋच शरीरेण मृत्यु रन्वैत् । तद्यच्छरीरवत्तन्मृत्योराप्तम् । अथ यदशरीरं तदमृतम् । तस्याऽशरीरेण साम्ना शरीराण्यधूनोत् ॥ १० ॥

३।७।२

ओवा३चोवा३चोवा३च् हु भा ओवा इति षोडशाक्षराण्यभ्यगायत । षोडशकलो वै पुरुष । कलाश एवास्य तच्छरीराण्यधूनोत् ॥ १ ॥ स एषोऽपहतपाप्मा धूतशरीर । तदेकक्रियावृतिशुदासगायत्यो इति उदास (?) । आ इति आवृत् । यत् वागिति तद्ब्रह्म । तदिदन्तरिक्षं सोऽय वायु पवते । हुमिति चन्द्रमा । भा इत्यादित्य ॥ २ ॥ एतस्य ह् वा इदमक्षरस्य क्रतोर्भातीत्याचक्षते ॥ ३ ॥ एतस्य ह् वा इदमक्षरस्य क्रतोरभ्रमित्या चक्षते ॥ ४ ॥ एतस्य ह् वा इदमक्षरस्य क्रतो कुभ्रमित्याचक्षते ॥ ५ ॥ एतस्य ह् वा इदमक्षरस्य क्रतो शुभ्रमित्याचक्षते ॥ ६ ॥ एतस्य' ह् वा इदमक्षरस्य क्रतोर्वृषभ इत्याचक्षते ॥ ७ ॥ एतस्य ह् वा इदमक्षरस्य क्रतोर्दर्भ इत्याचक्षते ॥ ८ ॥ एतस्य ह् वा इदमक्षरस्य क्रतोर्यो भातीत्याचक्षते ॥ ९ ॥ एतस्य ह् वा इदमक्षरस्य क्रतोः सभवतीत्याचक्षते ॥ १० ॥ तद्यत्कि च भा३ इति च भा३ इति च तदेतन्मिथुनं गायत्रम् । प्र मिथुनेन जायते य एवं वेद ॥ ११ ॥

अमृतगायत्रोपनिषद आचार्यवंश

३।७।३

तदेतदमृत गायत्रम् । एतेन वै प्रजापतिरमृतत्वमगच्छदेतेन देवा एतेनर्षय. ॥१॥ तदेतद्ब्रह्म प्रजापतयेऽब्रवीत् । प्रजापति परमेष्ठिने प्राजापत्याय । परमेष्ठी प्राजापत्यो देवाय सवित्रे । देव सविताऽग्नये । अग्निरिन्द्राय । इन्द्र काश्यपाय । काश्यप ऋश्यशृङ्गाय काश्यपाय । ऋश्यशृङ्ग· काश्यपो देवतरसे श्यावसायनाय काश्यपाय । देवतरा. श्यावसायन. काश्यपः श्रुषाय वाह्नेयाय काश्यपाय । श्रुषो वाह्नेयः काश्यप इन्द्रोताय दैवापाय शौनकाय । इन्द्रोतो दैवाप शौनको दृतय ऐन्द्रोतये शौनकाय । दृतिरैन्द्रोतिः शौनकः पुलुपाय प्राचीनयोग्याय । पुलुपः प्राचीनयोग्य सत्ययज्ञाय पौलुषये प्राचीनयोग्याय । सत्ययज्ञ पौलुषि· प्राचीनयोग्य. सोमशुष्माय सात्ययज्ञाय प्राचीनयोग्याय । सोमशुष्मः सात्ययज्ञि प्राचीनयोग्यो हृत्स्वाशयायाऽऽल्लकेयाय माहावृषाय राज्ञे । हृत्स्वाशय आल्लकेयो माहावृषो राजा जनश्रुताय काण्ड्वियाय । जनश्रुत. काण्ड्वियः सायकाय जानश्रुतेयाय काण्ड्वियाय । सायको जानश्रुतेय. काण्ड्वियो नगरिणे जानश्रुतेयाय काण्ड्वियाय । नगरी जानश्रुतेय. काण्ड्विय· शङ्खाय शाट्यायनाय आत्रेयाय । शङ्ख शाट्यायनिरात्रेयो रामाय क्रातुजातेयाय वैयाघ्रपद्याय । राम क्रातुजातेयो वैयाघ्रपद्यः— ॥ २ ॥

३।७।४

शङ्खाय बाभ्रव्याय । शंखो बाभ्रव्यो दक्षाय कात्यायनाय आत्रेयाय । दक्ष. कात्यायनिरात्रेय कंसाय वारकये । कंसो वारकि प्रोष्ठपादाय वारक्याय । प्रोष्ठपादो वारक्य कंसाय वारक्याय । कंसो वारक्यो जयन्ताय वारक्याय । जयन्तो वारक्य कुबेराय वारक्याय । कुबेरो वारक्यो जयन्ताय वारक्याय । जयन्तो वारक्यो जनश्रुताय वारक्याय । जनश्रुतो वारक्य सुदत्ताय पाराशर्याय । सुदत्त पाराशर्योऽषाढायोत्तराय पाराशर्याय । अषाढ उत्तर पाराशर्यो विपश्चिते शकुनिमित्राय पाराशर्याय । विपश्चिच्छकुनिमित्र. पाराशर्यो जयन्ताय पाराशर्याय । जयन्त' पाराशर्य' — ॥ १ ॥

३।७।५

श्यामजयन्ताय लौहित्याय । श्यामजयन्तो लौहित्य. पल्लिगुप्ताय लौहित्याय । पल्लिगुप्तो लौहित्य' सत्यश्रवसे लौहित्याय । सत्यश्रवा लौहित्य. कृष्णधृतये सात्यकये । कृष्णधृतिः सात्यकि श्यामसुजयन्ताय लौहित्याय । श्यामसुजयन्तो लौहित्य कृष्णदत्ताय लौहित्याय । कृष्णदत्तो लौहित्यो मित्रभूतये लौहित्याय । मित्रभूतिर्लौहित्य श्यामजयन्ताय लौहित्याय । श्यामजयन्तो लौहित्य. त्रिवेदाय कृष्णराताय लौहित्याय । त्रिवेद कृष्णरातो लौहित्यो यशस्विने जयन्ताय लौहित्याय । यशस्वी जयन्तो लौहित्यो जयकाय

लौहित्याय । जयको लौहित्य' कृष्णराताय लौहित्याय । कृष्णरातो लौहित्यो दक्षजयन्ताय लौहित्याय । दक्षजयन्तो लौहित्यो विपश्चिते दृढजयन्ताय लौहित्याय । विपश्चिद्दृढजयन्तो लौहित्यो वैपश्चिताय दार्ढजयन्तये दृढजयन्ताय लौहित्याय । वैपश्चितो दार्ढजयन्तिर्दृढजयन्तो लौहित्यो वैपश्चिताय दार्ढजयन्तये गुप्ताय लौहित्याय ॥ १ ॥ तदेत दमृत गायत्रमथ यान्यन्यानि गीतानि काम्यान्येव तानि काम्यान्येव तानि ॥ २ ॥

इति तृतीयोऽध्याय ॥

---

## चतुर्थोऽध्यायः

वरुणादिदेवप्रार्थना रक्षार्थं पूर्णायु प्राप्तये च

४।१।१

श्वेताश्वो दर्शतो हरिनीलोऽसि हरितस्पृश समानबुद्धो मा हिंसी. । न मा त्व वेत्थ प्रद्रव ॥ १ ॥ यदभ्यवचरणोऽभ्यवैषि स्वपन्तं पुरुषमकोविदमश्ममयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥ २ ॥ यदभ्यवचरणोऽभ्यवपि स्वपन्त पुरुषमकोविदमयस्मयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥ ३ ॥ यदभ्यवचरणोऽभ्यवैपि स्वपन्त पुरुषमकोविद लोहमयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥ ४ ॥ यदभ्यवचरणोऽभ्यवैषि स्वपन्तं पुरुषमकोविद रजतमयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥ ५ ॥ यदभ्यवचरणोऽभ्यवैषि स्वपन्त पुरुषमकोविद सुवर्णमयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥ ६ ॥

'आयुर्माता मति' पिता नमस्त आविशोषण ।
म्हो नामासि विश्वायुस्तस्मै ते विश्वाहा नमः ॥'

नमस्ताम्राय नमो वरुणाय नमो जिघांसते ॥ ७ ॥ यक्ष्म राजन्मा मा हिंसी । राजन् यक्ष्म मा हिंसी. । तयोः सविदानयो. सर्वमायुरयान्यहम् ॥ ८ ॥

पुरुषे यज्ञरूपत्वोपासना दीर्घायु फला

४।२।१

पुरुषो वै यज्ञ ॥ १ ॥ तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रात सवनम् । चतुर्विंशत्यक्षरा गायत्री । गायत्र प्रात सवनम् ॥ २ ॥ तद्वसूनाम् । प्राणा वै वसव । प्राणा हीद सर्वं वस्वाददते ॥ ३ ॥ स यद्येनमेतस्मिन् काल उपतपदुपद्रवेत्स ब्रूयात्प्राणा वसव इद मे प्रात सवन माध्यन्दिनेन सवनेनानुसतनुतेति । अगदो हैव भवति ॥ ४ ॥ अथ यानि चतुश्चत्वारिंशत वर्षाणि तन्माध्यन्दिन सवनम् । चतुश्चत्वारिंशदक्षरा त्रिष्टुप् । त्रैष्टुभ माध्यन्दिन सवनम् ॥ ५ ॥ तद्रुद्राणाम् । प्राणा वै रुद्रा । प्राणा हीद सर्वं रोदयन्ति ॥ ६ ॥ स यद्येनमेतस्मिन काल उपतपदुपद्रवेत् स ब्रूयात्प्राणा रुद्रा इद मे माध्यन्दिन सवन तृतीयसवनेनानुसतनुतेति । अगदो हैव भवति ॥ ७ ॥ अथ यान्यष्टाचत्वारिंशतं वर्षाणि तत् तृतीयसवनम् । अष्टाचत्वारिंशदक्षरा जगती । जागत तृतीयसवनम् ॥ ८ ॥ तदादित्यानाम् । प्राणा वा आदित्या । प्राणा हीदं सर्वमाददते ॥ ९ ॥ स यद्येनमेतस्मिन् काल उपतपदुपद्रवेत्स ब्रूयात्प्राणा आदित्या इदं मे तृतीयसवनमायुपाऽनुसंतनुतेति । अगदो हैव भवति ॥ १० ॥ एतद्ध तद्विद्वान् ब्राह्मण उवाच महिदास ऐतरेय उपतपति किमिदमुपतपसि योऽहमनेनोपतपता न प्रेष्यामीति । स ह षोडशशतं वर्षाणि जिजीव । प्र ह षोडशशतं वर्षाणि जीवति नैन प्राण साम्यायुषो जहाति य एव वेद ॥ ११ ॥

दीर्घायु प्रार्थना

४।३।१

त्र्यायुष कश्यपस्य जमदग्नेस्त्र्यायुषम् ।
त्रीण्यमृतस्य पुष्पाणि त्रीण्यायूंषि मेऽकृणो' ॥ १ ॥

स नो मयोभूः पितवाविशस्व शान्तिको यस्तनुवे स्योन ॥ २ ॥

येऽग्नय. पुरीष्या. प्रविष्टा' पृथिवीमनु ।
तेषा त्वमस्युत्तमः प्र णो जीवातवे सुव ॥ ३ ॥

रक्षार्थं वरणदूतप्रार्थना

४।४।१

अरण्यस्य वत्सोऽसि विश्वनामा विश्वाभिरक्षणोऽपा पक्वोऽसि वरुणस्य दूतोऽन्तर्धिर्नाम ॥ १ ॥ यथा त्वममृतो मर्त्येभ्योऽन्तर्हितोऽस्येवं त्वमस्मा नघायुभ्योऽन्तर्धेहि । अन्तर्धिरसि स्तेनेभ्यः ॥ २ ॥

सवितृविष्णुपुरुषबृहस्पती-द्रादिदेवरूप सूर्य,

स एव ‘ धेनु ’ इत्युपास्य

४।५।१

व्युषि सविता भवस्युदेष्यन् विष्णुरुद्यन्पुरुष उदितो बृहस्पतिरभिप्रयन्मघवेन्द्रो वैकुण्ठो माध्यंदिने भगोऽपराह्ण उग्रो देवो लोहितायन्नस्तमिते यमो भवसि ॥ १ ॥ अश्मसु सोमो राजा निशाया पितृराज. स्वप्ने मनुष्यान्प्रविशसि पयसा पशून् ॥ २ ॥ विरात्रे भवो भवस्यपररात्रेऽङ्गिरा अग्निहोत्रवेलाया भृगु ॥ ३ ॥ तस्य तदेतदेव मण्डल मूध' । तस्यैतौ स्तनौ यद्वाक् च प्राणश्च । ताभ्या मे धुक्ष्वाऽध्याय ब्रह्मचर्यं प्रजा पशून् स्वर्गं लोकं सजातवनस्याम् ॥ ४ ॥ एता आशिष आशासे । भूर्भुव. स्व । उदिते शुक्रमादिश । तदात्मन्दधे ॥ ५ ॥

यज्ञविषयाणा पञ्चप्रश्नाना बकदाल्भ्यकृत समाधान,

गायत्रोद्गीथ सतनुसाङ्गामृतत्वफलः

४।६।१

भगेरथो हैक्ष्वाको राजा कामप्रेण यज्ञेन यक्ष्यमाण आस ॥ १ ॥ तदु ह कुरुपञ्चालाना ब्राह्मणा ऊचुर्भगेरथो ह वा अयमैक्ष्वाको राजा कामप्रेण यज्ञेन यक्ष्यमाण' । एतेन कथा वदिष्याम इति ॥२॥ त हाऽभ्येयु । तेभ्यो हाऽभ्यागतेभ्योऽपचितीश्चकार ॥ ३ ॥ अथ हैषा स भाग आवव्राजोप्त्वा केशश्मश्रूणि नखान्निकृत्याऽऽज्येनाऽभ्यज्य दण्डोपानह् बिभ्रत् ॥ ४ ॥ तान् होवाच ब्राह्मणा भगवन्त कतमो वस्तद्वेद यथाऽऽश्रावितप्रत्याश्राविते देवान् गच्छत इति ॥ ५ ॥ अथ होवाच कतमो वस्तद्वेद यद्विदुषः सूद्गाता सुहोता स्वध्वर्यु. सुमानुषविदाजायत इति ॥ ६ ॥ अथ होवाच कतमो वस्तद्वेद यच्छन्दाँसि प्रयुज्यन्ते यत्तानि सर्वाणि सस्तुतान्यभिसंपद्यन्त इति ॥ ७ ॥ अथ होवाच कतमो वस्तद्वेद यथा गायत्र्या उत्तमे अक्षरे पुनर्यज्ञमपिगच्छत इति ॥ ८ ॥ अथ होवाच कतमो वस्तद्वेद यथा दक्षिणा प्रतिगृहीता न हिंसन्तीति ॥ ९ ॥

४।६।२

एतान् हैनान् पञ्च प्रश्नान् पप्रच्छ ॥ १ ॥ तेषा ह कुरुपञ्चालाना बको दाल्भ्योऽनूचान आस ॥ २ ॥ स होवाच यथाऽऽश्रावितप्रत्याश्राविते देवान् गच्छत इति प्राच्या वै राजन् दिश्याश्रावितप्रत्याश्राविते देवान् गच्छत । तस्मात्प्राङ् तिष्ठन्नाश्रावयति प्राङ् तिष्ठन् प्रत्याश्रावयतीति ॥ ३ ॥ अथ होवाच यद्विदुष' सूद्गाता सुहोता स्वध्वर्यु' सुमानुषविदाजायत इति, यो वै मनुष्यस्य सभूतिं वेदेति होवाच तस्य सूद्गाता सुहोता स्वध्वर्यु सुमानुषविदाजायत इति, प्राणा उ ह वाव राजन् मनुष्यस्य सभूतिरेवेति ॥ ४ ॥ अथ होवाच यच्छन्दासि प्रयुज्यन्ते यत्तानि सर्वाणि सस्तुनान्यभिसपद्यन्त इति गायत्रीमु ह वाव राजन् सर्वाणि छन्दासि सस्तुतान्यभिसपद्यन्त इति ॥ ५ ॥ अथ होवाच यथा गायत्र्या उत्तमे अक्षरे पुनर्यज्ञमपिगच्छत इति वषट्कारेणो ह वाव राजन् गायत्र्या उत्तमे अक्षरे पुनर्यज्ञमपिगच्छत इति ॥ ६ ॥ अथ होवाच यथा दक्षिणा. प्रतिगृहीता न हिंसन्तीति ॥ ७ ॥

४।६।३

यो वै गायत्र्यै मुखं वेदेति होवाच त दक्षिणा. प्रतिगृहीता न हिंसन्तीति ॥ १ ॥ अग्निर्ह वाव राजन् गायत्रीमुखम् । तस्माद्यदग्नावभ्यादधाति भूयानेव स तेन भवति वर्धते । एवमेवैव विद्वान् ब्राह्मण. प्रतिगृह्णन् भूयानेव भवति वर्धत उ एवेति ॥ २ ॥ स होवाचाऽनूचानो वै किलाऽय ब्राह्मण आस । त्वामहमनेन यज्ञेनैमीति ॥ ३ ॥ तस्य वै ते यथोद्गास्यामीति होवाच यथैकराडेव भूत्वा स्वर्गं लोकमेष्यसीति ॥ ४ ॥ तस्मा एतेन गायत्रेणोद्गी-

थेनोज्जगौ। स हैकराडेव भूत्वा स्वर्गं लोकमियाय। तेन हैतेनैकराडेव भूत्वा स्वर्गं लोकमेति [ य एव वेद ] ॥ ५ ॥ ओं वा इति द्वे अक्षरे। ओं वा इति चतुर्थे। ओं वा इति षष्ठे । हुं भा ओ वागित्यष्टमे ॥ ६ ॥ तेन हैतेन प्रतीदर्शोऽस्य भयदस्याऽऽसमात्यस्योज्जगौ ॥ ७ ॥ त होवाच किं त आगास्यामीति । स होवाच हरी मे देवाश्वा वागायेति। तथेति तौ हास्मा आजगौ। तौ हैनमाजग्मतु ॥ ८ ॥ स वा एष उद्गीथ. कामाना सपदो वा३चो वा३चो वा३च् हु भा ओ वागिति। साङ्गो हैव सतनुरमृत सभवति य एतदेव वेदाथो यस्यैव विद्वानुद्गायति ॥ ९ ॥

देवसृष्टमृत्युपाशावद्या मृत्युपाशमोचनी

४।७।१

पुरुषो वै यज्ञ पुरुषो ह्योद्गीथ' । अथैत एव मृत्यवो यदग्निर्वायुरादित्यश्चन्द्रमा.॥ १ ॥ ते ह पुरुषं जायमानमेव मृत्युपाशैरभिदधति। तस्य वाचमेवाग्निरभिदधाति प्राण वायुश्चक्षुरादित्य श्रोत्र चन्द्रमाः ॥ २ ॥ तदाहु स वा उद्गाता यो यजमानस्य प्राणेभ्योऽधि मृत्युपाशानुन्मुञ्चतीति ॥ ३ ॥ तद्यस्यैव विद्वान् प्रस्तौति य एवास्य वाचि मृत्युपाशस्तमेवास्योन्मुञ्चति ॥ ४ ॥ अथ यस्यैव विद्वानुद्गायति य एवास्य प्राणे मृत्युपाश तमेवास्योन्मुञ्चति ॥ ५ ॥ अथ यस्यैव विद्वान् प्रतिहरति य एवास्य चक्षुषि मृत्युपाशस्तमेवास्योन्मुञ्चति ॥ ६ ॥ अथ यस्यैवं विद्वान्निधनमुपैति य एवास्य श्रोत्रे मृत्युपाशस्तमेवास्योन्मुञ्चति ॥ ७ ॥ एव वा एवविदुद्गाता यजमानस्य प्राणेभ्योऽधिमृत्युपाशानुन्मुञ्चति ॥ ८ ॥ तदाहु. स वा उद्गाता यो यजमानस्य प्राणेभ्योऽधिमृत्युपाशानुन्मुच्याथैन साङ्ग सतनु सर्वमृत्यो स्पृणातीति ॥ ९ ॥

४।७।२

तद्यस्यैव विद्वान् हिङ्करोति य एवास्य लोमसु मृत्युपाशस्तस्मादेवैन स्पृणाति ॥ १ ॥ अथ यस्यैव विद्वान् प्रस्तौति य एवास्य त्वचि मृत्युपाशस्तस्मादेवैन स्पृणाति ॥ २ ॥ अथ यस्यैव विद्वानादिमादत्ते य एवास्य मॉसेषु मृत्युपाशस्तस्मादेवैन स्पृणाति ॥ ३ ॥ अथ यस्यैव विद्वानुद्गायति य एवास्य स्नावसु मृत्युपाशस्तस्मादेवैन स्पृणाति ॥ ४ ॥ अथ यस्यैव विद्वान्प्रतिहरति य एवास्याङ्गेषु मृत्युपाशस्तस्मादेवैन स्पृणाति ॥ ५ ॥ अथ यस्यैव विद्वानुपद्रवति य एवास्यास्थिषु मृत्युपाशस्तस्मादेवैन स्पृणाति ॥ ६ ॥ अथ यस्यैवं विद्वान् निधनमुपैति य एवास्य मज्जसु मृत्युपाश स तस्मादेवैन स्पृणाति ॥ ७ ॥ एव वा एवविदुद्गाता यजमानस्य प्राणेभ्योऽधिमृत्युपाशानुन्मुच्याथैन साङ्ग सतनु सर्वमृत्यो स्पृणाति ॥ ८ ॥ तदाहु स वा उद्गाता यो यजमानस्य प्राणेभ्योऽधिमृत्युपाशानुन्मुच्याथैन साङ्ग सततुं सर्वमृत्यो स्पृत्वा स्वर्गे लोके सप्तधा दधातीति ॥ ९ ॥ स वा एष इन्द्रो वैमृध उद्यन् भवति स्वितोदितो मित्र सगवकाल इन्द्रो वैकुण्ठो मध्यदिने समावर्तमान' शर्व उग्रो देवो लोहितायन् प्रजापतिरेव सवेशेऽस्तमित' ॥ १० ॥ तद्यस्यैव विद्वान् हिङ्करोति य एवास्योद्यत स्वर्गो लोकस्तस्मिन्नेवैन दधाति ॥ ११ ॥ अथ यस्यैव विद्वान् प्रस्तौति य एवास्योदिते स्वर्गो लोकस्तस्मिन्नेवैन दधाति ॥ १२ ॥ अथ यस्यैव विद्वानादिमादत्ते य एवास्य सगवकाले स्वर्गो लोकस्तस्मिन्नेवैनं दधाति ॥ १३ ॥ अथ यस्यैव विद्वानुद्गायति य एवास्य मध्यंदिने स्वर्गो लोकस्तस्मिन्नेवैन दधाति ॥ १४ ॥ अथ यस्यैव विद्वान् प्रतिहरति य एवास्यापराह्णे स्वर्गो लोकस्तस्मिन्नेवैन दधाति ॥ १५ ॥ अथ यस्यैवं विद्वानुपद्रवति य एवास्यास्तयत स्वर्गो लोकस्तस्मिन्नेवैन दधाति ॥ १६ ॥ अथ यस्यैवं विद्वान्निधनमुपैति य एवास्यास्तमिते स्वर्गो लोकस्तस्मिन्नेवैन दधाति ॥ १७ ॥ एव वा एवविदुद्गाता यजमानस्य प्राणेभ्योऽधिमृत्युपाशानुन्मुच्याथैनं साङ्गं सतनु सर्वमृत्यो. स्पृत्वा स्वर्गे लाके सप्तधा दधाति ॥ १८ ॥

षड्देवताविषयिणी गायत्रसामोपनिषत्

४।८।१

षड्ढ वै देवता' स्वयमुवोऽग्निर्वायुरसावादित्य प्राणोऽन्नं वाक् ॥ १ ॥ ता श्रैष्ठ्ये व्यवदन्ताऽहं श्रेष्ठाऽस्म्यहं श्रेष्ठाऽस्म्यु ? (स्मि) मा श्रियमुपाध्वमिति ॥ २ ॥ ता अन्योऽन्यस्यै श्रेष्ठतायै नाऽतिष्ठन्त । ता अब्रुवन्न वा अन्योऽन्यस्यै श्रेष्ठतायै तिष्ठामह एता सम्प्रब्रवामहै यथा श्रेष्ठा स्म इति ॥३॥ ता अग्निमब्रुवन् कथ त्व श्रेष्ठोऽसीति ॥ ४॥ सोऽब्रवीदहं देवानां मुखमस्म्यहमन्यासा प्रजानाम् । मयाऽऽहुतयो हूयन्ते । अहं देवानामन्नं विकरोम्यहं मनुष्याणाम् ॥ ५ ॥ स यन्न स्याममुखा एव देवा स्युरमुखा अन्या प्रजा' । नाऽऽहुतयो हूयेरन् । न देवानामन्नं विक्रियेत न मनुष्याणाम् ॥ ६ ॥ तत इदं सर्वं पराभवेत्ततो न किंचन परिशिष्येतेति ॥ ७ ॥ एवमेवेति होचुर्नैवेह किंचन परिशिष्येत यत् त्व न स्या इति ॥ ८ ॥ अथ वायुमब्रुवन् कथमु त्वं श्रेष्ठोऽसीति ॥ ९ ॥ सोऽब्रवीदहं देवानां प्राणोऽस्म्यहमन्यासां प्रजानाम् । यस्मादहमुत्क्रामामि तत' स प्रप्लवते ॥ १० ॥ स यदहं न स्या तत इदं सर्वं पराभवेत्ततो न किंचन परिशिष्येतेति ॥ ११ ॥ एवमेवेति होचुर्नैवेह किंचन परिशिष्येत यत्त्व न स्या इति ॥ १२ ॥

४।८।२

अथादित्यमब्रुवन् कथमु त्वं श्रेष्ठोऽसीति ॥ १ ॥ सोऽब्रवीदहमेवोद्यन्नहर्भवाम्यहमस्त यन् रात्रिः । मया चक्षुषा कर्माणि क्रियन्ते । स यदहं नस्यां नैवाहः स्यान्न रात्रि । न कर्माणि क्रियेरन् ॥ २ ॥ तत इदं सर्वं पराभवेत्ततो न किंचन परिशिष्येतेति ॥ ३ ॥ एवमेवेति होचुर्नैवेह किंचन परिशिष्येत यत्त्वं न स्या इति ॥ ४ ॥ अथ प्राणमब्रुवन् कथमु त्वं श्रेष्ठोऽसीति ॥ ५ ॥ सोऽब्रवीत्प्राणो भूत्वाऽग्निर्दीप्यते । प्राणो भूत्वा वायुराकाशमनुभवति । प्राणो भूत्वाऽऽदित्य उदेति । प्राणादन्नं प्राणाद्वाक् ॥ ६ ॥ स यदहं न स्या तत इदं सर्वं पराभवेत्ततो न किंचन परिशिष्येतेति ॥ ७ ॥ एवमेवेति होचुर्नैवेह किंचन परिशिष्येत यत्त्व न स्या इति ॥ ८ ॥ अथान्नमब्रुवन् कथमु त्व श्रेष्ठमसीति ॥ ९ ॥ तदब्रवीन्मयि प्रतिष्ठायाग्निर्दीप्यते । मयि प्रतिष्ठाय वायुराकाशमनुविभवति । मयि प्रतिष्ठायादित्य उदेति । मदेव प्राणो मद्वाक् ॥ १० ॥ स यदहं न स्या तत इदं सर्वं पराभवेत्ततो न किंचन परिशिष्येतेति ॥ ११ ॥ एवमेवेति होचुर्नैवेह किंचन परिशिष्येत यत्त्व न स्या इति ॥ १२ ॥ अथ वाचमब्रुवन् कथमु त्व श्रेष्ठाऽसीति ॥ १३ ॥ साऽब्रवीन्मयैवेदं विज्ञायते मयाऽद । स यदहं न स्या नैवेद विज्ञायेत नाऽद ॥ १४ ॥ तत इदं सर्वं पराभवेत् नैवेह किंचन परिशिष्येतेति ॥ १५ ॥ एवमेवेति होचुर्नैवेह किंचन परिशिष्येत यत्त्वं न स्या इति ॥ १६ ॥

४।८।३

ता अब्रुवन्नेता वै किल सर्वा देवता । एकैकामेवानु स्म । स यन्नु न' सर्वासा देवतानामेकाचन न स्यात्तत इदं सर्वं पराभवेत्ततो न किंचन परिशिष्येत । हन्त सार्धं समेत्य यन्छ्रेष्ठं तदसामेति ॥ १ ॥ ता एतस्मिन् प्राण ओंकारे वाच्यकारे समायन् । तद्यत्समायन् तत्साम्नः सामत्वम् ॥ २ ॥ ता अब्रुवन् यानि नो मर्त्यान्यनपहतपाप्मान्यक्षराणि तान्युद्धृत्यामृतेष्वपहतपाप्मसु शुद्धेष्वक्षरेषु गायत्रं गायामाऽग्नौ वायावादित्ये प्राणेऽन्ने वाचि । तेनापहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमियामेति ॥ ३ ॥ एत्यग्नेरमृतमपहतपाप्म शुद्धमक्षरम् । ग्निरित्यस्य मर्त्यमनपहतपाप्माऽक्षरम् ॥ ४ ॥ वेति वायोरमृतमपहतपाप्म शुद्धमक्षरम् । युरित्यस्य मर्त्यमनपहतपाप्माक्षरम् ॥ ५ ॥ एत्यादित्यस्याऽमृतमपहतपाप्म शुद्धमक्षरम् । त्येत्यस्य मर्त्यमनपहतपाप्माक्षरम् ॥ ६ ॥ प्रेति प्राणस्यामृतमपहतपाप्म शुद्धमक्षरम् । णेत्यस्य मर्त्यमनपहतपाप्माक्षरम् ॥ ७ ॥ एत्यन्नस्यामृतमपहतपाप्म शुद्धमक्षरम् । नमित्यस्य मर्त्यमनपहतपाप्माक्षरम् ॥ ८ ॥ वेति वाचोऽमृतमपहतपाप्म शुद्धमक्षरम् । गित्यस्यै मर्त्यमनपहतपाप्माक्षरम् ॥ ९ ॥

ता एतानि मर्त्यान्यनपहतपाप्मान्यक्षराण्युद्धृत्याऽमृतेष्वपहतपाप्मसु शुद्धेष्वक्षरेषु गायत्रमागायन्नग्नौ वायावादित्ये प्राणेऽन्ने वाचि। तेनापहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमायन् ॥ १० ॥ अपहत्य मृत्युमपहत्य पाप्मान स्वर्गं लोकमेति य एव वेद ॥ ११ ॥

४।८।४

ता ब्रह्माऽब्रुवन्त्वयि प्रतिष्ठायैतमुद्यच्छामेति। ता ब्रह्माब्रवीदास्येन प्राणेन युष्मानास्येन प्राणेन मामुपाप्रवाथेति ॥ १ ॥ ता एतेन प्राणेनौकारेण वाच्यकारमभिनिमेष्यन्त्यो हिङ्काराद्धकारमोकारेण वाचमनुस्वरन्त्य उभाभ्यां प्राणाभ्या गायत्रमगायन्नोवा३चोवा३चोवा३च् हु भा वो वा इति ॥ २ ॥ स यथोभयापदी प्रतितिष्ठत्येवमेव स्वर्गे लोके प्रत्यतिष्ठन्। प्रति स्वर्गे लोके तिष्ठति य एव वेद ॥ ३ ॥ य उ ह वा एवंविदस्माल्लोकात्प्रैति स प्राण एव भूत्वा वायुमप्येति वायोरध्यभ्राण्यभ्रेभ्योऽधि वृष्टिं वृष्ट्यैवेम लोकमनुविभवति ॥ ४ ॥ ऋषयो ह सत्रमासाचक्रिरे। ते पुन पुनर्बह्वीभिर्बह्वीभि प्रतिपद्भि स्वर्गस्य लोकस्य द्वारं नानुचन बुबुधिरे ॥५॥ त उ श्रमेण तपसा व्रतचर्येणेन्द्रमवरुरुधिरे ॥ ६॥ त होचु स्वर्गं वै लोकमैप्सिष्म। ते पुन पुनर्बह्वीभिर्बह्वीभि प्रतिपद्भि स्वर्गस्य लोकस्य द्वार नानुच नाऽभुत्स्महि। तथा नोऽनुशाधि यथा स्वर्गस्य लोकस्य द्वारमनुप्रज्ञायाऽनार्ता स्वस्ति संवत्सरस्योदृच गत्वा स्वर्गं लोकमियामेति ॥७॥ तान् होवाच को व· स्थविरतम इति ॥ ८ ॥

४।८।५

अहमित्यगस्त्य ॥१॥ स वा एहीति होवाच तस्मै तेऽह तद्वक्ष्यामि यद्विद्वांस स्वर्गस्य लोकस्य द्वारमनुप्रज्ञायाऽनार्ता स्वस्ति संवत्सरस्योदृच गत्वा स्वर्गं लोकमेष्यथेति ॥२॥ तस्मा एतं गायत्रस्योद्गीथमुपनिषदममृतमुवाचाऽग्नौ वायावादित्ये प्राणेऽन्ने वाचि ॥ ३ ॥ ततो वै ते स्वर्गस्य लोकस्य द्वारमनुप्रज्ञायाऽनार्ता स्वस्ति संवत्सरस्योदृचं गत्वा स्वर्गं लोकमायन् ॥ ४ ॥ एवमेवैव विद्वान् स्वर्गस्य लोकस्य द्वारमनुप्रज्ञायाऽनार्त· स्वस्ति संवत्सरस्योदृच गत्वा स्वर्गं लोकमेति ॥ ५ ॥

गायत्रोपनिषद आचार्यवंश

४।९।१

एवं वा एत गायत्रस्योद्गीथमुपनिषदममृतमिन्द्रोऽगस्त्यायोवाच। अगस्त्य इषाय श्यावाश्वये। इष श्यावाश्विर्गौषूक्तये। गौषूक्तिर्ज्वालायनाय। ज्वालायन शाट्यायनये। शाट्यायनी रामाय क्रातुजातेयाय वैयाघ्रपद्याय। राम क्रातुजातेयो वैयाघ्रपद्य — ॥ १ ॥

४।९।२

शङ्खाय बाभ्रव्याय। शङ्खो बाभ्रव्यो दक्षाय कात्यायनये आत्रेयाय। दक्ष कात्यायनिरात्रेय· कंसाय वारक्याय। कंसो वारक्य सुयज्ञाय शाण्डिल्याय। सुयज्ञ शाण्डिल्योऽग्निदत्ताय शाण्डिल्याय। अग्निदत्त शाण्डिल्य सुयज्ञाय शाण्डिल्याय। सुयज्ञ शाण्डिल्यो जयन्ताय वारक्याय। जयन्तो वारक्यो जनश्रुताय वारक्याय। जनश्रुतो वारक्य सुदत्ताय पाराशर्याय ॥ १ ॥ सैषा शाट्यायनी गायत्रस्योपनिषदेवमुपासितव्या ॥ २ ॥

# तलवकारब्राह्मणोपनिषत्—केनोपनिषत्



मन प्राणवाक्चक्षु श्रोत्राणा प्रेषयिता अप्रमेय उपासनस्य अविषय मुक्तिहेतु देव ब्रह्म

४।१०।१

[1]केनेषितं पतति प्रेषित मन केन प्राण· प्रथम प्रैति युक्त. ।
केनेषिता वाचमिमां वदन्ति चक्षु श्रोत्र क उ देवो युनक्ति ॥

( १ ) केनेषितमित्याद्योपनिषत्परब्रह्मविषया वक्तव्येति नवमस्याध्यायस्यारम्भ । शिष्याचार्यप्रश्नप्रतिवचनरूपेण कथन तु सूक्ष्मवस्तुविषयत्वात्सुखप्रतिपत्तिकारण भवति, केवलतर्कागम्यत्व च दर्शित भवति । कश्चित् गुरु ब्रह्मनिष्ठ विधिवदुपेत्य प्रत्यगात्मविषयादन्यत्र शरणमपश्यन्नभय नित्य शिवमचलमिच्छन्पप्रच्छेति कल्प्यते —— केनेषितमित्यादि । केनेषितमिति केन कर्त्रा इषित इष्टमभिप्रेत सन्मनः पतति गच्छति स्वविषय प्रति इति सबध्यते । इषेराभीक्ष्ण्यार्थस्य गत्यर्थस्य चेहासभवादिच्छार्थस्यैवैतद्रूपमिति गम्यते । इषितमितीट्प्रयोगस्तु छान्दसः । तस्यैव प्रपूर्वस्य नियोगार्थे प्रेषितमित्येतत् ।

तत्र प्रेषितमित्येवोक्ते प्रेषयितृप्रेषणविशेषविषया आकाङ्क्षा स्यात्, केन प्रेषयितृविशेषेण, कीदृश वा प्रेषणमिति । इषितमिति तु विशेषणे सति तदुभय निवर्तते । कस्येच्छामात्रेण प्रेषितमित्यर्थविशेषनिर्धारणात् । यद्येषोऽर्थोऽभिप्रेतः स्यात्, केनेषितमित्येतावतैव सिद्धत्वात्प्रेषितमिति न वक्तव्यम् । अपि च, शब्दाधिक्यादर्थाधिक्य युक्तमिति इच्छया, कर्मणा, वाचा वा केन प्रेषितमिति अर्थविशेषोऽवगन्तु युक्तः । न । प्रश्नसामर्थ्यात् देहादिसघातादनित्यात्कर्मकार्याद्विरक्तः अतोऽन्यत्कूटस्थ नित्य वस्तु बुभुत्समानः पृच्छतीति सामर्थ्यादुपपद्यते । इतरथा इच्छावाक्कर्मभिर्देहादिसघातस्य प्रेरयितृत्व प्रसिद्धमिति प्रश्नोऽनर्थक एव स्यात् । एवमपि प्रेषितशब्दस्यार्थो न प्रदर्शित एव । न । सशयवतोऽय प्रश्न इति प्रेषितशब्दस्यार्थविशेष उपपद्यते ।

किं यथाप्रसिद्धमेव कार्यकरणसघातस्य प्रेषयितृत्व, किंवा सघातव्यतिरिक्तस्य स्वतन्त्रस्येच्छामात्रेणैव मनआदिप्रेषयितृत्वमित्यस्यार्थस्य प्रदर्शनार्थे केनेषित पतति प्रेषित मन इति विशेषणद्वयमुपपद्यते ।

ननु स्वतन्त्र मन. स्वविषये स्वय पततीति प्रसिद्धम् । तत्र कथं प्रश्न उपपद्यते इति । उच्यते । यदि स्वतन्त्र मनः प्रवृत्तिनिवृत्तिविषय स्यात्, तर्हि सर्वस्य अनिष्टचिन्तन न स्यात् । अनर्थं च जानन्सकल्पयति । अत्युग्रदु.खे च कार्ये वार्यमाणमपि प्रवर्तत एव मनः । तस्माद्युक्त एव केनेषितमित्यादिप्रश्न ।

केन प्राणो युक्तो नियुक्त प्रेरितः सन्प्रैति गच्छति स्वव्यापार प्रति । प्रथम इति प्राणविशेषण स्यात्, तत्पूर्वकत्वात् सर्वेन्द्रियप्रवृत्तीनाम् । केनेषिता वाचमिमा शब्दलक्षणां वदन्ति लौकिका । तथा चक्षुः श्रोत्र च स्वे स्वे विषये क उ देवो द्योतनवान् युनक्ति नियुङ्क्ते प्रेरयति । शकर

( २ ) मन इषितमिष्ट साध्वसाधु वा विषय प्रति केन देवेन प्रेषित सत् पतति गच्छति ।

करणत्वादवश्य केनचित्प्रेरितमिति वाच्यम् । न तावज्जीव एव प्रेरक. । तेन निगृह्णताऽपि मनसो विषय प्रति पतनात् । अतो बलवता केनचिद्देवेनैव प्रेरितमिति वक्तव्य, स इति भावः । एवमग्रेऽपि बोध्यम् ।

अथ प्रथमः प्राणः पञ्चानां प्राणानां मुख्यः प्राणः । चक्षु.श्रोत्रमिति प्राण्यङ्गत्वादेकवद्भावः । उ सबुद्धौ ।

* रग.

( ३ ) ' अनन्तगुणपूर्णत्वादगम्याय सुरैरपि । सर्वेष्टदात्रे देवाना नमो नारायणाय ते । वैजयन्ते समासीनमेकान्ते चतुराननम् । विष्णोर्विविदिषुस्तत्त्व पर्यपृच्छत्सदा-

---

(१) केउ १।१, विज्ञान ३।२।८

* शेष शकरवत् ।

शिव । यदिद पुरुषावश्य तत्र तत्र पतेन्मन । केन तत्प्रेरित याति प्राण. सर्वोत्तमस्तथा । चक्षु श्रोत्र तथा वाच को देवो विनियोजयेत् ॥' मध्व

**श्रोत्रस्य श्रोत्र मनसो मनो यद्वाचो ह वाच स उ प्राणस्य प्राण ।**
**चक्षुषश्चक्षुरतिमुच्य धीरा प्रेत्यास्माल्लोकादमृता भवन्ति ॥**

(१) एव पृष्टवते योग्यायाह गुरु शृणु त्व यत्पृच्छसि । मनआदिकरणजातस्य को देवः स्वविषय प्रति प्रेरयिता, कथ वा प्रेरयतीति । श्रोत्रस्य श्रोत्र, शृणोत्यनेनेति श्रोत्र शब्दस्य श्रवण प्रति करण शब्दाभिव्यञ्जक श्रोत्रमिन्द्रिय, तस्य श्रोत्र स यस्त्वया पृष्ट 'चक्षु-श्रोत्र क उ देवो युनक्ति' इति । तथा मनसोऽन्त-करणस्य, मन । न ह्यन्त करणमन्तरेण चैतन्यज्योतिषा दीपित स्वविषयसंकल्पाध्यवसायादिसमर्थं स्यात् । तस्मान्मनसोऽपि मन इति । इह बुद्धिमनसी एकीकृत्य निर्देशो मनस इति । यद्वाचो ह वाच, यच्छब्दो यस्मादित्यर्थे श्रोत्रादिभि सर्वै सबध्यते । यस्माच्छ्रोत्रस्य श्रोत्र, यस्मान्मनसो मन इत्येवम् । वाचो ह वाचमिति द्वितीया प्रथमात्वेन विपरिणम्यते । प्राणस्य प्राण इति दर्शनात् । स यस्त्वया पृष्ट', प्राणस्य प्राणाख्यवृत्ति-विशेषस्य प्राण, तत्कृत हि प्राणस्य प्राणनसामर्थ्यम् । श्रोत्रादीन्द्रियप्रस्तावे घ्राणप्राणस्य ननु युक्त ग्रहणम् । सत्यमेव, प्राणग्रहणेनैव घ्राणप्राणस्य ग्रहण कृतम् । एव मन्यते श्रुति सर्वस्यैव करणकलापस्य यदर्थप्रयुक्ता प्रवृत्तिस्तद्ब्रह्मेति प्रकरणार्थो विवक्षित. । तथा चक्षुष श्चक्षु', रूपप्रकाशकस्य चक्षुषो यद्रूपग्रहणसामर्थ्यं तदात्म-चैतन्याधिष्ठितस्यैव, अतश्चक्षुषश्चक्षु' । प्रष्टुः पृष्टस्यार्थस्य ज्ञातुमिष्टत्वाच्छ्रोत्रादे. श्रोत्रादिलक्षण यथोक्त ब्रह्म ज्ञात्वेत्यध्याह्रियते, अमृता भवन्तीति फलश्रुतेश्च । अति-मुच्य श्रोत्राद्यात्मभावं परित्यज्य ये श्रोत्राद्यात्मभाव परित्यजन्ति ते धीरा धीमन्तः प्रेत्य व्यावृत्य अस्माल्लोकात् पुत्रमित्रकलत्रबन्धुषु ममाहभावसव्यवहारलक्षणात्, त्यक्त सर्वैषणा भूत्वेत्यर्थ । अमृता अमरणधर्माणो भवन्ति । अथवा अतिमुच्येत्यनेनैव एषणात्यागस्य सिद्धत्वादस्माल्लोकात्प्रेत्य अस्माच्छरीरात् प्रेत्य मृत्वेत्यर्थः ।

शकर.

(२) यत् य । श्रोत्रादिनियामकत्वज्ञानिन फल-माह — अतिमुच्येति । धीरा धीमन्त. श्रोत्रादिप्रेरकत्व नारायणस्य जानन्त । अस्माल्लोकाद्भौतिकदेहात्प्रेत्य निर्गत्योत्क्रमण विधायेति यावत् । अर्चिरादिमार्गेण गत्वा अतिमुच्य लिङ्गदेह हित्वा अमृता मुक्ता भवन्तीत्यर्थ. । ‡ रग.

(३) 'इति पृष्टस्तदा ब्रह्मा प्राह देवमुमापतिम् । ध्यात्वा नारायण देव सर्वाधारमनूपमम् । सर्वज्ञ सर्वशक्तिं च सर्वदोषविवर्जितम् । यः प्राणस्य प्रणेता च चक्षुरादेश्च सर्वश ॥' मध्व

(४) 'प्राण' कम्पनात्'—ब्रह्म प्राण प्राणशब्दवाच्य भवति, कम्पकत्वगुणयोगादित्यर्थः । ब्रह्म हि सर्वजगत् विकारपरपराभि' चालयतीति प्राणतुल्यतया प्राण उच्यत इति । अय च प्राणशब्दो रूपको मुख चन्द्र इतिवत् ।

विज्ञान. १।३।२९

*** न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मन ।**
**न विद्मो न विजानीमो यथैतदनुशिष्यात् ॥**
**अन्यदेव तद्विदितादथो अविदितादधि ।**
**इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे ॥**

यस्माच्छ्रोत्रादेरपि श्रोत्राद्यात्मभूत ब्रह्म, अतो न तत्र तस्मिन् ब्रह्मणि चक्षुर्गच्छति । स्वात्मनि गमनासभवात् । तथा न वाग्गच्छति । वाचा हि शब्द उच्चार्यमाणोऽभिधेय प्रकाशयति यदा, तदाभिधेय प्रति वाग्गच्छतीत्युच्यते । तस्य च शब्दस्य तन्निर्वर्तकस्य च

(१) केउ १।२, रामानुज १।२।१, श्रीकर १।१।३२, विज्ञान १।३।२९

‡ शेष शकरवत् ।

* रगभाष्ये तृतीयचतुर्थमन्त्रव्याख्यानं नोपलभ्यते । मन्त्रावपि नोद्धृतौ । तथाऽपि तयोरानन्दाश्रमपद्धत्या तृतीयमन्त्रत्वमभिप्रेत्य 'यद्वाचा' इत्यादयश्चतुर्थत्वादिना निर्दिष्टा । तथा च तृतीयचतुर्थमन्त्रव्याख्यान लेखकादि-प्रमादाद्भ्रष्टमिति सभावयाम ।

(१) केउ १।३, Dr Oertel विद्मो (विद्म)

(२) केउ १।४, ब्रशकर १।१।४, ३।२।१७, रामानुज १।१।४ (पृ १५४)

करणस्यात्मा ब्रह्म, अतो न वागगच्छति। यथाऽग्निर्दाहक' प्रकाशकश्चापि सन् न ह्यात्मान प्रकाशयति दहति च, तद्वत्। नो मनो मनश्चान्यस्य सकल्पयितृ अध्यवसातृ च सत् नात्मान सकल्पयत्यध्यवस्यति च तस्यापि ब्रह्मात्मेति। इन्द्रियमनोभ्यां हि वस्तुनो विज्ञान, तदगोचरत्वान्न विद्मस्तद्ब्रह्म ईदृशमिति, अतो न विजानीमो यथा येन प्रकारेणैतद्ब्रह्मानुशिष्यादुपदिशेच्छिष्यायेत्यभिप्राय। यद्धि करणगोचर तदन्यस्मै उपदेष्टु शक्य जातिगुणक्रियाविशेषणैः। न तज्जात्यादिविशेषणवद्ब्रह्म। तस्माद्विषम शिष्यान् उपदेशेन प्रत्याययितुमिति। उपदेशे तदर्थग्रहणे च यत्नातिशयकर्तव्यता दर्शयति — न विद्म इत्यादि। अत्यन्तमेवोपदेशप्रकारप्रत्याख्याने प्राप्ते तदपवादोऽयमुच्यते। सत्यमेव प्रत्यक्षादिभि प्रमाणैर्न पर. प्रत्याययितु शक्य.। आगमेन तु शक्यत एव प्रत्याययितुम्। तदुपदेशार्थमागममाह — अन्यदेव तद्विदितादथो अविदितादधीति। अन्यदेव पृथगेव तद्यत्प्रकृत श्रोत्रादीना श्रोत्रादीत्युक्तमविषय च तेषाम्। तद्विदितादन्यदेव हि, विदित नाम यद्विदिक्रिययाऽतिशयेनाऽऽप्त तद्विदिक्रियाकर्मभूत क्वचित्किंचित्कस्यचिद्विदित स्यादिति सर्वमेव व्याकृत तद्विदितमेव। तत्तस्मादन्यदित्यर्थः। अविदितमज्ञात तर्हीति प्राप्ते आह — अथो अविदिताद्विदितविपरीतादव्याकृतादविद्यालक्षणाद्व्याकृतबीजात्। अधीत्युपर्यर्थे, लक्षणयाऽन्यदित्यर्थ.। इत्येव सर्वात्मन. सर्वविशेषरहितस्य चिन्मात्रज्योतिषो ब्रह्मत्वप्रतिपादकस्य वाक्यार्थस्याऽऽचार्योपदेशपरम्परया प्राप्तत्वमाह — इति शुश्रुमेत्यादि। ब्रह्म चैवमाचार्योपदेशपरम्परयैवाधिगन्तव्य न तर्कत. प्रवचनमेधाबहुश्रुततपोयज्ञादिभ्यश्च। इत्येव शुश्रुम श्रुतवन्तो वय पूर्वेषामाचार्याणा वचनम्। ये आचार्याः नोऽस्मभ्य तद्ब्रह्म व्याचचक्षिरे व्याख्यातवन्तो विस्पष्ट कथितवन्तस्तेषामित्यर्थः। शकर.

**यद्वाचाऽनभ्युदितं येन वागभ्युद्यते।**

**तदेव ब्रह्म त्व विद्धि नेद यदिदमुपासते ॥**

(१) अन्यदेव तद्विदितादथो अविदितादधीत्यनेन वाक्येनात्मा ब्रह्मेति प्रतिपादिते श्रोतुराशङ्का जाता, तत्कथ त्वात्मा ब्रह्म। आत्मा हि नाम अधिकृत कर्मण्युपासने च। ससारी कर्म उपासन वा साधनमनुष्ठाय ब्रह्मादिदेवान् स्वर्ग वा प्राप्तुमिच्छति। तत्तस्मादन्य उपास्यो विष्णुरीश्वर इन्द्रश्च प्राणो वा ब्रह्म भवितुमर्हति, न त्वात्मा। लोकप्रत्ययविरोधात्। यथाऽन्ये तार्किका ईश्वरादन्य आत्मेत्याचक्षते, तथा कर्मिण 'अमु यजामु यज' इत्यन्या एव देवता उपासते। तस्मात् युक्त यद्विदितमुपास्य तद्ब्रह्म भवेत्, ततोऽन्य उपासक इति, तामेतामाशङ्का शिष्यलिङ्गेनोपलक्ष्य तद्वाक्याद्वा, आह मैव शङ्किष्ठा.। यच्चैतन्यमात्रसत्ताक वाचा, वागिति जिह्वामूलादिष्वष्टसु स्थानेषु विषक्तमाग्नेय वर्णानामभिव्यञ्जक करण, वर्णाश्चार्थसकेतपरिच्छिन्ना एतावन्त एवक्रमयुक्ता इति। एव तदभिव्यङ्ग्यशब्दः पद वागित्युच्यते। मितममित स्वरः सत्यानृते एव विकारो यस्यास्तया वाचा पदत्वेन परिच्छिन्नया करणगुणवत्याऽनभ्युदितमप्रकाशितमनभ्युक्त, येन ब्रह्मणा विवक्षितेऽर्थे सकरणा वागभ्युद्यते चैतन्यज्योतिषा प्रकाश्यते प्रयुज्यत इत्येतत्। तदेवाऽऽत्मस्वरूप ब्रह्म निरतिशय भूमाख्य बृहत्त्वाद्ब्रह्मेति विद्धि विजानीहि त्वम्। यैर्वागाद्युपाधिभिर्वाचो ह वाक्चक्षुषश्चक्षु श्रोत्रस्य श्रोत्र मनसो मन' कर्ता भोक्ता विज्ञाता नियन्ता प्रशासिता विज्ञानमानन्द ब्रह्मेत्येवमादयः सव्यवहारा असव्यवहार्ये निर्विशेषे परे साम्ये ब्रह्मणि प्रवर्तन्ते तान् व्युदस्याऽऽत्मानमेव निर्विशेष ब्रह्म विद्धीत्येवशब्दार्थ.। नेद ब्रह्म यदिदमिति उपाधिभेदविशिष्टमनात्मेश्वरादि उपासते ध्यायन्ति। तदेव ब्रह्म त्व विद्धीत्युक्तेऽपि नेद ब्रह्मेत्यनात्मनोऽब्रह्मत्व पुनरुच्यते नियमार्थमन्यब्रह्मबुद्धिपरिसख्यानार्थं वा। * शकर.

(२) मनआदीनां प्रवर्तकनारायणब्रह्म साकल्येनोपदिशत्यत्राऽऽह यद्वाचेत्यादिमन्त्रैः. — यद्ब्रह्म वाचा वेदवाण्याऽनभ्युदित साकल्येन नोक्तम्। येन च प्रेरिता सती वाक् अभ्युद्यते पुरुषैरुच्चार्यते तदेव त्व ब्रह्म विद्धि जानीहि। नेद जडजीवादिकं जगत्

- (१) केउ. १।५, अशकर १।१।४,३१, भास्कर १।१।३१, रामानुज १।१।४ (पृ १५४,१५९), अमध्व १।१।५, श्रीकर १।१।३२, विज्ञान १।१।२ (पृ ६१), ३।२।३०, ३६, ४।३।९, बलदेव १।१।५

* भास्कर. शकरवत्।

यत्कामात्मान इदमुपासते इत्यर्थ. । एवमग्रेऽप्यर्थो ध्येयः । * रग

( ३ ) ‘ अगम्यः सर्वदेवैश्च परिपूर्णत्वहेतुतः । प्राणादीना प्रणेता च सर्ववेत्ता च सर्वश. । सर्वोत्तमश्च सर्वत्र स विष्णुरिति धार्यताम् ॥ ’ † मध्व

( ४ ) अवाच्यत्वादिक त्वप्रसिद्धत्वात् । ‘ अप्रसिद्धेरवाच्य तद्वाच्य सर्वागमोक्तित. । अतर्क्यं तर्क्यमज्ञेय ज्ञेयमेव पर स्मृतम् ॥ ’ इति गारुडे ।

ब्रमध्व १।१।५

यन्मनसा न मनुते येनाहुर्मनो मतम् ।
तदेव ब्रह्म त्व विद्धि नेद यदिदमुपासते ॥

( १ ) यन्मनसा न मनुते । मन इत्यन्त.करण बुद्धिमनसोरेकत्वेन गृह्यते । मनुतेऽनेनेति मन. सर्वकरणसाधारणम् । सर्वविषयव्यापकत्वात् । ‘ कामः सकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव ’ इति श्रुतेः । कामादिवृत्तिमन्मन., तेन मनसा यच्चैतन्यज्योतिर्मनसोऽवभासक न मनुते न सकल्पयति, नापि निश्चिनोति । मनसोऽवभासकत्वेन नियन्तृत्वात् । सर्वविषय प्रति प्रत्यगेवेति स्वात्मनि न प्रवर्ततेऽन्त करणम् । अन्त स्थेन हि चैतन्यज्योतिषाऽवभासितस्य मनसो मननसामर्थ्यं, तेन सवृत्तिक मनो येन ब्रह्मणा मत विषयीकृत व्याप्तमाहु कथयन्ति ब्रह्मविद । तस्मात्तदेव मनस. आत्मान प्रत्यक्चेतयितार ब्रह्म विद्धि । नेदमित्यादि पूर्ववत् । शकर

( २ ) यन्मनसा कश्चित्साकल्येन न मनुते । येन मनो मतम् । रग

( ३ ) यन्मनसा न मनुत इत्यस्य विष्णुदेवतायामसभव ‘ मनसैव जगत्सृष्टिं सहार च करोति य. । तस्यारिपक्षक्षपणे कियानुद्यमविस्तर. ॥ ’ इति विष्णुपुराणादौ विष्णुदेवताया मनोऽवगमादिति ।

१।१।५

* शेष शकरवत् ।

† यच्प्राणेनेत्यन्ताना तात्पर्यतो व्याख्यानमिदम् ।

(१) केउ १।६, ब्रमध्व ३।२।३७; श्रीकर १।१।१ (पृ २१), १।१।३ (पृ ३९), २।१।१२, ३।२।२३, विज्ञान १।१।२ (पृ ३८), १।१।५ (पृ १३७,१३८), ३।२।१४

‘ यन्मनसा मुपासते ’ इत्यादिश्रुतिभिरवस्थाधारैर्मनआदिकरणैः शून्यस्यैव ब्रह्मणः सम्यग्ज्ञानविषयत्वावधारणात् ।

विज्ञान ३।२।१४

यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति ।
तदेव ब्रह्म त्व विद्धि नेद यदिदमुपासते ॥

( १ ) यच्चक्षुषा न पश्यति न विषयीकरोति अन्त.करणवृत्तिसयुक्तेन । येन चक्षूषि अन्त.करणवृत्तिभेदभिन्नाश्चक्षुर्वृत्ती पश्यति लोकश्चैतन्यात्मज्योतिषा विषयीकरोति व्याप्नोति ।

शकर.

( २ ) येन चक्षूषि पश्यन्ति दृश्यन्त इत्यर्थः ।

रग.

यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिद श्रुतम् ।
तदेव ब्रह्म त्व विद्धि नेद यदिदमुपासते ॥

यच्छ्रोत्रेण न शृणोति दिग्देवताधिष्ठितेनाऽऽकाशकार्येण मनोवृत्तिसयुक्तेन न विषयीकरोति लोकः, येन श्रोत्रमिद श्रुत यत्प्रसिद्ध चैतन्यात्मज्योतिषा विषयीकृतम् । तदेवेत्यादि पूर्ववत् ।

शकर.

यत्प्राणेन न प्राणिति येन प्राण. प्रणीयते ।
तदेव ब्रह्म त्व विद्धि नेद यदिदमुपासते ॥

( १ ) यत्प्राणेन घ्राणेन पार्थिवेन नासिकापुटान्तरवस्थितेनान्तःकरणप्राणवृत्तिभ्यां सहितेन यन्न प्राणिति गन्धवन्न विषयीकरोति । येन चैतन्यात्मज्योतिषाऽवभास्यत्वेन स्वविषय प्रति प्राणः प्रणीयते । तदेवेत्यादि सर्वं समानम् । शकर

( २ ) येन प्राण इति । क्रियाशक्तिरप्यात्मविज्ञाननिमित्तेत्येतत् ।

वाक्यभा.

( ३ ) यत्प्राणेन न प्राणिति न चेष्टते । येन प्राणः प्राणीयते प्रेर्यते ।

रग.

(१) केउ १।७, रग षि पश्यति ( षि पश्यन्ति )

(२) केउ १।८, ब्रमध्व. १।१।५

(३) केउ १।९

ब्रह्म विज्ञातमपि अविज्ञात अविज्ञात च विज्ञातम्

४।१०।२

**यदि मन्यसे सुवेदेति दहरमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपं यदस्य। त्व यदस्य देवेषु। अथ नु मीमास्यमेव ते मन्ये विदितम् ॥**

( १ ) एव हेयोपादेयविपरीतस्त्वमात्मा ब्रह्मेति प्रत्यायितः शिष्यः अहमेव ब्रह्मेति सुष्ठु वेदाह मा, इति गृह्णीयादित्याशङ्कयाऽऽचार्य शिष्यबुद्धिविचालनार्थं यदीत्याह। न हि वेदिता वेदितुर्वेदितु शक्योऽग्निरिव दग्धुमग्नेः। न चान्यो वेदिता ब्रह्मणोऽस्ति, यस्य वेद्य-मन्यत्स्याद्ब्रह्म। यदि कदाचिन्मन्यसे सुवेदेति सुष्ठु वेदाह ब्रह्मेति। कदाचिद्यथाश्रुत दुर्विज्ञेयमपि क्षीण-दोषः सुमेधाः कश्चित्प्रतिपद्यते कश्चिन्नेति साशङ्कमाह यदीत्यादि। दहरमल्पमेवापि नून त्व वेत्थ जानीषे ब्रह्मणो रूपम्। यदस्य ब्रह्मणो रूपमिति पूर्वेण सम्बन्धः। न केवलमध्यात्मोपाधिपरिच्छिन्नस्याऽस्य ब्रह्मणो रूप त्वमल्प वेत्थ, यदप्यधिदैवतोपाधिपरिच्छिन्नस्याऽस्य ब्रह्मणो रूप देवेषु वेत्थ त्व, तदपि नून दहरमेव वेत्थेति मन्येऽहम्। यदध्यात्म यदधिदैव तदपि च देवेषु उपाधिपरिच्छिन्न-त्वाद्दहरत्वान्न निवर्तते। यत्तु विध्वस्तसर्वोपाधिविशेष शान्तमनन्तमेकमद्वैत भूमाख्य नित्य ब्रह्म, न तत्सुवेद्य-मित्यभिप्राय। यत एव अथ नु तस्मान्मन्ये अद्यापि मीमास्य विचार्यमेव ते तव ब्रह्म। एवमाचार्योक्तः शिष्य एकान्ते उपविष्टः समाहितः सन्यथोक्तमाचार्येणाऽऽगममर्थतो विचार्य तर्कतश्च निर्धार्य स्वानुभव कृत्वा आचार्यसकाशमुपगम्योवाच—मन्येऽहमथेदानीं विदित ब्रह्मेति। शकर

( २ ) देवेष्वपि सुवेदाहमिति मन्यते यः सोऽप्यस्य ब्रह्मणो रूप दहरमेव वेत्ति नूनम्। कस्मात्। अविष-यत्वात्कस्यचिद्ब्रह्मणः। * वाक्यभा.

( ३ ) हे शिष्याहं सुवेद ब्रह्मणो रूप सम्यग्जानामीति यदि मन्यसे तर्हि त्वमपि नून दहरमेवाल्पमेव ब्रह्मणो रूप वेत्थ। तस्यानन्तत्वादिति भावः। रूपमिति ब्रह्मगुणानामुपलक्षणम्। यदि अस्माद्दहरमेव वेत्थ। अथ तस्मात्त्व त्वयि, व्यत्ययात्। त्वयि अस्य ब्रह्मणो यद्रूप, देवेषु चास्य ब्रह्मणो यद्रूप, तदिति शेष.। मीमास्यमेव विचार्यमेव नु इदानीम्। ते त्वयेति। * रग.

( ४ ) 'य सम्यङ्नैव जानाति कश्चिन्निरवशेषत'। सर्वात्मना विजानामीति तु यस्य मत भवेत्। तस्याज्ञात स भगवान्यो नैव मन्यते सदा। ज्ञातस्तस्य तथास्यैव निश्शेष मनन कृतम्। इति यो मन्यते नास्य मत स पुरुषोत्तमः। नातिवेद्यो न चावेद्यस्तस्मात्स परमेश्वर.। नेद जीवस्वरूप तद्ब्रह्मविष्ण्वाख्यमव्ययम्। किन्तु यत्ते समीपस्थमासते विनियामकम्। तदेव ब्रह्म विद्धि त्व विष्ण्वाख्य परमव्ययम्। नियामक तद्देवाना मर्त्याना किमुतोत्तमम्। तत्प्रसाद विना जीवे मन्तव्या न प्रवृत्तय.। किमु जीवस्य तद्भावो न मन्तव्य इतीर्यते ॥' ‡ मध्व.

**नाहं मन्ये सुवेदेति नो न वेदेति वेद च।**
**यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥**

( १ ) कथमिति। शृणुत। नाह मन्ये सुवेदेति नैवाह मन्ये सुवेद ब्रह्मेति। नैव तर्हि विदित त्वया ब्रह्मेत्युक्त आह — नो न वेदेति, वेद च। वेद चेति चशब्दान्न वेद च। ननु विप्रतिषिद्ध नाह मन्ये सुवेदेति, नो न वेदेति वेद चेति। यदि न मन्यसे सुवेदेति कथ मन्यसे वेद चेति। अथ मन्यसे वेदैवेति। कथ न मन्यसे सुवेदेति। एक वस्तु येन ज्ञायते तेनैव तदेव वस्तु न सुविज्ञायेत इति विप्रतिषिद्ध सशयविपर्ययौ वर्जयित्वा। न च ब्रह्म सशयितत्वेन ज्ञेय विपरीतत्वेन वेति नियन्तु शक्यम्। सशयविपर्ययौ हि सर्वत्रानर्थकरत्वेनैव प्रसिद्धौ। एवमाचार्येण विचाल्यमानोऽपि शिष्यो न विचचाल। 'अन्यदेव तद्विदितादथो अविदितादधि' इत्याचार्योक्तागमसप्रदायबलादुपपत्त्यनुभवबलाच्च जगर्ज च ब्रह्मविद्यायां दृढनिश्चयता दर्शयन्नात्मनः। कथमिति, उच्यते। यो यः कश्चिन्नः अस्माक सब्रह्मचारिणा मध्ये तदुक्त वचन तत्त्वतो वेद स तद्ब्रह्म वेद। किं पुनः

* पदभाष्यगतोऽप्यर्थ अथवेत्यादिना विकल्पित।

(१) केउ २।१, 'दहर' इत्यत्र 'दह्र' 'दभ्र' इति पाठान्तर समुपलभ्यते।

* 'मन्ये विदितम्' इत्युत्तरान्वयि।

‡ द्वितीयखण्डस्य सग्रहेण व्याख्यानमिदम्।

(१) केउ २।२, वाक्यभा नाहं ( नाह ), रग. हं मन्ये ( ह्मन्ये ), मध्व रंगवत्

तद्वचनमित्यत आह — नो न वेदेति वेद चेति । यदेव अन्यदेव तद्विदितादथो अविदितादधीत्युक्त वस्त्वनुमानानुभवाभ्या सयोज्य, निश्चित वाक्यान्तरेण नो न वेदेति वेद चेत्यवोचदाचार्यबुद्धिसवादार्थे मन्दबुद्धिग्रहणव्यपोहार्थे च । तथा च गर्जितमुपपन्न भवति यो नस्तद्वेदेति । शकर

( २ ) अहेत्यवधारणार्थो निपात. । नैव मन्ये इत्येतत् । वाक्यभा

(३) अन्येषां कात्स्न्र्येन ब्रह्माज्ञानित्वेऽपि तव त्वस्ति सम्यग्ब्रह्मज्ञानित्वमिति पृष्टो देशिक आह — मन्य इति । अन्ये सम्यग्वेद अयमिति मां वदन्ति, अह तु ब्रह्म विदित न मन्ये इति योजना । तर्हि त्वमपि ब्रह्म सर्वथा न वेत्थ किमित्यत आह — नो नेति । नो वेद न जानामीति न, किंतु वेदेति च । ब्रह्मणः साकल्येनाज्ञेयत्वमुपपाद्योपसहरति — न. अस्माक मध्ये यस्तु ब्रह्माह वेदेति वदति स तन्नो वेद । कुतः, परिच्छिन्नत्वज्ञानात् । अह न वेदेति यो वदत्यसौ वेद च ब्रह्मणोऽपरिच्छिन्नत्वात् । * रग

यस्यामत तस्य मतं मतं यस्य न वेद स॰ ।
अविज्ञातं विजानतां विज्ञातमविजानताम् ॥

( १ ) शिष्याचार्यसवादात्प्रतिनिवृत्य स्वेन रूपेण श्रुतिः समस्तसवादनिर्वृत्तमर्थमेव बोधयति — यस्यामतमित्यादिना । यस्य ब्रह्मविद अमत अविज्ञात अविदित ब्रह्मेति मत अभिप्रायो निश्चयः, तस्य मत ज्ञात सम्यक् ब्रह्मेत्यभिप्राय॰ । यस्य पुनर्मत ज्ञात विदित मया ब्रह्मेति निश्चयः, न वेदैव सः न ब्रह्म विजानाति सः । विद्वदविदुषोर्यथोक्तौ पक्षौ अवधारयति — अविज्ञात अमत अविदितमेव ब्रह्म विजानता सम्यग् विदितवतामित्येतत् । विज्ञात विदित ब्रह्म अविजानतामसम्यग्दर्शिनामिन्द्रियमनोबुद्धिष्वेवाऽऽत्मदर्शिनामित्यर्थ., न त्वत्यन्तमेवाव्युत्पन्नबुद्धीनाम् । न हि तेषा विज्ञातमस्माभिर्ब्रह्मेति मतिर्भवति । इन्द्रियमनोबुद्ध्युपाधिष्वात्मदर्शिनां तु ब्रह्मोपाधिविवेकानुपलम्भात् बुद्ध्याद्युपाधेश्च विज्ञातत्वाद्विदित ब्रह्मेत्युपपद्यते भ्रान्तिरित्यतोऽसम्यग्दर्शनपूर्वपक्षत्वेनोपन्यस्यते विज्ञातमविजानतामिति । अथवा हेत्वर्थ उत्तरार्धोऽविज्ञातमित्यादिः । शकर.

( २ ) यो न इत्यादिना साकल्येन श्रवणागोचरत्वमुक्त्वा मननागोचरत्व चाऽऽह—यस्येति । यस्य ब्रह्माऽमतमिति मत, तस्य पुसो मत विचारित, अनन्तत्वज्ञानात् । यस्य ब्रह्म मया मत विचारितमिति मत बुद्धि., स न वेद, अनन्तत्वाज्ञानात् । साक्षात्कारोऽपि न साकल्येनेत्याह — अविज्ञातमित्यादिना । वय ब्रह्म सम्यक्साक्षात्कृतवन्त इति विजानतामविज्ञात ब्रह्म । आनन्त्याद्ब्रह्मणः साकल्येन ज्ञानाभावात् । अविजानतामुक्तरीत्याऽविजानता नास्माभिर्ब्रह्म सम्यक्साक्षात्कृतमिति यावत् । विज्ञात ब्रह्म साक्षात्कृतमित्यर्थ॰ । आनन्त्यवेदनादिति भावः । रग.

अमृतत्वहेतु विद्या

प्रतिबोधविदित मतममृतत्वं हि विन्दते ।
आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥

( १ ) अविज्ञात विजानतामित्यवधृतम् । यदि ब्रह्म अत्यन्तमेव अविज्ञात, लौकिकाना ब्रह्मविदा चाविशेष प्राप्त॰ । अविज्ञात विजानतामिति च परस्परविरुद्धम् । कथ तु तद्ब्रह्म सम्यक् विदित भवतीत्येवमर्थमाह — प्रतिबोधविदित बोध बोध प्रति विदितम् । बोधशब्देन बौद्धा॰ प्रत्यया उच्यन्ते । सर्वे प्रत्यया विषयीभवन्ति यस्य स आत्मा सर्वबोधान्प्रतिबुध्यते सर्वप्रत्ययदर्शी चिच्छक्तिस्वरूपमात्र. प्रत्ययैरेव प्रत्ययेष्वविशिष्टतया लक्ष्यते, नान्यत् द्वारमात्मनो विज्ञानाय, अत॰ प्रत्ययप्रत्यगात्मतया विदित ब्रह्म यदा, तदा तन्मत, तदा तत्सम्यग्दर्शनमित्यर्थः । अमृतत्वममरणभाव स्वात्मन्यवस्थान मोक्ष हि यस्माद्विन्दते लभते यथोक्तात्प्रतिबोधात्प्रतिबोधविदितात्मकात् तस्मात्प्रतिबोधविदितमेव मतमित्यभिप्रायः । कथ पुनर्यथोक्तयाऽऽत्मविद्ययाऽमृतत्व विन्दते इत्यत आह —आत्मना स्वेन स्वरूपेण विन्दते लभते वीर्यं बल सामर्थ्यम् । धनसहायमन्त्रौषधितपोयोगकृत वीर्यं मृत्यु न शक्नोत्यभिभवितुमनित्यवस्तुकृतत्वात् । आत्म-

*नाह अन्ये इति छेद । नाहमिति पूर्वान्वयि ।

(१) केड २।३, रामानुज १।१।१ ( पृ १४, ६२ ), वल्लभ ३।२।११, विज्ञान १।१।५ (पृ १३७ )

(१) केड २।४

विद्याकृत तु वीर्यं आत्मनैव विन्दते नान्येनेत्यतोऽनन्य साधनत्वादात्मविद्यावीर्यस्य तदेव वीर्यं मृत्यु शक्नोत्यभिभवितुम्। यत एवमात्मविद्याकृत वीर्यमात्मनैव विन्दते अतः विद्यया आत्मविषयया विन्दतेऽमृत, 'नायमात्मा बलहीनेन लभ्य' इत्याथर्वणे। अत. समर्थो हेतु' अमृतत्व हि विन्दत इति। शकर

( २ ) आत्मज्ञानेन किममृतत्वमुत्पाद्यते । न। कथ तर्हि। आत्मना विन्दते स्वेनैव नित्यात्मस्वभावेनामृतत्व विन्दते, नालम्बनपूर्वकम्। विन्दते इत्यात्मविज्ञानापेक्षम्। यदि हि विद्योत्पाद्यममृतत्व स्यादनित्य भवेत्कर्मकार्यवत्। अतो न विद्योत्पाद्यम्। यदि चाऽऽत्मनैवामृतत्व विन्दते, किं पुनर्विद्यया क्रियत इत्युच्यते। अनात्मविज्ञान निवर्तयन्ती सा तन्निवृत्त्या स्वाभाविकस्यामृतत्वस्य निमित्तमिति कल्प्यते । यत आह वीर्यं विद्यया विन्दते। वीर्यं सामर्थ्यमनात्माध्यारोपमायास्वान्तध्वान्तानभिभाव्यलक्षण बल विद्यया विन्दते। तच्च किंविशिष्टम् । अमृतमविनाशि। अथवा प्रतिबोधविदित मतमिति सकृदेवाशेषविपरीतनिरस्तसस्कारेण स्वप्नप्रतिबोधवद्यद्विदित तदेव मत ज्ञात भवतीति। अथवा गुरूपदेश प्रतिबोधस्तेन वा विदित मतमिति। उभयत्र प्रतिबोधशब्दप्रयोगोऽस्ति, सुप्तप्रतिबुद्ध', गुरुणा प्रतिबोधित इति।

वाक्यभा.

( ३ ) ब्रह्मणः साकल्येनाज्ञेयत्वे कथ तेनेष्टसिद्धिरिति चेत्स्वस्य योग्यैकदेशज्ञानादेवेष्टसिद्धिरित्याह—प्रतिबोधेत्यत्र श्रुतमिति शेष: । स्वस्य ब्रह्मविद्यया योग्यतानुसारेण पुम्भि. श्रुत मत ब्रह्म प्रतिबोधेन स्वयोग्यापरोक्षज्ञानेन विदित चेदमृतत्व मुक्तिं विन्दते लभते पुमान् इति वा, प्रतिबोधेनोपासनरूपया कयाचिद्ब्रह्मविद्यया विदित साक्षात्कृत ब्रह्म विन्दते लभत इति वा अर्थ'। आत्मना धृत्या वीर्यं समाहितमनस्त्वलक्षण विन्दते लभते। विद्यया उपासनरूपया । भक्त्येति यावत्। अमृत परमात्मान विन्दते लभते, साक्षात्करोतीति यावत्। 'भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूप परिपश्यतीह' इति स्मृतेः।

रग.

इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः।
भूतेषु भूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥

( १ ) कष्टा खलु सुरनरतिर्यक्प्रेतादिषु ससारदु.खबहुलेषु प्राणिनिकायेषु जन्मजरामरणरोगादिसप्राप्तिरज्ञानात्, अतः इहैव चेन्मनुष्योऽधिकृत समर्थ सन्यद्यवेदीदात्मान यथोक्तलक्षण विदितवान्यथोक्तेन प्रकारेण । अथ तदस्ति सत्य मनुष्यजन्मन्यस्मिन्नविनाश, अर्थवत्ता वा, सद्भावो वा, परमार्थता वा, सत्य विद्यते। न चेदिहावेदीदिति। न चेदिह जीवश्चेदधिकृतोऽवेदीत् न विदितवांस्तदा महती दीर्घाऽनन्ता विनष्टिर्विनाशन जन्मजरामरणादिप्रबन्धाविच्छेदलक्षणा ससारगति । तस्मादेव गुणदोषौ विजानन्तो ब्राह्मणा भूतेषु भूतेषु सर्वभूतेषु स्थावरेषु चरेषु च एकमात्मतत्त्व ब्रह्म विचित्य विज्ञाय साक्षात्कृत्य धीरा धीमन्त प्रेत्य व्यावृत्य ममाहभावलक्षणादविद्यारूपादस्माल्लोकादुपरम्य सर्वात्मैकभावमद्वैतमापन्नाः सन्तोऽमृता भवन्ति, ब्रह्मैव भवन्तीत्यर्थ । 'स यो ह वै तत्परम ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतेः। शकर.

( २ ) इह ज्ञानयोग्यब्राह्मणादिदेहे अवेदीच्चेत् व्यजानाच्चेत् अथ तर्हि सत्य पूर्वोक्तफल सत्यममृतब्रह्म अस्त्येव, तत्प्राप्तौ न सदेह इति भाव.। अथ प्रतिबोध वक्ति—धीराः ब्रह्मप्राप्तिविनष्टिविवेकिनो भूतेषु सर्वभूतेषु स्थित ब्रह्म विचिन्त्य आप्रयाण स्मृत्वा। * रग.

सर्वजयपराजयहेतु देवाना प्रशास्तृ देवैरपि असुविज्ञेय यक्ष ब्रह्म ( आख्यानसहितम् )

४।१०।३

ब्रह्म[२] ह देवेभ्यो विजिग्ये। तस्य ह ब्रह्मणो विजये देवा अमहीयन्त। त ऐक्षन्तास्माकमेवाय विजयोऽस्माकमेवाय महिमेति ॥

---

* शेष शंकरवत्।

(१) केउ २।५, रग विचित्य ( विचिन्त्य ), Dr Oertel विचित्य ( विविच्य )

(२) केउ ३।१, रग तस्य ( अथ तस्य ), मध्व. रंगवत्

( १ ) ब्रह्म ह देवेभ्यो विजिग्ये । ‘ अविज्ञात विजानता विज्ञातमविजानताम् ’ इत्यादिश्रवणाद्यदस्ति तद्विज्ञात प्रमाणै., यन्नास्ति तदविज्ञात शशविषाणकल्पमत्यन्तमेवासद्दृष्टम् । तथेद ब्रह्माविज्ञातत्वादसदेवेति मन्दबुद्धीना व्यामोहो मा भूदिति तदर्थेयमाख्यायिका आरभ्यते । तदेव हि ब्रह्म सर्वप्रकारेण प्रशास्तृ देवाना मपि परो देव ईश्वराणामपीश्वरो दुर्विज्ञेयो देवाना जयहेतुरसुराणां पराजयहेतु', तत्कथ नास्ती येतस्यार्थस्यानुकूलानि ह्युत्तराणि वचासि दृश्यन्ते । अथवा, ब्रह्मविद्याया स्तुतये । कथ, ब्रह्मविज्ञानाद्ध्यग्न्यादयो देवा देवाना श्रेष्ठत्व जग्मु. ततोऽप्यतितरामिन्द्र इति । अथवा, दुर्विज्ञेय ब्रह्मेत्येतत्प्रदर्श्यते । येनाग्न्यादयोऽतितेजसोऽपि क्लेशेनैव ब्रह्म विदितवन्त , तथेन्द्रो देवानामीश्वरोऽपि सन्निति । वक्ष्यमाणोपनिषद्विधिपर वा सर्वम् । ब्रह्मविद्याव्यतिरेकेण प्राणिना कर्तृत्वाद्यभिमानो मिथ्येत्येतद्दर्शनार्थे वा आख्यायिका, यथा देवाना जयाद्यभिमानस्तद्वदिति । ब्रह्म यथोक्तलक्षण पर ह किल देवेभ्यो अर्थाय विजिग्ये जय लब्धवत्, देवानामसुराणा च सग्रामेऽसुरान् जित्वा जगदरातीनीश्वरसेतुभेत्तॄन् देवेभ्यो जय तत्फल च प्रायच्छज्जगतः स्थेम्ने । तस्य ह किल ब्रह्मणो विजये देवा अग्न्यादय अमहीयन्त महिमान प्राप्तवन्त' । तदा आत्मसस्थस्य प्रत्यगात्मन ईश्वरस्य सर्वज्ञस्य सर्वक्रियाफलसयोजयितु. प्राणिना सर्वशक्तेर्जगत. स्थितिं चिकीर्षोरय जयो महिमा चेत्यजानन्तस्ते देवा ऐक्षन्त ईक्षितवन्त' अग्न्यादिस्वरूपपरिच्छिन्नात्मकृतोऽस्माकमेवाय विजयोऽस्माकमेवाय महिमा अग्निवाय्विन्द्रत्वादिलक्षणो जयफलभूतोऽस्माभिरनुभूयते, नास्मत्प्रत्यगात्मभूतेश्वरकृत इति । शकर.

( २ ) अत्यद्भुतत्वात्साकल्येन न ज्ञेयमिति प्रतिपादितेऽर्थे काचनाऽऽख्यायिका वक्ति —— हेति निश्चितमेतदित्यर्थः । अथ विजयानन्तरम् । अमहीयन्त अपूज्यन्त । गार्विणोऽभवन्निति भावः । हेत्याश्चर्ये ।

* रग.

( ३ ) ‘ इत्यत्राऽऽख्यायिका वच्मि शृणु ता त्व महेश्वर । स्थित्वा देवेषु तद्ब्रह्म व्यजयद्दैत्यदानवान् । देवेभ्योऽर्थाय विजय त देवा मेनिरे स्वकम् । आविष्टा असुरैस्तेषा प्रबोधाय जनार्दन' । यक्षरूप प्रादुरभूदुमाशिवसमन्वित । ब्रह्मणा चैव सहित एतेभ्योऽपि परो ह्यहम् । एतेऽपि मे भृत्यभूताः परिवार्य व्यवस्थिताः । इति ज्ञापयितु विष्णु सह तैरप्युपागत । यूयमेतानपि ज्ञातुमशक्ता किमु मामिति । तज्ज्ञानार्थं हुताशश्च नासिक्यो वायुरेव च । इन्द्रश्च क्रमशो जग्मुस्त ज्ञातु नैव चाशकन् । तत्रेन्द्रोऽधिकबुद्धित्वात्पृच्छतीति जनार्दन' । मत्त' शिवाद्ब्रह्मणश्च श्रोतु नैवापि शक्तिमान् । इति ज्ञापयितु तत्र नादृश्यत स केशव. । एषैव ज्ञानदाने ते योग्यो मेति व्यदर्शयत् ॥'

* मध्व

* शेष शकरेण गतार्थम् ।

**तद्धैषा विजज्ञौ । तेभ्यो ह प्रादुर्बभूव । तन्न व्यजानत किमिदं यक्षमिति ॥**

( १ ) एव मिथ्याभिमानेक्षणवता तद्ध किलैषा मिथ्येक्षण विजज्ञौ विज्ञातवद्ब्रह्म । सर्वेक्षितृ हि तत्सर्वभूतकरणप्रयोक्तृत्वाद्देवानां च मिथ्याज्ञानमुपलभ्य मैवासुरवद्देवा मिथ्याभिमानात्पराभवेयुरिति तदनुकम्पया देवान् मिथ्याभिमानापनोदनेन अनुगृह्णीयामिति तेभ्यो देवेभ्यो ह किल अर्थाय प्रादुर्बभूव, स्वयोगमाहात्म्यनिर्मितेनात्यद्भुतेन विस्मापनीयेन रूपेण देवानामिन्द्रियगोचरे प्रादुर्बभूव । तत्प्रादुर्भूत ब्रह्म न व्यजानत नैव विज्ञातवन्तो देवाः किमिद यक्ष पूज्य महद्भूतमिति । शकर.

(२) यक्षरूपतया प्रादुर्बभूव ब्रह्मेत्यर्थ' । ‡ रग.

**[२]तेऽग्निमब्रुवन् । जातवेद एतद्विजानीहि किमेतद्यक्षमिति । तथेति ॥**

**तदभ्यद्रवत् । तमभ्यवदत्कोऽसीति । अग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥**

**तस्मिंस्त्वयि किं वीर्यमिति । अपीदं सर्वं दहेयम् । यदिदं पृथिव्यामिति ॥**

* तृतीयखण्डस्येद व्याख्यानम् ।

‡ शेष शकरवत् ।

(१) केउ. ३।२, Dr. Oertel जानत (जानन्त).

(२) केउ ३।३—६, Dr Oertel नैतद ( नैनद ), विज्ञान. २।३।४१ ( यदिद पृथिव्यां० )

तस्मै तृणं निदधौ । एतद्दहेति । तदुपप्रेयाय सर्वजवेन । तन्न शशाक दग्धुम् । स तत एव निववृते । नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥

(१) ते तदजानन्तो देवा सान्तर्भयास्तद्विजिज्ञासवोऽग्निमग्रगामिन जातवेदस सर्वज्ञकल्पमब्रुवन्नुक्तवन्त हे जातवेद., एतदस्मद्गोचरस्थ यक्ष विजानीहि विशेषतो बुध्यस्व त्व नस्तेजस्वी, किमेतद्यक्षमिति । तथाऽस्त्विति तद्यक्षमभ्यद्रवत् तत्प्रति गतवानग्नि । त च गतवन्त पिपृच्छिषु तत्समीपे अप्रगल्भत्वात्तूर्णींभूत तद्यक्षमभ्यवददग्निं प्रति अभाषत कोऽसीति । एव ब्रह्मणा पृष्टोऽग्निरब्रवीदग्निर्वा अग्निनामाऽह प्रसिद्धो जातवेदा इति च, नामद्वयेन प्रसिद्धतयाऽऽत्मान श्लाघयन् । इत्येवमुक्तवन्तं ब्रह्म अवोचत्, तस्मिन्नेव प्रसिद्धगुणनामवति त्वयि किं वीर्यं सामर्थ्यमिति । सोऽब्रवीत्, इद जगत्सर्वं दहेय भस्मीकुर्या, यदिद स्थावरादि पृथिव्यामिति । पृथिव्यामित्युपलक्षणार्थं, यतोऽन्तरिक्षस्थमपि दह्यत एवाग्निना । तस्मै एवमभिमानवते ब्रह्म तृण निदधौ पुरोऽग्ने· स्थापितवद्ब्रह्म, एत तृणमात्र ममाग्रतो दह, न चेदसि दग्धु समर्थ., मुञ्च दग्धृत्वाभिमान सर्वत्र, इत्युक्तस्तत्तृणमुपप्रेयाय तृणसमीप गतवान्सर्वजवेन सर्वोत्साहकृतेन वेगेन । गत्वा न शशाक नाशकद्दग्धुम् । स जातवेदास्तृण दग्धुमशक्तो व्रीडितो हतप्रतिज्ञस्तत एव यक्षादेव तूर्णीं देवान्प्रति निववृते निवृत्तः प्रतिगतवान् । नैतद्यक्षमशक शक्तवानह विज्ञातु विशेषतो यदेतद्यक्षमिति ।

शकर.

(२) तत एव तावन्मात्रत एव यक्षरूपमनवधार्य निववृते निवृत्तवान्, निवृत्य च देवानब्रवीत् ।

* रग.

अथ वायुमब्रुवन् । वायवेतद्विजानीहि किमेतद्यक्षमिति । तथेति ॥

तदभ्यद्रवत् । तमभ्यवदत्कोऽसीति । वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति ॥

तस्मिंस्त्वयि किं वीर्यमिति । अपीदं सर्वमाददीय । यदिदं पृथिव्यामिति ॥

तस्मै तृणं निदधौ । एतदादत्स्वेति । तदुपप्रेयाय सर्वजवेन । तन्न शशाकाऽऽदातुम् । स तत एव निववृते । नैतदशक विज्ञातु यदेतद्यक्षमिति ॥

अथ वायुमिति । अथानन्तर वायुमब्रुवन् हे वायो, एतद्विजानीहीत्यादि समानार्थं पूर्वेण । वानाद्गमनाद्गन्धनाद्वा वायु । मातरि अन्तरिक्षे श्वयतीति मातरिश्वा । इद सर्वमप्याददीय गृह्णीयाम् । यदिद पृथिव्यामित्यादि समानमेव । शकर.

अथेन्द्रमब्रुवन् । मघवन्नेतद्विजानीहि किमेतद्यक्षमिति । तथेति तदभ्यद्रवत् तस्मात्तिरोदधे । स तस्मिन्नेवाऽऽकाशे । स्त्रियमाजगाम बहुशोभमानामुमा हैमवतीम् । ता होवाच किमेतद्यक्षमिति ॥

(१) अथेन्द्रमिति । अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहीत्यादि पूर्ववत् । इन्द्र· परमेश्वरो मघवा बलवत्त्वात् तथति तदभ्यद्रवत् । तस्मादिन्द्रादात्मसमीप गताच्च ब्रह्म तिरोदधे तिरोभूतमिन्द्रस्येन्द्रत्वाभिमानोऽतितरां निराकर्तव्य इति, अतः सवादमात्रमपि नादाद्ब्रह्मेन्द्राय । तद्यक्ष यस्मिन्नाकाशे आकाशप्रदेशे आत्मान दर्शयित्वा तिरोभूत, इन्द्रश्च ब्रह्मणस्तिरोधानकाले यस्मिन्नाकाशे आसीत्, स इन्द्रस्तस्मिन्नेवाऽऽकाशे तस्थौ । किं तद्यक्षमिति ध्यायन्न निववृते अग्न्यादिवत् । तस्येन्द्रस्य यक्षे भक्तिं बुद्ध्वा विद्या उमारूपिणी प्रादुरभूत्स्त्रीरूपा । स इन्द्रस्तामुमा बहुशोभमानां सर्वेषां हि शोभमानानां शोभनतमां विद्याम् । तदा बहुशोभमानेति विशेषणमुपपन्न भवति । हैमवतीं हेमकृताभरणवतीमिव बहुशोभमानामित्यर्थः । अथवा, उमैव हिमवतो दुहिता हैमवती नित्यमेव सर्वज्ञेनेश्वरेण सह वर्तते इति ज्ञातु समर्थेति कृत्वा तामुपजगाम । इन्द्रस्ता ह उमा किल उवाच पप्रच्छ, ब्रूहि किमेतद्दर्शयित्वा तिरोभूत यक्षमिति । शकर.

(२) स शान्ताभिमान इन्द्रोऽत्यर्थं ब्रह्म विजिज्ञासुर्यस्मिन्नाकाशे ब्रह्मण: प्रादुर्भाव आसीत् तिरोधान च,

---

* शेष शकरेण गतार्थम् ।

(१) केड ३।७—१०, Dr Oertel नैतद (नैनद)

(१) केड. ३।११, १२.

तस्मिन्नेव स्त्रियमतिरूपिणी विद्यामाजगाम ।

वाक्यभा

( ३ ) स इन्द्रस्तस्मिन्नेव यक्षतिरोधानाकाशप्रदेशे यक्षेणोपदेशार्थं स्थापिता स्त्रिय दृष्ट्वा आजगाम तत्समीप प्राप्तवान् । सा केत्यत उक्त—बहुशोभमाना हैमवतीं हिमवत पुत्रीम् । एतद्यक्ष किमिति ता स्त्रियमुवाच पप्रच्छेत्यर्थ ।

रग

४।१०।४

सा ब्रह्मेति होवाच । ब्रह्मणो वा एतद्विजये महीयध्वमिति । ततो हैव विदाचकार ब्रह्मेति ॥

( १ ) सा ब्रह्मेति होवाच । ट किल ब्रह्मण ईश्वरस्यैव विजये, ईश्वरेणैव जिता असुरा । यूय तत्र निमित्तमात्र, तस्यैव विजये यूय महीयध्व महिमान प्राप्नुथ । एतदिति क्रियाविशेषणार्थम् । मिथ्याभिमानस्तु युष्माकमत, अस्माकमेवाय विजयो ऽस्माकमेवाय महिमेति । ततस्तस्मादुमावाक्याद्धैव विदाचकार ब्रह्मेतीन्द्र । अवधारणात्ततो हैवेति न स्वातन्त्र्येण ।

शकर.

( २ ) एतदेतस्य देवेष्वनुप्रविष्टस्य । ब्रह्मेति दैत्य विजयोऽस्मदनुप्रविष्टब्रह्मकृत इति विदाचकार ज्ञात वान् । * रग

( ३ ) ‘उमा सा सम्यगाचष्ट तस्मै विष्णु पर पदम् । यस्माद्ब्रह्मा च वायुश्च शेषवीन्द्रौ शिवस्तथा । सभार्या गर्विणो नासन्सुरेभ्यस्तेऽधिकास्तत. । इन्द्रस्तु प्रथम ब्रह्म व्यजानात्तेन तूत्तम । दक्षादिभ्यस्तथा कामस्तज्ज्ञातु पूर्वमुक्तवान् । दक्षो बृहस्पतिश्चैव मनु कामात्मजस्तथा । सूर्याचन्द्रमसौ धर्मो वरुणश्चोचुरोमिति । नासिक्यवायुरग्निश्च प्रथम तदपश्यताम् । सर्वदेवाधिकास्तस्मादेते देवा प्रकीर्तिता । एतेभ्यश्चेन्द्रकामौ तु ताभ्या ब्रह्मादयोऽधिका । एतेषामवमो वह्नि परमो विष्णुरुच्यते । अन्तराले स्थितास्त्वन्ये ब्रह्माद्या· पूर्वमीरिता· । अग्नि. पश्चाद्व्यजानात्तदिन्द्रवाक्यात्ततोऽवम । तस्माद्विष्णवभिसबन्धात्पारावर्यं सुरेष्विदम् ॥’ ‡ मध्व.

तस्माद्वा एते देवा अतितरामिवान्यान्देवान् । यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठ पस्पृशु । ते ह्येनत्प्रथमो विदाचकार ब्रह्मेति ॥

( १ ) यस्मादग्निवाय्विन्द्रा एते देवा ब्रह्मण· सवाददर्शनादिना सामीप्यमुपगता, तस्मादैश्वर्यगुणैरतितरामिव शक्तिगुणादिमहाभा यैरन्यान्देवानतितरामतिशयेन शेरत इवैते देवा । इवशब्दोऽनर्थकोऽवधारणार्थो वा । यदग्निर्वायुरिन्द्रस्ते हि देवा यस्मादेनद्ब्रह्म नेदिष्ठमन्तिकतम प्रियतम पस्पृशु. स्पृष्टवन्तो यथोक्तैर्ब्रह्मण: सवादादिप्रकारै । ते हि यस्माच्च हेतोरेनद्ब्रह्म प्रथमः प्रथमा प्रधाना सन्त इत्येतत्, विदाचकार विदाचक्रुरित्येतत्, ब्रह्मेति । शकर

( २ ) ते हि प्रथम· प्रथम विदाचकार विदाचक्रुरित्येतत् । वाक्यभा.

( ३ ) स्पृश सस्पर्शने । परामर्शं कृतवन्त इत्यर्थ. । परमर्शात्प्रागग्निवाय्वोर्यक्षदर्शनमात्र, इन्द्रस्य तु यक्षस्य ब्रह्मत्वज्ञानमिति बोध्यम् । प्रथम प्रथमम् ।

* रग

तस्माद्वा इन्द्रोऽतितरामिवान्यान्देवान् । स ह्येनन्नेदिष्ठ पस्पर्श स ह्येनत्प्रथमो विदाचकार ब्रह्मेति ॥

यस्मादग्निवायू अपीन्द्रवाक्यादेव विदाचक्रतु, इन्द्रेण ह्युमावाक्यात्प्रथम श्रुत ब्रह्म, इत्यतस्तस्माद्वा इन्द्रोऽतितरामतिशयेन शेत इवान्यान्देवान् । स ह्येनन्नेदिष्ठ पस्पर्श यस्मात्, स ह्येनत्प्रथमो विदाचकार, ब्रह्मेत्युक्तार्थं वाक्यम् । † शकर.

ब्रह्मण विद्युद्रूपेण निमेषविषयत्वेन च उपासनम्

तस्यैष आदेश. । यदेतद्विद्युतो व्यद्युतदा३ इतीन्न्यमीमिषदा३ इत्यधिदैवतम् ॥

* शेष शकरवत् ।

(१) केड ४११, रग ( सा० ), मध्व रगवत्

‡ तृतीयच्छेदान्तस्येद व्याख्यानम् ।

: शेष शकरवत् ।

† रग शकरेण गतार्थम् ।

(१) केड ४१२, Dr Oertel पस्पृशु (पस्पर्श स)

(२) केड ४१३ (३) केड ४१४.

( १ ) तस्य प्रकृतस्य ब्रह्मण एष आदेश उपमोपदेशो निरुपमस्य ब्रह्मणो येनोपमानेनोपदेश. सोऽयमादेश इत्युच्यते। किं तत्, यदेतत्प्रसिद्ध लोके विद्युतो व्यद्युतत्, विद्योतन कृतवदित्येतदनुपपन्नमिति विद्युतो विद्योतनमिति कल्प्यते। आ इत्युपमार्थे। विद्युतो विद्योतनमिवेत्यर्थ.। 'यथा सकृद्विद्युतम्' इति श्रुत्यन्तरे च दर्शनात्। विद्युदिव हि सकृदात्मान दर्शयित्वा तिरोभूत ब्रह्म देवेभ्यः। अथवा, विद्युतस्तेज इत्यध्याहार्यम्। व्यद्युतद्विद्योतितवत्, आ इव। विद्युतस्तेजः सकृद्विद्योतितवदिवेत्यभिप्राय । इतिशब्द आदेशप्रतिनिर्देशार्थः, इत्ययमादेश इति। इच्छब्द· समुच्चयार्थः। अय चापरस्तस्याऽऽदेश । कोऽसौ, न्यमीमिषत्। यथा चक्षुर्न्यमीमिषन्निमेष कृतवत्। स्वार्थे णिच् । उपमार्थ एवाऽऽकार । चक्षुषो विषय प्रति प्रकाशतिरोभाव इव चेत्यर्थ.। इत्यधिदैवत देवताविषय ब्रह्मण उपमानदर्शनम्। शाकर.

( २ ) तस्यैष आदेशस्तस्य ब्रह्मण एष वक्ष्यमाण आदेश उपासनोपदेश इत्यर्थः। व्यद्युतदिवेत्युपास्यम्। इतीदित्यनर्थकौ निपातौ। वाक्यभा.

( ३ ) अधिदैवतमध्यात्म चोपास्यरूपमुदिपशति—तस्यैष इत्यादिना। तस्य ब्रह्मण एष आदेश उपदेशः। यदेतत्कपिलाख्य रूपम् । विद्युतः, बहुवचनमाद्यर्थे, उपलक्षण वा। विद्युदादींस्तेजोरूपानर्थान् आसमन्ताद्व्यद्युतद्व्यद्योतयददीपयदिति। आ न्यमीमिषत्सम्यङ्न्यमीमिषत्सम्यग्न्यमीलयत्। आ, पूर्णमित्यर्थः। * रग

( ४ ) 'व्यद्योतयद्विद्युदादीन् कपिलाख्यस्तु यो हरिः। अक्ष्णोर्निमेषण कृत्वा यः शेते क्षीरसागरे । स एवैक. पर ब्रह्मेत्येव तस्योपदेशनम्। अधिदैवे—॥' मध्व.

ब्रह्मण मनोगतिकरत्वेन सकल्पकरत्वेन चोपासनम्

अथाध्यात्मम्। यदेतद्गच्छतीव च मन.। अनेन चैतदुपस्मरति। अभीक्ष्ण सकल्पः॥

( १ ) अथानन्तरमध्यात्म प्रत्यगात्मविषय आदेश उच्यते। यदेतद्गच्छतीव च मन एतद्ब्रह्म ढौकत इव विषयीकरोतीव। यथाऽनेन मनसैतद्ब्रह्मोपस्मरति समीपतः स्मरति साधक.। अभीक्ष्ण भृश, सकल्पश्च मनसो ब्रह्मविषय । मनउपाधिकत्वाद्धि मनस. सकल्पस्मृत्यादिप्रत्ययैरभिव्यज्यते ब्रह्म विषयीक्रियमाणमिव च । अत स एव ब्रह्मणोऽध्यात्ममादेश. । विद्युन्निमेषणवदधिदैवत द्रुत प्रकाशनधर्मि, अध्यात्म च मन·प्रत्ययसमकालाभिव्यक्तधर्मीत्येष आदेश । एवमादिश्यमान हि ब्रह्म मन्दबुद्धिगम्य भवतीति ब्रह्मण आदेशोपदेश । न हि निरुपाधिकमेव ब्रह्म मन्दबुद्धिभिराकलयितु शक्यम्। शाकर.

( २ ) अभीक्ष्ण पुनः पुनश्च सकल्पो ब्रह्मप्रेषितस्य मनस.। अत उपस्मरणसकल्पादिभिर्लिङ्गैर्ब्रह्म मनआद्यात्मभूतमुपास्यमित्यभिप्राय ।

वाक्यभा.

( ३ ) अथेत्यर्थान्तरे। अध्यात्म देहे तस्योपदेश उच्यत इत्यर्थ.। यदेतन्मनोऽनेनैव प्रेरित सद्गच्छतीव च सम्यङ् न गच्छति इयत्तया वस्तु न विषयीकरोति । अनेनैव ब्रह्मणाऽनिरुद्धाख्येन हरिणाऽनुगृहीतस्तद्विषयजातमुपस्मरति । कीदृश मन इत्यत उक्तम्—अभीक्ष्ण सकल्प इति। भृशमनेकार्थान् सकल्पयतीति । सकल्पमित्यर्थ.। लिङ्गव्यत्ययश्छान्दस, शब्दस्वभावाद्वा । अभीक्ष्ण नित्य भृश सकल्पश्च भवति। तस्य ब्रह्मणोऽनिरुद्धाख्यस्य हरेरेष उपदेश इत्यर्थः। रग.

( ४ ) 'तथाध्यात्मे य मनो गच्छतीव च। सम्यङ्न गच्छति क्वापि मनो येन स्मरत्यपि। सोऽनिरुद्धाख्य ईशेशः पर ब्रह्मेति कीर्त्यते॥' मध्व.

तद्ध तद्वन नाम। तद्वनमित्युपासितव्यम्। स य एतदेवं वेद । अभि हैनं सर्वाणि भूतानि संवाञ्छन्ति॥

( १ ) किंच तत् ब्रह्म ह किल तद्वन नाम, तस्य वन तद्वन तस्य प्राणिजातस्य प्रत्यगात्मभूतत्वाद्वन-

* 'यद्वा' इत्युपक्रम्य वाक्यभावदपि।

(१) केउ ४।५, Dr Oertel यदेत (यदेव) चैतदु (चैनदु)

(१) केउ. ४।६.

नीय सभजनीयमतस्तद्वन नाम प्रख्यात ब्रह्म। तद्वनमिति यतस्तस्मात्तद्वनमित्यनेनैव गुणाभिधानेनोपासितव्य चिन्तनीयमिति। अनेन नाम्नोपासकस्य फलमाह—स य कश्चिदेतद्यथोक्त ब्रह्मैव यथोक्तगुण वेदोपास्ते, अभि हैनमुपासक सर्वाणि भूतान्यभिसवाञ्छन्ति ह प्रार्थयन्त एव, यथा ब्रह्म। शकर

( २ ) तच्च तद्वन च, तत्परोक्ष, वन सभजनीयम्। अभिसवाञ्छन्तीहाभिसभजन्ते सेवन्ते स्म (?) इत्यर्थ। वाक्यभा

( ३ ) तद्ब्रह्म तद्वन नाम तत्वाद्यासत्वात्, वननीयत्वात् भजनीयत्वात् तद्वनमिति कल्याणनिमित्तकनामवत्। तच्च तद्वन चेति तद्वनामिति। हेति प्रसिद्धम्। * रग

( ४ ) 'स विष्णुस्तद्वन नाम ततत्वाद्वननीयत। एवमेन तु यो वेद भवेत्सर्वैरपेक्षित॥' मध्व

ब्राह्मी उपनिषत्, तद्वनत्वेन ब्रह्मण उपासन, उपनिषद प्रतिष्ठाद्यायतनानि

**उपनिषद भो ब्रूहीति। उक्ता त उपनिषत्। ब्राह्मी वाव त उपनिषदमब्रूमेति॥**

( १ ) एवमनुशिष्ट शिष्य आचार्यमुवाच—उपनिषद रहस्य यच्चिन्त्य, भो भगवन्ब्रूहीति। एवमुक्तवति शिष्ये आहाऽऽचार्य—उक्ता अभिहिता ते तव उपनिषत्। का पुन सेत्याह—ब्राह्मीं ब्रह्मण परमात्मन इय, ता, परमात्मविषयत्वादतीतविज्ञानस्य, वाव एव त उपनिषदमब्रूमेति। उक्तामेव परमात्मविद्यामुपनिषदमब्रूमेत्यवधारयत्युत्तरार्थम्। शकर

( २ ) उपनिषद भो ब्रूहीत्युक्तायामप्युपनिषदि शिष्येणोक्त आचार्य आह—उक्ता कथिता ते तुभ्यमुपनिषदात्मोपासन च। अधुना ब्राह्मीं वाव ते तुभ्य ब्रह्मणो ब्राह्मणजातेरुपनिषदमब्रूम वक्ष्याम इत्यर्थ। वक्ष्यति हि ब्राह्मी, नोक्ता। उक्ता त्वात्मोपनिषत्। तस्मान्न भूताभिप्रायोऽब्रूमेत्यय शब्द। वाक्यभा.

( ३ ) किमुपनिषत्प्रतिपाद्य पृच्छसि, उत उपनिषदुत्पन्नविद्याया अवस्थानकारण, कि वा विद्याया कारणमिति हृदि विकल्प्य क्रमेणोत्तरमाह—उक्ता त इति। † रग.

( ४ ) 'एतच्छ्रुत्वा हरोऽपृच्छद्ब्रह्माण पुनरेव तु। विद्याकार मम ब्रहीत्युक्तो ब्रह्माह त पुन। विद्यावेद्य तव प्रोक्तम्—॥' मध्व

**तस्यै तपो दम कर्मेति प्रतिष्ठा। वेदा सर्वाङ्गानि। सत्यमायतनम्॥**

( १ ) यामिमा ब्राह्मीमुपनिषद तवाग्रेऽब्रूमेति तस्यै तस्या उक्ताया उपनिषद प्राप्त्युपायभूतानि तपआदीनि। तप कायेन्द्रियमनसा समाधानम्। दम उपशम। कर्म अग्निहोत्रादि। एतैर्हि सस्कृतस्य सत्त्वशुद्धिद्वारा तत्त्वज्ञानोत्पत्ति। दृष्टा ह्यमृदितकल्मषस्योक्तेऽपि ब्रह्मण्यप्रतिपत्तिविपरीतप्रतिपत्तिश्च, यथेन्द्रविरोचनप्रभृतीनाम्। तस्मादिह वा अतीतेषु वा बहुषु जन्मान्तरेषु तपआदिभि कृतसत्त्वशुद्धेर्ज्ञान समुत्पद्यते यथाश्रुतम्। इतिशब्द उपलक्षणप्रदर्शनार्थ। इत्येवमाद्यन्यदपि ज्ञानोत्पत्तेरुपकारकममानित्वमदम्भित्वमित्याद्युपदर्शित भवति। प्रतिष्ठा पादौ पादाविवास्या। तेषु हि सत्सु प्रतितिष्ठति ब्रह्मविद्या प्रवर्तते पद्भ्यामिव पुरुष। वेदाश्चत्वार सर्वाणि चाङ्गानि शिक्षादीनि षट्। कर्मज्ञानप्रकाशकत्वाद्वेदानां, तद्रक्षणार्थत्वादङ्गाना प्रतिष्ठात्वम्। अथवा, प्रतिष्ठाशब्दस्य पादरूपकल्पनार्थत्वाद्वेदास्त्वितराणि सर्वाङ्गानि शिरआदीनि। अस्मिन्पक्षे शिक्षादीना वेदग्रहणेन ग्रहण कृत प्रत्येतव्यम्। अङ्गिनि गृहीतेऽङ्गानि गृहीतान्येव भवन्ति, तदायतनत्वादङ्गानाम्। सत्यमायतन, यत्र तिष्ठत्युपनिषत्तदायतनम्। सत्यमिति अमायिता अकौटिल्य वाङ्मनकायानाम्। तेषु ह्याश्रयति विद्या ये अमायाविन साधव, नासुरप्रकृतिषु मायाविषु। 'न येषु जिह्ममनृत न माया च' इति श्रुते। तस्मात्सत्यमायतनमिति कल्प्यते। तपआदिष्वेव प्रतिष्ठात्वेन प्राप्तस्य सत्यस्य पुनरायतनत्वेन ग्रहण साधनातिशयत्वज्ञापनार्थम्। 'अश्वमेधसहस्र च सत्य च तुलया धृतम्। अश्व-

* शेष शकरवत्।

(१) केउ ४१७, ब्रमध्व ३।४।२७

† शेष शकरेण गतार्थम्।

(१) केउ ४१८, ब्रमध्व ३।४।२७

मेधसहस्राच्च सत्यमेक विशिष्यते ॥' इति स्मृते. ।
शकर.

( २ ) तस्या वक्ष्यमाणाया उपनिषदस्तपो ब्रह्मचर्यादि, दमः उपशम , कर्म अग्निहोत्रादीत्येतानि प्रतिष्ठा आश्रय. । एतेषु हि सत्सु ब्राह्मयुपनिषत् प्रतिष्ठिता भवति । वाक्यभा.

( ३ ) तपः कृच्छ्रचान्द्रायणादि, शास्त्रपर्यालोचन वा । दम इन्द्रियनिग्रह. । वेदा ऋगादयस्तदनुकूलग्रन्थाश्च । शिक्षा, कल्पः, व्याकरण, निरुक्त, छन्द., ज्योतिषमिति षडङ्गरूपसर्वाङ्गानि, सत्य यथाभूतमपीडाकर वचन आयतनमुत्पत्तिस्थान ब्रह्ममीमासा । तस्या इत्यनुषङ्गः । विद्याया इत्यर्थ. । * रग.

( ४ ) 'आस्थान ते वदाम्यहम् । तपोदमस्वधर्मेषु ये स्थितास्तेषु तिष्ठति । विद्या स्थानानि तस्यास्तु वेदा अङ्गानि निर्णय. ॥' मध्व

[१]यो वा एतामेव वेद । अहृपत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ॥

( १ ) यो वा एता ब्रह्मविद्या केनेषितमित्यादिना यथोक्तामेव महाभागा 'ब्रह्म ह देवेभ्य.' इत्यादि स्तुतां सर्वविद्याप्रतिष्ठा वेद । 'अमृतत्व हि विन्दते' इत्युक्तमपि ब्रह्मविद्याफलमन्ते निगमयते — अपहृत्य पाप्मान अविद्याकामकर्मलक्षण ससारबीज विधूय अनन्ते अपर्यन्ते स्वर्गे लोके सुखात्मके ब्रह्मणीत्येतत् । अनन्ते इति विशेषणान्न त्रिविष्टपे । अनन्तशब्द औपचारिकोऽपि स्यादित्यत आह — ज्येय इति । ज्येये ज्यायसि सर्वमहत्तरे स्वात्मनि मुख्ये एव प्रतितिष्ठति । न पुनः ससारमापद्यत इत्यभिप्रायः । शकर.

( २ ) प्रतितिष्ठतीतिद्विरुक्तिरुक्तसर्वावधारणार्था । § रग.

( ३ ) 'वेदैतामेवमखिल यो विष्णौ प्रतितिष्ठति' इत्यादि ब्रह्मसारे । विद्युतः सूर्यादिप्रकाशान् । आ समन्ताद्यद्युतत्प्राकाशयत् । 'यदादित्यगत तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥' इति वचनात् । 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिद विभाति' इति च । न्यमीमिषत् आसमन्तान्निमीलिताक्षमभवत् । 'स वै किलाय पुरुष पुरातनो य एक आसीदविशेष आत्मनि । अग्रे गुणेभ्यो जगदात्मनीश्वरे निमीलितात्मा निशि सुप्तशक्तिषु ।' इति वचनात् । पूर्णत्वाच्च आ' । अभीक्ष्ण सकल्प इति मनसो विशेषणम् । सकल्पकमित्यर्थ. । सप्रतिष्ठा सायतनामुपनिषद ब्रूहीत्युक्ते सम्यगेव मयोपनिषत्स्वरूपमुक्त, तत्र वक्तव्य नास्ति । तपो दम. कर्म च विद्याया. प्रतिष्ठा । तद्वत्सु विद्या प्रतितिष्ठतीत्यर्थ' । सत्यमिति मीमासा । 'निर्णीयते यत सम्यगिद सत्यमिति स्फुटम् । श्रुतिस्मृत्युदित सर्वं व्यक्त मीमासयैतया । सत्यमित्युच्यते तस्मान्मीमासा ब्रह्मनिश्चया ॥' इति शब्दनिर्णये । 'ऋग्यजुःसामाथर्वाख्याः पञ्चरात्र च भारतम् । मूलरामायण चैव पुराण भगवत्परम् । वेदा इत्युच्यते सद्भि शिक्षाद्य स्मृतयस्तथा । अङ्गानि सत्य मीमासा तद्विद्यायतन त्रयम् ॥' इति विद्यानिर्णये । मध्व.

* शेष शकरवत् ।

( १ ) केउ ४।९, ब्रमध्व ३।४।२७

§ शेष शाकरेण गतार्थम् ।

केनोपनिषत्समाप्ता ।

# तलवकारब्राह्मणोपनिषत्

प्राणरूपसृष्टि दिश

४।११।१

आशा वा इदमग्र आसीद्भविष्यदेव । तदभवत् । ता आपोऽभवन् ॥ १ ॥ तास्तपोऽतप्यन्त । तास्तपस्तेपाना हुस्सित्येव प्राची प्राश्वसन् । स वाव प्राणोऽभवत् ॥ २ ॥ ता प्राण्याऽपानन् । स वा अपानोऽभवत् ॥ ३ ॥ ता अपान्य व्यानन् । स वाव व्यानोऽभवत् ॥ ४ ॥ ता व्यान्य समानन् । स वाव समानोऽभवत् ॥ ५ ॥ ता समान्योदानन् । स वा उदानोऽभवत् ॥ ६ ॥ तदिदमेकमेव सर्वमाद्यमासीदविविक्तम् ॥ ७ ॥ स नामरूपमकुरुत । तेनैनद्व्यविनक् । वि ह पाप्मनो विच्यते य एवं वेद ॥ ८ ॥ तदसौ वा आदित्य' प्राणोऽग्निरपान आपो व्यानो दिश' समानश्चन्द्रमा उदान ॥ ९ ॥ तद्वा एतदेकमभवत्प्राण एव । स य एवमेतदेकं भवद्वेदैव हैतदेकधा भवतीत्येकधैव श्रेष्ठ स्वाना भवति ॥ १० ॥ तदग्निर्वै प्राणो वागिति पृथिवी वायुर्वै प्राणो वागित्यन्तरिक्षमादित्यो वै प्राणो वागिति द्यौर्दिशो वै प्राणो वागिति श्रोत्र चन्द्रमा वै प्राणो वागिति मन पुमान्वै प्राणो वागिति स्त्री ॥ ११ ॥ तस्येदं सृष्ट शिथिल भुवनमासीदपर्याप्तम् ॥ १२ ॥ स मनोरूपमकुरुत । तेन तत्पर्याप्नोत् । दृढ ह वा अस्येद सृष्टमशिथिल भुवनं पर्याप्त भवति य एवं वेद ॥ १३ ॥

चतुर्विधश्रीविद्या, त्रिधातुविद्या, ज्येष्ठप्राणविद्या,
ब्रह्मासन्दीविद्या, यश श्रीपरिवृढविद्या, चाक्षुष
पुरुषस्य सर्वरूपत्वविद्या

४।११।२

सैषा चतुर्धा विहिता श्रीरुद्गीथ सामाकर्यं ज्येष्ठब्राह्मणम् ॥ १ ॥ प्राणो वावोद्वाग्गी स उद्गीथ. ॥ २ ॥ प्राणो वावामो वाक् सा तत्साम ॥ ३ ॥ प्राणो वाव को वागृक् तदकर्यम् ॥ ४ ॥ प्राणो वाव ज्येष्ठो वाग्ब्राह्मण तज्ज्येष्ठब्राह्मणम् ॥ ५ ॥ उपनिषद भो ब्रूहीति । उक्ता त उपनिषद्यस्य ते धातव उक्ता । त्रिधातु त्रिषु वाव त उपनिषदमब्रूमेति ॥ ६ ॥ एतच्छुक्ल कृष्ण ताम्र सामवर्ण इति ह स्माह यदेव शुक्लकृष्णे ताम्रो वर्णोऽभ्यवैति स वै ते वृङ्क्ते दशम मानुषमिति त्रिधातु । स ऐक्षत क नु म उत्तानाय शयानायेमा देवता बलिं हरेयुरिति ॥ ७ ॥

४।११।३

स पुरुषमेव प्रपदनायाऽवृणीत ॥ १ ॥ त पुरस्तात्प्रत्यञ्च प्राविशत् । तस्मा उरुरभवत् । तदुरस उरस्त्वम् ॥ २ ॥ तस्मा अत्रसद एता देवता बलिं हरन्ति ॥ ३ ॥ वाचमनुहरन्तीमग्निरस्मै बलिं हरति ॥ ४ ॥ मनोऽनुहरच्चन्द्रमा अस्मै बलिं हरति ॥ ५ ॥ चक्षुरनुहरदादित्योऽस्मै बलिं हरति ॥ ६ ॥ श्रोत्रमनुहरद्दिशोऽस्मै बलिं हरन्ति ॥ ७ ॥ प्राणमनुहरन्त वायुरस्मै बलिं हरति ॥ ८ ॥ तस्यैते निष्खाता पन्था बलिवाहना इमे प्राणा । एवं हैत निष्खाता' पन्था बलिवाहना सर्वतोऽपियन्ति प्राणा य एवं वेद ॥ ९ ॥ सा हैषा ब्रह्मासन्दीमारूढा । आ हास्मै ब्रह्मासन्दीं हरन्त्यधि ह ब्रह्मासन्दीं रोहति य एवं वेद ॥ १० ॥ तदेतत् ब्रह्म यश श्रिया परिवृढम् । ब्रह्म ह तु सन् यशसा श्रिया परिवृढो भवति य एवं वेद ॥ ११ ॥ तस्यैष आदेशो योऽय दक्षिणेऽक्षन्नन्त. । तस्य यच्छुक्ल तदृचा रूप, यत्कृष्ण तत्साम्नां, यदेव ताम्रमिव बभ्रुरिव तद्यजुषाम् ॥ १२ ॥ य एवायं चक्षुषि पुरुष एष इन्द्र एष प्रजापति' सम पृथिव्या सम आकाशेन समो

दिवा समः सर्वेण भूतेन । एष परो दिवो दीप्यते। एष एवेद सर्वमित्युपासितव्यम् ॥ १३ ॥

षोडशकल ब्रह्म, दश स्वर्गनरकाणि, द्यावापृथिव्यो हृदयस्य च मध्य , रक्षणप्रार्थना, अग्नित्रयविद्या

४।११।४

सच्चाऽसच्चाऽसच्च सच्च वाक् च मनश्च (मनश्च) वाक् च चक्षुश्च श्रोत्र च श्रोत्र च चक्षुश्च श्रद्धा च तपश्च तपश्च श्रद्धा च तानि षोडश ॥ १ ॥ षोडशकल ब्रह्म । स य एवमेतत् षोडशकल ब्रह्म वेद तमेवैतत् षोडशकल ब्रह्माऽप्येति ॥ २ ॥ वेदो ब्रह्म तस्य सत्यमायतन शम प्रतिष्ठा दमश्च ॥ ३ ॥ तद्यथा श्व प्रैष्यन् पापात्कर्मणो जुगुप्सेतैवमेवाऽहरह पापात्कर्मणो जुगुप्सेताऽऽकालात् ॥ ४ ॥ अथैषा दशपदी विराट् ॥ ५ ॥ दश पुरुषे स्वर्गनरकाणि । तान्येन स्वर्ग गतानि स्वर्ग गमयन्ति नरक गतानि नरक गमयन्ति ॥ ६ ॥

४।११।५

मनो नरको वाङ् नरक प्राणो नरकश्चक्षुर्नरक श्रोत्र नरक त्वङ् नरको हस्तौ नरको गुद नरक शिश्न नरक पादौ नरकः ॥ १ ॥ मनसा परीक्ष्याणि वेदेति वेद ॥ २ ॥ वाचा रसान् वेदेति वेद ॥ ३ ॥ प्राणेन गन्धान् वेदेति वेद ॥ ४ ॥ चक्षुषा रूपाणि वेदेति वेद ॥ ५ ॥ श्रोत्रेण शब्दान्वेदेति वेद ॥ ६ ॥ त्वचा सस्पर्शान्वेदेति वेद ॥ ७ ॥ हस्ताभ्या कर्माणि वेदेति वेद ॥ ८ ॥ उदरेणाऽशनया वेदेति वेद ॥ ९ ॥ शिश्नेन रामान्वेदेति वेद ॥ १० ॥ पादाभ्यामध्वनो वेदेति वेद ॥ ११ ॥ प्लक्षस्य प्रास्रवणस्य प्रादेशमात्रादुदक् तत्पृथिव्यै मध्यम् । अथ यत्रैते सप्तर्षयस्तद्दिवो मध्यम् ॥ १२ ॥ अथ यत्रैत उषास्तत्पृथिव्यै हृदयम् । अथ यदेतत्कृष्ण चन्द्रमसि तद्दिवो हृदयम् ॥ १३ ॥ स य एवमेते द्यावापृथिव्यो र्मध्ये च हृदये च वेद नाऽकामोऽस्माल्लोकात्प्रैति ॥ १४ ॥ नमोऽतिसामायैतुरेयाय धृतराष्ट्राय पार्थुश्रवसाय ये च प्राण रक्षन्ति ते मा रक्षन्तु । स्वस्ति । कर्मेति गार्हपत्य शम इत्याहवनीयो दम इत्यन्वाहार्यपचन ॥ १५ ॥

सवितु सावित्र्याश्चोपनिषत्

४।१२।१

कः सविता । का सावित्री । अग्निरेव सविता । पृथिवी सावित्री ॥ १ ॥ स यत्राग्निस्तत्पृथिवी यत्र वा पृथिवी तदग्नि । ते द्वे योनी । तदेक मिथुनम् ॥२॥ क सविता । का सवित्री । वरुण एव सविता । आप सवित्री ॥ ३ ॥ स यत्र वरुणस्तदापो यत्र वाऽऽपस्तद्वरुण । ते द्वे योनी । ( तदेक मिथुनम् ) ॥ ४ ॥ क सविता । का सावित्री । वायुरेव सविता । आकाश सावित्री ॥ ५ ॥ स यत्र वायुस्तदाकाशो यत्र वाऽऽकाशस्तद्वायु । ते द्वे योनी । तदेक मिथुनम् ॥ ६ ॥ क सविता । का सावित्री । यज्ञ एव सविता । छन्दासि सावित्री ॥ ७ ॥ स यत्र यज्ञ तच्छन्दासि यत्र वा छन्दासि तद्यज्ञ । ते द्वे योनी । तदेक मिथुनम् ॥ ८ ॥ क सविता । का सावित्री । स्तनयित्नुरेव सविता । विद्युत् सावित्री ॥ ९ ॥ स यत्र स्तनयित्नुस्तद्विद्युद्यत्र वा विद्युत् तत्स्तनयित्नु । ते द्वे योनी । तदेक मिथुनम् ॥ १० ॥ कः सविता । का सावित्री । आदित्य एव सविता । द्यौ सावित्री ॥ ११ ॥ स यत्रादित्य. तद्द्यौर्यत्र वा द्यौस्तदादित्य । ते द्वे योनी । तदेकं मिथुनम् ॥ १२ ॥ क सविता । का सावित्री । चन्द्र एव सविता । नक्षत्राणि सावित्री ॥ १३ ॥ स यत्र चन्द्रस्तन्नक्षत्राणि यत्र वा नक्षत्राणि तच्चन्द्र । ते द्वे योनी । तदेक मिथुनम् ॥ १४ ॥ कः सविता । का सावित्री । मन एव सविता । वाक् सावित्री ॥ १५ ॥ स यत्र मनस्तद्वाग्यत्र ( वा ) वाक् तन्मन । ते द्वे योनी। तदेकं मिथुनम् ॥ १६ ॥ क. सविता । का सावित्री । पुरुषः ( एव ) सविता । स्त्री सावित्री । स यत्र पुरुषस्तत् स्त्री यत्र वा स्त्री तत्पुरुष । ते द्वे योनी । तदेक मिथुनम् ॥ १७ ॥

४।१२।२

तस्या एष प्रथम. पादो भूस्तत्सवितुर्वरेण्य-

मिति । अग्निर्वै वरेण्यम् । आपो वै वरेण्यम् । चन्द्रमा वै वरेण्यम् ॥ १ ॥ तस्या एष द्वितीयः पादो भर्गमयो भुवो भर्गो देवस्य धीमहीति । अग्निर्वै भर्गः । आदित्यो वै भर्गः । चन्द्रमा वै भर्गः ॥ २ ॥ तस्या एष तृतीय पादः स्वर्धियो यो नः प्रचोदयादिति । यज्ञो वै प्रचोदयति । स्त्री च वै पुरुषश्च प्रजनयत ॥ ३ ॥ भूर्भुवस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहीति । अग्निर्वै भर्गः । आदित्यो वै भर्ग । चन्द्रमा वै भर्ग ॥ ४ ॥ स्वर्धियो यो न प्रचोदयादिति । यज्ञो वै प्रचोदयति । स्त्री च वै पुरुषश्च प्रजनयत ॥ ५ ॥ भूर्भुव स्वः तत् सवितुर्वरेण्य भर्गो देवस्य धीमहि धियो यो न प्रचोदयादिति । यो वा एता सावित्रीमेवं वेदाऽप पुनर्मृत्यु तरति, सावित्र्या एव सलोकतां जयति, सावित्र्या एव सलोकता जयति ॥ ६ ॥

तलवकारब्राह्मणोपनिषत्समाप्ता ।



# काठकोपनिषत्

नचिकेता मृत्यवे समर्पित पित्रा

[1]उशन्ह वै वाजश्रवसः सर्ववेदस ददौ ।
तस्य ह नचिकेता नाम पुत्र आस ॥

( १ ) तत्राऽऽख्यायिका विद्यास्तुत्यर्था । उशन्कामयमान । ह वा इति वृत्तार्थस्मरणार्थौं निपातौ । वाजमन्न, तद्दानादिनिमित्त श्रवो यशो यस्य स वाजश्रवा. रूढितो वा, तस्यापत्य वाजश्रवसः किल विश्वजिता सर्वमेधेन ईजे तत्फल कामयमान. । स तस्मिन्क्रतौ सर्ववेदस सर्वस्व धन ददौ दत्तवान् । तस्य यजमानस्य ह नचिकेता नाम पुत्रः किल आस बभूव । शकर

( २ ) उशन्नित्यनेन कर्मण. काम्यत्वाद्दक्षिणासाद्गुण्यमावश्यकमिति सूच्यते । § रग.

( ३ ) श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नम । 'नमो भगवते तस्मै सर्वत परमायते । सर्वप्राणिहृदिस्थाय वामनाय नमो नम ॥' 'अग्नौ विष्णु सदा ध्यायंस्त्रिशोऽग्निं नाचिकेतकम् । यश्चयीत स तु प्राप्य स्वर्गं तत्र भयातिग' । उष्य मन्वन्तर कालममृतत्व भजेत्क्रमात् ॥' इति ब्रह्मसारे । 'इच्छन् वाजश्रवो नत्ता ददौ सर्वस्वदक्षिणाम् । उद्दालक. स्वर्गलोक ददौ गाश्च निरिन्द्रिया. ॥' मध्व.

[2]तं ह कुमारं सन्तं दक्षिणासु नीयमानासु श्रद्धाऽऽविवेश । सोऽमन्यत * ॥

( १ ) त ह नचिकेतस कुमार प्रथमवयस सन्तम प्राप्तप्रजननशक्ति बालमेव श्रद्धा आस्तिक्यबुद्धि पितुर्हितकामप्रयुक्ता आविवेश प्रविष्टवती । कस्मिन्काल इत्याह—ऋत्विग्भ्यः सदस्येभ्यश्च दक्षिणासु नीयमानासु विभागेनोपनीयमानासु दक्षिणार्थासु गोषु । स आविष्टश्रद्धो नचिकेता· अमन्यत ।

शकर.

( २ ) यद्यपि यदानतिकर द्रव्य तद्दक्षिणेत्युच्यते, एका चासौ क्रतावानतिरिति तदुपाधिको दक्षिणाशब्द एकवचनान्ततामेव लभते ।

तथापि दक्षिणाशब्दोऽय भृतिवचन । स च कर्मापेक्षयाऽपि प्रवर्तते अस्मिन्कर्मणि इय भृतिरिति । कर्त्रपेक्षयाऽपि प्रवर्तते अस्मिन्कर्मणि अस्य पुरुषस्येय भृतिरिति । ततश्च ऋत्विग्बहुत्वाऽपेक्षया दक्षिणाबहुत्वसभवाद्दक्षिणास्विति बहुवचनमुपपद्यते ।

* रग

[1]पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रिया ।
अनन्दा नाम ते लोकास्तान्स गच्छति ता ददत् ॥

कथमित्युच्यते — पीतोदका इत्यादिना दक्षिणार्था गावो विशेष्यन्ते । पीतमुदक याभिस्ताः पीतोदका. । जग्ध भक्षित तृण याभिस्ता जग्धतृणा· । दुग्धो दोह क्षीराख्यो यासा ता दुग्धदोहा । निरिन्द्रिया अप्रजननसमर्था जीर्णा निष्फला गाव इत्यर्थ । यास्ता एवभूता गा ऋत्विग्भ्यो दक्षिणाबुद्ध्या ददत्प्रयच्छन् अनन्दा अनानन्दा असुखा नामेत्येतत्ते ते लोकास्तान्स यजमानो गच्छति । ¶ शकर.

[2]स होवाच पितर तत कस्मै मा दास्यसीति ।
द्वितीय तृतीय तं होवाच मृत्यवे त्वा ददामीति ॥

( १ ) तदेव क्रत्वसपत्तिनिमित्त पितुरनिष्ट फल मया पुत्रेण सता निवारणीयमात्मप्रदानेनापि क्रतुसपत्तिं कृत्वेत्येव मत्वा पितरमुपगम्य स होवाच पितर हे तत तात कस्मै ऋत्विग्विशेषाय दक्षिणार्थं मां दास्यसि

§ शेष शकरवत् ।

* अय मन्त्र मध्वभाष्ये प्रथमत्वेन परिगणित । तेन 'पीतोदका ' इत्यादयो द्वितीयत्वादिना सख्याता ।

(१) काउ १।१

(२) काउ १।२, मध्व ( सोऽमन्यत० )

शेष शकरवत् ।

¶ रग शकरवत् ।

(१) काउ १।३.

(२) काउ १।४

प्रयच्छसीत्येतत् । एवमुक्तेन पित्रोपेक्ष्यमाणोऽपि द्वितीय तृतीयमप्युवाच कस्मै मा दास्यसि, कस्मै मा दास्यसीति । नाय कुमारस्वभाव इति क्रुद्ध सन् पिता त ह पुत्र किलोवाच, मृत्यवे वैवस्वताय त्वा त्वां ददामीति । * शकर.

( २ ) 'मा दत्त्वाऽपि न ते गावो दातव्या ईदृशा इति । उवाच पुत्रस्त बालस्त शशाप पिता स्वयम् ॥' मध्व

[१]बहूनामेमि प्रथमो बहूनामेमि मध्यम· ।
कि[२]स्विद्यमस्य कर्तव्य यन्मयाऽद्य करिष्यति ॥

( १ ) स एवमुक्त· पुत्र एकान्ते परिदेवयाचकार। कथमित्युच्यते— बहूना शिष्याणा पुत्राणां वा एमि गच्छामि प्रथमः सन् मुख्यया शिष्यादिवृत्त्येत्यर्थ· । मध्यमानां च बहूना मध्यमो मध्यमयैव वृत्त्या एमि । नाधमया कदाचिदपि । तमेव विशिष्टगुणमपि पुत्र मां मृत्यवे वा ददामीत्युक्तवान् पिता । स किंस्विद्यमस्य कर्तव्य प्रयोजन मया प्रत्तेन करिष्यति यत्कर्तव्यमद्य । नून प्रयोजनमनपेक्ष्यैव क्रोधवशादुक्तवान्पिता । शकर.

( २ ) एवमुक्तोऽपि पुत्रो विगतसाध्वसशोक· पित रमुवाच — बहूनामिति । सर्वेषा मृत्युसदनगन्तॄणां पुरतो मध्ये वा गच्छामि, न तु मन्थरः पश्चात् । मृत्युसदनगमने न कोऽपि मम विचार इति भाव । किं तर्हि, तत्राऽऽह—किंस्विदिति । मृत्युर्मयाऽद्य यत्करिष्यति तत्तादृश यमस्य कर्तव्य किं वा, पूर्णकामस्य मृत्योर्मा दृशेन बालिशेन किं प्रयोजन स्याद्येन ऋत्विग्भ्य इव तस्मै मदर्पण सफल स्यात् । अत एतदेवानुशोचामीति भावः । रग

[१]अनुपश्य यथा पूर्वे प्रतिपश्य तथाऽपरे ।
सस्यमिव मर्त्यः पच्यते सस्यमिवाऽऽजायते पुनः ॥

तथापि तत्पितुर्वचो मृषा मा भूदित्येव मत्वा परिदेवनापूर्वकमाह पितर शोकाविष्ट किं मयोक्तमिति । अनुपश्य आलोचय निभालय अनुक्रमेण यथा येन प्रकारेण वृत्ता· पूर्वेऽतिक्रान्ताः पितृपितामहादयस्तव । तान्दृष्ट्वा च तेषां वृत्तमास्थातुमर्हसि । वर्तमानाश्चापरे साधवो यथा वर्तन्ते तांश्च प्रतिपश्य आलोचय तथा । न च तेषु मृषा करण वृत्त वर्तमान वाऽस्ति । तद्विपरितमसता च वृत्त मृषा करणम् । न च मृषा कृत्वा कश्चिदजरामरो भवति । यत सस्यमिव मर्त्यो मनुष्य. पच्यते जीर्णो म्रियते । मृत्वा च सस्यमिव आजायते आविर्भवति पुनः । एवमनित्ये जीवलोके किं मृषाकरणेन। पालयाऽऽत्मनः सत्यम् । प्रेषय मा यमायेत्यभिप्रायः । * शकर

मृत्युगृहे नचिकेतस आतिथ्यं वरत्रयलाभश्च

[१]वैश्वानर प्रविशत्यतिथिर्ब्राह्मणो गृहान् ।
तस्यैता[२]शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥

( १ ) स एवमुक्त. पिता आत्मनः सत्यतायै प्रेषयामास । स च यमभवन गत्वा तिस्रो रात्रीरुवास यमे प्रोषिते । प्रोष्याऽऽगत यमममात्या भार्या वा ऊचुर्बोधयन्त· —वैश्वानरोऽग्निरेव साक्षात्प्रविशत्यतिथिः सन् ब्राह्मणो गृहान्दहन्निव । तस्य दाह शमयन्त इवा ग्नेरेतां पाद्यासनादिदानलक्षणां शान्तिं कुर्वन्ति सन्तोऽतिथेर्यतः, अतो हर आहर हे वैवस्वत, उदक नचिकेतसे पाद्यार्थम् । यतश्चाकरणे प्रत्यवाय· श्रूयते । * शकर.

( २ ) 'स जगाम यम बालो ब्रह्मचारी यमस्य तु । पत्न्या सपूज्यमानोऽपि जग्राहार्घ्यादिक न तु । आगते तु यमे प्राह यम सोदकमाहर ॥' मध्व

आशाप्रतीक्षे सगत[१] सूनृता चेष्टापूर्ते पुत्रपशूं[२]श्च सर्वान् ।
एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन्वसति ब्राह्मणो गृहे ॥

( १ ) आशाप्रतीक्षे, अनिर्ज्ञातप्राप्येष्टार्थप्रार्थना आशा, निर्ज्ञातप्राप्यार्थप्रतीक्षण प्रतीक्षा, ते आशाप्रतीक्षे । संगत तत्संयोगज फलम् । सूनृतां च, सूनृता हि प्रिया वाक्, तन्निमित्त च । इष्टापूर्ते, इष्ट यागज, पूर्तमारामादिक्रियाज फलम् । पुत्रपशूंश्च, पुत्रांश्च पशूंश्च । सर्वानेतत्सर्वं यथोक्त वृङ्क्ते (आ?) वर्जयति विनाश-

* रंग शकरवत् ।
(१) काठ. १।५
(२) काठ १।६

* रंग. शकरवत् ।
(१) काठ. १।७.
(२) काठ १।८.

यतीत्येतत् । पुरुषस्याल्पमेधसोऽल्पप्रज्ञस्य । यस्य अनश्नन्भुञ्जानो ब्राह्मणो गृहे वसति । तस्मादनुपेक्षणीयः सर्वावस्थास्वप्यतिथिरित्यर्थः । शंकर

( २ ) अकरणे प्रत्यावाय च दर्शयन्ति स्म — यस्याल्पमेधसोऽल्पप्रज्ञस्य पुरुषस्य गृहे अनश्नन्भुञ्जानोऽतिथिर्वसति तस्य आशाप्रतीक्षे कामसंकल्पौ । यद्वा, अनुत्पन्नवस्तुविषयेच्छा आशा । उत्पन्नवस्तुप्राप्तीच्छा प्रतीक्षा । संगतं सत्संगमं, सूनृता सत्यप्रियवाचम् । इष्टापूर्ते, इष्टं यागादि, पूर्तं खातादि, पुत्रान्पशूंश्च एतदनशनरूपं पापं वृङ्क्ते वर्जयति नाशयतीत्यर्थः । रंग

[१]तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन्ब्रह्मन्नतिथिर्नमस्यः ।
नमस्तेऽस्तु ब्रह्मन्स्वस्ति मेऽस्तु तस्मात्प्रति त्रीन्वरान्वृणीष्व ॥

( १ ) एवमुक्तो मृत्युरुवाच नचिकेतसमुपगम्य पूजापुरःसरम् । तिस्रो रात्रीर्यत् यस्मादवात्सीः उषितवानसि गृहे मे मम अनश्नन् हे ब्रह्मन्नतिथिः सन्नमस्यो नमस्कारार्हश्च, तस्मान्नमस्ते तुभ्यमस्तु भवतु । हे ब्रह्मन्, स्वस्ति भद्रं मेऽस्तु तस्माद्भवतोऽनशनेन मद्गृहवासनिमित्ताद्दोषात्तत्प्राप्त्युपशमेन । यद्यपि भवदनुग्रहेण सर्वं मम स्वस्ति स्यात्तथाऽपि त्वदधिकसंप्रसादनार्थमनशनेनोषितामेकैकां रात्रिं प्रति त्रीन् वरान् वृणीष्व अभिप्रेतार्थविशेषान् प्रार्थयस्व मत्तः । शंकर

( २ ) तस्माद्धेतोर्मह्यं स्वस्ति यथा स्यादित्येवमर्थं त्रीन्वरान्प्रति तानुद्दिश्य वृणीष्व प्रार्थय ।

* रंग

( ३ ) 'इत्युक्तः स यमस्तं तु संपूज्यादाद्वरत्रयम् । सौमनस्यं पितुश्चैव नाचिकेताग्निगं हरिम् । मुक्तं स्थितं च तं विष्णुमिति प्रादाद्वरत्रयम् ॥' इति गतिसारे । मध्व.

प्रथमो वरः शान्तपितरं प्रति पुनर्गमनम्

[२]शान्तसंकल्पः सुमना यथा स्याद्वीतमन्युर्गौतमो माभिमृत्यो ।
त्वत्प्रसृष्टं माऽभि वदेत्प्रतीत एतत्त्रयाणां प्रथमं वरं वृणे ॥

( १ ) नचिकेतास्त्वाह—यदि दित्सुर्वरान्, शान्तसंकल्पः, उपशान्तः संकल्पो यस्य मां प्रति, यमं प्राप्य किं नु करिष्यति मम पुत्र इति, स शान्तसंकल्पः । सुमनाः प्रसन्नमनाश्च यथा स्याद्वीतमन्युर्विगतरोषश्च गौतमो मम पिता माऽभि मां प्रति हे मृत्यो । किंच त्वत्प्रसृष्टं त्वया विनिर्मुक्तं प्रेषितं गृहं प्रति मा मामभिवदेत्प्रतीतो लब्धस्मृतिः स एवायं पुत्रो ममाऽऽगत इत्येवं प्रत्यभिजानन्नित्यर्थः । एतत्प्रयोजनं त्रयाणां वराणां प्रथममाद्यं वरं वृणे प्रार्थये यत्पितुः परितोषणम् । शंकर

( २ ) माऽभि मां प्रति प्रतीतो यथापूर्वं प्रीतः सन् वदेत् । यद्वा, अभिवदेदाशिषं प्रयुञ्जयात् । 'अभिवदति' 'नाभिवादयते' इति स्मृतिष्वभिवादनस्य आशीर्वादे प्रयोगात् । * रंग

यथा पुरस्ताद्भविता प्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः ।
सुखं रात्रीः शयिता वीतमन्युस्त्वां ददृशिवान्मृत्युमुखात्प्रमुक्तम् ॥

( १ ) मृत्युरुवाच — यथाबुद्धिस्त्वयि पुरस्तात्पूर्वमासीत्स्नेहसमन्विता पितुस्तव भविता प्रीतिसमन्वितस्तव पिता । तथैव प्रतीतः प्रतीतवान् सन्नौद्दालकिः, उद्दालक एवौद्दालकिः । अरुणस्यापत्यमारुणिर्द्व्यामुष्यायणो वा मत्प्रसृष्टो मयाऽनुज्ञातः सन्नितरा अपि रात्रीः सुखं प्रसन्नमनाः शयिता स्वप्ता । वीतमन्युर्विगतमन्युश्च भविता स्यात्त्वां पुत्रं ददृशिवान् दृष्टवान् सन् मृत्युमुखात् मृत्युगोचरात्प्रमुक्तं सन्तम् । शंकर.

( २ ) उद्दालकस्यापत्यमरुणस्य गोत्रापत्यमिति वाऽर्थः । मत्प्रसृष्टमिति द्वितीयान्तपाठे मत्प्रेषितं त्वामिति योजना । $ रंग.

स्वर्गे लोके न भयं किंचनास्ति न तत्र त्वं न जरया बिभेति ।

* शेषं शंकरेण गतार्थम् ।
(१) काठ १।९ (२) काठ. १।१०

* शेषं शंकरेण गतार्थम् ।
$ शेषं शंकरवत् ।
(१) काठ १।११, रंग. ददृशि ( दर्शि )
(२) काठ १।१२

उभे तीर्त्वाऽशनायापिपासे शोकातिगो मोदते स्वर्गलोके ॥

( १ ) नचिकेता उवाच — स्वर्गे लोके रोगादिनिमित्त भय किंचन किंचिदपि नास्ति । न च तत्र त्व मृत्यो सहसा प्रभवसि । अतो जरया युक्त इह लोक इव त्वत्तो न बिभेति कश्चित्तत्र । किंचोभे अशनायापिपासे तीर्त्वा अतिक्रम्य शोकमतीत्य गच्छतीति शोकातिग. सन् मानसेन दु खेन वर्जितो मोदते हृष्यति स्वर्गलोके दिव्ये । शकर

( २ ) नचिकेता द्वितीय वर प्रार्थयते — स्वर्गे लोक इत्यादिना मन्त्रद्वयेन । अत्र स्वर्गशब्दो मोक्ष स्थानपरः, यथा चैतत्तथोत्तरत्र वक्ष्यते । जरया युक्त सन्न बिभेति जरातो न बिभेति । † रग

द्वितीयो वर स्वर्ग्यचित्याग्निविद्याप्राप्ति

* स त्वमग्निꣳ स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि त्वꣳ श्रद्दधानाय मह्यम् ।
स्वर्गलोका अमृतत्व भजन्त एतद्द्वितीयेन वृणे वरेण ॥

( १ ) एवगुणविशिष्टस्य स्वर्गलोकस्य प्राप्तिसाधनभूतमग्निं स त्व मृत्युरध्येषि स्मरसि जानासीत्यर्थ । हे मृत्यो, यत , त्व प्रब्रूहि कथय श्रद्दधानाय श्रद्धावते मह्य स्वर्गार्थिने । येनाग्निना चितेन स्वर्गलोका स्वर्गो लोको येषा ते स्वर्गलोका यजमाना अमृतत्वममरणता देवत्व भजन्ते प्राप्नुवन्ति, तदेतदग्निविज्ञान द्वितीयेन वरेण वृणे । शकर

( २ ) स त्वमिति । पुराणादिप्रसिद्धसर्वज्ञ त्व स्वर्गप्रयोजनकमग्नि जानासि । स्थण्डिलरूपाग्ने स्वर्गप्रयोजनकत्व चोपासनाद्वारेत्युत्तरत्र स्फुटम् । श्रद्दधानाय मोक्षश्रद्धावते । स्वर्गलोकेन तव किं सिध्यतीत्यत्राह — स्वर्गो लोको येषा ते, पर पद प्राप्ता इत्यर्थ. । 'पर ज्योतिरुपसपद्य स्वेन रूपेणाभिनिष्पद्यते' ( छाउ ८।३।४ ) इति देशविशेषविशिष्टब्रह्मप्राप्तिपूर्वकत्वात्स्वरूपाविर्भावलक्षणमोक्षशब्दितामृतत्वस्येति भाव । रग.

प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नचिकेतः प्रजानन् ।
अनन्तलोकाप्तिमथो प्रतिष्ठा विद्धि त्वमेतं निहित गुहायाम् ॥

( १ ) मृत्यो प्रतिज्ञेयम् । ते तुभ्य प्रब्रवीमि । यत्त्वया प्रार्थित तदु मे मम वचसो निबोध बुध्यस्वैकाग्रमना. सन् स्वर्ग्य स्वर्गाय हित स्वर्गसाधनमग्निं हे नचिकेत प्रजानन् विज्ञातवानह सन्नित्यर्थः । प्रब्रवीमि, तन्निबोधेति च शिष्यबुद्धिसमाधानार्थं वचनम् । अधुनाऽग्निं स्तौति — अनन्तलोकाप्तिं स्वर्गलोकफलप्राप्तिसाधनमित्येतत् । अथो अपि प्रतिष्ठामाश्रय जगतो विराड्रूपेण, तमेतमग्निं मयोच्यमान विद्धि जानीहि त्व निहित स्थित गुहाया, विदुषा बुद्धौ निविष्टमित्यर्थ । शकर.

( २ ) ज्ञानस्य फल दर्शयति — अनन्तस्य विष्णोर्लोकस्तत्प्राप्तिम् । 'तद्विष्णो परम पदम्' ( काउ ३।९ ) इत्युत्तरत्र वक्ष्यमाणत्वात् । अथो तत्प्राप्त्यनन्तर प्रतिष्ठामपुनरावृत्तिं च लभत इति शेष. । तज्ज्ञानस्येदृश सामर्थ्य कथ सभवतीति मन्यमान प्रत्याह — विद्धि त्वमेत निहित गुहायाम् । ब्रह्मोपासनाङ्गतयैतज्ज्ञानस्य मोक्षहेतुत्वलक्षणमेतत्स्वरूप गुहाया निहितमन्ये न जानन्ति, त्व जानीहीति भाव । यद्वा ज्ञानार्थस्य विदेर्लाभार्थकत्वसभवादग्निं प्रजानस्त्वमनन्तलोकाप्तिं प्रतिष्ठा लभस्वेत्युक्ते हेतुहेतुमद्भाव सिद्धो भवति । प्रजानन्, लक्षणहेत्वोरिति शतृप्रत्यय. । * रग.

( ३ ) 'अग्र्यत्वादग्निनामासौ नाचिकेताग्निगो हरिः । लोको विष्णोरनन्तस्य तज्ज्ञानान्नित्य आप्यते । प्रतिष्ठा सर्वलोकस्य स विष्णु सर्वहृद्गत । स एव सर्व-

---

† शेष शकरेण गतार्थम् । स्वर्गशब्दस्य मोक्षस्थानपरत्वमेकोनविंशे श्लोके प्रसाधितम् ।

* रामानुजाभिप्राय काउ ३।१५ इत्यत्रापि द्रष्टव्य ।

(१) काउ १।१३, अशकर १।४।६, भास्कर १।४।६ त्वꣳ श्रद्द ( तꣳ श्रद्द ), रग भास्करवत्, रामानुज १।४।६, श्रीकर १।४।६ स्वर्ग्य ( स्वर्ग ) त्वꣳ श्रद्द ( तꣳ श्रद्द ), वल्लभ १।४।६ स्वर्ग्यमध्येषि ( स्वर्ग मध्येऽपि ) त्वꣳ श्रद्द ( तꣳ श्रद्द ).

* शेष शकरेण गतार्थम् ।

(१) काउ १।१४, वल्लभ १।४।६ प्र ते ब्र (प्रतिब्र) नचिकेतः ( नाचिकेत )

ोकादिस्त ज्ञात्वा मुच्यते ध्रुवम् ॥' इति च । लोकादि. तिष्ठा ब्रह्मजज्ञोऽनन्तलोकाप्तिरित्यादिविशेषणैश्च भगवा-व । 'स्तोममहदुरुगाय प्रतिष्ठम्' इति परामर्शाच्च । गवतो ह्युरुगायनाम प्रसिद्धम् । गुहानिहितत्व च स्यैव विशेषत. प्रसिद्धम् । न चाग्निपरिज्ञानमात्रेणा-तलोकाप्तिर्भगवज्ज्ञान विना । 'तद्वा एतदक्षर गार्ग्यवि-त्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्ष ह्स्राण्यन्तवदेवास्य तद्भवति' इत्यादिश्रुतेः । न च ख्ये सत्यमुख्यार्थो युज्यते ।

मध्व.

[१]लोकादिमग्निं तमुवाच तस्मै या इष्टका याव-तीर्वा यथा वा ।
स चापि तत्प्रत्यवदद्यथोक्तमथास्य मृत्यु· पुन-रेवाऽऽह तुष्ट· ॥

( १ ) इद श्रुतेर्वचनम् । लोकादिं लोकानामादिं थमशरीरित्वात्, अग्निं त प्रकृत नचिकेतसा प्रार्थित-वाच उक्तवान् मृत्युस्तस्मै नचिकेतसे । किंच या इष्ट-श्चेतव्या· स्वरूपेण । यावतीर्वा सख्यया । यथा वा ोयतेऽग्निर्येन प्रकारेण, सर्वमेतदुक्तवानित्यर्थ· । स ापि नचिकेतास्तन्मृत्युनोक्त यथावत्प्रत्ययेनावदत्प्रत्यु ारितवान् । अथ तस्य प्रत्युच्चारणेन तुष्टः सन्मृत्युः नरेवाऽऽह वरत्रयव्यतिरेकेणान्य वर दित्सु. ।

शकर.

( २ ) लोकस्याऽऽदिं हेतु स्वर्ग्यमिति यावत् ।

* रग.

( ३ ) या इष्टका या इष्टकादेवताः । 'इष्टकादेवतां ृणु षष्ट्युत्तरशतत्रिकम् । यथावदेव विज्ञाय मुच्यते ्रैवन्धनात् ॥' इति च । मध्व.

[२]तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य ददामि भूयः ।
तवैव नाम्ना भविताऽयमग्निः सृङ्कां चेमाम-नेकरूपां गृहाण ॥

* शेष शकरवत् ।

(१) काउ ११५, अशकर ११४१६, भास्कर ४१६, रग पुनरेवाह ( पुनराह ), श्रीकर. ११४१६.
(२) काउ ११६, मध्व. सृङ्कां ( शृङ्कां )

उ का. १७५

( १ ) कथ, त नचिकेतसमब्रवीत् प्रीयमाणः शिष्ययोग्यता पश्यन् प्रीयमाण· प्रीतिमनुभवन्महात्मा अक्षुद्रबुद्धि. वर तव चतुर्थमिह प्रीतिनिमित्तमद्य इदानीं ददामि भूयः पुन प्रयच्छामि । तवैव नचिकेतसो नाम्ना अभिधानेन प्रसिद्धो भविता मयोच्यमानोऽ-यमग्निः । किंच सृङ्का शब्दवतीं रत्नमयीं मालामिमा-मनेकरूपा विचित्रा गृहाण स्वीकुरु । यद्वा, सृङ्कामकु-त्सिता गतिं कर्ममयीं गृहाण । अन्यदपि कर्मविज्ञानम-नेकफलहेतुत्वात्स्वीकुर्वित्यर्थः ।

* शकर.

( २ ) अनेकरूपा स्वर्णमयीम् । 'बहुरूप च पुरट कार्तस्वरमितीर्यते' इत्यभिधानात् । 'यमोऽनुवादस-तुष्टो वह्नेस्तन्नामतामपि । शृङ्कां स्वर्णमयीं चैव कण्ठमा-लामदाद्विभु ॥' इति पाद्मे । मध्व.

[१]त्रिणाचिकेतस्त्रिभिरेत्य सधिं त्रिकर्मकृत्तरति जन्ममृत्यू ।
ब्रह्मजज्ञ देवमीड्य विदित्वा निचाय्येमा-शान्तिमत्यन्तमेति ॥

( १ ) पुनरपि कर्मस्तुतिमेवाह — त्रिणाचिकेतः त्रि कृत्वा नाचिकेतोऽग्निश्चितो येन स त्रिणाचि-केत· तद्विज्ञानस्तदध्ययनस्तदनुष्ठानवान्वा । त्रिभिर्मातृ-पित्राचार्यैरेत्य प्राप्य सधिं साधन सबन्ध, मात्राद्यनुशासन यथावत्प्राप्येत्येतत् । तद्धि प्रामाण्यकारण श्रुत्यन्तरादव-गम्यते, यथा 'मातृमान् पितृमान्' इत्यादेः । वेद-स्मृतिशिष्टैर्वा प्रत्यक्षानुमानागमैर्वा । तेभ्यो हि विशुद्धिः प्रत्यक्षा । त्रिकर्मकृत् इज्याध्ययनदानानां कर्ता तरति अतिक्रामति जन्ममृत्यू । किंच ब्रह्मजज्ञ, ब्रह्मणो हिर-ण्यगर्भाज्जातो ब्रह्मजः । ब्रह्मजश्चासौ ज्ञश्चेति ब्रह्मजज्ञ. । सर्वज्ञो ह्यसौ । त देव द्योतनाज्ज्ञानादिगुणवन्तमीड्य स्तुत्य विदित्वा शास्त्रतः, निचाय्य दृष्ट्वा चात्मभावेन इमां स्वबुद्धिप्रत्यक्षां शान्तिमुपरतिं अत्यन्तमेति अतिश-येनैति । वैराजं पद ज्ञानकर्मसमुच्चयानुष्ठानेन प्राप्नोती-त्यर्थः । शकर.

* रग शकरवत् । सृङ्कामित्यादेर्द्वितीयार्थो न कृत ।
(१) काउ ११७, रामानुज ११२११२, ११४१६, निंबार्क. ११२११२ ब्रह्मजज्ञं ( ब्रह्मयज्ञं ).

लोकादिस्त ज्ञात्वा मुच्यते ध्रुवम् ॥' इति च । लोकादिः प्रतिष्ठा ब्रह्मजज्ञोऽनन्तलोकातिरित्यादिविशेषणैश्च भगवा नेव । 'स्तोममहदुरुगाय प्रतिष्ठम्' इति परामर्शाच्च । भगवतो ह्युरुगायनाम प्रसिद्धम् । गुहानिहितत्व च तस्यैव विशेषतः प्रसिद्धम् । न चाग्निपरिज्ञानमात्रेणानन्तलोकाप्तिर्भगवज्ज्ञान विना । 'तद्वा एतदक्षर गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्ष सहस्राण्यन्तवदेवास्य तद्भवति' इत्यादिश्रुतेः । न च मुख्ये सत्यमुख्यार्थो युज्यते ।

मध्व.

लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा ।
स चापि तत्प्रत्यवदद्यथोक्तमथास्य मृत्यु' पुनरेवाऽऽह तुष्ट. ॥

(१) इद श्रुतेर्वचनम् । लोकादिं लोकानामादिं प्रथमशरीरित्वात्, अग्निं त प्रकृत नचिकेतसा प्रार्थितमुवाच उक्तवान् मृत्युस्तस्मै नचिकेतसे । किंच या इष्टकाश्चेतव्या स्वरूपेण । यावतीर्वा सख्यया । यथा वा चीयतेऽग्निर्येन प्रकारेण, सर्वमेतदुक्तवानित्यर्थः । स चापि नचिकेतास्तन्मृत्युनोक्त यथावत्प्रत्ययेनावदत्प्रत्युच्चारितवान् । अथ तस्य प्रत्युच्चारणेन तुष्टः सन्मृत्युः पुनरेवाऽऽह वरत्रयव्यतिरेकेणान्य वर दित्सुः ।

शकर.

(२) लोकस्याऽऽदिं हेतु स्वर्ग्यमिति यावत् ।

* रग.

(३) या इष्टका या इष्टकादेवताः । 'इष्टकादेवतां विष्णु षष्ट्युत्तरशतत्रिकम् । यथावदेव विज्ञाय मुच्यते कर्मबन्धनात् ॥' इति च । मध्व.

[२]तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य ददामि भूय. ।
तवैव नाम्ना भविताऽयमग्निः सृङ्कां चेमामनेकरूपां गृहाण ॥

* शेष शकरवत् ।

(१) काउ १।१५, अशकर. १।४।६, भास्कर १।४।६, रग पुनरेवाह (पुनराह), श्रीकर. १।४।६.
(२) काउ १।१६, मध्व. सृङ्कां (शृङ्कां).



(१) कथ, त नचिकेतसमब्रवीत् प्रीयमाण. शिष्ययोग्यता पश्यन् प्रीयमाणः प्रीतिमनुभवन्महात्मा अक्षुद्रबुद्धि. वर तव चतुर्थमिह प्रीतिनिमित्तमद्य इदानीं ददामि भूयः पुन प्रयच्छामि । तवैव नचिकेतसो नाम्ना अभिधानेन प्रसिद्धो भविता मयोच्यमानोऽयमग्निः । किच सृङ्का शब्दवतीं रत्नमयीं मालामिमामनेकरूपा विचित्रा गृहाण स्वीकुरु । यद्वा, सृङ्कामकुत्सिता गतिं कर्ममयीं गृहाण । अन्यदपि कर्मविज्ञानमनेकफलहेतुत्वात्स्वीकुर्वित्यर्थः ।

* शकर.

(२) अनेकरूपा स्वर्णमयीम् । 'बहुरूप च पुरट कार्तस्वरमितीर्यते' इत्यभिधानात् । 'यमोऽनुवादसतुष्टो वह्निस्तन्नामतामपि । शृङ्का स्वर्णमयीं चैव कण्ठमालामदाद्विभु' ॥' इति पाद्मे । मध्व.

[१]त्रिणाचिकेतस्त्रिभिरेत्य संधिं त्रिकर्मकृत्तरति जन्ममृत्यू ।
ब्रह्मजज्ञ देवमीड्य विदित्वा निचाय्येमां शान्तिमत्यन्तमेति ॥

(१) पुनरपि कर्मस्तुतिमेवाह — त्रिणाचिकेत' त्रिः कृत्वा नाचिकेतोऽग्निश्चितो येन स त्रिणाचिकेतः तद्विज्ञानस्तदध्ययनस्तदनुष्ठानवान्वा । त्रिभिर्मातृपित्राचार्यैरेत्य प्राप्य सधिं साधन सबन्ध, मात्राद्यनुशासन यथावत्प्राप्येत्येतत् । तद्धि प्रामाण्यकारण श्रुत्यन्तरादवगम्यते, यथा 'मातृमान् पितृमान्' इत्यादेः । वेदस्मृतिशिष्टैर्वा प्रत्यक्षानुमानागमैर्वा । तेभ्यो हि विशुद्धिः प्रत्यक्षा । त्रिकर्मकृत् इज्याध्ययनदानाना कर्ता तरति अतिक्रामति जन्ममृत्यू । किंच ब्रह्मजज्ञ, ब्रह्मणो हिरण्यगर्भाज्जातो ब्रह्मजः । ब्रह्मजश्चासौ ज्ञश्चेति ब्रह्मजज्ञ. । सर्वज्ञो ह्यसौ । त देव द्योतनाज्ज्ञानादिगुणवन्तमीड्य स्तुत्य विदित्वा शास्त्रतः, निचाय्य दृष्ट्वा चात्मभावेन इमां स्वबुद्धिप्रत्यक्षां शान्तिमुपरतिं अत्यन्तमेति अतिशयेनैति । वैराज पद ज्ञानकर्मसमुच्चयानुष्ठानेन प्राप्नोतीत्यर्थः । शकर.

* रग. शकरवत् । सृङ्कामित्यादेर्द्वितीयार्थो न कृत ।

(१) काउ १।१७, रामानुज १।२।१२, १।४।६, निंबार्क १।२।१२ ब्रह्मजज्ञं (ब्रह्मयज्ञ ).

(२) पुनरपि कर्म स्तौति—त्रिणाचिकेत 'अयं वाव यः पवते' (तैब्रा ३।११।७–९) इत्याद्यनुवाकत्रयाभ्यायी त्रिकर्मकृद्यजनाध्ययनदानकृत्पाकयज्ञहविर्यज्ञसोमयज्ञकृद्वा त्रिभिरग्निभिस्त्रिभिरनुष्ठितैरग्निभि सन्धिं परमात्मोपासनेन सम्बन्धमेत्य प्राप्य जन्ममृत्यू तरतीत्यर्थ । 'करोति तद्येन पुनर्न जायते' इत्यनेनैकार्थ्यात् । एवमेव ह्यय मन्त्र 'त्रयाणामेव चैवम्' (ब्रसू १।४।५) इति सूत्रे व्यासार्यैर्विवृत । त्रिभिरेत्य सन्धिमिति निर्दिष्टमङ्ग-भूत परमात्मोपासनमाह — ब्रह्मजज्ञमिति । अय मन्त्र-खण्ड 'विशेषणाच्च' (ब्रसू १।२।१२) इति सूत्र-भाष्ये 'ब्रह्मजज्ञो जीवो ब्रह्मणो जातत्वाज्ज्ञत्वाच्च, त देवमीड्य विदित्वा जीवात्मानमुपासक ब्रह्मात्मकत्वेनाव-गम्यत्यर्थ' इति विवृत । देवशब्दस्य परमात्मवाचि-तया जीवपरयोश्चैक्यासम्भवादत्रत्यदेवशब्दस्य परमात्म कत्वपर्यन्तार्थ इति भाष्याभिप्राय । निचाय्य ब्रह्मात्मक स्वात्मान साक्षात्कृत्य इमा त्रिकर्मकृत्तरतीति पूर्वमन्त्रनि-दिष्टां ससाररूपानर्थशान्तिमेतीत्यर्थ. ।

रग

(३) त्रिभिरेत्य सन्धिं वेदैरविरुद्ध । वेदोक्तप्र कारेण भगवत्तत्त्वादिक जानन्नित्यर्थ । त्रिकर्मकृत् यज्ञ दानतप कर्ता । 'यज्ञदानतप कर्म न त्याज्य कार्य-मेव तत्' इति वचनात् । 'ब्रह्मेति वेद उद्दिष्टस्त स्माद्व्यक्तो यतो हरि. । ब्रह्मजस्तेन कथित स एव ज्ञोऽखिलज्ञत' ॥' इति नामनिरुक्तौ ।

मन्त्र

[1]त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वाꣳश्चि नुते नाचिकेतम् ।
स मृत्युपाशान्पुरत. प्रणोद्य शोकातिगो मोदते स्वर्गलोके ॥

(१) इदानीमग्निविज्ञानचयनफलमुपसहरति प्रक रण च—त्रिणाचिकेतस्त्रय यथोक्त 'या इष्टका यावतीर्वा यथा वा' इत्येतद्विदित्वाऽवगम्य यश्चैवमात्मरूपेणाग्नि विद्वाश्चिनुते निर्वर्तयति नाचिकेतमग्नि क्रतु स मृत्युपाशा-नधर्माज्ञानरागद्वेषादिलक्षणान् पुरतोऽग्रत: पूर्वमेव शरीर-पातादित्यर्थ., प्रणोद्य अपहाय शोकातिगो मानसैर्दु खै वर्जित इत्येतत्, मोदते स्वर्गलोके वैराजे विराडात्मस्व-रूपप्रतिपत्त्या ।

शकर

(२) त्रिणाचिकेत उक्तार्थः । त्रयमेतद्विदित्वा ब्रह्मजज्ञ देवमीड्यमिति मन्त्रनिर्दिष्ट ब्रह्मस्वरूप, तदात्म-कस्वात्मस्वरूप, त्रिभिरेत्य सन्धिमिति निर्दिष्टमग्निस्वरूप च विदित्वा गुरूपदेशेन शास्त्रतो वा ज्ञात्वा । एतादृशा-र्थत्रयानुसधानपूर्वक नाचिकेतमग्निं यश्चिनुते ।

¶ रग

(३) त्रयमेतत् 'या इष्टका' इत्यादि ।

मध्व.

* यो वाऽप्येता ब्रह्मजज्ञात्मभूता चितिं विदित्वा चिनुते नाचिकेतम् ।
स एव भूत्वा ब्रह्मजज्ञात्मभूत करोति तद्येन पुनर्न जायते ॥

य एता चितिं ब्रह्मजज्ञात्मभूता विदित्वा ब्रह्मात्मक-स्वस्वरूपतयाऽनुसधाय नाचिकेतमग्निं चिनुते स एव ब्रह्मात्मकस्वात्मानुसधानशाली सन्नपुनर्भवहेतुभूत यद्भ गवदुपासन तदनुतिष्ठति । ततश्चाग्नौ भगवदात्मकस्वा-त्मानुसधानपूर्वकमेव चयन 'त्रिभिरेत्य सन्धि त्रिकर्मकृ त्तरति जन्ममृत्यू' इति पूर्वमन्त्रे भगवदुपासनद्वारा मोक्ष-साधनतया निर्दिष्ट, नान्यदिति भाव. । अय च मन्त्रः केपुचित्कोशेषु न दृष्ट. कैश्चिदव्याकृतश्च । अथापि प्रत्य-भिज्ञातमर्यादिभिरेव व्याख्यातत्वान्न प्रक्षेपशङ्का कार्या ।

रग.

[1]एष तेऽग्निर्नचिकेत स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण ।
एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीय वरं नचिकेतो वृणीष्व ॥

एष ते तुभ्यमग्निर्वरो हे नचिकेत. स्वर्ग्यः स्वर्गसा-धन, यमग्निं वरमवृणीथा. प्रार्थितवानसि द्वितीयेन वरेण, सोऽग्निर्वरो दत्त इत्युक्तोपसहारः । किंचैतमग्निं तवैव नाम्ना प्रवक्ष्यन्ति जनासः जना इत्येतत् । एष वरो दत्तो

(१) काउ १।१८

¶ चतुर्थचरणो द्वादशमन्त्रे व्याख्यात । शेष सकर-वत् ।

* रगभाष्येऽधिकोऽय मन्त्र ।

(१) काउ. १।१९

मया चतुर्थस्तुष्टेन । तृतीय वर नचिकेतो वृणीष्व । तास्मिन् ह्यदत्ते ऋणवानहमित्यभिप्रायः ।

‡ शकर.

तृतीयो वरो मर्त्यशरीरभिन्नात्मविद्याप्राप्ति , नचिकेतस आत्मजिज्ञासाया दार्ढ्यं, विषयविभवस्य आत्मज्ञानापेक्षया अवरत्वम्

* [१]येय प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके ।
एतद्विद्यामनुशिष्टस्त्वयाऽह वराणामेष वरस्तृतीयः ॥

(१) एतावद्व्यतिक्रान्तेन विधिप्रतिषेधार्थेन मन्त्रब्राह्मणेनावगन्तव्य यद्वरद्वयसूचित वस्तु, नाऽऽत्मतत्त्वविषययाथात्म्यविज्ञानम् । अतो विधिप्रतिषेधार्थविषयस्याऽऽत्मनि क्रियाकारकफलाध्यारोपणलक्षणस्य स्वाभाविकस्याज्ञानस्य ससारबीजस्य निवृत्त्यर्थं तद्विपरीतब्रह्मात्मैकत्वविज्ञान क्रियाकारकफलाध्यारोपणलक्षणशून्यमात्यन्तिकनि.श्रेयसप्रयोजन वक्तव्यमित्युत्तरो ग्रन्थ आरभ्यते । तमेतमर्थं द्वितीयवरप्राप्त्याऽप्यकृतार्थत्व तृतीयवरगोचरमात्मज्ञानमन्तरेणेत्याख्यायिकया प्रपञ्चयति — यतः पूर्वस्मात् कर्मगोचरात्साध्यसाधनलक्षणादनित्याद्विरक्तस्याऽऽत्मज्ञानेऽधिकारः इति तन्निन्दार्थं पुत्राद्युपन्यासेन प्रलोभन क्रियते । नचिकेता उवाच तृतीय वर नचिकेतो वृणीष्वेत्युक्त सन् । येय विचिकित्सा सशयः प्रेते मृते मनुष्ये अस्तीत्येके, अस्ति शरीरेन्द्रियमनोबुद्धिव्यतिरिक्तो देहान्तरसबन्ध्यात्मेत्येके, नायमस्तीति चैके, नायमेवविधोऽस्तीति चैके, अतश्चास्माक न प्रत्यक्षेण नापि वाऽनुमानेन निर्णयविज्ञानम् । एतद्विज्ञानाधीनो हि पर पुरुषार्थः । इत्यत एतद्विद्यां विजानीयां अहमनुशिष्टो ज्ञापितस्त्वया । वराणामेष वरस्तृतीयोऽवशिष्टः । शकर

(२) नचिकेता आह—येयमिति । 'अत्ता चराचरग्रहणात्' ( ब्रसू. १।२।९ ) इत्यधिकरणे इम मन्त्र प्रस्तुत्येत्थ हि भगवता भाष्यकृता—' अत्र परमपुरुषार्थरूपब्रह्मप्राप्तिलक्षणमोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मतत्त्वजिज्ञासयाऽय प्रश्नः क्रियते । एव च येय प्रेत इति न शरीरमात्रवियोगाभिप्रायम् । अपि तु सर्वबन्धविनिर्मोक्षाभिप्रायम् । यथा 'न प्रेत्य सज्ञाऽस्ति' ( बृउ. ४।४।१२ ) इति अयमर्थ.— मोक्षाधिकृते मनुष्ये प्रेते सर्वबन्धविनिर्मुक्तितत्स्वरूपविषयवादिविप्रतिपत्तिनिमित्ता अस्त्यात्मिका नास्त्यात्मिका येय विचिकित्सा तदपनोदाय तत्स्वरूपयाथात्म्य त्वयाऽनुशिष्टोऽह विद्यां जानीयामिति ' इति । नचिकेतसो ह्ययमभिप्रायः—हितैषिवचनादात्मा परित्यक्तचरमदेहाविर्भूतापहतपाप्मत्वादिगुणाष्टको भवतीत्युपश्रुत्य स्वर्गे लोके न भय किंचनास्तीत्यादिना मन्त्रद्वयेन मोक्षसाधनभूताग्निमप्राक्षम् । अधुना तु वादिविप्रतिपत्त्या तद्विषये सदेहो जायते । अथ 'स्वर्गे लोके न भय किंचनास्ति ' इत्यादिना मयोपन्यस्तापहतपाप्मत्वादिविशिष्टरूप आत्मा अस्तीत्येके, नास्तीत्यपरे । त्वयोपदिष्ट एतज्जानीयामिति ।

रग.

( ३ ) प्रेते मुक्ते मनुष्ये नियामकत्वेन भगवानस्तीति ज्ञानिनो वदन्ति । नास्तीत्यज्ञा. । तस्य नियामकस्य स्वरूप यथावदह विद्याम् । ' अस्य विस्रसमानस्य . . एतद्वै तत्' ( काउ. ५।४ ) इति परिहाराच्च मुक्ते स्थितो भगवान्पृच्छ्यते इति सिद्धम् । देहाद्विशेषेण मोचन नाम मुक्तिरेव । मुक्तेरपि मरणात्मकत्वान्मरणमित्यपि भवति । स्थूलदेहपरित्यागस्तु विस्रसमानस्येत्यनेनैवोक्तो भवति । ' अग्निस्थ परमात्मान सामान्याज्जानतोऽपि तु । अजानतस्तु मुक्तौ च जीवान्तःस्थितमीश्वरम् । नियामक च जीवानां मुक्तानामपि सर्वदा । गुणान् सर्वोत्तमत्वादीनविज्ञाय हरेस्तथा । नैव मुक्तिर्भवेत्तस्मात्कृच्छ्रात्तदवदद्यमः । तस्य गोप्यत्वविज्ञप्त्यै तथाप्यग्निस्थवेदनात् । सुखाधिक्य भवेन्मुक्तौ तस्मात्तत्पृथगीरितम् ॥ ' इति तत्त्वसारे ।

‡ रग शकरवत् ।

* रामानुजाभिप्राय काउ ३।१५ इत्यत्रापि द्रष्टव्यः ।

(१) काउ १।२०, **ब्रशाकर** १।२।११, १।४।६, **भास्कर** १।४।६, **रामानुज** १।२।१२, १।४।६, **श्रीकठ** १।४।६, **श्रीकर** १।२।११, १।४।६, **वल्लभ** १।२।११, १।४।६

'स्थाणुमन्येऽनुसयन्ति यथाकर्म यथाश्रुतम्' इत्युक्त्वा 'य एषु सुप्तेषु जागर्ति काम काम पुरुषो निर्मिमाण' ' इति वचनाच्च जीवेषु स्थितो भगवान्पृच्छयते इति सिद्धम्। मृतजीवे स्थितश्चोभयात्मको भग वान्विवक्षित इत्येतस्माच्चाऽविरोध.। 'गुह्य तत्परम ब्रह्म शीर्यमाण शरीरिणम्। सप्राप्तमपि जीवेषु जागर्ति स्वपितेष्वपि ॥' इति ब्रह्माण्डे। मध्व.

**[1]देवैरत्रापि विचिकित्सित पुरा न हि सुज्ञेयमणुरेष धर्मः।**
**अन्य वर नचिकेतो वृणीष्व मा मोपरोत्सीरति मा सृजैनम् ॥**

(१) किमयमेकान्ततो निःश्रेयससाधनात्मज्ञानार्हो न वेत्येतत्परीक्षणार्थमाह — देवैरप्यत्रैतस्मिन्वस्तुनि विचिकित्सित सशयित पुरा पूर्वम्। न हि सुज्ञेय सुष्ठु ज्ञेय श्रुतमपि प्राकृतैर्जनै, यतोऽणु. सूक्ष्म एष आत्माख्यो धर्मः। अतोऽन्यमसदिग्घफलं वर नचिकेतो वृणीष्व। मा मां मोपरोत्सीरुपरोध मा कार्षीरधमर्णमिवोत्तमर्णः। अतिसृज विमुञ्च एन वर मा मा प्रति। शंकर.

(२) मा मेति निषेधे। वीप्साया द्विर्वचनम्। उपरोध मा कार्षी.। एन मा विसृज मुञ्च। †रग.

(३) धारकत्वाद्धर्मो भगवान्। मध्व.

**[2]देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो यन्न सुज्ञेयमात्थ।**
**वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित् ॥**

(१) एवमुक्तो नचिकेता आह — देवैरत्राप्येतस्मिन्वस्तुनि विचिकित्सित किलेति भवत एव नः श्रुतम्। त्व च मृत्यो यत् यस्मान्न सुज्ञेयमात्मतत्त्वमात्थ कथयसि अत. पण्डितैरप्यवेदनीयत्वाद्वक्ता चास्य धर्मस्य त्वादृक् त्वत्तुल्योऽन्य. पण्डितश्च न लभ्योऽन्विष्यमाणोऽपि। अय तु वरो निःश्रेयसप्राप्तिहेतुः, अतो नान्यो वरस्तुल्यः सदृशोऽस्त्येतस्य कश्चिदपि अनित्यफलत्वादन्यस्य सर्वस्यैवेत्यभिप्रायः। शकर.

(२) न सुज्ञेयमिति यदात्मस्वरूपमुक्तवान्। रग.

**[1]शतायुष. पुत्रपौत्रान्वृणीष्व बहून्पशून् हस्तिहिरण्यमश्वान्।**
**भूमेर्महदायतन वृणीष्व स्वय च जीव शरदो यावदिच्छसि ॥**

(१) एवमुक्तोऽपि पुनः प्रलोभयन्नुवाच मृत्यु — शतायुष. शत वर्षाण्यायूषि येषा तान् शतायुष. पुत्रपौत्रान्वृणीष्व। किंच गवादिलक्षणान्बहून् पशून्। हस्तिहिरण्य हस्ती च हिरण्य च हस्तिहिरण्यम्। अश्वाश्च। किंच भूमेः पृथिव्या महद्विस्तीर्णमायतनमाश्रय मण्डलं राज्य वृणीष्व। किंच सर्वमप्येतदनर्थक स्वय चेदल्पायुरित्यत आह—स्वय च जीव त्व जीव धारय शरीरं समग्रेन्द्रियकलाप शरदो वर्षाणि यावदिच्छसि जीवितुम्। शकर.

(२) अथ वा भूमे. सबन्धि महदायतन विचित्रशालाप्रासादादियुक्त गृह वृणीष्व। $ रग.

**[2]एतत्तुल्य यदि मन्यसे वरं वृणीष्व वित्त चिरजीविकां च।**
**महाभूमौ नचिकेतस्त्वमेधि कामाना त्वा कामभाज करोमि ॥**

एतत्तुल्य एतेन यथोपदिष्टेन सदृशमन्यमपि यदि मन्यसे वर, तमपि वृणीष्व। किंच वित्त प्रभूत हिरण्यरत्नादि चिरजीविका च सह वित्तेन वृणीष्वेत्येतत्। किं बहुना, महत्यां भूमौ राजा नचिकेतस्त्वमेधि भव। किंचान्यत्कामानां दिव्यानां मानुषाणां च त्वा त्वा काम-

† शेष शकरवत्।

(१) काउ १।२१, श्रीकर १।४।६, वल्लभ १।४।६

(२) काउ १।२२

$ शेष शकरेण गतार्थम्।

(१) काउ १।२३, अशकर भास्कर रामानुज. श्रीकठ श्रीकर बलदेव ३।२।२

(२) काउ १।२४, अशकर ३।२।२, बलदेव.३।२।२.

भाज कामभागिन कामार्हं करोमि । सत्यसकल्पो ह्यहं देव । ¶ शकर

[1]ये ये कामा दुर्लभा मर्त्यलोके सर्वान् कामाश्छन्दत प्रार्थयस्व ।
इमा रामाः सरथा. सतूर्या न हीदृशा लम्भनीया मनुष्यैः ।
आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं माऽनुप्राक्षी. ॥

( १ ) ये ये कामा' प्रार्थनीया दुर्लभाश्च मर्त्यलोके सर्वांस्तान्कामाश्छन्दत इच्छात. प्रार्थयस्व । किंचेमा दिव्या अप्सरसो रमयन्ति पुरुषानिति रामाः, सह रथै वर्तन्त इति सरथाः । सतूर्या. सवादित्रास्ताश्च । न हि लम्भनीयाः प्रापणीया ईदृशा एवविधा मनुष्यैर्मर्त्यैरस्मदादिप्रसादमन्तरेण । आभिर्मत्प्रत्ताभिर्मया दत्ताभिः परिचारिणीभि. परिचारयस्वाऽऽत्मान पादप्रक्षालनादिशुश्रूषा कारयाऽऽत्मन इत्यर्थः । नचिकेतो मरण मरणसबद्ध प्रश्न प्रेतेऽस्ति नास्तीति काकदन्तपरीक्षारूप माऽनुप्राक्षीर्मैव प्रष्टुमर्हसि । शकर

( २ ) मरणमनु मरणान्मुक्ते. पश्चान्मुक्तात्मस्वरूपमिति यावत् । मरणशब्दस्य देहवियोगसामान्यवाचिनोऽपि प्रकरणवशेन विशेषवाचित्व न दोषायेति द्रष्टव्यम् । ‡ रग

( ३ ) मरणे स्थित भगवन्त माऽनुप्राक्षी. । मध्व

[2]श्वोभावा मर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणां जर यन्ति तेज ।
अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते ॥

( १ ) एव प्रलोभ्यमानोऽपि नचिकेता महाह्रदवदक्षोभ्य आह — श्वो भविष्यन्ति न भविष्यन्ति वेति सदिह्यमान एव येषा भावो भवन त्वयोपन्यस्तानां भोगाना ते श्वोभावाः । किंच मर्त्यस्य मनुष्यस्यान्तक हे मृत्यो, यदेतत्सर्वेन्द्रियाणा तेजस्तज्जरयन्ति अपक्षपयन्ति । अप्सरःप्रभृतयो भोगा अनर्थायैवैते । धर्मवीर्यप्रज्ञातेजोयश.प्रभृतीना क्षपयितृत्वात् । यां चापि दीर्घजीविका त्व दित्ससि तत्रापि शृणु । सर्वं यद्ब्रह्मणोऽपि जीवित आयुरल्पमेव, किमुतास्मदादिदीर्घजीविका । अतस्तवैव तिष्ठन्तु वाहाः रथादयस्तथा नृत्यगीते च । शकर.

( २ ) हेऽन्तक त्वदुपन्यस्ता ये मर्त्यस्य कामास्ते श्वोभावाः श्व अभावो येषा ते तथोक्ता., दिनद्वयस्थायिनो न भवन्तीत्यर्थः । $ रग.

न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वा ।
जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयः स एव ॥

किंच न प्रभूतेन वित्तेन तर्पणीयो मनुष्य' । न हि लोके वित्तलाभ. कस्यचित्तृप्तिकरो दृष्टः । यदि नामास्माक वित्ततृष्णा स्याल्लप्स्यामहे प्राप्स्यामह इत्येतत्, वित्तमद्राक्ष्म दृष्टवन्तो वय चेत्त्वा त्वाम् । जिवितमपि तथैव जीविष्यामो यावद्याम्ये पदे त्वमीशिष्यसि ईशिष्यसे प्रभु. स्याः । कथ हि मर्त्यस्त्वया समेत्याल्पधनायुर्भवेत् । वरस्तु मे वरणीय. स एव यदात्मविज्ञानम् । * शकर.

[1]अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वध स्थः प्रजानन् ।
अभिध्यायन् वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत ॥

( १ ) यतश्चाजीर्यता वयोहानिमप्राप्नुवता अमृताना सकाशमुपेत्योपगम्य आत्मन उत्कृष्ट प्रयोजनान्तर प्राप्तव्य तेभ्य. प्रजानन्नुपलभमान. स्वय तु जीर्यन्मर्त्यो जरामरणवान् क्वध'स्थः कुः पृथिवी अधश्चान्तरिक्षादिलोका-

¶ रग शकरेण गतार्थम् ।

‡ शेष शकरवत् ।

(१) काउ १।२५, रामानुज श्रीकठ श्रीकर. बलदेव ३।२।१२

(२) काउ १।२६.

$ शेष शकरवत् ।

* रग शकरवत् ।

(१) काउ १।२७, विज्ञान ३।३।३२

(२) काउ १।२८, रंग क्वध स्थ (क्व तदास्थ ) नतिदीर्घे जी ( ननतिदीर्घजी ), मध्व क्वध स्थ (क्वाध स्थ.).

पेक्षया, तस्या तिष्ठतीति क्व स्थ. सन् कथमेवमविवेकिभि. प्रार्थनीय पुत्रवित्तहिरण्याद्यस्थिर वृणीते । क तदास्थ इति वा पाठान्तरम् । अस्मिन्पक्षे चाक्षरयोजना — तेपु पुत्रादिष्वास्था आस्थितिस्तात्पर्येण वर्तन यस्य स तदास्थ, ततोऽधिकतर पुरुषार्थं दुष्प्रापमपि प्रापिपयिषु क तदास्थो भवेत्, न कश्चित्तदसारज्ञ तदथा स्यादित्यर्थ । सर्वो ह्युपर्युपर्येव बुभूषति लोक, तस्मान्न पुत्रवित्तादिलोभै प्रलोभ्योऽहम् । किंचाप्सर प्रमुखान् वर्णरतिप्रमोदाननवस्थितरूपतयाऽभिध्यायन्निरूपयन् यथा वदति दीर्घ जीविते को विवेकी रमेत ।

शकर

( २ ) जरामरणशून्याना मुक्ताना स्वरूप ज्ञात्वा प्रजानन् विवेकी जरामरणोपप्लुतोऽय जनस्तदास्थो जरामरणाद्युपप्लुताप्सर प्रभृतिविषयविषयकास्थावान् क कथ भवेदित्यर्थ । तत्रत्यान्वर्णरतिप्रमोदान्, वर्णा आदित्यवर्णत्वादिरूपविशेषा, रतिप्रमोदा ब्रह्मभोगादिजनितानन्दविशेषा' तान् सर्वानभिध्यायन्निपुणतया निरूपयन् अत्यल्पे ऐहिके जीविते कः प्रीतिमान् स्यादित्यथ ।

रग

**यस्मिन्निद विचिकित्सन्ति मृत्यो यत्सापराये महति ब्रूहि नस्तत् ।**

**योऽय वरो गूढमनुप्रविष्टो नान्य तस्मान्नचिकेता वृणीते ॥**

( १ ) अतो विहायानित्यै. कामै प्रलोभन यन्मया प्रार्थित यस्मिन्प्रेत इद विचिकित्सन विचिकित्सन्ति अस्ति नास्तीत्येवप्रकार हे मृत्यो, सापराये परलोकविषये महति महत्प्रयोजननिमित्त आत्मनो निर्णयविज्ञान यत्तत् ब्रूहि कथय नोऽस्मभ्यम् । किं बहुना, योऽय प्रकृत आत्मविषयो वरो गूढ गहन दुर्विवेचन प्राप्तोऽनुप्रविष्टस्तस्माद्वरादन्यमविवेकिभिः प्रार्थनीयमनित्यविषय वर नचिकेता न वृणीते मनसाऽपीति श्रुतेर्वचनमिति ।

शकर.

( २ ) महति पारलौकिके यस्मिन् मुक्तात्मस्वरूपे सशेरते तदेव मे ब्रूहि । गूढमात्मतत्त्वमनुप्रविष्टो योऽय वरस्तस्मादन्य नचिकेता न वृणीते स्मेति श्रुतेर्वचनम् ।

रग.

( ३ ) महति सापराये मुक्तौ । मध्व.

श्रेय प्रेयश्च इति, विद्या अविद्या इति च विभाग.

**अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः ।**

**तयो' श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥**

परीक्ष्य शिष्य विद्यायोग्यता चावगम्याऽऽह— अन्यत्पृथगेव श्रेयो नि श्रेयस, तथाऽन्यदुताप्येव प्रेयः प्रियतरमपि । ते प्रेय श्रेयसी उभे नानार्थे भिन्नप्रयोजने सती पुरुषमधिकृत वर्णाश्रमादिविशिष्ट सिनीतः बध्नीतः, ताभ्यामात्मकर्तव्यतया प्रयुज्यते सर्व पुरुष । श्रेय.प्रेयसोर्ह्यभ्युदयामृतत्वार्थी पुरुष प्रवर्तते । अत श्रेय'प्रेय प्रयोजनकर्तव्यतया ताभ्या बद्ध इत्युच्यते सर्व. पुरुष. । ते यद्यप्येकैकपुरुषार्थसबन्धिनी, (तथापि) विद्याविद्यारूपत्वाद्विरुद्धे इत्यन्यतरापरित्यागेनैकेन पुरुषेण सहानुष्ठातुमशक्यत्वात्तयोर्हित्वाऽविद्यारूप प्रेय श्रेय एव केवलमाददानस्योपादान कुर्वत साधु शोभन शिव भवति । यस्त्वदूरदर्शी विमूढो हीयते वियुज्यतेऽस्मादर्थात्पुरुषार्थात्, पारमार्थिकात्प्रयोजनान्नित्यात्प्रच्यवत इत्यर्थ । कोऽसौ, य उ प्रेयो वृणीते उपादत्त इत्येतत् । * शकर

**श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सपरीत्य विविनक्ति धीरः ।**

**श्रेयो हि धीरोऽभि प्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते ॥**

( १ ) यद्युभे अपि कर्तुं स्वायत्ते पुरुषेण, किमर्थं प्रेय एवाऽऽदत्ते बाहुल्येन लोक इत्युच्यते — सत्य स्वायत्ते, तथापि साधनत फलतश्च मन्दबुद्धीना दुर्विवेकरूपे सती व्यामिश्रीभूते इव मनुष्यमेत पुरुष आ इत' प्राप्नुत श्रेयश्च प्रेयश्च । अतो हस इवाम्भसः पय', तौ श्रेय प्रेयःपदार्थौ सपरीत्य सम्यक् परिगम्य मनसाऽऽलोच्य गुरुलाघव विविनक्ति पृथक्करोति धीरो

---

(१) काठ १।२९, मध्व ( यत० )

* रग पदार्थमात्र शकरवत् ।

(१) काठ २।१, मध्व दुतैव ( दुतेव )

(२) काठ २।२, मध्व. क्षेमाद्वृ ( क्षेमान्वृ )

धीमान् । विविच्य च श्रेयो हि श्रेय एवाभिवृणीते प्रेय सोऽभ्यर्हितत्वात् । कोऽसौ, धीरः । यस्तु मन्दोऽल्पबुद्धिः स विवेकासामर्थ्याद्योगक्षेमाद्योगक्षेमनिमित्त शरीराद्युपचयरक्षणनिमित्तमित्येतत्, प्रेय· पशुपुत्रादिलक्षण वृणीते । शकर

( २ ) प्राज्ञ· प्रेयोपेक्षयाऽभि अभ्यर्हित श्रेय एव वृणीते । ‡ रंग

[१]स त्वं प्रियान्प्रियरूपा॑श्च कामानभिध्यायन्नचिकेतोऽत्यस्राक्षी· ।
नैता॑ सृङ्कां वित्तमयीमवाप्तो यस्यां मज्जन्ति बहवो मनुष्या· ॥

( १ ) स त्व पुनः पुनर्मया प्रलोभ्यमानोऽपि प्रियान्पुत्रादीन् प्रियरूपाश्चाप्सर.प्रभृतिलक्षणान् कामानभिध्यायश्चिन्तयस्तेषामनित्यत्वासारत्वादिदोषान् हे नचिकेतोऽत्यस्राक्षीरतिसृष्टवान् परित्यक्तवानसि, अहो बुद्धिमत्ता तव । नैतामवाप्तवानसि सृङ्का सृतिं कुत्सितां मूढजनप्रवृत्ता वित्तमयीं धनप्रायाम् । यस्या सृतौ मज्जन्ति सीदन्ति बहवोऽनेके मूढा मनुष्याः । † शकर

( २ ) शृङ्कां शृङ्खलाम् । मध्व.

[२]दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता ।
विद्याभीप्सिन नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त ॥

( १ ) 'तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते' इत्युक्त तत्कस्मात्, यतो दूर दूरेण महताऽन्तरेण एते विपरीते अन्योन्यव्यावृत्तरूपे विवेकाविवेकात्मकत्वात्तम प्रकाशाविव । विषूची विषूच्यौ नानागती भिन्नफले, संसारमोक्षहेतुत्वेनेत्येतत् । के ते इत्युच्यते — या चाविद्या प्रेयोविषया, विद्येति च श्रेयो विषया ज्ञाता निर्ज्ञाता अवगता पण्डितैः । तत्र विद्याभीप्सिन विद्यार्थिन नचिकेतस त्वामह मन्ये । कस्मात्, यस्मादविद्वद्बुद्धिप्रलोभिन. कामा अप्सर.प्रभृतयो बहवोऽपि त्वा त्वा नाऽलोलुपन्त न विच्छेद कृतवन्तः श्रेयोमार्गादात्मोपभोगाभिवाञ्छासपादनेन । अतो विद्यार्थिन श्रेयोभाजन मन्य इत्यभिप्राय । शकर

( २ ) या अविद्येति ज्ञाता कामकर्मात्मिका, या च विद्येति ज्ञाता वैराग्यतत्त्वज्ञानमयी । विद्याभीप्सितमिति पाठे आहिताग्न्यादित्वान्निष्ठान्तस्य परनिपातश्छान्दसत्वाद्वा । * रग.

( ३ ) दूर विभिन्नफलके । विषूची सर्वजीवस्थापिके । ज्ञाता प्रसिद्धेत्यर्थ । विद्याशब्दश्चोपासनायां गौणो मोक्षशब्दवत् ब्रह्मलोक इति बोध्यम् ।

विज्ञान ३।३।४८

[१]अविद्यायामन्तरे वर्तमाना स्वयं धीरा पण्डितं मन्यमाना· ।
दन्द्रम्यमाणा परियन्ति मूढा अन्धेनैव नीयमाना यथान्धा· ॥

( १ ) ये तु ससारभाजना अविद्यायामन्तरे मध्ये घनीभूत इव तमसि वर्तमाना वेष्ट्यमानाः पुत्रपश्वादितृष्णापाशशतैः स्वय वय धीरा. प्रज्ञावन्त. पण्डिताः शास्त्रकुशलाश्चेति मन्यमानास्ते दन्द्रम्यमाणा अत्यर्थं कुटिलामनेकरूपा गतिं गच्छन्तो जरामरणरोगादिदुःखैः परियन्ति परिगच्छन्ति मूढा अविवेकिनोऽन्धेनैव दृष्टिविहीनेनैव नीयमाना विषमे पथि, यथा बहवोऽन्धा महान्तमनर्थमृच्छन्ति तद्वत् । शकर.

( २ ) जरारोगादिदु·खपीडिता अविवेकिनः परिभ्रमन्ति । अन्धेनैवेति । स्पष्टोऽर्थः । केचित्तु दन्द्रम्यमाणा इति पाठमाश्रित्य विषयकामाग्निना द्रुतचित्ता इत्यर्थं वर्णयन्ति । ‡ रग.

‡ शेष शकरवत् ।

† रग शकरेण गतार्थम् ।

(१) काठ २।३, मध्व सृङ्का ( शृङ्का )

(२) काठ २।४; अशकर १।४।६, मध्व प्सिन ( प्सित ) वोऽलोलुपन्त ( वो लोलुपन्त ), श्रीकर १।४।६ प्सिन ( प्सितं ), विज्ञान ३।३।४८.

* शेष शकरवत् ।

‡ शेष शकरवत् । अस्मल्लब्धरगभाष्यपुस्तके व्याख्येयत्वेनोद्धृते उपनिषद्वाक्ये ' दन्द्रम्यमाणा ' इति मुद्रित वर्तते । किन्तु व्याख्यानस्वारस्यात् ' केचित्तु ' इतिग्रन्थानुसारतश्च ' जङ्घन्यमाना ' इति मुण्डकसमान पाठ एव ग्रन्थकर्त्राऽभिप्रेयते इति विभाव्यते ।

(१) काठ २।५, भास्कर १।४।२१, रग दन्द्रम्य ( जङ्घन्य )

न सांपराय प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्।
अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥

( १ ) अत एव मूढत्वान्न सांपरायः प्रतिभाति । परेयत इति संपरायः परलोकः, तत्प्राप्तिप्रयोजनः साधनविशेषः शास्त्रीयः सांपरायः, स च बालमविवेकिनं प्रति न प्रतिभाति न प्रकाशते नोपतिष्ठत इत्येतत् । प्रमाद्यन्तं प्रमादं कुर्वन्तं पुत्रपश्वादिप्रयोजनेष्वासक्तमनसं तथा वित्तमोहेन वित्तनिमित्तेनाविवेकेन मूढं तमसाऽऽच्छन्नं सन्तमयमेव लोको योऽयं दृश्यमानः स्त्र्यन्नपानादिविशिष्टः, नास्ति परोऽदृष्टो लोकः, इत्येवं मननशीलो मानी पुनः पुनर्जनित्वा वशं मदधीनतामापद्यते मे मृत्योर्मम । जननमरणादिलक्षणदुःखप्रबन्धारूढ एव भवतीत्यर्थः । प्रायेण ह्येवंविध एव लोकः ।

शंकर

( २ ) 'संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्' — भोगश्चानिष्टादिकारिणा चन्द्रमसि नास्तीत्युक्तम् । ते तु संयमनं यमालयमवगाह्य स्वदुष्कृतानुरूपा यामीर्यातना अनुभूय पुनरेवेमं लोकं प्रत्यवरोहन्ति । एवंभूतौ तेषामारोहावरोहौ भवतः । कुतः । तद्गतिदर्शनात् । तथाहि यमवचनरूपा श्रुतिः प्रयतामनिष्टादिकारिणां यमवश्यतां दर्शयति — न सांपरायः ।

ब्रशंकर ३।१।१३

( ३ ) परलोकोऽविवेकिनं प्रति न प्रकाशते । एतदर्थे 'संयमने त्वनुभूय०' ( ब्रसू ३।१।१३ ) इति सूत्रे अयं लोको नास्ति पर उत मानीति पाठानुसारेणाय च लोकः परश्च लोको नास्तीत्यर्थो वर्णितः। तत्र पक्षे अस्येति शेषः पूरणीयः । चशब्दोऽध्याहार्यः । मानी अस्य दुर्मानीत्यर्थः । शिष्टपरिग्रहाभावादयं लोको नास्तीत्यस्योपपत्तिर्द्रष्टव्या । दुर्मानी पुनः पुनर्वशमापद्यत इत्युत्तरत्र संबध्यते ।

* रंग.

---

* शेषं शंकरवत् ।

(१) काठ २।६, ब्रशंकर भास्कर रामानुज नैंबार्क. ३।१।१३, बलदेव ३।१।१४.

अतर्क्यात्मविद्या क्वाचित्ककुशलगुरुलभ्या, सत्यव्रती शिष्य एव आत्मविद्याधिकृतः

श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः ।
आश्चर्यो वक्ता कुशलोऽस्य लब्धाऽऽश्चर्यो ज्ञाता कुशलानुशिष्टः ॥

( १ ) यस्तु श्रेयोर्थी सहस्रेषु कश्चिदेवाऽऽत्मविद्भवति त्वद्विधः, यस्माच्छ्रवणायापि श्रवणार्थं श्रोतुमपि यो न लभ्य आत्मा बहुभिरनेकैः, शृण्वन्तोऽपि बहवोऽनेकेऽन्ये यमात्मानं न विद्युर्न विदन्त्यभागिनोऽसंस्कृतात्मानो न विजानीयुः । किंचास्य वक्ताऽप्याश्चर्यः अद्भुतवदेवानेकेषु कश्चिदेव भवति । तथा श्रुत्वाऽप्यस्याऽऽत्मनः कुशलो निपुण एवानेकेषु लब्धा कश्चिदेव भवति । यस्मादाश्चर्यो ज्ञाता कश्चिदेव कुशलानुशिष्टः कुशलेन निपुणेनाऽऽचार्येणानुशिष्टः सन् ।

¶ शंकर

( २ ) 'ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्' — ऐहिकं विद्याजन्म भवत्यसति प्रस्तुतप्रतिबन्ध इति । श्रवणादिद्वारेणापि विद्योत्पद्यमाना प्रतिबन्धक्षयापेक्षयैवोत्पद्यते । तथा च श्रुतिर्दुर्बोधत्वमात्मनो दर्शयति — श्रवणायापीति ।

ब्रशंकर ३।४।५१

न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः ।
अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान्ह्यतर्क्यमणुप्रमाणात् ॥

( १ ) कस्मात् — न हि नरेण मनुष्येणावरेण प्रोक्तः अवरेण हीनेन प्राकृतबुद्धिनेत्येतत्, उक्त एष आत्मा यं त्वं मां पृच्छसि । न हि सुष्ठु सम्यग्विज्ञेयो विज्ञातुं शक्यः, यस्माद्बहुधा अस्ति नास्ति, कर्ता अकर्ता, शुद्धः

---

¶ रंग शंकरवत् ।

(१) काठ २।७, ब्रशंकर ३।४।५१, भास्कर १।१।१, ३।४।४९ यापि ब ( दिभिर्ब ) लभ्य ( लभ्यते ) विद्यु ( विदु ) लानुशि ( लोऽनुशि ), मध्व यों वक्ता ( योंऽस्य वक्ता )

(२) काठ २।८, मध्व वरेण ( वर ) सुविज्ञेयो ( सुज्ञेयो )

अशुद्ध., इत्याद्यनेकधा चिन्त्यमानो वादिभिः । कथ पुन. सुविज्ञेय इत्युच्यते — अनन्यप्रोक्ते अनन्येनापृथग्दर्शिनाऽऽचार्येण प्रतिपाद्यब्रह्मात्मभूतेन प्रोक्ते उक्ते आत्मनि गतिरनेकधा अस्तिनास्तीत्यादिलक्षणा चिन्ता गतिरत्र अस्मिन्नात्मनि नास्ति न विद्यते, सर्वविकल्पगतिप्रत्यस्तमितत्वादात्मन । अथवा स्वात्मभूते अनन्यस्मिन्नात्मनि प्रोक्ते अनन्यप्रोक्ते गतिरत्र अन्याऽवगतिर्नास्ति, ज्ञेयस्यान्यस्याभावात् । ज्ञानस्य ह्येषा परा निष्ठा यदात्मैकत्वविज्ञानम् । अतोऽवगन्तव्याभावान्न गतिरत्रावशिष्यते । ससारगतिर्वाऽत्र नास्ति अनन्ये आत्मनि प्रोक्ते, नान्तरीयकत्वात्तद्विज्ञानफलस्य मोक्षस्य । अथवा प्रोच्यमानब्रह्मात्मभूतेनाऽऽचार्येण प्रोक्ते आत्मन्यगतिरनवबोधोऽपरिज्ञानमत्र नास्ति ! भवत्येवावगतिस्तद्विषया श्रोतुस्तदस्म्यहमित्याचार्यस्येवेत्यर्थ । एव सुविज्ञेय आत्माऽऽगमवताऽऽचार्येणानन्यतया प्रोक्त· । इतरथा ह्यणीयानणुतरोऽणुप्रमाणादपि सपद्यत आत्मा । अतर्क्यमतर्क्यं स्वबुद्ध्याऽभ्यूहेन केवलेन तर्केण । तर्क्यमाणेऽणुपरिमाणे केनचित्स्थापित आत्मनि ततो ह्यणुतरमन्योऽभ्यूहति, ततोऽप्यन्योऽणुतममिति न हि कुतर्कस्य निष्ठा क्वचिद्विद्यते । शाकर.

( २ ) अवरेणाश्रेष्ठेन प्राकृतेन पाण्डित्यमात्रप्रयोजनवेदान्तश्रवणेन नरेण देहात्माभिमानिनैष आत्मा सुविज्ञेयो न भवति । कुतो हेतो , बहुधा चिन्त्यमान·, वादिभिरिति शेष. । अनन्येनोच्यमानादात्मनोऽनन्येन तदेकान्तिना ब्रह्मसाक्षात्कारिणा प्रोक्तेऽत्राऽऽत्मनि याद्दश्यवगति साऽऽत्मावगतिरवरेण प्रोक्ते नास्तीत्यर्थ । यद्वाऽत्र ससारे गतिश्चङ्क्रमण नास्तीत्यर्थ. । यद्वाऽनन्यप्रोक्ते स्वयमवगते गतिरात्मान्तरगतिर्नास्तीत्यर्थ. । अन्यप्रोक्त इति पाठेऽवरेण प्रोक्ते सत्यात्मन्यवगतिर्नास्तीत्यर्थ । ननु येन केनचिदुपदिष्टेऽप्यूहापोहशालिन. स्यादेवेत्यत आह — यतोऽणोरप्यणीयानात्मा अतस्तत्स्वरूप तर्कागोचरम् । रग

( ३ ) अन्यो भगवानन्योऽहमित्यजानन्ननन्य । तेन प्रोक्ते गतिर्ज्ञान नास्ति । ‘ प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ ’ इति वाक्यशेषात् । ‘ जीवाना चैव विष्णोश्च यो न वेत्ति भिदां पुमान् । तदनुव्रताश्च ये केचित्तेषा ज्ञान न जायते ॥’ इति ब्रह्मवैवर्ते ।

मध्व.

**[1]नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ ।**
**या त्वमाप सत्यधृतिर्बतासि त्वादृङ्नो भूयान्नचिकेत प्रष्टा ॥**

( १ ) अतोऽनन्यप्रोक्त आत्मन्युत्पन्ना येयमागमप्रतिपाद्यात्ममति नैषा तर्केण स्वबुद्ध्यभ्यूहमात्रेणाऽऽपनेया न प्रापणीयेत्यर्थ· । नापनेतव्या वा न हातव्या । तार्किको ह्यनागमज्ञ स्वबुद्धिपरिकल्पित यत्किंचिदेव कथयति । अत एव च येयमागमप्रसूता मतिरन्येनैव आगमाभिज्ञेनाऽऽचार्येणैव तार्किकात्, प्रोक्ता सती सुज्ञानाय भवति हे प्रेष्ठ प्रियतम । का पुन. सा तर्कागम्या मतिरित्युच्यते — या त्व मतिं मद्वरप्रदानेनाऽऽप प्राप्तवानसि । सत्याऽवितथविषया धृतिर्यस्य तव स त्व सत्यधृतिर्बतासीत्यनुकम्पयन्नाह मृत्युर्नचिकेतस वक्ष्यमाणविज्ञानस्तुतये । त्वादृक्त्वत्तुल्यो नोऽस्मभ्य भूयाद्भवतात् भवत्वन्य पुत्र· शिष्यो वा प्रष्टा । कीदृक्, यादृक्त्व हे नचिकेत. प्रष्टा । शाकर

( २ ) या मतिं त्वमाप आप्तवानसि सिषाधयिषिततया निश्चितवानित्यर्थ· । सत्यधृतिरसि । सत्या अप्रकम्प्या धृतिर्यस्य स तथोक्तः । * रग

**जानाम्यहꣳ शेवधिरित्यनित्य न ह्यध्रुवै प्राप्यते हि ध्रुव तत् ।**
**ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥**

( १ ) पुनरपि तुष्ट आह — जानाम्यह शेवधिर्निधि· कर्मफललक्षणो निधिरिव प्रार्थ्यत इति । असाव

* शेष शाकरवत् । ‘ आपनेया ’ इत्यस्य द्वितीयोऽर्थो न कृत ।

(१) काउ २।९, ब्रशांकर २।१।६ , ब्रमध्व १।१।१८, श्रीकर १।१।१ ( पृ ६, ७, २२ ), १।१।३, ४, १।१।२७ ( पृ ९३ ), २।१।११, १२, २७, ३।२।२२, वल्लभ १।१।१ ( पृ १७ ), ३।२।२९, ४।४।२०, बलदेव २।१।११

(२) काउ २।१०, रामानुज. १।१।१ ( पृ ४ ) हि ध्रुवं तत् ( ध्रुव कर्मभि ), मध्व त्यैर्द्रव्यै (त्यद्रव्यै ).

नेत्यमनित्य इति जानामि । न हि यस्मादनित्यैरध्रुवै र्नैत्य ध्रुव तत्प्राप्यते परमात्माख्य शेवधि । यस्त्व नेत्यसुखात्मक शेवधि स एवानित्यैर्द्रव्यै प्राप्यते हि ।तस्ततस्तस्मान्मया जानताऽपि नित्यमनित्यसाधनैर्न प्राप्यत इति, नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यै पश्वादिभि वर्गसुखसाधनभूतोऽग्निर्निर्वर्तित इत्यर्थ । तेनाहमधि-कारापन्नो नित्य याम्य स्थान स्वर्गाख्य, नित्यमापेक्षिक, प्राप्तवानस्मि । शकर

( २ ) एव ज्ञानवता मया ब्रह्मप्राप्तिसाधनज्ञानो द्देशेनानित्यैरिष्टकादिद्रव्यैर्नाचिकेतोऽग्निश्चित., तस्मा-द्धेतोर्नित्यफलसाधन ज्ञान प्राप्तवानस्मीत्यर्थ । अतो ब्रह्मप्राप्तेर्ज्ञानैकसाध्यत्वस्य न विरोध । * रग

( ३ ) § आख्य विष्ण्वाख्य नित्य शेवधिरिति जानामि । नित्यमाख्यविष्णुविपर्ययैर्द्रव्यैर्मनआदिभि । आख्यनित्यविषयै. विष्ण्वाख्यनित्यविषयैर्द्रव्यै । नित्य भगवन्त प्राप्तवानस्मि । ध्रुवो भगवानध्रुवैस्तद्भक्ति वर्जितैर्न प्राप्यते । मध्व.

**कामस्याऽऽप्तिं जगत प्रतिष्ठां क्रतोरनन्त्यम-भयस्य पारम् ।**

**स्तोममहदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षी ॥**

( १ ) त्व तु कामस्याप्तिं समाप्तिं, अत्र हि सर्वे कामा परिसमाप्ता., जगत साध्यात्माधिभताधिदैवादे प्रतिष्ठामाश्रय सर्वात्मकत्वात्, क्रतो फल हैरण्यगर्भ पदमनन्त्यमानन्त्यम् । अभयस्य च पार परां निष्ठाम् । स्तोम स्तुत्य महदणिमाद्यैश्वर्याद्यनेकगुणसहत, स्तोम च तन्महच्च निरतिशयत्वात्स्तोममहत् । उरुगाय विस्तीर्णां गतिम् । प्रतिष्ठा स्थितिमात्मनोऽनुत्तमामपि दृष्ट्वा धृत्या धैर्येण धीरो धीमान् सन्नचिकेतोऽत्यस्राक्षीः परमेवाऽऽका-ङ्क्षन्नतिसृष्टवानसि सर्वमेतत्ससारभोगजातम् । अहो बतानुत्तमगुणोऽसि । शकर

( २ ) त्वादृङ्नो भूयान्नचिकेत. प्रष्टेति पूर्वमन्त्रोक्त नचिकेतस श्रवणाधिकार विवृणोति — क्रतोः कर्मणः

* शेष शकरवत् ।

§ अ आख्या यस्य त आख्यम् ।

(१) काठ २।११, रग रनन्त्य ( रानन्त्य ), मध्व. रंगवत्

प्रतिष्ठा फलभूता जगत कामस्याऽऽप्तिं चतुर्मुखस्था-नपर्यन्तसर्वलोकसबन्धिस्त्र्यादिविषयात्मककामप्राप्तिं च दृष्ट्वा । मोक्षस्वरूपमाह — आनन्त्यमभयस्य पारमि-त्यादिना । अविनाशित्वमत्यन्तनिर्भयत्वमपहतपाप्मत्व-सत्यसकल्पत्वादिमहागुणगणरूपस्तोममुरुकीर्तिं च स्थैर्यं च मोक्षगत दृष्ट्वा लौकिकान्कामान् प्रज्ञाशाली त्व त्यक्तवान-सीत्यर्थ । यद्वा मोक्षरूपपरमात्मस्वरूप एव सर्वकामा-वाप्ति तत्रैव सकलजगदाधारत्व क्रतोरनन्तफलरूपतां चेत्येव सर्वं परमात्मविषयतया योजनीयम् ।

रग.

( ३ ) क्रतोरानन्त्यहेतुम् । स्तोमैरपि सर्वात्मना प्राप्तु-मशक्यम् । स्तोमेभ्योऽपि महान्तम् । उरुगायमित्युक्त-त्वाच्च न जीवविषयोऽय प्रश्न । ' शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते' 'शरवत्तन्मयो भवेत्' 'अभय तितीर्षता पारम्' 'तादृगेव भवति' इत्यादौ सर्वत्र भेदस्यैवोक्तेश्च न जीवाभेद । ' नाचिकेत शकेमहि ' इत्युक्तत्वाच्च नाचिकेताग्निस्थो भगवानेवोच्यत इति सिद्धम् । उरुगाय दृष्ट्वा कामस्याप्तिमत्यस्राक्षी । न च मृत्वा यम प्राप्तस्य नचिकेतसो मृतोऽस्ति न वेति सशयो युज्यते ।

मध्व

***'त दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ।**

**अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्ष-शोकौ जहाति ॥**

( १ ) य त्व ज्ञातुमिच्छस्यात्मान त दुर्दर्शं दु खेन दर्शनमस्येति दुर्दर्शमतिसूक्ष्मत्वात् । गूढ गहनमनुप्र-विष्ट प्राकृतविषयविकारविज्ञानै. प्रच्छन्नमित्येतत् । गुहा हित गुहायां बुद्धौ स्थित तत्रोपलभ्यमानत्वात् । गह्वरेष्ठ गह्वरे विषमेऽनेकानर्थसकटे तिष्ठतीति गह्वरेष्ठम् । यत एव गूढमनुप्रविष्टो गुहाहितश्चातो गह्वरेष्ठः । अतो दुर्दर्श. । त पुराण पुरातन अध्यात्मयोगाधिगमेन, विषयेभ्य

* रामानुजाभिप्राय काठ ३।१५ इत्यत्रापि द्रष्टव्य ।

(१) काठ २।१२, ब्रशकर १।२।११, १२, १।४।६, भास्कर १।२।११, रामानुज १।२।११, १२, १।४।६, निंबार्क १।२।११, श्रीकठ १।२।११, १।४।६, श्रीकर. १।२।११, १२, १।४।६, बलदेव १।२।११.

प्रतिसह्हृत्य चेतस आत्मनि समाधानमध्यात्मयोग., तस्याधिगमस्तेन मत्वा देवमात्मान धीरो हर्षशोकावात्मन उत्कर्षापकर्षयोरभावाज्जहाति । शकर.

( २ ) प्रश्नमपि तदीय प्रशसन्यदुवाच — ' त दुर्दर्श ' इति । तेनाऽपि जीवप्राज्ञयोरभेद एवेह विवक्षित इति गम्यते । ब्रशकर १।४।६

( ३ ) तृतीय प्रश्न प्रतिवक्ति त दुर्दर्शमित्यादिना मन्त्रद्वयेन — ' श्रवणायापि बहुभिर्यो न लभ्य· ' इत्युक्तरीत्या द्रष्टुमशक्य गूढ तिरोधायककर्मरूपाविद्यातिरोहित सर्वभूतानुप्रविष्टम् । गुहाहित हृदयगुहावर्तिनम् । गह्वरेष्ठमन्तर्यामिणम् । पुराणमनादिम् । अध्यात्मयोगाधिगमेन, विषयेभ्य: प्रतिसगृहीतचेतस आत्मनि समवधानमध्यात्मयोगः, ' यच्छेद्वाङ्मनसी प्राज्ञः ' ' यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ' इत्यादिना वक्ष्यमाण. । तेन योऽयमधिगमो जीवात्मज्ञान, तेन हेतुना देव परमात्मान मत्वेत्यर्थ । जीवात्मज्ञानस्य परमात्मज्ञानहेतुत्वादिति भाव । हर्षशोकौ विषयलाभालाभप्रयुक्तहर्षशोकौ जहातीत्यर्थ । रग

( ४ ) गह्वरे मुक्तजीवे स्थितम् । मध्व

**एतच्छ्रुत्वा सपरिगृह्य मर्त्य प्रवृह्य धर्म्यमणुमेतमाप्य ।**
**स मोदते मोदनीयꣳ हि लब्ध्वा विवृतꣳ सद्म नचिकेतसं मन्ये ॥**

( १ ) किंचैतदात्मतत्त्व यदह वक्ष्यामि तच्छ्रुत्वाऽऽचार्यप्रसादात्सम्यगात्मभावेन परिगृह्य उपादाय मर्त्यो मरणधर्मा धर्मादनपेत धर्म्य प्रवृह्य उद्यम्य पृथक्कृत्य शरीरादेरणु सूक्ष्ममेतमात्मानमाप्य प्राप्य स मर्त्यो विद्वान् मोदते मोदनीय हर्षणीयमात्मान लब्ध्वा । तदेतदेवविध ब्रह्म सद्म भवन नचिकेतस त्वां प्रत्यपावृतद्वार विवृतमभिमुखीभूत मन्ये, मोक्षार्ह त्वां मन्य इत्यभिप्राय· । शकर.

( २ ) सपरिगृह्य मननादिक कृत्वेत्यर्थ: । कर्मसाध्य शरीरादि प्रवृह्य पृथक्कृत्य परित्यज्येत्यर्थ. । एव स्वात्मभूत सूक्ष्मतया चक्षुराद्यगोचर ' अणीयान्ह्यतर्क्यम् ' इति निर्दिष्ट परमात्मान देशविशेषे प्राप्य । ब्रह्मजज्ञमिति मन्त्रे परमात्मात्मकपरिशुद्धजीवस्वरूप प्रतिपाद्यते, त दुर्दर्शमिति मन्त्रे तु जीवशरीरकपरमात्मस्वरूप प्रतिपाद्यते इति न तयोरैकार्थ्यहानि. ।

* रग.

( ३ ) प्रवृह्य जीवात्पृथक्कृत्य । ' मुक्तजीवे स्थित विष्णु विदित्वा जीवत. पृथक् । मोदते मोदनीय त प्राप्य मुक्त. सदैव च ॥' इति महावाराहे । मध्व.

( ४ ) 'दर्शयति च' — दर्शयति च शाखिगणो विद्यातोऽपूर्वमित्यर्थ· । यथा कठवल्ल्या ' एतच्छ्रुत्वा ' इत्यादिना । धर्म्य धर्मकारणमित्यर्थः । विज्ञान. ३।३।२२

प्रश्नविषय सर्वव्यवहारगोचरातीत आत्मस्वरूपम्

**अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ।**
**अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ¶ ॥**

( १ ) यद्यह योग्य., प्रसन्नश्चासि भगवन्मा प्रति अन्यत्र धर्माच्छास्त्रीयाद्धर्मानुष्ठानात्तत्फलात्तत्कारकेभ्यश्च पृथग्भूतमित्यर्थ. । तथाऽन्यत्राधर्मात्तथाऽन्यत्रास्मात्कृताकृतात् । कृत कार्यमकृत कारण, अस्मादन्यत्र । किंचान्यत्र भूताच्चातिक्रान्तात्कालात् भव्याच्च भविष्यतश्च तथा वर्तमानात् । कालत्रयेण यन्न परिच्छिद्यत इत्यर्थः । यदीदृश वस्तु सर्वव्यवहारगोचरातीत पश्यसि जानासि तद्वद मह्यम् । शकर

( २ ) ' न ह्यध्रुवै प्राप्यते हि ध्रुव तत् ' ' एतच्छ्रुत्वा, .. लब्ध्वा ' ' अध्यात्मयोगा जहाति ' इति प्रदेशेषु धर्मफलविलक्षणतया ध्यानसाध्यतया प्राप्यतया

(¹) काउ २।१३, मध्व मेतमाप्य ( मेनमाप्य ), विज्ञान ३।३।२२

* शेष शकरवत् ।

¶ रामानुजाभिप्राय काउ ३।१५ इत्यत्रापि द्रष्टव्य ।

(१) काउ २।१४, ब्रशकर १।१।४, १।२।११, १।३।२४, ३९, १।४।६, ३।२।२, ३।३।३४, ४।३।१३, भास्कर १।३।२५, १।४।६, रामानुज १।१।४ (पृ १५३), १।४।६, श्रीकठ १।४।६, श्रीकर १।२।११, १।३।२४, १।३।३९, १।४।६, वल्लभ १।२।११, १।४।६, विज्ञान. १।१।१६, बलदेव ४।३।१३.

च निर्दिष्टस्य प्राप्यस्य स्वरूपं चोक्तप्रदेशेष्वेव धर्मविलक्षणतया मत्वेति प्रतिपन्नस्योपायस्य स्वरूपं च 'धीरो हर्षशोकौ जहाति' इत्यत्र धीर इति प्रतिपन्नस्य प्राप्तुश्च स्वरूपं शोधयितुं पृच्छति — अन्यत्र धर्मादित्यादिना। मन्त्रो व्यासार्यैस्त्रयाणामिति सूत्रे विवृतः। धर्म उपायः। धर्मादन्यत्र प्रसिद्धोपायविलक्षण इत्यर्थः। अधर्मो धर्मेतर उपेयः। अधर्मादन्यत्र प्रसिद्धसाध्यविलक्षणं फलमित्यर्थः। अस्मादिति बुद्धिस्थस्तत्साधको विवक्षितः। स एवोपेता स हि प्रसिद्धोपेतृविलक्षणः, साधकावस्थायामितरफलविरक्तत्वात्फलदशायामाविर्भूतगुणाष्टकविशिष्टस्वरूपत्वाच्च। कृताकृतादिति धर्मादीनां विशेषणं, कृताकृताद्धर्मादेर्विलक्षणम्। अन्यत्र भूताच्च भव्याच्च धर्मादेर्विलक्षणं यदित्यर्थः। इत्येका व्याख्या कृत्वा तस्मिन्पक्षे तु कृताकृताद्भूताद्भव्याच्च धर्मादन्यत्र, तादृशादधर्मादन्यत्र, तादृशादस्माच्चान्यत्रेत्यन्यत्र शब्दत्रयेणोपपत्तौ अन्यत्र भूताद्भव्याच्चेत्यन्यत्र शब्दवैयर्थ्यं, उपायस्य कालत्रयपरिच्छिन्नतया तत्र कालत्रयपरिच्छिन्नवैलक्षण्यानन्वयं च पर्यालोच्य यद्वेत्यादिनाऽपरा व्याख्या कृता, तदुच्यते — यद्वा धर्माधर्माचान्यत्रेत्युपासनप्रश्नः। पुण्यपापरूपसाधनविलक्षणत्वादुपासनस्य। कृताकृताद्भूताद्भव्याचान्यत्र कालादिति यत् इति कालापरिच्छिन्नमुपेयं पृष्टम्। प्रश्न उपेतुरपि चेतनस्य नित्यत्वात्प्राप्यान्तर्भावाच्च। तत एव तस्यापि तन्त्रेण प्रश्नस्तदन्तर्गतं च प्राप्तुं स्वरूपमिति वक्ष्यते। तत्र यत्तच्छब्दौ त्रितयपराविति भावयति। रंग.

प्रणवाक्षररूपं आलम्बनं आत्मज्ञानभावनम्

**सर्वे वेदा यत्पदमामनन्ति तपाꣳसि सर्वाणि च यद्वदन्ति।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदꣳ सङ्ग्रहेण ब्रवीम्योमित्येतत्॥**

(१) इत्येवं पृष्टवते मृत्युरुवाच पृष्टं वस्तु विशेषणान्तरं च विवक्षन् — सर्वे वेदा यत्पदं पदनीयं गमनीयमविभागेन आमनन्ति प्रतिपादयन्ति, तपांसि सर्वाणि च यद्वदन्ति यत्प्राप्त्यर्थानीत्यर्थः। यदिच्छन्तो ब्रह्मचर्यं गुरुकुलवासलक्षणं अन्यद्वा ब्रह्मप्राप्त्यर्थं चरन्ति, तत्ते तुभ्यं पदं यज्ज्ञातुमिच्छसि, सङ्ग्रहेण सङ्क्षेपतो ब्रवीमि, ओमित्येतत्। तदेतत्पदं यद्बुभुत्सितं त्वया यदेतदोमित्योंशब्दवाच्यमोंशब्दप्रतीकं च। शंकर.

(२) 'दर्शयति च' — दर्शयति च वेदोऽपि विद्यैकत्वं सर्ववेदान्तेषु। वेद्यैकत्वोपदेशात्। सर्वे वेदा इति। ३।३।४

इत्येवमाद्या श्रुतिः आश्रमकर्मणा विद्यासाधनभावं सूचयति। ब्रशंकर ३।४।२६

(३) तपांसीति। तत्प्रधाना उपरितनभागा इति व्यासार्यैर्व्याख्यातम्। सङ्गृह्यतेऽनेनेति सङ्ग्रहः शब्दः। सङ्क्षेपेण तं प्रतिपादकं किमित्यत आह — ओमिति 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति प्रणवस्य ब्रह्मवाचकत्वात्प्रणवावयवयोरकारमकारयोः परजीववाचितयोपायोपेत्रोरप्युपदिष्टत्वमस्तीति द्रष्टव्यम्। * रंग.

**एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम्।**
**एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्॥**

(१) अत एतद्ध्येवाक्षरं ब्रह्म अपरं एतद्ध्येवाक्षरं परं च। तयोर्हि प्रतीकमेतदक्षरम्। एतद्ध्येवाक्षरं ज्ञात्वा उपास्य ब्रह्मेति यो यदिच्छति परमपरं वा तस्य तद्भवति। परं चेज्ज्ञातव्यमपरं चेत्प्राप्तव्यम्। शंकर.

(२) एवं वाचकं प्रणवं द्वाभ्यां मन्त्राभ्यां स्तौति — ओमित्यनेनैवाक्षरेण परमपुरुषमभिध्यायीतेति ब्रह्मप्राप्तिसाधनध्यानालम्बनत्वादिदमेवाक्षरं ब्रह्मप्राप्तिसाधनत्वाद्ब्रह्म। परमिति। जप्येषु ध्येयेषु च श्रेष्ठमित्यर्थः।

(१) काठ २।१५, ब्रशंकर ३।३।४, ३।४।२६, भास्कर ३।३।४, रामानुज १।४।६, ३।४।२५, निंबार्क ३।३।४, ३।४।८, ब्रमध्व १।१।५, श्रीकर १।१।४ (पृ ४४), १।४।२८, २।१।१, ३।२।३९, ३।३।७, ४२, ५४, वल्लभ १।१।१०, १।४।६, १५, ३।२।२३, ३।३।४, विज्ञान १।१।३ (पृ ६९), बलदेव १।१।४, ५, २।१।१, ३।३।५, ३४

* शेषं शंकरवत्।

(१) काठ २।१६, विज्ञान १।३।१० एतद्ध्येवाक्षरं ब्रह्म (एतदेवाक्षरं ब्रह्म), बलदेव ३।४।१

एतदक्षरमुपासमान. अनेनोपासनेनेद फल मे भूयादिति यत्कामयते तस्य तद्भवतीत्यर्थ.। रग

( ३ ) 'एतद्ध्येवाक्षर ब्रह्म विष्णवाख्य परमव्ययम्। सर्वस्यालम्बन ज्ञात्वा मुच्यते नात्र सशय.॥' इति च। मध्व

**एतदालम्बनꣳ श्रेष्ठमेतदालम्बनं परम्।**
**एतदालम्बन ज्ञात्वा ब्रह्मलोके महीयते॥**

( १ ) यत एवमत एतदालम्बनमेतद्ब्रह्मप्राप्त्यालम्बनानां श्रेष्ठ प्रशस्यतमम्। एतदालम्बन परमपर च परापरब्रह्मविषयत्वात्। एतदालम्बन ज्ञात्वा ब्रह्मलोके महीयते। परस्मिन्ब्रह्मण्यपरस्मिंश्च ब्रह्मभूतो ब्रह्मवदुपास्यो भवतीत्यर्थ.। शकर

(२) एतदोंकाररूपमालम्बन श्रेष्ठ ध्यानादेरिति शेष.। अत एव एतदालम्बनक ध्यानादि सर्वोत्कृष्टमित्यर्थ। रग

आत्मा नित्य

*** न जायते म्रियते वा विपश्चिन्नाय कुतश्चिन्न बभूव कश्चित्।**
**अजो नित्य शाश्वतोऽय पुराणो न हन्यते हन्यमाने शरीरे॥**

* अधोनिर्दिष्टस्थलेषु तत्तन्निर्दिष्टविषयपरत्वमस्य मन्त्रस्यास्थितम्। ब्रशकर १।२।१० परमात्मपरत्वम्। १।४।६ जीवाऽभिन्नपरमात्मपरता। २।३।१७ परमात्माऽभिन्नजीवविषयता। भास्कर २।३।१७ जीवपरता। अन्यत्र परमात्मपरत्वम्। रामानुज जीवपरत्वम्। निंबार्क जीवपरत्वम्। श्रीकठ जीवविषयत्वम्। श्रीकर १।२।१० इत्यादौ परमात्मपरता। २।१।३५ इत्यादौ जीवविषयता। वल्लभ १।२।१० परमात्मपरत्वम्। २।३।१७ जीवविषयत्वम्। विज्ञान परमात्मपरत्वम्।

(१) काउ २।१७

(२) काउ २।१८, **ब्रशकर** १।२।१०, १।४।६, २।३।१७, **भास्कर** १।२।१०, १।४।६, २५, २।३।१७, **रामानुज** १।४।६, २१, २।१।३५, २।२।३९, २।३।१८, ३३, **निंबार्क** २।३।१७, **मध्व** न शरीरे ( नेऽपि देहे ), **श्रीकठ** १।२।१२, २।३।१८, **श्रीकर** १।२।१०, १२, १।४।६, २।१।८, ३५, २।३।२, १६, ३१, ३।१।१, **वल्लभ** १।२।१०, २।३।१७, **विज्ञान** १।२।१०, **बलदेव** २।३।३१

( १ ) अन्यत्र धर्मादित्यादिना पृष्टस्यात्मनोऽशेषविशेष रहितस्याऽऽलम्बनत्वेन प्रतीकत्वेन चोंकारो निर्दिष्टः, अपरस्य च ब्रह्मणो मन्दमध्यमप्रतिपत्तॄन्प्रति। अथेदानीं तस्योंकारालम्बनस्याऽऽत्मनः साक्षात्स्वरूपनिर्दिधारयिषयेदमुच्यते--न जायते नोत्पद्यते, म्रियते वा न म्रियते च। उत्पत्तिमतो वस्तुनोऽनित्यस्यानेकविक्रिया., तासामाद्यन्ते जन्मविनाशलक्षणे विक्रिये इहाऽऽत्मनि प्रतिषिध्येते प्रथम सर्वविक्रियाप्रतिषेधार्थं न जायते म्रियते वेति। विपश्चिन्मेधावी, अविपरिलुप्तचैतन्यस्वभावत्वात्। किंच नायमात्मा कुतश्चित्कारणान्तराद्बभूव। स्वस्माच्चाऽऽत्मनो न बभूव कश्चिदर्थान्तरभूत। अतोऽयमात्मा अजो नित्यः, शाश्वतः अपक्षयविवर्जितः। यो ह्यशाश्वत सोऽपक्षीयते। अय तु शाश्वत.। अत एव पुराण. पुराऽपि नव एवेति। यो ह्यवयवोपचयद्वारेणाभिनिर्वर्त्यते स इदानीं नवो यथा कुम्भादिः, तद्विपरीतस्त्वात्मा पुराणो वृद्धिविवर्जित इत्यर्थ। यत एवमतो न हन्यते न हिंस्यते हन्यमाने शस्त्रादिभिः शरीरे तत्स्थोऽप्याकाशवदेव। शकर.

( २ ) 'न जायते' इत्यादिबहुप्रपञ्च परमात्मविषयम्। ब्रशकर. १।४।६

(३) ननु च न जायतेऽजो नित्य इत्यजत्व श्रूयते। न दोषः, परतो जन्मप्रतिषेधाच्चतुर्मुखादिवत्। भास्कर १।४।२५

(४) इद च प्रस्तुत्य व्यासार्यैरित्थमुक्तम्---इद मन्त्रद्वय तावदेकविषयम्। 'न हन्यते हन्यमाने शरीरे' इत्येतद्विवरणरूपत्वात् द्वितीयमन्त्रस्य। हन्ता चेदिति मन्त्रश्च जीवविषय एव, लोकस्य परमात्मनि हन्तृहन्तव्यभावप्रतिपत्त्यभावात्। न जायत इति मन्त्रश्च तेनैकार्थ.। अतो मन्त्रद्वयमपि जीवविषयकमेवेति। अक्षरार्थस्तु---न जायते म्रियते वा विपश्चित्, विपश्चित्त्वार्होऽयमिदानीमपि जननमरणशून्य इत्यर्थः। नाय कुतश्चित्, उत्पादकशून्यः। न बभूव कश्चित्, पूर्वमपि मनुष्यादिरूपेण जननशून्यः। न जायत इत्यत्र हेतुमाह---अज इति। न म्रियत इत्यत्र हेतुमाह---नित्य इति। न कुतश्चिदित्यत्र हेतुमाह--- शाश्वत इति। पूर्वे न बभूवेत्यत्र हेतुमाह---पुराण इति। ननु कथ-

नस्य नित्यत्व, शरीरान्तर्वर्तिन. शरीरविनाशानुविनाशित्वावश्यभावादित्यत आह — न हन्यते हन्यमाने शरीरे । स्पष्टोऽर्थ ।

इयास्तु विशेष — चिदचिदीश्वराणा त्रयाणामप्यवस्थान्तरापत्तिलक्षणोत्पत्तिरूपो विकारोऽस्त्येव । तथाप्यचेतनाना स्वरूपान्यथाभावलक्षणोत्पत्ति । जीवाना तु सा नास्ति । अपि तु ज्ञानसकोचविकासलक्षणस्वभावान्यथाभावरूपोत्पत्ति । ईश्वरस्य तु तन्नियन्तृत्वाद्यवस्थातत्त्वेऽप्युक्तलक्षणानिष्टविकारद्वयाभावान्नित्यो नित्यानामिति परमात्मन इतरविलक्षणनित्यत्वोक्तिरिति द्रष्टव्यम् । रग

( ५ ) ' देहोत्पत्तिविनाशाख्यौ ज्ञानिनोऽप्युद्भवाभवौ । न कुतश्चिद्यतो विष्णुर्जायतेऽतस्तदीक्षणात् । भावाभावौ न विदुषो यस्माज्जीवो न कश्चन । जायते म्रियते वाऽपि स्वरूपेण कथचन । अजो नित्योऽविकारश्च जीव. पुरमणन्नपि ॥' इति च । अथ भगवान् कुतोऽपि न बभूव यस्मादतस्तद्देत्ताऽपि विपश्चिन्न जायते न म्रियते च । यत कश्चिज्जीवः स्वतो न बभूव । देहसम्बन्धाद्धि जायते । विपश्चितस्तु देहसबन्धाभावान्न जायते न म्रियते च । मध्व

**हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥**

( १ ) एवभूतमप्यात्मान शरीरमात्रात्मदृष्टिर्हन्ता चेद्यदि मन्यते चिन्तयति हन्तु हनिष्याम्येनमिति, योऽप्यन्यो हत सोऽपि चेन्मन्यते हतमात्मान हतोऽहमिति, उभावपि तौ न विजानीतः स्वमात्मान, यतो नाय हन्ति अविक्रियत्वादात्मनः, तथा न हन्यते आकाशवदविक्रियत्वादेव । अतोऽनात्मज्ञविषय एव धर्माधर्मादिलक्षण. ससारो न ब्रह्मज्ञस्य, श्रुतिप्रामाण्यान्न्यायाच्च धर्माधर्माद्यनुपपत्ते । * शकर.

( २ ) यदुक्त ' हन्ता चेन्मन्यते ' इत्यादिना हननक्रियायामकर्तृत्वमात्मनः श्रूयत इति तदात्मनो नित्यत्वेन हन्तव्यत्वाभावादुच्यते ।

* रामानुज २।३।३३

( ३ ) जीवस्यापि स्वतो मरणाभावादुभौ तौ न विजानीत । मध्व.

विभु दुर्विज्ञेयश्च आत्मा, कामसकल्पशून्यो दुश्चरितनिवृत्त शान्त एव परमात्मानुग्रहेण आत्मविद्याधिकृत

**अणोरणीयान्महतो महीयानात्माऽस्य जन्तोर्निहितो गुहायाम् ।**
**तमक्रतु पश्यति वीतशोको धातुप्रसादान्महिमानमात्मन ॥**

( १ ) कथ पुनरात्मान जानातीत्युच्यते — अणोः सूक्ष्मादणीयान् श्यामाकादेरणुतर । महतो महत्परिमाणान्महीयान्महत्तर पृथिव्यादे । अणु महद्वा यदस्ति लोके वस्तु तत्तेनैवात्मना नित्येनाऽऽत्मवत्सभवति । तदात्मना विनिर्मुक्तमसत्सपद्यते । तस्मादसावेवाऽऽत्माऽणोरणीयान्महतो महीयान्सर्वनामरूपवस्तूपाधिकत्वात् । स चाऽऽत्माऽस्य जन्तोर्ब्रह्मादिस्तम्बपर्यन्तस्य प्राणिजातस्य गुहाया हृदये निहित आत्मभूतः स्थित इत्यर्थ । तमात्मान दर्शनश्रवणमननविज्ञानलिङ्ग अक्रतु अकामो दृष्टादृष्टबाह्यविषयोपरतबुद्धिरित्यर्थ । यदा चैव तदा मनआदीनि करणानि धातव शरीरस्य धारणात्प्रसीदन्तीत्येषा धातूना प्रसादादात्मनो महिमान कर्मनिमित्तवृद्धिक्षयरहित पश्यति अयमहमस्मीति साक्षाद्विजानाति । ततो वीतशोको भवति । शकर.

(२) एव मन्त्रद्वयेन प्रत्यगात्मस्वरूप विशोध्य तदात्मभूतपरमात्मस्वरूपमाह — अणोरणीयानित्यादिना । अणो सर्वाचेतनापेक्षया सूक्ष्माच्चेतनादणुतरस्ततोऽपि सूक्ष्मस्तदन्त.प्रवेशयोग्य इत्यर्थ । महत आकाशादेरपि महत्तर., स्वाव्याप्यवस्तुरहित इत्यर्थ. । अस्य जन्तो ' न जायते म्रियते वा ' इति मन्त्रद्वयनिर्दिष्टस्य चेतनस्याऽऽत्मा अन्त प्रविश्य नियन्तेत्यर्थ. । अतश्च पूर्व-

---

* रग शकरवत् ।

(१) काठ २।१९, रामानुज २।३।३३, श्रीकर २।३।३१

* श्रीकर रामानुजवत् ।

(१) काठ २।२०, रग धातुप्र ( धातु ? ), रामानुज १।४।६, मध्व. रंगवत्, अमध्व १।४।५, श्रीकठ १।२।८, १२, बलदेव १।२।१०

मन्त्रद्वयनिर्दिष्टात्प्रत्यगात्मस्वरूपादणोरणीयानिति मन्त्र सदर्भप्रतिपाद्योऽन्य एवेति सिद्धम्। न च अस्य जन्तोरित्यस्य हृदयगुहावाचिना सन्निधसापेक्षेण गुहायामित्यनेनैवान्वितत्वेन आत्मेत्यनेन नान्वय इति शङ्क्यम्। आत्मशब्दान्वितस्यैव काकाक्षिन्यायेनोभयत्रान्वये दोषाभावात्। त तादृश परमात्मानमक्रतुः काम्यकर्मादिरहितो धातुर्धारकस्य परमात्मन प्रसादादात्मनो महिमान महत्त्वसपादक स्वसार्वज्ञादिगुणाविर्भावहेतुभूत परमात्मान यदा पश्यति तदा वीतशोको भवतीत्यर्थः। धातु. प्रसादाद्वीतशोको भवतीति वाऽन्वयः। 'तमक्रतु पश्यति वीतशोको धातु. प्रसादान्महिमानमीशम्' इति पाठे, अक्रतु कर्मकृतोत्कर्षापकर्षरहितमित्यर्थ. । रग

(३) एव नित्यस्य जन्तोर्गुहायां निहित । ए विष्णौ क्रतुर्यस्य सोऽक्रतुस्तन्निश्चय। आत्मन· सकाशान्महिमान महामानम्। 'जीवाद्गुणपरीमाण यस्माद्विष्णोर्महत्तरम्। तस्माज्जीवास्य महिमा विष्णुरित्युच्यते श्रुतौ ॥' इति च। मध्व.

**आसीनो दूरं व्रजति शयानो याति सर्वत. ।**
**कस्तं मदामदं देव मदन्यो ज्ञातुमर्हति ॥**

(१) अन्यथा दुर्विज्ञेयोऽयमात्मा कामिभि. प्राकृतपुरुषै., यस्मात् आसीनोऽवस्थितोऽचल एव सन् दूर व्रजति। शयानो याति सर्वतः। एवमसावात्मा देवो मदामद. समदोऽमदश्च सहर्षोऽहषश्च विरुद्धधर्मवान्। अतोऽशक्यत्वाज्ज्ञातु कस्त मदामद देव मदन्यो ज्ञातुमर्हति। अस्मदादेरेव सूक्ष्मबुद्धेः पण्डितस्य सुविज्ञेयोऽयमात्मा स्थितिगतिनित्यानित्यादिविरुद्धानेकधर्मोपाधिकत्वाद्विरुद्धधर्मवत्त्वाद्विश्वरूप इव चिन्तामणिवदवभासते । अतो दुर्विज्ञेयत्व दर्शयति कस्त मदन्यो ज्ञातुमर्हतीति। करणानामुपशम. शयनम्। करणजनितस्यैकदेशविज्ञानस्योपशम. शयानस्य भवति। यदा चैव केवलसामान्यविज्ञानत्वात्सर्वतो यातीव, तदा विशेषविज्ञानस्थ. स्वेन रूपेण स्थित एव सन् मनआदिगतिषु तदुपाधिकत्वाद्दूर व्रजतीव। स चेहैव वर्तते।

शकर.

(२) धातुःप्रसादशब्दितभगवदनुग्रहशून्यस्य परमात्वतत्त्वमत्यन्तालौकिकत्वात् दुरधिगममिति दर्शयति—परमात्मनः सर्वात्मगत्वेनेतरत्र विरुद्धतया प्रतीयमाना अप्यासीनदूरगन्तृत्वादिधर्मा जीवद्वारा भवन्तीति भाव.। हर्षामर्षविरुद्धधर्माध्यस्त त परमात्मप्रसादानुगृहीतमाद्दशजनादन्य. को वा ज्ञातेत्यर्थ । रग.

(३) ऐश्वर्यादेवासीनो दूर व्रजतीत्यादि। 'आसीनो दूर व्रजति शयानो याति सर्वत.। ऐश्वर्याद्भगवान्विष्णुर्विरुद्ध घटयत्यसौ ॥' इति च। मध्व.

(४) 'आसीनो दूर व्रजति' 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षु स शृणोत्यकर्ण' इत्यादावलौकिका भगवद्धर्मा उच्यन्ते। अकारणककार्यवचनात् ब्रह्मधर्माणा चाकार्यत्व बोधयति। वल्लभ ३।२।१५

**अशरीरꣳ शरीरेष्वनवस्थेष्ववस्थितम् ।**
**महान्त विभुमात्मान मत्वा धीरो न शोचति ॥**

(१) तद्विज्ञानाच्च शोकात्यय इत्यपि दर्शयति—अशरीर, स्वेन रूपेणाऽऽकाशकल्प आत्मा, तमशरीर शरीरेषु देवपितृमनुष्यादिशरीरेष्वनवस्थेषु अवस्थितिरहितेष्वनित्येष्ववस्थित, नित्यमविकृतमित्येतत्। महान्त, महत्त्वस्याऽऽपेक्षिकत्वशङ्कायामाह — विभु व्यापिनमात्मानम्। आत्मग्रहण स्वतोऽनन्यत्वप्रदर्शनार्थम्। आत्मशब्द. प्रत्यगात्मविषय एव मुख्यः। तमीदृशमात्मान मत्वाऽयमहमिति, धीरो धीमान् न शोचति। न ह्येवविधस्याऽऽत्मविद शोकोपपत्तिः। शकर.

(२) (अशरीर) कर्मकृतशरीररहितम्। महान्त प्रसिद्धवैभवशालिनम्। $ रग

**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।**

(१) काउ २।२१, वल्लभ १।२।१०, ३।२।१५, बलदेव २।१।२७

$ शेष शंकरेण गतार्थम्।

(१) काउ २।२२, ब्रशकर १।१।४ (पृ ५८), १।३।१९, १।४।७, रामानुज १।१।४ (पृ १५२), १।२।१०, २।१।८, ९, निंबार्क १।२।१०, श्रीकठ १।२।१०, श्रीकर १।२।१०, १।३।२, १।४।७, २२, वल्लभ १।४।७

(२) काउ २।२३, रामानुज १।१।१ (पृ १०), १।२।१०, १।२।२३, १।४।६, ३।२।२३, ३४, ३।४।४६,

यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूᳬ स्वाम् ॥

( १ ) यद्यपि दुर्विज्ञेयोऽयमात्मा तथाऽप्युपायेन सुविज्ञेय एवेत्याह — नायमात्मा प्रवचनेनानेकवेदस्वी करणेन लभ्यो ज्ञेय , नापि मेधया ग्रन्थार्थधारणशक्त्या, बहुना श्रुतेन केवलेन । केन तर्हि लभ्य इत्युच्यते — यमेव स्वात्मानमेष साधको वृणुते प्रार्थयते तेनैवाऽऽत्मना वरित्रा स्वयमात्मा लभ्यो ज्ञायत इत्येतत् । निष्कामस्याऽऽत्मानमेव प्रार्थयत आत्मनैवाऽऽत्मा लभ्यत इत्यर्थ । कथ लभ्यत इत्युच्यते — तस्याऽऽत्मकामस्यैष आत्मा विवृणुते प्रकाशयति पारमार्थिकीं तनू स्वा स्वकीया, स्वयाथात्म्यमित्यर्थ ।

शकर

( २ ) ईदृशात्मप्राप्त्युपाय दर्शयति — अत्र प्रवचनशब्देन प्रवचनसाधन मनन लक्ष्यते । उत्तरत्र न मेधया न बहुना श्रुतेनेति वक्ष्यमाणध्यानश्रवणसमभिव्याहारबलेन प्रवचनशब्देन मननस्यैव ग्रहीतुमुचितत्वात् । अध्यापनरूपस्य प्रवचनस्य हेतुत्वाप्रसक्तेश्च । तथैव व्यासार्यैर्विवृतत्वाच्च । एष आत्मा य साधक प्रार्थयते तेन लभ्य, प्रार्थनीयपुसा लभ्य इत्यर्थ. । तत्प्रार्थनीयत्व च तत्प्रियतमस्यैव पुसः । प्रियतमत्व च तत्प्रीतिमत एव । ततश्च भगवद्विषयिण्युपासकस्य प्रीतिर्भगवत उपासके प्रीतिमुत्पाद्य तत्प्राप्तिहेतुर्भवतीत्यर्थः । तस्योपासकस्यैष आत्मा परमात्मा स्वरूप प्रकाशयति स्वात्मान प्रयच्छतीत्यर्थः । वृणुत इति पाठेऽपि स एवार्थ. । रग

( ३ ) ' नायमात्मा ' इत्यादिनोपायभूतस्योपासनस्य भक्तिरूपतामप्याह । १।४।६

' अपि सराधने प्रत्यक्षानुमानाभ्याम् ' — अपि च सराधने सम्यक्प्रीणने भक्तिरूपापन्ने निदिध्यासन एवास्य साक्षात्कारो नान्यत्रेति श्रुतिस्मृतिभ्यामवगम्यते । ' नायमात्मा ' इति श्रुतिः । ३।२।२३

'उपपत्तेश्च'–प्राप्यस्य परमपुरुषस्य स्वप्राप्तौ स्वस्यैवोपायत्वोपपत्ते. । 'नायमात्मा . तनू स्वाम्' इत्यनन्योपायत्वश्रवणात् । * रामानुज ३।२।३४

( ४ ) ' पूर्वं तु बादरायणो हेतुव्यपदेशात् ' — तुशब्दः पक्षनिरासार्थः । फलद पूर्वोक्त परमात्मान वेदाचार्यो मन्यते, ' पुण्येन पुण्य लोक नयति ' इति, 'यमेवैष वृणुते तेन लभ्य.' इति च परस्य ‡ तद्धेतुत्वव्यपदेशात् । निंबार्क ३।२।४१

( ५ ) 'गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोध ' — ननु 'सत्य ज्ञानमनन्त ब्रह्म यो वेद निहित गुहाया परमे व्योमन्' इति, 'तमेव विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय' इत्यादिश्रुतिभिरुक्तरूपब्रह्मज्ञाने सत्येव मोक्ष इत्युच्यते । 'यमेवैष वृणुते तेन लभ्यः' इति श्रुत्या आत्मीयत्वेनाङ्गीकारात्मकवरणस्य भक्तिमार्गीयत्वात् तस्मिन् सति भक्तिमार्गे प्रवेशाद्भक्त्यैव स इत्युच्यते । किंच, 'भक्त्या मामभिजानाति' इत्युक्त्वा 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' इति भगवतोक्तमिति भक्तिमार्गेऽपि पुरुषोत्तमज्ञानेनैव मोक्ष उच्यते । ज्ञानमार्गे त्वक्षरज्ञानेनेति विशेषः ।

तथा च क्वचित् ज्ञान मुक्तिसाधनत्वेनोच्यते, क्वचिद्भक्ति , क्वचिन्नोभयमपीत्येकतरसाधनानिश्चयात् मुक्तिसाधने मुमुक्षो. प्रवृत्त्यसभव इति प्राप्ते आह — गतेरर्थवत्त्वमित्यादि । गतेः ज्ञानस्य अर्थवत्त्व फलजनकत्व उभयथा मर्यादापुष्टिभेदेनेत्यर्थः । अत्रायमाशय. — 'एष उ एव साधु कर्म कारयति त यमेभ्यो लोकेभ्य उन्निनीषति' इत्यादिश्रुतिभ्यो भगवान् सृष्टिपूर्वकाले एव एतस्मै जीवायैतत्कर्म कारयित्वैतत्फल दास्ये इति विचारितवानिति तथैव भवति । तत्र उक्तरीत्या मुक्तिसाधनानुगमे हेतुरवश्य वाच्यः । एव सति कृतिसाध्य साधन ज्ञानभक्तिरूप शास्त्रेण बोध्यते । ताभ्या विहिताभ्या मुक्तिर्मर्यादा । तद्रहितानामपि स्वरूपबलेन स्वप्रापण पुष्टिरुच्यते । तथा च य जीव यस्मिन्मार्गे अङ्गीकृतवान्, त

निंबार्क ३।२।४१, ब्रमध्व १।१।१, ३।२।१९, श्रीकठ १।२।१०, ३।२।२३, ३४, श्रीकर ३।२।२३, ३४, ३।४।४७, वल्लभ १।१।१, ३।२।२४, ३।३।२९, ३।३।४३, ४७, ४९, ५४, ३।४।१, ३९, ४३, ४।२।४, ४।३।१७, ४।४।८ विवृणुते ( वृणुते ) तनूᳬ ( तनुᳬ ), बलदेव २।१।३६, ३।३।३६, ५४

* श्रीकठ रामानुजवत् ।

‡ फलहेतुत्वेत्यर्थ ।

जीव तत्र प्रवर्तयित्वा तत्फल ददातीति सर्व सुस्थम् । अत एव पुष्टिमार्गे अङ्गीकृतस्य ज्ञानादिनैरपेक्ष्य, मर्यादायामङ्गीकृतस्य तदपेक्षित्व च युक्तमेवेति भाव । अत्र साधकत्वेन विपक्षे बाधकमाह —— अन्यथा हि विरोध इति । अन्यथा मर्यादापुष्टिभेदेन व्यवस्थाया अकथने विरोधाद्धेतोस्तथेत्यर्थ । विरोधस्तु पूर्वपक्षग्रन्थे उपपादित । ३।३।२९

'नायमात्मा' इति श्रुतिरितरसाधननिषेधपूर्वक वरणस्य साधनत्वमुक्त्वा वृतलभ्यत्वे हेतुत्व वदन् वरणविषयमप्याह—— 'तस्यैष आत्मा वृणुते तनु स्वाम्' इति । तस्य वृतस्याऽऽत्मन एष भगवानात्मा, अत एव तत्तनूरूपः स जीवात्मा । तद्वरणस्याऽऽवश्यकत्वज्ञापनाय स्वामिति । सर्वो हि स्वकीया तनुमात्मीयत्वेन आत्मत्वेन च वृणुते । तद्विशिष्ट एव भोगान् भुङ्क्ते । ३।३।४७

'स्वामिनः फलश्रुतेरित्यात्रेय '—— पुष्टिमार्गीयभक्तस्य विहितत्वादिति ज्ञानमप्रयोजकम् । तत्र हेतुः —— तस्य भक्तिमार्गस्वामिनः श्रीगोकुलेशादेव फलस्य श्रुतेः । अतो बहिर्गमन न साधनत्वेनात्र कार्यमिति भाव. । अत्र 'यमेवैष वृणुते' इति श्रुतिरनुसन्धेया ।

वल्लभ. ३।४।४३

**नाविरतो दुश्चरितान्नाशान्तो नासमाहित. ।**
**नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥**

(१) किंचान्यत्——न दुश्चरितात्प्रतिषिद्धाच्छ्रुतिस्मृत्यविहितात्पापकर्मणोऽविरतोऽनुपरत· । नापीन्द्रियलौल्यादशान्तोऽनुपरतः । नाप्यसमाहितोऽनेकाग्रमना विक्षिप्तचित्त· । समाहितचित्तोऽपि सन् समाधानफलार्थित्वान्नाप्यशान्तमानसो व्यापृतचित्तः। प्रज्ञानेन ब्रह्मविज्ञानेन एन प्रकृतमात्मानमाप्नुयात् । यस्तु दुश्चरिताद्विरत इन्द्रियलौल्याच्च, समाहितचित्तः समाधान फलादप्युपशान्तमानसश्चाऽऽचार्यवान्, प्रज्ञानेन यथोक्तमात्मान प्राप्नोतीत्यर्थ. ।

शकर.

(१) काउ २।२४, रामानुज ३।४।४९, ४।१।१३, श्रीकर ३।४।५० मानसो ( मनसो ), बलदेव ३।३।५४

(२) परमात्मप्राप्तिहेतूपासनाङ्गतया काश्चिद्धर्मानुपदिशति—— नाविरत इत्यादि । यस्तु परदारपरद्रव्यापहारादनिवृत्त , अनुपशान्तकामक्रोधवेगः, नानाविधव्यापारविक्षिप्ततयाऽनवहितचित्त., अनिगृहीतमनाश्च एत परमात्मान प्रज्ञानेन नाऽऽप्नुयादित्यर्थः । पुरुषार्थस्यैवानृतवदननिषेधस्य दर्शपूर्णमासप्रकरणे क्रत्वङ्गतया नानृत वदेदिति निषेधवत्पुरुषार्थस्यापि दुश्चरितविरत्यादेरुपासनाङ्गतया विधानमुपपद्यते । ततश्च यस्तु पुरुषार्थमपि दुश्चरितनिषेधमतिलङ्घ्य परमात्मोपासनमविगुण चिकीर्षति तस्य दुश्चरितनिषेधरूपाङ्गवैगुण्यादुपासनासाद्गुण्य न सिद्ध्यतीति भावः ।

रग.

**यस्य ब्रह्म च क्षत्रं च उभे भवत ओदन ।**
**मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥**

(१) यस्त्वनेवभूत, यस्यात्मनो ब्रह्मक्षत्रे सर्वधर्मविधारके अपि सर्वत्राणभूते उभे ओदनोऽशन भवन स्याताम् । सर्वहरोऽपि मृत्युर्यस्योपसेचनमिवौदनस्य अशनत्वेऽप्यपर्याप्तस्त प्राकृतबुद्धिर्यथोक्तसाधनरहित· सन् क इत्था इत्थमेव यथोक्तसाधनवानिवेत्यर्थ । वेद विजानाति, यत्र स आत्मेति । शकर.

(२) 'अत्ता चराचरग्रहणात्' — तत्र किमग्निरत्ता स्यादुत जीवोऽथवा परमात्मेति सशयः । विशेषानवधारणात् । त्रयाणा चाग्निजीवपरमात्मनामस्मिन् ग्रन्थे प्रश्नोपन्यासोपलब्धेः । एव प्राप्ते ब्रूमः —— अत्ताऽत्र परमात्मा भवितुमर्हति । कुतः । चराचरग्रहणात् । चराचर हि स्थावरजङ्गम मृत्यूपसेचनमिहाऽऽद्यत्वेन प्रतीयते तादृशस्य चाऽऽद्यस्य न परमात्मनोऽन्यः कार्त्स्न्येनात्ता सभवति । परमात्मा तु विकारजातमुपस हरन् सर्वमत्तीत्युपपद्यते । नन्विह चराचरग्रहण नोपलभ्यते कथ सिद्धवच्चराचरग्रहण हेतुत्वेनोपादीयते । नैष

(१) काउ २।२५, ब्रशकर १।२।९, १०, भास्कर १।२।९, रामानुज १।२।९, १।४।६, निंबार्क १।२।९, ब्रमध्व १।२।९, श्रीकठ १।१।२ ( पृ १२६ ), १।२।९ ( पृ ३३५ ), श्रीकर १।१।१ ( पृ ४० ), १।१।११, १।२।९, १०, २।२।४२ ( पृ २४६ ), वल्लभ १।२।९ ओदन ( ओदनम् ), बलदेव १।२।९

दोषः । मृत्यूपसेचनत्वेन सर्वस्य प्राणिनिकायस्य प्रतीयमानत्वात् । ब्रह्मक्षत्रयोश्च प्राधान्यात्प्रदर्शनार्थत्वोपपत्तेः । १।२।९

'प्रकरणाच्च' — इतश्च परमात्मैवेहात्ता भवितुमर्हति, यत्कारणं प्रकरणमिदं परमात्मनः — 'न जायते म्रियते वा विपश्चित्' (काउ २।१८) इत्यादि । प्रकृतग्रहणं च न्याय्यम् । 'क इत्था वेद यत्र सः' इति च दुर्विज्ञानत्वं परमात्मलिङ्गम् ।

* ब्रशंकर १।२।१०

(३) ब्रह्म च क्षत्रं च ब्रह्मक्षत्राख्यवर्णद्वयोपलक्षितकृत्स्नचराचरात्मकमिदं जगद्यस्यौदनो भवति यस्य विनाश्यो भवतीत्यर्थः । यस्य मृत्युः स्वयमद्यमानत्वे सत्यन्यस्यादनहेतुर्भवति । स निखिलचराचरसंहर्ता परमात्मा यत्र यस्मिन्प्रकारे स्थितो यत्प्रकारविशिष्टस्तं प्रकारमित्थमिति को वेदेत्यर्थः । रंग

(४) 'अत्ता चराचरग्रहणात्'—अत्ता भगवानेव । कुतः, चराचरग्रहणात् । चरं सर्वप्राणिवधार्थं परिभ्रमन्मृत्युः । अचरं ब्रह्मक्षत्ररूपं कस्याऽप्यचाल्यम् । तयोरत्ता न जीवो भवितुमर्हति । वल्लभ १।२।९

जीवपरमात्मभेदं, जीवात्मरूपो रथी परमात्मप्राप्त्यधिकृतं तदनधिकृतश्चेति द्विविधं

**ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।**
**छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥**

---

* वल्लभभिन्नेषु ब्रह्मक्षत्रपदयोरुपलक्षणता ब्रशंकरसमाना ।

(१) काउ ३।१, ब्रशंकर १।२।११, ३।३।३४, भास्कर १।२।११, ३।३।३४ परार्धे ( परार्द्ध्ये ), रंग भास्करवत्, रामानुज १।१।१ ( पृ ७७, १०१ ), १।२।११, १।४।६ भास्करवत्, निंबार्क १।२।११, मध्व त्रिणा ( त्रिना ), ब्रमध्व १।२।११ मध्ववत्, श्रीकंठ १।२।११, श्रीकर १।१।१ ( पृ २४ ), १।१।२, २।३।४७, ३।३।३४, ५१ प्रविष्टौ ( प्रतिष्ठौ ), वल्लभ १।२।११, २।३।२४, ४।२।१७, विज्ञान. १।२।११, ३।२।१३ भास्करवत्, बलदेव १।२।९, १०

(१) ऋतं पिबन्तावित्यस्या वल्ल्याः संबन्धः । विद्याविद्ये नानाविरुद्धफले इत्युपन्यस्ते, न तु सफले ते यथावन्निर्णीते । तन्निर्णयार्था रथरूपककल्पना । तथा च प्रतिपत्तिसौकर्यम् । एवं च प्राप्तृप्राप्यगन्तृगन्तव्यविवेकार्थं द्वावात्मानावुपन्यस्येते—ऋतं सत्यमवश्यंभावित्वात्कर्मफलं पिबन्तौ । एकस्तत्र कर्मफलं पिबति भुङ्क्ते, नेतरस्तथाऽपि पातृसंबन्धात्पिबन्तावित्युच्यते छत्रिन्यायेन । सुकृतस्य स्वयंकृतस्य कर्मण ऋतमिति पूर्वेण संबन्धः । लोकेऽस्मिन् शरीरे । गुहां गुहायां बुद्धौ प्रविष्टौ । परमे, बाह्यपुरुषाकाशसंस्थानापेक्षया परमम् । परस्य ब्रह्मणोऽर्धं स्थानं परार्धं हार्दाकाशम् । तस्मिन्हि परं ब्रह्मोपलभ्यते । अतस्तस्मिन्परमे परार्धे हार्दाकाशे प्रविष्टावित्यर्थः । तौ च छायातपाविव विलक्षणौ संसारित्वासंसारित्वेन ब्रह्मविदो वदन्ति कथयन्ति । न केवलमकर्मिण एव वदन्ति, पञ्चाग्नयो गृहस्थाः, ये च त्रिणाचिकेताः, त्रिः कृत्वा नाचिकेतोऽग्निश्चितो यैस्ते त्रिणाचिकेताः । शंकर.

(२) 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्'—यद्वा, जीवस्तावत्पिबति, ईश्वरस्तु पाययति । पाययन्नपि पिबतीत्युच्यते । पाचयितर्यपि पक्तृत्वप्रसिद्धिदर्शनात् । छायातपाविति चेतनाचेतनयोर्निर्देश उपपद्यते । छायातपवत्परस्परविलक्षणत्वात् । तस्मात् बुद्धिक्षेत्रज्ञाविहोच्येयातामित्येवं प्राप्ते ब्रूमः—विज्ञानात्मपरमात्मानाविहोच्येयाताम् । कस्मात् । आत्मानौ हि तावुभावपि चेतनौ समानस्वभावौ । संख्याश्रवणे च समानस्वभावेष्वेव लोके प्रतीतिर्दृश्यते । गुहाहितत्वदर्शनादेव परमात्मा प्रत्येतव्य इति वदामः । गुहाहितत्वं तु श्रुतिस्मृतिष्वसकृत्परमात्मन एव दृश्यते— 'गुहाहितं गह्वरेष्ठं पुराणम्' (काउ २।१२) 'यो वेद निहितं गुहायां परमे व्योमन्' (तैउ २।१) 'आत्मानमन्विच्छ गुहां प्रविष्टम्' इत्याद्यासु । १।२।११

'विशेषणाच्च'— कुतश्च विज्ञानात्मपरमात्मानौ गृह्येते—विशेषणं च विज्ञानात्मपरमात्मनोरेव भवति । 'आत्मानं रथिनं विद्धि शरीरं रथमेव तु' (काउ ३।३) इत्यादिना परेण ग्रन्थेन रथिरथादिरूपककल्पनया विज्ञानात्मानं रथिनं संसारमोक्षयोर्गन्तारं कल्पयति ।

' सोऽध्वन पारमाप्नोति तद्विष्णो परम पदम् ' ( काउ ३।९ ) इति परमात्मान गन्तव्यम् । तथा— ' त दुर्दर्शं गूढमनुप्रविष्ट गुहाहित गह्वरेष्ठ पुराणम् । अध्यात्मयोगाधिगमेन देव मत्वा धीरो हर्षशोकौ जहाति ॥' ( काउ २।१२ ) इति पूर्वस्मिन्नपि ग्रन्थे मन्तृमन्तव्यत्वेनैतावेव विशेषितौ । प्रकरण चेद परमात्मन । ' ब्रह्मविदो वदन्ति ' इति च वक्तृविशेषोपादान परमात्मपरिग्रहे घटते । तस्मादिह जीवपरमात्मानावुच्येयाताम् । एष एव न्याय ' द्वा सुपर्णा सयुजा सखाया ' ( मुउ ३।१।१ ) इत्येवमादिष्वपि ।

* ब्रशकर १।२।१२

( ३ ) क इत्था वेद यत्र स इत्यस्य दुर्ज्ञानत्वेऽत्रेत्थमास्त इत्यस्यार्थस्य दुर्बोधत्वे न वय तदुपासने शक्ता इति मन्यमान प्रत्युपास्योपासकयोरेकगुहानुप्रवेशेन पर मात्मन सूपास्यत्वाद्वयमप्युपासितु शक्ता इति द्वाभ्यां मन्त्राभ्या दर्शयति—ऋत पिबन्तावित्यादिना । सुकृतसाध्ये लोके वर्तमानौ । तत्रापि परमाकाशे परार्ध्ये, परार्ध सख्याया उत्तरावधिः, तदर्हतीति परार्ध्यमुत्कृष्ट इत्यर्थ· । छायातपशब्दाभ्यां शाशौ लभ्येते । अशशब्देन जीवनिर्देशस्य चायमभिप्रायः । उपास्योपासकयोरेकगुहावर्तित्वे तयोरेव प्राप्यप्राप्तृतया वक्तव्यतया प्राप्यस्य च तत्प्राप्तिसाधनरथत्वेन रूपिते शरीरेऽवस्थान (न १) युक्तम् । न हि रथेन प्राप्तव्यार्थो रथस्थो भव तीति शङ्का न कार्या । प्राप्यस्य परमात्मनस्तत्रावस्थितत्वेऽपि जीवस्य ' पराभिध्यानात्तु तिरोहितम् ' ( ब्रसू. ३।२।९ ) इत्युक्तरीत्या परमात्मसकल्पमूलकर्मरूपाविद्यावेष्टिततया तदनुभवलक्षणतत्प्राप्तेरभावेन प्राप्तृप्राप्ययोर्जीवपरयोः रथत्वरूपितशरीरान्तर्वर्त्येकगुहावर्तित्वकथने नानुपपत्तिरिति । पञ्चाग्निशश्रषाशुद्धान्त.करणाः । त्रिणाचिकेता., उक्तोऽर्थ· । एवभूता ब्रह्मविदो वदन्तीत्यर्थः । $ रग.

( ४ ) ' आत्मान्तरात्मेति विभुरेक एव द्विधा स्थित· । स विष्णु· परमे वायौ परेभ्योऽप्युद्धरूपके । शुभान्पिबति भोगान्स छायेव विदुषा प्रभु. । आतपः पापिना नित्य— ॥ ' मध्व.

* भास्कर ब्रशंकरवत् । $ शेष शकरवत् ।

( ५ ) यदुक्तमीश्वरस्य न भोक्तृत्वमिति, तदपि न युज्यते । ' प्राणाराम मनआनन्दम् ' ( तैउ १।६ ) इति ब्रह्मणोऽप्यात्मारामस्य मनोमात्रविषयस्वरूपानन्दभोगदर्शनात् । श्रीकठ १।२।११

(६) ' गुहा प्रविष्टावात्मानौ हि तद्दर्शनात्'—'ऋत सत्य पर ब्रह्म ' इति ऋतसत्ययोर्ब्रह्मत्वप्रतिपादनात् स्वरूपाऽमृतपातारौ । सुकृतमपि ब्रह्मैव । ' तस्मात् तत्सुकृतमुच्यते ' इति श्रुते· । स एव लोकः । उपचारात् षष्ठी । अक्षर वा परमपरार्द्धोपरि, तत्रत्याना परिदृश्यमानत्वाच्छाया प्रतिसारूप्य, सायुज्य गतस्य जीवस्यापि तथात्वात्, ततोऽपि विशिष्ट ब्रह्म प्रकटानन्दत्वादातप । परोक्षवादः । काण्डत्रयेऽपि तद्वाद इति त्रयाणा ग्रहणम् । वल्लभ १।२।११

[ परो मीयते यत्र, परस्य वा मा लक्ष्मीर्यत्र तादृशे परार्द्धाऽभिधलोकोपरितने अक्षरात्मके लोके गुहां सत्यब्रह्मपुरस्थ दहरपुण्डरीक वेश्म प्रविष्टौ सुकृतस्य ब्रह्मण ऋत स्वरूपामृत पिबन्तौ अनुभवन्तौ जीवपरमात्मानौ ब्रह्मविदो ज्ञानिनः, पञ्चाग्नय उपासकाः, त्रिणाचिकेताः कर्मिणश्च छायातपौ पूर्वोक्तरीत्याऽतिसरूपत्वेऽपि विलक्षणौ भगवतः परोक्षप्रियत्वात्तत्तोषार्थं परोक्षवादेन वदन्तीति । भाष्यप्रकाश ]

( ७ ) ' गुहा प्रविष्टावात्मानौ हि तद्दर्शनात् '— इतश्च परमेश्वरोऽत्ता भवति । हि यस्माद्गुहा प्रविष्टावात्मनौ जीवेश्वरौ द्वावेवात्तारौ, तद्दर्शनात् — 'ऋत पि . चिकेता.' इति पूर्ववाक्ये द्वयोरेव जीवेश्वरयो र्भोक्तृत्वश्रवणादित्यर्थः । पुण्यस्य लोके विराडाख्यपुरे परार्द्ध्ये परमर्द्धिमति यः गुहा भुवर्लोकाख्य हृदयगह्वर तस्यां ज्योतिर्मण्डलरूपलिङ्गशरीरोपाधिना प्रविष्टौ ऋत सत्य कामजात पिबन्तौ भुञ्जानौ समष्टिजीवेश्वरौ ब्रह्मविद्भिस्त्रिणाचिकेतस छायातपसदृशौ वदन्ति सहस्थितिगतिनियमादिभ्य इति श्रुत्यर्थ. । विज्ञान १।२।११

**यः सेतुरीजानानामक्षरं ब्रह्म यत्परम् ।**
**अभयं तितीर्षतां पारं नाचिकेतꣳ शकेमहि ॥**

(१) काउ ३।२, ब्रशकर ३।३।३४, भास्कर ३।३।३४ रीजानाना ( जीवाना ), रामानुज. १।२।१२, निंबार्क.

( १ ) यः सेतुरिव सेतुरीजानाना यजमानाना कर्मिणा दुःखसतरणार्थत्वान्नाचिकेतोऽग्निस्त वय ज्ञातु चेतु च शकेमहि शक्नुवन्त । किंच यच्चाभय भयशून्य ससारपार तितीर्षता तर्तुमिच्छता ब्रह्मविदा यत्परमाश्रयमक्षरमात्माख्य ब्रह्म तच्च ज्ञातु शकेमहि शक्नुवन्तः । परापरे ब्रह्मणी कर्मब्रह्मविदाश्रये वेदितव्ये इति वाक्यार्थ. । एतयोरेव ह्युपन्यास. कृत ऋत पिबन्ताविति ।

शकर

( २ ) यज्वना य आधारभूतः कर्मफलप्रद इत्यर्थ. । नाचिकेताग्निप्राप्यमुपासितु शक्ताः स्मेत्यर्थ । अतो दुरुपास्यत्वबुद्ध्या न भेतव्यमिति भावः । * रग

( ३ ) इत्युपास्यः परमात्मोच्यते । नाचिकेत नाचिकेतस्य कर्मण प्राप्यमित्यर्थ. । रामानुज १।२।१२

( ४ ) ' मर्यादा विष्णुयाजिनाम्। ससारस्य च पारस्थः स विष्णुर्विश्वरूपक. ॥ ' मध्व.

( ५ ) ईजानाना यतमानानाम् ।

† विज्ञान १।२।१२

§आत्मान<sup></sup>रथिनं विद्धि शरीर<sup></sup>रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मन प्रग्रहमेव च ॥

( १ ) तत्र य उपाधिकृतः ससारी विद्याविद्ययोरधिकृतो मोक्षगमनाय ससारगमनाय च तस्य तदुभयगमने साधनो रथ. कल्प्यते । तत्र तमात्मानमृतप ससारिण रथिन रथस्वामिन विद्धि जानीहि । शरीर रथमेव तु, रथबद्धहयस्थानीयैरिन्द्रियैराकृष्यमाणत्वाच्छरीरस्य । बुद्धिं तु अध्यवसायलक्षणा सारथिं विद्धि बुद्धिनेतृप्रधानत्वाच्छरीरस्य, सारथिनेतृप्रधान इव रथ । सर्वं हि देहगत कार्यं बुद्धिकर्तव्यमेव प्रायेण । मनः सकल्पविकल्पादिलक्षण प्रग्रह रशना विद्धि । मनसा हि प्रगृहीतानि श्रोत्रादीनि करणानि प्रवर्तन्ते रशनयेवाश्वा ।

शकर.

( २ ) आत्मान रथिन विद्धीत्यादिना सोऽध्वनः पारमाप्नोतीत्यन्तेन ससाराध्वपारभूतवैष्णवपरमपदप्राप्तौ परिकरमुपदिशन्प्राप्तृस्वरूपमुपदिशति ।

* रग.

इन्द्रियाणि हयानाहुर्विषयाꣳस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्त भोक्तेत्याहुर्मनीषिण ॥

( १ ) इन्द्रियाणि चक्षुरादीनि हयानाहुः रथकल्पनाकुशला. शरीररथाकर्षणसामान्यात् । तेष्वेवेन्द्रियेषु हयत्वेन परिकल्पितेषु गोचरान्मार्गान् रूपादीन्विषयान्विद्धि । आत्मेन्द्रियमनोयुक्त शरीरेन्द्रियमनोभिः सहित सयुक्तमात्मान भोक्तेति ससारीत्याहुर्मनीषिणो विवेकिनः । न हि केवलस्याऽऽत्मनो भोक्तृत्वमस्ति, बुद्ध्याद्युपाधिकृतमेव तस्य भोक्तृत्वम् । तथा च श्रुत्यन्तर केवलस्याभोक्तृत्वमेव दर्शयति — ध्यायतीव लेलायतीवेत्यादि । एव च सति वक्ष्यमाणरथकल्पनया वैष्णवस्य पदस्याऽऽत्मतया प्रतिपत्तिरुपपद्यते, नान्यथा स्वभावानतिक्रमात् । $ शकर

( २ ) ननु तथापि देहेन्द्रियादिभिः सबन्धाभावाद्विदुषा कथ प्रवृत्तिः । न ह्यसङ्गस्यात्मनो देहादिभिः सह अभिमानातिरिक्त सबन्धः सभवतीति चेन्न, विदुषा ज्ञानोपपत्त्यर्थं असङ्गवाक्यैर्लेपाख्यस्य विकारहेतुसयोगस्यैव निषेधात्, न तु पुष्करपात्रे जलस्येव असङ्गेऽपि

---

* शेष शकरवत् ।

† ३।२।३१ इति सूत्रे ब्रह्मण सेतुशब्दव्यपदेश्यतायामुदाहृतत्वात्सेतुशब्दस्य ब्रह्मपरता आपद्यते ।

§ विज्ञान इन्द्रियेभ्यो भेदेन पाठात्करणत्वेऽपि अनिन्द्रियत्व बुद्धिमनसोरभिप्रेतम् ।

१।२।१२, मध्व शकेमहि (शकेमसि), ब्रमध्व १।२।१२, विज्ञान १।२।१२, ३।२।३१

(१) काउ ३।३, अशकर १।२।१२, १।४।१, २।३।१५, भास्कर १।४।१, २।३।१५ सारथिं विद्धि ( सारथिं विद्यात् ), रामानुज १।२।१२, १।४।१, ६, १०, ३।३।१४ मेव तु ( मेव च ), निंबार्क १।४।१ रामानुजवत्, मध्व रामानुजवत्, श्रीकठ १।४।१, श्रीकर १।२।१२, १।४।१, ३।३।१३, वल्लभ १।२।१२, १।४।१, विज्ञान २।४।६, बलदेव १।२।१२.

* शेष शकरेण गतार्थम् ।

$ रग शकरेण गतार्थम् ।

(१) काउ ३।४, ब्रशकर १।१।४ ( पृ ७० ), १।४।१, २।३।४०, भास्कर १।४।१, रामानुज १।१।४ ( पृ १५३ ), १।४।१, श्रीकर १।४।१, वल्लभ १।४।१, विज्ञान १।१।१ ( पृ २० ), १।२।१२, २।४।१२.

चेतने स्वोपाधेः सयोगविशेष॰ प्रतिषिध्यते । 'आत्मे न्द्रियमनोयुक्त भोक्तेत्याहुर्मनीषिणः' इति श्रुते. । स च सयोगविशेष. प्रारब्धकर्मक्षयादेव नश्यतीति सर्वैरेवाऽभ्यु पेयम् । विज्ञान १।१।१

[१]यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सदा ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथे ॥

( १ ) तत्रैव सति यस्तु बुद्ध्याख्य॰ सारथिरविज्ञानवान् अनिपुणोऽविवेकी प्रवृत्तौ च निवृत्तौ च भवति, यथेतरो रथचर्यायां, अयुक्तेन अप्रगृहीतेनाऽसमाहितेन मनसा प्रग्रहस्थानीयेन सदा युक्तो भवति, तस्याकुशलस्य बुद्धिसारथेरिन्द्रियाण्यश्वस्थानीयानि अवश्यानि अशक्यनिवारणानि, दुष्टाश्वा अदान्ताश्वा इवेतरसारथेर्भवन्ति । शकर

(२) शरीरादे. रथत्वादिरूपणस्य प्रयोजनमाह—यस्त्विति । रग

[२]यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथे ॥

(१) यस्तु पुन पूर्वोक्तविपरीत. सारथिर्भवति विज्ञानवान्प्रगृहीतमना: समाहितचित्त॰ सदा, तस्याश्वस्थानीयानीन्द्रियाणि प्रवर्तयितु निवर्तयितु वा शक्यानि वश्यानि दान्ता सदश्वा इवेतरसारथेः ।

शकर.

( २ ) लोके हि समीचीनसारथिप्रग्रहवतोऽश्वाः वशीकृता भवन्ति । एव सारथिप्रग्रहत्वेन रूपितयोर्विज्ञानमनसोः सामीचीन्येऽश्वत्वेन रूपितानीन्द्रियाणि वश्यानि भवन्ति, नान्यथेत्यर्थ॰ । रग

[३]यस्त्वविज्ञानवान्भवत्यमनस्क. सदाऽशुचि. ।
न स तत्पदमाप्नोति सꣳसारं चाधिगच्छति ॥

( १ ) तस्य पूर्वोक्तस्याविज्ञानवतो बुद्धिसारथेरिद फलमाह—यस्त्वविज्ञानवान् भवति । अमनस्कोऽप्रगृहीतमनस्क॰ स तत एवाऽशुचि. सदैव । न स रथी तत्पूर्वोक्तमक्षर यत्पर पदमाप्नोति तेन सारथिना । न केवल नाऽऽप्नोति, ससार च जन्ममरणलक्षणमधिगच्छति । शकर

( २ ) हयत्वेन रूपितानामिन्द्रियाणां वशीकरणतदभावयो. प्रयोजन दर्शयति मन्त्रद्वयेन— यस्त्विति । रग.

[१]यस्तु विज्ञानवान्भवति समनस्क. सदा शुचि ।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥

यस्तु द्वितीयो विज्ञानवान् विज्ञानवत्सारथ्युपेतो रथी विद्वानित्येतत् । युक्तमनाः समनस्कः स तत एव सदा शुचि , स तु तत्पदमाप्नोति । यस्मादाप्तात्पदादप्रच्युत. सन् भूय पुनर्न जायते ससारे ।

शकर.

[२]विज्ञानसारथिर्यस्तु मन प्रग्रहवान्नर ।
सोऽध्वन पारमाप्नोति तद्विष्णो परम पदम् ॥

( १ ) किं तत्पदमित्याह—विज्ञानसारथिर्यस्तु । यो विवेकबुद्धिसारथि. पूर्वोक्तो मन प्रग्रहवान्प्रगृहीत मनाः समाहितचित्त सन् शुचिर्नरो विद्वान्सोऽध्वन. ससारगते पार परमेवाधिगन्तव्यमित्येतत्, आप्नोति मुच्यते सर्वससारबन्धनै॰ । तद्विष्णोर्व्यापनशीलस्य ब्रह्मणः परमात्मनो वासुदेवाख्यस्य परम प्रकृष्ट पद स्थान सतत्त्वमित्येतत्, यदसावाप्नोति विद्वान् ।

* शकर.

( २ ) विष्णुपदसबन्धिनी विरजानदी प्राकृतप्रपञ्चसीमावधि. । तदनुप्रवेशतः प्रक्षीणसर्वकर्मलेपा योगिनो विष्णुपदादूर्ध्वमप्राकृतशिवपद परमानन्दमयमनुविशन्ति । तथा हि श्रूयते— 'सोऽध्वनः पदम्' इति । ३।३।३०

(१) काठ ३।५
(२) काठ ३।६, रग सदा ( सह ), वल्लभ १।२।११
(३) काठ ३।७

* रग शकरवत् । वल्लभ पदशब्द पादरूपावयववाची ।

(१) काठ ३।८, वल्लभ १।२।११
(२) काठ ३।९, ब्रशकर १।२।१२, ३।३।१५, भास्कर १।२।१२, १।४।१, ३।३।१५, रामानुज १।२।९, १२, १।४।१, ५, ब्रमध्व १।४।६, श्रीकठ. ३।३।३०, ४।३।१२, १५, ४।४।२२, श्रीकर १।२।२ ( पृ ९९ ), १।२।१२, १।४।१, ३।३।२९, ४।४।२२, वल्लभ १।१।२३, १।२।१२

यच्छङ्कित 'सोऽध्वन. पदम्' इति । तत्र विष्णुशब्द परब्रह्मवाचक । षड्विधस्याऽध्वन पार तदतीत पद हि विश्वाधिकस्य शिवस्यैवोपपन्नम् । यद्वा विष्णो प्रपञ्चावस्थितस्य परमुत्कृष्ट पद स्वरूप परमाकाशरूप परमानन्दलक्षण शिवस्य परब्रह्मण पदमेव । यत्रासौ निहितात्मा प्रपञ्चाकारोऽपि न प्रसरति ।

* श्रीकठ ४।३।१५

इन्द्रियादिभ्य सर्वेभ्य पर पुरुष एव
परा गति

**इन्द्रियेभ्य परा ह्यर्था अर्थेभ्यश्च पर मन ।**
**मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्पर ॥**
**महत परमव्यक्तमव्यक्तात्पुरुष पर ।**
**पुरुषान्न परं किंचित्सा काष्ठा सा परा गति ॥**

(१) अधुना यत्पद गन्तव्य तस्य इन्द्रियाणि स्थूलान्यारभ्य सूक्ष्मतारतम्यक्रमेण प्रत्यगात्मतयाऽधिगम कर्तव्य इत्येवमर्थमिदमारभ्यत — स्थूलानि तावदिन्द्रियाणि, तानि यैरर्थैरात्मप्रकाशनायाऽऽरब्धानि, तेभ्य इन्द्रियेभ्य स्वकार्येभ्यस्ते परा ह्यर्था' सूक्ष्मा महान्तश्च प्रत्यगात्मभूताश्च । तेभ्योऽप्यर्थेभ्यश्च पर सूक्ष्मतर महत्प्रत्यगात्मभूत च मन मन'शब्दवाच्य मनस आरम्भक भूतसूक्ष्म सकल्पविकल्पाद्यारम्भकत्वात् । मनसोऽपि परा सूक्ष्मतरा महत्तरा प्रत्यगात्मभूता च बुद्धि बुद्धिशब्दवाच्यमध्यवसायाद्यारम्भक भूतसूक्ष्मम् । बुद्धेरात्मा सर्वप्राणिबुद्धीना प्रत्यगात्मभूतत्वादात्मा महान सर्वमहत्त्वात् । अव्यक्ताद्यत्प्रथम जात हैरण्यगर्भं तत्त्व बोधाबोधात्मक महानात्मा बुद्धे पर इत्युच्यते । महतोऽपि पर सूक्ष्मतर प्रत्यगात्मभूत सर्वमहत्तर चाव्यक्त सर्वस्य जगतो बीजभूतमव्याकृतनामरूपसतत्त्व सर्वकार्यकारणशक्तिसमाहाररूपमव्यक्ताव्याकृताकाशादिनामवाच्य परमात्मन्योतप्रोतभावेन समाश्रित वटकणिकायामिव वटवृक्षशक्ति । तस्मादव्यक्तात्पर सूक्ष्मतर सर्वकारणकारणत्वात्प्रत्यगात्मत्वाच्च महाश्च, अत एव पुरुष. सर्वपूरणात् । अतोऽन्यस्य परस्य प्रसङ्ग निवारयन्नाह — पुरुषान्न पर किंचिदिति । यस्मान्नास्ति पुरुषाच्चिन्मात्रघनात्पर किंचिदपि वस्त्वन्तर, तस्मात्सूक्ष्म वमहत्त्वप्रत्यगात्मत्वाना सा काष्ठा निष्ठा पर्यवसानम् । अत्र हीन्द्रियेभ्य आरभ्य सूक्ष्मत्वादिपरिसमाप्ति । अत एव च गन्तृणा सर्वगतिमता ससारिणां परा प्रकृष्टा गति । 'यद्गत्वा न निवर्तन्ते' इति स्मृत । शकर

(२) 'आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च' —आनुमानिकमपि अनुमाननिरूपितमपि प्रधान एकेषा शाखिना शब्दवदुपलभ्यते । काठके हि पठ्यत — 'महत. परमव्यक्तमव्यक्तात्पुरुष' पर' इति । तत्र य एव यन्नामानो य क्रमाश्च महदव्यक्तपुरुषा स्मृतिप्रसिद्धास्त एवह प्रत्यभिज्ञायन्ते । तत्राव्यक्तमिति स्मृतिप्रसिद्धे' शब्दादिहीनत्वाच्च न व्यक्तमव्यक्तमिति व्युत्पत्तिसभवात्स्मृतिप्रसिद्ध प्रधानमभिधीयते । तस्य शब्दवत्त्वादशब्दत्वमनुपपन्नम् । तदेव च जगत कारण श्रुतिस्मृतिन्यायप्रसिद्धिभ्यः इति चत् नैतदेवम् ।

शरीररूपकविन्यस्तगृहीत । शरीर ह्यत्र रथरूपकविन्यस्तमव्यक्तशब्दन परिगृह्यते । कुत । प्रकरणात्परिशषाच्च ।

तत्र य एवेन्द्रियादय' पर्वस्या रथरूपककल्पनायामश्वादिभावेन प्रकृतास्त एवेह परिगृह्यन्ते प्रकृतहानाप्रकृतप्रक्रियापरिहाराय । तत्रेन्द्रियमनोबुद्धयस्तावत्पूर्वत्रेह च समानशब्दा एव । अर्था ये शब्दादयो विषया इन्द्रियहयगोचरत्वेन निर्दिष्टास्तेषा चेन्द्रियेभ्यः परत्वम् । इन्द्रियाणा ग्रहत्व विषयाणामतिग्रहत्वमिति श्रुति-

---

* श्रीकर श्रीकठवत् ।

(१) काठ ३।१०, ब्रशकर १।४।१, ७, ३।३।१४, भास्कर १।४।१, ३।३।१४; रामानुज १।४।१, ५, ७, श्रीकठ. १।४।१, ७, श्रीकर १।४।१, ७, ३।३।१६, वल्लभ १।४।१, विज्ञान १।४।७, बलदेव १।४।१

(२) काठ ३।११, ब्रशकर १।१।४ (पृ ७६), १।३।१३, १।४।१, ५, ३।३।१४, भास्कर १।४।१, ३।३।१४, रामानुज १।४।१, ५, निबार्क १।४।१, ब्रमध्व १।४।१, श्रीकठ १।४।१, ३, श्रीकर १।३।१३, १।४।१, ३, ४, ५, ३।३।१६, वल्लभ १।४।१, विज्ञान. १।४।७, ३।२।३१, बलदेव १।४।१

प्रसिद्धे । विषयेभ्यश्च मनसः परत्वं मनोमूलत्वाद्विषयेन्द्रियव्यवहारस्य । 'मनसस्तु परा बुद्धिः' बुद्धिं ह्यारुह्य भोग्यजातं भोक्तारमुपसर्पति । 'बुद्धेरात्मा महान् परः' य स 'आत्मानं रथिनं विद्धि' इति रथित्वेनोपक्षिप्तः । कुतः, आत्मशब्दात्, भोक्तुश्च भोगोपकरणात्परत्वोपपत्तेः । महत्त्वं चास्य स्वामित्वादुपपन्नम् । अथवा 'मनो महान्मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः । प्रज्ञा संविच्चितिश्चैव स्मृतिश्च परिपठ्यते ॥' (मभा १३–१०११) इति स्मृतेः 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' (श्वेउ. ६।१८) इति च श्रुतेर्या प्रथमजस्य हिरण्यगर्भस्य बुद्धिः सा सर्वासां बुद्धीनां परा प्रतिष्ठा सेह महानात्मेत्युच्यते । सा च पूर्वत्र बुद्धिग्रहणेनैव गृहीता सती हिरुगिहोपदिश्यते । तस्या (अ)प्यस्मदीयाभ्यो बुद्धिभ्यः परत्वोपपत्तेः । एतस्मिंस्तु पक्षे परमात्मविषयेणैव परेण पुरुषग्रहणेन रथिन आत्मनो ग्रहणं द्रष्टव्यम् । परमार्थतः परमात्मविज्ञानात्मनोर्भेदाभावात् । तदेवं शरीरमेवैकं परिशिष्यते । इतराणीन्द्रियादीनि प्रकृतान्येव परमपदं दिदर्शयिषया समनुक्रामन्परिशिष्यमाणेनेहान्त्येनाव्यक्तशब्देन परिशिष्यमाणं प्रकृतं शरीरं दर्शयतीति गम्यते । १।४।१

'सूक्ष्मं तु तदर्हत्वात्' — सूक्ष्मं तु इह कारणात्मना शरीरं विवक्ष्यते सूक्ष्मस्याव्यक्तशब्दार्हत्वात् । यद्यपि स्थूलमिदं शरीरं न स्वयमव्यक्तशब्दमर्हति, तथापि तस्य त्वारम्भकं भूतसूक्ष्ममव्यक्तशब्दमर्हति । १।४।२

'आध्यानाय प्रयोजनाभावात्' — पुरुष एव ह्येभ्यः सर्वेभ्यः परः प्रतिपाद्यत इति युक्तं, न प्रत्येकमेषां परत्वप्रतिपादनम् । कस्मात् । प्रयोजनाभावात् । न हीतरेषु परत्वेन प्रतिपन्नेषु किंचित्प्रयोजनं दृश्यते श्रूयते वा । पुरुषे त्विन्द्रियादिभ्यः परस्मिन्सर्वानर्थव्रातातीते प्रतिपन्ने दृश्यते प्रयोजनं मोक्षसिद्धिः । तथा च श्रुतिः 'निचाय्य तन्मृत्युमुखात्प्रमुच्यते' (काउ. ३।१५) इति । अपि च परप्रतिषेधेन काष्ठाशब्देन च पुरुषविषयमादरं दर्शयन्पुरुषप्रतिपत्त्यर्थैव पूर्वापरप्रवाहोक्तिरिति दर्शयति — आध्यानायेति । आध्यानपूर्वकाय सम्यग्दर्शनायेत्यर्थः । सम्यग्दर्शनार्थमेव हीहाऽऽध्यानमुपदिश्यते, न त्वाध्यानमेव स्वप्रधानम् । ¶ ब्रशांकर ३।३।१४

(३) वशीकार्यत्वाय रथादिरूपितेषु शरीरादिषु यानि येभ्यो वशीकार्यतायां प्रधानानि तान्युच्यन्ते । अस्य मन्त्रद्वयस्यार्थो भगवता भाष्यकृतानुमानिकाधिकरणे (ब्रसू. १।४।१) उक्तः । इत्थं हि तत्र भाष्यम् । तेषु रथादिरूपितशरीरादिषु यानि येभ्यो वशीकार्यतायां प्रधानानि तान्युच्यन्ते इन्द्रियेभ्यः परा इत्यादिना । तत्र हयत्वेन रूपितेभ्य इन्द्रियेभ्यो गोचरत्वेन रूपिता विषया वशीकार्यत्वे पराः । वश्येन्द्रियस्यापि विषयसंनिधाविन्द्रियाणां दुर्निग्रहत्वात् । तेभ्योऽपि परं प्रग्रहरूपितं मनः । मनसि विषयप्रवणे विषयासंनिधानस्याप्यकिंचित्करत्वात् । तस्मादपि सारथित्वरूपिता बुद्धिः परा । तस्या अपि रथित्वेन रूपित आत्मा कर्तृत्वेन प्राधान्यात्परः सर्वस्याऽऽत्मेच्छायत्तत्वात् । आत्मैव महानिति च विशेष्यते । तस्मादपि रथरूपितं शरीरं परम् । तदायत्तत्वाज्जीवस्य सकलपुरुषार्थसाधनप्रवृत्तीनाम् । तस्मादपि परः सर्वान्तरात्मभूतोऽन्तर्याम्यध्वनः पारभूतः परमपुरुषो यथोक्तस्याऽऽत्मपर्यन्तस्य तत्संकल्पायत्तप्रवृत्तित्वात् । स खल्वन्तर्यामितयोपासकस्यापि प्रयोजकः । 'परात्तु तच्छ्रुतेः' (ब्रसू. २।३।४१) इति हि जीवात्मनः कर्तृत्वं परमपुरुषायत्तमिति वक्ष्यते । वशीकार्योपासननिर्वृत्त्युपायकाष्ठाभूतः परमप्राप्यश्च स एव । तदिदमुच्यते 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इति ।

* रंग.

(४) 'देवेभ्य इन्द्रियात्मभ्यो ज्यायांसोऽर्थाभिमानिनः । सोमवित्तपसूर्याप्पा अश्व्यग्नीन्द्रेन्द्रसूनवः । यमो दक्षश्चेन्द्रियेशाः सौपर्णी वारुणी तथा । उमेति चार्थमानिन्यस्तिस्रो ह्येकैकदेवताः । मनोभिमानिनो रुद्रवीन्द्रशेषाख्ययोऽपि तु । ते श्रेष्ठा अर्थमानिभ्यस्तेभ्यो बुद्धिः सरस्वती । तस्या ब्रह्मा महानात्मा ततोऽव्यक्ताभिधा रमा । तस्यास्तु पुरुषो विष्णुः पूर्णत्वान्नैव तत्समः । कश्चित्कुतश्चिच्छ्रेष्ठस्तु नास्तीति किमु सा कथा ॥' मध्व.

---

¶ भास्कर. ब्रशांकरवत् ।

* श्रीकंठ उत्तरोत्तरपरत्वोक्ते प्रयोजनं रंगवत् ।

( ५ ) तस्यैव पारतन्त्र्याच्छरीररूपकेऽव्यक्ते विन्यस्तस्य परमात्मन एवाव्यक्तशब्देन गृहीते । कप्रत्यय कुत्सने । परमात्मन एवाऽव्यक्तशब्द, तत्तन्त्रत्वेन तच्छरीररूपत्वादितरस्याऽप्यव्यक्तशब्द । 

ब्रमध्व १।४।१

( ६ ) तत्रेन्द्रियाणामात्मा विषया । ते च मनसा सम्यक्त्वेन भावितास्तथा भवन्ति । विरक्तेन्द्रियाणामतथात्वात् । बुद्धेरात्मा विज्ञानम् । तत् ब्रह्मविषयक महत् भवति । तत परमव्यक्त न प्रकट, भगवत्कृपैव । सा तु भगवदधीना, न साधनान्तराधीना । स च भगवान् स्वाधीन इति । 

वल्लभ १।४।१

[ आत्मेति । 'घ्राण च गन्ध' इतिन्यायेन भगवदिन्द्रियरूपतया तदाधिदैविकत्वात्तेषा नियामका । श्रौतस्य परपदस्याऽयमर्थ । मोक्षप्रकरणे यदिन्द्रियेभ्यः परत्व विषयाणामुच्यते, तद्भगवदीयतया मनसा सम्यक्त्वेन भावितानामेव । 

भाष्यप्रकाश ]

( ७ ) 'महद्वच' — ननु महत्तत्वे किं प्रमाणमिति चेदुच्यते, 'इन्द्रियेभ्य पुरुषः पर' इत्याद्या श्रुतयः, स्मृत्यनुमितेश्च । अस्या च श्रुतौ अवान्तरभेदेन बुद्धिमहतोर्भेद उक्तः महच्छब्दस्य चित्तवाचितया । स्मृतिषु चित्तबुद्धी एकीकृत्य बुद्धिशब्देन महत्तत्त्वमुच्यते । 

विज्ञान १।४।७

आत्मा सूक्ष्मधीगम्य, आत्मज्ञानमार्ग अध्यात्मयोग

**एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते ।**
**दृश्यते त्वग्र्यया बुद्धया सूक्ष्मया सूक्ष्मदर्शिभि ॥**

ननु गतिश्चेदागत्याऽपि भवितव्य, कथ 'यस्माद्भूयो न जायते' इति । नैष दोषः । सर्वस्य प्रत्यगात्मत्वादवगतिरेव गतिरित्युपचर्यते । प्रत्यगात्मत्व च दर्शितमिन्द्रियमनोबुद्धिपरत्वेन । यो हि गन्ता सोऽगतमप्रत्यग्रूप गच्छत्यनात्मभूत, न विपर्ययेण । तथा च श्रुति — 'अनध्वगा अध्वसु पारयिष्णवः' इत्याद्या । तथा च दर्शयति प्रत्यगात्मत्व सर्वस्य । एष पुरुषः सर्वेषु ब्रह्मादिस्तम्बपर्यन्तेषु भूतेषु गूढः सवृतो दर्शनश्रवणादिकर्माऽविद्यामायाच्छन्नोऽत एवाऽऽत्मा न प्रकाशते आत्मत्वेन कस्यचित् । अहो अतिगम्भीरा दुरवगाह्या विचित्रा माया चेय, यदय सर्वो जन्तु परमार्थत परमार्थसतत्त्वोऽप्येव बोध्यमानः अह परमात्मेति न गृह्णाति, अनात्मान देहेन्द्रियादिसघातमात्मनो दृश्यमानमपि घटादिवत् आत्मत्वेनाऽहममुष्य पुत्र इत्यनुच्यमानोऽपि गृह्णाति । नून परस्यैव मायया मोमुह्यमान सर्वो लोको बम्भ्रमीति । तथा च स्मरणम् — 'नाह प्रकाश सर्वस्य योगमायासमावृत' इत्यादि । ननु विरुद्धमिदमुच्यते 'मत्वा धीरो न शोचति' 'न प्रकाशते' इति च । नैतदेवम् । असस्कृतबुद्धेरविज्ञेयत्वान्न प्रकाशते इत्युक्तम् । दृश्यते तु सस्कृतयाऽग्र्यया अग्रमिवाग्र्या तया, एकाग्रतयोपेतयेत्येतत् । सूक्ष्मया सूक्ष्मवस्तुनिरूपणपरया । कै, सूक्ष्मदर्शिभि । 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिप्रकारेण सूक्ष्मतापारम्पर्यदर्शनेन पर सूक्ष्म द्रष्टु शील येषा ते सूक्ष्मदर्शिनः, तै सूक्ष्मदर्शिभि पण्डितैरित्येतत् । 

शकर

**यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।**
**ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥**

( १ ) तत्प्रतिपत्त्युपायमाह — यच्छेन्नियच्छेदुपसहरेत्प्राज्ञो विवेकी । किं, वाक् वाचम् । वागत्रोपलक्षणार्था सर्वेषामिन्द्रियाणाम् । क्व, मनसी । मनसीति छान्दस दैर्घ्यम् । तच्च मनो यच्छेज्ज्ञाने प्रकाशस्वरूपे बुद्धावात्मनि । बुद्धिर्हि मनआदिकरणान्याप्नोतीत्यात्मा प्रत्यक्तेषाम् । ज्ञान बुद्धिमात्मनि महति प्रथमजे नियच्छेत् । प्रथमजवत्स्वच्छस्वभावमात्मनो विज्ञानमापादयेदित्यर्थः । त च महान्तमात्मान यच्छेच्छान्ते सर्वविशेष-

---

( १ ) काउ ३।१२, ब्रशकर १।४।१, ५, ३।३।१५, भास्कर १।१।१९, १।४।१, ३।३।१५, रामानुज १।४।१, ५, २।१।१५, श्रीकर १।१।२ ( पृ ३१ ), १।४।१, ३।२।२३, वल्लभ १।४।१

( १ ) काउ ३।१३, ब्रशकर १।४।१, ३।३।१५, भास्कर १।४।१, ३।३।१४, रामानुज १।४।१, निंबार्क १।४।१, ब्रमध्व २।३।१५, श्रीकठ १।४।१, ५, श्रीकर १।४।१, ५, ३।३।६१, ४।२।२ मनसी ( मनसि ), विज्ञान ३।४।१५, ४।१।२

प्रत्यस्तमितरूपेऽविक्रिये सर्वान्तरे सर्वबुद्धिप्रत्ययसाक्षिणि मुख्य आत्मनि। * शकर

( २ ) तामपि बुद्धिं महत्यात्मनि भोक्तरि अग्न्यायां वा बुद्धौ सूक्ष्मतापादनेन नियच्छेत्। 

अशकर १।४।१

( ३ ) बाह्याभ्यन्तरकरणव्यापारराहित्यप्रकारमध्यात्मयोगाधिगमेनेति निर्दिष्टजीवस्वरूपज्ञानप्रकार दर्शयति—यच्छेद्वाङ्मनसी प्राज्ञ इत्यादिना। इम मन्त्र प्रस्तुत्येत्थ हि भाष्यकृता—'हयादिरूपितानामिन्द्रियादीना वशीकरणप्रकारोऽयमुच्यते। ज्ञानशब्देनात्र पूर्वोक्ता बुद्धिरभिधीयते। ज्ञान आत्मनीति व्यधिकरणे सप्तम्यौ। आत्मनि वर्तमाने ज्ञाने नियच्छेदित्यर्थ.। बुद्धिं कर्तरि महत्यात्मनि नियच्छेत्। त कर्तार परस्मिन् ब्रह्मणि सर्वान्तर्यामिणि नियच्छेत्। व्यत्ययेन तदिति नपुसकलिङ्गता। एवभूतेन रथिना वैष्णव पद गतव्य मित्यर्थः' इति भाषितम्। विवृत च श्रुतप्रकाशिकायाम्—'वाचो मनसि नियमन मनोऽननुगुणप्रवृत्तिवैमुख्यापादनम्। मनसो बुद्धौ नियमन व्यवसायानुगुणप्रवृत्तितापादनम्। बुद्धिश्चार्थेषु हेयताध्यवसायरूपा। तस्या बुद्धेरात्मनि नियमन नाम स एवोपादेयतया साक्षात्कार्य इत्येतदर्थविषयत्वापादनम्। शान्ते स्वत ऊर्मिषट्कप्रतिभटे शान्त आत्मनि महत आत्मनो जीवस्य नियमन नाम तच्छेषताप्रतिपत्तिः.' इति।

‡ रग.

( ४ ) 'तस्माद्वागात्मिका देवीरुमाद्यास्तु शिवादिषु। शिवादीन्ब्रह्मवाय्वोस्तु नियच्छेन्महदात्मनोः। तौ रमाया परानन्दे तां विष्णौ परमात्मनि। तद्वशत्वेन तद्ध्यान नियमो नाम नापरः। कुतस्तु मानुषो देवान्नियच्छेद्विनियामकान्॥' इति च।

मध्व.

**उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत।**
**क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति॥**

* भास्कर महत्यात्मनि भोक्तरि। शेष शकरवत्।
‡ शेष शकरवत्।
( १ ) काउ ३।१४, रामानुज. १।४।६



( १ ) एव पुरुष आत्मनि सर्वं प्रविलाप्य नामरूपकर्मत्रय यन्मिथ्याज्ञानविजृम्भित क्रियाकारकफललक्षण स्वात्मयाथात्म्यज्ञानेन मरीच्युदकरज्जुसर्पगगनमलानीव मरीचिरज्जुगगनस्वरूपदर्शनेनैव स्वस्थः प्रशान्तात्मा कृतकृत्यो भवति यतः, अतस्तद्दर्शनार्थमनाद्यविद्याप्रसुप्ता उत्तिष्ठत हे जन्तव, आत्मज्ञानाभिमुखा भवत, जाग्रत अज्ञाननिद्राया घोररूपायाः सर्वानर्थबीजभूताया क्षय कुरुत। कथ, प्राप्य उपगम्य वरान् प्रकृष्टानाचार्यांस्तद्विद· तदुपदिष्ट सर्वान्तरमात्मानमहमस्मीति निबोधत अवगच्छत। न ह्युपेक्षितव्यमिति श्रुतिरनुकम्पयाऽऽह मातृवत्, अतिसूक्ष्मबुद्धिविषयत्वाज्ज्ञेयस्य। किमिव सूक्ष्मबुद्धिरित्युच्यते—क्षुरस्य धाराऽग्र निशिता तीक्ष्णीकृता दुरत्यया दुःखेनात्ययो यस्या सा दुरत्यया। यथा सा पद्भ्यां दुर्गमनीया तथा दुर्गं दुःसपाद्यमित्येतत्। पथ. पन्थान तत्त्वज्ञानलक्षण मार्गं कवयो मेधाविनो वदन्ति। ज्ञेयस्यातिसूक्ष्मत्वात्तद्विषयस्य ज्ञानमार्गस्य दु.सपाद्यत्व वदन्तीत्यभिप्रायः।

शकर.

( २ ) यद्वोपासिताद्भगवतो ब्रह्मविद्भ्यो वा 'देवतापारमार्थ्यं च यथावद्वेत्स्यते भवान्' इत्येवरूपान्वरान् प्राप्य ज्ञेयमात्मतत्त्व निबोधत, नोदासितव्यमिति भाव.। ज्ञानिनस्तदात्मतत्त्व दुर्गम पन्थान वर्णयन्ति। तीक्ष्णक्षुराग्रे सचरत. पुसो यथा कियत्यप्यनवधाने आत्मनाशो भवति। एवमिहाऽऽत्मस्वरूपावगतिदशायां स्वल्पेऽप्यनवधानापराधे आत्मनाशो भवतीति भावः।

* रग.

**अशब्दमस्पर्शमरूपमव्ययं तथाऽरस नित्यमगन्धवच्च यत्।**

* शेष शकरवत्।

(१) काउ ३।१५, अशंकर १।१।२०, १।४।५, ३।२।११, १४, ३।३।१४, भास्कर १।१।२०, १।४।५, ३।२।११, ४।१।१, रामानुज १।१।१ (पृ ८), १।२।२, १।४।५, ६, निंबार्क १।४।५, अमध्व १।१।५, १।४।५, श्रीकठ १।४।५, श्रीकर. १।१।२१, १।४।४, ५, ३।२।११, १३, वल्लभ १।४।५, ३।२।२३, बलदेव १।४।५

अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥

( १ ) तत्कथमतिसूक्ष्मत्वं ज्ञेयस्येत्युच्यते । स्थूला तावदियं मेदिनी शब्दस्पर्शरूपरसगन्धोपचिता सर्वेन्द्रियविषयभूता, तथा शरीरम् । तत्रैकैकगुणापकर्षेण गन्धादीनां सूक्ष्मत्वमहत्त्वविशुद्धत्वनित्यत्वादितारतम्यं दृष्टमबादिषु यावदाकाशमिति । ते गन्धादयः सर्व एव स्थूलत्वाद्विकाराः शब्दान्ता यत्र न सन्ति किमु तस्य सूक्ष्मत्वादिनिरतिशयत्वं वक्तव्यमित्येतद्दर्शयति श्रुतिः —अशब्दमस्पर्शमरूपं ( अव्ययं तथा ) अरसं ( नित्यं ) अगन्धवच्च यत् । एतद्व्याख्यातं ब्रह्म अव्ययम् । यद्धि शब्दादिमत्तद्व्येति, इदं त्वशब्दादिमत्त्वादव्ययं न व्येति न क्षीयते, अत एव च नित्यं, यद्धि व्येति तदनित्यमिदं तु न व्येति, अतो नित्यम् । इतश्च नित्यं, अनादि अविद्यमान आदिः कारणमस्य तदिदमनादि । यद्धयादिमत्तत्कार्यत्वादनित्यं कारणे प्रलीयते, यथा पृथिव्यादि । इदं तु सर्वकारणत्वादकार्यमकार्यत्वान्नित्यं न तस्य कारणमस्ति यस्मिन् प्रलीयेत । तथाऽनन्तमविद्यमानोऽन्तः कार्यमस्य तदनन्तम् । यथा कदल्यादेः फलादिकार्योत्पादनेनाप्यनित्यत्वं दृष्टं, न च तथाऽप्यन्तवत्त्वं ब्रह्मणः, अतोऽपि नित्यम् । महतो महत्तत्त्वात् बुद्ध्याख्यात्परं विलक्षणं नित्यविज्ञप्तिस्वरूपत्वात्सर्वसाक्षि हि सर्वभूतात्मत्वाद्ब्रह्म । उक्तं ह्येष सर्वेषु भूतेष्वित्यादि । ध्रुवं च कूटस्थं नित्यं, न पृथिव्यादिवदापेक्षिकं नित्यत्वम् । तदेवंभूतं ब्रह्मात्मानं निचाय्यावगम्य तमात्मानं मृत्युमुखान्मृत्युगोचरादविद्याकामकर्मलक्षणात्प्रमुच्यते वियुज्यते ।

शांकर

( २ ) 'ज्ञेयत्वावचनाच्च' — ज्ञेयत्वेन च सांख्यैः प्रधानं स्मर्यते गुणपुरुषान्तरज्ञानात्कैवल्यमिति वदद्भिः । न चेदमिहाव्यक्तं ज्ञेयत्वेनोच्यते । पदमात्रं ह्यव्यक्तशब्दो नेहाव्यक्तं ज्ञातव्यमुपासितव्यं चेति वाक्यमस्ति । १।४।४

'वदतीति चेन्न प्राज्ञो हि प्रकरणात्' —अत्राह सांख्यः ज्ञेयत्वावचनात् इत्यसिद्धम् । कथम् । श्रूयते ह्युत्तरत्राव्यक्तशब्दोदितस्य प्रधानस्य ज्ञेयत्ववचनम्—अत्र ब्रूमः—नेह प्रधानं निचाय्यत्वेन निर्दिष्टम् । प्राज्ञो हि इह परमात्मा निचाय्यत्वेन निर्दिष्ट इति गम्यते । कुतः । प्रकरणात् । प्राज्ञस्य हि प्रकरणं विततं वर्तते । 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इत्यादिनिर्देशात् ।

१।४।५

'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' —इतश्च न प्रधानस्याव्यक्तशब्दवाच्यत्वं ज्ञेयत्वं वा । यस्मात् त्रयाणामेव पदार्थानामग्निजीवपरमात्मनामस्मिन्ग्रन्थे कठवल्लीषु वरप्रदानसामर्थ्याद्वक्तव्यतया उपन्यासः दृश्यते । तद्विषय एव च प्रश्नः । नातोऽन्यस्य प्रश्न उपन्यासो वाऽस्ति ।

नैव वयमिह वरप्रदानव्यतिरेकेण प्रश्नं कंचित्कल्पयामो वाक्योपक्रमसामर्थ्यात् । वरप्रदानोपक्रमा हि मृत्युनचिकेतःसंवादरूपा वाक्यप्रवृत्तिरा समाप्तेः कठवल्लीनां लक्ष्यते । मृत्युः किल नचिकेतसे पित्रा प्रहिताय त्रीन्वरान्प्रददौ । नचिकेताः किल तेषां प्रथमेन वरेण पितुः सौमनस्यं वव्रे द्वितीयेनाग्निविद्यां तृतीयेनाऽऽत्मविद्यां, 'येयं प्रेते' इति 'वराणामेष वरस्तृतीयः' ( काठ. १।२० ) इति लिङ्गात् । तत्र यदि 'अन्यत्र धर्मात्' इत्यन्योऽयमपूर्वः प्रश्न उत्थाप्येत ततो वरप्रदानव्यतिरेकेणापि प्रश्नकल्पनाद्वाक्यं बाध्येत । ननु प्रष्टव्यभेदादपूर्वोऽयं प्रश्नो भवितुमर्हति । इति चेत् । न । जीवप्राज्ञयोरेकत्वाभ्युपगमात् । इह च 'अन्यत्र धर्मात्' इत्यस्य प्रश्नस्य प्रतिवचनं 'न जायते म्रियते वा विपश्चित्' इति जन्ममरणप्रतिषेधेन प्रतिपाद्यमानं शारीरपरमेश्वरयोरभेदं दर्शयति । तथा— 'स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति । महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥' (काठ. ४।४ ) इति स्वप्नजागरितदृशो जीवस्यैव महत्त्वविभुत्वविशेषणस्य मननेन शोकविच्छेदं दर्शयन्न प्राज्ञादन्यो जीव इति दर्शयति । प्राज्ञविज्ञानाद्धि शोकविच्छेद इति वेदान्तसिद्धान्तः । तथाऽग्रे— 'यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥' (काठ ४।१०) इति जीवप्राज्ञभेददृष्टिमपवदति । तथा जीवविषयस्यास्तित्वनास्तित्वप्रश्नस्यानन्तरं 'अन्यं वरं नचिकेतो वृणीष्व' इत्यारभ्य मृत्युना तैस्तैः कामैः

प्रलोभ्यमानोऽपि नचिकेता यदा न चचाल तदैनं मृत्यु-रभ्युदयनि श्रेयसविभागप्रदर्शनेन विद्याविद्याविभागप्रद-र्शनेन च ' विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त ' ( काउ २।४ ) इति प्रशस्य प्रश्नमपि तदीयं प्रशंसन् यदुवाच ' तं दुर्दर्शं गूढमनुप्र-विष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥ ' ( काउ २।१२ ) इति तेनापि जीवप्राज्ञयोरभेद एवेह विवक्षित इति गम्यते । सूत्रं त्वविद्याकल्पितजीवप्राज्ञभेदापेक्षया योज-यितव्यम् । १।४।६

' महद्वच्च '— यथा महच्छब्दः सांख्यैः सत्ता-मात्रेऽपि प्रथमजे प्रयुक्तो न तमेव वैदिकेऽपि प्रयोगेऽ-भिधत्ते । ' बुद्धेरात्मा महान्परः ' । इत्येवमादावात्म शब्दप्रयोगादिभ्यो हेतुभ्यः । तथाऽव्यक्तशब्दोऽपि न वैदिके प्रयोगे प्रधानमभिधातुमर्हति ।

ब्रशकर १।४।७

( ३ ) उपसंहरति—अत्र नित्यमित्येतदशब्दमि-त्यादौ प्रत्येकं संबध्यते । अशब्दत्वादिवशादेव कालवद् व्ययम् । अथवा अपचयशून्यमित्यर्थः । महत इत्यनेनाऽऽ-त्मनि महति नियच्छेदिति पूर्वमन्त्रनिर्दिष्टो जीवो गृह्यते । ध्रुवं स्थिरं निचाय्य दृष्ट्वा दर्शनसमानाकारोपासनेन विषयीकृत्येत्यर्थः । मृत्युमुखादिति भीषणात्संसारादि-त्यर्थः । रंग.

( ४ ) ' अशब्दमस्पर्शम् ' इत्यादिना प्राकृतगन्ध-रसादिनिषेधादप्राकृता. स्वासाधारणा निरवद्या निरति शयाः कल्याणाः स्वभोग्यभूता. सर्वविधा गन्धरसास्तस्य सन्तीत्यर्थः । १।२।२

' त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ' — अस्मिन् प्रकरणे ह्युपायोपेयोपेतॄणां त्रयाणामेव चैवमुपन्यासो ज्ञेयत्वेनोपन्यासस्तद्विषयश्च प्रश्नो दृश्यते नान्यस्याव्य-क्तादेः । तथा हि नचिकेता नाम मुमुक्षुः सन् मृत्युप्रदत्ते वरत्रये प्रथमेन वरेणात्मनः पुरुषार्थयोग्यतापादनीमा-त्मनि पितुः सुमनस्कतां प्रतिलभ्य द्वितीयेन वरेण मोक्ष साधनभूतां नचिकेता अग्निविद्यां वव्रे— ' स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम् । स्वर्ग-लोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण ॥ ' ( काउ १।१३ ) इति । स्वर्गशब्देनात्र परमपुरुषार्थ-लक्षणमोक्षोऽभिधीयते । अमृतत्वं भजन्त इति तत्रस्थस्य जननमरणाभावश्रवणात् । उत्तरत्र क्षयिफलकर्मनिन्दाद-र्शनाच्च । ' त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्त रति जन्ममृत्यू ' ( काउ १।१७ ) इति च प्रतिवच नात् । तृतीयेन वरेण मोक्षस्वरूपप्रश्नद्वारेणोपेयस्वरूपमु-पेतृस्वरूपमुपायभूतानुष्ठितकर्मानुगृहीतोपासनस्वरूपं च पृष्टम् । ' येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नाय-मस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ॥ ' ( काउ १।२० ) इत्येवं मोक्षे पृष्टे तदुपदेशयोग्यतां परीक्ष्योपदिदेश । ' तं दुर्दर्शं गूढमनुप्र विष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥ '(काउ २।१२) इति तदेव सामान्येनोपदिष्टे नचिकेता प्रीतः सन् देवं मत्वेत्युपास्यतया निर्दिष्टस्य प्राप्यभूतस्य देवस्या-ध्यात्मयोगाधिगमेनेति वेदितव्यतया निर्दिष्टस्य प्राप्तुः प्रत्यगात्मनश्च मत्वा धीरो हर्षशोकौ जहातीति निर्दि ष्टस्य ब्रह्मोपासनस्य च स्वरूपविशोधनाय पुनः पप्रच्छ ' अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥ ' ( काउ २।१४) इति । एवं सकलेतरातीतानागतवर्तमानसाध्यसाधनसा धकविलक्षणे त्रये क्रमेण पृष्टे प्रथमं प्रणवं प्रशस्य तद्वाच्य प्राप्यस्वरूपं तदन्तर्गतं च प्राप्तृस्वरूपं वाचकस्वरूपं चोपायं पुनरपि सामान्येन ख्यापयन्प्रणवं तावदुपदिदेश । 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्यो-मित्येतत् ॥ ' ( काउ २।१५ ) इति । एवमुपदिश्य पुनरपि प्रणवं प्रशस्य प्रथमं तावत्प्राप्तुः प्रत्यगात्मनः स्वरूपमाह ' न जायते म्रियते वा विपश्चित् ' ( काउ. २।१८ ) इत्यादिना । प्राप्यस्य परस्य ब्रह्मणो विष्णोः स्वरूपं ' अणोरणीयान् ' ( काउ २।२० ) इत्यादिना ' क इत्था वेद यत्र सः ' ( काउ २।२४ ) इत्यन्ते नोपदिशन्मध्ये ' नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ' ( काउ. २।२२ ) इत्यादिनोपाय भूतस्योपासनस्य भक्तिरूपतामप्याह । ' ऋतं पिबन्तौ ' ( काउ. ३।१ ) इति चोपास्यस्योपासकेन सहाव-

स्थानात्सूपास्यतामुक्त्वा 'आत्मान रथिन विद्धि' (काउ ३।३) इत्यादिना 'दुर्गं पथस्तत्कवयो वदन्ति' (काउ ३।१४) इत्यन्तेनोपासनप्रकारमुपासीनस्य च वैष्णवपरमपदप्राप्तिमभिधाय 'अशब्दमस्पर्शम्' इत्यादिनोपसहृतम्। अतस्त्रयाणामेवात्र ज्ञेयत्वेनोपन्यासः प्रश्नश्च। तस्मान्नेह तान्त्रिकस्याव्यक्तस्य ग्रहणम्।

रामानुज १।४।६

(५) स्वभार्यायाः परत्व सिद्धमिति महतः परमित्येवोक्तम्। मध्व

नाचिकेताख्यानश्रवणादिविधि

**नाचिकेतमुपाख्यान मृत्युप्रोक्तऽ सनातनम्।**
**उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते॥**

प्रस्तुतविज्ञानस्तुत्यर्थमाह श्रुतिः—नाचिकेत नचिकेतसा प्राप्त नाचिकेत मृत्युना प्रोक्त मृत्युप्रोक्तमिदमाख्यानमुपाख्यान वल्लीत्रयलक्षण सनातन चिरन्तन वैदिकत्वादुक्त्वा ब्राह्मणेभ्यः श्रुत्वा च आचार्येभ्यो मेधावी ब्रह्मैव लोको ब्रह्मलोकस्तस्मिन्महीयते आत्मभत उपास्यो भवतीत्यर्थः। * शकर

**य इम परम गुह्यं श्रावयेद्ब्रह्मसंसदि।**
**प्रयत श्राद्धकाले वा तदानन्त्याय कल्पते**
**तदानन्त्याय कल्पत इति॥**

यः कश्चिदिम ग्रन्थ परम प्रकृष्ट गुह्य गोप्य श्रावयेत् ग्रन्थतोऽर्थतश्च ब्राह्मणाना ससदि ब्रह्मससदि प्रयतः शुचिर्भूत्वा श्राद्धकाले वा श्रावयेत् भुञ्जानानां तच्छ्राद्धमस्याऽऽनन्त्यायानन्तफलाय कल्पते सपद्यते। द्विर्वचन मध्यायपरिसमाप्त्यर्थम्। ¶ शकर

बाह्यविषयालोचननिवृत्त्यैव अमृतत्वोपायभूत आत्मसाक्षात्कार

**पराञ्चि खानि व्यतृणत्स्वयभूस्तस्मात्पराङ् पश्यति नान्तरात्मन्।**
**कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्॥**

(१) 'एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या' इत्युक्तम्। क पुनः प्रतिबन्धोऽग्र्याया बुद्धेर्येन तदभावादात्मा न दृश्यत इति तद्दर्शनकारणप्रदर्शनार्था वल्ली आरभ्यते। विज्ञाते हि श्रेयःप्रतिबन्धकारणे तदपनयनाय यत्न आरब्धु शक्यते नान्यथेति। पराञ्चि परागञ्चन्ति गच्छन्तीति, खानि तदुपलक्षितानि श्रोत्रादीनीन्द्रियाणि खानीत्युच्यन्ते। तानि पराञ्च्येव शब्दादिविषयप्रकाशनाय प्रवर्तन्ते। यस्मादेवस्वभावकानि तानि व्यतृणद्धिंसितवान् हनन कृतवानित्यर्थः। कोऽसौ। स्वयभूः परमेश्वरः स्वयमेव स्वतन्त्रो भवति सर्वदा न परतन्त्र इति। तस्मात् पराङ् पराग्रूपानानात्मभूतान् शब्दादीन्पश्यत्युपलभते उपलब्धा नान्तरात्मन्नान्तरात्मानमित्यर्थः। एवस्वभावेऽपि सति लोकस्य कश्चिन्नद्याः प्रतिस्रोतः प्रवर्तनमिव धीरो धीमान् विवेकी प्रत्यगात्मान प्रत्यक् चासावात्मा चेति प्रत्यगात्मा। प्रतीच्येवाऽऽत्मशब्दो रूढो लोके नान्यस्मिन्। व्युत्पत्तिपक्षेऽपि तत्रैवाऽऽत्मशब्दो वर्तते। 'यच्चाऽऽप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य सततो भावस्तस्मादात्मेति कीर्त्यते॥' इत्यात्मशब्दव्युत्पत्तिस्मरणात्। त प्रत्यगात्मान स्व स्वभावमैक्षदपश्यत्पश्यतीत्यर्थ। छन्दसि कालानियमात्। कथ पश्यतीत्युच्यते—आवृत्तचक्षुः आवृत्त व्यावृत्त चक्षुः श्रोत्रादिकमिन्द्रियजातमशेषविषयाद्यस्य स आवृत्तचक्षुः। स एव सस्कृत प्रत्यगात्मान पश्यति। न हि बाह्यविषयालोचनपरत्व प्रत्यगात्मेक्षण चैकस्य सभवति। किमर्थं पुनरित्थं महता प्रयासेन स्वाभावप्रवृत्तिनिरोध कृत्वा धीरः प्रत्यगात्मान पश्यतीत्युच्यते—अमृतत्वममरणधर्मत्व नित्यस्वभावतामिच्छन्नात्मन इत्यर्थः। शकर

(२) उत्तिष्ठत जाग्रतेति प्रोत्साहनेऽप्यात्मस्वरूपविमुखान्पश्यन् शोचति। पराञ्चि परान् अञ्चन्तीति

---

* रग शकरवत्।

¶ रग शकरेण गतार्थम्।

(१) काउ ३।१६ (२) काउ ३।१७

(३) काउ ४।१, ब्रशकर ३।२।२४, भास्कर ३।४।४९, रग पश्यति (पश्यन्ति), मध्व व्यतृणत् (व्यतृणात्) पराङ् (पराक्), श्रीकर १।१।२ (पृ ३१), वल्लभ ३।२।२३, विज्ञान ३।२।२३, बलदेव ३।२।२४

पराञ्चि। परार्थप्रकाशकानीन्द्रियाणि सृष्टवानित्यर्थः। यद्वा पराङ् पराङ्मुखानि भूत्वा विषयानेव पश्यन्तीत्यर्थः। पराङ् पश्यतीति पाठे लोकाभिप्रायमेकवचनम्। * रग

(३) तृणु कात्करण इति धातु.। मध्व.

[1]पराच. कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम्।
अथ धीरा अमृतत्व विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥

(१) यत्तावत्स्वाभाविक परागेवानात्मदर्शन तदात्मदर्शनस्य प्रतिबन्धकारणमविद्या तत्प्रतिकूलत्वात्, या च पराक्ष्वेवाविद्योपप्रदर्शितेषु दृष्टादृष्टेषु भोगेषु तृष्णा ताभ्यामविद्यातृष्णाभ्या प्रतिबद्धात्मदर्शना पराचो बहिर्गतानेव कामान् काम्यान्विषयाननुयन्ति अनुगच्छन्ति बाला अल्पप्रज्ञास्ते तेन कारणेन मृत्योरविद्याकामकर्मसमुदायस्य यन्ति गच्छन्ति विततस्य विस्तीर्णस्य सर्वतो व्याप्तस्य पाश पाश्यते बध्यते येन त पाश देहेन्द्रियादिसयोगवियोगलक्षणम्। अनवरत जन्ममरणजरारोगाद्यनेकानर्थव्रात प्रतिपद्यन्त इत्यर्थः। यत एवमथ तस्माद्धीरा विवेकिनः प्रत्यगात्मस्वरूपावस्थानलक्षणममृतत्व ध्रुव विदित्वा। देवाद्यमृतत्व ह्यध्रुव, इद तु प्रत्यगात्मस्वरूपावस्थानलक्षण ध्रुव, 'न कर्मणा वर्धते नो कनीयान्' इति श्रुते.। तदेवभूत कूटस्थमविचाल्यममृतत्व विदित्वाऽध्रुवेषु सर्वपदार्थेष्वनित्येषु निर्धार्य, ब्राह्मणा इह ससारेऽनर्थप्राये न प्रार्थयन्ते किञ्चिदपि प्रत्यगात्मदर्शनप्रतिकूलत्वात्। पुत्रवित्तलोकैषणाभ्यो व्युत्तिष्ठन्त्येवेत्यर्थ.। शकर.

(२) यद्वा विततस्य सर्वत्राप्रतिहताज्ञस्य मृत्योर्यमस्य पाश यान्तीत्यर्थः। अथशब्दः प्रकृतविषयार्थान्तरपरिग्रहे। धीमन्तः प्रत्यगात्मन्येव ध्रुवममृतत्व विदित्वेह ससारमण्डले अध्रुवेषु पदार्थेषु कमपि न प्रार्थयन्ते। प्रत्यक्तत्त्वज्ञस्य सर्वं जिहासितव्यमिति भावः। परमात्मनः सर्वजीवगताहन्तास्पदत्वेन मुख्याहमर्थत्वात्प्रत्यक्त्वमस्तीति द्रष्टव्यम्। * रग.

आत्मैव रूपरसादिविषयकवृत्तिप्रकाशक स्वप्रजागृतिसाक्षी जीवरूप भूतभव्येशान
सर्वरूप

[1]येन रूपं रस गन्धं शब्दान् स्पर्शाँश्च मैथुनान्।
एतेनैव विजानाति किमत्र परिशिष्यते। एतद्वै तत् ॥

यद्विज्ञानान्न किंचिदन्यत्प्रार्थयन्ते ब्राह्मणा, कथ तदधिगम इति। उच्यते—येन विज्ञानस्वभावेनाऽऽत्मना रूप रस गन्ध शब्दान् स्पर्शांश्च मैथुनान्मैथुननिमित्तान् सुखप्रत्ययान्विजानाति विस्पष्ट जानाति सर्वो लोकः। देहादिलक्षणाश्च रूपादीनेतेनैव देहादिव्यतिरिक्तेनैव विज्ञानस्वभावेनाऽऽत्मना विजानाति लोक.। यथा येन लोहो दहति सोऽग्निरिति तद्वत्। आत्मनोऽविज्ञेय किमत्रास्मिँल्लोके परिशिष्यते, न किंचि परिशिष्यते। सर्वमेव त्वात्मना विज्ञेयम्। यस्याऽऽत्मनोऽविज्ञेय न किंचित्परिशिष्यते स आत्मा सर्वज्ञः। एतद्वै तत्। किं तत्, यन्नचिकेतसा पृष्ट देवादिभिरपि विचिकित्सित धर्मादिभ्योऽन्यद्विष्णोः परम पद यस्मात्पर नास्ति, तद्वा एतदधिगतमित्यर्थः। ‡ शकर.

[2]स्वप्नान्त जागरितान्तं चोभौ येनानुपश्यति।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥

(१) अतिसूक्ष्मत्वाद्दुर्विज्ञेयमिति मत्वैतमेवार्थं पुनः पुनराह—स्वप्नान्त स्वप्नमध्य स्वप्नविज्ञेयमित्यर्थः। तथा जागरितान्त जागरितमध्य जगारितविज्ञेय च। उभौ स्वप्नजागरितान्तौ येनाऽऽत्मनाऽनुपश्यति लोक इति सर्वं पूर्ववत्। त महान्त विभुमात्मान मत्वाऽवगम्याऽऽत्मभावेन साक्षादहमस्मि परमात्मेति धीरो न शोचति। शकर.

---

* शेष शाकरवत्।

(१) काउ. ४।२.

* शेष शकरवत्।

‡ रग. शंकरवत्।

(१) काउ ४।३.

(२) काउ ४।४, मशंकर १।४।६, श्रीकर १।४।६, बलदेव. ३।२।१, ६

(२) मनआदीन्द्रियभावमापन्नेन येन परमात्मना लोकः पश्यतीत्यर्थ. । * रग

य इम मध्वद वेद आत्मानं जीवमन्तिकात् ।
ईशान भूतभव्यस्य न ततो विजुगुप्सते ।
एतद्वै तत् ॥

(१) किंच य. कश्चिदिद मध्वद कर्मफलभुज जीव प्राणादिकलापस्य धारयितारमात्मान वेद विजाना त्यन्तिकादन्तिके समीप ईशानमीशितार भूतभव्यस्य कालत्रयस्य, ततस्तद्विज्ञानादूर्ध्वमात्मान न विजुगुप्सते न गोपायितुमिच्छत्यभयप्राप्तत्वात् । यावद्धि भयमध्यस्थो ऽनित्यमात्मान मन्यते तावद्गोपायितुमिच्छत्यात्मानम् । यदा तु नित्यमद्वैतमात्मान विजानाति तदा किं क कुतो वा गोपायितुमिच्छेत् । एतद्वै तदिति पूर्ववत् । शकर

(२) इदमिति लिङ्गव्यत्ययश्छान्दस. । इम मध्वद 'ऋत पिबन्तौ' इति निर्दिष्ट कर्मफलभोक्तार जीवात्मान 'गुहा प्रविष्टौ' इत्युक्तरीत्या तस्यान्तिके कालत्रयवर्तिचि दचिदीश्वर च यो वेद त दुष्कृतकारिणमपि न निन्देदि त्यर्थ. । 'गुप्तिज्किद्भ्य. सन्' इत्यत्र जुगुप्साशब्दो निन्दार्थक उक्त । 'जुगुप्साविरामप्रमादार्थानाम्' इति तत इति पञ्चमी । एतद्वै तदिति पूर्ववत् । रग

(३) जीवस्यान्तिके । न हि स्वस्य स्वय जीवोऽन्तिके भवति । वस्त्वन्तरस्य हि दूरत्वमन्तिकत्व वा । मध्व.

(४) 'अत्ता चराचरग्रहणात्' — अत्तात्र परमात्मैव, कुत, चराचरग्रहणात्, 'इय पृथिवी सर्वेषां भूताना मधु' इत्यादिकचतुर्थाध्यायीयमधुविद्यानुसारेणात्र मधुशब्देन समस्तचराचरग्रहणात् । विज्ञान १।२।९

यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत ।
गुहां प्रविश्य तिष्ठन्त यो भूतेभिर्व्यपश्यत ।
एतद्वै तत् ॥

(१) य. प्रत्यगात्मेश्वरभावेन निर्दिष्टः स सर्वात्मे त्येतद्दर्शयति — यः कश्चिन्मुमुक्षु. पूर्वं प्रथम तपसो ज्ञानादिलक्षणाद्ब्रह्मणः इत्येतत्, जातमुत्पन्न हिरण्यगर्भम् । किमपेक्ष्य पूर्वमित्याह — अद्भ्यः पूर्वं, अप्सहितेभ्य. पञ्चभूतेभ्यो न केवलाभ्योऽद्भ्य इत्यभिप्राय । अजायत उत्पन्नः यस्त प्रथमज देवादिशरीराण्युत्पाद्य सर्वप्राणिगुहां हृदयाकाश प्रविश्य तिष्ठन्त शब्दादीनुपलभमान भूतेभि र्भूतै कार्यकारणलक्षणै सह तिष्ठन्त यो व्यपश्यत यः पश्य तीत्येतत् । य एव पश्यति स एतदेव पश्यति यत्तत्प्रकृत ब्रह्म । शकर

(२) अद्भ्य उपादानेभ्यो व्यष्टिसृष्टेः पूर्वं य. अजा यत त तपस. सकल्पमात्रादेव पूर्वं जात गुहां प्रविश्य तिष्ठन्त हृदयगुहा प्रविश्य वर्तमान भूतेभिर्भूतै. देहेन्द्रिया न्त करणादिभिरुपेत चतुर्मुख अय सकलजगत्स्रष्टा स्यादिति कटाक्षैर्वैक्षतेत्यर्थः । रग.

(३) 'अन्नामभ्यश्च भूतेभ्यस्तपोनाम्नः शिवा दपि । पूर्वं यो जनयामास पूर्वजात चतुर्मुखम् । स्वात्मान च गुहासस्थ सर्वभूतैः सहाभिभूः । यः पश्यति सदा विष्णु स एष हृदि सस्थितः ॥' इति च । यथा 'मुखादिन्द्रश्चाग्निश्च' इत्यादिना जाता एवेन्द्रा दयः कश्यपात्पुनर्जायन्ते, न तथा भगवतो ब्रह्मा । किन्त्वजातमेवास्य. पूर्वमजायत जनयामास । अजायतेति 'जज्ञे बहुज्ञ' इतिवदन्तर्णीतणिच् । मध्व.

या प्राणेन संभवत्यदितिर्देवतामयी ।
गुहा प्रविश्य तिष्ठन्तीं या भूतेभिर्व्यजायत ।
एतद्वै तत् ॥

(१) किंच या सर्वदेवतामयी सर्वदेवतात्मिका प्राणेन हिरण्यगर्भरूपेण परस्माद्ब्रह्मण. सभवति शब्दादी नामदनाददितिस्ता पूर्ववद्गुहां प्रविश्य तिष्ठन्तीमदितिम् । तामेव विशिनष्टि—या भूतेभिर्भूतै समन्विता व्यजा यत, उत्पन्नेत्येतत् । शकर.

---

* शेष शकरेण गतार्थम् ।

(१) काउ ४।५, रग इम ( इद ), मध्व रगवत्, विज्ञान १।२।९

(२) काउ ४।६, मध्व सो जात ( सोऽजात )

(१) काउ ४।७, रग तिष्ठन्तीं ( तिष्ठन्ती ), रामानुज १।२।११, निबार्क १।२।११, मध्व सभवत्य ( सविशत्य ), बलदेव १।२।११

( २ ) अय च मन्त्रः 'गुहां प्रविष्टौ' (ब्रसू. १।२।११ ) इति सूत्रे भगवता भाष्यकृता व्याख्यात.। इत्थ हि भाष्यकृता— 'कर्मफलान्यत्तीत्यदितिर्जीव उच्यते । प्राणेन सभवति प्राणेन सह वर्तते । देवता मयी इन्द्रियाधीनभोगा । गुहां प्रविश्य तिष्ठन्ती हृदय पुण्डरीककुहरवर्तिनी । भूतेभिर्व्यजायत पृथिव्यादिभिर्भूतैः सहिता देवादिरूपेण विविधा जायते ' इति भाषितम् । तत् तदात्मकमित्यर्थ. । रग

( ३ ) 'अदनाददितिर्विष्णुर्यः प्राणसहित' स्थितः। उत्तमो देवताभ्यश्च स्वामान विविधात्मना । मत्स्यकूर्मा दिरूपेण गुहासस्थमजीजनत् । भूतैः सह महाविष्णु. परमात्मा युगे युगे ॥' इति च । देवतामयी देवतोत्तमा । प्राणेन सहितो भवति । गुहां प्रविश्य तिष्ठन्त स्वात्मान भूतै. सह विविध जनयामास । मध्व

**अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभि ।**
**दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्ये-भिरग्नि । एतद्वै तत् ॥**

( १ ) किंच योऽधियज्ञ उत्तराधरारण्योर्निहित. स्थितो जातवेदा अग्निः पुन. सर्वहविषा भोक्ताऽध्यात्म च योगिभिर्गर्भ इव गर्भिणीभिरन्तर्वत्नीभिरगर्हितान्नपान-भोजनादिना यथा गर्भ. सुभृतः सुष्ठु सम्यग्भृतो लोके इतीत्थमेव ऋत्विग्भिर्योगिभिश्च सुभृन इत्येतत् । किंच दिवे दिवे अहन्यहनि ईड्यः स्तुत्यो वन्द्यश्च कर्मिभि र्योगिभिश्चाध्वरे हृदये च जागृवद्भिर्जागरणशीलवद्भिः अप्रमत्तैरित्येतत्, हविष्मद्भिराज्यादिमद्भिर्ध्यानभावनाव-द्भिश्च मनुष्येभिर्मनुष्यैरग्नि । एतद्वै तत्तदेव प्रकृत ब्रह्म । शकर

( २ ) उदित्यवधारणे । * रग.

( ३ ) 'सर्वज्ञो भगवान्विष्णुररण्योर्गुरुशिष्ययो । सुभृत. स्तूयते नित्य जानद्भि पुरुषोत्तमः ॥' इति च । अर्यते ण आभ्यामित्यरणी ।

मध्व.

* शेष शकरेण गतार्थम् ।

(१) काउ ४।८, रग इव सु (इवोत्सु), मध्व सुभृतो (सुधितो)

**यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति ।**
**तं देवा सर्वे अर्पितास्तदु नात्येति कश्चन । एतद्वै तत् ॥**

( १ ) किंच यतश्च यस्मात्प्राणादुदेति उत्तिष्ठति सूर्योऽस्त निम्लोचन यत्र यस्मिन्नेव च प्राणेऽहन्यहनि गच्छति त प्राणमात्मान देवा अग्न्यादयोऽधिदैव वागा-दयश्चाध्यात्म सर्वे विश्वे अरा इव रथनाभौ अर्पिता सम्प्रवेशिता. स्थितिकाले । सोऽपि ब्रह्मैव । तदेतत्सर्वा-त्मक ब्रह्म । तदु नात्येति नातीत्य तदात्मकतां तदन्यत्व गच्छति कश्चन कश्चिदपि । एतद्वै तत् । शकर

( २ ) यस्माद्ब्रह्मण सकाशात्सूर्य उदेति यत्र च लयमेति, देवा. सर्वे तस्मिन्नात्मनि प्रतिष्ठिता इत्यर्थः । तत्सर्वात्मक ब्रह्म कोऽपि नातिक्रामति छायावदन्तर्या-मिणो दुर्लङ्घत्वादिति भाव । रग.

**यदेवेह तदमुत्र यदमुत्र तदन्विह ।**
**मृत्यो. स मृत्युमाप्नोति य इह नानेव पश्यति ॥**

( १ ) यद्ब्रह्मादिस्थावरान्तेषु वर्तमान तत्तदुपाधि-त्वादब्रह्मवदवभासमान ससारि अन्यत्परस्माद्ब्रह्मण इति मा भूत्कस्यचिदाशङ्केतीदमाह—यदेवेह कार्यकारणोपाधिस-मन्वित ससारधर्मवदवभासमानमविवेकिना तदेव स्वात्म-स्थममुत्र नित्यविज्ञानघनस्वभावं सर्वससारधर्मवर्जित ब्रह्म । यच्चामुत्र अमुष्मिन्नात्मनि स्थित तदेवेह नाम-रूपकार्यकारणोपाधिमनु विभाव्यमान, नान्यत् । तत्रैव सति उपाधिस्वभावभेददृष्टिलक्षणयाऽविद्यया मोहित. सन् य इह ब्रह्मण्यनानाभूते परस्मादन्योऽहं, मत्तोऽन्यत्पर ब्रह्मेति नानेव भिन्नमिव पश्यति उपलभते, स मृत्योर्म-रणात् मरण मृत्यु पुन. पुनर्जन्ममरणभावमाप्नोति प्रति-पद्यते । तस्मात्तथा न पश्येत् । विज्ञानैकरस नैरन्तर्येणा-ऽऽकाशवत्परिपूर्णं ब्रह्मैवाहमस्मीति पश्येदिति वाक्यार्थः । शकर.

(१) काउ ४।९

(२) काउ ४।१०, अशकर १।३।१, १।४।६ तद-मुत्र यदमुत्र ( यदमुत्र तदमुत्र ), ४।१।३, ४।३।१४, रामानुज २।१।१५ ( पृ ४२३, ४४३ ), श्रीकर. १।४।६, २।१।२१, ३।३।५१

( २ ) यदेव परमात्मतत्त्वमत्र लोकेऽहमित्यनुसन्धी यमानतयाऽऽत्मभूतं तदेव लोकान्तरस्थानामप्यात्मभूतमित्यर्थः । ततश्चात्मभेदो नास्तीत्यर्थः । अयमभिप्रायः — किं परमात्मतत्त्वविदा 'अहमिहैव' इति प्रतीतिः सर्वदेशकालवर्तिपदार्थात्मकत्वबाधकतया उपन्यस्यते, उत तद्रहितानाम् । नाऽऽद्यः, तेषां 'अहमिहैव' इत्यादिप्रतीतेरेवाभावात् । प्रत्युत 'अहं मनुरभवं सूर्यश्च' इति सर्ववस्तुवर्तितयैवाऽनुभवात् । न द्वितीयः, अतत्त्वविदामहंप्रतीतेर्जीवमात्रविषयत्वेन तत्र देशान्तरव्यावृत्तत्वप्रतीतिस्तदानीमप्रतीतपरमात्मनि सर्वदेशवर्तिपदार्थात्मत्वविरोधित्वाभावादिति । इह परमात्मनि भेदमिव यः पश्यति स तु संसारात्संसारं प्राप्नोतीत्यर्थः ।
रंग

( ३ ) 'यः प्रादुर्भावगो विष्णुर्दशादिषु च संस्थितः । स एव मूलरूपश्च साक्षान्नारायणाभिधः । मूलरूपश्च यो विष्णुः प्रादुर्भावादिगश्च सः । गुणतः स्वरूपतो वाऽपि विशेषं योऽत्र पश्यति । अत्यल्पमपि मृत्वा स तमोऽन्धं यात्यसंशयम् । भेदाऽभेदविदश्चात्र तमो यान्ति न संशयः ॥' मध्व

अत्र देहे एव आत्मा अद्वैतरूपो ज्ञेयः
न भेदरूपेण

**मनसैवेदमाप्तव्यं नेह नानाऽस्ति किंचन ।**
**मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति ॥**

(१) प्रागेकत्वविज्ञानादाचार्यागमसंस्कृतेन मनसैवेदं ब्रह्मैकरसमाप्तव्यमात्मैव नान्यदस्तीति । आप्ते च नानात्वप्रत्युपस्थापिकाया अविद्याया निवृत्तत्वादिह ब्रह्मणि नाना नास्ति किंचनाणुमात्रमपि । यस्तु पुनरविद्यातिमिरदृष्टिं न मुञ्चति, नानेव पश्यति, स मृत्योर्मृत्युं गच्छत्येव स्वल्पमपि भेदमध्यारोपयन्नित्यर्थः ।
शंकर.

( २ ) 'अपि चैवमेके' — अपि चैव भेददर्शननिन्दापूर्वकमभेददर्शनमेवैके शाखिनः समामनन्ति 'मनसैवेदमाप्तव्यं' इति ।
ब्रशंकर ३।२।१३

(३) नन्वस्माकं सर्वात्मभूतं परमात्मतत्त्वं कुतो नोपलभ्यते इत्यत्राऽऽह—मनसेति । इदमात्मस्वरूपं विशुद्धमनोग्राह्यमित्यर्थः । उक्तमेवार्थं दृढीकरणायाभ्यस्यति —नेहेति । स्पष्टोऽर्थः ।
रंग.

( ४ ) 'तथैवावयवानां च गुणानां च परस्परम् । क्रियाणां तेन चैतेषां भेदविच्चोभयविदः । यान्त्येवान्धं तमो नात्र कार्या काचिद्विचारणा ॥' इति च । 'भवेदेकत्र संयोग इवशब्दो विरुद्धयोः । धर्मयोरुपमायां वा स्वल्पत्वे वा विवक्षितः ॥' इति शब्दनिर्णये । अतो नानेवेती वशब्दोऽत्यल्पविषयो भेदाभेदविषयश्च । प्रथमं य इह नानेव पश्यतीति स्वरूपभेदनिषेधार्थम् । नेह नानाऽस्ति किंचनेति किंचनशब्दादवयवानां गुणानां क्रियाणां च परस्परं तद्वतां च भेदनिषेधार्थम् ।
मध्व.

( ५ ) 'लोकवत्तु लीलाकैवल्यम्' — इत्यत्र परमेश्वरस्य लीलाव्यपदेशेन भेदत्व (?) द्वैतश्रुतीनां सर्वासां तत्कालपरत्वमभिहितं, कैवल्यपदेन तस्य केवलावस्थाव्यपदेशात् । 'नेह नानाऽस्ति किंचन' इत्याद्यभेदश्रुतीनां तत्परिशेषावस्थापरत्वमिति स्पष्टमुपदिष्टम् ।
श्रीकर ४।४।१२

( ६ ) इवशब्दो बहु स्यामिति व्यावृत्त्यर्थः ।
३।२।१३

[ तथा च घटपटवत् घटान्तरवत् तरुकुसुमवच्च तत्त्वतो नानेव नाना पश्यति तस्य दोषः, न त्वैच्छिकविलक्षणप्रतीत्युत्पादकं यः पश्यति तस्य दोषः । तादृशस्य श्रौतत्वेन वास्तवत्वात्, इति बोधनं प्रयोजनमित्यर्थः ।
भाष्यप्रकाश ]

* अपरं च साधनं हि कायिकं वाचिकं मानसिकं च विधीयते । तत्र 'मनसैवेदमाप्तव्यं' इति श्रुतेस्तृतीय

(१) काठ ४।११, ब्रशंकर ३।२।१३ गच्छति (आप्नोति), भास्कर ३।२।१३ ब्रशंकरवत्, श्रीकर १।१।१ (पृ. १९), १।१।३ (पृ. ३७), १।१।४ (पृ. ५१), १।१।१५ (पृ. ६५), १।३।६, १।४।२२ (पृ. १७७), २।१।७, १३, ३।२।२७, ३।२।११, २९, ३०, ४।४।१०, १२, वल्लभ ३।२।१३ ब्रशंकरवत्, ३।२।१५, २३, ३।४।४६, विज्ञान १।१।२ (पृ. ४२) ब्रशंकरवत्, बलदेव ३।२।३१

* अपरमिति 'यमेवैष वृणुते' इति श्रुत्युक्तवरणादपरम् । तच्च पुष्टिमार्गे नापेक्ष्यते ।

मुख्यम् । तदपि तावदेव मार्यादिकस्यापि विधेयत्वेन कर्तव्य, यावत्स्नेहो न भवति । वल्लभ ३।४।४६

( ६ ) तस्माद्विवेकवाक्यरूपतया भेदवाक्यान्येव बलवन्ति । तद्विरोधेन चाभेदवाक्यान्यविभागपरतयैव सकोच्यानि । अभेदवाक्यानामविभागपरतया भेदनिन्दा वाक्यानामपि विभागलक्षणभेदपरत्वात्, प्रतिपाद्यविपरीतस्यैव निन्दार्हत्वात् ।

अन्यथा ' मनसैवे . पश्यति ' इत्यादिश्रुतिषु जडवर्गेष्वपि भेदनिन्दनात् अभेदः स्यात् । विवेकादिवाक्यान्न भवतीति चेत्, तुल्य जीवेऽपि । जीवादपि ब्रह्मणो विवेकस्योक्तत्वात् ।

विज्ञान. १।१।२

* अङ्गुष्ठमात्र. पुरुषो मध्य आत्मनि तिष्ठति ।
ईशान भूतभव्यस्य न ततो विजुगुप्सते ।
एतद्वै तत् ॥

( १ ) पुनरपि तदेव प्रकृत ब्रह्माऽऽह — अङ्गुष्ठमात्रोऽऽङ्गुष्ठपरिमाणः । अङ्गुष्ठपरिमाण हृदयपुण्डरीक, तच्छिद्रवर्त्यन्त.करणोपाधिरङ्गुष्ठमात्रः, अङ्गुष्ठमात्रवशपर्वमध्यवर्त्यम्बरवत् । पुरुष: पूर्णमनेन सर्वमिति । मध्य आत्मनि शरीरे तिष्ठति यस्तमात्मानमीशान भूतभव्यस्य विदित्वा न तत इत्यादि पूर्ववत् ।

शकर.

( २ ) 'शब्दादेव प्रमितः' — परमात्मैवायमङ्गुष्ठमात्रपरिमितः पुरुषो भवितुमर्हति । कस्मात् — शदात् । 'ईशानो भूतभव्यस्य' इति । १।३।२४

'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' — कथ पुन' सर्वगतस्य परमात्मन. परिमाणोपदेश इत्यत्र ब्रूम. — मनुष्याणा च नियतपरिमाणः काय औचित्येन नियतपरिमाणमेव चैषामङ्गुष्ठमात्र हृदयम् । अतो मनुष्याधिकारत्वाच्छास्त्रस्य मनुष्यहृदयावस्थानापेक्षमङ्गुष्ठमात्रत्वमुपपन्न परमात्मनः ।

ब्रशाकर. १।३।२५

( ३ ) कालत्रयवर्तिनिखिलचेतनाचेतनेश्वरः पुरुष उपासकशरीरेऽङ्गुष्ठपरिमाणः सन्नास्ते । ततो भूतभव्येश्वरत्वादेव वात्सल्यातिशयाद्देहगतानपि दोषान् भोग्यतया पश्यतीत्यर्थ' । रग.

* अङ्गुष्ठमात्र' पुरुषो ज्योतिरिवाधूमक. ।
ईशानो भूतभव्यस्य स एवाद्य स उ श्व ।
एतद्वै तत् ॥

( १ ) किंच, अङ्गुष्ठमात्र' पुरुषो ज्योतिरिवाधूमक, अधूमकमिति युक्त ज्योतिष्परत्वात् । यस्त्वेव लक्षितो योगिभिर्हृदय ईशानो भूतभव्यस्य, स नित्य. कूटस्थोऽद्य इदानीं प्राणिषु वर्तमान., स उ श्वोऽपि वर्तिष्यते, नान्यस्तत्समोऽन्यश्च जनिष्यत इत्यर्थः । अनेन ' नायमस्तीति चैके' इत्यय पक्षो न्यायतोऽप्राप्तोऽपि स्ववचनेन श्रुत्या प्रत्युक्तस्तथा क्षणभङ्गवादश्च । शकर.

( २ ) अद्यतनपदार्थजात, श्वस्तनपदार्थजात, कालत्रयवर्तिपदार्थजातमपि तदात्मकमित्यर्थ. ।

‡ रग.

यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एव धर्मान्पृथक्पश्यꣳस्तानेवानुविधावति ॥

( १ ) पुनरपि भेददर्शनापवाद ब्रह्मण आह — यथोदक दुर्गे दुर्गमे देशे उच्छ्रिते वृष्ट सिक्त पर्वतेषु पर्ववत्सु निम्नप्रदेशेषु विधावति विकीर्णं सद्विनश्यति, एव धर्मानात्मनो भिन्नान्पृथक् पश्यन्पृथगेव प्रतिशरीर पश्यस्तानेव शरीरभेदानुवर्तिनोऽनुविधावति । शरीरभेदमेव पृथक्पुन:पुनः प्रतिपद्यत इत्यर्थः ।

शकर.

---

* सर्वेषु भाष्येष्वस्य परमात्मपरता ।

(१) काठ ४।१२, ब्रशाकर १।३।२४ ईशान (ईशानो); भास्कर १।३।२४ ब्रशाकरवत्, रग ब्रशाकरवत्, रामानुज १।३।२३, ४० ब्रशाकरवत्, निंबार्क १।३।२४ ब्रशाकरवत्, मध्व ब्रशाकरवत्, श्रीकठ १।३।२३ ब्रशाकरवत्, श्रीकर १।३।२४, १।४।५ ब्रशाकरवत्, वल्लभ. १।३२४ ब्रशाकरवत्, बलदेव १।३।२४.

* सर्वाणि भाष्याण्यस्य परमात्मपरतामाचक्षते ।

‡ शेष शकरेण गतार्थम् ।

(१) काठ. ४।१३, ब्रशाकर १।३।२४, भास्कर. १।३।२४, रामानुज १।३।२३, निंबार्क १।३।२४, श्रीकर १।३।२४, १।४।५, ३।२।११, वल्लभ. १।३।२४, बलदेव १।३।२४

(२) काठ ४।१४, बलदेव ३।२।३१.

( २ ) पर्वतमूर्ध्नि वृष्ट प्रत्यन्तपर्वतेषु नानाभूततया पतित्वा पतित्वा धावति । एव परमात्मगतदेवान्तर्यामित्वमनुष्यान्तर्यामित्वादिधर्मान् पृथगधिकरणनिष्ठान् पश्यन् पर्वतनिर्झरपातमनुकृत्य ससारकुहरे पततीत्यर्थ । रग

( ३ ) भेदाभेद एव निषिध्यते न तु भेद इत्याशङ्का निवारयितु एव धर्मान्पृथक्पश्यन्निति भगवद्धर्माणामव यवगुणकर्मणा भेददर्शने पृथग्दोषमाह—— पर्वतेषु दुर्गे शिखरे वृष्टमयो विधावति । एव विष्णोश्च धर्मान् पृथक्पश्यन्नन्ध तमो विधावति । मध्व

* [1]यथोदक शुद्धे शुद्धमासिक्त तादृगेव भवति ।
एव मुनेर्विजानत आत्मा भवति गौतम ॥

( १ ) यस्य पुनर्विद्यावतो विध्वस्तोपाधिकृतभेददर्शनस्य विशुद्धविज्ञानघनैकरसमद्वयमात्मान पश्यतो विजानतो मुनेर्मननशीलस्याऽऽत्मस्वरूप कथ सभवती त्युच्यते —— यथोदक शुद्धे प्रसन्ने शुद्ध प्रसन्नमासिक्त प्रक्षिप्तमेकरसमेव, नान्यथा, तादृगेव भवति आत्माऽप्येव मव भवति एकत्व विजानतो मुनेर्मननशीलस्य हे गौतम । तस्मात्कुतार्किकभेददृष्टिं नास्तिककुदृष्टिं चोज्झित्वा मातृपितृसहस्रेभ्योऽपि हितैषिणा वेदेनोपदिष्टमात्मैकत्वदर्शन शान्तदर्पैरादरणीयमित्यर्थ । शकर

( २ ) 'अविभागेन दृष्टत्वात्' —— इति चैवमादीनि मुक्तस्वरूपनिरूपणपराणि वाक्यान्यविभागमेव दर्शयन्ति । ब्रशकर ४।४।४

( ३ ) सर्वत्रैकात्मकत्वज्ञानस्य फलमाह—— यथा शुद्धजले शुद्धजल योजित तत्सदृशमेव भवति, न कथचिद्विसदृश, एवमित्थ विजानतो मननशीलस्याऽऽत्मा अपि परमात्मज्ञानेन विशुद्ध सन्विशुद्धेन परमात्मना समानो भवतीत्यर्थ । गौतमेति प्राप्यवैभव सूचयन् सहर्ष सबोधयति । रग

( ४ ) विजानतो मुनेरात्मा वायुरपि तादृगेव भवति । न तु स एव भवति । किमु अन्ये जीवा. । 'सर्वेषा ज्ञानिनामात्मा देवाना च विशेषत । मुक्तो वायुश्च सादृश्यमेव विष्णोस्तु गच्छति । न तु तद्रूपतां याति किम्वन्ये देवमानुषा । आभासाभासरूपास्तु वायो र्देवस्य सर्वश ॥' इति भविष्यत्पर्वणि । मध्व

शरीराधिष्ठाता, सर्वाधिष्ठाता प्रातिस्विकरूपेण,
प्राणापानप्रेरक· सर्वक्रियाश्रय प्राणापानाश्रय
देहनाशानन्तरमवशिष्ट आत्मैव

[1]पुरमेकादशद्वारमजस्याऽवक्रचेतस ।
अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते ।
एतद्वै तत् ॥

( १ ) पुनरपि प्रकारान्तेरण ब्रह्मतत्त्वनिर्धारणार्थोऽयमारम्भो दुर्विज्ञेयत्वाद्ब्रह्मण ——पुर पुरमिव पुरम् । द्वारपालाधिष्ठात्राद्यनेकपुरोपकरणसपत्तिदर्शनात् शरीर पुरम् । पुर च सोपकरण स्वात्मनाऽसहतस्वतन्त्रस्वाम्यर्थे दृष्टम् । तथेद पुरसामान्यादनेकोपकरणसहत शरीर स्वात्मना असहतराजस्थानीयस्वाम्यर्थे भवितुमर्हति । तच्चेद शरीराख्य पुरमेकादशद्वार, एकादश द्वाराण्यस्य, सप्त शीर्षण्यानि, नाभ्या सहार्वाञ्चि त्रीणि, शिरस्येक, तैरेकादशद्वार पुर कस्याजस्य जन्मादिविक्रियारहितस्याऽऽत्मनो राजस्थानीयस्य पुरधर्मविलक्षणस्य । अवक्रचेतस अवक्रमकुटिलमादित्यप्रकाशवन्नित्यमेवावस्थितमेकरूप चेतो विज्ञानमस्येत्यवक्रचेता., तस्याऽवक्रचेतसो राजस्थानीयस्य ब्रह्मण । यस्येद पुर त परमेश्वर पुरस्वामिनमनुष्ठाय ध्यात्वा । ध्यान हि तस्यानुष्ठान सम्यग्विज्ञानपूर्वकम् । त सर्वैषणाविनिर्मुक्त. सन् सम सर्वभूतस्थ ध्यात्वा न शोचति । तद्विज्ञानादभयप्राप्तेः शोकावसराभावात्कुतो भयेक्षा । इहैवाऽविद्याकृतकामकर्मबन्धनैर्विमुक्तो भवति । विमुक्तश्च सन्विमुच्यते पुनः शरीर न गृह्णातीत्यर्थ । शकर.

( २ ) जननादिविक्रियारहितस्य ऋजुबुद्धेर्विवेकिन आत्मन एकादशेन्द्रियलक्षणबहिर्निर्गमद्वारोपेत शरीराख्य पुर भवति । पुरस्वामिनो यथा पुर विविक्त भवति तथा

---

' विज्ञान अविभागलक्षणाऽभेद प्रतिपाद्यते, न तु स्वरूपाऽभेद ।

(१) काठ ४।१५, ब्रशकर ४।४।४, भास्कर ४।४।४ यथोदक ( यथोदके ), ब्रमध्व ३।१।१४, विज्ञान १।१।२ ( पृ ३९ ), ३।२।१६, ३।३।३७, ४।४।१ मासिक्त ( माक्षिप्त )

(१) काठ ५।१, बलदेव ४।४।१९.

शरीरमपि स्वात्मनो विविच्य ज्ञात भवति । अविवेकिनस्तु देह आत्मैव भवतीति भावः । अनुष्ठाय न शोचति । विविच्य जानन्देहानुबन्धिभिर्दुःखै कामादिभिश्च विमुक्तो भवतीत्यर्थ. । विमुक्तश्च विमुच्यते । जीवदशायामाध्यात्मिकादिदु खरागद्वेषादिविमुक्त एव सन् 'भोगेन त्वितरे क्षपयित्वा सपद्यते' ( ब्रसू ४।१।१९ ) इतिन्यायेन प्रारब्धकर्मावसानेऽर्चिरादिना विरजा प्राप्य प्रकृतिसबन्धविमुक्तो भवतीत्यर्थः । एतन्मन्त्रप्रतिपाद्यमुक्तस्वरूपमपि परमात्मक(१)मेवेत्यर्थ. । रग

( ३ ) इद पुर भगवदधीनमित्यधिष्ठाय । अजस्येद पुरमिति स्थितिं कृत्वा । 'विमुक्तो निरभीमानात्पूर्वमेवापरोक्षवित् । मुख्यतो मुच्यते पश्चाद्दु.खाद्याभासहानत ॥' इति च । मध्व

**हंऽस. शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।**
**नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋत बृहत् ॥**

( १ ) स तु नैकशरीरपुरवर्त्येवाऽऽत्मा । किं तर्हि, सर्वपुरवर्ती । कथम्—हसो हन्ति गच्छतीति । शुचिषच्छुचौ दिवि आदित्यात्मना सीदतीति । वसुर्वासयति सर्वानिति । वाय्वात्मनाऽन्तरिक्षे सीदतीत्यन्तरिक्षसत् । होताऽग्निः, 'अग्निर्वै होता' इति श्रुतेः । वेद्यां पृथिव्यां सीदतीति वेदिषत्, 'इय वेदि: परो अन्तः पृथिव्या.' इत्यादिमन्त्रवर्णात् । अतिथि सोमः सन् दुरोणे कलशे सीदतीति दुरोणसत् । ब्राह्मणोऽतिथिरूपेण वा दुरोणेषु गृहेषु सीदतीति दुरोणसत् । नृषन्नृषु मनुष्येषु सीदतीति नृषत् । वरसत् वरेषु देवेषु सीदतीति वरसत् । ऋतसत् ऋत सत्य यज्ञो वा, तस्मिन्सीदतीति ऋतसत् । व्योमसत् व्योम्नि आकाशे सीदतीति व्योमसत् । अब्जाः अप्सु शङ्खशुक्तिमकरादिरूपेण जायत इति अब्जा' । गोजा. गवि पृथिव्यां व्रीहियवादिरूपेण जायत इति गोजा' । ऋतजा' यज्ञाङ्गरूपेण जायत इति ऋतजा. । अद्रिजाः पर्वतेभ्यो नद्यादिरूपेण जायत इति अद्रिजा. । सर्वात्माऽपि सन् ऋतमवितथस्वभाव एव । बृहत् महान्, सर्वकारणत्वात् । यदाऽप्यादित्य एव मन्त्रेणोच्यते तदाप्यात्मस्वरूपत्वमादित्यस्याङ्गीकृतमिति ब्राह्मणे व्याख्यानेऽप्यविरोधः । सर्वथा अप्येक एवाऽऽत्मा जगतः, नाऽऽत्मभेद इति मन्त्रार्थ. । शकर.

( २ ) हस सूर्य. । शुचौ ग्रीष्मर्तौ सीदतीति शुचिषत्, तेजस्वीति यावत् । वासयतीति वसुर्वायु' । अन्तरिक्षसत्, अन्तरिक्षगतो वायु. । होतेत्यादि । वेद्यन्तर्वर्तमान ऋत्विग्विशेषोऽग्निर्वा । दुरोण गृह, गृहागतोऽतिथि । ऋते सत्यलोके सीदतीति ऋतसत् । व्योम्नि परमपदे वर्तमान च प्रत्यक्तत्त्वम् । ऋतजा यज्ञोत्पन्ना. कर्मफलभूताश्च स्वर्गादय इति यावत् । यद्वा, चिरकालस्थायितया ऋतशब्दिताकाशजा इत्यर्थ. । एतत्सर्वं बृहदृतमपरिच्छिन्नसत्यरूपब्रह्मात्मकमित्यर्थ. । * रग

(३) 'नित्य हीनोऽखिलैर्दोषै. साररूपो यतो हरिः । हस इत्युच्यते तस्माद्वायुस्य. शुचिषत्स्मृत. । वरसुर्वसुरित्युक्तः स एवाप्यन्तरिक्षग'। होता सर्वेन्द्रियादिस्थो वेद्या पूज्यश्च वेदिषत् । अत्यन्तश्चातिथिः प्रोक्तो यस्मादन्न थमुच्यते । सद्रोणकलशे सोमे स्थित उक्तो दुरोणसत् । नृषु स्थितश्च देवेषु वरेष्वपि स एव तु । ऋतरूपे तथा वेदे व्योमाख्यप्रकृतावपि । व्योत जगदिद यस्या सा व्योम श्रीरुदाहृता । अब्जगोजाद्रिजेष्वेवमास्ते सोऽब्जादिकस्तत । तथैवर्तेषु मुक्तेषु गतास्ते विष्णुमित्यृताः । वेदैर्मुख्यतया प्रोक्त ऋतमित्येव चोच्यते । बृहत्पूर्णगुणत्वाच्च स एव पुरुषोत्तम. ॥' मध्व.

**ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ।**
**मध्ये वामनमासीन विश्वे देवा उपासते ॥**

( १ ) आत्मनः स्वरूपाधिगमे लिङ्गमुच्यते— ऊर्ध्वं हृदयात्प्राण प्राणवृत्तिं वायुमुन्नयत्यूर्ध्वं गमयति । तथाऽऽपान प्रत्यगधोऽस्यति क्षिपति, य इति वाक्यशेषः । त, मध्ये हृदयपुण्डरीकाकाश आसीन बुद्धावभिव्यक्तविज्ञानप्रकाशन वामन सभजनीय सर्वे विश्वे देवाश्चक्षुरादयः प्राणा रूपादिविज्ञान बलिमुपाहरन्तो

(१) काठ ५।२

* शेष शाकरवत् ।

(१) काठ ५।३, ब्रमध्व १।३।२४

विश इव राजानमुपासते, तादर्थ्येनानुपरतव्यापारा भवन्तीत्यर्थः । यदर्था यत्प्रयुक्ताश्च सर्वे वायुकरण व्यापारा सोऽन्य. सिद्ध इति वाक्यार्थ ।

शकर

( २ ) वामन वमनीय भजनीयम् । अथवा हृदय पुण्डरीकपरिमिततया ह्रस्वपरिमाणमित्यर्थ । त सत्त्वप्रकृतय· सर्वेऽप्युपासत इत्यर्थ । * रग

† अस्य विस्रसमानस्य शरीरस्थस्य देहिन ।
देहाद्विमुच्यमानस्य किमत्र परिशिष्यते ।
एतद्वै तत् ॥

( १ ) किंच, अस्य शरीरस्थस्याऽऽत्मनो विस्रस मानस्यावस्रसमानस्य भ्रशमानस्य देहिनो देहवत. । विस्रसनशब्दार्थमाह—देहाद्विमुच्यमानस्येति । किमत्र परिशिष्यते प्राणादिकलापे, न किंचन परिशिष्यतेऽत्र देहे पुरस्वामिविद्रवण इव पुरवासिनाम् । यस्याऽऽत्मनोऽपगमेक्षणमात्रात्कार्यकरणकलापरूप सर्वमिद हत-बल वि·वस्त भवति विनष्ट भवति, सोऽन्य. सिद्ध ।

शकर.

( २ ) एव परमात्मानमुपासीनस्य ' तस्य तावदेव चिर यावन्न विमोक्ष्ये ' ( छा उ ६।१४।२ ) इति श्रुत्युक्तरीत्या शरीरपात एवान्तराय, न किंचित्कर्तव्य परिशिष्यत इत्याह—अस्योपासकस्य देहिन शरीरस्थस्य शरीरप्रतिष्ठितस्य, दृढशरीरस्येति यावत् । एवभूतस्य वा विस्रसमानस्य शिथिलीभवद्गात्रस्य वा देहाद्विमुच्य मानस्य म्रियमाणस्य वा किमत्र परिशिष्यते । कृतकृत्यत्वात्कर्तव्य किमपि नावशिष्यत इति भावः ।

रग

न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥

( १ ) स्यान्मत, प्राणापानाद्यपगमादेवेद वि·वस्त भवति, न तु तद्व्यतिरिक्तात्मापगमात्, प्राणादिभिरेव हि मर्त्यो जीवतीति । नैतदस्ति—न प्राणेन नापानेन चक्षुरादिना वा मर्त्यो मनुष्यो देहवान्कश्चन जीवति न कोऽपि जीवति । न ह्येषा परार्थाना सहत्यकारित्वाज्जीवनहेतुत्वमुपपद्यते । स्वार्थेनासहतेन परेण केनचिदप्रयुक्त सहतानामवस्थान न दृष्ट गृहादीना लोके, तथा प्राणादीनामपि सहतत्वाद्भवितुमर्हति । अत इतरेणैव सहतप्राणादिविलक्षणेन तु सर्वे सहता. सन्तो जीवन्ति प्राणान् धारयन्ति । यस्मिन् सहतविलक्षण आत्मनि सति परस्मिन्नेतौ प्राणापानौ चक्षुरादिभि. सहतावुपाश्रितौ, यस्यासहतस्यार्थे प्राणापानादि स्वव्यापार कुर्वन् वर्तते सहत· सन्, स ततोऽन्य. सिद्ध इत्यभिप्रायः ।

शकर

( २ ) यत्तु मुख्यप्राणलिङ्ग दर्शित ' इद शरीर परिगृह्य उत्थापयति ' इति, तदसत् । प्राणव्यापारस्यापि परमात्मायत्तत्वात् । ' न प्राणेन ' इति श्रुते । ब्रशाकर १।१।३१

( ३ ) तस्य सर्वप्राणिप्राणनहेतुत्वरूप महिमानमाह —न प्राणेनेति । स्पष्टोऽर्थ । केनेतरेण जीवन्तीत्यत्राह—यस्मिन्नेताविति । यदधीन प्राणापानयोरपि जीवन तदधीनमेव सर्वेषा जीवनमिति भाव ।

रग.

( ४ ) ' न केवल प्राण एव चेतनानां विधारक· । किन्तु विष्णु समाश्रित्य प्राणो जीवान्बिभर्त्ययम् । अतो मुख्याश्रयो विष्णुश्चेतनाना स्वतन्त्रत· ॥' मध्व.

मरणोत्तरगति आत्मन

हन्त त इदं प्रवक्ष्यामि गुह्य ब्रह्म सनातनम् ।
यथा च मरण प्राप्य आत्मा भवति गौतम ॥

( १ ) हन्तेदानीं पुनरपि ते तुभ्यमिद गुह्य गोप्य ब्रह्म सनातन चिरन्तन प्रवक्ष्यामि, यद्विज्ञानात्सर्वससारोपरमो भवति । अविज्ञानाच्च यस्य मरण प्राप्य यथा आत्मा भवति यथा ससरति तथा शृणु हे गौतम ।

शकर.

( २ ) ' हन्त त इद ' इति जीवविषयम् ।

ब्रशाकर. १।४।६

---

* शेष शकरवत् ।

† मध्व काउ १।२० द्रष्टव्यम् ।

(१) काउ ५।४

(२) काउ ५।५, ब्रशाकर १।१।३१, १।३।३९, भास्कर १।१।३१, श्रीकर १।१।३२, १।३।३९.

(१) काउ. ५।६, ब्रशाकर १।४।६; मध्व. ( च० ), श्रीकर १।४।६ प्रवक्ष्यामि ( वक्ष्यामि )

( ३ ) गुह्यमतिरहस्य सनातन ब्रह्म ते पुनरपि प्रवक्ष्यामि । हन्तेति स्वगतमाश्चर्ये । हे गौतम, आत्मा मरण मोक्ष प्राप्य यथा यत्प्रकारविशिष्टो भवति तथा पुनरपि मुमुक्षवे रागाद्यनुपहतायोपदेशयोग्याय तुभ्य वक्ष्यामीत्यर्थः । रंग

( ४ ) इद गुह्य ब्रह्म प्रवक्ष्यामि, यथा मरण प्राप्य जीवो भवति तच्च प्रवक्ष्यामि जीवेश्वरभेदज्ञापनाय ।

* मध्व

**[७]योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिन' ।**
**स्थाणुमन्येऽनुसयन्ति यथाकर्म यथाश्रुतम् ॥**

( १ ) योनिं योनिद्वार शुक्रबीजसमन्विता' सन्तोऽन्ये केचिदविद्यावन्तो मूढा. प्रपद्यन्ते शरीरत्वाय शरीरग्रहणार्थं देहिनो देहवन्तः, योनिं प्रविशन्तीत्यर्थः । स्थाणु वृक्षादिस्थावरभावमन्येऽत्यन्ताधमा मरण प्राप्यानुसयन्त्यनुगच्छन्ति । यथाकर्म यद्यस्य कर्म तद्यथाकर्म, यैर्यादृश कर्मेह जन्मनि कृत तद्वशेनेत्येतत् । तथा च यथाश्रुत, यादृश च विज्ञानमुपार्जित तदनुरूपमेव शरीर प्रतिपद्यन्त इत्यर्थ । 'यथाप्रज्ञ हि सभवा.' इति श्रुत्यन्तरात् । शकर.

( २ ) अधिकारिविशेषनिर्देशपरेण 'हन्त ते' इत्यनेन सूचितार्थं विवृणोति — योनिमिति । अन्ये परमात्मतत्त्वश्रवणविमुखास्त्वद्विसदृशाः शरीरपरिग्रहाय ब्राह्मणादियोनिं प्रतिपद्यन्ते । § रग

( ३ ) यः कर्मफलभोक्ता सुप्त्यादिमान् स जीवः । मध्व.

स्वप्रकर जीवात्मैव ब्रह्म

**[८]य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण ।**
**तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।**
**तस्मिँल्लोकाः श्रिता सर्वे तदु नात्येति कश्चन । एतद्वै तत् ॥**

( १ ) यत्प्रतिज्ञात गुह्य ब्रह्म वक्ष्यामीति तदाह — य एष सुप्तेषु प्राणादिषु जागर्ति न स्वपिति । कथम् । काम काम त तमभिप्रेत स्त्र्याद्यर्थमविद्यया निर्मिमाणो निष्पादयञ्जागर्ति पुरुषो य , तदेव शुक्र शुभ्र शुद्ध तद्ब्रह्म, नान्यद्गुह्य ब्रह्मास्ति । तदेवामृतमविनाश्युच्यते सर्वशास्त्रेषु । किंच पृथिव्यादयो लोकास्तस्मिन्नेव सर्वे ब्रह्मण्याश्रिता., सर्वलोककारणत्वात्तस्य । तदु नात्येति कश्चनेत्यादि पूर्ववदेव ।

शकर

( २ ) एव शिष्य प्ररोचनयाभिमुखीकृत्य प्रकृतमनुसरति—सर्वेषु सुप्तेषु जीवेषु । काम काम, णमुलन्तमिद, सकल्प्य सकल्प्येत्यर्थ. । न तु 'सर्वान्कामाञ्छन्दतः प्रार्थयस्व' इति प्रकृताः पुत्रादयः कामशब्देन निर्दिश्यन्ते । अय चार्थ सध्याधिकरणे ( ब्रसू. ३।२।१ ) भाष्यश्रुतप्रकाशिकयो स्पष्ट । सकल्प्य सकल्प्य स्वच्छन्दानुरोधेन निर्मिमाण पुरुषो योऽस्तीत्यर्थ । तदेव प्रकाशक तदेवानन्याधीनममृतमुच्यत इत्यर्थः । शिष्ट स्पष्टम् । नित्यमुक्तानाममृतत्वसत्त्वेऽपि निरुपाधिकामृतत्वाभावात्तदेवामृतमित्यवधारणस्य नानुपपत्तिरिति द्रष्टव्यम् । तेनामृतान्तरनिषेधान्मुक्तपरमात्मनोरभेदप्रत्याशा प्रयुक्ता । अत्रत्यामृतशब्दस्य निरुपाधिकामृतवाचित्वात् ।

* रग.

( ३ ) यः प्रलयादिषु जीवेषु सुप्तेषु जागर्ति स विष्णुः पर ब्रह्मेत्यर्थः । न हि जीवस्य योन्यादिगमन ब्रह्म । जीवाद्भेदेन ज्ञात हि ब्रह्म यथावज्ज्ञात भवति । मध्व.

---

* चतुर्थवल्लीपञ्चममन्त्रात्पूर्वं प्रसङ्गतो विहित ५।६, ७, ८ इत्येतेषा मन्त्राणा व्याख्यान व्याख्येयसनिकर्षलोभेनाऽत्र तत्तन्मन्त्रे गृहीतम् ।

§ शेष शकरवत् ।

(१) काउ ५।७, अशकर भास्कर १।४।६, ४।२।८, श्रीकर. १।४।६

(२) काउ ५।८, अशकर भास्कर ३।२।२, रग एष ( एषु ), रामानुज १।१।१ ( पृ ९८ ), ३।२।२, ३ रंगवत्, मध्व एष ( एषु ) निर्मिमाण ( निर्ममाण ), अमध्व ३।२।२ मध्ववत्, श्रीकठ ३।२।२, ३, श्रीकर. ३।२।२, ३, ४।४।१३, १९, वल्लभ ३।२।२, ७, विज्ञान. ३।२।२, बलदेव ३।२।२

* वल्लभ. ३।२।७ ' सुप्तेषु ' इति रगवज्जीवपरम् । रगवत्, ३।२।५, ४।४।१३, १९, निंबार्क ३।२।२

आत्मैव सर्वरूपधर अविकृत सर्वातिग अलिप्तश्च,
स्वात्मनि तज्ज्ञानात् नित्यसुख शान्तिश्च

**अग्निर्यथैको भुवन प्रविष्टो रूपं रूप प्रतिरूपो बभूव ।**
**एकस्तथा सर्वभूतान्तरात्मा रूप रूपं प्रतिरूपो बहिश्च ॥**

( १ ) अनेकतार्किककुबुद्धिविचालितान्तःकरणाना प्रमाणोपपन्नमप्यात्मैकत्वविज्ञान असकृदुच्यमानमप्यनृजुबुद्धीना ब्राह्मणानां चेतसि नाऽऽधीयत इति तत्प्रतिपादने आदरवती पुन पुनराह श्रुतिः — अग्निर्यथैक एव प्रकाशात्मा सन् भुवन भवन्त्यस्मिन्भूतानीति भुवन अय लोकस्तमिम प्रविष्टोऽनुप्रविष्ट. । रूप रूप प्रति दार्वादिदाह्यभेद प्रतीत्यर्थः । प्रतिरूपस्तत्र तत्र प्रतिरूपवान् दाह्यभेदेन बहुविधो बभूव । एक एव तथा सर्वभूतान्तरात्मा सर्वेषा भूतानामभ्यन्तर आत्माऽतिसूक्ष्मत्वाद्दार्वादिष्विव सर्वदेह प्रति प्रविष्टत्वात्प्रतिरूपो बभूव बहिश्च स्वेनाविकृतेन रूपेणाऽऽकाशवत् ।

शकर

( २ ) रूप रूपं रूपे रूपे । प्रतिरूप प्रत्युत्त रूप यस्य स तथोक्तः । सर्वासु भौतिकव्यक्तिषु तेजोधातोर्मिलितत्वेन प्रतिसक्रान्तरूपत्वात्प्रतिरूपमस्तीति द्रष्टव्यम् । * रग

( ३ ) ' अग्निर्यथैको लोकेषु प्रविष्टोऽन्यो न विद्यते । पाकादिकर्ताऽथाप्यस्य देवस्य प्रतिरूपका. । रूप रूप प्रति ह्येते सन्त्यचेतनवह्नय· । एव देवो वायुरपि धारकोऽन्यो न विद्यते । रूप रूप तथाप्यस्य प्रत्यभूत्प्रतिरूपक. । अचेतन. स्पर्शगम्यो योऽयमेव जनार्दनः । एक स्वतन्त्रो नान्योऽस्ति सर्वजीवान्तरस्थित· । रूप रूप प्रति ह्यस्य प्रतिबिम्बाश्च चेतनाः । बाह्याश्च ते ततो नास्य स्वरूपं ते कथचन । अनादिप्रतिबिम्बाश्च बभूवुस्ते ह्यनन्तका. ॥ ' † मध्व.

* शेषं शकरवत् ।

† नवमदशमयोर्व्यतिषङ्गेण व्याख्यानमिदम् ।

(१) काउ ५।९, **ब्रमध्व** २।३।५०, ३।२।१८, **विज्ञान** १।१।२ ( पृ ५० ), १।२।१, २।१।१३, ३।२।२५, २८

**वायुर्यथैको भुवनं प्रविष्टो रूपं रूप प्रतिरूपो बभूव ।**
**एकस्तथा सर्वभूतान्तरात्मा रूपं रूप प्रतिरूपो बहिश्च ॥**

तथाऽन्यो दृष्टान्तः — वायुर्यथैक इत्यादि । प्राणात्मना देहेष्वनुप्रविष्टो रूप रूप प्रतिरूपो बभूवेति समानम् । शकर.

**सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषै र्बाह्यदोषैः ।**
**एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदु खेन बाह्यः ॥**

( १ ) एकस्य सर्वात्मत्वे ससारदुःखित्व परस्यैव स्यादिति प्राप्त इदमुच्यते—सूर्यो यथा चक्षुष आलोकेनोपकार कुर्वन्मूत्रपुरीषाद्यशुचिप्रकाशनेन तद्दर्शिन सर्वलोकस्य चक्षुरपि सन्न लिप्यते चाक्षुषै अशुच्यादिदर्शननिमित्तैराध्यात्मिकै पापदोषैः, बाह्यैश्चाशुच्यादिससर्गदोषै· । एक सस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदु खेन बाह्यः । लोको ह्यविद्यया स्वात्मन्यध्यस्तया कामकर्मोद्भव दु.खमनुभवति । न तु सा परमार्थतः स्वात्मनि । यथा रज्जुशुक्तिकोषरगगनेषु सर्परजतोदकमलानि न रज्ज्वादीना स्वतो दोषरूपाणि सन्ति । ससर्गिणि विपरीतबुद्धयध्यासनिमित्तात्तद्दोषवद्विभाव्यन्ते । न तद्दोषैस्तेषा लेप, विपरीतबुद्धयध्यासबाह्या हि ते । तथाऽऽत्मनि सर्वो लोकः क्रियाकारकफलात्मक विज्ञान सर्पादिस्थानीय विपरीतमध्यस्य तन्निमित्त जन्ममरणादिदु.खमनुभवति, न त्वात्मा सर्वलोकात्माऽपि सन् विपरीताध्यारोपनिमित्तेन लिप्यते लोकदुःखेन । कुत·, बाह्य., रज्ज्वादिवदेव विपरीतबुद्धयध्यासबाह्यो हि स इति ।

शकर.

( २ ) 'रश्मिभिरेषोऽस्मिन्प्रतिष्ठित·' (बृउ ५।५।२), 'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' इति ( ऐउ.

(१) काउ ५।१०, **विज्ञान** १।१।२ ( पृ ५० )

(२) काउ ५।११, **ब्रशाकर** २।३।४७, **निंबार्क.** ३।२।३०, **वल्लभ** २।३।४७, **विज्ञान** १।२।८, ११, १।३।१२, २।३।४६, ४८, ३।२।१७.

१।२।४ ) इति श्रुत्यनुसारेण यथा सूर्यश्चक्षुरधिष्ठातृतया तदन्तर्गतोऽपि बहिर्निर्गतैश्चक्षुर्मलादिभिर्न स्पृश्यते, तथा परमात्मा सर्वभूतेष्वात्मतया वर्तमानोऽपि तद्गतै. दोषैर्न स्पृश्यते । तस्य स्वाभाविकापहतपाप्मत्वादिगुणयुक्ततया स्वेतरसमस्तबाह्यत्वात्, विलक्षणत्वादित्यर्थः । रग

( ३ ) ' सूर्यो यथान्तर चक्षुः प्रतिबिम्बोऽस्य बाह्यकम् । बाह्यचक्षुर्गतैर्दोषैरन्तश्चक्षुर्न लिप्यते । अन्तश्चक्षुर्देवता तु बाह्य चक्षुरचेतनम् । एव बाह्य स्वतन्त्र त्वाज्जीवेभ्य. पुरुषोत्तमः । अस्वतन्त्रस्य जीवस्य दु:खैर्नैव हि लिप्यते । चेतनाभासको जीवः परमश्चेतनो हरिः । स्वतन्त्रत्वात्स्वतन्त्रो हि नैव दोषेण लिप्यते ॥ ' इति कौर्मे । स एक एव सर्वभूतान्तरात्मा । तस्य रूप रूप प्रतिरूपाख्यो जीवो बभूव । बहिश्चासौ परमात्मनो नितरां भिन्न. । परतन्त्रत्वात् । ' आत्मैवेदमग्र आसीत् ' इत्यादिवदनादित्वापेक्षया । ' आत्मनिस्थ हरिं जानन् मुच्यते नात्र सशय. । जीवैक्येन तु त ध्याय स्तमस्यन्धे पतेद्ध्रुवम् ॥' इति च । मध्व

* एको वशी सर्वभूतान्तरात्मा एक रूप बहुधा य. करोति ।
तमात्मस्थ येऽनुपश्यन्ति धीरास्तेषा सुख शाश्वतं नेतरेषाम् ॥

(१) किंच, स हि परमेश्वर सर्वगतः स्वतन्त्र एको न तत्समोऽभ्यधिको वाऽन्योऽस्ति । वशी सर्व ह्यस्य जगद्वशे वर्तते । कुतः । सर्वभूतान्तरात्मा । यत एकमेव सदेकरसमात्मान विशुद्धविज्ञानरूप नामरूपाद्यशुद्धोपाधिभेदवशेन बहुधाऽनेकप्रकार यः करोति स्वात्मसत्तामात्रेणाचिन्त्यशक्तित्वात् । तमात्मस्थ स्वशरीरहृदयाकाशे बुद्धौ चैतन्याकारेणाभिव्यक्तमित्येतत् । न हि शरीरस्याऽऽधारत्वमात्मनः । आकाशवदमूर्तत्वात् । आदर्शस्थ मुखमिति यद्वत् । तमेतमीश्वरमात्मान ये निवृत्तबाह्यवृत्तयोऽनुपश्यन्ति आचार्यागमोपदेशमनु साक्षादनुभवन्ति धीरा विवेकिनस्तेषा परमेश्वरभूतानां शाश्वत नित्य सुखमात्मानन्दलक्षण भवति, नेतरेषां

* श्वेउ ६।१२, १३ इत्यत्रापि व्याख्यानानि द्रष्टव्यानि ।

(१) काउ ५।१२, रग रूप ( बीज ), अमध्व १।३।२२

बाह्यासक्तबुद्धीनामविवेकिना स्वात्मभूतमप्यविद्याव्यवधानात् । शकर

( २ ) एकः समाभ्यधिकरहितः । वश. इच्छा, सोऽस्यास्तीति वशी, जगद्वशे वर्तते इत्युक्तरीत्या वशवर्तिप्रपञ्चक इत्यर्थ । ' इमौ स्म मुनिशार्दूल किंकरौ समुपस्थितौ ' इत्युक्तरीत्या भक्तवश्य इति वाऽर्थ· । एक बीज तम. ' परे देवे मनस्येकीभवति ' ( प्रउ. ४।२ ) इति श्रुत्युक्तरीत्या स्वेनैकीभूताविभागावस्थ तमोलक्षण बीज महदादिबहुविधप्रपञ्चरूपेण यः करोति त ' य आत्मनि तिष्ठन् ' इत्युक्तरीत्या स्वान्तर्यामिण ये पश्यन्ति तेषामेव मुक्तिरित्यर्थः । रग

[१] नित्योऽनित्यानां चेतनश्चेतनानामेको बहूना यो विदधाति कामान् ।
तमात्मस्थ येऽनुपश्यन्ति धीरास्तेषा शान्तिः शाश्वती नेतरेषाम् ॥

( १ ) किंच, नित्योऽविनाश्यनित्याना विनाशिनाम् । चेतनश्चेतनाना चेतयितॄणा ब्रह्मादीनां प्राणिनामग्निनिमित्तमिव दाहकत्वमनग्नीनामुदकादीनामात्मचैतन्यनिमित्तमेव चेतयितृत्वमन्येषाम् । किंच स सर्वज्ञः सर्वेश्वर कामिना ससारिणा कर्मानुरूपं कामान् कर्मफलानि स्वानुग्रहनिमित्तांश्च कामान् य एको बहूनामनेकेषामनायासेन विदधाति, प्रयच्छतीत्येतत् । तमात्मस्थ येऽनुपश्यन्ति धीरास्तेषां शान्तिरुपरतिः शाश्वती नित्या स्वात्मभूतैव स्यान्नेतरेषामनेवंविधानाम् । * शकर.

* यद्यपि वाणीविलासमुद्रितपुस्तके ' नित्यो नित्यानाम्' इति मूल, ' नित्योऽविनाशी नित्यानामविनाशिनाम् ' इति तदनुसारि भाष्य च समभुद्धत, तथापि आनन्दाश्रममुद्रिते द्वे अपि टीके ' नित्योऽनित्यानाम् ' इति मूलपाठ ' नित्योऽविनाश्यनित्याना विनाशिनाम् ' इति तदनुसारिण भाष्यपाठमेव चानुरुध्येते इत्ययमेव पाठ समाश्रित ।

(१) काउ ५।१३, रंग ऽनित्यानां ( नित्यानां ), मध्व रंगवत्, अमध्व २।३।१७, १८ रगवत्, श्रीकठ. १।२।११, २।१।२२, २।३।१८ रगवत्, श्रीकर. १।१।२७, १।२।११, २।१।१३, २३, २।३।१६, ४१, ३।२।२६, ४।४।२२ रगवत्, बलदेव. २।३।१६, ४९, ३।२।१९.

( २ ) नित्यश्चेतन एक एव सन्बहूनां नित्याना चेतनाना अपेक्षितानर्थाननायासेन प्रयच्छति । तमात्म स्थमिति । स्पष्टोऽर्थः ।

रंग

**तदेतदिति मन्यन्तेऽनिर्देश्यं परम सुखम् ।**
**कथ नु तद्विजानीया किमु भाति विभाति वा ॥**

( १ ) यत्तदात्मविज्ञान सुखमनिर्देश्य निर्देष्टुमशक्य परम प्रकृष्ट प्राकृतपुरुषवाङ्मनसयोरगोचरमपि सन्निवृत्तैषणा ये ब्राह्मणास्ते यत्तदेतत्प्रत्यक्षमेवेति मन्यन्ते, कथ नु केन प्रकारेण तत्सुखमह विजानीयां इदमित्यात्मबुद्धिविषयमापादयेय यथा निवृत्तैषणा यतय । किमु तद्भाति दीप्यते प्रकाशात्मक तद्यतोऽस्मदबुद्धिगोचरत्वेन विभाति विस्पष्ट दृश्यते किंवा नेति ।

शकर

( २ ) एवमुक्ते शिष्य आह—तदेतदिति । तदलौकिक परमानन्दरूप ब्रह्म करतलामलकवदपरोक्ष भवादृशा निष्पन्नयोगा मन्यन्ते । भवादृशा. साक्षात्कर्तुं शक्नुवन्तीत्यर्थ' । कथ रूपादिहीनब्रह्मग्रहणासमर्थमानसोऽह विजानीयाम् । तत्किं दीप्तिमत्तया भासते, तत्रापि विस्पष्ट प्रकाशते, उत तेजोन्तरसवलनान्न विस्पष्ट प्रकाशत इति प्रश्नः ।

रग

( ३ ) एतदेव भगवद्रूप परम सुखम् । ज्ञानिसुख तु तद्विप्लुण्मात्रम् । ' ब्रह्मादीना च मुक्ताना सुख विष्णुसुखस्य तु । प्रतिबिम्बस्तु विप्लुट्को विष्णोरेव पर सुखम् । सम्यग्भाति न भातीति जानीयां तत्कथ न्वहम् । तत्प्रसादमृते दिव्यमनिर्देश्य पर सुखम् ॥ ' इति च महावाराहे ।

* मध्व

आत्मैव स्वयप्रकाश सर्वप्रकाशक

*** न तत्र सूर्यो भाति न चन्द्रतारक नेमा विद्युतो भान्ति कुतोऽयमग्नि ।**
**तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति ॥**

( १ ) अत्रोत्तरमिद — भाति च विभाति चेति । कथम्—न तत्र तस्मिन्स्वात्मभूते ब्रह्मणि सर्वावभासकोऽपि सूर्यो भाति तद्ब्रह्म न प्रकाशयतीत्यर्थ । तथा न चन्द्र तारक, नेमा विद्युतो भान्ति, कुतोऽयमस्मद्दृष्टिगोचरोऽग्निः । किं बहुना, यदिदमादित्यादिक सर्वं भाति तत्तमेव परमेश्वर भान्त दीप्यमानमनु भात्यनु दीप्यते । यथा जलोल्मुकाद्यग्निसयोगादग्निं दहन्तमनु दहति, न स्वतस्तद्वत् । तस्यैव भासा दीप्त्या सर्वमिद सूर्यादि विभाति । यत एव, तदेव ब्रह्म भाति च विभाति च । कार्यगतेन विविधेन भासा तस्य ब्रह्मणो भारूपत्व स्वतोऽवगम्यते । न हि स्वतोऽविद्यमान भासनमन्यस्य कर्तुं शक्यम् । घटादीनामन्यावभासकत्वादर्शनाद्भासन रूपाणां चाऽऽदित्यादीनां तद्दर्शनात् ।

शकर

( २ ) दर्शयतश्च विकारावर्तित्व परस्य ज्योतिष. श्रुतिस्मृती—' न तत्र सूर्यो भाति ' इति, ' न तद्भासयते.. ' इति च ।

‡ ब्रशकर. ४।४।२०

( ३ ) परमात्मनो योगयुगालम्बनाय ' आदित्यवर्णं तमसः परस्तात् ' ( श्वेउ ३।८ ) ' सदैकरूपरूपाय ' इति प्रमाणप्रतिपन्नगुहाश्रयदिव्यमङ्गलविग्रहोऽस्ति, तद्विशिष्टः परमात्मा विभाति सर्वातिशायिदीप्ति-

---

* तदेतदित्यादि कथमित्यादि च यमवाक्यम् । कथमित्याक्षेपे । विजानीयामित्यस्य ' भगवत्प्रसादमृते ' इत्यादि । ' किमु भाति ' इति नचिकेत प्रश्न । भातीत्यस्य सम्यगित्यादि । ' न भाति ' इत्युत्तर इति टीकात स्पष्टम् ।

(१) **काउ** ५।१४, **मध्व** विभाति ( न भाति ), **अमध्व** १।३।२२

* मुउ २।२।१०, श्वेउ ६।१४ इति स्थलयोरप्यय मन्त्रो द्रष्टव्य ।

‡ भास्कर ब्रशकरवद् ।

(१) **काउ** ५।१५, **ब्रशकर** १।१।२४, १।३।२२, ४।४।२०, **भास्कर** १।३।२२, ३।२।१६, ४।४।२०, **रामानुज निंबार्क** १।३।२२, ४१; **अमध्व** १।३।२२, **श्रीकठ** १।१।२ ( पृ १२७ ), ४।४।२२, **श्रीकर** १।१।११, २२, २५, १।३।२२, १।४।२२, २।४।१२, ४।२।५, **वल्लभ** १।३।२२, **विज्ञान** १।१।३ ( पृ ८० ) चन्द्रतारक ( चन्द्रतारके ), १।३।२४, **बलदेव** १।३।४०.

मानित्याह— न तत्रेति । अय च मन्त्रः 'ज्योतिर्दर्शनात्' (ब्रसू १।३।४०) इति सूत्रे, सर्वतेजसां छादक सर्वतेजसा कारणभूतमनुग्राहक चाङ्गुष्ठप्रमितस्य ज्योतिर्दृश्यत इति भाष्येण विवृत । इद च भाष्यम्— 'न तत्र सूर्यः' इत्यादिमन्त्रे पूर्वार्धस्यार्थमाह — सर्वतेजसा छादकमिति । उत्तरार्धस्य पूर्वपादार्थमाह—सर्वतेजसा कारणभूतमिति । अनुभान पश्चाद्भानम् । तेन कार्यकारणभाव. सिद्ध । पौर्वापर्यनियमो हि कार्यकारणभाव इति भावः । चतुर्थपादार्थमाह— अनुग्राहकमिति । 'यस्याऽऽदित्यो भामुपयुज्य भाति' इत्यादिश्रुतिश्चानुग्राहकत्वे प्रमाणम्—इति व्यासार्यैर्विवृतम् । तदीयदीप्तिसाक्षात्कारसभवे तेजोन्तराणामभिभूतत्व प्रथमार्धार्थ: । तेजोन्तरोत्पत्तौ तदुपादानद्रव्यानुग्राहकत्वरूप निमित्तत्व तृतीयपादार्थ. । चाक्षुषरश्म्यनुग्राहकचन्द्रादेरिवोत्पन्नस्यापि तेजस. स्वसबन्धेन स्वकार्यकरणसामर्थ्याधायकत्वलक्षणानुग्राहकत्व चतुर्थपादार्थ इत्यप्यर्थस्तत्रैव व्यक्त' ।

यद्वा कालिदासकवौ परिगण्यमान इतरः । कुकविरकविरितिवद्भाति ब्रह्मणि परिगण्यमाने सूर्यादितेजोन्तर न भाति, अतस्तदेव ब्रह्मातिभास्वररूपशालीति पूर्वार्धार्थ. । तदीयदीप्तिसाक्षात्कारसभवे तेजोन्तराणामभिभूतत्वमिति व्यासार्यवचनस्याप्ययमेवार्थः । अमुमेवार्थमितरतेजसां स्वरूपोत्पत्तौ फलजनने च परमात्मानुग्रहसापेक्षत्वप्रदर्शकेन तमेव भान्तमित्युत्तरार्धेन प्रथयतीति न दोष इत्येतदवगन्तव्यम् । यद्वा, पूर्वार्धस्य यथाश्रुत एवार्थ. । नन्वतिभास्वररूपवति सूर्यादौ प्रत्यक्षेणानुभूयमाने न भातीति प्रत्यक्षविरुद्ध कथमभिधीयत इत्यत्राऽऽह — तमेव भान्तमनुभाति इति । इद च परिदृश्यमानमादित्यादीना भास्वररूप न स्वाभाविक, अपि तु परमात्मदत्त तदीयमेव तेजः । अतो याचितकमण्डितपुरुषतुल्यानामेतेषा भास्वररूपशालिना न भातीति व्यपदेशो युज्यत इति भाव' । * रग

(४) 'तस्य भासा सर्वमिद विभाति' इति सूर्यादीनां स्वतःप्रकाशो नास्त्येव घटवत् । भगवत्प्रकाशेनैव प्रकाशवत्त्वम् । वल्लभ १।३।२२

* याचितक याचना ।

सनातन सर्वलोकाश्रयोऽश्वत्थ एव ब्रह्म अमृतम्

**ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थ सनातन ।**
**तदेव शुक्र तद्ब्रह्म तदेवामृतमुच्यते ।**
**तस्मिँल्लोका. श्रिता' सर्वे तदु नात्येति कश्चन ।**
**एतद्वै तत् ॥**

(१) तूलावधारणेनैव मूलावधारण वृक्षस्य क्रियते लोके यथा, एव ससारकार्यवृक्षावधारणेन तन्मूलस्य ब्रह्मणः स्वरूपावदिधारयिषयेय षष्ठी वल्ल्यारभ्यते — ऊर्ध्वमूलः ऊर्ध्वं मूल यत्तद्विष्णो. परम पदमस्येति सोऽयमव्यक्तादिस्थावरान्तः ससारवृक्षः ऊर्ध्वमूल. । वृक्षश्च व्रश्चनात् । जन्मजरामरणशोकाद्यनेकानर्थात्मकः प्रतिक्षणमन्यथास्वभावो मायामरीच्युदकगन्धर्वनगरादिवद्दृष्टनष्टस्वरूपत्वादवसाने च वृक्षवदभावात्मकः कदलीस्तम्भवन्निःसारोऽनेकशतपाखण्डबुद्धिविकल्पास्पदस्तत्त्वविजिज्ञासुभिरनिर्धारितेदतत्त्वो वेदान्तनिर्धारितपरब्रह्ममूलसारोऽविद्याकामकर्माव्यक्तबीजप्रभवोऽपरब्रह्मविज्ञानक्रियाशक्तिद्वयात्मकहिरण्यगर्भाङ्कुरः सर्वप्राणिलिङ्गभेदस्कन्ध. तृष्णाजलासेकोद्भूतदर्पो बुद्धीन्द्रियविषयप्रवालाङ्कुर श्रुतिस्मृतिन्यायविद्योपदेशपलाशो यज्ञदानतपआद्यनेकक्रियासुपुष्प सुखदु.खवेदनानेकरसः प्राण्युपजीव्यानन्तफलस्तत्तृष्णासलिलावसेकप्ररूढजडीकृतदृढबद्धमूल. सत्यनामादिसप्तलोकब्रह्मादिभूतपक्षिकृतनीड. प्राणिसुखदु खोद्भूतहर्षशोकजातनृत्यगीतवादित्रक्ष्वेलितास्फोटितहसिताकृष्टरुदितहाहामुञ्चमुञ्चेत्याद्यनेकशब्दकृततुमुलीभूतमहारवो वेदान्तविहितब्रह्मात्मदर्शनासङ्गशस्त्रकृतोच्छेद एष ससारवृक्षोऽश्वत्थः अश्वत्थवत्कामकर्मवातेरितनित्यप्रचलितस्वभावः । स्वर्गनरकतिर्यक्प्रेतादिभिः शाखाभिरवाक्शाख । सनातनोऽनादित्वाच्चिर प्रवृत्तः । यदस्य ससारवृक्षस्य मूल तदेव शुक्र शुभ्र शुद्ध ज्योतिष्मच्चैतन्यात्मज्योति.स्वभाव, तदेव ब्रह्म सर्वमहत्त्वात् । तदेवामृतमविनाशस्वभावमुच्यते कथ्यते सत्यत्वात् । वाचारम्भण विकारो नामधेयमनृतमन्यदतो मर्त्यम् । तस्मिन्परमार्थसत्ये ब्रह्मणि लोका

(१) काउ ६।१, ब्रशकर १।३।३९, भास्कर १।३।३९ शुक्र( शुक्र ), मध्व लोऽवाक्शा ( लोऽर्वाक्शा ), श्रीकर १।३।३९

गन्धर्वनगरमरीच्युदकमायासमाः परमार्थदर्शनाभावावगमना. श्रिता आश्रिता सर्वे समस्ता उत्पत्तिस्थितिलयेषु। तदु तद्ब्रह्म नात्येति नातिवर्तते मृदादिमिव घटादिकार्यं कश्चन कश्चिदपि विकारः। एतद्वै तत्।

शकर

(२) समस्तलोकोपरिनिविष्टचतुर्मुखस्याऽऽदित्वेन तस्योर्ध्वमूलत्व, पृथिवीनिवासिसकलनरपशुमृगकृमिकीटपतङ्गस्थावरान्ततयाऽध.शाखत्वमिति। तल्लक्षणमेव ब्रह्मेति दर्शयति। तदेव शुक्रमिति। पूर्वमेव व्याकृतोऽय मन्त्रः।

रग.

(३) 'सर्वोच्चो भगवान्विष्णुर्मूल भूमिवदस्य तु। जगदाख्यस्य वृक्षस्य शाखा देवास्ततोऽवमाः। वृक्षमूलं रमा देवी सोऽश्व आशुगतेर्हरिः। तद्यासत्वात्तदन्नत्वादश्वत्थोऽय प्रकीर्तित। प्रवाहतस्त्वनादिश्च मुख्यतस्त्वमृतो हरि'। मुख्यामृत. स एवैको जगन्नित्य प्रवाहत.॥'

मध्व

भयरूप प्राण ब्रह्म

**यदिद किंच जगत्सर्वं प्राण एजति नि सृतम्। महद्भय वज्रमुद्यत य एतद्विदुरमृतास्ते भवन्ति॥**

(१) यद्विज्ञानादमृता भवन्तीत्युच्यते, जगतो मूल तदेव, नास्ति ब्रह्म, असत एवेद नि.सृतमिति, तन्न। यदिद किंच यत्किंचेद जगत्सर्वं प्राणे परस्मिन्ब्रह्मणि सत्येजति कम्पते, तत एव निःसृत निर्गत सत्प्रचलति नियमेन चेष्टते। यदेव जगदुत्पत्त्यादिकारण ब्रह्म तन्महद्भय, महच्च तद्भय च बिभेत्यस्मादिति महद्भयम्। वज्रमुद्यतमुद्यतमिव वज्रम्। यथा वज्रोद्यतकर स्वामिनमभिमुखीभूत दृष्ट्वा भृत्या नियमेन तच्छासने वर्तन्ते, तथेद चन्द्रादित्यग्रहनक्षत्रतारकादिलक्षण जगत्सेश्वर नियमेन क्षणमप्यविश्रान्त वर्तत इत्युक्त भवति। य एतद्विदुः स्वात्मप्रवृत्तिसाक्षिभूतमेक ब्रह्म, अमृता अमरणधर्मास्ते भवन्ति।

शकर

(२) 'कम्पनात्' — 'यदिद किञ्च' एतद्वाक्य 'एजृ कम्पने' इति धात्वर्थानुगमाल्लक्षितम्। एजयितृत्वमपीद परमात्मन एव उपपद्यते न वायुमात्रस्य।

ब्रशकर १।३।३९

(३) (प्राण इति सप्तम्यन्तपदसामर्थ्यात् स्थितानामित्यध्याहारः।) अत्र महद्भय वज्रमुद्यतमिति चत्वारि पदानि पञ्चम्यर्थे प्रथमान्तानि। आद्य पञ्चम्यर्थपदद्वय भयवाचि। उत्तर तु पदद्वय तद्धेतुभूतप्राणशब्दितपरब्रह्मपरमिति द्रष्टव्यम्। केचित्तु 'बिभेत्यस्मादिति भय, भयानकमित्यर्थ। महाभयानकोद्यतवज्रवत्त्वस्मान्नि.सृत सकल जगत्प्राणशब्दितः परमात्मा कम्पयति। एजतिर्ण्यर्थगर्भ' इत्यमुमर्थ वर्णयन्ति।

* रग

(४) 'प्राणाख्ये तु हरौ सर्वमेजत्यस्मात्तु नि.सृतम्। वज्रवद्भयद चैव स्वधर्मस्यातिलङ्घने॥'

मध्व.

**भयादस्याग्निस्तपति भयात्तपति सूर्य.। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम॥**

(१) कथ तद्भयाज्जगद्वर्तत इत्याह—भयाद्भीत्या परमेश्वरस्याग्निस्तपति। भयात्तपति सूर्य। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः। न हीश्वराणा लोकपालानां समर्थाना सता नियन्ता चेद्वज्रोद्यतकरवन्न स्यात्स्वामिभयभीतानामिव भृत्यानां नियता प्रवृत्तिरुपपद्यते।

शकर

(२) धावतिशब्द इन्द्रादीनां स्वस्वव्यापारप्रवृत्तिपरः। शिष्ट स्पष्टम्।

रग

विविधमात्मदर्शनम्

**इह चेदशकद्बोद्धुं प्राक्शरीरस्य विस्रस। तत सर्गेषु लोकेषु शरीरत्वाय कल्पते॥**

---

(१) काउ ६।२, ब्रशकर १।३।३९, ३।३।४, ३।४।८, भास्कर १।३।३९, रामानुज १।३।४०, ब्रमध्व १।३।३९, श्रीकठ १।३।४०, श्रीकर वल्लभ बलदेव १।३।३९

* शेष शकरवत्। कसे स्थिता रामानुजभाष्यटीका। भाष्यानुरोधेन स्थितानामिति षष्ठीबहुवचनम्। अत एव मूलमन्त्रे स्थितमित्यस्याध्याहारो निष्पद्यते।

(१) काउ ६।३, ब्रशकर भास्कर १।३।३९, रामानुज १।३।४०, श्रीकर १।३।३९, बलदेव १।३।४०

(२) काउ ६।४, मध्व सर्गेषु (स्वर्गेषु)

तच्चेह जीवन्नेव चेदशकच्छक्नोति शक्त. सन् जानात्येतद्भयकारण ब्रह्म बोद्धुमवगन्तु प्राक्पूर्वं शरीरस्य विस्रस. अवस्रसनात्पतनात्, ससारबन्धनाद्विमुच्यते । न चेदशकद्बोद्धु ततोऽनवबोधात्सर्गेषु सृज्यन्ते येषु स्रष्टव्याः प्राणिन इति सर्गाः पृथिव्यादयो लोकास्तेषु सर्गेषु लोकेषु शरीरत्वाय शरीरभावाय कल्पते समर्थो भवति, शरीर गृह्णातीत्यर्थ. । तस्माच्छरीरविस्रसनात्प्रागात्म बोधाय यत्न आस्थेयः । * शकर

**यथाऽऽदर्शे तथाऽऽत्मनि यथा स्वप्ने तथा पितृलोके ।**
**यथाऽप्सु परीव ददृशे तथा गन्धर्वलोके छायातपयोरिव ब्रह्मलोके ॥**

(१) यस्मादिहैवाऽऽत्मनो दर्शनमादर्शस्थस्येव मुखस्य स्पष्टमुपपद्यते न लोकान्तरेषु ब्रह्मलोकादन्यत्र । स च दुष्प्राप. । कथमित्युच्यते — यथाऽऽदर्शे प्रतिबिम्बभूतमात्मान पश्यति लोकोऽत्यन्तविविक्त, तथेहाऽऽत्मनि स्वबुद्धौ आदर्शवन्निर्मलीभूताया विविक्तमात्मनो दर्शन भवतीत्यर्थ । यथा स्वप्नेऽविविक्त जाग्रद्वासनोद्भूत, तथा पितृलोकेऽविवक्तमेव दर्शनमात्मन. कर्मफलोपभोगासक्तत्वात् । यथा चाप्स्वविभक्तावयवमात्मरूप परीव ददृशे परिदृश्यत इव, तथा गन्धर्व लोकेऽविविक्तमेव दर्शनमात्मन' । एव च लोकान्तरेष्वपि शास्त्रप्रामाण्यादवगम्यते । छायातपयोरिवात्यन्तविविक्त ब्रह्मलोक एवैकस्मिन् । स च दुष्प्रापोऽत्यन्तविशिष्ट कर्मज्ञानसाध्यत्वात् । तस्मादात्मदर्शनायेहैव यत्न. कर्तव्य इत्यभिप्राय । शकर

(२) अत्मनो दुर्बोधत्वमाह — यथा दर्शे चन्द्रिकाया अभावान्न स्पष्टः प्रतिभासस्तथेह लोक आत्मनीत्यर्थः । यद्वा यथाऽऽदर्शे दर्पणे प्रतीयमान वस्तु साक्षाद्दृष्टवस्तुवत् प्रत्यङ्मुख त्वादिकल्पितार्थानवरुद्धतया नोपलभ्यते तथेहाऽऽत्मविषयिणी प्रतीतिरित्यर्थः । लोकान्तरेऽपि तथेत्याह— यथा स्वप्नदर्शनस्य जाग्रद्दर्शनवत्सम्यक्तया संशयादिविरोधितया पुनरनुसधानयोग्यत्वाभावस्तथा पितृलोक इत्यर्थ । यथा जलान्तरस्थवस्तुनो नेतरवत्स्पष्टप्रकाश-स्तद्वत्परिदृश इव, न वस्तुतः परितो दृश्यत इत्यर्थ' । गन्धर्वलोकेऽप्यापातत प्रतीतिमात्रमित्यर्थः। यथा छाया तपयोर्मिश्रणे शुद्धातपवर्तिपदार्थवन्नोपलम्भ., एव बाह्यलोकेऽपि न सम्यगुपलम्भ । अतो दुरधिगममात्मतत्त्व मिति भावः । यद्वा ब्रह्मलोके यद्यपि छायातपयोर्विविच्योपलम्भवदात्मानात्मस्वरूपयोर्विविच्योपलम्भ. सभवति । तथाऽपि नात्रत्यानामात्मतत्त्व सुलभमिति भाव. । रग.

(३) 'जीवे स्थितस्तु भगवान्दृश्यते ज्ञान दृष्टिभि । आदर्शे मुखवत्सम्यङ् न तथा पितृलोकगः । ततः किंचित्स्पष्टतया गान्धर्वे दृश्यते हरिः । नात्यातपे न च्छायाया यथैवाहनि दृश्यते । स्पष्ट तथा ब्रह्मलोके दृश्यते पुरुषोत्तमः ॥' इति च । मध्व

इन्द्रियेभ्य पृथक्त्वदर्शन शोकनाशनम्

**इन्द्रियाणा पृथग्भावमुदयास्तमयौ च यत् ।**
**पृथगुत्पद्यमानाना मत्वा धीरो न शोचति ॥**

कथमसौ बोद्धव्य, किंवा तदवबोधे प्रयोजनमित्युच्यते — इन्द्रियाणां श्रोत्रादीनां स्वस्वविषयग्रहणप्रयोजनेन स्वकारणेभ्य. आकाशादिभ्य. पृथगुत्पद्यमानानामत्यन्तविशुद्धात्केवलाच्चिन्मात्रात्मस्वरूपात्पृथग्भाव स्वभावविलक्षणात्मकतां, तथा तेषामेवेन्द्रियाणामुदयास्तमयौ चोत्पत्तिप्रलयौ जाग्रत्स्वापावस्थापेक्षया नाऽऽत्मन इति मत्वा ज्ञात्वा विवेकतो धीरो धीमान्न शोचति । आत्मनो नित्यैकस्वभावस्याव्यभिचारात् शोककारणत्वानुपपत्ते । तथा च श्रुत्यन्तर 'तरति शोकमात्मवित्' इति । * शकर.

इन्द्रियमनआदिभ्य परस्य पुरुषस्य दर्शन मुक्तिदम्

**इन्द्रियेभ्यः परं मनो मनस. सत्त्वमुत्तमम् ।**
**सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥**

---

* रग शकरेण गतार्थम् ।

(१) काठ ६।५, रग यथाऽऽदर्शे ( यथा दर्शे ), मध्व ददृशे ( दृश्यते )

* रग शकरवत् ।

(१) काठ ६।६

(२) काठ ६।७, श्रीकर २।४।१५, विज्ञान. २।४।६

**¹अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च ।**
**यं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥**

( १ ) यस्मादात्मन इन्द्रियाणां पृथग्भाव उक्तः, * नासौ बहिरधिगन्तव्यः, यस्मात्प्रत्यगात्मा स सर्वस्य । तत्कथमित्युच्यते—इन्द्रियेभ्यः परं मन इत्यादि । अर्थानामिहेन्द्रियसमानजातीयत्वादिन्द्रियग्रहणेनैव ग्रहणम् । पूर्ववदन्यत् । सत्त्वशब्दाद्बुद्धिरिह । अव्यक्तात्तु परः पुरुषो व्यापको व्यापकस्याप्याकाशादेः सर्वस्य कारणत्वात् । अलिङ्ग, लिङ्ग्यते गम्यते येन तल्लिङ्गं बुद्ध्यादि, तदविद्यमानमस्येति सोऽयमलिङ्ग एव । सर्वसंसारधर्मवर्जित इत्येतत् । यं ज्ञात्वाऽऽचार्यतः शास्त्रतश्च मुच्यते जन्तुरविद्यादिहृदयग्रन्थिभिर्जीवन्नेव, पतितेऽपि शरीरेऽमृतत्वं च गच्छति । सोऽलिङ्गः परोऽव्यक्तात्पुरुष इति पूर्वेणैव संबन्धः । शंकर

( २ ) देहा(दि)विविक्तप्रत्यगात्मज्ञानेऽपि भगवच्छरणागतिरेवोपाय इति पूर्वोक्तं शरणवरणमेव प्रतिपादयति—इन्द्रियेभ्य इति । अलिङ्गो लिङ्गागम्यः । परत्वं च वशीकार्यताया विवक्षितम् । परस्य च वशीकरणं शरणागतिरेव । शिष्टं स्पष्टम् । † रंग

( ३ ) पुनरिन्द्रियेभ्यः परं मन इत्यादि देवतातारतम्यज्ञानपूर्वकं भगवतः सर्वोत्तमत्वज्ञान एव सर्ववाक्यानां महातात्पर्यमिति ज्ञापयितुम् । 'तारतम्यपरिज्ञानपूर्वकं सर्वतो हरेः । आधिक्ये सर्ववाक्यानां तात्पर्यं महदिष्यते ॥' इति च । मध्व

**²न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।**
**हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥**

( १ ) कथं तर्ह्यलिङ्गस्य दर्शनमुपपद्यत इत्युच्यते—न संदृशे संदर्शनविषये न तिष्ठति प्रत्यगात्मनोऽस्य रूपम् । अतो न चक्षुषा सर्वेन्द्रियेण, चक्षुर्ग्रहणस्योपलक्षणार्थत्वात्, पश्यति नोपलभते कश्चन कश्चिदप्येनं प्रकृतमात्मानम् । कथं तर्हि तं पश्येदित्युच्यते—हृदा हृत्स्थया बुद्ध्या । मनीषा मनसः संकल्पादिरूपस्येष्टे नियन्तृत्वेनेति मनीट् तया हृदा मनीषाऽविकल्पयित्र्या । मनसा मननरूपेण सम्यग्दर्शनेन । अभिक्लृप्तोऽभिसमर्थितोऽभिप्रकाशित इत्येतत् । आत्मा ज्ञातुं शक्यत इति वाक्यशेषः । तमात्मानं ब्रह्मैतद्ये विदुरमृतास्ते भवन्ति । शंकर

( २ ) अस्य रूपं स्वरूपं विग्रहो वा व्यापकत्वादेव संदर्शनविषयेऽभिमुखतया न तिष्ठतीत्यर्थः । अथवा दृश्यं नीलरूपादिकं नास्तीत्यर्थः । अत एव — न चक्षुषेति । स्पष्टोऽर्थः । हृदेति । अयमंशः 'सर्वत्र प्रसिद्धोपदेशात्' ( ब्रसू १।२।१ ) इत्यत्र व्यासार्यैः "हृदेति भक्तिरुच्यते, मनीषेति धृतिः । 'न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्' इति पूर्वार्धमेकरूपं पठित्वा 'भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं परिपश्यतीह' इति महाभारते उक्तत्वात् । अभिक्लृप्तो ग्राह्यः" इति विवृतः । धृत्या च समाहितात्मा भक्त्या पुरुषोत्तमं पश्यति साक्षात्करोति प्राप्नोतीत्यर्थः । य एतद्विदुरिति । स्पष्टोऽर्थः । रंग

( ३ ) 'तदव्यक्तमाह हि' — तद्ब्रह्म प्रमाणान्तरेण न व्यज्यते । आह हि शास्त्रं 'न संदृशे' इति । रामानुज ३।२।२२

( ४ ) 'प्रादुर्भावादृते विष्णुमिन्द्रियैर्नैव पश्यति । प्रादुर्भावानपि यदा ज्ञानदृष्ट्यैव पश्यति । तदैव मुच्यते योगी न दृष्टैरिन्द्रियैः क्वचित् ॥' इति च । मध्व

योगाख्या परमा गतिः

**¹यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।**
**बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥**

---

* नासौ इत्यस्य तस्मादित्यादि ।

† प्रथममन्त्रार्थः शंकरवत् ।

(१) काउ ६।८, मध्व यं ( तं )

(२) काउ ६।९, रामानुज १।१।४ ( पृ १५९ ), १।२।१, ३।२।२२ एतत् ( एनं ), मध्व कश्चनैनम् ( कश्चिदेनम् ) एतत् ( एनं ), श्रीकंठ श्रीकर ३।२।२२, वल्लभ ३।४।२५, ४।१।३ रामानुजवत्, बलदेव १।२।१, ३।२।२३.

(१) काउ ६।१०, रंग विचेष्टति (विचेष्टते), रामानुज २।४।४, श्रीकंठ श्रीकर २।४।४ विचेष्टति (विचेष्टेत), विज्ञान ४।१।२, बलदेव २।४।५.

(१) सा ह्युन्मनीट् कथ प्राप्यत इति तदर्थो योग उच्यते — यदा यस्मिन्काले स्वविषयेभ्यो निवर्तिता न्यात्मन्येव पञ्च ज्ञानानि ज्ञानार्थत्वाच्छ्रोत्रादीन्द्रियाणि ज्ञानान्युच्यन्ते, अवतिष्ठन्ते सह मनसा यदनुगतानि तेन सकल्पादिव्यावृत्तेनान्तःकरणेन । बुद्धिश्चाध्यवसायलक्षणा न विचेष्टति स्वव्यापारेषु न विचेष्टते न व्याप्रियते, तामाहु. परमा गतिम् । शकर

(२) शरीरान्त.सचरण विहाय मोक्षार्थगमन परमा गतिरिति तत्रैव ( रामानुज २।४।४ ) स्पष्टम् । * रग

तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥

(१) तामीदृशीं तदवस्थां योगमिति मन्यन्ते वियोगमेव सन्तम् । सर्वानर्थसयोगवियोगलक्षणा हीयमवस्था योगिनः । एतस्या ह्यवस्थायामविद्याध्यारोपणवर्जितस्वरूपप्रतिष्ठ आत्मा । स्थिरामिन्द्रियधारणा स्थिरामचलामिन्द्रियधारणा बाह्यान्तःकरणाना धारणमित्यर्थ. । अप्रमत्तः प्रमादवर्जित समाधान प्रति नित्य यत्नवास्तदा तस्मिन्काले, यदैव प्रवृत्तयोगो भवतीति सामर्थ्यादवगम्यते । न हि बुद्ध्यादिचेष्टाभावे प्रमादसभवोऽस्ति । तस्मात्प्रागेव बुद्ध्यादिचेष्टोपरमादप्रमादो विधीयते । अथवा यदैवेन्द्रियाणा स्थिरा धारणा तदानीमेव निरङ्कुशमप्रमत्तत्वमित्यतोऽभिधीयतेऽप्रमत्तस्तदा भवतीति । कुतः । योगो हि यस्मात्प्रभवाप्ययावुपजनापायधर्मक इत्यर्थः, अतोऽपायपरिहारायाप्रमादः कर्तव्य इत्यभिप्रायः । शकर

(२) यद्वा, इष्टप्रभवाऽनिष्टाप्ययलक्षणसर्वपुरुषार्थसाधनत्वाद्योगस्य तत्राऽप्रमत्ततया भवितव्यमित्यर्थ. । † रग

(३) प्रभावाप्ययौ प्रति हि योग. । भगवतः सकाशात्प्रभवाप्ययौ । . मध्व.

* शेष शकरेण गतार्थम् । तत्रैव व्यासार्यव्याख्याते 'सप्तगते' इत्यधिकरणे एव ।

† शेष शकरेण गतार्थम् ।

(१) काउ. ६।११, ब्रशकर २।१।३, विज्ञान ४।१।२, बलदेव २।१।३

आत्मज्ञानतल्लक्षणनिरूपणम्

[1]नैव वाचा न मनसा प्राप्तु शक्यो न चक्षुषा ।
अस्तीति ब्रुवतोऽन्यत्र कथ तदुपलभ्यते ॥

(१) बुद्ध्यादिचेष्टाविषय चेद्ब्रह्म इद तदिति विशेषतो गृह्येत, बुद्ध्याद्युपरमे च ग्रहणकारणाभावादनुपलभ्यमान नास्त्येव ब्रह्म । यद्धि करणगोचर तदस्तीति प्रसिद्ध लोके, विपरीत चासदित्यतश्चानर्थको योगोऽनुपलभ्यमानत्वाद्वा नास्तीत्युपलब्धव्य ब्रह्मेत्येव प्राप्ते इदमुच्यते । सत्य, नैव वाचा न मनसा न चक्षुषा नान्यैरपीन्द्रियै प्राप्तु शक्यत इत्यर्थ· । तथापि सर्वविशेषरहितोऽपि जगतो मूलमित्यवगतत्वादस्त्येव, कार्यप्रविलापनस्यास्तित्वनिष्ठत्वात् । तथाहि—इद कार्य सूक्ष्मतारतम्यपारम्पर्येणानुगम्यमान सद्बुद्धिनिष्ठामेवावगमयति । यदाऽपि विषयप्रविलापनेन प्रविलाप्यमाना बुद्धिस्तदाऽपि सा सत्प्रत्ययगर्भैव विलीयते, बुद्धिर्हि न· प्रमाण सदसतोर्याथात्म्यावगमे । मूल चेज्जगतो न स्यादसदन्वितमेवेद कार्यमसदित्येव गृह्येत, न त्वेतदस्ति, सत्सदित्येव तु गृह्यते, यथा मृदादिकार्ये घटादि मृदाद्यन्वितम् । तस्माज्जगतो मूलमात्माऽस्तीत्येवोपलब्धव्यः । कस्मात्, अस्तीति ब्रुवतोऽस्तित्ववादिन आगमार्थानुसारिणः श्रद्दधानादन्यत्र नास्तिकवादिनि नास्ति जगतो मूलमात्मा, निरन्वयमेवेद कार्यमभावान्त प्रविलीयते, इति मन्यमाने विपरीतदर्शिनि कथ तद्ब्रह्म तत्त्वत उपलभ्यते, न कथचनोपलभ्यत इत्यर्थः । शकर.

(२) नैव वाचेति । स्पष्टोऽर्थ. । अस्तीति ब्रुवतः शब्दादन्यत्रेत्यर्थ. । तस्योपनिषदेकगम्यत्वादित्यर्थः । रग

[2]अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः ।
अस्तीत्येवोपलब्धस्य तत्त्वभाव प्रसीदति ॥

(१) तस्मादपोह्यासद्वादिपक्षमासुर अस्तीत्येवाऽऽत्मोपलब्धव्यः सत्कार्यो बुद्ध्याद्युपाधिः । यदा तु तद्रहितोऽविक्रिय आत्मा, कार्यं च कारणव्यतिरेकेण नास्ति 'वाचारम्भण विकारो नामधेय मृत्तिकेत्येव सत्यम्' इति

(१) काउ ६।१२.

(२) काउ ६।१३, ब्रशकर ३।२।२१, २२.

श्रुतेस्तदा तस्य निरुपाधिकस्यालिङ्गस्य सदसदादिप्रत्ययविषयत्ववर्जितस्याऽऽत्मनस्तत्त्वभावो भवति । तेन च रूपेणाऽऽत्मोपलब्धव्य इत्यनुवर्तते । तत्राप्युभयो. सोपाधिकनिरुपाधिकयोरस्तित्वतत्त्वभावयो । निर्धारणार्था षष्ठी । पूर्वमस्तीत्येवोपलब्धस्याऽऽत्मन. सत्कार्योपाधिकृतास्तित्वप्रत्ययेनोपलब्धस्येत्यर्थ. । पश्चात्प्रत्यस्तमितसर्वोपाधिरूप आत्मनस्तत्त्वभावो विदिताविदिताभ्यामन्योऽद्वयस्वभाव. 'नेति नेति' इति 'अस्थूलमनण्वह्रस्वम्' 'अदृश्येऽनात्म्येऽनिलयने' इत्यादिश्रुतिनिर्दिष्ट प्रसीदत्यभिमुखी भवति । आत्मप्रकाशनाय पूर्वमस्तीत्युपलब्धवत इत्येतत् । शकर

(२) तत्त्व भावयतीति तत्त्वभावोऽन्त.करण, तेन च परमात्माऽस्तीत्येवोपलब्धव्यः । वेदान्तवाक्यैरस्तीत्युपलब्धस्य मनसाऽप्यस्तीत्येव मनननिदिध्यासने कर्तव्ये इत्यर्थ· । उभयोर्हेत्वोरुभाभ्यां शब्दमनोरूपाभ्याम स्तीत्येवोपलब्धस्य शातवतः, भुक्ता ब्राह्मणा इतिवदय निर्देश. । तत्त्वभावः प्रसीदति मन प्रसन्न भवति, शान्तरागादिदोष भवतीत्यर्थः । रग

(३) 'अधिकः सतोऽय भगवान् सर्वस्मादपि केशव. । अस्तीतिनामकस्तस्माज्ज्ञातव्य स तथैव च । * अनाधिक्य जानता तु कथ स उपलभ्यते । प्रकृतेः पुरुषाणां च तत्त्व भावयति स्फुटम् । तत्त्वभावस्ततो विष्णुस्तत्प्रसादात्तु तस्य हि । आधिक्य ज्ञायते सत्त्· प्रसादश्च तथाविद । अनादिकालादाधिक्य सर्वस्माज्जानतो हरे । पुनः पुनर्वृद्धिमेति तज्ज्ञान हि भवे भवे । येषामाधिक्यविज्ञान नैव पूर्वे हरेर्भवेत् । तेषां पश्चाच्च नैव स्यादभिभूत तु तत्पुन· । व्यञ्जकाद्व्यक्तिमभ्येति तस्मात्तज्ज्ञानमुत्तमम् ॥ ' इति च । मध्व

**यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिता. ।**
**अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥**

(१) एव परमार्थदर्शिनो यदा यस्मिन्काले सर्वे कामाः कामयितव्यस्यान्यस्याभावात्प्रमुच्यन्ते विशीर्यन्ते, येऽस्य प्राक्प्रतिबोधाद्विदुषो हृदि बुद्धौ श्रिता आश्रिता. । बुद्धिर्हि कामानामाश्रयो नाऽऽत्मा । 'काम. सकल्प.' इत्यादिश्रुत्यन्तराच्च । अथ तदा मर्त्य. प्राक्प्रबोधादासीत्स प्रबोधोत्तरकालमविद्याकामकर्मलक्षणस्य मृत्योर्विनाशादमृतो भवति । गमनप्रयोजकस्य मृत्योर्विनाशाद्गमनानुपपत्तेरत्र इहैव प्रदीपनिर्वाणवत्सर्वबन्धनोपशमाद्ब्रह्म समश्नुते ब्रह्मैव भवतीत्यर्थः । शकर.

(२) कामा विषयविषयकमनोरथा हृद्गता यदा शान्ता भवन्ति, तदाऽनन्तरमेव अयमुपासकोऽमृतो भवति । विश्लिष्टाश्लिष्टपूर्वोत्तरदुरितभरो भवतीत्यर्थ. । अत्र ब्रह्मेति । अत्रैव ब्रह्मोपासनवेलाया ब्रह्मानुभवतीत्यर्थ । रग.

(३) 'समाना चा सृत्युपक्रमादमृतत्व चानुपोष्य' — विदुषोऽप्या सृत्युपक्रमादुत्क्रान्ति समाना । आ सृत्युपक्रमात् आ गत्युपक्रमात् नाडीप्रवेशात्प्रागित्यर्थः । विदुषोऽपि हि नाडीविशेषेणोत्क्रम्य गति· श्रूयते— 'तयोर्ध्वमायन्नमृतत्वमेति' (काउ ६।१६) इति । एव नाडीविशेषेण गतिश्रवणाद्विदुषोऽप्युत्क्रान्तिरवर्जनीया । सा च नाडीप्रवेशात्प्राग्विशेषाश्रवणात्समाना । तत्प्रवेशदशाया च विशेषः श्रूयते — 'तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्य.' (बृउ ४।४।२) इति । 'शत चैका च हृदयस्य' (काउ ६।१६, छाउ ८।६।६) इत्यनया श्रुत्यैकार्थ्यान्मूर्ध्नो निष्क्रमण विद्वद्विषयमितरदविद्वद्विषयम् ।

यदुक्त विदुषोऽत्रैवामृतत्व श्राव्यत इति तत्रोच्यते 'अमृतत्व चानुपोष्य' इति । च शब्दोऽवधारणे । अनुपोष्य शरीरेन्द्रियादिसबन्धमदग्ध्वैव यदमृतत्वमुत्तरपूर्वाघयोरश्लेषविनाशरूप प्राप्यते, तदुच्यते 'यदा सर्वे प्रमुच्यन्ते' इत्यादिकया श्रुत्येत्यर्थः । 'अत्र ब्रह्म समश्नुते'

---

* 'अनाधिक्यम्' इत्यादिश्लोकार्धेन पूर्वमन्त्रोत्तरार्धं व्याख्यातम् ।

(१) **काउ** ६।१४, **रामानुज** ४।२।७, १०, **निंबाक** ४।२।७, १० श्रिता ( स्थिता ), **मध्व** निंबार्कवत्, **श्रीकठ** ४।२।८, १०, **श्रीकर** १।३।२, ४०, ३।३।१८, ३।४।५१, ४।२।७, १०, १४, १९, ४।४।९, १४, २१, २२ येऽस्य ( यस्य ) श्रिता ( स्थिता ), **वल्लभ.** ३।४।३९, ४१, **विज्ञान** ३।४।५२ निंबार्कवत्

इति चोपासनवेलायां यो ब्रह्मानुभवस्तद्विषयमित्य भिप्राय । * रामानुज ४।२।७

( ४ ) 'अन्तःकरणकामाना त्यागो व्यक्तिश्चिदात्म नाम् । कामाना तु तदा मुक्तौ मूर्ति नैवाभियास्यति ॥' मध्व

( ५ ) 'यदा सर्वे प्रमुच्यन्ते' इति श्रुत्या अमृतस्य मुक्तस्य ब्रह्मस्वरूपभोग उच्यते । स च 'यमेवैष वृणुते' इति श्रुतेर्भगवदीयत्वसाध्य एव ।

वल्लभ ३।४।३९

**यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थय ।**
**अथ मर्त्योऽमृतो भवत्येतावद्ध्यनुशासनम् ॥**

( १ ) कदा पुन कामाना मूलतो विनाश इत्युच्यते — यदा सर्वे प्रभिद्यन्ते भेदमुपयान्ति विनश्यन्ति हृदयस्य बुद्धेरिह जीवत एव ग्रन्थयो ग्रन्थिवद्दृढबन्धनरूपा अविद्याप्रत्यया इत्यर्थ, अहमिद शरीर, ममेद धन, सुखी दु खी चाह, इत्येवमादिलक्षणा । तद्विपरीतब्रह्मात्मप्रत्ययोपजननाद्ब्रह्मैवाहमस्म्यससारीति विनष्टेष्वविद्याग्रन्थिषु तन्निमित्ता कामा मूलतो विनश्यन्ति । अथ मर्त्योऽमृतो भवति । एतावद्धि एतावदेवैतावन्मात्र, न अधिकमस्तीत्याशङ्का कर्तव्या । अनुशासनमनुशिष्टिरुपदेश· सर्ववेदान्तानामिति वाक्यशेषः ।

शकर.

( २ ) उक्तमेवार्थं सादरेणाभ्यसन्नुपदेष्टव्याश एतावानेवेत्युपसहरति — ग्रन्थयो ग्रन्थिवद्दुर्मोचा राग द्वेषादयो यदैव प्रमुच्यन्त इत्यर्थः । एतावदनुशासनमनुशासनीयमुपासकस्य, कर्तव्यत्वेनोपदेष्टव्यमेतावदेव । वक्ष्य माणमूर्धन्यनाडीनिष्क्रमणार्चिरादिगमनादिक न साधकक्कत्य किंतूपासनप्रीतभगवत्कृत्यमिति भावः ।

रग

( ३ ) 'मिथ्याज्ञानग्रन्थिभिस्तु नितरा मुच्यते यदा । तदाऽमृतत्वमेवैति तदर्थं चानुशासनम् ॥'

मध्व.

---

* निंबार्क श्रीकर रामानुजवत् ।

(१) काउ ६।१५, रग वद्धयनु ( वदनु ), मध्व. रंगवत् ।

अन्तकाले अमृतत्वादिफलक नाडीनिष्क्रमणम्

*** शत चैका च हृदयस्य नाड्यस्तासा मूर्धानमभिनि सृतैका ।**
**तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥**

(१) निरस्ताशेषविशेषव्यापिब्रह्मात्मप्रतिपत्त्या प्रभिन्नसमस्ताविद्यादिग्रन्थेर्जीवत एव ब्रह्मभूतस्य विदुषो न गतिर्विद्यत इत्युक्त 'अत्र ब्रह्म समश्नुते' इत्युक्तत्वात्, 'न तस्य प्राणा उत्क्रामन्ति, ब्रह्मैव सन् ब्रह्माप्येति' इति श्रुत्यन्तराच्च । ये पुनर्मन्दब्रह्मविदो विद्यान्तरशीलिनश्च ब्रह्मलोकभाज, ये च तद्विपरीता ससारभाज, तेषामेव गतिविशेष उच्यते प्रकृतोत्कृष्टब्रह्मविद्याफलस्तुतये । किंचान्यत्, अग्निविद्या पृष्टा प्रत्युक्ता च । तस्याश्च फलप्राप्तिप्रकारो वक्तव्य इति मन्त्रारम्भ. । तत्र शत च शतसख्याका. एका च सुषुम्ना नाम पुरुषस्य हृदयाद्विनि.सृता नाड्य. शिरा., तासा मध्ये मूर्धान भित्त्वाऽभिनि सृता निर्गता सुषुम्ना नाम । तयाऽन्तकाले हृदय आत्मान वशीकृत्य योजयेत् । तया नाड्या ऊर्ध्वमुपरि आयन्गच्छन्नादित्यद्वारेणा मृतत्वममरणधर्मत्वमापेक्षिक 'आभूतसप्लव स्थानममृतत्व हि भाष्यते' इति स्मृतेः । ब्रह्मणा वा सह कालान्तरेण मुख्यममृतत्वमेति भुक्त्वा भोगाननुपमान् ब्रह्मलोकगतान् । विष्वङ् नानाविधगतयोऽन्या नाड्य उत्क्रमणे निमित्त भवन्ति, ससारप्रतिपत्त्यर्था एव भवन्तीत्यर्थः ।

शंकर.

( २ ) 'विमुक्तश्च विमुच्यते' इति पूर्वमुक्तम् । द्वितीयां परममुक्तिमाह — शत चैकेति । हृदयस्य

---

* छाउ ८।६।६ ( पृ ९६८ ) द्रष्टव्यम् ।

(१) काउ ६।१६, ब्रशकर ४।२।१७, ४।३।१०, १३, १४, ४।४।२२, भास्कर ४।२।७, १६, ४।३।९, १२, १३, ४।४।२२, रामानुज ४।२।७, १६, ४।३।९, निंबार्क ४।२।७, ४।२।१६, मध्व व्वङ्ङन्या ( व्वगन्या ), ब्रमध्व ४।२।१७, श्रीकंठ ४।२।७, १६, श्रीकर. ४।२।७, १६, ४।३।१०, वल्लभ १।३।१४, ४।२।१७, ४।३।१, ४।४।२२, विज्ञान. ४।२।१७, ४।३।१३, १६, बलदेव ४।२।७, १७, १८.

प्रधाननाड्यः शत चैका च सन्ति । तासा मध्ये एका सुषुम्नाख्या ब्रह्मनाडी मूर्धानमभिनि.सृता । तया नाड्योर्ध्वं ब्रह्मलोक गच्छन् देशविशेषविशिष्टब्रह्मप्राप्ति पूर्वकस्वस्वरूपाविर्भावलक्षणां मुक्तिं प्राप्नोति । अन्यास्तु नाड्यो विष्वगुत्क्रमणे नानाविधससारमार्गोत्क्रमणायो पयुज्यन्ते । विष्वग्वितता नाड्योऽन्योत्क्रमण उपयुज्यन्त इति व्यासार्यैर्व्याख्यातम् ।

रग

अन्तकाले अमृतस्य अन्तरात्मन शरीरात् पृथक्करणविधि

**अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सनिविष्टः ।**
**तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण ।**
**त विद्याच्छुक्रममृत त विद्याच्छुक्रममृतमिति ॥**

( १ ) इदानीं सर्ववल्ल्यर्थोपसहारार्थमाह —— अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनाना सबन्धिनि हृदये सनिविष्टो यथाव्याख्यातः, त स्वादात्मीयाच्छरीरात्प्रवृहेदुद्यच्छेन्निष्कर्षेत्पृथक्कुर्यादित्यर्थः । किमिवेत्यु च्यते —— मुञ्जादिवेषीकामन्त स्था धैर्येणाप्रमादेन । त शरीरान्निष्कृष्ट चिन्मात्र विद्याद्विजानीयाच्छुक्रममृत यथोक्त ब्रह्मेति । द्विर्वचनमुपनिषत्परिसमाप्त्यर्थमितिश ब्दश्च ।

शकर.

( २ ) अङ्गुष्ठमात्र इति । स्पष्टोऽर्थः । यथा देव दत्तः स्वाच्छरीराद्विलक्षण इत्युक्ते यथा स्वशब्द सम भिव्याहृतदेवदत्तसबन्धिपरामर्शी, एव पूर्वनिर्दिष्टान्तरा त्मसबन्धिपरामर्शी स्वशब्दः । ततश्चायमर्थ —— त जनानामन्तरात्मान तच्छरीरभूताज्जनशब्दिताच्चेतनात्प्रवृ हेद्विविच्य जानीयात् । ' जुष्ट यदा पश्यत्यन्यमीशम् ' ( श्वेत. ४।७ ) इति श्रुत्युक्तरीत्या धारकत्वनियन्तृत्वशेषत्वादिना विलक्षण जानीयादित्यर्थः ।

मुञ्जात्तृणविशेषादिषीकां तन्मध्यवर्तिस्थूलतृणविशेष मिव धैर्येण ज्ञानकौशलेनेति पूर्वेणान्वयः । त विद्या-दिति । उक्तोऽर्थ. । द्विर्वचन उपदेशसमाप्त्यर्थम् ।

रग.

( ३ ) ' शरीरभूतो विष्णोस्तु जीवस्तद्वशगो यत । अधिष्ठितश्च तेनैव विजानीयात्पृथक्तत. । स्वाख्याच्छरीराज्जीवात्तु प्रवृहेद्विष्णुमव्ययम् ॥ ' इति च । 'यस्यात्मा शरीर य आत्मानमन्तरो यमयति ' इति च । जनाना हृदय इत्युक्तत्वाच्च जीवात्पृथग्घरिरिति सिद्धम् । ' देहा ङ्गुष्ठमितो देहे जीवाङ्गुष्ठमितो हृदि । जीवस्य स तु विज्ञेयो जीवाद्भेदेन मुक्तये ॥ ' इति च । ससारिशरीरेणा भेदो वादिना केनापि नाङ्गीकृत. । न च लोकसिद्ध. । जनानामिति भेदात् । जीवोऽङ्गुष्ठमात्र. । अतो विष्णोर्जीवाद्भेद उक्त । अतः सर्वोत्तमो विष्णुरिति सिद्धम् ।

मध्व

मृत्योप्रोक्तविद्यायोगविध्यो उपसहार

**मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् ।**
**ब्रह्मप्राप्तो विरजोऽभूद्विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव ॥**

( १ ) विद्यास्तुत्यर्थोऽयमाख्यायिकार्थोपसहारोऽधुनोच्यते —— मृत्युप्रोक्तां यथोक्तामेता ब्रह्मविद्या योगविधिं च कृत्स्न समस्त सोपकरण सफलमित्येतत् । नचिकेतोऽथ वरप्रदानान्मृत्योर्लब्ध्वा प्राप्येत्यर्थ. । किं, ब्रह्मप्राप्तोऽभून्मुक्तोऽभवदित्यर्थः । कथ, विद्याप्राप्त्या विरजो विगतधर्माधर्मो विमृत्युर्विगतकामाविद्यश्च सन् पूर्वमित्यर्थः । न केवल नचिकेता एव, अन्योऽपि नचिकेतोवदात्मविदध्यात्ममेव निरुपचरित प्रत्यक्स्वरूप प्राप्यतत्त्वमेवेत्यभिप्रायः । नान्यद्रूपमप्रत्यग्रूपम् । तदेवमध्यात्ममेवमुक्तप्रकारेण वेद विजानातीत्येववित्सोऽपि विरजाः सन् ब्रह्मप्राप्त्या विमृत्युर्भवतीति वाक्य शेषः । शकर.

( २ ) ब्रह्म प्राप्याऽऽविर्भूतगुणाष्टकोऽभूदित्यर्थ ।

* रग.

(१) काठ ६।१७, ब्रशांकर १।३।२५, रामानुज १।३।२३, ४०, श्रीकर १।३।२५, बलदेव. १।३।३९.

* शेष शकरवत् ।

(१) काठ. ६।१८, ब्रशांकर २।१।३, रग निंबार्क. ३।४।५०, बलदेव २।१।३, ३।४।५१

शिष्यचार्ययो प्रसादकृता शान्ति

* सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै ।।

ॐ शान्ति शान्तिः शान्ति ।।

( १ ) शिष्याचार्ययोः प्रमादकृतान्यायेन विद्याग्रहणप्रतिपादननिमित्तदोषप्रशमनार्थेय शान्तिरुच्यते— सह नौ आवां अवतु पालयतु विद्यास्वरूपप्रकाशनेन । क.,स एव परमेश्वर उपनिषत्प्रकाशितः । किंच सह नौ भुनक्तु तत्फलप्रकाशनेन नौ पालयतु । सहैव आवां विद्याकृत वीर्यं सामर्थ्यं करवावहै निष्पादयावहै । किंच तेजस्विनौ तेजस्विनोरावयोर्यदधीत तत्स्वधीतमस्तु । अथवा तेजस्वि नौ आवाभ्या यदधीतं तदतीव तेजस्वि वीर्यवदस्त्वित्यर्थ. । मा विद्विषावहै शिष्याचार्यावन्योन्य प्रमादकृतान्यायाध्ययनाध्यापनदोषनिमित्त द्वेष मा करवावहै इत्यर्थ. । शान्ति शान्ति. शान्तिरिति त्रिर्वचन सर्वदोषोपशमनार्थमित्योमिति ।

शकर

( २ ) स विद्याप्रकाशित परमात्मा । हशब्द प्रसिद्धौ । नौ शिष्याचार्याववतु स्वस्वरूपप्रकाशेन रक्षतु । विद्याप्रचयद्वारा आवा सहैव परिपालयतु । यद्वा विश्लेषमन्तरेणाऽऽवा सहिताविव यथा स्याव तथा पालयत्वित्यर्थः । सनियमविद्याप्रदानेन विद्यायाः सामर्थ्यं निष्पादयावहै । नियमाभावे विद्या निर्वीर्या भवतीति भावः । ‡ रग.

* तेजस्व्यस्मद् शब्द । तेजस्विनौ च तौ आवा च तेजस्व्यावा, तयो तेजस्विनौ ।

(१) काठ ६।१९, रग सह नाववतु ( स ह नाव वतु ), रामानुज. ३।३।२५ रगवत्.

‡ शेष शकरवत् ।

## काठकोपनिषत्समाप्ता ।

# मुण्डकोपनिषत्

ब्रह्मविद्यावश

* ब्रह्मा[1] देवाना प्रथम· सबभूव विश्वस्य कर्ता भुवनस्य गोप्ता ।
स ब्रह्मविद्या सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥

(१) ब्रह्मा देवानामित्याद्याथर्वणोपनिषत् । अस्याश्च विद्यासप्रदायकर्तृपारम्पर्यलक्षणसबन्धमादावेवाह स्वयमेव स्तुत्यर्थम् । एव हि महद्भि· परमपुरुषार्थसाधनत्वेन गुरुणा आयासेन लब्धा विद्येति श्रोतृबुद्धिप्ररोचनाय विद्या महीकरोति । स्तुत्या प्ररोचिताया हि विद्याया सादरा: प्रवर्तेरन्निति । प्रयोजनेन तु विद्याया: साध्यसाधनलक्षणसबन्धमुत्तरत्र वक्ष्यति 'भिद्यते हृदयग्रन्थि· ' इत्यादिना । अत्र चापरशब्दवाच्यायामृग्वेदादिलक्षणाया विधिप्रतिषेधमात्रपराया विद्याया ससारकारणाविद्यादिदोषनिवर्तकत्व नास्तीति स्वयमेवोक्त्वा परापरविद्याभेदकरणपूर्वक 'अविद्यायामन्तरे वर्तमाना ' इत्यादिना, तथा परप्राप्तिसाधन सर्वसाधनसाध्यविषयवैराग्यपूर्वक गुरुप्रसादलभ्या ब्रह्मविद्यामाह 'परीक्ष्य लोकान् ' इत्यादिना । प्रयोजन चासकृद्ब्रवीति ' ब्रह्म वेद ब्रह्मैव भवति ' इति ' परामृता: परिमुच्यन्ति सर्वे ' इति च । ज्ञानमात्रे यद्यपि सर्वाश्रमिणामधिकारस्तथापि सन्यासनिष्ठैव ब्रह्मविद्या मोक्षसाधन न कर्मसहितेति ' भैक्ष्यचर्यां चरन्त. ' ' सन्यासयोगात् ' इति च ब्रुवन् दर्शयति । विद्याकर्मविरोधाच्च । न हि ब्रह्मात्मैकत्वदर्शनेन सह कर्म स्वप्नेऽपि सपादयितु शक्यम् । विद्याया: कालविशेषाभावादनियतनिमित्तत्वात्कालसकोचानुपपत्ति । यत्तु गृहस्थेषु ब्रह्मविद्यासप्रदायकर्तृत्वादिलिङ्ग न तत्स्थितन्याय बाधितुमुत्सहते । न हि विधिशतेनापि तम:प्रकाशयोरेकत्वसद्भाव. शक्यते कर्तुं, किमुत लिङ्गै· केवलैरिति । एवमुक्तसबन्धप्रयोजनाया उपनिषदोऽल्पाक्षर ग्रन्थविवरणमारभ्यते । य इमां ब्रह्मविद्यामुपयन्त्यात्मभावेन श्रद्धाभक्तिपुर·सरा: सन्तस्तेषां गर्भजन्मजरारोगाद्यनर्थपूग निशातयति, पर वा ब्रह्म गमयति, अविद्यादिससारकारण चात्यन्तमवसादयति विनाशयतीत्युपनिषत् । उपनिपूर्वस्य सदेरेवमर्थस्मरणात् । ब्रह्मा परिवृढो महान् धर्मज्ञानवैराग्यैश्वर्यै सर्वानन्यानतिशेते इति । देवाना द्योतनवतामिन्द्रादीना प्रथमो गुणै: प्रधान: सन् प्रथमोऽग्रे वा सबभूव अभिव्यक्त: सम्यक् स्वातन्त्र्येणेत्यभिप्राय. । न तथा यथा धर्माधर्मवशात्ससारिणोऽन्ये जायन्ते । ' योऽसावतीन्द्रियोऽग्राह्य· ' इत्यादिस्मृते. । विश्वस्य सर्वस्य जगत· कर्तोत्पादयिता, भुवनस्योत्पन्नस्य गोप्ता पालयितेति विशेषण ब्रह्मणो विद्यास्तुतये । स एव प्रख्यातमहत्त्वो ब्रह्मा ब्रह्मविद्या ब्रह्मण: परमात्मनो विद्या ब्रह्मविद्या ' येनाक्षर पुरुष वेद सत्य ' इति विशेषणात् । परमात्मविषया हि सा । ब्रह्मणा वाऽग्रजेनोक्तेति ब्रह्मविद्या । ता सर्वविद्याप्रतिष्ठां सर्वविद्याभिव्यक्तिहेतुत्वात्सर्वविद्याश्रयामित्यर्थ: । सर्वविद्यावेद्य वा वस्त्वनयैव विज्ञायते इति । ' येनाश्रुत श्रुत भवति अमत मतमविज्ञात विज्ञातम् ' इति श्रुते. । सर्वविद्याप्रतिष्ठामिति च स्तौति । विद्यामथर्वाय ज्येष्ठपुत्राय प्राह । ज्येष्ठश्चासौ पुत्रश्चानेकेषु

* मुण्डकोपनिषन्मध्वभाष्य न लब्धम् ।

(१) मुड १।१।१, शकर १।२।२१, भास्कर १।२।२१ ज्येष्ठ ( ज्येष्ठाय ), रग प्रतिष्ठा ( वरिष्ठा ), रामानुज १।२।२३, श्रीकर १।२।२१, १।३।६, ३।३।३८, वल्लभ १।२।२२, १।३।६, विज्ञान ३।३।४२

ब्रह्मण. सृष्टिप्रकारेष्वन्यतमस्य सृष्टिप्रकारस्य प्रमुखे पूर्वमथर्वा सृष्ट इति ज्येष्ठस्तस्मै ज्येष्ठपुत्राय प्राह उक्तवान् । शकर

( २ ) ब्रह्मा देवानामिति । चतुर्मुख इन्द्रादीना देवानामग्रे उत्पन्न इत्यर्थ ।

* रग.

**अथर्वणे यां प्रवदेत ब्रह्माथर्वा ता पुरोवाचाङ्गिरे ब्रह्मविद्याम् ।**
**स भारद्वाजाय सत्यवहाय प्राह भारद्वाजोऽङ्गिरसे परावराम् ॥**

यामेतामथर्वणे प्रवदेत अवदत् ब्रह्मविद्या ब्रह्मा, तामेव ब्रह्मणः प्राप्तामथर्वा पुरा पूर्वमुवाचोक्तवानङ्गिरे अङ्गिर्नाम्ने ब्रह्मविद्याम् । स चाङ्गीर्भारद्वाजाय भरद्वाजगोत्राय सत्यवहाय सत्यवहनाम्ने प्राह प्रोक्तवान् । भारद्वाजोऽङ्गिरसे स्वशिष्याय पुत्राय वा परावरां परस्मात्परस्मादवरेण प्राप्तेति परावरा परावरसर्वविद्याविषय व्याप्तेर्वा, ता परावरामङ्गिरसे प्राहेत्यनुषङ्ग ।

¶ शकर

शौनकप्रश्न — सर्वज्ञानस्य कारण कस्य ज्ञानमिति

**[२]शौनको ह वै महाशालोऽङ्गिरस विधिवदुपसन्न पप्रच्छ ।**
**कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥**

( १ ) शौनक· शुनकस्यापत्य महाशालो महागृहस्थोऽङ्गिरस भारद्वाजशिष्यमाचार्ये विधिवद्यथाशास्त्रमित्येतत्, उपसन्न उपगतः सन् पप्रच्छ पृष्टवान् । शौनकाङ्गिरसो. सबन्धादर्वाग्विधिवद्विशेषणाभावादुपसदनविधे पूर्वेषामनियम इति गम्यते । मर्यादाकरणार्थे मध्यदीपिकान्यायार्थे वा विशेषणम् । अस्मदादिष्वप्युपसदनविधेरिष्टत्वात् । किमित्याह कस्मिन्नु भगवो विज्ञाते । नु इति वितर्के । भगवो हे भगवन् सर्वे यदिद विज्ञेय, विज्ञात विशेषेण ज्ञातमवगत भवतीत्येकस्मिन् ज्ञाते सर्वविद्भवतीति शिष्टप्रवाद श्रुतवान् शौनकः तद्विशेष विज्ञातुकाम सन् कस्मिन्निति वितर्कयन् पप्रच्छ । अथवा लोकसामान्यदृष्ट्या ज्ञात्वैव पप्रच्छ । सन्ति लोके सुवर्णादिशकलभेदा. सुवर्णत्वाद्येकत्वविज्ञानेन विज्ञायमाना लौकिकै· । तथा किं न्वस्ति सर्वस्य जगद्भेदस्यैक कारण, यदेकस्मिन् विज्ञाते सर्वे विज्ञात भवतीति । ननु अविदिते हि कस्मिन्निति प्रश्नोऽनुपपन्न । किमस्ति तदिति तदा प्रश्नो युक्त । सिद्धे ह्यस्तित्वे कस्मिन्निति स्यात् । यथा कस्मिन्निधेयमिति । न । अक्षरबाहुल्यात् आयासभीरुत्वात् प्रश्न· सभवत्येव । किं न्वस्ति तत्, यस्मिन्नेकस्मिन् विज्ञाते सर्ववित्स्यादिति ।

शकर.

( २ ) तस्याः प्रतिज्ञाया एव अहानि· अनुपरोधः स्यात्, यद्यव्यतिरेकः कृत्स्नस्य वस्तुजातस्य विज्ञेयाद्ब्रह्मणः स्यात् । व्यतिरेके हि सति एकविज्ञानेन सर्वे विज्ञायते इतीय प्रतिज्ञा हीयेत । स चाव्यतिरेक एवमुपपद्यते यदि कृत्स्नं वस्तुजातमेकस्मात् ब्रह्मण उत्पद्येत ।

ब्रशकर. २।३।६

( ३ ) महागृहस्थ· शुनकसुतः समित्पाणित्वादिशास्त्रीयनियमानतिक्रमेण उपगत. सन् पृष्टवान् । हे भगवः ‘ उत्पत्तिं प्रलय चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥ ’ इतिलक्षण, यथा मृत्पिण्डे विज्ञाते सर्वे मृन्मय विज्ञात भवति, एव कस्मिंश्चित् वस्तुविशेषे ज्ञाते सर्वे कार्यजात विज्ञात भवतीति सामान्यतो भवादृशां वचनमश्रौष, तादृग्वस्तु किमिति प्रश्नार्थः । सर्वनिमित्तोपादानभूत वस्तु किमितीति यावत् । ननु सर्वमिद इति शब्देन स्थूलचिदचिच्छरीरविशिष्ट ब्रह्मोच्यते उत विशेषणमात्रम् । नाद्य·, प्रश्नदशायां शौनकस्य अब्रह्मवित्त्वेन अब्रह्मविद इदबुद्धिशब्द-

* शेष पदार्थमात्र शकरवत् । अस्मद्गृहीत एव पाठो रगभाष्याभिप्रेत इति भाष्याक्षराणि प्रतिभासयन्ति ।

¶ रग शकरवत् ।

(१) मुउ १।१।२, रग सत्यवहाय ( सत्यवाहाय ).

(२) मुउ १।१।३, ब्रशकर १।२।२१, १।३।६, १।४।२३, २।३।६, २।४।२, भास्कर १।३।६, २।४।२, रामानुज १।२।२३, ब्रमध्व १।४।१९, श्रीकठ १।२।२३, श्रीकर १।२।२१, १।३।६, १।४।२३, २।१।३, २।४।२, ३।२।२९, ३।४।५१, वल्लभ १।२।२१, बलदेव १।३।६

योर्ब्रह्मपर्यन्तत्वाभावात् । 'तेनेद पूर्णं पुरुषेण सर्वम्' इत्युत्तरवाक्ये इद सर्वमित्यस्य विशेषणमात्रे पर्यवसायित्वेन ब्रह्मपर्यन्तत्वादर्शनेन प्रश्नवाक्यगतस्यापि इद सर्वमिति शब्दस्य ब्रह्मपर्यन्तत्वाभावात् । न द्वितीय., विशेषणभूतस्थूलचिदचितो अक्षरब्रह्मभिन्नयोः वक्ष्यमाणाक्षरब्रह्मोपादानकत्वाभावात् इति चेत्, उच्यते । इद सर्वमित्यनेन विशेषणमेव निर्दिश्यते न विशेष्यम् । अथापि विशेषणस्यापि ब्रह्मोपादेयत्वमस्ति । न हि अभिन्नयोरेव उपादानोपादेयभाव इति नियम । भाविस्थूलावस्थावत. पूर्वभाविसूक्ष्मावस्थायोगि ह्युपादानम् । अवस्थावत्त्व च चिदचिदीश्वराणा त्रयाणामप्यस्त्येव । इयास्तु विशेष. — अद्वारकावस्थायोगित्वमचेतनस्य, जीवस्य तु धर्मभूतज्ञानद्वारा अचेतनशरीरद्वारा च कर्मकृतसकोचविकासरूपावस्थाश्रयत्वम् । परमात्मनस्तु चेतनाचेतनद्वारकमवस्थाश्रयत्व अद्वारकनियन्तृत्वावस्थाश्रयत्व च । ततश्च महत्त्वाहकारत्वादिलक्षणभाव्यवस्थायोगित्वस्य अचेतनपरमात्मसाधारण्येन परमात्मन इव चेतनप्रपञ्चस्यापि भाव्यवस्थाश्रयत्वेन अक्षर प्रत्युपादेयत्वमस्त्येव । ततश्च इद सर्वमिति विशेषणमात्रनिर्देशेऽपि तस्य वक्ष्यमाणमक्षरमुपादान भवत्येवेति 'कस्मिन्नु भगवो विज्ञाते सर्वमिद विज्ञात भवति' इति विशेषणमात्रे उपादानप्रश्न उपपद्यते । यद्वा, यथा 'को भवान्' इति सौवीरराजप्रश्नस्य प्रकृतिससृष्टात्मविषयत्वेऽपि वस्तुगत्या भवच्छब्द मुख्यार्थत्व परिशुद्धात्मस्वरूपस्यैवोचितमिति मत्वा तस्यैव भवच्छब्दमुख्यार्थत्व प्रदर्शयन्नादिभरत· 'यदा समस्तभूतेषु पुमानेको व्यवस्थित. । यद्यन्योऽस्ति पर कोऽपि' इत्यादि प्रत्यवोचत् । यथा वा अथर्वशिरसि रुद्र प्रति देवै. प्रयुक्तस्य 'को भवान्' इति प्रश्नस्य पुरोवर्तिरुद्रमात्रपरत्वेऽपि भवच्छब्दस्य परमात्मपर्यन्तत्वशिक्षणाय 'अहमेकः प्रथममासम्' इत्यादिप्रतिवचनप्रवृत्ति· । एव सर्वमिद विज्ञातमिति प्रश्नस्य विशेषणमात्रपरत्वेऽपि विशेष्यमात्रपरत्व, तत्र शिक्षणाय स्थूलचिदचिच्छरीरक ब्रह्म प्रति सूक्ष्मचिदचिच्छरीरक ब्रह्मैव उपादानमित्येतदर्थप्रतिपादकस्य प्रतिवचनसदर्भस्य प्रवृत्तौ दोषाभावादिति । प्रपञ्चित चेदमस्माभिः बृहदारण्यकप्रकाशिकायां इत्यलमतिचर्चया ।

रग.

पराविद्या अपरा विद्या इति विद्याविभाग

**तस्मै स होवाच । द्वे विद्ये वेदितव्य इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च ॥**[१]

( १ ) तस्मै शौनकायाङ्गिरा आह किलोवाच । किमित्युच्यते । द्वे विद्ये वेदितव्य इति एव ह स्म किल यत् ब्रह्मविदो वेदार्थाभिज्ञा परमार्थदर्शिनो वदन्ति । के ते इत्याह— परा च परमात्मविद्या, अपरा च धर्माधर्मसाधनतत्फलविषया । ननु कस्मिन् विदिते सर्वविद्भवतीति शौनकेन पृष्ट तस्मिन् वक्तव्ये अपृष्टमाह अङ्गिरा द्वे विद्ये इत्यादि । नैष दोष·, क्रमापेक्षत्वात् प्रतिवचनस्य । अपरा हि विद्या अविद्या, सा निराकर्तव्या, तद्विषये हि विदिते न किंचित्तत्त्वतो विदित स्यादिति । निराकृत्य हि पूर्वपक्ष पश्चात्सिद्धान्तो वक्तव्यो भवतीति न्यायात् ।

शकर

( २ ) अत्र प्राप्तुमित्यध्याहार । यद्वस्तु प्राप्तु द्वे विद्ये ज्ञाने उपादेयभूते इति ह वेदाभिज्ञाः पराशरादय 'तत्प्राप्तिहेतुर्विज्ञान कर्म चोक्त महामुने । आगमोत्थ विवेकाच्च द्विधा ज्ञान तथोच्यते । शब्दब्रह्मागममय पर ब्रह्म विवेकजम् ॥' इति यद्वदन्ति तज्ज्ञाने सर्वमिद विज्ञात भवतीत्यर्थ. । इतरथा यत्पदवैयर्थ्यात् । किंच कस्मिन्नु भगव इति सर्वोपादाने पृष्टे विद्याद्वय 'आम्रान् पृष्टः कोविदारानाचष्टे' इति न्यायमनुसरेत् । अतो यथोक्त एवार्थः । ओदनपाक पचतीतिवत् द्वे विद्ये वेदितव्ये इति निर्देशः । के ते विद्ये इत्यत्राह—परा चेति । परमपरमिति ज्ञान द्विविधमित्यर्थ· ।

रग

( ३ ) तस्मै स होवाचेति । ब्रह्म प्रेप्सुना द्वे विद्ये वेदितव्ये ब्रह्मविषये, परोक्षापरोक्षरूपे द्वे विज्ञाने उपादेये इत्यर्थ. । अत्र परोक्ष शास्त्रजन्य ज्ञानम् । अपरोक्ष

---

(१) मुड १।१।४, भास्कर १।१।४ १।२।२१ द्वे + ( एव तु ), रामानुज १।२।२३, ब्रमध्व १।३।६, १।४।१९, श्रीकर १।२।२१, १।३।६, ३।४।५१, वल्लभ. १।२।२१.

योगजन्य ज्ञानम् । तयोर्ब्रह्मप्राप्त्युपायभूतमपरोक्षज्ञानम् । तच्च भक्तिरूपापन्नं 'यमेवैष वृणुते तेन लभ्यः' ( मुण्ड. ३।२।३ ) इत्यत्रैव विशेष्यमाणत्वात् । तदुपायश्चागमजन्य विवेकादिसाधनसप्तकानुगृहीतं ज्ञानम् । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' ( बृउ ४।४।२२ ) इति श्रुते. । रामानुज १।२।२३

( ४ ) तत्र नामरूपात्मकजगतो विज्ञानार्थं नामांशे वेदादि, रूपांशे परा च । वल्लभ १।२।२१

**तत्रापरा, ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा, यया तदक्षरमधिगम्यते ॥**

( १ ) तत्र का अपरेत्युच्यते । ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इत्येते चत्वारो वेदाः । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमित्यङ्गानि षट्, एषा अपरा विद्या । अथेदानीमियं परा विद्योच्यते, यया तद्वक्ष्यमाणविशेषणमक्षरमधिगम्यते प्राप्यते । अधिपूर्वस्य गमे प्रायश प्राप्त्यर्थत्वात् । न च परप्राप्तेरवगमार्थस्य च भेदोऽस्ति । अविद्याया अपाय एव हि परप्राप्तिर्नार्थान्तरम् । ननु ऋग्वेदादिबाह्या तर्हि सा कथं परा विद्या स्यात् मोक्षसाधनं च । 'या वेदबाह्याः स्मृतयः' इति हि स्मरन्ति । कुदृष्टित्वान्निष्फलत्वादनादेया स्यात् । उपनिषदां च ऋग्वेदादिबाह्यत्वं स्यात् । ऋग्वेदादित्वे तु पृथक्करणमनर्थकम् । अथ कथं परेति । न, वेद्यविषयविज्ञानस्य विवक्षितत्वात् । उपनिषद्वेद्याक्षरविषयं हि विज्ञानमिह परा विद्येति प्राधान्येन विवक्षितं, नोपनिषच्छब्दराशिः । वेदशब्देन तु सर्वत्र शब्दराशिर्विवक्षितः । शब्दराश्यधिगमेऽपि यत्नान्तरमन्तरेण गुर्वभिगमनादिलक्षणं वैराग्यं च, नाक्षराधिगमः संभवतीति पृथक्करणं ब्रह्मविद्यायाः परा विद्येति कथनं चेति ।

शंकर.

( २ ) परापरविभागो ह्ययं विद्ययोरभ्युदयनिःश्रेयसफलतया परिकल्प्यते ।

ब्रशंकर १।२।२१

( ३ ) तत्र सूचीकटाहन्यायेन अपरज्ञानस्वरूपमाह—तत्राऽपरेति । षडङ्गोपेतसशिरस्कसकलोपबृंहणवेदश्रवणजन्यं ज्ञानं परोक्षज्ञानमित्यर्थः । अपरविद्यामुक्त्वा परविद्यामाह—अथ परेति । अत्र तच्छब्दः 'इति ह स्म यद्ब्रह्मविदः' इति यच्छब्दप्रतिनिर्देशकः । येन ज्ञानेनेति ह स्म ब्रह्मविद इति वाक्ये प्राप्यतया निर्दिष्टं तदक्षरमधिगम्यते इति । आधिक्येन गम्यते अपरोक्षीक्रियते इत्यर्थः । विवेकादिसाधनसप्तकजन्यश्रवणजन्यपरोक्षज्ञानानन्तरभाविदर्शनसमानाकारज्ञानं परज्ञानमित्यर्थः ।

रंग

सर्वज्ञं परात्परं पुरुषं अक्षररूपं विश्वकारणम्

**यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् ।**
**नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥**

( १ ) यथा विधिविषये कर्त्राद्यनेककारकोपसंहारद्वारेण वाक्यार्थज्ञानकालादन्यत्रानुष्ठेयोऽर्थोऽस्त्यग्निहोत्रादिलक्षणो न तथेह पराविद्याविषये, वाक्यार्थज्ञानसमकाल एव तु पर्यवसितो भवति । केवलशब्दप्रका-

---

(१) मुंउ १।१।५, **ब्रशंकर** १।२।२१, ३।३।३३, **भास्कर** १।२।२१, ३।३।३३, **रंग** ज्योतिष + ( इतिहासपुराणन्यायमीमांसाधर्मशास्त्राणि ), **रामानुज** १।१।१ ( पृ १३, ५८ ), १।२।२२ १।२।२३ रंगवत्, १।३।९, ३।३।३३, **श्रीकंठ** १।२।२२, १।३।५, **श्रीकर** १।२।२१, १।३।६, ३।३।३३, **वल्लभ** १।२।२१, ३।३।३३, **विज्ञान** १।२।२१, ३।२।३०, ३।३।३३, **बलदेव** १।२।२१.

(१) **मुंउ** १।१।६, **ब्रशंकर** १।२।२१, १।४।२७, ३।२।२३, **भास्कर** १।२।२१, १।४।२६, २।१।१४, ३।३।३३, **रामानुज** १।१।१ ( पृ १३ ), १।२।७, २२, १।४।२८ ३।२।३६ ( तदव्ययं० ), ३।३।३३, **निंबार्क** १।२।२२, १।४।२७, २।३।२८ दद्रेश्य (ददृश्य), **ब्रमध्व** १।२।२१, १।४।२८, **श्रीकंठ** १।२।२२, ३।३।३३, **श्रीकर** १।२।२१, १।३।२, १।४।२७, २।१।१२, १३, २२, २६, ३१, ३।२।११, ३६, ३।३।३३, ४।४।६, **वल्लभ** १।२।२१, १।४।२७ दद्रेश्य ( ददृश्य ) चक्षुःश्रोत्र ( चक्षुरश्रोत्र ) यद्भूत ( तद्भूत ), **विज्ञान** १।२।२१, **बलदेव** १।२।२१, ३३, १।४।२७

ष्ठितार्थज्ञानमात्रनिष्ठाव्यतिरिक्ताभावात् । तस्मादिह परा विद्या सविशेषणेनाक्षरेण विशिनष्टि—यत्तदद्रेश्य मित्यादिना । वक्ष्यमाण बुद्धौ सहृत्य सिद्धवत्परामृश्यते—यत्तदिति । अद्रेश्यमदृश्य सर्वेषा बुद्धीन्द्रियाणामगम्यमित्येतत् । दृशेर्बहि प्रवृत्तस्य पञ्चेद्रियद्वार कत्वात् । अग्राह्य कर्मेन्द्रियाविषयमित्येतत् । अगोत्र, गोत्रमन्वयो मूलमित्यनर्थान्तरम् । अगोत्रमनन्वयमित्यर्थ. । न हि तस्य मूलमस्ति येनान्वित स्यात् । वर्ण्यन्ते इति वर्णा. द्रव्यधर्मा. स्थूलत्वादय शुक्ल त्वादयो वा । अविद्यमाना वर्णा यस्य तदवर्णमक्षरम् । अचक्षु श्रोत्र, चक्षुश्च श्रोत्र च नामरूपविषये करणे सर्वजन्तूना, ते अविद्यमाने यस्य तदचक्षु.श्रोत्रम् । 'य सर्वज्ञ. सर्ववित्' इत्यादि चेतनावत्त्वविशेषणत्वात्प्राप्त ससारिणामिव चक्षुःश्रोत्रादिभि. करणैरर्थसाधकत्व, तदिहाचक्षु.श्रोत्रमिति वार्यते । 'पश्यत्यचक्षु. स शृणोत्यकर्ण.' इत्यादिदर्शनात् । किंच तदपाणिपाद कर्मेन्द्रियरहितमित्येतत् । यत एवमग्राह्यमग्राहक च अतो नित्यमविनाशि । विभु विविध ब्रह्मादिस्थावरान्त प्राणिभेदैर्भवतीति विभुम् । सर्वगत व्यापकम् । आकाशवत् सुसूक्ष्म शब्दादिस्थूलत्वकारणरहितत्वात् । शब्दादयो ह्याकाशवाय्वादीना उत्तरोत्तर स्थूलत्वकारणानि, तदभावात्सुसूक्ष्मम् । किंच तदव्यय उक्तधर्मत्वादेव न व्येतीत्यव्ययम् । न ह्यनङ्गस्य स्वाङ्गापचयलक्षणो व्यय. सभवति शरीरस्येव । नापि कोशापचयलक्षणो व्यय सभवति राज्ञ इव । नापि गुणद्वारको व्यय सभवति अगुणत्वात् सर्वात्मकत्वाच्च । यदेवलक्षण भूतयोनिं भूताना कारण पृथिवीव स्थावरजङ्गमानां परिपश्यन्ति सर्वत आत्मभूत सर्वस्याक्षर पश्यन्ति धीरा. धीमन्तो विवेकिन' । ईदृशमक्षर यया विद्ययाऽधिगम्यते सा परा विद्येति समुदायार्थः ।

शाकर

( २ ) अगोत्र कुलरहितम् । अवर्णमपेतब्रह्मक्षत्रादिकम् । तत्प्रसिद्धम् । नित्य कालापरिच्छिन्नम् । विभु देशापरिच्छिन्नम् । सर्वगत सर्वत्रान्तः प्रविश्यावस्थितम् । तत्र हेतुमाह— सुसूक्ष्ममिति । यद्भूतयोनिं परिपश्यन्ति धीरा. । प्रज्ञाशालिनो यत्तत्सर्वभूतोपादानतया पश्यन्तीत्यर्थः । $ रग

( ३ ) बृहन्तो गुणा यस्मिन्निति ब्रह्मेति प्राज्ञवदात्मा विभुगुणत्वात् 'नित्य विभुम्' इति व्यपदिष्टः । दृष्टान्ते बृहदेव प्राज्ञो गुणैरपि बृहद्भवति । दार्ष्टान्ते तु जीवोऽणुपरिमाणको गुणेन विभुरिति विशेष. ।

निंबार्क २।३।२८

*** यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।**
**वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेद पूर्णं पुरुषेण सर्वम् ॥**

ननु भूतयोनिशब्दनिर्दिष्ट सर्वोपादानत्व ब्रह्मणो न सभवति । घटादिषु मृद एवोपादानत्वदर्शनाद्ब्रह्मण उपादानत्वासभवादित्याशङ्क्य मृदादिष्वपि ब्रह्मण आत्मतया व्याप्तत्वात् मृदादिरूपस्य ब्रह्मण उपादानत्वे नानुपपत्तिरित्यभिप्रयन्नाह — यस्मात्परमिति । अत्र परशब्द उत्कृष्टवचन. । अपरशब्दोऽन्यवचन. । यस्मादन्यदुत्कृष्ट नास्तीत्यर्थः । नात्र परापरयोर्द्वयोरपि निषेधः । तथा सति नञ. सकृच्छ्रुतस्य आवृत्तिप्रसङ्गात् । यस्मान्नाणीय इति । अणोरणीयान् महतो महीयानिति भाव । अणीयस्त्व सूक्ष्मत्व व्यापित्वमिति फलति । ज्यायस्त्व सर्वेश्वरत्वम् । सर्वव्यापित्वात् सर्वेश्वरत्वाद(त्वम)स्यैव, एतद्व्यतिरिक्तस्य कस्यापि ज्यायस्त्वमणीयस्त्व च नास्तीत्यर्थ. इति वेदार्थसग्रहे व्याख्यातम् । कश्चिदिति लिङ्गव्यत्ययश्छान्दस' । वृक्ष इति । नन्तव्यवस्त्वभावाद्वृक्षवदप्रणतस्वभावः सन् जगत्प्रधानभूत परमपदे आस्ते इत्यर्थ । तेनेदमिति । नियमनार्थमन्त.प्रविष्टेन सर्वमिद व्याप्तमित्यर्थः । अतश्च मृदादिकशरीरकस्य ब्रह्मणो घटादावप्युपादानत्वसभवात् भूतयोनित्व नानुपपन्नमिति भावः ।

अय मन्त्र केषुचित् कोशेषु न दृष्टः, कैश्चिदव्याकृतः, भाष्येऽपि न गणित । तथाऽपि व्यासार्यैरक्षरपुरुषस्य यस्मात्पर नापरमस्तीति समाभ्यधिकनिषेधश्लो-

---

$ शेष शकरवत् ।

* मन्त्रोऽयमधिको रगभाष्ये । इतरत्र नोपलभ्यते ।

पक्रमावगत इत्यभिहितत्वान्न प्रक्षेपशङ्कार्हं इति द्रष्टव्यम्। रग

**यथोर्णनाभि सृजते गृह्णते च यथा पृथिव्या मोषधय. सभवन्ति।**
**यथा सत. पुरुषात्केशलोमानि तथाऽक्षरात्संभवतीह विश्वम् ॥**

( १ ) भूतयोनिरक्षरमित्युक्तम्। तत्कथ भूतयोनित्वमित्युच्यते प्रसिद्धदृष्टान्तै.। यथा लोके प्रसिद्ध ऊर्णनाभिर्लूताकीट. किंचित्कारणान्तरमनपेक्ष्य स्वयमेव सृजते स्वशरीराव्यतिरिक्तानेव तन्तून् बहिः प्रसारयति, पुनस्तानेव गृह्णते च गृह्णाति स्वात्मभावमेवापादयति। यथा च पृथिव्यामोषधयो व्रीह्यादिस्थावरान्ता इत्यर्थ.। स्वात्माव्यतिरिक्ता एव प्रभवन्ति। यथा च सतो विद्यमानाज्जीवत· पुरुषात् केशलोमानि केशाश्च लोमानि च सभवन्ति विलक्षणानि। यथैते दृष्टान्तास्तथा विलक्षण सलक्षण च निमित्तान्तरानपेक्षाद्यथोक्तलक्षणादक्षरात्सभवति समुत्पद्यते इह ससारमण्डले विश्व समस्त जगत्। अनेकदृष्टान्तोपादान तु सुखावबोधनार्थम्। शकर.

( २ ) ननु लोक उपादानस्य स्वभिन्ननिमित्तकारणसापेक्षत्वदर्शनादेकविज्ञानेन सर्वज्ञानमनुपपन्नम्'। किं चैकस्य ब्रह्मण परस्परविलक्षणानन्तप्रपञ्चोपादानत्वमपि न सभवति। किंच घटाद्युत्पत्तावुपादानभूतमृत्पिण्डादिषु पूर्वावस्थोपमर्दो दृश्यते। प्राकारोपादानभूतासु इष्टकासु चतुरस्रत्वादिलक्षणपूर्वाकारतिरोधान दृश्यते। अक्षरशब्दितस्य निर्विकारस्य ब्रह्मणः पूर्वाकारोपमर्दतिरोधानयोरसभवेन उपादानत्व न सभवतीत्याशङ्क्य आह—यथोर्णनाभिरिति। ' यथोर्णनाभिर्हृदयादूर्णा सतत्य वक्त्रतः। तया विहृत्य भूयस्ता ग्रसत्येव जनार्दनः ॥' * रग

* शेष शकरवत्।

(१) मुड १।१।७, ब्रशकर १।२।२१, १।४।२३, १।४।२७, भास्कर १।२।२१, रामानुज १।२।२२, १।४।२८, निंबार्क २।१।२६, ब्रमध्व १।२।२१, श्रीकर १।१।२ ( पृ ३१ ), १।१।१०, १।२।९, २१, १।४।२३, २७, २।१।२, ३, ४, ९, १२, १३, २।२।३७, २।३।१६, ३।३।३३, वल्लभ १।२।२१; बलदेव २।१।६

( ३ ) ईषदानन्दतिरोभावेन ब्रह्म अक्षरमुच्यते। प्रकटानन्दः पुरुष इति। वल्लभ १।२।२१

ईश्वरात् सृष्टि नामरूपान्नाद्यात्मिका

**तपसा चीयते ब्रह्म ततोऽन्नमभिजायते।**
**अन्नात्प्राणो मन सत्य लोका कर्मसु चामृतम् ॥**

( १ ) यत् ब्रह्मण उत्पद्यमान विश्व तदनेन क्रमेणोत्पद्यते न युगपद्बदरमुष्टिप्रक्षेपवदिति क्रमनियमविवक्षार्थोऽय मन्त्र आरभ्यते। तपसा ज्ञानेनोत्पत्तिविधिज्ञतया भूतयोन्यक्षर ब्रह्म चीयते उपचीयते उत्पिपादयिषदिद जगत्, अङ्कुरमिव बीजमुच्छूनतां गच्छति, पुत्रमिव पिता हर्षेण। एव सर्वज्ञतया सृष्टिस्थितिसहारशक्तिविज्ञानवत्तयोपचितात्ततो ब्रह्मणोऽन्न अद्यते भुज्यते इत्यन्न अव्याकृत साधारण ससारिणा व्याचिकीर्षितावस्थारूपेणाभिजायते उत्पद्यते। ततश्चाव्याकृताद्व्याचिकीर्षितावस्थावतोऽन्नात् प्राणो हिरण्यगर्भो ब्रह्मणो ज्ञानक्रियाशक्त्यधिष्ठितजगत्साधारणोऽविद्याकामकर्मभूतसमुदायबीजाङ्कुरो जगदात्माऽभिजायते इत्यनुषङ्ग.। तस्माच्च प्राणान्मनो मनआख्य सकल्पविकल्पसशयनिर्णयाद्यात्मकमभिजायते। ततोऽपि सकल्पाद्यात्मकात् मनस सत्य सत्याख्य आकाशादिभूतपञ्चकमभिजायते। तस्मात् सत्याख्याद्भूतपञ्चकादण्डक्रमेण सप्तलोका भूरादयः। तेषु मनुष्यादिप्राणिवर्णाश्रमक्रमेण कर्माणि। कर्मसु च निमित्तभूतेषु अमृत कर्मज फलम्। यावत्कर्माणि कल्पकोटिशतैरपि न विनश्यन्ति तावत्फल न विनश्यतीत्यमृतम्। शकर.

( २ ) अन्नादिति। तस्मात् समष्टिरूपचिदचित्सघातात्मकादन्नशब्दितादव्याकृतान्मुख्यः प्राणः, अन्त.करण, सत्यशब्दितो भोक्तृवर्ग., स्वर्गादयो लोकाः, कर्मसु आयत्तममृत च, अमृतत्वसाधक कर्मेति यावत्। अथवा कर्मस्विति निर्धारणे सप्तमी। कर्ममध्ये मोक्षार्थं कर्मेत्यर्थः। एतत्सर्वमभिजायत इति पूर्वेणान्वयः। एतत्सर्वं भाष्यश्रुतप्रकाशिकयोः स्पष्टम्। * रग.

* शेष शकरवत्।

(१) मुड १।१।८, रामानुज १।२।२३, २।३।४, श्रीकठ २।३।४, विज्ञान. १।१।१६

( ३ ) ततोऽन्नमिति । अद्यत इत्यन्नम् । विश्वस्य भोक्तृवर्गस्य भोग्यभूत भूतसूक्ष्ममव्याकृत परस्माद्ब्रह्मणो जायत इत्यर्थ । रामानुज १।२।२३

**यं सर्वज्ञ सर्वविद्यस्य ज्ञानमय तप ।**
**तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥**

(१) उक्तमेवार्थमुपसजिहीर्षुर्मन्त्रो वक्ष्यमाणार्थमाह । य उक्तलक्षणोऽक्षराख्य सर्वज्ञ सामान्येन सर्वं जानातीति सर्वज्ञः । विशेषेण सर्वं वेत्तीति सर्ववित् । यस्य ज्ञानमय ज्ञानविकारमेव सार्वज्ञ्यलक्षण तपो नायास लक्षणम् । तस्माद्यथोक्तात्सर्वज्ञादेतदुक्त कार्यलक्षण ब्रह्म हिरण्यगर्भाख्य जायते । किंच नाम असौ देवदत्तो यज्ञदत्त इत्यादिलक्षणम् । रूप इद शुक्ल नीलमित्यादि । अन्न च व्रीहियवादिलक्षण जायते पूर्वमन्त्रोक्तक्रमेणेत्यविरोधो द्रष्टव्य । शकर

( २ ) पूर्वमन्त्रोक्ततप शब्द विवृण्वन् भूतयोनि शब्दितस्य ब्रह्मण सृष्ट्युपकरण सार्वज्ञ्य दर्शयति — यः सर्वज्ञ इति । सर्वज्ञ. सर्वविषयकज्ञानवान् । सर्ववित् तत्तद्वस्तुगतसर्वप्रकारकज्ञानवान् । स्वरूपतः प्रकारतश्च सर्वविषयकज्ञानवत्त्व अस्मिन् मन्त्रे भूतयोनेर्विधेयमप्राप्तत्वात् । 'यस्य ज्ञानमय तप ' इत्यनेनांशेन पूर्वमन्त्रोक्ततप शब्दविवरणम् । यस्य ब्रह्मण सकल्परूपज्ञानव्यतिरेकेण जगत्सृष्ट्युपयुक्त कर्मान्तर नास्तीत्यर्थ । 'ततोऽन्नमभिजायते' इत्यादिकमनुवदति — तस्मादिति । तस्मात्सकल्पेन सृष्ट्युन्मुखाद्ब्रह्मण. । ततोऽन्नमभिजायते इत्यत्रान्नशब्दनिर्दिष्टमेतत् अव्याकृताख्य ब्रह्म साक्षा जायते तद्द्वारा नामरूपवत् । अद्यते अत्ति च भूतानि इति अन्नशब्दनिर्दिष्टभोग्यभोक्तृरूप च जायते इत्यर्थ । यद्यस्मिन्नपि मन्त्रे सर्वज्ञत्वाद्यनुवादेन ब्रह्मशब्दिताव्यक्तादिहेतुत्व विधियत इति प्रतिभाति तथाऽपि तस्य पूर्वमन्त्रप्राप्तत्वेन विधेयत्वासभवादप्राप्तस्य सर्वज्ञत्वस्यैव विधेयत्वमिति द्रष्टव्यम् । रग

( ३ ) नित्यापरोक्षानपेक्षितबाह्यकरणनिष्कलङ्कानुभव विषयनिखिलवस्तुत्वमिह सर्वज्ञत्वम् । ' य. सर्वज्ञ' सर्वविद्यस्य ज्ञानमय तप ' इत्यादिभिरिद ब्रह्मण' सिद्धम् । अनेन सकलचेतनबहुविधकर्मफलभोगानुकूलत त्तच्छरीरनिर्माणोपायसामग्रीविशेषज्ञ ब्रह्म निमित्त भवति । * श्रीकठ १।१।२

( ४ ) 'य सर्वज्ञः सर्ववित्' 'वामदेवाय नमो ज्येष्ठाय' ' न तस्य कार्यं ' इत्यादिश्रुतिसिद्धसर्वज्ञत्वादिधर्माणां परमेश्वरलीलाकालपरत्व, निष्क्रियत्वादिधर्माणा स्वशक्तिसकोचावस्थापरत्व च । तस्मात्सर्वेषा सगुणत्वनिर्गुणत्वधर्माणामेकस्यैव ब्रह्मण. शिवस्योपपत्ति. ।

श्रीकर २।१।३६

( ५ ) वस्तुतस्तु ब्रह्मप्रकरणे तपःश्रुतिस्तेज परा, तेजः सृष्ट्वैव छान्दोग्ये जगत्सर्जनात्, 'यस्य ज्ञानमय तप.' इत्यत्र तपःशब्देन तेजस एवोक्तत्वाच्च । 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते' इति तत्पूर्ववाक्यस्य लोकानुसारित्वौचित्यात्, तेजसश्च ज्ञानयमत्वमीश्वरध्यानजत्वादिति । विज्ञान १।१।१६

वेदोक्तानि कर्माण्येव सुकृतस्य पन्था

**तदेतत्सत्यम् । मन्त्रेषु कर्माणि कवयो यान्यपश्यस्तानि त्रेतायां बहुधा सततानि । तान्याचरथ नियत सत्यकामा एष व. पन्था सुकृतस्य लोके ॥**

( १ ) साङ्गा वेदा अपरा विद्या उक्ता ' ऋग्वेदो यजुर्वेद. ' इत्यादिना, यत्तदद्रेश्यमित्यादिना 'नाम रूप-

(१) मुड १।१।९, शकर १।१।५, १।२।२१, १।३।३, २।१।३०, ३।४।८, भास्कर १।१।१०, १।२।२१, १।३।३, २।१।२४, ३।४।८, रामानुज १।१।१ ( पृ १९, ६१, १२१ ) १।१।४ ( पृ १६५ ), १।१।५, १।२।२, १।३।१, ४२, १।४।२७, २।१।८, २।१।१५ ( पृ ४४७ ), २।३।४, १३, २९, ३।२।१७, ३।४।८, निबार्क १।२।२२, १।४।९, ब्रमध्व १।२।२२, श्रीकठ १।१।२ ( पृ १२१ ), १।२।२२, २।३।४, ३।२।१५, ३।३।३९, ४०, श्रीकर १।१।१ ( पृ ५, १९ ), १।२।२१, १।३।३, २।१।३६, २।२।४१, २।३।२७, ३।२।१५, १७, ३।३।४०, ३।४।८, वल्लभ १।२।२२ २।१।३०, २।३।१८, ३।२।२३ सर्ववित् ( सर्वशक्ति ), विज्ञान १।१।१६, १।२।२१, बलदेव १।२।२१, १।४।९, ३।२।२८, ३।३।१

* रामानुजश्रीकठभाष्ययो २।३।४ इति सूत्रे प्रकृतब्रह्मशब्दस्य प्रधानवाचिता अभिहिता ।

(१) मुड १।२।१, रामानुज १।२।२३

मन्न च जायते ' इत्यन्तेन ग्रन्थेनोक्तलक्षणमक्षर यया विद्ययाऽधिगम्यते इति परा विद्या सविशेषणा उक्ता। अत' परमनयोर्विद्ययोर्विषयौ विवेक्तव्यौ ससारमोक्षाविन्युत्तरो ग्रन्थ आरभ्यते। तत्रापरविद्याविषय. कर्त्रादिसाधनक्रियाफलभेदरूपः ससारोऽनादिरनन्तो दु.खस्वरूपत्वाद्धातव्य. प्रत्येक शरीरिभि सामस्त्येन नदीस्रोतोवदव्यवच्छेदरूपसबन्ध, तदुपशमलक्षणो मोक्षः परविद्याविषयोऽनाद्यनन्तोऽजरोऽमरोऽमृतोऽभयः शुद्ध' प्रसन्नः स्वात्मप्रतिष्ठालक्षण. परमानन्दोऽद्वय इति। पूर्वं तावदपरविद्याया विषयप्रदर्शनार्थमारम्भः। तद्दर्शने हि तन्निर्वेदोपपत्ते। तथा च वक्ष्यति 'परीक्ष्य लोकान् कर्मचितान्' इत्यादिना। न ह्यप्रदर्शिते परीक्षा उपपद्यते इति तत्प्रदर्शयन्नाह—तदेतत्सत्य अवितथम्। किं तत्, मन्त्रेषु ऋग्वेदाद्याख्येषु कर्माण्यग्निहोत्रादीनि मन्त्रैरेव प्रकाशितानि कवयो मेधाविनो वसिष्ठादयो यान्यपश्यन् दृष्टवन्त'। यत्तदेतत्सत्यमेकान्तपुरुषार्थसाधनत्वात्। तानि च वेदविहितानि ऋषिदृष्टानि कर्माणि त्रेताया त्रयीसयोगलक्षणाया हौत्राध्वर्यवौद्गात्रप्रकारायाधिकरणभूताया बहुधा बहुप्रकार सततानि प्रवृत्तानि कर्मिभि. क्रियमाणानि, त्रेताया वा युगे प्रायश प्रवृत्तानि, अतो यूय तान्याचरथ निर्वर्तयथ नियत नित्य सत्यकामा यथाभूतकर्मफलकामाः सन्तः। एष वो युष्माक पन्था मार्गः सुकृतस्य स्वय निर्वर्तितस्य कर्मणो लोके फलनिमित्तम्। लोक्यते दृश्यते भुज्यते इति कर्मफल लोके उच्यते। तदर्थं तत्प्राप्तये एष मार्ग इत्यर्थ। यान्येतान्यग्निहोत्रादीनि त्रय्या विहितानि कर्माणि तान्येष पन्था अवश्यफलप्राप्तिसाधनमित्यर्थः।

शकर

(२) तदेतत्सत्यमिति। नित्यमुत्पत्तिविनाशादिषड्भावविकारशून्यमित्यर्थः। मन्त्रेष्विति। अतीन्द्रियार्थसाक्षात्कारसमर्था वेदेषु यान्यग्निहोत्रकर्माणि दृष्टवन्तः। तानि त्रेतायामिति। गार्हपत्यादिषु वैतानिकाग्निषु यावज्जीव कर्तव्यतयाऽधिकारिमन्त्रफलभेदेन बहुधा विहितानि। तान्याचरथेति। स्वतः सत्य पर ब्रह्मैव कामयमानाः फलाभिसंधिरहिताः सन्त इत्यर्थः। तानि कर्माण्याचरत अनुतिष्ठत कर्मणां ब्रह्मप्राप्तिहेतुत्वज्ञानद्वारा इति द्रष्टव्यम्। अमुमुक्षून् प्रत्याह—एष व इति। पुण्यफलभूते लोके तु वक्ष्यमाणो मार्ग इत्यर्थः। * रग.

**यदा लेलायते ह्यर्चि' समिद्धे हव्यवाहने।**
**तदाज्यभागावन्तरेणाहुती. प्रतिपादयेत् ॥**

(१) तत्राग्निहोत्रमेव तावत्प्रथम प्रदर्शनार्थमुच्यते, सर्वकर्मणां प्राथम्यात्। तत्कथम्। यदैवेन्धनैरभ्याहितै. सम्यगिद्धे समिद्धे हव्यवाहने लेलायते चलत्यर्चिस्तदा तस्मिन् काले लेलायमाने चलति अर्चिषि आज्यभागौ आज्यभागयोरन्तरेण मध्ये आवापस्थाने आहुती. प्रतिपादयेत् प्रक्षिपेद्देवतामुद्दिश्य। अनेकाह.प्रयोगापेक्षयाऽऽहुतीरिति बहुवचनम्।

शकर.

(२) एव ब्रह्मविद्याङ्गतया फलाभिसधिरहितकर्मानुष्ठान विधाय फलाभिसधिपूर्वकस्य तु कर्मणोऽयथावदनुष्ठितस्य न प्रतिपदोक्तफलजनकत्व प्रत्युत प्रत्यवायजनकत्वमेव। यथावदनुष्ठितस्यापि तस्य सत्यलोकपर्यन्तफलकत्वमेवेत्याह—यदेति।

‡ रग

**यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च।**
**अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति ॥**

(१) एष सम्यगाहुतिप्रक्षेपादिलक्षणः कर्ममार्गो लोकप्राप्तये पन्थाः, तस्य च सम्यक्करण दुष्कर विपत्तयस्त्वनेका भवन्ति। कथ, यस्याग्निहोत्रिणोऽग्निहोत्रमदर्शं दर्शाख्येन कर्मणा वर्जितम्। अग्निहोत्रिणोऽवश्य कर्तव्यत्वाद्दर्शस्य। अग्निहोत्रसबन्ध्यग्निहोत्रविशेषणमिव भवति। तदक्रियमाणमित्येतत्। तथा अपौर्णमासमित्यादिष्वपि अग्निहोत्रविशेषणत्व द्रष्टव्यम्। अग्निहोत्राङ्गत्वस्याविशिष्टत्वादपौर्णमास पौर्णमासकर्मवर्जितम्।

* ' आचरत ' इति पाठो भाष्यतः प्रतिभाति।

‡ शेषं शकरवत्।

(१) मुड १।२।२

(२) मुड १।२।३, रग ( अचातुर्मास्य० ) अदेवम + ( श्रद्धयाऽ ).

अचातुर्मास्य चातुर्मास्यकर्मवर्जितम् । अनाग्रयण, आग्रयण शरदादिकर्तव्य, तच्च न क्रियते यस्य । तथा अतिथिवर्जित चातिथिपूजन चाहन्यहनि अक्रियमाण यस्य । स्वय सम्यगग्निहोत्रकाले अहुतम् । अदर्शादिव-दवैश्वदेव वैश्वदेवकर्मवर्जितम् । हूयमानमप्यविधिना हुत, न यथाहुतमित्येतत् । एव दु सपादितमसपादितमग्नि-होत्राद्युपलक्षित कर्म किं करोतीत्युच्यते—आसतमान् सप्तमसहितास्तस्य कर्तुर्लोकान् हिनस्ति हिनस्तीव आयास मात्रफलत्वात् । सम्यक् क्रियमाणेषु हि कर्मसु कर्मपरि-णामानुरूपेण भूरादय सत्यान्ता सप्त लोका॰ फल प्राप्यन्ते । ते लोका एवभूतेनाग्निहोत्रादिकर्मणा त्वप्रा प्यत्वाद्धिंस्यन्ते इव आयासमात्र त्वव्यभिचारीत्यतो हिन-स्तीत्युच्यते । पिण्डदानाद्यनुग्रहेण वा सबध्यमाना पितृपितामहप्रपितामहा॰ पुत्रपौत्रप्रपौत्राः स्वात्मोपकाराः सप्तलोका उक्तप्रकारेणाग्निहोत्रादिना न भवन्तीति हिंस्यन्ते इत्युच्यते । शकर

(२) यद्यप्यग्निहोत्रस्य न दर्शपौर्णमासादिकमङ्ग तेषा पृथक्फलत्वात्, तथाऽपि नित्यनैमित्तिक सकल कर्मानुष्ठेयमित्यत्र तात्पर्यम् । अत एव भगवता भाष्य कृता ' श्रुतिस्मृतिचोदितेषु कर्मसु एकतरकर्मवैधुर्येऽपीत रेषामनुष्ठितानामपि निष्फलत्वम् । अयथानुष्ठितस्य अननुष्ठितसमत्व चाभिधाय ' इति मन्त्रार्थो विवृत॰ ।

* रग

**काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा ।**
**स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वा ॥**[1]

काल्याद्या विश्वरुच्यन्ता लेलायमाना अग्नेर्हविराहुति-ग्रसनार्था एताः सप्त जिह्वा॰ ।

† शकर

**एतेषु यश्चरते भ्राजमानेषु यथाकाल चाहुतयो ह्याददायन् ।**[2]

**त नयन्त्येता सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवास ॥**

(१) एतेष्वग्निजिह्वाभेदेषु योऽग्निहोत्री चरते कर्माचरति अग्निहोत्रादि भ्राजमानेषु दीप्यमानेषु । यथाकाल च यस्य कर्मणो य. काल. त काल अनति क्रम्य यथाकाल यजमान आददायन् आददाना आहु तयो यजमानेन निर्वर्तितास्त नयन्ति प्रापयन्ति एता आहुतयो या इमा अनेन निर्वर्तिताः सूर्यस्य रश्मयो भूत्वा रश्मिद्वारैरित्यर्थ. । यत्र यस्मिन् स्वर्गे देवानां पतिरिन्द्र एक सर्वानुपर्यधिवसतीत्यधिवासः ।

शकर

(२) एतेषु दीप्यमानेषु अग्निजिह्वाभेदेषु विहित-कालानतिलङ्घनेन होमद्रव्य गृहीत्वा योऽग्निहोत्रादि कर्म आचरति । त नयन्तीति । अधिवसतीत्यधिवासः । यस्मिन् सत्यलोके देवाना पतिरसमानो हिरण्यगर्भ आस्ते तत्र ता आहुतयः सूर्यस्य रश्मयो भूत्वा त यज-मान प्रापयन्तीत्यर्थ ।

रग.

**एह्येहीति तमाहुतय सुवर्चसः सूर्यस्य रश्मि-भिर्यजमानं वहन्ति ।**
**प्रिया वाचमभिवदन्त्योऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥**[1]

(१) कथ सूर्यस्य रश्मिभिर्यजमान वहन्तीत्युच्यते एह्येहीत्याह्वयन्त्य । सुवर्चसो दीप्तिमत्यः । किंच प्रिया-मिष्टा वाच स्तुत्यादिलक्षणा अभिवदन्त्य उच्चारयन्त्यः अर्चयन्त्य पूजयन्त्यश्चैष वो युष्माक पुण्य सुकृतः पन्था ब्रह्मलोक फलरूपः, एव प्रिया वाचमभिवदन्त्यो वहन्तीत्यर्थ । ब्रह्मलोक. स्वर्गः प्रकरणात् ।

शकर.

(२) सुकृत इति । सुकृतसाध्य पावन एष चतुर्मुखलोक भवदीयो भवत्स्वामिक इतीदृशीं प्रियां वाच वदन्त्य. ।

* रग.

* शेष शकरेण गतार्थम् ।
† रग. शकरवत् ।
(१) मुड १।२।४
(२) मुड. १।२।५

* शेष शकरवत् ।
(१) मुड. १।२।६, रामानुज १।२।२३.

विद्यारहित यज्ञरूपकर्ममार्गं पुनरावृत्ति-
संसारकारणम्

प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यु ते पुनरेवापि यन्ति ॥

( १ ) एतच्च ज्ञानरहित कर्म एतावत्फलमविद्याकामकर्मकार्यमतोऽसार दुःखमूलमिति निन्द्यते । प्लवा विनाशिन इत्यर्थः । हि यस्मादेत अदृढा अस्थिरा यज्ञरूपाः यज्ञस्य रूपाणि यज्ञरूपा यज्ञनिर्वर्तका अष्टादशाष्टादशसख्याका, षोडशर्त्विज पत्नी यजमानश्चेत्यष्टादश, एतदाश्रय कर्मोक्त कथित शास्त्रेण येष्वष्टादशस्ववर केवलं ज्ञानवर्जित कर्म । अतस्तेषामवरकर्माश्रयाणामष्टादशानां अदृढतया प्लवत्वात् प्लवते सह फलेन तत्साध्य कर्म कुण्डविनाशादिवत् क्षीरदध्यादीना तत्स्थानां नाशः । यत एवमेतत्कर्म श्रेय. श्रेय करणमिति येऽभिनन्दन्ति अभिहृष्यन्ति अविवेकिनो मूढाः अतस्ते जरा च मृत्यु च जरामृत्यु किंचित्काल स्वर्गे स्थित्वा पुनरेवापि यन्ति भूयोऽपि गच्छन्ति । शकर

( २ ) अवर फलाभिसधिमत्तयाऽश्रेष्ठ कर्म येषु यजमानेषु वर्तते ते यज्ञप्रधानाः पुरुषा जीर्णनौका इव ससारार्णवसतरणासमर्था इत्यर्थ । यद्वा, अष्टादशस्मृत्युक्त स्मार्तं कर्म येषु श्रौतकर्मसु तदधिकारस पादकत्वेनावरमङ्गभूत भवति तान्यपि श्रौतानि यज्ञात्मकानि कर्माणि शोकाम्बुतरणे साधनानि न भवन्तीत्यर्थ । * रग

अविद्यायामन्तरे वर्तमाना स्वय धीरा. पण्डित मन्यमाना ।
जङ्घन्यमाना परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥

---

* शेष शकरवत् ।

(१) मुड १।२।७, ब्रशकर १।२।२१, रामानुज १।१।१, १।२।२३, श्रीकर १।२।२१

(२) मुड १।२।८, भास्कर १।४।२१, रग अन्धेनैव ( अन्धेनेव )

किंच, अविद्यायामन्तरे मध्ये वर्तमाना अविवेकप्राया. स्वय वयमेव धीरा धीमन्त पण्डिता विदितवेदितव्याश्चेति मन्यमाना आत्मान सभावयन्तस्ते च जङ्घन्यमाना जरारोगाद्यनेकानर्थव्रातैर्हन्यमाना. भृश पीड्यमानाः परियन्ति विभ्रमन्ति मूढा. । दर्शनवर्जितत्वादन्धेनैव अचक्षुष्केणैव नीयमाना प्रदर्श्यमानमार्गाः यथा लोके अन्धा अक्षिरहिताः गर्तकण्टकादौ पतन्ति तद्वत् । * शकर.

अविद्यायां बहुधा वर्तमाना वय कृतार्था इत्यभिमन्यन्ति बाला ।
यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुरा क्षीणलोकाश्च्यवन्ते ॥

किंच, अविद्यायां बहुधा बहुप्रकार वर्तमानाः वयमेव कृतार्था कृतप्रयोजना इत्येवमभिमन्यन्ति अभिमान कुर्वन्ति बाला अज्ञानिन । यद्यस्मादेव कर्मिणो न प्रवेदयन्ति तत्त्व न जानन्ति रागात्कर्मफलरागाभिभवनिमित्त तेन कारणेनातुरा दु खार्ता सन्त. क्षीणलोकाः क्षीणकर्मफला स्वर्गलोकात् च्यवन्ते ।

* शकर.

इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढा ।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेम लोकं हीनतरं वा विशन्ति ॥

इष्टापूर्तम् । इष्ट यागादि श्रौत कर्म, पूर्त वापीकूपतडागादि स्मार्त मन्यमाना एतदेवातिशयेन पुरुषार्थसाधन वरिष्ठ प्रधानमिति चिन्तयन्तोऽन्यदात्मज्ञानाख्यं श्रेयःसाधन न वेदयन्ति न जानन्ति प्रमूढाः पुत्रपशुबन्ध्वादिषु प्रमत्ततया मूढा ते च नाकस्य स्वर्गस्य पृष्ठे उपरिस्थाने सुकृते भोगायतनेऽनुभूत्वा अनुभूय कर्मफल पुनरिम लोक मानुष अस्माद्धीनतर वा तिर्यङ् नरकादिलक्षण यथाकर्मशेष विशन्ति ।

‡ शकर.

---

* रग शकरवत् ।

‡ रग शकरेण गतार्थम् । सुकृतपदार्थं पूर्ववत् ।

(१) मुड १।२।९

(२) मुड १।२।१०.

मुमुक्षो ब्रह्मविविदिषो गुरूपसत्ति

**परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृत कृतेन ।**
**तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणि. श्रोत्रिय ब्रह्मनिष्ठम् ॥**

(१) अथेदानीं अस्मात्साध्यसाधनरूपात् सर्वस्मात् ससारात् विरक्तस्य परस्या विद्याया अधिकारप्रदर्शनार्थमिदमुच्यते । परीक्ष्य यदेतदृग्वेदाद्यपरविद्याविषय स्वाभाविकाविद्याकामकर्मदोषवत्पुरुषानुष्ठेयमविद्यादिदोषवन्तमेव पुरुष प्रति विहितत्वात्तदनुष्ठानकार्यभूताश्च लोका ये दक्षिणोत्तरमार्गलक्षणा. फलभूता ये च विहिताकरणप्रतिषेधातिक्रमदोषसाध्या नरकतिर्यक्प्रेतलक्षणास्तानेतान् परीक्ष्य प्रत्यक्षानुमानोपमानागमै. सर्वतो याथात्म्येनावधार्य लोकान् ससारगतिभूतानव्यक्तादिस्थावरान्तान् व्याकृताव्याकृतलक्षणान् बीजाङ्कुरवदितरेतरोत्पत्तिनिमित्तान् अनेकानर्थशतसहस्रसकुलान् कदलीगर्भवदसारान् मायामरीच्युदकगन्धर्वनगराकारस्वप्नजलबुद्बुदफेनसमान् प्रतिक्षणप्रध्वसान् पृष्ठत कृत्वा अविद्याकामदोषप्रवर्तितकर्मचितान् धर्माधर्मनिर्वर्तितानित्येतत् । ब्राह्मणस्यैव विशेषतोऽधिकार सर्वत्यागेन ब्रह्मविद्यायामिति ब्राह्मणग्रहणम् । परीक्ष्य लोकान् किं कुर्यादित्युच्यते । निर्वेद, नि पूर्वो विदिरत्र वैराग्यार्थे । वैराग्यमायात् कुर्यादित्येतत् । स वैराग्यप्रकारः प्रदर्श्यते । इह ससारे नास्ति कश्चिदप्यकृत. पदार्थ. । सर्व एव हि लोकाः कर्मचिता· कर्मकृतत्वाच्चानित्याः । न नित्य किंचिदस्तीत्यभिप्रायः । सर्वं तु कर्मानित्यस्यैव साधनम् । यस्माच्चतुर्विधमेव हि सर्वं कर्मकार्यं उत्पाद्य, आप्य, सस्कार्यं, विकार्यं वा, नातःपर कर्मणा विशेषोऽस्ति । अह च नित्येनामृतेनाभयेन कूटस्थेनाचलेन

(१) मुड १।२।१२, प्रशकर १।२।२१, भास्कर १।१।१, रामानुज १।१।१, १।२।२३, प्रमध्व १।१।१, ३।३।५०, श्रीकठ १।१।१ ( पृ ८५ ), श्रीकर १।१।१ ( पृ १५, १७, १८ ), १।२।२१, १।३।२५, २।१।१२, २।३।४९, ३।१।१०, ३।२।५, ३।३।१८, ३।४।१, २०, २६, ३२, ४८, ५२, ४।४।२२, विज्ञान १।१।१ ( पृ. १५, २७ ), बलदेव १।१।१, ३।३।४४

ब्रह्मविद्या साङ्गा सफला च

**तप·श्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः ।**
**सूर्यद्वारेण ते विरजा. प्रयान्ति यत्रामृत स पुरुषो ह्यव्ययात्मा ॥**

(१) ये पुनस्तद्विपरीतज्ञानयुक्ता वानप्रस्थाः सन्यासिनश्च तप·श्रद्धे हि, तप. स्वाश्रमविहित कर्म, श्रद्धा हिरण्यगर्भादिविषया विद्या, ते तपःश्रद्धे उपवसन्ति सेवन्तेऽरण्ये वर्तमाना. सन्त. । शान्ता उपरतकरणग्रामाः । विद्वासो गृहस्थाश्च ज्ञानप्रधाना इत्यर्थः । भैक्षचर्यां चरन्त· परिग्रहाभावादुपवसन्ति अरण्ये इति सबन्धः । सूर्यद्वारेण सर्योपलक्षितेनोत्तरायणेन पथा ते विरजाः विरजस. क्षीणपुण्यपापकर्माणः सन्त इत्यर्थ· । प्रयान्ति प्रकर्षेण यान्ति यत्र यस्मिन् सत्यलोकादावमृतः स पुरुष प्रथमजो हिरण्यगर्भो ह्यव्ययात्मा अव्ययस्वभावो यावत्ससारस्थायी । एतदन्तास्तु ससारगतयोऽपरविद्यागम्या. ।

शकर

(२) ये सन्यासिन कृतश्रवणमनना वने स्थित्वोपरतकरणग्रामा तप·शब्दित ब्रह्म च तदादरातिशय रूपश्रद्धा च ये सेवन्ते ते विधूतपापा. सूर्यमण्डल भित्त्वा 'सहस्रस्थूणे विमिते दृढ उग्रे यत्र देवानामधिदेव आस्ते' इति पर्यङ्कविद्याद्युक्तो हेयप्रत्यनीक 'सदैकरूपरूपाय' इतिप्रमाणप्रतिपन्ननित्यविग्रहयुक्त यत्र आस्ते तत्र यान्तीत्यर्थः । 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' (छाउ ५।१०।१) इत्यत्र तपः शब्देन ब्रह्मोच्यते । बृहदारण्यके 'श्रद्धां सत्यमुपासते' इति तप.शब्दस्थाने सत्यशब्दप्रयोगात् सत्यशब्दस्य ब्रह्मपरत्वादिति व्यासार्यैरुक्तत्वात् तप श्रद्धे इत्यत्र तपःशब्दो ब्रह्मपरः ।

रग

(१) मुड १।२।११, प्रशकर ३।४।१७, १८, ४।३।१, भास्कर. ४।३।१, १३, रग चर्यां ( चर्यं ), रामानुज १।२।२३, श्रीकर १।३।६, वल्लभ ४।३।१, विज्ञान ३।४।१७ भैक्ष ( भैक्ष्य ), बलदेव ४।३।१, ४।४।२

ध्रुवेणार्थे नार्थी, न तद्विपरीतेन । अत. किं कृतेन कर्मणा आयासबहुलेनानर्थसाधनेनेत्येव निर्विण्णोऽभय शिवमकृत नित्य पद यत्तद्विज्ञानार्थं विशेषेणाधिगमार्थं स निर्विण्णो ब्राह्मणो गुरुमेवाचार्यं शमदमदयादिसपन्न अभिगच्छेत् । शास्त्रज्ञोऽपि स्वातन्त्र्येण ब्रह्मज्ञानान्वेषण न कुर्यादित्ये-तद्गुरुमेवेत्यवधारणफलम् । समित्पाणि. समिद्भारगृहीत-हस्तः श्रोत्रिय अध्ययनश्रुतार्थसपन्न ब्रह्मनिष्ठ, हित्वा सर्वकर्माणि केवलेऽद्वये ब्रह्मणि निष्ठा यस्य सोऽय ब्रह्म-निष्ठो जपनिष्ठस्तपोनिष्ठ इति यद्वत् । न हि कर्मिणो ब्रह्मनिष्ठता सभवति कर्मात्मज्ञानयोर्विरोधात् । स त गुरु विधिवदुपसन्नः प्रसाद्य पृच्छेदक्षर पुरुष सत्यम् ।

शकर.

( २ ) अस्मिन् वाक्ये न्यायसिद्धानुवादेन गुरूपस-त्तिर्विधीयते । परीक्ष्य मीमासान्यायैर्निरूप्य । ब्राह्मणोऽ-धीतसाङ्गसशिरस्कवेद. । य इत्यध्याहार्ये स इत्युत्तरत्र श्रवणात् । अकृतो नित्योऽत्र पुरुषो विशेष्यो लिङ्गवशात् । 'अक्षर पुरुष' इत्यनन्तरोक्तेश्च । कृतेन कर्मणा नास्ति न सिध्यति ।

* रग.

( ३ ) परीक्ष्य लोकानित्यादिना केवलकर्मफलेषु विर-क्तस्य यथोदितकर्मानुगृहीत ब्रह्मप्राप्त्युपायभूत ज्ञान जिज्ञासमानस्य चाचार्योपसदन विधाय . . . . ।

रामानुज. १।२।२३

( ४ ) तत्र एवकारादगुरुभावेनोपगमव्यावृत्तेरेव लाभान्न तु कर्मव्यावृत्तिः । 'क्रियावन्तः श्रोत्रिया ब्रह्म-निष्ठा. स्वय जुह्वत एकर्षिं श्रद्धयन्त. । तेषामेवैतां ब्रह्मविद्या वदेत्' ( मुड. ३।२।१० ) इति वाक्यशेषे क्रियावतामेवोपदेश्यत्वविधानात् । समित्पाणित्वलिङ्गेन होमावगमाच्च । समित्पाणिशब्दस्य उपाहारपाण्यर्थकत्वो-पवर्णन तु स्वाऽज्ञानवर्णनमेव । नास्त्यकृतः कृतेनेत्यनेन च कर्मणा मोक्षसाधनत्वमेव निराकृत फलवत्सनिधाव-फलस्यैवाङ्गत्वेन तस्य मोक्षासाधनत्वात्, न तु कर्म त्यागो विहित इति ।

विज्ञान. १।१।१ (पृ. १५)

* शेष शकरवत् ।

**तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय ।**
**येनाक्षरं पुरुष वेद सत्यं प्रोवाच ता तत्त्वतो ब्रह्मविद्याम् ॥**

( १ ) तस्मै स विद्वान् गुरुर्ब्रह्मविदुपसन्नाय उप-गताय । सम्यक् यथाशास्त्रमित्येतत् । प्रशान्तचित्ताय उपरतदर्पादिदोषाय । शमान्विताय बाह्येन्द्रियोपरमेण च युक्ताय, सर्वतो विरक्तायेत्येतत् । येन विज्ञा-नेन यया विद्यया परया अक्षरमद्रेश्यादिविशेषण तदे-वाक्षर, पुरुषशब्दवाच्य पूर्णत्वात् पुरि शयनाच्च, सत्य तदेव परमार्थस्वाभाव्यात्, अक्षर चाक्षरणादक्षतत्वा-दक्षय.वाच्च वेद विजानाति, तां ब्रह्मविद्या तत्त्वतो यथा-वत् प्रोवाच प्रब्रूयादित्यर्थ. । आचार्यस्याप्यय नियमो यन्न्यायप्राप्तसच्छिष्यनिस्तारणमविद्यामहोदधेः ।

शकर.

( २ ) प्रशान्तेति । एतेन श्रवणोपयुक्तमवधान विव-क्षितम् । न तूपासनोपयुक्तात्यन्तेन्द्रियजयादिः । अक्षर स्वरूपेणाविकारम् । सत्य गुणतोऽप्यविकारम् । आभ्या-मचिज्जीवव्यावृत्ति. । * रग.

इति प्रथम मुण्डकम् ॥

---

## द्वितीयं मुण्डकम्

अक्षरात् सृष्टि

**तदेतत्सत्यम् । यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रश. प्रभवन्ते सरूपा. ।**
**तथाक्षराद्विविधा सोम्य भावा प्रजायन्ते तत्र चैवापि यन्ति ॥**

* शेष शकरवत् ।

(१) मुड. १।२।१३, ब्रशाकर १।२।२१, रामानुज. १।१।१, श्रीकर. १।२।२१, १।३।६, वल्लभ १।२।२२

(२) मुड २।१।१, ब्रशाकर २।३।१७, भास्कर १।२।२१ प्रभवन्ते ( प्रभवन्ति ) सोम्य ( सौम्य ), रामानुज १।२।२३, १।४।२०, श्रीकर २।१।८, २।३।१, ४०, ४।३।७, विज्ञान १।१।२ ( पृ ५४ ), २।३।४३, ३।२।१६, २५, २८, ३।३।३४

( १ ) अपरविद्याया सर्वं कार्यमुक्तम् । स च ससारो यत्सारो यस्मान्मूलादक्षरात्सभवति, यस्मिंश्च प्रलीयते, तदक्षर पुरुषाख्य सत्यम् । यस्मिन् विज्ञाते सर्वमिद विज्ञात भवति तत् परस्या ब्रह्मविद्याया विषय·, स वक्तव्य इत्युत्तरो ग्रन्थ आरभ्यते । यदपरविद्याविषय कर्मफललक्षण सत्य तदापेक्षिकम् । इद तु परविद्याविषय परमार्थत., सल्लक्षणत्वात् । तदेतत्सत्य यथाभूत विद्याविषयम् । अविद्याविषयत्वाच्चानृतमितरत्, अत्यन्तपरोक्षत्वात् । कथ नाम प्रत्यक्षवत्सत्यमक्षर प्रतिपद्येरन्निति दृष्टान्तमाह — यथा सुदीप्तात् सुष्ठु दीप्तादिद्धात् पावकात् अग्ने. विस्फुलिङ्गाः अग्न्यवयवाः सहस्रश. अनेकश. प्रभवन्ते निर्गच्छन्ति सरूपा. अग्निसलक्षणा., एव तथोक्तलक्षणादक्षरात् विविधा· नानादेहोपाधिभेदमनुविधीयमानत्वाद्विविधा. हे सोम्य, भावा. जीवा. आकाशादिव घटादिपरिच्छिन्ना: सुषिरभेदाः घटाद्युपाधिप्रभेदमनुभवन्ति, एव नानानामरूपकृतदेहोपाधिप्रभवमनुप्रजायन्ते, तत्र चैव तस्मिन्नेवाक्षरेऽपि यन्ति देहोपाधिविलयमनुलीयन्ते घटादिविलयमन्विव सुषिरभेदा । यथा आकाशस्य सुषिरभेदोत्पत्तिप्रलयनिमित्तत्व घटाद्युपाधिकृतमेव तद्वदक्षरस्यापि नामरूपकृतदेहोपाधिनिमित्तमेव जीवोत्पत्तिप्रलयनिमित्तत्वम् । शाकर

( २ ) तथेति । एवमेव सूक्ष्मचिदचिच्छरीरात् अक्षरात् ब्रह्मणस्तत्सरूपा नानाविधस्थूलरूपचिदचिद्रूपा· भवन्तीति भावाः कार्यवर्गा. उत्पद्यन्ते तत्रैव लीयन्ते च । * रग

( ३ ) 'तदेतत्सत्य यथा सुदीप्तात्' इत्यादिना 'सोऽविद्याग्रन्थिं विकिरतीह सोम्य' (मुउ २।१।१०) इत्यन्तेन पूर्वोक्तस्याक्षरस्य भूतयोने. परस्य ब्रह्मणः परमपुरुषस्यानुक्तै स्वरूपगुणैः सह सर्वभूतान्तरात्मतया विश्वशरीरत्वेन विश्वरूपत्व तस्माद्विश्वसृष्टिं च विस्पष्टमभिधाय . . . । रामानुज १।२।२३

( ४ ) यद्यपि जीवा अपि ब्रह्मवदेव विभुचिन्मात्ररूपास्तथाप्युपाध्यवच्छेदेनैवाभिव्यक्तपरिच्छिन्नचैतन्यतया विस्फुलिङ्गतुल्या भवन्ति । १।१।२ (पृ. ५४)

तस्मात् पितापुत्रवदग्निविस्फुलिङ्गसूर्यतत्किरणादिवच्चैव ब्रह्मजीवयोरंशांशिभावो मन्तव्य·, तथा च श्रुति· — 'यथा सुदीप्तात्' इत्यादि. ।

विज्ञान २।३।४३

परात्पर पुरुष , पञ्चभूताना प्राणमनइन्द्रियाणा च स एव कारण, स एव विश्वरूपदेहधारी आत्मा, पुरुषात्तस्मात् सर्वा सृष्टि वेदयज्ञफलादिरूपा

[1]दिव्यो ह्यमूर्त. पुरुष सबाह्याभ्यन्तरो ह्यज ।
अप्राणो ह्यमना शुभ्रो ह्यक्षरात्परत. पर· ॥

( १ ) नामरूपबीजभूतादव्याकृताख्यात्स्वविकारापेक्षया परादक्षरात्पर यत्सर्वोपाधिभेदवर्जितमक्षरस्यैव स्वरूपमाकाशस्येव सर्वमूर्तिवर्जित नेति नेतीत्यादिविशेषण विवक्षन्नाह — दिव्यो द्योतनवान् स्वयज्योतिष्ट्वात् । दिवि वा स्वात्मनि भव अलौकिको वा । हि यस्मादमूर्तः सर्वमूर्तिवर्जितः पुरुष पूर्ण· पुरि शयो वा । दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरः सह बाह्याभ्यन्तरेण वर्तते इति । अजः न जायते कुतश्चित्, स्वतोऽन्यस्य जन्मनिमित्तस्य चाभावात् । यथा जलबुद्बुदादेर्वाय्वादि । यथा नभःसुषिरभेदाना घटादि । सर्वभावविकाराणा जनिमूलत्वात्तत्प्रतिषेधेन सर्वे प्रतिषिद्धा भवन्ति । सबाह्याभ्यन्तरो ह्यजः अत अजरोऽमृतोऽक्षरो ध्रुवोऽभय इत्यर्थ । यद्यपि देहाद्युपाधिभेददृष्टीनां अविद्यावशाद्देहभेदेषु सप्राण समना सेन्द्रिय· सविषय इव प्रत्यवभासते तलमलादिमदिवाकाश,

(१) मुउ २।१।२, अशाकर १।१।४ (पृ ५८), १।२।१, २, २१, २२, १।४।३, २।१।२६, २।४।२, ३।२।१४, ४।३।१४, भास्कर १।२।१, २२, २।१।२६, ३।२।१५ सबाह्या (स बाह्या), रग भास्करवत्, रामानुज १।१।४ (पृ १५२), १।२।१, २२, २३, १।३।१९, २।१।८, ३।२।३५, निंबार्क १।२।२३, ब्रमध्व १।२।२१, २२, श्रीकंठ १।२।२३, श्रीकर १।१।१ (पृ ५), १।१।५ (पृ ५४), १।२।२२, २३, १।३।२, १।४।३, २।१।१३, ३।२।११, १४, ४।४।५, ७, वल्लभ. १।२।२१ भास्करवत्, विज्ञान १।१।५ (पृ १३७), १।१।२१, १।२।२२, १।३।१० भास्करवत्, बलदेव १।२।१, २१.

* शेषं शकरवत् ।

तथापि तु स्वतः परमार्थदृष्टीनामप्राण· अविद्यमान क्रियाशक्तिभेदवाश्चलनात्मको वायुर्यस्मिन्नसावप्राण । तथा अमना· अनेकज्ञानशक्तिभेदवत्सकल्पाद्यात्मक मनोऽप्यविद्यमान यस्मिन् सोऽयममना । अप्राणो ह्यमनाश्चेति प्राणादिवायुभेदा कर्मेन्द्रियाणि तद्विषयाश्च तथा च बुद्धिमनसी बुद्धीन्द्रियाणि तद्विषयाश्च प्रतिषिद्धा वेदितव्या । तथा श्रुत्यन्तरे 'ध्यायतीव लेलायतीव' (बृउ ४।३।७) इति । यस्माच्चैव प्रतिषिद्धोपाधिद्वयस्त स्माच्छुभ्र शुद्ध । अतोऽक्षरात् नामरूपबीजोपाधिलक्षित स्वरूपात् सर्वकार्यकारणबीजत्वेनोपलक्ष्यमाणत्वात्पर तदुपाधिलक्षणमव्याकृताख्यमक्षर सर्वविकारेभ्य, तस्मात्प रतोऽक्षरात्परो निरुपाधिक पुरुष इत्यर्थ । यस्मिंस्तदाकाशाख्यमक्षर सव्यवहारविषयमोत प्रोत च । कथ पुनरप्राणादिमत्त्व तस्येत्युच्यते — यदि हि प्राणादय प्रागुत्पत्ते· पुरुष इव स्वेनाऽऽत्मना सन्ति तदा पुरुषस्य प्राणादिना विद्यमानेन प्राणादिमत्त्व भवेत्, न तु ते प्राणादय प्रागुत्पत्ते पुरुष इव स्वेनाऽऽत्मना सन्ति तदा । अतोऽप्राणादिमान् पर· पुरुष । यथाऽनुत्पन्ने पुत्रे अपुत्रो देवदत्तः । * शकर

(२) अव्याकृतादक्षराद्यः पर· समष्टिपुरुषस्तस्मादपि कारणत्वेन पर इत्यर्थ । प्रधानपुरुषयोस्तज्जन्यत्वादिति भाव· । अक्षरात्परत. इत्यत्र अक्षरशब्दोऽश्नुत इति वा न क्षरतीति वा व्युत्पत्त्या स्वविकारव्यापकनामान्तराभिलापयोग्यक्षरणाभाववति अव्याकृते वर्तते । न तु भूतयोन्यक्षरे, भूतयोन्यक्षरस्य स बाह्याभ्यन्तर इत्यत्र तच्छब्दनिर्दिष्टस्य तस्मादेव परत्वासभवात् ।

† रग.

(३) अस्यार्थ. — अक्षर प्रधान, तस्मात्परतो जीवादपि यः परः उत्तमस्तत्प्रेरकत्वात्स दिव्य पुरुष इति । विज्ञान १।२।२२

**एतस्माज्जायते प्राणो मन सर्वेन्द्रियाणि च ।**
**ख वायुर्ज्योतिराप पृथिवी विश्वस्य धारिणी ॥**

(१) कथ ते न सन्ति प्राणादय इत्युच्यते— यस्मादेतस्मादेव पुरुषान्नामरूपबीजोपाधिलक्षितात् जायते उत्पद्यते अविद्याविषयो विकारभूतो नामधेयोऽनृतात्मक प्राण., 'वाचारम्भण विकारो नामधेयम्' 'अनृतम्' इति श्रुत्यन्तरात् । न हि तेनाविद्याविषयेणानृतेन प्राणेन सप्राणत्व परस्य स्यादपुत्रस्य स्वप्नदृष्टेनेव पुत्रेण सपुत्रत्वम् । एव मन· सर्वाणि चेन्द्रियाणि विषयाश्चैतस्मादेव जायन्ते । तस्मात्सिद्धमस्य निरुपचरितमप्राणादिमत्त्वमित्यर्थ । यथा च प्रागुत्पत्ते. परमार्थतोऽसन्तस्तथा प्रलीनाश्चेति द्रष्टव्या । यथा करणानि मनश्चेन्द्रियाणि तथा शरीरविषयकारणानि भूतानि खमाकाश, वायुरन्तर्बाह्य आवहादिभेद, ज्योतिरग्नि, आप उदक, पृथिवी धरित्री विश्वस्य सर्वस्य धारिणी । एतानि च शब्दस्पर्शरूपरसगन्धोत्तरोत्तरगुणानि पूर्वपूर्वगुणसहितानि एतस्मादेव जायन्ते । शकर.

(२) 'अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्' — सदाकाशयोरन्तरा मध्ये विज्ञानमनसी जन्मादिमती भवत । शङ्कानिराकरण मुखेनैवात्र हेतु वक्ष्यति । विज्ञान महदाख्या बुद्धिर्निश्चयात्मकवृत्तिमती, मनश्च सकल्पादिवृत्तिमत् । अनयोरेव चित्ताहकारयोर्निवेश । अत्र शङ्कते — ननु क्रमेणाऽऽकाशाद्यनन्तरमेव ते उत्पद्यन्ते । कुत । तल्लिङ्गात् । 'तत्तेजोऽसृजत' इति तेज·सृष्ट्यनन्तरमेव 'तत्तेज ऐक्षत बहु स्याम्' इत्येवरूपस्यान्तःकरणव्यापारस्य श्रवणात् । एव भूतान्तरेऽपि भूतसृष्ट्यनन्तर-

* भास्कर चतुर्थचरणव्याख्यानमात्र शकरवत् ।

† शेष शकरेण गतार्थम् ।

(१) मुउ २।१।३, ब्रशकर १।२।२३, २।३।१०, १५, २।४।१, ८, ९, १७, भास्कर २।३।१५, २।४।१, ८, १७, रग राप पृथिवी (रापश्च पृथ्वी), रामानुज २।२।४०, २।३।१, १३, १५, २।४।१, ७ ८, १६, निबार्क २।३।१५, २।४।८, ९, १७, ब्रमध्व २।३।११, २।४।१, श्रीकठ २।३।१५, १६, २।४।८, १६, श्रीकर १।१।११, १।२।२३, १।३।१, १।४।१४, २२, २३, २।१।२, ६, १४, २२, २६, ३२, २।२।४३, ४५, २।३।१, ९, १०, १४, २।४।१, ३, ६, ७, १४, १५, ४।२।४, ५, वल्लभ १।२।२१, १।४।१४, २।४।३, ९, १८, १७, २१, विज्ञान १।२।२३, २।३।१५, १६, ३१, २।४।१, ८, १३, १८ राप (रापश्च), बलदेव. २।४।१, ८, १७, १८

मेव तदीक्षणस्य श्रवणादित्यर्थः । समाधत्ते — न, अविशेषादिति । अन्तरोत्पत्तावपि लिङ्गानामविशेषात् अविशिष्टत्वात् । 'एतस्माज्जायते प्राणो०' इत्यादि-श्रुतौ पाठक्रमस्यान्तरोत्पत्तिलिङ्गस्य सत्त्वादित्यर्थ. । मनः शब्देन अत्रान्तःकरणसामान्यमेवोक्त विशेषान्तरावच नेन गोबलीवर्दन्यायानवकाशात् । २।३।१५

'तथा प्राणा' ' — यथा विज्ञानमनसी सदाकाशयोरन्तराले जन्मादिमती तथैव प्राणा' दशेन्द्रियाण्यपि परमेश्वरात्तयोरन्तराल एव जायन्ते सृष्टिव्युत्क्रमेण प्रली यन्ते परमेश्वराधिष्ठिताश्च तिष्ठन्ति । कुत' । अविशेषा-दित्युक्तहेतोरेवेत्यर्थः । २।४।१

'श्रेष्ठश्च' — तथेत्यत्राप्यनुवर्तते । तथा श्रेष्ठः पञ्चवृत्ति. प्राणोऽपि परमेश्वरात् सदाकाशयोरन्तरैवोत्पद्यते प्रलीयते च परमेश्वराधिष्ठितश्च तिष्ठति । लिङ्गाविशेषात् । २।४।८

तदय सकलश्रुतिस्मृतिसाख्ययोगैकवाक्यतया महा भूतपर्यन्ताया' सृष्टेः क्रम. कथ्यते— प्रथम तावदीश्वराधिष्ठानेन सयुक्ताभ्यां जीवप्रधानाभ्या महानुत्पद्यते । स च क्रियाशक्त्या प्राण. निश्चयशक्त्या च बुद्धि. । तयो र्मध्ये प्रथम प्राणवृत्तिरुत्पद्यते । तदनन्तर अङ्कुरस्य वृक्षभाववदहङ्काररूप अन्त.करणस्य वृत्तिविशेष उत्पद्यते । ततश्च तथैव मन, तदनन्तरमिन्द्रियाणि, तत इन्द्रियवदन्योन्यकार्यकारणभावरहितानि पञ्चतन्मात्राणि सूक्ष्मतरभूतानि, ततश्च यथोक्ताः स्थूलमहाभूतपरमाणव. सूक्ष्मा उत्पद्यन्ते । ततः पर च तैत्तिरीयछान्दोग्योक्ता आकाशादिक्रमेण महाभूतपञ्चकसृष्टिरवगन्तव्या । ततश्च वक्ष्यमाण छान्दोग्यीय त्रिवृत्करण ब्रह्माण्डादिसृष्टिरूप मिति । विज्ञान २।४।१३

**अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदा ।**
**वायु प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥**

(१) सक्षेपतः परविद्याविषयमक्षर निर्विशेष पुरुष सत्य 'दिव्यो ह्यमूर्तः' इत्यादिना मन्त्रेण उक्त्वा पुनस्तदेव सविशेष विस्तरेण वक्तव्यमिति प्रववृते सक्षेपविस्तरोक्तो हि पदार्थः सुखाधिगम्यो भवति सूत्रभाष्योक्तिवदिति । योऽपि प्रथमजात्प्राणाद्धिरण्यगर्भात् जायते अण्डस्यान्तर्विराट् स तत्त्वान्तरितत्वेन लक्ष्यमाणोऽप्येतस्मादेव पुरुषाज्जायते एतन्मयश्चेत्येतदर्थमाह, त च विशिनष्टि — अग्निर्द्युलोक । 'असौ वाव लोको गौतमाग्निः' इति श्रुते. । मूर्धा यस्योत्तमाङ्ग शिरः । चक्षुषी चन्द्रश्च सूर्यश्चेति चन्द्रसूर्यौ । यस्येति सर्वत्रानुषङ्गः कर्तव्य अस्येत्यस्य पदस्य वक्ष्यमाणस्य यस्येति विपरिणाम कृत्वा । दिश श्रोत्रे यस्य । वाग्विवृता उद्घाटिताः प्रसिद्धा वेदा यस्य । वायुः प्राणो यस्य । हृदय अन्तःकरण विश्व समस्त जगदस्य यस्येत्येतत् । सर्वं ह्यन्तःकरणविकारमेव जगत्, मनस्येव सुषुप्ते प्रलयदर्शनात्, जागरितेऽपि तत एवाग्निविस्फुलिङ्गवद्विप्रतिष्ठानात् । यस्य च पद्भ्या जाता पृथिवी । एष देवो विष्णुरनन्त. प्रथमशरीरी त्रैलोक्यदेहोपाधि' सर्वेषा भूतानामन्तरात्मा । स हि सर्वभूतेषु द्रष्टा श्रोता मन्ता विज्ञाता सर्वकारणात्मा, पञ्चाग्निद्वारेण च याः ससरन्ति प्रजास्ता अपि तस्मादेव पुरुषात् प्रजायन्त इत्युच्यते ।

शकर.

(२) 'रूपोपन्यासाच्च' — कुतश्च परमेश्वरो भूतयोनि —अपि च 'अक्षरात्परतः पर.' इत्यस्यानन्तर 'एतस्माज्जायते प्राणः' इति प्राणप्रभृतीना पृथिवीपर्यन्ताना तत्त्वानां सर्गमुक्त्वा तस्यैव भूतयोनेः सर्वविकारात्मक रूपमुपन्यस्यमान पश्यामः— 'अग्निर्मूर्धा चक्षुषी०' इति । तच्च परमेश्वरस्यैवोचित, सर्वविकारकारणत्वात्, न शारीरस्य तनुमहिम्न. । नापि प्रधानस्याय रूपोपन्यासः सभवति, सर्वभूतान्तरात्मत्वासभवात् । तस्मात्परमेश्वर एव भूतयोनिर्नेतराविति गम्यते ।

कथ पुनर्भूतयोनेरय रूपोपन्यास इति गम्यते । प्रकरणात्, 'एषः' इति च प्रकृतानुकर्षणात् । भूतयोनिं हि प्रकृत्य 'एतस्माज्जायते प्राणः' 'एष सर्वभूतान्तरात्मा' इति वचन भूतयोनिविषयमेव भवति । यथा

---

(१) **मुड** २।१।४, **अशकर** १।२।२३, **भास्कर** १।२।२३, **रामानुज** १।२।२४, २६, **निंबार्क** १।२।२४, **श्रीकंठ** १।२।२४, २६, **श्रीकर** १।२।२३, २५, **वल्लभ** १।२।२१, २३, **विज्ञान** १।२।२३

उपाध्याय प्रकृत्य ‘ एतस्मादधीष्व, एष वेदवेदाङ्गपारगः ’ इति वचन उपाध्यायविषय भवति, तद्वत् । कथ पुनरदृश्यत्वादिगुणकस्य भूतयोनेर्विग्रहवद्रूप सभवति । सर्वात्मत्वविवक्षयेदमुच्यते, न तु विग्रहवत्त्वविवक्षयेत्यदोषः । ‘ अहमन्नम्, अहमन्नादः ’ ( तैउ ३।१०।६ ) इत्यादिवत् ।

अन्ये पुनर्मन्यन्ते—नाय भूतयोनेरुपन्यास , जायमानत्वेनोपन्यासात् । ‘ एतस्माज्जायते प्राणो० ’ इति हि पूर्वत्र प्राणादिपृथिव्यन्त तत्त्वजात जायमानत्वेन निरदिक्षत् । उत्तरत्रापि च ‘ तस्मादग्निः समिधो यस्य सूर्य. ’ इत्येवमादि ‘ अतश्च सर्वा ओषधयो रसाश्च ’ इत्येवमन्त जायमानत्वेनैव निर्देक्ष्यति । इहैव कथमकस्मादन्तराले भूतयोनेः रूपमुपन्यसेत् । सर्वात्मत्वमपि सृष्टिं परिसमाप्योपदेक्ष्यति — ‘ पुरुष एवेद विश्व कर्म ’ ( मुउ २।१।१० ) इत्यादिना । श्रुतिस्मृत्योश्च त्रैलोक्यशरीरस्य प्रजापतेर्जन्मादि निर्दिश्यमानमुपलभामहे— ‘ हिरण्यगर्भ समवर्तताग्रे भूतस्य जात पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमा कस्मै देवाय हविषा विधेम ॥ ’ ( ऋस. १०।१२१।१ ) इति । समवर्ततेति अजायतेत्यर्थः । तथा ‘स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिकर्ता स भूताना ब्रह्माऽग्रे समवर्तत ॥’ (मार्कण्डेयपु० ४५।६४) इति च । विकारपुरुषस्यापि सर्वभूतान्तरात्मत्व सभवति, प्राणात्मना सर्वभूतानामध्यात्ममवस्थानात् । अस्मिन्पक्षे ‘ पुरुष एवेद विश्व कर्म ’ इत्यादिसर्वरूपोपन्यास· परमेश्वरप्रतिपत्तिहेतुरिति व्याख्येयम् ।

ब्रशकर १।२।२३

( ३ ) हिरण्यगर्भस्यैतद्रूपमिति केचिद्वदन्ति । तदयुक्त, प्रकरणविरोधात् । प्रकरणिनि परमकारणे यदिद रूप नोपपद्यते तदाऽन्यत्र सचार्येत अप्रस्तुते । प्रत्युत हिरण्यगर्भस्यापीद रूप परमात्मद्वारेणोपचर्यते, नान्यथेति स्थितम् ।

* भास्कर. १।२।२३

* रामानुजादीनां सर्वेषां मते भास्करवत् परमात्मनो रूपमिदम् । विज्ञानमते तु विराज एतद्रूपम् ।



( ४ ) जगत्सर्वमस्य देहान्तर्वर्तिहृदयाख्यमांसविशेष· । पद्भ्या पृथिवी पादावेव पृथिवीत्यर्थ । ‘ प्रकृत्यादिभ्य उपसख्यानम् ’ इति तृतीया । सर्वभूतानां तच्छरीरत्वात् सर्वेषामन्तरात्मेत्यर्थ. ।

* रग

**तस्मादग्निः समिधो यस्य सूर्यः सोमात्पर्जन्य ओषधय पृथिव्याम् ।**
**पुमान् रेत· सिञ्चति योषिताया बह्वीः प्रजाः पुरुषात्सप्रसूताः ॥**

तस्मात् परस्मात् पुरुषात् प्रजावस्थानविशेषरूपोऽग्नि । स विशेष्यते—समिधो यस्य सूर्यः समिध इव समिधः । सूर्येण हि द्युलोक समिद्ध्यते । ततो हि द्युलोकाग्निष्पन्नात् सोमात् पर्जन्यो द्वितीयोऽग्नि सभवति । तस्माच्च पर्जन्यादोषधय· पृथिव्या सभवन्ति । ओषधिभ्यः पुरुषाग्नौ हुताभ्य उपादानभूताभ्य. पुमानग्नी रेतः सिञ्चति योषिताया योषिति योषाग्नौ स्त्रियामिति । एव क्रमेण बह्वी. बह्वय. प्रजा. ब्राह्मणाद्या. पुरुषात्परस्मात्सप्रसूताः समुत्पन्ना. । † शकर.

**तस्मादृच साम यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च ।**
**सवत्सरश्च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्य ॥**

( १ ) किंच कर्मसाधनानि फलानि च तस्मादेवेत्याह — कथ, तस्मात्पुरुषादृचो नियताक्षरपादावसानाः गायत्र्यादिच्छन्दोविशिष्टा मन्त्रा. । साम पाञ्चभक्तिक साप्तभक्तिक च स्तोभादिगीतविशिष्टम् । यजूंषि अनियताक्षरपादावसानानि वाक्यरूपाणि । एव त्रिविधा मन्त्रा. । दीक्षा मौञ्ज्यादिलक्षणाः कर्तृनियमविशेषाः । यज्ञाश्च सर्वेऽग्निहोत्रादयः । क्रतव· सयूपाः । दक्षिणाश्चैकगवाद्यपरिमितसर्वस्वान्ताः । सवत्सरश्च कालः कर्माङ्ग-

* अस्येतिपदविपरिणाम वर्जयित्वा शेष शकरेण गतार्थम् ।

† रग शकरवत् ।

(१) मुउ २।१।५, ब्रशंकर १।२।२३, रंग बह्वी. ( बह्वय ); विज्ञान. २।३।१७, ४३.

(२) मुउ २।१।६.

भूतः । यजमानश्च कर्ता । लोकास्तस्य कर्मफलभूता. । ते विशेष्यन्ते — सोमो यत्र येषु लोकेषु पवते पुनाति लोकान्, यत्र येषु सूर्यस्तपति च । ते च दक्षिणायनोत्तरायणोत्तरमार्गद्वयगम्या विद्वदविद्वत्कर्तृफलभूता ।

शकर

( २ ) सोमविकारा क्रतवश्च । ये लोका श्चन्द्रसूर्यकिरणपूता भवन्ति । * रग

**तस्माच्च देवा बहुधा सम्प्रसूता. साध्या मनुष्या पशवो वयासि ।**
**प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥**

( १ ) तस्माच्च पुरुषात् कर्माङ्गभूता देवा बहुधा वस्वादिगणभेदेन सम्प्रसूता. सम्यक् प्रसूता. । साध्या. देवविशेषा । मनुष्या कर्माधिकृताः । पशवो ग्राम्यारण्या । वयासि पक्षिण. । जीवन च मनुष्यादीना प्राणापानौ । व्रीहियवौ हविरर्थौ । तपश्च कर्माङ्ग पुरुषसस्कारलक्षण स्वतन्त्र च फलसाधनम् । श्रद्धा यत्पूर्वक. सर्वपुरुषार्थसाधनप्रयोगश्चित्तप्रसाद आस्तिक्यबुद्धि' । तथा सत्यमनृतवर्जन यथाभूतार्थवचन चापीडाकरम् । ब्रह्मचर्यं मैथुनासमाचार । विधिश्चेतिकर्तव्यता ।

शकर

( २ ) बहुधा कर्मजाऽऽजानजादिभेदाच्च बहुधेत्यर्थः । यवो दीर्घशूकधान्यविशेष । व्रीहियवशब्दौ धान्यमात्रोपलक्षकौ । विधीयते इति विधि. नित्यनैमित्तिकादिः । † रग

**सप्त प्राणा प्रभवन्ति तस्मात्सप्तार्चिष. समिध सप्त होमा' ।**
**सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिता सप्त सप्त ॥**

( १ ) किंच सप्त शीर्षण्याः प्राणास्तस्मादेव पुरुषात् प्रभवन्ति । तेषा च सप्तार्चिषो दीप्तयः स्वविषयावद्योतनानि । तथा सप्त समिध. सप्त विषयाः । विषयैर्हि समिध्यन्ते प्राणा. । सप्त होमास्तद्विषयविज्ञानानि 'यदस्य विज्ञान तज्जुहोति' इति श्रुत्यन्तरात् । किंच सप्त इमे लोका इन्द्रियस्थानानि, येषु चरन्ति सचरन्ति प्राणाः । प्राणा येषु चरन्तीति प्राणाना विशेषणमिद प्राणापानादिनिवृत्त्यर्थम् । गुहायां शरीरे हृदये वा स्वापकाले शेरते इति गुहाशया । निहिताः स्थापिताः धात्रा सप्त सप्त प्रतिप्राणिभेदम् । यानि च आत्मयाजिना विदुषा कर्माणि कर्मफलानि चाविदुषा च कर्माणि तत्साधनानि कर्मफलानि च सर्वं चैतत्परस्मादेव पुरुषात् सर्वज्ञात्प्रसूतमिति प्रकरणार्थ. । शकर

( २ ) तस्मादक्षराच्छीर्षण्यानि चक्षु.श्रोत्रनासिकारन्ध्रयुग्मास्यसचारीणि सप्तेन्द्रियाणि उत्पद्यन्ते । सप्तार्चिष इति । गार्हपत्याद्या अग्नय., इन्धनानि, ( काली )-प्रभृतय. सप्त जिह्वाश्च प्रभवन्तीति पूर्वेणान्वय । सप्तेति । इमे सप्तापि लोका उत्पन्नाः । येषु लोकेषु हृदयगुहायां सुषुप्तिवेलाया शयाना सप्त प्राणाश्चक्षुरादिगोलकप्रदेशेषु धात्रा निहिताः सचरन्तीत्यर्थ । सप्त सप्तेति वीप्सा पुरुषभेदाभिप्राया । रग.

**अतः समुद्रा गिरयश्च सर्वेऽस्मात्स्यन्दन्ते सिन्धव सर्वरूपाः ।**
**अतश्च सर्वा ओषधयो रसश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥**

( १ ) अत. पुरुषात्समुद्रा. सर्वे क्षाराद्या' । गिरयश्च हिमवदादयोऽस्मादेव पुरुषात्सर्वे । स्यन्दन्ते स्रवन्ति गङ्गाद्या' सिन्धवो नद्य सर्वरूपाः बहुरूपाः । अस्मादेव पुरुषात्सर्वा ओषधयो व्रीहियवाद्याः । रसश्च मधुरादिः षड्विधः । येन रसेन भूतै' पञ्चभिः स्थूलै. परिवेष्टितस्तिष्ठते तिष्ठति ह्यन्तरात्मा लिङ्ग सूक्ष्म शरीरम् । तद्ध्यन्तराले शरीरस्य आत्मनश्च आत्मवद्वर्तते इत्यन्तरात्मा । शकर.

( २ ) ननु पृथिव्या एवौषधयो जायमाना दृश्यन्ते, इक्ष्वादिभ्यो रसा जायमाना दृश्यन्ते, कथमक्ष-

---

* शेष शकरेण गतार्थम् ।

† शेष शकरवत् ।

(१) मुउ २।१।७

(२) मुउ २।१।८, अशकर २।४।१, ५ , भास्कर २।४।१, रग होमा. ( जिह्वा ), रामानुज २।४।४, अमध्व २।४।६, श्रीकठ २।४।४; श्रीकर. २।४।४, वल्लभ २।४।५ इमे ( इह ), विज्ञान. २।४।५.

(१) मुउ २।१।९, रग रसश्च ( रसाश्च )

रात्सर्वं जायत इत्युच्यते इत्याशङ्क्य आह—येनेति । यस्मात्कारणादेषोऽक्षरपुरुषः सर्वैर्भूतैः परिवृतः सन् तदन्तरात्मतया वर्तते, तस्मात् पृथिव्यादिभ्यो जायमाना अपि अक्षरात् ब्रह्मणो जाता इति शक्यते वक्तुमिति भाव' । रग

सर्वात्मरूपपरमपुरुषस्य हृदि उपलब्धि
अविद्याहानिकरी

**पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् ।**
**एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ॥**

(१) एव पुरुषात्सर्वमिदं संप्रसूतम् । अतो वाचारम्भणं विकारो नामधेयं अनृतं पुरुष इत्येव सत्यम् । अत' पुरुष एवेदं विश्वं सर्वम् । न विश्वं नाम पुरुषादन्यत् किंचिदस्ति । अतो यदुक्तं तदेतदभिहितं 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति । एतस्मिन् हि परस्मिन्नात्मनि सर्वकारणे पुरुषे विज्ञाते पुरुष एवेदं विश्वं नान्यदस्तीति विज्ञातं भवतीति । किं पुनरिदं विश्वमित्युच्यते—कर्म अग्निहोत्रादिलक्षणम् । तपो ज्ञानं तत्कृतं फलं अन्यदेतावद्धीदं सर्वम् । तच्चैतद्ब्रह्मणः कार्यं, तस्मात्सर्वं ब्रह्म परामृतं परममृतं अहमेवेति यो वेद निहितं स्थितं गुहायां हृदि सर्वप्राणिनां, स एव विज्ञानादविद्याग्रन्थिं ग्रन्थिमिव दृढीभूतामविद्यावासना विकिरति विक्षिपति नाशयतीह जीवन्नेव न मृत. सन् हे सोम्य प्रियदर्शन ।

शकर.

(२) यस्मादसौ सर्वभूतान्तरात्मा तस्मात्सर्वमिदं पुरुषोपादानकत्वात्पुरुष एव, तस्मात्तद्विज्ञाने सर्वस्यापि ज्ञानमुत्पद्यते इति भावः । तस्य जगत्सृष्ट्यनुकूलः कर्मशब्दितो व्यापारः । स्रष्टव्यालोचनात्मकं तप' । 'एको व्यापी सदा शुद्धो निर्गुण प्रकृतेः पर.' इति ब्रह्मशब्दितं प्रकृतिपरभूतं मुक्तात्मनाममृतवत्परमानन्दतया भोग्यभूतं ब्रह्माप्यक्षरपुरुष एवेत्यर्थः । हे सोम्याहं हृदयगुहावर्त्येतदक्षरं ब्रह्मेह लोके यो वेद स ग्रन्थिवद्दुर्मोचामविद्यां विकिरति निरस्यति । कॄ विक्षेप इति धातुः । रग

हृदयस्थसर्वात्मकाक्षरब्रह्मविद्याविधि

**आवि' सनिहितं गुहाचरं नाम महत्पदमत्रैतत्समर्पितम् ।**
**एजत्प्राणन्निमिषच्च यदेतज्जानथ सदसद्वरेण्यं परं विज्ञानाद्यद्वरिष्ठं प्रजानाम् ॥**

(१) अरूपं सदक्षरं केन प्रकारेण विज्ञेयमित्युच्यते — आवि. प्रकाशं सनिहितं, वागाद्युपाधिभिः 'ज्वलति भ्राजति' इति श्रुत्यन्तराच्छब्दादीनुपलभमानवदवभासते, दर्शनश्रवणमननविज्ञानाद्युपाधिधर्मैराविर्भूतं सल्लक्ष्यते हृदि सर्वप्राणिनाम् । यदेतदाविर्ब्रह्म सनिहितं सम्यक् स्थितं हृदि तद्गुहाचरं नाम गुहायां चरतीति दर्शनश्रवणादिप्रकारैर्गुहाचरमिति प्रख्यातम् । महत् सर्वमहत्त्वात् । पदं पद्यते सर्वेणेति सर्वपदार्थास्पदत्वात् । कथं तत् महत्पदमित्युच्यते । यतोऽत्रास्मिन् ब्रह्मण्येतत्सर्वं समर्पितं प्रवेशितं रथनाभाविवारा । एजच्चलत्पक्ष्यादि । प्राणत्प्राणितीति प्राणापानादिमन्मनुष्यपश्वादि । निमिषच्च यन्निमेषादिक्रियावत् । यच्चानिमिषत्, चशब्दात् । समस्तमेतदत्रैव ब्रह्मणि समर्पितम् । एतद्यदास्पदं सर्वं जानथ हे शिष्याः, अवगच्छथ तदात्मभूतं भवतां सदसत्स्वरूपं, सदसतोर्मूर्तामूर्तयोः स्थूलसूक्ष्मयोस्तद्व्यतिरेकेणाभावात् । वरेण्यं वरणीयं तदेव हि सर्वस्य नित्यत्वात्प्रार्थनीयम् । परं व्यतिरिक्तं विज्ञानात्प्रजानामिति व्यवहितेन सबन्ध', यल्लौकिकविज्ञानागोचरमिमिति त्यर्थः । यद्वरिष्ठं वरतमं सर्वपदार्थेषु वरेषु तद्ध्येकं ब्रह्मातिशयेन वरं सर्वदोषरहितत्वात् ।

शकर

(२) आविरित्यव्ययं, योगिनामपरोक्षम् । सनिहितं गुहाचरं दुर्विज्ञेयस्वरूपतया प्रसिद्धं सर्वतो महत् पदं प्राप्यभूतमित्यर्थः । एजत् कम्पमानं, जाग्रदिति यावत् । प्राणभृत् । निमिषत्सुप्तम् । जाग्रत्सुप्तादिभेदभिन्नप्राणिजातमत्राक्षरपुरुषेऽर्पितमित्यर्थः । एतज्जानथ

(१) मुड २।१।१०, १।२।२३, १।३।१, २।४।२, भास्कर २।४।२, रामानुज १।२।२३, श्रीकर १।२।२३, १।३।१

(१) मुड २।२।१; रग त्समर्पितम् (त्सर्वमर्पितम्), रामानुज १।२।२३

सदसद्वरेण्यम् । स्थूलसूक्ष्मवस्तुभिराधारत्वेन प्रार्थनीय, आधारभूतमिति यावत् । तादृशमेव ब्रह्मावगच्छतेत्यर्थ. । 'यो विज्ञाने तिष्ठन्' (बृउ ३।७।२२) इति श्रुते विज्ञानशब्दो जीवपर' । विज्ञानात्पर जीवादधिक प्रजानामु(पायो)पेयत्वेन अत्यन्तवरणीयमत्यन्तप्रार्थनीय-मित्यर्थ. । रग

**[१]यदर्चिमद्यदणुभ्योऽणु च यस्मिँल्लोका निहिता लोकिनश्च ।**
**तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मन. ।**
**तदेतत्सत्य तदमृतं तद्वेद्धव्य सोम्य विद्धि ॥**

(१) किंच यत् अर्चिमत् दीप्तिमत्, तद्दीप्त्या आदित्यादि दीप्यते इति दीप्तिमद्ब्रह्म । किंच यत् अणुभ्य श्यामाकादिभ्योऽप्यणु च सूक्ष्मम् । चशब्दात् स्थूलेभ्योऽप्यतिशयेन स्थूल पृथिव्यादिभ्य. । यस्मिँल्लोका भूरादयो निहिता. स्थिताः, ये च लोकिनो लोकनिवासिनो मनुष्यादयश्चैतन्याश्रया हि सर्वे प्रसिद्धाः । तदेतत्सर्वाश्रय अक्षर ब्रह्म स प्राणस्तदु वाङ्मनो वाक्च मनश्च सर्वाणि च करणानि, तदु अन्तश्चैतन्य, चैतन्याश्रयो हि प्राणेन्द्रियादिसर्वसघातः, 'प्राणस्य प्राणम्' इति श्रुत्यन्तरात् । यत्प्राणादीनामन्तश्चैतन्यमक्षर तदेतत्सत्य अवितथ अतोऽमृतमविनाशि तद्वेद्धव्य मनसा ताडयितव्यम् । तस्मिन् मन समाधान कर्तव्यमित्यर्थ. । यस्मादेव हे सोम्य, विद्धि अक्षरे चेतः समाधत्स्व ।

शकर

(२) यदर्चिमदिति । आर्चिःशब्दितदीप्तिमत्त्व च विग्रहद्वारा द्रष्टव्यम् । अमृत असंसारि भोग्यमिति वाऽर्थः । * रग

प्रणवोपासना ब्रह्मविद्यासाधनम्

**[२]धनुर्गृहीत्वौपनिषद महास्त्र शरं ह्युपासानिशितं सधयीत ।**
**आयम्य तद्भावगतेन चेतसा लक्ष्य तदेवाक्षरं सोम्य विद्धि ॥**

(१) कथ वेद्धव्यमित्युच्यते — धनुरिष्वासन गृहीत्वा आदाय औपनिषद उपनिषत्सु भव प्रसिद्ध महास्त्र महच्च तदस्त्र च महास्त्र धनु । तस्मिन् शरम् । किंविशिष्टमित्याह — उपासानिशित सतताभिध्यानेन तनूकृत, सस्कृतमित्येतत् । सधयीत सधान कुर्यात् । सधाय च आयम्य आकृष्य सेन्द्रियमन्त.करण स्वविषयाद्विनिवर्त्य लक्ष्ये एवावर्जित कृत्वेत्यर्थः । न हि हस्तेनेव धनुष आयमनमिह सभवति । तद्भावगतेन तस्मिन् ब्रह्मण्यक्षरे लक्ष्ये भावना भावस्तद्गतेन चेतसा लक्ष्य तदेव यथोक्तलक्षणमक्षर सोम्य विद्धि । शकर.

(२) उपनिषत्प्रसिद्ध प्रणवाख्य धनुर्गृहीत्वा भगवदुपासनया स्थूलसूक्ष्मशरीराद्विवेचितमष्टाक्षरादिलक्षण-महास्त्रसयोजितमात्मलक्षण शर सदध्यात् । किं कृत्वेत्यत्राह — आयम्येति । भगवत्प्रवणेन चेतसा तद्धनुरायम्य । प्रणवाख्यस्य धनुष आयमन नाम प्रत्यक्परमात्मनो' शेषशेषिभावलक्षणार्थप्रकाशकत्वेनानुसंहितत्वम् । तद्भावगतेन चेतसेति पाठे भावः प्राप्ति, तद्भावगतेन चेतसा तत्प्राप्तीच्छया शरमायम्येत्यर्थः । तस्य च आयमन नाम मनसेन्द्रियान्तःकरणस्य तस्य विषयान्तरविमुखीकरणपूर्वकमक्षराख्यलक्ष्याभिमुखतयाऽवस्थापनम् । हे सोम्य, तदेवाक्षर लक्ष्य लभ्य जानीहीत्यर्थ. । रग

**[१]प्रणवो धनु शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।**
**अप्रमत्तेन वेद्धव्य शरवत्तन्मयो भवेत् ॥**

(१) यदुक्त धनुरादि तदुच्यते— प्रणव ओंकारो धनुः । यथेष्वासन लक्ष्ये शरस्य प्रवेशकारण, तथा आत्मशरस्याक्षरे लक्ष्ये प्रवेशकारणमोंकारः । प्रणवेन ह्यभ्यस्यमानेन सस्क्रियमाणस्तदालम्बनोऽप्रतिबन्धेनाक्षरेऽवतिष्ठते यथा धनुषाऽऽस्त इषुर्लक्ष्ये । अत. प्रणवो धनुरिव धनु । शरो ह्यात्मा उपाधिलक्षण. पर एव जले सूर्यादिवदिह प्रविष्टो देहे सर्वबौद्धप्रत्ययसाक्षितया । स शर इव स्वात्मन्येवार्पितोऽक्षरे ब्रह्मणि, अतो ब्रह्म तल्लक्ष्यमुच्यते लक्ष्य इव मनः

---

* शेष शकरवत् । 'अणु च' इतिचकारार्थो न वर्णित ।

(१) मुउ २।२।२, रग स्सत्य तद (स्सत्यम), श्रीकर १।३।६

(२) मुउ २।२।३, रग सधयीत (सदधीत) द्भावगतेन (द्भागवतेन), श्रीकर १।३।६

(१) मुउ २।२।४.

समाधित्सुभिरात्मभावेन लक्ष्यमाणत्वात् । तत्रैव सति अप्रमत्तेन बाह्यविषयोपलब्धितृष्णाप्रमादवर्जितेन सर्वतो विरक्तेन जितेन्द्रियेणैकाग्रचित्तेन वेद्धव्य ब्रह्म लक्ष्यम् । ततस्तद्वेधनादूर्ध्वं शरवत्तन्मयो भवेत् । यथा शरस्य लक्ष्यैकात्मत्व फल भवति, तथा देहाद्यात्मप्रत्ययतिरस्क रणेनाक्षरैकात्मत्व फलमापादयेदित्यर्थ. ।

शकर

( २ ) यथा लक्ष्ये निमग्नस्य शरस्य लक्ष्यापेक्षया भेदकाकारास्फुरण, एव परमात्मनि प्रणवेन समर्पितस्य प्रत्यगात्मनस्तत्साम्गलक्षणां मुक्तिमापन्नस्य ज्ञानैकाका रस्य देवमनुष्यत्वादिलक्षणभेदकाकारास्फूर्तिः एव तन्म यत्वमिति द्रष्टव्यम् ।

* रग

**यस्मिन् द्यौ पृथिवी चान्तरिक्षमोत मन सह प्राणैश्च सर्वै. ।**
**तमेवैक जानथ आत्मानमन्या वाचो विमुञ्च- थामृतस्यैष सेतु ॥**

( १ ) अक्षरस्यैव दुर्लक्ष्यत्वात्पुनः पुनर्वचन सुलक्ष- णार्थम् । यस्मिन्नक्षरे पुरुषे द्यौ' पृथिवी चान्तरिक्ष च ओत समर्पित मनश्च सह प्राणैः करणैरन्यै' सर्वै., तमेव सर्वाश्रयमेकमद्वितीय जानथ जानीत हे शिष्या. । आत्मानं प्रत्यक् स्वरूप युष्माक सर्वप्राणिना च, ज्ञात्वा चान्या वाचोऽपरविद्यारूपा विमुञ्चथ विमुञ्चत परित्यजत, तत्प्रकाश्य च सर्वं कर्म ससाधनम् । यतोऽ- मृतस्यैष सेतु. एतदात्मज्ञानममृतस्यामृतत्वस्य मोक्षस्य प्राप्तये सेतुरिव सेतुः ससारमहोदधेरुत्तरणहेतुत्वात् ।

तथा च श्रुत्यन्तरम्— 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ' ( श्वेउ ६।१५ ) इति ।

* शकर.

( २ ) 'द्युभ्वाद्यायतन स्वशब्दात्'— इद श्रूयते — 'यस्मिन्द्यौ .. विमुञ्चथामृतस्यैष सेतु ' इति । अत्र यदेतत् द्युप्रभृतीनामोतत्ववचनादायतन किंचिदवगम्यते, तत् किं पर ब्रह्म स्यात् आहोस्वि- दर्थान्तरमिति सदिह्यते । तत्र अर्थान्तर किमप्याय- तन स्यादिति प्राप्तम् । कस्मात् । 'अमृतस्यैष सेतु.' इति श्रवणात् । पारवान् हि लोके सेतु प्रख्यात । न च परस्य ब्रह्मण. पारवत्त्व शक्यमभ्युपगन्तु, 'अनन्तमपारम्' ( बृउ २।४।१२ ) इति श्रव णात् । अर्थान्तरे चायतने परिगृह्यमाणे स्मृतिप्रसिद्ध प्रधान परिग्रहीतव्य, तस्य कारणत्वादायतनत्वोपपत्ते । श्रुतिप्रसिद्धो वा वायुः स्यात्, 'वायुर्वै गौतम तत्सूत्र वायुना वै गौतम सूत्रेणाय च लोक. परश्च लोक. सर्वाणि च भूतानि सहब्धानि भवन्ति' ( बृउ. ३।७।२ ) इति वायोरपि विधारणत्वश्रवणात् । शारीरो वा स्यात्, तस्यापि भोक्तृत्वात् भोग्य प्रपञ्च प्रति आयतनत्वोपपत्तेरिति ।

एव प्राप्ते इदमाह—द्युभ्वाद्यायतनमिति । द्यौश्च भूश्च द्युभुवौ । द्युभुवौ आदी यस्य तदिद द्युभ्वादि यदे- तदस्मिन्वाक्ये द्यौ पृथिव्यन्तरिक्ष मन. प्राणा इत्येव- मात्मक जगदोतत्वेन निर्दिष्टम् । तस्य आयतन पर ब्रह्म भवितुमर्हति । कुत' । स्वशब्दात् । आत्मशब्दादित्यर्थ । आत्मशब्दो हि इह भवति—'तमेवैक जानथ आत्मानम्' इति । आत्मशब्दश्च परमात्मपरिग्रहे सम्यगवकल्पते, नार्थान्तरपरिग्रहे क्वचिच्च स्वशब्देनैव ब्रह्मण आयतनत्व श्रूयते— 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदाय- तना. सत्प्रतिष्ठाः' ( छाउ ६।८।४ ) इति । स्वशब्देनैव चेह पुरस्तादुपरिष्टाच्च ब्रह्म सकीर्त्यते— 'पुरुष एवेद विश्व कर्म तपो ब्रह्म परामृतम्' ( मुउ २।१।१० ) इति, 'ब्रह्मैवेदममृत पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण' ( मुउ २।२।११ ) इति च । तत्र त्वायतनायतनवद्भावश्रवणात् सर्वं ब्रह्मेति च सामाना-

* शेष शकरेण गतार्थम् ।

(१) मुउ २।२।५, ब्रशकर १।३।१, २, ५, ७, २२, भास्कर १।३।१, ५ जानथ आ ( जानथाऽऽ ), रग भास्करवत्, रामानुज १।३।१, ३।२।३०, ३४ भास्कर- वत्, निबार्क १।३।१, ब्रमध्व १।१।८, १।३।१, २, श्रीकठ १।३।१, ३।२।३०, श्रीकर १।१।१ ( पृ १९ ), १।१।४ ( पृ ५१, ५२ ), १।३।१, ५, ३।२।३०, ३४, वल्लभ १।३।१, ३।४।३३, विज्ञान १।१।२ ( पृ ५५ ), १।३।१, २।३।५०, ४।१।१, ३, बलदेव १।१।८, १।३।१, ५, ३।४।३४

* रंग शकरवत् ।

धिकरण्यात् यथा अनेकात्मको वृक्ष शाखा स्कन्धो मूल चेति, एव नानारसो विचित्र आत्मेत्याशङ्का सभवति, ता निवर्तयितु सावधारणमाह — 'तमेवैक जानथ आत्मानम्' इति। एतदुक्त भवति—न कार्यप्रपञ्चविशिष्टो विचित्र आत्मा विज्ञेयः। किं तर्हि। अविद्याकृत कार्यप्रपञ्च विद्यया प्रविलापयन्तस्तमेवैक आयतनभूतमात्मान जानथ एकरसमिति। यथा 'यस्मिन्नास्ते देवदत्तस्तदानय' इत्युक्ते आसनमेवाऽऽनयति, न देवदत्त, तद्वत् आयतनभूतस्यैव एकरसस्याऽऽत्मनो विज्ञेयत्वमुपदिश्यते। विकारानृताभिसधस्य चापवाद' श्रूयते—'मृत्यो' स मृत्युमाप्नोति य इह नानेव पश्यति' (काउ ४।११) इति। सर्वं ब्रह्मेति तु सामानाधिकरण्य प्रपञ्चविलापनार्थं, न अनेकरसताप्रतिपादनार्थं, 'स यथा सैन्धवघनोऽनन्तरोऽबाह्य. कृत्स्नो रसघन एवैव वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्न. प्रज्ञानघन एव'( बृउ ४।५।१३) इत्येकरसताश्रवणात्। तस्मात् द्युभ्वाद्यायतन ब्रह्म।

यत्तूक्त सेतुश्रुतेः सेतोश्च पारवत्त्वोपपत्तेर्ब्रह्मणोऽर्थान्तरेण द्युभ्वाद्यायतनेन भवितव्यमिति। अत्रोच्यते। विधारणत्वमात्रमेव सेतुश्रुत्या विवक्ष्यते, न पारवत्त्वादि। न हि मृद्दारुमयो लोके सेतुर्दृष्ट इति अत्रापि मृद्दारुमय एव सेतुरभ्युपगम्यते। सेतुशब्दार्थोऽपि विधरणत्वमात्र मेव, न पारवत्त्वादि, षिञो बन्धनकर्मण सेतुशब्दव्युत्पत्ते। अपर आह—'तमेवैक जानथ आत्मानम्' इति यदेतत्सकीर्तितमात्मज्ञान, यच्चैतत् 'अन्या वाचो विमुञ्चथ' इति वाग्विमोचन, तदत्रामृतत्वसाधनत्वात् 'अमृतस्यैष सेतु' इति सेतुश्रुत्या सकीर्त्यते, न तु द्युभ्वाद्यायतनम्। तत्र यदुक्त सेतुश्रुतेर्ब्रह्मणोऽर्थान्तरेण द्युभ्वाद्यायतनेन भाव्यमिति, एतदयुक्तम्। * १।३।१

'भेदव्यपदेशात्'— कुतश्च न प्राणभृत् द्युभ्वाद्यायतनत्वेनाऽऽश्रयितव्य.— भेदव्यपदेशश्चेह भवति 'तमेवैक जानथ आत्मानम्' इति ज्ञेयज्ञातृभावेन। तत्र प्राणभृत्तावन्मुमुक्षुत्वात् ज्ञाता, परिशेषादात्मशब्दवाच्य ब्रह्म ज्ञेय द्युभ्वाद्यायतनमिति गम्यते, न प्राणभृत्।

ब्रशकर १।३।५

* ब्रसू. १।३।१ इत्यत्र सर्वेषा ब्रशंकरवद्भाव।

(३) विकारजात तस्मिन्नेव चेतसोपसहृत्य तमेव कारणात्मान जानथ उपासीतेत्यर्थः। सर्वत्र हि विदिनोपक्रम्योपासिनोपसहरति उपासिना चोपक्रम्य विदिनोपसहरति श्रुति, अतो यत्रान्यतरोपादान तदैकार्थ्यतैव प्रत्येतव्या। ये पुनः प्रपञ्चबहिरङ्गो(?) द्युचैतन्यमात्र ध्येयमुपदिशन्ति, तेषां 'सर्वं त परादात्' इति श्रुतिविरोधः। कश्चिदाह—आत्मज्ञान सेतुश्रुत्या निर्दिष्टमिति। तदयुक्तम्। एष इति अनन्तरवृत्तस्य प्रधानस्य वाचक सर्वनाम, नोपसर्जनस्य ज्ञानस्येति।

* भास्कर १।३।१

(४) 'उपपत्तेश्च'— यदुक्त 'अमृतस्यैष सेतु.' इति प्राप्यप्रापकसबन्धव्यपदेशात् प्रापकात्पर प्राप्यमस्तीति, तन्न, प्राप्यस्य परमपुरुषस्य स्वप्राप्तौ स्वस्यैवोपायत्वोपपत्तेः, 'नायमात्मा प्रवचनेन. विवृणुते तनू स्वाम्' (मुउ ३।२।३) इत्यनन्योपायत्वश्रवणात्।

रामानुज ३।२।३४

(५) 'सर्वथाऽपि त एवोभयलिङ्गात्'— एव ज्ञानमार्गीयज्ञानस्थैर्यसाधनमुक्त्वा भक्तिमार्गीयसाधनानां भगवच्छ्रवणादीनामित आधिक्यमावश्यकतां चाऽऽह। भगवच्छ्रवणकीर्तनादय' साधनान्तरवद्विहितत्वेन कर्तव्या एव यद्यपि, तथाऽपि सर्वथाऽपि अन्येषा युगपदुपस्थितौ तदनुरोधमकृत्वाऽपि त एव भगवद्धर्मा एव कर्तव्या इत्यर्थ.। कुतः। श्रुतिलिङ्गात् स्मृतिलिङ्गाच्च। श्रुतिलिङ्ग तु 'तमेव धीरो विज्ञाय प्रज्ञा कुर्वीत ब्राह्मणः। नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापन हि तत्॥' (बृउ ४।४।२१) इति, 'तमेवैक जानथ०' इत्यपि।

वल्लभ ३।४।३३

**अरा इव रथनाभौ सहता यत्र नाड्य स**
**एषोऽन्तश्चरते बहुधा जायमान।**
**ओमित्येवं ध्यायथ आत्मान स्वस्ति व पाराय**
**तमस परस्तात्॥**

* शेष ब्रशकरवत्।

(१) मुउ २।२।६, ब्रशकर २।३।३९, रग ध्यायथ आ (ध्यायथाऽऽ), रामानुज १।१।१ (पृ ८), १।३।१, ब्रमध्व १।३।१, विज्ञान १।३।१

(१) किंच, अरा इव यथा रथनाभौ समर्पिता अरा. एव सहताः सप्रविष्टाः यत्र यस्मिन् हृदये सर्वतो देहव्यापिन्यो नाड्य, तस्मिन् हृदये बुद्धिप्रत्ययसक्षिभूत स एष प्रकृत आत्मा अन्तः मध्ये चरते चरति वर्तते। पश्यन् शृण्वन् मन्वानो विजानन् बहुधा अनेकधा क्रोधहर्षादिप्रत्ययैर्जायमान इव जायमान., अन्त.करणोपाध्यनुविधायित्वात्। वदन्ति हि लौकिका हृष्टो जात. क्रुद्धो जात इति। तमात्मानमोमित्येवमोंकारालम्बना. सन्तो यथोक्तकल्पनया ध्यायथ चिन्तयत। उक्त च वक्तव्य शिष्येभ्य आचार्येण जानता। शिष्याश्च ब्रह्मविद्याविविदिषुत्वान्निवृत्तकर्माणो मोक्षपथे प्रवृत्ता.। तेषा निर्विघ्नतया ब्रह्मप्राप्तिमाशास्त्याचार्यः — स्वस्ति निर्विघ्नमस्तु वो युष्माक पाराय परकूलाय। परस्तात्। कस्मात्। अविद्यातमस.। अविद्यारहितब्रह्मात्मस्वरूपगमनायेत्यर्थ·। शकर

(२) 'समाध्यभावाच्च'—योऽयमप्ययमौपनिषदात्मप्रतिपत्तिप्रयोजन समाधिरुपदिष्टो वेदान्तेषु 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः सोऽन्वेष्टव्य स विजिज्ञासितव्य.' (बृउ २।४।५) 'ओमित्येव ध्यायथ आत्मानम्' इत्येवलक्षण, सोऽप्यसत्यात्मनः कर्तृत्वे नोपपद्येत। तस्मादप्यस्य कर्तृत्वसिद्धि.। ब्रशकर २।३।३९

(३) 'अजायमानो बहुधा विजायते तस्य धीरा परिजानन्ति योनिम्' इति देवादीनां समाश्रयणीयत्वाय तत्तज्जातीयस्वरूपसस्थानगुणकर्मसमन्वितः स्वीयस्वभावमजहदेव स्वेच्छया बहुधा जायमानः चरते वर्तते इत्यर्थ। रग

(४) वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्य ज्ञान वेदान्तवाक्यैर्विधित्सितम्।

रामानुज १।१।१ (पृ ८)

ब्रह्मपुरे हृदि उपलभ्य आनन्दरूप आत्मा

**यः सर्वज्ञ सर्वविद्यस्यैष महिमा भुवि।**
**दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठित.॥**

(१) मुउ २।२।७, रामानुज २।१।१५ (पृ ४४७), विज्ञान ४।४।१८ यस्यैष महिमा भुवि (यस्य ज्ञानमय तप ?) व्योम्न्यात्मा प्रतिष्ठित (आत्मा सप्रतिष्ठते), बलदेव ३।३।३६

**मनोमय· प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सनिधाय।**
**तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृत यद्विभाति॥**

(१) योऽसौ तमसः परस्तात्ससारमहोदधिं तीर्त्वा गन्तव्य. परविद्याविषय इति स कस्मिन् वर्तत इत्याह—य. सर्वज्ञ. सर्ववित्, व्याख्यातः, त पुनर्विशिनष्टि—यस्यैष प्रसिद्धो महिमा विभूति.। कोऽसौ महिमा। यस्येमे द्यावापृथिव्यौ शासने विधृते तिष्ठतः। सूर्याचन्द्रमसौ यस्य शासनेऽलातचक्रवदजस्र भ्रमतः। यस्य शासने सरित. सागराश्च स्वगोचरं नातिक्रामन्ति। तथा स्थावर जङ्गम च यस्य शासने नियतम्। तथा च ऋतव अयने अब्दाश्च यस्य शासन नातिक्रामन्ति। तथा कर्तार. कर्माणि फल च यच्छासनात् स्व स्व काल नातिवर्तन्ते। स एष महिमा भुवि लोके यस्य स एष सर्वज्ञ एवमहिमा देव.। दिव्ये द्योतनवति सर्वबौद्धप्रत्ययकृतद्योतने ब्रह्मपुरे। ब्रह्मणोऽत्र चैतन्यस्वरूपेण नित्याभिव्यक्तत्वात् ब्रह्मण. पुर हृदयपुण्डरीकम्। तस्मिन् यद्व्योम, तस्मिन् व्योम्नि आकाशे हृत्पुण्डरीकमध्यस्थे प्रतिष्ठित इवोपलभ्यते। न ह्याकाशवत्सर्वगतस्य गतिरागति. प्रतिष्ठा वाऽन्यथा सभवति। स ह्यात्मा तत्रस्थो मनोवृत्तिभिरेव विभाव्यत इति मनोमयः, मनउपाधित्वात्। प्राणशरीरनेता, प्राणश्च शरीर च प्राणशरीर, तस्याय नेता स्थूलाच्छारीरात् शरीरान्तर प्रति। प्रतिष्ठितोऽवस्थितोऽन्ने भुज्यमानान्नविपरिणामे प्रतिदिनमुपचीयमानेऽपचीयमाने च पिण्डरूपान्ने हृदय बुद्धिं पुण्डरीकच्छिद्रे सनिधाय समवस्थाप्य। हृदयावस्थानमेव ह्यात्मन. स्थिति, न ह्यात्मनः स्थितिरन्ने। तदात्मतत्त्व विज्ञानेन विशिष्टेन शास्त्राचार्योपदेशजनितेन ज्ञानेन शमदमध्यानसर्वत्यागवैराग्योद्भूतेन परिपश्यन्ति सर्वत पूर्ण पश्यन्ति उपलभन्ते धीरा विवेकिनः। आनन्दरूप सर्वानर्थदुःखायासप्रहीणममृत यद्विभाति विशेषेण स्वात्मन्येव भाति सर्वदा। शकर.

(१) मुउ २।२।८, रामानुज १।२।१, ब्रमध्व. ३।२।१७, वल्लभ. १।३।४, बलदेव १।२।१, ३।३।३६,

( २ ) य सर्वज्ञ इति । उक्तोऽर्थः । यस्यैष इति । भूलोके ससारतन्त्रप्रवर्तनरूप एष महिमा मदीयः । दिव्य इति । यस्यैष महिमा भुवीति लीलाविभूत्यन्वय उक्त., दिव्ये व्योम्नीति त्रिपाद्विभूतिरुक्तेति व्यासार्यैरुक्त त्वात् । वैकुण्ठाख्ये ब्रह्मपुरे परमे व्योम्नि अयमात्मा प्रतिष्ठित इत्यर्थ. । मनोमय इति । विशुद्धमनोग्राह्यः । प्राणशरीरनेता, प्राण च शरीर च, तस्य नेता, जीवस्य प्राणशरीरलम्भक इत्यर्थ । यद्वा 'मनोमय प्राणशरीरो भारूप.' ( छाउ ३।१४।२ ) इति श्रुते प्राण॰ शरीरमस्य प्राणशरीरक., स चासौ नेता च, प्रभुरित्यर्थ. । 'अधिभूर्नायको नेता प्रभुः' इति हि नैघण्टुका । अन्नेऽन्नपरिणामे शरीरे प्रतिष्ठितो यस्तस्मिंश्चित्त हृदय सनिधाय । तद्विज्ञानेति । अमृत यत् अस्पृष्टससारगन्ध आनन्दरूप यद्विभाति, तद्ब्रह्म विज्ञानशब्दितेन दर्शनसमानाकारेणोपासनेन धीरा प्रज्ञाशालिन परिपश्यन्ति साक्षात्कुर्वन्तीत्यर्थ॰ । रग

( ३ ) 'प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्ते ' — ननु जगत्सृष्टावपि सिद्धो जीवविशेषः सूर्य उपदिष्टोऽस्ति, 'य सर्वज्ञ सर्ववित् यस्य ज्ञानमय तप (?)। दिव्ये ब्रह्मपुरे ह्येष आत्मा सप्रतिष्ठते ॥ ' इत्यादिश्रुतौ एष इत्यादिना प्रत्यक्षस्यैव विकारस्य पूर्वोक्तमहदादि सृष्टीश्वरत्वोपदेशात्, इति चेन्न । आधिकारिकमण्डल स्थोक्ते. । अधिकारिणो हिरण्यगर्भस्य मण्डलमाधिकारिकमण्डल सूर्यमण्डल निखिलज्योतिर्मण्डलस्य प्रधानाश रूप, तत्स्थस्य तदन्तर्यामिणो नित्यपरमेश्वरस्यैव शाखाचन्द्रन्यायेन प्रदर्शनार्थं अभेदेनोपासनार्थं वा एष इत्यादिशब्दै प्रत्यक्षवदुक्तत्वात् । न तु स्वरूपत एव प्रत्यक्षत्वमुक्तमित्यर्थः । विज्ञान ४।४।१८

हृदयग्रन्थिनाशादि आत्मविद्याफलम्

**'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसशया ।**
**क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥**

( १ ) अस्य परमात्मज्ञानस्य फलमिदमभिधीयते —भिद्यते हृदयग्रन्थि. अविद्यावासनाप्रचयो बुद्ध्याश्रयः काम. 'कामा येऽस्य हृदि श्रिताः ' इति श्रुत्यन्तरात् । हृदयाश्रयोऽसौ नाऽऽत्माश्रयः । भिद्यते भेद विनाशमायाति । छिद्यन्ते सर्वज्ञेयविषयाः सशयाः लौकिकानामामरणात्तु गङ्गास्रोतोवत्प्रवृत्ता विच्छेदमायान्ति । अस्य विच्छिन्नसशयस्य निवृत्ताविद्यस्य यानि विज्ञानोत्पत्ते॰ प्राक्तनानि जन्मान्तरे चाप्रवृत्तफलानि ज्ञानोत्पत्तिसहभावीनि च क्षीयन्ते कर्माणि । न त्वेतज्जन्मारम्भकाणि, प्रवृत्तफलत्वात् । तस्मिन् सर्वज्ञेऽससारिणि परावरे, पर च कारणात्मना अवर च कार्यात्मना, तस्मिन् परावरे साक्षादहमस्मीति दृष्टे । ससारकारणोच्छेदात् मुच्यते इत्यर्थः । शकर.

( २ ) 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ' — गतस्तृतीयशेषः । अथेदानीं ब्रह्मविद्याफल प्रति चिन्ता प्रतायते । ब्रह्माधिगमे सति तद्विपरीतफल दुरित क्षीयते न क्षीयते वेति सशय. । किं तावत्प्राप्तम् । फलार्थत्वात्कर्मण फलमदत्त्वा न सभाव्यते क्षय । फलदायिनी ह्यस्य शक्ति. श्रुत्या समधिगता । यदि तत् अन्तरेणैव फलोपभोगमपवृज्येत, श्रुति कदर्थिता स्यात् । स्मरन्ति च — 'न हि कर्म क्षीयते ' इति । नन्वेव सति प्रायश्चित्तोपदेशोऽनर्थकः प्राप्नोति । नैष दोष. । प्रायश्चित्ताना नैमित्तिकत्वोपपत्तेर्गृहदाहेष्ट्यादिवत् । अपि च प्रायश्चित्तानां दोषसयोगेन विधानात् भवेदपि दोषक्षपणार्थता, न त्वेव ब्रह्मविद्यायां विधानमस्ति । ननु अनभ्युपगम्यमाने ब्रह्मविद कर्मक्षये तत्फलस्यावश्यभोक्तव्यत्वादनिर्मोक्षः स्यात् । नेत्युच्यते । देशकालनिमित्तापेक्षो मोक्ष. कर्मफलवद्भविष्यति । तस्मान्न ब्रह्माधिगमे दुरितनिवृत्तिरिति । एव प्राप्ते ब्रूम. — तदधिगमे ब्रह्माधिगमे सति उत्तरपूर्वयोरघयो रश्लेषविनाशौ भवतः । उत्तरस्याश्लेषः पूर्वस्य विनाश. । कस्मात् । तद्व्यपदेशात् । तथा हि ब्रह्मविद्याप्रक्रियाया

(१) मुउ २।२।९, ब्रशकर १।१।४ ( पृ ६०, ६५ ), १।१।२८, १।३।२, ३।३।३२, ४।१।१३, १४; भास्कर ३।३।३२, ४।१।१, १३, १४, रामानुज १।१।१ ( पृ ९, १७ ), ३।४।१६, ४।१।१३, निंबार्क ३।४।१६, श्रीकठ ३।४।१६, श्रीकर. १।३।२, ३।३।१९, ३।४।१६, ४।१।१३, १४, ४।२।१४, १५, ४।४।१४, वल्लभ १।१।२७, ४।१।१४, विज्ञान ३।३।४४, ४।१।१३, बलदेव ३।३।३६, ४९, ३।४।१६

संभाव्यमानसबन्धस्य आगामिनो दुरितस्य अनभिसबन्ध विदुषो व्यपदिशति—'यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवविदि पाप कर्म न श्लिष्यते' ( छाउ. ४।१४।३ ) इति। तथा विनाशमपि पूर्वोपचितस्य दुरितस्य व्यपदिशति—'तद्यथेषीकातूलमग्नौ प्रोत प्रदूयेतैव हास्य सर्वे पाप्मानः प्रदूयन्ते' ( छाउ ५।२४।३ ) इति। अयमपर. कर्मक्षयव्यपदेशो भवति—'भिद्यते हृदय दृष्टे परावरे॥' इति। यदुक्त अनुपभुक्तफलस्य कर्मणः क्षयकल्पनाया शास्त्र कदर्थित स्यादिति। नैष दोषः। न हि वय कर्मणः फलदायिनीं शक्तिमवजानीमहे, विद्यते एव सा, सा तु विद्यादिना कारणान्तरेण प्रतिबध्यते इति वदामः। शक्तिसद्भावमात्रे च शास्त्र व्याप्रियते, न प्रतिबन्धाप्रति बन्धयोरपि। 'न हि कर्म क्षीयते' इत्येतदपि स्मरण-मौत्सर्गिक, न भोगादृते कर्म क्षीयते, तदर्थत्वादिति। इष्यत एव तु प्रायश्चित्तादिना तस्य क्षय, 'सर्वे पाप्मान तरति, तरति ब्रह्महत्या, योऽश्वमेधेन यजते, य उ चैनमेव वेद' इत्यादिश्रुतिस्मृतिभ्यः। यत्तूक्त, नैमित्तिकानि प्रायश्चित्तानि भविष्यन्तीति। तदसत्। दोषसयोगेन चोद्यमानानामेषा दोषनिर्घातफलसभवे फलान्तरकल्पनानुपपत्ते'। यत्पुनरेतदुक्त, न प्रायश्चित्तव द्दोषक्षयोद्देशेन विद्याविधानमस्तीति। अत्र ब्रूम.—सगुणासु तावद्विद्यासु विद्यत एव विधानम्। तासु च वाक्यशेषे ऐश्वर्यप्राप्तिः पापनिवृत्तिश्च विद्यावत उच्यते, तयोश्चाविवक्षाकारण नास्तीत्यतः पाप्मप्रहाणपूर्वकैश्वर्य-प्राप्तिस्तासा फलमिति निश्चीयते। निर्गुणाया तु विद्याया यद्यपि विधान नास्ति, तथाऽप्यकर्त्रात्मत्वबोधात्कर्म-प्रदाहसिद्धि'। अश्लेष इति च आगामिषु कर्मसु कर्तृ-त्वमेव न प्रतिपद्यते ब्रह्मविदिति दर्शयति। अतिक्रान्तेषु तु यद्यपि मिथ्याज्ञानात्कर्तृत्व प्रतिपेदे इव, तथाऽपि विद्यासामर्थ्यात् मिथ्याज्ञाननिवृत्तेस्तान्यपि प्रविलीयन्त इत्याह विनाश इति। पूर्वसिद्धकर्तृत्वभोक्तृत्वविपरीत हि त्रिष्वपि कालेषु अकर्तृत्वाभोक्तृत्वस्वरूप ब्रह्माहमस्मि, नेतः पूर्वमपि कर्ता भोक्ता वा अहमास, नेदानीं, नापि भविष्यत्काले इति ब्रह्मविदवगच्छति। एवमेव च मोक्ष उपपद्यते। अन्यथा ह्यनादिकालप्रवृत्ताना कर्मणा क्षयाभावे मोक्षाभावः स्यात्। न च देशकाल-निमित्तापेक्षो मोक्षः कर्मफलवद्भवितुमर्हति, अनित्यत्व-प्रसङ्गात्, परोक्षत्वानुपपत्तेश्च ज्ञानफलस्य। तस्माद्ब्रह्मा-धिगमे दुरितक्षय इति स्थितम्। ४।१।१३

'इतरस्याप्येवमसश्लेषः पाते तु'—पूर्वस्मिन्न-धिकरणे बन्धहेतोरघस्य स्वाभाविकस्याश्लेषविनाशौ ज्ञाननिमित्तौ शास्त्रव्यपदेशान्निरूपितौ। धर्मस्य पुन' शास्त्रीयत्वाच्छास्त्रीयेण ज्ञानेनाविरोध इत्याशङ्क्य तन्नि-राकरणाय पूर्वाधिकरणन्यायातिदेशः क्रियते—इतर-स्यापि पुण्यस्य कर्मण. एव अघवत् असश्लेषो विना-शश्च ज्ञानवतो भवतः। कुत'। तस्यापि स्वफलहेतुत्वेन ज्ञानफलप्रतिबन्धित्वप्रसङ्गात्। 'उभे उ हैवैष एते तरति' ( बृउ ४।४।२२ ) इत्यादिश्रुतिषु च दुष्कृत वत्सुकृतस्यापि प्रणाशव्यपदेशात्। अकर्त्रात्मत्वबोधनि मित्तस्य च कर्मक्षयस्य सुकृतदुष्कृतयोस्तुल्यत्वात्। 'क्षीयन्ते चास्य कर्माणि' इति चाविशेषश्रुते। यत्रापि केवल एव पाप्मशब्द पठ्यते, तत्रापि तेनैव पुण्यमप्याकलितमिति द्रष्टव्य, ज्ञानापेक्षया निकृष्टफल-त्वात्। अस्ति च श्रुतौ पुण्येऽपि पाप्मशब्द., 'नैन सेतुमहोरात्रे तरत' ( छाउ. ८।४।१ ) इत्यत्र सह दुष्कृतेन सुकृतमप्यनुक्रम्य 'सर्वे पाप्मानोऽतो निव-र्तन्ते' इत्यविशेषेणैव प्रकृते पुण्ये पाप्मशब्दप्रयोगात्। पाते त्विति तुशब्दोऽवधारणार्थः। एव धर्माधर्मयो-र्बन्धहेत्वोः विद्यासामर्थ्यादश्लेषविनाशसिद्धेरवश्यभाविनी विदुष. शरीरपाते मुक्तिरित्यवधारयति।

* ब्रशाकर. ४।१।१४

( ३ ) हृत्स्थानमयते इति व्युत्पत्त्या हृदयशब्देन जीवो वा। नाशो नाम कर्मणां फलजननशक्तिविनाशः। 'तदधिगम उत्तरपूर्वाघयोः०' ( ब्रसू. ४।१।१३ ) इति सूत्रेऽघस्य विनाशकरणमुत्पन्नायास्तच्छक्तेर्विनाशकरण, शक्तिर्हि परमपुरुषाप्रीतिरेवेति भाषितम्। एतत्सर्वं कदेत्यत्राऽऽह—तस्मिन्दृष्टे परावरे। परे अवरे यस्मात्स परावर.। सर्वोत्कृष्टा अपि ब्रह्मादयो यस्मा-न्निकृष्टा इत्यर्थः। अथवा परावरे परावरशरीरके

* ईउ. ७ ( पृ १३१९ ) इत्यत्रापि भाष्य द्रष्टव्यम्। भास्करवल्लभौ ब्रशाकरवत्।

सर्वात्मभूते इत्यर्थ । तादृशे तस्मिन् दर्शनसमानाकारज्ञानविषयीकृते इत्यर्थः । अस्मिन् वाक्ये श्रूयमाणः कर्मक्षयो दर्शनसमानाकारोपासनारम्भप्रीतस्य परमात्मनस्तत्सप्रासावुपासकस्य अघ क्षयिष्ये इति सकल्परूप., देहवियोगसमयभावी कर्मक्षयस्तु क्षान्तमिति सकल्परूप इत्यविरोधो द्रष्टव्य. । * रग

( ४ ) 'उपमर्दं च'— पुण्यापुण्यरूपस्य समस्तसासारिकदु:खमूलस्य कर्मणो ब्रह्मविद्ययोपमर्दं प्रतिवेदान्तमधीयते — 'भिद्यते हृदय दृष्टे परावरे' इत्यादिकम् । तत् विद्यायाः कर्माङ्गत्वे न सगच्छते । ३।४।१६

अघस्याश्लेषकरण वैदिककर्मायोग्यतावासनाप्रत्यवायहेतुशक्युत्पत्तिप्रतिबन्धकरणम् । अघानि हि कृतानि पुरुषस्य वैदिककर्मायोग्यता सजातीयकर्मारम्भरुचिं प्रत्यवाय च कुर्वन्ति । अघस्य विनाशकरण उत्पन्नायास्तच्छक्तेर्विनाशकरणम् । शक्तिरपि परमपुरुषाप्रीतिरेव । तदेव विद्या वेदितुर्वेद्यात्यर्थप्रियत्वेन स्वयमपि निरतिशयप्रिया सती वेद्यभूतपरमपुरुषाराधनस्वरूपा पूर्वकृताघसञ्चयजनितपरमपुरुषाप्रीतिं विनाशयति । सैव विद्या स्वोत्पत्त्युत्तरकालभाव्यघनिमित्तपरमपुरुषाप्रीत्युत्पत्तिं च प्रतिबध्नाति । तदिदमश्लेषवचन प्रामादिकविषय मन्तव्य, 'नाविरतो दुश्चरितात्' ( काउ २।२४ ) इत्यादिभि. शास्त्रै आ प्रयाणात् अहरहरुत्पद्यमानाया उत्तरोत्तरातिशयभागिन्या विद्यायाः दुश्चरितविरतिनिष्पाद्यत्वावगमात् । ४।१।१३

ननु विदुषोऽपि सेतिकर्तव्यताकोपासननिर्वृत्तये वृष्ट्यन्नादिफलानीष्टान्येव । कथ तेषां विरोधाद्विनाश उच्यते । तत्राऽऽह— पाते त्विति । शरीरपाते तु तेषा विनाश' । शरीरपातादूर्ध्वं तु विद्यानुगुणदृष्टफलानिसुकृतानि नश्यन्तीत्यर्थः । ‡ रामानुज ४।१।१४

( ५ ) अत्रोत्तराघस्य प्रमादाशक्तिसमाध्यादिनिमित्तस्यैवाश्लेषो विवक्षित., न तु वृथाकर्मत्यागवृथाविकर्मणोः, 'यस्तु विद्याभिमानेन वेदमार्गप्रवर्तनम् । छलजात्यादिभिर्जह्यात्स महापातकी भवेत् ॥' इत्यादिभिः स्कन्दादिवाक्यैर्वृथा स्वातन्त्र्ये विदुषामपि प्रत्यवाय सिद्धेः । * विज्ञान ४।१।१३

ब्रह्म ज्योतिषा ज्योति

[1]**हिरण्मये परे कोशे विरज ब्रह्म निष्कलम् ।**
**तच्छुभ्र ज्योतिषा ज्योतिस्तद्यदात्मविदो विदुः ॥**

( १ ) उक्तस्यैवार्थस्य सक्षेपाभिधायका उत्तरे मन्त्रास्त्रयोऽपि । हिरण्मये ज्योतिर्मये बुद्धिविज्ञानप्रकाशे परे कोशे कोश इवाऽसेः आत्मस्वरूपोपलब्धिस्थानत्वात्, पर तत्सर्वाभ्यन्तरत्वात्, तस्मिन् विरज अविद्याद्यशेषदोषरजोमलवर्जित ब्रह्म सर्वमहत्त्वात्सर्वात्मत्वाच्च, निष्कल निर्गताः कला यस्मात्तन्निष्कल निरवयवमित्यर्थः । यस्माद्विरज निष्कल चातस्तच्छुभ्र शुद्ध ज्योतिषा सर्वप्रकाशात्मनामग्न्यादीनामपि तज्ज्योति. अवभासकम् । अग्न्यादीनामपि ज्योतिष्ट्वमन्तर्गतब्रह्मात्मचैतन्यज्योतिर्निमित्तमित्यर्थः । तद्धि पर ज्योतिर्यदन्यानवभास्यमात्मज्योतिः तद्यदात्मविद आत्मान स्व शब्दादिविषयबुद्धिप्रत्ययसाक्षिण ये विवेकिनो विदुर्विजानन्ति ते आत्मविदः तद्विदु. आत्मप्रत्ययानुसारिणः । यस्मात्पर ज्योतिस्तस्मात्त एव तद्विदुर्नेतरे बाह्यार्थप्रत्ययानुसारिणः ।

शकर.

( २ ) 'तस्या हिरण्मयः कोश'' इति श्रुत्युक्तरीत्या स्वप्रकाशतया कमनीयतया वा हिरण्मयशब्दाभिलप्येऽत्युत्कृष्टपदार्थोपलब्धिस्थानतया कोशतुल्ये पर उत्कृष्टे परमपदे । पुर इति पाठेऽपि स्पष्टोऽर्थः । विरज, छान्दसमदन्तत्वम् । सत्त्वरजस्तमोऽतीतम् । निष्कल निरवयवमित्यर्थः । शुभ्र अनवद्य प्रकाशकानामपीन्द्रियाणा प्रकाशकम् । ज्योति.शब्दिततदीप्तियोगो विग्रहद्वारको द्रष्टव्य । आत्मविदो यद्विदुर्यदात्मतत्त्वमिति यावत् ।

रग.

---

* शेष शाकरवत् ।

‡ शेष ब्रशकरवत् । निंबार्क श्रीकठ ३।४।१६ रामानुजवत् । श्रीकर रामानुजवत् ।

* ४।१।१३ शेष ब्रशकरवत् ।

(१) **मुउ** २।२।१०, **ब्रशकर** १।३।२२, **रग** परे ( पुरे ) इत्यपि पाठ, **श्रीकर** १।३।२२, ३।३।५१, ४।२।५, **विज्ञान** १।३।१, ४०, **बलदेव** ३।३।३६

( ३ ) 'ज्योतिर्दर्शनात्' — 'तच्छुभ्रं ज्योतिषां ज्योतिः' इत्येवंविधवाक्येषु ब्रह्म ज्योतिःशब्दवाच्यं भवति, दर्शनात्, ब्रह्मणो ज्ञानस्वरूपतया प्रकाशत्वगुणयोगादित्यर्थः। विज्ञान १।३।४०

* न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥

( १ ) कथं तत् 'ज्योतिषां ज्योतिः' इत्युच्यते— न तत्रेति। शंकर

( २ ) 'अनुकृतेस्तस्य च' — 'न तत्र सूर्यो भाति . सर्वमिदं विभाति' इति समामनन्ति। तत्र यं भान्तमनुभाति सर्वं, यस्य च भासा सर्वमिदं विभाति, स किं तेजोधातुः कश्चित् उत प्राज्ञ आत्मेति विचिकित्सायां तेजोधातुरिति तावत्प्राप्तम्। कुतः। तेजोधातूनामेव सूर्यादीनां भानप्रतिषेधात्। तेजःस्वभावकं हि चन्द्रतारकादि तेजःस्वभावके एव सूर्ये भासमाने अहनि न भासते इति प्रसिद्धम्। तथा सह सूर्येण सर्वमिदं चन्द्रतारकादि यस्मिन्न भासते सोऽपि तेजःस्वभाव एव कश्चिदित्यवगम्यते। अनुभानमपि तेजःस्वभावके एवोपपद्यते, समानस्वभावकेष्वनुकारदर्शनात् गच्छन्तमनु गच्छतीतिवत्। तस्मात्तेजोधातुः कश्चिदित्येवं प्राप्ते ब्रूमः—प्राज्ञ एवायमात्मा भवितुमर्हति। कस्मात्। अनुकृतेः। अनुकरणमनुकृतिः। यदेतत् 'तमेव भान्तमनुभाति सर्वम्' इत्यनुभानं, तत् प्राज्ञपरिग्रहे अवकल्पते। 'भारूपः सत्यसंकल्पः' ( छा० ३।१४।२) इति हि प्राज्ञमात्मानमामनन्ति। न तु तेजोधातुं कंचित् सूर्यादयोऽनुभान्तीति प्रसिद्धम्। समत्वाच्च तेजोधातूनां सूर्यादीनां न तेजोधातुमन्यं प्रत्यपेक्षाऽस्ति यं भान्तमनुभायुः। न हि प्रदीपः प्रदीपान्तरमनुभाति। यदप्युक्तं समानस्वभावकेषु अनुकारो दृश्यते इति, नायमेकान्तो नियमः। भिन्नस्वभावकेष्वपि ह्यनुकारो दृश्यते। यथा सुतप्तोऽयःपिण्डः अग्न्यनुकृतिः अग्निं दहन्तमनु दहति, भौमं वा रजो वायुं वहन्तमनु वहतीति। अनुकृतेः इत्यनुभानमसूसूचत्। 'तस्य च' इति चतुर्थं पादमस्य श्लोकस्य सूचयति। 'तस्य भासा सर्वमिदं विभाति' इति तद्धेतुकं भानं सूर्यादेरुच्यमानं प्राज्ञमात्मानं गमयति। 'तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' ( बृ० ४।४।१६ ) इति हि प्राज्ञमात्मानमामनन्ति। तेजोन्तरेण सूर्यादितेजो विभातीत्यप्रसिद्धम्। विरुद्धं च, तेजोन्तरेण तेजोन्तरस्य प्रतिघातात्। अथवा न सूर्यादीनामेव श्लोकपरिपठितानामिदं तद्धेतुकं विभानमुच्यते। किं तर्हि। सर्वमिदमित्यविशेषश्रुतेः सर्वस्यैवास्य नामरूपक्रियाकारकफलजातस्य या अभिव्यक्तिः सा ब्रह्मज्योतिःसत्तानिमित्ता। यथा सूर्यज्योतिःसत्तानिमित्ता सर्वस्य रूपजातस्याभिव्यक्तिस्तद्वत्। 'न तत्र सूर्यो भाति' इति च तत्रशब्दमाहरन् प्रकृतग्रहणं दर्शयति। प्रकृतं च ब्रह्म 'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतम्' ( मु० २।२।५ ) इत्यादिना। अनन्तरं च 'हिरण्मये परे कोशे .. ज्योतिस्तद्यदात्मविदो विदुः' इति। कथं तज्ज्योतिषां ज्योतिरित्यत इदमुत्थितम् — 'न तत्र सूर्यो भाति' इति। यदप्युक्तं सूर्यादीनां तेजसां भानप्रतिषेधः तेजोधातावेवान्यस्मिन् अवकल्पते सूर्य इवेतरेषामिति, तत्र तु स एव तेजोधातुरन्यो न संभवतीत्युपपादितम्। ब्रह्मण्यपि चैषा भानप्रतिषेधोऽवकल्पते। यतो यदुपलभ्यते तत्सर्वं ब्रह्मणैव ज्योतिषोपलभ्यते, ब्रह्म तु नान्येन ज्योतिषोपलभ्यते, स्वयंज्योतिःस्वरूपत्वात्, येन सूर्यादयस्तस्मिन् भायुः। ब्रह्म ह्यन्यत् व्यनक्ति, न तु ब्रह्मान्येन व्यज्यते, 'आत्मनैवायं ज्योतिषाऽऽस्ते' ( बृ०. ४।३।६ ) 'अगृह्यो न हि गृह्यते' ( बृ० ४।२।४ ) इत्यादिश्रुतिभ्यः।

* ब्रशंकर १।३।२२

( ३ ) ज्योतिषां ज्योतिष्ट्वं प्रपञ्चयति — न तत्रेति। नन्वतिभास्वररूपवति सूर्यादौ प्रत्यक्षेणानुभूयमाने तद्भासा च जगति भासमाने न तत्र सूर्यो भातीति प्रत्यक्षविरुद्धं कथमभिधीयते इत्यत्राऽऽह — तमेव भान्तमिति। रग०

* व्याख्यानानि स्थलनिर्देशा पाठभेदाश्च का० उ० ५।१५ ( पृ० १४३२ ) इत्यत्र द्रष्टव्याः।

(१) मुउ. २।२।११

* भास्करश्रीकरौ ब्रशंकरवत्।

( ४ ) तस्य नित्याविर्भूतस्वरूपस्य ' तमेव भान्तमनुभाति सर्वम्' इत्यनुकृतेश्च अनुकर्ता जीवो नित्याविर्भूतस्वरूपो दहरो न भवितुमर्हति । निंबार्क १।३।२२

ब्रह्म सर्वव्यापि सर्वरूप च

**ब्रह्मैवेदममृत पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण ।**
**अधश्चोर्ध्वं च प्रसृत ब्रह्मैवेद विश्वमिदं वरिष्ठम् ॥**

( १ ) यत्तज्ज्योतिषा ज्योतिर्ब्रह्म तदेव सत्य, सर्वे तद्विकार वाचारम्भण विकारो नामधेयमात्रमनृतमितरदित्येतमर्थं विस्तरेण हेतुत प्रतिपादित निगमनस्थानीयेन मन्त्रेण पुनरुपसहरति-- ब्रह्मैवोक्तलक्षण इद यत्पुरस्तादग्रे अब्रह्मेवाविद्यादृष्टीना प्रत्यवभासमान, तथा पश्चाद्ब्रह्म, तथा दक्षिणतश्च, तथोत्तरेण, तथैवाधस्तादूर्ध्वं च सर्वतोऽन्यदिव कार्याकारेण प्रसृत प्रगत नामरूपव दवभासमानम् । किं बहुना, ब्रह्मैवेद विश्व समस्तमिद जगत् वरिष्ठ वरतमम् । अब्रह्मप्रत्ययः सर्वोऽविद्यामात्रो रज्ज्वामिव सर्पप्रत्यय' । ब्रह्मैवैक परमार्थसत्यमिति वेदानुशासनम् । शकर

( २ ) उपसहरति-- ब्रह्मैवेदमिति । सर्वासु दिक्षु यदिद दृश्यते तत्सर्वे ब्रह्मैवेत्यर्थ । वरणीयतम ब्रह्मैवेत्यर्थः । शिष्ट स्पष्टम् । रग

**इति द्वितीय मुण्डकम् ॥**

---

## तृतीयं मुण्डकम्

ईशानीशौ सखायौ, ईशदर्शनात् शोकमुक्ति
ईशसाम्य च

**द्वा सुपर्णा सयुजा सखाया समान वृक्ष परिषस्वजाते ।**
**तयोरन्य पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥**

( १ ) परा विद्या उक्ता यया तदक्षर पुरुषाख्य सत्यमधिगम्यते । यदधिगमे हृदयग्रन्थ्यादिससारकारण स्यात्यन्तिकविनाश' स्यात्, तद्दर्शनोपायश्च योगो धनुराद्युपादानकल्पनयोक्त । अथेदानीं तत्सहकारीणि सत्यादिसाधनानि वक्तव्यानीति तदर्थमुत्तरारम्भ । प्राधान्येन तत्त्वनिर्धारण च प्रकारान्तरेण क्रियते अत्यन्तदुरवगाह्यत्वात्कृतमपि । तत्र सूत्रभूतो मन्त्र परमार्थवस्त्ववधारणार्थमुपन्यस्यते-- द्वा द्वौ सुपर्णा सुपर्णौ शोभनपतनौ सुपर्णौ पक्षिसामान्याद्वा सुपर्णौ, सयुजा सयुजौ सहैव सर्वदा युक्तौ, सखाया सखायौ समानाख्यानौ समानाभिव्यक्तिकारणौ, एवम्भूतौ सन्तौ समान अविशेषमुपलब्ध्यधिष्ठानतया एक वृक्ष वृक्षमिवोच्छेदनसामान्याच्छरीर वृक्ष परिषस्वजाते परिष्वक्तवन्तौ सुपर्णाविवैक वृक्ष फलोपभोगार्थम् । अय हि वृक्ष ऊर्ध्वमूलोऽवाक्शाखोऽश्वत्थोऽव्यक्तमूलप्रभवः क्षेत्रसज्ञकः सर्वप्राणिकर्मफलाश्रयः । त परिष्वक्तौ सुपर्णाविव अविद्याकामकर्मवासनाश्रयलिङ्गोपाध्यात्मेश्वरौ । तयो. परिष्वक्तयो. अन्य एक. क्षेत्रज्ञो लिङ्गोपाधिर्वृक्षमाश्रित. पिप्पल कर्मनिष्पन्न सुखदुःखलक्षण

---

(१) मुड २।२।१२, ब्रशकर १।३।१, २।१।९, २।३।६, २।४।२, ३।४।५२, ४।३।१४, भास्कर २।४।२, रग स्ताद्ब्रह्म प ( स्तात्प ), श्रीकर १।३।१, वल्लभ १।३।६, बलदेव ३।३।३६

(२) मुड ३।१।१, ब्रशाकर १।१।४ ( पृ ६९ ), १।२।९, १२, १।३।७, २।३।४७, ३।३।३४, भास्कर. १।३।७, ३।३।३४, रामानुज १।१।१ ( पृ ७७, ११७), १।१।४ ( पृ १५३, १६२ ), १।२।८, १।३।६, २।१।८, २२, २।३।४९, ३।२।१३ न्यो अभि ( न्योऽभि ), निबार्क १।३।७, ३।२।१३ रामानुजवत्, ब्रमध्व १।३।७, २।३।२८, ४३, श्रीकठ १।२।११, १।३।६, २।१।२२, २।२।३८, ३।२।१३, श्रीकर १।१।१ ( पृ ३, ६, २१, २२ ), १।१।२ ( पृ ३१ ), १।१।५ ( पृ ५४ ), १।१।१३ ( पृ ६३ ), १।२।८, ९, ११, १७, २०, १।३।५, ७, १।४।२२, २।१।७, १३, २१, २४, २।२।२७, २।३।२६, ३४, ४०, ४४, ४७, ५०, २।४।१३, ३।१।१, ३।२।२६, २९, ३०, ३५, ३।३।३४, ३५, ४१, ५१, ४।३।१५, ४।४।९, १२, वल्लभ १।३।७, १।४।९, २।३।४७, विज्ञान १।१।२ ( पृ ३८, ४४ ), १।२।११, १२, २२, १।३।७, २।१।१३, २२, २।३।४३, २।४।१४, ३।२।३१, ३।३।३९ रामानुजवत्, बलदेव १।१।२, १।२।८, ९, १।३।७, २।३।४१

फल स्वादु अनेकविचित्रवेदनास्वादरूप स्वादु अत्ति भक्षयति उपभुङ्क्तेऽविवेकत । अनश्नन्नन्य इतर ईश्वरः । नित्यशुद्धबुद्धमुक्तस्वभाव सर्वज्ञ· सर्वसत्त्वोपाधिरीश्वरो नाश्नाति । प्रेरयिता ह्यसावुभयोर्भोज्यभोक्त्रोर्नित्यसाक्षित्वसत्तामात्रेण । स तु अनश्नन्नन्योऽभिचाकशीति पश्यत्येव केवलम् । दर्शनमात्र हि तस्य प्रेरयितृत्व राजवत् । शकर

( २ ) अपर आह— द्वा सुपर्णेति नेयमृगस्याधिकरणस्य सिद्धान्त भजते, पैङ्गिरहस्यब्राह्मणेनान्यथा व्याख्यातत्वात् । 'तयोरन्यः पिप्पल स्वाद्वत्तीति सत्त्वमनश्नन्नन्यो अभिचाकशीतीत्यनश्नन्नन्योऽभिपश्यति ज्ञस्तावेतौ सत्त्वक्षेत्रज्ञौ' इति ।

नाप्यस्याधिकरणस्य पूर्वपक्ष भजते । न ह्यत्र शारीरः क्षेत्रज्ञः कर्तृत्वभोक्तृत्वादिना ससारधर्मेणोपेतो विवक्ष्यते । कथ तर्हि सर्वससारधर्मातीतो ब्रह्मस्वभाव श्चैतन्यमात्रस्वरूपः 'अनश्नन्नन्यो अभिचाकशीतीत्य नश्नन्नन्योऽभिपश्यति ज्ञ·' इति वचनात् ।

कथ पुनरस्मिन्पक्षे 'तयोरन्यः पिप्पल स्वाद्वत्तीति सत्त्वम्' इत्यचेतने सत्त्वे भोक्तृत्ववचनमिति ।

उच्यते—नेय श्रुतिरचेतनस्य सत्त्वस्य भोक्तृत्व वक्ष्यामीति प्रवृत्ता । किं तर्हि । चेतनस्य क्षेत्रज्ञस्याभोक्तृत्व ब्रह्मस्वभावता च वक्ष्यामीति । तदर्थं सुखादिविक्रियावति सत्त्वे भोक्तृत्वमध्यारोपयति ।

इद हि कर्तृत्व भोक्तृत्व च सत्त्वक्षेत्रज्ञयोरितरेतरस्वभावाविवेककृत कल्प्यते । परमार्थतस्तु नान्यतरस्यापि सभवति, अचेतनत्वात्सत्त्वस्य, अविक्रियत्वाच्च क्षेत्रज्ञस्य । अविद्याप्रत्युपस्थापितस्वभावत्वाच्च सत्त्वस्य सुतरा न सभवति ।

१।२।१२

'स्थित्यदनाभ्या च' — द्युभ्वाद्यायतन च प्रकृत्य 'द्वा सुपर्णा सयुजा सखाया' इत्यत्र स्थित्यदने निर्दिश्येते । 'तयोरन्यः पिप्पल स्वाद्वत्ति' इति कर्मफलाशन, 'अनश्नन्नन्यो अभिचाकशीति' इत्यौदासीन्येनावस्थान च । ताभ्या च स्थित्यदनाभ्या ईश्वरक्षेत्रज्ञौ तत्र गृह्येते । यदि चेश्वरो द्युभ्वाद्यायतनत्वेन विवक्षितः ततस्तस्य प्रकृतस्येश्वरस्य क्षेत्रज्ञात्पृथग्वचनमवकल्पते । अन्यथा ह्यप्रकृतवचनमाकस्मिकमसबद्धं स्यात् ।

ननु तवापि क्षेत्रज्ञस्येश्वरात्पृथग्वचनमाकस्मिकमेव प्रसज्येत । न । तस्य अविवक्षितत्वात् । क्षेत्रज्ञो हि कर्तृत्वेन भोक्तृत्वेन च प्रतिशरीर बुद्ध्युपाधिसबद्धो लोकत एव प्रसिद्धो नासौ श्रुत्या तात्पर्येण विवक्ष्यते । ईश्वरस्तु लोकतोऽप्रसिद्धत्वात् श्रुत्या तात्पर्येण विवक्ष्यते इति न तस्याकस्मिक वचन युक्तम् ।

१।३।७

'इयदामननात्'—'द्वा सुपर्णा सुयुजा अभिचाकशीति' इत्यध्यात्माधिकारे मन्त्रमाथर्वणिका· श्वेताश्वतराश्च पठन्ति । तथा कठाः 'ऋत पिबन्तौ ... त्रिणाचिकेताः' ( काउ ३।१ ) इति । किमत्र विद्यैकत्व उत विद्यानानात्वमिति सशयः । किं तावत्प्राप्तम् । विद्यानानात्वमिति । कुत. । विशेषदर्शनात् । 'द्वा सुपर्णा' इत्यत्र ह्येकस्य भोक्तृत्वं दृश्यते एकस्य च अभोक्तृत्व दृश्यते । 'ऋत पिबन्तौ' इत्यत्र उभयोरपि भोक्तृत्वमेव दृश्यते । तत् वेद्यरूप भिद्यमान विद्या भिन्द्यादित्येव प्राप्ते ब्रवीति विद्यैकत्वमिति । कुत. । यतः उभयोरप्यनयोर्मन्त्रयोः इयत्तापरिच्छिन्न द्वित्वोपेत वेद्यं रूपमभिन्नमामनन्ति । ननु दर्शितो रूपभेदः । नेत्युच्यते । उभावप्येतौ मन्त्रौ जीवद्वितीयमीश्वर प्रतिपाद यतो नार्थान्तरम् । 'द्वा सुपर्णा' इत्यत्र तावत् 'अनश्नन्नन्यो अभिचाकशीति' इत्यशनायाद्यतीत· परमात्मा प्रतिपाद्यते । वाक्यशेषेऽपि च स एव प्रतिपाद्यमानो दृश्यते 'जुष्ट यदा पश्यत्यन्यमीशमस्य महिमानम्' ( श्वेउ. ४।७ ) इति । 'ऋत पिबन्तौ' इत्यत्र तु जीवे पिबति अशनायाद्यतीतः परमात्माऽपि साहचर्यात् छत्रिन्यायेन पिबतीत्युपचर्यते । परमात्मप्रकरण ह्येतत्, 'अन्यत्र धर्मादन्यत्राधर्मात्' ( काउ २।१४ ) इत्युपक्रमात् । तद्विषय एव चात्रापि वाक्यशेषो भवति 'यः सेतुरीजानानामक्षर ब्रह्म यत्परम्' ( काउ. ३।२ ) इति । 'गुहा प्रविष्टावात्मानौ हि०' ( ब्रसू १।२।११ ) इत्यत्र चैतत्प्रपञ्चितम् । तस्मान्नास्ति वेद्यभेदः, तस्माच्च विद्यैकत्वम् । अपि च त्रिष्वप्येतेषु वेदान्तेषु पौर्वापर्यालोचने परमात्मविद्यैवावगम्यते, तादात्म्यविवक्षयैव

जीवोपादान नार्थान्तरविवक्षया । न च परमात्मविद्याया भेदाभेदविचारावतारोऽस्तीत्युक्तम् । तस्मात्प्रपञ्चार्थ एवैष योग । तस्माच्चाधिकधर्मोपसहार इति ।

* ब्रशकर ३।३।३४

( ३ ) अत्रापि सूत्रकारो जीवपरयोर्भेदमुपगम्य जीवनिराकरणं चकार । अपरे तु स्वानुभवमप्यपह्नुवाना भेद मायामात्र सगिरन्ते । १।३।७

परविद्याश्चैते त्रयोऽपि वेदान्ता । तत्र येऽस्मिन्पादे परविद्याविचारो नास्तीति प्रतिजानते तेषा 'आनन्दादय प्रधानस्य' इत्येवमादिविचारे विरोध ।

† भास्कर ३।३।३४

( ४ ) ननु एकस्यैव ब्रह्मण. सर्वदेहानुप्रवेशे तस्य सुखदु.खभोक्तृत्वप्रसङ्ग इत्यत्राऽऽह — द्वा सुपर्णेति । युज्यते इति युक्शब्दो गुणपर· । समानगुणकः सयुगिति व्यासार्यैर्विवृतत्वात् । सयुजौ समानगुणकौ सखाया अपहतपाप्मत्वादिगुणै. परस्परसमानौ ।

अत्र शरीरतदाश्रयजीवपरादिविषयवाचकशब्दनिगरणेन विषयिवाचकवृक्षसुपर्णादिशब्दै वृक्षत्वाध्यवसानलक्षणरूपकातिशयोक्तिर्विच्छित्तिविशेषायेति द्रष्टव्यम् ।

$ रग

( ५ ) 'अपि चैवमेके'— अपि च एके शाखिन एकस्मिन्नेव देहसयोगे जीवस्यापुरुषार्थं परस्य तु तदभाव नियमनरूपैश्वर्यायत्त दीप्तियोग च स्वशब्देनाधीयते— 'द्वा सुपर्णा ऽभिचाकशीति' इति ।

¶ रामानुज ३।२।१३

( ६ ) ननु 'एक एव रुद्रो न द्वितीयाय तस्थे' इत्यादिश्रुतिशतेषु सर्वप्रपञ्चनिषेधपूर्वकाद्वैतव्यवस्थापनात् 'द्वा सुपर्णा' इत्यादिमन्त्रगतो जीवब्रह्मणोर्भेद औपचारिक एवेति चेन्न । अद्वितीयत्वप्रतिपादकश्रुतीनां निर्गुणत्वप्रतिपादकश्रुतीना च सृष्टेः पूर्वं मूर्तामूर्तोभयप्रपञ्चाभावात् तत्कालपरत्व, भेदश्रुतीनां सर्वासा सृष्ट्युत्तरकालपरत्वम् ।

* श्रीकर १।३।७

( ७ ) यद्यपि पैङ्ग्युपनिषदि 'द्वा सुपर्णा' इत्यस्यान्यथा व्याख्यान प्रतिभाति, तदृचां प्रदेश विशेषे अन्यथा व्याख्यान न दोषाय ।

† वल्लभ १।३।७

( ८ ) 'अनश्नन्नन्योऽभिचाकशीति' इत्याद्याः भोगप्रतिषेधकश्रुतिस्मृतयस्तु (जीवदर्शन प्रत्ययाविशेषाख्य?) मुख्यभोगमेवापाकुर्वन्ति । किंवा 'न लिप्यते लोकदुःखेन बाह्य.' इति श्रुत्यैकवाक्यतया जीवसुखदुःखेनेश्वरे साकर्यमेव प्रतिषेधन्ति । तथा च यथा राज्ञ सेवकाप राधिनौ सुखदुःखे भोजयतस्तद्विलक्षण सुखमात्रस्य भोगान्तर तत्समकालीन दृश्यते, तथैव परमेश्वरस्यापि भोगान्तरमनुमेयमिति । १।२।११

अत एव च पैङ्गिरहस्यसमानाऽपि 'द्वा सुपर्णा सयुजा' इत्यादिमुण्डकश्रुतिर्न सत्त्वक्षेत्रज्ञपरा, मुण्डकेऽप्यव्यवहितोत्तरवाक्ये जीवेश्वरयोरेव प्रतिपादनात् 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमान । जुष्ट यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥' इत्यनेन । तस्मात्पैङ्गिरहस्य विवेकपरतया सांख्याना मूल, काठकमुण्डके ब्रह्ममीमासकाना मूलमिति विवेक्तव्यम् । न पुनरेकवाक्यताऽत्र कार्येति । १।२।१२

'अधिक तु भेदनिर्देशात्' —तुशब्द परोक्तेतरताव्यवच्छेदार्थं । ब्रह्म नेतर, किं तु इतरस्मात् जीवात् अधिकम् । कुतः । तयोरन्योन्य भेदश्रुते 'तयोरन्यः पिप्पल स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति' इत्यादिवाक्यशतेष्वित्यर्थः । विज्ञान २।१।२२

**समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमान. ।**

---

* ब्रमध्व १।३।७ ब्रशकरवद्भाव । छाउ ६।८।७ (पृ ९१५) इत्यत्रापि ब्रमध्वभाष्य द्रष्टव्यम् ।

† १।३।७, ३।३।३४ शेष ब्रशकरवत् ।

$ शेष पदार्थमात्र शकरवत् ।

¶ निंबार्क श्रीकठ रामानुजवद्भाव । रामानुज. निंबार्क श्रीकठ १।३।६ ब्रशकरवद्भाव ।

* १।३।७ शेष ब्रशकरवत् ।

† १।३।७ ब्रशकरवद्भाव ।

(१) मुउ ३।१।२, ब्रशकर १।२।१२, ३।३।३४, भास्कर १।२।१२, ३।३।३४, रामानुज १।१।१ (पृ

जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक ॥

( १ ) तत्रैव सति समाने वृक्षे यथोक्ते शरीरे पुरुषो भोक्ता जीवोऽविद्याकामकर्मफलरागादिगुरुभाराक्रान्तोऽलाबुरिव सामुद्रे जले, निमग्नो निश्चयेन देहात्मभावमापन्नोऽयमेवाहममुष्य पुत्रोऽस्य नप्ता कृश. स्थूलो गुणवान्निर्गुणः सुखी दुःखीत्येवप्रत्ययो नास्त्यन्योऽस्मादिति जायते म्रियते, सयुज्यते वियुज्यते च सबन्धिबान्धवैः, अतोऽनीशया, न कस्यचित्समर्थोऽह, पुत्रो मम विनष्ट', मृता मे भार्या, किं मे जीवितेनेत्येव दीनभावोऽनीशा, तया शोचति सतप्यते मुह्यमान. अनेकैरनर्थप्रकारैरविवेकतया चिन्तामापद्यमानः। स एव प्रेततिर्यङ्मनुष्यादियोनिष्वाजव जवीभावमापन्न कदाचिदनेकजन्मसु शुद्धधर्मसचितनिमित्ततः केनचित्परमकारुणिकेन दर्शितयोगमार्गोऽहिंसासत्यब्रह्मचर्यसर्वत्यागशमदमादिसपन्न. समाहितात्मा सन् जुष्ट सेवित अनेकैर्योगमार्गैः कर्मिभिश्च यदा यस्मिन् काले पश्यति ध्यायमान अन्य वृक्षोपाधिलक्षणाद्विलक्षण ईश असंसारिणमशनायापिपासाशोकमोहजरामृत्य्वतीतमीश सर्वस्य जगतः, अयमहमस्म्यात्मा सर्वस्य सम. सर्वभूतस्थ., नेतरोऽविद्याजनितोपाधिपरिच्छिन्नो मायात्मेति, विभूतिं महिमान च जगद्रूपमस्यैव मम परमेश्वरस्येति यदैव द्रष्टा, तदा वीतशोको भवति सर्वस्माच्छोकसागराद्विप्रमुच्यते, कृतकृत्यो भवतीत्यर्थः । शकर

(२) अनीशया भोग्यभूतया प्रकृत्या मुह्यमान. 'पराभिध्यानात्तु तिरोहित ततो ह्यस्य बन्धविपर्ययौ' 'देहयोगाद्वा सोऽपि' (ब्रसू ३।२।४,५) इत्युक्तन्यायेन तिरोहितपरमात्मशेषत्वज्ञानानन्दलक्षणस्वस्वरूप' सन् वृक्षवच्छेदनार्हे एकस्मिन् शरीरे जीव. स्थूलोऽह कृशोऽह इत्यादितादात्म्यबुद्ध्या पासूदकवत्तदेकतामापन्नः सस्तत्ससर्गकृतानि दुःखान्यनुभवतीत्यर्थ ।

जुष्टमिति । इतिशब्दो बुद्धिस्थप्रकारवचन. । चशब्दश्चाध्याहर्तव्य. । यदाऽसौ जीवो निमग्नात्स्वस्माद्धारकत्वनियन्तृत्वशेषित्वादिना विलक्षण स्वकर्मभि प्रीत परमात्मानमखिलजगदीशनलक्षणमस्य महिमान च यदा पश्यति, तदा वीतशोको भवतीत्यर्थ' । केचित्तु— अनीशया अनीशत्वेन असमर्थत्वेनेत्यर्थ. । लोके हि पङ्कादौ निमग्न. पङ्कादिसबन्धेन मुह्यमानः स्वय निर्गमनासमर्थत्वेन शोचन् स्वोद्धरणसमर्थं स्वय पङ्कादावनिमग्न च स्वस्मिन् प्रीतिमत्त्वेन सुहृद्भूत तस्योद्धरणसामर्थ्यं च दृष्ट्वा वीतशोको भवति, तत्समाधिरत्रानुसधेयः । न चास्मिन् पक्षे अनीशया भोग्यभूतया प्रकृत्येति भाष्यविरोध शङ्कनीयः । भोग्यभूतयेत्यस्यानीशयेत्येतद्विवरणरूपत्वाभावात् । तस्य सामर्थ्यलब्धार्थानुवादरूपत्वात्— इति वदन्ति ।

रग.

( ३ ) 'भेदव्यपदेशात्' — इतश्चाय ( द्युभ्वाद्यायतन ) न प्रत्यगात्मा । समाने वृक्षे वीतशोकः' इत्यादिभिर्जीवाद्विलक्षणत्वेनाय व्यपदिश्यते । अनीशया भोग्यभूतया प्रकृत्या मुह्यमानः शोचति जीव. । अथ यदा स्वस्मादन्य सर्वस्येश प्रीयमाण अस्येश्वरस्य महिमान च निखिलजगन्नियमनरूप पश्यति तदा वीतशोको भवति । * रामानुज १।३।४

( ४ ) 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ' — 'जुष्ट यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' इति भेदव्यपदेशात् ईशपदप्राप्तोऽपि न रुद्रः ।

१।२।२२

[ ईशशब्दाददृश्यत्वादिगुणको रुद्र इत्यस्योत्तरतयाऽपि सूत्रशेष व्याचष्टे — जुष्टमिति । अस्य अक्षरस्य अन्य ईश इति प्रसिद्धेशाद्रुद्राद्भेदव्यपदेशात् न रुद्रोऽदृश्यत्वादिगुणक इत्यर्थः । तत्त्वप्रकाशिका ]

'भेदव्यपदेशात्'— न चैक्य वाच्य, 'जुष्ट यदा०' इति भेदव्यपदेशात् ।

ब्रमध्व १।३।५

११७ ), १।३।४, २।१।४, ८, ब्रमध्व १।१।१७, १।२।२२, १।३।५, श्रीकठ १।२।११, १।३।४, २।१।२२, श्रीकर १।१।४ ( पृ ४६ ), १।१।१३ ( पृ ६३ ), १।२।११, १।३।५, १।४।२२ ( पृ १७७ ), २।१।६, २३, ३।२।३५, ३।३।५१, विज्ञान १।१।२ ( पृ ४५ ), १।२।१२, २२, १।३।५, बलदेव १।१।२, २।१।२२, ४।१।३

* श्रीकठ श्रीकर विज्ञान. रामानुजवद्भाव ।

[ नैक्याभिप्रायेण जीव एवाऽऽत्मशब्दादिप्रयोगोऽत्रेति वाच्यम् । अत्रैव 'अन्यमीशम्' इति जीवेशभेद व्यपदेशादित्यर्थ. । तत्त्वप्रकाशिका ]

**यदा पश्य' पश्यते रुक्मवर्णं कर्तारमीश पुरुष ब्रह्मयोनिम् ।**
**तदा विद्वान् पुण्यपापे विधूय निरञ्जन परम साम्यमुपैति ॥**

( १ ) अन्योऽपि मन्त्र इममेवार्थमाह सविस्तरम् । यदा यस्मिन् काले पश्य पश्यतीति विद्वान् साधक इत्यर्थः । पश्यते पश्यति पूर्ववद्रुक्मवर्णं स्वयज्योतिःस्वभाव, रुक्मस्येव वा ज्योतिरस्याविनाशि, कर्तार सर्वस्य जगतः ईश पुरुष ब्रह्मयोनिं, ब्रह्म च तद्योनिश्चासौ ब्रह्मयोनिस्त ब्रह्मयोनिं, ब्रह्मणो वाऽपरस्य योनिं, स यदा चैव पश्यति, तदा स विद्वान् पश्यः पुण्यपापे बन्धन भूते कर्मणी समूले विधूय निरस्य दग्ध्वा, निरञ्जनो निर्लेपो विगतक्लेश परम प्रकृष्ट निरतिशय साम्य समतामद्वयलक्षणा, द्वैतविषयाणि साम्यान्यतोऽर्वाञ्च्येव, अतोऽद्वयलक्षणमेतत्परम साम्यमुपैति प्रतिपद्यते ।

शकर

( २ ) 'योनिश्च हि गीयते'— इतश्च प्रकृतिर्ब्रह्म, यत्कारण 'योनि.' इत्यपि पठ्यते वेदान्तेषु— 'कर्तारमीश पुरुष ब्रह्मयोनिम्' इति 'यद्भूतयोनिं परिपश्यन्ति धीरा' ( मुड १।१।६ ) इति च । योनिशब्दश्च प्रकृतिवचन. समधिगतो लोके 'पृथिवी योनिरोषधिवनस्पतीनाम्' इति । स्त्रीयोनेरप्यस्त्येव अवयवद्वारेण गर्भं प्रत्युपादानत्वम् ।

१।४।२७

'हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम्'— अस्ति ताण्डिना श्रुति 'अश्व इव रोमाणि विधूय पाप चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृत कृतात्मा ब्रह्मलोकमभिसभवामि' ( छाउ ८।१३।१ ) इति । तथा आथर्वणिकाना 'तदा विद्वान् पुण्यपापे विधूय निरञ्जन परम साम्यमुपैति' इति । तथा शाट्यायनिनः पठन्ति 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्या द्विषन्त पापकृत्याम्' इति । तथैव कौषीतकिन' 'तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्' (कौउ १।४) इति । तदिह क्वचित्सुकृतदुष्कृतयोर्हान श्रूयते, क्वचित्तयोरेव विभागेन प्रियैरप्रियैश्चोपायन, क्वचित्तु उभयमपि हानमुपायन च । तद्यत्रोभय श्रूयते तत्र तावन्न किञ्चिद्वक्तव्यमस्ति । यत्राप्युपायनमेव श्रूयते, न हान, तत्राप्यर्थादेव हान सनिपतति, अन्यैरात्मीययो. सुकृतदुष्कृतयोरुपेयमानयोरावश्यकत्वात्तद्धानस्य । यत्र तु हानमेव श्रूयते, नोपायन, तत्र उपायन सनिपतेद्वा न वेति विचिकित्साया अश्रवणादसनिपात , विद्यान्तरगोचरत्वाच्च शाखान्तरीयस्य श्रवणस्य । अपि च आत्मकर्तृक सुकृतदुष्कृतयोर्हान, परकर्तृक तूपायन, तयोरसत्यावश्यकभावे कथ हानेनोपायनमाक्षिप्येत । तस्मादसनिपातो हानावुपायनस्येति । अस्यां प्राप्तौ पठति — हानाविति । हानौ त्वेतस्या केवलायामपि श्रूयमाणायामुपायन सनिपतितुमर्हति, तच्छेषत्वात् । हानशब्दशेषो ह्युपायनशब्द समधिगतः कौषीतकिरहस्ये । तस्मादन्यत्र केवलहानश्रवणेऽप्युपायनानुवृत्ति. । यदुक्तमश्रवणाद्विद्यान्तरगोचरत्वादनावश्यकत्वाच्चासनिपात इति, तदुच्यते — भवेदेषा व्यवस्थोक्तिर्यद्यनुष्ठेय किञ्चिदन्यत्र श्रुतमन्यत्र निनीष्येत । न त्विह हानमुपायन वा अनुष्ठेयत्वेन सकीर्त्यते । विद्यास्तुत्यर्थे त्वनयोः सकीर्तन, इत्थ महाभागा विद्या यत्सामर्थ्यादस्य विदुषः सुकृतदुष्कृते ससारकारणभूते विधूयेते, ते चास्य सुहृद्दुर्हृत्सु निविशेते इति । स्तुत्यर्थे चास्मिन्सकीर्तने हानानन्तरभावित्वेनोपायनस्य क्वचित् श्रुतत्वादन्यत्रापि हानश्रुतावुपायनानुवृत्तिं मन्यते स्तुतिप्रकर्ष-

(१) मुउ ३।१।३, ब्रशकर १।४।२७, ३।३।२६, २९, भास्कर १।४।२६, ३।३।२६, रामानुज १।१।१ ( पृ ८० ), १।३।२, २१, १।४।२८, ३।३।२६, ५७, ४।१।१, ४।४।४, १७, निंबार्क १।३।२, ३।२।२६, ३।३।२६, ब्रमध्व १।२।२३, ३।२।१५, श्रीकठ १।३।२, ८, २१, ३।३।२६, ४०, ४।४।४, १७, २१, श्रीकर १।३।२, ६, १।४।२७, २।१।१२, २२, २६, ३।१।१८, २०, ३।३।२६, २८, ५७, ४।१।३, १३, ४।२।१७, ४।४।४, १७, २०, २१, वल्लभ १।४।२७, ३।३।२६, विज्ञान १।१।२ ( पृ ४७ ), १।३।४२, ३।३।२६, ३७; बलदेव १।१।१७, १।२।२३, १।३।२, २२, १।४।२७, २।१।२१, ३।३।५२, ४।४।२०

लाभाय। प्रसिद्धा चार्थवादान्तरापेक्षा अर्थवादान्तरप्रवृत्ति 'एकविंशो वा इतोऽसावादित्य' (छाउ २।१०।५) इत्येवमादिषु। कथ हि इह एकविंशताऽऽदित्यस्याभिधीयेत अनपेक्ष्यमाणेऽर्थवादान्तरे 'द्वादश मासा. पञ्चर्तव स्त्रय इमे लोका असावादित्य एकविंश.' इत्यस्मिन्। तथा 'त्रिष्टुभौ भवतः सेन्द्रियत्वाय' इत्येवमादिवादेषु 'इन्द्रिय वै त्रिष्टुप्' इत्येवमाद्यर्थवादान्तरापेक्षा दृश्यते। विद्यास्तुत्यर्थत्वाच्चास्योपायनवादस्य कथमन्यदीये सुकृतदुष्कृते अन्यैरुपेयेते इति नातीव अभिनिवेष्टव्यम्। 'उपायनशब्दशेषत्वात्' इति च शब्दशब्द समुच्चारयन् स्तुत्यर्थामेव हानावुपायनानुवृत्तिं सूचयति। गुणोपसहारविवक्षाया हि उपायनार्थस्यैव हानावनुवृत्तिं ब्रूयात्। तस्मात् गुणोपसहारविचारप्रसङ्गेन स्तुत्युपसहारप्रदर्शनार्थमिद सूत्रम्। कुशाच्छन्दस्स्तुत्युपगानवदित्युपमानोपादानम्। तद्यथा भाल्लविना 'कुशा वानस्पत्या स्थ ता मा पात' इत्येतस्मिन्निगमे कुशानामविशेषेण वनस्पतियोनित्वश्रवणे शाट्यायनिना 'औदुम्बरा' इति विशेषवचनादौदुम्बर्य• कुशा आश्रीयन्ते। यथा च क्वचिद्देवासुरच्छन्दसाम विशेषेण पौर्वापर्यप्रसङ्गे 'देवच्छन्दासि पूर्वाणि' इति पैङ्ग्याम्नानात्प्रतीयते। यथा च षोडशिस्तोत्रे केषाचित्कालाविशेषप्राप्तौ 'समयाध्युषिते सूर्ये' इत्यार्चादिश्रुतेः कालविशेषप्रतिपत्ति। यथैव चाविशेषेणोपगान केचित्समामनन्ति, विशेषेण भाल्लविन.। यथैतेषु कुशादिषु श्रुत्यन्तरगतविशेषान्वय, एव हानावप्युपायनान्वय इत्यर्थः। श्रुत्यन्तरकृत हि विशेष श्रुत्यन्तरेऽनभ्युपगच्छत. सर्वत्रैव विकल्प स्यात्। स च अन्याय्य. सत्या गतौ। तदुक्त द्वादशलक्षण्या 'अपि तु वाक्यशेषत्वादितरपर्युदास. स्यात्प्रतिषेधे विकल्प. स्यात्' इति।

अथवा एतास्वेव विधूननश्रुतिषु एतेन सूत्रेणैतच्चिन्तयितव्यम्— किमनेन विधूननवचनेन सुकृतदुष्कृतयोर्हानमभिधीयते, किंवा अर्थान्तरमिति। तत्र चैव प्रापयितव्य— न हान विधूननमभिधीयते, 'धूञ् कम्पने' इति स्मरणात्, 'दोधूयन्ते ध्वजाग्राणि' इति च वायुना चाल्यमानेषु ध्वजाग्रेषु प्रयोगदर्शनात्। तस्माच्चालन विधूननमभिधीयते। चालन तु सुकृतदुष्कृतयोः कचित्काल फलप्रतिबन्धनात्। इत्येव प्राप्य्य प्रतिवक्तव्य— हानावेवैष विधूननशब्दो वर्तितुमर्हति, उपायनशब्दशेषत्वात्। न हि परपरिग्रहभूतयोः सुकृतदुष्कृतयोरप्रहीणयो. परैरुपायन सभवति। यद्यपीद परकीययो सुकृतदुष्कृतयोः परैरुपायन नाऽऽञ्जस सभाव्यते, तथाऽपि तत्सकीर्तनात्तावत् तदानुगुण्येन हानमेव विधूनन नामेति निर्णेतु शक्यते। क्वचिदपि चेद विधूननसनिधावुपायन श्रूयमाण कुशाच्छन्दस्तुत्युपगानवत् विधूननश्रुत्या सर्वत्रापेक्ष्यमाण सार्वत्रिक निर्णयकारण सपद्यते। न च चालन ध्वजाग्रवत्सुकृतदुष्कृतयोर्मुख्य सभवति, अद्रव्यत्वात्। अश्वश्च रोमाणि विधून्वानस्त्यजत्रज. सहैव तेन रोमाण्यपि जीर्णानि शातयति। 'अश्व इव रोमाणि विधूय पापम्' इति च ब्राह्मणम्। अनेकार्थत्वाभ्युपगमाच्च धातूना न स्मरणविरोध। तदुक्तमिति व्याख्यातम्।

* ३।३।२६

'गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोध.'— क्वचित् पुण्यपापापहानसनिधौ देवयान. पन्था श्रूयते,

---

* 'हानौ तूपायन०' इतिसूत्रे शाकरभाष्ये उपलब्धेषु सर्वेषु पुस्तकेषु 'तथा विद्वान्नामरूपाद्विमुक्त' (मुउ ३।२।८) इति वाक्य विषयतया सगृहीतमुपलभ्यते। आनन्दाश्रममुद्रितपुस्तके पादटिप्पण्या 'तदा विद्वान् पुण्यपापे विधूय' इति प्रकृत वाक्य प्रकृतसूत्रे विषयत्वेन सगृहीतवता षण्णा पुस्तकानामस्ति निर्देश कृत। ब्रह्मामृतवर्षिणीशकरानन्ददीपिकाभ्या प्रकृतविषयसप्रतिपन्नैर्भास्करादिभाष्यैरपिच प्रकृतमेव वाक्य गोचरितमुपलभ्यते। भामत्यादिटीका अप्यस्य विषयभावे न प्रतिकूलतामुपयन्ति। समाश्रितविषयत्वानीतराणि छान्दोग्यादिवाक्यानि प्रति, प्रतिपाद्यविषय प्रति च शब्दतोऽर्थतश्च द्वितीयमेव वाक्य सनिकृष्यते व्युपसर्गधूञ्धातुपुण्यपापशब्दघटित, विप्रकृष्यते तु प्रथम नामरूपविमोकगर्भस्थितपुण्यपापविधूननपरतया विषयभाव भजत्। किंच, शाकरभाष्यगता 'अथ वैतास्वेव विधूननश्रुतिषु' इत्यादिवर्णकान्तरशब्दा अपि द्वितीयवाक्यपरिग्रहे एवानुगता भवन्ति। तस्मात् प्रकृतमेव वाक्य शाकरभाष्ये उक्ताधिकरणविषयभावमर्हतीत्यभिप्रेम।

भास्कर. १।४।२६, ३।३।२६ स्तुत्युपसहारतावर्जं अशंकरवत्।

क्वचिन्न । तत्र सशय.-- किं हानावविशेषेणैव देवयान' पन्था सनिपतेत् उत विभागेन क्वचित्सनिपतेत् क्वचिन्नेति । यथा तावत् हानौ अविशेषेणैव उपायनानुवृत्तिरुक्ता, एव देवयानानुवृत्तिरपि भवितुमर्हति, इत्यस्या प्राप्तौ आचक्ष्महे— गतेः देवयानस्य पथ' अर्थवत्त्व उभयथा विभागेन भवितुमर्हति क्वचिदर्थवती गति क्वचिन्नेति, नाविशेषेण । अन्यथा हि अविशेषेणैव एतस्या गतौ अङ्गीक्रियमाणायां विरोध' स्यात् । 'पुण्यपापे विधूय निरञ्जनः परम साम्यमुपैति' इत्यस्या श्रुतौ देशान्तरप्रापणी गतिर्विरुध्येत । कथ हि निरञ्जनोऽगन्ता देशान्तर गच्छेत् । गन्तव्य च परम साम्य न देशान्तरप्राप्त्यायत्तमित्यानर्थक्यमेवात्र गतेर्मन्यामहे ।

ब्रशकर ३।३।२९

( ३ ) पश्यतीति पश्य. । 'पाघ्राध्माधेट्दृश' श' ( पा सू ३।१।१३७ ) इति शप्रत्यय' । शित्त्वात्पश्यादेश. । यस्मिन्काले पश्यो ब्रह्मदर्शी 'आदित्यवर्णं तमसः परस्तात्' ( श्वेउ ३।८ ) 'हिरण्यश्मश्रुर्हिरण्यकेश' ( छाउ १।६।६ ) इत्युक्तरीत्या देदीप्यमानमङ्गलविग्रहयुक्त जगदीशितार तत्कर्तार ब्रह्मयोनिं 'तस्मादेतद्ब्रह्म' इति निर्दिष्टाव्याकृतब्रह्मोपादानभूत, 'भगवानिति शब्दोऽय तथा पुरुष इत्यपि । निरुपाधी च वर्तेते वासुदेवे सनातने ॥' इत्युक्तरीत्या पुरुषशब्द निर्दिष्ट वासुदेव यदा पश्यति तदा पुण्यपापे निरस्य निरस्तप्रकृतिलेप सन् अपहतपाप्मत्वादिगुणाष्टकलक्षणेन ब्राह्मेण रूपेण परम साम्यमुपैतीत्यर्थः । ब्रह्मयोनिमित्यत्र व्यासार्यै' 'षष्ठीतत्पुरुषे लक्षणाप्रसङ्गाद्ब्रह्मयोनिशब्दयो. सामानाधिकरण्यम्' इत्युक्त, तदतिसुन्दरम् ।

रग

( ४ ) 'मुक्तोपसृप्यव्यपदेशाच्च'—अय द्युपृथिव्याद्यायतनभूत. पुरुषः ससारबन्धान्मुक्तैरपि प्राप्यतया व्यपदिश्यते— 'यदाः पश्य साम्यमुपैति' 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्त गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्पर पुरुषमुपैति दिव्यम् ॥' ( मुउ ३।२।८ ) इति । ससारबन्धाद्विमुक्ता एव हि विधूतपुण्यपापा निरञ्जना नामरूपाभ्यां विमुक्ताश्च । पुण्यपापनिबन्धनाचित्ससर्गप्रयुक्तनामरूपभाक्त्वमेव हि ससार । अतो विधूतपुण्यपापैर्निरञ्जनैः प्रकृतिससर्गरहितैः परेण ब्रह्मणा परमसाम्यमापन्नैः प्राप्यतया निर्दिष्टो द्युपृथिव्याद्यायतनभूतः पुरुष पर ब्रह्मैव । १।३।२

'हानौ तूपायन०'— क्वचित्पुण्यपापयोर्हानिः, क्वचित्प्रियाप्रियेषु तत्प्राप्तिः, क्वचिदुभय च श्रुतम् । तदुभयमेकैकविद्याया श्रुतमपि सर्वविद्याङ्गमास्थेय, सर्वब्रह्मविद्यानिष्ठस्यापि ब्रह्म प्राप्नुवत पुण्यपापप्रहाणस्यावश्यभावित्वात्, प्रहीणविषयत्वाच्चोपायनस्य । तच्चिन्तन च विधीयमान सर्वविद्याङ्ग भवितुमर्हति ।

हानाविति प्रदर्शनार्थम् । केवलाया हानौ केवले चोपायने श्रूयमाणे तयोरितरेतरसमुच्चयोऽवश्यभावी । कुतः । उपायनशब्दशेषत्वात् । उपायनशब्दस्य हानिवाक्यशेषत्वात् । उपायनवाक्यस्य हि हानिवाक्यशेषत्वमेवोचित, विदुषा त्यक्तयो पुण्यपापयोः प्रवेशस्थानवाचित्वादुपायनवाक्यस्य ।

* रामानुज ३।३।२६

( ५ ) 'अतोऽनन्तेन तथा हि लिङ्गम्'—ब्रह्मसाक्षात्काराद्धेतोस्तेन सह साम्य याति, 'यदा पश्य' साम्यमुपैति' इति ज्ञापकात् ।

‡ निंबार्क ३।२।२६

( ६ ) 'रूपोपन्यासाच्च'—'यदा पश्यः पश्यते रुक्मवर्णं०' इति तस्यैव ( अदृश्यत्वादिगुणकस्य विष्णोरेव ) हि रूपाण्यभिधीयन्ते ।

§ ब्रमध्व १।२।२३

( ७ ) सविशेषमेव ब्रह्मस्वरूप मुक्तप्राप्यम् । 'परम साम्यमुपैति' इति श्रुत्या, 'मुक्तः शिवसमो भवेत्' इति स्मृत्या च मुक्तस्य परब्रह्मसादृश्यप्राप्त्यभिधानात् ।

३।३।४०

'अविभागेन दृष्टत्वात्' — पूर्वाधिकरणे ब्रह्मगुणस्वरूपसदृश मुक्तस्य गुणस्वरूपमिति प्रतिज्ञातम् । तत्सादृश्य मुक्तस्योपपद्यते न वेति विचारः । किं प्राप्तम् ।

* १।४।२८ ब्रशकरवत्, ३।३।२६ शेष ब्रशकरवत् ।

‡ १।३।२, ३।३।२६ रामानुजवत् ।

§ छाउ ८।१३।१ ( पृ ९८३ ) इत्यत्रापि द्रष्टव्यम् ।

'एको रुद्रो न द्वितीयाय तस्थौ' (श्वेउ ३।२) इत्यादिषु ब्रह्मण. सदृशस्य द्वितीयस्य निषेधात् कस्यचिदपि बद्धस्य मुक्तस्य वा तत्सादृश्यमनुपपन्नमिति । एव प्राप्ते सिद्धान्त उच्यते — मुक्तस्य ब्रह्मणा सादृश्यमस्ति । कुत. । 'निरञ्जन' परम साम्यमुपैति' 'मुक्त शिवसमो भवेत्' इति मुक्तस्य ब्रह्मगुणस्वरूपाविभागेन ब्रह्मसदृशतया दृष्टत्वात् । अतः 'ब्रह्म वेद ब्रह्मैव भवति' (मुउ ३।२।९) इति ब्रह्मसादृश्यमेवोच्यते । मुक्त आत्मा सादृश्याद्ब्रह्मस्वरूपाविभागेन स्वस्वरूपमनुभवति । यदुक्त 'एको रुद्रो न द्वितीयाय' इत्यादिना सादृश्यनिषेध. क्रियते इति, तत् जीवस्य जगद्व्यापाराद्यभावात् । वक्ष्यति 'भोगमात्रसाम्यलिङ्गाच्च' (ब्रसू ४।४।२१) इति । अतो ब्रह्मण इव सकलकामावाप्तिरस्य तत्साम्यमुच्यते । तथा श्रूयते — 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' (तैउ. २।१) इति । अतो मुक्तस्य ब्रह्मसादृश्यमुपपद्यते ।

* श्रीकठ ४।४।४

(८) 'न तृतीये तथोपलब्धे'— तृतीये मोक्षमार्गे गच्छता शिवैकनिष्ठाना पुण्यापुण्यलब्ध(ब्य)स्वर्गनरकप्राप्तिर्न सभवति । कुत. । तदुपलब्धे । 'यदा पश्य. पश्यते०' इत्यादिश्रुतिशतेषु पुण्यापुण्य(लब्धव्य)-विलक्षणशिवैकत्वप्राप्तेर्भक्तानामुपदिष्टत्वात् ।

‡ श्रीकर ३।१।१८

(९) 'हानौ तूपायन०'–'तदा विद्वान्०' इत्याथर्वणिकै. पठ्यते । परमपदेन ब्रह्मोच्यते । तथा च सकार्याविद्यारहित परममुपैति, तदनन्तर साम्यमुपैतीति योजना । तत्रेद विचार्यते — साम्य हि समानजातीयधर्मवत्त्वम् । तच्च कतिपयधर्मैः अशेषतन्निष्ठधर्मैर्वा भवति । तत्र अन्त्यः पक्षो ब्रह्मणा सम न सभवति, 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुतिविरोधात् । अत आद्य एव पक्षोऽनुसर्तव्य· । तत्र कैर्धर्मैः साम्यमिहोच्यते इत्याकाङ्क्षायामाह —हानाविति । ब्रह्मणः सकाशाद्विभागो जीवस्य हानिशब्देनोच्यते । तथा च तस्या सत्यां ये धर्मा जीवनिष्ठा आनन्दाद्यैश्वर्यादयो भगवदिच्छया तिरोहितास्ते ब्रह्मसबन्धे सति पुनराविर्भूता इति तैरेव तथेत्यर्थ । भगवदानन्दादीना पूर्णत्वात् जीवानन्दादीनामल्पत्वात् नाम्नैव समैर्धर्मै कृत्वा ब्रह्मसाम्य जीवे उपचर्यते 'साम्यमुपैति' इति । वस्तुतस्तु नैतैरपि धर्मै साम्यमिति भाव । अत एव 'न तत्समः' इति श्रुतिरविरुद्धा । अत एव सूत्रकृता साम्यमुपैतीति साम्योपायनशब्दमात्र, न तु साम्यपदार्थ. स्वारसिकोऽत्रास्तीति भावप्रकटनाय शब्दशब्द उक्तः । ननु तैरेव धर्मै साम्य, नेतरैरित्यत्र को हेतुरित्याकाङ्क्षायामाह— उपायनशब्दशेषत्वादिति । 'परममुपैति' इति य उपायनशब्द तच्छेषत्वात्साम्योपायनस्येत्यर्थ. । ब्रह्मसबन्धहेतुकत्वादानन्दाद्याविर्भावस्य, तदैव साम्योपायनकथनात्तैरेव धर्मैः साम्यमभिप्रेतमिति भाव । नन्वानन्दादीनां ब्रह्मधर्मत्वात् तैस्तत्साम्यकथन तदभेदमेव गमयतीत्याशङ्क्य तद्धर्मवत्त्वमात्रस्य न तदभेदसाधकत्वमित्यत्र दृष्टान्तमाह— कुशेत्यादि । कुशा औदुम्बर्य. समिध । ता अग्निष्टोमादियागेषु प्रस्तोत्रा स्थाप्यन्ते । तदा तत्सबन्धि यच्छन्द.-स्तुत्युपगान, तद्वदित्यर्थः । तत्र 'अभि त्वा शूर नोनुमोऽदुग्धाइव धेनव' (ऋस ७।३२।२२) इत्यृचि ये वर्णास्तेषामच एवोपसहृत्य भकारेणैव गान क्रियते । न हि तदार्चिकवर्णधर्माणामचामुपसहारोऽस्तीति तदृगात्मत्व भकारस्य सभवति । एव प्रकृतेऽपि ब्रह्मधर्मप्राकट्येन न तदात्मकत्व जीवस्य सभवति । ननु तत्त्वमस्यादिवाक्यैरत्राभेदबोधनादस्तु तथेति चेत्तत्राऽऽह—तदुक्तमिति । जीवब्रह्माभेदबोधनतात्पर्य मुक्तमित्यर्थः । 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' (ब्रसू २।३।२९) इति सूत्रेणेति शेषः । अपि च श्रुतौ ब्रह्मोपायनस्य साम्योपायनहेतुत्वोक्त्या तदनुपायनस्य साम्यानुपायने हेतुत्वमिति ज्ञाप्यते । तथा च 'पराभिध्यानात्तु तिरोहित ततो ह्यस्य बन्धविपर्ययौ' (ब्रसू ३।२।५) इति सूत्रे जीवस्य ब्रह्मांशत्वेनानन्दैश्वर्यादिब्रह्मधर्मवत्त्वात् ब्रह्मणः सकाशाद्विभागे सति तदिच्छया तद्धर्मतिरोधानस्य ससारित्वे हेतुत्वमुक्त यत्, तदपि तदुक्तमित्यनेन स्मार्यते इति न विस्मर्तव्यम् । यथा अन्यशाखोक्तधर्मा अप्येकस्या विद्यायामुपसह्रियन्ते,

* १।३।२, ३।३।२६ रामानुजवत् । छाउ ७।२४।१ (पृ ९४५) इत्यत्रापि द्रष्टव्यम् ।

‡ १।४।२७ ब्रशकरवत्, ३।३।२६ रामानुजवत् ।

एव ब्रह्मनिष्ठा धर्मा जीवेऽप्येतया श्रुत्या बोध्यन्ते इत्येतावत्साम्यमस्तीत्युपसहारप्रकरणे एतस्य निरूपण कृतम् ।

वल्लभ. ३।३।२६

( १० ) 'हानौ तूपायन०'— ननु 'ज्ञानाग्नि. सर्वकर्माणि भस्मसात्कुरुते तथा' ( भ गी ४।३७ ) इत्यादिवचनात् कथ तत्त्वज्ञानस्यापूर्वजनकत्व घटते, विरोधात् । किंच ब्रह्मविद्यायाः त्यक्तदेहस्यापि सत्यलोकादिगति. कषायशेषादिवशाद्वक्ष्यते । तस्याश्च कथ विद्यापूर्वजन्यत्व वक्तु शक्यते, 'यदा पश्य .. साम्यमुपैति' इत्यदिश्रुतौ ब्रह्मविदुषोऽविशेषेण सर्वापूर्वक्षयश्रवणात् । न च तद्वाक्य सद्यो मुक्तिपरमेवास्त्विति वाच्य, 'ते ब्रह्मलोकेषु परान्तकाले परामृता. परिमुच्यन्ति सर्वे' ( मुड ३।२।६ ) इत्युत्तर वाक्येन क्रममुक्त्यवगमात्, इत्याशङ्का निराकरोति— हानाविति । हानौ तु विदुष. सर्वकर्महानिवाक्ये तु कुशाछन्दःस्तुत्युपगानवत् विशिष्टमेव तदपूर्वमुक्त, न त्वपूर्वसामान्यम् । कुत. । उपायनशब्दशेषत्वात् । इति योजना । अयमर्थ.—उदाहृतवाक्ये सामान्यतोऽदृष्टहानश्रवणेऽपि श्रुत्यन्तरस्थादुपायनशब्दशेषत्वाददृष्टविशेषो विद्याजन्यातिरिक्तापूर्वरूप एवावधार्यते इति । उपायन चोपगमनम् । तत्र उपायनशब्दो यथा कौषीतकिना—'तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातय' सुकृतमुपयन्त्यप्रिया दुष्कृतम्' ( कौड १।४ ) इति । अत्र वाक्ये सुकृतदुष्कृतयोर्हान प्रियाप्रियशाल्युपायनवाक्यशेषत्वेन वर्तते । तथा च ये पुण्यापुण्ये मित्रामित्राभ्यां प्राप्ये, तयोरेव हान विधूननाख्य भवतीति गम्यते, तच्छेषत्वेनैव विधूननकथनात् । न च ब्रह्मविद्याजन्य मोक्षसत्यलोकयोः प्रापकमपि सुकृत मित्रेषु गच्छतीति युज्यते, तथा सति विदुषो मोक्षसत्यलोकप्राप्त्यसभवात् । प्रिया अप्रियाश्च सुकृतदुष्कृते उपयन्तीत्यस्य च विदुषा पुण्यपापे प्रियाप्रिययो. सजातीयपुण्यपापे जनयित्वा नश्यत इत्यर्थ' । तथा च एतच्छ्रुत्येकवाक्यतया क्रममुक्तौ सर्वाण्येव विदुष. कर्मक्षयवाक्यानि विद्याजन्यसुकृतातिरिक्तकर्मपराणीति सूत्रमहावाक्यर्थः ।

विज्ञान. ३।३।२६

ईश प्राण सर्वभूतवासी, तज्ज्ञ क्रियावान् ब्रह्मविदा वरिष्ठ

**प्राणो ह्येष य. सर्वभूतैर्विभाति विजानन्विद्वान् भवते नातिवादी ।**
**आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठ ॥**

( १ ) किंच, योऽय प्राणस्य प्राण पर ईश्वरो ह्येष प्रकृतः सर्वभूतै सर्वैर्भूतैः ब्रह्मादिस्तम्बपर्यन्तैः । इत्थभूतलक्षणे तृतीया । सर्वभूतस्थ. सर्वात्मा सन्नित्यर्थ । विभाति विविध दीप्यते । एव सर्वभूतस्थ य' साक्षादात्मभावेनायमहमस्मीति विजानन् विद्वान् वाक्यार्थज्ञानमात्रेण, स भवते भवति, न भवतीत्येतत् । किम् । अतिवादी, अतीत्य सर्वानन्यान्वदितु शीलमस्येत्यतिवादी । यस्त्वेव साक्षादात्मान प्राणस्य प्राण विद्वान्, अतिवादी स न भवतीत्यर्थः । सर्वं यदाऽऽत्मैव नान्यदस्तीति दृष्ट, तदा किं ह्यसावतीत्य वदेत् । यस्य त्वपरमन्यद्दृष्टमस्ति, स तदतीत्य वदति । अय तु विद्वानात्मनोऽन्यन्न पश्यति, नान्यच्छृणोति, नान्य द्विजानाति, अतो नातिवदति । किंच आत्मक्रीड. आत्मन्येव च क्रीडा क्रीडन यस्य, नान्यत्र पुत्रदारादिषु, स आत्मक्रीडः । तथा आत्मरति. आत्मन्येव च रति रमण प्रीतिर्यस्य स आत्मरतिः । क्रीडा बाह्यसाधनसापेक्षा । रतिस्तु साधननिरपेक्षा बाह्यविषयप्रीतिमात्रमिति विशेष. । तथा क्रियावान् ज्ञानध्यानवैराग्यादिक्रिया यस्य सोऽय क्रियावान् । समासपाठे आत्मरतिरेव क्रियाऽस्य विद्यते इति बहुव्रीहिमतुबर्थयोरन्यतरोऽतिरिच्यते । केचित्त्वग्निहोत्रादिकर्मब्रह्मविद्ययो. समुच्चयार्थमिच्छन्ति । तच्च 'एष ब्रह्मविदा वरिष्ठ' इत्यनेन मुख्यार्थवचनेन विरुध्यते । न हि बाह्यक्रिय आत्मक्रीड आत्मरतिश्च भवितु शक्तः कश्चित् । बाह्यक्रियाविनिवृत्तो ह्यात्मक्रीडो भवति, बाह्यक्रियात्मक्रीडयोर्विरोधात् । न हि तम प्रकाशयोर्युगपदेकत्र स्थितिः

(१) मुड ३।१।४, रग भवते नाति ( भव तेनाति ) नेष ब्रह्म ( नेष हि ब्रह्म ), रामानुज १।१।१ (पृ ११), विज्ञान १।१।१ ( पृ १०, १४ ), ३।४।१०, ३९ आत्मक्रीड ( आत्मक्रीडा ), बलदेव ३।४।२२, ३८

सम्भवति। तस्मादसत्प्रलपितमेवैतत् अनेन ज्ञानकर्मसमुच्चयप्रतिपादनम्। ‘अन्या वाचो विमुञ्चथ’ ‘सन्यास योगात्’ इत्यादिश्रुतिभ्यश्च। तस्मादयमेवेह क्रियावान् यो ज्ञानध्यानादिक्रियावान्सोऽभिन्नार्थमर्याद. सन्यासी। य एवलक्षणो नातिवाद्यात्मक्रीड आत्मरतिः क्रियावान् ब्रह्मनिष्ठ. स ब्रह्मविदा सर्वेषा वरिष्ठ. प्रधान।

शकर

(२) ‘सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसविशन्ति’ इत्यादाविव प्राणशब्द. परमात्मपर। एप परमात्मा सर्वभूतैराश्रितो भवतीत्यर्थ। भवेति लोण्मध्यमपुरुषैकवचनम्। विजानन् श्रवणमननाभ्यां जानन् विद्वांस्तमुपासीनस्तेन परमात्मनाऽतिवादी भवेति शिष्य प्रत्युपदेश। अतीत्य सर्वान् वदितु शीलमस्य सोऽतिवादी। यस्तु स्वोपास्यदेवताया. सर्वातिशायित्व वदति सोऽतिवादीत्युच्यते। यस्य क्रीडा आत्मन्येव नोद्यानादिषु स आत्मक्रीड। यस्य रतिरात्मन्येव न स्रक्चन्दनादिषु स आत्मरति। रतिः स्रक्चन्दनादिजन्या प्रीति क्रीडा उद्यानादिजन्येति भूमाधिकरणे व्यासार्यैरुक्तत्वात्। क्रियावान् अननुसहितफलक्रियानुष्ठानशील.। एवभूतश्च भवेति योजना। क्रियावत्त्व किमर्थमित्यत्राह — एष हि ब्रह्मविदां वरिष्ठ इति। क्रियया ह्यन्त करणे परिशुद्धे ब्रह्मविद्यानिष्पत्त्या ब्रह्मविदा वरिष्ठो भवति।

रग

(३) ‘सर्वाणि भूतानि सुखे रमन्ते सर्वाणि दु खेषु तथोद्विजन्ति। तेषा भयोत्पादनजातखेदः कुर्यान्न कर्माणि हि जातवेद.॥’ इत्यादीनि जातवेदाना विदुषां कर्मत्यागविधायकवाक्यानि बाह्यकर्मत्यागपराण्येवावगन्तव्यानि, ‘आत्मक्रीडा आत्मरतिः क्रियावानेष ब्रह्मविदा वरिष्ठः’ इत्यादिश्रुतिभिरात्मारामस्यापि विदुष· कर्मावगमात्। ‘ज्ञानिनाऽज्ञानिना वाऽपि यावद्देहस्य धारणम्। तावद्वर्णाश्रमप्रोक्त कर्तव्य कर्म मुक्तये॥’ ‘ज्ञानेनैव सहैतानि नित्यकर्माणि कुर्वत·। निवृत्तफलतृप्तस्य मुक्तिस्तस्य करे स्थिता॥’ इति वसिष्ठकौर्मादिस्मृतिभिर्विदुषोऽपि कर्मावश्यकत्वस्मरणाच्च। १।१।१ (पृ. ११)

‘अतस्त्वितरज्ज्यायो लिङ्गाच्च’ —अतः अन्तरालवर्तित्वात् इतरत् आश्रमित्व तु ज्यायो मुख्यकल्पः, लिङ्गाच्च। ‘आत्मक्रीडा आत्मरति. क्रियावानेष ब्रह्मविदा वरिष्ठ’ इति लिङ्गाच्चेत्यर्थ.। अत्र हि क्रियावत्त्वस्योत्कृष्टत्ववचनात्तदुपयोग्याश्रमरूपोऽप्युत्कर्षोऽनुमीयते इति।

* विज्ञान ३।४।३९

यतिभि सत्यसाधनद्वारा विशुद्धे हृदये दर्शनीय आत्मा

**सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्।**
**अन्त·शरीरे ज्योतिर्मयो हि शुभ्रो य पश्यन्ति यतय· क्षीणदोषा.॥**

(१) अधुना सत्यादीनि भिक्षोः सम्यग्ज्ञानसहकारीणि साधनानि विधीयन्ते निवृत्तिप्रधानानि। सत्येन अनृतत्यागेन मृषावदनत्यागेन लभ्य प्राप्तव्य। किंच, तपसा हि इन्द्रियमनएकाग्रतया, ‘मनसश्चेन्द्रियाणा च ह्यैकाग्र्य परम तप’ इति स्मरणात्। तद्ध्यनुकूलमात्मदर्शनाभिमुखीभावात्परम साधन तपो नेतरच्चान्द्रायणादि। एष आत्मा लभ्य इत्यनुषङ्ग. सर्वत्र। सम्यग्ज्ञानेन यथाभूतात्मदर्शनेन। ब्रह्मचर्येण मैथुनासमाचारेण। नित्य सर्वदा। नित्य सत्येन नित्य तपसा नित्य सम्यग्ज्ञानेनेति सर्वत्र नित्यशब्दोऽन्तर्दीपिकान्यायेनानुषक्तव्यः। वक्ष्यति च— ‘न येषु जिह्ममनृत न माया च’ (प्रश. १।१६) इति। कोऽसावात्मा य एतैः साधनैर्लभ्य इत्युच्यते—अन्त.शरीरे अन्तर्मध्ये शरीरस्य पुण्डरीकाकाशे ज्योतिर्मयो हि रुक्मवर्णः शुभ्र. शुद्धो यमात्मान पश्यन्ति उपलभन्ते यतयः यतनशीलाः सन्यासिन. क्षीणदोषा क्षीणक्रोधादिचित्तमला.। स आत्मा नित्य सत्यादिसाधनैः सन्यासिभिः लभ्यते इत्यर्थः। न कादाचित्कै. सत्यादिभिर्लभ्यते।

* छान्दो १।१।१० (पृ ७५१) इत्यत्रापि द्रष्टव्यम्।
(१) मुड ३।१।५, श्रीकठ. १।१।१ (पृ ४५); श्रीकर. १।१।१ (पृ १५), १।४।२२ (पृ १७६), ३।४।३३, विज्ञान. १।१।२ (पृ ४१), ३।३।४८, बलदेव १।१।१.

सत्यादिसाधनस्तुत्यर्थोऽयमर्थवाद. ।

शकर

( २ ) रागादिदोषशून्या जितेन्द्रिया य पश्यन्ति स शरीरान्तर्वर्ती ज्ञानमयो निर्दोष आत्मा । ‘ मनसश्चेन्द्रियाणा च ह्यैकाग्र्य परम तप. ’ इत्युक्तबाह्याभ्यन्तरेन्द्रियैकाग्र्यलक्षणतपसा आगमोत्थज्ञानेन च स्त्रीसङ्गादिराहित्यलक्षणनित्यब्रह्मचर्येण च सत्येन भूतहितवचनेन च लभ्य साक्षात्कर्तव्य. । अथवा लभ्य. प्राप्य इत्यर्थ । प्राप्तिश्चोपासनाद्वारेति द्रष्टव्यम् ।

रग

( ३ ) ‘ सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ’ इत्यादिका ज्ञानकर्मसमुच्चयवादिनी श्रुतिरुपलभ्यते । ततः कर्मज्ञानयोर्मोक्षैकफलत्वात् तद्विचारयोरपि क्रमनियमो युक्त. ।

* श्रीकठ १।१।१ ( पृ ४५ )

( ४ ) ‘ दर्शनाच्च ’ — न केवलमवधारणादेव आध्यानरूपमिथ्याज्ञानस्य मोक्षहेतुत्व, अपि तु दर्शनात् साक्षाच्छ्रुतेरपीत्यर्थः । साक्षात् श्रुतिश्च—‘ सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ’ इति । विज्ञान ३।३।४८

**सत्यमेव जयति नानृत सत्येन पन्था विततो देवयान ।**
**येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परम निधानम् ॥**

( १ ) सत्यमेव सत्यवानेव जयति नानृत नानृतवादीत्यर्थ. । न हि सत्यानृतयोः केवलयो पुरुषानाश्रितयो जय पराजयो वा सभवति । प्रसिद्ध लोके सत्यवादिनाऽनृतवाद्यभिभूयते न विपर्ययः, अत सिद्ध सत्यस्य बलवत्साधनत्वम् । किंच शास्त्रतोऽप्यवगम्यते सत्यस्य साधनातिशयत्वम् । कथम् ? सत्येन यथाभूतवादव्यवस्थया पन्था देवयानाख्यो विततो विस्तीर्ण सातत्येन प्रवृत्तः । येन पथा ह्याक्रमन्ति क्रमन्ते ऋषयो दर्शनवन्त कुहकमायाशाठ्याहङ्कारदम्भानृतवर्जिता ह्याप्तकामा विगततृष्णा. सर्वतः, यत्र यस्मिन् तत्परमार्थतत्त्व सत्यस्योत्तमसाधनस्य सबन्धि साध्य परम प्रकृष्ट निधान पुरुषार्थरूपेण निधीयते इति निधान वर्तते । तत्र च येन पथा आक्रमन्ति, स सत्येन वितत इति पूर्वेण सबन्ध ।

शकर.

( २ ) येनेति । विगततृष्णा॰ सत्यदर्शिनो येन मार्गेण तत्प्राप्नुवन्ति हि । किं तदित्यत्राह—यत्रेति । यत्र स्थाने सत्यवदनस्य परमप्रयोजनभूत मूर्त ब्रह्म आस्ते तत्स्थानमित्यर्थ॰ ।

* रग

**बृहच्च तद्दिव्यमचिन्त्यरूप सूक्ष्माच्च तत्सूक्ष्मतरं विभाति ।**
**दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम् ॥**

( १ ) किं तत्किंधर्मक च तदित्युच्यते—बृहत् महच्च तत्प्रकृत ब्रह्म सत्यादिसाधन, सर्वतो व्याप्तत्वात् । दिव्य स्वयप्रभमनिन्द्रियगोचरम् । अत एव न चिन्तयितु शक्यतेऽस्य रूपमिति अचिन्त्यरूपम् । सूक्ष्मादाकाशादेरपि तत्सूक्ष्मतरम् । निरतिशय हि सौक्ष्म्यमस्य, सर्व कारणत्वात् । विभाति विविधमादित्यचन्द्राद्याकारेण भाति दीप्यते । किंच, दूरात् विप्रकृष्टदेशात् सुदूरे विप्रकृष्टतरे देशे वर्तते अविदुषामत्यन्तागम्यत्वात्तद्ब्रह्म । इह देहे अन्तिके समीपे च, विदुषामात्मत्वात् सर्वान्तरत्वाच्चाकाशस्याप्यन्तरश्रुते॰ । इह पश्यत्सु चेतनावत्स्वित्येतत् , निहित स्थित दर्शनादिक्रियावत्त्वेन योगिभिर्लक्ष्यमाणम् । क्व ? गुहाया बुद्धिलक्षणायाम् । तत्र हि निगूढ लक्ष्यते विद्वद्भि॰, तथाप्यविद्यया सवृत सन्न लक्ष्यते तत्रस्थमेवाविद्वद्भि॰ ।

शकर.

( २ ) अर्चिरादिप्राप्य विशिनष्टि—बृहच्चेति । स्वरूपतो गुणतश्च बृहत्परमाकाशनिलय वाङ्मनसागोचरकमनीयरूपवत्सर्वाचेतनान्तःप्रवेशनसमर्थाज्जीववर्गा-

---

* श्रीकर श्रीकठवत् ।

(१) मुड ३।१।६

* शेष शकरवत् ।

(१) मुड ३।१।७, विज्ञान १।३।५, बलदेव. १।२।३३; २।१।२७.

दपि तदनुप्रवेशसमर्थतया सूक्ष्मतर दीप्यते । दूराद्दूरे प्रकृते. परस्ताद्वर्तमाने परमपदे अन्तिके अण्डान्तर्वर्तिनि रविमण्डले पश्यत्सु ब्रह्मदर्शिषु इहैव हृदयाकाशे च निहितमित्यर्थः । रग

( ३ ) 'भेदव्यपदेशात्'—भेदव्यपदेशादपि न प्रधानजीवौ द्युभ्वाद्यायतनम् । 'तमसः परस्तात्' इति तम.शब्दोक्तादचेतनात्प्रधानाद्भेदव्यपदेश. । 'जुष्ट यदा पश्यत्यन्यमीशम्' इति 'पश्यत्स्विहैव निहित गुहायाम्' इति च पश्यद्भ्यो जीवेभ्यो भेदव्यपदेश इत्यर्थ. । विज्ञान १।३।५

**न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ।**
**ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु त पश्यते निष्कल ध्यायमान ॥**

( १ ) पुनरप्यसाधारण तदुपलब्धिसाधनमुच्यते । यस्मान्न चक्षुषा गृह्यते केनचिदप्यरूपत्वात्, नापि गृह्यते वाचा अनभिधेयत्वात्, न चान्यैर्देवैरितरेन्द्रियै । तपस. सर्वप्राप्तिसाधनत्वेऽपि न तपसा गृह्यते । तथा वैदिकेनाग्निहोत्रादिकर्मणा प्रसिद्धमहत्त्वेनापि न गृह्यते । किं पुनस्तस्य ग्रहणे साधनमित्याह— ज्ञानप्रसादेन । आत्मावबोधनसमर्थमपि स्वभावेन सर्वप्राणिनां ज्ञान बाह्यविषयरागादिदोषकलुषितमप्रसन्नमशुद्ध सन्नावबोधयति नित्य सनिहितमप्यात्मतत्त्व मलावनद्धमिवादर्शे, विलुलितमिव सलिलम् । तद्यदेन्द्रियविषयससर्गजनितरागादिमलकालुष्यापनयनात् आदर्शसलिलादिवत् प्रसादित स्वच्छ शान्तमवतिष्ठते, तदा ज्ञानस्य प्रसाद. स्यात् । तेन ज्ञानप्रसादेन विशुद्धसत्त्वो विशुद्धान्तःकरणो योग्यो ब्रह्म द्रष्टु यस्मात्, ततस्तस्मात्तु तमात्मान पश्यते पश्यति उपलभते निष्कल सर्वावयवभेदवर्जित ध्यायमानः सत्यादिसाधनवानुपसहृतकरण एकाग्रेण मनसा ध्यायमानश्चिन्तयन् ।

शकर.

( २ ) 'तदव्यक्तमाह हि' — यत्तत्प्रतिषिद्धाशेषप्रपञ्चजातादन्यत् पर ब्रह्म, तदस्ति चेत्कस्मान्न गृह्यते इत्युच्यते — तत् अव्यक्त अनिन्द्रियग्राह्य, सर्वदृश्यसाक्षित्वात् । आह ह्येव श्रुति. — 'न चक्षुषा गृह्यते नापि वाचा०' इत्याद्या । ३।२।२३

'अपि सराधने प्रत्यक्षानुमानाभ्याम्' — अपि चैनमात्मान निरस्तसमस्तप्रपञ्चमव्यक्त सराधनकाले पश्यन्ति योगिन । सराधन च भक्तिध्यानप्रणिधानाद्यनुष्ठानम् । कथ पुनरवगम्यते सराधनकाले पश्यन्तीति । प्रत्यक्षानुमानाभ्याम् । श्रुतिस्मृतिभ्यामित्यर्थः । तथा हि श्रुति·— 'ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु त पश्यते निष्कल ध्यायमानः' इति चैवमाद्या ।

*ब्रशकर ३।२।२४

( ३ ) देवा इन्द्रियाणि । शिष्ट स्पष्टम् । ज्ञायतेऽनेनेति व्युत्पत्त्या 'प्रज्ञा च तस्मात्प्रसृता पुराणी' ( श्वेत ४।१८ ) इति श्रुत्युक्तरीत्या ज्ञानप्रसरणहेतुः परमात्मा ज्ञानशब्देनोच्यते । अत्रमन्वयः— निष्कल परमात्मान ध्यायन् परमात्मप्रसादेन विशुद्धान्त करणो भवति । तदनन्तर दर्शनसमानाकारज्ञानेन त विषयीकरोतीत्यर्थ. ।

रग.

( ४ ) 'तदव्यक्तमाह हि'— शब्दबलविचारेण विरोध परिहृत्य अर्थबलविचारेणाविरोधप्रतिपादनाय अधिकरणमारभते । सर्वाणि विरुद्धवाक्यान्युदाहृत्य चिन्त्यते । 'न चक्षुषा गृह्यते' 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्' 'नापि वाचा' 'सर्वे वेदा यत्पदमामनन्ति' इत्यादिविरुद्धवाक्यानि । न हि वस्तु द्विरूप सभवति । वाक्यद्वयमपि प्रमाणम् । तथा सति प्रमाणान्तरानुरोधेनैकस्य स्वार्थे प्रामाण्य, अन्यस्योपचरितार्थत्वमिति युक्तम् । तत्र प्रत्यक्षानुरोधेन निर्णयो विचार्यते । तत्र

(१) मुड ३।१।८, ब्रशकर ३।२।२३, २४, २७, भास्कर १।१।१९, ३।२।२४, २५, २८ पश्यते (पश्यति), रामानुज १।१।४ ( पृ १५९ ), १।२।१, ३।२।२२, २३, ४।१।१, निंबार्क ३।२।२३, २४ भास्करवत्, श्रीकठ ३।२।२३, श्रीकर १।१।३ ( पृ ३९ ), १।३।२, २।१।२६, ३।२।२२, २३, ४।१।१, वल्लभ ३।२।२३, २४, विज्ञान १।१।३ ( पृ ७१ ) भास्करवत्, बलदेव ३।२।२४

* भास्कर रामानुज निंबार्क श्रीकठ श्रीकर. ब्रशकरवत् ।

पूर्वपक्षमाह—तदव्यक्तम्। तत् ब्रह्म अव्यक्तमेव भवितुमर्हति। कुतः। आह हि श्रुतिप्रत्यक्षाभ्याम्। 'नेति नेत्यात्मा अग्राह्यो न हि गृह्यते' इति। न हि गृह्यते इत्यनुभवसाक्षिक प्रमाण श्रुतिराह। न हि केनचिदपि चक्षुषा मनसा वा ब्रह्म दृष्टमस्ति। सर्वरूपत्वं तु सर्वैरेव द्रष्टु शक्येत। तस्मात् सर्वधर्मवत्त्वेन प्रतिपादकान्युपचरितार्थान्येव, अनुभवविरोधादित्येव प्राप्तम्।

३।२।२३

'अपि सराधने प्रत्यक्षानुमानाभ्याम्'— अपीति पूर्वपक्षगर्हायाम्। सर्वथा मूर्ख पूर्वपक्षवादी। यत सराधने सम्यक् सेवाया भगवत्तोषे जाते दृश्यते। 'श्रद्धाभक्तिध्यानयोगादवेहि' 'यमेवैष वृणुते तेन लभ्य' 'भक्त्या त्वनन्यया शक्य अहमेवविधोऽर्जुन। ज्ञातु द्रष्टु च तत्त्वेन प्रवेष्टु च परतप॥' (भ गी, ११।५४) इति द्विविधमपि रूप दृश्यते। 'ततस्तु त पश्यते निष्कल ध्यायमान.' 'अनेकबाहूदरवक्त्रनेत्र पश्यामि त्वां सर्वतोऽनन्तरूपम्' (भ गी ११।१६) इति सराधकस्य स्वानुभव., ध्रुवादीनामनुमापकत्व च। तस्मात् प्रत्यक्षानुमानाभ्या श्रुतिस्मृतिभ्या वा ब्रह्म साकारमनन्तगुणपरिपूर्ण चेति नाव्यक्तमेवेति निश्चय। अतो लौकिकालौकिकप्रत्यक्षविषयत्वादुभयवाक्यार्थरूपमपि ब्रह्म।

वल्लभ ३।२।२४

(५) देवैः मनआदिभिरित्यर्थ.। शक्तिशक्तिमतोरभेदात्।

विज्ञान १।१।३ (पृ ७१)

**एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राण· पञ्चधा सविवेश।**
**प्राणैश्चित्त सर्वमोत प्रजाना यस्मिन् विशुद्धे विभवत्येष आत्मा॥**

(१) यमात्मानमेव पश्यति, एषोऽणुः सूक्ष्मः आत्मा चेतसा विशुद्धज्ञानेन केवलेन वेदितव्य·। क्वासौ? यस्मिन् शरीरे प्राणो वायुः पञ्चधा प्राणापानादिभेदेन सविवेश सम्यक् प्रविष्ट., तस्मिन्नेव शरीरे हृदये चेतसा ज्ञेय इत्यर्थः। कीदृशेन चेतसा वेदितव्य इत्याह — प्राणैः सहेन्द्रियै चित्त सर्वमन्त·करण प्रजानामोत व्याप्त येन क्षीरमिव स्नेहेन, काष्ठमिवाग्निना। सर्वं हि प्रजानामन्त करण चेतनावत्प्रसिद्ध लोके। यस्मिंश्च चित्ते क्लेशादिमलवियुक्ते शुद्धे विभवत्येष उक्त आत्मा, विशेषेण स्वेनात्मना विभवति आत्मान प्रकाशयतीत्यर्थ।

शकर.

(२) 'स्वशब्दोन्मानाभ्या च'— इतश्चाणुरात्मा, यत· साक्षादेवास्याणुत्ववाची शब्द. श्रूयते— 'एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा सविवेश' इति। प्राणसबन्धाच्च जीव एवायमणुरभिहित इति गम्यते। तथा उन्मानमपि जीवस्याणिमान गमयति— 'वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीव. स विज्ञेयः' (श्वेउ ५।९) इति। 'आराग्रमात्रो ह्यवरोऽपि दृष्ट' (श्वेउ ५।८) इति च उन्मानान्तरम्।

२।३।२२

'तद्गुणसारत्वात्तु तद्व्यपदेश· प्राज्ञवत्' — एव प्राप्ते ब्रूम — तुशब्द. पक्ष व्यावर्तयति। नैतदस्ति अणुरात्मेति। उत्पत्त्यश्रवणाद्धि परस्यैव तु ब्रह्मण· प्रवेशश्रवणात्तादात्म्योपदेशाच्च परमेव ब्रह्म जीव इत्युक्तम्। परमेव चेद्ब्रह्म जीव. तस्माद्यावत्पर ब्रह्म तावानेव जीवो भवितुमर्हति। परस्य च ब्रह्मणो विभुत्वमाम्नात, तस्माद्विभुर्जीव। कथ तर्ह्यणुत्वादिव्यपदेश इत्यत आह—तद्गुणसारत्वात्तु तद्व्यपदेश इति। तस्या बुद्धेर्गुणास्तद्गुणा इच्छा द्वेष. सुख दु खमित्येवमादय., तद्गुणाः सार. प्रधान यस्याऽऽत्मन· ससारित्वे सभवति स तद्गुणसारः, तस्य भावस्तद्गुणसारत्वम्। न हि बुद्धेर्गुणैर्विना केवलस्याऽऽत्मन. ससारित्वमस्ति। बुद्ध्युपाधिधर्माध्यासनिमित्त हि कर्तृत्वभोक्तृत्वादिलक्षण ससारित्वमकर्तुरभोक्तुश्चाससारिणो नित्यमुक्तस्य सत आत्मनः। तस्मात्तद्गुणसारत्वाद्बुद्धिपरिमाणेनास्य परिमाणव्यपदेशः, तदुत्क्रान्त्यादिभिश्चास्योत्क्रान्त्यादिव्यपदेशो न स्वत·। तथा च 'वालाग्रशतभागस्य स

---

(१) मुड ३।१।९, ब्रशकर २।३।२२, २९, भास्कर २।३।२२, रामानुज २।३।२३, निंबार्क २।३।२२, श्रीकठ २।३।२३, श्रीकर १।१।४ (पृ ५३), १।३।४, १४, १।४।२२ (पृ १७५), २।३।१८, २१, विज्ञान २।३।२२, बलदेव २।३।१८

चाऽऽनन्त्याय कल्पते ' इत्यणुत्व जीवस्योक्त्वा तस्यैव पुनरानन्त्यमाह । तच्चैवमेव समञ्जस स्यात् यद्यौपचारिकमणुत्व जीवस्य भवेत् पारमार्थिक चाऽऽनन्त्यम् । न ह्युभय मुख्यमवकल्पेत । न चाऽऽनन्त्यमौपचारिकमिति शक्य विज्ञातु, सर्वोपनिषत्सु ब्रह्मात्मभावस्य प्रतिपिपादयिषितत्वात् । तथा इतरस्मिन्नप्युन्माने ' बुद्धेर्गुणेनाऽऽत्मगुणेन चैव० ' इति च बुद्धिगुणसबन्धेनैव आराग्रमात्रतां शास्ति, न स्वेनैवाऽऽत्मना । ' एषोऽणुरात्मा चेतसा वेदितव्य. ' इत्यत्रापि न जीवस्याणुपरिमाणत्व शिष्यते, परस्यैवाऽऽत्मनश्चक्षुराद्यनवग्राह्यत्वेन ज्ञानप्रसादगम्यत्वेन च प्रकृतत्वात् । जीवस्यापि च मुख्याणुपरिमाणत्वानुपपत्ते । तस्मात् दुर्ज्ञानत्वाभिप्रायमिदमणुत्ववचन उपाध्यभिप्राय वा द्रष्टव्यम् ।

* ब्रशकर २।३।२९

( ३ ) यस्मिन्नात्मनि प्राणापानादिपञ्चरूपेण विभक्त· प्राण आश्रित., इतरैरिन्द्रियै सह प्रजानां सर्वमपि मन आश्रित, यस्मिंश्च परमात्मनि विशुद्धे प्रसन्ने सत्येष जीवात्मा अपहतपाप्मत्वादिगुणाष्टकविशिष्टतया आविर्भवति, एष दुर्विज्ञेय आत्मा विशुद्धेन मनसा ग्राह्य इत्यथ । रग

आत्मज्ञानफल, आत्मज्ञपूजाविधि

[१]य य लोक मनसा सविभाति विशुद्धसत्त्व कामयते याश्च कामान् ।
तं तं लोक जयते तांश्च कामास्तस्मादात्मज्ञ ह्यर्चयेद्भूतिकाम· ॥

( १ ) य एवमुक्तलक्षण सर्वात्मानमात्मत्वेन प्रतिपन्नस्तस्य सर्वात्मत्वादेव सर्वावाप्तिलक्षण फलमाह — य य लोक पित्रादिलक्षण मनसा सविभाति सकल्पयति मह्यमन्यस्मै वा भवेदिति, विशुद्धसत्त्व क्षीणक्लेशः आत्मविन्निर्मलान्तःकरण: कामयते याश्च कामान् प्रार्थयते भोगान्, त त लोक जयते प्राप्नोति तांश्च कामान् सकल्पितान् भोगान् । तस्माद्विदुषः सत्यसकल्पत्वादात्मज्ञं आत्मज्ञानेन विशुद्धान्त करण ह्यर्चयेत् पूजयेत् पादप्रक्षालनशुश्रूषानमस्कारादिभि· भूतिकामो विभूतिमिच्छु । तत. पूजार्ह एवासौ ।

* शकर.

( २ ) 'पुरुषार्थोऽतः शब्दादिति बादरायण.' — यद्दर्शनार्थमुपासना उक्ता, तस्माद्दर्शनात्सर्वपुरुषार्थप्राप्तिरिति बादरायणो मन्यते, ' य य लोक मनसा सविभाति०' इति शब्दात् ।

ब्रमध्व ३।४।१

अकामस्य पुरुषोपासकस्य मुक्तभावेन स्थिति, सकामस्य ससरणम्

[१]स वेदैतत्परम ब्रह्म धाम यत्र विश्वं निहित भाति शुभ्रम् ।
उपासते पुरुष ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीरा· ॥

( १ ) यस्मात् स वेद जानाति एतद्यथोक्तलक्षण ब्रह्म परम उत्कृष्ट धाम सर्वकामानामाश्रयमास्पद, यत्र यस्मिन् ब्रह्मणि धाम्नि विश्व समस्त जगत् निहित अर्पित, यच्च स्वेन ज्योतिषा भाति शुभ्र शुद्धम् । तम प्येव आत्मज्ञ पुरुष ये ह्यकामा विभूतितृष्णावर्जिता मुमुक्षव सन्त. उपासते परमिव देव, ते शुक्र नृबीज यदेतत्प्रसिद्ध शरीरोपादानकरण अतिवर्तन्ति अति गच्छन्ति धीरा धीमन्त., न पुनर्योनिं प्रसर्पन्ति । ' न पुन. क्वचिद्रतिं करोति' इति श्रुतेः । अतस्त पूजयेदित्यभिप्रायः । शकर

( २ ) यत्र ब्रह्मणि विश्व जीवजात निहित निर्मल स्वप्रकाश भाति . । ¶रग

( ३ ) ' स्थित्यदनाभ्या च ' — स्थितिश्चादन च स्थित्यदने, ताभ्यामपि प्रधानजीवौ न द्युभ्वाद्यायतनमित्यर्थ । तत्र ' स वेदैतत्परम ब्रह्म धाम यत्र विश्व निहित भाति शुभ्रम् ' इत्यादि. प्रधानप्राणभृतोरुभयो-

---

* भास्कर ब्रशकरवत् । विज्ञान ब्रशकरवद्भाव । रामानुज निंबार्क श्रीकठ श्रीकर २।३।२२ इतिसूत्रार्थो ब्रशकरवत्, विशेषस्तु—अणुशब्दोऽणुत्वपरिमाणपुरस्कारेण जीवपर , अय च सिद्धान्त इति ।

(१) मुड ३।१।१०, रग जयते ( जयति ), ब्रमध्व ३।४।१

* रग शंकरेण गतार्थम् ।

¶ शेष शकरवत् ।

(१) मुड ३।२।१, विज्ञान. १।३।१, ७, ३।३।२४.

रेव द्युभ्वाद्यायतने स्थितिव्यपदेशः । ' प्रधान पुरुषश्चैव लीयते परमात्मनि ' इति विष्णुपुराणादिषु पुप्रकृत्यो-रुभयोरपि परमात्मनि स्थितिस्मरणेन तदेकवाक्यता परित्यज्य विश्वशब्दस्य केवलकार्यपरत्वेन सकोचानर्ह-त्वात् । १।३।७

सत्त्वशुद्धिभगवत्परितोषादिद्वारा तु मोक्षोऽप्याध्या-नाद्भवति, ' उपासते पुरुष ये ह्यकामास्ते शुक्रमेतदति-वर्तन्ति धीराः ' ' तत्प्रसादात्परां शान्तिं स्थान प्राप्स्यसि शाश्वतम् ' इत्यादिश्रुतिस्मृतिभ्य इति मन्त-व्यम् । विज्ञान ३।३।२४

**[१]कामान्य कामयते मन्यमान स कामभिर्जायते तत्र तत्र ।**
**पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रवि-लीयन्ति कामा. ॥**

( १ ) मुमुक्षो कामत्याग एव प्रधान साधनमि-त्येतद्दर्शयति—कामान् य॰ दृष्टादृष्टेष्टविषयान् कामयते मन्यमान तद्गुणाश्चिन्तयमान॰ प्रार्थयते, स तै॰ कामभि कामैर्धर्माधर्मप्रवृत्तिहेतुभिर्विषयेच्छारूपै. सह जायते तत्र तत्र । यत्र यत्र विषयप्राप्तिनिमित्त कामाः कर्मसु पुरुष नियोजयन्ति तत्र तत्र तेषु तेषु विषयेषु तैरेव कामैर्वेष्टितो जायते । यस्तु परमार्थतत्त्वविज्ञानात्प-र्याप्तकामः आत्मकामत्वेन परि समन्तत. आप्ता॰ कामा यस्य, तस्य पर्याप्तकामस्य कृतात्मन॰ अविद्यालक्षणाद पररूपादपनीय स्वेन परेण रूपेण कृत आत्मा विद्यया यस्य, तस्य कृतात्मनस्त्विहैव तिष्ठत्येव शरीरे सर्वे धर्माधर्मप्रवृत्तिहेतवः प्रविलीयन्ति विलयमुपयान्ति नश्यन्तीत्यर्थ । कामाः । तज्जन्महेतुविनाशान्न जायन्ते इत्यभिप्राय. ।

शकर

( २ ) यस्तु देवत्वमनुष्यत्वादीन् कामान् भोग्यतया मन्यमान. कामयते, स तत्र देवत्वमनुष्यत्वादौ कामभि कामै , तत्तत्कामवशादिति यावत् । देवमनुष्यादिरूपेण जायते । पर्याप्ते परिपूर्णे ब्रह्मणि कामनावतो विदितात्म-तत्त्वस्यास्मिन्नेव जन्मन्याशा लुप्ता., न जन्मान्तरप्रसक्ति रित्यर्थः । कृतात्मन इत्यत्र शब्ददर्दुर करोतीत्यत्रेव कृधातोर्ज्ञानमर्थः ।

रग.

परमात्मकृपा आत्मज्ञानोपाय , आत्मज्ञानोपाया ,
ब्रह्मावेश , आत्मज्ञानां मुक्ताना गति

*** [१]नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।**
**यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥**

( १ ) यद्येव सर्वलाभात्परम आत्मलाभ., तल्ला-भाय प्रवचनादय उपाया बाहुल्येन कर्तव्या इति प्राप्ते इदमुच्यते ।

यमेव परमात्मानमेव एष विद्वान् वृणुते प्राप्तु-मिच्छति, तेन वरणेनैष परमात्मा लभ्यः, नान्येन साधनान्तरेण, नित्यलब्धस्वभावत्वात् ।

तस्मादन्यत्यागेनात्मलाभप्रार्थनैव आत्मलाभसाधन-मित्यर्थ. । § शकर.

**[२]नायमात्मा बलहीनेन लभ्यो न च प्रमादा-त्तपसो वाऽप्यलिङ्गात् ।**
**एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ॥**

( १ ) आत्मप्रार्थनासहायभूतान्येतानि च साध नानि बलाप्रमादतपांसि लिङ्गयुक्तानि सन्याससहितानि । यस्मादयमात्मा बलहीनेन बलप्रहीणेन आत्मनिष्ठाजनित-वीर्यहीनेन न लभ्यः, नापि लौकिकपुत्रपश्वादिविषयसङ्ग-निमित्तप्रमादात् । तथा तपसो वाऽपि अलिङ्गात् लिङ्ग-रहितात् । तपोऽत्र ज्ञानम् । लिङ्ग सन्यासः । सन्यास-रहिताज्ज्ञानान्न लभ्यते इत्यर्थ । एतैरुपायैर्बलाप्रमाद-

(१) मुड ३।२।२

* रगादिव्याख्यान स्थलनिर्देशादिक च काउ २।२३ (पृ १४०८) इत्यत्र द्रष्टव्यम् ।

§ शेष काउ २।२३ (पृ १४०८) इतिमन्त्रव्याख्यान-वत् ।

(१) मुड ३।२।३

(२) मुड ३।२।४, रंग ब्रह्मधाम ( ब्रह्म धाम ), रामानुज १।१।१ ( पृ १२ ), ब्रमद्व ३।३।५४; वल्लभ ३।३।४७, ४९, ३।४।४३, ४।२।४ वाऽप्यलि-ङ्गात् ( वाऽथ लिङ्गात् ) ब्रह्मधाम ( ब्रह्म धाम ), बलदेव ३।३।५४

सन्यासज्ञानैः यतते तत्परः सन् प्रयतते यस्तु विद्वान् विवेकी आत्मवित्, तस्य विदुषः एष आत्मा विशते सप्रविशति ब्रह्मधाम। शकर

( २ ) अयमात्मा अवसन्नमनसा न लभ्य॰। अवसादो नाम देशकालवैगुण्यादिजन्यदैन्यम्। तदभावो हि बलम्। प्रमाद. अनवहितचित्तता। तप॰शब्दस्तपःप्रधान-सन्यासाश्रमपर॰, 'तप एव द्वितीयः' इतिवत्। तस्य लिङ्ग शिखायज्ञोपवीतशिक्यजलपवित्रादि। तद्रहितात्सन्यासादपीत्यर्थ.। तपस इत्येतदाश्रमान्तरस्याप्युपलक्षण, सर्वाश्रमाणामपि ब्रह्मविद्याधिकारसत्त्वादिति द्रष्टव्यम्। लिङ्गशून्यैराश्रमैर्न प्राप्य इत्यर्थः। आश्रमलिङ्गान्यपेक्षितानीति यावत्। उक्तैर्बलाप्रमादसलिङ्गाश्रमैर्यो विद्वान् ब्रह्मप्राप्तये यतते, तस्य तादृशोपायसस्कृतमात्मस्वरूप धाम प्राप्य पर ब्रह्म प्राप्नोतीत्यर्थ॰। रग.

( ३ ) 'भक्तिरेवैन नयति भक्तिरेवैन दर्शयति भक्तिवशः पुरुषो भक्तिरेव भूयसी' इति माठरश्रुतेर्न परमात्मनो दर्शनमिति चेन्न। 'तस्यैष आत्मा विशते ब्रह्मधाम' इति श्रुते। ब्रमध्व ३।३।५४

[ भक्तिसामर्थ्येनैवापरोक्षज्ञान, न परमात्मप्रसादेन, 'भक्तिरेवैनम्' इति श्रुतौ भक्तेरेव स्वातन्त्र्येण दर्शनादिसाधनत्वदर्शनात्। एव साधनसामर्थ्यादेव तद्दर्शनान्न तस्याव्यक्तत्वमिति भाव। सिद्धान्तयति — नेति। न भक्तेरेव स्वातन्त्र्येण दर्शनादिसाधनत्व वाच्य, किंतु तया प्रसन्नस्य परमात्मन एव, 'एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम' इति श्रुतेरित्यर्थ.। एतैः प्रवचनाद्युपायैर्यो दर्शनार्थे यतते, तस्य अर्थे तै प्रसन्नः परमात्मा ब्रह्मधाम वायु विशति, तस्य तत्र आविर्भवतीत्यर्थः। तत्त्वप्रकाशिका. ]

( ४ ) पुरुषोत्तमलाभे हेतुभूत तु भक्तिमार्गे यद्वरण, स्वीयत्वेनाङ्गीकाररूप तदेव, न त्वन्यादृशमपीति ज्ञापनायाग्रे वदति — 'नायमात्मा बलहीनेन लभ्य.' इति। बलकार्यं हि प्रभुवशीकरणम्। तच्च 'अह भक्तपराधीन.' 'वशे कुर्वन्ति मां भक्त्या' इत्यादिवाक्यैः भक्त्यैवेति बलशब्देन भक्तिरुच्यते। अन्यथा पूर्ववाक्य एवेतरनिषेधस्य कृतत्वात् पुनर्बलाभावनिषेध न कुर्यात्। वरणमात्रस्य हेतुत्वमुक्त्वा बलस्य तथात्व च न वदेत्। एतादृशस्य हृदि भगवत्प्राकट्य भवतीत्याह— 'एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम' इति। अस्यार्थस्तु — एष आत्मा आत्मनोऽप्यात्मा पुरुषोत्तमो ब्रह्म अक्षरब्रह्मात्मक धाम विशते इति। धामपद पुरुषोत्तमस्याक्षर ब्रह्म सहज स्थानमिति ज्ञापनार्थमुक्त, अन्यथा न वदेत्। तेन तद्धृदये स्वस्थानमाविर्भावयित्वा स्वय तत्र प्रकटीभवतीति ज्ञाप्यते। ३।३।४७

'स्वामिन॰ फलश्रुतेरित्यात्रेयः' — अत्र भगवद्वरणानन्तरमपि जीवबल कतमत्, यदपेक्षो भगवल्लाभ इति जिज्ञासाया सर्वात्मभाव एव बलमिति निर्णीयते, तस्यैव मर्यादाबलोपमर्दकत्वाद्भगवद्वशीकारहेतुत्वाच्च। व्रजसीमन्तिनीना प्रभुवचनातिक्रममपि कृत्वा स्वरूपपरिग्रहस्तद्बलेनैव यत इत्यात्रेय आचार्यो मनुते। इदमत्राभिप्रेतम्— सर्वात्मभावस्य यत् बल, तत्तदात्मकस्य प्रभोरेव। तस्य चायं स्वभावो यदन्यन्न रोचते।

वल्लभ ३।४।४३

[1]संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः।
ते सर्वगं सर्वत प्राप्य धीरा युक्तात्मान सर्वमेवाऽऽविशन्ति ॥

( १ ) कथ ब्रह्म सविशते इत्युच्यते — सप्राप्य समवगम्य एन आत्मान ऋषयो दर्शनवन्तस्तेनैव ज्ञानेन तृप्ताः, न बाह्येन तृप्तिसाधनेन शरीरोपचयकारणेन। कृतात्मान परमात्मस्वरूपेणैव निष्पन्नात्मानः सन्तः। वीतरागाः विगतरागादिदोषा। प्रशान्ता. उपरतेन्द्रियाः। त एवम्भूता. सर्वगं सर्वव्यापिनमाकाशवत् सर्वत॰ सर्वत्र प्राप्य, नोपाधिपरिच्छिन्नेनैकदेशेन, किं तर्हि, तद्ब्रह्मैवाद्वयमात्मत्वेन प्रतिपद्य, धीरा अत्यन्तविवेकिनः युक्तात्मान. नित्यसमाहितस्वभावाः सर्वमेव समस्त शरीरपातकालेऽप्याविशन्ति भिन्ने घटे घटाकाशवदविद्याकृतोपाधिपरिच्छेद जहति। एव ब्रह्मविदो ब्रह्मधाम प्रविशन्ति। शकर.

(१) मुड ३।२।५.

( २ ) तत्त्वदर्शिन. एन परमात्मान जीवदशाया-मेवानुभूय तेनानुभवेन सतुष्टा लब्धात्मसत्ताका अपगत विषयाशा अत एव निगृहीतेन्द्रियाश्च ये सन्तीत्यर्थ'। ते सर्वदेशावच्छेदेनान्तर्बहिश्च सर्ववस्तुगत परमात्मान देशविशेषविशिष्ट प्राप्य आविर्भूतब्राह्मरूपविशिष्टात्मानो धर्मभूतज्ञानेन सर्वं वस्तु गत्या व्याप्नुवन्ति, सर्वमनुभव न्तीत्यर्थ । रग

***[1] वेदान्तविज्ञानसुनिश्चितार्थाः सन्यासयोगाद्यतयः शुद्धसत्त्वा. ।**
**ते ब्रह्मलोकेषु परान्तकाले परामृताः परि-मुच्यन्ति सर्वे ॥**

( १ ) किंच वेदान्तजनितविज्ञान वेदान्तविज्ञान, तस्यार्थ' परमात्मा विज्ञेय', सोऽर्थ. सुनिश्चितो येषा ते वेदान्तविज्ञानसुनिश्चितार्थाः । ते च सन्यासयोगात् सर्व कर्मपरित्यागलक्षणयोगात् केवलब्रह्मनिष्ठास्वरूपाद्योगात् यतयो यतब्रशीलाः, शुद्धसत्त्वाः शुद्ध सत्त्व येषा सन्यास-योगात्ते शुद्धसत्त्वा. । ते ब्रह्मलोकेषु । ससारिणा ये मरणकालास्ते अपरान्तकाला, तानपेक्ष्य मुमुक्षूणा ससारावसाने देहपरित्यागकाल परान्तकाल, तस्मिन् परान्तकाले । साधकानां बहुत्वाद्ब्रह्मैव लोको ब्रह्मलोक एकोऽप्यनेकवद्दृश्यते प्राप्यते वा, अतो बहुवचन ब्रह्म-लोकेष्विति, ब्रह्मणीत्यर्थ । परामृताः पर अमृत अमरण धर्मक ब्रह्म आत्मभूत येषा ते परामृताः जीवन्त एव ब्रह्मभूता, परामृता' सन्त. परिमुच्यन्ति परि समन्ता त्प्रदीपनिर्वाणवद्घटाकाशवच्च निवृत्तिमुपयान्ति परि-मुच्यन्ति परि समन्तान्मुच्यन्ते सर्वे, न देशान्तर गन्तव्य-मपेक्षन्ते । 'शकुनीनामिवाकाशे जले वारिचरस्य च । पद यथा न दृश्येत तथा ज्ञानवतां गति ॥' 'अनध्वगा अध्वसु पारयिष्णवः' इति श्रुतिस्मृतिभ्याम् । देशपरि-च्छिन्ना हि गति. ससारविषयैव, परिच्छिन्नसाधनसाध्य-त्वात् । ब्रह्म तु समस्तत्वान्न देशपरिच्छेदेन गन्तव्यम् । यदि हि देशपरिच्छिन्न ब्रह्म स्यात्, मूर्तद्रव्यवदाद्यन्तव-दन्याश्रित सावयवमनित्य कृतक च स्यात् । न त्वेवविध ब्रह्म भवितुमर्हति । अतस्तत्प्राप्तिश्च नैव देशपरिच्छिन्ना भवितु युक्ता । अपि च अविद्यादिससारबन्धापनयनमेव मोक्षमिच्छन्ति ब्रह्मविदः, न तु कार्यभूतम् ।

शकर

( २ ) ये निर्जितेन्द्रियग्रामाः काम्यकर्मसन्यासेन शुद्धान्त करणा वेदान्तश्रवणजन्यज्ञानेन निर्णीतपरमा-त्मतत्त्वा इत्यर्थः । ब्रह्मैव लोको ब्रह्मलोकस्तत्र वर्तमाना ब्रह्मनिष्ठा परान्तकाले, 'अन्तकाले च मामेव' इत्युक्त-चरमदेहावसानसमये परामृतात्प्रसन्नाद्ब्रह्मणो हेतोः सर्वे परिमुच्यन्ते इत्यर्थ इति 'विशेष च दर्शयति' ( ब्रसू ४।३।१६ ) इति सूत्रे व्यासार्यैरय मन्त्रखण्डो विवृतः । 'ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे' इति पाठे ते चरमशरीरावसाने भगवल्लोकेषु परममृतशब्दित ब्रह्म प्राप्यप्रापकत्वेन येषा ते परामृता, ब्रह्मप्राप्ता इति यावत् । स्वरूपतिरोधायकाविद्यया सवासन विमुक्ता भवन्ति, 'पर ज्योतिरुपसपद्य स्वेन रूपेणाभिनिष्पद्यते' ( छाउ ८।३।४ ) इति श्रुतेरि-त्यर्थ । न च भगवल्लोकस्यैकतया कथ बहुत्वमिति शङ्कनीयम् । परिपूर्णस्य सर्वगतस्य सत्यसकल्पस्य स्वेच्छापरिकल्पिता' स्वासाधारणा अप्राकृताश्च लोका 'नात्यन्ताय न सन्ति' (?) ( इति ) श्रुतिस्मृतीति-हासप्रामाण्यादिति भगवता भाष्यकृतोक्तत्वात् ।

रग.

( ३ ) नन्वेव सन्यासवैयर्थ्यमिति चेन्न । ब्रह्मवि दतिरिक्तसगस्य भगवद्विस्मारकत्वेनावश्यत्याज्यत्वेन श्रुत्या कथनात् । अत एव 'वेदान्तविज्ञानसुनिश्चितार्थाः' इत्युक्त्वा 'सन्यासयोगात् यतयः शुद्धसत्त्वाः' इत्यु-क्तम् । अत्र पञ्चम्या अन्तःकरणे सस्कारविशेषाधा-यकत्व च प्रतीयते सन्यासस्य । स च सस्कारः फलो-पकार्यङ्गमित्यावश्यकः सन्यासो मर्यादामार्गे । पुष्टि-

* श्रीकठ छाउ ८।१५।१ (पृ ९८५) इत्यत्र द्रष्टव्यम् ।

(१) मुउ ३।२।६, ब्रशकर १।४।२२, ३।४।२०, रग लोकेषु ( लोके तु ) मृता ( मृतात् ) इत्यपि पाठ, निबार्क ४।३।९ लोकेषु ( लोके तु ) मृता ( मृतात् ), श्रीकठ ३।४।४७, ४।३।९, १३ निबार्कवत्, श्रीकर २।१।२२, ३।१।१७, ३।४।१६, ४०, ५२, ४।२।१३, १९, ४।३।६, ४।४।२२ निबार्कवत्, वल्लभ ३।४।१२, १७, ४।३।११, १४ निबार्कवत्, विज्ञान ३।३।२६, ४।३।१०, ४।४।४, बलदेव ३।४।१२

मार्गे त्वन्यैव व्यवस्था, 'न ज्ञान न च वैराग्य प्राय' श्रेयो भवेदिह' इति वाक्यात् ।

३।४।१७

परान्तकाले इत्यत्र परशब्देन ब्रह्मण: पूर्णमायुरुच्यते ।

४।३।११

'ते ब्रह्मलोके तु परान्तकाले' इति श्रुतिरपि परान्तकाले एव येषा प्रारब्धभोगसमाप्ति', तद्विषयिणीति मन्तव्यम् । अन्यथा वेदान्तविज्ञानेत्याद्युक्तधर्मविशिष्टाना मुक्तौ विलम्बो नोपपद्यते इति दिक् ।

वल्लभ ४।३।१४

*** गता. कला पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु ।**
**कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति ॥**

(१) किंच, मोक्षकाले या देहारम्भिका. कला' प्राणाद्या', ता स्वा स्वां प्रतिष्ठां गता' स्व स्व कारण् गता भवन्तीत्यर्थ' । प्रतिष्ठा इति द्वितीयाबहुवचनम् । पञ्चदश पञ्चदशसख्याका' या अन्त्यप्रश्नपरिपठिता' प्रसिद्धा. । देवाश्च देहाश्रयाश्चक्षुरादिकरणस्था' सर्वे प्रतिदेवतासु आदित्यादिषु गता भवन्तीत्यर्थ. । यानि च मुमुक्षुणा कृतानि कर्माण्यप्रवृत्तफलानि, प्रवृत्तफलानामुपभोगेनैव क्षीयमाणत्वात् , विज्ञानमयश्चाऽऽत्मा अविद्याकृतबुद्ध्याद्युपाधिमात्मत्वेन मत्वा जलादिषु सूर्यादिप्रतिबिम्बवदिह प्रविष्टो देहभेदेषु कर्मणां तत्फलार्थत्वात् सह तेनैव विज्ञानमयेनाऽऽत्मना । अतो विज्ञानमयो विज्ञानप्राय: । त एते कर्माणि विज्ञानमयश्चाऽऽत्मा उपाध्यपनये सति परेऽव्यये अनन्तेऽक्षये ब्रह्मणि आकाशकल्पेऽजेऽजरेऽमृतेऽभयेऽपूर्वेऽनपरेऽनन्तरेऽब्राह्येऽद्वये शिवे शान्ते सर्वे एकीभवन्ति अविशेषता गच्छन्ति एकत्वमापद्यन्ते जलाद्याधारापनये इव सूर्यादिप्रतिबिम्बा सूर्ये, घटाद्यपनये इवाऽऽकाशे घटाद्याकाशा' ।

शकर.

(२) मुच्यमानजीवोपकारिका: प्राणश्रद्धाकाशवायुज्योतिरप्पृथिवीन्द्रियमनोन्नवीर्यतपोमन्त्रकर्मलोकनामानीति षोडश कला: । 'स प्राणमसृजत प्राणाच्छ्रद्धाम्' ( प्रउ ६।४ ) इत्यादिप्रश्नोपनिषदुक्तप्राणादिनामान्तषोडशकलामध्ये कर्मव्यतिरिक्ता. पञ्चदश कला. स्वस्वप्रकृतिषु सश्लेषविशेषयुक्ता भवन्ति । देवा वागादीन्द्रियाणि तदधिष्ठात्रादिदेवतासु प्रतिष्ठा ससर्गविशेष गच्छन्ति, न तु लीयन्ते, इन्द्रियादीनामाकल्पस्थायित्वात् । यानि च कर्माणि अदत्तफलानि दर्शनसमानाकारज्ञानारम्भसमये क्षयिष्ये इति सकल्पविषयभूतानि, तानि कर्माणि च विज्ञानमय आत्मा च 'अक्षरात्परत.' इति सर्वस्मात्परभूतेऽव्ययेऽक्षरे एकीभवन्ति । परमात्मप्रीत्यप्रीतिरूपाणा कर्मणां तत्रैकीभावस्तद्धर्मभूतज्ञाने लय एव । जीवस्यैकीभावो नामरूपात्मकभेदकाकारप्रहाणम् । कर्मणां नाशात्कलाना मुच्यमान प्रति नोपकरणत्वमिति भाव' ।

रग.

(३) 'भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्' — 'कर्माणि विज्ञानमयश्च०' इति मुक्तजीवस्य परापत्ति रुच्यते । अतस्तयोरविभाग । अत: पूर्वमपि स एव । न ह्यन्यस्यान्यत्व युज्यते । इति चेन्न । स्याल्लोकवत् । यथा लोके उदके उदकान्तरस्यैकीभावव्यवहारेऽप्यन्तभेदोऽस्त्येव, एव स्यादत्रापि ।

ब्रमध्व २।१।१४

(४) *'मुक्तोपसृप्यव्यपदेशात्'—'गता: कला:' इति वाक्यशेषे मुक्तैरात्मभिरुपगम्यत्ववचनाच्चेत्यर्थ: । न हि मुक्तैरुपगम्यत्व प्रधानस्य सभवति, प्रधानप्राप्तावपि पुनरावृत्तिस्मरणात् । नापि जीवस्य, गम्यगन्तृभावस्य भेदतन्त्रत्वादित्यर्थ: । उदाहृतश्रुतेरयमर्थ — विदुषो मोक्षकाले सर्व एते परे ब्रह्मण्येकीभवन्ति अत्यन्त मविभाग गच्छन्ति । के त इत्याकाङ्क्षायामाह — पञ्चदश जीवस्य कला: शक्तिरूपा: अशा: दशेन्द्रियतन्मात्ररूपा: स्वकारणानि गता' सत्यस्तद्द्वारा आत्यन्तिकप्रलये ब्रह्मण्येकीभवन्ति । तथा देवाश्चक्षुराद्यव-

* ब्रशकर प्रउ ६।५ इतिमन्त्रे द्रष्टव्यम् ।

(१) **मुउ** ३।२।७, **ब्रशकर** ४।२।१५, **भास्कर** ४।३।१३, **ब्रमध्व** २।१।१४, **श्रीकर** १।३।२, २।१।२२, २।३।२८, २।४।३, ३।३।३२, ३३, ४१, ५२, ५७, ३।४।११, ४।२।१४, ४।३।१०, **विज्ञान** १।१।१७, १।३।२, २।३।३०, ४।२।७.

* द्युभ्वाद्यायतन परमात्मेति पूर्वप्रकृतम् ।

च्छिन्ना. सूर्याद्यश्चा प्रतिदेवतासु स्वस्वांशिषु सूर्यादिषु गता. सन्त तद्द्वारा प्रलये ब्रह्मण्येकीभवन्ति । तथा विज्ञानमयो बुद्ध्यवच्छिन्न आत्मा जीवोऽपि कर्माणि गतः सन् कर्मतन्त्र. सन् कर्मद्वारा ब्रह्मण्येकीभवति । ब्रह्मणि कर्मैकीभावात् जीव एकीभवतीति यावत् । कर्मनिमित्तकाविर्भावतिरोभावाभ्यामेव च जीवस्य कर्माश्रयत्व श्रुत्यन्तरेषूक्तम् । यथा—'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति' इत्याद्यनन्तर 'क्वाय तदा पुरुषो भवति' इति प्रश्ने सति गुरुशिष्यौ रहस्यममुमर्थं मन्त्रयाचक्राते, त च श्रुतिराह—'तौ ह यदूचतुः कर्म हैव तदूचतु' इति । १।३।२

'यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्'—नन्वेव यदि बुद्धिगुणा एव जीवस्य गुणाः, न तु स्वत. सुखदु खधर्माधर्मादिमत्त्व, तदा प्रलयादौ बुद्धेर्विनाशे सति आत्मनो मोक्षापत्ति । तथा च प्राकृतप्रलयानन्तर पुन सृष्टिर्न स्यात्, मुक्तस्य च पुनरुपाध्युत्पत्त्या ससाराभ्युपगमे अनिर्मोक्षापत्तिरित्याशङ्कामपाकरोति—यावदात्मेति । नोक्तदोषः । कुतः । तस्य पृथक्शब्देनोक्तस्योपाधेर्यावदात्मभावित्वात् उपाधेरन्त.करणस्य यावदात्मावस्थित्यवस्थानात्, नित्यत्वादिति यावत् । तद्दर्शनात् यावदात्मभावित्वश्रवणात् । 'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्वं एकीभवन्ति' 'कतम आत्मा योऽय विज्ञानमय प्राणेषु' (बृउ ४।३।७) इत्यादिष्वित्यर्थः । विज्ञानशब्दश्च बुद्ध्याख्यकरणवाच्यपि भवति, 'विज्ञानमयो मनोमय. प्राणमय.' (बृउ ४।४।५) इत्यादौ मनआदिभि. सह पाठात् । उक्तवाक्ययोश्च विज्ञानशब्दो न चैतन्यवाची, न वा कादाचित्कसबन्धेन विज्ञानमयत्व विवक्षित, परमात्मन्याव्रृत्त्यसभवादिति । मोक्षधर्मादिस्मृत्यनुमितश्रुतिभ्यश्च बुद्धेर्नित्यत्वमवसेयम् । यथा मोक्षधर्मे बुद्धिपुरुषौ प्रकृत्य 'सृजते च गुणानेक एको न सृजते गुणान् । पृथग्भूतौ प्रकृत्यैतौ सप्रयुक्तौ च सर्वदा ॥' इति । प्रलयमोक्षादौ च ज्ञानादिहेतुः सयोगविशेष एव नश्यति, न तु सयोगसामान्य, अतः सर्वदा सप्रयोग उक्तः ।

* विज्ञान २।३।३०

* तैउ २।५ (पृ ७२०) इत्यत्रापि द्रष्टव्यम् ।

*** यथा नद्य स्यन्दमाना समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ।**
**तथा विद्वान्नामरूपाद्विमुक्त. परात्परं पुरुषमुपैति दिव्यम् ॥**

(१) किंच, यथा नद्यो गङ्गाद्या स्यन्दमाना गच्छन्त्य. समुद्रे समुद्र प्राप्य अस्त अदर्शन अविशेषात्मभाव गच्छन्ति प्राप्नुवन्ति नाम च रूप च नामरूपे विहाय हित्वा । तथा अविद्याकृतनामरूपाद्विमुक्तः सन् विद्वान् परात् अक्षरात्पूर्वोक्तात्पर दिव्य पुरुष यथोक्तलक्षण उपैति उपगच्छति ।

शकर

(२) यथा नदीसमुद्रजलयोर्वस्तुतो नैक्य, अपि तु भेदकाकारप्रहाणमात्र, एवमिहापि मुक्तस्य परमात्मना पूर्वमुक्तात्मभिरपि नैक्य, अपि तु परमसाम्यमात्रम् ।

§ रग.

(३) 'अविभागेन दृष्टत्वात्'—ननु किमिय मुक्तिरपि जीवन्मुक्तिक्रममुक्त्यादिरूपा, उत आत्यन्तिको लय इत्याकाङ्क्षायामाह— अविभागेनेति । समुद्रेण नदनदीनामिव अविभागेन लक्षणानन्यत्वरूपेण आत्यन्तिकलयरूपैव मुक्तिः । कुत. । दृष्टत्वात् । 'यथा नद्य. स्यन्दमाना.०' इत्यादिवाक्यैरित्यर्थ. ।

विज्ञान ४।४।४

* मुउ ३।१।३ (पृ १४७३) इत्यत्र टिप्पणी द्रष्टव्या ।
§ पदार्थ शकरवत् ।

(१) **मुउ** ३।२।८, **ब्रशकर** १।३।२, १।४।२१, ३।२।२७, ३।३।२६, **भास्कर** १।३।२, १।४।२०, **रामानुज** १।१।१ (पृ ७९, ८०), १।३।२, १।४।२१, ३।२।३०, ३५, ३।४।१, **श्रीकठ** १।३।२, **श्रीकर** १।१।१ (पृ ३, ५, १८), १।१।२ (पृ ३१), १।१।२०, १।२।८, १।३।२, ६, ७, ९, १९, ४०, १।४।२२, २।१।८, ११, २२, २।२।४५, २।३।२८, ४०, २।४।३, ३।१।१, ३।२।९, २४, २६, २९, ३०, ३१, ३।३।२७, ३३, ४१, ५२, ५७, ३।४।१, ५१, ४।१।३, ४।२।५, १४, १५, ४।३।१३, १५, ४।४।३, १२, २२, **विज्ञान** १।१।४ (पृ १०९), १।३।१, ४।४।४, **बलदेव** ४।२।१६, ४।४।४

स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति
नास्याब्रह्मवित्कुले भवति ।
तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो
विमुक्तोऽमृतो भवति ॥

( १ ) ननु श्रेयस्यनेके विघ्नाः प्रसिद्धा , अत· क्लेशानामन्यतमेनान्येन वा देवादिना च विघ्नितो ब्रह्मविदप्यन्यां गतिं मृतो गच्छति, न ब्रह्मैव । न । विद्ययैव सर्वप्रतिबन्धस्यापनीतत्वात् । अविद्याप्रतिबन्धमात्रो हि मोक्ष·, नान्यप्रतिबन्ध., नित्यत्वादात्मभूतत्वाच्च । तस्मात्स य· कश्चिद्ध वै लोके तत्परम ब्रह्म वेद साक्षादहमेवास्मीति जानाति, स नान्या गतिं गच्छति । देवैरपि तस्य ब्रह्मप्राप्तिं प्रति विघ्नो न शक्यते कर्तुम् । आत्मा ह्येषां स भवति । तस्माद्ब्रह्म विद्वान् ब्रह्मैव भवति । किंच, नास्य विदुषोऽब्रह्मवित्कुले भवति । किंच, तरति शोक अनेकेष्टवैकल्यनिमित्त मानस सताप जीवन्नेवातिक्रान्तो भवति । तरति पाप्मान धर्माधर्माख्यम् । गुहाग्रन्थिभ्यो हृदयाविद्याग्रन्थिभ्यो विमुक्त· सन्नमृतो भवतीति । उक्तमेव ‘ भिद्यते हृदयग्रन्थिः ’ इत्यादि । शकर

( २ ) ‘ ब्रह्म वेद ब्रह्मैव भवति ’ इति चैवमादीनि तद्भावापत्तिवचनानि सपदादिपक्षे न सामञ्जस्येनोपपद्येरन् । तस्मान्न सपदादिरूप ब्रह्मात्मैकत्वविज्ञानम् । १।१।४ ( पृ ६५ )

‘ पुरुषार्थोऽत शब्दादिति बादरायणः ’ — अस्माद्वेदान्तविहितादात्मज्ञानात्स्वतन्त्रात्पुरुषार्थः सिध्यतीति बादरायण आचार्यो मन्यते । कुत एतदवगम्यते । शब्दादित्याह । तथा हि — ‘ स यो ह वै तत्परम ब्रह्म वेद ब्रह्मैव भवति ’ इति ।

ब्रशकर ३।४।१

( ३ ) ‘पुरुषार्थोऽत·०’—इतिशब्दोऽवधारणार्थ. । सम्यग्ज्ञान पुरुषार्थमेव, न तत्क्रत्वर्थमिति भगवान् बादरायणो मन्यते स्म ।

भास्कर ३।४।१

( ४ ) य एतत्पर ब्रह्म वेद ‘वेदन ध्यान( ज्ञान )-विश्रान्तध्यान श्रान्त ध्रुवस्मृतौ ’ ‘ सा च दृष्टिर्भक्तित्व मृच्छति ’ इत्युक्तरीत्या प्रीतित्वापन्नदर्शनसमानाकारोपासनयुक्तो भवति, ( सः ) आविर्भूतब्रह्मरूपो भवतीत्यर्थ । आनुषङ्गिक प्रयोजनमाह — नेति । अस्य कुलेऽब्रह्मविन्न भवतीत्यर्थ । तरतीति । स्पष्टोऽर्थ । गुहेति । त्रिगुणात्मकप्रकृतिकारितरागद्वेषादिभ्यो विमुक्त सन्नाविर्भूतगुणाष्टको भवति ।

रग.

( ५ ) ‘ ब्रह्म वेद ब्रह्मैव भवति ’ इत्यत्रापि ‘ नामरूपाद्विमुक्तः परात्पर पुरुषमुपैति दिव्यम् ’ इत्यादिभिरैकार्थ्यात् प्राकृतनामरूपाभ्यां विनिर्मुक्तस्य निरस्त तत्कृतभेदस्य ज्ञानैकाकारतया ब्रह्मप्रकारतोच्यते । प्रकारैक्ये च तत्त्वव्यवहारो मुख्य एव, यथा सोऽय गौरिति । १।१।१ ( पृ ८० )

‘आवृत्तिरसकृदुपदेशात्’—असकृदावृत्तसततस्मृतिरिह ‘ ब्रह्म वेद ब्रह्मैव भवति ’ । ‘ ज्ञात्वा देव मुच्यते सर्वपाशै ’ (श्वेउ १।८) इत्यादिषु वेदनादिशब्दैरभिधीयते इति निश्चीयते ।

रामानुज ४।१।१

( ६ ) ‘अक्षरधियां त्ववरोध सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्’—ननु उक्ताथर्वणोपनिषद्वाक्यैर्भगवद्धर्माणां मुक्तिसाधनत्वमुच्यते । श्रुत्यन्तरेषु ‘ तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ’ ( श्वेउ

---

(१) मुउ ३।२।९, ब्रशकर १।१।४ ( पृ ५४, ६०, ६५ ), १।३।१९, ३।२।२६, ३।४।१, भास्कर ३।२।२७, ३।४।१, रग त्परम ( त्पर ), रामानुज १।१।१ ( पृ ६, १७, ६२, ८० ), १।१।४ ( पृ १५४, १५९, १६२ ), १।२।१५, ४।१।१, १३, श्रीकठ ३।३।४०, ४।४।४, श्रीकर १।१।१ ( पृ ४, ६, १८, २८ ), १।१।३ ( पृ ४४ ), १।१।४ ( पृ ४६, ४७, ५३ ), १।१।७, १३, २०, ३१, १।२।८, १।३।२, ६, १९, २५, १।४।२२, २।१।८, ११, २२, २।२।४५, २।३।१६, ३६, २।४।३, ३।१।४, ३।२।९, २३, २५, २६, ३४, ३।३।७, ३३, ४१, ५१, ५७, ६०, ६१, ३।४।१, २, ४९, ५१, ४।१।१, १३, ४।२।१७, ४।४।३, १२, २२, वल्लभ १।१।३ (पृ. १२६ ), ३।३।३३, विज्ञान १।१।१ ( पृ १ ), १।१।४ (पृ ११९), ३।२।४, ३।४।१, ४।४।२१

* ईउ ७ ( पृ १३१९ ) इत्यत्रापि द्रष्टव्यम् । श्रीकठ मुउ ३।१।३ ( पृ १४७५ ) इत्यत्र द्रष्टव्यम् ।

६।१५ ) 'ज्ञानादेव तु कैवल्यम्' 'तरति शोकमात्मवित्' (छाउ ७।१।३) 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिषु ज्ञानस्यैव मुक्तिसाधनत्वमुच्यते। श्रुतित्वाविशेषादुभयोस्तथात्वे कारणवैजात्ये कार्यवैजात्यस्याऽऽवश्यकत्वात् मुक्तौ च तदसम्भवात् 'भक्त्या मामभिजानाति' (भ गी १८।५५) इति वाक्याद्भक्तौ ज्ञानस्यापि सम्भवात् ज्ञानेनैव मुक्तिरिति पूर्वपक्षे ज्ञानसाधनत्वनिरूपकश्रुतितात्पर्यं निरूपयन् पुरुषोत्तमप्राप्तेरेव मुक्तिपदवाच्यत्वात् तद्भजनस्यैव तत्प्रापकत्वमिति हृदि कृत्वा आह — अक्षरधियामित्यादि। तुशब्द पूर्वपक्षनिरासे। वाजसनेयके श्रूयते — 'एतद्वै तदक्षर गार्गि ब्राह्मणा अभिवदन्त्यस्थूलम्' (बृउ ३।८।८) इत्यादि। तथा आथर्वणे च — 'अथ परा यया तदक्षरमधिगम्यते' (मुउ १।१।५) इति। तेन ज्ञानमार्गे अक्षरविषयकाण्येव ज्ञानानि निरूप्यन्ते, पुरुषोत्तमविषयकाणि नेति निश्चीयते। एव सति अक्षरविषयिणीना धिया श्रुतौ मुक्तिसाधनेषु योऽवरोध. प्रवेशन गणनेति यावत्। स सामान्यतद्भावाभ्या हेतुभ्याम्। पुरुषसबन्धिसबन्धे मुक्तिरिति सामान्यम्। मर्यादामार्गेऽङ्गीकृतानां 'ब्रह्मभूत. प्रसन्नात्मा न शोचति न काङ्क्षति। सम सर्वेषु भूतेषु मद्भक्तिं लभते पराम्॥' (भ गी १८।५४) इति वाक्यात् ब्रह्मभावानन्तरमेव भगवद्भावसम्भवात् तेन पुरुषोत्तमे प्रवेशात् तत्र परम्परोपयोगो ब्रह्मभावस्येत्युभाभ्यां हेतुभ्या तथेत्यर्थ.। वस्तुतस्तु पुरुषोत्तमप्राप्तिरेव मुक्तिरिति भाव।

वल्लभ ३।३।३३

( ७ ) नन्वेवमुपासासिद्धातिरिक्तेश्वराभ्युपगमे 'ब्रह्म वेद ब्रह्मैव भवति' 'स इद सर्वं भवति' इत्यादिश्रुतिविरोध इति चेन्न। अधिष्ठात्रादिरूपेण प्रायशः सर्वव्यापकत्वेनैव ब्रह्मत्वसर्वभावयोः फलवाक्यैरुक्तत्वात्, 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति गीतादौ तथा वचनदर्शनात्। न तु मृत्तिकाया घटशरावादिभाववदखिलकार्यकारणत्वेनेति।

* विज्ञान ४।४।२१

* ३।४।१ भास्करवत्तात्पर्यम्।

ब्रह्मविद्याधिकार

तदेतदृचाऽभ्युक्तम्—

**क्रियावन्त श्रोत्रिया ब्रह्मनिष्ठा स्वयं जुह्वत एकर्षिं श्रद्धयन्त।**
**तेषामेवैता ब्रह्मविद्या वदेत शिरोव्रत विधिवद्यैस्तु चीर्णम्॥**

( १ ) अथेदानीं ब्रह्मविद्यासप्रदानविध्युपप्रदर्शनेनोपसहार क्रियते। तदेतद्विद्यासप्रदानविधान ऋचा मन्त्रेण अभ्युक्त अभिप्रकाशितम्। क्रियावन्त यथोक्तकर्मानुष्ठानयुक्ताः श्रोत्रिया ब्रह्मनिष्ठाः अपरस्मिन् ब्रह्मण्यभियुक्ता पर ब्रह्म बुभुत्सव· स्वय एकर्षिं एकर्षिनामानमग्निं जुह्वते जुह्वति श्रद्धयन्त. श्रद्दधाना. सन्तो ये, तेषामेव सस्कृतात्मना पात्रभूतानामेतां ब्रह्मविद्या वदेत ब्रूयात्। शिरोव्रत शिरस्यग्निधारणलक्षणम्। यथा आथर्वणानां वेदव्रत प्रसिद्धम्। यैस्तु यैश्च तच्चीर्णं विधिवद्यथाविधान तेषामेव च।

शकर.

( २ ) ननु 'तेषामेवैता ब्रह्मविद्या वदेत शिरोव्रत विधिवद्यैस्तु चीर्णम्' इति ब्रह्मविद्यासयोगश्रवणादेकैव सर्वत्र ब्रह्मविद्येति सकीर्येतैष धर्मः। न। तत्राप्येतामिति प्रकृतप्रत्यवमर्शात्। प्रकृतत्व च ब्रह्मविद्याया ग्रन्थविशेषापेक्षमिति ग्रन्थविशेषसयोग्येवैष धर्म.।

* ब्रशाकर. ३।३।३

( ३ ) एकर्त्विग्मात्रसाध्यस्याग्निहोत्रस्यैकर्षित्वमित्यर्थः। यद्वा, एकश्चासावृषिश्च मुख्यर्षिः परमात्मा, 'तथा प्राणाः' (ब्रसू २।४।१) इत्यत्र 'ऋषिशब्दश्च सर्वज्ञे तस्मिन्नेव युज्यते' इति भाषितत्वात्। तत्र श्रद्धायुक्ता

* रामानुज निंबार्क श्रीकठ श्रीकर ब्रशाकरवद्भाव। श्रीकर तैउ १।४ (पृ ६९७) इत्यत्र द्रष्टव्यम्। विज्ञान. मुउ १।२।१२ (पृ १४५३) इत्यत्र द्रष्टव्यम्।

(१) **मुउ** ३।२।१०, **ब्रशाकर** ३।३।३, **रामानुज.** ३।३।१, २, **निंबार्क** ३।३।३, **श्रीकठ** ३।३।१, ३, **श्रीकर** १।१।१ ( पृ ९ ), ३।३।१, ३, **वल्लभ** १।२।२२, १।३।६, **विज्ञान** १।१।१ ( पृ १५ ) एकर्षिं ( एकऋर्षिं ) वदेत ( वदेत् )

इत्यर्थः। ब्रह्मविद्यामिति । अत्र विद्याशब्दो ग्रन्थ सदर्भे वर्तते । * रग

तदेतत्सत्यमृषिरङ्गिरा पुरोवाच नैतदचीर्ण-व्रतोऽधीते ।

नम. परमऋषिभ्यो नम' परमऋषिभ्यः ॥

( १ ) तदेतदक्षर पुरुष सत्य ऋषिरङ्गिरा नाम पुरा पूर्वं शौनकाय विधिवदुपसन्नाय पृष्टवते उवाच। तद्वदन्योऽपि तथैव श्रेयोऽर्थिने मुमुक्षवे मोक्षार्थं विधिवदुपसन्नाय ब्रूयादित्यर्थः। नैतत् ग्रन्थरूप अचीर्णव्रतोऽचरितव्रतोऽप्यधीते न पठति। चीर्णव्रतस्य हि विद्या फलाय सस्कृता भवतीति। समाप्ता ब्रह्मविद्या। सा येभ्यो ब्रह्मादिभ्यः पारम्पर्यक्रमेण सप्राप्ता, तेभ्यो नम' परमऋषिभ्यः । परम ब्रह्म साक्षाद्दृष्टवन्तो ये ब्रह्मादयोऽवगतवन्तश्च, ते परमर्षय., तेभ्यो भूयोऽपि नमः । द्विर्वचनमत्यादरार्थं मुण्डकसमाप्त्यर्थं च । शकर

* शेष शकरवत् ।

(१) मुड ३।२।११, ब्रशकर ३।३।३, रग पुरोवाच ( प्रोवाच ), रामानुज ३।३।३, श्रीकठ ३।३।३, श्रीकर ३।३।३

( २ ) 'स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः' — यदप्युक्त, आथर्वणिकानां विद्या प्रति शिरोव्रताद्यपेक्षणात् अन्येषां च तदनपेक्षणात् विद्याभेद इति, तत् प्रत्युच्यते — स्वाध्यायस्यैष धर्मो न विद्यायाः। कथमिदमवगम्यते । यतस्तथात्वेन स्वाध्यायधर्मत्वेन समाचारे वेदव्रतोपदेशपरे ग्रन्थे आथर्वणिका इदमपि वेदव्रतत्वेन व्याख्यातमिति समामनन्ति । 'नैतदचीर्णव्रतोऽधीते' इति च अधिकृतविषयादेतच्छब्दात् अध्ययनशब्दाच्च स्वोपनिषदध्ययनधर्म एवैष इति निर्धार्यते ।

* ब्रशकर ३।३।३

( ३ ) 'तेषामेवैता ब्रह्मविद्या वदेत' इति पूर्वमन्त्रे अचीर्णशिरोव्रतायैतदध्यापन निषिद्धम्। अस्मिंस्तु वाक्ये अचीर्णशिरोव्रतस्य अध्ययन निषिध्यते इति भेदो द्रष्टव्यः ।

† रग.

इति तृतीयं मुण्डकम् ॥

* रामानुज श्रीकठ श्रीकर ब्रशकरवद्भाव ।
† शेष शकरवत् ।

## मुण्डकोपनिषत्समाप्ता ।



# प्रश्नोपनिषत्

## प्रथमः प्रश्नः

पर ब्रह्म अन्वेषमाणाना ऋषीणा गुरूपसत्ति

**सुकेशा च भारद्वाज शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्य कौसल्यश्चाश्वलायनो भार्गवो वैदर्भि कबन्धी कात्यायनस्ते हैते ब्रह्मपरा ब्रह्म निष्ठा पर ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्त पिप्पलादमुपसन्ना. * ॥**

(१) मन्त्रोक्तस्यार्थस्य विस्तरानुवादीद ब्राह्मणमारभ्यते। ऋषिप्रश्नप्रतिवचनाख्यायिका तु विद्यास्तुतये। एव सवत्सरब्रह्मचर्यसवासादितपोयुक्तैर्ग्राह्या, पिप्पलादवत्सर्वज्ञकल्पैराचार्यै. वक्तव्या च, न येन केनचिदिति विद्या स्तौति। ब्रह्मचर्यादिसाधनसूचनाच्च तत्कर्तव्यता स्यात्। सुकेशा च नामत., भरद्वाजस्यापत्य भारद्वाजः। शैब्यश्च शिबेरपत्य शैब्य, सत्यकामो नामत.। सौर्यायणी सूर्यस्याऽपत्य सौर्य', तस्याऽपत्य सौर्यायणि', छान्दस सौर्यायणीति, गार्ग्य. गर्गगोत्रोत्पन्न.। कौसल्यश्च नामत, अश्वलस्यापत्य आश्वलायन.। भार्गव. भृगोर्गोत्रापत्य भार्गवः, वैदर्भिः विदर्भेषु भवः। कबन्धी नामतः, कत्यस्यापत्य कात्यायन, विद्यमानः प्रपितामहो यस्य स., युवप्रत्यय'। ते ह एते ब्रह्मपरा. अपर ब्रह्म परत्वेन गता., तदनुष्ठाननिष्ठाश्च ब्रह्मनिष्ठाः, पर ब्रह्म अन्वेषमाणा किं तत् यन्नित्य विज्ञेयमिति तत्प्राप्त्यर्थं यथाकाम यतिष्याम इत्येव तदन्वेषण कुर्वन्त., तदधिगमाय एष ह वै तत्सर्वं वक्ष्यतीति आचार्यमुपजग्मु.। कथ, ते ह समित्पाणयः समिद्भारगृहीतहस्ताः सन्तः, भगवन्त पूजावन्त पिप्पलादमाचार्यं उपसन्ना. उपजग्मु'। शकर

(२) सूर्यायणस्यापत्य सौर्यायणि। अश्वलायनस्यापत्यमाश्वलायन.। विदर्भस्यापत्य वैदर्भि। कात्यायनो गोत्रत। ब्रह्मपरा वेदैकशरणा.। ब्रह्मनिष्ठा वेदार्थतात्पर्यवन्त। यद्वा ब्रह्मपरा ब्रह्मज्ञानतत्पराः। ब्रह्मनिष्ठास्तपोनिष्ठा.। वेदस्तत्त्व तपो ब्रह्मेत्युक्तेः। पर ब्रह्म परमुत्कृष्ट निरुपचित ब्रह्म स्वरूपतो गुणतश्च बृहद्भूत वस्त्वन्वेषमाणा विजिज्ञासमाना इत्यर्थ। हशब्दः प्रसिद्धौ। वैशब्दोऽवधारणे। एषोऽस्मद्बुद्धौ वर्तमानः।

* रग

**तान्ह स ऋषिरुवाच। भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं सवत्स्यथ। यथाकामं प्रश्नान् पृच्छत। यदि विज्ञास्याम सर्वं ह वो वक्ष्याम इति ॥**

(१) तानेवमुपगतान् ह स किल ऋषिरुवाच भूय' पुनरेव, यद्यपि यूय पूर्वं तपस्विन एव, तपसेन्द्रियसयमेन तथाऽपीह विशेषतो ब्रह्मचर्येण श्रद्धया चाऽऽस्तिक्यबुद्धयाऽऽदरवन्त सवत्सर काल सवत्स्यथ सम्यग्गुरुशुश्रूषापरा. सन्तो वत्स्यथ। ततो यथाकाम यो यस्य कामस्तमनतिक्रम्य यथाकाम, यद्विषये यस्य जिज्ञासा तद्विषयान्प्रश्नान्पृच्छत। यदि तद्युष्मत्पृष्ट विज्ञास्यामः। अनुद्धतत्वप्रदर्शनार्थो यदिशब्दो नाज्ञानसशयार्थः प्रश्ननिर्णयादवसीयते। सर्वं ह वो व पृष्ट वक्ष्याम इति।

शकर

(२) शरीरशोषणादिलक्षणतपसा, योषित्स्मरणकीर्तनकेलिप्रेक्षणगुह्यभाषणसकल्पाध्यवसायक्रियानिर्वृत्तिलक्षणाष्टविधमैथुनवर्जनरूपब्रह्मचर्येण। यद्यस्मासु ज्ञातृत्वनिश्चयाभावेन सवत्सरब्रह्मचर्यतपआदौ बहुक्लेशसाध्ये

* ब्रशकरश्रीकरयो 'उपसन्ना' इत्येतदुपनयनसस्काराभिप्रायकम्।

(१) प्रउ १।१, ब्रशकर १।३।३६, रग कौसल्य (कौशल्य) ते ह स (ते स), श्रीकर १।३।३६,

* शेष शकरेण गतार्थम्।

(१) प्रउ १।२

प्रवृत्तिर्न युष्मभ्य रोचते तदा सुखेन गन्तव्यमिति भाव । ततश्च गुरोर्ज्ञातृत्वपरीक्षामन्तरेणैव शुश्रूषा कार्येत्ययमर्थः शिक्षितो भवति । तथा गुरोरपि शिष्यसग्रहे नातीवाऽऽदर कर्तव्य इत्यर्थ. सूचितः । * रग

प्रश्न प्रजापतिविषयक

**अथ कबन्धी कात्यायन उपेत्य पप्रच्छ । भगवन्कुतो ह वा इमा. प्रजा प्रजायन्त इति ॥**

अथ सवत्सरादूर्ध्वं कबन्धी कात्यायन. उपेत्य उपगम्य पप्रच्छ पृष्टवान् — हे भगवन्, कुतः कस्मात् ह वै इमा. ब्राह्मणाद्याः प्रजाः प्रजायन्ते उत्पद्यन्ते इति । अपरविद्याकर्मणोः समुच्चितयोर्यत्कार्यं या गतिस्तद्वक्तव्यमिति तदर्थोऽय प्रश्नः ।

§ शकर.

प्रजापते रयिप्राणात्मकद्वन्द्वरूपा सृष्टि, आदित्यस्य प्राणत्व चन्द्रमसश्च रयित्वम्

**तस्मै स होवाच । प्रजाकामो वै प्रजापति. । स तपोऽतप्यत । स तपस्तप्त्वा स मिथुनमुत्पादयते रयिं च प्राणं चेति । एतौ मे बहुधा प्रजा करिष्यत इति ॥**

( १ ) तस्मै एव पृष्टवते स होवाच तदपाकरणायाऽऽह— प्रजाकाम. प्रजा आत्मन सिसृक्षुर्वै प्रजापति सर्वात्मा सन् जगत्स्रक्ष्यामीत्येव विज्ञानवान्यथोक्तकारी तद्भावभावित कल्पादौ निर्वृत्तो हिरण्यगर्भः सृज्यमानाना प्रजाना स्थावरजङ्गमाना पति. सन् जन्मान्तरभावित ज्ञान श्रुतिप्रकाशितार्थविषय तपोऽन्वालोचयदतप्यत । अथ तु स एव तपस्तप्त्वा श्रौत ज्ञानमन्वालोच्य सृष्टिसाधनभूत मिथुनमुत्पादयते मिथुन द्वन्द्वमुत्पादितवान् रयिं च सोममन्न, प्राण चाग्निमत्तारम् । एतावग्नीषोमावत्त्रन्नभूतौ मे मम बहुधाऽनेकधा प्रजा. करिष्यत इत्येव सचिन्त्याण्डोत्पत्तिक्रमेण सूर्याचन्द्रमसावकल्पयत् । शकर.

(२) अत्र प्रजापतिशब्दो ब्रह्मपर. । अस्य कारणवाक्यत्वाद्यासार्थै. सर्वव्याख्यानाधिकरणेऽत्रत्यप्रजापतिशब्दस्य ब्रह्मपरत्वस्य समर्थितत्वात् । एव स्रष्टव्य पर्यालोच्य रयिप्राणशब्दितप्रकृतिपुरुषाख्य मिथुनमुत्पादितवानित्यर्थ । * रग

( ३ ) ॐ नमो भगवते तस्मै प्राणादिप्रभविष्णवे । अमन्दानन्दसान्द्राय वासुदेवाय वेधसे ॥ 'प्रजाना पालनाद्विष्णु. प्रजापतिरितीरित. । स वायु सूर्यनामान चन्द्रनाम्नीं सरस्वतीम् । सूर्याचन्द्रगतौ देव. ससर्ज पुरुषोत्तमः । तावाविश्य स्वय विष्णुः सर्वसृष्टीः करोत्यज. । अमूर्तस्थ स वायुस्तु मूर्तसस्था सरस्वती । आदित्यस्थ. स वायुस्तु प्राणानात्मनि सन्नयेत् । प्राच्याः प्राणास्तथेन्द्राद्या दक्षिणाश्च यमादय. । प्रतीच्या वरुणाद्यास्तु सोमाद्या उत्तरा. स्मृता । शेषमित्राववाचीनौ वीन्द्रकामावुदक्तनौ । सभार्या कोणपैः सार्धं चत्वारो दिशि दिश्यपि । सवत्सरस्थो भगवान्वागीरावयनस्थितौ । मासस्थित' स भगवान्पक्षयोर्वाक्च मारुतः । अहोरात्रे तु भगवान्प्राणो ह्यहनि वाङ्निशि । दम्पत्योर्भगवान्विष्णुर्भार्यास्था तु सरस्वती । भर्तृस्थः स स्वय वायुरेव जानन् विमुच्यते ॥' इति प्रजापतिसहितायाम् ।

‡ मध्व.

**आदित्यो ह वै प्राणो रयिरेव चन्द्रमा. । रयिर्वा एतत्सर्वं यन्मूर्तं चामूर्तं च । तस्मान्मूर्तिरेव रयि. ॥**

( १ ) तत्राऽऽदित्यो ह वै प्राणोऽत्ताऽग्निः । रयिरेव चन्द्रमा. । रयिरेवान्न सोम एव । तदेतदेकमत्ता चान्न च प्रजापतिरेक तु मिथुनम् । गुणप्रधानकृतो भेद. । कथ, रयिर्वा अन्न वा एतत्सर्वम् । किं तत्, यन्मूर्तं च स्थूल च, अमूर्तं च सूक्ष्म च, मूर्तामूर्ते अत्त्रन्नरूपे रयिरेव । तस्मात्प्रविभक्तादमूर्ताद्यदन्यन्मूर्तरूप मूर्तिः सैव रयिरमूर्तेनाद्यमानत्वात् ।

शकर.

* शेष शकरवत् ।

§ रग शकरेण गतार्थम् ।

(१) प्रउ ११३

(२) प्रउ ११४, रग प्रजाकामो+ ( ह ) स्तप्त्वा स (स्तप्त्वा), मध्व प्रजाकामो+ (ह) ( स तपस्तप्त्वा स० )

* शेष शकरवत् । रगमतेऽपि ' स तपस्तप्त्वा स ' इत्ययमशो न स्यादिति प्रतिभाति ।

‡ समग्रप्रथमप्रश्नव्याख्यानमेतदिति बोध्यम् ।

(१) प्रउ ११५

( २ ) रयिप्राणशब्दार्थमाह — आदत्त इत्यादित्यो भोक्ता, स एव प्राण इत्यर्थः । आदित्यशब्दितभोक्तृप्रतिद्वन्द्वतया भोग्यवर्गस्य चन्द्रत्वेन निर्देश. । तस्य प्राणशब्दितत्वे हेतु. समनन्तरमेव वक्ष्यति । रयिरेव चन्द्रमा इत्यस्याभिप्रेतमर्थमाह — रयिर्वा इति । मूर्तिशब्देन पृथिव्यप्तेजासि उच्यन्ते । अमूर्तशब्देन वाय्वन्तरिक्षे उच्येते । सर्वमपि भूतजात रयिरन्न भोग्यमित्यर्थ । तस्मान्मूर्त(र्ति)शब्दित पाञ्चभौतिक शरीर सर्वे भोग्यमेवेत्यर्थ ।

रग

**अथाऽऽदित्य उदयन् यत्प्राचीं दिशं प्रविशति, तेन प्राच्यान्प्राणान्रश्मिषु सनिधत्ते । यद्दक्षिणा यत्प्रतीचीं यदुदीचीं यदधो यदूर्ध्वं यदन्तरा दिशो यत्सर्वं प्रकाशयति, तेन सर्वान्प्राणान् रश्मिषु संनिधत्ते ॥**

( १ ) तथाऽमूर्तोऽपि प्राणोऽत्ता सर्वमेव यच्चाऽऽद्यम्। कथ, अथाऽऽदित्य उदयन्नुद्गच्छन्प्राणिना चक्षुर्गोचरमागच्छन् यत्प्राचीं दिश स्वप्रकाशेन प्रविशति व्याप्नोति, तेन स्वात्मव्याप्त्या सर्वांस्तत्स्थान् प्राणान्प्राच्यानन्नभूतान् रश्मिषु स्वात्मावभासरूपेषु व्याप्तिमत्सु व्याप्तत्वात् प्राणिनः सनिधत्ते सनिवेशयति, आत्मभूतान् करोतीत्यर्थ. । तथैव यत्प्रविशति दक्षिणां यत्प्रतीचीं यदुदीचीमध. ऊर्ध्वे यत्प्रविशति यच्चान्तरा दिशः कोणदिशोऽवान्तरदिशः यच्चान्यत्सर्वे प्रकाशयति, तेन स्वप्रकाशव्याप्त्या सर्वान् सर्वदिक्स्थान्प्राणान् रश्मिषु सनिधत्ते ।

शकर

( २ ) अथादित्य इति । रयिनिरूपणानन्तरमादित्यो वर्ण्यत इति शेष. । आदित्यशब्दितस्य भोक्तुः प्राणशब्दितत्वे हेतुरुच्यत इति यावत् । अय जीवः सुषुप्तिस्थानात्प्रबुध्यमान एव सन् प्राचीं दक्षिणा प्रतीचीमुदीचीमधश्चोर्ध्वमन्तरा दिशश्च सर्वे प्रकाशयस्तत्तद्दिग्वर्तीन्द्रियाणि धर्मभूतज्ञानाख्यरश्मिद्वारा बिभर्ति, तस्मात्स एव सर्वप्राणशब्दितेन्द्रियनिर्वोढृत्वात्प्राण इत्यर्थ । प्राचीं दिश प्रविशति प्रकाशयति, प्राच्यान्पदार्थानुपलभत इति यावत् । तेन तस्माद्धेतो. प्राच्यान्प्राणान्रश्मिषु सनिधत्ते पूर्वदिग्वर्तिपदार्थप्रकाशकचक्षुरादीन् प्राणान् धर्मभूतज्ञानाख्यरश्मिमुखेनाधितिष्ठति प्रेरयति । धर्मभूतज्ञानेन तदधिष्ठातृत्वलक्षणसनिधानाभावे चक्षुरादिना करणेन रूपाद्युपलम्भो न स्यात् । चेतनानधिष्ठितस्य करणस्य कार्यासमर्थत्वादिति भावः । यद्दक्षिणा यत्प्रतीचीं यदुदीचीमित्यादौ यद्दक्षिणां प्रविशति तेन दाक्षिणात्यान्प्राणान् रश्मिषु सनिधत्ते, यत्प्रतीचीं प्रविशति तेन प्रतीच्यान् प्राणान् रश्मिषु सनिधत्ते इत्यादिशेष. पूरणीय. । लाघवार्थे प्रतिपर्याय तदनुक्ति । अत्र प्रजाः सिसृक्षु परमात्मा प्रकृतिं पुरुष च ससर्जेति वक्तव्ये परोक्षरूपेण रयिप्राणशब्दाभ्या तदभिलापो रयिप्राणयोश्चन्द्रादित्यशब्दाभ्यामभिलापश्च 'परोक्षप्रिया इव हि देवा.' इति रीत्या रहस्यार्थस्य स्फुटतरोपदेशानर्हत्वसूचनार्थ. ।

रग

**स एष वैश्वानरो विश्वरूप प्राणोऽग्निरुदयते । तदेतदृचाऽभ्युक्तम् ॥**

( १ ) स एषोऽत्ता प्राणो वैश्वानरः सर्वात्मा, विश्वरूपो विश्वात्मत्वाच्च, प्राणोऽग्निश्च स एवोदयते उद्गच्छति प्रत्यह सर्वा दिशः आत्मसात्कुर्वन् । तदेतदुक्त वस्तु ऋचा मन्त्रेणाप्यभ्युक्तम् । शकर.

( २ ) 'आदित्यो ह वै प्राणः' इति प्राणादित्यशब्दनिर्दिष्टस्य भोक्तृवर्गस्योदयमानस्य परमात्मात्मकतामाह — स एष इति । यः प्राक्प्रस्तुतः प्रजापति शब्दितो विश्वेषा नराणा नेतृत्वेन वैश्वानरशब्दवाच्यः, सर्वशरीरतया विश्वरूपशब्दितः, अग्रनेतृत्वादिगुणयोगेनाग्निशब्दित., स एष प्राक्प्रजापतिशब्दनिर्दिष्ट परमात्मा 'आदित्यो ह वै प्राणः' इति प्राणशब्दितभोक्तृरूपः सन्नुदयते इत्यर्थ. । अय च मन्त्रो वैश्वानराधिकरणे परमात्मपरतया सिद्धवत्कृत्य भगवता भाष्यकृता व्यवहृत. । अत एव व्याख्यातमिति द्रष्टव्यम् । तदेतद्ब्रह्माभिमुखीकृत्य ऋचा मन्त्रेणाप्युक्तम् ।

रग.

**[२] विश्वरूप हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् ।**

(१) प्रउ १।६

(१) प्रउ १।७

(२) प्रउ १।८, मध्व हरिण ( करिण )

**सहस्ररश्मिः शतधा वर्तमानः प्राण प्रजानामुदयत्येष सूर्य ॥**

( १ ) विश्वरूप सर्वरूप हरिण रश्मिवन्त जातवेदस जातप्रज्ञान परायण सर्वप्राणाश्रय ज्योतिरेक सर्वप्राणिना चक्षुर्भूतमद्वितीय तपन्त तापक्रियां कुर्वाण स्वात्मान सूर्यं सूरयो विज्ञातवन्तो ब्रह्मविद. । कोऽसौ, य विज्ञातवन्त॰ । सहस्ररश्मिरनेकरश्मि शतधाऽनेकधा प्राणिभेदेन वर्तमान. प्राण प्रजानामुदयत्येष सूर्य । शकर.

( २ ) विश्वरूप सर्वशरीरम् । जातानि वेदासि यस्मात्स जातवेदाः, 'प्रज्ञा च तस्मात्प्रसृता पुराणी' ( श्वेउ ३।१८ ) इति सर्वज्ञानोत्पादकम् । परायण परमप्राप्य ज्योति. सर्वप्रकाशक दीप्तिमन्तमेकमद्वितीय तपन्त जठराग्न्यादिरूपेण तपन्तम् । हरिण हरिमित्यर्थः । हरिशब्दस्य नान्तत्व छान्दसम् । वर्तमानोऽनुवर्तमान. तद्विधेयतया तच्छरीरभूत इति । सहस्ररश्मिर्नाना विधविषयकज्ञानवान् । प्रजाना स्थावरजङ्गमात्मकाना प्राणो धारक. सूर्यवत्प्रकाशकः । एष जीवः शतधा देवमनुष्यादिनानाविधदेहात्माभिमानशालितया सुषुप्ति स्थानादुदयते, सर्गकाले उदयते इति वाऽर्थ. । रग.

सवत्सरस्य मासस्य अहोरात्रयो अन्नस्य च प्रजापतित्व, दक्षिणोत्तरमार्गौ तत्साधनानि च, प्रजापतिव्रत, ब्रह्मलोकसाधनम्

**[१]सवत्सरो वै प्रजापति. । तस्यायने दक्षिणं चोत्तरं च । तद्ये ह वै तदिष्टापूर्ते कृतमित्युपासते । ते चान्द्रमसमेव लोकमभिजयन्ते । त एव पुनरावर्तन्ते । तस्मादेत ऋषय. प्रजाकामा दक्षिणं प्रतिपद्यन्ते । एष ह वै रयिर्य. पितृयाणः ॥**

( १ ) यच्चासौ चन्द्रमाः मूर्तिरन्नममूर्तिश्च प्राणोऽत्ता आदित्यस्तदेकमेतन्मिथुन सर्वं कथ प्रजाः करिष्यत इति, उच्यते — तदेव कालः सवत्सरो वै प्रजापतिस्तन्निर्वर्त्यत्वात्सवत्सरस्य । चन्द्रादित्यनिर्वर्त्यतिथ्यहोरात्रसमुदायो हि सवत्सर., तदनन्यत्वाद्रयिप्राणमिथुनात्मक एवेत्युच्यते । तत्कथ, तस्य सवत्सरस्य प्रजापतेरयने मार्गौ द्वौ दक्षिण चोत्तर च । द्वे प्रसिद्धे ह्ययने षण्मासलक्षणे, याभ्यां दक्षिणेनोत्तरेण च याति सविता केवलकर्मिणा ज्ञानसयुक्तकर्मवता च लोकान् विदधत् । कथ, तत् तत्र च ब्राह्मणादिषु ये ह वै तदुपासत इति क्रियाविशेषणो द्वितीयस्तच्छब्द । इष्ट च पूर्तं चेष्टापूर्ते इत्यादि कृतमेवोपासते, नाकृत नित्य, ते चान्द्रमस चन्द्रमसि भव प्रजापतेर्मिथुनात्मकस्याश रयिमन्नभूत लोकमभिजयन्ते कृतरूपत्वाच्चान्द्रमसस्य । ते तत्रैव च कृतक्षयात्पुनरावर्तन्ते 'इम लोक हीनतर वा विशन्ति' इति ह्युक्तम् । यस्मादेव प्रजापतिमन्नात्मक फलत्वेनाभिनिर्वर्तयन्ति चन्द्रमिष्टापूर्तकर्मणैते ऋषय. स्वर्गद्रष्टार. प्रजाकामाः प्रजार्थिनो गृहस्था॰, तस्मात्स्वकृतमेव दक्षिण दक्षिणायनोपलक्षित चन्द्र प्रतिपद्यन्ते । एष ह वै रयिरन्न य॰ पितृयाण पितृयाणोपलक्षितश्चन्द्रः । शकर

( २ ) एव सूक्ष्मप्रकृतिजीवशरीरकस्य प्रजापते. रयिप्राणशब्दितप्रकृतिपुरुषरूपभोग्यभोक्त्रात्मना विभागमुपवर्ण्य तस्यैव परमात्मनोऽखण्डकालरूपेण स्थितस्य खण्डकालरूपेण विभाग दर्शयिष्यश्चित्तावतरणाय वोपासनार्थं वा सवत्सराख्यप्रजापतेर्दक्षिणोत्तरायणात्मक रयिप्राणरूप विभाग, तथा मासाख्यप्रजापतेः रयिप्राण शब्दित कृष्णशुक्लपक्षात्मक विभाग, अहोरात्रात्मककालरूपप्रजापतेः रयिप्राणात्मक रात्र्यहरात्मक विभाग, तत्प्रसङ्गेन रयिशब्दार्थदक्षिणायनकृष्णपक्षरात्र्यपेक्षया प्राणशब्दार्थभूतोत्तरायणशुक्लपक्षदिवसानामुत्कर्षं च वक्तुमारमते — सवत्सरो वै प्रजापतिरिति । वत्सराख्यकालरूपस्य प्रजापतेर्दक्षिणोत्तरशब्दिते द्वे अयने सूर्यगत्याधारभूते द्वे रूपे स्तः । ह वै इति प्रसिद्धौ स्मरणे वा । अयमर्थः — ये पुरुषा इष्टापूर्ते दत्तमिति तत्कर्मोपासत इत्यर्थः । 'य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते' ( छाउ. ५।१०।३ ) इति श्रुत्यन्तरैकार्थ्यात्कृतशब्दो दत्तपर. । इष्ट यागादि । पूर्तं खातादि । इतिशब्दः प्रकारवचनः । यागदानवापीकूपादिक कर्म येऽनुतिष्ठन्ति ते चान्द्रमस॰ सबन्धिन लोकमभिजयन्ते प्राप्नुवन्ति, ते एव पुनरावर्तन्ते, न

(१) प्रउ १।९, **भास्कर** ४।३।१३ चान्द्रमस ( चन्द्रमस ) जयन्ते+ ( इति ), रग देत ऋषय ( देक ऋषय ) एष ह वै ( एष वै ), मध्व एष ह वै ( एष वै ).

त्वात्मोपासका उत्तरमार्गेण गता इत्यर्थः । तस्माद्धेतो. एके कर्मठा. प्रजास्वर्गादिलक्षणक्षुद्रफलकामा ऋषय क्षुद्रफलद्रष्टारो दक्षिणपन्थान पितृयाणशब्दित प्रतिपद्यन्ते । एष एव पितृयाणो रयिरन्नप्रधानो वैषयिक भोगात्मक इति यावत् । यद्यपि ‘धूमो रात्रिस्तथा कृष्णः’ इत्यादिप्रमाणप्रतिपन्न पुराणेषु दक्षिणमार्गो निर्दिष्टो धूमादिश्चन्द्रान्तः । पितृयाणोऽप्यन्य. । सवत्सरावयवभूत· षण्मासात्मा दक्षिणायननिर्दिष्टोऽप्यन्य । तथाऽपि दक्षिणायनशब्देन द्वयोरपि व्यवह्रियमाणत्वात् कालमार्गयोरेकीकृत्य व्यवहार उपपद्यत इति द्रष्टव्यम् ।

रग

**अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्याऽऽदित्यमभिजयन्ते । एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणम् । एतस्मान्न पुनरावर्तन्त इति । एष निरोध । तदेष श्लोक ॥**

( १ ) अथोत्तरेणायनेन प्रजापतेरश प्राणमत्तारमादित्यमभिजयन्ते । केन, तपसेन्द्रियजयेन, विशेषतो ब्रह्मचर्येण, श्रद्धया विद्यया च प्राजापत्यात्मविषयया आत्मान प्राण सूर्यं जगतस्तस्थुषश्चान्विष्य अहमस्मीति विदित्वा आदित्यमभिजयन्तेऽभिप्राप्नुवन्ति । एतद्वै आयतन सर्वप्राणाना सामान्यमायतनमाश्रयः एतद मृतमविनाशि, अभयमत एव भयवर्जित, न चन्द्रवत्क्षयवृद्धिभयवत् । एतत्परायण परा गतिर्विद्यावता कर्मिणां च ज्ञानवताम् । एतस्मान्न पुनरावर्तन्ते यथेतरे केवलकर्मिण इति । यस्मादेषोऽविदुषां निरोध । आदित्याद्धि निरुद्धा अविद्वांस । नैते सवत्सरमादित्यमात्मान प्राणमभिप्राप्नुवन्ति । स हि सवत्सरः कालात्मा अविदुषा निरोध· । तत्तत्रास्मिन्नर्थे एष श्लोको मन्त्र ।

शकर

( २ ) अथशब्दो वाक्यान्तरोपक्रमे । ये तावत् ‘किं प्रजया करिष्याम’ इति विरक्ता ऋषय. कायक्लेशादिलक्षणेन तपसा, स्त्रीसङ्गराहित्यलक्षणेन ब्रह्मचर्येण, आस्तिक्यबुद्धिलक्षणया श्रद्धया, प्रत्यगात्मविद्यया परमात्मानमुपास्य अर्चिरादिना उत्तरेणायनेन ‘आदित्याच्चन्द्रमसम्’ इत्युक्तप्रकारेण ब्रह्मासिद्वारभूतमादित्यमभिजयन्ते प्राप्नुवन्तीत्यर्थ. । ‘आदित्यो ह वै प्राण.’ ( प्रउ १।५ ) इत्युक्ते. प्राणसबन्ध्यपि भवति । अन्वेष्टव्यतया निर्दिष्टमात्मान स्तुवस्तेषामपुनरावृत्तिं दर्शयति — एतद्वै प्राणानामिति । आयतनशब्दापेक्षयैतदिति नपुसकलिङ्गनिर्देशः । प्राणाना प्राणभृतामायतनमाधारभूतम् । एतत्परायण परम प्राप्यमित्यर्थः । एतस्मान्न पुनरावर्तन्ते उपासका इति शेष । उत्तरेण मार्गेण गता· ‘मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते’(भगी ८।१६) इत्युक्तरीत्या परमात्मान प्राप्य न निवर्तन्त इत्यर्थः । एष निरोधः एषः ‘प्रजाकामो वै प्रजापति·’ इति प्राक्प्रजापतिशब्दनिर्दिष्ट. परमात्मा स्वप्राप्तस्य तदुपासकस्यापुनरावृत्तिरुपपद्यत इति भावः । अत्रैष इत्येतच्छब्देन प्रजापतिपरामर्शात् । आत्मानमन्विष्येत्यात्मशब्दोऽपि प्रजापतिपर एव । तत्तस्मिन् सवत्सरात्मनि प्रजापतौ वक्ष्यमाण. श्लोक इत्यर्थ ।

रग

**पञ्चपाद पितरं द्वादशाकृतिं दिव आहु· परे अर्धे पुरीषिणम् ।**
**अथेमे अन्य उ परे विचक्षण सप्तचक्रे षडर आहुरर्पितमिति ॥**

( १ ) पञ्चपाद पञ्चर्तवः पादा इवास्य सवत्सरात्मन आदित्यस्य, तैरसौ पादैरिवर्तुभिरावर्तते । हेमन्तशिशिरावेकीकृत्येय कल्पना । पितर, सर्वस्य जनयितृत्वात्पितृत्व तस्य, द्वादशाकृतिं द्वादश मासा आकृतयः अवयवाः आकरण वाऽवयविकरणमस्य द्वादशमासैस्त द्वादशाकृतिं, दिवो द्युलोकात्परे ऊर्ध्वेऽर्धे स्थाने तृतीयस्या दिवीत्यर्थः । पुरीषिण पुरीषवन्तमुदकवन्तमाहु. कालविद· । अथ तमेवान्ये इमे उ परे कालविदो विचक्षण निपुण सर्वज्ञ सप्तचक्रे सप्तहयरूपेण* चक्रे सतत गतिमति कालात्मनि षडरे षडृतुमत्याहुः । सर्वमिद जगत्कथयन्ति अर्पित अरा इव रथनाभौ निविष्टमिति । यदि पञ्चपादो

(१) प्रउ ११०, ब्रशकर १।२।१६, भास्कर १।२।१६, ४।३।१३ अथोत्त ( तथोत्त ) मभिज (मधिज), रामानुज ३।४।३८ मन्विष्य ( मन्विष्येदा ), निंबार्क १।२।१७, श्रीकठ ३।४।३८, श्रीकर १।२।१६ जयन्ते ( जायन्ते )

* सप्तहयरूपेणेत्यत्र सप्ताहरूपेणेत्यनेन भवितव्यमिति भाति ।

(१) प्रउ १।११, रग. मध्व ( इति० )

द्वादशाकृतिर्यदि वा सप्तचक्र षडरः, सर्वथाऽपि सवत्सर. कालात्मा प्रजापतिश्चन्द्रादित्यलक्षणो(ऽपि) जगत. कारणम् । * शकर

( २ ) वत्सरसवत्सरपरिवत्सरेडावत्सरानुवत्सररूपाः पञ्च पादा यस्य स पञ्चपादः । अथवा हेमन्तशिशिरयोरेकीकरणात्पञ्चर्तव सपद्यन्ते, ते पादा यस्य स पञ्चपादस्तम् । पितर सर्वस्य जनकम् । द्वादशाकृतिं द्वादशमासाकृतिम् । दिव. स्वर्गात्परे परस्मिन्नर्धे स्थाने । पुरीषिणम् । पुरीषशब्देन स्वर्गभूमिसनिहित ब्रह्माण्डगोलकावरणमुच्यते, तदस्य स्थानत्वेनास्तीति पुरीषिणमाहुरित्यन्वय । अथशब्द· पक्षान्तरपरिग्रहे । उशब्दोऽवधारणे । परशब्द उत्कृष्टवचन । पूर्वोक्तेभ्योऽन्ये उत्कृष्टा इमे कालतत्त्वविद आदित्यादिग्रहसप्तकलक्षणचक्रयुक्ते ऋतुलक्षणारषट्कयुक्ते सवत्सराख्ये रथे जगत्सर्वं विचक्षण कुशल निश्चल यथा भवति तथाऽर्पितमित्याहुः ।

रग

**मासो वै प्रजापति । तस्य कृष्णपक्ष एव रयि शुक्ल प्राण । तस्मादेत ऋषय शुक्ल इष्ट कुर्वन्तीतर इतरस्मिन् ॥**

( १ ) यस्मिन्निद श्रित विश्व स एव प्रजापति. सवत्सराख्य. स्वावयवे मासे कृत्स्नः परिसमाप्यते । मासो वै प्रजापतिर्यथोक्तलक्षण एव मिथुनात्मक· । तस्य मासात्मनः प्रजापतेरेको भाग कृष्णपक्ष एव रयिरन्न चन्द्रमा· । अपरो भाग शुक्लः शुक्लपक्ष· प्राण आदित्योऽत्ताऽग्नि. । यस्माच्छुक्लपक्षात्मान प्राण सर्वमेव पश्यन्ति, तस्मात्प्राणदर्शिन एत ऋषय कृष्णपक्षेऽपीष्ट याग कुर्वन्त· शुक्लपक्षे एव कुर्वन्ति, प्राणव्यतिरेकेण कृष्णपक्षस्तैर्न दृश्यते यस्मात् । इतरे तु प्राण न पश्यन्तीत्यदर्शनलक्षण कृष्णात्मानमेव पश्यन्ति । इतरे इतरस्मिन् कृष्णपक्षे एव कुर्वन्ति शुक्ले कुर्वन्तोऽपि ।

शकर.

( २ ) यथा संवत्सरो रयिप्राणात्मना विभक्त एव मासोऽपि विभक्त इत्युपासनार्थं प्रदर्शयति — मासो वै इति । स्पष्टोऽर्थः । यस्माच्छुक्लः प्राणतयोत्कृष्टस्तस्मादृषयोऽतीन्द्रियार्थद्रष्टारः सर्वेऽपि शुक्लपक्ष एव शोभनानि कर्माणि कुर्वन्ति । इतरेऽनृषयोऽज्ञा. पुनरप्राणतया असारभूते कृष्णपक्षे कुर्वन्तीत्यर्थः ।

रग.

**अहोरात्रो वै प्रजापति । तस्याहरेव प्राणो रात्रिरेव रयि । प्राण वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते । ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या सयुज्यन्ते ॥**

( १ ) सोऽपि मासात्मा प्रजापतिः स्वावयवेऽहोरात्रे परिसमाप्यते पूर्ववत् । तस्याप्यहरेव प्राणोऽत्ताऽग्नि., रात्रिरेव रयिः पूर्ववत् । प्राणमहरात्मान वा एते प्रस्कन्दन्ति निर्गमयन्ति शोषयन्ति वा स्वात्मनो विच्छिद्यापनयन्ति । के, ये दिवाऽहनि रत्या रतिकारणभूतया सह स्त्रिया सयुज्यन्ते मैथुनमाचरन्ति मूढा । यत एव तस्मात्तन्न कर्तव्यमिति प्रतिषेधः प्रासङ्गिक· । यद्रात्रौ सयुज्यन्ते रत्या ऋतौ, ब्रह्मचर्यमेव तदिति प्रशस्तत्वादृतौ भार्यागमन कर्तव्यमित्ययमपि प्रासङ्गिको विधि ।

शकर

( २ ) रत्या रत्यर्थं, प्रयोजनस्य हेतुत्वविवक्षया तृतीया । प्रस्कन्दन्ति प्रकर्षेण शोचयन्ति, प्राणापचारात् प्राणमेव निघ्नन्तीत्यर्थ ।

* रग

**अन्न वै प्रजापतिस्ततो ह वै तद्रेत । तस्मादिमा. प्रजा प्रजायन्त इति ॥**

( १ ) प्रकृत तूच्यते । सोऽहोरात्रात्मकः प्रजापति. व्रीहियवाद्यन्नात्मना व्यवस्थितः एव क्रमेण परिणम्य । तदन्न वै प्रजापतिः । कथ, ततस्तस्माद्ध वै रेतो नृबीज तत्प्रजाकारणम् । तस्माद्योषिति सिक्तादिमा मनुष्यादिलक्षणा· प्रजा प्रजायन्ते । यत्पृष्ट 'कुतो ह वै प्रजा. प्रजायन्ते' इति, तदेव चन्द्रादित्यमिथुनादिक्रमेणाहोरात्रान्तेनान्नासृग्रेतोद्वारेणेमाः प्रजाः प्रजायन्त इति निर्णीतम् ।

शकर

---

(१) प्रउ १।१२, रग शुक्ल ( शुक्लपक्ष )

* शेष शाकरेण गतार्थम् ।

(१) प्रउ १।१३, रग सयुज्यन्ते । ब्रह्म ( संप्रयुज्यन्ते । ब्रह्म ), मध्व रात्रो ( रात्रे ) प्रस्कन्दन्ति ( स्कन्दन्ति )

(२) प्रउ १।१४

( २ ) ननु प्रकृतिपुरुषकालात्मक ब्रह्म कथ प्रजानामुपादानमित्युच्यते । अन्नपरिणामभूतस्य रेतस एव प्रजोपादानत्वदर्शनादित्याशङ्क्याऽऽह—अन्नमित्यादि । अन्नावस्थ तदुत्पन्नरेतोऽवस्थ च यत प्रजापतिशब्दित ब्रह्मैव, अत. प्रकृतिपुरुषसवत्सरमासादिकालान्नरेतोऽवस्थारूपाद्ब्रह्मणः सर्वाः प्रजाः प्रजायन्त इति प्रजापतिशब्दितस्य ब्रह्मण उपादानत्वमुपपद्यत इति भाव ।

रग

[१]तद्ये ह वै तत्प्रजापतिव्रतं चरन्ति । ते मिथुनमुत्पादयन्ते । तेषामेवैष ब्रह्मलोक । येषा तपो ब्रह्मचर्यम् । येषु सत्य प्रतिष्ठितम् ॥

( १ ) तत्तत्रैव सति ये गृहस्थाः । ह वै इति प्रसिद्धस्मरणार्थौ निपातौ । तत्प्रजापतेर्व्रतमृतौ भार्यागमन चरन्ति कुर्वन्ति तेषा दृष्टफलमिदम् । किं, ते मिथुन पुत्र दुहितर चोत्पादयन्ते । अदृष्ट च फलमिष्टापूर्तदत्तकारिणां—तेषामेवैष यश्चान्द्रमसो ब्रह्मलोकः पितृयाणलक्षणः, येषां तप. स्नातकव्रतादीनि, ब्रह्मचर्यं ऋतोरन्यत्र मैथुनासमाचरण, येषु च सत्यमनृतवर्जन प्रतिष्ठितमव्यभिचारितया वर्तते नित्यमेव ।

शकर

( २ ) तत्प्रसङ्गादमुमुक्षुनिन्दापूर्वक मुमुक्षु स्तौति — तद्ये ह वै इति । तस्माद्येऽन्न वै प्रजापतिरिति प्रजापतिशब्दितस्यान्नस्य व्रत भक्षण व्रतत्वेनानुतिष्ठन्ति, येऽन्नभक्षणशीला ब्रह्मचर्यरहितास्ते एव प्रजा उत्पादयन्ते । एष लोकः पुत्रपश्वन्नादिलक्षणः कार्यभूतब्रह्मरूपो लोकस्तेषामेव, न त्वात्मकामानामिति भावः ।

* रग.

[२]तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति ॥

( १ ) यस्तु पुनरादित्योपलक्षित उत्तरायण. प्राणात्मभावो विरजः शुद्धो न चन्द्रब्रह्मलोकवद्रजस्वलो वृद्धिक्षयादियुक्तः असौ तेषाम् । केषा, इत्युच्यते — यथा गृहस्थानामेकविरुद्धसव्यवहारप्रयोजनवत्त्वाज्जिह्म कौटिल्य वक्रभावोऽवश्यभावि, तथा न येषु जिह्मम् । यथा च गृहस्थानां क्रीडानर्मादिनिमित्तमनृतमवर्जनीय, तथा न येषु तत्, तथा माया गृहस्थानामिव न येषु विद्यते । माया नाम बहिरन्यथाऽऽत्मान प्रकाश्यान्यथैव कार्यं करोति, सा माया मिथ्याचाररूपा । मायेत्येवमादयो दोषा येष्वधिकारिषु ब्रह्मचारिवानप्रस्थभिक्षुषु निमित्ताभावान्न विद्यन्ते, तत्साधनानुरूप्येणैव तेषामसौ विरजो ब्रह्मलोक इत्येषा ज्ञानयुक्तकर्मवतां गतिः । पूर्वोक्तस्तु ब्रह्मलोक· केवलकर्मिणां चन्द्रलक्षण इति ।

शकर.

( २ ) येषा कायशोषणाख्य तपः, न भक्षणशीलता मैथुनवर्जन, येषु च सत्यवचन प्रतिष्ठित, येषु च 'मनस्यन्यद्वचस्यन्यत्कर्मण्यन्यद्दुरात्मनाम्' इत्युक्तकौटिल्यलक्षणजिह्मत्व नास्ति, भूताहितवचनलक्षणमसत्यवचन नास्ति, तेषामसौ विरजो निर्दोषो ब्रह्मैव लोको ब्रह्मलोकः । तथैव व्यासार्यैः सर्वव्याख्याधिकरणे विवृतत्वादिति द्रष्टव्यम् । इतिशब्दः प्रतिवचनसमाप्तौ ।

रग.

इति प्रथम प्रश्नः ॥

---

## द्वितीयः प्रश्नः

शरीरधारकप्रकाशकतद्वरिष्ठविषयक प्रश्न

[१]अथ हैनं भार्गवो वैदर्भिः पप्रच्छ । भगवन् कत्येव देवाः प्रजा विधारयन्ते । कतर एतत्प्रकाशयन्ते । क· पुनरेषां वरिष्ठ इति ॥

( १ ) प्राणोऽत्ता प्रजापतिरित्युक्तम् । तस्य प्रजापतित्वमत्तृत्व चास्मिन् शरीरेऽवधारयितव्यमित्यय प्रश्न आरभ्यते । अथानन्तर ह किलैन भार्गवो वैदर्भिः

---

* मूलगत 'येषा तप' इत्यादि उत्तरवाक्यान्वयि, इति तत्रैव तद्व्याख्यान द्रष्टव्यम् ।

(१) प्रउ १।१५, रग तत्प्रजा ( प्रजा ) ब्रह्मलोक ( लोक )

(२) प्रउ १।१६, रामानुज १।१।१ ( पृ ११ ) तेषामसौ ( तेषामेवैष )

(१) प्रउ २।१, रग वरिष्ठ ( बलिष्ठ ), मध्व प्रजां वि ( प्रजा वि )

पप्रच्छ। हे भगवन् कत्येव देवाः प्रजा शरीरलक्षणां विधारयन्ते विशेषेण धारयन्ते। कतरे बुद्धीन्द्रियकर्मेन्द्रियविभक्तानामेतत्प्रकाशन स्वमाहात्म्यप्रख्यापन प्रकाशयन्ते। कोऽसौ पुनरेषा वरिष्ठ. प्रधान. कार्यकरण लक्षणानामिति। शकर

( २ ) देहेन्द्रियमन'प्राणादिविलक्षणप्रत्यगात्मशोधनाय प्रश्नानवतारयति। उक्त च व्यासार्थैरुत्तरेषु खण्डेषु प्रत्यगात्मा विशोध्यत इति। कबन्धिप्रश्नानन्तर पिप्पलाद भार्गवो वैदर्भिः पृष्टवान्। किमिति, हे भगवन्, किंसख्याका देवा' स्थावरजङ्गमात्मिका प्रजा बिभ्रति। एष्वेव देवेषु कतरे देवा एतच्छरीर तत्कार्यं प्रकाशयन्ते। कः पुनरेतेषा श्रेष्ठ' * इति।

रग

शरीरस्य धारकप्रकाशका

तस्मै स होवाच। आकाशो ह वा एष देवो वायुरग्निराप· पृथिवी वाङ्मनश्चक्षु· श्रोत्रं च। ते प्रकाश्याभिवदन्ति। वयमेतद्बाणमवष्टभ्य विधारयाम' ॥

( १ ) एव पृष्टवते तस्मै स होवाच। आकाशो ह वा एष देवो वायुरग्निरापः पृथिवीत्येतानि पञ्च महाभूतानि शरीरारम्भकाणि, वाङ्मनश्चक्षु. श्रोत्रमित्यादीनि कर्मेन्द्रियबुद्धीन्द्रियाणि च। ते कार्यलक्षणा. करणलक्षणाश्च। ते देवा आत्मनो माहात्म्य प्रकाश्याभिवदन्ति स्पर्धमाना अहश्रेष्ठतायै। कथ वदन्ति। वयमेतद्बाण कार्यकरणसघातमवष्टभ्य प्रासादमिव स्तम्भादयोऽविशिथिलीकृत्य विधारयामो विस्पष्ट धारयामः। मयैवैकेनाय सघातो ध्रियत इत्येकैकस्याभिप्रायः। शकर.

( २ ) मुख्यप्राणस्यैव धारकत्वप्रकाशकत्वश्रेष्ठत्वानि वक्तुमाख्यायिकामाह — आकाशो हेति। ह वा इति प्रसिद्ध्यतिशये। एष प्रसिद्ध आकाशः। दीव्यति गच्छतीति देवो गमनशीलस्ताहशो वायुः। आकाशादयः सर्वे मिलिता. पुरोवर्तिशरीर प्रदर्श्याऽभितः स्थित्वा वदन्ति स्म, किमिति, वय बाणवत्सचारशीलमेतत्पुरोवर्तिशरीरमवलम्ब्य विधारयामः। आकाशादिविविधकार्यक्षमतया धारयाम इत्यर्थ'। * रग

( ३ ) वायुरग्निरित्यत्र भूतवायुरुच्यते। प्राणशब्देन प्रधानवायु। मध्व.

शरीरधारकप्रकाशकेषु प्राण वरिष्ठ

तान्वरिष्ठ· प्राण उवाच। मा मोहमापद्यथ, अहमेवैतत्पञ्चधाऽऽत्मान प्रविभज्यैतद्बाणमवष्टभ्य विधारयामीति। तेऽश्रद्दधाना बभूवु ॥

( १ ) तानेवमभिमानवतो वरिष्ठो मुख्य. प्राण उवाच उक्तवान्। मा मैव मोहमापद्यथ अविवेकतयाऽभिमान मा कुरुत यस्मादहमेवैतद्बाणमवष्टभ्य विधारयामि पञ्चधाऽऽत्मान प्रविभज्य प्राणादिवृत्तिभेद स्वस्य कृत्वा विधारयामीत्युक्तवति च तस्मिंस्तेऽश्रद्दधानाः अप्रत्ययवन्तो बभूवु कथमेतदेवमिति।

शकर

( २ ) एव वदतो मुख्यप्राणस्याय भाव — हे आकाशादयः भवन्त आ( अव )काशादिकप्रातिस्विक कार्यक्षमा न तु सर्वकार्यक्षमाः। अह तु भवतामपि कार्यनिमित्तत्वाद्भवत्कार्यक्षमः। क्रियमाणे जीवने तु भवत्सु न कोऽपि समर्थः।

* रग

सोऽभिमानादूर्ध्वमुत्क्रमत इव। तस्मिन्नुत्क्रामत्यथेतरे सर्वे एवोत्क्रामन्ते। तस्मिंश्च प्रतिष्ठमाने

---

* एतेन ' वरिष्ठ ' इत्येव पाठो भाष्याभिप्रेत इति प्रतिभाति।

(१) प्रउ २।२, रग रयाम + ( इति ), मध्व प्रकाश्याभि ( प्राकाश्या अभि ) रयाम + ( इति )

* शेष शकरवत्।

(१) प्रउ २।३, प्रशकर ११।३१, २।४।११, रंग प्रविभज्यै ( विभज्यै ) विधारया ( धारया ), निंबार्क २।४।११ प्रविभज्यै ( विभज्यै ), श्रीकर. ११।३२, २।४।९ आपद्यथ ( आपद्यथा ), वल्लभ ११।३०, २।४।१२ आपद्यथ ( आपद्यथा ) प्रविभज्यै ( विभज्यै ), विज्ञान २।४।८, ९ आपद्यथ (आपद्यथा) ष्टभ्य विधा ( ष्टभ्याभिधा ), बलदेव ११।३०

(२) प्रउ २।४; रग तस्मिश्च ( तस्मिंस्तु ) प्रातिष्ठन्ते ( प्रतिष्ठन्ते ), मध्व त्क्रामन्ते ( त्क्रमन्ते ) प्रातिष्ठन्ते ( प्रतिष्ठन्ते ) मक्षिका ( मधुमक्षिका ) श्रोत्रं च ( श्रोत्र चेति )

सर्वे एव प्रातिष्ठन्ते । तद्यथा मक्षिका मधुकरराजानमुत्क्रामन्त सर्वा एवोत्क्रामन्ते । तस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रातिष्ठन्ते । एव वाङ्मनश्चक्षु श्रोत्र च । ते प्रीता प्राण स्तुन्वन्ति ॥

( १ ) स च प्राणस्तेषामश्रद्धानतामालक्ष्य अभिमानादुत्क्रमत इव उत्क्रान्तवानिव स रोषान्निरपेक्ष । तस्मिन्नुत्क्रामति यद्वृत्त तद्दृष्टान्तेन प्रत्यक्षीकरोति । तस्मिन्नुत्क्रामति सति अथानन्तरमेव इतरे सर्वे एव प्राणाश्चक्षुरादय उत्क्रामन्ते उच्चक्रमिरे । तस्मिंश्च प्राणे प्रतिष्ठमाने तूष्णीं भवति अनुत्क्रामति सति सर्वे एव प्रातिष्ठन्ते तूष्णीं व्यवस्थिता अभूवन । तत्तत्र यथा लोके मक्षिका मधुकरा स्वराजान मधुकरराजान उत्क्रामन्त प्रति सर्वा एवोत्क्रामन्ते । तस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रातिष्ठन्ते प्रतितिष्ठन्ति । यथाऽयं दृष्टान्त एव वाङ्मनश्चक्षु श्रोत्र चेत्यादय । त उत्सृज्याश्रद्धानता बुद्ध्वा प्राणमाहात्म्य प्रीता प्राण स्तुन्वन्ति स्तुवन्ति ।

शकर

( २ ) अष्टोत्तरशतमर्मस्थानानामुपरि स्वमाहात्म्य प्रकटयितु स्वस्थानात्किंचिदुदचलत् । इवशब्दोऽनर्थक । साम्प्रदायिकमणेऽप्रतिसमाधाय शरीरविनाश स्यादिति मत्वोत्क्रमणमिव कृतवानिति भाव ।

* रग

क्रियाशीलमर्वा मरु सर्वनाश स्थानीय सर्वेन्द्रिया-दवरूप सवश्चर प्राण एव

एषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो मघवानेष वायु ।

एष पृथिवी रयिर्देव. सदसच्चामृत च यत् ॥

( १ ) कथम् । एष प्राणोऽग्नि सन् तपति ज्वलति । तथैव सूर्य सन् प्रकाशते । तथैव पर्जन्यः सन् वर्षति । किंच मघवानिन्द्रः सन् प्रजा पालयति, जिघांसत्यसुर रक्षांसि । एष वायुरावहप्रवहादिभेद । किंचैष पृथिवी रयिर्देव सर्वस्य जगत. । सन्मूर्तमसदमूर्त चामृत च यद्देवाना स्थितिकारणम् ।

शकर

( २ ) स्तुतिमेवाह—एष मुख्यप्राणोऽग्निरूपेण तपति । एष प्राण एव सर्व । सर्वेषा प्राणायत्तस्थितिकत्वात् । यदधीना यस्य सत्ता तत्तदेवेति भण्यते इति रीतिमनुसृत्य सामानाधिकरण्यव्यपदेशो दृष्टः । रयिर्देव श्चन्द्रमा इति यावत् । सदसच्छब्दौ वर्तमानावर्तमानपरौ प्रत्यक्षाप्रत्यक्षपरौ वा चेतनाचेतनपरौ वा स्थूलसूक्ष्मपरौ वा । अमृतशब्दो मोक्षपर । तस्यापि तदधीनत्वादिति भाव. ।

रग

अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम् ।

ऋचो यजूंषि सामानि यज्ञ क्षत्र ब्रह्म च ॥

( १ ) किं बहुना, अरा इव रथनाभौ श्रद्धादि * नामान्त सर्व स्थितिकाले प्राण एव प्रतिष्ठितम् । तथा ऋचो यजूंषि सामानीति त्रिविधा मन्त्रास्तत्साध्यश्च यज्ञ क्षत्र च सर्वस्य पालयितृ ब्रह्म च यज्ञादिकर्मकर्तृत्वेऽधिकृत चैतेष प्राण सर्वम् ।

शकर

( २ ) चक्रस्य नाभिनेम्योरन्तरालवर्तीनि काष्ठानि अरशब्देनोच्यन्ते चक्रस्य मध्यप्रदेशो नाभिशब्देनोच्यते । यथा अरा नाभौ अर्पिता एवमस्मिन्प्राणे सर्व प्रतिष्ठितमित्यर्थ । सर्वशब्दार्थ स्पष्टयति — ऋचो यजूंषीति । अत्र ब्रह्मक्षत्रशब्द स्थावरजङ्गमात्मकप्राणिमात्रोपलक्षक ।

रग.

प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे ।

तुभ्य प्राण प्रजास्त्विमा बलिं हरन्ति य. प्राणै प्रतितिष्ठसि ॥

( १ ) किंच, य प्रजापतिरपि स त्वमेव गर्भे चरसि, पितुर्मातुश्च प्रतिरूप सन् प्रतिजायसे प्रजापतित्वादेव । प्रागेव सिद्ध तव मातृपितृत्वम् । सर्वदेह-

---

* शेष शकरवत् ।

(१) प्रउ. २।५.

. षष्ठे प्रश्ने ' प्राणाच्छ्रद्धाम ' इत्यादिनोक्त श्रद्धादि नामान्तम् ।

(१) प्रउ २।६, रामानुज. २।४।१२, मध्व क्षत्र + ( च )

(२) प्रउ २।७, मध्व ( बलिं हरन्ति० ) य (यत्)

देहाकृतिच्छन्नैकः प्राण. सर्वात्माऽसीत्यर्थ'। तुभ्य त्वदर्थे या इमा मनुष्याद्या. प्रजास्तु हे प्राण चक्षुरादिद्वारैर्बलि हरन्ति, यस्त्व प्राणैश्चक्षुरादिभिः सह प्रतितिष्ठसि सर्व-शरीरेषु। अतस्तुभ्य बलिं हरन्तीति युक्त, भोक्ता हि यतस्त्व, तवैवान्यत्सर्वं भोज्यम्।

शकर

( २ ) एवमेष इत्यङ्गुल्या निर्दिश्य परस्पर दर्श-यित्वा तद्गुणान् सकीर्त्य पश्चात्तमेव मुख्यप्राणमभिमुखी-कृत्य स्तुवन्ति — त्व प्रजाना रक्षक' सन् प्राणादिवायु रूपेण गर्भे सचरसि। तथा गर्भोत्पादकतया तत्पोषक-तया च पितृरूप एव वर्तमान एव त्वमुत्पादकत्व-प्रातिलोम्येन पुत्रादिरूपेण जायसे। हे प्राण स्थावरजङ्गमा-त्मिका इमा प्रजास्तुभ्य त्वदर्थास्त्वच्छेषभूता यतो बलि-मन्नादिक ते उपहरन्ति। यस्त्व प्राणादिव्यापारै सर्वत्र प्राणिषु प्रतिष्ठितोऽसीत्यर्थ ।

रग

(१)देवानामसि वह्नितम पितॄणां प्रथमा स्वधा ।
ऋषीणा चरित सत्यमथर्वाङ्गिरसामसि ॥

( १ ) किंच, देवानामिन्द्रादीनामसि भवसि त्व वह्नितमो हविषा प्रापयितृतम । पितॄणा नान्दीमुखे श्राद्धे या पितृभ्यो दीयते स्वधा अन्न सा देवप्रदानम पेक्ष्य प्रथमा भवति। तस्या अपि पितृभ्य प्रापयिता त्वमेवेत्यर्थ'। किंच, ऋषीणां चक्षुरादीना प्राणानामङ्गिर-सामङ्गिरसभूतानामथर्वणा तेषामेव 'प्राणो वाऽथर्वा' इति श्रुते.। चरित चेष्टित सत्यमवितथ देहधारणाद्युप-कारलक्षण त्वमेवासि।

शकर

( २ ) हविषा वाहकतम। मुख्य' पितृप्रीतिहेतुभूत-स्त्वमेवेत्यर्थ। अथर्वाङ्गिरसामृषीणा सत्यमुत्कृष्ट चरित नित्यनैमित्तिकादिलक्षण कर्म त्वमसीत्यर्थ.।

रग

(२)इन्द्रस्त्व प्राण तेजसा रुद्रोऽसि परिरक्षिता ।
त्वमन्तरिक्षे चरसि सूर्यस्त्व ज्योतिषा पति' ॥

किंच, इन्द्रः परमेश्वरस्त्व हे प्राण, तेजसा वीर्येण रुद्रोऽसि सहरन् जगत्। स्थितौ च परि समन्ताद्रक्षिता पालयिता परिरक्षिता त्वमेव जगतः सौम्येन रूपेण। त्वमन्तरिक्षेऽजस्र चरसि उदयास्तमयाभ्या, सूर्यस्त्वमेव च सर्वेषा ज्योतिषा पति'।

* शकर.

(१)यदा त्वमभिवर्षस्यथेमा प्राणते प्रजा ।
आनन्दरूपास्तिष्ठन्ति कामायान्न भविष्यतीति ॥

( १ ) यदा पर्जन्यो भूत्वाऽभिवर्षसि त्व अथ तदा अन्न प्राप्येमा प्रजा प्राणते प्राणचेष्टा कुर्वन्ती-त्यर्थ। अथवा प्राण, ते तवेमा' प्रजा स्वात्मभूतास्त्व-दन्नसवर्धितास्त्वदभिवर्षणदर्शनमात्रेण चाऽऽनन्दरूपा सुख प्राप्ता इव सत्यस्तिष्ठन्ति। कामाय इच्छातोऽन्न भविष्यतीत्येवमभिप्राय ।

शकर

( २ ) कामायाभिलषितार्थाय पर्याप्तमन्न भविष्य तीति।

† रग

(२)व्रात्यस्त्व प्राणैकऋषिरत्ता विश्वस्य सत्पति ।
वयमाद्यस्य दातार पिता त्व मातरिश्व न' ॥

( १ ) किंच, प्रथमजत्वादन्यस्य सस्कर्तुरभावादस स्कृतो व्रात्यस्त्व, स्वभावत एव शुद्ध इत्यभिप्राय । हे प्राण, एकऋषिस्त्वमाथर्वणाना प्रसिद्ध एकर्षिनामाग्नि' सन्नत्ता सर्वहविषाम्। त्वमेव विश्वस्य सर्वस्य सतो विद्यमानस्य पति सत्पति'। साधुर्वा पति सत्पति.। वय पुनराद्यस्य तवादनीयस्य हविषो दातार। त्व पिता मातरिश्व हे मातरिश्वन्, न. अस्माकम्। अथवा मातरिश्वनो वायोस्त्वम्। अतश्च सर्वस्यैव जगतः पितृत्व सिद्धम्।

शकर

( २ ) हे प्राण सस्कारहीनो ब्राह्मणोऽपि त्वमेव, मुख्यो मन्त्रद्रष्टर्षिरपि त्वमेव, विश्वस्यात्ता सहर्ता च त्वमेव, सता साधूना रक्षकोऽपि त्वमेव।

† रग

(३)या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या
च चक्षुषि।

(१) प्रउ २।८
(२) प्रउ २।९

* रग शकरवत्।
† शेष शकरवत्।
(१) प्रउ २।१०, रग मध्व प्राणते ( प्राण ते )
(२) प्रउ २।११, रग नैकऋषि ( नैकर्षि ), मध्व नैकऋषि ( नैकर्षि ) माद्यस्य ( मद्यस्य )
(३) प्रउ २।१२, रग या ते ( या च ते ) सतता ( सततां )

या च मनसि सतता शिवा तां कुरु मोत्क्रमीः ॥

( १ ) किं बहुना, या ते त्वदीया तनूर्वाचि प्रतिष्ठिता वक्तृत्वेन वदनचेष्टां कुर्वती । या श्रोत्रे या च चक्षुषि या च मनसि सङ्कल्पादिव्यापारेण सतता समनुगता तनूः, तां शिवां शान्तां कुरु, मोत्क्रमीः उत्क्रमणेनाशिवां मा कार्षीरित्यर्थः । शंकर

( २ ) वागादीन्द्रियेषु तत्तदिन्द्रियनियमनानुकूला शक्तिः । सतत प्रतिष्ठिता तां शिवां शोभनां कुरु उत्क्रमणेन अशिवां मा कुरु, उत्क्रमणं मा कार्षीरित्यर्थः । रंग

प्राणस्येदं वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम् ।
मातेव पुत्रान्रक्षस्व श्रीश्च प्रज्ञां च विधेहि न इति ॥

( १ ) किं बहुना, अस्मिंल्लोके प्राणस्यैव वशे सर्वमिदं यत्किंचिदुपभोगजातं त्रिदिवे तृतीयस्यां दिवि च यत्प्रतिष्ठितं देवाद्युपभोगलक्षणं तस्यापि प्राण एवेशिता रक्षिता । अतो मातेव पुत्रानस्मान् रक्षस्व पालयस्व । त्वन्निमित्ता हि ब्राह्मयः क्षात्रियाश्च श्रियः, तास्त्वं श्रीश्च श्रियश्च प्रज्ञां च त्वत्स्थितिनिमित्तां विधेहि नो विधत्स्वेत्यर्थः । इत्येवं सर्वात्मतया वागादिभिः प्राणैः स्तुत्या गमितमहिमा प्राणः प्रजापतिरत्तेत्यवधृतम् । शंकर

( २ ) अस्माकं स्वस्वकार्यनिष्पादनसामर्थ्यलक्षणां श्रियस्तदनुकूलप्रज्ञां च विधत्स्व । * रंग

इति द्वितीयः प्रश्नः ॥

## तृतीयः प्रश्नः

प्रश्नविषयाः — प्राणकारणं प्राणस्य शरीरे प्रवेशः, प्राणप्रविभागः, प्राणोत्क्रमणं, अधिभूतं अधिदैवतं च धारणा प्राणकृता च

अथ हैनं कौसल्यश्चाश्वलायनः पप्रच्छ । भगवन्कुत एष प्राणो जायते । कथमायात्यस्मिन् शरीरे । आत्मानं वा प्रविभज्य कथं प्रातिष्ठते । केनोत्क्रमते । कथं बाह्यमभिधत्ते । कथमध्यात्ममिति ॥

( १ ) अथ हैनं कौसल्यश्चाऽऽश्वलायनः पप्रच्छ । प्राणो ह्येवं प्राणैर्निर्धारिततत्त्वैरुपलब्धमहिमाऽपि सहतत्वात्कार्यत्वात् अतः पृच्छामि । भगवन्कुतः कस्मात्कारणादेष यथावधृतः प्राणो जायते । जातश्च कथं केन वृत्तिविशेषेणाऽऽयात्यस्मिन् शरीरे । किंनिमित्तकमस्य शरीरग्रहणमित्यर्थः । प्रविष्टश्च शरीरे आत्मानं वा प्रविभज्य प्रविभागं कृत्वा कथं केन प्रकारेण प्रातिष्ठते प्रतितिष्ठति । केन वा वृत्तिविशेषेणास्माच्छरीरादुत्क्रमते उत्क्रामति । कथं बाह्यमधिभूतमधिदैवतं चाभिधत्ते धारयति, कथमध्यात्ममिति । शंकर

( २ ) प्रतिनिष्ठत प्रतितिष्ठतीत्यर्थः । बाह्यमभिधत्ते बाह्यरूपेण सन्निधत्ते इत्यर्थः । बाह्यमित्यस्य सन्निधानक्रियाविशेषणत्वात् । रंग

तस्मै स होवाच । अतिप्रश्नान्पृच्छसि । ब्रह्मिष्ठोऽसीति । तस्मात्तेऽहं ब्रवीमि ॥

( १ ) एवं पृष्टस्तस्मै स होवाचाऽऽचार्यः । प्राण एव तावत् दुर्विज्ञेयत्वाद्विषमप्रश्नार्हः, तस्यापि जन्मादि त्वं पृच्छसि, अतोऽतिप्रश्नान्पृच्छसि । ब्रह्मिष्ठोऽसीत्यतिशयेन त्वं ब्रह्मविद्, अतस्तुष्टोऽहं, तस्मात्ते तुभ्यं ब्रवीमि यत्पृष्टं, शृणु । शंकर.

( २ ) प्रश्नानतिक्रम्य वर्तमानान्प्रश्नायोग्यान् रहस्यानर्थान् पृच्छसि । तस्मात्त्वं ब्रह्मिष्ठोऽसि । प्रायेण ब्रह्मविदसि, न प्राकृत इति यावत् । अतस्तेऽहं योग्यत्वाद्ब्रवीमीत्यर्थः । रंग.

आत्मा प्राणकारणं, मनःकृतेन प्राणप्रवेशः शरीरे

आत्मन एष प्राणो जायते । यथैषा पुरुषे छायैतस्मिन्नेतदाततम् । मनोकृतेनाऽऽयात्यस्मिन् शरीरे ॥

* शेषं शंकरवत् ।

(१) प्रउ २।१३, रंग प्रज्ञां च ( प्रज्ञा ) ( इति० )

(२) प्रउ ३।१, रंग कथं प्रातिष्ठत ( कथं वा प्रतिष्ठते ), मध्व प्रातिष्ठते ( प्रतिष्ठते )

(१) प्रउ ३।२, रंग ष्ठोऽसीति ( ष्ठोऽसि ).

(२) प्रउ ३।३, महाकर १।१।१०, रंग आत्मन + ( एव ) मनोकृतेन ( मनोऽकृतेना ), मध्व आत्मन ( आत्मत ), ममध्व. २।३।५०, २।४।९ मध्ववत्

या च मनसि सतता शिवा तां कुरु मोत्क्रमीः ॥

(१) किं बहुना, या ते त्वदीया तनूर्वाचि प्रतिष्ठिता वक्तृत्वेन वदनचेष्टां कुर्वती। या श्रोत्रे या च चक्षुषि या च मनसि सङ्कल्पादिव्यापारेण सतता समनुगता तनूं, तां शिवां शान्तां कुरु, मोत्क्रमीः उत्क्रमणेनाशिवां मा कार्षीरित्यर्थः। शंकर

(२) वागादीन्द्रियेषु तत्तदिन्द्रियनियमनानुकूला शक्तिः। सततं प्रतिष्ठितां तां शिवां शोभनां कुरु उत्क्रमणेन अशिवां मा कुरु, उत्क्रमणं मा कार्षीरित्यर्थः। रंग

प्राणस्येदं वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम्।
मातेव पुत्रान्रक्षस्व श्रीश्च प्रज्ञां च विधेहि न इति ॥

(१) किं बहुना, अस्मिँल्लोके प्राणस्यैव वशे सर्वमिदं यत्किंचिदुपभोगजातं त्रिदिवे तृतीयस्यां दिवि च यत्प्रतिष्ठितं देवाद्युपभोगलक्षणं तस्यापि प्राण एवेशिता रक्षिता। अतो मातेव पुत्रानस्मान् रक्षस्व पालयस्व। त्वन्निमित्ता हि ब्राह्म्यः क्षात्रियाश्च श्रियः, तास्त्वं श्रीश्च श्रियश्च प्रज्ञां च त्वत्स्थितिनिमित्तां विधेहि नो विधत्स्वेत्यर्थः। इत्येवं सर्वात्मतया वागादिभिः प्राणैः स्तुत्या गमितमहिमा प्राणः प्रजापतिरत्ताऽऽवधृतम्। शंकर

(२) अस्माकं स्वस्वकार्यनिष्पादनसामर्थ्यलक्षणाः श्रियस्तदनुकूलप्रज्ञां च विधत्स्व। * रंग.

इति द्वितीयः प्रश्नः ॥

---

## तृतीयः प्रश्नः

प्रश्नविषयाः — प्राणकारणं प्राणस्य शरीरे प्रवेशः, प्राणप्रविभागः, प्राणोत्क्रमणं, अधिभूतं अधिदैवतं च धारणा प्राणकृता च

अथ हैनं कौसल्यश्चाश्वलायनः पप्रच्छ। भगवन् कुत एष प्राणो जायते। कथमायात्यस्मिन् शरीरे। आत्मानं वा प्रविभज्य कथं प्रातिष्ठते। केनोत्क्रमते। कथं बाह्यमभिधत्ते। कथमध्यात्ममिति ॥

(१) अथ हैनं कौसल्यश्चाऽऽश्वलायनः पप्रच्छ। प्राणो ह्येवं प्राणैर्निर्धारिततत्त्वैरुपलब्धमहिमाऽपि सहतत्वादस्य कार्यत्वं अतः पृच्छामि। भगवन्कुतः कस्मात्कारणादेष यथावधृतः प्राणो जायते। जातश्च कथं केन वृत्तिविशेषेणाऽऽयात्यस्मिन् शरीरे। किंनिमित्तकमस्य शरीरग्रहणमित्यर्थः। प्रविष्टश्च शरीरे आत्मानं वा प्रविभज्य प्रविभागं कृत्वा कथं केन प्रकारेण प्रातिष्ठते प्रतितिष्ठति। केन वा वृत्तिविशेषेणास्माच्छरीरादुत्क्रमते उत्क्रामति। कथं बाह्यमधिभूतमधिदैवतं चाभिधत्ते धारयति, कथमध्यात्ममिति। शंकर

(२) प्रतितिष्ठते प्रतितिष्ठतीत्यर्थः। बाह्यमभिधत्ते बाह्यरूपेण सन्निधत्ते इत्यर्थः। बाह्यमित्यस्य सन्निधानक्रियाविशेषणत्वात्। रंग

तस्मै स होवाच। अतिप्रश्नान्पृच्छसि। ब्रह्मिष्ठोऽसीति। तस्मात्तेऽहं ब्रवीमि ॥

(१) एवं पृष्टस्तस्मै स होवाचाऽऽचार्यः। प्राण एव तावद्दुर्विज्ञेयत्वाद्विषमप्रश्नार्हः, तस्यापि जन्मादि त्वं पृच्छसि, अतोऽतिप्रश्नान्पृच्छसि। ब्रह्मिष्ठोऽसीत्यतिशयेन त्वं ब्रह्मवित्, अतस्तुष्टोऽहं, तस्मात्ते तुभ्यं ब्रवीमि यत्पृष्टं, शृणु। शंकर.

(२) प्रश्नानतिक्रम्य वर्तमानान्प्रश्नायोग्यान् रहस्यानर्थान् पृच्छसि। तस्माच्च ब्रह्मिष्ठोऽसि। प्रायेण ब्रह्मविदसि, न प्राकृत इति यावत्। अतस्तेऽहं योग्यत्वाद्ब्रवीमीत्यर्थः। रंग.

आत्मा प्राणकारणं, मनःकर्मणा प्राणप्रवेशः शरीरे

आत्मन एष प्राणो जायते। यथैषा पुरुषे छायैतस्मिन्नेतदाततम्। मनोकृतेनाऽऽयात्यस्मिन् शरीरे ॥

---

* शेषं शंकरवत्।

(१) प्रउ २।१३, रंग प्रज्ञां च (प्रज्ञा) (दृशि०)

(२) प्रउ ३।१, रंग कथ प्रातिष्ठते (कथं वा प्रतितिष्ठते), मध्व प्रातिष्ठते (प्रतिष्ठते).

(१) प्रउ ३।२, रंग ष्ठोऽसीति (ष्ठोऽसि)

(२) प्रउ ३।३, मशंकर. १।१।१०, रंग आत्मन + (एव) मनोकृतेन (मनोऽकृतेना), मध्व. आत्मन (आत्मत), ब्रमध्व २।३।५०, २।४।९ मध्ववत्

( १ ) आत्मन परस्मात्पुरुषादक्षरात्सत्यादेष उक्त. प्राणो जायते । कथमित्यत्र दृष्टान्तः । यथा लोके एषा पुरुषे शिरःपाण्यादिलक्षणे निमित्ते छाया नैमित्तिकी जायते, तद्वदेतस्मिन् ब्रह्मण्येतत्प्राणाख्य छायास्थानीय-मनृतरूप तत्त्व सत्ये पुरुषे आतत समर्पितमित्येतत्, छायेव देहे । *मनोकृतेन मन.सकल्पेच्छादिनिष्पन्नकर्म निमित्तेनेत्येतत् । वक्ष्यति हि — ' पुण्येन पुण्यम् ' इत्यादि । ' तदेव सक्तः सह कर्मणैति ' ( बृउ ४।४।६ ) इति च श्रुत्यन्तरात् । आयाति आगच्छति अस्मिन् शरीरे । शकर

( २ ) कथमायात्यस्मिन् शरीरे इत्यस्योत्तरमाह— यथा पुरुषे गच्छति छायाऽपि सहैव गच्छति, न हि छायागमने सामग्र्यन्तरमस्ति । एवमेतस्मिन् पुरुषे जीवे एतन्मनोऽकृतेनाऽयत्नेन, कृतशब्दो यत्नार्थक., यत्नमन्तरेणाऽऽततमविनाभावेन सश्रितमेवमेव प्राणोऽप्य-कृतेनाऽयत्नेनास्मिन् शरीरे आयाति । मनःप्राणयो. पुरुषच्छायावत्पुरुषाविनाभूतत्वात्पुरुषेण सहैव प्राणस्य सबन्धः, अतो न प्राणागमने पृथक्कारणमपेक्षितमिति भावः । $ रग

( ३ ) आत्मत. परमात्मत. । ' विष्णोर्वायु. समुत्पन्नो वायो· सर्वाश्च देवता. । प्राणाद्यास्तान्नयन्प्राण आज्ञापयति राजवत् । स्वय च पञ्चरूप. सन् दध्यान्मोक्षादिक प्रभु ॥' इति प्रभञ्जने । मध्व.

मुख्यप्राणकृत नियन्त्रण प्राणाना, पञ्चप्राणाना स्थानानि कार्याणि च

**यथा सम्राडेवाधिकृतान्विनियुङ्क्ते । एतान् ग्रामानेतान्ग्रामानधितिष्ठस्वेति । एवमेवैष प्राण इतरान् प्राणान् पृथक्पृथगेव संनिधत्ते ॥**

( १ ) यथा येन प्रकारेण लोके राजा सम्राडेव ग्रामादिष्वधिकृतान्विनियुङ्क्ते । कथम् । एतान् ग्रामान् एतान् ग्रामानधितिष्ठस्वेति । एवमेव यथा दृष्टान्तः, एष मुख्यः प्राण इतरान्प्राणाश्चक्षुरादीन् आत्मभेदांश्च पृथक्पृथगेव यथास्थान सनिधत्ते विनियुङ्क्ते । शकर.

( २ ) आत्मान प्रविभज्य कथ प्रतितिष्ठते इति तृतीयप्रश्नोत्तरमाह—यथा राजा कार्येष्वधिकृतान्स्वसेवकान् इमान्ग्रामानधितिष्ठ इम ग्राममधितिष्ठेति पृथक्पृथग्विनियुज्य तन्मुखेन तेषु यथा सनिधत्ते एवमेवैष मुख्यप्राण इतरेषु प्राणेषु ग्रामस्थानीयेषु स्वांशभूतापान-व्यानादिमुखेन सनिधत्ते अधितिष्ठतीति यावत् । रग.

**पायूपस्थेऽपानम् । चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राण. स्वय प्रातिष्ठते । मध्ये तु समान । एष ह्येतद्धुतमन्न सम नयति । तस्मादेता. सप्तार्चिषो भवन्ति ॥**

( १ ) तत्र विभाग — पायूपस्थे, पायुश्चोपस्थश्च पायूपस्थ, तस्मिन् अपानमात्मभेद मूत्रपुरीषाद्यपनयन कुर्वन् तिष्ठति*(त) सनिधत्ते । तथा चक्षुःश्रोत्रे, चक्षुश्च श्रोत्र च चक्षुःश्रोत्र तस्मिंश्चक्षुःश्रोत्रे । मुखनासिकाभ्या च मुख च नासिका च ताभ्यां मुख-नासिकाभ्या च निर्गच्छन् प्राण. स्वय सम्राट्स्थानीय. प्रातिष्ठते प्रतितिष्ठति । मध्ये तु प्राणापानयो स्थानयोर्नाभ्या समानः, अशित पीत च सम नयतीति समानः । एष हि यस्माद्यदेतत् हुत भुक्त पीत चाऽऽत्माग्नौ प्रक्षिप्तमन्न सम नयति । तस्मादशितपीतेन्धनादग्नेरौदर्याद्धृदयदेश प्राप्तादेता. सप्तसख्याका अर्चिषो दीप्तयो निर्गच्छन्त्यो भवन्ति । शीर्षण्यप्राणद्वारा दर्शनश्रवणादिलक्षणरूपादि-विषयप्रकाशा इत्यभिप्रायः । § शकर

( २ ) तत्र पायुश्चोपस्थ च पायूपस्थ, तस्मिन् । अपान मूत्रपुरीषापकर्षण कुर्वन् तस्मिन्प्रतितिष्ठति प्रति-

* ' मनोकृतेन ' इत्यारभ्य द्वितीयप्रश्नोत्तरमिति शकर-मध्वटीके ।

$ शेष शकरवत् ।

(१) प्रउ ३।४, मध्व एतान् .. स्वेति (एतान्ग्रामान-धितिष्ठस्वैतान्ग्रामानधितिष्ठस्वेति ), ब्रमध्व १।३।२४

* य कुर्वन् तिष्ठति त सनिधत्ते इत्यध्याहारेण योजयितुं युक्त टीकानुसारि च । रगे तु अपानमिति भावे व्युत्पन्नम् । कुर्वन्नित्यध्याहार । प्रतितिष्ठतीत्यपकर्ष । इति विशेष. ।

(१) प्रउ ३।५, रग प्रातिष्ठते ( प्रतितिष्ठति ),मध्व. प्रातिष्ठते ( प्रतिष्ठते ).

ष्ठितो भवति तदधिष्ठाता भवतीत्यर्थः । मुखनासिकाभ्यां निर्गत्य वायुः प्राणरूपः सन् चक्षुःश्रोत्रं चक्षुश्च श्रोत्रं च चक्षुःश्रोत्रे, तस्मिन् प्रतितिष्ठति प्रतिष्ठितो भवति तदधिष्ठाता भवतीत्यर्थः । मध्ये तु समानः सन्नवतिष्ठते । एष हि समानो हुतं भुक्तमन्नादिकं समं नयति समधातुसाम्यं नयति विभागं करोतीति यावत् । तस्मात्समानवायोर्हेतोर्जाठराग्नेः सप्ताचिषः कालीत्येवमाद्याः प्रादुर्भवन्ति । रंग.

**हृदि ह्येष आत्मा । अत्रैतदेकशतं नाडीनाम् । तासां शतं शतमेकैकस्याः * । द्वासप्ततिर्द्वासप्ततिः प्रतिशाखानाडीसहस्राणि भवन्ति । आसु व्यानश्चरति ॥**

( १ ) हृदि ह्येष पुण्डरीकाकारमांसपिण्डपरिच्छिन्ने हृदयाकाश एष आत्मा आत्मना संयुक्तो लिङ्गात्मा । अत्रास्मिन्हृदय एतदेकशतमेकोत्तरशतं संख्यया प्रधाननाडीनां भवतीति । तासां शतं शतमेकैकस्याः प्रधाननाड्या भेदाः । पुनरपि द्वासप्ततिर्द्वासप्ततिर्द्वे सहस्रे अधिके सप्ततिश्च सहस्राणि । सहस्राणां द्वासप्ततिः प्रतिशाखानाडीसहस्राणि प्रतिप्रतिनाडीशतं संख्यया प्रधाननाडीनां सहस्राणि भवन्ति । आसु नाडीषु व्यानो वायुश्चरति । व्यानो व्यापनात् । आदित्यादिव रश्मयो हृदयात्सर्वतोगामिनीभिर्नाडीभिः सर्वदेहं संव्याप्य व्यानो वर्तते । सन्धिस्कन्धमर्मदेशेषु विशेषेण प्राणापानवृत्त्योश्च मध्ये उद्भूतवृत्तिर्वीर्यवत्कर्मकर्ता भवति । शंकर

( २ ) एष जीवात्मा हृदि हृदये यत्र समानरूपेण प्राण आस्ते तत्र स्वयमपि वर्तते । अत्र हृदये नाडीनामेकाधिकशतं वर्तते । तासां नाडीनां मध्ये एकैकस्या द्वासप्ततिः प्रभेदा भवन्ति । एकैकं द्वासप्ततिप्रभेदं प्रतिशाखाभूतनाडीसहस्राणि शतं शतं भवन्ति । तासु नाडीषु व्यानरूपश्चरतीत्यर्थः । रंग

**अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति । पापेन पापम् । उभाभ्यामेव मनुष्यलोकम् ॥**

( १ ) अथ या तु तत्रैकशतानां नाडीनां मध्ये ऊर्ध्वगा सुषुम्नाख्या नाडी, तयैकयोर्ध्वः सन्नुदानो वायुरापादतलमस्तकवृत्तिः सञ्चरन्पुण्येन कर्मणा शास्त्रविहितेन पुण्यं लोकं देवादिस्थानलक्षणं नयति प्रापयति । पापेन तद्विपरीतेन पापं नरकं तिर्यग्योन्यादिलक्षणम् । उभाभ्यां समप्रधानाभ्यां पुण्यपापाभ्यामेव मनुष्यलोकं नयतीत्यनुवर्तते । शंकर

( २ ) अथेति वाक्योपक्रमे । एकया कयाचिन्नाड्या ऊर्ध्वमुखः उदानः ... । उभाभ्यामेव मनुष्यलोकं नयति । रंग

आदित्यादिदेवतानां च प्राणकृता धारणा

**आदित्यो ह वै बाह्यः प्राण उदयति । एष ह्येनं चाक्षुषं प्राणमनुगृह्णानः । पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्य । अन्तरा यदाकाशः स समानः । वायुर्व्यानः ॥**

( १ ) आदित्यो ह वै प्रसिद्धो ह्यधिदैवतं बाह्यः प्राणः, स एष उदयति उद्गच्छति । एष ह्येनमाध्यात्मिकं चक्षुषि भवं चाक्षुषं प्राणं प्रकाशेनानुगृह्णानो रूपोपलब्धौ चक्षुष आलोकं कुर्वन्नित्यर्थः । तथा पृथिव्यामभिमानिनी या देवता प्रसिद्धा, सैषा पुरुषस्यापानमपानवृत्तिमवष्टभ्य आकृष्य वशीकृत्य अध एवापकर्षणेनानुग्रहं कुर्वती वर्तत इत्यर्थः । अन्यथा हि शरीरं गुरुत्वात्पतेत् सावकाशे वोद्गच्छेत् । यदेतदन्तरा मध्ये द्यावापृथिव्योर्य आकाशः, तत्स्थो वायुराकाश उच्यते मञ्चस्थवत् । स समानः समानमनुगृह्णानो वर्तते इत्यर्थः । समानस्य

* यद्यपि बहुषु पुस्तकेषु 'एकैकस्या' इति पाठो दृश्यते, तथापि भाष्यानुगुणत्वात् 'एकैकस्याः' इत्येव पाठः समादृतः ।

(१) प्रउ ३।६, ब्रशांकर भास्कर ३।३।२४, रंग अत्रैतदेक ( अत्रैक ) आसु ( तासु ), रामानुज ३।३।२५ ह्येष आ ( ह्ययमा ) अत्रैतदेक ( तत्रैक ), मध्व मेकैकस्या ( मेकैकस्या ) द्वासप्ततिर्द्वासप्ततिः ( द्वासप्ततिंद्वासप्ततिं ), ब्रमध्व श्रीकंठ ३।३।२५, श्रीकर ३।३।२३ रामानुजवत्, विज्ञान ३।३।२४, बलदेव ३।३।२३

* निंबार्कब्रमध्वयो नयतीत्यत्र परमात्मनः कर्तृत्वम् ।

(१) प्रउ ३।७, निंबार्क ३।२।४१, ब्रमध्व २।१।३५, ३।२।४२, बलदेव ३।२।३०

(२) प्रउ ३।८, रंग मवष्टभ्य ( मुपष्टभ्य ).

अन्तराकाशस्थत्वसामान्यात् । सामान्येन च यो बाह्यो वायुः स व्याप्तिसामान्यात् व्यानो व्यानमनुगृह्णानो वर्तते इत्यभिप्रायः । शंकर

(२) अथाऽऽत्मानं प्रविभज्य कथं प्रतितिष्ठतीति प्रश्नस्य यथा सम्राडेवेत्यारभ्योभाभ्यामेव मनुष्यलोकमित्येतदन्तं प्रतिवचनम् । तन्मध्येऽथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयतीत्यनेन केनोत्क्रमत इति चतुर्थप्रश्नस्योत्तरमुक्तं भवति । कथं बाह्यमभिधत्त इत्यस्योत्तरमाह — चाक्षुषं प्राणं चक्षुर्गोलकवर्तीन्द्रियमालोकाख्यसहकारिप्रसादेनानुगृह्णानो बहिरादित्यरूपेणोदेति । यद्यपि प्राणस्यादित्यात्मकत्वं न संभवति तयोर्भेदात् । तथापि प्राणकल्पत्वाद्वा सर्वत्र सत्त्वेनाभेदोपचाराद्वा उपासनार्थतया वा बाह्यानामादित्यादीनां प्राणात्मकत्वोक्तिरिति द्रष्टव्यम् । पृथिव्या प्राणकलारूपा देवता सा पुरुषस्यापानवाय्वधिष्ठितपायूपस्थेन्द्रिये अनुगृह्णाना वर्तते इत्यर्थः । आकाशाधिष्ठातृप्राणकलारूपाऽऽकाशस्यौपचारिकयभेदोक्तिर्द्रष्टव्या । एवमुत्तरत्रापि । मध्ये तु समानः । एष एतद्धुतं नयतीत्यध्यात्मम् । प्राणापानस्थानमध्यवर्तितया हि समानो निर्दिष्टः । बाह्याकाशस्यापि बाह्यप्राणरूपस्याऽऽदित्यस्य बाह्यापानरूपायाः पृथिव्याश्च मध्यवर्तितया समानत्वं युज्यते इति भावः । बाह्यो वायुस्त्वगिन्द्रियाद्यनुग्रहतो व्यानरूपः । रंग

[१]तेजो ह वा उदानः । तस्मादुपशान्ततेजाः । पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः ॥

(१) यद्बाह्यं ह वै प्रसिद्धं सामान्यं तेजस्तच्छरीरे उदानः, उदानं वायुमनुगृह्णाति स्वेन प्रकाशेनेत्यभिप्रायः । यस्मात्तेजःस्वभावो बाह्यतेजोऽनुगृहीत उत्क्रान्तिकर्ता, तस्माद्यदा लौकिकः पुरुषः उपशान्ततेजा भवति, उपशान्तं स्वाभाविकं तेजो यस्य सः । तदा तं क्षीणायुषं मुमूर्षुं विद्यात् । स पुनर्भवं शरीरान्तरं प्रतिपद्यते । कथम् । सहेन्द्रियैर्मनसि संपद्यमानैः प्रविशद्भिर्वागादिभिः । शंकर

(१) प्रउ ३।९, ब्रशंकर भास्कर रामानुज लिंबार्क श्रीकंठ. ४।२।२, श्रीकर ४।२।२ पुनर्भव (अपुनर्भव), बलदेव ४।२।२

(२) 'अत एव च सर्वाण्यनु' — 'तस्मादुपशान्ततेजाः' इत्यत्राविशेषेण सर्वेषामेवेन्द्रियाणां मनसि संपत्तिः श्रूयते । तत्राप्यत एव वाच इव चक्षुरादीनामपि सवृत्तिके मनस्यवस्थिते वृत्तिलोपदर्शनात् तत्त्वप्रलयासंभवाच्छब्दोपपत्तेश्च वृत्तिद्वारेणैव सर्वाणीन्द्रियाणि मनोऽनुवर्तन्ते ।

* ब्रशंकर ४।२।२

(३) बाह्यं तेजः उन्नयनहेतुत्वादुदानः ।

§ रंग

(४) 'अत एव च०'—यतो वाचो मनसा संयोगमात्रं संपत्तिर्न तु लयोऽत एव वाचामनु सर्वेषामिन्द्रियाणां मनसि संपत्तिश्रुतिरुपपद्यते — 'तस्मा उपशान्ततेजाः' इति । $ रामानुज. ४।२।२

[१]यच्चित्तस्तेनैष प्राणमायाति । प्राणस्तेजसा युक्तः सहाऽऽत्मना यथासंकल्पितं लोकं नयति ॥

(१) मरणकाले यच्चित्तो भवति तेनैव चित्तेन संकल्पेनेन्द्रियैः सह प्राणं मुख्यप्राणवृत्तिमायाति । मरणकाले क्षीणेन्द्रियवृत्तिः सन् मुख्यया प्राणवृत्त्यैवावतिष्ठते इत्यर्थः । तदाऽभिवदन्ति ज्ञातयः उच्छ्वसिति जीवतीति । स च प्राणस्तेजसोदानवृत्त्या युक्तः सन् सहाऽऽत्मना स्वामिना भोक्त्रा स एवमुदानवृत्त्यैव युक्तः प्राणस्तं भोक्तारं पुण्यपापकर्मवशाद्यथासंकल्पितं यथाभिप्रेतं लोकं नयति प्रापयति । शंकर

(२) यस्माद्धेतोस्तेजस एवोदानशब्दितोन्नयनहेतुत्वं तस्मादेवोपशान्ततेजा अपगतदेहौष्ण्यः समुमूर्षुर्जीवो यच्चित्तो यस्मिंश्चित्तं यस्य स यच्चित्तः । यत्काम इति यावत् । यादृशमनुष्यदेवादिजन्मकामो भवति तत्कामनावशेन पुनर्भवशब्दितां पुनरुत्पत्तिं प्राप्तुं 'वाङ्मनसि संपद्यते' 'वाङ्मनसि दर्शनाच्छब्दाच्च' (ब्रसू. ४।२।१) इतिश्रुतिसूत्रतद्भाष्योक्तरीत्या

* भास्करश्रीकंठौ ब्रशंकरवत् ।

§ 'तस्मात्' इत्यादि उत्तरवाक्यैकवाक्यम् । अतस्तद्व्याख्यानमुत्तरत्र द्रष्टव्यम् ।

$ श्रीकर रामानुजवत् ।

(१) प्रउ ३।१०, ब्रशंकर ४।१।१२, रंग स्तेनैष (स्तेन स)

मनसा सश्लेषविशेषमापन्नैर्वागादिभिर्दशभिरिन्द्रियैः सहित प्राण समुमूर्षुर्जीव आयाति । यद्यपि 'इममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति ' ( बृउ. ४।३।३८ ) इतिमुख्यामुख्यप्राणानां जीवोपगम एव श्रूयते, न तु जीवस्य प्राणोपगम', तथाप्यस्य प्राणप्रशसापरत्वाज्जीवस्य प्राणोपगमोक्तिरुपपद्यते इति द्रष्टव्यम् । अनन्तर 'प्राणस्तेजसि तेजः परस्या देवतायाम् ' ( छाउ ६।८।६ ) इतिश्रुत्युक्तरीत्या तेजसा परमात्मना च सयुक्त. प्राणस्तत्तज्जीवात्मसकल्पानुसारेण त त लोक म्रियमाण नयति । ततश्च तेजसा सहितस्यैव प्राणस्योन्नयनहेतुत्वात्तेजसोऽप्युन्नयनहेतुत्वेनोदानत्व युक्तमिति भाव । यत्रापि 'प्राणस्तेजसि' इत्यत्र तेज'-शब्देन सर्वाणि भूतान्युच्यन्ते, न तेजोमात्रमिति 'भूतेषु तच्छ्रुते. ' ' नैकस्मिन्दर्शयतो हि ' ( ब्रसू ४।२।५,६ ) इति सूत्रभाष्ययो. प्रतिपादित, तथाऽपि भूतान्तरससृष्टमेव तेजस्तेज शब्देनाभिधीयते इति भाष्योक्तेस्तेजसः प्राधान्यात्तदुक्तिरुपपद्यते इति द्रष्टव्यम् ।

रग.

प्राणविद्याफलम्

**य एवं विद्वान्प्राण वेद । न हास्य प्रजा हीयते । अमृतो भवति । तदेष श्लोक ॥**

यः कश्चिदेव विद्वान्यथोक्तविशेषणैर्विशिष्टमुत्पत्त्यादिभि. प्राण वेद जानाति तस्येद फलमैहिकमामुष्मिक चोच्यते । न हास्य नैवास्य विदुष प्रजा पुत्रपौत्रादि लक्षणा हीयते छिद्यते । पतिते च शरीरे प्राणसायुज्यतयाऽमृतोऽमरणधर्मा भवति । तदेतस्मिन्नर्थे सक्षेपाभिधायक एष श्लोको मन्त्रो भवति ।

शकर

**उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा । अध्यात्म चैव प्राणस्य विज्ञायामृतमश्नुते विज्ञायामृतमश्नुत इति ॥**

( १ ) उत्पत्तिं परमात्मन. प्राणस्य, आयतिमागमन मनोकृतेनास्मिन् शरीरे, स्थान स्थितिं च पायूपस्थादिस्थानेषु, विभुत्व च स्वाम्यमेव सम्राडिव प्राणवृत्तिभेदानां पञ्चधा स्थापन, बाह्यमादित्यादिरूपेणाध्यात्म चैव चक्षुराद्याकारेणावस्थान विज्ञायैव प्राण (?)ममृतमश्नुते इति । विज्ञायामृतमश्नुत इति द्विर्वचन प्रश्नार्थपरिसमाप्त्यर्थम् ।

शकर

( २ ) उत्पत्तिं प्राणस्य परमात्मन उत्पत्तिं, मनसा सहाऽऽगमनमस्मिन् शरीरे, पायूपस्थादिस्थानेषु स्थितिं, 'यथा सम्राडेवाधिकृतान् ' इत्युक्त स्वाम्यलक्षण विभुत्व, अध्यात्म प्राणादिरूपेण पञ्चधा स्थितिं, चशब्दसमुच्चितमादित्यादिरूपेण पञ्चधा बाह्यमवस्थान च विज्ञायामृत मोक्षमश्नुते प्राप्नोति । द्विर्वचन प्रतिवचनसमाप्तिद्योतनार्थम् ।

रग.

इति तृतीय. प्रश्न ॥

---

## चतुर्थः प्रश्नः

प्रश्नविषया — स्वापे सुप्ता शरीरस्था , स्वापे जागरूका शरीरस्था , स्वप्नद्रष्टा, स्वापसुखभोक्ता, सर्वाधिष्ठान च

**अथ हैनं सौर्यायणी गार्ग्य पप्रच्छ । भगवन्नेतस्मिन्पुरुषे कानि स्वपन्ति । कान्यस्मिञ्जाग्रति । कतर एष देव स्वप्नान्पश्यति । कस्यैतत्सुख भवति । कस्मिन्नु सर्वे सप्रतिष्ठिता भवन्तीति ॥**

( १ ) अथ हैन सौर्यायणी गार्ग्यः पप्रच्छ । प्रश्नत्रयेणापरविद्यागोचर सर्वं परिसमाप्य ससार व्याकृतविषय साध्यसाधनलक्षणमनित्य, अथेदानीमसाध्यसाधनलक्षणमप्राणममनोगोचरमतीन्द्रियविषय शिव शान्तमविकृतमक्षर सत्य परविद्यागम्य पुरुषाख्य सबाह्याभ्यन्तरमज वक्तव्यमित्युत्तर प्रश्नत्रयमारभ्यते । तत्र सुदीप्तादिवाग्नेर्यस्मात्परादक्षरात्सर्वे भावा विस्फुलिङ्गा इव जायन्ते तत्र चैवापियन्तीत्युक्त द्वितीये मुण्डके, के ते सर्वे भावा अक्षराद्विभज्यन्ते, कथ वा विभक्ताः सन्तस्तत्रैवापियन्ति, किंलक्षण वा तदक्षरमित्येतद्विवक्षया

---

(१) प्रउ ३।११
(२) प्रउ ३।१२

(१) प्रउ ४।१, रग ( भवति० ) सप्रतिष्ठिता ( प्रतिष्ठिता ) ( इति० ), विज्ञान ३।१।१

अधुना प्रश्नानुद्भावयति — भगवन्नेतस्मिन्पुरुषे शिर पाण्यादिमति कानि करणानि स्वपन्ति स्वाप कुर्वन्ति स्वव्यापारादुपरमन्ते। कानि चास्मिन् जाग्रति जागरणम निद्रावस्थां स्वव्यापार कुर्वन्ति। कतरः कार्यकरणलक्षण योरेष देवः स्वप्नान्पश्यति। स्वप्नो नाम जाग्रद्दर्शनान्निवृत्तस्य जाग्रद्वदन्तःशरीरे यद्दर्शनम्। तत्किं कार्यलक्षणेन देवेन निर्वर्त्यते किंवा करणलक्षणेन केनचिदित्यभिप्राय'। उपरते च जाग्रत्स्वप्नव्यापारे यत्प्रसन्न निरायासलक्षण मनाबाध सुख, कस्यैतद्भवति। तस्मिन्काले जाग्रत्स्वप्नव्यापाराद्रुपरताः सन्त कस्मिन्नु सर्वे सम्यगेकीभूता. सप्रतिष्ठिताः। मधुनि रसवत्समुद्रप्रविष्टनद्यादिवच्च विवेकानर्हा' प्रतिष्ठिता भवन्ति सगता सप्रतिष्ठिता भवन्तीत्यर्थ.। शकर.

(२) भगवन्निति। सुप्ते सतीति शेष। कान्यस्मिन्निति। अत्रापि सुप्ते सतीति शेष। एष द्योतनादिगुणयोगाद्देवो जीव कतर. कीदृश सन् स्वाप्नान् रथादीन् पश्यतीत्यर्थ। कस्य हेतोरेतद्वैषयिक सुखमित्यर्थ। रग.

स्वापे मनसि ज्ञानेन्द्रियाणा ऐक्यम्

**तस्मै स होवाच। यथा गार्ग्य मरीचयोऽर्कस्यास्त गच्छत सर्वा एतस्मिंस्तेजोमण्डल एकी भवन्ति। ता. पुन. पुनरुदयत प्रचरन्ति। एव ह वै तत्सर्वं परे देवे मनस्येकीभवति। तेन तर्ह्येष पुरुषो न शृणोति। न पश्यति। न जिघ्रति। न रसयते। न स्पृशते। नाभिवदते। नाऽऽदत्ते। नाऽऽनन्दयते। न विसृजते। नेयायते। स्वपितीत्याचक्षते॥**

(१) तस्मै स होवाचाऽऽचार्य'। शृणु हे गार्ग्य यत्त्वया पृष्टम्। यथा मरीचयो रश्मयोऽर्कस्यादित्यस्यास्तमदर्शन गच्छत' सर्वा अशेषत एतस्मिंस्तेजोमण्डले तेजोराशिरूपे एकीभवन्ति विवेकानर्हत्वमविशेषता गच्छन्ति, मरीचयस्तस्यैवार्कस्य ता. पुन. पुनरुदयतः उद्गच्छतः प्रचरन्ति विकीर्यन्ते। यथाऽय दृष्टान्त, एव ह वै तत्सर्वं विषयेन्द्रियादिजात परे प्रकृष्टे देवे द्योतनवति मनसि। चक्षुरादिदेवानां मनस्तन्त्रत्वात्परो देवो मन'। तस्मिन्स्वप्नकाले एकीभवति मण्डले मरीचिवदविशेषता गच्छति। जिजागरिषोश्च रश्मिवन्मण्डलात् मनस एव प्रचरन्ति स्वव्यापाराय प्रतिष्ठन्ते। यस्मात्स्वप्नकाले श्रोत्रादीनि शब्दाद्युपलब्धिकरणानि मनस्येकीभूतानीव करणव्यापारादुपरतानि, तेन तस्मात्तर्हि तस्मिन्स्वापकाले एष देवदत्तादिलक्षण' पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नाऽऽदत्ते नाऽऽनन्दयते न विसृजते नेयायते। स्वपितीत्याचक्षते लौकिका'। शकर.

(२) मनस्येकीभवति स्वस्वव्यापाराभिमुख्यविरोधिसश्लेषविशेषयुक्त भवतीत्यर्थ.। स्वपितीत्याचक्षते इत्यनेन कानि स्वपन्तीति प्रश्नस्य बाह्यज्ञानेन्द्रियकर्मेन्द्रियाणि स्वपन्तीत्युत्तरमुक्त भवति। प्रत्येकमेकत्वाभिप्रायेण स्वपितीत्येकवचनम्। * रग.

(३) 'रश्मीनामविशेषेऽपि ह्यन्यदृष्ट्यव्यपेक्षया। सूर्यस्य मण्डल यान्तीत्युच्यन्ते तदद्दर्शनात्। एव विष्णोस्तु सामीप्याद्देवाना सुप्तिगस्य तु। व्यवहाराकरत्वाच्चैकीभाव इतीर्यते॥' इति च। मध्व.

(४) नन्विद वाक्य सुषुप्तिप्रकरणस्थ परमात्मन्येव सर्वावस्थानप्रतिपादक च। तत्कथमेतद्वाक्याल्लिङ्ग शरीरवेष्टितजीवगमन लभ्यते, इति चेन्न। आभ्यां प्रश्ननिरूपणाभ्या देहविच्छेदकालेऽपि सर्वपरिष्वङ्गस्य लाभात्, अस्तं गच्छत इति लिङ्गसामान्यात्। तथा तत्र वाक्ये मन शब्दोक्तजीवद्वारैव परमात्मनि सर्वपरिष्वङ्गस्योक्तत्वात्। अन्यथा मनसि मनोऽवस्थानवचनासगते। विज्ञान ३।१।१

स्वापे पञ्चप्राणाना जागृति, स्वापदशायां अग्निहोत्ररूपकम्

**प्राणाग्नय एवैतस्मिन्पुरे जाग्रति। गार्हपत्यो ह**

(१) प्रउ ४।२, प्रशकर १।३।८, रग पुन पुन (पुन) प्रचरन्ति (प्रचलन्ति) तर्ह्येष (ह्येष) रसयते (रसयति) स्पृशते (स्पृशति), मध्व पुन पुन (पुन), श्रीकर १।३।८, विज्ञान ३।१।१ पुन पुन (पुन) देवे (पदे), बलदेव ४।२।२

* शेष शकरेण गतार्थम्।

(१) प्रउ ४।३, प्रशकर १।३।८, प्रमध्व २।४।२०, श्रीकर १।३।८

**वा एषोऽपान. । व्यानोऽन्वाहार्यपचन. । यद्गार्ह पत्यात्प्रणीयते प्रणयनात् । आहवनीयः प्राण ॥**

( १ ) सुप्तवत्सु श्रोत्रादिषु करणेष्वेतस्मिन्पुरे नवद्वारे देहे प्राणाग्नयः प्राणादिपञ्चवायवोऽग्नय इवाग्नयो जाग्रति । अग्निसामान्य हि आह—गार्हपत्यो ह वा एषोऽपान' । कथमित्याह—यस्माद्गार्हपत्यादग्नेरग्निहोत्रकाले इतरोऽग्निराहवनीयः प्रणीयते, प्रणयनात्प्रणीयतेऽस्मादिति प्रणयनो गार्हपत्योऽग्नि । तथा सुप्तस्यापानवृत्ते प्रणीयते इव प्राणो मुखनासिकाभ्यां सचरत्य(न्न)त आहवनीयस्थानीय' प्राण' । व्यानस्तु हृदयाद्दक्षिणसुषिरद्वारेण निर्गमाद्दक्षिणदिक्सबन्धादन्वाहार्यपचनो दक्षिणाग्नि. । शकर

( २ ) कान्यस्मिन् जाग्रतीन्यस्योत्तरमाह—प्राणापानादिरूपा अग्नय एवैतस्मिन्पुरशब्दनिर्दिष्टे शरीरे जागर कुर्वन्तीत्यर्थ । स्वापदशायां जाग्रत्सु प्राणादिपञ्चकोच्छ्वासनिश्वासमनोरूपेषूपासनार्थमग्निहोत्रसपत्तिं दिदर्शयिषुस्तत्र व्याप्रियमाण मन एव यजमानः, अपानो मूलाधारस्थतया गार्हपत्यः, तत्सनिहितो व्यानोऽन्वाहार्यपचनशब्दितो दक्षिणाग्निः, अपानवायुमूलक प्राणो गार्हपत्यात्प्रणीयमानाहवनीयतुल्यतया आहवनीय', तदाधारकौ उच्छ्वासनिश्वासौ 'द्वे आहवनीये' इति निर्दिष्टाहुतिद्वय, उच्छ्वासनिश्वासहेतुभूत. समानो वायुराहुती सम नयतीतिनिर्देशयोग्योऽध्वर्यु, उदानवायुस्तु यजमानस्य लोकान्तरोन्नयनहेतुत्वादुदान इत्यग्निहोत्राहुत्यवयवभूतान् यजमानाग्नित्रयाहुतिद्वयाध्वर्युकर्मफलभूतानष्टापि पदार्थान्प्राणादिपञ्चकोच्छ्वासनिश्वासमनोरूपेष्वष्टसु दर्शयति—गार्हपत्यो ह वेति । अत्र यद्यपि जीवस्यैव 'एवमेवेमा' सर्वा. प्रजा अहरहर्गच्छन्त्य एत ब्रह्मलोक न विन्दन्ति ' ( छाउ ८।३।२ ) इति ब्रह्मगमन श्रूयते, न मनसः, तथाऽपि मनसः पुरीतद्गमनश्रवणात्तद्गतब्रह्मगमयितृत्वोक्तिरुपपद्यते इति द्रष्टव्यम् । * रग.

**यदुच्छ्वासनिश्वासावेतावाहुती सम नयतीति स समान. । मनो ह वाव यजमान । इष्टफलमेवोदान । स एन यजमानमहरहर्ब्रह्म गमयति ॥**

( १ ) अत्र च होताऽग्निहोत्रस्य । यद्यस्मादुच्छ्वासनिश्वासावग्निहोत्राहुती इव नित्य द्वित्वसामान्यादेव त्वेतावाहुती सम साम्येन शरीरस्थितिभावाय नयति यो वायुरग्निस्थानीयोऽपि होता चाऽऽहुत्योर्नेतृत्वात् । कोऽसौ, स समान । अतश्च विदुष स्वापोऽप्यग्निहोत्रहवनमेव । तस्माद्विद्वान्नाकर्मीत्येव मन्तव्य इत्यभिप्रायः । 'सर्वदा सर्वाणि भूतानि विचिन्वन्त्यपि स्वपते ' इति हि वाजसनेयके । अत्र हि जाग्रत्सु प्राणाग्निषूपसहृत्य बाह्यकरणानि विषयाश्चाग्निहोत्रफलमिव स्वर्गं ब्रह्म जिगमिषुमनो ह वाव यजमानो जागर्ति यजमानवत्कार्यकरणेषु प्राधान्येन सव्यवहारात्स्वर्गमिव ब्रह्म प्रति प्रस्थितत्वाद्यजमानो मन कल्प्यते । इष्टफल यागफलमेवोदानो वायु । उदाननिमित्तत्वादिष्टफलप्राप्ते. । कथ, स उदानो मनआख्य यजमान स्वप्नवृत्तिरूपादपि प्रच्याव्य अहरहः सुषुप्तिकाले स्वर्गमिव ब्रह्माक्षर गमयति । अतो यागफलस्थानीय उदान' । शकर.

मनोदेव स्वप्नद्रष्टा

**अत्रैष देव. स्वप्ने महिमानमनुभवति । यद्दृष्टं दृष्टमनुपश्यति । श्रुत श्रुतमेवार्थमनुशृणोति । देशदिगन्तरैश्च प्रत्यनुभूत पुन पुन प्रत्यनुवभति । दृष्ट चादृष्ट च श्रुत चाश्रुत चानुभूत चाननुभूत च सच्चासच्च सर्वं पश्यति । सर्व पश्यति ॥**

( १ ) एव विदुषः श्रोत्राद्युपरमकालादारभ्य यावत्सुप्तोत्थितो भवति तावत्सर्वयागफलानुभव एव, नाऽविदुषामिवानर्थायेति विद्वत्ता स्तूयते । न हि विदुष एव श्रोत्रादीनि स्वपन्ते, प्राणाग्नयो वा जाग्रति, जाग्रत्स्वप्नयोर्मनः स्वातन्त्र्यमनुभवदहरह' सुषुप्त वा प्रतिपद्यते । समान हि सर्वप्राणिनां पर्यायेण जाग्रत्स्वप्नसुषुप्तिगमन, अतो विद्वत्तास्तुतिरेवेयमुपपद्यते । यत्पृष्ट कतर एष देवः स्वप्नान्पश्यतीति तदाह—अत्रोपरतेषु श्रोत्रादिषु देहरक्षार्यै जाग्रत्सु प्राणादिवायुषु प्राक्सुषुप्तिप्रतिपत्ते एतस्मिन्नन्तराले एष देवोऽर्करश्मिवत्स्वात्मनि

* तृतीयचतुर्थयोर्व्यतिषक्तमिद व्याख्यानम् ।

(१) प्रउ ४।४, रग स समान ( समान ) स एन ( य एन ), मध्व ( इति० ).

(१) प्रउ ४।५, मध्व गन्तरैश्च ( गन्तरे च )

सद्भृतश्रोत्रादिकरणः स्वप्ने महिमानं विभूतिं विषयविषयिलक्षणमनेकात्मभावगमनमनुभवति प्रतिपद्यते । ननु महिमानुभवने करणं मनोनुभवितुः, तत्कथं स्वातन्त्र्येणानुभवतीत्युच्यते, स्वतन्त्रो हि क्षेत्रज्ञः । नैष दोषः । क्षेत्रज्ञस्य स्वातन्त्र्यस्य मनउपाधिकृतत्वात् । न हि क्षेत्रज्ञः परमार्थतः स्वतः स्वपिति जागर्ति वा । मनउपाधिकृतमेव तस्य जागरणं स्वप्नश्चेत्युक्तं वाजसनेयके — 'सधीः स्वप्नो भूत्वा ध्यायतीव लेलायतीव' इत्यादि । तस्मान्मनसो विभूत्यनुभवे स्वातन्त्र्यवचनं न्याय्यमेव । तस्मात्साधूक्तं मनसि प्रलीनेषु करणेष्वप्रलीने च मनसि मनोमयः स्वप्नान्पश्यतीति ।

कथं महिमानमनुभवतीत्युच्यते । यन्मित्रं पुत्रादि वा पूर्वं दृष्टं तद्वासनावासितः पुत्रमित्रादिवासनासमुद्भूतं पुत्रं मित्रमिव वाऽविद्यया पश्यतीत्येवं मन्यते । तथा श्रुतमर्थं तद्वासनयाऽनुशृणोतीव । देशदिगन्तरैश्च देशान्तरैर्दिगन्तरैश्च प्रत्यनुभूतं पुनः पुनस्तत्प्रत्यनुभवतीवाऽविद्यया । तथा दृष्टं चास्मिन् जन्मन्यदृष्टं च जन्मान्तरदृष्टमित्यर्थः । अत्यन्तादृष्टे वासनानुपपत्तेः । एवं श्रुतं चाश्रुतं च । अनुभूतं चास्मिञ्जन्मनि केवलेन मनसा, अननुभूतं च मनसैव जन्मान्तरेऽनुभूतमित्यर्थः । सच्च परमार्थोदकादि । असच्च मरीच्युदकादि । किं बहुना, उक्तानुक्तं सर्वं पश्यति । सर्वः पश्यति सर्वमनोवासनोपाधिः सन् । एवं सर्वकरणात्मा मनोदेवः स्वप्नान्पश्यति।

शंकर

(२) दृष्टं श्रुतमेवानुभवतीत्ययमपि नियमो नास्ति । कदाचित्पूर्वाननुभूतमपि शरीरच्छेदनादिकमनुभवति । विद्यमानं चानुभवति अविद्यमानं चानुभवति । (सर्वः पश्यति) सर्वं सन् पश्यति द्रष्टा श्रोता घ्राता गन्ता वक्ता चेत्यादिसर्वरूपः सन्पश्यतीत्यर्थः । तदानीं जागरीयबाह्यज्ञानकर्मेन्द्रियाणामुपरतव्यापारत्वेऽपि स्वाप्निकैरीश्वरसृष्टैः शरीरेन्द्रियैर्द्रष्टृत्वादिमान् सन्ननुभवतीति भावः ।

* रंग

* शेषं शांकरेण गतार्थम् ।

शरीरभावमापन्नं शारीरं स्वापसुखभोक्ता

स यदा तेजसाऽभिभूतो भवति । अत्रैष देवः स्वप्नान्न पश्यति । अथ तदैतस्मिञ्शरीर एतत्सुखं भवति ॥

(१) स यदा मनोरूपो देवो यस्मिन्काले सौरेण पित्ताख्येन तेजसा नाडीशयेन सर्वतोऽभिभूतो भवति तिरस्कृतवासनाद्वारो भवति तदा सह करणैर्मनसो रश्मयो हृद्युपसंहृता भवन्ति । यदा मनो दार्वग्निवद्विशेषविज्ञानरूपेण कृत्स्नं शरीरं व्याप्यावतिष्ठते तदा सुषुप्तो भवति । अत्र एतस्मिन्काले एष मनआख्यो देवः स्वप्नान्न पश्यति दर्शनद्वारस्य निरुद्धत्वात्तेजसा । अथ तदैतस्मिन् शरीरे एतत्सुखं भवति, यद्विज्ञानं निराबाधमविशेषेण शरीरव्यापकं प्रसन्नं भवतीत्यर्थः ।

शंकर

(२) एतस्मिन्नन्तरे 'सता सोम्य तदा सपन्नो भवति तेजसा हि तदा सपन्नो भवति' (छा० ६।८।१) इतिश्रुत्युक्तरीत्या परप्रकाशकतया तेजःशब्दितेन परमात्मनाऽभिभूतो भवति सपन्नो भवतीति सपरिष्वक्तो भवतीति यावत् । तदा स्वाप्नान् पदार्थान् न पश्यतीत्यर्थः । ततश्च कतर एष देवः स्वप्नान्पश्यतीति प्रश्नस्य ब्रह्मसंपत्तिविरहदशायां मनोमात्रपरिशेषसमये स्वाप्नान्पदार्थान्पश्यतीत्युत्तरमुक्तं भवति ।

कस्यैतत्सुखं भवतीत्यस्योत्तरमाह—अथ यदेतस्मिन्निति । यत्सुखं भवति तदेतस्मिन् शरीरे सत्येव भवतीत्यर्थः । शरीरमेव वैषयिकसुखहेतुरित्युक्तं भवति । 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छा० ८।१२।१) इति श्रुतेरिति द्रष्टव्यम् ।

रंग

(३) भगवतः शरीरवत्सादृश्ययुक्ते जीवे सुखं भवति । कस्यैतत्सुखं भवतीति पृष्टत्वात् । न ह्यचेतनस्य शरीरस्य सुखं भवति । 'यस्यात्मा शरीरम्' इति च

(१) प्र० उ० ४।६, ब्रह्मशंकर १।३।८ अत्रैष (यत्रैष) पश्यति + (इति) तदैत (यदेत) (एतत्०), भास्कर १।३।८ तदैत (यदेत) (एतत्०) सुखं + (अनु), रंग तदैत (यदेत), मध्व तदैत (यदेत) (एतत्०)

श्रुति । ' सादृश्याद्देहवज्जीवो विष्णोस्तस्य सुख भवेत् । सुप्तौ तस्य सुखार्थे हि भगवान्सुप्तिमानयेत् ॥ ' इति च । मध्व

पर आत्मा सर्वाधिष्ठान , विज्ञानात्मपुरुषस्यापि स एव अधिष्ठानम्

**स यथा सोम्य वयांसि वासोवृक्ष संप्रतिष्ठन्ते । एव ह वै तत्सर्व पर आत्मनि सप्रतिष्ठते ॥**

( १ ) एतस्मिन्काले अविद्याकामकर्मनिबन्धनानि कार्यकरणानि शान्तानि भवन्ति । तेषु शान्तेष्वात्मस्वरूपमुपाधिभिरन्यथा विभाव्यमानमद्वयमेक शिव शान्त भवतीत्येतामेवावस्था पृथिव्याद्यविद्याकृतमात्रानुप्रवेशेन दर्शयितुं दृष्टान्तमाह — स दृष्टान्त यथा येन प्रकारेण सोम्य प्रियदर्शन वयासि पक्षिणो वासार्थं वृक्ष वासोवृक्ष प्रति सप्रतिष्ठन्ते गच्छन्ति । एव यथा दृष्टान्त ह वै तद्वक्ष्यमाण सर्वं पर आत्मन्यक्षरे सप्रतिष्ठते ।

शकर.

( २ ) कस्मिन् सर्वे प्रतिष्ठिता भवन्तीत्यस्योत्तरमाह— यथा सोम्येति । * रग.

**पृथिवी च पृथिवीमात्रा च । आपश्चाऽऽपोमात्रा च । तेजश्च तेजोमात्रा च । वायुश्च वायुमात्रा च । आकाशश्चाऽऽकाशमात्रा च । चक्षुश्च द्रष्टव्य च । श्रोत्र च श्रोतव्य च । घ्राण च घ्रातव्य च । रसश्च रसयितव्यं च । त्वक्च स्पर्शयितव्य च । वाक् च वक्तव्यं च । हस्तौ चाऽऽदातव्य च । उपस्थश्चाऽऽनन्दयितव्य च । पायुश्च विसर्जयितव्य च । पादौ च गन्तव्य च । मनश्च मन्तव्य च । बुद्धिश्च बोद्धव्यं च । अहकारश्चाहकर्तव्यं च । चित्त च चेतयितव्य च । तेजश्च विद्योतयितव्य च । प्राणश्च विधारयितव्य च ॥**

( १ ) किं तत्सर्वम्—पृथीवी च स्थूला पञ्चगुणा तत्कारणा च । पृथिवीमात्रा च गन्धतन्मात्रा । तथा आपश्चाऽऽपोमात्रा च । तेजश्च तेजोमात्रा च । वायुश्च वायुमात्रा च । आकाशश्चाऽऽकाशमात्रा च । स्थूलानि च सूक्ष्माणि च भूतानीत्यर्थ । तथा चक्षुश्चेन्द्रिय रूप च द्रष्टव्य च । श्रोत्र च श्रोतव्य च । घ्राण च घ्रातव्य च । रसश्च रसयितव्य च । त्वक्च स्पर्शयितव्य च । वाक्च वक्तव्य च । हस्तौ चादातव्य च । उपस्थश्चाऽऽनन्दयितव्य च । पायुश्च विसर्जयितव्य च । पादौ च गतव्य च । बुद्धीन्द्रियाणि कर्मेन्द्रियाणि तथा तदर्थाश्चोक्ता । मनश्च पूर्वोक्तम् । मन्तव्य च तद्विषय । बुद्धिश्च निश्चयात्मिका । बोद्धव्य च तद्विषय । अहकारश्चाभिमानलक्षणमन्त करणम् । अहकर्तव्य च तद्विषय. । चित्त च चेतनावदन्त करणम् । चेतयितव्यं च तद्विषयः । तेजश्च त्वगिन्द्रियव्यतिरेकेण प्रकाशविशिष्टा या त्वक् । तया निर्भास्यो विषयो विद्योतयितव्यम् । प्राणश्च सूत्र यदाचक्षते । तेन विधारयितव्य सग्रथनीयम् । सर्वं हि कार्यकरणजात पारार्थ्येन सहत नामरूपात्मकमेतावदेव । § शकर

( २ ) अत्र प्रकृतिं विहाय त्रयोविंशतितत्त्वानि साख्यसिद्धान्युक्तानि । महत्तत्त्वस्यैव च बुद्धिचित्तरूपेण विभागो बोध्य । अस्माच्च वाक्यादवान्तरविभागे वेदान्तिनामप्यन्त करणचतुष्टयमेव बोद्धव्यम् ।

विज्ञान २।१।२

**एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुष । स परेऽक्षर आत्मनि सप्रतिष्ठते ॥**

( १ ) अत पर यदात्मरूप जलसूर्यकादिवद्भोक्तृत्वकर्तृत्वेनेहानुप्रविष्टम्—एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता

---

* शेष पदार्थमात्र शकरवत् ।

(१) प्रउ ४।७, विज्ञान २।१।२, ३।१।१, ४।२।१५

(२) प्रउ ४।८, प्रशकर २।४।६, मध्व रसश्च ( रसन च ) उपस्थश्चा गन्तव्य च ( पादौ च गन्तव्य च । पायुश्च विसर्जयितव्य च । उपस्थश्चानन्दयितव्य च ), वल्लभ २।४।६, विज्ञान २।१।२ ( तेजश्च विद्योतयितव्य च० ), ३।१।१

§ रग शकरेण गतार्थम् ।

(१) प्रउ ४।९, प्रशकर २।३।३३ ( स्प्रष्टा घ्राता रसयिता० ), रामानुज १।१।१ ( पृ ४२ ) ( स्प्रष्टा० ) घ्राता रसयिता ( रसयिता घ्राता ), २।३।१९. ( स्प्रष्टा० ), मध्व ( स परे तिष्ठते० ), श्रीकर २।३।१७ ( स्प्रष्टा० ), विज्ञान ३।१।१, बलदेव २।३।१७, २५, ३८

रयिता मन्ता बोद्धा कर्ता विज्ञानात्मा, विज्ञान विज्ञायतेऽनेनेति करणभूत बुद्ध्यादि, इद तु विजानातीति विज्ञान कर्तृकारकरूप, तदात्मा तत्स्वभावो विज्ञातृत्वभाव इत्यर्थ. । पुरुष· कार्यकरणसघातोक्तोपाधिपूर्णत्वात्पुरुषः । स च जलसूर्यकादिप्रतिबिम्बस्य सूर्यादिप्रवेशवज्जगदाधारशेषे परेऽक्षरे आत्मनि सप्रतिष्ठते ।

शकर

( २ ) 'कर्ता शास्त्रार्थवत्त्वात्'—कर्ता चाय जीवः स्यात् । कस्मात् । शास्त्रार्थवत्त्वात् । तथेदमपि शास्त्रमर्थवद्भवति 'एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' ।

ब्रशकर. २।३।३३

( ३ ) अत्र बोद्धा कर्ता विज्ञानात्मेति निर्देशादात्मनो ज्ञातृत्वमेव, न ज्ञानस्वरूपत्वमिति वदन्तस्तार्किकाश्च, ज्ञानत्वमेव, न ज्ञातृत्वमिति वदन्तो मृषावादिनश्च निरस्ता भवन्ति । रग

परमात्मप्राप्ति अक्षररूपपरमात्मज्ञान च

**[१]परमेवाक्षरं प्रतिपद्यते । स यो ह वै तदच्छायमशरीरमलोहित शुभ्रमक्षरं वेदयते यस्तु सोम्य । स सर्वज्ञ सर्वो भवति । तदेष श्लोक ॥**

( १ ) तदेकत्वविद. फलमाह—परमेवाक्षर वक्ष्यमाणविशेषण प्रतिपद्यत इति । एतदुच्यते स यो ह वै तत्सर्वैषणाविनिर्मुक्तोऽच्छाय तमोवर्जित, अशरीर नामरूपसर्वोपाधिशरीरवर्जित, अलोहित लोहितादिसर्वगुणवर्जित, यत एवमत. शुभ्र शुद्ध, सर्वविशेषणरहितत्वादक्षर, सत्य पुरुषाख्य अप्राणममनोगोचर शिव शान्त सबाह्याभ्यन्तरमज वेदयते विजानाति यस्तु सर्वत्यागी सोम्य, स सर्वज्ञः, न तेनाविदित किंचित्सभवति । पूर्वमविद्ययाऽसर्वज्ञ आसीत्, पुनर्विद्ययाऽविद्यापनये सर्वो भवति । तत्तस्मिन्नर्थे एष श्लोको मन्त्रो भवति उक्तार्थसग्राहक ।

शकर

( २ ) छायाशब्देन ज्ञानसकोचक कर्मोच्यते । अच्छायमपापमित्यर्थः । अत एवाशरीर, अलोहित रूपादिशून्य, शुभ्र स्वप्रकाश, अक्षर क्षरणशून्य परमात्मान वेदयते जानाति, स हे सौम्य प्रियदर्शन परमेवाक्षर ब्रह्म वासुदेव प्रतिपद्यते । सर्वज्ञो भवति । सर्वो भवति । सर्वकामयुक्तो भवति । तद्ब्रह्माभिमुखीकृत्यैष श्लोक इत्यर्थ । रग

**[१]विज्ञानात्मा सह देवैश्च सर्वै· प्राणा भूतानि संप्रतिष्ठन्ति यत्र ।**
**तदक्षर वेदयते यस्तु सोम्य स सर्वज्ञ सर्वमेवाऽऽविवेशेति ॥**

( १ ) विज्ञानात्मा सह देवैश्चाग्न्यादिभि प्राणाश्चक्षुरादयो भूतानि पृथिव्यादीनि सप्रतिष्ठन्ति प्रविशन्ति यत्र यस्मिन्नक्षरे, तदक्षर वेदयते यस्तु सोम्य प्रियदर्शन, स सर्वज्ञ सर्वमेवाऽऽविवेश आविशतीत्यर्थः ।

शकर

( २ ) सर्वैर्देवैर्वागादीन्द्रियै. सह मुख्यप्राणा भूतानि च महाभूतानि च जीवात्मा च यत्र प्रतितिष्ठन्ति तादृश शुभ्रमक्षर निर्विकार परमात्मान यो जानाति स सर्वज्ञः सर्वमपि कामजातमाविशति । 'सर्वेषु लोकेषु कामचारो भवति' ( छाउ ७।२५।२ ) इतिश्रुत्युक्तरीत्या काम्यमानसर्वलोकसचारी भवतीत्यर्थ. । रग.

इति चतुर्थ प्रश्न ॥

---

## पञ्चमः प्रश्नः

प्रश्नविषय प्रणवध्यानम्

**[२]अथ हैनं शैब्य. सत्यकाम पप्रच्छ । स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत । कतमं वाव स तेन लोकं जयतीति । तस्मै स होवाच ॥**

( १ ) अथ हैन शैब्यः सत्यकाम पप्रच्छ । अथेदानीं परापरब्रह्मप्राप्तिसाधनत्वेनोङ्कारस्योपासनविधित्सया प्रश्न आरभ्यते । स य· कश्चिद्ध वै भगवन्मनुष्येषु

---

(१) प्रउ ४।१०, मध्व ( परमेवाक्षर प्रतिपद्यते० ) तदच्छा ( तमच्छा ) स सर्वज्ञ सर्वो ( सर्वज्ञ सर्व )

(१) प्रउ ४।११, रग तदक्षर ( शुभ्रमक्षर ), मध्व तदक्षर ( तदेतदक्षर ), ब्रमध्व २।३।३१

(२) प्रउ ५।१, रामानुज १।३।१२ ( इति० ), ब्रमध्व ४।१।१२, बलदेव ३।२।१९, ४।१।१२

मनुष्याणां मध्ये तदद्भुतमिव प्रायणान्त मरणान्तं याव-ज्जीवमित्येतत् । ओङ्कारमभिध्यायीत आभिमुख्येन चिन्तयेत् बाह्यविषयेभ्य उपसंहृतकरणः समाहितचित्तो भक्त्यावेशितब्रह्मभावे ओङ्कारे । आत्मप्रत्ययसताना-विच्छेदो भिन्नजातीयप्रत्ययान्तराखिलीकृतो निर्वातस्थ दीपशिखासमोऽभिध्यानशब्दार्थः । सत्यब्रह्मचर्याहिंसा-परिग्रहत्यागसन्यासशौचसतोषामायावित्वाद्यनेकयमनिय मानुगृहीत. स एव यावज्जीवव्रतधारण कतम वाव, अनेके हि ज्ञानकर्मभिर्जेतव्या लोकास्तिष्ठन्ति, तेषु तेनो-ङ्काराभिध्यानेन कतम स लोक जयतीति पृष्टवते तस्मै स होवाच पिप्पलाद ।

शकर

( २ ) ह वा इति प्रसिद्ध्यतिशये । तत् अव्ययम् । स इत्येतदधिकारिसामान्यपरम् । वावशब्दोऽवधारणे प्रसिद्धौ वा ।

* रग

ध्येयविषयप्रकारभेदेन प्रणवध्यानेन परापर-ब्रह्मप्राप्ति

**एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कार । तस्माद्विद्वानेतेनैवाऽऽयतनेनैकतरमन्वेति ॥**

( १ ) एतद्वै सत्यकाम, एतद्ब्रह्म वै पर चापर च ब्रह्म, पर सत्यमक्षर पुरुषाख्यमपर च प्राणाख्य प्रथ-मज यत्तदोङ्कार एवोङ्कारात्मकमोङ्कारप्रतीकत्वात् । पर हि ब्रह्म शब्दाद्युपलक्षणानर्हं सर्वधर्मविशेषवर्जित, अतो न शक्यमतीन्द्रियगोचरत्वात्केवलेन मनसाऽवगाहितुम् । ओङ्कारे तु विष्ण्वादिप्रतिमास्थानीये भक्त्याऽऽवेशितब्रह्म-भावे ध्यायिनां तत्प्रसीदतीत्यवगम्यते शास्त्रप्रामाण्यात्, तथाऽपर च ब्रह्म । तस्मात्पर चापर च ब्रह्म यदोङ्कार इत्युपचर्यते । तस्मादेव विद्वानेतेनैवाऽऽत्मप्राप्तिसाधने-नैवोङ्काराभिध्यानेनैकतर परमपर वा अन्वेति ब्रह्म अनु गच्छति । नेदिष्ठ ह्यालम्बनमोङ्कारो ब्रह्मण ।

शकर

* शेष पदार्थमात्र शकरवत् ।

(१) प्रउ ५।२, ब्रशकर १।३।१३, ४।३।१४, भास्कर १।३।१३, रामानुज १।३।१२, श्रीकर १।३।१३, वल्लभ १।३।१३ ( एवायतनेन० ), विज्ञान १।३।१३, ४।३।९ पर चापर च ( परमपर च ), बलदेव. १।३।१३

( २ ) 'ईक्षतिकर्मव्यपदेशात्सः' — परमेव ब्रह्मे-हाभिध्यातव्यमुपदिश्यते । कस्मात्, ईक्षतिकर्मव्यप-देशात् । ईक्षतिर्दर्शनम् । दर्शनव्याप्यमीक्षतिकर्म । ईक्ष-तिकर्मत्वेनास्याभिध्यातव्यस्य पुरुषस्य वाक्यशेषे व्यप-देशो भवति ' स एतस्माज्जीवघनात्परात्पर पुरिशय पुरुष मीक्षते ' इति । तत्राभिध्यायतेरतथाभूतमपि वस्तु कर्म भवति । मनोरथकल्पितस्याप्यभिध्यायतिकर्मत्वात् । ईक्षतेस्तु तथाभूतमेव वस्तु लोके कर्म दृष्टमित्यतः पर-मात्मैवाय सम्यग्दर्शनविषयभूत ईक्षतिकर्मत्वेन व्यप-दिष्ट इति गम्यते । स एव चेह परपुरुषशब्दाभ्यामभि-ध्यातव्यः प्रत्यभिज्ञायते ।

१।३।१३

किं पुन पर ब्रह्म किमपरमिति । उच्यते । यत्रा-विद्याकृतनामरूपादिविशेषप्रतिषेधादस्थूलादिशब्दै. ब्रह्मो पदिश्यते तत्परम् । तदेव यत्र नामरूपादिविशेषेण केन चिद्विशिष्टमुपासनायोपदिश्यते ' मनोमय प्राणशरीरो भारूप.' ( छाउ ३।१४।२ ) इत्यादिशब्दैः, तदपरम् ।

ब्रशकर. ४।३।१४

( ३ ) एतदेव पर चापरं च ब्रह्म, उभयवाचकमि त्यर्थ । वाच्यवाचकभावनिबन्धन सामानाधिकरण्य, तथैव व्यासार्यैरीक्षतिकर्माधिकरणे व्याख्यातत्वात् । अन्वेति उपास्ते इत्यर्थः ।

* रग.

( ४ ) ' ईक्षतिकर्म व्यपदेशात्स. ' — ईक्षति-कर्म व्यपदेशात्स । ईक्षतिकर्म स परमात्मा । कुत । व्यपदेशात् । व्यपदिश्यते हीक्षतिकर्म परमात्मत्वेन । पर शान्तमजरमभयममृतमिति हि परमात्मन एवैतद्रूपम् । अत एव ' एतद्वै. . मन्वेति ' इति प्रतिवचने यदपर कार्यं ब्रह्म निर्दिष्ट तदैहिकामुष्मिकत्वेन द्विधा विभज्यैकमात्र प्रणवमुपासीनानामैहिक मनुष्यलोकावा-प्तिरूप फलमभिधाय द्विमात्रमुपासीनानामामुष्मिकमन्त रिक्षशब्दोपलक्षित फल चाभिधाय त्रिमात्रेण परब्रह्म-वाचिना प्रणवेन परमपुरुष ध्यायता परमेव ब्रह्म प्राप्य-तयोपदिशतीति सर्वं समञ्जसम् ।

रामानुज. १।३।१२

* शेष शकरवत् ।

**स यद्येकमात्रमभिध्यायीत । स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसपद्यते । तमृचो मनुष्यलोकमुपनयन्ते । स तत्र तपसा ब्रह्मचर्येण श्रद्धया सपन्नो महिमानमनुभवति ॥**

(१) स यद्यप्योंकारस्य सकलमात्राविभागज्ञो न भवति तथाऽप्योंकाराभिध्यानप्रभावाद्विशिष्टामेव गतिं गच्छति, एतदेकदेशज्ञानवैगुण्यतयोंकारशरण. कर्मज्ञानोभयभ्रष्टो न दुर्गतिं गच्छति । किं तर्हि, यद्यप्येवमोंकारमेवैकमात्राविभागज्ञ एव केवलोऽभिध्यायीत एकमात्र सदा ध्यायीत म तेनैवैकमात्राविशिष्टोंकाराभिध्यानेनैव सवेदित. सबोधितस्तूर्णं क्षिप्रमेव जगत्या पृथिव्यामभिसपद्यते । किं, मनुष्यलोकम् । अनेकानि हि जन्मानि जगत्या सभवन्ति, तत्र त साधक जगत्या मनुष्यलोकमेव ऋच उपनयन्ते उपनिगमयन्ति । ऋच ऋग्वेदरूपा ह्योंकारस्य प्रथमैकमात्राऽभिध्याता । तेन स तत्र मनुष्यजन्मनि द्विजाग्र्य सस्तपसा ब्रह्मचर्येण श्रद्धया च सपन्नो महिमान विभूतिमनुभवति, न वीतश्रद्धो यथेष्टचेष्टो भवति । योगभ्रष्ट. कदाचिदपि न दुर्गतिं गच्छति । शाकर

(२) स उपासको यद्येकमात्र ह्रस्वप्रणवमपरब्रह्मवाचकमभिध्यायीत । अपरब्रह्मवाचकेन ह्रस्वेन प्रणवेन योऽक्षर ब्रह्मोपास्ते स तेनैवैकमात्रोंकारकरणकापरब्रह्मध्यानेनैव सवेदितो लब्धसत्ताको जगत्या भुवि अभिसपद्यते अभ्यर्हितः श्रेष्ठ. सपद्यते । त ऋड्मन्त्रा मनुष्यलोक प्रापयन्ति । स मनुष्यलोक नीतस्तपसाऽनशनादिना ब्रह्मचर्येण मैथुनवर्जनेन श्रद्धया आस्तिक्यबुद्ध्या यदि सपन्नो भवति तदा महिमान श्रेय.साधक ब्रह्मोपासनमनुतिष्ठतीत्यर्थ । न च एचो ह्रस्वाभावात्कथमोंकारस्य ह्रस्वत्वमिति शड्कनीय, लोके ह्रस्वस्योंकारस्य दर्शनात् । रंग

**अथ यदि द्विमात्रेण मनसि सपद्यते । सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकम् । स सोमलोके विभूतिमनुभूय पुनरावर्तते ॥**

(१) प्रउ ५।३, वल्लभ १।३।१३

(२) प्रउ. ५।४, अशकर ३।१।७, विज्ञान ३।१।१३

(१) अथ पुनर्यदि द्विमात्राविभागज्ञो द्विमात्रेण विशिष्टमोंकारमभिध्यायीत, स्वप्नात्मके मनसि मननीये यजुर्मये सोमदैवत्ये सपद्यते एकाग्रतयाऽऽत्मभाव गच्छति । स एव सपन्नो मृतोऽन्तरिक्षमन्तरिक्षाधार द्वितीयमात्रारूप द्वितीयमात्रारूपैरेव यजुर्भिरुन्नीयते सोमलोक, सौम्य जन्म प्रापयन्ति त यजूंषीत्यर्थ. । स तत्र विभूतिमनुभूय सोमलोके, मनुष्यलोक प्रति पुनरावर्तते । शाकर

(२) द्विमात्रेणापरब्रह्मवाचकेन प्रणवेन यस्य मनस्यपरब्रह्मध्यान सपद्यते । अन्तरिक्षाश्रितसोमलोक द्विमात्रोपासक. पुमान् यजुर्मन्त्रैरुन्नीयते । अत्रान्तरिक्षसोमलोकशब्दः ऊर्ध्वमात्रोपलक्षक आमुष्मिकमात्रपर. । अत' ईक्षतिकर्माधिकरणभाष्ये 'यदपर कार्यं ब्रह्म निर्दिष्ट तदैहिकामुष्मिकत्वेन द्विधा विभज्यैकमात्र प्रणवमुपासीनानामैहिकमनुष्यलोकप्रातिफलमभिधाय द्विमात्रमुपासीनानामामुष्मिकमन्तरिक्षशब्दोपलक्षित फल चाभिधाय' इत्युक्तम् । अमुष्मिन्नैश्वर्यमनुभूय तत्पुण्यावसाने पुनरावर्तते । रग.

**यः पुनरेत त्रिमात्रेणोमित्येतेनैवाक्षरेण पर पुरुषमभिध्यायीत । स तेजसि सूर्ये संपन्न' । यथा पादोदरस्त्वचा विनिर्मुच्यते । एवं ह वै स पाप्मना विनिर्मुक्त स सामभिरुन्नीयते ब्रह्मलोकम् । स एतस्माज्जीवघनात्परात्परं पुरिशय पुरुषमीक्षते । तदेतौ श्लोकौ भवत ॥**

(१) यः पुनरेतमोंकार त्रिमात्रेण त्रिमात्राविषयविज्ञानविशिष्टेनोमित्येतेनैवाक्षरेण पर सूर्यान्तर्गत पुरुष

(१) **प्रउ** ५।५, **अशकर** १।३।१३ विनिर्मुक्त (विनिर्मुच्यते ) १।३।१४, **भास्कर** १।३।१३, **रग** पर पुरुष (परमपुरुष) स एतस्मात् (एतस्मात् ), **रामानुज** १।३।१२ त्येतेनैवा (त्येनेनैवा), **निबार्क** १।३।१३, **ब्रमध्व** १।१।५, **श्रीकठ** १।३।१२, **श्रीकर** १।३।१३ पर पुरुष ( परमपुरुष ), **वल्लभ** १।३।१३ स सामभिरुन्नीयते ब्रह्मलोकम् ( स सामभिरुन्नीयते सूर्यलोक स सूर्यलोके विभूतिमनुभूय पुनरावर्तते । य पुनरर्धचतुर्थमात्रेणोमित्येतेनैवाक्षरेण पर पुरुषमभिध्यायीत स तेजसि परे सपन्न इति सोऽथर्वभिरुन्नीयते ब्रह्मलोकं ), **विज्ञान** १।३।१३

प्रतीकेनाभिध्यायीत, तेनाभिध्यानेन, प्रतीकत्वेन ह्यालम्बनत्व प्रकृतमोंकारस्य, पर चापर च ब्रह्मेत्यभेदश्रुते, ओंकारमिति च द्वितीयाऽनेकश. श्रुता बाध्येतान्यथा। यद्यपि तृतीयाभिधानत्वेन करणत्वमुपपद्यते, तथापि प्रकृतानुरोधात्त्रिमात्र पर पुरुषमिति द्वितीयैव परिणेया 'त्यजेदेक कुलस्यार्थे' इति न्यायेन, स तृतीयमात्रारूपस्तेजसि सूर्ये सपन्नो भवति। ध्यायमानो मृतोऽपि सूर्यात् सोमलोकादिवन्न पुनरावर्तते, किंतु सूर्ये सपन्नमात्र एव। यथा पादोदर सर्पस्त्वचा विनिर्मुच्यते, जीर्णत्वग्विनिर्मुक्त स पुनर्नवो भवति। एव ह वा एष यथा दृष्टान्तः, स पाप्मना सर्पत्वक्स्थानीयेनाशुद्धिरूपेण विनिर्मुक्तः साम भिस्तृतीयमात्रारूपैरूर्ध्वमुन्नीयते ब्रह्मलोक हिरण्यगर्भस्य ब्रह्मणो लोक सत्याख्यम्। स हिरण्यगर्भ सर्वेषा संसारिणा जीवानामात्मभूत। स ह्यन्तरात्मा लिङ्गरूपेण सर्वभूतानाम्। तस्मिन्हि लिङ्गात्मनि संहताः सर्वे जीवा। तस्मात्स जीवघन। स विद्वान्स्त्रिमात्रोंकाराभिज्ञ. एतस्माज्जीवघनाद्धिरण्यगर्भात्परात्पर परमात्माख्य पुरुषमीक्षते पुरिशय सर्वशरीरानुप्रविष्ट पश्यति ध्यायमान.। तदेतस्मिन्यथोक्तार्थप्रकाशकौ मन्त्रौ भवतः।

शकर

(२) घनो मूर्तिः, जीवलक्षणो घनो जीवघन। सैन्धवखिल्यवत् य परमात्मनो जीवरूपः खिल्यभाव उपाधिकृत परश्च विषयेन्द्रियेभ्य, सोऽत्र जीवघन इति। अपर आह— 'स सामभिरुन्नीयते ब्रह्मलोकम्' इत्यतीतानन्तरवाक्यनिर्दिष्टो यो ब्रह्मलोक· परश्च लोकान्तरेभ्यः, सोऽत्र जीवघन इत्युच्यते। जीवाना हि सर्वेषा करणपरिवृत्ताना सर्वकरणात्मनि हिरण्यगर्भे ब्रह्मलोकनिवासिनि सघातोपपत्तेर्भवति ब्रह्मलोको जीवघन·। तस्मात्परो यः परमात्मा ईक्षणकर्मभूत., स एवाभिध्यानेऽपि कर्मभूत इति गम्यते। 'पर पुरुषम्' इति च विशेषण परमात्मपरिग्रहे एवावकल्पते। परो हि पुरुषः परमात्मैव भवति यस्मात्पर किंचिदन्यन्नास्ति, 'पुरुषान्न पर किंचित् सा काष्ठा सा परा गतिः' इति च श्रुत्यन्तरात्। 'पर चापर च ब्रह्म यदोंकार.' इति च विभज्य अनन्तरमोंकारेण पर पुरुषमभिध्यातव्य ब्रुवन् परमेव ब्रह्म पर पुरुष गमयति। 'यथा पादोदरस्त्वचा विनिर्मुच्यत एव ह वै स पाप्मना विनिर्मुच्यते' इति पाप्मविनिर्मोकफलवचन परमात्मानमिहाभिध्यातव्य सूचयति। * ब्रशकर १।३।१३

(३) यस्तु एकमात्रद्विमात्रत्वदशायामर्वाचीनफल साधनेनैतेनैवाक्षरेण परमात्मानमभिध्यायति आभिमुख्येन ध्यायति निरन्तर ध्यायतीत्यर्थ·। स उपासकस्तेजो मण्डले सूर्ये सगत. सन्, उदरमेव पादो यस्य स पादोदर., सर्प इति यावत्, यथा सर्पो जीर्णया त्वचा विनिर्मुक्तो भवति, एव पाप्मना विनिर्मुक्त. सन् भगवल्लोक वैकुण्ठ सामभिर्गीतिप्रधानैर्मन्त्रैरुन्नीयते। अत्र व्यासार्यैः 'स पाप्मना विनिर्मुक्त इति तच्छब्दान्तरश्रवणात्ससामभिरित्येकपदमाश्रित्य सामगानसहितैरिति वा सान्त्ववचनसहितै. पुरुषैरिति वाऽर्थः' इति वर्णितम्। ईक्षतिकर्माधिकरणे "यस्य हि कर्मनिमित्त देहित्व स जीवघन इत्युच्यते। चतुर्मुखस्यापि तच्छ्रूयते— 'यो ब्रह्माण विदधाति पूर्वम्' इति" (इति) भाष्योक्ते. जीवघन शब्देन ससारमण्डलमुच्यते। 'मूर्तौ घनः' (पा सू ३।३।७७) इति काठिन्यशब्दितमूर्तौ घनशब्दस्य निपातितत्वात्, देहद्वारत्वादात्मनि काठिन्यत्वस्य(?) घनशब्दो देहिपर एव। तस्मात्पर. परिशुद्धात्मा, तस्मादपि परभूत पुरिशय, पू. प्राणिन·, सर्वगुहाशयस्य (?) इति सर्वेषु प्राणिष्वन्तरात्मतया शयान 'भगवानिति शब्दोऽय तथा पुरुष इत्यपि। निरुपाधी च वर्तेते वासुदेवे सनातने॥' इति निरुपाधिकपुरुषशब्दवाच्य भगवन्त वासुदेवमीक्षते इत्यर्थ.। अत एव 'स सामभिरुन्नीयते' (इत्यत्र) ब्रह्मलोकशब्दस्य चतुर्मुखलोकपरत्वशङ्का व्युदस्ता, चतुर्मुखगताना परवासुदेवेक्षणासभवादिति द्रष्टव्यम्। रग

(४) 'प्रणवेन हरिं ध्यायन्ब्रह्मलोक समेत्य च। ज्ञान चतुर्मुखात्प्राप्य मुच्यते नात्र सशय.॥'

मध्व

(५) 'ईक्षतिकर्मव्यपदेशात्सः'— पञ्चमप्रश्ने 'एतद्वै सत्यकाम पर चाऽपर च ब्रह्म यदोंकारस्तस्माद्विद्वानेतेनैकतरमन्वेति। यद्येकमात्रम्' इत्यादिना एकद्वित्रिमात्रोपासनया ऋग्यजु सामभिर्मनुष्यलोकसोमलोक-

* भास्कर. ब्रशकरवत्।

सूर्यलोकप्राप्तिपुनरागमने निरूप्य ' अर्धचतुर्थमात्रोपास नया परं पुरुषमभिध्यायीत । स तेजसि परे सपन्नो यथा पादोदरस्त्वचा ' इत्यादिना ' परात्पर पुरिशय पुरुषमी क्षते ' इति । तत्र सशयः । परपुरुषः परमात्मा ध्यान-विषयः, आहोस्वित् विराट् पुरुष', ब्रह्मा वेति । तत्र अमुख्यप्रवाहपतितत्वात् ब्रह्मलोक गतस्य तदीक्षणमेव च फल श्रूयते । न हि परमपुरुषस्य ब्रह्मत्वे तज्ज्ञानमेव फल भवति । तस्मात् विराट् ब्रह्मा वा अभिध्यानवि-षय', इत्येव प्राप्ते उच्यते । स. अभिध्यानविषयः पर-पुरुष. परमात्मैव । कुतः, ईक्षतिकर्मव्यपदेशात् । जीव-घनात् केवलजीवाधारभूतात् ब्रह्मलोकात् पररूपपुरुष-दर्शनमीक्षतिः । तस्या' कर्मत्वेन व्यपदेशात् । उभयो कर्मणोरेकत्व, अपर त्रिमात्रपर्यन्त निरूप्य पर ह्यग्रे निरूपयति । तथैव च श्लोके ' तिस्रो मात्रा. ' इत्यादि । अभिध्यानस्य हि साक्षात्कारः फलम् । अतः फलरूपज्ञानस्य विषयत्वात् परपुरुषः परमात्मैव । मन्द-शङ्कानिवृत्त्यर्थमेवेद सूत्रम् । अत्र सर्वसकरवादिनाम न्यथा पाठो भ्रमात् । तत्रापि विचारस्तुल्य' ।

वल्लभ १।३।१३

[ ननु शकराचार्यैः ' यः पुनरेतत्त्रिमात्रेणोमित्येतेनै वाक्षरेण पर पुरुषमभिध्यायीत । स तेजसि सूर्ये सपन्न' स सामभिरुन्नीयते ब्रह्मलोकम् ' इति पाठोऽङ्गीक्रियते । न तु ' सामभिरुन्नीयते सूर्यलोकम् । स सूर्यलोके विभूति-मनुभूय पुनरावर्तते । यः पुनरर्धचतुर्थमात्रेणोमित्येते-नैवाक्षरेण पर पुरुषमभिध्यायीत । स तेजसि परे सपन्न इति सोऽथर्वभिरुन्नीयते ब्रह्मलोकम् ' इति पाठ । अतोऽ स्याऽधिकत्वान्न पूर्वोक्तरीतिकोऽर्थ., इत्याशङ्कायामाहु — अत्र सर्वसकरेत्यादि । इदानींतनपुस्तकेषु इदानींतनेष्व ध्येतृष्वपि एतस्याधिकपाठस्य दर्शनात्, तिसृणामपि मात्राणा मृत्युमत्त्वेन तौल्यात्, साधनवैजात्याभावे फलवैजात्यस्य अनुपपन्नत्वात्, माण्डूक्यादौ तुरीयोपास-नार्थमर्धमात्रोक्तिदर्शनाच्च तेषा तथा पाठो भ्रमादेव । न च विचारवैसादृश्य, तत्रापि पाठे विचारस्तुल्य इति न दोष इत्यर्थ. । एव भास्कराचार्याद्यङ्गीकृतपाठेऽपि द्रष्टव्यम् ।

भाष्यप्रकाश. ]

( ६ ) उदाहृतवाक्यस्था त्रिमात्रप्रणवेनोक्तामुपास नामुत्तरस्मिन् षष्ठे प्रश्ने वाक्य (१) 'तिस्रो मात्रा मृत्यु मत्य. प्रयुक्ताः' इत्यनेन विनिन्द्य तुरीयाख्यस्याऽमात्रस्य परब्रह्मण उपासना तत्रैव प्रश्ने वक्ष्यति 'नातः परमस्ति' इति प्रशसापूर्वक, अतोऽवधार्यते पञ्चमप्रश्ने परब्रह्मोपासना न विदधातीति । किंच यदभिध्यायति तत्साक्षात्करोतीति सामान्यत एव प्राप्ततया तद्वचन व्यर्थं, अत पञ्चमप्रश्ने कार्यब्रह्मोपासनाया. परब्रह्मदर्शनमेव फलमुक्तम् ।

विज्ञान १।३।१३

[१]तिस्रो मात्रा मृत्युमत्य प्रयुक्ता अन्योन्यसक्ता अनविप्रयुक्ताः ।
क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक्प्रयुक्तासु न कम्पते ज्ञ' ॥

( १ ) तिस्रस्त्रिसख्याका अकारोकारमकाराख्या ओंकारस्य मात्रा मृत्युमत्य । मृत्युर्यासा विद्यते ता मृत्युमत्यो मृत्युगोचरादनतिक्रान्ता मृत्युगोचरा एवेत्यर्थः । ता आत्मनो ध्यानक्रियासु प्रयुक्ता । किंचान्योन्यसक्ता इतरेतरसबद्धाः । अनविप्रयुक्ताः, विशेषेणैकैकविषय एव प्रयुक्ता विप्रयुक्ता', न तथा विप्रयुक्ता अविप्रयुक्ता., नाविप्रयुक्ता अनविप्र-युक्ताः । किं तर्हि, विशेषेणैकस्मिन् ध्यानकाले तिसृषु क्रियासु बाह्याभ्यन्तरमध्यमासु जाग्रत्स्वप्नसुषुप्तस्थान-पुरुषाभिध्यानलक्षणासु योगक्रियासु सम्यक्प्रयुक्तासु सम्य-ग्ध्यानकाले प्रयोजितासु न कम्पते न चलति ज्ञो योगी यथोक्तविभागज्ञ ओंकारस्येत्यर्थ. । न तस्यैवविदश्चलन-मुपपद्यते । यस्माज्जाग्रत्स्वप्नसुषुप्तपुरुषाः सह स्थानैर्मात्रा-त्रयरूपेणोंकारात्मरूपेण दृष्टाः । स ह्येव विद्वान्सर्वात्मभूत ओंकारमयः कुतो वा चलेत्कस्मिन्वा ।

शकर.

( २ ) अविप्रयुक्ता न भवन्तीत्यनविप्रयुक्ताः विप्र युक्ताः । अत्यन्तद्रुतोच्चारणेनान्योन्यसक्ततयाऽतिविप्रकृष्ट-कालतयाऽत्यन्तविप्रयुक्ततया वा प्रयुक्तास्तिस्रो मात्रा मृत्युमत्यो मृत्युप्रदा अनर्थावहा इति यावत् । मृत्यु-मत्य (१) इति पाठेऽपि स एवार्थः । यज्ञादिका बाह्याः

(१) प्रउ ५।६, रग बाह्याभ्यन्तर ( बाह्यान्तर ), विज्ञान १।३।१३

क्रियाः, आन्तरा मानसक्रियाः, मध्यमा वाचिकजपरूपाः। आसु क्रियासु तिसृषु मात्रासु सम्यगत्यन्तसयोगवियोगमन्तरेण प्रत्युक्तासु सतीषु (सु ?)ज्ञस्तस्य योगाभिज्ञः पुमान्न कम्पते फलान्न च्यवते इत्यर्थः।

रग

**ऋग्भिरेतं यजुर्भिरन्तरिक्ष सामभिर्यत्तत्कवयो वेदयन्ते।**
**तमोंकारेणैवाऽऽयतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभय परं चेति ॥**

(१) सर्वार्थसग्रहार्थो द्वितीयो मन्त्र.। ऋग्भिरेत लोक मनुष्योपलक्षितम्। यजुर्भिरन्तरिक्ष सोमाधिष्ठितम्। सामभिर्यत्तद्ब्रह्मलोकमिति तृतीय कवयो मेधाविनो विद्यावन्त एव नाविद्वासो वेदयन्ते। त त्रिविध लोकमोंकारेण साधनेनापरब्रह्मलक्षणमन्वेत्यनुगच्छति विद्वान्। तेनैवोंकारेण यत्तत्पर ब्रह्माक्षर सत्य पुरुषाख्य शान्त विमुक्त जाग्रत्स्वप्नसुषुप्त्यादिविशेषसर्वप्रपञ्चविवर्जितमत एवाजर जरावर्जितममृत मृत्युवर्जितमत एव यस्माज्जरा विक्रियारहितमतोऽभयम्। यस्मादेवाभय तस्मात्पर निरतिशयम्। तदप्योंकारेणाऽऽयतनेन गमनसाधनेनान्वेतीत्यर्थः। इतिशब्दो वाक्यपरिसमाप्त्यर्थः।

शकर

(२) कवय· क्रान्तदर्शिन· त 'तद्विष्णोः परम पद सदा पश्यन्ति सूरय·' इत्युक्तरीत्या सूरयो य लोक पश्यन्ति तमोंकारेणैव मार्गेणान्वेति गत्वा च शान्तमूर्मिषट्करहित जरामरणशून्यमकुतोभय सर्वकारणत्वेन सर्वोत्कृष्ट ब्रह्म च प्राप्नोतीत्यर्थः। रग

(३) कवय सूरयः। सूरिभिर्दृश्यं च वैष्णव पदमेव। 'तद्विष्णोः परम पद सदा पश्यन्ति सूरय·' इत्येवमादिभ्य·। न चान्तरिक्षात्परश्चतुर्मुखलोकः। मध्ये स्वर्गलोकादीनां बहूनां सद्भावात्। रामानुज १।३।१२

**इति पञ्चम प्रश्न ॥**

---

(१) प्रउ ५।७, भास्कर १।३।१३, रग यत्तत्क (यत्क) वेदयन्ते (वदन्ति), रामानुज १।३।१२, निंबार्क १।३।१३, मध्व पर (परात्पर), श्रीकठ १।३।१२, श्रीकर १।३।१३ णैवायतनेना (णा)

## षष्ठः प्रश्नः

प्रश्नविषयः षोडशकल पुरुष

**अथ हैन सुकेशा भारद्वाज पप्रच्छ। भगवन् हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैत प्रश्नमपृच्छत। षोडशकल भारद्वाज पुरुष वेत्थ। तमह कुमारमब्रुव नाहमिम वेद। यद्यहमिमम वेदिष कथ ते नावक्ष्यमिति। समूलो वा एष परिशुष्यति योऽनृतमभिवदति। तस्मान्नार्हाम्यनृतं वक्तुम्। स तूष्णीं रथमारुह्य प्रवव्राज। तं त्वा पृच्छामि क्वासौ पुरुष इति ॥**

(१) अथ हैन सुकेशा भारद्वाज पप्रच्छ। समस्त जगत्कार्यकारणलक्षण सह विज्ञानात्मना परस्मिन्नक्षरे सुषुप्तिकाले सप्रतिष्ठते इत्युक्तम्। सामर्थ्यात्प्रलयेऽपि तस्मिन्नेवाक्षरे सप्रतिष्ठते जगत्, तत एवोत्पद्यते इति सिद्ध भवति। न ह्यकारणे कार्यस्य सप्रतिष्ठानमुपपद्यते। उक्त च—'आत्मन एष प्राणो जायते' इति। जगतश्च यन्मूल तत्परिज्ञानात्पर श्रेय इति सर्वोपनिषदां निश्चितोऽर्थ·। अनन्तर चोक्त 'स सर्वज्ञ· सर्वो भवति' इति। वक्तव्य च क्व तर्हि तदक्षर सत्य पुरुषाख्य विज्ञेयमिति। तदर्थोऽय प्रश्न आरभ्यते। वृत्तान्वाख्यान च विज्ञानस्य दुर्लभत्वख्यापनेन तल्लब्ध्यर्थं मुमुक्षूणा यत्नविशेषोपादानार्थम्।

हे भगवन्, हिरण्यनाभो नामत·, कोसलाया भव कौसल्यो राजपुत्रो जातित क्षत्रियो मामुपेत्योपगम्यैतमुच्यमान प्रश्नमपृच्छत। षोडशकल षोडशसख्याका कला अवयवा इवाऽऽत्मन्यविद्याध्यारोपितरूपा यस्मिन् पुरुषे सोऽय षोडशकलः, त षोडशकल हे भारद्वाज पुरुष वेत्थ विजानासि। तमह राजपुत्र कुमार पृष्टवन्तमब्रुव उक्तवानस्मि नाहमिमं वेद य त्व पृच्छसीति। एवमुक्तवत्यपि मयि अज्ञानमसभावयन्त तमज्ञाने कारणमवादिषम्। यदि कथचिदहमिम त्वया पृष्ट पुरुषमवेदिष

---

(१) प्रउ ६।१, रग त्यैत (त्यैन) मपृच्छत (मपृच्छत्) वेत्थ + (इति) समूलो + (ह), रामानुज ३।२।३०, ३२, मध्व त्यैत (त्यैन) वेत्थ। + (त मह्य ब्रूहीति।) वेदिषं (वेदिष्य)

विदितवानस्मि, कथमत्यन्तशिष्यगुणवतेऽर्थिने ते तुभ्य नावक्ष्य नोक्तवानस्मि न ब्रूयामित्यर्थ.। भूयोऽप्यप्रत्ययमिवाऽऽलक्ष्य प्रत्याययितुमब्रव, समूलः सह मूलेन वा एषोऽन्यथा सन्तमात्मानमन्यथा कुर्वन्ननृतमयथाभूतार्थमभिवदति यः, स परिशुष्यति शोषमुपैति इहलोकपरलोकाभ्यां विच्छिद्यते विनश्यति। यत एव जाने तस्मान्नार्हाम्यहमनृत वक्तु मूढवत्। स राजपुत्र एव प्रत्यायितस्तूष्णीं व्रीडितो रथमारुह्य प्रवव्राज प्रगतवान्यथागतमेव। अतो न्यायत उपसन्नाय योग्याय जानता विद्या वक्तव्यैव, अनृत च न वक्तव्य सर्वास्वप्यवस्थासु, इत्येतत्सिद्ध भवति। त पुरुष त्वा त्वा पृच्छामि मम हृदि विज्ञेयत्वेन शल्यमिव स्थित, क्वासौ वर्तते विज्ञेयः पुरुष इति। शकर.

(२) योऽनृत ब्रूते स मूलेन सह सर्वतः शुष्यति, श्रेयोहेतुभूत पुण्य सवासन नश्यतीत्यर्थः। अतो मदुक्ते त्वयाऽनृतशङ्का न कार्येति भावः। प्रकर्षेण गतः, अनेन स्वल्पलज्जा सूचिता। रथेन प्रवव्राजेत्यनेन तस्य प्रभुत्व सूचित भवति। अत्राऽऽधारभूतदेशप्रश्नद्वारा जीवो वा परमात्मा वेति निर्णयार्थोऽय प्रश्न इति द्रष्टव्यम्। * रग

परमात्मरूपात् पुरुषात् उत्पन्न षोडशकलात्मक विश्वम्

**तस्मै स होवाच। इहैवान्त शरीरे सोम्य स पुरुषो यस्मिन्नेता षोडश कला[१] प्रभवन्तीति॥**

(१) तस्मै स होवाच। इहैवान्त.शरीरे हृदयपुण्डरीकाकाशमध्ये हे सोम्य स पुरुषो न देशान्तरे विज्ञेयः, यस्मिन्नेता उच्यमानाः षोडश कलाः प्राणाद्याः प्रभवन्त्युत्पद्यन्ते इति। षोडशकलाभिरुपाधिभूताभि. सकल इव निष्कलः पुरुषो लक्ष्यतेऽविद्यया इति तदुपाधिकलाध्यारोपापनयेन विद्यया स पुरुष. केवलो दर्शयितव्य इति कलाना तत्प्रभवत्वमुच्यते। प्राणादीनामत्यन्तनिर्विशेषे ह्यद्वये शुद्धे तत्त्वे न शक्योऽध्यारोपमन्तरेण प्रतिपाद्यप्रतिपादनादिव्यवहारः कर्तुमिति कलाना प्रभवस्थित्यप्यया आरोप्यन्तेऽविद्याविषयाः। चैतन्याव्यतिरेकेणैव हि कला जायमानास्तिष्ठन्त्यः प्रलीयमानाश्च सर्वदा लक्ष्यन्ते। अत एव भ्रान्ता. केचिदग्निसयोगाद्घृतमिव घटाद्याकारेण चैतन्यमेव प्रतिक्षण जायते नश्यतीति। तन्निरोधे शून्यमिव सर्वमित्यपरे। घटादिविषय चैतन्य चेतयितुर्नित्यस्यात्मन अनित्य जायते विनश्यतीत्यपरे। चैतन्य भूतधर्म इति लोकायतिका.। अनपायोपजनधर्मकचैतन्यमात्मैव नामरूपाद्युपाधिधर्मैः प्रत्यवभासते। 'सत्य ज्ञानमनन्त ब्रह्म' 'प्रज्ञान ब्रह्म' 'विज्ञानमानन्द ब्रह्म' 'विज्ञानघन एव' इत्यादिश्रुतिभ्यः।

अन्तःशरीर इत्येतद्वचनमण्डस्यान्तर्व्योमेतिवच्च द्रष्टव्यम्। न पुनराकाशकारण. सन् कुण्डबदरवच्छरीरपरिच्छिन्न इति मनसाऽपीच्छति वक्तु मूढोऽपि, किमुत प्रमाणभूता श्रुतिः।

शकर.

(२) इहैवान्त.शरीरे वर्तते इति शेषः। अनेन शरीरपरिच्छिन्नप्रदेशमात्राधारत्वोक्त्या जीव इत्युत्तरमुक्त भवति। ननु जीवस्यैव कथ षोडशकलत्व, षोडशकलाधारत्वतत्स्रष्टृत्वयोः परमात्मन्येव पुष्कलत्वादित्याशङ्क्याऽऽह — यस्मिन्नेताः षोडश कलाः प्रभवन्ति। यस्मिन् पुरुषे एता वक्ष्यमाणा. प्राणाद्या नामान्ता. षोडशकलाः स्वससर्गप्रयुक्तसुखदुःखादिभोगाख्यमुपकार कर्तुं प्रभवन्ति समर्था भवन्तीत्यर्थः। ततश्च षोडशकलाभोक्तृत्वमेव षोडशकलत्व, तच्च जीवस्यैवेति भावः। रग.

**स ईक्षांचक्रे। कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि, कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति॥[१]**

(१) यस्मिन्नेताः षोडश कला प्रभवन्तीत्युक्त पुरुषविशेषणार्थं कलाना प्रभव., स चान्यार्थोऽपि श्रुतः

* शेष शकरेण गतार्थम्।

(१) प्रउ ६।२, रग. (इति०), विज्ञान १।३।१३ (सोम्य०).

(१) प्रउ ६।३, ब्रशाकर १।१।५, १।४।२३, २।३।२९, २।४।११, रामानुज १।१।५, निंबार्क ४।२।४ प्रतिष्ठास्यामि (प्रतिष्ठित स्याम्), श्रीकर १।१।२ (पृ ३१), १।१।५ (पृ ५३), १।४।२३, २।२।४४, वल्लभ. १।१।४; विज्ञान १।१।५ (पृ १२७), १।३।१३, २।३।२९

केन क्रमेण स्यादित्यत इदमुच्यते चेतनपूर्विका च सृष्टिरित्येवमर्थं च । पुरुषः षोडशकलः पृष्टो यो भारद्वाजेन स ईक्षाचक्रे इक्षण दर्शन चक्रे कृतवानित्यर्थः, सृष्टिफलक्रमादिविषयम् । कथमित्युच्यते—कस्मिन्कर्तृविशेषे देहादुत्क्रान्ते उत्क्रान्तो भविष्याम्यह, एव कस्मिन्वा शरीरे प्रतिष्ठितेऽह प्रतिष्ठास्यामि प्रतिष्ठित. स्यामित्यर्थ ।

शकर

( २ ) उत्क्रान्त्यादीनामप्युपाध्यायत्तता दर्शयति कस्मिन्निति । ब्रशकर २।३।२९

( ३ ) ननु षोडशकलासर्गहेतुत्वे जीवपरमात्मनोरविशिष्टे तद्भोक्तृत्व जीवस्यैव न परमात्मन इत्यत्र किं नियामकमित्यत्राऽऽह— स ईक्षाचक्रे इति । 'सोऽध्यक्षे तदुपगमादिभ्य.' ( ब्रसू ४।२।४ ) इति भाष्ये "प्रतिष्ठा च जीवेन सह श्रूयते । 'कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि, कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि' इति " इत्युक्तत्वात् इद वाक्य जीवाभिसबन्धिप्रकारप्रदर्शनपरम् । मदुत्क्रान्तिप्रतिष्ठासहभूतोत्क्रान्तिप्रतिष्ठः को वेति पर्यालोचितवानित्यर्थः । ततश्च स्वोपकाराभिसधिपूर्वक जीवस्य प्राणादिस्रष्टृत्वात्तद्भोक्तृत्व सभवति । परमात्मनस्तु 'न च तानि कर्माणि निबध्नन्ति धनजय । उदासीनवदासीनमसक्त तेषु कर्मसु ॥' ( भ गी ९।९ ) 'न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा' ( भ गी ४।१४ ) इत्युक्तरीत्या स्वोपकाराभिसधिपूर्वकस्रष्टृत्वाभावान्न तस्य षोडशकलाभोक्तृत्वमिति भावः ।

रग

**स प्राणमसृजत । प्राणाच्छ्रद्धा खं वायुर्ज्योतिराप पृथिवीन्द्रिय मनोऽन्नमन्नाद्वीर्यं तपो मन्त्रा कर्म लोका लोकेषु च नाम च ॥**

(१) प्रउ ६।४, **ब्रशंकर** १।१।५, १।४।१४, २३, २।३।२९, २।४।१, ८, ११, **भास्कर** १।४।१४, २।३।१५, २।४।१, **रग** पृथिवी ( पृथ्वी ) लोकेषु च ( लोकेषु ), **रामानुज** १।१।५, **मध्व** लोकेषु च ( लोकेषु ), **ब्रमध्व** २।४।१०, **श्रीकर** १।१।५, २१, १।४।२३, २।२।४४, **वल्लभ** १।१।४, **विज्ञान** २।३।२९, २।४।९, १३ श्रद्धा ( श्रद्धा )

( १ ) ईश्वरेणैव सर्वाधिकारी प्राणः पुरुषेण सृज्यते । कथ, स पुरुषः उक्तप्रकारेणेक्षित्वा प्राण हिरण्यगर्भाख्य सर्वप्राणिकरणाधारमन्तरात्मानमसृजत सृष्टवान् । अत प्राणाच्छ्रद्धां सर्वप्राणिना शुभकर्मप्रवृत्तिहेतुभूताम् । ततः कर्मफलोपभोगसाधनाधिष्ठानानि कारणभूतानि महाभूतान्यसृजत । ख शब्दगुणम् । वायु स्वेन स्पर्शेन कारणगुणेन च विशिष्ट द्विगुणम् । तथा ज्योतिः स्वेन रूपेण पूर्वाभ्या च विशिष्ट त्रिगुण शब्दस्पर्शाभ्याम् । तथाऽऽपो रसेन गुणेनासाधारणेन पूर्वगुणानुप्रवेशेन च चतुर्गुणा. । तथा गन्धगुणेन पूर्वगुणानुप्रवेशेन च पञ्चगुणा पृथिवी । तथा तैरेव भूतैरारब्धमिन्द्रिय द्विप्रकार बुद्ध्यर्थं कर्मार्थं च दशसख्यम् । तस्य चेश्वर मन्तःस्थ सशयसकल्पलक्षण मनः । एव प्राणिना कार्यं करण च सृष्ट्वा तत्स्थित्यर्थं व्रीहियवादिलक्षणमन्नम् । ततश्चान्नादद्यमानाद्वीर्यं सामर्थ्यं बल सर्वकर्मप्रवृत्तिसाधनम् । तद्वीर्यवता च प्राणिनां तपो विशुद्धिसाधन सकीर्यमाणानाम् । मन्त्रास्तपोविशुद्धान्तर्बहिःकरणेभ्य कर्मसाधनभूता ऋग्यजु.सामाथर्वाङ्गिरसः । ततः कर्म अग्निहोत्रादिलक्षणम् । ततो लोकाः कर्मणा फलम् । तेषु च सृष्टाना प्राणिना नाम च देवदत्तो यज्ञदत्त इत्यादि । एवमेता. कलाः प्राणिनामविद्यादिदोषबीजापेक्षया सृष्टास्तैमिरिकदृष्टिसृष्टा इव द्विचन्द्रमशकमक्षिकाद्याः, स्वप्नदृक्सृष्टा इव च सर्वपदार्थाः, पुनस्तस्मिन्नेव पुरुषे प्रलीयन्ते हित्वा नामरूपादिविभागम् ।

* शकर

( २ ) भूतानुग्रहणे( हापे )क्षित्वाचेन्द्रियाणां क्रमविरोधात्परस्तादेवोत्पत्तिर्युक्ता । दर्शयति च 'स प्राण अन्नम्' इति ।

भास्कर. २।३।१५

( ३ ) स जीव एव पर्यालोच्य प्रथमतः स्वोत्क्रान्तिप्रतिष्ठासहभूतोत्क्रान्तिप्रतिष्ठ मुख्यप्राण सृष्टवान् । शरीरशोषणादिलक्षण तपः । तेषु लोकेषु स्वर्गादीनि नामानि सृष्टवानित्यर्थः । यद्यपि षोडशकलास्रष्टृत्व परमात्मन एव तथापि तद्धेतुभूतादृष्टारम्भककर्मकर्तृत्वेनाय

* ब्रशकर २।४।८ प्राणशब्दस्य मुख्यप्राणपरत्वमभिप्रेतम् ।

स्रष्टृत्ववाद इति द्रष्टव्यम्। ततश्च स्वभोगोपकारिकाः षोडशापि कलास्तद्धेतुभूतादृष्टारम्भककर्माणि कृत्वा सृष्टवान्। अतस्तद्धीकृतया षोडशकलत्व जीवस्येति यावत्। * रग

(४) 'कर्मेति पुष्कर प्रोक्त उषानामाभिमानिनी। लोकाभिमानी पर्जन्य स्वाहा वै मन्त्रदेवता। तपोभिमानी वह्निश्च वरुणो वीर्यदेवता। अन्नस्य देवता सोमो मनो नामानिरुद्धकः। इन्द्रियेशाश्च सूर्याद्याश्चक्षुराद्यभिमानिनः। रुद्रो वीन्द्रः शेषकामौ मनसस्त्वेव देवताः। श्रद्धेति वायो पत्नी स्यात्सर्वेषा प्रभवाप्यया। तस्याश्च कारण प्राणः सर्वेषामुत्तमोत्तमः। तस्यापीश. कारण च वासुदेवः परोऽव्यय। न तस्य सदृश. कश्चित्कुत एवो त्तमो भवेत्। त ज्ञात्वा मुच्यते जन्तुर्विदित्वैव परात्परम्॥' इति तत्त्वविवेके। 'एतस्माज्जायते प्राणो मन सर्वेन्द्रियाणि च। ख वायुर्ज्योतिराप. पृथिवी विश्वस्य धारिणी॥' इति मन्त्रोक्त एव क्रमः। न हीन्द्रियेभ्यो मन. पश्चात्। 'तत्प्राक्छ्रुतेश्च' इति भगवद्वचनम्। 'विष्णो प्राणस्ततः श्रद्धा तस्या रुद्रो मनोऽभिधः। तस्मादिन्द्रस्त्विन्द्रियात्मा तस्य सोमोऽन्नदेवता। ततश्च वरुणः सृष्टस्तस्मादग्निस्ततोऽवरः। आकाशदेवताविघ्नस्ततो वायो. सुतो मरुत्। तस्मादग्निः पावकाख्य. प्रथमोऽग्ने. सुतस्ततः। ततः पर्जन्य उद्भूतः स्वाहाऽतो मन्त्रदेवता। उदात्मको बुधस्तस्या उषानामात्मिका ततः। तत. शनि. पृथिव्यात्मा कर्मात्मा पुष्करस्तत.। क्रमात्प्रत्यवरा ह्येते मुक्ता. सर्वगुणैरपि। नित्यमुक्तस्ततो विष्णु प्राणादप्युत्तमोत्तमः॥' इति च। मध्व

(५) 'स प्राणमसृजत प्राणाच्छ्रद्धा' इत्यादिश्रुतौ साक्षादेव प्राणात् श्रद्धावृत्तेर्बुद्धेरुत्पादावगमाच्च।

$ विज्ञान. २।४।१३

षोडशकलाना शुद्धे पुरुषे एव समाप्ति

**स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति। भिद्येते तासा नामरूपे। समुद्र इत्येव प्रोच्यते। एवमेवास्य परिद्रष्टुरिमाः षोडश कला. पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति। भिद्येते चासा नामरूपे। पुरुष इत्येव प्रोच्यते। स एषोऽकलोऽमृतो भवति। तदेष श्लोक॥**

(१) कथ, स दृष्टान्त यथा लोके इमा नद्यः स्यन्दमानाः स्रवन्त्य. समुद्रायणा समुद्रोऽयन गतिरात्मभावो यासा ता. समुद्रायणाः समुद्र प्राप्योपगम्य अस्तं नामरूपतिरस्कार गच्छन्ति। तासां चास्त गताना भिद्येते विनश्यतो नामरूपे गङ्गायमुनेत्यादिलक्षणे। तदभेदे समुद्र इत्येव प्रोच्यते तद्वस्तूदकलक्षणम्। एव यथाऽय दृष्टान्त., उक्तलक्षणस्य प्रकृतस्यास्य पुरुषस्य परिद्रष्टुः परि समन्ताद्द्रष्टुर्दर्शनस्य कर्तु. स्वरूपभूतस्य, यथाऽर्क. स्वात्मप्रकाशस्य कर्ता सर्वतस्तद्वत्, इमाः षोडश कलाः प्राणाद्या उक्ताः कला पुरुषायणा. नदीनामिव समुद्र पुरुषोऽयनमात्मभावगमन यासा कलाना ता पुरुषायणा पुरुष प्राप्य पुरुषात्मभावमुपगम्य तथैवास्त गच्छन्ति। भिद्येते चाऽऽसां नामरूपे कलाना, प्राणाद्या आख्या, रूप च यथास्वम्। भेदे च नामरूपयोर्यदनष्ट तत्त्व पुरुष इत्येव प्रोच्यते ब्रह्मविद्भिः। य एव विद्वान् गुरुणा प्रदर्शितकलाप्रलयमार्गः स एष विद्यया प्रविलापितास्वविद्याकामकर्मजनितासु प्राणादिकलास्वकलाः, अविद्याकृतकलानिमित्तो हि मृत्युः, तदपगमेऽकलत्वादेवामृतो भवति। तदेतस्मिन्नर्थे एष श्लोकः। शकर

(२) 'तानि परे तथा ह्याह'— तानि पुन प्राणशब्दोदितानीन्द्रियाणि भूतानि च परब्रह्मविद तस्मिन्नेव परस्मिन्नात्मनि प्रलीयन्ते। कस्मात्। तथा ह्याह श्रुतिः— 'एवमेवास्य परिद्रष्टुरिमा०' इति। ननु 'गताः कला. पञ्चदश प्रतिष्ठा' (मुड ३।२।७) इति विद्वद्विषयैवापरा श्रुतिः परस्मादात्मनोऽन्यत्रापि

---

* शेषं शंकरवत्।

$ प्राणशब्दो मुख्यप्राणपर।

(१) प्रउ ६।५, ब्रशकर ४।२।१५, १६, भास्कर ४।२।१४ ४।२।१५ चासा (चास्य), ४।३।१३ पुरुष गच्छन्ति (पुरुष यन्ति), रामानुज १।१।१ (पृ ४२), २।३।१९, निंबार्क ४।२।१५, मध्व स यथेमा (यथेमा), श्रीकर २।३।१७, ४।२।१४, विज्ञान १।१।४ (पृ १०८) (स्यन्दमाना०) ऽकलोऽमृतो (ऽमृतोऽकलो), १।२।११ (तासा०), बलदेव ४।२।१६.

कलाना प्रलयमाह स्म । न । सा खलु व्यवहारापेक्षा पार्थिवाद्या' कला पृथिव्यादीरेव स्वप्रकृतीरपियन्तीति । इतरा तु विद्वत्प्रतिपत्त्यपेक्षा कृत्स्न कलाजात परब्रह्म विदो ब्रह्मैव सपद्यते इति । तस्माददोषः ।

४।२।१५

स पुनर्विदुषः कलाप्रलयः किमितरेषामिव सावशेषो भवत्याहोस्विन्निरवशेष इति । तत्र प्रलयसामान्यात् शक्त्यवशेषताप्रसक्तौ ब्रवीति अविभागापत्तिरेवेति । कुतः, वचनात् । तथा हि कलाप्रलयमुक्त्वा वक्ति 'भिद्येते चासा अमृतो भवति' इति । अविद्या-निमित्ताना च कलाना न विद्यानिमित्ते प्रलये सावशेषत्वोपपत्ति. । तस्मादविभाग एवेति ।

ब्रशकर ४।२।१६

( ३ ) ब्रह्मणि कलानामविभागः स्वरूपव्यतिरेका भावो लवणस्येव समुद्रप्राप्तौ ।

* भास्कर. ४।२।१५

( ४ ) अथ परमात्मन ईदृक्त्वाभावादकलत्व, तद्द्वारा मुमुक्षुवेद्यत्व चोपपादयति ।

अस्य परिद्रष्टुरनुभवितुर्भोक्तुर्जीवस्य भोगोपकरणभूता इमाः षोडशापि कला. निरुपाधिकपुरुषशब्दवाच्य पुरुष वासुदेव प्राप्यास्त गच्छन्ति, यथा शिलातल प्राप्य क्षुर धाराः कुण्ठीभवन्ति तथा भोगाधायका न भवन्तीत्यर्थः। तत्र हेतुमाह—पुरुषायणा इति । पुरुषसकल्पाधीनस्वरूप-स्थितिप्रवृत्तिका इत्यर्थः । तासां कलानां जीवविषये भोगभोग्यस्थानभोगोपकरणत्वादिनामरूपभेदवत्परमात्म विषये भोगस्थानत्वादिनामरूपे न स्तः । तदेव दर्श यति—पुरुष इत्येव प्रोच्यत इति । पुरुषाऽपृथक्स्थिति-प्रतिपत्तिकतया पुरुष इत्येव प्रोच्यते न तु तद्भिन्नत्वे तद्भोग्यभोगस्थानत्वादिना तत्कलादित्वेन प्रोच्यते । तस्मात्परमात्मन' कलाभोक्तृत्वाभावादकल इत्येवोच्यते । अत एवामृतश्च, मरणस्य भोक्तृत्वरूपकलासबन्धाधीन त्वादिति भाव ।

§ रग.

( ५ ) समुद्र इत्येव प्रोच्यते, पुरुष इत्येव प्रोच्यते, भिद्येते तासा नामरूपे, भिद्येते चासा नामरूपे, इत्युक्त-त्वात् अज्ञैरनवगतान्यपि समुद्रे स्थितानां नदीना विष्णौ स्थिताना मुक्ताना च भिन्नान्येव नामरूपाणि सन्त्येवे-त्यर्थ. । न च भेदशब्दो नाशे प्रयुज्यमान' क्वापि दृष्ट' । घटादावपि बहुभावे एव भेदशब्द प्रयुज्यते । नाशस्त्वर्थत एवाऽवगम्यते । न चात्रार्थतोऽपि नाशोऽवगम्यते । न हि नामानि रूपाणि च कपालवद्बहुधा भूतानि तिष्ठन्ति । अतो भिद्येते इति पृथक्त्वमेवोच्यते । 'अरा इव रथनाभौ कला यस्मिन्प्रतिष्ठिताः' इति वाक्यशेषाच्च । अतः पुरुषे भिन्नानि भिन्नानि नामरू-पाणि प्रतिष्ठितानीत्येवार्थः । अस्तगमन तु आदित्यवत् अज्ञानामविज्ञेयत्वमेव । 'प्राणादयः कला यस्मिन्मुक्ता नित्य प्रतिष्ठिताः । पृथक्पृथङ्नामरूपैर्नमस्तस्मै पराय ते ॥' इति सत्तत्त्वे । 'नामरूपाद्विमुक्तः' इत्यने-नापि नामरूपाऽमुक्तत्वमुच्यते विप्रिय इत्यादिवत् । 'नामरूपे अविहाय' इति च पूर्वत्र । 'अनन्त वै नामाऽनन्ता वै विश्वे देवा.' इति नामरूपयो-रनन्तत्व हि श्रुतिर्वक्ति । 'यत्र पूर्वे साध्याः सन्ति देवाः' 'स तत्र पर्येति जक्षन् क्रीडन् रममाण' 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' 'ऋचा त्वः पोषमास्ते पुपुष्वान्गायत्र त्वो गायति शक्वरीषु' ( ऋस १०।७१।११ ) इत्यादेश्च ।

अत. सर्वमुक्तेभ्योऽप्युत्तमोत्तमः परिपूर्णो नारायण इति सिद्धम् ।

मध्व.

परमपुरुषविद्याविधि तत्फल च

**अरा इव रथनाभौ कला यस्मिन्प्रतिष्ठिता. । तं वेद्यं पुरुषं वेद यथा मा वो मृत्यु परिव्यथा इति ॥**

( १ ) अरा रथचक्रपरिवारा इव रथनाभौ रथ-चक्रस्य नाभौ यथा प्रवेशितास्तदाश्रया भवन्ति यथा तथे-त्यर्थः । कला प्राणाद्या यस्मिन्पुरुषे प्रतिष्ठिता उत्पत्ति-स्थितिलयकालेषु त पुरुष कलानामात्मभूत वेद्य वेदनीय

---

* ४।३।१३ सूत्रे 'पुरुष प्राप्य' इत्यत्र पुरुषप्राप्ति-रर्चिरादिमार्गेणैवाऽभिप्रेता ।

§ शेष शकरवत् ।

(१) प्रउ ६।६, रग यस्मिन् ( यत्र ) वेद ( वेत्थ ) ( यथा० ) ( इति० )

पूर्णत्वात्पुरुष पुरि शयनाद्वा वेद जानीयात् । यथा हे शिष्या मा वो युष्मान्मृत्युः परिव्यथाः मा परिव्यथयतु । न चेद्विज्ञायेत पुरुषो मृत्युनिमित्ता व्यथामापन्ना दु.खिन एव यूय स्थ । अतस्तन्मा भूद्युष्माकमिति अभिप्राय ! शकर

( २ ) यदात्मिका यदुपादानिका इत्यर्थः । शिष्ट स्पष्टम् । यथा तमेव पुरुष मुमुक्षुर्वेद्यमवगच्छतो ब्रह्मज्ञानफलमाह—मा वो मृत्युरिति । ब्रह्मज्ञाना युष्माक परितो व्यथा मृत्युर्मा कार्षीदित्यर्थ. । रग

**तान्होवाच । एतावदेवाहमेतत्परं ब्रह्म वेद । नात. परमस्तीति ॥**

( १ ) तानेवमनुशिष्य शिष्यास्तान्होवाच पिप्पलादः किलैतावदेव वेद्य पर ब्रह्म वेद विजानाम्यहमेतत् । नातोऽस्मात्परमस्ति प्रकृष्टतर वेदितव्यमित्येवमुक्तवान् शिष्याणामविदितशेषास्तित्वाशङ्कानिवृत्तये कृतार्थबुद्धिजननार्थं च । शकर

( २ ) तान्सुकेशादीन्षडपि शिष्यान्प्रत्येतदुवाच । अहमेतावदेव पर ब्रह्म जानामि परब्रह्मविषये ममैतावदेव ज्ञानमितोऽधिक नास्तीत्यर्थ. । न च ‘ एतावदेवाह पर ब्रह्म वेद नातः परमस्ति ’ इति षोडशकलजीवातिरिक्तपरब्रह्मनिषेधः किं न स्यादिति वाच्यम् । ‘ अधिक तु भेदनिर्देशात् ’ ( ब्रसू. २।१।२२ ) इत्यादिभिर्विरोधप्रसङ्गात् । तत्र हि जीवाभेदाद्ब्रह्मणो जगत्कारणत्वे हिताकरणादिदोषमाशङ्क्य जीवभेदाद्दोषाभावः सिद्धान्तितः । रग.

(१) प्रउ ६।७, रग ( एतत्० ), विज्ञान १।१।४ ( पृ १०८ ) एतावत् ( एतत् ) ( एतत्० ) ( इति० )

[1] **ते तमर्चयन्तस्त्वं हि न पिता योऽस्माकमविद्याया. परं पारं तारयसीति । नम. परमऋषिभ्यो नम परमऋषिभ्य ॥**

( १ ) ततस्ते शिष्या गुरुणाऽनुशिष्टास्त गुरु कृतार्थाः सन्तो विद्यानिष्क्रयमपश्यन्तः किं कृतवन्त इत्युच्यते — अर्चयन्त पूजयन्तः पादयोः पुष्पाञ्जलिप्रकिरणेन प्रणिपातेन च शिरसा, किं, ऊचुरित्याह — त्व हि नोऽस्माक पिता ब्रह्मशरीरस्य विद्यया जनयितृत्वात् नित्यस्याजरामरस्याभयस्य । यस्त्वमेवास्माकमविद्याया विपरीतज्ञानाज्जन्मजरामरणरोगदुःखादिग्रहादविद्यामहोदधेर्विद्याप्लवेन पर अपुनरावृत्तिलक्षण मोक्षाख्य महोदधेरिव पार तारयस्यस्मानित्यत. पितृत्व तवास्मान्प्रत्युपपन्नमितरस्मात् । इतरोऽपि हि पिता शरीरमात्र जनयति तथाऽपि स प्रपूज्यतमो लोके, किमु वक्तव्यमात्यन्तिकाभयदातुरित्यभिप्राय. । नम. परमऋषिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्य । नमः परमऋषिभ्य इति द्विर्वचनमादरार्थम् । शकर.

( २ ) ते षडपि शिष्यास्त पिप्पलाद त्वमस्माक ससारकूपपारतीर प्रापकतया पिताऽसि, तस्मात्त्वत्तो जन्मैव श्रेष्ठ जन्म ‘स हि विद्यातस्त जनयति तच्छ्रेष्ठ जन्म’ इतिश्रवणादित्यर्चयन्त. पूजयन्तो बभूवु. । नमः परमऋषिभ्य इति । उत्तरशान्तिस्थाने इद वाच्यम् । अभ्यास उपनिषत्समाप्त्यर्थ. । रग.

इति षष्ठः प्रश्न ॥

(१) प्रउ ६।८, ब्रशाकर १।१।४, रामानुज १।१।४ ( पृ १५४ ), श्रीकर ४।२।१५

## प्रश्नोपनिषत्समाप्ता ।

# माण्डूक्योपनिषत्

प्रणवाक्षररूपं सर्वं कालसंसृष्टं कालातीतं च

* ओमित्येतदक्षरमिदं सर्वम् । तस्योपव्याख्यानम्। भूतं भवद्भविष्यदिति सर्वमोंकार एव । यच्चान्यत्त्रिकालातीतं तदप्योंकार एव ॥

(१) वेदान्तार्थसारसंग्रहभूतमिदं प्रकरणचतुष्टयं ‡ ओमित्येतदक्षरमित्याद्यारभ्यते । तत्र तावदोंकारनिर्णयाय प्रथमं प्रकरणं आगमप्रधानमात्मतत्त्वप्रतिपत्त्युपायभूतम्। कथं पुनरोंकारनिर्णयः आत्मतत्त्वप्रतिपत्त्युपायत्वं प्रतिपद्यते इति । उच्यते — 'ओमित्येतत्' ( काउ २।१५ ) 'एतदालम्बनम्' ( काउ २।१७ ) 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति' ( प्रउ ५।२ )'ओमित्यात्मानं युञ्जीत' ( नाउ ७९ )' ओमिति ब्रह्म' ( तैउ १।८ ) 'ओंकार एवेदं सर्वम्' ( छाउ २।२३।३ ) इत्यादिश्रुतिभ्यः । रज्ज्वादिरिव सर्पादिविकल्पस्यास्पदमद्वयः आत्मा परमार्थतः सन् प्राणादिविकल्पस्यास्पदं यथा, तथा सर्वोऽपि वाक्प्रपञ्चः प्राणाद्यात्मविकल्पविषयः ओंकार एव । स चात्मस्वरूपमेव, तदभिधायकत्वात् । ओंकारविकारशब्दाभिधेयश्च सर्वः प्राणादिरात्मविकल्पः अभिधानव्यतिरेकेण नास्ति, 'वाचारम्भणं विकारो नामधेयम्' ( छाउ ६।१।४ ) 'तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितं सर्वं हीदं नामनि' ( ऐआ २।१।६ ) इत्यादिश्रुतिभ्यः । अत आह — ओमित्येतदक्षरमिदं सर्वमिति । यदिदं अर्थजातमभिधेयभूतं, तस्य अभिधानाव्यतिरेकात्, अभिधानभेदस्य च ओंकाराव्यतिरेकात् ओंकार एवेदं सर्वम् । परं च ब्रह्म अभिधानाभिधेयोपायपूर्वकमवगम्यते इत्योंकार एव । तस्य एतस्य परापरब्रह्मरूपस्याक्षरस्य ओमित्येतस्य उपव्याख्यानं, ब्रह्मप्रतिपत्त्युपायत्वाद्ब्रह्मसमीपतया विस्पष्टं प्रकथनमुपव्याख्यानं, प्रस्तुतं वेदितव्यमिति वाक्यशेषः । भूतं भवत् भविष्यदिति कालत्रयपरिच्छेद्यं यत्, तदपि ओंकार एव, उक्तन्यायतः । यच्च अन्यत् त्रिकालातीतं कार्याधिगम्यं कालापरिच्छेद्यमव्याकृतादि, तदपि ओंकार एव । शंकर

(२) मुमुक्षोरधिकारिणो निखिलक्लेशनिवृत्तिपूर्वकं परमानन्दावाप्तये समस्तव्यस्तप्रणवप्रतिपाद्यभगवदुपासनां वक्तुं प्रवृत्तेयमुपनिषत् । आदौ समस्तप्रणवप्रतिपाद्यं तावदाह — ओमित्येतदक्षरमिति । एतदिति श्रवणाद्यदित्यन्वेति । ओमिति, उक्तमिति शेषः । ओतं जगदस्मिन्निति व्युत्पत्त्या ओमित्युक्तं यत् ब्रह्म, एतदक्षरं सत्यं इदंशब्दवाच्यस्य सर्वस्य चिदचिदात्मप्रपञ्चस्याक्षरे ओतत्वात् सर्वम् । केन निमित्तेनोंकारवाच्यं ब्रह्माक्षरमित्युच्यते इत्यतो न क्षरति कालत्रयेऽपीति व्युत्पत्त्या कालत्रये एकप्रकारतया नित्यत्वहेतुनेतिभावेन प्रज्ञापूर्वं प्रवृत्तिनिमित्तमाह— तस्येति । विशिष्य आख्यायतेऽनेनेति व्याख्यानं प्रवृत्तिनिमित्तम् । तस्य ओमित्येतत्प्रतिपाद्याक्षरशब्दार्थत्वे उपपन्नं व्याख्यानमुच्यते इत्यर्थः । तत्किमित्यत आह — भूतमिति । ओमित्युक्तं ब्रह्म भूतं अतीतकाले विद्यमानं, भवत् वर्तमानकाले सत्, भविष्यत् आगामिकालेऽपि सत्, शश्वदेकप्रकारमिति यावत् । अतोऽक्षरमुच्यते इत्यर्थः । इतिशब्दस्योपव्याख्यानमिति पूर्वेणान्वयः । यदक्षरस्य सर्वत्वमुक्तं, तदन्यस्याप्यस्ति किमित्यतो नेत्याह — सर्वमिति । ओमित्याक्रियते प्रतिपाद्यते इत्योंकारः । कृञः कर्मणि घञ्प्रत्ययः । ओमित्युच्यमानमक्षरमेव सर्वं, न त्वन्यदित्यर्थः । भूतमित्यादिनोक्तं शश्वदेकप्रकारत्वरूपं कालत्रयातीतत्वं

---

* माण्डूक्योपनिषन्मध्वभाष्यं नोपलब्धम् ।

‡ गौडपादीयकारिकाप्रकरणापेक्षमिदं चतुष्टयत्ववचनम् । तत्र प्रथमप्रकरणीयकारिकासहिता माण्डूक्योपनिषत् प्रथमं प्रकरणम् ।

(१) माउ १, श्रीकर २।३।४२, ३।३।३८ भवद्भ ( भव्य भ )

अक्षरपदप्रवृत्तिनिमित्तमपि नान्यस्येत्याह– यच्चान्यदिति। कालत्रयकृतविकारहीनरूप त्रिकालातीत च यदन्य द्वस्त्वस्ति, तदप्योंकार एव। ओमित्युच्यमानाक्षराख्यं ब्रह्मैव, न ततोऽन्यत्ताद्दशमस्तीत्यर्थः।

कूरनारायण.

( ३ ) 'ओमित्येतदक्षरमिद सर्वम्' इत्युपक्रम्य 'प्रपञ्चोपशमः शिवोऽद्वैत एवमोंकार· सविशत्यात्मना-ऽऽत्मान य एवं वेद' ( माउ १२ ) इत्यन्तेन सर्व-वेदान्तप्रधानमाण्डूक्योपनिषदि शिवस्य प्रणवात्मकत्व प्रणवार्थवाच्यत्व प्रणवातीतत्व च निर्दिष्टम्।

श्रीकर २।३।४३

सर्वं ब्रह्म आत्मा ब्रह्म

**[१]सर्वं ह्येतद्ब्रह्म। अयमात्मा ब्रह्म *। सोऽय-मात्मा चतुष्पात्॥**

( १ ) अभिधानाभिधेययोरेकत्वेऽपि अभिधानप्रा-धान्येन निर्देशः कृतः 'ओमित्येतदक्षरमिद सर्वम्' इत्यादि·। अभिधानप्राधान्येन निर्दिष्टस्य पुनरभिधेय प्राधान्येन निर्देश. अभिधानाभिधेययोरेकत्वप्रतिपत्त्यर्थः। इतरथा हि अभिधानतन्त्राभिधेयप्रतिपत्तिरिति अभि-धेयस्याभिधानत्व गौणमित्याशङ्का स्यात्। एकत्वप्रति-पत्तेश्च प्रयोजनमभिधानाभिधेययोः—एकेनैव प्रयत्नेन युगपत्प्रविलापयस्तद्विलक्षण ब्रह्म प्रतिपद्येतेति। तथा च वक्ष्यति— 'पादा मात्रा मात्राश्च पादा·' इति। तदाह—सर्वं ह्येतद्ब्रह्मेति। सर्वं यदुक्तमोंकारमात्रमिति, तदेतत् ब्रह्म। तच्च ब्रह्म परोक्षाभिहित प्रत्यक्षतो विशेषेण निर्दिशति— अयमात्मा ब्रह्मेति। अयं इति चतुष्पात्त्वेन प्रविभज्यमान प्रत्यगात्मतयाऽभिनयेन निर्दिशति अयमा-त्मेति। सोऽयमात्मा ओंकाराभिधेयः परापरत्वेन व्यव स्थितः चतुष्पात् कार्षापणवत्, न गौरिव। त्रयाणा विश्वादीना पूर्वपूर्वप्रविलापनेन तुरीयस्य प्रतिपत्तिरिति करणसाधनः पादशब्दः। तुरीयस्य तु पद्यते इति कर्म साधनः पादशब्दः।

शकर

* 'अयमात्मा ब्रह्म' इतिवाक्यस्य स्थलनिर्देशादिक बृउ २।५।१९ ( पृ १११९ ) इत्यत्रापि द्रष्टव्यम्।

(१) **माउ** २, **श्रीकठ** १।१।१ ( पृ ८७, ८९ ), **श्रीकर** १।१।१ ( पृ ३, १६, १८, २७ ), ३।१।१, ३।३।३८

( २ ) सर्वमोंकार एवेत्यत्र ओंपदवाच्यब्रह्मणः पूर्णत्वमुक्त, तत्कुत इत्याशङ्कां प्रमाणसूचनेन निराकुर्व-न्नाह—सर्वं ह्येतद्ब्रह्मेति। एतदोंकारपदवाच्यमक्षराख्य ब्रह्म सर्वं पूर्णं हि, 'परम यो महद्ब्रह्म' 'तदेव ब्रह्म परम कवीनाम्' 'पूर्णमद. पूर्णमिदम्' इत्यादिषु प्रसिद्ध-मित्यर्थः। ननु जीवानामपि क्रियासु स्वातन्त्र्यानुभवेन तत्रापि कश्चिदस्ति नियन्तेत्यत आह—अयमिति। ब्रह्मादिष्वादानकर्तृतया स्थितोऽयमात्मा ( ऽ य ? ) ब्रह्म प्रागुक्तोंपदवाच्य ब्रह्मैव, न त्वन्यः कश्चिदित्यर्थ·। इति समस्तप्रणवप्रतिपाद्योक्ति। एव समस्तप्रणवप्रतिपाद्यमु-पासनार्थं निरूप्य इदानीं तस्यैकदेशैरकारोंकारमकारनादै प्रतिपाद्यानां विश्वादिभगवद्रूपाणा उपासनामकार उकारो मकार इत्यादिना तृतीयखण्डे वक्तु तानि रूपा ण्याह—सोऽयमात्मा चतुष्पादिति। स समस्तोंपदवा-च्योऽक्षरनामा अय ब्रह्मादिषु नियामकतया स्थित आत्मा चतुष्पात् चत्वार पादा अशा. स्वरूपभूता यस्य स चतुष्पात्। सर्वजीवनियामकतया तत्तद्देहेषु चतूरूपतया तिष्ठतीत्यर्थः।

कूरनारायण.

जागृतिस्वप्नसुषुप्तिस्थानेषु स्थित आत्मा उपाधिभेदेन भिन्न

**[१]जागरितस्थानो बहि·प्रज्ञ सप्ताङ्ग एकोन-विंशतिमुख स्थूलभुग्वैश्वानर प्रथम पाद॥**

(१) कथ चतुष्पात्त्वमित्याह—जागरितस्थान इति। जागरित स्थानमस्येति जागरितस्थान., बहिःप्रज्ञः स्वात्म व्यतिरिक्ते विषये प्रज्ञा यस्य स· बहिःप्रज्ञः, बहिर्विषयेव प्रज्ञा यस्याविद्याकृताऽवभासते इत्यर्थः। तथा सप्त अङ्गान्यस्य, 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राण· पृथग्वर्त्मात्मा सदेहो बहुलो बस्तिरेव रयि· पृथिव्येव पादौ' ( छाउ ५।१८। २ ) इति, अग्निहोत्रकल्पनाशेषत्वेन आहवनीयोऽग्नि-रस्य मुखत्वेनोक्त इत्येव सप्ताङ्गानि यस्य सः सप्ताङ्गः। तथा एकोनविंशतिर्मुखान्यस्य, बुद्धीन्द्रियाणि कर्मेन्द्रि-याणि च दश, वायवश्च प्राणादयः पञ्च, मनो बुद्धिरह-

(१) **माउ** ३, **कूरनारायण** बहि प्रज्ञ (बहिष्प्रज्ञ), **श्रीकर** ३।३।३८

कारश्चित्तमिति, मुखानीव मुखानि तानि, उपलब्धिद्वाराणीत्यर्थ· । स एवविशिष्टो वैश्वानरः यथोक्तैर्द्वारै. शब्दादीन् स्थूलान् विषयान् भुङ्क्ते इति स्थूलभुक् । विश्वेषा नराणामनेकधा सुखादिनयनाद्विश्वानर, यद्वा विश्वश्चासौ नरश्चेति विश्वानर, विश्वानर एव वैश्वानरः, सर्वपिण्डात्मानन्यत्वात् । सः प्रथमः पाद. कथ एतत्पूर्व कत्वादुत्तरपादाधिगमस्य प्राथम्यमस्य । कथ 'अयमात्मा ब्रह्म' इति प्रत्यगात्मनोऽस्य चतुष्पात्त्वे प्रकृते द्युलोकादीनां मूर्धाद्यङ्गत्वमिति । नैष दोष, सर्वस्य प्रपञ्चस्य साधिदैविकस्य अनेनाऽऽत्मना चतुष्पात्त्वस्य विवक्षितत्वात् । एव च सति सर्वप्रपञ्चोपशमे अद्वैतसिद्धि., सर्वभूतस्थश्च आत्मा एको दृष्ट· स्यात्, सर्व भूतानि चाऽऽत्मनि । 'यस्तु सर्वाणि भूतानि' (ईउ ६) इत्यादिश्रुत्यर्थश्चैवमुपसहृत स्यात् । अन्यथा हि स्वदेहपरिच्छिन्न एव प्रत्यगात्मा साख्यादिभिरिव दृष्ट. स्यात् । तथा च सति अद्वैतमिति श्रुतिकृतो विशेषो न स्यात्, सांख्यादिदर्शनेनाविशेषात् । इष्यते च सर्वोपनिषदा सर्वात्मैक्यप्रतिपादकत्वम् । ततो युक्त मेवास्य आध्यात्मिकस्य पिण्डात्मनो द्युलोकाद्यङ्गत्वेन विराडात्मनाऽऽधिदैविकेनैकत्वमित्यभिप्रेत्य सप्ताङ्गत्व वचनम् । 'मूर्धा ते व्यपतिष्यत्' (छाउ ५।१२।२) इत्यादिलिङ्गदर्शनाच्च । विराजैकत्वमुपलक्षणार्थे हिरण्यगर्भाव्याकृतात्मनो. । उक्त चैतन्मधुब्राह्मणे — 'यश्चायमस्यां पृथिव्या तेजोमयोऽमृतमय पुरुषो यश्चायमध्यात्मम्' (बृउ २।५।१) इत्यादि । सुषुप्ताव्याकृतयोस्त्वेकत्व सिद्धमेव, निर्विशेषत्वात् । एव च सत्येतत्सिद्ध भविष्यति — सर्वद्वैतोपशमे चाद्वैतमिति ।

शकर.

(२) कानि तेषा स्थानानि, कश्च व्यापार, कीदृशानि तानि रूपाणि, किं तेषां भोग्य, कानि नामानीत्यतस्तत्सर्वं क्रमेण आह — जागरितस्थान इति । यत्र स्थित्वा जागर्ति, तच्चक्षुर्जागरितम् । अधिकरणे क्तप्रत्यय । तदेव स्थान यस्य स जागरितस्थान । चक्षुःस्थान इत्यर्थ. । बहिष्प्रज्ञ. । बहि.शब्दो बाह्यार्थपरः । बाह्यानर्थान् प्रज्ञापयतीति बहिष्प्रज्ञ. । जानातेरन्तर्भावितण्यर्थात् 'इगुपधज्ञाप्रीकिर. क.' (पासू ३।१।१३५) इति कप्रत्यय. । सप्ताङ्ग. । चत्वारो हस्ता, द्वौ पादौ, गजमुखत्वाद्गजहस्त एक इति सप्ताङ्ग. । एकोनविंशतिमुख. । मध्यममुख गजमुखाकार, पार्श्वद्वये तु नव नव मुखानि पुरुषमुखाकाराणीति विवेकः । स्थूलभुग्वैश्वानरः प्रथमः पाद· । स्थूलान् शुभभोगान् भुङ्क्ते इति स्थूलभुक् । वैश्वानर· । विश्यते गम्यते सर्वैर्ज्ञायते इति विशतेः कर्मणि वप्रत्ययः । अनेकार्थत्वाद्धातूना विशतिरत्र गत्यर्थ सन् ज्ञानपर. । विश्व सर्वैर्ज्ञेय स्थूल वस्तूच्यते । भोक्तृतया तत्सबन्धी वैश्व । न रीयते क्षीयते इति नरः । रीङ् क्षये । डा(ड)प्रत्यय । वैश्वश्चासौ नरश्चेति 'नरे सज्ञायाम्' (पासू ६।३।१२९) इति सूत्रेण, भाष्योक्तनिरुक्तिबलाद्वा दीर्घे वैश्वानरः प्रथमः पाद. । आत्मन इति विपरिणामेनात्रोत्तरत्र चानुषङ्गः । सर्वदेहेष्वादानकर्तृत्वेन स्थितस्याऽऽत्मन प्रथम रूपमित्यर्थ. ।

कूरनारायण

[१]स्वप्नस्थानोऽन्त प्रज्ञ सप्ताङ्ग एकोनविंशतिमुख प्रविविक्तभुक्तैजसो द्वितीय पादः ॥

(१) स्वप्नः स्थानमस्य तैजसस्येति स्वप्नस्थानः । जाग्रत्प्रज्ञा अनेकसाधना बहिर्विषयेवावभासमाना मन·स्पन्दनमात्रा सती तथाभूत सस्कार मनस्याधत्ते । तन्मनः तथा सस्कृत चित्रित इव पटो बाह्यसाधनानपेक्षमविद्याकामकर्मभि प्रेर्यमाण जाग्रद्वदवभासते । तथा चोक्तम्—'अस्य लोकस्य सर्वावतो मात्रामपादाय' (बृउ ४।३।९) इत्यादि । तथा 'परे देवे मनस्येकीभवति' इति प्रस्तुत्य 'अत्रैष देवः स्वप्ने महिमानमनुभवति' (प्रउ ४।२,५) इत्याथर्वणे । इन्द्रियापेक्षया अन्त स्थत्वान्मनस तद्वासनारूपा च स्वप्ने प्रज्ञा यस्येति अन्तःप्रज्ञ । विषयशून्याया प्रज्ञाया केवलप्रकाशस्वरूपाया विषयित्वेन भवतीति तैजस. । विश्वस्य सविषयत्वेन प्रज्ञायाः स्थूलाया भोज्यत्व, इह पुन केवला वासनामात्रा प्रज्ञा भोज्येति प्रविविक्तो भोग इति । समानमन्यत् । द्वितीयः पाद तैजस । शकर

(२) स्वप्नस्थान. । यत्र स्थित्वा जीव· स्वाप्नपदार्थान् पश्यति तत्स्वप्नस्थान, तदेव स्थान यस्य स स्वप्नस्थान., कण्ठदेशस्थ इत्यर्थः । अन्तःप्रज्ञ· ।

(१) माउ ४, श्रीकर ३।३।३८

अन्तःशब्दोऽत्र बाह्यार्थज्ञानजन्यवासनापरिणामरूपार्थ-पर । तानन्तः स्थितान् वासनामयानर्थान् प्रज्ञापयति जानाति चेत्यन्त.प्रज्ञ. । प्रज्ञ इति जानाते कः । अत्र स्वाप्निकपदार्थाना जाग्रद्वासनाजन्यत्वोक्तिः प्रायिकत्वाभिप्राया, 'दृष्ट चादृष्ट च श्रुत चाश्रुत चानुभूत चाननुभूत च सर्वं पश्यति' (प्रउ ४।५) इति श्रुतेः । सप्ताङ्ग एकोनविंशतिमुख इति प्राग्वत् । प्रविविक्तभुक् । वासनामयतया बाह्यार्थेभ्यो विविक्तान् स्वप्नार्थान् भुङ्क्ते भोजयति चेति प्रविविक्तभुक् । तेजोमयचित्तस्थतया चित्तसबन्धित्वेन तैजसनामा आत्मनो द्वितीय· पादः द्वितीय रूपमित्यर्थ. ।

कूरनारायण

**यत्र सुप्तो न कंचन कामं कामयते न कचन स्वप्न पश्यति तत्सुषुप्तम् । सुषुप्तस्थान एकीभूत प्रज्ञानघन एवाऽऽनन्दमयो ह्यानन्दभुक्चेतोमुख प्राज्ञस्तृतीय पाद ॥**

(१) दर्शनादर्शनवृत्त्योः तत्त्वाप्रबोधलक्षणस्य स्वापस्य तुल्यत्वात्सुषुप्तग्रहणार्थं यत्र सुप्त इत्यादिविशेषणम् । अथवा, त्रिष्वपि स्थानेषु तत्त्वाप्रतिबोधलक्षणः स्वापोऽविशिष्ट इति पूर्वाभ्यां सुषुप्त विभजते — यत्र यस्मिन् स्थाने काले वा सुप्तो न कचन काम कामयते, न कचन स्वप्न पश्यति । न हि सुषुप्ते पूर्वयोरिवान्यथाग्रहणलक्षण स्वप्नदर्शनं कामो वा कश्चन विद्यते । तदेतत्सुषुप्त स्थानमस्येति सुषुप्तस्थानः । स्थानद्वयप्रविभक्त मनःस्पन्दित द्वैतजात तथा रूपापरित्यागेनाविवेकापन्न नैशतमोग्रस्तमिवाहः सप्रपञ्चमेकीभूतमित्युच्यते । अत एव स्वप्नजाग्रन्मनःस्पन्दनानि प्रज्ञानानि घनीभूतानीव, सेयमवस्था अविवेकरूपत्वात्प्रज्ञानघन उच्यते । यथा रात्रौ नैशेन तमसा अविभज्यमान सर्व घनमिव, तद्वत्प्रज्ञानघन एव । एवशब्दान्न जात्यन्तर प्रज्ञानव्यतिरेकेणास्तीत्यर्थः । मनसो विषयविषय्याकारस्पन्दनायासदुःखाभावात् आनन्दमयः आनन्दप्रायः, नाऽऽनन्द एव, अनात्यन्तिकत्वात् । यथा लोके निरायास· स्थितः सुखी आनन्दभुगुच्यते । अत्यन्तानायासरूपा हीय स्थितिरनेनाऽऽत्मनाऽनुभूयते इत्यानन्दभुक्, 'एषोऽस्य परम आनन्द' (बृउ ४।३।३२) इति श्रुतेः । स्वप्नादिप्रतिबोध चेतः प्रति द्वारीभूतत्वात् चेतोमुखः, बोधलक्षण वा चेतो द्वार मुखमस्य स्वप्नाद्यागमन प्रतीति चेतोमुख· । भूतभविष्यज्ज्ञातृत्व सर्वविषयज्ञातृत्वमस्यैवेति प्राज्ञ । सुषुप्तोऽपि हि भूतपूर्वगत्या प्राज्ञ उच्यते । अथवा, प्रज्ञप्तिमात्रमस्यैव असाधारण रूपमिति प्राज्ञ, इतरयोर्विशिष्टमपि विज्ञानमस्तीति । सोऽय प्राज्ञस्तृतीयः पादः ।

शकर

(२) तृतीयपादस्य स्थान वक्तु स्थानस्वरूप तावदाह — यत्रेति । यत्र देशे सुप्तोऽज्ञानवृतः सुखरूप भगवन्त प्राप्त इति वा, 'प्राज्ञेनाऽऽत्मना सपरिष्वक्त' (बृउ ४।३।२१) इत्यादेः । न कचन कमपि काम काम्यमानमर्थं कामयते, न कचन स्वप्नपदार्थं (न) च पश्यति । उपलक्षणमेतत् । स्वात्मान विना किमपि न पश्यतीत्यर्थ· । तत्स्थान सुषुप्तमित्युच्यते । सुषुप्तमेव स्थान यस्य स सुषुप्तस्थानः । हृत्कर्णिकाग्रस्थ इति यावत् । एकीभूत. वैश्वानरतैजसाभ्या सश्लेषविशेषरूपैकीभाव प्राप्त. । प्रज्ञानघनः । 'अविद्या कर्मसज्ञाऽन्या तृतीया शक्तिरिष्यते । यया क्षेत्रज्ञशक्तिः सा वेष्टिता' इत्युक्तकर्मवेष्टनावृतो जीवो घन इत्युच्यते । [सुषुप्तिवेलायां घन तज्जीवस्वरूप जानाति प्रज्ञापयति च जीवस्येति प्रज्ञानघन. ।] प्रपूर्वादन्तर्णीतण्यर्थात् 'ज्ञा अवबोधने' इति धातो. 'कृत्यल्युटो बहुलम्' (पासू ३।३।११३)इति बहुलग्रहणात्कर्मणि ल्युट्यनादेशे प्रज्ञानः प्रज्ञापितो घनो जीवो येन स प्रज्ञानघन इति विग्रह । यद्वा 'घनप्रज्ञः' इति वक्ष्यमाणत्वादिहापि प्रज्ञानघन इत्यस्य घनप्रज्ञान इति विपरीतसमासो ध्येयः । तथात्वेऽन्तर्णीतण्यर्थात्कर्तरि ल्युट् । * आनन्दमयः आनन्दप्रचुरः, पूर्णानन्द इति यावत् । 'यतो वाचो निवर्तन्ते' (तैउ २।९) इत्यादौ प्रसिद्धमिति हेरर्थ. । आनन्दभुक्, विषय भोगान् विनैव आनन्द भुङ्क्ते भोजयति चेत्यानन्दभुक् । अत्र स्थूलभुक्त्व प्रविविक्तभुक्त्व च नित्यपूर्णानन्दानु-

(१) माउ ५, ब्रह्मकर ४।४।१६, श्रीकर १।१।१२, १।२।११, ३।२।११, ३८, ४।४।४, विज्ञान १।२।११, ३।२।१०

* उपरितन. [ ] इतिचिह्नस्थितो ग्रन्थ अत्र भवितु युक्त. ।

भवरूपस्य क्रीडारूपम् । चेतोमुखः ज्ञानरूपमुख । मुखेत्युपलक्षणम् । ज्ञानरूपसर्वावयव इत्यर्थः । एतदा नन्दमयत्वचेतोमुखत्वरूपविशेषणद्वय प्रागुक्तरूपद्वये नान्त प्रज्ञमिति वक्ष्यमाणचतुर्थरूपे च ध्येयम् । प्राज्ञः, प्रकर्षेण न ज्ञापयतीति प्राज्ञः । जीवस्वरूपकालाज्ञाना-तिरिक्त बाह्य स्वाप्न वा किमपि न ज्ञापयतीति प्राज्ञ नामक इत्यर्थ । प्रपूर्वाज्ज्ञुपपदादन्तर्णीतण्यर्थात् 'आत-श्चोपसर्गे ' ( पासू ३।१।१३६ ) इति कप्रत्यय' । आत्मनस्तृतीयः पादः तृतीय रूपम् ।

कूरनारायण.

( ३ ) किंच, 'सुषुप्तस्थान एकीभूत प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुख प्राज्ञ ' इति माण्डूक्यादौ स्पष्टमेव प्राज्ञस्येश्वरस्य भोग. श्रूयते । न चात्र प्राज्ञशब्देन जीव एवोक्त , सुषुप्तस्थान इति सुषु-प्तावस्थाकथनादिति वाच्यम् । अत्रावस्थानामश्रिन्युप पत्तेर्लक्षणानौचित्यात् , श्रुतिषु जीवाना सुषुप्तावस्थायां प्राज्ञे विलीनत्वादेव प्राज्ञत्ववचनात् ।

माण्डूक्यादौ च तुरीयाख्यात्यन्तलयावस्थापर्यन्त-मवस्थाचतुष्टय परमात्मन्यध्यास्यभेदेनोपासनार्थमुक्तम् । पुरुषसूक्तादिषु चतुष्पात्त्वेन परमेश्वरस्यैवोपासनादर्शनात् ।

१।२।११

' मुग्धेऽर्धसपत्ति परिशेषात् ' --नन्तु सुषुप्तौ जीव-स्यात्यन्त विलये सुषुप्तस्याऽऽनन्दभोगादिश्रुतिरनुपपन्ने-त्याशङ्क्य तस्या अवान्तरभेदमाह--मुग्धे अस्पष्टज्ञाने पुरुषे अर्धसपत्तिरूपा सुषुप्तिर्भवति । यथा सप्रज्ञातास-प्रज्ञातभेदेन योगो द्विविधो भवति, तथा सुषुप्तिरपीति । कुत' । परिशेषात् । मोहो हि न जाग्रत्स्वप्नौ, स्पष्टज्ञाना-भावात् । नापि सर्वसपत्तिरूपा सुषुप्ति., ज्ञानलिङ्गाना सुखदुःखमोहानुस्मृतीना रोमहर्षवेपथुवैकृत्यादीनां च दर्शनात् । अत एव पुनरुत्थानाच्च न मरणम् । अयो-गिना च जीवद्दशायामवस्थात्रयातिरिक्ताऽवस्था नास्तीति बृहदारण्यकसप्तमेऽध्यायेऽवगतम् । अतः परिशेषात् सुषुप्त्यवान्तर एव मोहो ब्रह्मण्यर्धसपत्तिरूप इत्यर्थ. ।

एव च इमामेवार्धसपत्तिरूपा सुषुप्तिमधिकृत्य प्रवृत्ता. ' आनन्दभुक् चेतोमुख' प्राज्ञः' 'जाग्रत्स्वप्न सुषुप्त्यादिप्रपञ्च यत्प्रकाशते' ( कैउ १७ ) इत्यादि-श्रुतयः सुषुप्तावानन्दभोग प्रपञ्च च वदन्ति । तदा प्राज्ञत्व प्राज्ञेऽर्धसपत्त्या बोध्यम् ।

नन्वेव तामस्यामेव मूर्च्छाख्यावस्थाया कथ लोके मोहव्यवहार इति चेत्, 'यत्रायमात्माऽबल्य न्येत्य समोहमिव न्येति ' ( बृउ ४।४।१ ) इत्यादिश्रुतिषु मरणादिकालीनाया तामस्यवस्थाया प्रयोगबाहुल्यादिति ।

विज्ञान ३।२।१०

विज्ञेय तुरीय आत्मा

**एष सर्वेश्वर' । एष सर्वज्ञ' । एषोऽन्तर्यामी । एष योनि सर्वस्य । प्रभवाप्ययौ हि भूतानाम् ॥**

(१) एष हि स्वरूपावस्थ' सर्वेश्वरः साधिदैविकस्य भेदजातस्य सर्वस्य ईश्वर. ईशिता, नैतस्माज्जात्यन्तर-भूतोऽन्येषामिव, ' प्राणबन्धन हि सोम्य मन ' (छाउ. ६।८।२ ) इति श्रुते. । अयमेव हि सर्वस्य सर्वभेदा-वस्थो ज्ञातेति एष सर्वज्ञः । अत एव एषः अन्तर्यामी, अन्तरनुप्रविश्य सर्वेषा भूताना यमयिता नियन्ताप्येष एव । अत एव यथोक्त सभेद जगत्प्रसूयते इति एषः योनि. सर्वस्य । यत एव, प्रभवश्चाप्ययश्च प्रभवाप्ययौ हि भूतानामेष एव । शाकर.

( २ ) एव रूपत्रय निरूप्य चतुर्थ पाद नान्त'प्रज्ञ-मित्यादिना निरूपयिष्यन् वैश्वानरादिरूपाणामुक्तस्थान-व्यापाराद्यर्थेषु श्लोकान् विवक्षुर्मध्ये वक्ष्यमाणचतुर्थ-रूपेण सह चतुर्णां रूपाणा महिमानमाह--एष सर्वेश्वर इति । एष उक्तवक्ष्यमाणचतूरूपात्मा । एष इत्यस्या-भ्यासस्तात्पर्यार्थ । अन्तर्याम्यन्तर्नियन्ता । सर्वस्य योनिः कारणमित्यस्य विवरण प्रभवाप्ययौ हि भूताना-मिति । हि यस्मात्प्रभवाप्ययहेतुरत इत्यर्थ. ।

* कूरनारायण.

---

* अत पर आगमप्रकरणस्था गौडपादीया कारिकाः ' अत्रैते श्लोका भवन्ति ' इत्यवतरणसहिता उपनिषदक्ष-राण्येवेति मत्वा एवमवतारिता — ' उपनिषत् स्वयं प्रमाणमपि दार्ढ्याय स्वोक्तार्थे मन्त्रानुदाहरति — अत्रैते श्लोका भवन्ति । सवादिन इति शेष ' इति । प्रथमश्लोकगत ' स्मृत ' इति पद च ' मन्त्रद्रष्ट्रा ब्रह्मणा भगवद्रूपाणामेतेषामेकत्व स्मृतमित्यर्थ ' इति

(१) माउ ६, श्रीकर ३।३।३८

नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम् । अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते । स आत्मा । स विज्ञेयः ॥

(१) चतुर्थः पादः क्रमप्राप्तो वक्तव्य इत्याह — नान्तःप्रज्ञमित्यादिना । सर्वशब्दप्रवृत्तिनिमित्तशून्यत्वात्तस्य शब्दानभिधेयत्वमिति विशेषप्रतिषेधेनैव तुरीयं निर्दिदिक्षति । शून्यमेव तर्हि तत् । न । मिथ्याविकल्पस्य निर्निमित्तत्वानुपपत्तेः ।

सोऽयमात्मा परमार्थापरमार्थरूपश्चतुष्पादित्युक्तः । तस्यापरमार्थरूपमविद्याकृतं रज्जुसर्पादिसममुक्तं पादत्रयलक्षणं बीजाङ्कुरस्थानीयम् । अथेदानीमबीजात्मकं परमार्थस्वरूपं रज्जुस्थानीयं सर्पादिस्थानीयोक्तस्थानत्रयनिराकरणेनाऽऽह — नान्तःप्रज्ञमित्यादिना । नन्वात्मनश्चतुष्पात्त्वं प्रतिज्ञाय पादत्रयकथनेनैव चतुर्थस्यान्तःप्रज्ञादिभ्योऽन्यत्वे सिद्धे 'नान्तःप्रज्ञम्' इत्यादिप्रतिषेधोऽनर्थकः । न । सर्पादिविकल्पप्रतिषेधेनैव रज्जुस्वरूपप्रतिपत्तिवत् त्र्यवस्थस्यैवाऽऽत्मनस्तुरीयत्वेन प्रतिपिपादयिषितत्वात् 'तत्त्वमसि' इतिवत् ।

व्याख्यातम् । रामानुजाचार्या अपि १।१।१ (पृ १०२) इत्यत्र ब्रह्मसूत्रभाष्ये श्रूयतेपदान्वयसंभवात् प्रमाणत्वेनोदाहरणाच्च कारिकाणां श्रुतित्वमभिप्रयन्तीति प्रतिभाति । मध्वाचार्यास्तु स्पष्टं श्रुतित्वेन निरदिक्षन् २।१।३४ इति ब्रह्मसूत्रभाष्ये नृसिंहपूर्वतापनीयशांकर(?)भाष्येऽपि कारिकाणामुपनिषदवयवत्वं स्पष्टमभिहितम् । तथाऽपि २।१।९ इतिब्रह्मसूत्रशांकरभाष्यगतात् 'अनादिमायया सुप्त' इतिप्रथमप्रकरणीयकारिकावतरणरूपात् 'अत्रोक्तं वेदान्तार्थसंप्रदायविद्भिराचार्यैः' इतिवाक्यात् अश्रुतित्वं प्रतिपद्यमानैरस्माभिस्तासामत्र संग्रहो न कृतः ।

(१) माउ ७, कूरनारायण बहि प्रज्ञ (बहिष्प्रज्ञं) मेकात्म (मैकात्म्य), श्रीकर १।१।१ (पृ १६, २७), १।१।२ (पृ ३६), १।१।३ (पृ. ४०), १।१।११, १।२।१, ३, ९, १३, १।३।१, २।१।४, २।२।३७, ४२ (पृ २४०, २४६), २।३।१८, ३।३।१५, २३, ३८, ३९, ४।१।३, ४।३।१६, ४।४।६, १३, २०, २२, विज्ञान ३।२।१२ (शान्त०)

नान्तःप्रज्ञमिति तैजसप्रतिषेधः । नबहिःप्रज्ञमिति विश्वप्रतिषेधः । नोभयतःप्रज्ञमिति जागरितस्वप्नयोरन्तरालावस्थाप्रतिषेधः । नप्रज्ञानघनमिति सुषुप्तावस्थाप्रतिषेधः, बीजभावाविवेकस्वरूपत्वात् । नप्रज्ञमिति युगपत्सर्वविषयज्ञातृत्वप्रतिषेधः । नाप्रज्ञमित्यचैतन्यप्रतिषेधः ।

अत एव अदृष्टम् । यस्माददृष्टं तस्मादव्यवहार्यम् । अग्राह्यं कर्मेन्द्रियैः । अलक्षणम् अलिङ्गमित्येतत्, अननुमेयमित्यर्थः । अत एव अचिन्त्यम् । अत एव अव्यपदेश्यं शब्दैः । एकात्मप्रत्ययसारं, जाग्रदादिस्थानेषु एक एवायमात्मा इत्यव्यभिचारी यः प्रत्ययः, तेनानुसरणीयम् । अथवा, एक आत्मप्रत्ययः सारः प्रमाणं यस्य तुरीयस्याधिगमे, तत्तुरीयमेकात्मप्रत्ययसारं, 'आत्मेत्येवोपासीत' इति श्रुतेः । अन्तःप्रज्ञत्वादिस्थानिधर्मप्रतिषेधः कृतः । प्रपञ्चोपशममिति जाग्रदादिस्थानधर्माभाव उच्यते । अत एव शान्तम् अविक्रियं शिवम् । यतः अद्वैतं भेदविकल्परहितं, चतुर्थं तुरीयं मन्यन्ते, प्रतीयमानपादत्रयरूपवैलक्षण्यात् । स आत्मा स विज्ञेयः इति । प्रतीयमानसर्पदण्डभूच्छिद्रादिव्यतिरिक्ता यथा रज्जुः, तथा 'तत्त्वमसि' इत्यादिवाक्यार्थः आत्मा 'अदृष्टो द्रष्टा' 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इत्यादिभिरुक्तो यः, स विज्ञेय इति भूतपूर्वगत्या । ज्ञाते द्वैताभावः । शांकर.

(२) चतुर्थपादमात्मन आह — नान्तःप्रज्ञमिति । अन्तः प्रज्ञापयतीत्यन्तःप्रज्ञः स्वप्नार्थप्रदर्शकः, स नेत्यर्थः । नबहिष्प्रज्ञः जाग्रदर्थप्रदर्शको न भवति । नोभयतःप्रज्ञम् । बाह्यशब्दादिकं जानन् स्वप्नार्थांश्च यदा पश्यति साऽपि काचिद्दशोभयत इत्यनेन गृह्यते । उभयतो बाह्याभ्यन्तररूपार्थान् प्रज्ञापयतीत्युभयतःप्रज्ञम् । स नेति नोभयतःप्रज्ञम् । एतद्दशाव्यापारो विश्वतैजसाख्येश्वररूपद्वयकर्तृको ज्ञेयः । सोऽपि तुर्ये नास्तीत्यर्थः । नप्रज्ञानघनम् । प्राग्वद्विपरीतसमासः कर्तव्यो घनप्रज्ञानमिति । घनम् अज्ञानावृतं सुप्तजीवस्वरूपं प्रज्ञापयतीति घनप्रज्ञानं, तन्न भवतीति नप्रज्ञानघनमित्युच्यते । नप्रज्ञम् । प्रकर्षेण ज्ञापयति मानसवासनामयं ध्येयमिति प्रज्ञं, तन्नेति । अयमपि स्वाप्निकव्यापारतुल्यतया तैजसाख्यभगवद्रूपव्यापारो द्रष्टव्यः । सोऽपि

तुर्ये नेत्यर्थ । इदमुपलक्षण जाग्रत्कालीननिर्विषयकेवला त्मस्फुरणरूपजडीभावाख्यावस्थानस्यापि । इदमपि सुषु प्तिव्यापारतुल्यतया प्राज्ञाख्यभगवद्व्यापारो ज्ञेय । सोऽपि तुर्ये नास्तीति ध्येयम् । एव विश्वतैजसप्राज्ञा-ख्यरूपत्रयव्यापारान् बाह्याभ्यन्तरपदार्थस्वरूपज्ञापनसुप्त स्वरूपज्ञापनरूपान् किंचिद्बाह्यकिंचित्स्वाप्नोभयरूपव्या-पार समाधिस्थनिरन्तरज्ञानसतत्युत्पादनरूपव्यापार जडी-भावरूपव्यापार चाकुर्वदित्यर्थ. । ( 'नोभयत.प्रज्ञ न-प्रज्ञम्' इत्यत्र किं रूपकर्तृक व्यापारद्वयमस्य नेत्युच्यते तद्विचारणीयम् ? ) तद्धि किं निर्व्यापारमेव चतुर्थ रूप, नेत्याह — नाप्रज्ञमिति । अप्रज्ञापक नेति नाप्रज्ञ, प्रज्ञापकमेव । मुक्ताना तद्योग्यसर्वज्ञानप्रदानरूपव्यापार कर्तृ इत्यर्थ. । अदृष्ट, विश्वादिरूपत्रय बाह्याभ्यन्तरपदार्थ ज्ञापनतद्व्यवहाररूपकार्यलिङ्गेनानुमेय, न तथा चतुर्थ रूप दृश्यमित्यदृष्टमिति वा, अमुक्तदृष्टयगोचरत्वाद्वाऽदृ-ष्टमित्यर्थ । अव्यवहार्यमग्राह्यमिति । मुक्ति विना तद्रूप विषयकग्रहणव्यवहारयोरभावादव्यवहार्यमग्राह्यमित्युच्यते। अलक्षण, लक्षणमनुमापक, जाग्रदादिप्रवृत्तिरूपानुमापक-राहित्यादलक्षणम् । अत एवाचिन्त्यम् । अचिन्त्यत्वा-देवाव्यपदेश्य व्यपदेष्टुमशक्यम् । ऐकात्म्यप्रत्ययसारम् । एक प्रधान. आत्मा पूर्ण । एकश्चासावात्मा च एकात्मा । एकात्मैवैकात्म्यम् । स्वार्थे ष्यञ्प्रत्यय । ज्ञानरूप सार आनन्दरूप. यस्येति ऐकात्म्यप्रत्ययसा-रम् । प्रपञ्चोपशमम् । पचि विस्तारे । प्रपञ्चो विस्तृतो व्याप्त इति यावत् । उपशब्दोऽत्रोत्कृष्टवाची । शम सुख उत्कृष्टानन्दरूपम् । प्रपञ्चश्चासावुपशमश्च प्रपञ्चो-पशमः, तम् । ('ऐकात्म्यदेहबन्धानिष्ट प्रपञ्च शमयतीति प्रपञ्चोपशममिति ? ) शान्त ऊर्मिषट्करहितम् । निर्दु. खसुखरूपत्वाच्छिवम् । अद्वैतम् । द्वीतिभावप्रधानम् । द्वित्वेन वस्तुतत्त्वापेक्षयाऽन्यात्मकरूपद्वितीयेन प्रकारेणेत ज्ञात वस्तु द्वीतम् । इण् गतौ । द्वीतस्येद द्वैत मिथ्या ज्ञानम् । न विद्यते मिथ्याज्ञान यस्मात्तदद्वैत अहमम तादिमिथ्याध्यवसायनिवर्तकम् । एतादृशमात्मनश्चतुर्थ पाद मन्यन्ते औपनिषदा इत्यर्थ । सोऽयमात्मा चतु ष्पादिति प्रतिज्ञात विश्वतैजसप्राज्ञतुरीयाख्यरूपचतुष्टय सपरिकर निरूप्य रूपत्रयविषये मन्त्रानुदाहृत्य चतुर्थ विषये मन्त्रानुदाहरिष्यन्निदानीं चतूरूप आत्माऽवश्य ज्ञातव्य इति वदन्नुपसहरति — स आत्मेति । य इति शेषः । स चतूरूपो विविधतया चतुर्विधतया विशेषेण च मुमुक्षुभिर्ज्ञेय इत्यर्थ. ।

कूरनारायण.

( ३ ) उपक्रमोपसहारयोरेकार्थप्रतिपादकत्वादुपक्रान्त-ब्रह्मणः उपसहारगताद्वैतशिवस्य चाभिन्नत्वोपदेशात् जगज्जन्मादिकारणत्व तस्यैव सिद्धम् । १।१।१

'प्रपञ्चोपशम शान्त शिवमद्वैत चतुर्थ मन्यते' इत्यादिना शिवस्यैव परमशान्तत्वोपदेशात् केवलतामस-प्रतिपादकवाक्यानां कालरुद्रपरत्वमेव । कालरुद्रस्यापि शिवांशत्वेन विष्णोरधिकत्व वेदशास्त्रेषु प्रसिद्धम् । १।१।२

'शिवमद्वैत चतुर्थ मन्यन्ते' इति माण्डूक्ये जीव-न्मुक्ताकारोकारमकारात्मकब्रह्मविष्णुकालरुद्रेभ्य परत्व महेश्वरसाम्यसत्त्वेऽपि तस्योपदेशात् मुक्ताना सत्यसक-ल्पत्व परमपुरुषमहेश्वरसाम्यसत्त्वेऽपि जगद्व्यापारवर्जम-विरोधम् ।

श्रीकर ४।४।२०

( ४ ) 'न भेदादिति चेन्न प्रत्येकमतद्वचनात्' —ननु परस्य नोभयलिङ्गत्वाभावो घटते, ब्रह्मण्यपि जाग्रदाद्यवस्थाभिर्नानाज्ञानरूपलिङ्गभेदश्रवणात् । यथा माण्डूक्ये चतुष्पाद्ब्रह्मकथने जागरितस्थानो वैश्वानरः प्रथमः पाद., स्वप्नस्थानस्तैजसो द्वितीय. पाद , सुषुप्त-स्थान. प्राज्ञस्तृतीय पाद इति । इति चेन्न, प्रत्येकम-तद्वचनात् वाक्यशेषेण प्रत्येक तत्तदवस्थावदन्यत्ववच-नात् । यथा 'नान्तःप्रज्ञ नबहि.प्रज्ञ०' इत्यनेन । अत्र नान्तःप्रज्ञमित्यनेन स्वप्नावस्थाप्रतिषेधः । बहिः-प्रज्ञत्वाभावेन जागरितावस्थानिषेध. उभयतः प्रज्ञत्वा-भावेन मोहावस्थानिषेधः । नप्रज्ञानघनमित्यनेनेच्छा-कृत्यानन्दसभेदाज्जीवस्वरूपतो व्यावृत्तिरुक्ता । जीवा हि मोक्षादावौपाधिकधर्मनिवृत्त्या चिन्मात्रेण शिष्यन्ते । अथवा पूर्ववाक्ये प्रसक्तस्य विज्ञानघनत्वेन ज्ञान-व्यक्तिभेदस्य अनेन प्रतिषेधः । नप्रज्ञमित्यनेन चैतन्याश्रयत्व प्रतिषिद्धम् । नाप्रज्ञमित्यनेन च सुषुप्त-मरणाद्यवस्थाः प्रतिषिद्धा इति । अतो न ब्रह्मणोऽ-

वस्थाभिरुभयलिङ्गत्वमित्यर्थ । ब्रह्मणो जाग्रदाद्यवस्थावचन वा अशाशिनोरभेदेन जीवावस्थाभिर्बोध्यम् ।

विज्ञान. ३।२।१२

उपास्या प्रणवाशरूपता प्रणवरूपता च आत्मन सोपाधिकस्य निरुपाधिकस्य च क्रमेण

**सोऽयमात्माऽध्यक्षरमोंकार । अधिमात्र पादा मात्रा मात्राश्च पादा अकार उकारो मकार इति ॥**

( १ ) अभिधेयप्राधान्येन ओंकारश्चतुष्पादात्मेति व्याख्यातो य, सोऽय आत्मा अध्यक्षर अक्षरमधिकृत्य अभिधानप्राधान्येन वर्ण्यमानोऽध्यक्षरम् । किं पुनस्तदक्षरमित्याह—ओंकार' । सोऽयमोंकार पादशः प्रविभज्यमानः अधिमात्र मात्रामधिकृत्य वर्तते इत्यधिमात्रम् । कथम् ? आत्मनो ये' पादा., ते ओंकारस्य मात्रा' । कास्ता ? अकार उकारो मकार इति ।

शकर

( २ ) एव समग्रोंकारप्रतिपाद्यस्याऽऽत्मनो विश्वादिरूपचतुष्टय निरूप्य तेषा रूपाणामकारादिप्रणवाश प्रतिपाद्यत्वादिमाहात्म्य वक्तुमुक्तमनुवदति — सोऽयमिति । ओमित्याक्रियमाणतयोंकारशब्दित सोऽय चतुरात्मकत्वेनोक्त आत्मा अध्यक्षर सर्वतोऽधिक च तदक्षरमविनाशि चेत्यध्यक्षरम् । शब्दस्वाभाव्यान्नपुसकता । कीदृशमक्षरमित्यत आह — अधिमात्रमिति । अधिका मात्रा अशा यस्य तदक्षरमधिमात्रम् । मात्रा. का इत्यत आह—पादा मात्रा इति । पद्यन्ते इति पादा विश्वादिरूपाणि । पादाः के इत्यतोऽकारादिप्रतिपाद्या विश्वादय इत्याह — अकार इति । अ इत्याक्रियते आहूयते प्रतिपाद्यते इत्यकारो विश्वः । एवमुक्तदिशा उकारस्तैजसः, मकार प्राज्ञः । उपलक्षणमिदम् । नादबोध्यस्तुरीयोऽपि नाद इति शेषोक्त्या ग्राह्य' । एते विश्वतैजसप्राज्ञतुरीयाः पादा मात्राशब्देनाधिमात्रमित्यत्रोक्ता इत्यर्थः ।

कूरनारायण.

**जागरितस्थानो वैश्वानरोऽकार' प्रथमा मात्राऽऽप्तेरादिमत्त्वाद्वा । आप्नोति ह वै सर्वान् कामानादिश्च भवति य एव वेद ॥**

(१) माड ८ , श्रीकर ३।३।३८
(२) माड ९ , श्रीकर ३।३।३८

( १ ) तत्र विशेषनियम' क्रियते—जागरितस्थानः वैश्वानर यः, स ओंकारस्य अकार' प्रथमा मात्रा । केन सामान्येनेत्याह—आप्तेः । आप्तिर्व्याप्ति' । अकारेण सर्वा वाग्व्याप्ता, 'अकारो वै सर्वा वाक्' इति श्रुते । तथा वैश्वानरेण जगत्, 'तस्य ह वा एतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजा' इत्यादिश्रुते । अभिधानाभिधेययोरेकत्व चावोचाम । आदिरस्य विद्यते इत्यादिमत् । यथैव आदिमदकाराख्यमक्षर, तथा वैश्वानरः । तस्माद्वा सामान्यादकारत्व वैश्वानरस्य । तदेकत्वविद' फलमाह—आप्नोति ह वै सर्वान् कामान्, आदिः प्रथमश्च भवति महता, य एव वेद, यथोक्तमेकत्व वेदेत्यर्थ. ।

शकर.

( २ ) अवर्णप्रतिपाद्य रूप स्थानोक्त्या निर्दिशति —जागरितेति । अकार. अ इत्याक्रियमाण प्रथमा मात्रा प्रणवप्रतिपाद्यस्याक्षरस्य प्रथमाश इत्यर्थ. । अत्र जागरितस्थानः प्रथमा मात्रा वैश्वानर इत्यवर्णप्रतिपाद्यत्व विधीयते इति न पौनरुक्त्यमिति ध्येयम् । एवमग्रेऽपि । वैश्वानरस्यावर्णवाच्यत्वे निमित्तद्वयमाह —आप्तेरादिमत्त्वाद्वेति । तत्तज्जीवयोग्यभोग्यविषयान् भोगायाऽऽपयति प्रापयति विश्व इति अ इत्युच्यते विश्व इति । आप्लृ व्याप्तौ । अन्तर्णीतण्यर्थात् डप्रत्यये अ इति रूपमिति भाव । प्राज्ञस्तैजसश्च आदी अस्येति आदिमान् । तस्माद्वा अ इत्युच्यते इत्यर्थ. । सुषुप्तौ स्वप्ने च प्राज्ञतैजसाभ्यामेकीभूतो विश्व. सुप्तेरुत्थाने प्राज्ञात्स्वप्नादुत्थाने च तैजसाद्विविक्त. सन् दक्षिणाक्षिस्थानमायातीति तयोरादितया विश्वस्य तदादिमत्त्वमिति भाव. । एतन्निमित्तद्वययुक्तत्वेनावर्णवाच्यत्व विश्वस्य जानतः फलमाह—आप्नोति ह वा इति । योऽधिकारी एवमकारवाच्यत्व विश्वस्य वेद, सोऽस्येति शेषः । स वैश्वानरोऽस्य वेदितु सर्वान् स्वयोग्यसर्वान् कामानाप्नोति प्रापयति । अन्तर्णीतणिच् । आदिश्च विश्व एवं वेदितुरादिश्च भवति । आविर्भूतस्वरूपतया मुक्तरूपेण तत उत्पद्यते तज्ज्ञानीति तस्यायमादिः कारण भवतीत्यर्थ । यद्वा, आदिश्चेत्यत्रैवास्येति शेषः । आप्नोतीत्यत्र तु स ज्ञानीति शेषो ध्येयः ।

कूरनारायण.

**स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रोत्कर्षादुभयत्वाद्वा । उत्कर्षति ह वै ज्ञानसततिम् । समानश्च भवति । नास्याब्रह्मवित्कुले भवति य एव वेद ॥**

(१) स्वप्नस्थान तैजस यः, स ओंकारस्य उकार द्वितीया मात्रा । केन सामान्येनेत्याह— उत्कर्षात् । अकारादुत्कृष्ट इव ह्युकार. । तथा तैजसो विश्वात् । उभयत्वाद्वा । अकारमकारयोर्मध्यस्थ उकार' । तथा विश्वप्राज्ञयोर्मध्ये तैजसः । अत उभयभाक्त्वसामान्यात् । विद्वत्फलमुच्यते— उत्कर्षति ह वै ज्ञानसततिं, विज्ञानसततिं वर्धयतीत्यर्थ. । समान. तुल्यश्च, मित्रपक्षस्येव शत्रुपक्षाणामप्यप्रद्वेष्यो भवति । अब्रह्मविच्च अस्य कुले न भवति, य एव वेद । शकर

(२) अथ द्वितीयपादमाह—स्वप्नस्थानो द्वितीया मात्रा आत्मनो द्वितीयाशस्तैजस उ इत्याक्रियमाणत्वादुकार इत्युक्त. । उवर्णवाच्यत्वे निमित्तद्वयमाह—उत्कर्षादुभयत्वाद्वेति । जाग्रद्दशाया विद्यमानदेहाभिमानात् अत्याज्य देहाभिमान त्याजयित्वा स्वप्नमण्डले जीव कर्षतीत्युकर्षणाद्धेतोर्वा बाह्याशसिरूपनिद्रा वासनामयविषयानुभव च प्रयच्छतीत्युभयहेतुत्वाद्वा निमित्तादु इत्युच्यते तैजस इत्यर्थ । तथा वेदितुः फलमाह — उत्कर्षति ह वा इति । योऽधिकारी एव निमित्तद्वययुक्ततयोकारवाच्य तैजस वेद, स ज्ञानी ज्ञानसततिं ज्ञानधारा ज्ञाननित्यत्वमिति यावत्, प्राप्नोतीत्यनुषङ्ग. । उत्कर्षति देहबन्धा दात्मानमुत्कर्षति उद्धरति । उत्कृष्य च समानश्च 'मानमन्तर्गति' ' इति स्मृत्युक्तेर्मानसहित. समान' सर्वमोक्षिणामन्तर्गतो मध्यगतो भवतीत्यर्थः । दोषाभावात्प्रीत्या चेति भावः । अस्य ज्ञानिनः कुलेऽब्रह्मविन्न भवति, ब्रह्मज्ञानिसततिरेव भवतीत्यर्थ ।

कूरनारायण

**सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा मितेरपीतेर्वा । मिनोति ह वा इदं सर्वमपीतिश्च भवति य एव वेद ॥**

(१) माड १०, रामानुज १।२।१५, श्रीकर ३।३।३८
(२) माड ११, श्रीकर ३।३।३८

(१) सुषुप्तस्थानः प्राज्ञः यः, स ओंकारस्य मकारः तृतीया मात्रा । केन सामान्येनेत्याह— सामान्यमिदमत्र — मितेः । मितिर्मानम् । मीयेते इव हि विश्वतैजसौ प्राज्ञेन प्रलयोत्पत्त्योः प्रवेशनिर्गमाभ्यां प्रस्थेनेव यवाः । तथा ओंकारसमाप्तौ पुनः प्रयोगे च प्रविश्य निर्गच्छत इव अकारोकारौ मकारे । अपीतेर्वा । अपीतिरप्यय एकीभाव. । ओंकारोच्चारणे हि अन्त्येऽक्षरे एकीभूताविव अकारोकारौ । तथा विश्वतैजसौ सुषुप्तकाले प्राज्ञे । अतो वा सामान्यादेकत्व प्राज्ञमकारयो. । विद्वत्फलमाह — मिनोति ह वै इद सर्वं, जगद्याथात्म्य जानातीत्यर्थ. । अपीतिश्च जगत्कारणात्मा च भवतीत्यर्थ । अत्रावान्तरफलवचन प्रधानसाधनस्तुत्यर्थम् । शकर.

(२) कस्तृतीय' पादः, कथमस्य मकारत्व, किं च तज्ज्ञानिन फलमित्यतस्तत्सर्वं क्रमादाह — सुषुप्तस्थान इति । सुषुप्तस्थानः तृतीया मात्रा आत्मनस्तृतीयोंऽशः मकारः म इत्याक्रियमाणः । कुतः । मितेरपीतेर्वा । स्वात्मनि जीवमन्तर्गमयतीति स्वान्तर्गमनहेतोर्वा वृत्तिज्ञानस्यापीतेरप्ययशब्दितलयकारणाद्वा म इत्याक्रियते इत्यर्थ । योऽधिकारी एव निमित्तद्वययुक्तत्वेन मकारवाच्य प्राज्ञं वेद, स ज्ञानीद सर्वं यथायोग्य जगन्मिनोति स्वान्तर्गमयति । जीवानामणुत्वेऽपि अधिकारिणः सूर्यादेरिव प्रकाशतो व्याप्तिरस्तीति तन्मध्येऽन्तर्गमयति मुक्तः सन्निति भाव' । अपीतिश्च भवति अप्ययकृच्च भवति दुःखाद्यनिष्टस्येत्यर्थः । कूरनारायण.

**अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशम' शिवोऽद्वैतः । एवमोंकार आत्मैव । सविशत्यात्मनाऽऽत्मान य एव वेद ॥**

(१) अमात्र. मात्रा यस्य न सन्ति, सः अमात्रः ओंकार चतुर्थः तुरीयः आत्मैव केवल अभिधानाभिधेयरूपयोर्वाङ्मनसयोः क्षीणत्वादव्यवहार्य' प्रपञ्चोपशमः शिव. अद्वैत सवृत्तः । एव यथोक्तविज्ञानवता प्रयुक्त ओंकारस्त्रिमात्रस्त्रिपात् आत्मैव । सविशति आत्मना

(१) माड १२, श्रीकर १।१।२ (पृ ३६), १।१।११, १।२।२, १३, १।३।४०, २।२।४२, २।३।४२, ३।३।३८

स्वेनैव स्व पारमार्थिकमात्मान, य एव वेद । परमार्थ दर्शनात् ब्रह्मवित् तृतीय बीजभाव दग्ध्वा आत्मान प्रविष्ट इति न पुनर्जायते, तुरीयस्याबीजत्वात् । न हि रज्जुसर्पयोर्विवेके रज्ज्वां प्रविष्टः सर्पः बुद्धिसस्कारात्पुन· पूर्ववत्तद्विवेकिनामुत्थास्यति । मन्दमध्यमधियां तु प्रति पन्नसाधकभावानां सन्मार्गगामिना सन्यासिना मात्राणा पादानां च क्लृप्तसामान्यविदां यथावदुपास्यमान ओंकारो ब्रह्मप्रतिपत्तये आलम्बनीभवति तथा च वक्ष्यति— ' आश्रमास्त्रिविधा· ' इत्यादि ।

शकर

( २ ) नान्त.प्रज्ञमित्यादिनोक्ततुरीयगुणानुवादपूर्वं तुरीयस्य नादप्रतिपाद्यत्वमाह — अमात्र इति । अमात्रोऽव्यवहार्य प्रपञ्चोपशम शिवोऽद्वैतश्चतुर्थ इत्यनुवाद । ओंकार. । प्रणवैकदेशनादप्रतिपाद्यत्व विवक्षितम् । अमात्र इत्यादिपदानां प्रागुक्तरीत्याऽर्थो बोध्य. । अदृष्टमव्यवहार्यमित्यादिना प्रागुक्तस्याव्यवहार्यत्वादे· पुनरत्रानुवादोऽव्यवहार्यत्वादिकमुपासकेऽपि सम मुक्ताविति प्रदर्शनायेति ज्ञेयम् । यथा विश्वादीनामकारादिवाच्यत्व, एवमोंकारैकदेशनादवाच्यत्वं तुरीयस्येत्यर्थः । नादप्रतिपाद्यत्वेन तुरीयोपासकस्य फलमाह—आत्मेति । योऽधिकार्येवममात्रत्वाव्यवहार्यत्वादिना ओंकार ओंकारैकदेशनादप्रतिपाद्य वेद जानाति, स आत्मैव सन्, शुद्धस्वरूप एव सन्, देहगेहादावन्यत्र ममताद्यभिमानत्यागी भूत्वेति यावत् । आत्मना परमात्मना, तत्प्रसादेनेति यावत् । आत्मान नादबोध्य तुरीयात्मान सविशति प्रविशति । प्रविश्य बहिरन्तः स्वेच्छया स्वयोग्यभोग्यान् भुञ्जान. सुखमास्ते इति भाव ।

कूरनारायण.

# माण्डूक्योपनिषत्समाप्ता ।



# परिशिष्टम्

## मन्त्रब्राह्मणोपनिषत्

**पृ ३२ अग्नि —** शब्रा १०।५।४।१ 'अय वाव लोक एषोऽग्निश्चित ' इत्यादि ।

'परेण च शब्दस्य ताद्विध्य भूयस्त्वात्त्वनुबन्धः' —परस्तादपि 'अय वाव लोक एषोऽग्निश्चितः' इत्यस्मिन्ननन्तरे ब्राह्मणे ताद्विध्य केवलविद्याविधित्व शब्दस्य प्रयोजन लक्ष्यते न शुद्धकर्माङ्गविधित्वम् । तत्र हि— 'विद्यया तदारोहन्ति यत्र कामाः परागता' । न तत्र दक्षिणायन्ति नाविद्वासस्तपस्विन. ॥' इत्यनेन श्लोकेन केवल कर्म निन्दन् विद्या च प्रशसन्निद गमयति । तथा पुरस्तादपि 'यदेतन्मण्डल तपति' इत्यस्मिन्ब्राह्मणे विद्याप्रधानत्वमेव लक्ष्यते 'सोऽमृतो भवति मृत्युर्ह्यस्यात्मा भवति' इति विद्याफलेनैवोपसहारान्न कर्मप्रधानता तत्सामान्यादिहापि तथात्वम् । भूयासस्त्वग्न्यवयवा सपादयितव्या विद्यायामित्येतस्मात्कारणादग्निनाऽनुबध्यते विद्या न कर्माङ्गत्वात् । तस्मान्मनश्चिदादीना केवलविद्यात्मकत्वसिद्धिः ।

ब्रशकर ३।३।५२

**पृ. २३१ परमात्मा—** ऋस १०।९०।३ 'एतावानस्य' इत्यादि ।

'मन्त्रवर्णाच्च' — मन्त्रवर्णश्चैतमर्थमवगमयति — 'तावानस्य महिमा । ततो ज्यायाश्च पूरुष. । पादोऽस्य सर्वा भूतानि । त्रिपादस्यामृत दिवि' इति । अत्र भूतशब्देन जीवप्रधानानि स्थावरजङ्गमानि निर्दिशति, 'अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्य.' इति प्रयोगात् । अश पादो भाग इत्यनर्थान्तरम् । तस्मादप्यशत्वावगमः ।

ब्रशकर २।३।४४

**पृ. २७४ सृष्टि *।**

एत इति वै प्रजापतिर्देवानसृजत । असृग्रमिति मनुष्यान् । इन्दव इति पितॄन् । तिर पवित्र इति ग्रहान् । आशव इति स्तोत्रम् । विश्वानीति शस्त्रम् । अभिसौभगेत्यन्या प्रजाः ॥ (ताब्रा. ६।९।१५)

एत इत्यनेन पदेन प्रथमेन बुद्धिस्थेन सृष्ट्यादौ प्रजापति. पूर्वसृष्ट्यनुरूप्येण देवानसृजत । तथा असृग्रमितिपदेन मनुष्यान् । इन्दव इति पितॄन् । एतेषा पदाना देवादिसृष्ट्यनुकूलत्व उत्तरस्मिन् ब्राह्मणे वक्ष्याम । तिरःपवित्रमिति पदेन ग्रहानसृजत । तिर -पवित्रेण शोधितेन रसेन ग्रहा गृह्यन्ते अत एतदिह सृष्ट्यनुकूलम् । आशव इतिपदेन स्तोत्रमसृजत । अश्नुवते व्याप्नुवन्ति स्तुत्या देवानिति स्तोत्राण्याशव' । तथा विश्वानीत्यनेन शस्त्रमसृजत । विशन्ति देवाना हृदयानीति विश्वानि शस्त्राणि । अभिसौभगेत्यन्याः प्रजा असृजत । सौभगानि धनानि अभि उद्दिश्येति देवमनुष्यादीना भोगभूता अन्या गोविलक्षणाः प्रजा असृजत ।

तासा. ६।९।१५

'शब्द इति चेन्नात. प्रभवात्प्रत्यक्षानुमानाभ्याम्' —मा नाम विग्रहवत्त्वे देवादीनामभ्युपगम्यमाने कर्मणि कश्चिद्विरोधः प्रसञ्जि । शब्दे तु विरोधः प्रसज्येत । कथम् । औत्पत्तिक हि शब्दस्यार्थेन सबन्धमाश्रित्य 'अनपेक्षत्वात्' इति वेदस्य प्रामाण्य स्थापितम् । इदानीं तु विग्रहवती देवताऽभ्युपगम्यमाना यद्यप्यैश्वर्ययोगाद्युगपदनेककर्मसबन्धीनि हवींषि भुञ्जीत, तथापि शब्दस्य नित्येनार्थेन नित्ये सबन्धे प्रतीयमाने यद्वैदिके शब्दे प्रामाण्य स्थित, तस्य विरोधः स्यादिति चेत्, नायमस्ति विरोधः । कस्मात् । अतः प्रभवात् । अत एव हि वैदिकाच्छब्दाद्देवादिक जगत्प्रभवति ।

कथ पुनरवगम्यते शब्दात्प्रभवति जगदिति—प्रत्यक्षानुमानाभ्याम् । प्रत्यक्ष हि श्रुतिः, प्रामाण्य प्रत्यनपे-

* इद वचन प्राक् मन्त्रब्राह्मणोपनिषदि सृष्टिप्रकणे नोद्धृतम् ।

क्षत्वात् । अनुमानं स्मृतिः, प्रामाण्य प्रति सापेक्षत्वात् । ते हि शब्दपूर्वां सृष्टिं दर्शयत. — 'एत इति वै प्रजापतिर्देवानसृजत । असृग्रमिति मनुष्यान् । इन्दव इति पितॄन् । तिर.पवित्रमिति ग्रहान् । आशव इति स्तोत्रम् । विश्वानीति शस्त्रम् । अभिसौभगेत्यन्याः प्रजाः' (ताब्रा ६।९।१५) इति श्रुति. । तथान्यत्रापि 'स मनसा वाच मिथुन समभवत्' ( बृउ १।२।४ )इत्यादिना तत्र तत्र शब्दपूर्विका सृष्टि श्राव्यते । स्मृतिरपि—'अनादिनिधना नित्या वागुत्सृष्टा स्वयभुवा । आदौ वेदमयी दिव्या यत. सर्वाः प्रवृत्तय· ॥' ( महाभा १२।२३३।२४ ) इति । १।३।२८

'अत एव च नित्यत्वम्' — कर्तुरस्मरणादिति स्थिते वेदस्य नित्यत्वे वेदादिव्यक्तिप्रभवाभ्युपगमेन तस्य विरोधमाशङ्क्य 'अत प्रभवात्' इति परिहृत्य इदानीं तदेव वेदनित्यत्व स्थित द्रढयति—अत एव च नित्यत्वमिति । अत एव नियताकृतेर्देवादेर्जगतो वेदशब्दप्रभवत्वात् वेदशब्दनित्यत्वमपि प्रत्येतव्यम् ।

ब्रशकर १।३।२९

## पृ ३१८–२१ शारीरम्– शब्रा. १०।५।३।१–१२ 'नेव वा इदमग्रेऽसदासीन्नेव . एवविदश्चिता भवन्ति' इत्यादि ।

'लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि' — वाजसनेयिनोऽग्निरहस्ये 'नैव वा इदमग्रे सदासीत्' इत्येतस्मिन् ब्राह्मणे मनोऽधिकृत्याधीयते 'तत्षट्त्रिंशत सहस्राण्यपश्यदात्मनोऽग्नीन् अर्कान् मनोमयान्मनश्चित' इत्यादि । तथैव 'वाक्चित· प्राणचितश्चक्षुश्चित श्रोत्रचितः कर्मचितोऽग्निचित' इति पृथगग्नीनामनन्ति सापादिकान् । तेषु सशय· । किमेते मनश्चिदादयः क्रियानुप्रवेशिनस्तच्छेषभूता उत स्वतन्त्राः केवलविद्यात्मका इति । तत्र प्रकरणात्क्रियानुप्रवेशे प्राप्ते स्वातन्त्र्य तावत्प्रतिजानीते— लिङ्गभूयस्त्वादिति । भूयांसि हि लिङ्गान्यस्मिन्ब्राह्मणे केवलविद्यात्मकत्वमेषामुपोद्बलयन्ति दृश्यन्ते 'तद्यत्किंचेमानि भूतानि मनसा सकल्पयन्ति तेषामेव सा कृति. ' इति, 'तान् हैतानेवविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' इति चैवजातीयकानि । तद्धि लिङ्ग प्रकरणाद्बलीयः । तदप्युक्त पूर्वस्मिन् काण्डे 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याना समवाये पारदौर्बल्यमर्थविप्रकर्षात्' ( जै सू ३।३।१३ ) इति ।

३।३।४४

'पूर्वविकल्प. प्रकरणात्स्यात्क्रिया मानसवत्' — नैतद्युक्त स्वतन्त्रा एतेऽग्नयोऽनन्यशेषभूता इति । पूर्वस्य क्रियामयस्याग्नेः प्रकरणात्तद्विषय एवाय विकल्पविशेषोपदेश स्यान्न स्वतन्त्र. । ननु प्रकरणाल्लिङ्ग बलीय । सत्यमेवमेतत् । लिङ्गमपि त्वेवजातीयक न प्रकरणाद्बलीयो भवति । अन्यार्थदर्शन ह्येतत् । सापादिकाग्निप्रशसारूपत्वात् । अन्यार्थदर्शन चासत्यामन्यस्यां प्राप्तौ गुणवादेनाप्युपपद्यमान न प्रकरण बाधितुमुत्सहते । तस्मात्सापादिका अप्येतेऽग्नय प्रकरणात्क्रियानुप्रवेशिन एव स्युः । मानसवत् । यथा द्वादशरात्रस्य दशमेऽहन्यविवाक्ये पृथिव्या पात्रेण समुद्रस्य सोमस्य प्रजापतये देवतायै गृह्यमाणस्य ग्रहणासादनहवनाहरणोपह्वानभक्षणानि मानसान्येवाऽऽम्नायन्ते । स च मानसोऽपि ग्रहकल्प. क्रियाप्रकरणात् क्रियाशेष एव भवत्येवमयमप्यग्निकल्प इत्यर्थ. । ३।३।४५

'अतिदेशाच्च' — अतिदेशश्चैषामग्नीनां क्रियानुप्रवेशमुपोद्बलयति 'षट्त्रिंशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान्यावानसौ पूर्वः' इति । सति हि सामान्येऽतिदेश प्रवर्तते । ततश्च पूर्वेणेष्टकाचितेन क्रियानुप्रवेशिनाऽग्निना सापादिकानग्नीनतिदिशन् क्रियानुप्रवेशमेवैषा द्योतयति । ३।३।४६

'विद्यैव तु निर्धारणात्' — तुशब्दः पक्ष व्यावर्तयति । विद्यात्मका एवैते स्वतन्त्रा मनश्चिदादयोऽग्नय स्युर्न क्रियाशेषभूताः । तथा हि निर्धारयति 'ते हैते विद्याचित एव' इति । 'विद्यया हैवैत एवविदश्चिता भवन्ति' इति च । ३।३।४७

'दर्शनाच्च'— दृश्यते चैषां स्वातन्त्र्ये लिङ्गम् । तत् पुरस्ताद्दर्शित 'लिङ्गभूयस्त्वात्' ( ब्रसू ३।३।४४ ) इत्यत्र । ३।३।४८

'श्रुत्यादिबलीयस्त्वाच्च न बाधः'— ननु लिङ्गम प्यसत्यामन्यस्या प्राप्तावसाधक कस्यचिदर्थस्येत्यपास्य तत्प्रकरणसामर्थ्यात् क्रियाशेषत्वमध्यवसितमित्यत उत्तर पठति — श्रुत्यादीति । नैव प्रकरणसामर्थ्यात् क्रिया-

शेषत्वमध्यवसाय स्वातन्त्र्यपक्षो बाधितव्य. । श्रुत्यादेः बलीयस्त्वात् । बलीयांसि हि प्रकरणात् श्रुतिलिङ्गवाक्यानीति स्थित श्रुतिलिङ्गसूत्रे । तानि चेह स्वातन्त्र्यपक्ष साधयन्ति दृश्यन्ते । कथम् । श्रुतिस्तावत् 'ते हैते विद्याचित एव' इति । तथा लिङ्ग 'सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' इति । तथा वाक्यमपि 'विद्यया हैवैत एवविदश्चिता भवन्ति' इति । 'विद्याचित एव' इति हि सावधारणेय श्रुति. क्रियानुप्रवेशेऽमीषामभ्युपगम्यमाने पीडिता स्यात् । नन्वबाह्यसाधनत्वाभिप्रायमिदमवधारण भविष्यति । नेत्युच्यते । तदभिप्रायताया हि विद्याचित इतीयता स्वरूपसकीर्तनेनैव कृतत्वादनर्थकमवधारण भवेत् । स्वरूपमेव ह्येषामबाह्यसाधनमिति । अबाह्यसाधनत्वेऽपि तु मानसग्रहवत्क्रियानुप्रवेशशङ्काया तन्निवृत्तिफलमवधारणमर्थवद्भविष्यति । तथा 'स्वपते जाग्रते चैवविदे सर्वदा सर्वाणि भूतान्येतानग्नींश्चिन्वन्ति' इति सातत्यदर्शनमेषां स्वातन्त्र्येऽवकल्पते । यथा सापादिके वाक्प्राणमयेऽग्निहोत्रे 'प्राणं तदा वाचि जुहोति वाच तदा प्राणे जुहोति' ( कौउ २।५ ) इति चोक्त्वोच्यते 'एते अनन्ते अमृते आहुती जाग्रच्च स्वपश्च सतत जुहोति' ( कौउ २।५ ) इति । तद्वत् । क्रियानुप्रवेशे तु क्रियाप्रयोगस्याल्पकालत्वेन न सातत्येनैषा प्रयोग. कल्पेत । न चेदमर्थवादमात्रमिति न्याय्यम् । यत्र हि विस्पष्टो विधायको लिङ्गादिरुपलभ्यते युक्त तत्र सकीर्तनमात्रस्यार्थवादत्वम् । इह तु विस्पष्टविध्यन्तरानुपलब्धे. सकीर्तनादेवैषा विज्ञानविधान कल्पनीयम् । तच्च यथासकीर्तनमेव कल्पयितुं शक्यत इति सातत्यदर्शनात्तथाभूतमेव कल्प्यते । ततश्च सामर्थ्यादेषा स्वातन्त्र्यसिद्धि । एतेन 'तद्यत्किंचेमानि भूतानि मनसा सकल्पयन्ति तेषामेव सा कृति ' इत्यादि व्याख्यातम् । तथा वाक्यमपि 'एवविदे ' इति पुरुषविशेषसबन्धमेवैषामाचक्षाण न क्रतुसबन्ध मृष्यते । तस्मात्स्वातन्त्र्यपक्ष एव ज्यायानिति । ३।३।४९

'अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम्' — इतश्च प्रकरणमुपमृद्य स्वातन्त्र्य मनश्चिदादीनां प्रतिपत्तव्यम् । यत्क्रियावयवान्मनआदिव्यापारेष्वनुबध्नाति ' ते मनसैवाऽऽधीयन्त मनसाऽचीयन्त मनसैव ग्रहा अगृह्यन्त मनसाऽस्तुवन्मनसाऽशसन्यत्किंच यज्ञे कर्म क्रियते यत्किंच यज्ञिय कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमेव क्रियते ' इत्यादिना । सपत्फलो ह्ययमनुबन्धः । न च प्रत्यक्षाः क्रियावयवा. सन्तः सपदा लिप्सितव्याः । न चात्रोद्गीथाद्युपासनवत्क्रियाङ्गसबन्धात्तदनुप्रवेशित्वमाशङ्कितव्य, श्रुतिवैरूप्यात् । न ह्यत्र क्रियाङ्ग किंचिदादाय तस्मिन्नदो नामाध्यवसितव्यमिति वदति । षट्त्रिंशत्सहस्राणि तु मनोवृत्तिभेदानादाय तेष्वग्नित्व ग्रहादींश्च कल्पयति पुरुषयज्ञादिवत् । सख्या चेय पुरुषायुषस्याह्‌'सु दृष्टा सती तत्सबन्धिनीषु मनोवृत्तिष्वारोप्यत इति द्रष्टव्यम् । एवमनुबन्धात्स्वातन्त्र्य मनश्चिदादीनाम् । आदिशब्दादतिदेशाद्यपि यथासभव योजयितव्यम् । तथा हि ' तेषामेकैक एव तावान्यावानसौ पूर्व. ' इति क्रियामयस्याग्नेर्माहात्म्यं ज्ञानमयानामेकैकस्यातिदिशन् क्रियायामनादर दर्शयति । न च सत्येव क्रियासबन्धे विकल्पः पूर्वेणोत्तरेषामिति शक्य वक्तुम् । न हि येन व्यापारेणाऽऽहवनीयधारणादिना पूर्वः क्रियायामुपकरोति तेनोत्तर उपकर्तुं शक्नुवन्ति । यत्तु पूर्वपक्षेऽप्यतिदेश उपोद्बलक इत्युक्त सति हि सामान्येऽतिदेश. प्रवर्तेत इति तदस्मत्पक्षेऽग्नित्वसामान्येनातिदेशसभवात्प्रत्युक्तम् । अस्ति हि सापादिकानामप्यग्नीनामग्नित्वमिति । श्रुत्यादीनि च कारणानि दर्शितानि । एवमनुबन्धादिभ्य' कारणेभ्य. स्वातन्त्र्य मनश्चिदादीनाम् । प्रज्ञान्तरपृथक्त्ववत् । यथा प्रज्ञान्तराणि शाण्डिल्यविद्याप्रभृतीनि स्वेन स्वेनानुबन्धेनानुबध्यमानानि पृथगेव कर्मभ्यः प्रज्ञान्तरेभ्यश्च स्वतन्त्राणि भवन्त्येवमिति । दृष्टश्चावेष्टे. राजसूयप्रकरणपठितायाः प्रकरणादुत्कर्षो वर्णत्रयानुबन्धाद्राजयज्ञत्वाच्च राजसूयस्य । तदुक्त प्रथमे काण्डे 'क्रत्वर्थायामिति चेन्न वर्णत्रयसयोगात् ' ( जै सू ११।४।७ ) इति ।

३।३।५०

' न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ' —यदुक्त मानसवदिति तत्प्रत्युच्यते । न मानसग्रहसामान्यादपि मनश्चिदादीना क्रियाशेषत्व कल्प्यम् । पूर्वोक्तेभ्यः श्रुत्यादिहेतुभ्यः केवलपुरुषार्थत्वोपलब्धेः । न हि किंचित् कस्यचित् केनचित् सामान्य न सभवति । न

च तावता यथास्व वैषम्य निवर्तते । मृत्युवत् । यथा 'स एष एव मृत्यु य एष एतस्मिन्मण्डले पुरुष ' इति 'अग्निर्वै मृत्यु ' ( बृउ. ३।२।१० ) इति चाग्न्यादित्यपुरुषयो समानेऽपि मृत्युशब्दप्रयोगे नात्यन्त साम्यापत्तिः । यथा च ' असौ वाव लोको गौतमाग्निस्त स्याऽऽदित्य एव समित् ' ( छाउ. ५।४।१ ) इत्यत्र न समिदादिसामान्याल्लोकस्याग्निभावापत्तिस्तद्वत् ।

* ब्रशकर. ३।३।५१

---

# ऐतरेयोपनिषत्

पृ ५३५ ऐआ २।१।५ 'त देवा प्राणयन्त ' इत्यादि ।

'प्राणस्तथाऽनुगमात् ' — ' प्राणो विष्णु ' इत्युक्तम् । तत्र ' ता वा एता. शीर्षञ्छ्रियः श्रिताश्चक्षु' श्रोत्र मनो वाक्प्राणः ' इत्यत्र प्राणस्य विष्णुत्व न युज्यते । इन्द्रियैः सहाभिधानात् इति । अत आह— प्राण इति । ' त देवाः प्राणयन्त स एषोऽसुः स एष प्राण. ' ' प्राण ऋचः इत्येव विद्यात्तदय प्राणोऽधितिष्ठति ' इत्याद्यनुगमादत्रापि प्राणो विष्णुरेव ।

ब्रमध्व १।१।२८

पृ ५४४ ऐआ २।२।१ 'एष इम लोकमभ्यार्चत् ' इत्यादि ।

' ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके' —ज्योतिरादिकर्मवाचकत्वेन प्रसिद्धाभिधेयोऽपि स एव । ' एष इम लोकमभ्यार्चत् ' इत्युपक्रम्य ' ता वा एता. सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋच. इत्येव विद्यात् ' इति ह्यधीयत एके ।

ब्रमध्व १।४।१०

पृ ५४९ ऐआ २।२।३ ' विश्वामित्र ह्येतदहः ' इत्यादि ।

' न वक्तुरात्मोपदेशादिति चेदध्यात्मसबन्धभूमा ह्यस्मिन् ' — ' प्राणो वा अहमस्म्यृषे' इति वक्तुरात्मोपदेशादिन्द्र एवेति चेन्न । ' प्राणस्त्व प्राणः सर्वाणि भूतानि ' इति बह्वध्यात्मसबन्धो ह्यत्र विद्यते ।

ब्रमध्व १।१।२९

पृ ५८० ऐआ २।४।१।१ 'आत्मा वा इदमेक ' इत्यादि ।

' आत्मगृहीतिरितरवदुत्तरात् ' — ऐतरेयके श्रूयते 'आत्मा वा इदमेक एवाग्र आसीत् । नान्यत्किंचन मिषत्। स ईक्षत लोकान्नु सृजा इति' 'स इमान् लोकानसृजताम्भो मरीचीर्मरमाप.' इत्यादि । तत्र सशयः — किं पर एवाऽऽत्मेहाऽऽत्मशब्देनाभिलप्यते उतान्य. कश्चिदिति । किं तावत्प्राप्त न परमात्मेहाऽऽत्मशब्दाभिलप्यो भवितुमर्हतीति । कस्मात् । वाक्यान्वयदर्शनात्। ननु वाक्यान्वय. सुतरा परमात्मविषयो दृश्यते प्रागुत्पत्तेरात्मैकत्वावधारणात् , ईक्षणपूर्वकस्रष्टृत्ववचनाच्च । नेत्युच्यते । लोकसृष्टिवचनात् । परमात्मनि हि स्रष्टरि परिगृह्यमाणे महाभूतसृष्टिरादौ वक्तव्या लोकसृष्टिस्त्विहादावुच्यते । लोकाश्च महाभूतसनिवेशविशेषा. । तथा चाम्भःप्रभृतीन् लोकत्वेनैव निर्ब्रवीति ' अदोऽम्भ. परेण दिवम् ' इत्यादिना । लोकसृष्टिश्च परमेश्वराधिष्ठितेनापरेण केनचिदीश्वरेण क्रियत इति श्रुतिस्मृत्योरुप लभ्यते । तथा हि श्रुतिर्भवति ' आत्मैवेदमग्र आसीत् पुरुषविधः ' ( बृउ १।४।१ ) इत्याद्या । स्मृतिरपि ' स वै शरीरी प्रथम स वै पुरुष उच्यते । आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत ॥' इति । ऐतरेयिणोऽपि ' अथातो रेतसः सृष्टि. प्रजापते रेतो देवाः ' इत्यत्र पूर्वस्मिन् प्रकरणे प्रजापतिकर्तृकां विचित्रा सृष्टिमाम नन्ति । आत्मशब्दोऽपि तस्मिन् प्रयुज्यमानो दृश्यते ' आत्मैवेदमग्र आसीत् पुरुषविध. ' इत्यत्र । एकत्वावधारणमपि प्रागुत्पत्तेः स्वविकारापेक्षमुपपद्यते । ईक्षणमपि तस्य चेतनत्वाभ्युपगमादुपपन्नम् । अपि च 'ताभ्यो गामानयत्' 'ताभ्योऽश्वमानयत्' 'ताभ्य पुरुषमानयत् ' ' ता अब्रुवन्' इत्येवजातीयको भूयान् व्यापारविशेषो लौकिकेषु विशेषवत्स्वात्मसु प्रसिद्ध इहानुगम्यते । तस्माद्विशेषवानेव कश्चिदिहाऽऽत्मा

---

* रामानुजाचार्य ' पूर्वविकल्प ' ( ब्रसू ३।३।४५ ) इत्यादिसूत्रमारभ्य ब्रशकरवत् अधिकरणार्थं रचयति, श्रीकठश्च तमनुसरति । भास्करनिंबार्कयो ब्रशकरवद्भाव । श्रीकरेण तु ' विद्यैव तु'( ब्रसू ३।३।४७ ) इत्यादिसूत्रमारभ्यैव ब्रशकरभावानुसारेण व्याख्यातम् ।

स्यादिति। एवं प्राप्ते ब्रूमः— पर एवाऽऽत्मेहाऽऽत्मशब्देन गृह्यते। इतरवत्— यथा इतरेषु सृष्टिश्रवणेषु ‘तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः’ (तैउ २।१।१) इत्येवमादिषु परस्याऽऽत्मनो ग्रहणम्। यथा चेतरस्मिन् लौकिकात्मशब्दप्रयोगे प्रत्यगात्मैव मुख्य आत्मशब्देन गृह्यते तथेहापि भवितुमर्हति। यत्र ‘आत्मैवेदमग्र आसीत्’ इत्येवमादौ ‘पुरुषविधः’ इत्येवमादि विशेषणान्तरं श्रूयते, भवेत्तत्र विशेषवत् आत्मनो ग्रहणम्। अत्र पुनः परमात्मग्रहणानुगुणमेव विशेषणमप्युत्तरमुपलभ्यते ‘स ईक्षत लोकान्नु सृजा इति’ ‘स इमाँल्लोकानसृजत’ इत्येवमादि। तस्मात्तस्यैव ग्रहणमिति न्याय्यम्। ३।३।१६

‘अन्वयादिति चेत्स्यादवधारणात्’ — वाक्यान्वयदर्शनान्न परमात्मग्रहणमिति पुनर्यदुक्तं तत्परिहर्तव्यमिति। अत्रोच्यते—स्यादवधारणादिति। भवेदुपपन्नं परमात्मनो ग्रहणम्। कस्मात्। अवधारणात्। परमात्मग्रहणे हि प्रागुत्पत्तेरात्मैकत्वावधारणमाञ्जसमवकल्पते। अन्यथा ह्यनाञ्जसं तत्परिकल्प्येत। लोकसृष्टिवचनं तु श्रुत्यन्तरप्रसिद्धमहाभूतसृष्ट्यनन्तरमिति योजयिष्यामि। यथा ‘तत्तेजोऽसृजत’ (छाउ ६।२।३) इत्येतत् श्रुत्यन्तरप्रसिद्धवियद्वायुसृष्ट्यनन्तरमित्ययूयुजं, एवमिहापि। श्रुत्यन्तरप्रसिद्धो हि समानविषयो विशेषः श्रुत्यन्तरेषूपसंहर्तव्यो भवति। योऽप्ययं व्यापारविशेषानुगमस्ताम्यो गामानयदित्येवमादिः, सोऽपि विवक्षितार्थावधारणानुगुण्येनैव ग्रहीतव्यः। न ह्ययं सकलः कथाप्रबन्धो विवक्षित इति शक्यते वक्तुं, तत्प्रतिपत्तौ पुरुषार्थाभावात्। ब्रह्मात्मत्वं त्विह विवक्षितम्। तथा ह्यम्भःप्रभृतीनां लोकानां लोकपालानां चाग्न्यादीनां सृष्टिं शिष्ट्वा करणानि करणायतनं च शरीरमुपदिश्य, स एव स्रष्टा ‘कथं न्विदं मदृते स्यात्’ इति वीक्ष्येदं शरीरं प्रविवेशेति दर्शयति— ‘स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत’ इति। पुनश्च ‘यदि वाचाऽभिव्याहृतं यदि प्राणेनाभिप्राणितम्’ इत्येवमादिना करणव्यापारविवेचनपूर्वकं ‘अथ कोऽहं’ इति वीक्ष्य, ‘स एतमेव पुरुषं ब्रह्म ततममपश्यत्’ इति ब्रह्मात्मत्वदर्शनमवधारयति। तथोपरिष्टात् ‘एष ब्रह्मैष इन्द्रः’ इत्यादिना समस्तभेदजातं सह महाभूतैरनुक्रम्य ‘सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म’ इति ब्रह्मात्मत्वदर्शनमेवावधारयति। तस्मादिहाऽऽत्मगृहीतिरित्यनपवादम्। अपरा योजना — आत्मगृहीतिरितरवदुत्तरात्। वाजसनेयके ‘कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः’ (बृउ ४।३।७) इत्यात्मशब्देनोपक्रम्य तस्यैव सर्वसङ्गविनिर्मुक्तत्वप्रतिपादनेन ब्रह्मात्मतामवधारयति। तथा ह्युपसंहरति—‘स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म’ (बृउ ४।४।२५) इति। छान्दोग्ये तु ‘सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं’ (छाउ ६।२।१) इत्यन्तरेणाऽऽत्मशब्दमुपक्रम्योदर्के ‘स आत्मा तत्त्वमसि’ (छाउ ६।८।७) इति तादात्म्यमुपदिशति। तत्र संशयः। तुल्यार्थत्वं किमनयोराम्नानयोः स्यादतुल्यार्थत्वं वेति। अतुल्यार्थत्वमिति तावत्प्राप्तमतुल्यत्वादाम्नानयोः। न ह्याम्नानवैषम्ये सत्यर्थसाम्यं युक्तं प्रतिपत्तुं, आम्नानतन्त्रत्वादर्थपरिग्रहस्य। वाजसनेयके चाऽऽत्मशब्दोपक्रमादात्मतत्त्वोपदेश इति गम्यते। छान्दोग्ये तूपक्रमविपर्ययादुपदेशविपर्ययः। ननु छन्दोगानामप्यस्त्युदर्के तादात्म्योपदेश इत्युक्तम्। सत्यमुक्तम्। उपक्रमतन्त्रत्वादुपसंहारस्य, तादात्म्यसंपत्तिः सेति मन्यते, तथा प्राप्तेऽभिधीयते। आत्मगृहीतिः ‘सदेव सोम्येदमग्र आसीत्’ इत्यत्र छन्दोगानामपि भवितुमर्हतीतरवत्। यथा ‘कतम आत्मा’ इत्यत्र वाजसनेयिनामात्मगृहीतिस्तथैव। कस्मात्। उत्तरात्तादात्म्योपदेशात्। अन्वयादिति चेत्स्यादवधारणात्। यदुक्तं, उपक्रमान्वयादुपक्रमे चाऽऽत्मशब्दश्रवणाभावान्नाऽऽत्मगृहीतिरिति, तस्य कः परिहार इति चेत्सोऽभिधीयते—स्यादवधारणादिति। भवेदुपपन्नेहाऽऽत्मगृहीतिः। अवधारणात्। तथा हि ‘येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं’ (छाउ ६।१।३) इत्येकविज्ञानेन सर्वविज्ञानमवधार्य तत्संपिपादयिषया सदेवेत्याह, तच्चाऽऽत्मगृहीतौ सत्यां संपद्यते। अन्यथा हि योऽयं मुख्य आत्मा स न विज्ञात इति, नैव सर्वविज्ञानं संपद्येत। तथा प्रागुत्पत्तेरेकत्वावधारणं, जीवस्य चात्मशब्देन परामर्शः, स्वापावस्थायां च तत्स्वभावसंपत्तिकथनं परिचोदना-

पूर्वक च पुनः पुन 'तत्त्वमसि' ( छाउ. ६।८।७ ) इत्यवधारणमिति च सर्वमेतत्तादात्म्यप्रतिपादनायामेवावकल्पते, न तादात्म्यसपादनायाम्। न चात्रोपक्रमतन्त्रत्वोपन्यासो न्याय्य । न ह्युपक्रमे आत्मत्वसकीर्तनमनात्मत्वसकीर्तन वाऽस्ति। सामान्योपक्रमश्च न वाक्यशेषगतेन विशेषेण विरुध्यते विशेषाकांक्षित्वात्सामान्यस्य। सच्छब्दार्थोऽपि च पर्यालोच्यमानो न मुख्यादात्मनोऽन्यः सभवत्यतोऽन्यस्य वस्तुजातस्याऽऽरम्भणशब्दादिभ्योऽनृतत्वोपपत्ते । आम्नानवैषम्यमपि नावश्यमर्थवैषम्यमावहति । आहर पात्र पात्रमाहरेत्येवमादिष्वर्थसाम्येऽपि तद्दर्शनात्। तस्मादेवजातीयकेषु वाक्येषु प्रतिपादनप्रकारभेदेऽपि प्रतिपाद्यार्थाभेद इति सिद्धम्।

*ब्रशकर ३।३।१७

पृ ५८५ ऐआ. २।४।३।१२ 'स एतमेव सीमान' इत्यादि।

'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्'— 'तावन्ति शतसवत्सरस्याह्ना सहस्राणि भवन्ति' इति जीवलिङ्गम्। प्राणसवादादिमुख्यप्राणलिङ्गम्। तस्मान्नेति चेन्न। अन्तर्बहि. सर्वगतत्वेनेत्युपासात्रैविध्यादिहाश्रितत्वाच्च । 'स एतमेव सीमान विदार्यैतया द्वारा प्रापद्यत' 'स एतमेव पुरुष ब्रह्म ततममपश्यत्' 'एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः' इत्यादिना । 'महिदासाऽभिधो जज्ञ इतरायास्तपोबलात्। साक्षात् स भगवान् विष्णुर्यस्तन्त्र वैष्णव व्यधात् ॥' इति ब्रह्माण्डे। तत्तदुपासनायोग्यतया च पुरुषाणाम्। 'केषाचित्सर्वगतत्वेन केषाचित् हृदये हरि । केषाचिद्बहिरेवासावुपास्य' पुरुषोत्तमः ॥' इति ब्राह्मे। 'अग्नौ क्रियावतां विष्णुर्योगिना हृदये हरि. । प्रतिमास्वप्रबुद्धानां सर्वत्र विदितात्मनाम् ॥' इति च।

ब्रमध्व. १।१।३१

पृ. ६१६–१८ ऐआ. ३।२।४ 'दुग्धदोहा अस्य' इत्यादि।

'अधिक तु भेदनिर्देशात्'— न च ब्रह्मणः श्रमचिन्तादिदोषप्रसक्ति.। अधिकशक्तित्वात्। 'श्रोता मन्ता द्रष्टाऽऽदेष्टा बोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तरः पुरुषः' 'एष त आत्मा सर्वान्तरः' 'योऽशनायापिपासे शोकं मोह जरा मृत्युमत्येति' इत्यादिविशेषनिर्देशात्।

ब्रमध्व २।१।२२

---

# कौषीतक्युपनिषत्

पृ ६२९ कौउ १।२ 'स होवाच। ये वै के चास्माल्लोकात्प्रयन्ति' इत्यादि।

'अनिष्टादिकारिणामपि च श्रुतम्'— इष्टादिकारिण एव चन्द्रमस गच्छन्तीत्येतन्न। कस्मात्। यतोऽनिष्टादिकारिणामपि चन्द्रमण्डल गन्तव्यत्वेन श्रुतम्। तथा ह्यविशेषेण कौषीतकिन. समामनन्ति 'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इति। ३।१।१२

'सयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्'—तुशब्द' पक्ष व्यावर्तयति । नैतदस्ति सर्वे चन्द्रमस गच्छन्तीति। कस्मात्। भोगायैव हि चन्द्रारोहण न निष्प्रयोजनम् । नापि प्रत्यवरोहायैव। यथा कश्चिद्वृक्षमारोहति पुष्पफलोपादानाय न निष्प्रयोजन नापि पतनायैव । भोगश्चानिष्टादिकारिणा चन्द्रमसि नास्तीत्युक्तम् । तस्मादिष्टादिकारिण एव चन्द्रमसमारोहन्ति नेतरे। ते तु सयमन यमालयमवगाह्य स्वदुष्कृतानुरूपा यामीर्यातना अनुभूय पुनरेवेम लोक प्रत्यवरोहन्ति। एवभूतौ तेषामारोहावरोहौ भवत. । कुत.। तद्गतिदर्शनात्। तथाहि यमवचनसरूपा श्रुतिः प्रयतामनिष्टादिकारिणा यमवश्यता दर्शयति 'न साम्पराय. प्रतिभाति बाल प्रमाद्यन्त वित्तमोहेन मूढम्। अय लोको नास्ति पर इति मानी पुन. पुनर्वशमापद्यते मे ॥' ( काउ २।६ ) इति। 'वैवस्वत सगमन जनानाम्' इत्येवजातीयक च। बह्वेव यमवश्यताप्राप्तिलिङ्ग भवति।

ब्रशकर. ३।१।१३

पृ. ६८१–८२ कौउ ४।१९ 'तद्यथा क्षुरः क्षुरधानेऽवहितः' इत्यादि।

'जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम्'— अथ यदुक्त वाक्यशेषगताज्जीवलिङ्गान्मुख्यप्राणलिङ्गाच्च

* भास्कर ब्रशकरवत्।

तयोरेवान्यतरस्येह ग्रहण न्याय्य न परमेश्वरस्येति, तत्प रिहर्तव्यम् । अत्रोच्यते — परिहृत चैतत् ' नोपासा त्रैविध्यादाश्रितत्वादिह तद्योगात् ' ( ब्रसू १।१।३१ ) इत्यत्र, त्रिविध ह्यत्रोपासनमेव सति प्रसज्येत जीवोपासन मुख्यप्राणोपासन ब्रह्मोपासन चेति । न चैतन्न्याय्य, उपक्रमोपसहाराभ्या हि ब्रह्मविषयत्वमस्य वाक्यस्यावगम्यते । तत्रोपक्रमस्य तावद्ब्रह्मविषयत्व दर्शितम् । उपसहारस्यापि निरतियशफलश्रवणाद्ब्रह्मविषयत्व दृश्यते 'सर्वान्पाप्मनोऽपहत्य सर्वेषा च भूताना श्रैष्ठ्य स्वाराज्यमाधिपत्य पर्येति य एव वेद ' इति । नन्वेव सति प्रतर्दनवाक्य निर्णयेनैवेदमपि वाक्य निर्णीयेत । न निर्णीयते, ' यस्य वैतत्कर्म ' इत्यस्य ब्रह्मविषयत्वेन तत्र ( ब्रसू १।१।३१ ) अनिर्धारितत्वात् । तस्मादत्र जीवमुख्यप्राणशङ्का पुनरुत्पद्यमाना निवर्त्यते । प्राणशब्दोऽपि ब्रह्मविषयो दृष्ट. ' प्राणबन्धन हि सोम्य मन.' ( छाउ. ६।८।२ ) इत्यत्र । जीवलिङ्गमप्युपक्रमोपसहारयोर्ब्रह्मविषयत्वादभेदाभिप्रायेण योजयितव्यम् ।

ब्रशकर १।४।१७

---

# तैत्तिरीयोपनिषत्

## पृ. ६९७ तैउ १।५ ' भूर्भुव सुवरिति वा ' इत्यादि ।

'प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्ते.'— 'ता यो वेद स वेद ब्रह्म सर्वस्मै देवा बलिमावहन्ति' इति प्रत्यक्षोपदेशाज्जगदैश्वर्यमप्यस्तीति चेन्न । आधिकारिकमण्डलाधिपतिर्ब्रह्मा हि तत्रोच्यते । गारुडे च—'आत्मेत्येव पर देवमुपास्य हरिमव्ययम् । केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन ॥ अत्रैव च स्थितिस्तेषामन्तरिक्षे तु केचन । केचित्स्वर्गे महर्लोके जने तपसि चापरे ॥ केचित्सत्ये महाज्ञाना गच्छन्ति क्षीरसागरम् । तत्रापि क्रमयोगेन ज्ञानाधिक्यात्समीपगा ॥ सालोक्य च सरूपत्व सामीप्य योग एव च । इमामारभ्य सर्वत्र यावत्सुक्षीर सागरे ॥ पुरुषोऽनन्तशयन' श्रीमान्नारायणाभिधः । मानुषा वर्णभेदेन तथैवाश्रमभेदत ॥ क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिरा. । आजानजाः कर्मजाश्च तात्त्विकाश्च शचीपति. ॥ रुद्रो ब्रह्मेति क्रमशस्तेषु चैवोत्तरोत्तराः । नित्यानन्दे च भोगे च ज्ञानैश्वर्यगुणेषु च ॥ सर्वे शतगुणोद्रिक्ताः पूर्वस्माद्धुत्तरोत्तरम् । पूज्यन्ते चाव रैस्ते तु सर्वपूज्यश्चतुर्मुखः ॥ स्वजगद्व्याप्तिस्तेषा पूर्ववत्समुदीरिता । सयुज. परमात्मान प्रविश्य च बहिर्गता. ॥ चिद्रूपान् प्राकृताश्चापि विना भोगास्तु काश्चन । भुञ्जते मुक्तिरेव ते विस्पष्ट समुदाहृता ॥' इति ।

ब्रमध्व ४।४।१९

## पृ. ७०६ तैउ २।१ ' ब्रह्मविदाप्नोति परम् ' इत्यादि ।

' तेजोऽतस्तथा ह्याह ' — तेजोऽतो मातरिश्वनो जायत इति । कस्मात् । तथा ह्याह वायोरग्निरिति । अव्यवहिते हि तेजसो ब्रह्मजत्वे सत्यसति वायुजत्वे वायोरग्निरितीय श्रुति कदर्थिता स्यात् । यदापि ह्याकाश वायु च सृष्ट्वा वायुभावापन्न ब्रह्म तेजोऽसृजतेति कल्प्यते तदापि ब्रह्मजत्व तेजसो न विरुध्यते ।

२।३।१०

' आप: ' — अतस्तथा ह्याहेत्युनुवर्तते । आपोऽतस्तेजसो जायन्ते । कस्मात् तथा ह्याह–' तदपोऽसृजत' इति ' अग्नेरापः ' इति च । सति वचने नास्ति सशयः । * ब्रशकर २।३।११

' प्रकाशवच्चावैयर्थ्यात् ' —यथा ' सत्य ज्ञानमनन्त ब्रह्म' इत्यादिवाक्यावैयर्थ्यात्प्रकाशस्वरूपत्व ब्रह्मणोऽभ्युपगम्यते तथा सत्यसंकल्पत्वसर्वज्ञत्वसर्वजगत्कारणत्वसर्वात्मकत्वनिरस्तनिखिलाविद्यादिदोषत्वाद्यभिधायिवाक्यावैयर्थ्यादुभयलिङ्गमेव ब्रह्म । ३।२।१५

' आह च तन्मात्रम्' —किंच 'सत्य ज्ञानमनन्तम्' इत्यादिवाक्य ब्रह्मणः प्रकाशस्वरूपतामात्र प्रतिपादयति । नान्यत्सत्यसकल्पत्वादिक वाक्यान्तरावगत निषेधति ।

रामानुज ३।२।१६

' मान्त्रवर्णिकमेव च गीयते ' — ' ब्रह्मविदाप्नोति परम् ' इति सूचयित्वा ' सत्य ज्ञानमनन्त ब्रह्म ' इति मन्त्रवर्णोपलक्षित परमेव ब्रह्म शब्दानुसधानात् गीयते । १।१।१५

---

* अधिक छाउ ६।२।३ ( पृ ८९१ ) इत्यत्र द्रष्टव्यम् ।

'अस्मिन्नस्य च तद्योग शास्ति' — अस्य जीवस्य। युक्तिसमुच्चये चशब्द'। 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' 'अनिलयनेऽभयं प्रतिष्ठा विन्दते' 'एतमानन्दमयमात्मानमुपसङ्क्रामति' इत्यादि।

१।१।१९

'अस्ति तु' — अस्त्येव चोत्पत्तिश्रुति । 'आत्मन आकाशः सभूत.' इत्यादि। २।३।२

'सामीप्यात्तु तद्व्यपदेश' — 'ब्रह्मविदाप्नोति परम्' इति व्यपदेशस्तु समीपत एव परमपि प्राप्नोतीत्येतदर्थ एव। कदा— ४।३।९

'कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्' —'ते ह ब्रह्माणमभिसपद्य यदेतद्विलीयतेऽथ सह ब्रह्मणा परमभिगच्छन्ति' इति सौपर्णश्रुतेर्महाप्रलये तदध्यक्षेण ब्रह्मणा सह गच्छन्ति।

ब्रमध्व ४।३।१०

पृ ७१० तैउ २।५ 'विज्ञान यज्ञ तनुते' इत्यादि।

'व्यपदेशाच्च क्रियाया न चेन्निर्देशविपर्ययः'—इतश्च जीवस्य कर्तृत्व यदस्य लौकिकीषु वैदिकीषु च क्रियासु कर्तृत्व व्यपदिशति शास्त्र 'विज्ञान यज्ञ तनुते कर्माणि तनुतेऽपि च' इति। ननु विज्ञानशब्दो बुद्धौ समधिगत' कथमनेन जीवस्य कर्तृत्व सूच्यत इति । नेत्युच्यते। जीवस्यैवैष निर्देशो न बुद्धेः। न चेज्जीवस्य स्यान्निर्देशविपर्यय' स्यात्। विज्ञानेनेत्येव निरदेक्ष्यत्। कर्तृसामानाधिकरण्यनिर्देशात् बुद्धिव्यतिरिक्तस्यैवात्मन. कर्तृत्व सूच्यत इत्यदोषः। ब्रसकर २।३।३६

'आनन्दमयोऽभ्यासात्' — पर एवात्मा आनन्दमयो भवितुमर्हति। कुतः। अभ्यासात्। परस्मिन्नेव ह्यात्मन्यानन्दशब्दो बहुकृत्वोऽभ्यस्यते।

१।१।१२

'विकारशब्दान्नेति चेन्न प्राचुर्यात्' — अत्राऽऽह — नाऽऽनन्दमयः पर आत्मा भवितुमर्हति। कस्मात्। विकारशब्दात्। प्रकृतिवचनादयमन्य' शब्दो विकारवचनः समधिगतः, आनन्दमय इति मयटो विकारार्थत्वात् (पा. सू. ४।३।१४३)। तस्मादन्नमयादिशब्दवद्विकारविषय एवाऽऽनन्दमय इति चेत्। न, प्राचुर्यार्थेऽपि मयट. स्मरणात्। 'तत्प्रकृतवचने मयट्' (पा सू. ५।४।२१) इति हि प्रचुरतायामपि मयट् स्मर्यते। १।१।१३

'तद्धेतुव्यपदेशाच्च' — इतश्च प्राचुर्यार्थे मयट्। यस्मादानन्दहेतुत्व ब्रह्मणो व्यपदिशति श्रुति. — 'एष ह्येवानन्दयाति' (तैउ २।७) इति। १।१।१४

'मान्त्रवर्णिकमेव च गीयते' — इतश्चानन्दमयः पर एवात्मा। यस्मात् 'ब्रह्मविदाप्नोति परम्' इत्युपक्रम्य 'सत्य ज्ञानमनन्त ब्रह्म' इत्यस्मिन्मन्त्रे यत् ब्रह्म प्रकृत सत्यज्ञानानन्तविशेषणैर्निर्धारित, यस्मादाकाशादिक्रमेण स्थावरजङ्गमानि भूतान्यजायन्त, यच्च भूतानि सृष्ट्वा तान्यनुप्रविश्य गुहायामवस्थित सर्वान्तर, यस्य विज्ञानाय 'अन्योऽन्तर आत्मा' 'अन्योऽन्तर आत्मा' इति प्रक्रान्त, तन्मान्त्रवर्णिकमेव ब्रह्मेह गीयते — 'अन्योऽन्तर आत्माऽऽनन्दमयः' इति। मन्त्रब्राह्मणयोश्चैकार्थत्व युक्त, अविरोधात्। अन्यथा हि प्रकृतहानाप्रकृतप्रक्रिये स्याताम्। न चान्नमयादिभ्य इवानन्दमयादन्योऽन्तर आत्माऽभिधीयते। एतन्निष्ठैव च सैषा भार्गवी वारुणी विद्या 'आनन्दो ब्रह्मेति व्यजानात्' इति। तस्मादानन्दमयः पर एवात्मा। १।१।१५

'नेतरोऽनुपपत्ते'' — इतश्चानन्दमयः पर एवात्मा, नेतर। इतर ईश्वरादन्य' ससारी जीव इत्यर्थ.। न जीव आनन्दमयशब्देनाभिधीयते। कस्मात्? अनुपपत्तेः। आनन्दमय हि प्रकृत्य श्रूयते — 'सोऽकामयत। बहु स्या प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा। इदꣳ सर्वमसृजत। यदिद किंच' इति। तत्र प्राक्शरीराद्युत्पत्तेरभिध्यान, सृज्यमानानां च विकाराणां स्रष्टुरव्यतिरेकः, सर्वविकारसृष्टिश्च न परस्मादात्मनोऽन्यत्रोपपद्यते। १।१।१६

'भेदव्यपदेशाच्च' — इतश्च नानन्दमयः ससारी। यस्मादानन्दमयाधिकारे 'रसो वै सः। रसꣳ ह्येवाय लब्ध्वाऽऽनन्दी भवति' इति जीवानन्दमयौ भेदेन व्यपदिशति। न हि लब्धैव लब्धव्यो भवति। १।१।१७

'कामाच्च नानुमानापेक्षा' — आनन्दमयाधिकारे च 'सोऽकामयत बहु स्यां प्रजायेयेति' इति कामयितृत्वनिर्देशाच्च नानुमानिकमपि साख्यपरिकल्पितमचेतन

प्रधानमानन्दमयत्वेन कारणत्वेन वा अपेक्षितव्यम् ।
१।१।१८

'अस्मिन्नस्य च तद्योग शास्ति'—इतश्च न प्रधाने जीवे वानन्दमयशब्द । यस्मादस्मिन्नानन्दमये प्रकृत आत्मनि, प्रतिबुद्धस्यास्य जीवस्य, तद्योग शास्ति — तदात्मना योगस्तद्योगः, तद्भावापत्ति., मुक्तिरित्यर्थ. । तद्योग शास्ति शास्त्रम् — 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभय प्रतिष्ठा विन्दते । अथ सोऽभय गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तर कुरुते । अथ तस्य भय भवति' ( तैउ. २।७ ) इति ।

इद त्विह वक्तव्यम्— 'स वा एष पुरुषोऽन्न रसमय. 'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमय.' तस्मात् 'अन्योऽन्तर आत्मा मनोमय.' तस्मात् 'अन्योऽन्तर आत्मा विज्ञानमय.' इति च विकारार्थे मयट्प्रवाहे सति, आनन्दमय एवाकस्मादर्धजरतीयन्यायेन कथमिव मयट. प्राचुर्यार्थत्व ब्रह्मविषयत्व चाश्रीयत इति । मान्त्रवर्णिकब्रह्माधिकारा दिति चेत् न । अन्नमयादीनामपि तर्हि ब्रह्मत्वप्रसङ्ग· । अत्राह—युक्तमन्नमयादीनामब्रह्मत्व, तस्मात्तस्मादान्तरस्यान्तरस्यान्यस्यान्यस्यात्मन उच्यमानत्वात् । आनन्दमयात्तु न कश्चिदन्य आन्तर आत्मोच्यते । तेनानन्दमयस्य ब्रह्मत्व, अन्यथा प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गादिति । अत्रोच्यते—यद्यप्यन्नमयादिभ्य इवानन्दमयात् 'अन्योऽन्तर आत्मा' इति न श्रूयते, तथापि नानन्दमयस्य ब्रह्मत्वम् । यत आनन्दमय प्रकृत्य श्रूयते—'तस्य प्रियमेव शिर, मोदो दक्षिणः पक्ष., प्रमोद उत्तर. पक्षः, आनन्द आत्मा, ब्रह्म पुच्छ प्रतिष्ठा' इति । तत्र यद्ब्रह्मेह मन्त्रवर्णे प्रकृतम् 'सत्य ज्ञानमनन्त ब्रह्म' इति, तदिह 'ब्रह्म पुच्छ प्रतिष्ठा' इत्युच्यते । तद्विजिज्ञापयिषयैवान्नमयादय आनन्दमयपर्यन्ता पञ्च कोशाः कल्प्यन्ते । तत्र कुत. प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्ग. । नन्वानन्दमयस्यावयवत्वेन 'ब्रह्म पुच्छ प्रतिष्ठा' इत्युच्यते, अन्नमयादीनामिव 'इद पुच्छ प्रतिष्ठा' इत्यादि । तत्र कथ ब्रह्मण. स्वप्रधानत्व शक्य विज्ञापयितुम् । प्रकृतत्वादिति ब्रूमः । ननु आनन्दमयावयवत्वेनापि ब्रह्मणि विज्ञायमाने न प्रकृतत्व हीयते, आनन्दमयस्य ब्रह्मत्वादिति । अत्रोच्यते — तथा सति तदेव ब्रह्म आनन्दमय आत्मा अवयवी, तदेव च ब्रह्म पुच्छ प्रतिष्ठा अवयव इत्यसामञ्जस्य स्यात् । अन्यतरपरिग्रहे तु युक्त 'ब्रह्म पुच्छ प्रतिष्ठा' इत्यत्रैव ब्रह्मनिर्देश आश्रयितु, ब्रह्मशब्दसयोगात् । नानन्दमयवाक्ये, ब्रह्मशब्दसयोगाभावादिति । अपि च ब्रह्म पुच्छ प्रतिष्ठेत्युक्त्वेदमुच्यते — 'तदप्येष श्लोको भवति । असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेन ततो विदु.' इति । अस्मिंश्च श्लोकेऽननुकृष्यानन्दमय ब्रह्मण एव भावाभाववेदनयोर्गुणदोषाभिधानाद्गम्यते — 'ब्रह्म पुच्छ प्रतिष्ठा' इत्यत्र ब्रह्मण एव स्वप्रधानत्वमिति । न चानन्दमयस्यात्मनो भावाभावाशङ्का युक्ता, प्रियमोदादिविशिष्टस्यानन्दमयस्य सर्वलोकप्रसिद्धत्वात् । कथ पुनः स्वप्रधान सद्ब्रह्म आनन्दमयस्य पुच्छत्वेन निर्दिश्यते — 'ब्रह्म पुच्छ प्रतिष्ठा' इति । नैष दोष. । पुच्छवत्पुच्छ, प्रतिष्ठा परायणमेकनीड लौकिकस्यानन्दजातस्य ब्रह्मानन्द. इत्येतदनेन विवक्ष्यते, नावयवत्व 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुत्यन्तरात् । अपि चानन्दमयस्य ब्रह्मत्वे प्रियाद्यवयवत्वेन सविशेष ब्रह्माभ्युपगन्तव्यम् । निर्विशेष तु ब्रह्मवाक्यशेषे श्रूयते, वाङ्मनसयोरगोचरत्वाभिधानात्— 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्द ब्रह्मणो विद्वान् । न बिभेति कुतश्चन' इति । अपि चानन्दप्रचुर इत्युक्ते दुःखाल्पीयस्त्वमपि गम्यते । प्राचुर्यस्य लोके प्रतियोग्यल्पत्वापेक्षत्वात् । तथा च सति 'यत्र नान्यत्पश्यति, नान्यच्छृणोति, नान्यद्विजानाति, स भूमा' इति भूम्नि ब्रह्मणि तद्व्यतिरिक्ताभावश्रुतिरुपरुध्येत । प्रतिशरीर च प्रियादिभेदादानन्दमयस्य भिन्नत्वम् । ब्रह्म तु न प्रतिशरीर भिद्यते, 'सत्य ज्ञानमनन्त ब्रह्म' इत्यानन्त्यश्रुतेः, 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इति च श्रुत्यन्तरात् । न चानन्दमयाभ्यासः श्रूयते । प्रातिपदिकार्थमात्रमेव हि सर्वत्राभ्यस्यते — 'रसो वै सः । रस९ ह्येवाय लब्ध्वाऽऽनन्दी भवति । को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात्' 'सैषानन्दस्य मीमांसा

भवति ' ' आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन ' इति ' आनन्दो ब्रह्मेति व्यजानात् ' इति च। यदि चानन्दमयशब्दस्य ब्रह्मविषयत्वं निश्चितं भवेत् तत उत्तरेषु आनन्दमात्रप्रयोगेष्वप्यानन्दमयाभ्यासः कल्प्येत। न त्वानन्दमयस्य ब्रह्मत्वमस्ति, प्रियशिरस्त्वादिभिर्हेतुभिरित्यवोचाम। तस्मात् श्रुत्यन्तरे 'विज्ञानमानन्दं ब्रह्म' इत्यानन्दपदप्रातिपदिकस्य ब्रह्मणि प्रयोगदर्शनात्, 'यदेष आकाश आनन्दो न स्यात्' इति ब्रह्मविषयः प्रयोगो न त्वानन्दमयाभ्यास इत्यवगन्तव्यम्। यस्त्वयं मयडन्तस्यैवानन्दमयशब्दस्याभ्यासः 'एतमानन्दमयमात्मानमुपसङ्क्रामति ' इति, न तस्य ब्रह्मविषयत्वमस्ति। विकारात्मनामेवानन्दमयादीनामनात्मनामुपसङ्क्रमितव्यानां प्रवाहे पतितत्वात्। नन्वानन्दमयस्योपसङ्क्रमितव्यस्यान्नमयादिवदब्रह्मत्वे सति नैव विदुषो ब्रह्मप्राप्तिः फलं निर्दिष्टं भवेत्। नैष दोषः, आनन्दमयोपसङ्क्रमणनिर्देशेनैव विदुषः पुच्छप्रतिष्ठाभूतब्रह्मप्राप्तेः फलस्य निर्दिष्टत्वात्, ' तदप्येष श्लोको भवति ' ' यतो वाचो निवर्तन्ते' इत्यादिना च प्रपञ्च्यमानत्वात्। या त्वानन्दमयसंनिधाने 'सोऽकामयत बहु स्यां प्रजायेयेति' इतीयं श्रुतिरुदाहृता, सा ' ब्रह्म पुच्छं प्रतिष्ठा ' इत्यनेन संनिहिततरेण ब्रह्मणा सबध्यमाना नानन्दमयस्य ब्रह्मतां प्रतिबोधयति। तदपेक्षत्वाच्चोत्तरस्य ग्रन्थस्य ' रसो वै सः ' इत्यादेर्नानन्दमयविषयता। ननु ' सोऽकामयत ' इति ब्रह्मणि पुलिङ्गनिर्देशो नोपपद्यते। नायं दोषः, ' तस्माद्वा एतस्मादात्मन आकाशः संभूतः ' इत्यत्र पुलिङ्गेनाप्यात्मशब्देन ब्रह्मणः प्रकृतत्वात्। या तु भार्गवी वारुणी विद्या—' आनन्दो ब्रह्मेति व्यजानात् ' इति, तस्यां मयडश्रवणात्प्रियशिरस्त्वाद्यश्रवणाच्च युक्तमानन्दस्य ब्रह्मत्वम्। तस्मादणुमात्रमपि विशेषमनाश्रित्य न स्वत एव प्रियशिरस्त्वादि ब्रह्मण उपपद्यते। न चेह सविशेषं ब्रह्म प्रतिपिपादयिषितं, वाङ्मनसगोचरातिक्रमणश्रुतेः। तस्मादन्नमयादिष्विवानन्दमयेऽपि विकारार्थ एव मयट् विज्ञेयः, न प्राचुर्यार्थः।

सूत्राणि त्वेवं व्याख्येयानि — ' ब्रह्म पुच्छं प्रतिष्ठा ' इत्यत्र किमानन्दमयावयवत्वेन ब्रह्म विवक्ष्यते, उत स्वप्रधानत्वेनेति। पुच्छशब्दादवयवत्वेनेति प्राप्ते, उच्यते — आनन्दमयोऽभ्यासात् — आनन्दमय आत्मा इत्यत्र ' ब्रह्म पुच्छं प्रतिष्ठा ' इति स्वप्रधानमेव ब्रह्मोपदिश्यते। अभ्यासात् ' असन्नेव स भवति ' इत्यस्मिन्निगमनश्लोके ब्रह्मण एव केवलस्याभ्यस्यमानत्वात्। विकारशब्दान्नेति चेन्न प्राचुर्यात् — विकारशब्दोऽवयवशब्दोऽभिप्रेतः। पुच्छमित्यवयवशब्दान्न स्वप्रधानत्वं ब्रह्मण इति यदुक्तं, तस्य परिहारो वक्तव्यः। अत्रोच्यते — नायं दोषः, प्राचुर्यादप्यवयवशब्दोपपत्तेः। प्राचुर्यं प्रायापत्तिः, अवयवप्राये वचनमित्यर्थः। अन्नमयादीनां हि शिरआदिषु पुच्छान्तेष्ववयवेषूक्तेष्वानन्दमयस्यापि शिरआदीन्यवयवान्तराण्युक्त्वा अवयवप्रायापत्त्या ' ब्रह्म पुच्छं प्रतिष्ठा' इत्याह, नावयवविवक्षया। यत्कारणम् ' अभ्यासात् ' इति स्वप्रधानत्वं ब्रह्मणः समर्थितम्। तद्धेतुव्यपदेशाच्च—सर्वस्य हि विकारजातस्य सानन्दमयस्य कारणत्वेन ब्रह्म व्यपदिश्यते— 'इदꣳ सर्वमसृजत, यदिदं किंच ' इति। न च कारणं सद्ब्रह्म स्वविकारस्यानन्दमयस्य मुख्यया वृत्त्याऽवयव उपपद्यते। अपराण्यपि सूत्राणि यथासंभवं पुच्छवाक्यनिर्दिष्टस्यैव ब्रह्मण उपपादकानि द्रष्टव्यानि।

* ब्रशकर १।१।१९

'आनन्दादयः प्रधानस्य' — आनन्दादयः प्रधानस्य ब्रह्मणो धर्माः सर्वे सर्वत्र प्रतिपत्तव्याः। कस्मात्। सर्वाभेदादेव। सर्वत्र हि तदेव एकं प्रधानं विशेष्यं ब्रह्म न भिद्यते। † ३।३।११

'प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ' — ननु एवं सति प्रियशिरस्त्वादयोऽपि धर्माः सर्वे सर्वत्र संकीर्येरन्। तथा हि तैत्तिरीयके आनन्दमयमात्मानं प्रक्रम्य आम्नायते — 'तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा।

---

* भास्कर १।१।१२, १३, १५, १९ सूत्रेषु ब्रशकरवद्भाव ब्रशकरप्रथमव्याख्यानुरोधेन। रामानुज १।१।१३–१७ सूत्राणां ब्रशकरवद्भाव। निंबार्क अमध्व १।१।१२–१५ सूत्रेषु ब्रशकरवद्भाव। श्रीकंठ वल्लभ १।१।१७ सूत्रातिरिक्तस्थलेषु ब्रशकरवद्भाव। श्रीकर विज्ञान ब्रशकरवद्भाव।

† रामानुज निंबार्क श्रीकंठ श्रीकर ब्रशकरवत्।

ब्रह्म पुच्छ प्रतिष्ठा' इति । अत उत्तर पठति — प्रियेति । प्रियशिरस्त्वादीना धर्माणा तैत्तिरीयके आम्नाताना नास्ति अन्यत्र प्राप्ति., यत्कारण प्रिय मोद· प्रमोद आनन्द इत्येते परस्परापेक्षया भोक्त्रन्तरापेक्षया च उपचितापचितरूपा उपलभ्यन्ते । उपचयापचयौ च सति भेदे सभवत । निर्भेद तु ब्रह्म 'एकमेवाद्वितीयम्' ( छाउ ६।२।१ ) इत्यादिश्रुतिभ्य. । न च एते प्रियशिरस्त्वादयो ब्रह्मधर्मा:, कोशधर्मास्त्वेते इत्युप दिष्टमस्माभिः 'आनन्दमयोऽभ्यासात्' (ब्रसू १।१।१२) इत्यत्र । * ब्रशकर ३।३।१२

' भेदव्यपदेशाच्च ' — ' तस्माद्वा एतस्मादात्मन आकाश· ' इत्यारभ्य मान्त्रवर्णिक ब्रह्म व्यञ्जयद्वाक्यमन्नप्राणमनोभ्य इव जीवादपि तस्य भेद व्यपदिशति । ' तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योन्तर आत्माऽऽनन्दमय.' इति । अतो जीवाद्भेदव्यपदेशाच्चाय मान्त्रवर्णिक आनन्दमयोऽन्य एवेति विज्ञायते ।

१।१।१८

' कामाच्च नानुमानापेक्षा' — इतश्च जीवादन्य । जीवस्याविद्यापरवशस्य जगत्कारणत्वे ह्यवर्जनीयानुमानिकप्रधानादिशब्दाभिधेयाचिद्वस्तुससर्गापेक्षा । तथैव हि चतुर्मुखादीना कारणत्वम् । इह च ' सोऽकामयत । बहु स्या प्रजायेय' इत्यचित्ससर्गरहितस्य स्वकामादेव विचित्रचिदचिद्वस्तुन सृष्टिः ' इद सर्वमसृजत । यदिद किंच ' इत्याम्नायते । अतोऽस्यानन्दमयस्य जगत्सृजतो नानुमानिकाचिद्वस्तुससर्गापेक्षा प्रतीयते । ततश्च जीवादन्य आनन्दमयः । १।१।१९

' अस्मिन्नस्य च तद्योग शास्ति' — इतश्च जीवादन्य. । अस्मिन्नानन्दमये अस्य जीवस्य तद्योग शास्ति आनन्दयोग शास्ति शास्त्र ' रसो वै स । रस ह्येवाय लब्ध्वानन्दी भवति' इति । रसशब्दाभिधेयानन्दमयलाभादय जीवशब्दाभिलपनीय आनन्दी भवतीत्युच्यमाने यल्लाभाद्य आनन्दीभवति स स एवेत्यनुन्मत्तः को ब्रवीतीत्यर्थ. । १।१।२०

' इतरे त्वर्थसामान्यात् ' — ननु एवमेव ब्रह्म सबन्धिनां एव ऐश्वर्यगाम्भीर्यौदार्यकारुण्यादीना गुणानामनन्ताना गुण्यपृथक्स्थितित्वमात्रेण तत्राश्रुतानामप्युपसहारे सति सर्वे सर्वत्र प्रसज्येरन् । आनन्त्यात् उपसहाराशक्तिश्च । तत्राह—इतर इति । तुशब्दश्चोद्य व्यावर्तयति । इतरे त्वानन्दादयः अर्थसामान्यात् सर्वत्र अनुवर्तन्ते । ये तु अर्थसमाना अर्थस्वरूपनिरूपणधर्मत्वेनार्थप्रतीत्यनुबन्धिनः ते अर्थस्वरूपवत्सर्वत्र अनुवर्तन्ते । ते च गुणा. सत्यज्ञानानन्दामलत्वादय । ' यतो वा इमानि ' ( तैउ ३।१ ) इत्यादिना जगत्कारणतयोपलक्षित ब्रह्म ' सत्य ज्ञानमनन्त ब्रह्म ' ( तैउ २।१ ) ' आनन्दो ब्रह्म ' ( तैउ ३।६ ) इत्यानन्दादिभिर्हि स्वरूपतो निरूप्यते । अतः उपास्यब्रह्मस्वरूपावगमाय सर्वासु विद्यासु आनन्दादयोऽनुवर्तन्ते । ये तु निरूपितस्वरूपस्य ब्रह्मण· कारुण्यादयो गुणा. प्रतिपन्ना. तेषा गुण्यपृथक्स्थितित्वेऽपि प्रतीत्यनुबन्धित्वाभावात् ये तत्र श्रुतास्ते तत्रोपसहार्या इति निरवद्यम् । ३।३।१३

' आध्यानाय प्रयोजनाभावात् ' — यद्युपचयापचयप्रसङ्गात् प्रियशिरस्त्वादयो ब्रह्मण. पुरुषविधत्वनिरूपणमात्रार्था न तु ब्रह्मगुणाः, तर्ह्यतथारूपस्य ब्रह्मणः तथात्वेन रूपण किमर्थं क्रियते । अतथाभूतस्य हि तथात्वरूपणे केनचित्प्रयोजनेन भवितव्यम् । यथा ' आत्मान रथिन विद्धि ' ( काउ ३।३ ) इत्यादिनोपासकस्य तदुपकरणाना च रथिरथादित्वरूपण उपासनोपकरणभूतशरीरेन्द्रियादिवशीकरणार्थं क्रियत इत्युक्तम् । न चेह तथाविध किंचित्प्रयोजन दृश्यत इति बलात् ब्रह्मगुणत्व प्रियशिरस्त्वादीनामभ्युपेत्यम् । तत्राह— आध्यानायेति । प्रयोजनान्तराभावात् आध्यानाय अय रूपणोपदेशः क्रियते । आध्यान अनुचिन्तन उपासनमुच्यते । ' ब्रह्मविदाप्नोति परम् ' ( तैउ २।१ ) इत्यत्र उपदिष्टाध्यानरूपवेदनसिद्धये ह्यानन्दमयब्रह्मप्रतिपत्त्यर्थं आनन्दमय ब्रह्म प्रियमोदादिरूपेण विभज्य शिरःपक्षादित्वेन रूपयित्वोपदिश्यते । यथा अन्नमय: पुरुषोऽय देह. शिर.पक्षादिभिः ' तस्येदमेव शिरः ' (तैउ २।१) इत्यादिना बुद्धौ आरोप्यते, यथा च प्राणमयमनोमयविज्ञानमयाः ' तस्य प्राण एव शिरः ' ( तैउ २।२ ) इत्यादिना प्राणाद्यवयवैर्बुद्धौ आरोप्यन्ते, एवमेव एभ्यो-

* भास्कर ब्रशकरवत् उभयसूत्रयो ।

ऽर्थान्तरभूत· तदन्तरात्मानन्दमयोऽपि प्रियमोदादिभि एकदेशैः शिर.प्रभृतित्वेन रूपितै· आध्यानाय बुद्धावारोप्यते । एवमानन्दमयोपलक्षणत्वात् प्रियशिरस्त्वादीना न सर्वदानन्दमयप्रतीतावनुवर्तन्ते । ३।३।१४

' आत्मशब्दाच्च ' — ' अन्योऽन्तर आत्माऽऽनन्दमयः ' ( तैउ २।५ ) इत्यात्मशब्देन निर्देशात् आत्मनश्च शिर.पक्षपुच्छासभवात् प्रियशिरस्त्वादयस्तस्य सुखप्रतिपत्त्यर्थं रूपणमात्रमिति गम्यते ।
३।३।१५

' आत्मगृहीतिरितरवदुत्तरात् ' — ननु ' अन्योऽन्तर आत्मा प्राणमय ' ( तैउ २।२ ) ' अन्योऽन्तर आत्मा मनोमय ' ( तैउ २।३ ) इत्यात्मशब्दस्य अनात्मस्वपि पूर्वं प्रयुक्तत्वात् 'अन्योऽन्तर आत्माऽऽनन्दमय· ' ( तैउ २।५ ) इत्यात्मशब्दस्यात्मविषयत्व कथ निश्चीयते । तत्राह—आत्मेति । ' अन्योऽन्तर आत्माऽऽनन्दमयः ' इत्यत्र आत्मशब्देन परमात्मन एव ग्रहणम् । इतरवत् । यथा इतरत्र ' आत्मा वा इदमेक एवाग्र आसीत् . स ऐक्षत लोकान्नु सृजै' ( ऐउ. १।१ ) इत्यादिष्वात्मशब्देन परमात्मन एव ग्रहण तद्वत् । कुत एतत् । उत्तरात् । 'सोऽकामयत बहु स्या प्रजायेय' ( तैउ. २।६ ) इत्यानन्दमयविषयादुत्तरात् वाक्यात् । ३।३।१६

'अन्वयादिति चेत्स्यादवधारणात्' — पूर्वत्र प्राण मयादिषु अनात्मसु आत्मशब्दान्वयदर्शनात् नोत्तरान्निश्चेतु शक्यते इति चेत्स्यादवधारणात् । स्यादेव निश्चय । कुतः । अवधारणात् । पूर्वत्रापि 'तस्माद्वा एतस्मादात्मन आकाश. सभूत.' ( तैउ. २।१ ) इति परमात्मन एव बुद्धयावधारितत्वात् अन्नमयादन्तरे प्राणमये प्रथम परमात्मबुद्धिरवतीर्णा । तदनन्तर च प्राणमयादन्तरे मनोमये । ततो विज्ञानमये । तत आनन्दमये प्रक्रान्ता परमात्मबुद्धिः तदन्तराभावादुत्तराच्च 'सोऽकामयत' ( तैउ. २।६ ) इति वाक्यात् प्रतिष्ठिता इत्युपक्रमेऽप्यपरमात्मनि परमात्मबुद्धयात्मशब्दान्वय इति निरवद्यम् । रामानुज ३।३।१७

' प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ' — परस्वरूपगुणप्राप्तौ प्रियशिरस्त्वादीना प्राप्तिस्तु नेष्यते, शिरआद्यवयवभेदे सति ब्रह्मण्युपचयापचयप्रसङ्गात् ।
निंबार्क ३।३।१२

' प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ' — ननूपासकस्य प्रियत्वादिप्रकारकज्ञानक्रममादाय प्रियत्वादिधर्माणा शिरस्त्वादिरूपत्वमानन्दमयाधिकरणे निरूपितमिति लीलास्थानामपि प्रियत्वादिज्ञानस्य सत्त्वादत्रापि स्वरूपोपासकस्य प्रियशिरस्त्वादिधर्माणामुपसहारः कार्य इत्याशङ्क्य परिहरति । प्रियशिरस्त्वाद्यप्राप्तिरिति । चित्तशुद्धितारतम्यहेतुकप्रियत्वादिज्ञान लीलास्थानां चित्तशुद्ध्यपेक्षाभावान्न सभवतीति न तेषामत्रोपसहार कार्य इत्यर्थ । अथवा, नन्वानन्दमयोपासनामथर्वणोपनिषदुक्तपञ्चरात्राद्यागमोक्तप्रकारेण कुर्वतः पुरुषरूपे पक्षाद्युपसहारस्यायुक्तत्वादानन्दमयाधिकरणे तद्रूपस्यैवोक्तत्वात् पुरुषरूप कथमानन्दमय. । तथात्वे वा कथ नोक्तोपसहारः । अपर च मोदप्रमोदयोरुपचितानुपचितानन्दरूपयोर्युगपत्सत्त्वेन देशभेदेनापि भिन्नत्वान्नित्यानन्दैकरसे ब्रह्मणि तादृग्रूपकथनमनुपपन्नमित्याशङ्क्य परिहरति— प्रियशिरस्त्वादीति । यद्यथर्वणोपास्यात् प्रियशिरस्त्वादिविशिष्टस्य भेद. स्यात् तदा तदप्राप्ति स्यान्न च तथेति प्रियशिरस्त्वादिकमुपासनामार्गीयस्याप्याथर्वणिकादेरुपसहार्यमेवेत्यर्थ· । चित्तशुद्धितारतम्यहेतुक प्रियत्वादिज्ञान मिति पक्षे परोक्षवादपक्षेऽपि तत्र भेदाभावान्मोदप्रमोदयोर्न त्वदुक्तरूपत्वमित्यर्थः । ब्रह्मधर्मा एव भिन्ना इत्युपासनार्थं तानादाय शिरःपाण्यादि निरूप्यते इति तत्रैव निरूपितमस्माभि. । यद्यप्यानन्दमयाधिकरण एवास्यार्थस्योक्तत्वान्नेय शङ्का सभवति, तथापि गुणोपसहारप्रसङ्गे मिथ्यावादिन आपातत· शङ्का सभवतीत्याचार्येणोक्त्वा निरस्ता । ३।३।१२

' इतरे त्वर्थसामान्यात् '— ननूपास्यरूपस्याविरुद्धा एव गुणा उपसहर्तव्याः, न तु विरुद्धा. । तथाच पुरुषपक्षे पक्षादिविरुद्धमिति न तदुपसहार्यमित्याशङ्क्याह—इतरे इति । इतरे पुरुषरूपे विरुद्धत्वेन ये भासमाना धर्मास्तेऽप्युपसहर्तव्या । तत्र विरोधव्यवच्छेदज्ञापनाय तुशब्दः । तत्र हेतुरर्थसामान्यादिति । अर्थ पदार्थः आनन्दमयत्वलक्षण., तस्य समानत्वादेकत्वादित्यर्थः ।
३।३।१३

'आध्यानाय प्रयोजनाभावात्' —— अथानन्दमयाधिकरण उक्तप्रकारेण ये प्रियत्वादिधर्मास्तेषामेवोपसहार कार्य', न तु पुरुषरूपे पक्ष्यादीनामपीत्यग्रिम पठति —— आध्यानायेति । आनन्दस्वरूपस्य यावन्तो धर्मा भक्तिमार्गीया' परोक्षवादेन उच्यन्ते प्रियत्वप्राधान्यादयस्तेषा सर्वेषां ध्यानमासमन्तात् ध्यानम् । तदर्थे ये धर्मा उपयुक्तास्ते एवोपसहर्तव्याः, नान्ये । तत्र हेतुः—प्रयोजनाभावादिति । ध्यानपदार्थस्य तावद्भिरेव सिद्धेरधिकोपसहारे तथात्वादित्यर्थः ।

३।३।१४

'आत्मशब्दाच्च' —— अन्येषामनुपसहारे हेत्वन्तरमप्याह —— आत्मेति । प्रियमेवेत्यादिना परोक्षवादेनोक्ताना प्रियप्राधान्यादीनामेव भावना कार्या, न तु यथाश्रुताना शिर.पक्षादीना तेषामविवक्षितत्वात् । तत्र हेतुरात्मशब्दादिति । आनन्द आत्मेत्यनेन पूर्वोक्ताना प्रियप्राधान्यादीना रसात्मकानामात्मा स्वरूपमानन्द इत्युक्तम् । अग्रे 'रसो वै स.' इति वक्ष्यमाणत्वात् तस्य च स्थायिभावात्मकत्वात्तस्यैवानन्दमयत्वाच्च प्रिय विषयकलीलामध्यपातिभक्तज्ञानप्रकाराणामपि रसात्मकत्वेनानन्दरूपत्वात् तेषामुपासना तूत्तमाधिकाराभावाच्छिर पक्षादिरूपेण कार्येति भाववती श्रुतिस्तथा न्यरूपयत् । एतेन यत्परपरासबन्धेऽप्युपास्यत्व तदस्य महत्त्व कियदवधि वाच्यमिति ज्ञाप्यते । एव सत्युपासनामार्गीयोपास्य विभूतिरूप, न तु मूलरूपम् । यन्न योगेनेति वाक्यादिति ज्ञेयम् । वल्लभ. ३।३।१५

'प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे' — तैत्तिरीयके आनन्दमयस्य प्रियशिरस्त्वादिक प्रदर्शित 'तस्य प्रियमेव शिर. . . प्रतिष्ठा' इत्यनेन तेषा च प्रियशिरस्त्वादीनां ब्रह्मण्यप्राप्तिरसभवः । कुत', उपचयापचयौ हि भेदे सभवत इति शेष' । प्रियमोदप्रमोदानन्दरूपेण सुखस्योपचयापचयौ बहुत्वाल्पत्वेऽन्योन्यं विरुद्धे सुखाना स्वरूपतोंऽशतो वा नानात्वे तस्य ब्रह्मस्वरूपत्व न सभवति, ब्रह्मण एकत्वान्निरवयवत्वादित्यर्थ । विज्ञान ३।३।१२

**पृ ७२० तैउ. २।६ 'असन्नेव स भवति' इत्यादि ।**

'कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्ते.' —— सत्यपि प्रतिवेदान्त सृज्यमानेष्वाकाशादिषु क्रमादिद्वारके विगाने, न स्रष्टरि किंचिद्विगानमस्ति । कुतः । यथाव्यपदिष्टोक्ते —यथाभूतो ह्येकस्मिन्वेदान्ते सर्वज्ञः सर्वेश्वरः सर्वात्मैकोऽद्वितीय. कारणत्वेन व्यपदिष्ट., तथाभूत एव वेदान्तान्तरेष्वपि व्यपदिश्यते । तद्यथा— 'सत्य ज्ञानमनन्त ब्रह्म' इति । अत्र तावत् ज्ञानशब्देन परेण च तद्विषयेण कामयितृत्ववचनेन चेतन ब्रह्म न्यरूपयत् । अपरप्रयोज्यत्वेनेश्वर कारणमब्रवीत् । तद्विषयेणैव परेणात्मशब्देन शरीरादिकोशपरम्परया चान्तरमनुप्रवेशनेन सर्वेषामन्त. प्रत्यगात्मान निरधारयत् । 'बहु स्यां प्रजायेय' इति चात्मविषयेण बहुभवनानुशसनेन सृज्यमानाना विकाराणां स्रष्टुरभेदमभाषत । तथा 'इद सर्वमसृजत । यदिद किंच' इति समस्तजगत्सृष्टिनिर्देशेन प्राक्सृष्टेरद्वितीय स्रष्टारमाचष्टे । यदत्र यल्लक्षण ब्रह्म कारणत्वेन विज्ञात, तल्लक्षणमेवान्यत्रापि विज्ञायते— 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' 'तदैक्षत बहु स्या प्रजायेयेति । तत्तेजोऽसृजत' इति । तथा 'आत्मा वा इदमेक एवाग्र आसीत् । नान्यत्किंचन मिषत् । स ईक्षत लोकान्नु सृजै' इति च । एवजातीयकस्य कारणस्वरूपनिरूपणपरस्य वाक्यजातस्य प्रतिवेदान्तमविगीतार्थत्वात् । कार्यविषय तु विगान दृश्यते — क्वचिदाकाशादिका सृष्टि. क्वचित्तेजआदिकेत्येवजातीयकम् । न च कार्यविषयेण विगानेन कारणमपि ब्रह्म सर्ववेदान्तेष्वविगीतमधिगम्यमानमविवक्षित भवितुमर्हतीति शक्यते वक्तु, अतिप्रसङ्गात् । समाधास्यति चाचार्यः कार्यविषयमपि विगान 'न वियदश्रुतेः' इत्यारभ्य । भवेदपि कार्यस्य विगीतत्वमप्रतिपाद्यत्वात् । न ह्यय सृष्ट्यादिप्रपञ्चः प्रतिपिपादयिषित । न हि तत्प्रतिबद्ध कश्चित्पुरुषार्थो दृश्यते श्रूयते वा । न च कल्पयितु शक्यते, उपक्रमोपसहाराभ्या तत्र तत्र ब्रह्मविषयैर्वाक्यैः साकमेकवाक्यताया गम्यमानत्वात् । दर्शयति च सृष्ट्यादिप्रपञ्चस्य ब्रह्मप्रतिपत्त्यर्थताम् । 'अन्नेन सोम्य शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ' इति । मृदादिदृष्टान्तैश्च कार्यस्य

कारणेनाभेदं वदितुं सृष्ट्यादिप्रपञ्चः श्राव्यत इति गम्यते। तथा च सम्प्रदायविदो वदन्ति — 'मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा। उपायः सोऽवताराय नास्ति भेदः कथञ्चन॥' इति। ब्रह्मप्रतिपत्तिप्रतिबद्धं तु फलं श्रूयते — 'ब्रह्मविदाप्नोति परम्' 'तरति शोकमात्मवित्' 'तमेव विदित्वाति मृत्युमेति' इति। प्रत्यक्षावगमं चेदं फलं, 'तत्त्वमसि' इत्यसंसार्यात्मत्वप्रतिपत्तौ सत्यां संसार्यात्मत्वव्यावृत्तेः। * १।४।१४

'अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत्' — 'ऋतौ भार्यामुपेयात्' इत्यनुज्ञा, 'गुर्वङ्गनां नोपगच्छेत्' इति परिहारः। तथा 'अग्नीषोमीयं पशुं संज्ञपयेत्' इत्यनुज्ञा, 'न हिंस्यात्सर्वा भूतानि' इति परिहारः। एवं लोकेऽपि मित्रमुपसेवितव्यमित्यनुज्ञा, शत्रुः परिहर्तव्य इति परिहारः। एवंप्रकारावनुज्ञापरिहारौ एकत्वेऽप्यात्मनः देहसम्बन्धात् स्याताम्। देहैः सम्बन्धो देहसम्बन्धः। कः पुनर्देहसम्बन्धः? देहादिरयं सङ्घातोऽहमेव — इत्यात्मनि विपरीतप्रत्ययोत्पत्तिः। दृष्टा च सा सर्वप्राणिनाम् — अहं गच्छामि अहमागच्छामि, अहमन्धः अहमनन्धः, अहं मूढः अहममूढः इत्येवमात्मिका। न हि अस्याः सम्यग्दर्शनादन्यन्निवारकमस्ति। प्राक्तु सम्यग्दर्शनात्प्रततैषा भ्रान्तिः सर्वजन्तुषु। तदेवमविद्यानिमित्तदेहाद्युपाधिसम्बन्धकृताद्विशेषात् ऐकात्म्याभ्युपगमेऽप्यनुज्ञापरिहाराववकल्पेते। तस्माद्देहसम्बन्धादेवानुज्ञापरिहारौ — ज्योतिरादिवत् — यथा ज्योतिष एकत्वेऽप्यग्निः क्रव्यात्परिह्रियते, नेतरः। यथा च प्रकाशः एकस्यापि सवितुरमेध्यदेशसम्बद्धः परिह्रियते, नेतरः शुचिभूमिष्ठः। तथा भौमाः प्रदेशाः वज्रवैडूर्यादय उपादीयन्ते, भौमा अपि सन्तो नरकलेवरादयः परिह्रियन्ते। तथा मूत्रपुरीषं गवां पवित्रतया परिगृह्यते, तदेव जात्यन्तरे परिवर्ज्यते तद्वत्।

ब्रशंकर २।३।४८

**पृ. ७२५ तैउ २।७ 'असद्वा इदमग्र आसीत्' इत्यादि।**

'समाकर्षात्' — 'असद्वा इदमग्र आसीत्' इति नात्रासन्निरात्मकं कारणत्वेन श्राव्यते। यतः 'असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुः' इत्यसद्वादापवादेनास्तित्वलक्षणं ब्रह्मान्नमयादिकोशपरम्परया प्रत्यगात्मानं निर्धार्य, 'सोऽकामयत' इति तमेव प्रकृतं समाकृष्य, सप्रपञ्चां सृष्टिं तस्मात् श्रावयित्वा, 'तत्सत्यमित्याचक्षते' इति चोपसंहृत्य, 'तदप्येष श्लोको भवति' इति तस्मिन्नेव प्रकृतेऽर्थे श्लोकमिममुदाहरति— 'असद्वा इदमग्र आसीत्' इति। यदि त्वसन्निरात्मकमस्मिन् श्लोकेऽभिप्रेयेत, ततोऽन्यसमाकर्षणेऽन्यस्योदाहरणादसम्बद्धं वाक्यमापद्येत। तस्मान्नामरूपव्याकृतवस्तुविषयः प्रायेण सच्छब्दः प्रसिद्ध इति तद्व्याकरणाभावापेक्षया प्रागुत्पत्तेः सदेव ब्रह्मासदिवासीदित्युपचर्यते। एषैव 'असदेवेदमग्र आसीत्' इत्यत्रापि योजना, 'तत्सदासीत्' इति समाकर्षणात्। अत्यन्ताभावाभ्युपगमे हि 'तत्सदासीत्' इति किं समाकृष्येत। 'तद्धैक आहुरसदेवेदमग्र आसीत्' इत्यत्रापि न श्रुत्यन्तराभिप्रायेणायमेकीयमतोपन्यासः, क्रियायामिव वस्तुनि विकल्पस्यासम्भवात्। तस्मात् श्रुतिपरिगृहीतसत्पक्षदार्ढ्यायैवायं मन्दमतिपरिकल्पितस्यासत्पक्षस्योपन्यस्य निरास इति द्रष्टव्यम्। * १।४।१५

'आत्मकृतेः परिणामात्' — इतश्च प्रकृतिर्ब्रह्म, यत्कारणं ब्रह्मप्रक्रियायाम् 'तदात्मानं स्वयमकुरुत' इत्यात्मनः कर्मत्वं कर्तृत्वं च दर्शयति— आत्मानमिति कर्मत्वं, स्वयमकुरुतेति कर्तृत्वम्। कथं पुनः पूर्वसिद्धस्य सतः कर्तृत्वेन व्यवस्थितस्य क्रियमाणत्वं शक्यं सम्पादयितुम्? परिणामादिति ब्रूमः —पूर्वसिद्धोऽपि हि सन्नात्मा विशेषेण विकारात्मना परिणमयामासात्मानमिति। विकारात्मना च परिणामो मृदाद्यासु प्रकृतिषूपलब्धः। स्वयमिति च विशेषणान्निमित्तान्तरानपेक्षत्वमपि प्रतीयते। 'परिणामात्' इति वा पृथक्सूत्रम्। तस्यैषोऽर्थः—इतश्च प्रकृतिर्ब्रह्म, यत्कारणं ब्रह्मण एव विकारात्मना च परिणामः सामानाधिकरण्येनाम्नायते 'सच्च त्यच्चाभवन्निरुक्तं चानिरुक्तं च' इत्यादिनेति।

ब्रशंकर १।४।२६

---

* भास्कर रामानुज निंबार्क बशंकरवत्।

* भास्कर रामानुज निंबार्क श्रीकंठ श्रीकर, ब्रशंकरवत्।

‘पराभिध्यानात्तु तिरोहित ततो ह्यस्य बन्धविपर्ययौ’ —— तुशब्द. शङ्काव्यावृत्त्यर्थ. । पराभिध्यानात्परमपुरुषसकल्पादस्य जीवस्य स्वाभाविक रूप तिरोहितम् । अनादिकर्मपरम्परया कृतापराधस्य ह्यस्य स्वाभाविक कल्याणरूप परमपुरुषस्तिरोधापयति । ततस्तत्सकल्पादेव ह्यस्य जीवस्य बन्धमोक्षौ श्रुतौ ‘यदा ह्येवैष एतस्मिन्नदृश्येऽनिरुक्तेऽनात्म्येऽनिलयनेऽभय प्रतिष्ठा विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तर कुरुते । अथ तस्य भय भवति’( तैउ २।७।१ ) ‘एष ह्येवानन्दयाति’ ( तैउ २।७।१ ) ‘भीषाऽस्माद्वातः पवते’ ( तैउ २।८।१ ) इत्यादिषु ।

रामानुज ३।२।४

‘समाकर्षात्’– सर्वेष्वेतेषु वाक्येषु असदादिपदाना न निरात्मकत्वाद्यर्था उच्यन्ते, किन्तु वैलक्षण्येन । सर्वशब्दवाच्यत्व च सिद्ध ब्रह्मण ।

वल्लभ १।४।१५

पृ ७२८ तैउ २।८ ‘भीषाऽस्माद्वात· पवते’ इत्यादि ।

‘दर्शयतश्चैव प्रत्यक्षानुमाने’ —— अस्य प्रत्यगात्मनो मुक्तस्य नियाम्यभूतस्य नियन्तृभूतपरमपुरुषासाधारण जगद्व्यापाररूप नियमन न सभवतीत्युक्तम् । निखिलजगन्नियमनरूपो व्यापार. परमपुरुषासाधारण इति दर्शयत. श्रुतिस्मृती —— ‘भीषाऽस्माद्वात· पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति’ ( तैउ २।८ ) । ‘एतस्य वा अक्षरस्य प्रशासने सूर्याचन्द्रमसौ विधृतौ तिष्ठतः’ (बृउ ३।८।९) इत्यादि । तथा ‘एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषा लोकानामसभेदाय’ ( बृउ ४।४।२२ ) इति च श्रुति. । स्मृतिरपि —— ‘मयाऽध्यक्षेण प्रकृति सूयते सचराचरम् । हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥’ ( भ गी ९।१० ) इति ।

रामानुज ४।४।२०

पृ. ७३५ तैउ ३।१ ‘भृगुर्वै वारुणि.’ इत्यादि ।

‘जन्माद्यस्य यत’ —— किं पुनस्तद्वेदान्तवाक्य यत् सूत्रेणेह लिलक्षयिषितम् । ‘भृगुर्वै वारुणिः । वरुण पितरमुपससार । अधीहि भगवो ब्रह्मेति’ इत्युपक्रम्याह——‘यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति यत्प्रयन्त्यभिसविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति’ तस्य च निर्णयवाक्यम्——‘आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्द प्रयन्त्यभिसविशन्ति’ इति । अन्यान्यप्येवजातीयकानि वाक्यानि नित्यशुद्धबुद्धमुक्तस्वभावसर्वज्ञस्वरूपकारणविषयाणि उदाहर्तव्यानि ।

* १।१।२

‘शास्त्रयोनित्वात्’ —— महत ऋग्वेदादेः शास्त्रस्य अनेकविद्यास्थानोपबृहितस्य प्रदीपवत्सर्वार्थावद्योतिन. सर्वज्ञकल्पस्य योनि. कारण ब्रह्म । ऋग्वेदाद्याख्यस्य सर्वज्ञानाकरस्य अप्रयत्नेनैव लीलान्यायेन पुरुषनिःश्वासवत् यस्मान्महतो भूतात् योने. सभवः—— ‘अस्य महतो भूतस्य नि श्वसितमेतत् यदृग्वेद·’ इत्यादिश्रुते — तस्य महतो भूतस्य निरतिशय सर्वज्ञत्व सर्वशक्तिमत्त्व चेति ।

अथवा यथोक्तमृग्वेदादिशास्त्र योनिः कारण प्रमाणमस्य ब्रह्मणो यथावत्स्वरूपाधिगमे । शास्त्रादेव प्रमाणात् जगतो जन्मादिकारण ब्रह्माधिगम्यत इत्यभिप्राय. । शास्त्रमुदाहृत पूर्वसूत्रे —— ‘यतो वा इमानि भूतानि जायन्ते’ इत्यादि ।

‡ ब्रशकर १।१।३

---

## छान्दोग्योपनिषत्

पृ. ७४६ छाउ १।१।१ ‘ओमित्येतदक्षरं’ इत्यादि ।

‘व्याप्तेश्च समञ्जसम्’ —— ‘ओमित्येतदक्षरमुद्गीथमुपासीत’ इत्यत्र अक्षरोद्गीथशब्दयोः सामानाधिकरण्ये श्रूयमाणे अध्यासापवादैकत्वविशेषणपक्षाणा प्रतिभासनात् कतमोऽत्र पक्षो न्याय्यः स्यादिति विचारः । तत्र अध्यासो नाम —— द्वयोर्वस्तुनोः अनिवर्तितायामेव

* भास्कर. रामानुज निंबार्क ब्रमध्व श्रीकठ श्रीकर. वल्लभ ब्रशकरवद्भाव ।

‡ रामानुज वल्लभ विज्ञान ब्रशकरवद्भाव. ।

अन्यतरबुद्धौ अन्यतरबुद्धिरध्यस्यते । यस्मिन् इतरबुद्धिरध्यस्यते, अनुवर्तते एव तस्मिन् तद्बुद्धि., अध्यस्तेतरबुद्धावपि —— यथा नाम्नि ब्रह्मबुद्धावध्यस्यमानायामपि अनुवर्तत एव नामबुद्धिः, न ब्रह्मबुद्ध्या निवर्तते । यथा वा प्रतिमादिषु विष्ण्वादिबुद्ध्यध्यासः, एवमिहापि अक्षरे उद्गिथबुद्धिरध्यस्येत, उद्गीथे वा अक्षरबुद्धिरिति । अपवादो नाम यत्र कस्मिंश्चिद्वस्तुनि पूर्वनिविष्टाया मिथ्याबुद्धौ निश्चितायां, पश्चादुपजायमाना यथार्था बुद्धि पूर्वनिविष्टाया मिथ्याबुद्धेः निवर्तिका भवति । यथा देहेन्द्रियसघाते आत्मबुद्धिः, आत्मन्येव आत्मबुद्ध्या पश्चाद्भाविन्या 'तत्त्वमसि' इत्यनया यथार्थबुद्ध्या निवर्त्यते । यथा वा दिग्भ्रान्तिबुद्धिः दिग्याथात्म्यबुद्ध्या निवर्त्यते । एवमिहापि अक्षरबुद्ध्या उद्गीथबुद्धिर्निवर्त्येत, उद्गीथबुद्ध्या वा अक्षरबुद्धिरिति । एकत्व तु अक्षरोद्गीथशब्दयोरनतिरिक्तार्थवृत्तित्वम् । यथा द्विजोत्तमो ब्राह्मणो भूमिदेव इति । विशेषण पुनः सर्ववेदव्यापिन ओमित्येतस्याक्षरस्य ग्रहणप्रसङ्गे औद्गात्रविशेषस्य समर्पणम् । यथा नील यदुत्पल तदानयेति, एवमिहापि उद्गीथो य ओंकारः तमुपासीतेति । एवमेतस्मिन्सामानाधिकरण्यवाक्ये विमृश्यमाने, एते पक्षा. प्रतिभान्ति । तत्रान्यतमनिर्धारणकारणाभावात् अनिर्धारणप्राप्तौ इदमुच्यते —— व्याप्तेश्च समञ्जसमिति । चशब्दोऽय तुशब्दस्थाननिवेशी पक्षत्रयव्यावर्तनप्रयोजन. । तदिह त्रयः पक्षा' सावद्या इति पर्युदस्यन्ते । विशेषणपक्ष एवैको निरवद्य इत्युपादीयते । तत्राध्यासे तावत् या बुद्धि इतरत्र अध्यस्यते, तच्छब्दस्य लक्षणावृत्तित्व प्रसज्येत, तत्फल च कल्प्येत । श्रूयत एव फल, 'आपयिता ह वै कामाना भवति' इत्यादि, इति चेत्—तन्न, तस्य अन्यफलत्वात् । आप्त्यादिदृष्टिफल हि तत्, नोद्गीथाध्यासफलम् । अपवादेऽपि समान फलाभावः । मिथ्याज्ञाननिवृत्तिः फलमिति चेत्, न । पुरुषार्थोपयोगानवगमात् । न च कदाचिदपि ओंकारात् ओंकारबुद्धिर्निवर्तेत, उद्गीथाद्वा उद्गीथबुद्धिः । न चेद वाक्य वस्तुतत्त्वप्रतिपादनपर, उपासनाविधिपरत्वात् । नापि एकत्वपक्षः सगच्छते । निष्प्रयोजन हि तदा शब्दद्वयोच्चारण स्यात्, एकेनैव विवक्षितार्थसमर्पणात् । न च हौत्रविषये आध्वर्यवविषये वा अक्षरे ओंकारशब्दवाच्ये उद्गीथशब्दप्रसिद्धिरस्ति, नापि सकलाया साम्नो द्वितीयाया भक्तौ उद्गीथशब्दवाच्यायां ओंकारशब्दप्रसिद्धि, येनानतिरिक्तार्थता स्यात् । परिशेषाद्विशेषणपक्ष. परिगृह्यते, व्याप्ते. सर्ववेदसाधारण्यात् । सर्वव्याप्यक्षरमिह मा प्रसञ्जि इत्यत उद्गीथशब्देन अक्षर विशेष्यते । कथ नाम उद्गीथावयवभूत ओंकारो गृह्येतेति । नन्वस्मिन्नपि पक्षे समाना लक्षणा, उद्गीथशब्दस्य अवयवलक्षणार्थत्वात् । सत्यमेवमेतत् । लक्षणायामपि तु सन्निकर्षविप्रकर्षौ भवत एव । अध्यासपक्षे हि अर्थान्तरबुद्धिरर्थान्तरे निक्षिप्यत इति विप्रकृष्टा लक्षणा, विशेषणपक्षे तु अवयविवचनेन शब्देन अवयव समर्प्यत इति सन्निकृष्टा । समुदायेषु हि प्रवृत्ता' शब्दा अवयवेष्वपि वर्तमाना दृष्टा पटग्रामादिषु । अतश्च व्याप्तेर्हेतोः 'ओमित्येतदक्षरम्' इत्येतस्य 'उद्गीथम्' इत्येतद्विशेषणमिति समञ्जसमेतत्, निरवद्यमित्यर्थ । ३।३।९

'भावशब्दाच्च' —— 'उद्गीथमुपासीत' 'सामोपासीत' 'अहमुक्थमस्मीति विद्यात्' इत्यादयश्च विस्पष्टा विधिशब्दाः श्रूयन्ते । ते च स्तुतिमात्रप्रयोजनतायां व्याहन्येरन् । तथा च न्यायविदा स्मरणम् —— 'कुर्यात्क्रियेत कर्तव्य भवेत्स्यादिति पञ्चमम् । एतत्स्यात्सर्ववेदेषु नियत विधिलक्षणम् ॥' इति लिङाद्यर्थो विधिरिति मन्यमानास्त एव स्मरन्ति । प्रतिप्रकरण च फलानि श्राव्यन्ते —— 'आपयिता ह वै कामाना भवति' (छाउ १।१।७) 'एष ह्येव कामागानस्येष्टे' ( छाउ. १।७।९ ) 'कल्पन्ते ह्यस्मै लोका ऊर्ध्वाश्चावृत्ताश्च' (छाउ. २।२।३) इत्यादीनि । तस्मादप्युपासनविधानार्था उद्गीथादिश्रुतय. । ब्रशाकर ३।४।२२

**पृ ७५० छाउ. १।१।१० 'तेनोभौ कुरुतो' इत्यादि ।**

'यदेव विद्ययेति हि' —— तथा हि श्रुतिः—— 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तर भवति' इति विद्यासयुक्तस्य कर्मणोऽग्निहोत्रादेः वीर्यवत्तरत्वाभिधानेन स्वकार्ये प्रति कञ्चिदतिशय ब्रुवाणा विद्याविहीनस्य तस्यैव तत्प्रयोजनं

प्रति वीर्यवत्त्व दर्शयति । कर्मणश्च वीर्यवत्त्व तत्, यत्स्वप्रयोजनसाधनसहत्वम् । तस्माद्विद्यासयुक्त नित्यमग्निहोत्रादि विद्याविहीन च उभयमपि मुमुक्षुणा मोक्षप्रयोजनोद्देशेन इह जन्मनि जन्मान्तरे च प्राग्ज्ञानोत्पत्ते. कृत यत्, तद्यथासामर्थ्ये ब्रह्माधिगमप्रतिबन्धकारणोपात्त दुरितक्षयहेतुत्वद्वारेण ब्रह्माधिगमकारणत्व प्रतिपद्यमान श्रवणमननश्रद्धातात्पर्याद्यन्तरङ्गकारणापेक्ष ब्रह्मविद्यया सह एककार्ये भवतीति स्थितम् ।

ब्रशाकर ४।१।१८

पृ ७५२ छाउ १।२।७ ' अथ ह य एवायं ' इत्यादि ।

' अन्यथात्व शब्दादिति चेन्नाविशेषात् ' — ननु न युक्त विद्यैकत्व, प्रक्रमभेदात् । अन्यथा हि प्रक्रमन्ते वाजसनेयिन', अन्यथा छन्दोगा' -- 'त्वं न उद्गाय' इति वाजसनेयिनः उद्गीथस्य कर्तृत्वेन प्राणमामनन्ति, छन्दोगास्तु उद्गीथत्वेन 'तमुद्गीथमुपासाचक्रिरे' इति । तत्कथ विद्यैकत्व स्यादिति चेत् — नैष दोष । न हि एतावता विशेषेण विद्यैकत्व अपगच्छति, अविशेषस्यापि बहुतरस्य प्रतीयमानत्वात् । ३।३।६

' न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ' — न वा विद्यैकत्वमत्र न्याय्यम् । विद्याभेद एव अत्र न्याय्य' । कस्मात् । प्रकरणभेदात्, प्रक्रमभेदादित्यर्थ. । तथा हि इह प्रक्रमभेदो दृश्यते । छान्दोग्ये तावत् ' ओमित्येतदक्षरमुद्गीथमुपासीत ' इत्येवमुद्गीथावयवस्य ओंकारस्य उपास्यत्व प्रस्तुत्य, रसतमत्वादिगुणोपव्याख्यान तत्र कृत्वा, ' अथ खल्वेतस्यैवाक्षरस्योपव्याख्यान भवति ' इति पुनरपि तमेव उद्गीथावयवमोंकारमनुवर्त्य, देवासुराख्यायिकाद्वारेण त 'प्राणमुद्गीथमुपासांचक्रिरे' इत्याह ।

वाजसनेयके तु उद्गीथशब्देन अवयवग्रहणे कारणाभावात् सकलैव भक्तिरावेद्यते । 'त्व न उद्गाय' इत्यपि तस्याः कर्ता उद्गाता ऋत्विक् प्राणत्वेन निरूप्यत इति प्रस्थानान्तरम् ।

परोवरीयस्त्वादिवत् — यथा परमात्मदृष्ट्यध्यास साम्येऽपि, 'आकाशो ह्येवैभ्यो ज्यायानाकाश. परायणम्' 'स एष परोवरीयानुद्गीथ. स एषोऽनन्तः' इति परोवरीयस्त्वगुणविशिष्ट उद्गीथोपासन अक्ष्यादित्यादिगतहिरण्यश्मश्रुत्वादिगुणविशिष्टोद्गीथोपासनात् भिन्नम् ।

* ब्रशाकर. ३।३।७

पृ ७५८ छाउ. १।५।१ 'अथ खलु य उद्गीथ ' इत्यादि ।

'लिङ्गाच्च' -- लिङ्गमपि प्रत्ययावृत्तिं प्रत्याययति । तथा हि -- उद्गीथविज्ञान प्रस्तुत्य, 'आदित्य उद्गीथः' इत्येतत् एकपुत्रतादोषेणापोद्य, 'रश्मींस्त्व पर्यावर्तयात्' इति रश्मिबहुत्वविज्ञान बहुपुत्रतायै विदधत् सिद्धवत् प्रत्ययावृत्तिं दर्शयति । तत्सामान्यात् सर्वप्रत्ययेष्वावृत्तिसिद्धि. ।

यस्य तु न एषोऽनुभवो द्रागिव जायते, त प्रति अनुभवार्थ एव आवृत्त्यभ्युपगमः । तत्रापि न तत्त्वमसिवाक्यार्थात् प्रच्याव्य आवृत्तौ प्रवर्तयेत् । न हि वरघाताय कन्यामुद्वाहयन्ति । नियुक्तस्य च 'अस्मिन्नधिकृतोऽह कर्ता मयेद कर्तव्यम् ' इत्यवश्य ब्रह्मप्रत्ययाद्विपरीतप्रत्यय उत्पद्यते । यस्तु स्वयमेव मन्दमति अप्रतिभानात् त वाक्यार्थं जिहासेत्, तस्य एतस्मिन्नेव वाक्यार्थे स्थिरीकार आवृत्त्यादिवाचोयुक्त्या अभ्युपेयते । तस्मात् परब्रह्मविषयेऽपि प्रत्यये तदुपायोपदेशेष्वावृत्तिसिद्धिः । ब्रशाकर ४।१।२

पृ ७५९ छाउ १।५।५ 'अथ खलु य उद्गीथः ' इत्यादि ।

' समाहारात् ' -- 'होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति ' इति च प्रणवोद्गीथैकत्वविज्ञानमाहात्म्यात् उद्गाता स्वकर्मण्युत्पन्न क्षत हौत्रात्कर्मण' प्रतिसमादधाति इति ब्रुवन् वेदान्तरोदितस्य प्रत्ययस्य वेदान्तरोदितपदार्थसबन्धसामान्यात् सर्ववेदोदितप्रत्ययोपसहार सूचयति इति लिङ्गदर्शनम् ।

३।३।६३

' गुणसाधारण्यश्रुतेश्च' — विद्यागुण च विद्याश्रय सन्त ओंकार वेदत्रयसाधारण श्रावयति— ' तेनेय त्रयी विद्या वर्तत ओमित्याश्रावयत्योमिति शसत्योमित्युद्गायति ' इति च । ततश्च आश्रयसाधारण्यात् आश्रित-

---

* भास्कर रामानुज निंबार्क श्रीकठ श्रीकर ब्रशाकरवत् ।

साधारण्यमिति लिङ्गदर्शनमेव । अथवा गुणसाधारण्यश्रुतेश्चेति । यदीमे कर्मगुणा उद्गीथादयः सर्वे सर्वप्रयोगसाधारणा न स्युः, न स्यात् ततः तदाश्रयाणा प्रत्ययाना सहभावः । ते तु उद्गीथादयः सर्वाङ्गग्राहिणा प्रयोगवचनेन सर्वे सर्वप्रयोगसाधारणा. श्राव्यन्ते । ततश्च आश्रयसहभावात्प्रत्ययसहभाव इति ।

ब्रशकर ३।३।६४

पृ. ७६६ छाउ १।९।१ 'अस्य लोकस्य का गतिरिति' इत्यादि ।

'आकाशस्तल्लिङ्गात्'— आकाशशब्देनेह ब्रह्मणो ग्रहण युक्तम् । कुत. । तल्लिङ्गात् । परस्य हि ब्रह्मण इद लिङ्गम्—'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इति । परस्माद्धि ब्रह्मणो भूतानामुत्पत्तिरिति वेदान्तेषु मर्यादा ।

ननु भूताकाशस्यापि वाय्वादिक्रमेण कारणत्व दर्शितम् । सत्य दर्शितम् । तथापि मूलकारणस्य ब्रह्मणोऽपरिग्रहादाकाशादेवेत्यवधारण सर्वाणीति च भूतविशेषण नानुकूल स्यात् । तथा 'आकाश प्रत्यस्त यन्ति' इति ब्रह्मलिङ्ग 'आकाशो ह्येवैभ्यो ज्यायानाकश. परायणम्' इति च ज्यायस्त्वपरायणत्वे । ज्यायस्त्व ह्यनापेक्षिक परमात्मन्येवैकस्मिन्नाम्नातम्—'ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्य.' (छाउ. ३।१४।३) इति । तथा परायणत्वमपि परम कारणत्वात्परमात्मन्येवोपपन्नतर भवति । श्रुतिश्च—'विज्ञानमानन्द ब्रह्म रातेर्दातुः परायणम्' (बृउ ३।९।२८) इति । अपि चान्तवत्त्वदोषेण शालावत्यस्य पक्ष निन्दित्वाऽनन्त किंचिद्वक्तुकामेन जैवलिनाऽऽकाशः परिगृहीत., त चाकाशमुद्गीथे सपाद्योपसहरति—'स एष परोवरीयानुद्गीथ स एषोऽनन्त' (छाउ. १।९।२) इति । तच्चाऽऽनन्त्य ब्रह्मलिङ्गम् । यत्पुनरुक्त भूताऽऽकाश प्रसिद्धिबलेन प्रथमतर प्रतीयत इति ।

अत्र ब्रूमः—प्रथमतर प्रतीतमपि सद्वाक्यशेषगतान् ब्रह्मगुणान् दृष्ट्वा न परिगृह्यते । दर्शितश्च ब्रह्मण्यप्याकाशशब्दः—'आकाशो ह वै नाम नामरूपयोर्निर्वहिता' इत्यादौ । तथाऽऽकाशपर्यायवाचिनामपि ब्रह्मणि प्रयोगो दृश्यते—'ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदु.' (ऋस १।१६४।३९) 'सैषा भार्गवी वारुणी विद्या परमे व्योमन्प्रतिष्ठिता' (तैउ ३।६) 'ॐ क ब्रह्म ख ब्रह्म' (छाउ ४।१०।५) 'ख पुराणम्' (बृउ ५।१) इति चैवमादौ । वाक्योपक्रमेऽपि वर्तमानस्याऽऽकाशशब्दस्य वाक्यशेषवशाद्युक्ता ब्रह्मविषयत्वावधारणा । 'अग्निरधीतेऽनुवाकम्' इति हि वाक्योपक्रमगतोऽप्यग्निशब्दो माणवकविषयो दृश्यते । तस्मादाकाशशब्द ब्रह्मेति सिद्धम् ।

१।१।२२

'साक्षाच्चोभयाम्नानात्'— प्रकृतित्वस्यायमभ्युच्चय. । इतश्च प्रकृतिर्ब्रह्म, यत्कारण साक्षात् ब्रह्मैव कारणमुपादायोभौ प्रभवप्रलयावाम्नायेते—'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते । आकाश प्रत्यस्त यन्ति' (छाउ १।९।१) इति । यद्धि यस्मात् प्रभवति, यस्मिंश्च प्रलीयते तत्तस्योपादान प्रसिद्धम् । यथा व्रीहियवादीनां पृथिवी । साक्षादिति चोपादानान्तरानुपादान दर्शयत्याकाशादेवेति । प्रत्यस्तमयश्च नोपादानादन्यत्र कार्यस्य दृष्टः ।

* ब्रशकर. १।४।२५

पृ ७७० छाउ १।११।५ 'प्राण इति होवाच' इत्यादि ।

'अत एव प्राण.'— तल्लिङ्गात् इति पूर्वसूत्रे निर्दिष्टम् । अत एव तल्लिङ्गात्प्राणशब्दमपि पर ब्रह्म भवितुमर्हति । प्राणस्यापि हि ब्रह्मलिङ्गसबन्ध श्रूयते—'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसविशन्ति प्राणमभ्युज्जिहते' (छाउ १।११।५) इति । प्राणनिमित्तौ सर्वेषा भूतानामुत्पत्तिप्रलयावुच्यमानौ प्राणस्य ब्रह्मता गमयतः ।

‡ ब्रशकर १।१।२३

पृ ७८६ छाउ २।२३।१ 'त्रयो धर्मस्कन्धा.' इत्यादि ।

'मौनवदितरेषामप्युपदेशात्'— यथा मौन गार्हस्थ्य च एतावाश्रमौ श्रुतिमन्तौ, एवमितरावपि

---

* भास्कर रामानुज निंबार्क ब्रमध्व श्रीकठ श्रीकर वल्लभ ब्रशकरवत् ।

‡ भास्कर रामानुज निंबार्क श्रीकठ श्रीकर ब्रशकरवत् ।

वानप्रस्थगुरुकुलवासौ । दर्शिता हि पुरस्ताच्छ्रुतिः — ' तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीय. ' इत्याद्या । तस्मात् चतुर्णामप्याश्रमाणा उपदेशाविशेषात् तुल्यवत् विकल्पसमुच्चयाभ्या प्रतिपत्ति । इतरेषामिति द्वयोराश्रमयोर्बहुवचन वृत्तिभेदापेक्षया अनुष्ठातृभेदापेक्षया वा इति द्रष्टव्यम् । ब्रशकर ३।४।४९

पृ. ८०२ छाउ ३।१२।६ ' तावानस्य महिमा ' इत्यादि ।

' भूतादिपादव्यपदेशोपपत्तेश्चैवम् ' — इतश्चैवमभ्युपगन्तव्यमस्ति, पूर्वस्मिन्वाक्ये प्रकृत ब्रह्मेति । यतो भूतादीन् पादान्व्यपदिशति श्रुतिः । भूतपृथिवीशरीर हृदयानि हि निर्दिश्याह— ' सैषा चतुष्पदा षड्विधा गायत्री' इति । न हि ब्रह्मानाश्रयणे केवलस्य छन्दसो भूतादय. पादा उपपद्यन्ते । अपि च ब्रह्मानाश्रयणे नेयमृक् सबध्येत — ' तावानस्य महिमा' इति । अनया हि ऋचा स्वरसेन ब्रह्मैवाभिधीयते, ' पादोऽस्य सर्वा भूतानि त्रिपादस्यामृत दिवि' इति सर्वात्मत्वोपपत्ते । पुरुषसूक्तेऽपीयमृक् ब्रह्मपरतयैव समाम्नायते ।

१।१।२६

' उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ' — यदप्येतदुक्तम् — पूर्वत्र ' त्रिपादस्यामृत दिवि ' इति सप्तम्या द्यौ. आधारत्वेनोपदिष्टा । इह पुनः ' अथ यदत॰ परो दिव॰ ' इति पञ्चम्या मर्यादात्वेन । तस्मादुपदेशभेदान्न तस्येह प्रत्यभिज्ञानमस्तीति — तत्परिहर्तव्यम् । अत्रोच्यते — नाय दोष॰, उभयस्मिन्नप्यविरोधात् । उभयस्मिन्नपि सप्तम्यन्ते पञ्चम्यन्ते चोपदेशे न प्रत्यभिज्ञान विरुध्यते । यथा लोके वृक्षाग्रेण सबद्धोऽपि श्येन उभयथोपदिश्यमानो दृश्यते, वृक्षाग्रे श्येनो वृक्षाग्रात्परत. श्येन इति च, एव दिव्येव सद्ब्रह्म दिव परमित्युपदिश्यते । अपर आह – यथा लोके वृक्षाग्रेणासबद्धोऽपि श्येन उभयथोपदिश्यमानो दृश्यते, वृक्षाग्रे श्येनो वृक्षाग्रात्परतः श्येन इति च । एवं दिव परमपि सद्ब्रह्म दिवीत्युपदिश्यते । तस्मादस्ति पूर्वनिर्दिष्टस्य ब्रह्मण इह प्रत्यभिज्ञानम् । अतः परमेव ब्रह्म ज्योति शब्दमिति सिद्धम् । १।१।२७

' विकारावर्ति च तथाहि स्थितिमाह' — विकारावर्त्यपि च नित्यमुक्त पारमेश्वर रूप, न केवल विकारमात्रगोचर सवितृमण्डलाद्यधिष्ठानम् । तथा ह्यस्य द्विरूपां स्थितिमाहाऽऽम्नायः ' तावानस्य महिमा ततो ज्यायांश्च पूरुष । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृत दिवि ' ( छाउ ३।१२।६ ) इत्येवमादि. । न च तन्निर्विकाररूपमितरालम्बना प्राप्नुवन्तीति शक्य वक्तुमतत्क्रतुत्वात्तेषाम् । अतश्च यथैव द्विरूपे परमेश्वरे निर्गुण रूपमनवाप्य सगुण एवावतिष्ठन्ते, एव सगुणेऽपि निरवग्रहमैश्वर्यमनवाप्य सावग्रह एवावतिष्ठन्त इति द्रष्टव्यम् । ब्रशकर ४।४।१९

पृ ८०५ छाउ ३।१३।७ 'अथ यदतः परो' इत्यादि ।

'ज्योतिश्चरणाभिधानात्'—ज्योतिरिह ब्रह्म ग्राह्यम् । कुतः । चरणाभिधानात्, पादाभिधानादित्यर्थः । पूर्वस्मिन् हि वाक्ये चतुष्पाद् ब्रह्म निर्दिष्टम् — 'तावानस्य महिमा ततो ज्यायाँश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृत दिवि' ( छाउ ३।१२।६ ) इत्यनेन मन्त्रेण । तत्र यच्चतुष्पदो ब्रह्मणस्त्रिपादमृत द्युसबन्धिरूप निर्दिष्ट, तदेवेह द्युसबन्धान्निर्दिष्टमिति प्रत्यभिज्ञायते । तत्परित्यज्य प्राकृत ज्योतिः कल्पयत प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयाताम् । न केवल ज्योतिर्वाक्य एव ब्रह्मानुवृत्ति॰, परस्यामपि शाण्डिल्यविद्यायामनुवर्तिष्यते ब्रह्म । तस्मादिह ज्योतिरिति ब्रह्म प्रतिपत्तव्यम् ।

यच्चप्युक्तं द्युमर्यादत्व सर्वगतस्य ब्रह्मणो नोपपद्यत इति । अत्रोच्यते—सर्वगतस्यापि ब्रह्मण उपासनार्थः प्रदेशविशेषपरिग्रहो न विरुध्यते ।

यदप्येतदुक्तमौष्ण्यघोषाभ्यामनुमिते कौक्षेये कार्ये ज्योतिष्यध्यस्यमानत्वात् परमपि दिव॰ कार्यज्योतिरेवेति । तदप्ययुक्तम् । परस्यापि ब्रह्मणो नामादिप्रतीकत्ववत्कौक्षेयज्योतिष्प्रतीकत्वोपपत्ते. । * ब्रशकर १।१।२४

पृ ८०७ छाउ. ३।१४।१–४ ' सर्वं खल्विद ब्रह्म' इत्यादि ।

* भास्कर रामानुज निंबार्क श्रीकंठ. श्रीकर ब्रशकरवत् ।

‘सर्वत्र प्रसिद्धोपदेशात्’ — परमेव ब्रह्मेह मनोमयत्वादिभिर्धर्मैरुपास्यम्। कुत॰? सर्वत्र प्रसिद्धोपदेशात्। यत्सर्वेषु वेदान्तेषु प्रसिद्ध ब्रह्मशब्दस्यालम्बन जगत्कारण, इह च ‘सर्वं खल्विद ब्रह्म’ इति वाक्योपक्रमे श्रुत, तदेव मनोमयत्वादिधर्मैर्विशिष्टमुपदिश्यत इति युक्तम्। एव च सति प्रकृतहानाप्रकृतप्रक्रिये न भविष्यत॰। ननु वाक्योपक्रमे शमविधिविवक्षया ब्रह्म निर्दिष्ट न स्वविवक्षयेत्युक्तम्। अत्रोच्यते — यद्यपि शमविधिविवक्षया ब्रह्म निर्दिष्ट, तथापि मनोमयत्वादिषूपदिश्यमानेषु तदेव ब्रह्म सनिहित भवति, जीवस्तु न सनिहितः, न च स्वशब्देनोपात्त इति वैषम्यम्। १।२।१

‘विवक्षितगुणोपपत्तेश्च’ — तदिह ये विवक्षिता गुणा उपासनायामुपादेयत्वेनोपदिष्टा सत्यसकल्पप्रभृतय, ते परस्मिन्ब्रह्मण्युपपद्यन्ते। सत्यसकल्पत्व हि सृष्टिस्थितिसहारेष्वप्रतिबद्धशक्तित्वात्परमात्मन एवावकल्पते। १।२।२

‘अनुपपत्तेस्तु न शारीरः’ — पूर्वेण सूत्रेण ब्रह्मणि विवक्षिताना गुणानामुपपत्तिरुक्ता। अनेन तु शारीरे तेषामनुपपत्तिरुच्यते। तुशब्दोऽवधारणार्थ.। ब्रह्मैवोक्तेन न्यायेन मनोमयत्वादिगुण न तु शारीरो जीवो मनोमयत्वादिगुण.। यत्कारणम् — ‘सत्यसकल्प.’ ‘आकाशात्मा’ ‘अवाकी’ ‘अनादरः’ ‘ज्यायान्पृथिव्याः’ इति चैवजातीयका. गुणा न शारीरे आञ्जस्योनोपपद्यन्ते। शारीर इति शरीरे भव इत्यर्थ। नन्वीश्वरोऽपि शरीरे भवति। सत्य, शरीरे भवति। न तु शरीर एव भवति। ‘ज्यायान्पृथिव्या ज्यायानन्तरिक्षात्’ ‘आकाशवत्सर्वगतश्च नित्य.’ इति च व्यापित्वश्रवणात्। जीवस्तु शरीर एव भवति, तस्य भोगाधिष्ठानाच्छरीरादन्यत्र वृत्त्यभावात्। १।२।३

‘कर्मकर्तृव्यपदेशाच्च’ — इतश्च न शारीरो मनोमयत्वादिगुणः। यस्मात्कर्मकर्तृव्यपदेशो भवति — ‘एतमितः प्रेत्याभिसभवितास्मि’ इति। एतमिति प्रकृत मनोमयत्वादिगुणमुपास्यमात्मान कर्मत्वेन प्राप्यत्वेन व्यपदिशति। अभिसभवितास्मीति शारीरमुपासक कर्तृत्वेन प्रापकत्वेन। अभिसभवितास्मीति प्राप्तास्मीत्यर्थः। १।२।४

‘अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेव व्योमवच्च’—अर्भकमल्प ओको नीड, ‘एष म आत्मान्तर्हृदये’ इति परिच्छिन्नायतनत्वात्, स्वशब्देन च ‘अणीयान्व्रीहेर्वा यवाद्वा’ इत्यणीयस्त्वव्यपदेशात्, शारीर एवाराग्रमात्रो जीव इहोपदिश्यते, न सर्वगत. परमात्मा इति यदुक्त तत्परिहर्तव्यम्। कया पुनरपेक्षया सर्वगतः सन्नीश्वरोऽर्भकौका अणीयाश्च व्यपदिश्यत इति। निचाय्यत्वादेवमिति ब्रूम.। एव अणीयस्त्वादिगुणगणोपेत ईश्वर., तत्र हृदयपुण्डरीके, निचाय्यो द्रष्टव्य उपदिश्यते। यथा शालग्रामे हरि.। तत्रास्य बुद्धिविज्ञान ग्राहकम्। सर्वगतोऽपीश्वरस्तत्रोपास्यमान प्रसीदति। व्योमवच्चैतद्द्रष्टव्यम्। यथा सर्वगतमपि सद्व्योम सूचिपाशाद्यपेक्षयाऽर्भकौकोऽणीयश्चेति व्यपदिश्यते, एव ब्रह्मापि। १।२।७

‘सर्वोपेता च तद्दर्शनात्’ — सर्वशक्तियुक्ता च परा देवतेत्यभ्युपगन्तव्यम्। कुत॰? तद्दर्शनात्। तथा हि दर्शयति श्रुतिः सर्वशक्तियोग परस्या देवताया — ‘सर्वकर्मा सर्वकामः सर्वरस सर्वमिदमभ्यात्तोऽवाक्यनादर.’। २।१।३०

‘नाना शब्दादिभेदात्’ — पूर्वस्मिन्नधिकरणे सत्यामपि सुतेजःप्रभृतीना फलभेदश्रुतौ समस्तस्योपासन ज्याय इत्युक्तम्। अत. प्राप्ता बुद्धि. अन्यान्यपि भिन्नश्रुतीन्युपासनानि समस्य उपासिष्यन्ते इति। अपि च नैव वेद्याभेदे विद्याभेदो विज्ञातु शक्यते। वेद्य हि रूप विद्यायाः, द्रव्यदैवतमिव यागस्य। वेद्यश्च एक एव ईश्वरः श्रुतिनानात्वेऽप्यवगम्यते— ‘मनोमय प्राणशरीरः’ (छाउ. ३।१४।२) ‘क ब्रह्म ख ब्रह्म’ (छाउ ४।१०।५) ‘सत्यकाम. सत्यसकल्प.’ (छाउ ८।१।५) इत्येवमादिषु। तथा ‘एक एव प्राण.’ ‘प्राणो वाव सवर्ग.’ (छाउ ४।३।३) ‘प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च’ (छाउ ५।१।१) ‘प्राणो ह पिता प्राणो माता’ (छाउ. ७।१५।१) इत्येवमादिषु। वेद्यैकत्वाच्च विद्यैकत्वम्। श्रुतिनानात्वमपि अस्मिन् पक्षे गुणान्तरपरत्वात् न

अनर्थकम् । तस्मात् स्वपरशाखाविहितं एकवेद्यव्यपाश्रय गुणजातमुपसंहर्तव्य विद्याकात्स्न्याय इत्येव प्राप्ते प्रति पाद्यते —— नानेति । विद्याभेदेऽपि एवजातीयका विद्या भिन्ना भवितुमर्हति । कुतः । शब्दादिभेदात् । भवति हि शब्दभेदः ' वेद ' ' उपासीत ' 'स क्रतु कुर्वीत ' ( ३।१४।१ ) इत्येवमादिः । शब्दभेदश्च कर्मभेदहेतु समधिगत पुरस्तात् ' शब्दान्तरे कर्मभेदः कृतानुबन्ध त्वात् ' ( जै सू २।२।१ ) इति । आदिग्रहणात् गुणादयोऽपि यथासभव भेदहेतवो योजयितव्या' । ननु ' वेद ' इत्यादिषु शब्दभेद एव अवगम्यते, न ' यजति ' इत्यादिवत् अर्थभेदः, सर्वेषामेवैषा मनोवृ त्त्यर्थत्वाभेदात्, अर्थान्तरासभवाच्च । तत् कथं शब्दभेदाद्विद्याभेद इति । नैष दोषः । मनोवृत्त्यर्थत्वाभेदेऽपि अनुबन्धभेदाद्वेद्यभेदे सति विद्याभेदोपपत्तेः । एकस्यापी श्वरस्य उपास्यस्य प्रतिप्रकरणं व्यावृत्ता गुणा. शिष्यन्ते । तथा एकस्यापि प्राणस्य तत्र तत्र उपास्यस्य अभेदेऽपि अन्यादृग्गुणोऽन्यत्रोपासितव्यः अन्यादृग्गुणश्चान्यत्र इत्येव मनुबन्धभेदाद्विधिभेदे सति विद्याभेदो विज्ञायते । न च अत्र एको विद्याविधि., इतरे गुणविधय इति शक्य वक्तु, विनिगमनाया हेत्वभावात्, अनेकत्वाच्च प्रतिप्रकरण गुणानां प्राप्तविद्यानुवादेन विधानानुपपत्तेः । न च अस्मिन्पक्षे समाना. सन्तः सत्यकामादयो गुणा असकृच्छ्रावयितव्याः । प्रतिप्रकरण च इदकामेनेदमुपासितव्य, इदकामेन च इदमिति नैराकाङ्क्ष्यावगमात् नैकवाक्यतापत्ति' । न च अत्र वैश्वानरविद्यायामिव समस्त चोदना अपरा अस्ति, यद्बलेन प्रतिप्रकरणवर्तीन्यवय वोपासनानि भूत्वा एकवाक्यतां इयुः । वेद्यैकत्वनिमित्ते च विद्यैकत्वे सर्वत्र निरङ्कुशे प्रतिज्ञायमाने, समस्तगुणोपसंहारोऽशक्य' प्रतिज्ञायेत । तस्मात् सुष्ठु उच्यते— नाना शब्दादिभेदादिति । स्थिते च एतस्मिन्नधिकरणे, सर्ववेदान्तप्रत्ययमित्यादि द्रष्टव्यम् ।

ब्रशाकर. ३।३।५८

पृ ८२२ छाउ. ४।१।१ 'जानश्रुतिर्ह पौत्रायण ' इत्यादि ।

' तथा चैकवाक्यतोपबन्धात् '—असति च पारि प्लवार्थत्वे आख्यानानां सनिहितविद्याप्रतिपादनोपयोगितैव न्याय्या, एकवाक्यतोपबन्धात् । तथा हि तत्र तत्र सनिहिताभिर्विद्याभिः एकवाक्यता दृश्यते प्ररोचनोपयोगात् प्रतिपत्तिसौकर्योपयोगाच्च । मैत्रेयीब्राह्मणे तावत् ' आत्मा वा अरे द्रष्टव्य. ' ( बृउ २।४।५ ) इत्याद्यया विद्ययैकवाक्यता दृश्यते, प्रातर्दनेऽपि ' प्राणोऽस्मि प्रज्ञात्मा ' ( कौउ ३।२ ) इत्याद्यया, ' जानश्रुति.' ( छाउ ४।१।१ ) इत्यत्रापि ' वायुर्वाव सवर्गः ' ( छाउ ४।३।१ ) इत्याद्यया । यथा ' स आत्मनो वपामुदखिदत् ' ( तैस २।१।१।४ ) इत्येवमादीनां कर्मश्रुतिगतानामाख्यानाना सनिहितविधिस्तुत्यर्थता तद्वत् । तस्मान्न पारिप्लवार्थत्वम् ।

ब्रशाकर ३।४।२४

पृ ८३४-८४० छाउ ४।१०।१-४।१५।४ 'उपकोसलो ह वै ' इत्यादि ।

'अन्तर उपपत्ते.' — 'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति । तद्यद्यप्यस्मिन्सर्पिर्वोदक वा सिञ्चति वर्त्मनी एव गच्छति' (छाउ ४।१५।१) इत्यादि श्रूयते । तत्र सशयः—किमय प्रतिबिम्बात्मा अक्ष्यधिकरणो निर्दिश्यते, अथ विज्ञानात्मा, उत देवतात्मेन्द्रियस्याधिष्ठाता, अथवेश्वर इति । किं तावत्प्राप्तम्? छायात्मा पुरुषप्रतिरूप इति । कुत. ? तस्य दृश्यमानत्वप्रसिद्धेः, 'य एषोऽक्षिणि पुरुषो दृश्यते' इति च प्रसिद्धवदुपदेशात् । विज्ञानात्मनो वाऽय निर्देश इति युक्तम् । स हि चक्षुषा रूप पश्यश्चक्षुषि सनिहितो भवति । आत्मशब्दश्चास्मिन्पक्षेऽनुकूलो भवति । आदित्यपुरुषो वा चक्षुषोऽनुग्राहक. प्रतीयते 'रश्मिभिरेषोऽस्मिन्प्रतिष्ठित.' (बृउ ५।५।२) इति श्रुते., अमृतत्वादीना च देवतात्मन्यपि कथञ्चित्सभवात् । नेश्वरः, स्थानविशेषनिर्देशात् इत्येव प्राप्ते ब्रूमः —परमेश्वर एवाक्षिण्यभ्यन्तरः पुरुष इहोपदिष्ट इति । कस्मात् ? उपपत्तेः । उपपद्यते हि परमेश्वरे गुणजातमिहोपदिश्यमानम् । आत्मत्व तावन्मुख्यया वृत्त्या परमेश्वरे उपपद्यते, 'स आत्मा तत्त्वमसि' इति श्रुतेः । अमृतत्वाभयत्वे च तस्मिन्नसकृत् श्रूयेते । तथा परमेश्वरानुरूपमेतदक्षिस्थानम् । यथा हि परमेश्वर. सर्वदोषैरलिप्तः, अपहतपाप्मत्वादिश्रवणात् । तथाक्षिस्थान सर्वलेपरहितमुपदिष्टम् ' तद्यद्यप्यस्मिन्सर्पिर्वोदक वा

सिद्धति, वर्त्मनी एव गच्छति' इति श्रुते. । संयद्वामत्वादिगुणोपदेशश्च तस्मिन्नवकल्पते । 'एतं संयद्वाम इत्याचक्षते । एतं हि सर्वाणि वामान्यभिसंयन्ति' 'एष उ एव वामनीरेष हि सर्वाणि वामानि नयति । एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति' इति च । अत उपपत्तेरन्तर. परमेश्वरः । १।२।१३

'सुखविशिष्टाभिधानादेव च' --अपि च नैवात्र विवदितव्यम्-- किं ब्रह्मास्मिन्वाक्येऽभिधीयते, न वेति । सुखविशिष्टाभिधानादेव ब्रह्मत्वं सिद्धम् । सुखविशिष्टं हि ब्रह्म यद्वाक्योपक्रमे प्रक्रान्तम् 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति, तदेवेहाभिहितम् । प्रकृतपरिग्रहस्य न्याय्यत्वात्, 'आचार्यस्तु ते गतिं वक्ता' इति च गतिमात्राभिधानप्रतिज्ञानात् । कथं पुनर्वाक्योपक्रमे सुखविशिष्टं ब्रह्म विज्ञायत इति, उच्यते— 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इत्येतदग्नीनां वचनं श्रुत्वोपकोसल उवाच— 'विजानाम्यहं यत्प्राणो ब्रह्म, कं च खं च तु न विजानामि' इति । तत्रेदं प्रतिवचनम्— 'यद्वाव कं तदेव खं यदेव खं तदेव कम्' इति । तत्र खशब्दो भूताकाशे निरूढो लोके । यदि तस्य विशेषणत्वेन कंशब्दः सुखवाची नोपादीयेत, तथा सति केवले भूताकाशे ब्रह्मशब्दो नामादिष्विव प्रतीकाभिप्रायेण प्रयुक्त इति प्रतीतिः स्यात् । तथा कंशब्दस्य विषयेन्द्रियसंपर्कजनिते सामये सुखे प्रसिद्धत्वात्, यदि तस्य खशब्दो विशेषणत्वेन नोपादीयेत । लौकिकं सुखं ब्रह्मेति प्रतीति. स्यात् । इतरेतरविशेषितौ तु कंखशब्दौ सुखात्मकं ब्रह्म गमयतः । तत्र द्वितीये ब्रह्मशब्देऽनुपादीयमाने 'कं खं ब्रह्म' इत्येवोच्यमाने कंशब्दस्य विशेषणत्वेनैवोपयुक्तत्वात्सुखस्य गुणस्याध्येयत्वं स्यात् । तन्मा भूत् इत्युभयोः कंखशब्दयोर्ब्रह्मशब्दशिरस्त्वं 'कं ब्रह्म खं ब्रह्म' इति । इष्टं हि सुखस्यापि गुणस्य गुणिवद्ध्येयत्वम् । तदेवं वाक्योपक्रमे सुखविशिष्टं ब्रह्मोपदिष्टम् । प्रत्येकं च गार्हपत्यादयोऽग्नयः स्वं स्वं महिमानमुपदिश्य 'एषा सोम्य तेऽस्मद्विद्यात्मविद्या च' इत्युपसंहरन्त' पूर्वत्र ब्रह्म निर्दिष्टमिति ज्ञापयन्ति । 'आचार्यस्तु ते गतिं वक्ता' इति च गतिमात्राभिधानप्रतिज्ञानमर्थान्तरविवक्षां वारयति । 'यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' इति चाक्षिस्थानं पुरुषं विजानत' पाप्मनानुपघातं ब्रुवन्नक्षिस्थानस्य पुरुषस्य ब्रह्मत्वं दर्शयति । तस्मात्प्रकृतस्यैव ब्रह्मणोऽक्षिस्थानतां संयद्वामत्वादिगुणतां चोक्त्वा अर्चिरादिकां तद्विदो गतिं वक्ष्यामीत्युपक्रमते— 'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच' इति (छा० ४।१५।१) ।

१।२।१५

'श्रुतोपनिषत्कगत्यभिधानाच्च' — इतश्चाक्षिस्थान. पुरुषः परमेश्वर', यस्माच्छ्रुतोपनिषत्कस्य श्रुतरहस्यविज्ञानस्य ब्रह्मविदो या गतिर्देवयानाख्या प्रसिद्धा श्रुतौ —'अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजयन्ते । एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्ते' इति । स्मृतावपि—'अग्निर्ज्योतिरहः शुक्ल. षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥' (भ० गी० ८।२४) इति, सैवेहाक्षिपुरुषविदोऽभिधीयमाना दृश्यते 'अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसंभवन्ति' इत्युपक्रम्य 'आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानव. स एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' इति । तदिह ब्रह्मविद्विषयया प्रसिद्धया गत्या अक्षिस्थानस्य ब्रह्मत्वं निश्चीयते ।

१।२।१६

'अनवस्थितेरसंभवाच्च नेतरः' — यत्पुनरुक्तं छायात्मा, विज्ञानात्मा, देवतात्मा वा स्यादक्षिस्थान इति, अत्रोच्यते — न छायात्मादिरितर इह ग्रहणमर्हति । कस्मात् ? अनवस्थितेः । न तावच्छायात्मनश्चक्षुषि नित्यमवस्थानं संभवति । यदैव हि कश्चित्पुरुषश्चक्षुरासीदति, तदा चक्षुषि पुरुषच्छाया दृश्यते । अपगते तस्मिन्न दृश्यते । 'य एषोऽक्षिणि पुरुष.' इति च श्रुतिः संनिधानात्स्वचक्षुषि दृश्यमानं पुरुषमुपास्यत्वेनोपदिशति । न चोपासनाकाले छायाकरं कंचित्पुरुषं चक्षु.समीपे संनिधाप्योपास्त इति युक्तं कल्पयितुम् । 'अस्यैव शरीरस्य नाशमन्वेष नश्यति' इति श्रुतिश्छायात्मनोऽप्यनवस्थितत्वं दर्शयति । असंभवाच्च । तस्मिन्नमृतत्वादीनां गुणानां न छायात्मनि प्रतीतिः ।

तथा विज्ञानात्मनोऽपि साधारणे कृत्स्नशरीरेन्द्रियसबन्धे सति न चक्षुष्येवावस्थितत्व शक्य वक्तुम् । ब्रह्मणस्तु सर्वव्यापिनोऽपि दृष्ट उपलब्ध्यर्थो हृदयादिदेशविशेषसबन्धः। समानश्च विज्ञानात्मन्यप्यमृतत्वादीना गुणानामसभव । * ब्रशकर १।२।१७

**पृ ८४० छाउ ४।१५।५ 'अथ यदि चैवास्मिञ्छव्य' इत्यादि ।**

'आतिवाहिकास्तल्लिङ्गात्' —— तेष्वेव अर्चिरादिषु सशय ——किमेतानि मार्गचिह्नानि, उत भोगभूमय, अथवा नेतारो गन्तॄणामिति। आतिवाहिका एवैते भवितुमर्हन्ति । कुत. ? तल्लिङ्गात् । तथा हि——'चन्द्रमसो विद्युत तत्पुरुषोऽमानव. स एनान्ब्रह्म गमयति' इति सिद्धवद्गमयितृत्व दर्शयति । तद्वचन तद्विषयमेवोपक्षीणमिति चेत्, न, प्राप्तमानवत्वनिवृत्तिपरत्वाद्विशेषणस्य । यद्यर्चिरादिषु पुरुषा गमयितार. प्राप्ता ते च मानवा., ततो युक्त तन्निवृत्त्यर्थं पुरुषविशेषणम्——अमानव इति । ४।३।४

'उभयव्यामोहात्तत्सिद्धे'—— ये तावदर्चिरादिमार्गगा. ते देहवियोगात् सपिण्डितकरणग्रामा इति अस्वतन्त्रा, अर्चिरादीनामप्यचेतनत्वादस्वातन्त्र्यम्——इत्यत अर्चिराद्यभिमानिनश्चेतना देवताविशेषा अतियात्रायां नियुक्ता इति गम्यते । लोकेऽपि हि मत्तमूर्छितादय सपिण्डितकरणा' परप्रयुक्तवर्त्मानो भवन्ति । अनवस्थितत्वादप्यर्चिरादीना न मार्गलक्षणत्वोपपत्ति. । न हि रात्रौ प्रेतस्य अह स्वरूपाभिसभव उपपद्यते । न च प्रतिपालनमस्तीत्युक्त पुरस्तात् । ध्रुवत्वात्तु देवतात्मना नाय दोषो भवति । अर्चिरादिशब्दता च एषा अर्चिराद्यभिमानादुपपद्यते ।

४।३।५

'कार्यं बादरिरस्य गत्युपपत्तेः' — 'स एनान्ब्रह्म गमयति' इत्यत्र विचिकित्स्यते — किं कार्यमपर ब्रह्म गमयति, आहोस्वित्परमेवाविकृत मुख्य ब्रह्मेति । कुत. सशय. ? ब्रह्मशब्दप्रयोगात्, गतिश्रुतेश्च । तत्र कार्यमेव सगुणमपर ब्रह्म एनान्गमयत्यमानवः पुरुष इति बादरिराचार्यो मन्यते । कुतः? अस्य गत्युपपत्ते —— अस्य हि कार्यब्रह्मणो गन्तव्यत्वमुपपद्यते, प्रदेशवत्त्वात् । न तु परस्मिन्ब्रह्मणि गन्तृत्व गन्तव्यत्व गतिर्वा अवकल्पते, सर्वगतत्वात्प्रत्यगात्मत्वाच्च गन्तॄणाम् । ४।३।७

'विशेषितत्वाच्च' —— ब्रह्मलोकान् गमयति ते तेषु ब्रह्मलोकेषु परा' परावतो वसन्ति' ( बृउ ६।२।१५ ) इति च श्रुत्यन्तरे विशेषितत्वात् कार्यब्रह्मविषयैव गतिरिति गम्यते । न हि बहुवचनेन विशेषण परस्मिन्ब्रह्मण्यवकल्पते । कार्ये तु अवस्थाभेदोपपत्तेः सभवति बहुवचनम् । लोकश्रुतिरपि विकारगोचरायामेव सनिवेशविशिष्टाया भोगभूमावाञ्जसी । गौणी त्वन्यत्र 'ब्रह्मैव लोक एष सम्राट्' इत्यादिषु । अधिकरणाधिकर्तव्यनिर्देशोऽपि परस्मिन् ब्रह्मणि अनाञ्जसः स्यात् । तस्मात् कार्यविषयमेवेद नयनम् ।

४।३।८

'सामीप्यात्तु तद्व्यपदेश.' —— ननु कार्यविषयेऽपि ब्रह्मशब्दो नोपपद्यते, समन्वये हि समस्तस्य जगतो जन्मादिकारण ब्रह्मेति स्थापित —— इत्यत्रोच्यते —— तुशब्द आशङ्काव्यावृत्त्यर्थः । परब्रह्मसामीप्यात् अपरस्य ब्रह्मणः, तस्मिन्नपि ब्रह्मशब्दप्रयोगो न विरुध्यते । परमेव हि ब्रह्म विशुद्धोपाधिसबन्ध क्वचित्कैश्चिद्विकारधर्मैर्मनोमयत्वादिभिः उपासनाय उपदिश्यमान अपरमिति स्थितिः । ब्रशकर ४।३।९

**पृ ८४९ छाउ ५।१।१ 'यो ह वै ज्येष्ठ च' इत्यादि ।**

'श्रेष्ठश्च' — श्रेष्ठ इति च मुख्य प्राणमभिदधाति, 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च' ( छाउ ५।१।१ ) इति श्रुतिनिर्देशात् । ज्येष्ठश्च प्राणः शुक्रनिषेककालादारभ्य तस्य वृत्तिलाभात् । न चेत्तस्य तदानीं वृत्तिलाभ. स्यात्, योनौ निषिक्त शुक्र पूयेत, न सभवेद्वा । श्रोत्रादीना तु कर्णशष्कुल्यादिस्थानविभागनिष्पत्तौ वृत्तिलाभान्न ज्येष्ठत्वम् । श्रेष्ठश्च प्राणः गुणाधिक्यात्, 'न वै शक्ष्यामस्त्वदृते जीवितुम्' ( बृउ ६।१।१३ ) इति श्रुतेः ।

ब्रशकर २।४।८

* भास्कर रामानुज निंबार्क ब्रमध्व श्रीकठ श्रीकर ब्रशकरवद्भाव । 'अत एव च स ब्रह्म' १।२।१६ इत्यधिक सूत्र रामानुजे श्रीकठे च दृश्यते, तदन्यै भाष्यकृद्भिर्न धृतम् ।

पृ ८५१ छाउ ५।१।७ 'ते ह प्राणा प्रजापतिं' इत्यादि।

'अकरणत्वाच्च न दोषस्तथाहि दर्शयति' — स्यादेतत्। यदि चक्षुरादिवत् प्राणस्य जीव प्रति करणभावोऽभ्युपगम्येत, विषयान्तर रूपादिवत् प्रसज्येत। अत उत्तर पठति — अकरणत्वाच्चेति। न तावद्विषयान्तरप्रसङ्गो दोषः, अकरणत्वात्प्राणस्य। न हि चक्षुरादिवत्प्राणस्य विषयपरिच्छेदेन करणत्वमभ्युपगम्यते। न च अस्य एतावता कार्याभाव एव। कस्मात्। तथा हि श्रुतिः प्राणान्तरेष्वसमाव्यमान मुख्यप्राणस्य वैशेषिक कार्यं दर्शयति प्राणसवादादिषु। 'अथ ह प्राणा अहश्रेयसि व्यूदिरे' (छाउ ५।१।६) इत्युपक्रम्य 'यस्मिन्व उत्क्रान्त इद शरीर पापिष्ठतरमिव दृश्येत स व. श्रेष्ठ' (छाउ ५।१।७) इति च उपन्यस्य, प्रत्येक वागाद्युत्क्रमणेन तद्वृत्तिमात्रहीनं यथापूर्वं जीवन दर्शयित्वा, प्राणोच्चिक्रमिषाया वागादिशैथिल्यापत्तिं शरीरपातप्रसङ्ग च दर्शयन्ती श्रुतिः प्राणनिमित्ता शरीरेन्द्रियस्थितिं दर्शयति।

ब्रशकर २।४।११

पृ ८५५ छाउ ५।२।८ 'तदेष श्लोक। यदा कर्मसु' इत्यादि।

'सूचकश्च हि श्रुतेराचक्षते च तद्विद.' — मायामात्रत्वात्तर्हि न कश्चित्स्वप्ने परमार्थगन्धोऽस्तीति। नेत्युच्यते—सूचकश्च हि स्वप्नो भवति भविष्यतोः साध्वसाधुनो। तथा हि श्रूयते— 'यदा कर्मसु काम्येषु स्त्रिय स्वप्नेषु पश्यति। समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने' इति। तथा 'पुरुष कृष्ण कृष्णदन्त पश्यति स एन हन्ति' इत्येवमादिभिः स्वप्नैरचिरजीवित्वमावेद्यत इति श्रावयति। आचक्षते च स्वप्नाध्यायविद.—'कुञ्जरारोहणादीनि स्वप्ने धन्यानि, खरयानादीन्यधन्यानि' इति।

ब्रशकर. ३।२।४

'सूचकश्च हि०' —इतश्च जीवसृष्टिरेषा, यत शुभाशुभसूचकस्वप्नश्रुतेः प्रतीयते।

* भास्कर ३।२।४

'सूचकश्च हि०' — सूचकत्व च स्वसकल्पायत्तस्य नोपपद्यते। तथा चाशुभस्यानिष्टत्वाच्छुभस्य सूचकमेव सृष्ट्वा पश्येत्। अत. स्वप्ने सृष्टि' ईश्वरेणैव कृता।

* रामानुज. ३।२।६

पृ ८५६ छाउ ५।३।३ 'वेत्थ यथाऽसौ' इत्यादि।

'प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्ते' — स्यादेतत्। कथ पुन 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इत्येतत् निर्धारयितु पार्यते। यावता नैव प्रथमेऽग्नावपा श्रवणमस्ति। इह हि द्युलोकप्रभृतयः पञ्चाग्नय पञ्चानामाहुतीनामाधारत्वेनाधीता। तेषा च प्रमुखे 'असौ वाव लोको गौतमाग्नि.' (छाउ ५।४।१) इत्युपन्यस्य 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धा जुह्वति' (छाउ ५।४।२) इति श्रद्धा होम्यद्रव्यत्वेन आवेदिता। न तत्र आपो होम्यद्रव्यतया श्रुताः। यदि नाम पर्जन्यादिषूत्तरेषु चतुर्ष्वग्निष्वपा होम्यद्रव्यता परिकल्प्येत, परिकल्प्यता नाम, तेषु होतव्यतयोपात्ताना सोमादीनामब्बहुलत्वोपपत्ते। प्रथमे त्वग्नौ श्रुता श्रद्धा परित्यज्य अश्रुता आपः परिकल्प्यन्त इति साहसमेतत्। श्रद्धा च नाम प्रत्ययविशेषः, प्रसिद्धिसामर्थ्यात्। तस्मादयुक्तः पञ्चम्यामाहुतावपा पुरुषभाव इति चेत् — नैष दोषः। हि यतः तत्रापि प्रथमेऽग्नौ ता एवापः श्रद्धाशब्देनाभिप्रेयन्ते। कुतः। उपपत्तेः। एव ह्यादिमध्यावसानसगानात् अनाकुलमेतदेकवाक्यमुपपद्यते। इतरथा पुन', पञ्चम्यामाहुतौ अपा पुरुषवचस्त्वप्रकारे पृष्टे प्रतिवचनावसरे प्रथमाहुतिस्थाने यद्यनपो होम्यद्रव्य श्रद्धां नामावतारयेत् ततः अन्यथा प्रश्नोऽन्यथा प्रतिवचनमित्येकवाक्यता न स्यात्। इति तु 'पञ्चम्यामाहुतावाप पुरुषवचसो भवन्ति' इति च उपसहरन् एतदेव दर्शयति। श्रद्धाकार्यं च सोमवृष्ट्यादि स्थूलीभवदब्बहुल लक्ष्यते। सा च श्रद्धाया अप्त्वे युक्तिः। कारणानुरूप हि कार्यं भवति। न च श्रद्धाख्यः प्रत्ययः, मनसो जीवस्य वा धर्मः सन् धर्मिणो निष्कृष्य होमायोपादातु शक्यते — पश्वादिभ्य इव हृदयादीनि इति,

* शेष ब्रशकरवत्।

* शेष ब्रशकरवत्। निंबार्क ब्रमध्व श्रीकठ श्रीकर. रामानुजवत्।

आप एव श्रद्धाशब्दा भवेयु. । श्रद्धाशब्दश्चाप्सूपपद्यते, वैदिकप्रयोगदर्शनात् 'श्रद्धा वा आप' इति । तनुत्व श्रद्धासारूप्य गच्छन्त्य आपो देहबीजभूता इत्यत श्रद्धाशब्दा स्यु, यथा सिंहपराक्रमो नर सिंहशब्दो भवति । श्रद्धापूर्वककर्मसमवायाच्च अप्सु श्रद्धाशब्द उपपद्यते, मञ्चशब्द इव पुरुषेषु । श्रद्धाहेतुत्वाच्च श्रद्धाशब्दोपपत्तिः, 'आपो हास्मै श्रद्धां सनमन्ते पुण्याय कर्मणे' इति श्रुते. ।

* ३।१।५

'अश्रुतत्वादिति चेन्नेष्टादिकारिणा प्रतीते.' — अथापि स्यात् प्रश्नप्रतिवचनाभ्या नाम आपः श्रद्धादिक्रमेण पञ्चम्यामाहुतौ पुरुषाकार प्रतिपद्येरन् । न तु तत्सपरिष्वक्ता जीवा रंहेयुः, अश्रुतत्वात् । न ह्यत्र अपामिव जीवाना श्रावयिता कश्चिच्छब्दोऽस्ति । तस्मात् 'रंहति सपरिष्वक्त.' इत्ययुक्त इति चेत्, नैष दोषः । कुत । इष्टादिकारिणा प्रतीतेः— 'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसभवन्ति' ( छाउ ५।१०।३ ) इत्युपक्रम्य इष्टादिकारिणा धूमादिना पितृयाणेन पथा चन्द्रप्राप्तिं कथयति 'आकाशाच्चन्द्रमसमेष सोमो राजा' ( छाउ ५।१०।४ ) इति । त एवेहापि प्रतीयन्ते, 'तस्मिन्नेत स्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुते सोमो राजा सभवति' ( छाउ ५।४।२ ) इति श्रुतिसामान्यात् । तेषा च अग्निहोत्रदर्शपूर्णमासादिकर्मसाधनभूता दधिपयः-प्रभृतयो द्रवद्रव्यभूयस्त्वात्प्रत्यक्षमेव आप॰ सन्ति । ता आहवनीये हुता॰ सूक्ष्मा आहुत्योऽपूर्वरूपा सत्य. तानिष्टादिकारिण आश्रयन्ति । तेषा च शरीर नैधनेन विधानेनान्त्येऽग्नावृत्विजो जुह्वति 'असौ स्वर्गाय लोकाय स्वाहा' इति । ततस्ताः श्रद्धापूर्वककर्मसमवायिन्य आहुतिमय्य आपोऽपूर्वरूपाः सत्य. तानिष्टादिकारिणो जीवान्परिवेष्ट्य अमु लोक फलदानाय नयन्तीति यत्, तदत्र जुहोतिना अभिधीयते—श्रद्धा जुह्वतीति । तथा च अग्निहोत्रे षट्प्रश्नीनिर्वचनरूपेण वाक्यशेषेण 'ते वा एते आहुती हुते उत्क्रामत॰' इत्येवमादिना अग्निहोत्राहुत्यो फलारम्भाय लोकान्तरप्राप्तिर्दर्शिता ।

* वल्लभ. ब्रशकरवत् ।

तस्मादाहुतीमयीभिरद्भिः सपरिष्वक्ता जीवा रंहन्ति स्वकर्मफलोपभोगायेति श्लिष्यते ।

* ब्रशकर ३।१।६

पृ ८६५ छाउ ५।१०।६ 'अभ्रं भूत्वा मेघो भवति' इत्यादि ।

'रेत.सिग्योगोऽथ' — इतश्च व्रीह्यादिसश्लेषमात्र तद्भावः, यत्कारण व्रीह्यादिभावस्यानन्तरमनुशयिनां रेत.सिग्भाव आम्नायते — 'यो यो ह्यन्नमत्ति यो रेत. सिञ्चति तद्भूय एव भवति' इति । न चात्र मुख्यो रेतः-सिग्भावः सभवति । चिरजातो हि प्राप्तयौवनो रेत.-सिग्भवति । कथमिव अनुपचरित तद्भाव अद्यमानान्नानुगतोऽनुशयी प्रतिपद्यते । तत्र तावदवश्य रेतः-सिग्योग एव रेतसिग्भावोऽभ्युपगन्तव्यः । तद्वत् व्रीह्यादिभावोऽपि व्रीह्यादियोग एवेत्यविरोधः ।

३।१।२६

'योनेः शरीरम्' — अथ रेत.सिग्भावस्यानन्तरं योनौ निषिक्ते रेतसि, योनेरधि शरीर अनुशयिनां अनुशयफलोपभोगाय जायत इत्याह शास्त्रम् — 'तद्य इह रमणीयचरणा' ( छाउ ५।१०।७ ) इत्यादि । तस्मादप्यवगम्यते — नावरोहे व्रीह्यादिभावावसरे तच्छरीरमेव सुखदुःखान्वित भवतीति । तस्मात् व्रीह्यादिसश्लेषमात्रमनुशयिना तज्जन्मेति सिद्धम् ।

ब्रशकर ३।१।२७

पृ ८६९ छाउ ५।१०।८ 'अथैतयो पथोर्न' इत्यादि ।

'विद्याकर्मणोरिति तु प्रकृतत्वात्' — तत्र एतयो पथोरिति विद्याकर्मणोरित्येतत् । कस्मात् ? प्रकृतत्वात् । विद्याकर्मणी हि देवयानपितृयाणयोः पथोः प्रतिपदे प्रकृते — 'तद्य इत्थ विदुः' इति विद्या, तया प्रतिपत्तव्यो देवयान. पन्थाः प्रकीर्तित॰ । 'इष्टापूर्ते दत्तम्' इति कर्म, तेन प्रतिपत्तव्यः पितृयाणः पन्थाः प्रकीर्तितः । तत्प्रक्रियायाम् 'अथैतयो पथोर्न कतरेणचन' इति श्रुतम् । एतदुक्त भवति — ये न विद्यासाधनेन देवयाने पथ्यधिकृताः, नापि कर्मणा

* भास्कर रामानुज निंबार्क ब्रमध्व श्रीकठ. ब्रशकरवत् ।

पितृयाणे, तेषामेष क्षुद्रजन्तुलक्षणोऽसकृदावर्ती तृतीयः पन्था भवतीति । तस्मादपि न अनिष्टादिकारिभिश्चन्द्रमाः प्राप्यते । * ब्रशकर ३।१।१७

**पृ ८८५ छाउ ६।१।४ 'यथा सोम्यैकेन मृत्पिण्डेन' इत्यादि ।**

'तदनन्यत्वमारम्भणशब्दादिभ्यः' — अभ्युपगम्य चेम व्यावहारिक भोक्तृभोग्यलक्षण विभागम् 'स्याल्लोकवत्' इति परिहारोऽभिहित । न त्वय विभाग. परमार्थतोऽस्ति, यस्मात्तयोः कार्यकारणयोरनन्यत्वमवगम्यते । कार्यमाकाशादिक बहुप्रपञ्च जगत् । कारण पर ब्रह्म । तस्मात्कारणात्परमार्थतोऽनन्यत्व व्यतिरेकेणाभावः कार्यस्यावगम्यते । कुत॰ ? आरम्भण शब्दादिभ्यः । आरम्भणशब्दस्तावदेकविज्ञानेन सर्वविज्ञान प्रतिज्ञाय दृष्टान्तापेक्षायामुच्यते— 'यथा सोम्यैकेन मृत्पिण्डेन सर्वे मृन्मय विज्ञात५ स्याद्वाचारम्भण विकारो नामधेय मृत्तिकेत्येव सत्यम्' इति । एतदुक्त भवति—एकेन मृत्पिण्डेन परमार्थतो मृदात्मना विज्ञातेन सर्वे मृन्मय घटशरावोदञ्चनादिक मृदात्मकत्वाविशेषाद्विज्ञात भवेत् । यतो वाचारम्भण विकारो नामधेय वाचैव केवलमस्तीत्यारभ्यते विकार घट. शराव उदञ्चन चेति । न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति । नामधेयमात्र ह्येतदनृतम् । मृत्तिकेत्येव सत्यम्—इति एष ब्रह्मणो दृष्टान्त आम्नातः । तत्र श्रुताद्वाचारम्भणशब्दाद्दार्ष्टान्तिकेऽपि ब्रह्मव्यतिरेकेण कार्यजातस्याभाव इति गम्यते । पुनश्च तेजोबन्नाना ब्रह्मकार्यतामुक्त्वा तेजोबन्नकार्याणां तेजोबन्नव्यतिरेकेणाभाव ब्रवीति ।

न चान्यथा एकविज्ञानेन सर्वविज्ञान सपद्यते । तस्माद्यथा घटकरकाद्याकाशाना महाकाशादनन्यत्व, यथा च मृगतृष्णिकोदकादीनामूषरादिभ्योऽनन्यत्व, दृष्टनष्टस्वरूपत्वात् स्वरूपेण त्वनुपाख्यत्वात् । एवमस्य भोग्यभोक्त्रादिप्रपञ्चजातस्य ब्रह्मव्यतिरेकेणाभाव इति द्रष्टव्यम् ।

नन्वनेकात्मक ब्रह्म । यथा वृक्षोऽनेकशाख., एवमनेकशक्तिप्रवृत्तियुक्त ब्रह्म । अत एकत्व नानात्व चोभयमपि सत्यमेव—यथा वृक्ष इत्येकत्व शाखा इति च नानात्वम् । यथा च समुद्रात्मनैकत्व फेनतरङ्गाद्यात्मना नानात्व, यथा च मृदात्मनैकत्व घटशरावाद्यात्मना नानात्वम् । तत्रैकत्वांशेन ज्ञानात् मोक्षव्यवहार॰ सेत्स्यति । नानात्वांशेन तु कर्मकाण्डाश्रयौ लौकिकवैदिक व्यवहारौ सेत्स्यत इति । एव च मृदादिदृष्टान्ता अनुरूपा भविष्यन्तीति । नैव स्यात्—'मृत्तिकेत्येव सत्यम्' इति प्रकृतिमात्रस्य दृष्टान्ते सत्यत्वावधारणात्, वाचारम्भणशब्देन च विकारजातस्यानृतत्वाभिधानात्, दार्ष्टान्तिकेऽपि 'ऐतदात्म्यमिद सर्वं तत्सत्यम्' इति च परमकारणस्यैवैकस्य सत्यत्वावधारणात्, 'स आत्मा तत्त्वमसि श्वेतकेतो' इति च शारीरस्य ब्रह्मभावोपदेशात् । स्वय प्रसिद्ध ह्येतच्छारीरस्य ब्रह्मात्मत्वमुपदिश्यते, न यत्नान्तरप्रसाध्यम् । अतश्चेद शास्त्रीय ब्रह्मात्मत्वमभ्युपगम्यमान स्वाभाविकस्य शारीरात्मत्वस्य बाधक सपद्यते, रज्ज्वादिबुद्धय इव सर्पादिबुद्धीनाम् । बाधिते च शारीरात्मत्वे तदाश्रयः समस्तः स्वाभाविको व्यवहारो बाधितो भवति, यत्प्रसिद्धये नानात्वांशोऽपरो ब्रह्मण. कल्प्येत । दर्शयति च — 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन क पश्येत्' इत्यादिना ब्रह्मात्मत्वदर्शिन प्रति समस्तस्य क्रियाकारकफललक्षणस्य व्यवहारस्याभावम् । न चाय व्यवहाराभाव अवस्थाविशेषनिबद्धोऽभिधीयते इति युक्त वक्तु, 'तत्त्वमसि' इति ब्रह्मात्मभावस्यानवस्थाविशेषनिबन्धनत्वात् । तस्करदृष्टान्तेन चानृताभिसधस्य बन्धन सत्याभिसधस्य च मोक्ष दर्शयन् एकत्वमेवैक पारमार्थिक दर्शयति, मिथ्याज्ञानविजृम्भित च नानात्वम् । उभयसत्यतायां हि कथ व्यवहारगोचरोऽपि जन्तुरनृताभिसध इत्युच्यते ? 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति च भेददृष्टिमपवदन्नेतदेव दर्शयति । २।१।१४

'सत्त्वाच्चावरस्य' —इतश्च कारणात्कार्यस्यानन्यत्व, यत्कारण प्रागुत्पत्ते. कारणात्मनैव कारणे सत्त्वमवरकालीनस्य कार्यस्य श्रूयते — 'सदेव सोम्येदमग्र आसीत्' 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादाविदशब्दगृहीतस्य कार्यस्य कारणेन सामानाधिकरण्यात् । २।१।१६

---

* भास्कर. रामानुज निंबार्क ब्रमध्व श्रीकठ श्रीकर वल्लभ भ्रशंकरवद्भाव ।

'असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्' —— ननु क्वचिदसत्त्वमपि प्रागुत्पत्तेः कार्यस्य व्यपदिशति श्रुति ——'असदेवेदमग्र आसीत्' इति, 'असद्वा इदमग्र आसीत्' इति च । तस्मादसद्व्यपदेशान्न प्रागुत्पत्तेः कार्यस्य सत्त्वमिति चेत्, नेति ब्रूमः । न ह्ययमत्यन्तासत्त्वाभिप्रायेण प्रागुत्पत्तेः कार्यस्यासद्व्यपदेशः । किं तर्हि, व्याकृतनामरूपत्वाद्धर्मादव्याकृतनामरूपत्व धर्मान्तर, तेन धर्मान्तरेणायमसद्व्यपदेश प्रागुत्पत्ते सत एव कार्यस्य कारणरूपेणानन्यस्य । कथमेतदवगम्यते ? वाक्यशेषात् । यदुपक्रमे सदिग्धार्थं वाक्य तच्छेषान्निश्चीयते । इह च तावत् 'असदेवेदमग्र आसीत्' इत्यसच्छब्देनोपक्रमे निर्दिष्ट यत् तदेव पुनस्तच्छब्देन परामृश्य, सदिति विशिनष्टि — 'तत्सदासीत्' इति, असतश्च पूर्वापरकालासबन्धात् आसीच्छब्दानुपपत्तेश्च । 'असद्वा इदमग्र आसीत्' इत्यत्रापि 'तदात्मान स्वयमकुरुत' इति वाक्यशेषे विशेषणान्नात्यन्तासत्त्वम् । तस्माद्धर्मान्तरेणै वायमसद्व्यपदेशः प्रागुत्पत्ते· कार्यस्य । नामरूपव्याकृत हि वस्तु सच्छब्दार्हं लोके प्रसिद्धम् । अत. प्राङ्नाम रूपव्याकरणादसदिवासीदित्युपचर्यते ।

२।१।१७

'युक्तेः शब्दान्तराच्च' —— युक्ते कार्यस्य प्रागुत्पत्ते सत्त्व अनन्यत्व च कारणात्, अवगम्यते ।

शब्दान्तराच्चैतदवगम्यते —— पूर्वसूत्रेऽसद्व्यपदेशिन. शब्दस्योदाहृतत्वात्ततोऽन्य सद्व्यपदेशी शब्द शब्दान्तरम् —— 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यादि । 'तद्धैक आहुरसदेवेदमग्र आसीत्' इति चासत्पक्षमुपक्षिप्य, 'कथमसतः सज्जायेत' इत्याक्षिप्य, 'सदेव सोम्येदमग्र आसीत्' इत्यवधारयति । तत्रेदशब्दवाच्यस्य कार्यस्य प्रागुत्पत्ते· सच्छब्दवाच्येन कारणेन सामानाधिकरण्यस्य श्रूयमाणत्वात्, सत्त्वानन्यत्वे प्रसिध्यत. । यदि तु प्रागुत्पत्तेरसत्कार्यं स्यात्, पश्चाच्चोत्पद्यमान कारणे समवेयात्, तदन्यत्कारणात्स्यात्, तत्र 'येनाश्रुत श्रुतं भवति' इतीय प्रतिज्ञा पीड्येत । सत्त्वानन्यत्वावगतेस्त्वियं प्रतिज्ञा समर्थ्यते ।

ब्रशकर. २।१।१८

पृ ८८७ छाउ ६।२।१ 'सदेव सोम्येदमग्र आसीत्' इत्यादि ।

'तत्तु समन्वयात्'——तुशब्द पूर्वपक्षव्यावृत्त्यर्थ. । तत् ब्रह्म सर्वज्ञ सर्वशक्ति जगदुत्पत्तिस्थितिलयकारण वेदान्तशास्त्रादेवावगम्यते । कथम् । समन्वयात् । सर्वेषु हि वेदान्तेषु वाक्यानि तात्पर्येण एतस्यार्थस्य प्रतिपादकत्वेन समनुगतानि । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' ( छाउ ६।२।१ ) 'आत्मा वा इदमेक एवाग्र आसीत्' ( ऐउ १।१।१ ) 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभू·' (बृउ २।५।१९ ) 'ब्रह्मैवेदममृत पुरस्तात्' ( मुउ २।२।११ ) इत्यादीनि । न च तद्गताना पदानां ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽवगम्यमाने अर्थान्तरकल्पना युक्ता, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । न च तेषां कर्तृदेवतादिस्वरूपप्रतिपादनपरता अवसीयते—'तत्केन क पश्येत्' ( बृउ २।४।१३ ) इत्यादिक्रियाकारकफलनिराकरणश्रुते· । न च परिनिष्ठितवस्तुस्वरूपत्वेऽपि प्रत्यक्षादिविषयत्व ब्रह्मणः, 'तत्त्वमसि' ( छाउ ६।८।७ ) इति ब्रह्मात्मभावस्य शास्त्रमन्तरेण अनवगम्यमानत्वात् ।

ब्रशकर १।१।४ ( पृ. ४७ )

पृ ८९० छाउ ६।२।३ 'तदैक्षत । बहु स्यां प्रजायेयेति' इत्यादि ।

'ईक्षतेर्नाशब्दम्' — न सांख्यपरिकल्पितमचेतन प्रधान जगतः कारण शक्य वेदान्तेष्वाश्रयितुम् । अशब्दं हि तत्, कथमशब्दत्व, ईक्षतेरीक्षितृत्वश्रवणात्कारणस्य । कथम् । एव हि श्रूयते — 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छाउ. ६।२।१) इत्युपक्रम्य 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' ( छाउ ६।२।३ ) इति । तत्रेदशब्दवाच्य नामरूपव्याकृत जगत् प्रागुत्पत्तेः सदात्मनाऽवधार्य तस्यैव प्रकृतस्य सच्छब्दवाच्यस्य ईक्षणपूर्वक तेज·प्रभृतेः स्रष्टृत्व दर्शयति ।

१।१।५

'गौणश्चेन्नात्मशब्दात्'–यदुक्त प्रधानमचेतन सच्छब्दवाच्य तस्मिन्नौपचारिक ईक्षितृत्व अतेजसोरिवेति, तदसत् । कस्मात् ? आत्मशब्दात् । 'सदेव सोम्येदमग्र आसीत्' इत्युपक्रम्य 'तदैक्षत' 'तत्तेजोऽसृजत'

इति च तेजोऽबन्नानां सृष्टिमुक्त्वा, तदेव प्रकृत सदीक्षितृ तानि च तेजोऽबन्नानि देवताशब्देन परामृश्याह —'सेय देवतैक्षत' 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छाउ ६।३।२) इति। तत्र यदि प्रधानमचेतन गुणवृत्त्येक्षितृ कल्प्येत, तदेव प्रकृतत्वात् ' सेय देवता ' इति परामृश्येत । न तदा देवता जीवमात्मशब्देन अभिदध्यात्। जीवो हि नाम चेतन. शरीराध्यक्षः प्राणानां धारयिता, तत्प्रसिद्धेर्निर्वचनाच्च। स कथमचेतनस्य प्रधानस्यात्मा भवेत्। आत्मा हि नाम स्वरूप, नाचेतनस्य प्रधानस्य चेतनो जीव स्वरूप भवितुमर्हति। अथ तु चेतन ब्रह्म मुख्यमीक्षितृ परिगृह्येत, तस्य जीवविषय आत्मशब्दप्रयोग उपपद्यते । तथा — 'स य एषोऽणिमैतदात्म्यमिद सर्वं तत्सत्य स आत्मा तत्त्वमसि श्वेतकेतो' ( छाउ ६।८।७ ) इत्यत्र 'स आत्मा' इति प्रकृत सदणिमानमात्मान आत्मशब्देनोपदिश्य 'तत्त्वमसि श्वेतकेतो' इति चेतनस्य श्वेतकेतोरात्मत्वेनोपदिशति । अप्तेजसोस्तु विषयत्वादचेतनत्व, नामरूपव्याकरणादौ च प्रयोज्यत्वेनैव निर्देशात्, न च आत्मशब्दवत्किंचिन्मुख्यत्वे कारणमस्तीति युक्त कूलवत् गौणत्वमीक्षितृत्वस्य। तयोरपि च सदधिष्ठितत्वापेक्षमेवेक्षितृत्वम्। सतस्त्वात्मशब्दात् न गौणमीक्षितृत्वमित्युक्तम्। १।१।६

'तन्निष्ठस्य मोक्षोपदेशात्' —न प्रधानमचेतनमात्मशब्दालम्बन भवितुमर्हति। 'स आत्मा' इति प्रकृत सदणिमानमादाय 'तत्त्वमसि श्वेतकेतो' इति चेतनस्य श्वेतकेतोर्मोक्षयितव्यस्य तन्निष्ठामुपदिश्य, 'आचार्यवान् पुरुषो वेद तस्य तावदेव चिर यावन्न विमोक्ष्येऽथ सपत्स्ये' ( छाउ. ६।१४।२ ) इति मोक्षोपदेशात्। यदि ह्यचेतन प्रधान सच्छब्दवाच्य ' तत् असि ' इति ग्राहयेत्, मुमुक्षु चेतन सन्तमचेतनोऽसीति, तदा विपरीतवादि शास्त्र पुरुषस्यानर्थाय इत्यप्रमाण स्यात्। न तु निर्दोषमिद शास्त्रमप्रमाण कल्पयितु युक्तम् । यदि चाज्ञस्य सतो मुमुक्षोः अचेतनमनात्मानमात्मेत्युपदिशेत् प्रमाणभूत शास्त्र, स श्रद्दधानतया अन्धगोलाङ्गूलन्यायेन तदात्मदृष्टिं न परित्यजेत्, तद्व्यतिरिक्त चात्मान न प्रतिपद्येत । तथा सति पुरुषार्थाद्विहन्येत, अनर्थं च ऋच्छेत् । तस्माद्यथा स्वर्गाद्यर्थिनोऽग्निहोत्रादिसाधन यथाभूतमुपदिशति, तथा मुमुक्षोरपि 'स आत्मा तत्त्वमसि श्वेतकेतो' इति यथाभूतमेव आत्मानमुपदिशतीति युक्तम्। एव च सति तप्तपरशुग्रहणमोक्षदृष्टान्तेन सत्याभिसधस्य मोक्षोपदेश उपपद्यते ।

१।१।७

'हेयत्वावचनाच्च'—कुतश्च न प्रधान सच्छब्दवाच्यम् —हेयत्वावचनाच्चेति। यद्यनात्मैव प्रधान सच्छब्दवाच्य, ' स आत्मा तत्त्वमसि ' इतीह उपदिष्ट स्यात्। स तदुपदेशश्रवणादनात्मज्ञतया तन्निष्ठो मा भूदिति मुख्यमात्मानमुपदिदिक्षु शास्त्र तस्य हेयत्व ब्रूयात्। यथा अरुन्धतीं दिदर्शयिषुस्तत्समीपस्था स्थूला तारामसुख्या प्रथममरुन्धतीति ग्राहयित्वा, ता प्रत्याख्याय, पश्चादरुन्धतीमेव ग्राहयति, तद्वत् नायमात्मेति ब्रूयात्। न चैवमवोचत्। सन्मात्रात्माऽवगतिनिष्ठैव हि षष्ठप्रपाठके परिसमाप्तिर्दृश्यते। चशब्दः प्रतिज्ञाविरोधाभ्युच्चयप्रदर्शनार्थः। सत्यपि हेयत्ववचने प्रतिज्ञाविरोधः प्रसज्येत । कारणविज्ञानाद्धि सर्वं विज्ञातमिति प्रतिज्ञात— ' उत तमादेशमप्राक्ष्यो येनाश्रुत श्रुत भवत्यमत मतमविज्ञात विज्ञातमिति कथ नु भगव. स आदेशो भवतीति यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मय विज्ञात स्याद्वाचारम्भण विकारो नामधेय मृत्तिकेत्येव सत्य ' ( छाउ ६।१।२—४ ) ' एव सोम्य स आदेशो भवति ' ( छाउ. ६।१।६ ) इति वाक्योपक्रमे श्रवणात् । न च सच्छब्दवाच्ये प्रधाने भोग्यवर्गकारणे हेयत्वेनाहेयत्वेन वा विज्ञाते भोक्तृवर्गो विज्ञातो भवति, अप्रधानविकारत्वाद्भोक्तृवर्गस्य । तस्मान्न प्रधान सच्छब्दवाच्यम्।

१।१।८

' स्वाप्ययात् ' —- कुतश्च न प्रधान सच्छब्दवाच्यम् — स्वाप्ययादिति। तदेव सच्छब्दवाच्य कारण प्रकृत्य श्रूयते — ' यत्रैतत्पुरुष स्वपिति नाम सता सोम्य तदा सपन्नो भवति। स्वमपीतो भवति । तस्मादेन स्वपितीत्याचक्षते। स्व ह्यपीतो भवति' ( छाउ ६।८।१ ) इति। एषा श्रुति स्वपितीत्येतत्पुरुषस्य लोकप्रसिद्ध नाम निर्वक्ति। स्वशब्देनेह आत्मोच्यते। य. प्रकृतः सच्छब्दवाच्यस्तमपीतो भवति अपिगतो भवति इत्यर्थः।

अपिपूर्वस्य एते लयार्थत्व प्रसिद्ध, ' प्रभवाप्ययौ ' ( माउ ६ ) इत्युत्पत्तिप्रलययो. प्रयोगदर्शनात् । मन.प्रचारोपाधिविशेषसम्बन्धात् इन्द्रियार्थान् गृह्णन् तद्विशेषापन्नो जीवो जागर्ति । तद्वासनाविशिष्टः स्वप्नान्पश्यन् मन.शब्दवाच्यो भवति । स उपाधिद्वयोपरमे सुषुप्तावस्थाया उपाधिकृतविशेषाभावात्स्वात्मनि प्रलीन इवेति ' स्व ह्यपीतो भवति ' इत्युच्यते । यथा हृदयशब्दनिर्वचन श्रुत्या दर्शित— ' स वा एष आत्मा हृदि, तस्यैतदेव निरुक्त हृद्ययमिति, तस्माद्धृदयम् ' ( छाउ ८।३।३ ) इति । यथा वा अशनायोदन्याशब्दप्रवृत्ति मूल दर्शयति श्रुतिः— ' आप एव तदशित नयन्ते ' ' तेज एव तत्पीत नयते ' ( छाउ ६।८।३,५ ) इति च । एव स्वमात्मान सच्छब्दवाच्यमपीतो भवति, इतीममर्थं स्वपितिनामनिर्वचनेन दर्शयति । न च चेतन आत्मा अचेतन प्रधान स्वरूपत्वेन प्रतिपद्येत । यदि पुन. प्रधानमेव आत्मीयत्वात् स्वशब्देनैवोच्येत, एवमपि चेतनोऽचेतनमप्येतीति विरुद्धमापद्येत । श्रुत्यन्तर च — ' प्राज्ञेनात्मना सपरिष्वक्तो न बाह्य किंचन वेद नान्तरम् ' ( बृउ ४।३।२१ ) इति सुषुप्तावस्थाया चेतनेऽप्यय दर्शयति । अतः यस्मिन्नप्ययः सर्वेषां चेतनाना तच्चेतन सच्छब्दवाच्य जगतः कारण स्यात्, नाचेतनं प्रधानम् । १।१।९

' न वियदश्रुते '— तत्र तावत्प्रतिपद्यते न वियदश्रुतेरिति । न खल्वाकाशमुत्पद्यते । कस्मात् । अश्रुतेः । न ह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति । छान्दोग्ये हि ' सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय ' ( छाउ ६।२।१ ) इति सच्छब्दवाच्य ब्रह्म प्रकृत्य ' तदैक्षत ' 'तत्तेजोऽसृजत ' ( छाउ ६।२।१ ) इति च पञ्चानां महाभूतानां मध्यम तेज. आदि कृत्वा त्रयाणा तेजोबन्नानामुत्पत्तिः श्राव्यते । श्रुतिश्च न प्रमाणमतीन्द्रियार्थविज्ञानोत्पत्तौ । न चात्र श्रुतिरस्ति आकाशस्योत्पत्तिप्रतिपादिनी । तस्मान्न आकाशस्योत्पत्तिरिति । २।३।१

' अस्ति तु '— तुशब्दः पक्षान्तरपरिग्रहे । मा नाम आकाशस्य छान्दोग्ये भूदुत्पत्तिः, श्रुत्यन्तरे त्वस्ति । तैत्तिरीयका हि समामनन्ति— ' सत्य ज्ञानमनन्त ब्रह्म ' ( तैउ. २।१।१ ) इति प्रकृत्य ' तस्माद्वा एतस्मादात्मन आकाश. सभूत. ' इति । ततश्च श्रुत्योर्विप्रतिषेधः क्वचित्तेज.प्रमुखा सृष्टिः, क्वचिदाकाशप्रमुखा इति । २।३।२

' गौण्यसभवात् '— अस्मिन्विप्रतिषेधे कश्चिदाह —गौणी इति । नास्ति वियत उत्पत्तिः, अश्रुतेरेव । या त्वितरा वियदुत्पत्तिवादिनी श्रुतिरुदाहृता, सा गौणी भवितुमर्हति । कस्मात् । असभवात् । न ह्याकाशस्योत्पत्ति· सभावयितु शक्या, श्रीमत्कणभुगभिप्रायानुसारिषु जीवत्सु । २।३।३

' शब्दाच्च'— शब्दः खल्वाकाशस्य अजत्व ख्यापयति, यत आह ' वायुश्चान्तरिक्ष चैतदमृत ' ( बृउ २।३।३ ) इति । न ह्यमृतस्योत्पत्तिरुपपद्यते । २।३।४

' स्याच्चैकस्य ब्रह्मशब्दवत् '—इद पदोत्तर सूत्रम् । स्यादेतत् । कथ पुनरेकस्य सभूतशब्दस्य 'तस्माद्वा एतस्मादात्मन आकाश. सभूत·' इत्यस्मिन्नधिकारे परेषु तेजःप्रभृतिष्वनुवर्तमानस्य मुख्यत्व सभवति, आकाशे च गौणत्वमिति । अत उत्तरमुच्यते — स्याच्चैकस्यापि सभूतशब्दस्य विषयविशेषवशात् गौणो मुख्यश्च प्रयोगो ब्रह्मशब्दवत् । यथैकस्यापि ब्रह्मशब्दस्य ' तपसा ब्रह्म विजिज्ञासस्व, तपो ब्रह्म' (तैउ. ३।२) इत्यस्मिन्नधिकारे अन्नादिषु गौणः प्रयोगः, आनन्दे च मुख्यः । २।३।५

' प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्य· ' — एव प्राप्ते इदमाह—प्रतिज्ञाहानिरिति । न काचन मद्बहिर्भा विद्याऽस्तीति चैवरूपा प्रतिवेदान्त प्रतिज्ञा विज्ञायते । तस्या. प्रतिज्ञाया एवमहानिरनुपरोधः स्यात् । यद्यव्यतिरेकः कृत्स्नस्य वस्तुजातस्य विज्ञेयाद्ब्रह्मण. स्यात् । व्यतिरेके हि सति एकविज्ञानेन सर्व विज्ञायते इतीय प्रतिज्ञा हीयेत । स चाव्यतिरेक एवमुपपद्यते, यदि कृत्स्नं वस्तुजातमेकस्माद्ब्रह्मण उत्पद्येत । शब्देभ्यश्च प्रकृतिविकाराव्यतिरेकन्यायेनैव प्रतिज्ञासिद्धिरवगम्यते । तथा हि— ' येनाश्रुत श्रुत भवति ' ( छाउ ६।१।३ ) इति प्रतिज्ञाय, मृदादिदृष्टान्तै, कार्यकारणाभेदप्रतिपादनपरैः प्रतिज्ञैषा समर्थ्यते । तत्साधनायैव चोत्तरे शब्दाः 'सदेव सोम्येदमग्र आसी-

देकमेवाद्वितीय ' ( छाउ ६।२।१ ) ' तदैक्षत ' ' तत्तेजोऽसृजत ' ( छाउ ६।२।३ ) इत्येव कार्यजात ब्रह्मण. प्रदर्श्य, अव्यतिरेक प्रदर्शयन्ति ' ऐतदात्म्यमिद सर्वे ' ( छाउ ६।८।७ ) इत्यारभ्य आ प्रपाठकपरिसमाप्तेः। तद्यदि आकाश न ब्रह्मकार्यं स्यात्, न ब्रह्मणि विज्ञाते आकाश विज्ञायेत, ततश्च प्रतिज्ञाहानि स्यात्। न च प्रतिज्ञाहान्या वेदस्याप्रामाण्य युक्त कर्तुम्। २।३।६

' यावद्विकार तु विभागो लोकवत् ' — तुशब्दः असभवाशङ्काव्यावृत्त्यर्थ.। न खल्वाकाशोत्पत्तौ असभवाशङ्का कर्तव्या। यतो यावत्किंचिद्विकारजात दृश्यते घटघटिकोदञ्चनादि वा कटककेयूरकुण्डलादि वा सूची नाराचनिस्त्रिंशादि वा तावानेव विभागो लोके लक्ष्यते। न त्वविकृत किंचित्कुतश्चिद्विभक्तमुपलभ्यते । विभागश्च आकाशस्य पृथिव्यादिभ्योऽवगम्यते । तस्मात्सोऽपि विकारो भवितुमर्हति। एतेन दिक्कालमन.परमाण्वादीना कार्यत्व व्याख्यातम्। २।३।७

' एतेन मातरिश्वा व्याख्यात. ' — अतिदेशोऽयम्। एतेन वियद्व्याख्यानेन मातरिश्वापि वियदाश्रयो वायुर्व्याख्यात । तत्राप्येते यथायोग पक्षा रचयितव्या। न वायुरुत्पद्यते, छन्दोगानामुत्पत्तिप्रकरणे अनाम्नानादित्येक. पक्षः। अस्ति तु तैत्तिरीयाणामुत्पत्तिप्रकरणे आम्नान ' आकाशाद्वायु ' ( तैउ २।१ ) इति पक्षान्तरम्। प्रतिज्ञानुपरोधाद्यावद्विकार च विभागाभ्युपगमात् उत्पद्यते वायु इति सिद्धान्त ।

* ब्रशकर २।३।८

पृ ८९२ छाउ ६।३।१ 'तेषा खल्वेषा भूताना' इत्यादि।

'तृतीयशब्दावरोधः सशोकजस्य' — ननु 'तेषा खल्वेषा भूताना त्रीण्येव बीजानि भवन्त्याण्डज जीवजमुद्भिज्जम्' ( छाउ ६।३।१ ) इत्यत्र त्रिविध एव भूतग्रामः श्रूयते, कथ च चतुर्विधत्व भूतग्रामस्य प्रतिज्ञातमिति । अत्रोच्यते — तृतीयशब्दावरोध इति । 'आण्डज जीवजमुद्भिज्जम् ' इत्यत्र तृतीयेनोद्भिज्जशब्देनैव स्वेदजोपसग्रह. कृतः प्रत्येतव्य, उभयोरपि स्वेदजोद्भिज्जयो भूम्युदकोद्भेदप्रभवत्वस्य तुल्यत्वात्। स्थावरोद्भेदात्तु विलक्षणो जङ्गमोद्भेद इत्यन्यत्र स्वेदजोद्भिज्जयोर्भेदवाद इत्यविरोध.।

ब्रशकर ३।१।२१

पृ ८९३ छाउ ६।३।२ ' सेयं देवतैक्षत ' इत्यादि।

' दर्शनाच्च ' —दर्शयति च श्रुतिः परस्यैव ब्रह्मणो देहादिषूपाधिष्वन्तरनुप्रवेशम्— 'पुरश्चक्रे द्विपद पुरश्चक्रे चतुष्पद.। पुर स पक्षी भूत्वा पुरः पुरुष आविशत्' ( बृउ २।५।१४ ) इति। 'अनेन जीवेनात्मनाऽनुप्रविश्य' ( छाउ ६।३।२ ) इति च। तस्माद्युक्तमेतत् 'अत एव चोपमा सूर्यकादिवत् ' ( ब्रसू ३।२।१८ ) इति।

ब्रशकर ३।२।२१

पृ ८९९ छाउ ६।५।१ 'अन्नमशितं त्रेधा विधीयते' इत्यादि।

' मासादि भौम यथाशब्दमितरयोश्च ' — तासां तिसृणा देवताना, बहिस्त्रिवृत्कृतानां सतीना, अध्यात्मम पर त्रिवृत्करणमुक्तम् — 'इमास्तिस्रो देवताः पुरुष प्राप्य त्रिवृत्त्रिवृदेकैका भवति ' इति। तदिदानीं आचार्यो यथाश्रुत्येवोपदर्शयति, आशङ्कित कचिद्दोष परिहरिष्यन् — मासादीति । भूमेस्त्रिवृत्कृतायाः पुरुषेणोपभुज्यमानाया मासादिकार्यं यथाशब्द निष्पद्यते। तथा हि श्रुति. — 'अन्नमशित त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीष भवति यो मध्यमस्तन्मास योऽणिष्ठस्तन्मन.' इति। त्रिवृत्कृता भूमिरेवैषा व्रीहियवाद्यन्नरूपेण अद्यत इत्यभिप्राय.। तस्याश्च स्थविष्ठ रूप पुरीषभावेन बहिर्निर्गच्छति। मध्यममध्यात्म मास वर्धयति। अणिष्ठ तु मनः। एवमितरयोरप्तेजसोर्यथाशब्द कार्यमवगन्तव्यम्। मूत्र लोहित प्राणश्च अपा कार्यं, अस्थि मज्जा वाक् तेजस. इति। २।४।२१

'वैशेष्यात्तु तद्वादस्तद्वादः' — अत्राह — यदि सर्वमेव त्रिवृत्कृत भूतभौतिक, अविशेषश्रुतेः —'तासा त्रिवृत त्रिवृतमेकैकामकरोत्' इति, किंकृतस्तर्ह्यय विशेषव्यपदेश — इद तेज, इमा आपः, इदमन्न इति। तथा अध्यात्म — इदमन्नस्याशितस्य कार्यं

* भास्कर रामानुज निंबार्क श्रीकठ श्रीकर ब्रशकरवत्।

मांसादि, इदमपां पीतानां कार्यं लोहितादि, इदं तेजसोऽशितस्य कार्यमस्थ्यादि इति । अत्रोच्यते — वैशेष्यादिति । तुशब्देन चोदितं दोषमपनुदति । विशेषस्य भावो वैशेष्यं, भूयस्त्वमिति यावत् । सत्यपि त्रिवृत्करणे क्वचित्कस्यचिद्भूतधातोर्भूयस्त्वमुपलभ्यते — अग्नेस्तेजोभूयस्त्वं, उदकस्याब्भूयस्त्वं, पृथिव्या अन्नभूयस्त्वमिति । व्यवहारप्रसिद्ध्यर्थं चेदं त्रिवृत्करणम् । व्यवहारश्च त्रिवृत्कृतरज्जुवदेकत्वापत्तौ सत्यां, न भेदेन भूतत्रयगोचरो लोकस्य प्रसिध्येत् । तस्मात्सत्यपि त्रिवृत्करणे वैशेष्यादेव तेजोबन्नविशेषवादो भूतभौतिकविषय उपपद्यते । 'तद्वादस्तद्वादः' इति पदाभ्यासः अध्यायपरिसमाप्तिं द्योतयति ।

ब्रशांकर २।४।२२

**पृ ९०१ छांउ ६।५।४ 'अन्नमयꣳ हि सोम्य मनः' इत्यादि ।**

'तत्पूर्वकत्वाद्वाचः' — यद्यपि 'तत्तेजोऽसृजत' इत्येतस्मिन्प्रकरणे प्राणानामुत्पत्तिर्न पठ्यते, तेजोबन्नानामेव त्रयाणां भूतानामुत्पत्तिश्रवणात् । तथापि ब्रह्मप्रकृतिकतेजोबन्नपूर्वकत्वाभिधानाद्वाक्प्राणमनसां, तत्सामान्याच्च सर्वेषामेव प्राणानां ब्रह्मप्रभवत्वं सिद्धं भवति । तथा हि—अस्मिन्नेव प्रकरणे तेजोबन्नपूर्वकत्वं वाक्प्राणमनसामाम्नायते — 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' इति । तत्र यदि तावन्मुख्यमेवैषामन्नादिमयत्वं, ततो वर्तत एव ब्रह्मप्रभवत्वम् । अथ भाक्तं, तथापि ब्रह्मकर्तृकायां नामरूपव्याक्रियायां श्रवणात्, 'येनाश्रुतं श्रुतं भवति' इति चोपक्रमात्, 'ऐतदात्म्यमिदं सर्वं' इति चोपसंहारात्, श्रुत्यन्तरप्रसिद्धेश्च ब्रह्मकार्यत्वप्रपञ्चनार्थमेव मनआदीनामन्नादिमयत्ववचनमिति गम्यते । तस्मादपि प्राणानां ब्रह्मविकारत्वसिद्धिः । ब्रशांकर २।४।४

**पृ ९१९ छांउ ६।११।३ 'एवमेव खलु सोम्य' इत्यादि ।**

'चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्' — चराचरव्यपाश्रयः । स्थावरजङ्गमशरीरविषयौ जन्ममरणशब्दौ स्थावरजङ्गमानि हि भूतानि जायन्ते च म्रियन्ते च अतस्तद्विषयौ जन्ममरणशब्दौ मुख्यौ सन्तौ तत्स्थे जीवात्मन्युपचर्येते, तद्भावभावित्वात् । शरीरप्रादुर्भावतिरोभावयोर्हि सतोर्जन्ममरणशब्दौ भवतो नासतोः । २।३।१६

'नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः' — नात्मा जीव उत्पद्यते इति । कस्मात् । अश्रुतेः । न ह्यस्य उत्पत्तिप्रकरणे श्रवणमस्ति भूयःसु प्रदेशेषु । ननु क्वचिदश्रवणमन्यत्र श्रुतं न वारयतीत्युक्तम् । सत्यमुक्तम् । उत्पत्तिरेव त्वस्य न संभवतीति वदामः । कस्मात् । नित्यत्वाच्च ताभ्यः । चशब्दात् अजत्वादिभ्यश्च । नित्यत्वं ह्यस्य श्रुतिभ्योऽवगम्यते, तथा अजत्वं अविकारित्वं अविकृतस्यैव ब्रह्मणो जीवात्मनाऽवस्थानं ब्रह्मात्मना चेति । न चैवंरूपस्य उत्पत्तिरुपपद्यते । ताः काः श्रुतयः—'न जीवो म्रियते' ( छांउ. ६।११।३ ) 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' ( बृउ ४।४।२५ ) 'न जायते म्रियते वा विपश्चित्' ( कांउ २।१८ ) 'अजो नित्यः शाश्वतोऽयं पुराणः' ( कांउ २।१८ ) 'तत्सृष्ट्वा तदेवानुप्राविशत्' ( तैउ. २।६।१ ) 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' ( छांउ. ६।३।२ ) 'स एष इह प्रविष्ट आ नखाग्रेभ्यः' ( बृउ १।४।७ ) 'तत्त्वमसि' ( छांउ ६।८।७ ) 'अहं ब्रह्मास्मि' ( बृउ. १।४।१० ) 'अयमात्मा ब्रह्म सर्वानुभूः' ( बृउ २।५।१९ ) इत्येवमाद्या नित्यत्ववादिन्यः सत्यो जीवस्योत्पत्तिं प्रतिबध्नन्ति ।

'अत ऊर्ध्वं विमोक्षायैव ब्रूहि' (बृउ ४।३।१५) इति च प्रकृतस्यैव विज्ञानमयस्य आत्मनः सर्वसंसारधर्मप्रत्याख्यानेन परमात्मभावप्रतिपादनात् । तस्मात् नैव आत्मोत्पद्यते प्रविलीयते चेति ।

ब्रशांकर. २।३।१७

**पृ ९४३ छांउ ७।२४।१ 'यत्र नान्यत्पश्यति' इत्यादि ।**

'भूमा संप्रसादादध्युपदेशात्' — परमात्मैव इह भूमा भवितुमर्हति, न प्राणः । कस्मात् । संप्रसादादध्युपदेशात् । संप्रसाद इति सुषुप्तं स्थानमुच्यते, सम्यक्प्रसीदत्यस्मिन्निति निर्वचनात् । बृहदारण्यके च स्वप्नजागरितस्थानाभ्यां सह पाठात् । तस्यां च संप्रसादावस्थायां

प्राणो जागर्तीति प्राणोऽत्र सम्प्रसादोऽभिप्रेयते । प्राणा दूर्ध्वं भूम्न उपदिश्यमानत्वादित्यर्थः । प्राण एव चेत् भूमा स्यात्, स एव तस्मादूर्ध्वमुपदिश्येत इत्यश्लिष्टमेतत्स्यात् । न हि नामैव 'नाम्नो भूय.' इति नाम्न ऊर्ध्वमुपदिष्टम् । किं तर्हि, नाम्नोऽन्यत् अर्थान्तरमुपदिष्ट वागाख्य 'वाग्वाव नाम्नो भूयसी' ( छाउ- ७।२।१ ) इति । तथा वागादिभ्योऽपि आ प्राणादर्थान्तरमेव तत्र तत्र ऊर्ध्वमुपदिष्टम् । तद्व त्प्राणादूर्ध्वमुपदिश्यमानो भूमा प्राणादर्थान्तरभूतो भवितुमर्हति । ननु इह नास्ति प्रश्न 'अस्ति भगव. प्राणाद्भूय.' इति । नापि प्रतिवचनमस्ति 'प्राणाद्वाव भूयोऽस्ति' इति । कथ प्राणादधि भूमोपदिश्यत इति, उच्यते । प्राणविषयमेव च अतिवादित्वमुत्तरत्रानुकृष्य माण पश्याम· 'एष तु वा अतिवदति य. सत्येनाति वदति' ( छाउ ७।१६।१ ) इति तस्मान्नास्ति प्राणादध्यु पदेश इति । अत्रोच्यते — न तावत् प्राणविषयस्य एव अतिवादित्वस्य एतत् अनुकर्षण इति शक्य वक्तु, विशेषवादात् 'यः सत्येनातिवदति' इति । ननु विशेषवादोऽप्यय प्राणविषय एव भवि ष्यति । कथम् । यथैषोऽग्निहोत्री य· सत्य वदति इत्युक्ते, न सत्यवचनेनाग्निहोत्रित्वम् । केन तर्हि, अग्निहो त्रेणैव । तत् सत्यवदन त्वग्निहोत्रिणो विशेष उच्यते । तथा 'एष तु वा अतिवदति, य. सत्येनातिवदति' इत्युक्ते न सत्यवचनेन अतिवादित्वम् । केन तर्हि, प्रकृतेन प्राणविज्ञानेनैव । सत्यवदन तु प्राणविदो विशेषो विव क्ष्यत इति । नेति ब्रूम. । श्रुत्यर्थपरित्यागप्रसङ्गात् । श्रुत्या ह्यत्र सत्यवचनेनातिवादित्व प्रतीयते 'य सत्येनातिवदति सोऽतिवदति इति' नात्र प्राणविज्ञानस्य सकीर्तनमस्ति । प्रकरणात्तु प्राणविज्ञान सबध्येत । तत्र प्रकरणानुरोधेन श्रुति. परित्यक्ता स्यात् । प्रकृतव्यावृत्त्यर्थश्च तुशब्दो न सगच्छेत 'एष तु वा अतिवदति' इति । 'सत्य त्वेव विजिज्ञासितव्य' ( छाउ ७।१६।१ ) इति च प्रयत्नान्तरकरणमर्थान्तरविवक्षां सूचयति । तस्माद्यथैकवेदप्रशसाया प्रकृताया, 'एष तु महाब्राह्मणो यश्चतुरो वेदानधीते' इति एकवेदेभ्योऽर्थान्तरभूतश्चतुर्वेदः प्रशस्यते, तादृगेतद्द्रष्टव्यम् । न च प्रश्नप्रतिवचनरूपयैवार्थान्तरविवक्षया भवितव्यमिति नियमोऽस्ति । प्रकृतसबन्धासभवकारितत्वादर्थान्तरविवक्षाया. । तत्र प्राणान्तमनुशासन श्रुत्वा तूष्णींभूत नारद स्वयमेव सनत्कुमारो व्युत्पादयति — यत्प्राणविज्ञानेन विकारानृतविषयेणातिवादित्वमनतिवादित्वमेव तत् 'एष तु वा अतिवदति, य सत्येनाति वदति' इति । तत्र सत्यमिति पर ब्रह्मोच्यते, परमार्थरूपत्वात् । 'सत्य ज्ञानमनन्त ब्रह्म' इति च श्रुत्यन्तरात् । तथा व्युत्पादिताय नारदाय 'सोऽह भगव. सत्येनातिवदानि' इत्येव प्रवृत्ताय विज्ञानादिसाधनपरपरया भूमानमुपदिशति । तत्र यत् प्राणादधि सत्य वक्तव्य प्रतिज्ञात, तदेवेह भूमेत्युच्यते इति गम्यते । तस्मादस्ति प्राणादधि भूम्न उपदेश इति । अत. प्राणादन्यः परमात्मा भूमा भवितुमर्हतीति । एव चेह आत्मविविदिषया प्रकरणस्योत्थानमुपपन्न भविष्यति । प्राण एवेह आत्मा विवक्षित इत्येतदपि नोपपद्यते । न हि प्राणस्य मुख्यया वृत्त्या आत्मत्वमस्ति । न चान्यत्र परमात्मज्ञानात् शोकविनिवृत्तिरस्ति । 'नान्य. पन्था विद्यतेऽयनाय' ( श्वेउ ६।१५ ) इति श्रुत्यन्तरात् । 'त मा भगवान् शोकस्य पार तारयतु' इति च उपक्रम्य, उपसहरति—'तस्मै मृदितकषायाय तमस. पार दर्शयति भगवान् सनत्कुमारः' ( छाउ ७।२६।२ ) इति । तम इति शोकादिकारणमविद्या उच्यते । प्राणान्ते चानुशासने न प्राणस्यान्यायत्तता उच्येत । 'आत्मत प्राण·' ( छाउ. ७।२६।१ ) इति च ब्राह्मणम् । प्रकरणान्ते परमात्मविवक्षा भविष्यति । भूमाऽत्र प्राण एवेति चेत्, न । 'स भगव. कस्मिन् प्रतिष्ठित इति स्वे महिम्नि' ( छाउ. ७।२४।१ ) इत्यादिना भूम्न एव आ प्रकरणसमाप्तेरनुकर्षणात् । वैपुल्यात्मिका च भूमरूपता सर्वकारणत्वात्परमात्मन. सुतरामुपपद्यते । १।३।८

'धर्मोपपत्तेश्च' — अपि च ये भूम्नि श्रूयन्ते धर्मा, ते परमात्मन्युपपद्यन्ते । 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति दर्शनादिव्यवहाराभाव भूमन्यवगमयति । यदपि तस्यामवस्थायां सुखमुक्त, तदपि आत्मन एव सुखरूपत्व-

विवक्षयोक्तम् ।

ब्रशकर १।३।९

पृ ९५२ छाउ ८।१।१ 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं' इत्यादि ।

'दहर उत्तरेभ्य' — परमेश्वर एवात्र दहराकाशो भवितुमर्हति, न भूताकाशो जीवो वा । कस्मात् । उत्तरेभ्यो वाक्यशेषगतेभ्यो हेतुभ्यः । तथा हि—अन्वेष्टव्यतया अभिहितस्य दहरस्याकाशस्य 'त चेद्ब्रूयुः' इत्युपक्रम्य 'किं तदत्र विद्यते यदन्वेष्टव्य यद्वाव विजिज्ञासितव्य' इत्येवमाक्षेपपूर्वक प्रतिसमाधानवचन भवति 'स ब्रूयात् यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते' ( छाउ ८।१।३ ) इत्यादि । तत्र पुण्डरीकदहरत्वेन प्राप्तदहरत्वस्याकाशस्य प्रसिद्धाकाशौपम्येन दहरत्व निवर्तयन् भूताकाशत्व दहरस्याकाशस्य निवर्तयतीति गम्यते। यद्यपि आकाशशब्दो भूताकाशे रूढ, तथापि तेनैव तस्योपमा नोपपद्यत इति भूताकाशशङ्का निवर्तिता भवति ।

ननु एकस्यापि आकाशस्य बाह्याभ्यन्तरत्वकल्पितेन भेदेन उपमानोपमेयभाव. सभवतीत्युक्तम् । नैव सभवति । अगतिका हीय गतिर्यत्काल्पनिकभेदाश्रयणम् । अपि च कल्पयित्वा भेद उपमानोपमेयभाव वर्णयत· परिच्छिन्नत्वादभ्यन्तराकाशस्य न बाह्याकाशपरिमाणत्वमुपपद्येत ।

ननु परमेश्वरस्यापि 'ज्यायानाकाशात्' ( शब्रा १०।६।३।२ ) इति श्रुत्यन्तरान्नैवाकाशपरिमाणत्व उपपद्यते । नैष दोषः । पुण्डरीकवेष्टनप्राप्तदहरत्वनिवृत्तिपरत्वाद्वाक्यस्य न तावत्त्वप्रतिपादनपरत्वम् । उभय प्रतिपादने हि वाक्य भिद्येत । न च कल्पितभेदे पुण्डरीकवेष्टित आकाशैकदेशे द्यावापृथिव्यादीनामन्तः समाधानमुपपद्यते । 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसकल्प.' ( छाउ ८।१।५ ) इति च आत्मत्वापहतपाप्मत्वादयश्च गुणा न भूताकाशे सभवन्ति । यद्यप्यात्मशब्दो जीवे सभवति, तथापि इतरेभ्य. कारणेभ्यो जीवाशङ्कापि निवर्तिता भवति । न ह्युपाधिपरिच्छिन्नस्य आराग्रोपमितस्य जीवस्य पुण्डरीकवेष्टनकृत दहरत्व शक्य निवर्तयितुम् । ब्रह्माभेदविवक्षया जीवस्य सर्वगतत्वादि विवक्ष्येत इति चेत् । यदात्मतया जीवस्य सर्वगतत्वादि विवक्ष्येत, तस्यैव ब्रह्मण· साक्षात्सर्वगतत्वादि विवक्ष्यतामिति युक्तम्

यदप्युक्त 'ब्रह्मपुरं' इति जीवेन पुरस्योपलक्षितत्वात् राज्ञ इव जीवस्यैवेद पुरस्वामिन पुरैकदेशवर्तित्वमस्त्विति । अत्र ब्रूमः—परस्यैवेद ब्रह्मण पुर सच्छरीर ब्रह्मपुरमित्युच्यते, ब्रह्मशब्दस्य तस्मिन्मुख्यत्वात् । तस्याप्यस्ति पुरेणानेन सबन्धः, उपलब्ध्यधिष्ठानत्वात् । 'स एतस्माज्जीवघनात्परात्पर पुरिशयं पुरुषमीक्षते' (प्रउ ५।५) 'स वा अय पुरुष सर्वासु पूर्षु पुरिशयः' (बृउ २।५।१८) इत्यादिश्रुतिभ्यः । अथवा जीवपुर एवास्मिन्ब्रह्म सनिहितमुपलक्ष्यते, यथा शालग्रामे विष्णु. सनिहित इति, तद्वत् । 'तद्यथेह कर्मचित लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' ( छाउ ८।१।६ ) इति च कर्मणामन्तवत्फलत्वमुक्त्वा 'अथ य इहात्मानमनुविद्य व्रजन्त्येताश्च सत्यान् कामांस्तेषा सर्वेषु लोकेषु कामचारो भवति' (छाउ ८।१।६ इति प्रकृतदहराकाशविज्ञानस्य अनन्तफलत्व वदन्, परमात्मत्वमस्य सूचयति । यदप्येतदुक्त न दहरस्याकाशस्य अन्वेष्टव्यत्व विजिज्ञासितव्यत्व च श्रुत परविशेषणत्वेनोपादानादिति । अत्र ब्रूम.—यद्याकाशो नान्वेष्टव्यत्वेनोक्त स्यात् 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश.' इत्याद्याकाशस्वरूपप्रदर्शन नोपयुज्येत ।

ननु एतदप्यन्तर्वर्तिवस्तुसद्भावदर्शनायैव प्रदर्श्यते 'त चेद्ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहर पुण्डरीक वेश्म दहरोऽस्मिन्नन्तराकाश किं तद विद्यते यदन्वेष्टव्य यद्वाव विजिज्ञासितव्य' इत्याक्षिप्य परिहारावसरे आकाशौपम्योपक्रमेण द्यावापृथिव्यादीनामन्त.समाहितत्वप्रदर्शनात् । नैतदेवम् । एव हि सति यदन्त. समाहित द्यावापृथिव्यादि, तदन्वेष्टव्य विजिज्ञासितव्य चोक्त स्यात् । तत्र वाक्यशेषो नोपपद्येत 'अस्मिन्कामा समाहिताः' 'एष आत्माऽपहतपाप्म ( छाउ ८।१।५ ) इति हि प्रकृत द्यावापृथिव्यादि समाधानाधारमाकाशमाकृष्य 'अथ य इहात्मानमनुविद्य व्रजन्त्येताश्च सत्यान्कामान्' इति समुच्चयार्थे

चशब्देन आत्मान कामाधारमाश्रिताश्च कामान्विज्ञेयान् वाक्यशेषो दर्शयति । तस्माद्वाक्योपक्रमेऽपि दहर एवाकाशो हृदयपुण्डरीकाधिष्ठानः सहान्त स्थै. समाहितैः पृथिव्यादिभि सत्यैश्च कामैर्विशिष्ट उक्त इति गम्यते । स चोक्तेभ्यो हेतुभ्य परमेश्वर इति स्थितम् ।

१।३।१४

'गतिशब्दाभ्यां तथा हि दृष्ट लिङ्ग च' — दहरः परमेश्वर उत्तरेभ्यो हेतुभ्य इत्युक्तम् । त एवोत्तरे हेतव इदानीं प्रपञ्च्यन्ते । इतश्च परमेश्वर एव दहरः । यस्मात् दहरवाक्यशेषे परमेश्वरस्यैव प्रतिपादकौ गतिशब्दौ भवत. 'इमा. सर्वा. प्रजा अहरहर्गच्छन्त्य एत ब्रह्मलोक न विन्दन्ति' ( छाउ. ८।३।२ ) इति । तत्र प्रकृत दहर ब्रह्मलोकशब्देनाभिधाय तद्विषया गति. प्रजाशब्दवाच्याना जीवानामभिधीयमाना दहरस्य ब्रह्मतां गमयति । तथा ह्यहरहर्जीवाना सुषुप्तावस्थायां ब्रह्मविषय गमन दृष्ट श्रुत्यन्तरे— 'सता सोम्य तदा सपन्नो भवति' (छाउ ६।८।१ ) इत्येवमादौ । लोकेऽपि किल गाढ सुषुप्तमाचक्षते ब्रह्मीभूतो ब्रह्मता गत इति । तथा ब्रह्मलोक शब्दोऽपि प्रकृते दहरे प्रयुज्यमानो जीवभूताकाशाशङ्का निवर्तयन् ब्रह्मतामस्य गमयति ।

ननु कमलासनलोकमपि ब्रह्मलोकशब्दो गमयेत् । गमयेद्यदि ब्रह्मणो लोक इति षष्ठीसमासवृत्त्या व्युत्पाद्येत । सामानाधिकरण्यवृत्त्या तु व्युत्पाद्यमानो ब्रह्मैव लोको ब्रह्मलोक इति परमेव ब्रह्म गमयिष्यति । एतदेव चाहरहर्ब्रह्मलोकगमन दृष्ट ब्रह्मलोकशब्दस्य सामानाधिकरण्यवृत्तिपरिग्रहे लिङ्गम् । न ह्यहरहरिमा. प्रजाः कार्यब्रह्मलोक सत्यलोकाख्य गच्छन्तीति शक्य कल्पयितुम् ।

१।३।१५

' धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धे. ' — धृतेश्च हेतोः परमेश्वर एवाय दहरः । कथम् । ' दहरोऽस्मिन्नन्तराकाशः ' इति हि प्रकृत्या आकाशौपम्यपूर्वक तस्मिन्सर्वसमाधानमुक्त्वा तस्मिन्नेव चात्मशब्द प्रयुज्य अपहतपाप्मत्वादिगुणयोग चोपदिश्य तमेवानतिवृत्तप्रकरण निर्दिशति—' अथ य आत्मा स सेतुर्विधृतिरेषा लोकानामसभेदाय ' इति । तत्र विधृतिरिति आत्मशब्दसामानाधिकरण्यात् विधारयितोच्यते । क्तिचः कर्तरि स्मरणात् । यथोदकसतानस्य विधारयिता लोके सेतु क्षेत्रसपदामसभेदाय, एवमयमात्मा एषामध्यात्मादिभेदभिन्नाना लोकाना वर्णाश्रमादीना च विधारयिता सेतुः, असभेदाय असकरायेति । एवमिह प्रकृते दहरे विधरणलक्षण महिमान दर्शयति । अय च महिमा परमेश्वरे एव श्रुत्यन्तरादुपलभ्यते—' एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत. ' ( बृउ ३।८।९ ) इत्यादेः । तथा अन्यत्रापि निश्चिते परमेश्वरवाक्ये श्रूयते — 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसभेदाय ' ( बृउ ४।४।२२ ) इति । एव धृतेश्च हेतो॰ परमेश्वर एवाय दहर॰ ।

१।३।१६

'प्रसिद्धेश्च'—इतश्च परमेश्वर एव 'दहरोऽस्मिन्नन्तराकाश.' इत्युच्यते । यत्कारणमाकाशशब्द. परमेश्वरे प्रसिद्ध.— ' आकाशो वै नाम नामरूपयोर्निर्वहिता' ( छाउ ८।१४ ) ' सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' ( छाउ. १।९।१ ) इत्यादिप्रयोगदर्शनात् । जीवे तु न क्वचिदाकाशशब्द प्रयुज्यमानो दृश्यते । भूताकाशस्तु सत्यामप्याकाशशब्दप्रसिद्धौ उपमानोपमेयभावाद्यसभवात् न ग्रहीतव्य. इत्युक्तम् ।

१।३।१७

' इतरपरामर्शात्स इति चेन्नासभवात् ' — यदि वाक्यशेषबलेन दहर इति परमेश्वरः परिगृह्येत, अस्तीतरस्यापि जीवस्य वाक्यशेषे परामर्श.— ' अथ य एष सप्रसादोऽस्माच्छरीरात्समुत्थाय पर ज्योतिरुपसपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच ' ( छाउ ८।३।४ ) इति । अत्र हि संप्रसादशब्दः श्रुत्यन्तरे सुषुप्तावस्थायां दृष्टत्वादवस्थावन्त जीव शक्नोत्युपस्थापयितु, नार्थान्तरम् । तथा शरीरव्यपाश्रयस्यैव जीवस्य शरीरात्समुत्थान सभवति । यथाऽऽकाशव्यपाश्रयाणां वाय्वादीनामाकाशात्समुत्थान, तद्वत् । यथा च अदृष्टोऽपि लोके परमेश्वरविषय आकाशशब्दः परमेश्वरधर्मसमभिव्याहारात् ' आकाशो वै नाम नामरूपयोर्निर्वहिता ' इत्येवमादौ परमेश्वरविषयोऽभ्युपगत., एव जीवविषयोऽपि भविष्यति । तस्मात् इतरपरामर्शात् ' दहरोऽस्मिन्नन्तराकाशः ' इत्यत्र स एव जीव उच्यते इति चेत् ।

नैतदेव स्यात्। कस्मात्। असभवात्। न हि जीवो बुद्ध्याद्युपाधिपरिच्छेदाभिमानी सन् आकाशेनोपमीयेत। न चोपाधिधर्मानभिमन्यमानस्य अपहतपाप्मत्वादयो धर्माः सम्भवन्ति। प्रपञ्चित चैतत्प्रथमसूत्रे। अतिरेकाशङ्का परिहारायात्र तु पुनरुपन्यस्तम्। पठिष्यति चोपरिष्टात् ‘अन्यार्थश्च परामर्शः’ (ब्रसू. १।३।२०) इति।

१।३।१८

‘अन्यार्थश्च परामर्श.’—अथ योऽय दहरवाक्यशेषे जीवपरामर्शो दर्शित. ‘अथ य एष सप्रसाद.’ (छाउ ८।३।४) इत्यादिः, स दहरे परमेश्वरे व्याख्यायमाने, न जीवोपासनोपदेश., नापि प्रकृतविशेषोपदेश इत्यनर्थकत्व प्राप्नोतीत्यत आह — अन्यार्थोऽय जीवपरामर्शो न जीवस्वरूपपर्यवसायी। किं तर्हि, परमेश्वरस्वरूपपर्यवसायी। १।३।२०

‘अल्पश्रुतेरिति चेत्तदुक्तम्’— यदप्युक्त ‘दहरोऽस्मिन्नन्तराकाश.’ इत्याकाशस्याल्पत्व श्रूयमाण परमेश्वरे नोपपद्यते, जीवस्य त्वाराग्रोपमितस्य अल्पत्वमव कल्पते इति। तस्य परिहारो वक्तव्य.। उक्तो ह्यस्य परिहार —परमेश्वरस्य आपेक्षिकमल्पत्वमवकल्पत इति, ‘अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेत् न निचाय्यत्वादेव व्योमवच्च’ (ब्रसू. १।२।७) इत्यत्र। स एवेह परिहारोऽनुसधातव्य इति सूचयति। श्रुत्यैव चेदमल्पत्व प्रत्युक्त प्रसिद्धेनाकाशेन उपमिमानया ‘यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश.’ (छाउ ८।१।३) इति। ब्रशकर १।३।२१

**पृ ९५४ छाउ ८।१।३ ‘यावान्वा अयमाकाश’ इत्यादि।**

‘अनेन सर्वगतत्वमायामशब्दादिभ्यः’ — अनेन सेत्वादिव्यपदेशनिराकरणेन अन्यप्रतिषेधसमाश्रयणेन च सर्वगतत्वमप्यात्मनः सिद्ध भवति। अन्यथा हि तन्न सिद्ध्येत्। सेत्वादिव्यपदेशेषु हि मुख्येष्वङ्गीक्रियमाणेषु परिच्छेद आत्मनः प्रसज्येत, सेत्वादीनामेवमात्मकत्वात्। तथाऽन्यप्रतिषेधेऽपि असति, वस्तु वस्त्वन्तराद्व्यावर्तत इति परिच्छेद एवात्मनः प्रसज्येत। सर्वगतत्व चास्य आयामशब्दादिभ्योऽवगम्यते। आयामशब्दो व्याप्तिवचनः शब्दः। ‘यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः’ (छाउ ८।१।३) ‘आकाशवत्सर्वगतश्च नित्यः’ ‘ज्यायान्दिव.’ ‘ज्यायानाकाशात्’ ‘नित्यः सर्वगत. स्थाणुरचलोऽय सनातन.’ (भ गी. २।२४) इत्येवमादयो हि श्रुतिस्मृतिन्याया. सर्वगतत्वमात्मन. अवबोधयन्ति। ब्रशकर ३।२।३७

**पृ ९५७ छाउ ८।१।६ ‘तद्यथेह कर्मजितो लोकः’ इत्यादि।**

‘अत एव चानन्याधिपतिः’ — अत एव च अवन्ध्यसकल्पत्वात् अनन्याधिपतिर्विद्वान् भवति। नास्यान्योऽधिपतिर्भवतीत्यर्थ। न हि प्राकृतोऽपि सकल्पयन्नन्यस्वामिकत्वमात्मन. सत्या गतौ सकल्पयति। श्रुतिश्च एतद्दर्शयति — ‘अथ य इहात्मानमनुविद्य व्रजन्त्येताश्च सत्यान्कामास्तेषा सर्वेषु लोकेषु कामचारो भवति’ (छाउ ८।१।६) इति।

ब्रशकर ४।४।९

**पृ ९६५ छाउ ८।५।३ ‘अथ यदनाशकायनमित्याचक्षते’ इत्यादि।**

‘अनभिभव च दर्शयति’ — सहकारित्वस्यैवैतदुपोद्बलक लिङ्गदर्शनमनभिभव च दर्शयति श्रुतिर्ब्रह्मचर्यादिसाधनसपन्नस्य रागादिभिः क्लेशैः ‘एष ह्यात्मा न नश्यति य ब्रह्मचर्येणानुविन्दति’ (छाउ ८।५।३) इत्यादिना। तस्माद्यज्ञादीन्याश्रमकर्माणि च भवन्ति विद्यासहकारीणि चेति स्थितम्।

ब्रशकर ३।४।३५

**पृ ९६७ छाउ ८।६।२ ‘तद्यथा महापथ आतत उभौ’ इत्यादि।**

‘निशि नेति चेन्न सबन्धस्य यावद्देहभावित्वाद्दर्शयति च’ — अस्त्यहनि नाडीरश्मिसबन्ध इत्यहनि मृतस्य स्याद्रश्म्यनुसारित्व, रात्रौ तु प्रेतस्य न स्यात्। नाडीरश्मिसबन्धविच्छेदादिति चेन्न। नाडीरश्मिसबन्धस्य यावद्देहभावित्वात्। यावद्देहभावी हि शिराकिरणसपर्क.। दर्शयति चैतमर्थं श्रुतिः— ‘अमुष्मादादित्यात् प्रतायन्ते. .’ (छाउ ८।६।२) इति।

ब्रशकर. ४।२।१९

**पृ ९६९ छाउ ८।७।१ ‘य आत्माऽपहतपाप्मा’ इत्यादि।**

'उत्तराच्चेदाविर्भूतस्वरूपस्तु' — 'इतरपरामर्शात्' ( ब्रसू. १।३।१८ ) या जीवाशङ्का जाता सा असभवान्निराकृता। अथेदानीं मृतस्येवामृतसेकात्पुन. समुत्थान जीवाशङ्काया क्रियते, उत्तरस्मात्प्राजापत्याद्वाक्यात्। तत्र हि — 'य आत्माऽपहतपाप्मा' इत्यपहतपाप्मत्वादिगुणकमात्मानमन्वेष्टव्य विजिज्ञासितव्य च प्रतिज्ञाय, 'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मा' (छाउ ८।७।४) इति ब्रुवन्नक्षिस्थ द्रष्टार जीवमात्मान निर्दिशति। 'एत त्वेव ते भूयोऽनुव्याख्यास्यामि' इति च तमेव पुन.पुन परामृश्य, 'य एष स्वप्ने महीयमानश्चरत्येष आत्मा' ( छाउ ८।१०।१ ) इति 'तद्यत्रैत त्सुप्त. समस्त. सप्रसन्न. स्वप्न न विजानात्येष आत्मा' इति च जीवमेवावस्थान्तरगत व्याचष्टे। तस्यैव च अपहतपाप्मत्वादि दर्शयति — 'एतदमृतमभयमेतद्ब्रह्म' इति। 'नाह खल्वयमेव सप्रत्यात्मान जानात्ययमहमस्मीति नो एवेमानि भूतानि' (छाउ ८।११।२) इति च सुषुप्तावस्थाया दोषमुपलभ्य 'एत त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्मात्' इति चोपक्रम्य, शरीरसबन्धनिन्दापूर्वक 'एष सप्रसादोऽस्माच्छरीरात् समुत्थाय पर ज्योतिरुपसपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तम. पुरुष' (छाउ ८।१२।३) इति जीवमेव शरीरात्समुत्थितमुत्तमपुरुष दर्शयति। तस्मादस्ति सभवो जीवे पारमेश्वराणा धर्माणाम्। अतः 'दहरोऽस्मिन्नन्तराकाशः' इति जीव एवोक्त. इति चेत्कश्चिद्ब्रूयात्। त प्रति ब्रूयात् 'आविर्भूतस्वरूपस्तु' इति। तुशब्द पूर्वपक्षव्यावृत्त्यर्थ। नोत्तरस्मादपि वाक्यादिह जीवस्याशङ्का सभवतीत्यर्थ.। कस्मात्। यतः तत्रापि अविर्भूतस्वरूपो जीवो विवक्ष्यते। आविर्भूत स्वरूपमस्य इत्याविर्भूतस्वरूपः। भूतपूर्वगत्या जीववचनम्। एतदुक्त भवति — 'य एषोऽक्षिणि' इत्यक्षिलक्षित द्रष्टार निर्दिश्य, उदशरावब्राह्मणेन एन शरीरात्मताया व्युत्थाप्य 'एत त्वेव ते' इति पुनःपुनस्तमेव व्याख्येयत्वेनाकृष्य, स्वप्नसुषुप्तोपन्यासक्रमेण 'पर ज्योतिरुपसपद्य स्वेन रूपेणाभिनिष्पद्यते' इति यदस्य पारमार्थिक स्वरूप पर ब्रह्म, तद्रूपतयैन जीव व्याचष्टे, न जैवेन रूपेण।

ब्रशाकर १।३।१९

पृ ९७६ छाउ ८।११।३ 'एवमेवैष मघवन्निति होवाच' इत्यादि।

'तदुपर्यपि बादरायण. सभवात्'—मनुष्यानधिकरोति शास्त्र, न तु मनुष्यानेवेति इह ब्रह्मज्ञाने नियमोऽस्ति। तेषा मनुष्याणामुपरिष्टात् ये देवादय, तानप्यधिकरोति शास्त्रमिति बादरायण आचार्यो मन्यते। कस्मात्। सभवात्। सभवति हि तेषामप्यर्थित्वाद्यधिकारकारणम्। तत्रार्थित्व तावत् मोक्षविषय देवादीनामपि सभवति विकारविषयविभूत्यनित्यत्वालोचनादिनिमित्तम्। तथा सामर्थ्यमपि तेषा सभवति, मन्त्रार्थवादेतिहासपुराणलोकेभ्यो विग्रहवत्त्वाद्यवगमात्। न च तेषा कश्चित्प्रतिषेधोऽस्ति। न चोपनयनशास्त्रेण एषामधिकारो निवर्त्येत, उपनयनस्य वेदाध्ययनार्थत्वात्, तेषा च स्वयप्रतिभातवेदत्वात्। अपि चैषा विद्याग्रहणार्थं ब्रह्मचर्यादि दर्शयति — 'एकशत ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास' ( छाउ ८।११।३ ) 'भृगुर्वै वारुणि'। वरुण पितरमुपससार। अधीहि भगवो ब्रह्मेति' ( तैउ ३।१ ) इत्यादि। यदपि कर्मस्वनधिकारकारणमुक्तम् 'न देवानां देवतान्तराभावात्' इति, 'न ऋषीणामार्षेयान्तराभावात्' ( जैसू. भा ६।१।५–६ ) इति। न तद्विद्यास्वस्ति। न हि इन्द्रादीना विद्यास्वधिक्रियमाणानामिन्द्राद्युद्देशेन किंचित्कृत्यमस्ति। न च भृग्वादीना भृग्वादिसगोत्रतया। तस्माद्देवादीनामपि विद्यास्वधिकारः केन वार्यते। देवाद्यधिकारेऽपि अङ्गुष्ठमात्रश्रुतिः स्वाङ्गुष्ठापेक्षया न विरुध्येत।

ब्रशाकर १।३।२६

पृ ९७९ छाउ ८।१२।३ 'एवमेवैष सप्रसाद' इत्यादि।

'ज्योतिर्दर्शनात्' — परमेव ब्रह्म ज्योतिःशब्दम्। कस्मात्। दर्शनात्। तस्य हि इह प्रकरणे वक्तव्यत्वेनानुवृत्तिर्दृश्यते। 'य आत्माऽपहतपाप्मा' ( छाउ. ८।७।१ ) इत्यपहतपाप्मत्वादिगुणकस्यात्मन प्रकरणादावन्वेष्टव्यत्वेन विजिज्ञासितव्यत्वेन च प्रतिज्ञानात्। 'एत त्वेव ते भूयोऽनुव्याख्यास्यामि' ( छाउ. ८।९।३ ) इति च अनुसधानात्। 'अशरीरं वाव सन्त न प्रियाप्रिये स्पृशत.' ( छाउ ८।१२।१ ) इति

च अशरीरतायै ज्योति सपत्तेरस्याभिधानात् । ब्रह्मभावाच्च अन्यत्राशरीरतानुपपत्ते. । ‘ पर ज्योतिः ’ ‘ स उत्तम पुरुष. ’ ( छाउ ८।१२।३ ) इति च विशेषणात् । यत्तूक्त मुमुक्षो आदित्यप्राप्तिरभिहितेति, नासावात्यन्तिको मोक्ष , गत्युत्क्रान्तिसबन्धात् ।

१।३।४०

‘ सपद्याविर्भाव. स्वेन शब्दात् ’— केवलेनैवात्मना आविर्भवति न धर्मान्तरेणेति । कुत. । ‘ स्वेन रूपेणाभिनिष्पद्यते ’ ( छाउ ८।१२।३ ) इति स्वशब्दात् ।

४।४।१

‘मुक्त. प्रतिज्ञानात् ’— योऽत्र ‘ अभिनिष्पद्यते ’ इत्युक्त स सर्वबन्धविनिर्मुक्त. शुद्धेनैवात्मना अवतिष्ठते । पूर्वत्र तु ‘अन्धो भवति’ (छाउ ८।९।२), ‘अपि रोदितीव ’ ( छाउ ८।१०।४ ) ‘ विनाशमेवापीतो भवति’ (छाउ ८।११।१) इति च अवस्थात्रयकलुषितेनात्मना इत्यय विशेष. । कथ पुनरवगम्यते । मुक्तोऽयमिदानीं भवतीति प्रतिज्ञानादित्याह । तथा हि ‘ एत त्वेव ते भूयोऽनुव्याख्यास्यामि ’ ( छाउ ८।९।३ ) इत्यवस्थात्रयदोषविहीनमात्मान व्याख्येयत्वेन प्रतिज्ञाय ‘ अशरीर वाव सन्त न प्रियाप्रिये स्पृशतः ’ ( छाउ ८।१२।१ ) इति चोपन्यस्य ‘स्वेन रूपेणाभिनिष्पद्यते स उत्तम. पुरुषः ’ ( ८।१२।३ ) इति चोपसहरति । तथा आख्यायिकोपक्रमेऽपि ‘ य आत्माऽपहतपाप्मा ’ इत्यादि मुक्तात्मविषयमेव प्रतिज्ञानम् । फलत्वप्रसिद्धिरपि मोक्षस्य बन्धनिवृत्तिमात्रापेक्षा, नापूर्वोपजननापेक्षा । यदपि ‘ अभिनिष्पद्यते ’ इत्युत्पत्तिपर्यायत्व, तदपि पूर्वावस्थापेक्ष, यथा रोगनिवृत्तौ अरोगोऽभिनिष्पद्यत इति तद्वत् । तस्माददोषः ।

४।४।२

‘आत्मा प्रकरणात्’ — कथ पुनर्मुक्त इत्युच्यते, यावता ‘पर ज्योतिरुपसपद्य’ इति कार्यगोचरमेवैन श्रावयति । ज्योति.शब्दस्य भौतिके ज्योतिषि रूढत्वात् । न चानतिवृत्तो विकारविषयात्कश्चिन्मुक्तो भवितुमर्हति, विकारस्यार्तत्वप्रसिद्धेरिति । नैष दोष । यत आत्मैवात्र ज्योति शब्देनावेद्यते, प्रकरणात् । ‘ य आत्माऽपहतपाप्मा विजरो विमृत्यु’ इति प्रकृते परस्मिन्नात्मनि नाकस्मात् भौतिक ज्योतिः शक्य ग्रहीतुम् । प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गात् ।

४।४।३

‘अविभागेन दृष्टत्वात्’ — पर ज्योतिरुपसपद्य स्वेन रूपेणाभिनिष्पद्यते यः, स किं परस्मादात्मन. पृथगेव भवति उत अविभागेनैवावतिष्ठत इति वीक्षाया, ‘स तत्र पर्येति’ इत्यधिकरणाधिकर्तव्यनिर्देशात् ‘ज्योतिरुपसपद्य’ इति च कर्तृकर्मनिर्देशात् भेदेनैवावस्थानमिति यस्य मतिः त व्युत्पादयति, अविभक्त एव परेणात्मना मुक्तोऽवतिष्ठते । कुत । दृष्टत्वात् । तथा हि ‘तत्त्वमसि’ ( छाउ ६।८।७ ) ‘अह ब्रह्मास्मि’ ( बृउ १।४।१० ) ‘यत्र नान्यत्पश्यति’ ( छाउ ७।२४।१ ) ‘न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्त यत्पश्येत्’ (बृउ ४।३।२३) इत्येवमादीनि वाक्यानि अविभागेनैव परमात्मान दर्शयन्ति । यथादर्शनमेव च फल युक्त, तत्क्रतुन्यायात् ।

ब्रशकर ४।४।४

## पृ ९८३ छाउ ८।१४।१ ‘ आकाशो वै नाम’ इत्यादि ।

‘ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ’ — परमेव ब्रह्मेह आकाशशब्द भवितुमर्हति । कस्मात् । अर्थान्तरत्वादिव्यपदेशात् । ‘ ते यदन्तरा तद्ब्रह्म ’ ( छाउ. ८।१४।१ ) इति हि नामरूपाभ्यामर्थान्तरभूतमाकाश व्यपदिशति । न च ब्रह्मणोऽन्यन्नामरूपाभ्यामर्थान्तर सभवति, सर्वस्य विकारजातस्य नामरूपाभ्यामेव व्याकृतत्वात् । नामरूपयोरपि निर्वहण निरङ्कुश न ब्रह्मणोऽन्यत्र सभवति । ‘ अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि ’ ( छाउ ६।३।२ ) इत्यादिब्रह्मकर्तृत्वश्रवणात् । ननु जीवस्यापि प्रत्यक्ष नामरूपविषय निर्वोढृत्वमस्ति । बाढमस्ति । अभेदस्त्विह विवक्षितः । नामरूपनिर्वहणाभिधानादेव च स्रष्टृत्वादि ब्रह्मलिङ्गमभिहित भवति । ‘ तद्ब्रह्म तदमृत स आत्मा ’ ( छाउ. ८।१४ ) इति च ब्रह्मवादस्य लिङ्गानि । ‘आकाशस्तल्लिङ्गात् ’ ( ब्रसू. १।१।२२ ) इत्यस्यैवाय प्रपञ्च ।

ब्रशकर १।३।४१

## पृ ९८४ छाउ ८।१५।१ ‘ तद्धैतद्ब्रह्मा ’ इत्यादि ।

‘अध्ययनमात्रवत.’— यच्चैतत् ‘ तद्वतो विधानात् ’ ( ब्रसू. ३।४।६ ) इत्यत उत्तर पठति — अध्ययन-

मात्रवत इति । 'आचार्यकुलाद्वेदमधीत्य ' ( छाउ. ८।१५।१ ) इत्यत्राध्ययनमात्रस्य श्रवणादध्ययनमात्रवत एव कर्मविधिरित्यध्यवस्याम । नन्वेव सति अविद्यत्वाद- नधिकार कर्मसु प्रसज्येत । नैष दोष. । न वयमध्ययन- प्रभव कर्मावबोधनमधिकारकारण वारयामः, किं तर्हि औपनिषदमात्मज्ञान स्वातन्त्र्येणैव प्रयोजनवत्प्रतीयमान न कर्माधिकारकारणतां प्रतिपद्यत इत्येतत्प्रतिपादयाम । यथा च न क्रत्वन्तरज्ञान क्रत्वन्तराधिकारेण अपेक्ष्यते एवमेतदपि द्रष्टव्यमिति ।

३।४।१२

'अनावृत्ति. शब्दादनावृत्ति शब्दात्' —नन्वेव सति सातिशयत्वादन्तवत्त्वमैश्वर्यस्य स्यात् ततश्चैषामावृत्ति· प्रसज्येत इत्यत उत्तर भगवान् बादरायण आचार्य. पठति—अनावृत्तिरिति । नाडीरश्मिसमन्वितेन अर्चि- रादिपर्वणा देवयानेन पथा ये ब्रह्मलोक शास्त्रोक्तविशेषण गच्छन्ति, यस्मिन् ' अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि' यस्मिन् 'ऐरमदीय सर ' यस्मिन् 'अश्वत्थः सोमसवन ' यस्मिन् 'अपराजिता पूर्ब्रह्मण.' यस्मिश्च 'प्रभुविमित हिरण्मय ( वेश्म )' ( छाउ ८।५।३ ) यश्च अनेकधा मन्त्रार्थवादादिप्रदेशेषु प्रप- ञ्च्यते ते त प्राप्य न चन्द्रलोकादिव भुक्तभोगा आव- र्तन्ते । कुतः। 'तयोर्ध्वमायन्नमृतत्वमेति' (छाउ ८।६।६) 'तेषां न पुनरावृत्ति' ( बृउ ६।२।१५ ) 'एतेन प्रतिपद्यमाना इम मानवमावर्तं नावर्तन्ते' ( छाउ. ४।१५।५ ) 'ब्रह्मलोकमभिसपद्यन्ते' (छाउ ८।१५।१) 'न च पुनरावर्तते' ( छाउ. ८।१५।१ ) इत्या- दिशब्देभ्य । अन्तवत्त्वेऽपि त्वैश्वर्यस्य यथा अनावृत्ति- स्तथा वर्णित — 'कार्यात्यये तदध्यक्षेण सहात. परम्' ( ब्रसू. ४।३।१४ ) इत्यत्र । सम्यग्दर्शनविध्वस्ततमसा तु नित्यसिद्धनिर्वाणपरायणानां सिद्धैवानावृत्ति । तदा- श्रयणेनैव हि सगुणशरणानामपि अनावृत्तिसिद्धिरिति । 'अनावृत्तिः शब्दादनावृत्तिः शब्दात् ' इति सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयति ।

ब्रशकर ४।४।२२

---

# बृहदारण्यकोपनिषत्

**पृ १०६१–६३ बृउ १।५।२१–२३ 'अथातो व्रतमीमांसा ' इत्यादि ।**

' प्रदानवदेव तदुक्तम् ' — पृथगेव वायुप्राणावु- पगन्तव्याविति । कस्मात् । पृथगुपदेशात् । आध्यानार्थो हि अय अध्यात्माधिदैवविभागोपदेश । स. असत्या- ध्यानपृथक्त्वे अनर्थक एव स्यात् । ननु उक्त, अपृ- थगनुचिन्तन तत्त्वाभेदादिति । नैष दोषः । तत्त्वाभे- देऽप्यवस्थाभेदात् उपदेशभेदवशेन अनुचिन्तनभेदोप- पत्ते । श्लोकोपन्यासस्य च तत्त्वाभेदाभिप्रायेणापि उप- पद्यमानस्य पूर्वोदितध्येयभेदनिराकरणसामर्थ्याभावात् , ' स यथैषा प्राणाना मध्यम. प्राण एवमेतासा देवताना वायु ' ( बृउ १।१।२२ ) इति च उपमानोपमे- यकरणात् । एतेन व्रतोपन्यासो व्याख्यात. । ' एकमेव व्रत ' ( बृउ १।५।२३ ) इति च एवकार. वागादि- व्रतनिवर्तनेन प्राणव्रतप्रतिपत्त्यर्थ. । भग्नव्रतानि हि वागा- दीन्युक्तानि, ' तानि मृत्यु. श्रमो भूत्वोपयेमे ' ( बृउ १।५।२१ ) इति श्रुते. । न वायुव्रतनिवृत्त्यर्थ , ' अथातो व्रतमीमासा ' इति प्रस्तुत्य तुल्यवत् वायुप्रा- णयोरभग्नव्रतत्वस्य निर्धारितत्वात् । ' एकमेव व्रत चरेत् ' ( बृउ. १।५।२३ ) इति च उक्त्वा, 'तेनो एतस्यै देवतायै सायुज्य सलोकतां जयति ' ( बृउ १। ५।३ ) इति वायुप्राप्तिं फल ब्रुवन् वायुव्रतमनिवर्तित दर्शयति । देवतेत्यत्र वायु स्यात्, अपरिच्छिन्नात्मक- त्वस्य प्रेप्सितत्वात्, पुरस्तात्प्रयोगाच्च—' सैषाऽनस्त- मिता देवता यद्वायु. ' ( बृउ १।५।२२ ) इति । तथा 'तौ वा एतौ द्वौ सवर्गौ वायुरेव देवेषु प्राण. प्राणेषु' ( छाउ ४।३।४ ) इति भेदेन व्यपदिशति । ' ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतम् ' ( छाउ.४।३।८ )इति च भेदेनैव उपसहरति । तस्मात्पृथगेव उपगमनम् । प्रदानवत् — यथा ' इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजा- येन्द्राय स्वराज्ञे ' इत्यस्या त्रिपुरोडाशिन्यामिष्टौ, ' सर्वे षामभिगमयन्नवद्यत्यछबट्कारम् ' इत्यतो वचनात् इन्द्राभेदाच्च, सहप्रदानाशङ्काया राजादिगुणभेदात् याज्यानुवाक्याव्यत्यासविधानाच्च यथान्यासमेव देवता-

पृथक्त्वात्प्रदानपृथक्त्वं भवति । एवं तत्त्वाभेदेऽपि आध्येयाशपृथक्त्वात् आध्यानपृथक्त्वमित्यर्थं । तदुक्त सकर्षे — 'नाना वा देवता पृथग्ज्ञानात्' इति । तत्र तु द्रव्यदेवताभेदात् यागभेदो विद्यते । नैवमिह विद्याभेदोऽस्ति, उपक्रमोपसंहाराभ्यां अध्यात्माधिदैवोपदेशेषु एकविद्याविधानप्रतीते । विद्यैक्येऽपि तु अध्यात्माधिदैवभेदात् प्रवृत्तिभेदो भवति । अग्निहोत्र इव सायंप्रात कालभेदात् । इत्येतावदभिप्रेत्य प्रदानवदित्युक्तम् ।

ब्रशाकर ३।३।४३

पृ ११५४ बृउ ३।७।२३ 'यो रेतसि तिष्ठन्रेतसोऽन्तरो' इत्यादि ।

'सभोगप्राप्तिरिति चेन्न वैशेष्यात्' — व्योमवत्सर्वगतस्य ब्रह्मण सर्वप्राणिहृदयसबन्धात्, चिद्रूपतया च शारीरादविशिष्टत्वात्, सुखदु खादिसभोगोऽप्यविशिष्टः प्रसज्येत । एकत्वाच्च — न हि परस्मादात्मनोऽन्य. कश्चिदात्मा ससारी विद्यते, 'नान्योऽतोऽस्ति विज्ञाता' इत्यादिश्रुतिभ्य. । तस्मात्परस्यैव ब्रह्मण सभोगप्राप्तिरिति चेत्, न । वैशेष्यात् । न तावत्सर्वप्राणिहृदयसबन्धात् चिद्रूपतया च शारीरवद्ब्रह्मण. सभोगप्रसङ्ग, वैशेष्यात् । विशेषो हि भवति शारीरपरमेश्वरयोः । एक कर्ता भोक्ता धर्माधर्मादिसाधन सुखदु.खादिमाश्च । एकस्तद्विपरीतोऽपहतपाप्मत्वादिगुण. । एतस्मादनयोर्विशेषादेकस्य भोग, नेतरस्य । यदि च सनिधानमात्रेण वस्तुशक्तिमनाश्रित्य कार्यसबन्धोऽभ्युपगम्येत, आकाशादीनामपि दाहादिप्रसङ्गः । सर्वगतानेकात्मवादिनामपि समावेतौ चोद्यपरिहारौ ।

ब्रशाकर १।२।८

पृ ११५९ बृउ ३।८।८ 'स होवाच । एतद्वै तदक्षरं' इत्यादि ।

'अरूपवदेव हि तत्प्रधानत्वात्' — रूपाद्याकाररहितमेव हि ब्रह्म अवधारयितव्य, न रूपादिमत् । कस्मात् । तत्प्रधानत्वात् । 'अस्थूलमनण्वह्रस्वमदीर्घम्' 'अशब्दमस्पर्शमरूपमव्ययम्' (काउ. ३।१५) इत्येवमादीनि वाक्यानि निष्प्रपञ्चब्रह्मात्मतत्त्वप्रधानानि, न अर्थान्तरप्रधानानि इत्येतत्प्रतिष्ठापितम् ।

ब्रशाकर ३।२।१४

पृ ११९८ बृउ. ४।३।१० 'न तत्र रथा न रथयोगा' इत्यादि ।

'आत्मनि चैव विचित्राश्च हि' — अपि च नैवात्र विवदितव्य कथमेकस्मिन्ब्रह्मणि स्वरूपानुपमर्दे नैवानेकाकारा सृष्टि स्यादिति । यत आत्मन्यप्येकस्मिन्स्वप्रदृशि स्वरूपानुपमर्देनैवानेकाकारा सृष्टि. पठ्यते— 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान रथयोगान्पथ. सृजते' इत्यादिना । लोकेऽपि देवादिषु मायाव्यादिषु च स्वरूपानुपमर्देनैव विचित्रा हस्त्यश्वादिसृष्टयो दृश्यन्ते । तथैकस्मिन्नपि ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिर्भविष्यतीति ।

ब्रशाकर. २।१।२८

पृ १२३९ बृउ ४।४।९ 'तस्मिञ्छुक्लमुत नीलमाहु' इत्यादि ।

'अतस्त्वितरज्ज्यायो लिङ्गाच्च' — अतस्तु अन्तरालवर्तित्वात् इतरत् आश्रमवर्तित्व ज्यायो विद्यासाधन श्रुतिस्मृतिसदृब्धत्वात् । श्रुतिलिङ्गाच्च— 'तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च' इति । 'अनाश्रमी न तिष्ठेत दिनमेकमपि द्विज । सवत्सरमनाश्रमी स्थित्वा कृच्छ्रमेकं चरेत् ॥' इति च स्मृतिलिङ्गात् ।

ब्रशाकर ३।४।३९

पृ १२४६–४७ बृउ ४।४।२२ 'स वा एष महानज आत्मा' इत्यादि ।

'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्' — पुण्यस्याप्यश्लेषविनाशयोरघन्यायोऽतिदिष्ट' । सोऽतिदेशः सर्वपुण्यविषय इत्याशङ्क्य प्रतिवक्ति—अग्निहोत्रादि त्विति तुशब्द आशङ्कामपनुदति । यन्नित्य कर्म वैदिकमग्निहोत्रादि, तत् तत्कार्यायैव भवति । ज्ञानस्य यत्कार्यं तदेव अस्यापि कार्यमित्यर्थः । कुत' । 'तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' (बृउ ४।४।२२) इत्यादिदर्शनात् । ननु ज्ञानकर्मणोर्विलक्षण कार्यत्वात्कार्यैकत्वानुपपत्तिः । नैष दोषः । ज्वरमरणकार्ययोरपि दधिविषयो. गुडमन्त्रसयुक्तयोस्तृप्तिपुष्टिकार्यदर्शनात्, तद्वत्कर्मणोऽपि ज्ञानसयुक्तस्य मोक्षकार्योपपत्तेः ननु अनारभ्यो मोक्ष., कथमस्य कर्मकार्यत्वमुच्यते नैष दोषः । आराद्रुपकारकत्वात्कर्मण. । ज्ञानस्यैव हि

प्रापक सत् कर्म प्रणाड्या मोक्षकारणमित्युपचर्यते। अत एव च अतिक्रान्तविषयमेतत्कार्यैकत्वाभिधानम्। न हि ब्रह्मविदः आगाम्यग्निहोत्रादि सभवति, अनियोज्यब्रह्मात्मत्वप्रतिपत्तेः शास्त्रस्याविषयत्वात् । सगुणासु तु विद्यासु कर्तृत्वानतिवृत्ते· सभवति आगाम्यपि अग्निहोत्रादि । तस्यापि निरभिसधिन कार्यान्तराभावाद्विद्यासगत्युपपत्तिः ।  ४।१।१६

'अतोऽन्याऽपि ह्येकेषामुभयोः' --- किंविषय पुनरिद अश्लेषविनाशवचन, किंविषय वा अदो विनियोगवचन एकेषा शाखिनाम् -- 'तस्य पुत्रा दायमुपयन्ति सुहृद साधुकृत्या द्विषन्त· पापकृत्याम्' इति । अत उत्तर पठति — अतोऽन्याऽपीति । अतोऽग्निहोत्रादेर्नित्यात् कर्मणः अन्यापि ह्यस्ति साधुकृत्या, या फलमभिसधाय क्रियते, तस्या एष विनियोग उक्तः एकेषां शाखिनाम् — 'सुहृद. साधुकृत्यामुपयन्ति' इति । तस्या एव च इद अघवदश्लेषविनाशनिरूपण इतरस्याप्येवमसश्लेष इति । तथाजातीयकस्य काम्यस्य कर्मणो विद्यां प्रत्यनुपकारकत्वे सप्रतिपत्तिः उभयोरपि जैमिनिबादरायणयोराचार्ययोः ।

ब्रशाकर. ४।१।१७

पृ. १२६४ बृउ. ४।५।१५ 'यत्र हि द्वैतमिव भवति' इत्यादि ।

'उपमर्दं च'— अपि च कर्माधिकारहेतो क्रियाकारकफललक्षणस्य समस्तस्य प्रपञ्चस्य अविद्याकृतस्य विद्यासामर्थ्यात् स्वरूपोपमर्दमामनन्ति— 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन क पश्येत्तत्केन क जिघ्रेत्' इत्यादिना । वेदान्तोदितात्मज्ञानपूर्विकां तु कर्माधिकारसिद्धिं प्रत्याशासानस्य कर्माधिकारोच्छित्तिरेव प्रसज्येत, तस्मादपि स्वातन्त्र्य विद्यायाः ।

ब्रशाकर. ३।४।१६

---

## काठकोपनिषत्

पृ १४१६ काउ. ३।१२ 'एष सर्वेषु भूतेषु' इत्यादि ।

'आत्मशब्दाच्च' — इतश्च पुरुषप्रतिपत्त्यर्थैव इयमिन्द्रियादिप्रवाहोक्ति·, यत्कारण 'एष सर्वेषु भूतेषु गुढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥' ( काउ. ३।१२ ) इति प्रकृत पुरुष आत्मेत्याह । अतश्च अनात्मत्वमितरेषा विवक्षितमिति गम्यते ।  ब्रशाकर ३।३।१५

---

## मुण्डकोपनिषत्

पृ १४४३ मुउ १।१।३ 'शौनको ह वै महाशालो' इत्यादि ।

'प्रकरणात्' — कुतश्च न प्राणभृत् द्युभ्वाद्यायतनत्वेनाश्रयितव्यः — प्रकरणादिति । प्रकरण चेद परमात्मन· — 'कस्मिन्नु भगवो विज्ञाते सर्वमिद विज्ञात भवति' ( मुउ. १।१।३ ) इत्येकविज्ञानेन सर्वविज्ञानापेक्षणात् । परमात्मनि हि सर्वात्मके विज्ञाते सर्वमिद विज्ञात स्यात्, न केवले प्राणभृति ।

ब्रशाकर १।३।६

पृ. १४४५ मुउ. १।१।५-६ 'तत्रापरा,ऋग्वेदो यजुर्वेद.' इत्यादि ।

'अदृश्यत्वादिगुणको धर्मोक्तेः' — 'अथ परा यया . यद्भूतयोनिं परिपश्यन्ति धीराः' ( मुउ. १।१।५, ६ ) इति श्रूयते तत्र सशयः — किमयमदृश्यत्वादिगुणको भूतयोनि· प्रधान स्यात्, उत शारीर·, आहोस्वित्परमेश्वर इति । तत्र प्रधानमचेतन भूतयोनिरिति युक्त, अचेतनानामेव तत्र दृष्टान्तत्वेनोपादानात् । 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधय· सभवन्ति । यथा सत पुरुषात्केशलोमानि तथाऽक्षरात्सभवतीह विश्वम् ॥' ( मुउ १।१।७) इति । ननूर्णनाभिः पुरुषश्च चेतनाविह दृष्टान्तत्वेनोपात्तौ । नेति ब्रूम. । न हि केवलस्य चेतनस्य तत्र सूत्रयोनित्व केशलोमयोनित्व वाऽस्ति । चेतनाधिष्ठित ह्यचेतन ऊर्णनाभिशरीर सूत्रस्य योनिः, पुरुषशरीर च केशलोम्नामिति प्रसिद्धम् । अपि च पूर्वत्राद्दष्टत्वाद्यभिलापसभवेऽपि द्रष्टृत्वाद्यभिलापासभवान्न प्रधानमभ्युपगतम् । इह त्वदृश्यात्वादयो धर्माः प्रधाने सभवन्ति । न चात्र

विरुध्यमानो धर्मः कश्चिदभिलप्यते। ननु 'यः सर्वज्ञ सर्ववित्' इत्यय वाक्यशेषोऽचेतने प्रधाने न सभवति, कथ प्रधान भूतयोनिः प्रतिज्ञायत इति। अत्रोच्यते—'यया तदक्षरमधिगम्यते' 'यत्तदद्रेश्यम्' इत्यक्षरशब्देन अदृश्यत्वादिगुणक भूतयोनिं श्रावयित्वा, पुनरन्ते श्रावयिष्यति — 'अक्षरात्परतः परः' इति। तत्र यः परोऽक्षरात् श्रुत, स सर्वज्ञः सर्ववित् संभविष्यति। प्रधानमेव त्वक्षरशब्दनिर्दिष्ट भूतयोनिः। यदा तु योनिशब्दो निमित्तवाची, तदा शारीरोऽपि भूतयोनिः स्यात्, धर्माधर्माभ्या भूतजातस्योपार्जनादिति।

एव प्राप्ते अभिधीयते — योऽयमदृश्यत्वादिगुणको भूतयोनिः, स परमेश्वर एव स्यात्, नान्य इति। कथमेतदवगम्यते — धर्मोक्तेः। परमेश्वरस्य हि धर्म इहोच्यमानो दृश्यते—'यः सर्वज्ञः सर्ववित्' इति। न हि प्राधानस्याचेतनस्य शारीरस्य वोपाधिपरिच्छिन्नदृष्टेः सर्वज्ञत्व सर्ववित्त्व वा सभवति।

ननु अक्षरशब्दनिर्दिष्टात् भूतयोने परस्यैव एतत्सर्वज्ञत्व सर्ववित्त्व च, न भूतयोनिविषयमित्युक्तम्। अत्रोच्यते — नैव सभवति। यत्कारण 'अक्षरात्सभवतीह विश्वम्' इति प्रकृत भूतयोनिमिह जायमानप्रकृतित्वेन निर्दिश्य, अनन्तरमपि जायमानप्रकृतित्वेनैव सर्वज्ञं निर्दिशति — 'यः सर्वज्ञ सर्वविद्यस्य ज्ञानमय तप.। तस्मादेतद्ब्रह्म नाम रूपमन्न च जायते॥' (मुउ १।१।९) इति। तस्मान्निर्देशसाम्येन प्रत्यभिज्ञायमानत्वात् प्रकृतस्यैवाक्षरस्य भूतयोने. सर्वज्ञत्व सर्ववित्त्व च धर्म उच्यत इति गम्यते। 'अक्षरात्परतः परः' इत्यत्रापि न प्रकृताद्भूतयोनेरक्षरात्परः कश्चिदभिधीयते। कथमेतदवगम्यते — 'येनाक्षर पुरुष वेद सत्य प्रोवाच ता तत्त्वतो ब्रह्मविद्याम्' इति प्रकृतस्यैवाक्षरस्य भूतयोनेरदृश्यत्वादिगुणकस्य वक्तव्यत्वेन प्रतिज्ञातत्वात्। कथ तर्हि 'अक्षरात्परत. परः' इति व्यपदिश्यत इति, उत्तरसूत्रे तद्वक्ष्याम.। अपि चात्र द्वे विद्ये वेदितव्ये उक्ते — 'परा चैवापरा च' इति। तत्र अपरा ऋग्वेदादिलक्षणा विद्या मुक्त्वा ब्रवीति — 'अथ परा यया तदक्षरमधिगम्यते' इत्यादि। तत्र परस्या विद्याया विषयत्वेनाक्षर श्रुतम्। यदि पुनः परमेश्वरादन्यदहृश्यत्वादिगुणकमक्षर परिकल्प्येत, नेय परा विद्या स्यात्। परापरविभागो ह्यय विद्ययोः अभ्युदयनिःश्रेयसफलतया परिकल्प्यते। न च प्रधानस्य विद्या नि श्रेयसफला केनचिदभ्युपगम्यते। तिस्रश्च विद्या. प्रतिज्ञायेरन्, त्वत्पक्षे अक्षराद्भूतयोने. परस्य परमात्मनः प्रतिपाद्यमानत्वात्। द्वे एव तु विद्ये वेदितव्ये इह निर्दिष्टे। 'कस्मिन्नु भगवो विज्ञाते सर्वमिद विज्ञात भवति' इति चैकविज्ञानेन सर्वविज्ञानापेक्षण सर्वात्मके ब्रह्मणि विवक्ष्यमाणेऽवकल्पते, नाचेतनमात्रैकायतने प्रधाने, भोग्यव्यतिरिक्ते वा भोक्तरि। अपि च 'स ब्रह्मविद्या सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह' (मुउ. १।१।१) इति ब्रह्मविद्यां प्राधान्येनोपक्रम्य परापरविभागेन परा विद्यामक्षराधिगमनीं दर्शयन् तस्या ब्रह्मविद्यात्व दर्शयति। सा च ब्रह्मविद्यासमाख्या तदधिगम्यस्य अक्षरस्याब्रह्मत्वे बाधिता स्यात्। अपरा ऋग्वेदादिलक्षणा कर्मविद्या ब्रह्मविद्योपक्रमे उपन्यस्यते ब्रह्मविद्याप्रशसायै—'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवर येषु कर्म। एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरां मृत्यु ते पुनरेवापि यन्ति॥' (मुउ. १।२।७) इत्येवमादिनिन्दावचनात्। निन्दित्वा चापरां विद्यां ततो विरक्तस्य परविद्याधिकार दर्शयति—'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृत कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रिय ब्रह्मनिष्ठम्॥' (मुउ १।२।१२) इति। यत्तूक्तम्—अचेतनाना पृथिव्यादीना दृष्टान्तत्वेनोपादानाद्दार्ष्टान्तिकेनाप्यचेतनेनैव भूतयोनिना भवितव्यमिति। तदयुक्तम्। न हि दृष्टान्तदार्ष्टान्तिकयोरत्यन्तसाम्येन भवितव्यमिति नियमोऽस्ति। अपि च स्थूलाः पृथिव्यादयो दृष्टान्तत्वेनोपात्ता इति न स्थूल एव दार्ष्टान्तिको भूतयोनिरभ्युपगम्यते। तस्माददृश्यत्वादिगुणको भूतयोनिः परमेश्वर एव।

ब्रशकर. १।२।२१

**पृ. १४४८ मुउ. १।१।९ 'यः सर्वज्ञः सर्ववित्' इत्यादि।**

'नानुमानमतच्छब्दात्' — यथा ब्रह्मण. प्रतिपादको वैशेषिको हेतुरुक्तः, नैवमर्थान्तरस्य वैशेषिको हेतुः प्रतिपादकोऽस्तीत्याह । नानुमान साख्यस्मृति परिकल्पित प्रधान इह द्युभ्वाद्यायतनत्वेन प्रतिपत्तव्यम्। कस्मात् । अतच्छब्दात् । तस्याचेतनस्य प्रधानस्य प्रतिपादक· शब्दः तच्छब्दः, न तच्छब्दः अतच्छब्द· । न ह्यत्राचेतस्य प्रधानस्य प्रतिपादकः कश्चिच्छब्दोऽस्ति, येनाचेतन प्रधान कारणत्वेनायतनत्वेन वा अवगम्येत । तद्विपरीतस्य चेतनस्य प्रतिपादकशब्दोऽत्रास्ति — 'य. सर्वज्ञः सर्ववित्' ( मुउ. १।१।९ ) इत्यादि । अत एव न वायुरपीह द्युभ्वाद्यायतनत्वेन आश्रीयते ।

१।३।३

'प्राणभृच्च' — यद्यपि प्राणभृतो विज्ञानात्मन आत्मत्व चेतनत्व च सभवति, तथाप्युपाधिपरिच्छिन्नज्ञानस्य सर्वज्ञत्वाद्यसभवे सति अस्मादेवातच्छब्दात् प्राणभृदपि न द्युभ्वाद्यायतनत्वेनाश्रयितव्य· । न चोपाधिपरिच्छिन्नस्याविभोः प्राणभृतो द्युभ्वाद्यायतनत्वमपि सम्यक् सभवति । ब्रशाकर १।३।४

पृ १४५४ मुउ. २।१।२ 'दिव्यो ह्यमूर्त. पुरुषः' इत्यादि ।

'विशेषणभेदव्यपदेशाभ्या च नेतरौ'— इतश्च परमेश्वर एव भूतयोनिः, नेतरौ शारीरः प्रधान वा । कस्मात् । विशेषणभेदव्यपदेशाभ्याम् । विशिनष्टि हि प्रकृत भूतयोनिं शारीराद्विलक्षणत्वेन— 'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यज. । अप्राणो ह्यमनाः शुभ्रः ॥' ( मुउ. २।१।२ ) इति । न ह्येतद्दिव्यत्वादिविशेषण अविद्याप्रत्युपस्थापितनामरूपपरिच्छेदाभिमानिनः तद्धर्मान् स्वात्मनि कल्पयत शारीरस्योपपद्यते । तस्मात्साक्षादौपनिषदः पुरुष इहोच्यते । तथा प्रधानादपि प्रकृत भूतयोनिं भेदेन व्यपदिशति— 'अक्षरात्परतः परः' इति । अक्षरमव्याकृत नामरूपबीजशक्तिरूप भूतसूक्ष्ममीश्वराश्रय तस्यैवोपाधिभूत, सर्वस्माद्विकारात्परो योऽविकारः, तस्मात् 'परतः पर.' इति भेदेन व्यपदिशन् परमात्मानमिह विवक्षित दर्शयति । नात्र प्रधान नाम किंचित्स्वतन्त्र तत्त्वमभ्युपगम्य, तस्माद्भेदव्यपदेश उच्यते । किं तर्हि, यदि प्रधानमपि कल्प्यमान श्रुत्यविरोधेनाव्याकृतादिशब्दवाच्य भूतसूक्ष्म परिकल्प्येत, कल्प्यताम् । तस्माद्भेदव्यपदेशात् परमेश्वरो भूतयोनिरित्येतदिह प्रतिपाद्यते ।

ब्रशाकर. १।२।२२

पृ १४५५ मुउ. २।१।३ 'एतस्माज्जायते प्राणो' इत्यादि ।

'तथा प्राणाः' — तत्र यथा लोकादयः परस्माद्ब्रह्मण उत्पद्यन्ते, तथा प्राणा अपीत्यर्थ· । तथा — 'एतस्माज्जायते प्राणो मन. सर्वेन्द्रियाणि च । ख वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥' ( मुउ. २।१।३ ) इत्येवमादिष्वपि खादिवत्प्राणानामुत्पत्तिरिति द्रष्टव्यम् । २।४।१

'गौण्यसभवात्'— गौण्या असभवो गौण्यसभव. । न हि प्राणानामुत्पत्तिश्रुतिर्गौणी सभवति, प्रतिज्ञाहानिप्रसङ्गात् । 'कस्मिन्नु भगवो विज्ञाते सर्वमिद विज्ञात भवति' ( मुउ १।१।३ ) इति हि एकविज्ञानेन सर्वविज्ञान प्रतिज्ञाय तत्साधनायेदमाम्नायते 'एतस्माज्जायते प्राण' ( मुउ २।१।३ ) इत्यादि । सा च प्रतिज्ञा प्राणादे. समस्तस्य जगतो ब्रह्मविकारत्वे सति प्रकृतिव्यतिरेकेण विकाराभावात्सिध्यति । गौण्यां तु प्राणानामुत्पत्तिश्रुतौ प्रतिज्ञा इय हीयेत । तथा च प्रतिज्ञातार्थमुपसहरति — 'पुरुष एवेद विश्व कर्म तपो ब्रह्म परामृतम्' ( मुउ. २।१।१० ) इति, 'ब्रह्मैवेद विश्वमिद वरिष्ठम्' ( मुउ २।२।११ ) इति च ।

२।४।२

'तत्प्राक्श्रुतेश्च' — इतश्च आकाशादीनामिव प्राणानामपि मुख्यैव जन्मश्रुति । यत् 'जायते' इत्येक जन्मवाचिपद प्राणेषु प्राक्श्रुत सत् उत्तरेष्वाकाशादिष्वनुवर्तते । 'एतस्माज्जायते प्राण·' इत्यत्र आकाशादिषु मुख्य जन्मेति प्रतिष्ठापित, तत्सामान्यात्प्राणेष्वपि मुख्यमेव जन्म भवितुमर्हति । न ह्येकस्मिन् प्रकरणे एकस्मिंश्च वाक्ये एक· शब्दः सकृदुच्चरितो बहुभि· सबध्यमान. क्वचिन्मुख्यः क्वचिद्गौणः इत्यध्यवसातु शक्य, वैरूप्यप्रसङ्गात् । ब्रशाकर २।४।३

पृ १४८६ मुउ ३।२।८ 'यथा नद्यः स्यन्दमाना.' इत्यादि ।

'मुक्तोपसृप्यव्यपदेशात्' — इतश्च परमेव ब्रह्म द्युभ्वाद्यायतनम्। यस्मान्मुक्तोपसृप्यतास्य व्यपदिश्यमाना दृश्यते। मुक्तैरुपसृप्य मुक्तोपसृप्यम्। देहादिष्वनात्मसु अहमस्मीत्यात्मबुद्धिरविद्या, ततस्तत्पूजनादौ रागः, तत्परिभवादौ च द्वेषः, तदुच्छेददर्शनाद्भय मोहश्च इत्येवमयमनन्तभेदोऽनर्थव्रातः सतत सर्वेषा न. प्रत्यक्षः। तद्विपर्ययेणाविद्यारागद्वेषादिदोषमुक्तैरुपसृप्य उपगम्य एतदिति द्युभ्वाद्यायतन प्रकृत्य व्यपदेशो भवति। कथम्—'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥' (मुउ. २।२।८) इत्युक्त्वा ब्रवीति — 'तथा विद्वान्नामरूपाद्विमुक्तः परात्पर पुरुषमुपैति दिव्यम्' (मुउ ३।२।८) इति। ब्रह्मणश्च मुक्तोपसृप्यत्व प्रसिद्ध शास्त्रे — 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥' (बृउ ४।४।७) इत्येवमादौ। प्रधानादीनां तु न क्वचिन्मुक्तोपसृप्यत्वमस्ति प्रसिद्धम्। अपि च 'तमेवैक जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः' इति वाग्विमोकपूर्वक विज्ञेयत्वमिह द्युभ्वाद्यायतनस्येहोच्यते। तच्च श्रुत्यन्तरे ब्रह्मणो दृष्टम्— 'तमेव धीरो विज्ञाय प्रज्ञा कुर्वीत ब्राह्मणः। नानुध्यायाद्बहून् शब्दान् वाचो विग्लापन हि तत्॥' (बृउ ४।४।२१) इति। तस्मादपि द्युभ्वाद्यायतन पर ब्रह्म। ब्रसूशंकर १।३।२



# * शिवसंकल्पोपनिषत्

सकल्पकर त्रिकालव्यापि अमृतं कर्मप्रेरक अन्त-
र्ज्योति वेदप्रतिष्ठा जविष्ठ दूरगम जगद्व्यापि
बाह्येन्द्रियसचारि सूक्ष्मतर पुरुषयोनि
च मन

[1]येनेद भूत भुवन भविष्यत् परिगृहीतममृतेन सर्वम् ।
येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसकल्पमस्तु ॥ १ ॥
येन कर्माणि प्रचरन्ति धीरा यतो वाचा मनसा चारु यन्ति ।
यत्संमितमनु संयन्ति प्राणिनस्तन्मे ० ॥ २ ॥
येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदपूर्वं यक्षमन्तः प्रजानां तन्मे ० ॥ ३ ॥
यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृत प्रजासु ।
यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे ० ॥ ४ ॥
सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीषुभिर्वाजिन इव ।
हृत्प्रतिष्ठं यदजिरं जविष्ठ तन्मे ० ॥ ५ ॥
यस्मिन्नृचः साम यजूषि यस्मिन् प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिंश्चित्तं सर्वमोतं प्रजानां तन्मे ० ॥ ६ ॥
यदत्र षष्ठं त्रिशतं सुवीरं यज्ञस्य गुह्यं नवनाभमाद्यम् ।
दश पञ्च त्रिंशत यत्परं च तन्मे ० ॥ ७ ॥
यज्जाग्रतो दूरमुदैति दैव तदु सुप्तस्य तथैवैति ।
दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे ० ॥ ८ ॥

येन द्यौः पृथिवी चान्तरिक्षं च ये पर्वताः प्रदिशो दिशश्च ।
येनेद जगद्व्याप्त प्रजानां तन्मे ० ॥ ९ ॥
येनेदं विश्व जगतो बभूव ये देवा अपि महतो जातवेदा ।
तदेवाग्निस्तमसो ज्योतिरेक तन्मे ० ॥ १० ॥
ये मनो हृदय ये च देवा ये दिव्या आपो ये सूर्यरश्मिः ।
ते श्रोत्रे चक्षुषी सचरन्त तन्मे ० ॥ ११ ॥
अचिन्त्य चाप्रमेयं च व्यक्ताव्यक्तपरं च यत् ।
सूक्ष्मात्सूक्ष्मतरं ज्ञेयं तन्मे ० ॥ १२ ॥
एका च दश शत च सहस्र चायुत च नियुत च प्रयुतं चार्बुदं च न्यर्बुदं च ।
समुद्रश्च मध्य चान्तश्च परार्धश्च तन्मे० ॥ १३ ॥
ये पञ्च पञ्चदश शतं सहस्रमयुत न्यर्बुद च ।
तेऽग्निचित्येष्टकास्त शरीरं तन्मे ० ॥ १४ ॥
वेदाहमेतं पुरुष महान्तमादित्यवर्णं तमसः परस्तात् ।
यस्य योनिं परिपश्यन्ति धीरास्तन्मे ० ॥ १५ ॥
यस्येद धीरा पुनन्ति कवयो ब्रह्माणमेतं त्वा वृणुत इन्दुम् ।
स्थावरं जङ्गम द्यौराकाश तन्मे ० ॥ १६ ॥
परात् परतर चैव यत्पराचैव यत्परम् ।
यत्परात् परतो ज्ञेय तन्मे ० ॥ १७ ॥
परात् परतरो ब्रह्मा तत्परात् परतो हरिः ।
तत्परात् परतोऽधीशस्तन्मे ० ॥ १८ ॥

* मन्त्रब्राह्मणोपनिषदि ' शारीरम्—मन ' इत्यस्मिन् प्रकरणे ( पृ ३३४-३३६ ) मद्दव मन्त्रा समुद्धृता ।

(१) शिउ १-१७

(१) शिउ १८, श्रीकठ ४।३।१४ परतोऽधीश ( परतोरीश ), ४।३।१५, ४।४।२२ ऽधीश ( ऽपीश ), श्रीकर १।१।३ ( पृ. ४१ ) तरो ब्रह्मा ( तर ब्रह्म ) तत्प ... धीश ( यत्परात्परतो ईश ), १।३।१३ तरो ब्रह्मा

या वेदादिषु गायत्री सर्वव्यापी महेश्वरी ।
ऋग्यजुस्सामाथर्वैश्च तन्मे ० ॥ १९ ॥
यो वै देव महादेव प्रणव पुरुषोत्तमम् ।
य: सर्वे सर्ववेदैश्च तन्मे ० ॥ २० ॥
प्रयत. प्रणवोङ्कारं प्रणवं पुरुषोत्तमम् ।
ओङ्कार प्रणवात्मानं तन्मे ० ॥ २१ ॥
योऽसौ सर्वेषु वेदेषु पठ्यते ह्यज ईश्वर. ।
अकायो निर्गुणो ह्यात्मा तन्मे ० ॥ २२ ॥
गोभिर्जुष्ट धनेन ह्यायुषा च बलेन च ।
प्रजया पशुभि पुष्कराक्ष तन्मे ० ॥ २३ ॥
त्रियम्बक यजामहे सुगन्धि पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृता-
त्तन्मे ० ॥ २४ ॥
कैलासशिखरे रम्ये शङ्करस्य शिवालये ।
देवतास्तत्र मोदन्ते तन्मे ० ॥ २५ ॥
[2]विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत
विश्वतस्पात् ।
सबाहुभ्या नमति संपतत्रैर्द्यावापृथिवी जनयन्
देव एकस्तन्मे ० ॥ २६ ॥
[3]चतुरो वेदानधीयीत सर्वशास्त्रमयं विदु ।
इतिहासपुराणाना तन्मे ० ॥ २७ ॥
मा नो महान्तमुत मा नो अर्भक मा न
उक्षन्तमुत मा न उक्षितम् ।
मा नो वधी पितर मोत मातर प्रिया मा न-
स्तनुवो रुद्र रीरिषस्तन्मे ० ॥ २८ ॥

( तर ब्रह्म ) तत्परा (यत्परा), २।२।३७ तत्प धीश ( यत्परात्परतो ईश ), २।३।४२ तत्परा ( यत्परा ), ४।३।१६ २।२।३७वत्, ४।४।२२ ( पृ ४९९ ) १।३।१३वत्

(१) शिउ १९—२५

(२) शिउ २६, श्रीकठ ३।२।३५ विश्वतोमुखो (सर्वतोमुखो ), श्रीकर ३।२।३५ विश्वतश्चक्षुरुत विश्वतो मुखो ( सर्वतश्चक्षुरुत सर्वतोमुखो )

(३) शिउ. २७—३७

मा नस्तोके तनये मा न आयुषि मा नो गोषु
मा नो अश्वेषु रीरिष. ।
वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्त:
नमसा विधेम ते तन्मे ० ॥ २९ ॥
ऋत सत्य परं ब्रह्म पुरुष कृष्णपिङ्गलम् ।
ऊर्ध्वरेत विरूपाक्षं विश्वरूपाय वै नमो नम:
तन्मे० ॥ ३० ॥
कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे वोचेम
शन्तम हृदे ।
सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु
तन्मे० ॥ ३१ ॥
ब्रह्म जज्ञान प्रथम पुरस्ताद्वि सीमतः सुरुचो
वेन आव ।
स बुध्निया उपमा अस्य विष्ठा सतश्च योर्नि
असतश्च विवस्तन्मे० ॥ ३२ ॥
य. प्राणतो निमिषतो महित्वैक इद्राजा जगतो
बभूव ।
य ईशे अस्य द्विपदश्चतुष्पद' कस्मै देवाय
हविषा विधेम तन्मे० ॥ ३३ ॥
य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं
यस्य देवा ।
यस्य छायाऽमृत यस्य मृत्यु कस्मै देवाय
हविषा विधेम तन्मे० ॥ ३४ ॥
यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो
विश्वा भुवनाऽऽविवेश ।
तस्मै रुद्राय नमो अस्तु तन्मे ॥ ३५ ॥
गन्धद्वारा दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियं
तन्मे० ॥ ३६ ॥
य इदं शिवसंकल्पं सदा ध्यायन्ति ब्राह्मणाः ।
ते परं मोक्ष गमिष्यन्ति तन्मे मनः शिव-
सकल्पमस्तु ॥ ३७ ॥

इति शिवसंकल्पोपनिषत्समाप्ता ।

# श्वेताश्वतरोपनिषत्

## प्रथमोऽध्यायः

जीवनकारणपृच्छा, कालस्वभावनियतियदृच्छाभूत-
पुरुषाणा जीवनकारणत्वेन चिन्ता, देवात्मशक्ति
जीवनकारण सर्वकारणाधिष्ठात्री

ॐ[1] ब्रह्मवादिनो वदन्ति ।
किं कारण ब्रह्म कुत. स्म जाता
जीवाम केन क्व च सम्प्रतिष्ठा ।
अधिष्ठिता केन सुखेतरेषु
वर्तामहे ब्रह्मविदो व्यवस्थाम् ॥

श्वेताश्वतरमन्त्राणां ब्रह्मार्थोपनिषद्गिराम् ।
पुण्यकृत्पुण्यतीर्थानामर्थमाविष्करोम्यहम् ॥

ब्रह्मात्मैक्यार्थस्यातिगहनता दर्शयितु प्रथमतो ब्रह्म विदां विचारमवतारयति––ब्रह्मवादिनो वेदार्थज्ञानवन्तो वदन्ति वक्ष्यमाण विचार वाचनिक कुर्वन्ति । तद्विचारमाह––किं विचारे । कारण जगदुपादानम् । यद्यपि 'यतो वै' इत्यादिवेदवाक्येन जगदुपादान ब्रह्म उक्त, तथाऽप्यसङ्गोदासीनस्य ब्रह्मणो विना माया तदनुपपन्नमेवेत्युपपन्नो विचारः । अतो ब्रह्म ब्रह्मशब्दाभिधेयं कारण किमित्यन्वय । किं कारण इत्येतद्व्याकरोति––कुतः स्म कुत एव निमित्तात्प्रसिद्धादस्माभिरनिश्चितात् जाताः उत्पन्नाः । जायमान सहेतुक घटादिवदित्यर्थ. । ननु येन जीवन भवता, तदेव कारणमित्यत आह––जीवाम केन अनिश्चितेन हेतुना । जीवन कारणमप्यनिश्चितमित्यर्थः । ननु यत्र भवन्तः स्थितास्तदेव कारणमित्यत आह––क्व च कुत्र वा सम्प्रतिष्ठाः सम्यक्प्रतिष्ठिता. । इदमेवाऽऽधार इति न निश्चितमित्यर्थः । ननु यदधिष्ठिता भवन्तो ग्रहाविष्टा इव परतन्त्रा सुखदु खयो प्रवर्तन्ते, तदेव कारणमित्यत आह––अधिष्ठिता नियम्यमानाः केन अनिश्चितेन हेतुना सुखेतरेषु सुखदु खेषु वर्तामहे ससारयात्राया प्रवृत्तिं कुर्महे । ब्रह्मविद. वेदार्थज्ञानवन्त. । व्यवस्थां ससारयात्रा नियतेभ्यो निमित्तेभ्यो नियतनैमित्तिकप्राप्तिरूपाम् । केनाधिष्ठिता व्यवस्था प्राप्य सुखेतरेषु वर्तामहे इत्यन्वय. । व्यवस्था प्राप्नुम इति शेषो वा ।

शनन्द.

काल स्वभावो नियतिर्यदृच्छा
भूतानि योनि पुरुष इति चिन्त्यम् ।
संयोग एषा न त्वात्मभावा-
दात्माऽप्यनीश सुखदु खहेतोः ॥

ननु ब्रह्मशब्दस्य निरतिशयाद्ब्रह्मणो देशकालवस्तुपरिच्छेदशून्यादन्य. को वाऽर्थ सभावितः इत्यत आह –– कालः निमेषादिपरार्धान्तप्रत्ययोत्पादको भूतो वर्तमान आगामीति व्यवह्रियमाणो जनैः । स्वभावः स्वस्य तत्तत्पदार्थस्य भावः असाधारणकार्यकारित्व, यथा अग्नेर्दाहादिकारित्वमपा निम्नदेशगमनादि । नियतिः सर्वपदार्थेष्वनुगता आकारवन्नियमनशक्तिः, यथा ऋतुष्वेव योषितां गर्भधारणमिन्दूदये समुद्रवृद्धिरित्यादि । यदृच्छा काकतालीयन्यायेन सवादकारिणी काचन शक्ति, यथा ऋतुमतीना योषिता कासांचित्कस्मिंश्चिदृतौ गर्भधारणमित्यादि । भूतानि पञ्च चत्वारि वा मिलितानि । तैलवर्त्यग्निसयोगेनेव प्रदीप, क्रमुकनागवल्लीपत्रचूर्णानां जीवतो मुखबिलेन सयोगेनेव भृश रक्तिमा मदश्च, एवं भूतानां सयोगस्तानि वा सयुक्तानि । योनि कारणम् । पुरुषः असङ्गोदासीनश्चिदानन्दात्मा । अत्र षट्पक्षाः पूर्वपूर्वस्य दौर्बल्यात्प्रादुर्भवन्ति । योनिशब्दश्च षट्स्वपि सबध्यते । प्रथमः पक्षोऽण्वादीना वादिप्रसिद्धाना कार-

(१) श्वेत. १।१, शशंकर १।४।९, रामानुज १।४।९, श्रीकर. १।४।९, २।२।४२, ३।३।६१, विज्ञान १।४।६

(१) श्वेत १।२, विज्ञान १।१।२ (पृ ४७), १।४।२८, २।२।१२

णानां निवारणार्थं । तथा हि — अण्वादीना कारणाना न कालमन्तरेण कारणत्वम् । ततः कल्पनागौरवादिभ्योऽण्वादिपक्षान्तराणि परित्यज्य कालस्यैव कारणता अङ्गीकरणीया । कालोऽपि न वस्तुस्वभावमन्तरेण कारणमिति पूर्ववत्स्वभावः कारणमिति द्वितीयः पक्ष. । स्वभावोऽपि नियतः कारण, ततोऽन्वयव्यतिरेकाभ्या नियतिरेव कारणमिति तृतीयः पक्षः । नियतेरप्यनैकान्तिकत्वाद्यदृच्छेति चतुर्थः पक्षः । यादृच्छिकत्वेऽपि भूतानि विनोत्पादस्यादर्शनात् भूतानीति पञ्चम. पक्षः । भूतैरपि जायमानस्य चेतनमन्तरेणोत्पादस्यादर्शनाच्चेतनः पुरुष एव कारणमिति षष्ठः पक्षः । प्रश्नगतकारणशब्दस्यानुवर्तनेन योनिपक्षो वा षष्ठ. । योनि. पृथिवी न तु भूतान्तर, प्रकृतिर्वा स्वतन्त्रा । भूतानामपि मूर्तत्वेन कार्यत्वादवश्य तत्कारण प्रकृतिरङ्गीकरणीयेत्यभिप्रायः । प्रकृतेरपि भूतवदचेतनत्वाच्चेतनः पुरुष. कारणमिति सप्तम पक्ष. । कालाद्या. सप्तापि ब्रह्मशब्दाभिधेय इत्यर्थ । इति यस्मात्, तस्माच्चिन्त्य किं ब्रह्मशब्दाभिधेय उक्तेभ्य. प्रकारेभ्यः प्रकारान्तरमन्यद्वेति चिन्तनीयम् । ननु किमत्र चिन्तनीय, कालादीना सर्वेषा सबन्धः कारणमस्तु, इत्यत आह — सयोगः एषा न तु । एषा कालादीना सयोग. सबन्धो न तु नैव । सयोगिना केषाचिन्नरविषाणसमानत्वात्सयोगस्याप्यसत्त्व, सत्त्वेऽप्यचेतनत्वाल्लोष्टादिवदकारणत्व तस्येत्यर्थ. । इतश्च कारणान्न सयोगः कारण मित्याह —- आत्मभावात् आत्मनश्चेतनस्य सत्त्वात् । अय भावः — एषा कालादीना पुरुषान्ताना सत्त्वे सति सयोगः कल्पनीयः । सति च चेतने पुरुषे कालादिवत्किं सयोगेनेति । ननु तर्हि कर्ता भोक्ता चेतनः पुरुषशब्दवाच्य. आत्माऽस्तु कारणमित्यत आह — आत्मा अपि कर्ता भोक्ता चेतनोऽपि न त्वित्यपिसामर्थ्यादनुवर्तते । तत्र हेतुमाह — अनीशः । जगत्कारण हि चेतनमचेतन वाऽङ्गीक्रियमाण सर्वस्य नियन्त्रित्यङ्गीकरणीय, आत्मा च जीवरूपोऽनीश्वरः । कस्यानीशः, सुखदुःखहेतोः, सुखदुःखयोरनुकूलप्रतिकूलवेदनीययोर्हेतुर्धर्माधर्मादिरूपः, तस्य । अतश्चेतनः स्वतन्त्रः कारण ब्रह्मशब्दवाच्यः ।

शानन्द.

[1]ते ध्यानयोगानुगता अपश्यन्
देवात्मशक्तिं स्वगुणैर्निगूढाम् ।
यः कारणानि निखिलानि तानि
कालात्मयुक्तान्यधितिष्ठत्येकः ॥

( १ ) न च असङ्गोदासीनस्यास्यापि कारणत्वमित्यवश्यमस्मिन्नेव कारणे केनचिदतिशयेन भवितव्यमिति वाचनिक विचार कुर्वन्तोऽपि यदा न निश्चयवन्तः, तदा ते ब्रह्मविदो विचारगताः ध्यानयोगानुगताः, ध्यान जगत्कारणचिन्तन, तच्च योगः तत्परत्व, तस्मिन्विचारमनुप्राप्ता अनुगताः । जगत्कारणत्वनिश्चयार्थमन्तर्मुखा बभूवुरित्यर्थः । तत अपश्यन् दृष्टवन्तः । किं, देवात्मशक्तिं देवस्य स्वयप्रकाशस्य आत्मनः आनन्दात्मनः शक्तिरविद्यामायादिशब्दाभिधेया, ताम् । इदानीमस्या दुर्बोधत्वमाह — स्वगुणैर्निगूढा स्वैः स्वकीयैर्गुणैः शुक्ललोहितकृष्णरूपैः सत्त्वरजस्तमोभिरभिव्यक्तैर्निगूढां तिरस्कृताम् । अल्पबुद्धिभिरगम्यामित्यर्थः । देवाः इति वा पूर्वपदे परिच्छेदः । देवा. प्रकाशवन्तो बुद्धिमन्तः । सधिस्तु छान्दसः । यः चेतनो ब्रह्मविद्दृष्टशक्तेराश्रयो विषयश्च कारणानि ब्रह्मशब्दाभिधेयत्वेन शङ्कितानि निखिलानि सर्वाण्यनुक्तानि च तानि प्रसिद्धानि कालात्मयुक्तानि कालादीनि पुरुषान्तानि कालात्मसहितानि अधितिष्ठति अधिष्ठाय वर्तते एकः वस्तुतो भेदशून्य. । माययाऽनेकरूपोऽप्येक एवेत्यर्थः । शानन्द.

( २ ) तथा इहापि ‘ ब्रह्मवादिनो वदन्ति । किं कारण ब्रह्म ’ इत्युपक्रम्य ‘ ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम् ’ इति पारमेश्वर्याः शक्तेः समस्तजगद्विधायिन्या वाक्योपक्रमेऽवगमात्, वाक्यशेषेऽपि ‘ मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ’ ( श्वेउ. ४।१० ) इति ‘ यो योनिं योनिमधितिष्ठत्येकः ’ ( श्वेउ ४।११ ) इति च तस्या एवावगमात् न स्वतन्त्रा काचित्प्रकृतिः प्रधान नाम अजा-

---

(१) श्वेउ १।३, ब्रशंकर १।४।९, रामानुज १।४।९, श्रीकर १।१।१ (पृ २०), १।४।९, ३।३।६१, ४।१।९, वल्लभ १।४।८, विज्ञान १।१।२ ( पृ ४८ ), १।४।६, ९,२८, २।१।३०, २।२।१२, ३।२।२९, बलदेव १।४।९, २।१।३०, ४।१।७

मन्त्रेणाम्नायते इति शक्यते वक्तुम्।

ब्रशाकर १।४।९

( ३ ) श्वेताश्वतरे 'कालः स्वभावो०' इत्यनेन मूलकारणे चिन्तां प्रकृत्याऽऽम्नायते -- 'ते ध्यानयोगानुगता . न्यधितिष्ठत्येक' इति। अत्र सृष्टेः प्रागपि ईश्वराधिष्ठेयो जीवोऽस्तीत्यवगम्यते। न चायमुपाधिसबन्धात्पूर्वमधिष्ठेयाधिष्ठातृभावो निरंशस्याऽऽत्मन. स्वरूपभेद विना उपपद्यते इति।

१।१।२ ( पृ ४८ )

यच्च 'ते ध्यानयोगानुगता०' इति पूर्वार्धश्लोकेन आदौ शक्तिदर्शनमुक्त, तत् शक्तिमतोऽधिष्ठातृत्वदर्शनोपयोगितयेति मन्तव्य, स्वतन्त्रज्ञेयत्वे शक्तित्ववचनानुपपत्तेरिति। १।४।६

'एतेन सर्वे व्याख्याता व्याख्याता' ' -- एतेन प्रधानप्राणादीना ब्रह्मशक्तित्वप्रतिपादनेन अन्येऽप्यानुमानिका. कालादृष्टादयो ब्रह्मशक्तितया व्याख्याता वेदितव्याः, न तु स्वतन्त्र किमप्यन्यदस्ति, अतो न तत्कारणताप्रतिपादकश्रुतिभिरपि ब्रह्मकारणतावाक्यानां विरोध इत्यर्थ.। तत्र कालादिकारणवर्गेश्वरशक्तिताप्रतिपादकश्रुतिर्यथा श्वेताश्वतरे -- 'कालः स्वभावो०' इति कालादीनि प्रकृत्य 'य· कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः' इति। कालात्मयुक्तानि कालादीन्यात्मान्तानीत्यर्थ। तेषा चाधिष्ठेयत्ववचनात् शक्तित्व सिद्धम्। प्रलये च भूतादीनां परमा सूक्ष्मावस्था सत्त्वादिशब्दवाच्येति मन्तव्यम्।

१।४।२८

'सर्वोपेता च तद्दर्शनात्' -- वस्तुतो निरवयवत्वेऽप्यशभेदसभवान्न कृत्स्नप्रसक्ति., यतः परा देवता सर्वशक्त्युपेता, अतस्तैरेव प्रकृतिपुरुषाद्यैः शक्तिभिरवच्छिन्ना भागाः परदेवताया अशा आकाशपरमाण्वादीनामिव गुहादिगादिभिरिति। श्रुत्या चाऽऽरम्भकावयवा एव प्रतिषिध्यन्ते, न पुनः शक्तिरूपा अप्यशाः। ब्रह्मण. सर्वशक्तिमत्त्वे प्रमाणमाह-- तद्दर्शनादिति। 'ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्' 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' 'यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः' इत्यादिना सर्वशक्तिमत्त्वश्रवणादित्यर्थः।

विज्ञान २।१।३०

ब्रह्मरूपस्य ससारस्य चक्ररूपता, ससारस्य नदीरूपता

तमेकनेमिं त्रिवृतं षोडशान्त
शतार्धारं विंशतिप्रत्यराभिः।
अष्टकैः षड्भिर्विश्वरूपैकपाशं
त्रिमार्गभेदं द्विनिमित्तैकमोहम्॥

त वस्तुतः एकरूप मायया प्राप्तानेकससारचक्ररूपमपि निश्चितवन्तोऽपश्यन्निति क्रियानुषङ्गादवगन्तव्यम्। साविद्यससारचक्ररूपता वक्तु चक्रसमानधर्मान्काश्चिदाह--एकनेमिं एका अविद्या नेमि, अराणा नाभौ प्रतिष्ठिताना बहिरग्रभागस्य प्रतिष्ठास्थल वलयाकार काष्ठ नेमिरित्युच्यते। एका अविद्या नेमिर्यस्य ससारचक्रस्य तदेकनेमि। एकनेमिमिति छान्दसम्। ससारचक्रस्याऽऽत्मकार्यत्वात्तद्रूपत्वेन वा पुलिङ्गनिर्देश। त्रिवृत त्रिभिः शुक्ललोहितकृष्णरूपैर्वृत आवृत लोहपट्टिकाभिरिव तिसृभि. प्रसिद्ध चक्रम्। षोडशान्त, एकादशेन्द्रियसहित भूतपञ्चक षोडशाख्य, तत् अन्ते नाभिच्छिद्रापेक्षया बहिर्यस्य तत्षोडशान्तम्। षोडशविकारो नाभिच्छिद्रवेष्टनमित्यर्थ.। शतार्धारम्। शतार्धे पञ्चाशत्सख्याकम्। अविद्यास्मितारागद्वेषाभिनिवेशरूपा पञ्च क्लेशाः तमोमोहमहामोहतामिस्रान्धतामिस्रशब्दिता.। अष्टाविंशतिसख्याश्चाशक्तयः, एकादशेन्द्रियाणा वैकल्यमेकादशबुद्ध्यभावैः सैहकादश, नवतुष्टीनामभावाश्नव, अष्टसिद्धीनामभावादष्ट, एवमष्टाविंशतिसख्या अशक्तय। नव तुष्टय.। प्रकृतितुष्टि. प्रकृतिर्बध्नाति प्रकृतिरेव विमुञ्चत्यतो नास्माभिर्मोक्षार्थे यत्नः कर्तव्यः (इति)। सन्यासादेव मुक्तिर्भविष्यति, न श्रवणाद्यर्थे यत्न. करणीयः इत्युपादानतुष्टिः। कृतेऽपि श्रवणादिके कालेनैव मुक्तिर्भवति, अतो विनाऽप्यात्मज्ञान कालेनैव मुक्तिर्भविष्यतीति कालतुष्टिः। कालोऽपि भाग्यवतामेव मुक्तिं प्रयच्छति, ततोऽस्ति चेदस्माक भाग्यमस्मत्कृतमुद्यममन्तरेण भाग्यान्मुक्तिर्भविष्यतीति भाग्यतुष्टिरिति चतस्र. प्रकृत्याद्याः। अर्थार्जनराहित्य

(१) श्वेउ १।४

मर्थपरिपालनराहित्यमर्थसंचयराहित्यमर्थव्ययराहित्यमर्थोपभोगराहित्यं (इति) पञ्च अर्थार्जनादिवैपरीत्येन तुष्टयः। अष्टौ सिद्धय.। ऊहो मननापरनामधेय'। अध्ययनं श्रवणापरनामधेयम्। शब्दो निदिध्यासननामधेय'। दानं ब्रह्मविद्यायाः शिष्येभ्य संपादन, तत्संपादनेन च ज्ञानसिद्धिः। सुहृत्प्राप्तिर्गुरुप्राप्ति.। ऊहाद्याः पञ्च अमुख्या. सिद्धयः। आध्यात्मिकाधिभौतिकाधिदैविकदुःखत्रयविघातरूपास्तिस्र., एवमष्टौ। अविद्याद्यु खत्रयविघातान्तास्तत्त्वभेदा. शतार्धरूपा अरा यस्य संसारचक्रस्य तदिदं शतार्धारं इति व्याख्येयम्। विंशतिप्रत्यराभि. विंशतिसंख्याकै. प्रत्यरैर्नाभिस्थै क्षुद्रैररैः सहितमिति शेषः। दशेन्द्रियवृत्तय सविषया विंशतिसंख्याकानि तत्त्वानि प्रत्यरस्थानीयानि संसारचक्रस्य। अष्टकै षड्भिः। अव्यक्तमहदहंकारास्तन्मात्राणि च पञ्च करणाष्टकम्। यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधय इति योगाङ्गाष्टकम्। ऊह शब्दोऽध्ययनं दानं सुहृत्प्राप्तिर्दुःखत्रयविघाताश्चेत्यूहादिसिद्धयष्टकम्। अणिमा महिमा लघिमा गरिमा प्राप्तिः प्राकाम्यमीशत्वं वशित्वं चेत्यणिमाद्यष्टकम्। प्राणवाग्रसनचक्षुःश्रोत्रमनोहस्तत्वच इति ग्रहाष्टकम्। गन्धवक्तव्यरसरूपशब्दकामकर्मस्पर्शा इत्यतिग्रहाष्टकम्। एवमेतैरष्टकैः षट्संख्याकै. सहितमिति शेष। अथवा उक्तमेव ग्रहातिग्रहाष्टकद्वय, पृथिवी कामो रूपाण्याकाशस्तमो रूपाण्यापो रेत इत्यायतनाष्टकं, अग्निर्हृदयं चक्षु श्रोत्रं हृदयं चक्षुर्हृदयं हृदयमिति लोकाष्टक, अमृतं स्त्रियः सत्यं दिशो मृत्युरसुर्वरुणः प्रजापतिरिति देवाष्टक, शारीर' काममय आदित्यः श्रोत्रश्छायामय आदर्शस्थ उदकस्थः पुत्रमय इति पुरुषाष्टकम्। एतैरष्टकै षड्भि. सहितम्। विश्वरूपैकपाशं, विश्व विविधं समग्रं वा रूपं यस्य तद्विश्वरूप, तदेवैकं स्वयंज्योतिरानन्दात्मा पाशो बन्धनहेतुरवस्थानकारणं यस्य तत्तथा, विश्वरूपं च तदेकपाशं चेति विश्वरूपैकपाशम्। त्रिमार्गभेद, त्रयो देवयानपितृयाणकीटादिप्राप्तिरूपा मार्गा' संचरणवीथीरूपा भेदाः प्रकाराः यस्य तत् त्रिमार्गभेदम्। द्विनिमित्तैकमोह, द्वे निमित्ते संसारसरणकारणभूते सुखदुःखे यस्य तत् द्विनिमित्त, एकस्य चिदानन्दात्मनो मोह अप्रतिपत्तिविप्रतिपत्तिरूपः यस्य तत् एकमोहं, संसारपारगमनप्रतिबन्धकारणमित्यर्थ', द्विनिमित्तं च तदेकमोहं चेति द्विनिमित्तैकमोहम्।

शनन्द.

पञ्चस्रोतोम्बुं[१] पञ्चयोन्युग्रवक्रां
पञ्चप्राणोर्मिं पञ्चबुद्ध्यादिमूलाम्।
पञ्चावर्तां पञ्चदुःखौघवेगां
पञ्चाशद्भेदां पञ्चपर्वामधीमः॥

चक्ररूपतां संसारस्योक्त्वा इदानीं नदीरूपतामाह—पञ्चस्रोतोम्बु पञ्च स्रोतांसि पञ्चाम्बूनि च यस्या सा पञ्चस्रोतोम्बु, ताम्। स्रोतांसि पञ्चेन्द्रियच्छिद्राणि। यद्यपि देहे नवैकादशानन्तानि छिद्राणि, तथापि छिद्रद्वयमेकैकस्य चक्षुःश्रोत्रघ्राणाना त्रयाणामपीति षट्क छिद्राणाम्। त्रिषु आस्यच्छिद्रं रसनायाः, शेष छिद्रजातं त्वच इति पञ्चस्रोतस्त्वमविरुद्धम्। पञ्चाम्बूनि बाह्यानि पञ्चाप्युक्तस्थानानि ज्ञानेन्द्रियाणि, प्रवाहरूपेण विषयाभिमुखगामित्वात्। पञ्चयोन्युग्रवक्राम्। पञ्चयोन्युग्रवक्त्रामिति वा पाठ। पञ्च योनयः कारणभूतानि महाभूतानि यस्या सा पञ्चयोनि.। पञ्च उग्राणि नरकपातकारणानि असुरवृत्तिप्रधानानीन्द्रियाणि यस्या सा पञ्चोग्रा। पञ्च वक्राणि कुटिलगमनानि असुरविषयग्रहणानि, वक्त्राणीति पाठे मुखानि प्रतीकानि प्रधानानीत्यर्थः, सा पञ्चवक्रा। पञ्च योनयश्चोग्राणि च वक्राणि च यस्या सा पञ्चयोन्युग्रवक्रा, ताम्। पञ्चप्राणोर्मिं, पञ्च प्राणा प्राणापानव्यानोदानसमानाः ऊर्मयो यस्या सा पञ्चप्राणोर्मि', ताम्। पञ्चबुद्ध्यादिमूला, पञ्च बुद्धयः शब्दस्पर्शरूपरसगन्धविषयज्ञानभेदा., आदिशब्देन तदुत्पाद्यास्तद्विषयविषया. पञ्चेच्छाभेदा., पञ्च बुद्ध्यादयो मूलानि कारणभूतानि यस्या सा पञ्चबुद्ध्यादिमूला, ताम्। पञ्चावर्तां, पञ्च शब्दाद्या अवान्तरसामान्यविशेषसहिता आवर्ता उदकस्य चक्रभ्रमणवद्भ्रमनावर्ता यस्यां सा पञ्चावर्ता, ताम्। पञ्चदुःखौघवेगा, पञ्च इन्द्रियजन्यानि दुःखानि प्रतिकूलवेदनीयानि प्रसिद्धानि, सुखानामप्याद्यन्तयोर्दुःखदर्शनेन दु'खाविनाभूतत्वात्तान्यपि दुःखानि,

(१) श्वेउ १।५.

तेषामोघ. प्रवाह., तस्य वेगो द्रुत गमन यस्या सा पञ्चदु खौघवेगा, ताम्। पञ्चाशद्भेदा, पञ्चस्रोत इत्या रभ्य पञ्चदु खौघवेगामित्यन्तेन अस्माभिर्वर्णिताः पञ्चा शत् भेदा यस्यां सा पञ्चाशद्भेदा। अथवा शतार्धा-रवदविद्यादयो दुःखद्वयविघातान्ता यस्यां सा तथा, ताम्। पञ्चपर्वा, पञ्च पर्वाणि 'तमो मोहो महामोहस्ता मिस्रो ह्यन्धसज्ञितः' इत्युक्तानि पुराणे यस्यां सा पञ्च-पर्वा, पञ्च महाभूतानि वा पर्वाणि यस्यां सा पञ्चपर्वा, ताम्। अधीमः अधिक स्मरण कुर्मः। एतस्या ज्ञान सम्यग्जातमस्माकमित्यर्थ.। शनन्द

हसाख्यस्य जीवस्य भ्रमण आत्मज्ञानान्मुक्तिश्च, त्रया-श्रय अक्षराधार परम ब्रह्म, ब्रह्मविदो लय मुक्तिश्च, क्षराक्षराधार ईश अनीशश्चा मा भोक्ता, देव-ज्ञानात्पाशमुक्ति, जीवप्रकृतिपरमात्मान इति त्रिविध ब्रह्म, विश्वमायानिवृत्ति

* सर्वाजीवे सर्वसंस्थे बृहन्ते
तस्मिन्हंसो भ्राम्यते ब्रह्मचक्रे।
पृथगात्मान प्रेरितारं च मत्वा
जुष्टस्ततस्तेनामृतत्वमेति ॥

(१) साविद्यस्य ब्रह्मण· ससारचक्ररूपत्वमुक्तम्। सेयमविद्या सकार्या जीवस्य बन्धो ब्रह्मज्ञान च तस्य मुक्तिहेतुरित्याह — सर्वाजीवे, आ समन्ताजीवनमा-जीव., सर्वेषामाजीवो यस्मिंस्तत्सर्वाजीव, तस्मिन्। सर्व सस्थे सर्वेषा सस्था मरण स्थितिर्वा यस्मिंस्तत्सर्वसस्थ, तस्मिन्। बृहन्ते बृहति तस्मिन् उक्तविशेषणे हसः हन्ति गच्छति सचारचक्र यः स हसो जीव इत्यर्थ., भ्राम्यते धर्माधर्मकुलालेन अविद्याकामवासनादिदण्डेन भ्रमण कार्यते। ब्रह्मचक्रे ब्रह्मण. चिदानन्दैकरसस्याज्ञानविलासे ससारचक्रे। ब्रह्मैव वा चक्र तस्मिन्। अय बन्धो बन्ध-कारण च। इदानीं मोक्षोपाय ब्रह्मज्ञानमाह — पृथक् ससारचक्रात्सोपाधिकाच्चान्यरूपमात्मान सर्वप्रियतम प्रत्यग्भूत प्रेरितार च ससारचक्रस्य सनिमित्तस्य प्रवर्त-यितारम्। चकार एवकारार्थे। आत्मानमेव प्रेरितार-मीश्वर मत्वा मननाद्युपायेन साक्षात्कृत्येत्यर्थ। इदानीं मोक्षमाह — जुष्टस्ततस्तेनामृतत्वमेति। ततः साक्षा-त्कारात् तेन ईश्वरेण जुष्ट स्वात्माभेदेन परमा प्रीतिं नीतः अमृतत्व स्वयप्रकाशपरमानन्दरूपमविद्यालेशशून्य एति गच्छति। शनन्द.

(२) 'पृथगात्मान प्रेरितार च मत्वा' इति जीवात्मविसजातीयस्य तदन्तर्यामिणो ब्रह्मणो ज्ञान परम पुरुषार्थलक्षणमोक्षसाधनमित्युपदेशाच्च।

* रामानुज १।१।१ (पृ १२४)

† उद्गीतमेतत्परमं तु ब्रह्म
तस्मिंस्त्रय सुप्रतिष्ठाऽक्षरं च।
अत्रान्तरं ब्रह्मविदो विदित्वा
लीना ब्रह्मणि तत्परा योनिमुक्ता ॥

येन जुष्टोऽमृतत्वमेति, त निरुपचरित ब्रह्मेत्याह— उद्गीत सर्वेषु वेदेषु उद् ऊर्ध्वे अधिकत्वेन गीत कथित एतत् सोपाधिकरूपस्य प्रीतिजनक परम तु उत्कृष्टमेव ब्रह्म निरुपचरित बृहतेर्धातोरर्थरूप, देशकालवस्तुपरिच्छेद-शून्यमित्यर्थ.। तस्मिन् परमे ब्रह्मण्यविद्यादशायां त्रय लोहितशुक्लकृष्णरूप जगतो जन्मस्थितिनाशरूप वा। न केवलमेतदेव, किंतु स्वप्रतिष्ठा स्वस्मिन् आत्मन्याश्रय-त्वेन विषयत्वेन च प्रतिष्ठा यस्या· अविद्याया सा स्वप्रतिष्ठा। आत्मा वा केवलो यथाकथंचिज्जगद्वा तन्मा भूदित्येतदर्थमाह — अक्षर च। ब्रह्मात्मैक्यज्ञानमन्त-रेण न क्षरति न विनश्यतीत्यक्षर, यावद्ब्रह्मस्वरूप व्याप्त वा अक्षरम्। चकारस्त्रय स्वप्रतिष्ठाऽक्षरमपि तस्मिन्नित्ये-तदर्थं। अत्र अस्मिन्नक्षराधारे ब्रह्मणि जगत्कारणे अन्तर अक्षराधाराधेयभूतस्य चिदानन्दरसस्य जीवा-त्मना तादात्म्य प्राप्तस्य भेद मुञ्जादिवेषीकायाः, वेदविदः वेदार्थज्ञानवन्तः, श्रवणादिमन्त इत्यर्थ.। विदित्वा अव-

* श्रीकंठ छाउ ६।३।२ (पृ ८९५) इत्यत्र द्रष्ट-व्यम्।

(१) श्वेउ १।६, रामानुज १।१।१ (पृ ४, ११७, १२४), २।१।२२, २।३।४९, ४।१।३, श्रीकंठ २।१।२२, २।३।४२, श्रीकर १।१।१३ (पृ. ६३), २।१।२३, २।३।४७, ३।२।२६, ३।३।६१, ४।१।४, विज्ञान १।१।२ (पृ ४०), ३।२।३१, बलदेव १।१।२

* श्रीकर विज्ञान रामानुजवत्।

† श्रीकरे उद्गीथशब्देन प्रणवो विवक्षित।

(१) श्वेउ १।७, श्रीकर ३।३।६३ उद्गीत (उद्गीथ).

गत्य ब्रह्मसाक्षात्कारेण लीना पूर्वमपि तदात्मानः प्रतिबन्धकापगमे तद्रूप प्रविष्टा. । कुत्रेत्याकाङ्क्षायामाह—ब्रह्मणि देशकालवस्तुपरिच्छेदशून्ये । ब्रह्मलये उपायमाह — तत्परा' ब्रह्मैकचित्ताः, वयमेव ब्रह्म स्मः इति निरन्तरज्ञानवन्त इत्यर्थ । लयप्रकारमाह—योनिमुक्ताः, ब्रह्मविद्भिर्दृष्टा आत्मशक्तिरविद्या योनिः, तया मुक्ता' तल्लेशेनाप्यपगता इत्यर्थः ।

शनन्द.

*[1]सयुक्तमेतत्क्षरमक्षरं च
व्यक्ताव्यक्त भरते विश्वमीश' ।
अनीशश्चाऽऽत्मा बध्यते भोक्तृभावा-
ज्ज्ञात्वा देव मुच्यते सर्वपाशैः ॥

इदानीं तत्त्वपदार्थयोर्वाच्यार्थमाह—सयुक्त कार्यकारण भावेन सबद्ध एतत् विश्व क्षर कार्यं अक्षर च कारणमपि । क्षराक्षरशब्दयोरर्थमाह—व्यक्ताव्यक्त कार्यकारणात्मकम् । अथवा एतच्छब्दार्थमाह—व्यक्ताव्यक्तम् । भरते बिभर्ति धारयति च पुष्णाति । हरते इति पाठे उपसहरतीति व्याख्येयम् । विश्व निखिलं ईश' नियन्ता तत्पदार्थ । अनीशश्च अनीश्वर एव त्वपदार्थः आत्मा अहप्रत्ययवेद्य. बुध्यते ‡ अवगच्छति भोक्तृभावात् भोक्तृत्वात् । कर्ता भोक्ताऽहमस्मीति ज्ञानेनाऽऽत्माऽनीश्वर एवेत्यर्थ' । इदानीं तत्त्वमसीतिवाक्यार्थमाह—ज्ञात्वा देव स्वयप्रकाश तत्पदार्थलक्ष्य त्वपदार्थलक्ष्येणाभिन्नमवगम्य मुच्यते सर्वपाशैः सर्वेभ्योऽविद्याकामकर्मादिभ्यो बन्धनहेतुभ्यो विमुक्तो भवति । इद वाक्यार्थज्ञानस्य फलम् ।

शनन्द.

[2]ज्ञाज्ञौ द्वावजावीशनीशा-
वजा ह्येका भोक्तृभोगार्थयुक्ता ।
अनन्तश्चाऽऽत्मा विश्वरूपो ह्यकर्ता
त्रयं यदा विन्दते ब्रह्ममेतत् ॥

( १ ) उक्तमन्त्रार्थं मन्त्रत्रयेण विवृणोति—ज्ञाज्ञौ । ज्ञः अविद्यालेशेनापरामृष्टश्चैतन्यैकस्वभावस्तत्पदार्थ । अज्ञः कर्ता भोक्ता त्वंपदार्थः । ज्ञश्चाज्ञश्च ज्ञाज्ञौ द्वौ उपाधिभेदेन प्राप्तद्वित्वौ, अजौ कारणशून्यौ । अजत्वं वा रूपकार्थमनयोः प्रकृतेश्च वक्ष्यमाणायाः । तदिद 'अजामेकाम्' इत्यादिमन्त्रे प्रकटीकरिष्यति । एतयोरसाधारण लक्षणमाह—ईशनीशौ । ईशश्च नियन्ता अनीशश्च नियम्य ईशानीशौ । ईशनीशाविति च्छान्दसम् । बुद्धया तत्त्वपदार्थवाच्याभ्या पृथक्कृत्याविद्यामाह—अजा हि प्रसिद्धा कारणशून्या अविद्या । अस्या दण्डायमानाया न भेद इत्याह—एका विविधविक्षेपवती मायाऽविद्यादिशब्दवाच्याऽपि भेदशून्या । तस्या प्रयोजनमाह—भोक्तृभोगार्थयुक्ता । भोक्ता ससारी वस्तुतश्चिदानन्दरसः, भोग सुखदुःखे ससाधने, तदर्थं भोक्तृभोग्यादिभेदार्थं युक्तोद्यमवत्यखण्डैकरसे स्वयंप्रकाशानन्दात्मनि भेदव्यवहारसिध्यर्थं परिकल्पितेत्यर्थ । यद्यपि ईशनीशाविति परजीवयोर्लक्षणमुक्त, तथापि समानस्वभावयोर्न तदपीत्याशङ्कयाऽऽह —अनन्तश्च देशत. कालतो वस्तुतः परिच्छेदशून्योऽपि आत्मा तत्पदार्थः विश्वरूप. जगदुपादानकारणम् । ननु तादृशः स्वप्ने जीवोऽपीत्यत आह—ह्यकर्ता उपादानकारणमपि यस्मात्कर्तृत्वरहित. अह ब्रह्मास्मीति निसर्गत आत्मज्ञानवान्, ततोऽयमीशः, जीवस्तु न तथा । स हि कर्ता, ततोऽनीश इत्यभिप्रायः । ज्ञात्वा देवमित्येतद्व्याकर्तुमुपक्रमते—

* रामानुज मुउ ३।२।९ (पृ १४८७) इत्यत्र द्रष्टव्यम् ।
‡ 'बध्यते' इत्येव पाठो बहुसमत श्रेयाश्च ।

(१) श्वेउ १।८, रामानुज १।४।८, २।१।४, ८, ४।१।१, श्रीकठ १।१।४ ( पृ १८७ ), श्रीकर १।१।४ ( पृ ४६, ४७ ), ४।१।१

(२) श्वेउ १।९, रामानुज १।१।१ ( पृ ११६ ), १।१।४ ( पृ १६२ ), १।४।८, २।१।२२, २।३।१८, ४२, ४९ वीशनीशा ( वीशानीशा ) ब्रह्ममेतत् ( ब्रह्म चैतत् ), निंबार्क २।३।४२ वीशनीशा( वीशानीशा ), श्रीकठ १।१।२ ( पृ १२४ ), १।२।११, २।१।१४, २२, ३५, २।३।१८, १९ निंबार्कवत्, श्रीकर १।१।१ ( पृ ३, २०, २१ ), १।१।२ ( पृ २९, ३०, ३२, ३३ ), १।१।४ ( पृ ५३ ), १।१।५ ( पृ ५४ ), १।१।१३ ( पृ ६२, ६३ ), १।१।२०, १।२।८, ११, १।३।४, ६, १।४।३, १९, २।१।७, ८, १३, १४, २३, ३५, २।२।४२ ( पृ २४० ), २।२।४३, ४५, २।३।२, १६, २८, ४०, ४७, ५०, ३।२।१, ४, २६, ३०, ४।२।१५, ४।४।३, ४।४।१९ निंबार्कवत्, वल्लभ १।४।८ भोगार्थ ( भोग्यार्थ ), विज्ञान. १।१।२ ( पृ ४३, ४४ ) निंबार्कवत्, बलदेव १।४।९, २।३।१९.

त्रय अजौ अजा चेति त्रित्वसख्याक्रान्त यदा यस्मिन्काले विन्दते लभते ब्रह्ममेतत् एतत्त्रय ब्रह्म ब्रह्मैकमेवाऽऽत्मस्वरूप, याथात्म्येनाज्ञात त्रय न वस्तुत इत्यधिगच्छतीत्यर्थः ।

शनन्द

( २ ) 'ज्ञाज्ञौ' इति जीवस्याज्ञत्व किंचिज्ज्ञत्वमेव । असंसारिणः परमेश्वरस्य तु सर्वज्ञत्वमुच्यते । अत ससारे किंचिज्ज्ञत्व मुक्तौ सर्वज्ञत्वमिति ज्ञातैवाऽऽत्मा ।

श्रीकठ २।३।१९

( ३ ) 'ज्ञाज्ञौ द्वावजावीशानीशौ' 'अजो ह्येको जुषमाणोऽनुशेते जहात्येना भुक्तभोगामजोऽन्य.' इत्यादिश्रुतिषु जीवब्रह्मणोरजन्यत्वप्रदर्शनेन कल्पितत्ववादो ह्यवैदिक. ।

१।१।१ ( पृ २१ )

ननु 'ज्ञाज्ञौ द्वावजावीशानीशौ' इत्यादिना परमेश्वरवज्जीवस्याजातत्वोपदेशात् 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुत्या परमेश्वरस्य पञ्चमहाभूतकारणत्वमिति चेन्न । सृष्टे. प्राक् स्वात्मनि कुसूलधान्यवद्वर्तमानजीवानां बहिर्निर्गमनादिकर्तृत्वदर्शनात् जन्यत्वाजन्यत्वविधायकश्रुतीनां न विरोध ।

श्रीकर १।१।२ ( पृ. ३० )

( ४ ) अथ ब्रह्मण्येवाज्ञान, अज्ञानप्रतिषेधवाक्यानि च अनिर्वचनीयाज्ञानप्रतिषेधेन परमार्थपराणीति चेन्न । व्यवहारभूमावपि ब्रह्मण्यज्ञानासभवात्, 'ज्ञाज्ञौ द्वावजावीशानीशौ' इत्यादिवाक्यैर्जीवे अज्ञानव्यवहारदशायामेव ब्रह्मण्यज्ञानप्रतिषेधात् ।

विज्ञान १।१।२ ( पृ. ४३ )

**क्षरं[१] प्रधानममृताक्षरं हर.**
**क्षरात्मानावीशते देव एक' ।**
**तस्याभिध्यानाद्योजनात्तत्त्वभावा**
**द्भूयश्चान्ते विश्वमायानिवृत्ति ॥**

( १ ) एकस्यानेकात्मत्वमुपपादयति — क्षर विनाशवत् प्रधान मुख्यमविद्याशब्दवाच्यमक्षरमित्यथ. । एव च जगदिदमविनेत्युक्त, कार्यकारणयोरनन्यत्वात् । अस्त्वेव, तथाऽप्यक्षर प्रधानशब्दवाच्य भिन्नमित्यत आह — अमृताक्षरम् । अमृत ब्रह्मज्ञानेनापि मरणशून्य, अक्षर निरुपचरितव्याप्तिमत्, अमृत चाक्षर चामृताक्षरम् । यथा क्षर प्रधान तथा अक्षर प्रधानममृताक्षरम् । यद्यपि अक्षर अकार्यममृताक्षरस्य, तथाऽप्यमृताक्षरे परिकल्पित, कल्पितानां चाधिष्ठानादनन्यत्व शुक्तिरजतवदित्यभिप्राय. । ननु यथा तदभावोऽमृताक्षरात्पृथक्, तथाऽक्षरमपीत्यत आह — हर. । हरण अविद्याभावो हर., सोऽप्यमृताक्षरमिति योजना । यद्यविद्याभाव कल्पित', तदा अविद्यावत्सोऽपि वस्तुतोऽधिष्ठानमात्रमेव स्यात्, यदि त्वकल्पित', तदा 'नेह नाना' इत्यादिश्रुतिविरोध इत्यर्थ । अन क्षरात्मानौ, क्षर कार्यं, आत्मा अविद्यासहित चैतन्य, तौ ईशते ईष्टे । क्षरात्मना वीशते इति वा पदच्छेद । विशति । क्षरात्मनेत्युपलक्षण, सर्वात्मना विशति, सर्वं भवतीत्यर्थ. । देव. स्वयप्रकाश. । एक. ज्ञाज्ञादिभेदशून्यश्चैतन्यानन्दस्वभाव. । आत्मज्ञानान्मुक्तिरिति प्रत्यक्षविरोध इति शङ्का निवर्तयति — तस्य चिदानन्दरसस्यापगतभेदस्य अभिध्यानात् सर्वतश्चिन्तनात् सर्वमात्मेति ज्ञाना, दनात्ममायानिवृत्तिरित्यवगन्तव्यम् । योजनात् अह ब्रह्मास्मीतिज्ञाना.मनोऽब्रह्मत्वमायानिवृत्तिरिति द्रष्टव्यम् । तत्त्वभावात् देहपातानन्तरमबाधितस्वरूपस्य सत्त्वात् भूयश्च पुनश्च अनात्मा ब्रह्म आत्मा च ब्रह्मेति बुद्धिभ्यां द्विवार निवृत्तौ सत्यामपि अन्ते जीवन्मुक्तप्रारब्धकर्मफलक्षये विश्वमायानिवृत्ति., विश्वस्य माया विपरीतप्रतीतिस्तत्कारण च, विश्वा चासौ माया चेति वा, तस्या निवृत्ति. सर्वात्मना अनुपलम्भ. । अयमर्थः—

(१) श्वेउ १।१०, रामानुज १।१।१ ( पृ ११६, १२३), १।४।८ तत्त्वभावा ( तत्प्रभावा ), ब्रमध्व २।३।१३, ३।२।२७, श्रीकठ १।२।२२, २।१।२२, श्रीकर १।१।१ ( पृ ४, १३, १५ ), १।१।२ ( पृ ३६ ), १।१।४ ( पृ ४६, ४७ ), १।१।७, ११, १३ (पृ ६३), १।१।३२, १।२।१९, १।३।६, १०, १।४।३, १०, २।१।१, ११, २३, २।३।३, ३६, ३८, ३।१।१०, १७, ३।२।४, ६, ११, ३३, ३०, ३५, ३।३।१४, १७, ५१, ३।४।१, ३५, ५२, ४।१।१, ३, ४।२।१५, ४।३।१६, ४।४।२२, विज्ञान १।१।५ ( पृ १२६ ), १।४।३, १७, २।३।९, बलदेव १।४।२८

संस्कारशेषाऽविद्या देहपाते निवर्तते, ततो विदुषोऽप्यविरुद्धो देहयात्राद्यर्थो व्यवहार इति ।

शनन्द.

( २ ) 'अमृताक्षर हर' इति भोक्ता निर्दिश्यते । प्रधानमात्मनो भोग्यत्वेन हरतीति हरः ।

रामानुज. १।१।१ (पृ ११६)

( ३ ) 'श्रद्धाभक्तिध्यानयोगादवेहि' इत्यादिषु ध्यानज्ञानयोरेव मोक्षहेतुत्वव्यपदेशाद्धाह्यलिङ्गधारणादिना न किंचित्प्रयोजनमिति चेत्, 'तस्याभिध्यानाद्योजनात्तत्त्व भावाद्भूयश्चान्ते विश्वमायानिवृत्तिः' इति श्रुतौ तस्य हरस्य अभिध्यानात् अन्तरनुसंधानात् योजनात् संयोगात् बाह्यधारणात् तत्त्वभावात् तत्त्वसाक्षात्कारात्सकलमायानिवृत्तिर्भवतीति श्रूयते । श्रुतिसंकोचे मानाभावात् ।

'मोक्षमिच्छेज्जनार्दनात्' इति नारायणस्यैव मोक्षप्रदायकत्वात्तस्योपासनमेव मुमुक्षूणामावश्यकमिति चेन्न, तथाविधश्रुत्यभावात् । 'शिव एको ध्येय. शिवकर सर्वमन्यत्परित्यज्य' 'ईश ज्ञात्वा अमृतत्वमेति' 'ज्ञात्वा शिव शान्तिमत्यन्तमेति' 'ईश ज्ञात्वा अमृता भवन्ति' 'ध्याननिर्मथनाभ्यासात्पाश दहति पण्डित.' 'क्षर प्रधानममृताक्षर हरः क्षरात्मानावीशते देव एक. । तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः ॥' 'एक एव रुद्रो न द्वितीयाय तस्थे' 'विश्वाधिको रुद्रो महर्षि' 'यो देवाना प्रथम पुरस्तात् (विश्वाधिको रुद्रो महर्षि. )' 'तमक्रतु पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्' इत्यादिश्रौतविधेर्बलीयस्त्वान्नारायणस्य ब्राह्मणदेवतात्वाभावात् । श्रुतिविरुद्धस्मृतेः प्रामाण्याभावाच्च तादृशस्मृतीना समक्षजलन्यायेन परंपराशिवोपासनद्वारा मोक्षहेतुत्व सिद्धम् ।

१।१।१ (पृ १३, १४)

'क्षर प्रधानममृताक्षर हर. क्षरात्मानावीशते देव एक. । तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः ॥' इत्यादौ अभिध्यानादित्यनेन प्राणलिङ्गोपासन योजनादित्यनेन भावलिङ्गोपासन स्पष्टमुक्तम् । १।१।३२

'क्षर प्रधानममृताक्षर हरः' इति श्वेताश्वतरे परशिवपरत्वेनाक्षरशब्दो निर्णीत. । श्रीकर. १।३।६

( ४ ) 'भूयश्चान्ते विश्वमायानिवृत्ति' इत्यादौ च मायाया व्यापारानिवृत्तिरेवावगम्यते, न नाश इति ।

१।१।५ ( पृ. १२६ )

महदादिविकाररूपेणानित्यत्व च प्रधानस्यापीष्यत एव, 'क्षर प्रधानममृताक्षर हर.' इति श्रुते ।

विज्ञान २।३।९

**ज्ञात्वा देवं सर्वपाशापहानि**
**क्षीणै क्लेशैर्जन्ममृत्युप्रहाणि ।**
**तस्याभिध्यानात्तृतीयं देहभेदे**
**विश्वैश्वर्यं केवल आप्तकाम. ॥**

( १ ) तस्याभिध्यानादित्यादि व्याकरोति——ज्ञात्वा सर्वात्मत्वेनावगत्य देव स्वयप्रकाश सर्वपाशापहानिः सर्वेषां पाशानां पुत्रक्षेत्रादीनामहममादीना वा अपहानि परित्याग. । सर्वात्मानमवगत्य सर्वत्र समबुद्धिर्भवतीत्यर्थ. । सर्वात्मा देव इत्यवगत्य अहमपि स इत्यवगमात् अविद्यास्मितारागद्वेषाभिनिवेशाना क्लेशाना क्षय । ततः क्षीणै· क्लेशैः परिक्षीणैरविद्यादिभिर्हेतुभि. जन्ममृत्योः ( त्वो ) प्रहाणि. । जन्म च मृत्युश्च जन्ममृत्यू । आद्यन्तयोर्विकारयोर्ग्रहणमस्तीत्यादिविकाराणामुपलक्षणार्थम् । तयो. प्रकर्षेण हानिः परित्यागः । जन्ममृत्युप्रहाणिरिति पाठे जन्ममृत्यो.(त्वो ) इति व्याख्येयम् । तस्याभिध्यानात् । पूर्वोक्तस्य प्रतीकोपादानमिदम् । आत्मनः सर्वतो ध्यानात् सर्वमिदमात्मेति विज्ञाने शत्रुमित्राद्यविद्याया अपगम. प्रथमम् । अह ब्रह्मास्मीत्यात्मनो ब्रह्मणा तादात्म्ययोगज्ञानाद्विपरीतज्ञानादहंकाररागद्वेषाभिनिवेशरूपाविद्यापगमो द्वितीयम् । प्रारब्धकर्मक्षयान्ते संस्काराणामप्यात्मभावेन स्वरूपेण सत्त्वात्तृतीय विश्वमायानिवृत्तिरूप देहभेदे ब्रह्मज्ञानिनोऽनधिकारिणो वर्तमानदेहपाते विश्वैश्वर्यं अनावृतस्वयप्रकाशमानानन्दात्मरूप केवलः अविद्यालेशेनाप्यपरामृष्ट स्वभावः तत एव आप्तकामः आनन्दात्मप्रकाशेनाऽऽप्ता निखिला. कामा येन स आप्तकामः । देहभेदे केवल आप्त कामस्तृतीय विश्वैश्वर्यं प्राप्नोतीति शेष. । शंनन्द.

(१) श्वेउ १।११, ब्रशांकर ३।२।५, भास्कर. ३।२।५, श्रीकर १।२।१ ( पृ ९४ ), २।२।४२ ( पृ २४७), ३।३।६१, ४।१।१२, बलदेव. ३।३।२७, ३४

( २ ) 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' – किं पुनर्जीवस्य ईश्वरसमानधर्मत्वं नास्त्येव, न नास्त्येव। विद्यमानमपि तत् तिरोहितं अविद्यादिव्यवधानात्। तत्पुनस्तिरोहितं सत् परमेश्वरमभिध्यायतो यतमानस्य जन्तोर्विधूतध्वान्तस्य तिमिरतिरस्कृतेव दृक्शक्तिः औषधवीर्यात् ईश्वरप्रसादात्संसिद्धस्य कस्यचिदेवाविर्भवति, न स्वभावत एव सर्वेषां जन्तूनाम्। कुतः। ततो हि ईश्वराद्धेतो, अस्य जीवस्य, बन्धमोक्षौ भवतः। ईश्वरस्वरूपापरिज्ञानात् बन्धः, तत्स्वरूपपरिज्ञानात्तु मोक्षः। तथा च श्रुतिः— 'ज्ञात्वा देवं ' इत्येवमाद्या। ३।२।५

'देहयोगाद्वा सोऽपि'—सोऽपि तु जीवस्य ज्ञानैश्वर्यतिरोभावः, देहयोगात् देहेन्द्रियमनोबुद्धिविषयवेदनादियोगाद्भवति। ब्रशंकर ३।२।६

( ३ ) 'एतावन्तो वै पशवस्ते द्विपादश्चतुष्पादः' इति, 'य ईशे पतिः पशूनां चतुष्पदामुत द्विपदाम्' इति, 'तस्माद्रुद्रः पशूनामधिपतिः' 'ज्ञात्वा देवं सर्वपाशापहानिः' 'ध्याननिर्मथनाभ्यासात्पाशं दहति पण्डितः' इत्यादिवाक्यानां प्रात्यक्षिकवेदवेदान्तेषु दर्शनात्पतिपाशपशुपदार्थत्रयप्रतिपादकशैवागमानां वैदिकत्वं घण्टाघोषः। १।२।१ (पृ ९४)

'ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः। तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः ॥' इत्यादिना तृतीयदेहसंज्ञकतमोज्ञाननिवृत्तिपूर्वकशिवसाक्षात्कारपर्यन्तं शिवोपासनं दृष्टम्। श्रीकर ४।१।१२

* एतज्ज्ञेयं नित्यमेवाऽऽत्मसंस्थं
नातः परं वेदितव्यं हि किंचित्।
भोक्ता भोग्यं प्रेरितारं च मत्वा
सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ॥

( १ ) इदानीमुक्तमर्थमुपसंहरति—एतत् उक्तमभिरूपं ज्ञेयं साक्षात्कर्तव्यं नित्यमेव सर्वदैव आत्मसंस्थं स्वात्मनि वर्तमानं स्वात्मरूपमिति यावत्। ननु यथैतज्ज्ञातव्यं सर्वेभ्यः परं, तथा अस्मादपि परं किंचित्स्यादित्यत आह—नातः परं वेदितव्यं हि किंचित्। यस्मादस्मादधिकं न किंचिद्वेदनीयं, तस्मादिदमेव परमिति शेषः। उक्तं त्रयमाह— भोक्ता अनीशोऽजः, भोग्यं अजास्वरूपं, प्रेरितारं च प्रेरयितारं च ईशमजमपि मत्वा भोक्तारं भोग्यं प्रेरयितारं चावगत्य सर्वं निखिलं ब्रह्मविद्भिः प्रोक्तं प्रकर्षेण कथितम्। त्रिविधं तिस्रो विधाः प्रकाराः भोक्तृभोग्यप्रेरयितृरूपा यस्मिंस्तत् त्रिविधम्। ब्रह्ममेतत् एतत् त्रिविधमुक्तं ब्रह्म ब्रह्म। शानन्द.

( २ ) यश्च परैः सिद्धब्रह्मपरत्वे वेदान्तानामुपक्रमादिभिस्तात्पर्यसमन्वय उक्तः, सोऽपि विपरीत एव। तथा हि—'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥' इति तात्पर्यग्राहकलिङ्गानां मध्ये फलार्थवादयोरसिद्धे ब्रह्मविज्ञाने एव संभवः, न तु ब्रह्मणि, ब्रह्मज्ञानस्यैव 'य एवं वेद' इत्यादिना फलश्रवणाच्च, 'नातः परं वेदितव्यं हि किंचित्' इत्याद्यर्थवादस्यापि ज्ञान एव श्रवणाच्चेति। तस्माद्ब्रह्मज्ञान एव तात्पर्यग्राहकसमग्रलिङ्गोपपत्तेः ब्रह्मज्ञानाख्यकार्यपरत्वमेव वेदान्तानाम्। १।१।४

'वदतीति चेन्न प्राज्ञो हि प्रकरणात्'— ननु एतज्ज्ञेयं नित्यमेवात्मसंस्थं . सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इत्यनेनास्मिन्प्रकरणे प्रधानस्य भोग्यशब्दवाच्यस्य ज्ञेयत्वं श्रुतिर्वदतीत्याशङ्क्य समाधत्ते—वदतीति चेन्नेति। यदुक्तं, तन्न, प्राज्ञ ईश्वर एव ह्यत्र ज्ञेयतयोपदिश्यते, न त्वेतच्छब्देन भोक्त्रादित्रयं परामृश्य तस्य ज्ञेयत्वमुच्यते। कुतः। प्रकरणात्, ब्रह्मणः प्रकरणित्वेन तस्यैव एतच्छब्देन परामर्शस्य युक्तत्वादित्यर्थः। भोक्त्रादित्रयं तु मत्वेत्यनेनैवान्वेति। भोक्तेत्यस्य विभक्ति-

* ३।२।१३ इति सूत्रगतब्रशंकरभाष्यटीकायां आनन्दगिरिभिः 'ब्रह्म मे तत्' इति पदविभागमास्थाय 'तत्सर्वं त्रिविधं मे मम प्रोक्तं ब्रह्मैवेति जानीयात्' इति व्याख्यातम्।

(१) श्वेउ १।१२, ब्रशंकर ३।२।१३ ब्रह्ममेतत् (ब्रह्म मे तत्), भास्कर ३।२।१३ भोक्ता ( भोक्तारं ) ब्रह्ममेतत् ( ब्रह्मैतत् ), रामानुज १।१।१ ( पृ ११७ ), श्रीकंठ १।१।२ ( पृ १२४ ) भोग्यं (भोज्यं), विज्ञान. १।१।४ ( पृ १२० ), १।४।१, ५, ४।१।१

व्यत्ययेन भोक्तारमित्यर्थः । प्रेरिता देवतावर्गः ।

विज्ञान १।४।५

परमात्मदर्शनोपाय प्रणवध्यानतप सत्यानि

[1]वह्नेर्यथा योनिगतस्य मूर्ति-
र्न दृश्यते नैव च लिङ्गनाशः ।
स भूय एवेन्धनयोनिगृह्य-
स्तद्वोभय वै प्रणवेन देहे ॥

'पृथगात्मान प्रेरितार च मत्वा' इत्यादिना ब्रह्मज्ञानान्मोक्ष उक्तः, ब्रह्मज्ञाने च नोपायः, ततस्तदुपाय माह — वह्नेः अग्नेः यथा येन प्रकारेण योनिगतस्य अरणिगतस्य मूर्तिः दाहप्रकाशक्षम स्वरूप न दृश्यते उपायप्रकारेण चक्षुषा त्वचा वा नोपलभ्यते । ननु तर्हि योनौ नास्त्येव स इत्यत आह—नैव च लिङ्गनाशः। लिङ्गस्य काष्ठद्वयसघर्षणजन्यस्योष्मणो नाशो विनाशः । चकारोऽप्यर्थः । नैव लिङ्गनाशोऽपि नास्त्येव । सति लिङ्गे लिङ्गिनोऽपि सत्त्वमित्यर्थः । स काष्ठस्थोऽग्निर्लिङ्गेन गृहीतः भूय एव पुनरेव मथनोपायेन इन्धनयोनिगृह्यः, इन्धन अरणिः योनिः कारणमस्य स इन्धन योनि॰, गृह्यः चक्षुषा ग्रहणयोग्यः, इन्धनयोनिश्चासौ गृह्यश्चेतीन्धनयोनिगृह्य॰ । तद्व तद्वत् उभय वै परमपर च ब्रह्म प्रसिद्ध प्रणवेन ओंकारेण देहे शरीरे हृदयाब्ज मध्ये । पर चेद्ब्रह्म अभिधेयत्वेन, अपर चेदुपास्यत्वेन प्रणवेन गृह्यते इत्यर्थः ।

शंनन्द

[2]स्वदेहमरणिं कृत्वा प्रणव चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासादेव पश्येन्निगूढवत् ॥

'प्रणवेन देहे' इत्युक्त, तदेतद्याकरोति — स्वदेह स्वशरीर शरीरेणोपलक्षित हृदय अरणिं कृत्वा प्रणव चोत्तरारणिं उत्तरारणिमप्योंकार कृत्वेति चकारात्, ध्याननिर्मथनाभ्यासात्, ध्यान प्रणवाभिधेयत्वेन प्रणवालम्बनत्वेन वा ब्रह्मणश्चितन, तदेव निर्मथन उत्तरारण्याक्रान्तस्य मथ इव निरन्तर भ्रमणमधरारणौ, तस्याभ्यासो यावत्साक्षात्कारमनुवर्तन, तस्मात् देव स्वयप्रकाशेनाऽऽत्मस्वरूप पश्येत् साक्षात्कुर्यात् निगूढवत् काष्ठनिगूढाग्निः काष्ठसघर्षेण यथा, तद्वत् । शंनन्द

[1]तिलेषु तैलं दधिनीव सर्पि-
राप स्रोत स्वरणीषु चाग्नि ।
एवमात्माऽऽत्मनि गृह्यतेऽसौ
सत्येनैन तपसा योऽनुपश्यति ॥

यथाऽग्नेर्मथनेन प्राकट्यमिति दृष्टान्त एक एव चेन्नास्मिन्नादर इत्यत आह — तिलेषु तैल, स्पष्टम् । यथोपायलभ्यमिति शेषः । दधिनीव सर्पिः घृत यथा दध्नि । उपायलभ्यमिति शेषः । आपः स्रोतःसु स्रोतःशब्दोपलक्षितासु नाडीषु उदकानि । यथोपायलभ्यानीति शेषः । अरणीषु च अरणिष्वपि अग्निः वह्निः । चकारोऽनेकदृष्टान्तसमुच्चयार्थ । एव यथा पीडनलोडनखननमथनैस्तैलघृताबग्नीनामुपलम्भः, तथा प्रणवादिना आत्मा स्वयप्रकाशचिदानन्दाद्वितीयस्वरूपः आत्मनि देहपुण्डरीके अन्तःकरणे स्वस्वरूपे वा गृह्यते साक्षात् क्रियते असौ अस्मद्बुद्धेः साक्षी । इदानीमुपायान्तरमाह — सत्येन सत्यवचनेन ब्रह्मस्वरूपेण वा एन आत्मान तपसा कृच्छ्रचान्द्रायणादिना स्वधर्मेण ब्रह्मज्ञानेन वा यः अधिकारी अनुपश्यति श्रवणादिकमनु अवलोकयति । तेनापि गृह्यते इति शेषः । शंनन्द

[2]सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् ।
आत्मविद्यातपोमूल तद्ब्रह्मोपनिषत्परं तद्ब्रह्मोपनिषत्परमिति ॥

यः सत्यादिभिरुपलभ्य आत्मा, नासावुपचरितस्वरूपः, किन्तु ब्रह्मेत्याह—सर्वव्यापिन आकाशवत्सर्वस्य वस्तुजातस्य आकाशादेरधिकव्यापक आत्मान अस्मद्बुद्धिसाक्षिण स्वयप्रकाशचिदानन्दस्वरूपमित्यर्थः । एव वर्तमानोऽपि नोपायमन्तरेण लभ्य इत्याह—क्षीरे सर्पिरिवार्पितम् । यथा क्षीरे घृत वस्तुस्वभावेन समर्पितं विद्यमानमपि नोपायमन्तरेण लभ्य, तद्वत् सर्वत्र सन्नप्ययमात्मा नोपायमन्तरेण लभ्यते इत्यर्थः । उपाय सदर्शयन्सर्वकारणतामात्मन आह—आत्मविद्यातपोमूलम् ।

(१) श्वेउ १।१३
(२) श्वेउ १।१४, श्रीकठ ४।१।८, श्रीकर १।१।१ (पृ. ४, १२)

(१) श्वेउ १।१५
(२) श्वेउ १।१६, शनन्द त्पर (त्पद) त्परमिति (त्पदमिति).

आत्मनः स्वयप्रकाशचिदानन्दस्वरूपस्य विद्या उपासन श्रवणमननादि तज्जन्य. साक्षात्कारश्च, तप आत्मज्ञान-साधन स्ववर्णाश्रमोचिताचाररूपम्। तयो' प्रवृत्तिनिवृत्त्या त्मकयोः। विद्यातपोभ्या निखिलस्य जगतोऽप्युपलक्षणम्। मूल उपादानकारण तत् सत्यज्ञानादिलक्षण ब्रह्म सर्व-स्मादधिक त्रिविधपरिच्छेदशून्यमित्यर्थ' । उपनिषत्प-दम् । सदेरुपनिपूर्वस्य ससारविनाशार्थस्य गत्यर्थस्य अविद्यादिबन्धशिथिलीकरणार्थस्य च ब्रह्मज्ञानमन्तरेणा-सभवादुपनिषद्ब्रह्मज्ञान, तस्य पद विषय', ब्रह्मज्ञानैकबो-ध्यमित्यर्थः । यद्यपि पञ्चाध्यायी योगाल्पाधिकपुरुष नीलपतङ्गादिज्ञानमायाप्रकृतितत्सभिन्नजगत्कारणत्वकाला दिपक्षव्युदासचिदेकरसात्मावगत्यर्था वक्ष्यते, तथाऽपि अनेककारणपक्षोपन्यासेनाऽऽत्मशक्तेर्दर्शनस्य तत्सभेदेन ससारचक्रससारनदीरूपकयोश्च तत्र ससारिण' ससरणस्य स्वाभिन्नपुरुषदर्शनान्मुक्तेश्चाविद्यायाश्च भेददर्शनहेतुत्वस्य सर्वत्र सत आत्मनो वह्न्यादिवत्प्रणवाद्युपायैरुपलब्धेश्च सक्षेपेण तत्स्वरूपस्याप्यभिधानाच्छास्त्रार्थस्यात्रैव परि-समाप्तेरुपरि पञ्चाध्याय्या वृत्तिस्थानीयत्वादस्य सूत्र-स्थानीयस्याध्यायस्यान्ते शास्त्रसमाप्त्यर्थ' पादाभ्यासः । तत् ब्रह्मोपनिषदम् । व्याख्यातम् । इति अध्याय-परिसमाप्तौ । शनन्द

इति प्रथमोऽध्याय ॥

---

## द्वितीयोऽध्यायः

प्रथममनोयोगबुद्धिविस्तारकर्ता सविता, सवितु अनुज्ञया युक्तमनसा स्वर्गार्थ यत्न , विप्रा बुद्धिमनोयोगसाधका , अमृतपुत्रै श्रवणीय वेदस्तोत्रम्

**युञ्जानः प्रथमं मनस्तत्त्वाय सविता धिय ।**
**अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥**

आत्मनो ब्रह्मविज्ञानेनावगमादविद्यानिवृत्तेर्निरतिशय-पुरुषार्थसिद्धिरित्युक्त, ब्रह्मज्ञाने च केचनोपाया. 'स्वदेह-मरणिं कृत्वा ' इत्यादिना । बहिर्मुखस्य सर्व मिद कुञ्जरशौचवत्स्यात्, अतो बहिर्मुखतानिवार णार्थमस्मिन्नध्याये उपाय. प्रायेण कथ्यते प्रसङ्गादा त्मस्वरूपमपि । युञ्जानः योग कुर्वाण. प्रथम आदौ । सर्वेषु प्रणवाद्युपायेषु प्रथमोपायस्त्वय योग-लक्षण , तदभावे पण्डकस्येव वन्ध्याया पुत्रार्थनमि त्यर्थः । किम् । मन' । मन शब्देन ज्ञानशक्तिरन्त -करणमभिधीयते । अतिप्रमाथिनामिन्द्रियगजाना सप्रा णाना न विना मनोङ्कुशेन धारण, ततो मन एव प्रथम योक्तव्य, मनोमूलत्वात्सर्वानर्थस्य । मनसि स्थिते सर्वं सुस्थित स्यादित्यर्थ । तत तत्त्वाय आत्म-याथात्म्याय सविता उत्पादक धिय' बुद्धे. । किं कृत्वा । अग्निं अग्रेसर ज्योति' स्वयप्रकाशस्वरूप निचाय्य मनसा दृष्ट्वा । प्रथम मनो युञ्जानस्तेन मनसा समाहितेनाग्निं ज्योतिर्निचाय्य ततस्तत्त्वाय धियः सवितेत्यन्वय. । स्यादिति शेष । इदानीं तत्त्वार्थ-धिय उत्पादे फलमाह — पृथिव्या ब्रह्माण्डगोलक-रूपाया स्थूलाया विराट्शब्दोक्ताया सूक्ष्मायाश्च सूत्रात्मशब्दोक्ताया अध्याभरत् अधि अधिक अव्याकृत आ समन्तात् अभरत् अबिभ धारितवान्पोषित-वान्वा । यथा आद्योऽधिकारी, तथा आधुनिकोऽपी-त्यर्थ. । योगेन सर्वात्मा भवतीत्यर्थ' ।

शनन्द

**युक्तेन मनसा वय देवस्य सवितु सवे ।**
**सुवर्गेयाय शक्त्या ॥**

इदानीं मन्त्रद्रष्टा आत्मनि बहुत्वमारोप्योक्त योग वयमप्यनुष्ठास्याम इत्याह—युक्तेन योगवता मनसा अन्त.करणेन वय मन्त्रद्रष्टार. देवस्य स्वयंप्रकाशस्य सवितु सर्वप्राण्युत्पादकस्य । सवे प्रसवार्थम् । स्वर्गेयाय, स्वर्गिभिर्गीयते प्रार्थ्यते इति स्वर्गेयः अविद्यानिवृत्तिरूपो मोक्ष , तस्मै स्वर्गेयाय । शक्त्यै शक्त्यर्थे, शक्त्येति यावत् । देवस्य सवितु शक्त्या युक्तेन मनसा वय सवे स्वर्गेयाय प्रभवाम इति शेष' ।

शनन्द.

---

(१) श्वेउ २।१, शनन्द अग्ने ( अग्निं )

(१) श्वेउ २।२, शनन्द. सुवर्गेयाय शक्त्या ( स्वर्गेयाय शक्त्यै )

**युक्त्वाय मनसा देवान्सुवर्यतो धिया दिवम् ।**
**बृहज्ज्योति करिष्यत. सविता प्रसुवाति तान् ॥**

युक्त्वाय युक्त्वा मनसा अन्त करणेन देवान् द्योतनात्मकानिन्द्रियरूपान् स्वर्यतः, स्व. स्वर्गः सुख वैषयिक, तदर्थं यन्तीति स्वर्यन्तः, तान्स्वर्यत. । क्वचित्पाठे स्वरिति यत्पृथक्पद, तत्स्वरार्थम् । तस्मिन्पक्षे स्वः सुख, तदुद्दिश्य यन्त इति व्याख्येयम् । धिया बुद्ध्या दिव द्योतनात्मक विषयजात बृहत् अधिक ज्योति. प्रकाशरूप करिष्यत करिष्यमाणान् सविता उत्पादकः प्रसुवाति प्रसूते इत्यर्थः । तान् देवान् । देवस्य सवितु. शक्त्या मोक्षोत्पादनाय वय प्रभवामेति यदुक्त, तदनेन मन्त्रेण प्रकटीकृतम् । यस्माद्देवान्सुखार्थं गच्छतो दिव ज्योतिर्बृहत्करिष्यतस्तत्तदनुभवेन विषयजातमतिप्रौढ कुर्वतो मनसा ईश्वर एवेदमिति सवितृबुद्ध्या सयोज्य वर्तामहे। ततो न त उत्पत्स्यन्ते देवा विषयाभिमुखा इति शेषः । तत्र हेतु.—सविता प्रसुवाति तान् सवितैव तेषामुत्पादकः । सवितृबुद्ध्या चेदिद सर्वं गृहीत, कुतस्तेषामुत्पत्तिरित्यर्थ । शनन्द

**युञ्जते मन उत युञ्जते धियो**
**विप्रा विप्रस्य बृहतो विपश्चित ।**
**वि होत्रा दधे वयुनाविदेक**
**इन्मही देवस्य सवितुः परिष्टुति ॥**

इद पूर्वेऽपि कृतवन्त इत्याह—युञ्जते योग कुर्वन्ति मन' अन्त'करणम् । उत युञ्जते अपि योग कुर्वन्ति धिय' बुद्धिवृत्ती. । विप्राः ब्राह्मणा. । विप्रस्य ब्राह्मणजातिकारणभूतस्य बृहत ब्रह्मण विपश्चितः स्वयप्रकाशचिदेकरसस्य । वि होत्रा' होतार दधे विदधे विधारितवान् । वयुनावित् अभिप्रायज्ञः एकः भेदशून्य. इत् इत्थ मही महीयसी । देवस्य सवितुः । व्याख्यातम् । परिष्टुतिः समन्तात्स्तुतिः । एको वयुनाविद्दिदधे इद समग्रमिति शेष. । विप्रस्य बृहतो विपश्चितो देवस्य सवितु परिष्टुतिः एक इत्यादिरूपा, इत्थज्ञानवन्त' प्राणेऽपानहोमपरा मनो युञ्जते उत धियो युञ्जते इत्यन्वयः ।

शनन्द.

**युजे वां ब्रह्म पूर्व्यं नमोभिर्विश्लोकायन्ति पथ्येव सूरे ।**
**शृण्वन्ति विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥**

इदानीं मन्त्रद्रष्टा जीवपरमात्मानौ उररीकृत्याऽऽह — युञ्जे योग तादात्म्यलक्षण कुर्वे । वा युवयो. ब्रह्म पूर्व्यं, युवाभ्या पूर्वं वर्तमान चिदानन्दैकरसमेक ब्रह्म त्रिविधपरिच्छेदशून्य यस्मात्, तस्मै ब्रह्मणे नमोभिः नमस्कारै. विश्लोकायन्ति विविधकीर्तिं स्वात्मनः कुर्वाणा वर्तन्ते, विविधकीर्तिमन्तो वा यन्ति तद्ब्रह्म गच्छन्ति । तत्र दृष्टान्त. — पथ्येव । पथ्या पथा सन्मार्गेणेत्यर्थ । यथा सूरे. सूराः सूरय इत्यर्थ । यथा पण्डिता स्ववर्णाश्रमोचितकर्मानुष्ठानैर्विश्लोकायन्ते, तद्वदपण्डिता अपि ब्रह्मणे नमोभिर्विश्लोकायन्ति सूरय इत्युक्तम् । तर्हि किं स्वयमेव कीर्तिं कुर्वन्तीत्याशङ्क्य नेत्याह — शृण्वन्ति अन्यै. क्रियमाणा स्वात्मन. कीर्तिं कर्णपुटाभ्यां पिबन्ति विश्वे सर्वे अमृतस्य मरणशून्यस्य ब्रह्मणः पुत्रा. तनया. आ ये प्रसिद्धा धामानि स्थानानि दिव्यानि दिवि भवानि तस्थु. आतस्थु. स्वधर्मानुष्ठानेन प्राप्तवन्त ।

शनन्द.

सोमयज्ञे मनस सजनन, अक्षयकर्महेतु , इन्द्रियमनोनिरोधात्मको योग , भयावहस्रोतस्तरणहेतु , प्राणायाम , योगानुकूलभूमि

**अग्निर्यत्राभिमथ्यते वायुर्यत्राधिरुध्यते ।**
**सोमो यत्रातिरिच्यते तत्र सजायते मनः ॥**

मनसो योगस्त्वसकृदुक्तः, न पुनरस्मिन्निति, ततस्तत्स्थलमाह — अग्निः प्रसिद्धो दाहपाककारी यत्र यस्मिन्नाधारे अभिमथ्यते समन्तान्मथनेनोत्पाद्यते । नन्वरणिः स्यादित्यत आह — वायु. प्रसिद्धो नभस्वान् यत्र

(१) श्वेउ २१३, शनन्द सुवर्यत ( स्वर्यत )
(२) श्वेउ २१४

(१) श्वेउ २१५, शनन्द युजे ( युञ्जे )
(२) श्वेउ २१६ , शनन्द त्राधिरु (त्राभिरु), श्रीकर. २।३।६१

यस्मिन्स्थले अभिरुध्यते सर्वतो निरुध्यते अस्त गच्छती त्यर्थ'। अधिरुध्यते इति वा पाठ । तत्र अधिक सर्वात्मना रुध्यते विनश्यतीत्यर्थ । नन्वाकाशः स्यादित्यत आह -- सोम चन्द्रमाः यत्र यस्मिन्स्थले अतिरिच्यते । यदीयतेजसा, सोम इत्युपलक्षण, ज्योतिर्जातमभिभूयते । तत्र तस्मिन्स्थले सजायते योगावस्थ तत्सम्यगुत्पद्यते मन अन्त करणम् । पुनरिति पाठे योग युक्तमना पूर्वे जातोऽपि शरीरेण, पुन सोऽहमस्मीति ब्रह्मरूपेण सजायते तस्मिञ्जन्मनि स पुमास्तन्मनो वा ।

शनन्द

सवित्रा प्रसवेन जुषेत ब्रह्म पूर्व्यम् ।
तत्र योनिं कृणवसे न हि ते पूर्तमक्षिपत् ॥

सवित्रा जगत्कारणेन । सवितृशब्दार्थमाह — प्रसवेन । प्रकर्षेण सूते इति प्रसवो जगत्कारण, तेन जुषेत जुष्ट स्यात्, तेन निरतिशयप्रीतिमान् क्रियते इत्यर्थ । ननु ब्रह्माहमस्मीति जानन्सवित्रा प्रीतिमान् क्रियते इति व्यधिकरणमित्यत आह — ब्रह्म । येनाय प्रीतिमान् क्रियते स सविता ब्रह्म त्रिविधपरिच्छेदशून्यमनेनाऽऽत्मत्वेन गृहीत, ततो न वैयधिकरण्यमिति भाव. । ब्रह्मशब्दस्य जात्याद्यर्थान्तरता वारयति — पूर्व्यं सर्वस्मात्पूर्वं वर्तमानम् । ततो न जात्याद्यर्थान्तरमित्यर्थ. । मनसो योगावस्थस्य स्थानमुक्त्वा योगसपन्नो मन्त्रद्रष्टा स्वकीय योगयुक्त मन उररीकृत्याऽऽह — तत्र तस्मिन् पूर्वे(र्व्ये) ब्रह्मणि योनिं स्थान कृणवसे कुरुषे । योनिं माया वा जगत्कारणभूतां स्वजननीं कृणवसे हसि । न हि ते यस्मात्तव, वृत्तिमिति शेष., अस्मिन्ब्रह्मणि प्रवृत्तां पूर्ते कूपारामादिकरणजन्यम दृष्ट, पूर्तमित्युपलक्षण, शुभाशुभ कर्म निखिलमपि अक्षिपत्, क्षेपण बहिर्मुखत्वेन गमन, तन्नाकरोत ।

शंनन्द.

[1]त्रिरुन्नत स्थाप्य समं शरीर
हृदीन्द्रियाणि मनसा सनिवेश्य ।
ब्रह्मोडुपेन प्रतरेत विद्वान्
स्रोतांसि सर्वाणि भयावहानि ॥

(१) 'युञ्जान.' इत्यारभ्य 'अक्षिपत्' इत्यन्तैः सप्तभि (षड्भि. ?) मन्त्रैर्मनसो निग्रहः परमपुरुषार्थसाधनमित्युक्तम् । स एव विनोपाय 'प्राणिभिरतिदुष्कर इत्यतः सानुकम्पा मातेव श्रुतिस्तत्रोपायमाह --त्रिः उदरे असयो स्तनयोर्मध्ये च उन्नत वायुपूरणेन प्रासौन्नत्य स्थाप्य सस्थाप्य सम ऋजु दण्डवदमुम शरीर, शीर्यते इति शरीरम् । शरीरपदादानेन तत्राऽऽस्था निवारिता । समत्वेन च वायुप्रकोपपर्यन्त नाभ्यास. करणीय इति सूचितम् । त्रिरौन्नत्येन च तन्द्याद्यभाव, सस्थापनेन च प्रेतासनाद्यभावः । अनेनैतदुक्तम्--विना शिनि शरीरेऽत्यन्तमास्थामकुर्वाणो वायुप्रकोप वर्जयन् स्वाधीन आसने तन्द्यादिरहित उपविशेत् । न केवलमुपवेशन, किं त्विन्द्रियाणा प्रत्याहारश्च करणीय इत्याह --हृदि हृदयसरसिजे पद्माकारे मासखण्डे पञ्चच्छिद्रे इन्द्रियाणि बाह्यानि ज्ञानकर्मका( क )रणानि मनसा इन्द्रियाश्वप्रग्रहभूतेन सनिवेश्य सम्यक् नितरा प्रवेशन कारयित्वा । अय भाव --कर्मेन्द्रियाणि सुस्थितशरीरत्वेन स्वयमेव व्यापारेभ्य उपरतानि । अत आसनस्य तत्रोपयोग । प्राणायामाङ्कुशेन प्राणव्यालस्य स्वेच्छाप्रचारान्निवर्तन, तत्र प्राणायामस्योपयोग. । यमनियमयो श्चादृष्टविशेषकरत्वात् धारणाध्यानसमाधीना च जितेन्द्रियत्वे भावितत्वात्प्रत्याहारोऽवशिष्यते । तथा च यमनियमाभ्यामुत्पन्नससारवैराग्यो विशुद्धबुद्धिरासनेन कर्मेन्द्रियाणि जित्वा विषयस्मरणप्रतोत्रेण प्रणुन्नान् ज्ञानेन्द्रियाश्वान्विषयेषु दोषदर्शनेन मानसेन प्रग्रहेण पुनः स्वहृदये नयेत् । इदानीं रूपकरूपेणाऽऽह--ब्रह्मोडुपेन । ब्रह्म देशकालवस्तुपरिच्छेदशून्य विषय., तेन तज्ज्ञान लक्षयति । उडुप नीरपूरतरणकारणभूतो दृढबन्धबद्ध. काष्ठ समुच्चय.। ब्रह्मज्ञानोडुपेन प्रतरेत प्रकर्षेण तरण कुर्यात् । कः । विद्वान् ब्रह्मज्ञानवान् । कानि । स्रोतासि स्रोतोवद्बहिर्मुखानि प्रवृत्तानीन्द्रियाणि । यद्यपि प्रत्याहारस्यापीदमेव कृत्य, तथाऽपि प्रत्याहारो गोपालवद्दुर्दान्तान् वृषभानिव बलादेवेन्द्रियाश्वान्हृदयवाटे मनोर्गलेन निरुणद्धि । तथा निरुद्धा अपीन्द्रियाश्वा. प्रमाथिन. इव वृषभाः

(१) श्वेउ २।७
(२) श्वेउ २।८, ब्रशाकर २।१।३, भास्कर २।१।३, श्रीकर २।१।३, ३।३।६१, ४।१।७, बलदेव २।१।३, ४।१।७

मनोर्गलमप्यादाय बहिर्गच्छन्ति विना धारणाध्यानसमाधीन् कशान्, ततो न विरुद्धस्तेषामपि तत्रोपयोग । स्रोतशब्देन विक्षेपमात्रमुक्त, विक्षेपश्च सर्वोऽप्यनर्थहेतु प्रसिद्ध., तदभिप्रायेणाह —सर्वाणि निखिलानि । ननु सर्वा प्रवृत्तय सर्वेषामिन्द्रियार्थानामनर्थहेतव इति न मन्यामहे, लोकद्वयेऽपि भूयस सुखस्याप्युपलम्भादित्यत आह—भयावहानि । यद्यपि क्वचिच्छरीरे कदाचिद्वा बहिर्मुखानीन्द्रियाणि सुखार्थानीति प्रौढीप्रसिद्धि, तथाऽपि तत्रापि क्षुधादिजन्यस्य भयस्य मूढानामपि सप्रतिपत्तेः स्वप्रवृत्त्या स्वप्रवृत्तिफलेन वा भयं सत्रासरूपमावहन्ति समन्तात्सर्वेषु शरीरग्रहणेषु प्रापयन्तीति भयावहानि । अयमर्थ. — विक्षेपस्याऽऽवरणापगममन्तरेण सर्वात्मनाऽनपगमनादावरणविक्षेपात्मिकाऽविद्या ब्रह्मसाक्षात्कारेण धारणाध्यानसमाधिजन्येन नश्यतीति ।

शनन्द.

( २ ) 'त्रिरुन्नत स्थाप्य सम शरीरम्' इत्यादिना च आसनादिकल्पनापुर सर बहुप्रपञ्च योगविधान श्वेताश्वतरोपनिषदि दृश्यते ।

* ब्रशकर २।१।३

( ३ ) 'आसीनः सभवात्' — 'त्रिरुन्नत स्थाप्य . भयावहानि' इति श्वेताश्वतरे, 'विविक्तदेशे तु सुखासनस्थ. शुचि समग्रीवशिरःशरीर. । अन्त्याश्रमस्थ सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरु प्रणम्य ॥' इति कैवल्ये श्रूयते । सुखासने समासीन. सन् दहराद्युपासनारूपशिवैकध्यान कुर्यात् । कुत' । सभवात् । पद्मासनाद्यासनेषु समासीनस्यैव चित्तैकाग्र्यसभवात् । श्वेताश्वतरे कैवल्याद्युपनिषत्सु ( च ) ब्रह्मविद्याकामानामासनपूर्वकत्वेन तदुपासनाविध्युपदेशादारूढानामासननियमाभावेऽप्यारुरुक्षूणामासनमुद्रालक्ष्याभ्यासनियमो न विरुध्यते ।

श्रीकर ४।१।७

**प्राणान्प्रपीडयेह स युक्तचेष्टः**
**क्षीणे प्राणे नासिकयोच्छ्वसीत ।**
**दुष्टाश्वयुक्तमिव वाहमेनं**
**विद्वान्मनो धारयेताप्रमत्त' ॥**

त्रिरुन्नत स्थाप्येत्यादेर्विशेषमाह — प्राणान् नवभिर्द्वारैर्निर्गच्छतो वायून् प्रपीड्य प्रकर्षेण पीडन निरोधन कृत्वा योगकुशलेन गुरुणोपदिष्टेन मार्गेण, इह अस्मिन् शरीरे सः प्राणनिरोधस्य कर्ता युक्तचेष्टः युक्ता जीवनमात्रोपयोगिनी योगार्था चेष्टा यस्य स युक्तचेष्टः । प्राणक्षय प्राप्नुयादिति शेषः । तत क्षीणे प्राणे सर्वेभ्यो द्वारेभ्य उपरते दण्डवद्व्यवस्थिते वायौ मन्द मन्द नासिकयो नासापुटयो' श्वसीत श्वास कुर्यात् । व्यापारान्तरमाह—दुष्टाश्वयुक्तमिव प्रबलैरशिक्षितैरश्वै. सबद्धमिव वाह अध्वन परपारस्य नेतार, प्रग्रहभूतमित्यर्थः । एन उक्त प्रत्यक्षमिव, विद्वान् धारणादियुक्तो ब्रह्मज्ञानवान् मन' अन्त'करण शरीररथस्येन्द्रियाश्वाना प्रग्रहभूत धारयेत स्वसारथिनाऽन्त करणभेदेन धीरूपेण धारण कारयेत् अप्रमत्त' कामक्रोधादयो मदा विद्यादिरूपा वा, तद्रहितः । जितानामपीन्द्रियाश्वाना वैरिणामिव विश्वास न कुर्यादित्यर्थ' । शनन्द.

**समे शुचौ शर्करावह्निवालुका-**
**विवर्जिते शब्दजलाश्रयादिभि ।**
**मनोऽनुकूले न तु चक्षुपीडने**
**गुहानिवाताश्रयणे प्रयोजयेत् ॥**

( १ ) आसनार्थे देशविशेषमाह — समे अनिम्नोन्नते । शुचौ केशास्थ्याद्यदूषिते । शर्करावह्निवालुकाविवर्जिते । शर्करा' क्षुद्रा. पाषाणाः । वह्निर्दाहपाककरं तेज. । वालुका. सिकता. । एताभिर्विवर्जिते । शब्दजलाश्रयादिभि. । शब्दो ध्वनिविशेषो वर्णात्मको वा । जलाश्रयः अतिशीतलप्रदेशः । आदिशब्देन सिंहसर्पाद्याश्रयः । तैः शब्दादिभिः । विवर्जिते इति समस्तपदादनुवर्तते । किं बहुना, मनोनुकूले मनसोऽनुरागजनके । न तु चक्षु.पीडने । अनेनैतदुक्त — दर्शनीये मनस. स्वास्थ्यकरे च । इद च दृष्टार्थे, वैपरीत्ये अष्टाङ्गयोगस्य

---

* भास्कर ब्रशकरवत् ।

(१) श्वेउ २।९, शनन्द योच्छ्व ( योः श्व ), श्रीकर ३।३।६१

(१) श्वेउ २।१०, शनन्द चक्षुपी ( चक्षु पी ) श्रयणे ( श्रयेण ), ब्रशकर ४।१।११, भास्कर ४।१।११ विवर्जिते ( वर्जिते ) चक्षुपी ( चक्षु पी ) निवाताश्रयणे (निर्वाताश्रये वा), रामानुज. ४।१।११, बलदेव ४।१।११.

अनुष्ठातुमशक्यत्वस्योपलम्भात् मनोनुकूलत्वाभिधानाच्च । गुहानिवाताश्रयेण । गुहा पर्वतादेर्बिलमिवावस्थिता । निवात निर्वातमन्यदपि प्रदेशान्तरम् । सर्वबाधाशून्यमित्यर्थ' । तस्मिन्नाश्रयो निवास., तेन प्रयोजयेत् प्रकर्षेण योग कुर्यात् । सम्यगाश्रयप्राप्त्यनन्तरमष्टाङ्गयोग कुर्यादित्यर्थ. । शनन्द

( २ ) 'यत्रैकाग्रता तत्राविशेषात्'—दिग्देशकालेषु सशय.—किमस्ति कश्चिन्नियमो नास्ति वेति । प्रायेण वैदिकेष्वारम्भेषु दिगादिनियमदर्शनात् स्यादिहापि कश्चिन्नियम इति यस्य मतिः, त प्रत्याह । दिग्देशकालेष्वर्थलक्षण एव नियम । यत्रैवास्य दिशि देशे काले वा मनस. सौकर्येणैकाग्रता भवति, तत्रैवोपासीत, प्राचीदिक्पूर्वाह्णप्राचीनप्रवणादिवत् विशेषाश्रवणात् । एकाग्रताया इष्टाया सर्वत्राविशेषात् । ननु विशेषमपि केचिदामनन्ति — 'समे शुचौ प्रयोजयेत्' इति यथेति । उच्यते — सत्यमस्त्येवजातीयको नियम , सति त्वेतस्मिन् तद्गतेषु विशेषेष्वनियम इति सुहृद्भूत्वा आचार्य आचष्टे । 'मनोऽनुकूले' इति चैषा श्रुतिः 'यत्रैकाग्रता, तत्रैव' इत्येतदेव दर्शयति ।

* ब्रशकर ४।१।११

योगे ब्रह्माभिव्यञ्जकलिङ्गानि, पञ्चभूतात्मक योगगुण योगाग्निमयशरीरस्य, योगप्रथमप्रवृत्तेलिङ्गानि, आत्मतत्त्वद्वारा ब्रह्मतत्त्वसाक्षात्कारः पाशमुक्तिश्च

[1]नीहारधूमार्कानलानिलानां
खद्योतविद्युत्स्फटिकशशीनाम् ।
एतानि रूपाणि पुर सराणि
ब्रह्मण्यभिव्यक्तिकराणि योगे ॥

इदानीं योगप्रवृत्तस्य प्रत्ययानाह—नीहारधूमार्कानलानिलानाम् । नीहारः शिशिरादिकाले पतन् जलकणसमुच्चयः प्रभातादौ प्रायः श्वेतवर्णः । धूम. कृष्णवर्णः प्रसिद्धः । अर्कः आदित्यः पिङ्गलवर्ण. । अनलो लोहितवर्णः । अनिलो नीलवर्णः । नीहारादीनाम् । खद्योतविद्युत्स्फटिकशशीनाम् । खद्योत. कृष्णशर्वर्यां गाढे तमसि प्रतीयमानोऽग्निकणाभ खचरो जन्तुः । विद्युत् अर्कवर्णा अचिरप्रभा मेघमण्डलाक्रान्ते नभःस्थले प्रतीयमाना चक्षुर्मुद्दीप्तिधारिणी । स्फटिक. श्वेत. स्निग्धश्च पाषाण. । शशी प्रसिद्ध. श्वेततेजोमण्डलरूपः शीतकिरण । खद्योतादीनाम् । एतानि नीहारखद्योतादीनामुक्तानि रूपाणि चक्षुर्ग्रहणयोग्यानि पुर.सराणि प्रथमतो गन्तॄणि ब्रह्मणि स्वप्रकाशचिदानन्दात्मरूपे त्रिविधपरिच्छेदशून्ये अभिव्यक्तिकराणि, अभिव्यक्तिर विद्याजवनिकाच्छन्नस्य ब्रह्मणस्तज्जवनिकापगम , तत्कराणि । एतद्रूपप्रादुर्भावे ब्रह्मप्रादुर्भाव अविदूरे, यथा प्रभासक्षेत्रे समुद्रघोषणश्रवणे अविदूरे दर्शन सोमेश्वरस्य, यथा वा भुजादिस्फुरणे अविदूरे दर्शन प्रियस्य भ्रात्रादे । रूपाणीत्युपलक्षणम् । शब्दस्पर्शरसगन्धा अप्यत्यनुकूला ब्रह्माभिव्यक्तिकरा । क्व । योगे यमाद्यष्टाङ्गे साधनावस्थात. सिद्ध्यवस्था प्रविशति । एतदुक्त भवति — योगप्रवृत्तस्य विविधसिद्धयो यद्यपि स्युः, तथाऽपि नासावत्राऽऽसक्तिं कुर्यादिति ।

शनन्द.

[1]पृथ्व्याप्यतेजोनिलखे समुत्थिते
पञ्चात्मके योगगुणे प्रवृत्ते ।
न तस्य रोगो न जरा न मृत्यु'
प्राप्तस्य योगाग्निमय शरीरम् ॥

एव समाधिस्थस्य सिद्धीरुक्त्वा इदानीं व्युत्थिताव्युत्थितदशयो साधारणाः सिद्धीराह—पृथ्व्याप्यतेजोनिलखे । पृथ्वी भूमि । आप्य आपः । अथवा तद्धितोऽय पञ्चस्वप्युपलक्षणार्थ । तेज प्रसिद्धम् । अनिलो वायु । ख आकाशम् । तस्मिन् तन्मये, कार्यकारणयोरनन्यत्वात् । समुत्थिते तेभ्य एव भूतेभ्य सजाते । पञ्चात्मके पञ्चभूतात्मके शरीरे । पञ्चात्मके इत्यादा नादेकभूतात्मक त्र्यात्मक वा न किंचिदपि शरीर, किंतु पञ्चीकृतपञ्चमहाभूतकार्यमित्येतदुक्तम् । योगगुणे योगस्याष्टाङ्गयुक्तस्य सोऽहमस्मीतिज्ञानफलस्य गुणो विषया-

---

* भास्कर रामानुज ब्रशकरवत् ।

(१) श्वेउ २।११

(१) श्वेउ २।१२, शनन्द मृत्यु (दुख) इत्यपि पाठ , ब्रशकर १।३।३३ पृथ्व्याप्यते (पृथ्व्यप्ते), भास्कर २।१।३ पृथ्व्याप्यते ( पृथ्व्यप्ते ) मृत्यु ( दुख ), श्रीकर ३।३।६१, ४।१।१० पृथ्व्याप्यते ( पृथिव्यप्ते ).

नासक्त्यादि., तत्र प्रवृत्ते प्रवृत्तिं कुर्वंति । अवान्तरफलमाह— न तस्य रोग. । योगिनो योगप्राप्त्यभिमुखस्य शिरोक्षिरोगातिसारादिलक्षणो रोगो न । न जरा शरीरवैरूप्यकारिणी पलितादिलिङ्गा जरा न । न दुःख इष्टवियोगादनिष्टप्राप्तेश्च जन्य प्रतिकूलवेदनीय दु.ख न । 'न मृत्यु' इति पाठे नावान्तरमृत्युरिति व्याख्यानम् । प्राप्तस्य, स्पष्टम् । किम् । योगाग्निमय शरीरम् । विनाशि पाञ्चभौतिक योगाग्नौ क्षिप्तमग्नाविव हाटक तन्मय भवति । योगाग्निप्रचुर देह प्राप्तस्य तस्य न रोगो न जरा न मृत्युरित्यन्वय. ।

शनन्द

लघुत्वमारोग्यमलोलुपत्व
वर्णप्रसाद स्वरसौष्ठवं च ।
गन्ध शुभो मूत्रपुरीषमल्प
योगप्रवृत्तिं प्रथमा वदन्ति ॥

पुनर्योगप्राप्तौ लिङ्गान्तराणि सिद्धिसूचकान्याह— रघुत्व लघुत्वं शरीरस्य, रलयो. ऐक्यात् । आरोग्य अरोगस्य भाव, सर्वोत्साहवत्त्वमिति यावत् । अलोलुपत्व, लोलुपो विषयलम्पट, तस्य भावस्तत्त्व, न लोलुपत्वमलोलुपत्व अभिलाषहीनत्वमित्यर्थ· । वर्णप्रसाद, वर्णस्य कृष्णगौरादे प्रसाद प्रसन्नता, त, नयनानन्दरूपत्वमित्यर्थ. । स्वरसौष्ठव च । स्वरस्य कण्ठनिर्गतस्य ध्वने· सवर्णस्य वर्णसहितस्य वा सौष्ठव माधुर्यादि । श्रवणीयनादवान् भवतीत्यर्थः । चकार उक्तानामनुक्ताना च 'तत्सनिधौ वैरत्याग' इत्यादीना समुच्चयार्थः । गन्ध· शुभ. चम्पककेतक्यादिगन्ध सर्वप्राण्यानन्दकारी शुभ । मूत्र पुरीषम् । पीतस्य पानीयस्य स्वविष्ठो वायुर्बहिर्निर्गच्छन् मूत्रमित्युच्यते । जग्धस्यान्नस्य स एव तादृशः पुरीष मिति । मूत्र पुरीष च मूत्रपुरीषम् । अल्प भूयस्यपि पीते अशिते चैतद्द्वयमपि स्तोकम् । तस्येति पूर्वमन्त्रादनुषङ्गन्यायेन रघुत्वमित्यादौ द्रष्टव्यम् । योगप्रवृत्तिं, योगस्याष्टाङ्गलक्षणस्य प्रवृत्ति· साधक प्रति आगमनरूपा, तां प्रथमा पूर्वभाविनीं वदन्ति कथयन्ति । योगविद इति शेष· । शनन्द.

(१) श्वेउ. २।१३, शनन्द लघुत्व (रघुत्व), श्रीकर ३।३।६१, ४।४।१०

यथैव बिम्बं मृदयोपलिप्तं
तेजोमय भ्राजते तत्सुधान्तम् ।
तद्वाऽऽत्मतत्त्वं प्रसमीक्ष्य देही
एक कृतार्थो भवते वीतशोक ॥

अवान्तराः सिद्धीरुक्त्वा इदानीं सिद्धिवधूमुकुटमणिदीपिकानीराजितपादपल्लवां आचामकृतात्मभिर्दुष्प्रापा त्रिवर्गसिद्धिकदर्थाङ्गना हसन्तीमानन्दात्मेन्दुवदना स्वयप्रकाशमाना मुक्तिसिद्धिमाह — यथैव यद्वदेव बिम्ब सवितुश्चन्द्रस्य वा मण्डल मृदया मृदा उपलिप्त समीपे लिप्त आच्छन्नमित्यर्थ । तेजोमय तेजोविकारभूत, तेजोरूपमित्यर्थ । तस्या उपलेपनस्य कर्त्र्या मृद कुतश्चिन्निमित्तादपाये भ्राजते तत् बिम्ब दीप्यते सुधान्त सुधा अमृत रोहितादिरूप अन्ते अन्तिके यस्य तत्सुधान्तम् । तद्वा तद्वत् आत्मतत्त्व आनन्दात्मस्वरूपम् । अत्र रविबिम्बस्य मृदोपलेपो नाऽऽसीन्नास्ति न भविष्यति च यथा, तथाऽऽत्मनोऽपि न माययोपलेप इति विवक्षितम् । प्रसमीक्ष्य प्रकर्षेण सम्यक्स्वयप्रकाशमहमस्मीत्यवलोक्य देही देहयोगवान् अहमज्ञ इत्याद्यभिमानी एकः सर्वभेदशून्योऽह ब्रह्मास्मीतिविज्ञानेन कृतार्थ. कृतः सपादितः अर्थ. पुरुषार्थलक्षणो येन स कृतार्थ. प्राप्तप्रापणीय इत्यर्थः । भवते भवति । वीतशोक· । कृतकृत्यत्वे हेतुरयम् । वीत अपगत शोको दु.खविकारो यस्मात्स वीतशोकः । अपगतसमस्ताविद्य इत्यर्थः ।

शनन्द.

यदाऽऽत्मतत्त्वेन तु ब्रह्मतत्त्वं
दीपोपमेनेह युक्त प्रपश्येत् ।
अज ध्रुव सर्वतत्त्वैर्विशुद्ध
ज्ञात्वा देवं मुच्यते सर्वपाशै. ॥

कदा वीतशोक., कथ च ब्रह्मज्ञानमित्यत आह — यदा यस्मिन्काले आत्मतत्त्वेन तु आत्मस्वरूपेणैव ब्रह्मतत्त्व ब्रह्मस्वरूप दीपोपमेन सजातीयप्रकाशाप्रकाश्यत्वे सति प्रकाशैकस्वभावेन, स्वयप्रकाशेनेत्यर्थ. । इह आत्मन्येव युक्त. अष्टाङ्गयोगयुक्त· प्रपश्येत् प्रकर्षेण स्वय-

(१) श्वेउ. २।१४, श्रीकर ३।३।६१ तत्सुधान्तम् (तत्सुधौतम्)

(२) श्वेउ २।१५

प्रकाशानन्दरूपस्त्रिविधपरिच्छेदशून्यो ब्रह्मरूपोऽहमस्मी त्यवगच्छेत् । तदा अज जन्मादिविकारशून्यम् । ध्रुव निश्चल, अपरिणामीति यावत् । सर्वतत्त्वै. सर्वैर्भूतैर्भौतिकैश्च साविद्यै. स्वरूपै विशुद्ध विहीनम् । तत शुद्ध सर्वदोषरहितमविद्यातत्कार्यापरामृष्टमित्यर्थ. । ज्ञात्वा अजादिरूप ब्रह्माहमस्मीत्यवगत्य देव स्वयप्रकाशम् । अस्य पदस्याजादिपदै. सबन्ध. । मुच्यते मुक्तो भवति सर्वपाशै. सर्वैरहममाद्यभिमानबन्धनैरविद्यातत्कार्यैः ।

शनन्द

प्रत्यक्प्रतिष्ठित सर्वरूप सर्वप्रविष्टो देव

एष ह देव. प्रदिशोऽनु सर्वा
पूर्वो ह जात. स उ गर्भे अन्त. ।
स एव जातः स जनिष्यमाण.
प्रत्यङ्जनास्तिष्ठति सर्वतोमुख. ॥

इदानीं श्रुतिर्हर्षनिर्भरमानसा सती सानुकम्पा पुरुषेण ज्ञातव्य ब्रह्मरूपपुरुषाभिन्नानस्मान्प्रत्याह––एष पुरुषबुद्धेर्द्रष्टा ब्रह्मात्मा ह प्रसिद्ध देव स्वयप्रकाश. प्रदिशो नु । प्रेति तिष्ठतिना सबध्यते । नु आश्चर्ये । दिश प्राच्याद्या आग्नेय्याद्याश्च सर्वा' अष्टौ दश वा निखिला । दिक्शब्दप्रत्ययालम्बना इत्यर्थ । प्रदिश अवान्तरदिशो वा । अस्मिन्पक्षे, 'किं ता एव, नेत्याह–सर्वा ' इति आशङ्क्य व्याख्येयम् । अनेनाव्याकृतरूपता उक्ता । इदानीं सूत्रात्मतामाह––पूर्वः प्रथम ह प्रसिद्ध. जात उत्पन्न' । इदानीं विराड्रूपतामाह––सः कारणकार्यरूप आत्मा उ अपि गर्भे भूतपञ्चकस्याप्रधानस्य गर्भे वर्तमान' । ब्रह्माण्डरूपो गर्भरूपोऽपि स एवेत्यर्थ. । इदानीमनारोपितपुरुषावयव विराट्शब्देनाप्यभिधीयमान प्रजापतिमाह––अन्त । गर्भे इति तन्त्रेणावगन्तव्यम् । अन्तर्गर्भे गर्भस्यान्त. प्रजापतिरूपः, यस्य ' मेरुरुल्ब, महीधरा जरायु ' इत्यादि पुराणे कथ्यते । इदानीं सर्वजीवगतमात्मानमाह–स एव जात स जनिष्यमाण. । अतीतानागतयोर्ग्रहणे वर्तमानस्याप्यर्थसिद्ध ग्रहणम् । स्पष्ट. पदार्थ. । इदानीं सर्वात्मत्वेन जनिमरणादिप्राप्तिः, ता निवारयति––प्रत्यक् । बुद्ध्यादिभ्य प्रति प्रातिकूल्येन आन्तरत्वेन गच्छतीति प्रत्यक् । प्रत्यगित्यव्ययम् । प्रत्यङ्ङिति वा पाठ. । जना. हे जना., तिष्ठति प्रकर्षेणावस्थान करोति, अवस्थान करोति वा । सर्वतोमुख सर्वासु दिक्षु मुखानि उपलब्धिद्वाराणि यस्य स सर्वतोमुख ।

शनन्द.

यो देवो अग्नौ यो अप्सु
यो विश्वं भुवनमाविवेश ।
य ओषधीषु यो वनस्पतिषु
तस्मै देवाय नमो नम. ॥

(१) सर्वात्मानमात्मानमुक्त्वा इदानीं विभूतिमत्त्वस्वस्थमेन नमस्करोति––य. प्रसिद्ध. देव. स्वयप्रकाश. अग्नौ वह्नौ, यः प्रसिद्ध' अप्सु उदकेषु, य प्रसिद्ध. विश्व सर्वे भुवन पातालादि भूरादि वा लोकजात आविवेश प्रविष्टवान् । इदमग्न्यादावोषध्यादौ च भुवनवद्द्रष्टव्यम् । य. प्रसिद्ध ओषधीषु व्रीह्यादिषु, वनस्पतिषु अश्वत्थादिषु, तस्मै अग्न्यादिप्रविष्टाय देवाय स्वयप्रकाशाय नम मनसा वचसा कर्मणा च नमस्कारोऽस्तु । नम.पदाभ्यासोऽध्यायपरिसमाप्त्यर्थ. ।

शनन्द.

(२) ' आमनन्ति चैनमस्मिन् ' — ' यो देवो अग्नौ यो अप्सु यो विश्व भुवनमाविवेश ' इति श्वेताश्वतराद्या शाखिन एन प्रकरणिन परमात्मान अस्मिन् वैश्वानरे स्थितमामनन्ति च । तथा च वैश्वानराख्याभिनिष्ठतया वैश्वानरशब्दादय परमात्मनीति भाव ।

विज्ञान. १।२।३२

इति द्वितीयोऽध्याय ॥

(१) श्वेउ २।१६, शनन्द, शोऽनु (शो नु) प्रत्यङ्जना (प्रत्यग्जना) इत्यपि पाठ ।

(१) श्वेउ २।१७, विज्ञान १।२।३२

## अथ तृतीयोऽध्यायः

देव एक सर्वलोकेशिता जालवान् उद्भवसभवहेतु
अद्वितीय रुद्र प्रत्यक्प्रतिष्ठित गोप्ता सृष्टिप्रलयकर्ता
विश्वव्यापी विश्वद्रष्टा विश्वधर्ता हिरण्यगर्भजनक
शुभबुद्धिसयोजयिता शिवतनुधर इषुक्षेप्ता पर
ब्रह्म महापुरुष मृत्युतारकज्ञानविषय परः
सूक्ष्मतम ज्येष्ठ दिवि स्थित अमृतत्व-
हेतुज्ञानविषय शिव सर्वभूतगुहाशय
शिव सत्त्वप्रवर्तक ज्योति- अन्तरात्मा
अङ्गुष्ठमात्रपुरुष भूतभव्यात्मक-
पुरुष अमृतत्वस्येशान सर्वे-
न्द्रियगुणाभास शरीरस्थ
वेत्ता अवेद्य धातृप्र-
सादजसाक्षात्कारवि-
षय विभु अज
पुराण

**यं एको जालवानीशत ईशनीभि**
**सर्वांल्लोकानीशत ईशनीभिः ।**
**य एवैक उद्भवे संभवे च**
**य एतद्विदुरमृतास्ते भवन्ति ॥**

पूर्वं ब्रह्माहमस्मीतिवाक्यज्ञानादविद्यातत्कार्यैरपरामृष्टब्रह्मस्वरूपावस्थान योगस्य परमा सिद्धिः फलभूतोक्ता। तत्र वाक्यार्थज्ञान च ब्रह्माहपदार्थयोर्ज्ञानमन्तरेण न भवतीति पदार्थज्ञानायायमध्याय आरभ्यते । तत्र प्रथम ब्रह्मपदार्थमाह — यः प्रसिद्धः एक· द्वैतगन्धशून्यः जालवान् अविद्यामहेन्द्रजालवान् लूताकीट इव लूतातन्तुजालवान् ( प्रसार्याविद्यामहेन्द्रजाल ? ) ईशते ईष्टे ईशनीभि ईश्वरशक्तिभिर्विक्षेपविशेषरूपाभिरविद्याभिः। ईष्टेः सकर्मकत्वात्कर्म वक्तुमाह — सर्वांल्लोकान् निखिलान् भूरादीन् ईशत ईशनीभि । पुनरादान कर्मनिवेशार्थम् । व्याख्यान च पूर्ववत् । य एवैकः य एक एव इह अस्मिन्ससारे उद्भवे, उद् ऊर्ध्वं अनेकधा भवनमुद्भव , तत्र, सभवे च, सम्यक् स्वात्मरूपेण भवन सत्तामात्रेण वर्तमानत्व सभव सहार इत्यर्थः, तत्र। चकारान्मध्येऽप्येक एव वर्तमान इति शेष. । ये अधिकारिण एतत् उक्तमीश्वरस्वरूपमात्मत्वेन विदुः जानन्ति, अमृता आनन्दात्मरूपेण मरणधर्मरहिताः ते भवन्ति । स्पष्टम् । शनन्द.

**एको हि रुद्रो न द्वितीयाय तस्थु-**
**र्य इमांल्लोकानीशत ईशनीभि ।**
**प्रत्यङ् जनास्तिष्ठति संचुकोचान्तकाले**
**ससृज्य विश्वा भुवनानि गोपा ॥**

( १ ) उद्भवे सभवे चैक एवेश्वर इत्युक्त, तदेतदुपपादयितुमाह — एको हि चिदानन्दरसो जगतः उत्पत्तेः प्रागेको यस्मात् रुद्र· । रुद् दु ख द्रावयति नाशयतीति रुद्र· । दु खनिवृत्तिश्च सर्वात्मनाऽविद्यानाशमन्तरेण न सभाविता, तस्माद्रुद्र. अविद्यानाशक· । यस्माद्रुद्रस्तस्मात् न द्वितीयाय द्वितीयार्थं तस्थे तस्थौ स्थितिं न कृतवान् । यस्मान्न द्वितीयाय तस्थे, तस्मादेक इत्यन्वयः । नाय पूर्वोक्तादीश्वरादन्य इत्याह—यः प्रसिद्धः इमान् प्रत्यक्षैकदेशान् लोकानीशत ईशनीभि. । प्रत्यग्जनास्तिष्ठति । व्याख्यातम् । सचुकोच सकोच कृतवान् उपसहृतवानित्यर्थः । कदा, यदाऽस्य जगतो विनाशस्तदेत्याह—अन्तकाले विनाशकाले । किं कृत्वा । ससृज्य सम्यगुत्पाद्य । कानि । विश्वा भुवनानि विश्वानि भुवनानि, चतुर्दश लोकानित्यर्थ. । क. । गोप्ता विश्वेषां भुवनानां रक्षिता । गोपा इति क्वचित्पाठे गोप्तेत्येव व्याख्येयम् । गोशब्दवाच्य सचराचर विश्व पातीति वा गोपाः । शनन्द.

(१) श्वेउ ३।१, शनन्द. उद्भवे ( इहोद्भवे )

(१) श्वेउ ३।२, शनन्द तस्थु. ( तस्थे ) प्रत्यङ् जना ( प्रत्यग्जना ) ‘ गोपा ’ इत्यत्र ‘ गोप्ता ’ इत्यपि पाठ , श्रीकठ १।१।२ ( पृ १२६ ), १।१।२१ ( पृ २५० ), १।२।१ ( पृ ३०१ ), १।२।३, २।१।२५, ३।२।३५, ४।२।१६, ४।४।४ एको हि ( एक एव ) इत्यपि पाठः; श्रीकर १।१।१ ( पृ ३, ४, १३, १८, २७ ), १।१।२ ( पृ २९, ३६ ), १।१।४ ( पृ ४४, ४८ ), १।१।११, १८, १९, ३१, १।२।२ ( पृ ९९ ), १।२।३, १०, १३, १।३।७, ११, २।१।२४, २५, ३६, ३७, २।२।४०, ४२, २।३।३, २।४।१, ३।२।७, १२, ३०, ३५, ३।४।८, ४।१।५, ४।२।१६, ४।३।१६, ४।४।४, १३, १७, २२ एको हि ( एक एव ) तस्थु ( तस्थे )

( २ ) 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' ( श्वेउ ६।८ ) 'एक एव रुद्रो न द्वितीयाय तस्थुर्य इमाँल्लोकानीशत ईशनीभिः' इत्यादयश्च परब्रह्मण. स्वाभाविकानन्तजगज्जननशासन पालनशक्तिमत्त्व श्रुतयो वदन्ति।

१।२।१ ( पृ ३०१)

'एको हि रुद्रो ईशनीभि' इति रुद्रव्यतिरिक्तस्य जगदीश्वरत्व निषिध्यते।

* श्रीकठ १।२।३

[1]विश्वतश्चक्षुरुत विश्वतोमुखो
विश्वतोबाहुरुत विश्वतस्पात्।
स बाहुभ्या धमति स पतत्रै
र्द्यावाभूमी जनयन्देव एक ॥

जगत उत्पत्तिस्थितिसहारेष्वस्य स्वातन्त्र्ये हेतुमाह— विश्वतश्चक्षु. सर्वतोनेत्र । उत अपि । विश्वतोमुख सर्वतआनन· । विश्वतोबाहुः सर्वतोभुजः । उत अपि । विश्वतस्पात् सर्वतश्चरण. । अयमर्थ — यानि कानिचिच्चक्षुरादीनि इन्द्रियाण्यन्यद्वा प्राणादिक यत्किंचिद्यस्य कस्यचिज्जन्तो·, तत्सर्वमस्यैव, एतदात्मकत्वात्सर्वस्य । तत असङ्गोदासीनेऽपि पुसि मायावशात्सर्वतश्चक्षुरादिकमुपपन्नमिति, सर्वतश्चक्षुरादिमत्त्वाच्च सृष्टिस्थितिसहारेषु स्वातन्त्र्यमिति । स बाहुभ्या धमति हस्ताभ्या विश्वमुत्पादयन्नुत्पत्तिकाले विविधान् शब्दानुत्पाद्योत्पादकादिरूपेण करोति । बाहुभ्यामिति द्विवचनसामर्थ्यात्सर्वकर्महेतुत्वाच्च धर्मा धर्माभ्यामिति विवक्षितम् । तत· स्थितिसहारयोश्च तत्तद्रूपै शब्दकारित्वमविरुद्धम् । यदाऽपि धमतिरग्निसयोगार्थ , तदाऽपि सतापकारित्वेन सुख दु·खयोरुत्पत्तौ स्थितौ सहारे च सुखदु खकारित्व व्याख्येयम् । स पतत्रै. पतनशीलै· पञ्चीकृतपञ्चमहाभूतै , न परमाणुभि , तत्सद्भावे प्रमाणाभावात् ।

* मुउ ३।१।३१ ( पृ १४७४ ) इत्यत्रापि द्रष्टव्यम् । श्रीकर श्रीकठवत् । श्वेउ १।१० ( पृ १५८२ ) इत्यत्रापि श्रीकरभाष्य द्रष्टव्यम् ।

(१) श्वेउ ३।३, श्रीकठ ३।२।३६, बलदेव २।१।२७

न चैतदेव प्रमाण, भवदङ्गीकृताना मूर्तानामपि तेषां पतनशीलत्वाभावात् । गुरुत्वात्पतन, न च तेषा सर्वेषा गुरुत्वमङ्गीकृत भवद्भिः, क्षितिजलयोरेव गुरुत्वाङ्गीकारात् । अपि च, काश कुशमवलम्ब्य पर माणून् शङ्कमानस्य तत्प्रतिपक्षाणामपि तथैव शङ्कितु शक्यत्वात्कृत शास्त्रारम्भव्यसनेन । धमतीत्यनुषङ्ग । पतत्रसमभिव्याहृतः सशब्दोऽनुषज्यमानेन क्रियापदेन सबध्यते । द्यावाभूमी । ब्रह्माण्डस्य कटाहद्वय द्यावाभूमिशब्दवाच्यम् । जनयन् उत्पादयन् । उपलक्षणमिद, स्थापयन्सहरश्च । देव स्वयप्रकाश । एकः भेदशून्यः । शनन्द

*[1]यो देवाना प्रभवश्चोद्भवश्च
विश्वाधिको रुद्रो महर्षि ।
हिरण्यगर्भ जनयामास पूर्व
स नो बुद्ध्या शुभया सयुनक्तु ॥

अचेतनानामेवोत्पादक ईश्वरः, न तु चेतनानामित्याशङ्क्य नेत्याह — य प्रसिद्ध. देवाना अग्न्यादीनामिन्द्रियाणा वा प्रभवश्च प्रकर्षेण भवन प्रभव उत्पत्ति , उद्भवश्च ऊर्ध्वं भवनमुद्भव स्थितिरित्यर्थ· । आद्यश्चकारो देवानामपि तद्रूपत्वार्थः, द्वितीय उपसहारस्यापि समुच्चयार्थ । रुद्र· अविद्यानाशकः विश्वाधिकः सर्वाधिकः । सर्वाधिक्य ज्ञानहीनस्याप्यस्ति, तद्व्यावृत्त्यर्थमाह—महर्षि· महांश्चासावृषिश्च, महत्त्वे सत्यतीन्द्रियज्ञानवान् । ननु देवाना जनको हिरण्यगर्भ इत्यत आह — हिरण्यगर्भ ज्ञानक्रियाशक्त्यात्मक सूक्ष्मतम चैतन्याधिष्ठित प्रथम कार्य हिरण्यगर्भशब्दवाच्य जनयामास उत्पादितवान् पूर्व जगत उत्पत्ते. प्राक् । सः हिरण्यगर्भोत्पादकः न. अस्मान् बुद्ध्या धिषणया शुभया ब्रह्मविषयिण्या सयुनक्तु सयोग करोतु ।

शनन्द.

* श्रीकर श्वेउ. १।१० ( पृ १५८२ ) इत्यत्र द्रष्टव्यम् ।

(१) श्वेउ ३।४, भास्कर २।१।१ स नो बुद्ध्या ( मनोबुद्ध्या ) सयुनक्तु ( सपुनन्तु ), श्रीकर १।१।२ ( पृ ३५ ), १।१।१८, ३।३।३६, ३।४।४४, ४।३।६, १४, १६ प्रभवश्चो ( प्रथमश्चो ), विज्ञान ३।२।३१, बलदेव १।४।२८, २।१।१

**¹या ते रुद्र शिवा तनूरघोराऽपापकाशिनी ।**
**तया नस्तनुवा शतमया गिरिशन्ताभि-**
**चाकशीहि ॥**

( १ ) हिरण्यगर्भस्य स्रष्टारमीश मन्त्रद्रष्टा प्रार्थ-यते—या प्रसिद्धा ते तव रुद्र हे रुद्र, शिवा मङ्गला तनू. तनु' अघोरा अरौद्रा अपापकाशिनी अपापप्रकाशिका, तया उक्तया वक्ष्यमाणया नः अस्मान् तनुवा तन्वा शतमया सुखतमया गिरिशन्त, गिरि. श सुख तनोतीति गिरिशन्त , तस्य सबोधन हे गिरिशन्त, अभिचाकशीहि सर्वतः प्रकाशय ।

शनन्द

( २ ) अनादिमलकर्मवासनारूढदेवादिशरीराभि-मानप्रवाहसिद्धा अध्यात्मादिभेदभिन्नामसह्या ससाररुज द्रावयत्युपासकानामिति रुद्र इत्युच्यते पर ब्रह्म शिव । तस्य आमन्त्रण रुद्रेति । हे रुद्र परमेश्वर, या ते तनू. मूर्तिः शिवा नित्यसिद्धापहतपाप्मादित्वेन परमविशुद्धा परममङ्गलमयी परममङ्गलप्रदा, अघोरा शिवत्वयोगेनैव सर्वहृदयङ्गमा, अपापकाशिनी, पापग्रहणस्योपलक्षण-त्वात् ज्ञानाग्निदग्धनिखिलपुण्यपापा इह अपापा इत्यु-च्यन्ते मुक्तात्मानः, तेषु प्रकाशमानत्वादपापकाशिनी । ईदृशी या ते तनू' तया शन्तमया 'स एको ब्रह्मण आनन्द. ' इत्यादिश्रुतिसिद्धनिरतिशयानन्दलक्षणया तन्वा न. अस्माकमपि ससारनिमित्त पुण्यपापसचयमप नीय स्वरूपतया साक्षादतीव प्रकाशस्वेति प्रार्थनेयमुपा-सकानाम् ।

श्रीकठ ४।१।१२

( ३ ) 'या ते रुद्र शिवा तनूरघोराऽपापकाशिनी' इत्यादिना वेदपुरुषाणा शिवलिङ्गधारण दर्शितम् ।

श्रीकर १।१।३

**²यामिषु गिरिशन्त हस्ते बिभर्ष्यस्तवे ।**
**शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं**
**जगत् ॥**

या प्रसिद्धां इषु बाणरूपाम् । य बाणमित्यर्थः । गिरिशन्त हे गिरिशन्त, हस्ते करे बिभर्षि धारयसि अस्तवे पाप्मसु प्रक्षेपार्थम् । शिवा मङ्गला गिरित्र, गिरीन् अस्थिपुञ्जान् देहानित्यर्थः, त्रायते इति गिरित्र., स्वभक्तरक्षापर इत्यर्थ., तस्य सबोधन हे गिरित्र, ता इषु बाणमित्यर्थ. । कुरु, स्पष्टम् । मा हिंसी. हिंसां मा कृथा । यतः पुरुष पुरुषरूप जगत् स्थावरजङ्गमादि-रूपमित्यर्थः ।

शनन्द.

**¹तत परं ब्रह्म परं बृहन्त**
**यथानिकाय सर्वभूतेषु गूढम् ।**
**विश्वस्यैक परिवेष्टितारमीशं**
**तं ज्ञात्वाऽमृता भवन्ति ॥**

इदानीं प्रकृत हिरण्यगर्भमुररीकृत्याऽऽह —— ततः पर तस्माद्धिरण्यगर्भात्पर ब्रह्म । ब्रह्मशब्दार्थमाह —— पर बृहन्त अतिशयेनाधिक देशकालवस्तुपरिच्छेदशून्यमि-त्यर्थ. । यथानिकाय, कायो देह., नितरा कायो निकायः, यथा यादृशो निकायो यथानिकाय यथाशरीरमित्यर्थः । सर्वभूतेषु चतुर्विधजीवेषु गूढ गुप्तम् । ऋजुवक्रादिकाष्ठेषु यथाऽग्निर्गूढ ऋजुवक्रादिभावेन, तथाऽयमात्मा हस्ति-पुत्तिकादिशरीरेष्वित्यर्थः । विश्वस्य चराचरस्य जगत एकं भेदशून्य तत्त्वमसीतिज्ञानेन, परिवेष्टितारं समन्तादुपसह-र्तारम् । तत्र हेतु —ईश नियन्तारम् । अनेनैव एतदेव भवत्येवेत्यादिमर्यादाया कर्तारमित्यर्थ । त उक्त ब्रह्म-रूप ज्ञात्वा अहमस्मीत्यवगत्य अमृताः आनन्दात्मस्वरूप-विज्ञानेन मरणशून्याः भवन्ति । स्पष्टम् ।

शनन्द.

**²वेदाहमेत पुरुष महान्त-**
**मादित्यवर्ण तमस परस्तात् ।**

---

(१) श्वेउ ३।५, श्रीकठ ४।१।१२ स्तनुवा (स्तन्वा), श्रीकर १।१।३ ( पृ ३८, ४०, ४२ ), १।२।१ ( पृ ९५), २।२।३७, ३।४।३५, ४।३।१६

(२) श्वेउ ३।६

(१) श्वेउ ३।७ , श्रीकठ १।१।१ ( पृ ९७ ), १।१।४ ( पृ १८७ ), श्रीकर १।१।१ ( पृ ४, १३), १।१।४ ( पृ ४७ ), १।१।३०, १।३।६, ३९, ४०, ३।१।१०, २०, ३।२।४, ७, २३, ३।३।७, ५१, ४।२।१६ ( त० )

(२) श्वेउ ३।८, शनन्द मेत ( मेव ), ब्रशाकर १।१।२८, १।४।७, १४, २।१।३, २।३।३०, ४।३।१४६

**तमेव विदित्वाऽति मृत्युमेति**
**नान्य. पन्था विद्यतेऽयनाय ॥**

( १ ) ज्ञात्वाऽमृता भवन्तीत्युक्तम् । तस्य ज्ञान न कस्यापीत्याशङ्क्य मन्त्रद्रष्टा स्वानुभवमाह —— वेद जानामि अह मन्त्रद्रष्टा एव ब्रह्मरूप पुरुष परिपूर्णं महान्त सर्वस्मादधिक आदित्यवर्णं आदित्यस्य वर्ण इव वर्णो यस्य स आदित्यवर्ण:, तमादित्यवद्भास्वर स्वयप्र काशमित्यर्थ । तमस. परस्तात् अविद्याया. परत: । ननु किमर्थमात्मज्ञानेऽतियत्न करणीय', सन्ति सहस्र-मुपाया' सुखप्राप्त्यै दु खपरिहारायेत्यत आह——तमेव आत्मानमेव, न त्वन्य, विदित्वा साक्षात्कृत्य अति मृत्युमेति मृत्यु आवरणशक्ति विक्षेपजननीमविद्या दु:खवृक्षबीजभूता मरणादिप्रबन्धदायिनीं अत्येति अतीत्य गच्छति । ननु ज्ञातव्येषु ब्रह्मैव ज्ञेयमस्तु, न तावतोपाया-न्तरनिषेध इत्यत आह —— नान्य पन्था' ब्रह्मज्ञाना-दन्यो मार्गो निरतिशयसुखप्राप्तिनि शेषानर्थनिवृत्त्युपाय भूत: विद्यते नास्ति अयनाय ससाराब्धे. पारगमनाय अविद्यानिवृत्तये इत्यर्थ. । शनन्द

( २ ) यदुक्त निर्विशेषब्रह्मज्ञानादेवाविद्यानिवृत्तिं वदन्ति श्रुतय इति, तदसत्, 'वेदाहमेत पुरुष महान्त-मादित्यवर्णं तमस परस्तात्' 'तमेव विद्वानमृत इह भवति नान्य पन्था विद्यतेऽयनाय' (तैआ ३।१३।१) 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' 'न तस्येशे कश्चन तस्य नाम महद्यश:' 'य एन विदुरमृतास्ते भवन्ति' ( नाउ. १।२,३ ) इत्याद्यनेकवाक्यविरोधात् । ब्रह्मणः सविशेषत्वादेव सर्वाण्यपि वाक्यानि सविशेषज्ञानादेव मोक्ष वदन्ति ।

रामानुज १।१।१ ( पृ ११० )

( ३ ) 'तमेव विदित्वाऽति मृत्युमेति नान्य. पन्था विद्यतेऽयनाय' इति श्रुत्या ब्रह्मत्वेन ज्ञान नाऽऽत्मनो मोक्षाय । ब्रह्मण एव तु ज्ञानमात्मत्वेनापि ।

वल्लभ १।३।१५

[ आत्मनो ब्रह्मत्वेन ज्ञान न मोक्षायेति योजना । अयमर्थस्तु उक्तश्रुतिस्थात् तमेवेति तत्पदसबद्धादेवका-राद्गम्यते । एव च 'य एव वेदाह ब्रह्मास्मि' इति पुरुषविधब्राह्मणोक्त ज्ञान सर्वभावमात्रफलकत्वात् पूर्व-कक्षैवेति । भाष्यप्रकाश' ]

( ४ ) नन्वेव साख्यज्ञानमात्रस्यापि मोक्षे हेतुत्वे 'तमेव विदित्वाऽति मृत्युमेति' इत्यादिश्रुतिविरोधः स्यादिति चेन्न, तथाविधवाक्याना प्रकृष्टसाधनपरत्वात्, अन्यथा 'ईश्वरप्रणिधानाद्वा' इत्यादिना पतञ्जल्या-द्युक्तविकल्पस्यानुपपत्तेरिति ।

विज्ञान २।१।२

**यस्मात्परं नापरमस्ति किंचि-**
**द्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।**
**वृक्ष इव स्तब्धो दिवि तिष्ठत्येक-**
**स्तेनेदं पूर्णं पुरुषेण सर्वम् ॥**

आत्मानमेव ज्ञात्वाऽति मृत्युमेतीत्युक्त, स आत्मा किंरूप इति श्रोतृबुभुत्सानिवृत्त्यर्थमाह —— यस्मात् आत्मन' पर नापरमस्ति किंचित् उत्कृष्टमपकृष्ट वा किंचिन्नास्ति, द्वितीयाभावादित्यर्थः । यस्मात् आत्मनः नाणीयो न ज्यायोऽस्ति कश्चित् । अणु अल्पम् । अतिशयेनाणु अणीय. ज्याय: अतिशयेन वृद्धम् । कश्चित्किंचिदपि । यस्मान्नाणीयो न ज्यायो विद्यते । अयमात्मा अणोरणीयान्महतो महीयान्सर्वात्मत्वादित्यर्थः । वृक्ष इव शाखीव स्वगतभेदशून्यः स्तब्ध' स्वतो निश्चल. दिवि द्योतनात्मके स्वयप्रकाशे स्वरूपे तिष्ठति वर्तते एक: सर्वभेदशून्यः ।

---

भास्कर १।४।७, ३।२।८, १६, रामानुज १।१।१ ( पृ ४, ६, १७, ११० ), १।१।४ ( पृ १५४, १६२ ), १।१।२१, १।४।१६, ३।२।३५, ३।४।१, ४।१।१, निंबार्क १।४।७, ३।२।१५, ब्रमध्व ३।३।४८ तमेव ( तमेव ), श्रीकंठ १।१।१७ ( पृ २३६ ), ४।४।२२, श्रीकर १।१।१ ( पृ. ५, ८, १८ ), १।१।६, १३, १८, २७ ( पृ. ८५, ८६ ), १।४।५, ७, २८, २।२।४१, ४४, ३।१।१०, ३।३।७, ५१, ३।४।१, ४९, ४।१।१५, ४।३।१४ तमेव ( तमेव ), वल्लभ १।३।१५, १।४।७, १५, ३।२।११, विज्ञान १।१।१ ( पृ १ ), १।१।२ ( पृ ४० ), २।१।२, बलदेव १।३।१, २।१।३, २।४।२०, ३।२।३७, ३।३।४८, ५०, ३।४।३३, ५२

(१) श्वेउ ३।९, ब्रशकर ३।२।३६, भास्कर ३।२।३६, रामानुज. ३।२।३०, ३५, ३६, निंबार्क ३।२।३१, ३६, ३७, श्रीकठ १।२।२७, श्रीकर १।३।१३, ३।२।३०, ३५, ३६, वल्लभ ३।२।३७, बलदेव ३।२।३७.

वृक्षनिदर्शनेन परिच्छेद प्राप्त वारयति — तेन एकेनाऽऽत्मना पुरुषेण इद विविधप्रत्ययगम्य विश्व पूर्ण पूरितमित्यर्थः। पुरुषेण पुरि शरीरे शयानेन परिपूर्णेन वा। सर्वं निखिलम्। शनन्द

**ततो यदुत्तरतर तदरूपमनामयम्।**
**य एतद्विदुरमृतास्ते भवन्त्यथेतरे दु ख-मेवापियन्ति ॥**

(१) कार्यकारणयोरभेदे हिरण्यगर्भस्यापि कस्मात्तत्त्व न स्यादित्यत आह — तत' तस्माद्धिरण्यगर्भात् यत् प्रसिद्ध परिपूर्णत्वेन, उत्तरतर अतिशयेनोत्तर पूर्वमित्यर्थः। तत् उक्त अरूप रूपादिशून्यम्। तर्हि कारणावस्थेत्याशङ्क्य नेत्याह — अनामयम्। आमयो रोगो दुःखहेतुरविद्या, तद्रहितमनामयम्। ये अधिकारिण एतत् अनामय परिपूर्ण रूप विदुः जानन्ति, अमृतास्ते भवन्ति। ते उक्ताः। व्याख्यातमन्यत्। ननु किमात्मज्ञानेन, जानतामजानता च व्यवहारस्य समत्वदर्शनादित्यत आह — अथ पूर्वेभ्योऽर्थान्तरभूता अविद्वांसः इतरे अन्ये दु खमेवापियन्ति। व्यवहारस्य समत्वेऽप्यविद्वासोऽहममाभिमानेन दुःखमेवापिगच्छन्ति, न पुनरितरे, तदभिमानशून्यत्वादित्यर्थ.।

शनन्द

(२) 'तथाऽन्यप्रतिषेधात्' — यत्पुनरुक्त 'ततो यदुत्तरतरम्' 'परात्पर पुरुषम्' (मुउ ३।२।८) 'अक्षरात्परत. परः' (मुउ २।१।२) इत्यादिभिर्भेदव्यपदेशात् परात्परमस्तीति, तन्नोपपद्यते, तत्रैव ततोऽन्यस्य परस्य प्रतिषेधात् — 'यस्मात्पर नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्' इति। यस्मादपर पर नास्ति किंचित्। न केनापि प्रकारेण परमस्तीत्यर्थः। तथा अन्यत्रापि 'न ह्येतस्मादिति नेत्यन्यत्परमस्ति' (बृउ २।३।६) इति। नेति निर्दिष्टादेतस्माद्ब्रह्मणोऽन्यत् पर न ह्यस्तीत्यर्थ। तथा 'न तस्येशे कश्चन तस्य नाम महद्यश' (नाउ १।२) इति। तद्धि जगदुपादानकारणतया अनन्तरमुक्त — 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' 'स आप. प्रदुघे उभे इमे' (नाउ. १।२) इत्यादिना। 'अद्भ्य सभूतो हिरण्यगर्भ इत्यष्टौ' (नाउ १।३) इति च जगत्कारण पुरुषमेन प्रत्यभिज्ञापयति। 'ततो यदुत्तरतरम्' इति किमुच्यते इति चेत्, पूर्वत्र 'वेदाहमेत पुरुष विद्यतेऽयनाय' (श्वेउ ३।८) इति परस्य ब्रह्मणो महापुरुषस्य वेदनमेवामृतत्वसाधन, नान्योऽमृतत्वस्य पन्था' इत्युपदिश्य तदुपपादनाय 'यस्मात्परं नापरमस्ति . . पुरुषेण सर्वम्' (श्वेउ ३।९) इति पुरुषस्य परतरत्व तद्व्यतिरिक्तस्य परत्वासभव च प्रतिपाद्य 'ततो यदुत्तरतर . . दु.खमेवापियन्ति' इति पूर्वोक्तमर्थं हेतुतो निगमयति, यदुत्तरतर पुरुषतत्त्व, तदेव अरूपमनामय यत, ततो ये तत्पुरुषतत्त्वं विदु', त एवामृता भवन्ति, अथेतरे दु खमेवापियन्तीति। अन्यथा उपक्रमविरोध. अनन्तरोक्तविरोधश्च। 'परात्पर पुरुषमुपैति दिव्यम्' इत्यपि पूर्वत्र 'अक्षरात्परत: परः' इत्यक्षरादव्याकृताद्यः पर' समष्टिपुरुष., तस्मात्परो योऽदृश्यत्वादिगुणकः सर्वज्ञ. परमपुरुष', स एवेहापि परात्पर इति समष्टिपुरुषात्परत्वेनोच्यते।

रामानुज ३।२।३५

(३) यच्चोक्त लाघवादखण्डैकात्म्यमिति, तन्न, 'तयोरन्यः पिप्पल स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति' (श्वेउ ४।६) इति श्रौतविभागानुपपत्त्या 'य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति' इत्यादिश्रौतबन्धमोक्षव्यवस्थानुपपत्त्या च आत्मभेदगौरवमेव ह्यादर्तव्य बुधानां, न तु लाघवमिति दिक्।

विज्ञान. २।३।४३

**सर्वाननशिरोग्रीव. सर्वभूतगुहाशयः।**
**सर्वव्यापी स भगवांस्तस्मात्सर्वगतः शिवः ॥**

यदुत्तरतरं तदरूपमित्युक्तं, तेन कार्यकारणयोर्भेदबुद्धिः प्राप्ता, तन्निवारणार्थमाह—सर्वाननशिरोग्रीव.। सर्वेषा सर्वाणि वा आननानि शिरासि ग्रीवाश्च यस्य स सर्वाननशिरोग्रीवः। शरीरात्मत्वनिवारणार्थमाह—सर्व-

(१) श्वेउ ३।१०, रामानुज ३।२।३०, ३५, निंबार्क ३।२।३१, ३६, श्रीकर ३।२।३०, विज्ञान १।१।२ (पृ ४५), २।३।४३, ३।२।१४, बलदेव ३।२।३७

(१) श्वेउ ३।११, शनन्द स भग (च भग), श्रीकठ ३।२।३५, ३६ शनन्दवत्, श्रीकर १।१।१

भूतगुहाशय. । सर्वेषा भूतानां स्थावरजङ्गमानां गुहा बुद्धि , तत्र शयन करोतीति गुहाशय । पुन. सर्वभूतगुहाशयत्वेन परिच्छेदे प्राप्ते उत्तरमाह––सर्वव्यापी च सर्वमिद चेतनाचेतनात्मक व्याप्नोति सर्वव्यापी । चकारो व्याप्यव्यापकभेदनिवारणार्थ. । भगवान् । समग्रज्ञानवैराग्यैश्वर्यधर्मयश.श्रियो भगशब्दवाच्याः, तद्वान् भगवान् । यस्मात्सर्वव्यापी भगवांश्च, तस्मात् तत· सर्वगत सर्वव्यापित्वेन सर्वत्र प्राप्त. शिव षड्गुणैश्वर्यवत्त्वेन स्वयप्रकाशानन्दात्मरूपत्वेन च मङ्गल. ।

शनन्द

[1]महान्प्रभुर्वै पुरुष सत्त्वस्यैष प्रवर्तक ।
सुनिर्मलामिमा प्राप्तिमीशानो ज्योतिरव्यय ॥

मङ्गलेषु निरवधिकत्वमाह — महान् अत्यन्तमधिक· । न ततोऽधिक मङ्गलमित्यर्थ । यथा न्यूनमङ्गलमसमर्थरूप, तथा अधिकमङ्गलोऽप्यय, मङ्गलत्वादित्यत आह –– प्रभुर्वै समर्थ प्रसिद्धः । तत्र हेतु. — पुरुष. परिपूर्ण । नातोऽन्यः समर्थ इत्यर्थ । प्रभुत्वमाह –– सत्त्वस्य अन्त·करणस्य, ज्ञानक्रियाशक्तेर्हिरण्यगर्भस्येत्यर्थ । एष. स्वयप्रकाशचिदानन्दात्मरूप प्रवर्तक प्रवृत्ते कारयिता, उत्पादक इत्यर्थ. । ननु कस्य सत्त्वस्योत्पादक इत्यत आह — सुनिर्मला सुष्ठु अविद्यादिमलरहिता मोक्षरूपा इमा विदुषा प्रत्यक्षां शान्तिं स्वयप्रकाशानन्दात्माविर्भावरूपाम् । यत प्राप्नोति, तस्येति शेष । ईशान सर्वस्य नियन्ता । नात्र पुनरुक्त प्रभुत्वमीश्वरस्यापि इष्ट तत्प्रसङ्गेनोच्यमानत्वात् । ज्योति. स्वयप्रकाशज्योतिःस्वरूपः । ज्योतिष्ट्वे व्ययाशङ्कितरज्योतिर्वदत आह –– अव्यय व्ययरहित । शनन्द

[2]अङ्गुष्ठमात्र पुरुषोऽन्तरात्मा
सदा जनाना हृदये सनिविष्टः ।
हृदा मनीषा मनसाऽभिक्लृप्तो
य एतद्विदुरमृतास्ते भवन्ति ॥

(पृ ८), १।१।१२, २८, ३२, १।२।११, २९, २।१।२२, ३।२।११, ३५, ३६, ३।३।६२, ४।४।२२ शनन्दवत्

(१) श्वेउ ३।१२, शनन्द प्राप्ति ( शान्ति )

(२) श्वेउ ३।१३

सर्वभूतगुहाशयत्वमुपपादयति — अङ्गुष्ठमात्रः । सर्वेषां द्विपदां स्वाङ्गुष्ठपरिमाण हृदयम् । बुद्धेरणुत्वेऽपि हृदयव्यापिप्रकाशत्वात्साऽपि हृदयस्था हृदयपरिमाणा । ततो बुद्ध्यन्त.स्थः पुमानप्यङ्गुष्ठपरिमाण. । पुरुष· पुरिशय । अन्तरात्मा आत्मनो बुद्धेरन्तः अन्तरात्मा । अङ्गुष्ठमात्रत्वे उपपत्तिमाह — सदा सर्वदा जनाना जनिमता हृदये हृदयसरसिजे संनिविष्टः सम्यक् नितरा प्रविष्ट । ननु सर्वस्मिन् शरीरे प्रविष्ट., कथ हृदये सनिविष्ट इत्यत आह––हृदा हृदयेन अभिक्लृप्त इत्यन्वय । ननु पद्माकारो मासखण्डो हृत्, तेन कथमभिक्लृप्त इत्यत आह––मनीषा । मनस ईष्टे या सा मनीट्, तया । तर्हि चिच्छक्तिरित्यत आह––मनसा अन्त·करणेन । हृदयस्थेन सकल्पविकल्पनियन्त्रा निश्चयात्मकेनान्तःकरणव्यापारेणेत्यर्थ । अभिक्लृप्त. समन्तात्क्लृप्तः । सर्वशरीरे वर्तमानोऽपि कुतश्चिन्निमित्तादङ्गुष्ठमात्रत्वेन मनसा परिक्लृप्त. इत्यर्थः । य एतद्विदुरमृतास्ते भवन्ति । एतत् उपाधेः पृथक्कृत स्वयप्रकाशचिदानन्दात्मरूप मङ्गुष्ठमात्रस्वरूप मुञ्जादिवेषीकाम् । व्याख्यातमन्यत् ।

शनन्द

[1]सहस्रशीर्षा पुरुष· सहस्राक्ष सहस्रपात् ।
स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥

अङ्गुष्ठमात्रत्वाभिधानेनाल्पत्व प्राप्त, तत्सर्वात्मकत्वकथनेन वारयति––सहस्रशीर्षा सहस्रशीर्ष. अनन्तमस्तक इत्यर्थः । पुरुष. परिपूर्णः । सहस्राक्ष. अनन्तचक्षु· । सहस्रपात् अनन्तचरणः । स सहस्रशीर्ष. भूमिं विश्वतो वृत्वा ब्रह्माण्डकटाहमेदिनीं सर्वत आवृत्य अत्यतिष्ठद्दशाङ्गुल दशसख्याकाङ्गुष्ठपरिमित देशमतीत्य स्थितिमकरोत्, तत्रोपलभ्यते इत्यर्थः । इद चाध्यात्माधिदैव च समत्वेनावगन्तव्यम् । अथवा, अत्यतिष्ठत्––भूमिं विश्वतो वृत्वा स्थित , तत्रोपपत्ति·––यस्मात्सर्वमतीत्य स्थितिमकरोदय, तत्राप्युपपत्तिः — षण्णवत्यङ्गुले शरीरे ईश्वरस्येद सचराचर दशाङ्गुल अल्प एकदेशः, तदीय एकाश इत्यर्थः ।

शनन्द.

(१) श्वेउ ३।१४, रामानुज १।२।२७, श्रीकठ १।२।४, ३।२।३५, श्रीकर १।१।१७

[1]पुरुष एवेद सर्वं यद्भूत यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्ने नातिरोहति ॥

ननु यद्ययमिदमतीत्य स्थितो नदीमिव कूल, तथा चायमस्मात्तद्वदेव भिन्न. स्यादित्यत आह — पुरुष एवेद सर्वम् । भूमिमतीत्य स्थित परिपूर्ण एव, न त्वन्य, इद विविधप्रत्ययगम्य निखिलमपि, न ततो भिन्नमित्यथ । तथाऽपि वर्तमान सर्वं पुमान्, न भूत, न च भावीत्यत आह — यद्भूत प्रसिद्धमतीत यत्, तत्पुरुष एव । यच्च भव्य यदपि भवनस्य कर्तृ, तदपि पुरुष एवेति पूर्वेणान्वय. । अथवा, सर्वशब्दार्थमाह — यद्भूत यच्च भव्यम् । अस्मिन् पक्षे चकारो वर्तमानसमुच्चयार्थे । एव चेन्नायमीश ससाररूपत्वादित्यत आह— उत अपि अमृतत्वस्य मोक्षस्य ईशान. ईश्वर । उतशब्दादस्य सर्वस्यापि । ननु कथ वाङ्मात्रेणेश्वरोऽस्येत्यत आह — यत् यस्मात् अन्नेन अदनीयेन अतिरोहति अधिका वृद्धि गच्छति । एतदुक्त भवति — न वाङ्मात्रेणेश्वर, किं तु अनेनैतदित्थमेवेत्यादिनियमकारित्वादिति ।

शनन्द

[2]सर्वत'पाणिपाद तत्सर्वतोक्षिशिरोमुखम् ।
सर्वत श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥

ननु भगवानयमन्नेन यद्यतिरोहति, तर्हि शरीरवन्नियतपाणिपादादिरूप इत्यत आह — सर्वत पाणिपाद सर्वत' पाणयः पादाश्च यस्य तत्सर्वत.पाणिपाद तत् ईश्वररूप सर्वतोक्षिशिरोमुख सर्वतोऽक्षीणि शिरांसि मुखानि च यस्य तत्सर्वतोक्षिशिरोमुख सर्वत श्रुतिमत् सर्वतः श्रुतयो यस्य सन्ति तत्सर्वतःश्रुतिमत् लोके ससारे कर्मफलेऽस्मिन्ननाद्यविद्यावशात् सर्वं निखिल आवृत्य स्वेन ब्राह्मेण रूपेणाऽऽवरण कृत्वा तिष्ठति । स्पष्टम् । सर्वात्मत्वादन्नेनातिरोहो न देहवदित्यर्थ. ।

शनन्द

(१) श्वेउ ३।१५, रामानुज १।२।२७, अमध्व १।३।४३, वल्लभ १।१।११, २।३।४४ भव्यम् (भाव्यम्), विज्ञान ३।२।३२

(२) श्वेउ ३।१६, श्रीकर ३।३।६२, बलदेव २।१।२७, ३१

[1]सर्वेन्द्रियगुणाभास सर्वेन्द्रियविवर्जितम् ।
सर्वस्य प्रभुमीशान सर्वस्य शरण सुहृत् ॥

इन्द्रियात्मत्वमुक्त्वा इन्द्रियज्ञानतद्विषयरूपतामाह — सर्वेन्द्रियगुणाभासम् । सर्वेन्द्रियाणां गुणास्तद्वृत्तयो रूपादिज्ञानानीत्यर्थ. । तेषामाभासा फलानि घटादिस्फुरणानि । तदाश्रया घटादयो लक्ष्यन्ते, औचित्यात् । सर्वेन्द्रियाणा गुणाश्चाऽऽभासाश्च यस्मिंस्तादात्म्येन व्यवस्थिता, तत्सर्वेन्द्रियगुणाभासम् । किमेवरूपमेवेत्याशङ्क्य नेत्याह — सर्वेन्द्रियविवर्जितम् । सर्वैरिन्द्रियै । उपलक्षणमिदम् । अन्यैरप्यविद्यादिभिर्भावैर्विवर्जित परित्यक्त, तद्रहितमित्यर्थ. । तत् पूर्वोक्तादन्यदिति बुद्धि वारयति —सर्वस्य प्रभुमीशान सचराचरस्य जगतः सामर्थ्ये सति नियन्तारम् । एव चेन्नाऽऽर्ताना रक्षकः परमेश्वरो नियन्तृत्वादित्यत आह — सर्वस्य स्थावरजङ्गमात्मकस्य शरण रक्षितृ ऐश्वर रूपम् । अनेन सघृण ईश्वर इत्युक्तम् । इदानीं वैषम्य वारयति — सुहृत् उपकारनिरपेक्षः प्रत्युपकारस्य कर्ता, अविषम इत्यर्थ. ।

शनन्द.

[2]नवद्वारे पुरे देही हसो लेलायते बहि ।
वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च ॥

तत्पदाथमुक्त्वा त्वपदार्थमाह — नवद्वारे नवसख्याकानि द्वाराणि निर्गमनकारणानि द्वौ कर्णौ द्वे चक्षुषी द्वे नासिके आस्यमुपस्थः पायुश्चेति नव च्छिद्राणि यस्य तस्मिन् पुरे, धातुभि' पूर्यते इति पुर, तस्मिन् देही देहसबन्धवान् हस बुद्ध्युपाधिः सन् हन्ति गच्छतीति हस' लेलायते चलति । क्व, बहिः रूपादौ बहिर्मुखत्वेन । इदानीं वाक्यार्थमाह — वशी यो हस स एव वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च । चकाराज्जडस्यापि । स्पष्टमन्यत् । सर्वस्य वशे वर्तते इत्यर्थः ।

शनन्द.

(१) श्वेउ ३।१७, श्रीकर ३।३।६२ मीशान (मव्यक्त), बलदेव १।१।१

(२) श्वेउ ३।१८

*[1]अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः।
स वेत्ति वेद्य न च तस्यास्ति वेत्ता
तमाहुरग्र्य पुरुषं महान्तम् ॥

( १ ) येनाय हस ऐक्य गच्छति, यश्च हस, स एव वस्तुत एतादृशरूप इत्याह— अपाणिपादः अकरचरण. जवन. वेगवान् अपाणिर्ग्रहीता आदाता। पश्यति अवलोकयति अचक्षुः अनेत्र.। स जीवाभिन्न ईश्वर. स्वयप्रकाशचिदानन्दात्मवपु· शृणोति श्रवण करोति अकर्णः कर्णरहितः। सः उक्त.। पुनस्तच्छब्दादानमपाणिपादादावपि तच्छब्दानुवृत्त्यर्थम्। वेत्ति जानाति वेद्य वेदनीय निखिलमपि वस्तुजातम्। न च नैव तस्य आत्मन· अस्ति विद्यते वेत्ता वेदिता ज्ञाता। त अपाणिपादादिरूप आहु. कथयन्ति, ब्रह्मज्ञानिन इति शेष.। अग्र्य अग्रे भव पुरुष परिपूर्ण महान्त सर्वस्मादधिकम्। शनन्द

( २ ) 'विकरणत्वान्नेति चेत्तदुक्तम्' — 'अपाणिपादो शृणोत्यकर्ण.' इत्यकरणस्यापि ब्रह्मण सर्वसामर्थ्ययोग दर्शयति। ब्रशकर २।१।३१

( ३ ) न च परस्याऽऽत्मनः करणायत्तद्रष्टृत्वादिक, अपि तु स्वभावत एव, सर्वज्ञत्वात्। सत्यसकल्पत्वाच्च स्वत एव। तथा च श्रुतिः—'पश्यत्यचक्षु· स शृणोत्य कर्ण.' 'अपाणिपादो जवनो ग्रहीता' इति। न च दर्शन श्रवणादिशब्दाश्चक्षुरादिकरणजन्मनो ज्ञानस्य वाचका., अपि तु रूपादिसाक्षात्कारस्य। स च रूपादिसाक्षात्कारः कर्मतिरोहितस्वाभाविकज्ञानस्य जीवस्य चक्षुरादिकरणजन्मा, परस्य तु स्वत एव। रामानुज १।२।१९

* वल्लभ तैउ २।९ (पृ ७३५), काउ २।२१ (पृ १४०७) इत्यत्र च सकलव्य द्रष्टव्यम्।

(१) श्वेउ ३।१९, ब्रशकर १।१।१५, २।१।३१, रामानुज १।२।१९, २।१।८, ३१, ब्रमध्व २।१।३२, श्रीकर १।१।५ (पृ ५४), २।१।१३, २२, ३१, २।२।४०, ४।४।१३, वल्लभ ३।२।१५, २३, विज्ञान १।२।२१ वेद्य (विश्व) तस्यास्ति (तस्य), बलदेव २।१।३०

*[1]अणोरणीयान्महतो महीयानात्मा गुहाया निहितोऽस्य जन्तो।
तमक्रतु पश्यति वीतशोको
धातु प्रसादान्महिमानमीशम् ॥

इदानीमात्मसाक्षात्कारे अगण्यपुण्योदयादीश्वरकटाक्षः कारणमित्याह — अणोरणीयान् अल्पादल्पतर. महतो महीयान् प्रौढात्प्रौढतर. आत्मा अस्मत्प्रत्ययसाक्षी अस्य जन्तो प्रत्यक्षस्य जननधर्मवत. निहितः निक्षिप्त. गुहाया बुद्धौ। त अणोरणीयानित्यादिधर्मैर्दुर्दर्शं अक्रतु सकल्परहित पश्यति साक्षात्करोति वीतशोकः अपगताविद्य.। तत्र कारणमाह — धातुः जगतो विधातु ईश्वरस्य प्रसादात् करुणाकटाक्षात्। अथवा धातु ईश्वरस्यान्त करणस्य प्रसादात् नैर्मल्यात्। महिमान अधिकगुणरूप ईश नियन्तारम्। शनन्द

[2]वेदाहमेतमजरं पुराण
सर्वात्मानं सर्वगतं विभुत्वात्।
जन्मनिरोधं प्रवदन्ति यस्य
ब्रह्मवादिनो हि प्रवदन्ति नित्यम् ॥

धातुः प्रसादे सति आत्मा ज्ञायते इति मन्त्रद्रष्टा स्वानुभव दर्शयन्नाह — वेदाहमेतम्। व्याख्यातम्। अजर जरारहितम्। अत्र हेतु.— पुराण पुराऽपि नवम्। सर्वदा एकरूपमित्यर्थः। पुराणत्वे हेतु — सर्वात्मान सर्वेषामस्मत्प्रत्ययसाक्षिणम्। सर्वात्मत्वे हेतुः— सर्वगत सर्वत्र प्राप्तम्। सर्वगतत्वे हेतुः— विभुत्वात् व्यापित्वात्। इदानीं पूर्वोत्तरपक्षावाह— जन्मनिरोधम्। जन्म च निरोधश्च जन्मनिरोध उत्पत्तिविनाशावित्यर्थ। प्रवदन्ति प्रकर्षेण कथयन्ति। मूढा इति शेष। यस्य आत्मन.। अय पूर्व· पक्ष·। ब्रह्मवादिनः उत्पन्नतत्त्वसाक्षात्कारा. हि प्रसिद्धा प्रवदन्ति प्रकर्षेण कथयन्ति नित्यम्। धर्मधर्मिभेदनिवारणार्थे च त्वान्त-

* काउ २।२० (पृ १४०६) इत्यत्रापि व्याख्यानानि द्रष्टव्यानि।

(१) श्वेउ ३।२०, शनन्द नात्मा जन्तो (नात्माऽस्य जन्तोर्निहितो गुहायाम्), विज्ञान १।३।२४, २।३।२९-
(२) श्वेउ ३।२१

त्वेनानभिधानम् । जन्ममरणशून्यमविनाश्यात्मतत्त्वम् ।

शनन्द

इति तृतीयोऽध्याय ॥

---

## चतुर्थोऽध्यायः

अर्थसहितानामनेकवर्णाना कर्ता एको वर्ण विश्वोत्पत्ति-
सहारकर शुभबुद्धिसयोजयिता अग्न्या-
दित्यवाय्वादिदेवतारूप स्त्रीपुभेदरूप
विश्वतोमुख नीलहरितपतङ्गादि
रूप विभु

**य एकोऽवर्णो बहुधा शक्तियोगा-**
**द्वर्णाननेकान्निहितार्थो दधाति ।**
**वि चैति चान्ते विश्वमादौ स देव**
**स नो बुद्धया शुभया सयुनक्तु ॥**

धातु प्रसादादक्रतु पश्यतीत्युक्तम् । धातुः प्रसादोपायश्च नोक्तः इदानीमस्मिन्नध्याये धातुरीश्वरस्य विविधविभूतिमद्रूपेण वर्तमानस्य प्रार्थनादिरूप उपायो धातु प्रसादे, प्रसङ्गाच्च तत्त्वपदार्थयोरपि प्रकारान्तरेण निर्णय, ईश्वरस्य मायाबलाज्जगत्कारणत्वादिबद्धाबद्धस्वरूप चेत्यादि कथ्यते — य. प्रसिद्ध. एकः भेदशून्य वर्णः वर्ण्यते इति वर्ण. पदार्थः, स्वयप्रकाशचिदानन्दात्मेत्यर्थ. । बहुधा बहुप्रकारान् शक्तियोगात् मायासबन्धात् वर्णान् पदार्थान् चिदचिदात्मकान् अनेकान् भेदवतः निहितार्थ. । निहितो निक्षिप्तस्तिरस्कृत इत्यर्थ, अर्थः प्रयोजन यस्य स निहितार्थ. दधाति धारयति करोतीत्यर्थ. । वि चैति व्येति च विविध प्राप्नोत्यपि शान्ते स्वप्रकाशचिदानन्दात्मनि । किं, विश्व चराचरात्मकम् । आदौ जगत उत्पत्ते प्राक् सः एको वर्ण इत्यादिनोक्त. देव स्वयप्रकाश. । अथवा, य एको वर्णः ओंकार बहुधा बहुशाखोपाङ्गोपवेदादिभिन्नान् शक्तियोगाद्वर्णाननेकान् वेदानृगादिभेदभिन्नान् स्वव्याप्तिशक्तिसबन्धात् शङ्कुरिव पर्णान्यनेकानि निहितार्थः स्वात्मनि प्रक्षिप्ताभिधेयो दधाति । वि चैति शान्ते विश्वमादौ स देव. । स ओंकारः आदित्यवत्सर्वार्थप्रकाशको देव. आदौ अभिधेयस्योत्पत्तेः प्राक् शान्ते अभिधानाभिधेयशून्ये स्वात्मनि विविधमभिधेयत्वेनाभिधानरूप स्वय प्राप्नोत्यपि विश्वम् । अथवा, य एको वर्णः अकार बहुधा बहुप्रकारान् ह्रस्वादिभेदेन स्वात्मसामर्थ्यसबन्धादुकारादीन्वर्णान् विभिन्नान् स्वात्मनि प्रक्षिप्तौकारवर्णनिष्पत्तिप्रयोजनो दधाति । विविध प्राप्नोत्यपि स स्वार्थप्रकाशक ओंकारस्य सप्तममात्रास्वरूपे स्वात्मनि अशेषव्यापारोपरमे विश्व प्रथमतः । अस्मिन्पक्षे आदौ य एक इत्यन्वय । अथवा, य एको वर्ण शब्दतत्त्व बहुधा बहुप्रकारान् कुण्डलिनीशक्तिसबन्धादेकद्वित्र्यादिवेष्टनै. सस्वरान् कादीन्वर्णान् विभिन्नान् स्वात्मनि निहिताभिधेयप्रयोजनो दधाति करोति । शान्ते चिदचिदादिभेदशून्ये स्वात्मनि आदौ सर्ववर्णोत्पत्ते प्राक् विश्व विविध प्राप्नोत्यपि स प्रकाशस्वभाव., अर्थाना वर्णेष्वन्तर्भूतत्वात्तेषा च शब्दतत्त्वे । ततो विश्वस्य स्वात्मनि प्राप्तिरविरुद्धा । अथवा, अष्टाङ्गयोगनिरतस्य योगिनः आदौ प्रथमाया योगसिद्धौ निर्विकल्पकप्रतीतिविषयवत् य एको वर्णो नीहारादिरूपभेदशून्यो रूपतन्मात्र हार्दलोहितपिण्डस्थ बहुप्रकारान् मन पवनविधारणायासशक्तिसबन्धात् नीहारादिवर्णान् श्वेतादीन् बहुभेदभिन्नान् स्वात्मनि निक्षिप्तयोगसिद्धिप्रयोजनो धारयति । उपरते तस्मिन्योगसिद्धिविघ्ने विश्व भेदात्मक चावगच्छत्यपि स वर्णो यन्निमित्त विघ्ननिर्गमन च देवो द्योतनात्मक, स्वयप्रकाशानन्दात्मप्रकाशसमासन्नत्वात् । स. यो वर्णः, स देव इत्युक्त प्रसिद्ध, न अस्मान् बुद्धया शुभया ब्रह्मविषयया धिषणया मोक्षहेतुभूतया सयुनक्तु सयोजयतु इति वाचा व्यापार प्रदर्शित प्रयोजनकथनेन ।

शनन्द.

**तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमा ।**

---

(१) श्वेउ ४।१, शनन्द एकोऽवर्णो ( एको वर्णो ) चान्ते ( शान्ते ), श्रीकठ १।१।३ ( पृ १५८ ) स नो बुद्धया शुभया ( स नो देव शुभया स्मृत्या ), विज्ञान १।४।२० एकोऽवर्णो ( एको वर्णो ) तार्थो ( तान्नो ), बलदेव १।४।३, ९, २६, २।१।३०

(१) श्वेउ ४।२, वल्लभ १।४।९ स्तदादित्यस्तद्वायु ( स्तद्वायुस्तदादित्य ), विज्ञान १।४।२०

**तदेव शुक्रं तद्ब्रह्म तदापस्तत्प्रजापतिः ॥**

इदानीं विभूतिमत्त्सत्त्व ब्रह्मेत्यवगन्तव्यमिति कथयन् मानस चिन्तनमग्न्यादयो ब्रह्मैवेति कर्तव्यमिति तावदाह—तदेव पूर्वोक्त ब्रह्मैव अग्नि॰ तेजः। तत् ब्रह्म आदित्यः चण्डकिरणः। तत् ब्रह्म वायुः पवनः। तदु चन्द्रमा सोमोऽपि ब्रह्म। तदेव शुक्र ब्रह्मैव दीप्तिमत्स्वप्रकाशस्वरूपम्। तद्ब्रह्म जगत्कारणम्। तदापः ब्रह्मैवोदकानि। तत्प्रजापतिः ब्रह्म विधाता।

शनन्द.

[1]**त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी।**
**त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः ॥**

एवं स्तुत्या चिन्तनेन च स्वात्मनि प्रतिभातब्रह्मस्वरूप मन्त्रद्रष्टाऽऽह—त्वं स्वयमानन्दात्मा स्त्री स्त्रीशब्दप्रत्ययविषय। त्वं आनन्दात्मा पुमान् पुरुषशब्दप्रत्ययविषयः असि भवसि। त्वं आनन्दात्मा कुमार॰ कुमारशब्दप्रत्ययविषयः। उत वा अप्येव कुमारी कुमारी शब्दप्रत्ययविषयः। त्वमिति शेष.। त्वं आनन्दात्मा जीर्णं वयोहीनः दण्डेन दण्डतृतीयपादेन वञ्चसि अञ्चसि गच्छसि। त्वं आनन्दात्मा जातः उत्पन्न. भवसि सत्तां करोषि विश्वतोमुखः सर्वतोमुखः, नानावस्था प्राप्नोषीत्यर्थः। यद्यपि स्त्री पुमानित्युक्ते कुमारादिकमपि सिद्ध भवति, तथाऽपि युवतिरेत सिचोरेव स्त्रीपुंसत्व स्त्रीलिङ्गपुलिङ्गयोरितिशङ्कानिवारणार्थं कुमार इत्याद्यभिधानम्।

शनन्द

[2]**नील॰ पतङ्गो हरितो लोहिताक्ष-**
**स्तडिद्गर्भ ऋतव समुद्रा।**
**अनादिमत्त्व विभुत्वेन वर्तसे**
**यतो जातानि भुवनानि विश्वा ॥**

इदानीं रूपकरूपेण कारणात्मानमाह—नील दूर्वादलाभ. पतङ्ग. पक्षी हरित.। नील कृष्णोऽपि भवति, तन्निवारणार्थं हरित इत्यभिधानम्। दूर्वादलश्यामल॰। लोहिताक्ष. लोहिते रक्ते अक्षिणी यस्य स लोहिताक्ष.। तडिद्गर्भ॰। सौदामिनीसपातचञ्चल दृष्टनष्टस्वभाव जगत् तडिच्छब्देनाभिधीयते। तडित् गर्भे यस्य स तडिद्गर्भ। इदानीं पक्षद्वयमाह—ऋतव॰ समुद्रा.। वसन्ताद्या॰ षट् प्रसिद्धा। समुद्राः लवणोदादय॰। यद्यपि सप्तेमे, तथाऽपि मधुराम्बुसमुद्रस्य सर्वत्रानुस्यूतत्वात्षडेवैतेऽपि गणनीयाः। तथा च पक्षयोरुभयो समत्वम्। अथवा कालेन जले ब्रह्माण्ड जायते। तथा च कालजलयोः पक्षत्वकल्पनाया समुद्राणा सप्तत्वेऽप्यदोष.। कारणे कारणान्तर वारयति—अनादिमत्। अनादिमत् अनादिमान्। आदि कारण यस्यास्ति तदादिमत्, न आदिमत् त्व कारणात्माऽश्वमेधयाजिना ब्रह्माण्डान्तःस्थाना ब्रह्माण्डाद्बहिर्नयनाय वायो समर्पक॰। अनादिमत्त्वे हेतु—विभुत्वेन वर्तसे देशकालवस्तुपरिच्छेदशून्यत्वेन वर्तन कुरुषे। यत. यस्माद्भवत. जातानि उत्पन्नानि भुवनानि कर्मफलानि चतुर्दशलोकरूपाणि विश्वा विश्वानि सर्वाणि।

शनन्द

अजा लोहितशुक्लकृष्णरूपा प्रजावती, अजा भोक्तार, द्वौ सुपर्णौ भोक्त्रभोक्तारौ, भोक्तु ईशदर्शनजन्यमुक्ति, ज्ञातव्य ऋच अक्षर परम व्योम, विश्वस्रष्टा मायी माया मायाबद्धश्च, वरददेवप्राप्ति अत्यन्तशान्तिप्रदा

**अजामेका लोहितशुक्लकृष्णा**
**बह्वी॰ प्रजाः सृजमाना सरूपाः।**
**अजो ह्येको जुषमाणोऽनु शेते**
**जहात्येनां भुक्तभोगामजोऽन्यः ॥**

(१) इदानीं जगत्कारणे त्रेधा परिच्छेद मनसा विधाय रूपकरूपेण बन्धमोक्षव्यवस्थामाह — अजा छागां(र्गी) मूलप्रकृतिं बुद्ध्या विनिःसारितचिद्रूपा एका सजातीयभेदशून्यां लोहितशुक्लकृष्णा रक्तश्वेतकृष्णवर्णाम्। पिङ्गलधूम्रश्यामादीना रक्तादिष्वेवान्तर्भावात्सर्व-

(१) श्वेउ ४।३, ब्रशाकर १।२।१०, २।३।४३, भास्कर २।३।४३ वञ्चसि त्व जातो भवसि (वञ्चयसि), विज्ञान २।१।२१, २।३।४३, ३।२।३२

(२) श्वेउ ४।४

(१) श्वेउ ४।५, ब्रशाकर १।४।८, भास्कर रामानुज १।४।८, १०, २३, निंबार्क १।४।८, २।३।१७, ब्रमध्व २।१।१८, श्रीकठ १।४।८, श्रीकर १।४।८, १० सृजमाना (सृज्यमाना), वल्लभ १।४।८, विज्ञान १।१।१५ (पृ १२५), १।४।१, ९, बलदेव १।४।८

वर्णामित्यर्थ.। अय भाव.— आत्मा तावदसङ्गोदासीनो निर्गुण., मायाऽपि चेत्तादृशी कृत तत्कल्पनया। अत्यन्तासत एव चास्य चराचरस्योत्पाद स्यात्। ततः कल्प्यमानेय यादृश कार्यं तादृशी तदभिन्ना च कल्पनीया। तथा च कार्याणा तेजोबन्नानां यानि रूपाणि तानि मायायामपि सन्त्येव। ततो माया लोहितशुक्लकृष्णरूपा न विरुद्धेति। बह्वी. अनेका. अनन्ता. प्रजाः स्वकार्यभूताः सृजमानां सृष्टिं कुर्वाणा सरूपा· समानरूपाः लोहितशुक्लकृष्णा इत्यर्थः। भूतभौतिकप्रपञ्चजातमिति भाव.। अज· छागो जीव हि प्रसिद्धः अस्मत्प्रत्ययालम्बन एक उपाधेरविद्याया ऐक्यादेक·। न चान्तःकरणमन्यदुपाधि, तस्य कार्यत्वेनानित्यत्वात् तन्नाशे जीवनाशात्कृतहान्यकृताभ्यागमप्रसङ्गात्। न चाविद्यामन्तरेणाकार्यमुपाध्यन्तर किंचिदास्थातु शक्य, शास्त्रविरोधात्। न चाविद्यायामनेकत्व विनैकामविद्याम्। न चानेकासा स्वातन्त्र्य, कल्पनागौरवादिदोषात्। तस्मादेकैवाऽऽवरणरूपाऽविद्याऽनेकैर्विक्षेपरूपैराविर्भवति आब्रह्मज्ञान, बदरीव आबदरीबीजदाहम्। न चात्र बन्धमोक्षयोरनुपपत्ति, कल्पितयोस्तयोः सत्त्वात्। वस्तुतस्तु न कस्यचित्पक्षे बन्धो मोक्षश्च सभवतीत्यलमतिविस्तरेण। जुषमाण सानुराग सेवा कुर्वाण·। अह दुःखी ममेदमनुकूल प्रतिकूल चेत्यादिप्रत्ययवानित्यर्थः। अनु शेते निद्राणामनु निद्रां करोति। स्वयप्रकाशोऽपि प्रकृते· जाड्येन तामात्मीयत्वेन मन्यमान आनन्दात्मान न प्रत्येतीत्यर्थ.। अय बन्धः। इतः पर मोक्षः। जहाति परित्यजति एना मायामावरणविक्षेपरूपा भुक्तभोगा भुक्तो भोगो यया सा भुक्तभोगा, ता, ब्रह्मज्ञानाग्निना प्लुष्टसर्वाङ्गामित्यर्थ.। अजः छाग ईश्वरो नित्याबद्धो जनिमरणादिरहितो नित्यमुक्त अन्य. चित्तेन कल्पितभेदो बद्धाद्व्यतिरिक्तः स्वयप्रकाशमानसविदानन्दात्ममात्र इत्यर्थ·। शानन्द.

( २ ) 'चमसवदविशेषात्' — पुनरपि प्रधानवादी अशब्दत्व प्रधानस्यासिद्धमित्याह। कस्मात्। मन्त्रवर्णात् — 'अजामेका मजोऽन्यः' इति। अत्र हि मन्त्रे लोहितशुक्लकृष्णशब्दैः रज सत्त्वतमास्यभिधीयन्ते। लोहित रजः, रञ्जनात्मकत्वात्। शुक्ल सत्त्व, प्रकाशात्मकत्वात्। कृष्ण तमः, आवरणात्मकत्वात्। तेषा साम्यावस्था अवयवधर्मैर्व्यपदिश्यते — लोहितशुक्लकृष्णेति। न जायते इति च अजा स्यात्, 'मूलप्रकृतिरविकृति.' ( सां० का० ३ ) इत्यभ्युपगमात्। ननु अजाशब्दः छाग्या रूढ.। बाढम्। सा तु रूढि इह नाश्रयितु शक्या, विद्याप्रकरणात्। सा च बह्वी. प्रजास्त्रैगुण्यान्विता जनयति। ता प्रकृतिं अज एकः पुरुषो जुषमाण· प्रीयमाण सेवमानो वा अनुशेते तामेवाविद्या अविद्यया आत्मत्वेनोपगम्य सुखी दु.खी मूढोऽहमित्यविवेकतया ससरति। अन्य पुनरज. पुरुषः उत्पन्नविवेकज्ञानो विरक्तो जहात्येना प्रकृतिं भुक्तभोगा कृतभोगापवर्गां परित्यजति, मुच्यते इत्यर्थ। तस्मात् श्रुतिमूलैव प्रधानादिकल्पना कापिलानामित्येव प्राप्ते ब्रूमः — नानेन मन्त्रेण श्रुतिमत्त्व सांख्यवादस्य शक्यमाश्रयितुम्। न ह्यय मन्त्रः स्वातन्त्र्येण कंचिदपि वाद समर्थयितुमुत्सहते, सर्वत्रापि यया कयाचित्कल्पनया अजात्वादिसपादनोपपत्ते. साख्यवाद एवेहाभिप्रेत इति विशेषावधारणकारणाभावात्। चमसवत्। यथा हि 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्न' ( बृ० २।२।३ ) इत्यस्मिन्मन्त्रे स्वातन्त्र्येणाय नामासौ चमसोऽभिप्रेत इति न शक्यते निरूपयितु, सर्वत्रापि यथाकथंचिदर्वाग्बिलत्वादिकल्पनोपपत्ते.। एवमिहाप्यविशेष. 'अजामेकाम्' इत्यस्य मन्त्रस्य। नास्मिन्मन्त्रे प्रधानमेवाजाभिप्रेतेति शक्यते नियन्तुम्। १।४।८

'ज्योतिरुपक्रमा तु तथा ह्यधीयत एके'—तत्र तु 'इद तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न.' इति वाक्यशेषात् चमसविशेषप्रतिपत्तिर्भवति। इह पुन. केयमजा प्रतिपत्तव्येत्यत्र ब्रूमः— ज्योतिरिति। परमेश्वरादुत्पन्ना ज्योतिष्प्रमुखा तेजोबन्नलक्षणा चतुर्विधस्य भूतग्रामस्य प्रकृतिभूतेयमजा प्रतिपत्तव्या। तुशब्दोऽवधारणार्थ। भूतत्रयलक्षणैवेयमजा विज्ञेया, न गुणत्रयलक्षणा। कस्मात्। तथा ह्येके शाखिन. तेजोबन्नानां परमेश्वरादुत्पत्तिमाम्नाय तेषामेव रोहितादिरूपतामामनन्ति—'यदग्ने रोहित रूप तेजसस्तद्रूप यच्छुक्ल तदपा यत्कृष्ण तदन्नस्य' ( छा० ६।४।१ ) इति। तान्येवेह तेजोबन्नानि प्रत्यभिज्ञायन्ते, रोहितादिशब्दसामान्यात्।

रोहितादीना च शब्दाना रूपविशेषेषु मुख्यत्वात्, भाक्तत्वाच्च गुणविषयत्वस्य। असदिग्धेन च सदिग्धस्य निगमन न्याय्य मन्यन्ते। * ब्रशकर १।४।९

( ३ ) किमस्मिन्मन्त्रे केवला तन्त्रसिद्धा प्रकृतिरभिधीयते, उत ब्रह्मात्मिकेति । नात्र तन्त्रसिद्धा प्रकृतिरभिधीयते। कुत.। न जायत इत्यजेत्यजात्वमात्रप्रति पादनात्। १।४।८

'ज्योतिरुपक्रमा०'—ब्रह्मात्मकाजाग्रहणे एव विशेषहेतुरस्तीत्याह—ज्योतिरुपक्रमेति। तुशब्दोऽवधारणार्थ.। ज्योतिरुपक्रमैव एषा अजा। ज्योतिर्ब्रह्म, 'त देवा ज्योतिषा ज्योति '( बृउ ४।४।१६ ) 'अथ यदत परो दिवो ज्योतिर्दीप्यते' ( छाउ ३।१३।७ ) इत्यादिश्रुतिप्रसिद्धेः। ज्योतिरुपक्रमा ब्रह्मकारणिकेत्यर्थ.। तथा ह्यधीयत एके। हिर्हेतौ। यस्मादस्या अजाया ब्रह्मकारणकत्वमेके शाखिन. तैत्तिरीया अधीयते—'अजामेका लोहित शुक्लकृष्णा बह्वीं प्रजा जनयन्तीं सरूपाम्। अजो ह्येको जुषमाणोऽनुशेते जहात्येना भुक्तभोगामजोऽन्य.॥' (नाउ १२।१ ) इति। सर्वस्य तद्व्यतिरिक्तस्य वस्तुजातस्य तत उत्पत्त्या तदात्मकत्वोपदेशे क्रियमाणे अभिधीयमानत्वात् प्राणसमुद्रपर्वतादिविदेषाप्यजा बह्वीना सरूपाणा प्रजाना स्रष्ट्री कर्मवश्येनाऽऽत्मना भुज्यमाना अन्येन विदुषाऽऽत्मना त्यज्यमाना ब्रह्मण उत्पन्ना ब्रह्मात्मिकावगन्तव्येत्यर्थं। अतो वाक्यशेषात् चमसविशेषवच्छाखान्तरीयादेतत्सरूपात्प्रत्यभिज्ञायमानार्थाद्वाक्यात् नियमिता अजा ब्रह्मात्मिकेति निश्चीयते। १।४।९

'कल्पनोपदेशाच्च मध्वादिवदविरोधः' — कथ तर्हि ज्योतिरुपक्रमाया लोहितशुक्लकृष्णरूपाया अस्या. प्रकृतेरजात्व, अजाया वा कथ ज्योतिरुपक्रमात्वमित्यत आह — कल्पनोपदेशादिति। प्रसक्ताशङ्कानिवृत्त्यर्थ्थं चशब्द॰। अस्या. प्रकृतेरजात्व ज्योतिरुपक्रमात्व च न विरुध्यते। कुतः। कल्पनोपदेशात्। कल्पन क्लृप्तिः सृष्टिः। जगत्सृष्ट्युपदेशादित्यर्थ॰। यथा 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' ( नाउ १।१७ ) इति कल्पन सृष्टिः। अत्रापि 'अस्मान्मायी सृजते विश्वमेतत्' ( श्वेउ ४।९ ) इति जगत्सृष्टिरुपदिश्यते। अनेन कल्पनोपदेशेन अस्या. प्रकृतेः कार्यकारणरूपेण अवस्थाद्वयान्वय अवगम्यते। सा हि प्रलयवेलाया ब्रह्मतापन्ना अविभक्तनामरूपा अव्यक्तादिशब्दवाच्या सूक्ष्मरूपेणावतिष्ठते। सृष्टिवेलाया तु उद्भूतसत्त्वादिगुणा विभक्तनामरूपा व्यक्तादिशब्दवाच्या तेजोबन्नरूपेण च परिणता लोहितशुक्लकृष्णाकारा चावतिष्ठते। अतः कारणावस्था अजा, कार्यावस्था च ज्योतिरुपक्रमेति न विरोध। यत्पुनरस्या. प्रकृतेरजाशब्देन छागत्वपरिकल्पनमुपदिश्यते इति, तदप्यसगत, निष्प्रयोजनत्वात्। 'अजामेकाम्' 'अजो ह्येक॰' 'अजोऽन्य' इत्यत्राजशब्दस्य विरूपार्थपरिकल्पन च न शोभनम्। सर्वत्र छागत्व परिकल्प्यते इति चेत्, 'जहात्येनां भुक्तभोगामजोऽन्य' इति विदुष आत्यन्तिकप्रकृतिपरित्याग कुर्वतोऽनेन वाऽन्येन वा पुनरपि सबन्धयोग्यच्छागत्वपरिकल्पनमत्यन्तविरुद्धम्। १।४।१०

एव सर्वदा चिदचिद्वस्तुशरीरस्य परस्य ब्रह्मणो विभक्तनामरूपा या कारणावस्था, सा 'गौरनाद्यन्तवती' (चूउ ५) 'विकारजननीमज्ञाम्' (चूउ ३ ) 'अजामेकाम्' इत्यादिभिरभिधीयत इति।

* रामानुज १।४।२३

( ४ ) नाजाशब्दानुपपत्ति.। कुत.। कल्पनोपदेशात्। तेजोबन्नात्मिकाया अजात्व कल्प्यते, यथा लोके प्रसिद्धामजा भुक्तभोगामजस्त्यजति, अन्यस्तामनुवर्तते, एव त्यागभोगयो. कार्यकरणसघाताद्युपादानभूतायाः तेजोबन्नात्मिकाया. प्रकृते साम्यप्रतिपत्त्यर्थम्।

श्रीकर. १।४।१०

( ५ ) अजाशब्देन ज्योतिरेवोच्यते। यथा ह्यजा अल्पदोग्ध्री, तथेय नश्वरसुखदात्री अग्निसूर्यसोमविद्युद्रूपा ब्रह्मणो ह्सोक्तचरणरूपा, भगवत्कार्याशरूपत्वात्। 'तासां त्रिवृत त्रिवृतमेकैका करवाणि' ( छाउ. ६।३।३ ) इति श्रुतेश्च प्रथमोत्पन्ना देवता अजाशब्देनोच्यते, तत्र हेतुः — उपक्रमात्। अत्रैवोपक्रमे 'तदेवाग्निस्तद्वायुस्तदादित्यस्तदु चन्द्रमाः' इति। 'द्वा सुपर्णा' इति चाग्रे। मध्ये चाय मन्त्रः पूर्वोत्तर सबद्धमेव वदति। सा मुख्या सृष्टिः। अजद्वय जीव-

* भास्कर ब्रशकरवत्।

* निंबार्क श्रीकठ. रामानुजवत्।

ब्रह्मरूपमिति । वल्लभ. १।४।९

( ६ ) 'आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च'— ननु ब्रह्मणो जगत्कारणत्वादिक कथ श्रुत्यर्थः स्यात्, यतः एकेषा शाखिना श्वेताश्वतरादीना आनुमानिक प्रधानमपि जगज्जन्मादिकारणत्वेन श्रूयते — 'अजामेका०' इत्यादिषु । नन्वेव उभयोरेव कपालद्वयवत् विश्वोपादानत्वमस्त्विति, मैव, स्वातन्त्र्येणोभयो. कारणत्वे सति ब्रह्मणो विकारित्वापत्तेः, इति पूर्वपक्षदलार्थ. । तमिम पूर्वपक्ष शक्तिशक्तिमद्भावेनोभयोरेव कारणत्वेन समाधत्ते—न शरीररूपकविन्यस्त गृहीतेरिति । वक्ष्यमाणवाक्ये शरीरेण रूपकेण दृष्टान्तेन विन्यस्त उपन्यस्त यन्मायाख्य प्रधान, तस्यैव अजावाक्ये स्रष्टृत्वेन ग्रहणात्, न तु स्वतन्त्रकारणस्य कस्यचिदित्यर्थ । एतदुक्त भवति—नाजावाक्ये स्वातन्त्र्येण प्रधानस्य कारणत्व प्रोक्त, येन विरोध स्यात् । किंतु यथा अजाख्य छागीयशरीरस्य तज्जीवशक्तिविषया सजातीयबहुप्रजाकारणत्व, तथैव प्रधानस्यापि ब्रह्मशक्तिविषया कारणत्वमुक्त, वक्ष्यमाणदृष्टान्तानुसारात्, रूपकरूप्ययोरस्मिन्नप्यशे साम्यस्य विवक्षितत्वात् । तथा च अजादिवाक्यै. शरीरवत् शक्तिविषया प्रधानादीनामुपादानत्वादिक बोध्यते, तद्विना निर्विकारस्य ब्रह्मण उपादानत्वानुपपत्ते. । ब्रह्मवाक्यैश्च शरीरिवत् शक्तिमद्विषया शक्ति द्वारा ब्रह्मणोऽधिष्ठानकारणत्व प्रतिपाद्यते इति श्रुतीनामविरोध इति । ननु भवेदेव यद्यजानिरूपितप्रधानशक्तिकत्वेनात्र ब्रह्म उक्त स्यात्, न त्वेव, अजाशरीरित्वेन ब्रह्मण प्रतिपाद्यत्वे अन्यभोग्यत्वहेयत्ववचनानौचित्यात् । न च 'अजो ह्येको जुषमाणोऽनुशेते जहात्येना भुक्तभोगामजोऽन्य.' इत्युत्तरार्धे अजाधिष्ठातृ ब्रह्म कथितमिति वाच्य, उत्तरार्धे ज्ञानजीवयोरेव प्रतिपादनात्, न तु ब्रह्मण, 'जहात्येना भुक्तभोगामजोऽन्य' इति भोगत्यागस्य जीवलिङ्गत्वात् । तत् कथमजाया ब्रह्मशरीरदृष्टान्तताऽवधृतेत्याशङ्कायामाह — दर्शयति चेति । चो हेतौ । दर्शयति ह्यर्थाद्ब्रह्मशरीरतुल्यत्व प्रधानस्य श्रुति. — 'यस्तन्तुनाभ- . ब्रह्माव्ययम्' ( श्वेउ ६।१० ) 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सनिरुद्धः' ( श्वेउ ४।९ ) 'एतज्ज्ञेय . ब्रह्ममेतत्' ( श्वेउ १।१२) 'मायां तु प्रकृतिं विद्यान्मायिन तु महेश्वरम्' ( श्वेउ. ४।१० ) इत्यादिवाक्यशेषैरित्यर्थ. । अत्र तन्तुनाभदृष्टान्तादिभिस्तन्तुनाभशरीरतुल्यत्व प्रधानस्य लब्धमिति । न चैव प्रधानस्य आनुमानिकत्व कथमुच्यते, श्रुत्यापि तत्कारणतासिद्धेरिति वाच्य, स्मृतिषु प्राधान्येन विशिष्य च प्रतिपादनतः स्मार्तानुमानिकत्वादिवचनात् ब्रह्मण औपनिषदत्ववचनवदिति । १।४।१

आधुनिकास्तु 'आनुमानिकमप्येकेषाम्' इत्यारभ्य सर्वाणि सूत्राणि साख्ययोगसिद्धाना प्रधानमहदादिपदार्थाना स्वरूपप्रतिषेधपरतया यथा कथचित् व्याचक्षते । तत्तु श्रुतिस्मृतिन्यायादिविरोधादुपेक्षणीय मुमुक्षुभि' । यच्च तेषामजाशब्दस्य भूतत्रयपरतया व्याख्यान, तदपि हेय, 'अशक्य. सोऽन्यथा द्रष्टु ज्ञायमानः कुमारकै । विकारजननीमायामष्टरूपामजा ध्रुवाम् ॥' इति चूलिकोपनिषदादौ प्रधान एवाजात्ववचनात्, 'माया तु प्रकृतिं विद्यात्' इत्याद्यव्यवहितवाक्यशेषतः 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति वाक्योपक्रमतश्च 'अजामेकाम्' इत्यादिवाक्येऽप्यजाशब्दस्य मूलकारणवाचित्वावधारणाच्च, तथा अनादिसृष्ट्युपपादकतया अजाशब्दे यौगिकार्थस्यापि प्रकृते विवक्षितत्वाच्चेति ।

विज्ञान १।४।९

द्वा सुपर्णा सयुजा सखाया
समान वृक्ष परिषस्वजाते ।
तयोरन्य पिप्पल स्वाद्वत्त्य-
नश्नन्नन्यो अभिचाकशीति ॥

सति प्रकृतौ सबन्धे बद्धाबद्धयोर्व्यवस्था, न मायया सबन्ध (न्धे), बद्धाबद्धयोः ससारदशायामेकत्रादर्शनादित्याशङ्क्य अविद्या शरीरद्वयरूपिणीमधिदैवादिषु वृक्षत्वेन परिकल्प्य तत्त्वपदार्थौ च पक्षित्वेन, असान् बोधयितु मन्त्र आह—द्वा द्वौ उभौ सुपर्णा सुपर्णौ सुष्ठु पर्णौ पक्षौ ययोस्तौ सुपर्णौ । जीवस्य धर्माधर्मौ पक्षौ, ईश्वरस्याविद्यातत्सबन्धौ । सयुजा सयुजौ । युक् सबन्धस्तादात्म्य, तेन सह वर्तमानौ सयुजौ । सखाया

(१) श्वेउ ४।६ अन्यस्थलादिनिर्देश व्याख्यानानि च मुउ. ३।१।१ ( पृ १८६९ ) इत्यत्र द्रष्टव्यानि ।

सखायौ । जीवेनेश्वरः प्रसिद्धिं गतः, तेन च स, तदिद सखित्वमेतयो. । नियतोपकार्योपकारकत्व वा श्रुत्युक्त पातृ(त्य)त्व पालयितृत्व च । समान उभयोरपि साधारण, अविद्याद्दष्टार्जितत्वात् । वृक्ष छेदनात्मक विनाशन शरीरद्वयं परिषस्वजाते समन्तादालिङ्गन कुर्वाते । इदानीं तयोरसाधारण रूप वक्तुमाह—तयोः उभयोर्मध्ये । अन्य अविद्यातत्सबन्धपक्षाद्धर्माधर्मपक्षो जीवोऽन्य. । पिप्पल धर्माधर्मफल सुखदु खरूप स्वादु उपभुज्यमानमासक्तिप्रद उपभोगेन कदाचिदपि वैराग्यस्याजनकमित्यर्थ. । अक्ति भक्षयति । अह सुखी दु'खीत्यादि मनुते इत्यर्थः । अनश्नन् भोजनमकुर्वन्, अहममाभिमानशून्य इत्यर्थ । अन्य धर्माधर्मपक्षाद्व्यतिरिक्तः अविद्यातत्स बन्धपक्ष ईश्वरः अभिचाकशीति सर्वतः प्रकाशते ।
शनन्द

समाने वृक्षे पुरुषो निमग्नो[1]
ऽनीशया शोचति मुह्यमान. ।
जुष्ट यदा पश्यत्यन्यमीश-
मस्य महिमानमिति वीतशोक ॥

ननु विरुद्धधर्मयोरेतयो सखित्वमपि न मन्यामहे इत्याशङ्कय अज्ञाननिमित्त तत्, न तु सति ज्ञाने, तयो. सयुक्त्वादित्यभिप्रायवानाह — समाने वृक्षे साधारणे शरीरे पुरुष पुरिशयो जीव' निमग्न निमज्जन प्राप्तो जले इव पाषाण' । कर्तृत्वाद्यध्यासेन तिरस्कृतानन्दात्मरूप इत्यर्थ । अत. अनीशया अनीश्वरभावेन अह सुखी दु.खीत्यादिना शोचति शोक करोति । अनेन शरीरगृहक्षेत्रकलत्रादिना विना कथ भविष्यामीत्यादिरूप दु ख करोतीत्यर्थ' । मुह्यमान अनाद्यविद्यावासनाविलासैः समुत्थितचिन्तासतानः तत्पारागमनेन मोह विपरीतदर्शन दर्शनाभाव वा स्तब्धतारूप व्रजन् । कदाऽयमेवरूपो ब्रह्मरूपो भवतीत्यत आह — जुष्ट यदा आनन्दात्मप्रकाशसेवया परितुष्ट यस्मिन्काले पश्यति अवलोकयति साक्षात्करोतीत्यर्थ । अन्य अविद्यातत्कार्यतत्सबन्धव्यतिरिक्त स्वयप्रकाशमानानन्दात्मरूप ईश अविद्यातत्कार्यतत्सबन्धाना नियन्तार अविद्योपाधिकस्य च स्वात्मनः । तदा अस्य ईश्वरस्य महिमान आधिक्य स्वयप्रकाशमानानन्दात्माविर्भावरूप इति एति गच्छति अवबुध्यते इत्यर्थ. । वीतशोक. अपगतसमस्तशोककारणाविद्य. ।
शनन्द.

ऋचो अक्षरे परमे व्योम-[2]
न्यस्मिन्देवा अधि विश्वे निषेदु ।
यस्तन्न वेद किमृचा करिष्यति
य इत्तद्विदुस्त इमे समासते ॥

नन्वीशश्चेद्वेय स ब्रह्मरूप, ब्रह्म च वेद ऋगात्मक', तद्व्याख्यानस्य यजुष्ट्वात्तद्गीतेश्च सामत्वादाथर्वणस्य च ऋग्विशेषत्वेनाविप्रतिपत्तेर्वेदानां चाङ्गादिविद्यास्थानत्वात्तेषामृगात्मकत्वस्योक्तत्वादृच एवेशादिशब्दवाच्य ब्रह्मेत्यत आह—ऋच. पादबद्धा वर्णा. । अक्षरे व्यापिनि कारणे । तत् अव्याकृतमिति बुद्धिं वारयति—परमे व्योमन् परमे व्योम्नि अक्षरादुत्कृष्टे ब्रह्मण्याकाशवत्सर्वगते । केवल शब्दाधिष्ठानमिद, न त्वर्थप्रपञ्चस्येत्यत आह—यस्मिन् ऋगधिष्ठाने देवा अग्न्यादय इन्द्रियाणि वा भूतसाराणि सभूतानि अधि विश्वे सर्वे निषेदु. आधिक्येन सर्वतोऽवस्थान कृतवन्त । य. अधिकारी तत् शब्दार्थाधिष्ठानभूत न वेद न जानाति । किं आक्षेपे । ऋचा अपरेण शब्देन ब्रह्मणा तेन करिष्यति । स्पष्टम् । ये प्रसिद्धाधिकारिण' इत् इत्थ तत् ब्रह्म शब्दार्थाधिष्ठानभूत विदु जानन्ति, ते उक्ता अधिकारिणः इमे अस्माकं प्रत्यक्षशरीरा ब्रह्मज्ञानिनः समासते सम्यगुपवेशन कुर्वन्ति । आनन्दात्मस्वरूपेण व्यापिनो भवन्तीत्यर्थ । शनन्द.

छन्दांसि यज्ञा. क्रतवो व्रतानि[3]
भूत भव्य यच्च वेदा वदन्ति ।
अस्मान्मायी सृजते विश्वमेत-
त्तस्मिंश्चान्यो मायया सनिरुद्धः ॥

(१) श्वेउ ४।७ अयस्थलादिनिर्देश व्याख्यानानि च मुउ ३।१।२ ( पृ १४७१ ) इत्यत्र द्रष्टव्यानि ।

(१) श्वेउ ४।८, ब्रमध्व १।४।१९

(२) श्वेउ ४।९, रामानुज १।१।१ ( पृ १०२, ११६ ), १।४।८, ९, १०, २३, २७, २।१।२२, श्रीकठ १।४।१०, २।१।२२, श्रीकर १।१।३ ( पृ ६३ ), १।४।३, १०, २।१।२३, ३।२।२६, विज्ञान १।१।५ ( पृ १२५ ), १।४।१, बलदेव १।४।३

( १ ) ननु शब्दार्थयोरधिष्ठान जगत्कारण, न च जगत्कारणमयमित्यत आह—छन्दासि गायत्र्यादीनि, तैरुपलक्षिता ऋच· । यज्ञा ज्योतिष्टोमादय· । क्रतव सकल्पा उपासनानीत्यर्थ. । व्रतानि नियमरूपाणि भोजनकाल एवोदकपानादीत्यादीनि, कृच्छ्रचान्द्रायणादिरूपाणि तपोविशेषात्मकानि वा । भूत भव्य अतीत भावि च । किं बहुना, यच्च यत्किंचिदपि वेदा वदन्ति वेदाः कथयन्ति । अस्मात् शब्दार्थाधिष्ठानात् मायी, केवलस्य स्रष्टृत्ववारणार्थं मायीत्युच्यते, मायावी सृजते सृष्टिं कुरुते । विश्व सर्वं एतत् प्रपञ्चजातम् । तस्मिंश्च ईश्वरे आत्मन्यपि अन्य. धर्माधर्मपक्षो जीवः ईश्वराद्व्यतिरिक्तः । मायया अविद्यया सनिरुद्ध सम्यङ् निरोध प्राप्त । आत्मेश्वरयोस्तादात्म्यज्ञानहीन इत्यर्थ. ।

शनन्द

( २ ) स्वेनाविभक्तादस्मात्सूक्ष्मावस्थात्कारणान्मायी सर्वेश्वर. सर्वं जगत् सृजतीत्यर्थ ।

१।४।१०

'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सनिरुद्धः' इति च ब्रह्मणि जगद्रूपतया विक्रियमाणेऽपि तत्प्रकारभूताचिदशगता सर्वे विकारास्तत्प्रकारभूतक्षेत्रज्ञगताश्चापुरुषार्था इति विवेक्तु प्रकृतिपुरुषयोर्ब्रह्मशरीरभूतयोस्तदानीं तथा निर्देशानर्हातिसूक्ष्मदशापत्त्या ब्रह्मणैकीभूतयोरपि भेदेन व्यपदेश , 'तदात्मान स्वयमकुरुत' ( तैउ. २।७ ) इत्येवमादिभिरैकार्थ्यात् ।

रामानुज १।४।२७

**मायां[1] तु प्रकृतिं विद्यान्मायिन तु महेश्वरम् ।**
**तस्यावयवभूतैस्तु व्याप्त सर्वमिद जगत् ॥**

( १ ) ननु का च माया कश्च मायावीत्यत आह — माया तु प्रकृतिं जगदुत्पादनकारणभूता मायामेव विद्यात् जानीयात् । मायिन तु महेश्वर मायाविन महतामग्न्यादीना नियन्तारमेव । अस्य मायाविनः अवयवभूतैस्तु एकदेशभूतैरेव व्याप्त विशेषेण आप्त प्राप्त सर्वं निखिल इद विविधप्रत्ययगम्य जगत् चेतनाचेतनात्मकम् ।

शनन्द.

( २ ) अव्यक्ता हि सा माया, तत्त्वान्यत्वनिरूपणस्याशक्यत्वात् ।

ब्रशकर १।४।३

( ३ ) यदप्युक्त 'माया तु प्रकृतिं विद्यात्' इति, तदयुक्त, 'अजामेकाम्' इति तेजोबन्नलक्षणा प्रकृतिः प्रकृता, सा मायाशब्देनाभिधीयते । प्रकरोति स्वविकारानिति प्रकृतिरुच्यते, गीतायामपि वस्तुभूता प्रकृतिर्भूतामपीति व्यपदेशात् ।

भास्कर २।१।१४

( ४ ) तस्यास्तु 'माया तु प्रकृतिं विद्यात्' इति मायाशब्देनाभिधानादनिर्वचनीयत्वमिति चेत् । नैतदेवम् । मायाशब्दस्यानिर्वचनीयवाचित्व न दृष्टमिति । मायाशब्दस्य मिथ्यापर्यायत्वेनानिर्वचनीयत्वमिति चेत् । तदपि नास्ति । न हि सर्वत्र मायाशब्दो मिथ्याविषयः, असुरराक्षसशस्त्रादिषु सत्येष्वेव मायाशब्दप्रयोगात् । यथोक्तम् — 'तेन मायासहस्र तच्छम्बरस्याशुगामिना । बालस्य रक्षता देहमेकैकाशेन सूदितम् ॥' ( वि पु १।१९।२० ) इति । अतो मायाशब्दो विचित्रार्थसर्गकराभिधायी । प्रकृतेश्च मायाशब्दाभिधान विचित्रार्थसर्गकरत्वादेव ।

रामानुज १।१।१ ( पृ १०१ )

( ५ ) 'अभिध्योपदेशाच्च' — 'मायां तु प्रकृतिं विद्यान्मायिन तु महेश्वरम्' 'महामायेत्यविद्येति नियतिर्मोहिनीति च । प्रकृतिर्वासनेत्येव तवेच्छानन्त कथ्यते ॥' इति वचनात्तदभिध्यैव च प्रकृतिशब्देनोच्यते । 'सोऽभिध्यासजूति स प्रज्ञा स आनन्द.' इति

(१) श्वेउ ४।१०, शनन्द तस्या (अस्या), ब्रशकर १।४।३, ९, भास्कर २।१।१४, रामानुज १।१।१ ( पृ १६, १०१, ११६ ), १।४।८, ९, २३, ब्रमध्व १।४।२५, श्रीकठ १।१।२ ( पृ १२०, १३४, १३५ ), १।२।९ ( पृ ३४१ ), १।४।१०, २४, २७, २।१।२२, ३०, ३१, २।३।४२, ४३, ३।२।३५, ४।२।१६ तैस्तु ( तेन ), श्रीकर १।१।१ ( पृ २६, २८), १।१।२ ( पृ ३१ ), १।१।५ ( पृ ५४ ), १।१।१९, ३१, १।२।९, १९, १।३।७, १।४।३, ९, २२, २४, २६ , २।१।१, ३, ४, ९, ३०, २।३।४०, ४१, ३।१।७, ३।२।३, ३५, ४।२।१६, ४।३।१६, ४।४।१३, २२ तैस्तु ( तोत्थ ), विज्ञान १।१।२ ( पृ ५४ ), १।१।४ ( पृ ९७, ९९ ), १।१।५ ( पृ १२५, १२६ ), १।४।१, ३, ९, २३, २।३।४४ शनन्दवत्, बलदेव १।४।३

श्रुतेरभिध्या च स्वरूपमेव । 'ध्यायति ध्यानरूपोऽसौ सुखी सुखमतीव च । परमैश्वर्ययोगेन विरुद्धार्थतयेष्यते ॥' इति ब्रह्माण्डे ।

ब्रमध्व १।४।२५

(६) ननु 'माया तु प्रकृतिं विद्यान्मायिन तु महेश्वरम्' 'तस्माद्विराडजायत' इत्यादिश्रुत्या मायापुरुषयो रुपादानत्व श्रूयते । कथ निरुपादानत्वमिति चेत्—सत्य, यथा घटनिष्पत्तौ कुलालस्य स्वशरीरपृथक्त्वेन मृत्पिण्ड उपादान दृश्यते, तथा न परमेश्वरात् पृथक् सिद्ध मायाद्युपादान, मायादिरूपात् परमेश्वराजग दुत्पत्तेः । अतो न विरोध । १।२।९

तदवयवभूतेन अशभूतेन तदीयचिच्छक्तिशकलेन भोक्तृत्वदशायां पुरुषसज्ञकेन सकलजगद्व्याप्तिश्चावगम्यते ।

श्रीकठ. १।४।२७

(७) तस्यांशभूतै. ब्रह्मविष्णुकालरुद्रादिभिश्चै तन्य(?) व्याप्त सर्वमिद जगदित्युक्तम् ।

श्रीकर. १।१।१ (पृ २७)

(८) यत्तु 'मायां तु प्रकृतिं विद्यात्' इत्यादि श्रुतेरर्थं कल्पयन्ति—मायाऽत्र अविद्या, तामेव प्रकृतिं जगत्कारण विद्यादिति, तदप्यसार, 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सनिरुद्ध.' इत्यव्यवहितपूर्ववाक्ये का माया, को वा मायया बद्ध इत्याकाङ्क्षाया प्रवृत्तस्य 'मायां तु' इत्यादिवाक्यस्य यथोक्तार्थतानौचित्यात्, प्रकृत्यादिकमुद्दिश्य मायादिशब्दवाच्यत्वप्रतिपादन विना आकाङ्क्षानिवृत्त्यसभवात्, शुक्तिरजताद्यविद्यायां मायाशब्दाप्रयोगाच्च, ऐन्द्रजालिकमन्त्रादावेव व्यामोहकशक्तौ लोके मायाव्यवहाराच्च । कार्ये कारणाभेदात्तु तदन्वितपदार्थेष्वपि मायाशब्दप्रयोग. । तस्मात् 'माया तु प्रकृतिं . . व्याप्त सर्वमिद जगत्' इति श्रुतौ श्रुत्यन्तरस्मृतिप्रसिद्धप्रकृतेरेव मायाशब्दवाच्यत्व विधीयत इति ।

विज्ञान. १।१।५ (पृ. १२५, १२६)

**'यो योनिं योनिमधितिष्ठत्येको**
**यस्मिन्निदं स च वि चैति सर्वम् ।**
**तमीशान वरद देवमीड्यं**
**निचाय्येमां शान्तिमत्यन्तमेति ॥**

(१) ननु सन्ति सहस्रकारणानि जगत, तेषां किं ब्रह्मत्वेन ज्ञेयमित्यत आह—यः प्रसिद्ध. योनिं योनिं कारण कारणम् । वीप्सेय सर्वकारणग्रहणार्था । अधितिष्ठति अधिष्ठाय वर्तते । कारणाधिष्ठातृभेद वारयति—एक. भेदशून्य, सर्वकारणकारण इत्यर्थ. । तथाऽप्यय नोपादानकारण, निमित्तत्वेनाप्युत्पादकत्वोपपत्तेरित्यत आह—यस्मिन् जगत्कारणाधिष्ठातरि इद विविधप्रत्ययगम्य जगत् स च वि चैति समेति च व्येति च, सम्यग्गच्छति स्थितिं करोतीत्यर्थः, विविध गच्छति विनाशमुपैतीत्यर्थ । आद्यश्चकार एते. समा सबन्धार्थ । द्वितीय. स्थितिप्रलययोरपि कारणसमुच्चयार्थ. । सर्वे निखिलम् । उत्पत्तिस्थितिप्रलयकारणत्वाद्ब्रह्म उपादानकारणमपीत्यर्थ । त उक्त कारणरूप ईशान नियन्तार वरद, वर भक्ताभिलषितमर्थं ददातीति वरद, त देव स्वयप्रकाश ईड्य स्तुत्य निचाय्य साक्षात्कृत्य इमां विद्वत्प्रत्यक्षां शान्तिं आनन्दात्मप्रकाशरूपां अत्यन्त अतिशयेन एति गच्छति ।

शनन्द.

(२) 'योनिश्च हि गीयते'— तत् आनुमानिक ईश्वरस्य योनिरपि जीवाख्यगर्भाधानस्थानमपि अशभेदेन भवति । हि यस्मात् तथा गीयते—'यो योनिं योनिमधितिष्ठत्येकः' इत्यादिश्रुतिभि । 'मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् । सभवः सर्वभूतानां ततो भवति भारत ॥' (भ गी १४।३) इत्यादिस्मृतिभिश्चेत्यर्थः । अजाप्रकरणस्थत्वात् योनिं योनिमिति वीप्सा अशभेदेन बहुत्वमभिप्रेत्येति बोध्यम् ।

महद्ब्रह्मेति महतो ब्रह्मेत्यर्थ., तत्कारणत्वात् । तदय सिद्धान्त.—प्रकृतिर्नित्यशुद्धकेवलसत्त्वांशेन नित्यज्ञानेच्छादिमती ईश्वरोपाधि । सैव च प्रकृतिं मलिनसत्त्वविशेषरूपैरशान्तैः रजस्तम.सभिन्नै. पुरुषसयोगेन महत्तत्त्वरूपत परिणता सती जीवोपाधिर्भवति । 'कार्योपाधिरय जीव. कारणोपाधिरीश्वर.' इति श्रुतेः ।

(१) श्वेउ. ४।११, ब्रशकर १।४।९, रामानुज. १।४।९, श्रीकर १।१।२७ (पृ ८७), १।४।९, ४।३।९ व्येमा (व्यैना), विज्ञान १।४।२७

ततोऽपि निकृष्टैरशान्तैः सर्वमन्यद्विकारजातमुत्पादयतीति विभाग इति । विज्ञान १।४।२७

सर्वदेवप्रभव महर्षि हिरण्यगर्भजन्मदर्शी शुभबुद्धिसयोजयिता देवाधिप लोकाश्रय पादवतामीशान क॰
अनेकरूप अतिसूक्ष्म सर्वव्यापी शिव शान्तिद
मृत्युपाशच्छेत्ता विश्वकर्मा महात्मा हृदयस्थः
बुद्धिगम्य सदसदभिज्ञ केवल पुराण-
प्रज्ञ प्रतिमाशून्य यशोनामा अदृश्य
अजात रक्षकदक्षिणमुख रुद्र
यजनीय

**[१]यो देवाना प्रभवश्चोद्भवश्च**
**विश्वाधिको रुद्रो महर्षि. ।**
**हिरण्यगर्भं पश्यत जायमान**
**स नो बुद्ध्या शुभया सयुनक्तु ॥**

( १ ) पूर्वं प्रसङ्गात्पठितोऽपि मन्त्र इदानीं धातुःप्रसादोपायार्थं पुन. पठयते—'यो देवाना . सयुनक्तु' । व्याख्यातो मन्त्रस्तृतीयेऽध्याये ।

* शनन्द

( २ ) 'यो देवानां प्रथम पुरस्ताद्विश्वाधिको रुद्रो महर्षि । हिरण्यगर्भं पश्यत जायमान स नो देव. शुभया स्मृत्या सयुनक्तु ॥' इति । महर्षिर्वेदकर्ता य सर्वज्ञत्वादिना विश्वस्माच्चिदचित्प्रपञ्चादधिको रुद्र परब्रह्मभूत सर्वेषा देवानामिन्द्रादीना प्रथममादिम हिरण्यगर्भं ब्रह्माण स्वसकल्पेन प्रकृतेरुपादानात्मनो जायमान सृष्टिकाले सर्वज्ञानोपायसकलवेदोपदेशरूपया अपश्यत्, स परमदेशिको न अस्मानपि सकलससारपाशमहानर्थनिवृत्तिहेतुभूतया परमामृतलक्ष्मीक्षमावेशपरानन्दप्राप्तिकारिण्या अत एव परममङ्गलरूपया वेदान्तसारसामरस्यसिद्ध्या स्मृत्या बोधकलया स्वविषयया सयोजयत्विति तात्पर्यम् । तत. सकलवेदकर्तृत्वमीश्वरस्य सिद्धम् । वाचो नित्यत्वश्रुतिरीश्वरेण पूर्वसत्तानुवृत्त्या विहितत्वाद्वेदानामविरुद्धा । ततो वेदानामीश्वरप्रणीतत्व नित्यत्व चाविरुद्धमेव ।

श्रीकठ. १।१।३ ( पृ १६१ )

**[१]यो देवानामधिपो यस्मिँल्लोका अधिश्रिता ।**
**य ईशे अस्य द्विपदश्चतुष्पद कस्मै देवाय**
**हविषा विधेम ॥**

तर्हि वृद्धपितामहवदप्रयोजक. स:, नेत्याह — य. प्रसिद्ध देवाना अग्न्यादीनां सेन्द्रियाणां अधिप. अधिष्ठाय पालयिता । यस्मिन् देवानमधिपे लोकाः भूरादय. कर्मफलभूता अधिश्रिता अधिकत्वेनाऽऽश्रिता । यः प्रसिद्धः ईशे ईष्टे अस्य प्रत्यक्षस्य द्विपद मनुष्यादे॰ चतुष्पदः गवादे. । कस्मै एकस्मै भेदशून्याय देवाय स्वयप्रकाशाय हविषा हविष्प्रदानेनाग्निहोत्राद्याहुतिप्रक्षेपेण विधेम परिचरेम । शनन्द.

**[२]सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये**
**विश्वस्य स्रष्टारमनेकरूपम् ।**
**विश्वस्यैकं परिवेष्टितारं**
**ज्ञात्वा शिवं शान्तिमत्यन्तमेति ॥**

तर्हि किं स एव पुरुषार्थ इत्याशङ्क्य नेत्याह — सूक्ष्मातिसूक्ष्म अणोरणीयेनाणु सूक्ष्मादतिसूक्ष्म., न कलिलस्य मध्ये । नारीवीर्येण सगत पौरुष वीर्यमल्पकालस्थ कलिलमित्युच्यते । अथवा जगदारम्भकाणामपा बुद्बुदस्य पूर्वावस्था कलिलमित्युच्यते । फेनिलानि उदकानीत्यर्थ. । तस्यान्त॰ विश्वस्य सर्वस्य स्रष्टार उत्पादकम् । अनेकरूप उपादानोपादेयनिमित्तनैमित्तिकादिभेदवन्तम् । विश्वस्यैक परिवेष्टितारम् । व्याख्यात तृतीये

---

* श्वेउ ३।४ ( पृ १५९३) इत्यत्र व्याख्यानादिक द्रष्टव्यम् ।

(१) श्वेउ ४।१२, शनन्द पश्यत जायमान ( जनयामास पूर्वं ), श्रीकठ १।१।३ ( पृ १६१ ), ४।३।८, १५ प्रभवश्चोद्भवश्च ( प्रथम पुरस्तात् ) स नो बुद्ध्या शुभया ( स नो देव शुभया स्मृत्या ), श्रीकर १।२।७ ( पृ १०९ ), ४।३।९, बलदेव २।१।१

(१) श्वेउ ४।१३, श्रीकठ १।१।१७ ( पृ २३६ ), श्रीकर ३।४।४४ कस्मै ( तस्मै )

(२) श्वेउ ४।१४, श्रीकठ १।१।१ ( पृ ९७ ), ३।२।३५, ३।४।१, ४।१।१, श्रीकर १।१।१ ( पृ ४, १३, १८ ), १।१।३ ( पृ ५३ ), १।१।७, १।१।१३ ( पृ ६३), १।१।३०, १।३।६, ८, ३९, ४०, १।४।२२, २।१।११, २।२।४५, ३।२।४, ३।३।७, १७, ३।४।१, ५१, ४।१।१, १३, ४।२।५, ४।३।१४, ४।४।३,२१, २२.

अध्याये। विश्वस्येत्यधिकारे सति पुनर्विश्वस्य ग्रहणमुपचारनिवारणार्थम्। ज्ञात्वा साक्षात्कृत्य शिव मङ्गलमानन्दात्मस्वरूप शान्तिमत्यन्तमेति। व्याख्यातम्।

शनन्द

स एव काले भुवनस्य गोप्ता
विश्वाधिप सर्वभूतेषु गूढ ।
यस्मिन्युक्ता ब्रह्मर्षयो देवताश्च
तमेव ज्ञात्वा मृत्युपाशाश्छिनत्ति ॥

ननु लोको स्थितेः कर्ता विष्णुमनुराजादिः अन्यः परमेश्वरादित्यत आह — स एव पूर्वोक्त. परमेश्वर एव काले स्थितिकाले भुवनस्य लोकजातस्य कर्मफलभूतस्य गोप्ता रक्षिता। तत्र हेतु.—विश्वाधिपः विश्वमधिष्ठाय पालयति यतः। स चेदीश्वर., जगतोऽपि सहस्रगुणः स्यात्, अन्यथा पालयितुमशक्यत्वादित्यत आह—सर्वभूतेषु सर्वेषु स्थावरजङ्गमेषु गूढः गुप्तः सर्वबुद्धिसाक्षीत्यर्थः। कथमस्य गूढ इत्यत आह—यस्मिन् यद्दर्शननिमित्त युक्ता योगमाश्रिता ब्रह्मर्षयः ब्राह्मणा. सन्तः अतीन्द्रियद्रष्टार. देवताश्च देवा अपि त सर्वस्य रक्षितार एव उक्तेन प्रकारेण ज्ञात्वा साक्षात्कृत्य मृत्युपाशान् मृत्यो. प्राणवियोगस्य कर्तुं पाशा. कामक्रोधादयः, तान्, सकारण ससारमित्यर्थः। छिनत्ति छेद करोति।

शनन्द

घृतात्परं मण्डमिवातिसूक्ष्मं
ज्ञात्वा शिवं सर्वभूतेषु गूढम् ।
विश्वस्यैकं परिवेष्टितारं
ज्ञात्वा देव मुच्यते सर्वपाशैः ॥

(१) तर्हि किं सप्रपञ्चो ज्ञेय इत्याशङ्क्य नेत्याह—घृतात् द्रवीभूतादाज्यात् पर उत्कृष्ट मण्डमिव, दध्न. सारभूत मण्डशब्देनाभिधीयते, घृतस्यापि सारभूत घनत्व प्राप्त घृतमेव, तद्वत् अतिसूक्ष्म अतिशयेनाणुभूत सर्वप्रपञ्चसारभूतमित्यर्थ.। ज्ञात्वा साक्षात्कृत्य शिवं मङ्गलम्। क। सर्वभूतेषु सर्वेषु स्थावरजङ्गमेषु। किं करचरणवत्, नेत्याह—गूढ सवृत बुद्धेरन्त.स्थित मित्यर्थ.। गूढत्वेन परिच्छेदे प्राप्ते त वारयति—विश्वस्यैक परिवेष्टितारम्। व्याख्यात तृतीयेऽध्याये। ज्ञात्वा देव मुच्यते सर्वपाशैः। व्याख्यात द्वितीये। ज्ञात्वेति पुनरभिधानमेवकारार्थम्। तथा च देवमेव ज्ञात्वैवेत्ययमर्थ. सपद्यते।

शनन्द

(२) ततश्च रात्रिसत्रन्यायेन 'ज्ञात्वा देव मुच्यते सर्वपाशै.' इत्याद्यर्थवादावगतमोक्षकामोऽधिकारी कल्पनीयो भवति। अतो मोक्षकाम. शमादियुक्तो ब्रह्मज्ञान सपादयेदिति प्रयोगविधिलाभः।

श्रीकठ १।१।४ (पृ १८४)

एष देवो विश्वकर्मा महात्मा
सदा जनाना हृदये सनिविष्ट ।
हृदा मनीषा मनसाऽभिक्लृप्तो
य एतद्विदुरमृतास्ते भवन्ति ॥

शिव देवमेव ज्ञात्वैवेत्युक्ते कैलासादिस्थितमिति प्रसिद्ध्यनुसारात्स्यात्, तन्निवृत्त्यर्थमाह —एष. अस्मद्बुद्धेर्द्रष्टा देव स्वयप्रकाश· विश्वकर्मा सर्वोत्पादकः महात्मा महाश्चासावात्मेति महात्मा। अनेन प्रजापत्यादिव्यतिरेक उक्तः। तथाऽपि देशान्तरस्थस्यात्राऽऽगमनेनापि कदाचिद्बुद्धेर्द्रष्टृत्व स्यादित्यत आह— सदा जनाना हृदये सनिविष्टः। हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति। व्याख्यात तृतीयेऽध्याये। सर्वगतस्य कथ हृदयसनिविष्टत्वमित्याशङ्क्य हृदेत्यादि पठनीयम्।

शनन्द.

यदा तमस्तन्न दिवा न रात्रि
र्न सन्न चासच्छिव एव केवल ।
तदक्षरं तत्सवितुर्वरेण्य
प्रज्ञा च तस्मात्प्रसृता पुराणी ॥

(१) श्वेड ४।१५

(२) श्वेड ४।१६, श्रीकठ १।१।१ (पृ ९८), १।१।४ (पृ १८४), श्रीकर. १।१।१ (पृ ५)

(१) श्वेड. ४।१७, श्रीकठ ४।२।१६ सदा (रुद्रो), बलदेव २।१।२७

(२) श्वेड ४।१८, श्रीकठ १।१।२ (पृ १२०), १।२।९ (पृ ३४०), १।४।२७, २।३।९, १८, ३।२।३५, ४।४।२२, श्रीकर १।१।१ (पृ १९, २७), १।१।२ (पृ २९, ३०, ३५), १।१।३ (पृ ३७, ४२), १।१।२६, १।२।९, १।३।७, १।४।१४, २२, २।१।१, ४, ३५, २।२।४२, २।३।३, ८, २।४।१, ३, ६, १२,

( १ ) ननु कदाऽय मुच्यते इत्यत आह — यदा यस्मिन्काले तमस्तत् तत् आत्मस्वरूप तम आवरणशक्तिर्विक्षेपबीजभूताऽविद्या । रज्जुरिव सर्पो रज्जुविज्ञानेन आत्मविज्ञानेनाविद्याया आत्मस्वरूपावस्थाने आत्मतत्त्व केवलमवशिष्यते इत्यर्थ । अथवा तत् प्रसिद्ध तमो यदा नेति वक्ष्यमाणो नकार. शृङ्खलान्यायेन सबध्यते । तमसोऽभावे दिवस स्यादित्यत आह — न दिवा दिवसो न । तर्हि रात्रि. स्यादित्यत आह — न रात्रिः न विभावरी । नन्वहोरात्रयोरभावे कारण कार्यमुभय वा सत्स्यादित्यत आह — न सत् कारणकार्यात्मकमस्तीति प्रत्ययविषयो न । अस्तु तर्हि सतोऽभाव एवेत्यत आह — न चासत् नापि सदभाव । शिव एव मङ्गल एव स्वयप्रकाशमानानन्दात्मा, न त्वन्यत्किंचित् । तथाऽपि ज्ञातृज्ञेयादिभेदः स्यादित्यत आह — केवल. ज्ञातृ ज्ञेयादिभेदशून्यः । तदेति शेषः । अयमर्थ —आवरणात्मिका अहमज्ञ स्वयप्रकाशमानमानन्दात्मान न जानामीति प्रत्यक्षा । तस्या अधिष्ठानविषयस्वयप्रकाशमानानन्दात्माविर्भावे आनन्दात्मत्वेनावस्थानाद्विक्षेपाणामपि निर्बीजानामभावादशेषविशेषशून्य आनन्दात्मैवावतिष्ठते । ननु क. शिव इत्यत आह — तत् तत्पदार्थलक्ष्यम् । तदपि किमित्यत आह — अक्षर व्यापि, समस्तपरिच्छेदशून्यमित्यर्थ. । ननु तदभिधेय ( तल् ) लक्ष्य वा ( अ )प्रसिद्ध, सा ( तथा च ) अक्षरस्य (अ)प्रसिद्धिरित्यत आह—तत् प्रसिद्ध सवितु प्राणिनामुत्पादकस्य, सर्वजनकस्येत्यर्थ । वरेण्य वरणीय प्रार्थनीय वा स्वरूपम् । अनेन गायत्रीप्रतिपाद्यत्वेन द्विजातिमात्रप्रसिद्धिरुक्ता । इदानीं विशेषतो विदुषां प्रसिद्धिमाह — प्रज्ञा च आत्मविद्याऽपि तस्मात् आनन्दात्मनः प्रसृता निर्गता पुराणी पुराऽपि नवीना, सर्वदा एकरूपा अह ब्रह्मास्मीतिवाक्यजन्येत्यर्थ. ।

शनन्द

( २ ) यस्मिन् काले विगतचन्द्रसूर्यादितेजस्कतया दिवारात्रिविभागशून्य नामरूपविशेषराहित्येन स्थूल सूक्ष्मचेतनाचेतनसदसद्व्यक्तिव्यवस्थारहित सर्वमिद तमोभूतमवर्तत, तदा शिव एवाद्वितीयः केवलः स्वाविभागापन्नचिदचिच्छक्तिः स्वप्रकाश परिशिष्टोऽभूत् । तदक्षर तदेव तदानीं क्षररहित नाशरहित पर वस्तु, तत् सवितुर्वरेण्य, तत् सवितुरादित्यस्य पूर्वे तेजःप्रदत्वेन वरेण्य अन्तर्वर्ति तेजः तदपि तदेव । तस्मात् तादृशात् स्वविलीनस्वेतरनिखिलचिदचित्प्रपञ्चात् अद्वितीयात् पुराणी नित्यसिद्धा तत्कालतमोऽपनोदिनी महास्फुरणरूपा परमा प्रज्ञा ज्ञानशक्तिः प्रसृता प्रावर्तत ।

श्रीकठ १।४।२७

( ३ ) सवितु॰ सूर्यस्य वरेण्य वरणीय उपासनीय इत्यादिना सूर्यान्तर्यामितया परमेश्वरस्य प्रेरकत्वदर्शनात् । शिवसकल्पादेव सर्वेषामिन्द्रियाधिष्ठानदेवताना प्रयोजकत्वमित्यर्थ । श्रीकर २।४।१२

[1]**नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् ।**
**न तस्य प्रतिमा अस्ति यस्य नाम महद्यश ॥**

ननु वस्तूना क्वचिद्देशे कस्यचिदुपलम्भो दृष्टः, तद्वदस्याऽऽत्मनोऽपीत्यत आह— नैनमूर्ध्वं स्वयप्रकाशमानमानन्दात्मानमुपरिष्टात् । न तिर्यञ्च एनमात्मान तिर्यग्वर्तमान न, तिर्यगपि नेत्यर्थ । न मध्ये एनमात्मानं दिशामन्तो न । परिजग्रभत् पर्यग्रहीत् । ऊर्ध्वादिष्विदं सबध्यते । कोऽपि पुरुष केनापि कारणेन कुत्रापि देशे आनन्दात्मान ( न ) गृहीतवानित्यर्थ । ननु तर्हि कीदृशः स इत्यत आह — न तस्य प्रतिमाऽस्ति । तस्य आनन्दात्मनः प्रतिमा उपमा अनेन सदृशोऽयमिति नास्ति । यस्य प्रसिद्धस्य नाम प्रसिद्ध महत् सर्वेभ्योऽधिक यश॰ भूतभौतिकप्रपञ्चजात कीर्तिस्वरूपम् । अथवा यस्य महद्यशो नाम नामधेयम् । तस्मिन्पक्षे प्रसङ्गादिदं नामोमिति व्याख्येयम् ।

शनन्द.

[2]**न संदृशे तिष्ठति रूपमस्य**
**न चक्षुषा पश्यति कश्चनैनम् ।**

---

३।२।२६, ३५, ३।४।२, ४४, ४।३।१०, ४।४।१७, ४।४।२२, बलदेव १।४।२८, ४।४।१५

(१) श्वेउ ४।१९, शनन्द मा अस्ति ( माऽस्ति ), अशकर २।३।७, ४।३।१४ शनन्दवत्

(२) श्वेउ ४।२०, शनन्द हृदिस्थ मनसा य एनमेवं ( मनीषा मनसाऽभिक्लृप्तो य एतत् ), श्रीकर. ३।३।६२

हृदा हृदिस्थं मनसा य एन-
मेव विदुरमृतास्ते भवन्ति ॥

ननु तर्ह्यनियतदेशोऽय चक्षुरादिजन्यः स्यादित्यत आह — न सदृशे सम्यग्दर्शननिमित्त तिष्ठति रूपमस्य आत्मनः स्वरूप नावस्थान करोति । तत्र हेतु.— न चक्षुषा पश्यति कश्चनैनम् । चक्षुषेत्युपलक्षणम् । अन्यैरपीन्द्रियैरेनमानन्दात्मान कोऽपि नेत्रादिभिर्नावलोकयति यत , ततो न सदृश इत्याद्यन्वय । अय भाव· — नाय चक्षुरादिगम्यो घटादिवत्, तादृशप्रतीतेरभावाद्बाधकस्य सत्त्वाचेति । तर्हि किमयमवेद्य एवेत्यत आह—हृदा मनीषा मनसाऽभिक्लप्तो य एतद्विदुरमृतास्ते भवन्ति । व्याख्यात तृतीये । अयमर्थः—स्वयं प्रकाशोऽप्यात्मा आदर्शे इव भानु. जल इव नभ अतिस्वच्छायामन्त करणवृत्तौ आत्माकारपरिणताया तत्र प्रतिबिम्बितो वृत्तिवेद्योऽय ब्रह्मविद्भिरुच्यते इति, तदभिप्राय च मनसाऽभिक्लप्त इति ।

शनन्द.

अजात इत्येव कश्चिद्भीरु प्रपद्यते ।
रुद्र यत्ते दक्षिण मुख तेन मा पाहि नित्यम् ॥

( १ ) इदानीं प्रकृतमुपायमाह — अजातः जनिरहितः। उपलक्षणमिद, सर्वभावविकाररहितः । अथवा अज अत इति पदच्छेद.। हे अज जन्मादिशून्य, यस्मात्त्वत्प्रसादमन्तरेण नाऽऽत्मज्ञान, नाऽऽत्मज्ञानमन्तरेण च मुक्ति , अतः अस्मात्कारणात् । इति यस्मादजात इत्यन्वयः । अथवा हे अजेति यस्मात्, अतः अस्मादित्यन्वय. । एव वक्ष्यमाणेन प्रकारेण कश्चित् शास्त्रदृष्ट्या त्वदभिन्नः, वादिदृष्ट्या अनिर्धारितरूप पिशाच इव, पामरदृष्ट्याऽस्य पुत्रः, शिष्य इत्यादिरूप , साधारणदृष्ट्या अहशब्दप्रत्ययोल्लेख्य भीरु करालससारशूलसदर्शनसजातसन्त्रास प्रपद्ये अह शरण प्राप्नुया त्वामिति शेष. । रुद्र हे रुद्र अविद्याविनाशक, यत् प्रसिद्ध ते तव दक्षिण दक्षिणसुषिसबन्धिश्रोत्र अघोराख्य हृदयस्य दक्षिणे सुषौ प्रतिष्ठित मुख आस्य विषयोपलम्य-(भ्य)द्वारमित्यर्थ. । तेन वेदान्तश्रवणप्रवृत्तेन करणेन मा ससारशूलादुद्विग्न भवन्त प्राप्त पाहि रक्ष नित्य सदा । वेदान्तश्रवणविहीन श्रोत्र कदाचिदपि मा भूदित्यर्थः ।

शनन्द.

( २ ) 'अजात इत्येव पाहि नित्यम्' इति श्वेताश्वतरोपनिषदि महेश्वरस्यैव अजातत्वश्रवणात् शभोरादिविष्णुजनकत्व युक्तमेव ।

श्रीकर १।१।२ (पृ ३५)

( ३ ) नन्वेवविधवाक्येभ्य एव रुद्रः परमेश्वर एव भवत्विति चेन्न, ईश्वरत्रादिभिः श्रुत्यन्तरेभ्यः स्मृतिभ्यश्च ब्रह्मादिदेवतात्रयादतिरिक्ततयैवेश्वराभ्युपगमात् ।

विज्ञान १।४।१७

मा नस्तोके तनये मा न आयुषि
मा नो गोषु मा नो अश्वेषु रीरिष. ।
वीरान्मा नो रुद्र भामितो वधी
र्हविष्मन्त सदमित्त्वा हवामहे ॥

कृतसन्यासानामुपायमुक्त्वा गृहस्थाना धातु प्रसादे उपायमाह—मा न अस्माक तोके अपत्ये स्त्रीपुसात्मके मा रीरिष इति वक्ष्यमाणेनान्वय ।अपत्येष्वपि पुत्रोऽस्य लोकस्य साधनभूत., ततो विशेषमाह—तनये पुत्रे । मेति पूर्वोक्त रीरिष इति वक्ष्यमाणम् । मा न आयुषि । आयु पूर्ण शतसवत्सरमरोग जीवन, तस्मिन्नस्माक मा रीरिष इति वक्ष्यमाणेनान्वय. । मा नो गोषु अस्माक द्विखुरेषु पशुषु मा रीरिष इति वक्ष्यमाणेनान्वयः । मा नो अश्वेषु अस्माकमेकशफेषु मा रीरिष. हिंसां मा कार्षीः । वीरान् भ्रातॄन् अन्यानपि स्निग्धानस्मत्कार्योत्साहिनो भृत्यादीन् मा न. अस्माक रुद्र हे रुद्र, भामितः भामिन बुद्ध्युत्साहादियुक्तानित्यर्थ. । क्रुद्धो वा रुद्र. । वधी मा हिंसा कार्षीः । हविष्मन्त हवींषि ग्राम्या आरण्या ओषधय पयःप्रभृतयश्च, तद्वन्तो हविष्मन्तः सद सन्त भवन्त, सदा वा, इत् इत्थ त्वा त्वां हवामहे त्वामुद्दिश्य होम कुर्महे । शनन्द.

इति चतुर्थोऽध्याय ॥

(१) श्वेउ. ४।२१, शनन्द प्रपद्यते ( प्रपद्ये ), श्रीकर १।१।२ ( पृ. ३५, ३६ ), १।१।१८, २।२।४१, ४२, ४।२।१६, ४।४।२२, विज्ञान १।४।१७

(१) श्वेउ. ४।२२

## पञ्चमोऽध्यायः

विद्या अविद्या च, विद्याऽविद्येशान, सर्वयोनीना सर्वरूपाणा चाधिष्ठाता कपिलस्यर्षे ज्ञानेन पोषक जालविकर्ता पतिस्रष्टा महात्मा सर्वगुणविनियोजक सर्वपरिणामयिता ब्रह्मयोनि वेदोपनिषत्प्रतिपाद्य देवर्षिवेद्य एक

[१]द्वे अक्षरे ब्रह्मपरे त्वनन्ते
विद्याविद्ये निहिते यत्र गूढे ।
क्षरं त्वविद्या ह्यमृत तु विद्या
विद्याविद्ये ईशते यस्तु सोऽन्य ॥

( १ ) तत्त्वपदार्थौ तृतीयेऽध्याये निरूपितौ यद्यपि, तथापि त्वपदार्थो नात्यन्त निरूपितः, तदर्थमय पञ्चमोऽध्याय आरभ्यते, धातुः प्रसादोपायश्च चतुर्थेऽध्याये निरूपित । स धाताऽप्यसाधारणलक्षणो वर्णनीय', तदर्थमपि । द्वे अक्षरे उभे अप्यक्षरशब्दाभिधेये ब्रह्मपरे ब्रह्मशब्दाभिधेये परे त्वनुपचरिते ब्रह्मणि । तुशब्दोऽपरब्रह्मव्यावृत्त्यर्थ. । अनन्ते देशकालवस्तुपरिच्छेदशून्ये । परेऽनन्ते ब्रह्मणि द्वे अक्षरे शब्दब्रह्मकारणभूताविद्यारूपे ब्रह्मत्वेनोच्यमाने वर्तेते इति शेष. । विद्याविद्ये निहिते यत्र ययोरक्षरयोर्विद्याविद्ये श्रुत्युक्ते निहिते प्रक्षिप्ते गूढे लोकैर्ज्ञातुमशक्ये । विद्याविद्ययो. स्वरूप श्रुतिराह —— क्षर तु विनाशिकार्यमेवाविद्या विजानीयादिति शेषः । अविद्येति योक्ता, ता कारणाक्षरे प्रतिष्ठितामित्यर्थः । अमृत तु अमृतभूतमात्मज्ञानमेव अमृतस्य मोक्षस्य स्फुरणहेतुत्वाद्विद्यां जानीयादिति शेषः । विद्याशब्दाभिधेया या, तां शाब्दे ब्रह्मणि प्रतिष्ठितामित्यर्थः । विद्याविद्ये व्याख्याते ईशते ईष्टे यस्तु प्रसिद्ध एवाक्षरयोः परोऽनन्तोऽधिष्ठाता सोम्य हे सोमवत्प्रियदर्शन । यद्यप्यत्राऽऽख्यायिका न प्रस्तुता, तथाऽपि षष्ठाध्यायान्ते 'श्वेताश्वतरोऽथ' इत्यादिलिङ्गेन श्वेताश्वतरस्य वक्तृत्वोपलम्भात्स हि स्व शिष्य सबोध्याऽऽह— सोम्येति । अथवा श्रुतिरेव ससारिण सबोध्याऽऽह —— सोम्येति ।

शनन्द.

( २ ) 'अधिक तु भेदनिर्देशात्' —— कार्यकारणयोरनन्यत्वेऽपि कार्यभूतात् चिदचित्प्रपञ्चात् कारणमत्र अधिकमेव श्रूयते —— 'विश्वाधिको रुद्रो महर्षिः' इति । तथा भेदनिर्देशात् । तथा हि —— जीवेश्वरयोर्भेदो निर्दिश्यते —— 'विद्याविद्ये ईशते यस्तु सोऽन्यः' इत्यादिभिरनन्तश्रुतिभि । * श्रीकठ २।१।२२

(१) श्वेउ. ५।१, शनन्द त्वविद्या ( त्वविद्या ) विद्या ( विद्या ) सोऽन्य ( सोम्य ), श्रीकठ १।१।१२ ( पृ १२४ ), २।१।२२, श्रीकर १।१।१३ ( पृ ६३ ), १।४।३, २२

* श्रीकर श्रीकठवत् ।

[१]यो योनिं योनिमधितिष्ठत्येको
विश्वानि रूपाणि योनीश्च सर्वा ।
ऋषिं प्रसूत कपिलं यस्तमग्रे
ज्ञानैर्बिभर्ति जायमान च पश्येत् ॥

( १ ) इदानीमचेतनत्वमस्य कारणस्य व्यावर्तयति —— यो योनिं योनिमधितिष्ठत्येक. । व्याख्यातं चतुर्थे । इदानीं भेद व्यावर्तयति—विश्वानि रूपाणि सर्वाणि वस्तूनि कार्यरूपाणि योनीश्च योनयश्च कारणरूपाणि वस्तूनीत्यर्थ । सर्वा' निखिला । तथाऽपि कारणत्वेनैवाधिष्ठाता, न तु चेतनत्वेनेति यो मनुते, तं प्रत्याह——ऋषिं अतीन्द्रियद्रष्टार प्रसूत प्रकर्षेणोत्पन्न कपिल वासुदेवस्यावतारभूत सगरपुत्राणा दग्धार, न तु साख्यप्रणेता कपिल, नाममात्रसाम्येन तद्ग्रहणे स्यादतिप्रसङ्ग' । अथवा ऋषिं अतीन्द्रियद्रष्टार प्रसूत उत्पन्न अव्याकृतस्य प्रथमकार्यभूत कपिल विचित्रवर्ण ज्ञानक्रियाशक्त्यात्मक हिरण्यगर्भमित्यर्थ. । य' प्रसिद्धः परमेश्वर' त कपिल अग्रे जगत उत्पत्ते पूर्वं ज्ञानैः अतीतानागतवर्तमानदूरान्तिकप्रवृत्तिनिवृत्त्यादिविषयैश्चित्तव्यापारैर्बुद्धिशब्दाभिधेयै. बिभर्ति पुष्णाति । न केवलमेतत्, किंतु जायमानं च उत्पद्यमानमपि कपिलं अन्यद्वा विश्व पश्येत् अवलोकयेत् । शनन्द.

( २ ) या तु श्रुति. कपिलस्य ज्ञानातिशय प्रदर्शयन्ती प्रदर्शिता, न तया श्रुतिविरुद्धमपि कापिल मत श्रद्धातु शक्य,' 'कपिलम्' इति श्रुतिसामान्यमात्रत्वात्,

(१) श्वेउ ५।२, ब्रशकर २।१।१, भास्कर २।१।१, रामानुज २।१।१, श्रीकर २।१।१, वल्लभ १।४।८; बलदेव २।१।१

अन्यस्य च कपिलस्य सगरपुत्राणां प्रतप्तुर्वासुदेवनाम्नः स्मरणात्, अन्यार्थदर्शनस्य च प्राप्तिरहितस्यासाधकत्वात्। ब्रशंकर २।१।१

( ३ ) या पुनः श्रुतिरुदाहृता, तत्र कपिलशब्देन हिरण्यगर्भ. सवितृमण्डलावस्थोऽभिधीयते, कनककपिलवर्णत्वात्। तथा चोक्त पुराणे — 'आदित्यस्तस्य कपिलोऽग्रजोऽग्निः' इति। भास्कर २।१।१

( ४ ) यदुक्त 'ऋषिं प्रसूत कपिलम्' इति कपिलस्याप्ततया सकीर्तनात्तत्स्मृत्यनुसारेण वेदार्थव्यवस्थापन न्याय्यमिति, तदसत्। बृहस्पते. श्रुतिस्मृतिषु सर्वेषामतिशयितज्ञानाना निदर्शनत्वेन सकीर्तनात्तत्प्रणीतेन लोकायतेन श्रुत्यर्थव्यवस्थापनप्रसक्तेरिति।

* रामानुज २।१।१

( ५ ) कपिलऋषिवाक्यमप्यनित्यसयोगभयान्नित्य ऋषेरेवानुवादकम्। वल्लभ १।४।८

**एकैक जाल बहुधा विकुर्व**
**न्नस्मिन्क्षेत्रे संहरत्येष देव'।**
**भूयः सृष्ट्वा पतयस्तथेश**
**सर्वाधिपत्य कुरुते महात्मा॥**

इदानीमस्य च परमेश्वरस्य जगत्स्रष्टृत्वादिकर्माऽऽह —एकैक प्रत्येक जाल महेन्द्रजाल ससाररूप, प्रतिप्राणि व्यवस्थितमित्यर्थ'। बहुधा बहुप्रकार विकुर्वन् विविध कुर्वन्। क्क। यस्मिन् प्रसिद्धे क्षेत्रे सर्वप्राणिजनिस्थाने सहरति उपसहरति एष आत्मरूपः देव स्वयप्रकाशः। भूय' पुन सृष्ट्वा उत्पाद्य पतय प्रजापतय.। प्रजापतीनित्यर्थ.। तथा यथा ससारजाल तद्वत्, ईशः ईश्वरो नियन्ता सर्वाधिपत्य सर्वेषामधिष्ठाय पालयितृणां पालयितृत्व कुरुते करोति महात्मा महांश्चासावात्मा चेति महात्मा। शनन्द

**सर्वा दिश ऊर्ध्वमधश्च तिर्यक्**
**प्रकाशयन्भ्राजते यद्वनड्वान्।**

**एव स देवो भगवान्वरेण्यो**
**योनिस्वभावानधितिष्ठत्येक॥**

सर्वाः निखिला दिशः दिक्शब्दप्रत्ययविषयाः। इदानीं ता आह—ऊर्ध्वं उपरिष्टात् अधश्च अधस्तादपि तिर्यक् समन्तादष्टदिक्षु प्रकाशयन् प्रकाश कुर्वन् भ्राजते स्वय दीप्तिं कुरुते यन् आश्चर्ययन् (?) गच्छन् अनड्वान् बलीवर्दो गौ सूर्य इत्यर्थः। एवम्। एवपदादानाय्येति लभ्यते। तथा स' जगत्कारणभूतः देव. स्वयप्रकाशः भगवान् षड्गुणैश्वर्यसपन्न वरेण्य' वरणीय योनिस्वभावान् कारणभूतान् अधितिष्ठति अधिष्ठान करोति एक' भेदशून्य। शनन्द.

**यच्च स्वभाव पचति विश्वयोनि**
**पाच्यांश्च सर्वान्परिणामयेद्यः।**
**सर्वमेतद्विश्वमधितिष्ठत्येको**
**गुणाश्च सर्वान् विनियोजयेद्य॥**

यश्च स्वभाव, स्वभावः प्रसिद्ध, पदार्थस्वभावमपि कार्यकारण(भाव)रूप षड्भावविकाररूप च पचति पाक करोति विश्वयोनि सर्वकारणभूत। प्राच्याश्च पूर्वोत्पन्नानपि पदार्थान् सर्वान् निखिलान् परिणामयेत् परिणाम नयेत् य प्रसिद्ध। पूर्वं पचतिना योज्य', अय परिणामयतिना। सर्वं निखिल एतत् विधिप्रत्ययगम्य विश्व समस्तमविद्यातत्कार्यादि अधितिष्ठत्येकः। व्याख्यातम्। गुणाश्च लोहितादीन्गुणानपि सर्वान् निखिलान् विनियोजयेत् विनियोग कारयेत् अनेनैतदित्यादिरूप यः प्रसिद्ध। अय विनियोजयतिना। शनन्द.

**तद्वेदगुह्योपनिषत्सु गूढ**
**तद्ब्रह्मा वेदते ब्रह्मयोनिम्।**
**ये पूर्वं देवा ऋषयश्च तद्विदु-**
**स्ते तन्मया अमृता वै बभूवुः॥**

तत् कारणस्वरूप वेदगुह्योपनिषत्सु वेदेषु ऋगादिषु गुह्या गोप्या उपनिषद 'तत्त्वमसि' 'अह ब्रह्मास्मि' इत्याद्या विद्या., तासु गूढ सवृत निक्षिप्तमित्यर्थ।

---

* साख्यस्मृतिप्रणेतैव श्रौतः कपिल इत्यभिप्राय उन्नीयते, प्रतिबन्धिस्वारस्यात्। अभ्युपगमश्चेत्तदुद्धारोऽपि कृत स्यात्। श्रीकर रामानुजवत्।

(१) श्वेउ ५।३, शनन्द अस्मिन् ( न्यस्मिन् )

(२) श्वेउ ५।४, शनन्द यद्व ( यच्च )

(१) श्वेउ. ५।५, शनन्द यच्च ( यश्च ) पाच्यांश्च ( प्राच्याश्च )

(२) श्वेउ ५।६, शनन्द ब्रह्मयोनिम् ( ब्रह्म योनिम् ) तद्वि ( त वि )

तत् प्रसिद्धमुक्त ब्रह्मा हिरण्यगर्भः वेदते वेत्ति जानाति ब्रह्म सर्वस्मादधिक देशकालवस्तुपरिच्छेदशून्यमित्यर्थ. । योनिं सर्वकारणमित्यर्थ । इदानीमेतज्ज्ञाने लाभमाह—ये प्रसिद्धा अधिकारिण पूर्वे अस्मदादिभ्य. प्रथम देवा अग्न्यादय. ऋषयश्च अतीन्द्रियद्रष्टारो मुनय । चकारो मनुष्यादीना समुच्चयार्थ । त स्वयप्रकाशमानन्दात्मान विदुः जानन्ति ज्ञानवन्त इत्यर्थ. । ते देवादय. तन्मया ब्रह्मप्रधाना ब्रह्मैकस्वभावा इत्यर्थ । अमृता वै मरणधर्मरहिता अविद्यातत्कार्यनिर्गमनेन प्रसिद्धा. स्मर्यमाणा वा श्रुत्या, बुभूवुः भवन चक्रु. ।

शनन्द

गुणान्वित फलकर्मकर्ता स्वकृतभोक्ता सूक्ष्मः
स्वकर्मसचारी विविधशरीरधारी जीव

**गुणान्वयो य फलकर्मकर्ता**
**कृतस्य तस्यैव स चोपभोक्ता ।**
**स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा**
**प्राणधिप सचरति स्वकर्मभि· ॥**

इदानीं त्वपदार्थमाह—गुणान्वय. गुणेषु शुक्लनीलादिषु नाडीरूपेषु अन्वय सबन्धः यस्य स गुणान्वय । यः प्रसिद्धोऽहमितिप्रत्यये । फलकर्मकर्ता फलस्य सुखदुःखरूपस्य कर्मणश्च धर्माधर्मरूपस्य कर्ता सपादक· फल कर्मकर्ता । नन्वीश्वरोऽपि तथेत्यत आह —– कृतस्य सपादितस्य तस्यैव सुखदु खरूपस्यैव स्वार्जितस्य, न त्वन्यस्येत्यर्थ । स च स जीव एव उपभोक्ता सामीप्येन अहं सुखी दु खीति भुजे कर्ता चेत्यन्वय· । स· जीव विश्वरूपः सर्वविषयोपलम्भेन विश्वरूप. त्रिगुण. त्रयो गुणा अज्ञानभेदावस्थात्रये यस्य स त्रिगुण. । त्रिवर्त्मा त्रयो वर्त्मानो मार्गा उत्तरो दक्षिण. कीटादिप्रातिरूपश्च यस्य स तथा । प्राणाधिपः प्राणानधिष्ठाय पाति रक्षतीति प्राणाधिपः सचरति सम्यगिह लोके परलोके च गच्छति । स्वकर्मभि. स्वार्जितै. पुण्यै. पापैश्च ।

शनन्द

(१) श्वेउ ५।७, रामानुज. १।३।२३, श्रीकठ १।३।२३, श्रीकर १।३।२४ प्राणाधिप ( प्राणादिभि ), बलदेव १।३।२४

*** अङ्गुष्ठमात्रो रवितुल्यरूप**
**सकल्पाहकारसमन्वितो य ।**
**बुद्धेर्गुणेनाऽऽत्मगुणेन चैव**
**आराग्रमात्रो ह्यवरोऽपि दृष्ट ॥**

अङ्गुष्ठमात्र अङ्गुष्ठपरिमाणः । य यमो याम्यैः पाशैर्बद्ध्वा स्वबलेन सत्यवत· शरीरान्निश्चकर्ष । रवितुल्यरूप । सूक्ष्मशरीरस्य तेज·प्रभूतत्वादतिस्वच्छत्वाच्च तस्मिन्नध्यस्ततादात्म्यस्याऽऽनन्दात्मनोऽपि स्वयप्रकाशमानत्वादादित्यसमानरूपत्वेन रवितुल्यरूपत्वमविरुद्धम् । सकल्पाहकारसमन्वितः । सकल्पो मनसो व्यापारः इद मे स्यादित्यादिरूपः अहकारः अन्त·करणव्यापारः अह मनुष्य इत्यादिरूप· । ताभ्यां समन्वित सबद्धः । सकल्पेत्यादिविशेषणमीश्वरव्यावृत्त्यर्थं, तस्यापि क्वचिदङ्गुष्ठमात्रत्वाभिधानात् । य· प्रसिद्धोऽह कर्ता भोक्तेत्यादिप्रत्ययै । बुद्धेर्गुणेन, बुद्धेः मनसः अन्तःकरणशब्दाभिधेयस्य गुणः कामादि·, तेन । आत्मगुणेन चैव, आत्मनश्चिदानन्दवपुषो गुणत्वेन व्यवह्रियमाणः प्रकाशसुखस्वच्छत्वसूक्ष्मत्वादि·, तेन । चकारो बुद्ध्यात्मगुणयोः समुच्चयार्थ । एवकारः अवरपदेन सबध्यते । आराग्रमात्र. । प्रतोत्रस्य मुखनिहिता दृढा लोहसूचीसमाना आरा, तस्या अग्र राजसर्षपादपि न्यून मुख, तन्मात्र तत्परिमाण. अतिसूक्ष्म इत्यर्थ । हि प्रसिद्धः । अवरोऽपि, न वर· श्रेष्ठस्तत्पदार्थ , स अवर· । अपेराराग्रमात्रत्वेनान्वयः । दृष्टः शास्त्रत स्वानुभवतश्च विद्वद्भिरवलोकितः । बुद्धेर्गुणेनाऽऽत्मगुणेन चाङ्गुष्ठमात्र आराग्रमात्रोऽप्यवर एव दृष्ट इत्यन्वय । न तु परः, तस्यानुपास्यस्यैवमवगन्तुमशक्यत्वादुपासनायाश्चात्राप्रस्तुतत्वादित्यर्थः ।

शनन्द.

* ब्रशकर. मुउ ३।१।९ (पृ १४८०) इत्यत्र द्रष्टव्यम् ।

(१) श्वेउ ५।८, ब्रशकर २।३।२२, २९, भास्कर. १।३।१४, २।३।२२, रामानुज १।३।२३, २।३।२३; श्रीकठ २।३।२३, श्रीकर १।३।२४, वल्लभ २।३।१९, २२ वरोऽपि ( परोऽपि ), विज्ञान १।१।२ ( पृ. ५४ ), २।३।२९, ३।२।२०, बलदेव १।३।२४

* [1]वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीव॰ स विज्ञेय. स चाऽऽनन्त्याय कल्पते ॥

( १ ) अङ्गुष्ठमात्रत्व सूक्ष्मशरीरोपाधित्वेन, आराग्रमात्रत्व च बुद्ध्युपाधित्वेन औचित्यादङ्गीकरणीयम्। आराग्रमात्रत्व चातिसूक्ष्मत्वेन, न तु वस्तुतस्तत्परिमाणत्वेनेति दर्शयितुमाह—वालाग्रशतभागस्य । वाल. केशः, तस्य अग्र अग्रप्रदेशः, तस्य शताशस्य । तस्यापि शतधा कल्पितस्य तु । शतप्रकारत्वेन कर्तुमशक्यत्वान्मनसा कल्पितस्य । केशशताशशताश॰ कर्तुमशक्य., तथाऽपि त मनसा परिकल्प्य तत्परिमाणो जीव इत्यवगन्तव्य, अतिसूक्ष्म इत्यर्थः । तु पुन । चेति पाठे कल्पितस्यापीति व्याख्येयम् । भाग अश॰ जीव प्राणानां धारयिता सः केशशताशशताशकल्पितभाग सम. विज्ञेयः विशेषेणावगन्तव्य. । ननु किमर्थमयम तिसूक्ष्म एव, यद्यप्यतिसूक्ष्म, तथाऽपि परमात्मनो भिन्न॰ स्यात्त्रसरेणुरिवाऽऽकाशादित्यत आह—स च सोऽतिसूक्ष्म एव अपगतायामविद्याया सकार्याया उपाधेरभावात् आनन्त्याय अनन्तत्वाय तत्पदार्थतादात्म्यायेत्यर्थ. । कल्पते समर्थो भवति ।

शनन्द

( २ ) अणुसदृश वस्तु उद्धृत्य तन्मानत्व जीवस्य श्रूयते — ‘ वालाग्र कल्पते ’ इति, ‘ आराग्रमात्रो ह्यवरोऽपि दृष्ट ’ इति च । अतोऽणुरेवायमात्मा । २।३।२३

‘ प्रदीपवदावेशस्तथा हि दर्शयति ’ — अमुक्तस्य कर्मणा सकुचितज्ञानस्य देहान्तरेष्वात्माभिमानानुगुणा व्याप्तिर्न सभवति । मुक्तस्य त्वसकुचितज्ञानस्य यथासकल्पमात्माभिमानानुगुणा व्याप्तिः इदमिति ग्रहणानुगुणा च नानुपपन्ना । तथा हि दर्शयति — ‘ वालाग्र- कल्पते ’ इति । अमुक्तस्य कर्म नियामक, मुक्तस्य तु स्वेच्छेति विशेष ।

* रामानुज ४।४।१५

[1]नैव स्त्री न पुमानेष न चैवाय नपुंसक ।
यद्यच्छरीरमादत्ते तेन तेन स युज्यते ॥

ननु अणुमात्रो यो जीव., स किंलिङ्ग इत्यत आह—नैव स्त्री । स्त्रीलिङ्गस्य स्वपरदु.खहेतुत्वात्प्रथमतस्तन्निराकरणम् । नारी नैव । तर्हि॰स्तु पुमानित्यत आह — न पुमान् न पुरुष । एष॰ प्रत्यक्षोऽतिसूक्ष्मत्वेनोक्तो जीवः। तर्ह्यस्तु तृतीयव्यक्तिरूप इत्यत आह — नैव चाय नपुसक॰ अयमात्मा जीवो नपुसकोऽपि नैव। न स्त्री पुमान् न नपुसकस्तद्रूप स्वतो लिङ्गत्रयरहित इत्यर्थः । ननु तर्हि कथमेषा स्त्री, अय पुमान्, एतन्नपुसक चेति व्यवहार इत्यत आह — यद्यत् स्त्रिया पुरुषस्य नपुसकस्य वा । वीप्सा यदोऽत्र तदश्च वक्ष्यमाणा अनियत्यर्था । शरीर विनाशिकलेवर आदत्ते स्वीकरोति, तेन तेन स्त्रीशरीरेण पुशरीरेण नपुसकशरीरेण वा स च प्रसिद्धो लिङ्गत्रयरहित एव अद्यते भक्ष्यते तिरोभूतः क्रियते । एषा स्त्री, एष पुमान्, एतन्नपुसक ( इति ) योषित्पुरुषनपुसकलिङ्गै. शरीरैर्योषित्पुरुषनपुसकशब्दप्रत्ययविषयः क्रियते इत्यर्थ॰ ।

शनन्द

[2]संकल्पनस्पर्शनदृष्टिमोहै-
र्ग्रासाम्बुवृष्ट्या चात्मविवृद्धिजन्म ।
कर्मानुगान्यनुक्रमेण देही
स्थानेषु रूपाण्यभिसंप्रपद्यते ॥

ननु यथा जनिवृद्ध्यादिकमस्य, तथा लिङ्गत्रयमस्त्वित्यत आह — सकल्पनस्पर्शनदृष्टिहोमै । सकल्पन मानसो व्यापार इष्टानिष्टविषय॰, स्पर्शन बाह्यविषयोप-

* अशकर मुउ ३।१।९ (पृ १४८०) इत्यत्र द्रष्टव्यम्।

(१) श्वेउ ५।९, शनन्द स्य च ( स्य तु ) इत्यपि पाठ, अशकर २।३।२२, २९, भास्कर २।३।२२, रामानुज १।२।१, २।३।२३, ४।४।१५, निंबार्क २।३।२२, ४।४।१५, श्रीकर १।३।४, १४, १।४।२२ ( पृ १७५ ), २।३।२१, ३।२।३०, ४।४।१५, वल्लभ २।३।२२, विज्ञान १।१।२ ( पृ ५४ ), २।३।२२, २९, बलदेव १।३।२५, २।३।२१, ४७

* निंबार्क श्रीकर रामानुजत् । श्रीकठ वल्लभ. २।३।२३ रामानुजवत् ।

(१) श्वेउ ५।१०, शनन्द न चैवाय ( नैव चाय ) युज्यते ( चाद्यते ).

(२) श्वेउ ५।११, शनन्द मोहैर्ग्रा ( होमैर्ग्रा )

लम्भ. सुखदुःखजनकः, ते एव दृष्टी, तयोरात्माग्नौ प्रक्षेपा होमा. इद मे स्यादिद मा भूदह ग(क)मनीय पश्यामि जिघ्रामि शृणोमि रसयामि स्पृशामीत्यादिरूपा , तै' । न केवलमेतैः, किं त्वस्मिन्स्थूले शरीरे ग्रासाम्बुवृष्ट्या च, ग्रस्यते इति ग्रास. अन्न, अम्बु पानीय, तयोर्वृष्टिर्यावत्क्षुत्तृष्णानिर्गमन ग्रसनपानरूपा, तयाऽपि । आत्मविवृद्धि जन्म । आत्मनो जीवस्य विवृद्धिर्विविधा वृद्धिर्जन्म च विवृद्धिजन्म । एतदुक्त भवति — इष्टानिष्टप्राप्तिपरिहारेच्छाया विविधविषयतज्जन्यसुखाद्युपलम्भस्तृप्तिश्चान्नपानाभ्या तैरुपलम्भैस्तृप्त्या च निमित्तेन प्रयोजनभूतेन अन्त.करणसबन्धेन अविचारितरमणीयेन देहगताञ्जन्मादिषड्भावविकारान् अनाद्यविद्यावशादात्मन्यध्यस्यतीति । ननु अविद्यावशाद्विषयोपलम्भ कस्मादय व्यवस्थितः स्यादित्यत आह—कर्मानुगानि । कर्म धर्माधर्मरूप, तदनुगच्छन्तीति कर्मानुगानि । तेन नियम्यमानानीत्यर्थः । अनुक्रमेण, जागरणे स्वप्ने चान्तःकरणधर्मस्य सबन्धस्य तत्सबन्धव्यापारस्य च नियतिमनु पश्चात् क्रम. अनुक्रम', तेन, देही देहसबन्धवान् जीव स्थानेषु स्वप्नजागरितयोर्भेदेषु रूपाणि शब्दादिविषयस्वरूपाणि अभिसप्रपद्यते सर्वत. सम्यङ्ममेदमिति प्राप्नोति । शनन्द

[१]स्थूलानि सूक्ष्माणि बहूनि चैव
रूपाणि देही स्वगुणैर्वृणोति ।
क्रियागुणैरात्मगुणैश्च तेषा
संयोगहेतुरपरोऽपि दृष्ट ॥

रूपाण्यभिसप्रपद्यते इत्युक्त, कानि तानीत्यत आह —स्थूलानि स्थूलशब्दप्रत्ययविषयत्वेन वर्तमानानि सूक्ष्माणि सूक्ष्मशब्दप्रत्ययविषयत्वेन वर्तमानानि बहूनि चैव स्थूलानि सूक्ष्माण्यप्यनन्तान्येव रूपाणि शब्दादिविषयस्वरूपाणि देही देहसबन्धवान् जीव' स्वगुणै' आत्मीयान्तःकरणस्य गुणैर्ज्ञानेच्छादिभि' वृणोति स्वीकरोति । ननु नियतप्राप्तिहेतुरीश्वर इत्यत आह—क्रियागुणै. । क्रिया क्रियाशक्ति. प्राण', तस्य गुण. शरीरेहादिः, तै. । आत्मगुणैश्च आत्मनोऽन्त.करणस्य स्वात्मन्यध्यस्ततादात्म्यगुणस्य गुणैरदृष्टेच्छाज्ञानादिरूपैः । चकारः क्रियाज्ञानशक्त्योः समुच्चयार्थः । तेषा शब्दादिविषयस्वरूपाणा सयोगहेतु' प्राप्तिहेतु अवरोऽपि जीवोऽपि, अपिशब्दादीश्वरोऽपि । शाश्वत अय त्वहमिदमनेन प्राप्स्यामीत्यभिसधाय प्रवृत्तः सर्वप्राणिप्रत्यक्षो जीवो विषयसयोगहेतु' नासौ न तद्धेतुरिति निराकर्तुं शक्य' । शनन्द.

अनाद्यनन्तस्य भावाभावकरस्य शिवस्य
ज्ञानात् पाशमुक्ति

[१]अनाद्यनन्त कलिलस्य मध्ये
विश्वस्य स्रष्टारमनेकरूपम् ।
विश्वस्यैक परिवेष्टितारं
ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥

इदानीं मन्त्राभ्यां तादात्म्यज्ञानस्य फल विवक्षुस्तत्त्वपदार्थयोर्भेद भञ्जयन्नाह — अनाद्यनन्तम् । न विद्यते आदिरन्तश्च यस्य स. अनाद्यनन्त. जनिमरणशून्य परमात्मा, तम् । कलिलस्य मध्ये विश्वस्य स्रष्टारमनेकरूपम् । विश्वस्यैक परिवेष्टितार ज्ञात्वा देव मुच्यते सर्वपाशै' । व्याख्यात चतुर्थे । अपा पञ्चम्यामाहुतौ योषिदग्नौ हुतानां फेनिलावस्था कलिल, तस्य मध्ये अनुशयी जीव , तस्य अनाद्यनन्तेन सामानाधिकरण्ये भेदगन्धो न स्यादित्यर्थ । शनन्द.

[२]भावग्राह्यमनीडाख्य भावाभावकरं शिवम् ।
कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम् ॥

इदानीं सक्षेपेणोक्तमुपायमुपेय चार्थत उपसहरति— भावग्राह्यम् । भाव. अन्तःकरणव्यापारः शब्दजन्य', तेन गृह्यते इति भावग्राह्य., तम् । अनिलाख्य, अनिलस्य वायोराख्याऽभिधान प्राणस्य प्राणमित्यादिरूपं यस्य, तम् । भावाभावकर, भावः अविद्या सकार्या, तस्य आत्मसाक्षात्कारेण अभावः निवृत्त्याख्य., त करोतीति भावाभावकर , तम् । शिव मङ्गलभूतस्वयप्रकाशमानानन्दात्मरूप स्वज्ञानेन । कलासर्गकर, कलाः प्राणश्रद्धाखवायुज्योतिरप्पृथिवीन्द्रियमनोन्नवीर्यतपोमन्त्रकर्म-

(१) श्वेउ ५।१२, शनन्द रपरो ( रवरो ), रामानुज १।१।४ ( पृ १६२ )

(१) श्वेउ ५।१३

(२) श्वेउ ५।१४, शनन्द नीडाख्य ( नीलाख्य ); बलदेव १।१।१, ३।३।१९

लोकनामरूपाः षोडशसङ्ख्याकाः, तासां सर्गः उत्पत्तिः, तं करोतीति कलासर्गकरः, तम्। देवं स्वयंप्रकाशम्। ये अधिकारिणः विदुः जानन्ति, ते उक्ताः जहुः त्यक्तवन्तः, त्यजन्तीत्यर्थः। तनुं साविद्यामिति शेषः। यथा पुनरादानं न कुर्वन्ति, एवं शरीरं त्यजन्तीत्यर्थः।

शंनन्द

इति पञ्चमोऽध्यायः॥

---

## षष्ठोऽध्यायः

ब्रह्मचक्रस्य प्रवर्तकः कालकालः पञ्चभूतकर्मेशानः देवः एव न स्वभावः कालो वा, तत्त्वानां योगकरणात् गुणान्वितकर्मारम्भः, कर्मक्षये तत्त्वेभ्योऽन्यत्वप्राप्तिः

[1]स्वभावमेके कवयो वदन्ति
कालं तथाऽन्ये परिमुह्यमानाः।
देवस्यैष महिमा तु लोके
येनेदं भ्राम्यते ब्रह्मचक्रम्॥

(१) धातुः प्रसादोपायो धातुः प्रार्थनादिकः, धाता च जगत्कर्तृत्वादिगुणो दर्शितः, तद्गुणान्यपि तत्त्वानि वादिभिरनन्तान्यङ्गीकृतानि, ततः कस्यचिद्धातुः प्रसादो मया संपादनीय इति व्याकुलितान्तःकरणमधिकारिणमवलोक्य मातेव सानुकम्पा श्रुतिः कालादिपक्षान् पूर्वपक्षीकृत्य स्वयंप्रकाशमानमानन्दात्मानं फलरूपं प्रतिपादयितुमन्तिममध्यायमारभते। यद्यप्ययमर्थः प्रथमेऽध्याये उक्तः, तथापि तद्व्याख्यानत्वादुत्तरस्य सर्वस्य ततः पुनरभिधानं न दोषाय। स्वभावं तत्तत्पदार्थस्यासाधारणशक्तिरूपं एके केचन कवयः क्रान्तदर्शिनः सोपः स (सोपहासं) वचनमिदं श्रुतेः। वदन्ति कथयन्ति। कालं निमेषादिपरार्धपर्यन्तचिरक्षिप्रादिप्रत्ययकारणं तथा, यथा यैः प्रमाणैर्याभिर्युक्तिभिर्जगत्कारणं स्वभावं वदन्त्येके, तैरेव प्रमाणैस्ताभिर्युक्तिभिः कालं जगत्कारणं वदन्ति अन्ये स्वभाववादिभ्यो व्यतिरिक्ताः कालग्रस्तबुद्धयः परिमुह्यमानाः समन्तान्मोहं गच्छन्तः। एतौ पूर्वपक्षौ। इदानीं सिद्धान्तमाह— देवस्य स्वयंप्रकाशमानस्य एषः प्रत्यक्षः अहमस्मि इत्यादिना, महिमा तु महत्त्वम्। तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः। लोके अस्मिन्संसारमण्डले। येन अविद्यारूपेण महिम्ना। इदं विविधप्रत्ययगम्यमविद्याप्रदर्शितं भ्राम्यते भ्रमणं कार्यते व्योम्नीव मेघमण्डलं मातरिश्वना, ब्रह्मचक्रं ब्रह्मैव स्वाविद्यया विवर्तं गच्छच्चक्रं संसारचक्रं एकनेम्यादिगुणकमुक्तं ब्रह्मचक्रम्। शंनन्द.

(२) किं बहुना, सर्वाण्येव कारणानि ब्रह्मापेक्षया कुठारादिवत्करणान्येव, ब्रह्मैव ह्येकं कर्तृ, स्वतन्त्रत्वादिति 'स कारणं करणाधिपाधिपः' 'समस्तशक्तिः परमेश्वरात्मा' 'स्वभावमेके ... चक्रम्' इत्यादिवाक्येभ्यो मन्तव्यमिति। विज्ञान ३।२।४१

*[1]येनाऽऽवृतं नित्यमिदं हि सर्वं
ज्ञः कालकालो गुणी सर्वविद्यः।
तेनेशितं कर्म विवर्तते ह
पृथ्व्याप्यतेजोनिलखानि चिन्त्यम्॥

देवस्यैष महिमेत्युक्तं, स देवः क इत्यत आह— येन प्रसिद्धेन आवृतं समन्तात् वृतं आकाशेनेवेतरत्, नित्यं सर्वदा इदं हि विविधप्रत्ययगम्यं प्रसिद्धं सर्वं विश्वम्। तथाप्यचेतनः स स्यादित्यत आह—ज्ञः बोधस्वभावः। नित्यत्वमाह—कालकालः। कालः सर्वविनाशकारी, तस्यापि विनाशकरं कालकालः। गुणी, गुणा अविद्याया अविद्याध्यासेन यस्य सन्ति, स गुणी। अतो ज्ञस्वभावोऽपि सर्ववित्। सर्वं वेत्तीति सर्ववित्। यः प्रसिद्धः। तेन सर्वज्ञेन ईशितं अधिष्ठितं कर्म क्रियात्मकं पुरुषेणोपलभ्यमानं विवर्तते पूर्वरूपापरित्यागेनावयविरूपं प्रतिपद्यते। यतः ह प्रसिद्धं विवर्तनम्। पृथ्व्याप्यतेजोनिलखानि पृथ्व्यादीनि पञ्च महाभूतानि। पृथिव्यादिपञ्चमहाभूतैर्विवर्तते इत्यर्थः। नन्वस्तु सर्वज्ञः कर्मणोऽधिष्ठातेश्वरः, किमस्माभिस्तत्स्वरूपेण करणीयमित्यत आह— चिन्त्यं चिन्तनीयम्। शंनन्द

---

(१) श्वेउ. ६।१, विज्ञान ३।२।४१

* छाउ ६।१२।२ (पृ ९२०) इत्यत्र विज्ञानभाष्यं द्रष्टव्यम्।

(१) श्वेउ ६।२, विज्ञान १।४।२८, ३।२।३९, ४१

तत्कर्म कृत्वा विनिवर्त्य भूय
स्तत्त्वस्य तत्त्वेन समेत्य योगम् ।
एकेन द्वाभ्या त्रिभिरष्टभिर्वा
कालेन चैवाऽऽत्मगुणैश्च सूक्ष्मै ॥

तत् ऐश्वर रूपम् । ननु मनसोऽस्थिरत्वे कथ चिन्तनमित्यत आह — कर्म कृत्वा कर्मणो ज्योतिष्टोमादेरनुष्ठान विधाय । ननु बहिर्मुखस्य कथ चिन्तनमित्यत आह — विनिवृत्य विशेषेण निवृत्तिं कृत्वा । विनिवर्त्येति पाठे मननादिककर्मव्यापारेभ्यो विच्छिद्य । भूयः पुनः तत्त्वस्य तत्त्वेन । तत्त्वमविद्या सकार्या, तस्य तत्त्व आनन्दात्मस्वरूप, तेन समेत्य सम्यक्प्राप्य योग तदहमस्मीति । ननु कोऽसौ, येन योग गच्छेदित्यत आह — एकेन अविद्यारूपेण । द्वाभ्या धर्माधर्माभ्याम् । त्रिभिः लोहितशुक्लकृष्णरूपैः । अष्टभिर्वा पञ्चमहाभूतैर्मनोबुद्ध्यहकारसहितै । वाशब्दः कार्यविशेषेषु प्रकृतीना समुच्चयार्थः । न केवलमेतै, किं तु कालेन चैव सृष्टिस्थितिसहारकालेनैवापि, आत्मगुणैश्च आत्मन. अन्तःकरणस्य गुणा. कामादयः, तै । कालेन चेत्यत्र चकार. कालात्मगुणानामेकादिभि. समुच्चयार्थं । कालेन चैवेत्यत्र एवकार. सृष्ट्यादिकाले सृष्ट्यादि, न पुन· सृष्टिकाले स्थित्यादिकमित्येतदर्थः । अत्रत्यश्चकार एकादीनामात्मगुणान्तानां करणानामात्मन्यध्यस्तत्वदर्शनार्थ. । नन्वनुत्पन्ने जगति कुत आत्मगुणा कामादय. इत्यत आह — सूक्ष्मै कारणावस्थैः । शनन्द.

आरभ्य कर्माणि गुणान्वितानि
भावाश्च सर्वान्विनियोजयेद्य ।
तेषामभावे कृतकर्मनाश
कर्मक्षये याति स तत्त्वतोऽन्यः ॥

आरभ्य उत्पाद्य कर्माणि क्रियमाणानि कार्याणि गुणान्वितानि लोहितशुक्लकृष्णगुणै सबद्धानि, भावाश्च अविद्यातत्सबन्धतदुपाधीन्प्यकार्यानात्मन्यध्यस्तान् सर्वान् निखिलान् विनियोजयेत् विविधमनेनैतदित्थमित्यादिभियोंग कारयेत् य· प्रसिद्ध । नन्वस्त्वेवरूपोऽयमात्मा तत्पदार्थ, तथाऽपि भावै. किं प्रयोजनमित्यत आह — तेषा अविद्यादीना अभावे असत्त्वे कृतकर्मनाश कृतस्यानुष्ठितस्य कर्मण सुकृतदुष्कृतस्य नाशो वैयर्थ्यम् । नन्वस्तु वैयर्थ्य, को दोषः इत्यत आह — कर्मक्षये कर्मणो विनाशे वैयर्थ्ये याति स तत्त्वतः गच्छति प्रसिद्धोऽदृष्टार्थप्रमाणभूतो वेदः, तत्त्वतो यथार्थकथनाद्वेदस्य प्रामाण्य स्यादित्यर्थ । तदपि कुत इत्यत आह — अन्यः मृषावादी यथार्थकथनाद्व्यतिरिक्तः । अथवा यदि सर्वेषा भावाना विनियोजक ईश्वर., तर्हि न कदाचिदपि ससाराब्धेः परपारगमनमित्यत आह — तेषामविद्यादीनामभावे कृतकर्मनाशः, ततः कर्मक्षये ससाराब्धेः पर पार याति स जीवः । तत्र हेतु·— अविद्यादिभ्यस्तत्त्वतोऽन्य । ततोऽविद्यादिनाशे स्वरूपेणावस्थान परपारगमनमित्यर्थ. । शनन्द.

सयोगनिमित्तहेतु आदि देव स्वचित्तस्थत्वेनोपास्य
कार्यकरणरहित परशक्तियुक्त स्वाभाविकज्ञान-
बलक्रिय अलिङ्ग सर्वभूतान्तरात्मा साक्षी
निर्गुण सर्वप्रकाश अप्रकाश्य
प्रधानस्य क्षेत्रज्ञस्य च पति
ससारमोक्षहेतु मुमुक्षु-
शरणम्

आदि. स सयोगनिमित्तहेतु
परस्त्रिकालादकलोऽपि दृष्ट ।
त विश्वरूप भवभूतमीड्य
देवं स्वचित्तस्थमुपास्य पूर्वम् ॥

(१) नन्वस्त्वेव, तथाऽपि नेश्वर भवदुक्त मन्यामहे, अविद्यातत्सबन्धाना स्वातन्त्र्यादित्यत आह — आदिः प्रथम. हेतुशून्य इत्यर्थः । स परमेश्वर. सयोगनिमित्तहेतु, सयोगः अविद्यासबन्धः, तस्य निमित्त अविद्यैव कारण, तस्य हेतुः आश्रयत्वेन विषयत्वेन च तन्निर्वाहकः, ततो न अविद्यादिक स्वतन्त्रमित्यर्थः । ननु तर्हि काल एव स भूतो वर्तमान आगामी वा इत्यत

(१) श्वेउ ६।३, शनन्द विनिवर्त्य (विनिवृत्य) इत्यपि पाठ, श्रीकर ३।३।६२ कालेन (भावेन)
(२) श्वेउ ६।४, श्रीकर ३।३।६२ आरभ्य (आरुह्य)

(१) श्वेउ ६।५, विज्ञान १।१।२ (पृ ३४), १।१।५ (पृ १२८, १२९)

आह — परस्त्रिकालात् उत्कृष्ट. भूतवर्तमानानागतकालत्रयात् । अकलोऽपि प्राणादिकलारहितोऽपि दृष्ट. ब्रह्मविद्भि साक्षात् कृतः । इदानीं मन्त्रद्रष्टा स्वानुभव दर्शयति — त अकल विश्वरूप नानारूप भवभूत ससाररूप ईड्य स्तुत्य देव स्वयप्रकाश स्वचित्तस्थ आत्मनोऽन्तःकरणस्थित उपास्य विजातीयप्रत्ययशून्य सजातीयप्रत्ययप्रवाह कृत्वा पूर्वं प्रथमत. आद्य वा विदामेति तृतीयमन्त्रस्थेन सबध्यते ।

शनन्द

(२) अस्माभिस्तु प्रकृतिपुरुषसयोग ईश्वरेण क्रियते इत्यभ्युपगम्यते, 'आदि स सयोगनिमित्तहेतुः परस्त्रिकालादकलोऽपि दृष्ट' ' इति श्रुते' ।

विज्ञान. १।१।२ (पृ ३४)

स वृक्षकालाकृतिभि' परोऽन्यो
यस्मात्प्रपञ्च परिवर्ततेऽयम् ।
धर्मावहं पापनुद भगेशं
ज्ञात्वाऽऽत्मस्थममृतं विश्वधाम ॥

ननु विश्वरूपत्वे सर्वात्मत्वेनानित्यत्वादिदोषाः स्यु' इत्यत आह—स. विश्वरूपः वृक्षकालाकृतिभिः वृक्षकालाकृतिभ्यः, वृक्षः ससार. कार्यरूपः, कालः भूतादिप्रत्ययालम्बनः, आकृतिरविद्या, तेभ्य' परः उत्कृष्टः । परत्व तत्त्वेऽप्यवयवविभागेन दृष्ट, यथा शरीरत्वेऽपि मूर्ध्न , तद्व्यावृत्त्यर्थमाह—अन्यः तेभ्योऽत्यन्तभिन्न । अत्यन्तासत्तोऽपि तस्य तेभ्योऽन्यत्व स्यादित्यत आह—यस्मात् आत्मनो वृक्षादिव्यतिरिक्तात् प्रपञ्च. भूतभौतिकसघातरूपः परिवर्तते समन्तान्निर्गच्छति अय विविधप्रत्ययगम्यः । स कथमसन् स्यादित्यर्थ. । यथा वयमुपास्य विदाम, तथाऽन्येऽपि ज्ञात्वा विन्दन्तीत्यत आह —धर्मावहम् । धर्मं सुखैकहेतु स्वभक्तान् आसमन्तात् प्रापयतीति धर्मावहः, त धर्मावहम् । यागादिक किं स इत्याशङ्क्य नेत्याह—पापनुदम् । पाप दुःखैकहेतु स्वभक्तानां नुदति प्रेरयति विनाशयतीत्यर्थः, स पापनुत्, तम् । ननु तर्ह्यैश्वर्यरूपः कश्चनायमित्यत आह —भगेशम् । भगः षड्गुण ऐश्वर्यं, तस्य ईशः नियन्ता, त ज्ञात्वा साक्षात्कृत्य आत्मस्थ आत्मनि वर्तमान अमृत विनाशशून्य विश्वधाम विश्वस्य तेज. स्थान वा विश्वधाम । अस्मद्वन्द्वातीति शेषः ।

शनन्द

तमीश्वराणां परम महेश्वर
तं देवताना परम च दैवतम् ।
पतिं पतीनां परमं परस्ता
द्विदाम देव भुवनेशमीड्यम् ॥

(१) त प्रसिद्ध धर्मावहत्वादिनोक्त ईश्वराणा हिरण्यगर्भादीना परम उत्कृष्टम् । न केवलमुत्कृष्ट, किंतु महेश्वरम् । महाश्चासौ नियन्ता चेति महेश्वर , त ईश्वराणामीश्वरम् । द्वितीयतच्छब्दादानमुपचारनिवारणार्थम् । देवतानां अग्नीन्द्रादीना परम च दैवत परम दैवत च उत्कृष्ट दैवतमपि । यद्यपीश्वराणामीश्वरत्वेनैव देवतानामपि दैवतत्व सिद्ध, तथाऽपि लोके ईश्वरेश्वराणामपि देवदेवत्व न प्रसिद्ध, ततो लोकप्रसिद्ध्यनुसारादविरोध., अतो लोकप्रसिद्धिमनुसृत्यैवाऽऽह — पतिं पतीनाम् । ईश्वरेश्वरा देवदेवाश्चेन्द्रादय., न ते कश्यपादीना प्रजापतीना पतय , अय तु प्रजापतीनामपि पति पतिः पतीना, तम् । परम सर्वस्मादुत्कृष्ट परस्तात् अविद्याया. परत. विदाम उपास्य त साक्षात्करवाम । अन्यान् शिक्षयितु मन्त्रद्रष्टा लोट्प्रयोगमकरोत्, मन्त्रदर्शनात्पूर्वमेव मन्त्रद्रष्टुरात्मज्ञानस्योत्पन्नत्वात् । ततो मन्त्रद्रष्टरि लोटो लट्त्वेन व्याख्यानम् । देव स्वयप्रकाश भुवनेश लोकेश इड्यम् । ईड्यमित्यधिकारे पुनरीड्यमित्यभिधानमतिस्तुत्यमित्येतदर्थम् ।

शनन्द.

(२) 'तमीश्वराणां . मीड्यम्' इति श्वेताश्वतरे ब्रह्मविष्णुरुद्रादीनां नियन्तृत्वेनेश्वर विदाम जानीमः, नान्यथेश्वर जानीम' इति निर्णीयते !

श्रीकर १।१।१ (पृ २७)

---

(१) श्वेड ६।६, श्रीकठ ३।२।१७

(१) श्वेउ ६।७, भास्कर २।१।१४ देवताना (देवाना) परस्तात् (पुरस्तात्) मीड्यम् (माद्यम्), रामानुज १।१।१ (पृ ६१, १११), १।१।२१, २।१।१५, ३।२।१७ देवताना (दैवताना), श्रीकठ ३।२।१७, श्रीकर १।१।१ (पृ २७), १।१।१२, १।२।२, ३।२।१७, ३।३।६२, ४।३।१६ परम परस्तात् (प्रथम पुरस्तात्), बलदेव २।४।३१

**[1] न तस्य कार्यं करण च विद्यते**
**न तत्समश्चाभ्यधिकश्च दृश्यते ।**
**पराऽस्य शक्तिर्विविधैव श्रूयते**
**स्वाभाविकी ज्ञानबलक्रिया च ॥**

( १ ) इदानीं श्रुतिराह—न तस्य कार्यं करण च विद्यते । तस्य प्रसिद्धस्याऽऽत्मनः कार्यं अविद्याविक्षेपजात करण कारण अविद्याऽपि नास्ति । अथवा कार्यं शरीर, करण इन्द्रियजातम् । न तत्समश्च तेनाऽऽत्मना तुल्योऽपि न । ननु मा भूत्समः, अस्त्वधिक इत्यत आह—अभ्यधिकश्च समन्तादधिकोऽपि । चकारेण नेत्यनुवर्तते । पूर्वश्चकारोऽसमत्वानधिकत्वयोः समुच्चयार्थः । दृश्यते अवलोक्यते । ननु समाधिकशून्य एक एवाय, तथा च नास्य जगत्कर्तृत्वादिशक्ति., सत्त्वे वा अस्मदादिशक्ते. समा सैवेत्यत आह—परा सर्वशक्तिभ्य उत्कृष्टा असर्वकारणस्याऽऽत्मनः शक्ति. सर्वकार्योत्पादनादिसामर्थ्यरूपा, अविद्येत्यर्थः । विविधैव अनेकरूपैव स्वविक्षेपविलासैः, श्रूयते शास्त्रादवगम्यते । सा किमागन्तुकेत्याशङ्क्य नेत्याह—स्वाभाविकी स्वभावत सबद्धा, अनादिसिद्धेत्यर्थः । विविधैवेत्युक्त तस्या वैविध्यमाह—ज्ञानबल क्रिया च । ज्ञान अविद्यावृत्तिरन्तःकरणवृत्तिश्च वस्तुप्रकाशिका । बल प्राणः उत्साह. प्रयत्न इत्यर्थ. । क्रिया व्यापारमात्रम् । ज्ञान च बल च क्रिया चेति ज्ञानबलक्रिया । एकवचनत्वेऽप्यनपुसकत्व श्रौतम् । यद्यपि वेदान्तिनो ज्ञानक्रियाशक्ती द्वे एव व्यवहरन्ति, तथाऽप्यविरोधः, बलशक्तेः क्रियाशक्तावन्तर्भावात् । चकारात्सस्कारशक्तिः सबन्धशक्तिश्च ।

शानन्द.

( २ ) ' न तस्य कार्यं करण च विद्यते ' इत्यादिनिराकरणन्तु लौकिककर्तृत्वनिषेधपर, तस्यैव प्रतीतेः । १।४।१४

अत्र स्वाभाविकीति विशेषणादविद्याकल्पितत्वं शक्तीना निरस्तम् । वल्लभ ३।३।३

( ३ ) लीलाविग्रहोऽपि च विष्ण्वादिदेवतानामेव स्वस्वाधिकारसपादनार्थं, न त्वीश्वरस्य, 'अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः पर ' 'न तस्य कार्यं करण च विद्यते' इत्यादिश्रुते सकोचे प्रमाणाभावात् ।

विज्ञान १।१।२१ ( पृ १६१ )

**[1] न तस्य कश्चित्पतिरस्ति लोके**
**न चेशिता नैव च तस्य लिङ्गम् ।**
**स कारणं करणाधिपाधिपो**
**न चास्य कश्चिज्जनिता न चाधिप ॥**

( १ ) ननु शक्तिमता प्रजापतीना दक्षादीना पतिर्हिरण्यगर्भो दृष्ट., तद्वदस्यापि स्यादित्यत आह — न तस्य सर्वशक्तेरात्मन. कश्चित् कोऽपि पति पालयिता अस्ति लोके न विद्यते ससारे । ननु मा भूत्पालयिता, पितृभ्या हीनस्येव शिशोर्भवतु च नियन्तेत्यत आह — न चेशिता नापि नियन्ता । चकारस्तस्यास्तीतिपदानुवृत्त्यर्थ. । ननु सशरीरत्वानुमानेनोभयमपि सपादयितु शक्यमित्यत आह — नैव च तस्य लिङ्गम् । तस्य

---

(१) श्वेउ ६।८, ब्रशकर १।१।५, २।१।२४, भास्कर १।४।२५, २।१।१४, २४, रामानुज १।१।१ ( पृ १९, ६१, १११, १२१ ), १।१।५, २१, २।१।८, १५ ( पृ ४४७ ), २।१।३०, ३१, ३।२।१७, ३।४।८, निंबार्क २।१।२९, ३०, ब्रमध्व २।१।३२, श्रीकठ १।१।२ ( पृ १२४), १।२।१ ( पृ ३०१ ), २।१।३०, ३१, ३।३।१५, ३।३।३९, श्रीकर १।१।१ ( पृ १९, २० ), १।१।३ ( पृ ३८ ), १।१।५ ( पृ ५४ ), १।३।७, ११, १।४।२२ ( पृ १७५ ), १।४।२३, २।१।३, ६, ९, १२, १३, ३२, ३६, २।२।४२, ३।२।१५, १७, ३५, ३।३।३९, ६२, ३।४।८, ४।१।१८, ४।३।१६, ४।४।४, २२, वल्लभ १।४।१४, ३।२।३६, ३।३।३, २६, ४।३।१६, ४।४।१६, २०, २१, विज्ञान १।१।४ ( पृ ९७ ), १।१।५ ( पृ १३७ ), १।१।२१, २।१।३, ३०, २।२।४०, ४५, २।३।४७, बलदेव १।१।१, १।४।२६, २।१।३०, ३१, ३।३।२९, ४०

(१) श्वेउ ६।९, ब्रशकर १।१।११, २।३।९, भास्कर. १।१।११, १।४।२५, २।१।१४, २।३।९, रामानुज. १।१।१ ( पृ ११६ ), १।१।४ ( पृ १६२ ), १।१।१२, २१, १।२।१, २।१।१५, २२, ३।२।१७, ३।४।८, निंबार्क. ४।४।२० करणा ( कारणा ), श्रीकठ ३।४।८, श्रीकर. १।१।१२, २।१।२३, ३।२।१७, २६, ३।४।८, ४।३।१६; विज्ञान ३।२।४१; बलदेव. २।१।३१.

आनन्दात्मनो लिङ्ग्यते गम्यते अस्मिन् अनेन वा अयमिति लिङ्ग शरीरमित्यर्थः, नैव। एवकार. पाक्षिकसत्त्वनिवारणार्थः। चकारोऽस्तीतिपदानुवृत्तिं कुर्वन्पती शित्रभावाभ्यां लिङ्गाभाव समुच्चिनोति। स प्रसिद्धः कारण सर्वस्य हेतुः। करणाधिपाधिप। करणादीना चक्षुरादीनामधिपा अग्न्यादयः, तेषामधिष्ठाय पालयिता। नन्वेवभूतोऽपि जायमानोऽस्त्वित्यत आह — न चास्य कश्चिज्जनिता। अस्य आनन्दात्मन कोऽपि जनिता उत्पादकोऽपि न। मा भूदुत्पादकः, अविद्यावत्क श्चिदधिष्ठाय पालयिताऽस्त्वित्यत आह—न चाधिप. नाप्यधिष्ठाय पालयिता। आद्यश्चकारो जनकाधिपाभावयोः समुच्चयार्थ. । द्वितीयोऽनुक्तसर्वससारधर्माभावसमुच्चयार्थः। शनन्द

(२) 'श्रुतत्वाच्च' — कुतश्च सर्वज्ञ ब्रह्म जगतः कारणम्। श्रुतत्वाच्च। स्वशब्देनैव च सर्वज्ञ ईश्वरो जगतः कारणमिति श्रूयते श्वेताश्वतराणा मन्त्रोपनिषदि सर्वज्ञमीश्वर प्रकृत्य—'स कारण करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' इति। तस्मात्सर्वज्ञ ब्रह्म जगतः कारण, न अचेतन प्रधानमन्यद्वा इति सिद्धम्।

१।१।११

'असभवस्तु सतोऽनुपपत्तेः' — वियत्पवनयोरसभाव्यमानजन्मनोरप्युत्पत्तिमुपश्रुत्य ब्रह्मणोऽपि भवेत् कुतश्चिदुत्पत्तिरिति स्यात् कस्यचिन्मतिः। तथा विकारेभ्य एवाऽऽकाशादिभ्य उत्तरेषां विकाराणामुत्पत्तिमुपश्रुत्य आकाशस्यापि विकारादेव ब्रह्मण उत्पत्तिरिति कश्चिन्मन्येत। तामाशङ्कामपनेतुमिद सूत्र—असभवस्त्विति। न खलु ब्रह्मणः सदात्मकस्य कुतश्चिदन्यत सभव. उत्पत्ति आशङ्कितव्या। कस्मात्। अनुपपत्तेः। सन्मात्र हि ब्रह्म, न तस्य सन्मात्रादेवोत्पत्ति सभवति, असत्यतिशये प्रकृतिविकारभावानुपपत्तेः। नापि सद्विशेषात्, दृष्टविपर्ययात्। सामान्याद्विशेषा उत्पद्यमाना दृश्यन्ते मृदादेर्घटादय, न तु विशेषेभ्यः सामान्यम्। नाप्यसत., निरात्मकत्वात्, 'कथमसतः सज्जायेत' इति चाक्षेपश्रवणात्। 'स कारण . चाधिपः' इति च ब्रह्मणो जनयितार वारयति। वियत्पवनयो. पुनः उत्पत्तिः प्रदर्शिता, न तु ब्रह्मण सा अस्तीति वैषम्यम्। न च विकारेभ्यो विकारान्तरोत्पत्तिदर्शनात् ब्रह्मणोऽपि विकारत्व भवितुमर्हतीति, मूलप्रकृत्यनभ्युपगमे अनवस्थाप्रसङ्गात्। या मूलप्रकृतिरभ्युपगम्यते, तदेव च नो ब्रह्मेत्यविरोधः।

ब्रशकर. २।३।९

(३) करणाधिपस्य जीवस्याधिपः पर ब्रह्मैव कारण व्यपदिश्यते।

*रामानुज १।२।१

१ यस्तन्तुनाभ इव तन्तुभि प्रधानजैः स्वभावत।
देव एक स्वमावृणोति स नो दधाद्ब्रह्माप्ययम्॥

इदानीं ब्रह्मज्ञानोत्पादनार्थं प्रार्थयते मन्त्रद्रष्टा — यः प्रसिद्ध. तन्तुनाभ इव लूताकीटवत् तन्तुभिः कार्यैः सूक्ष्मैस्तन्तुवत्सर्वत्रानुस्यूतै प्रधानजैः। प्रधान अव्याकृतं आत्मावरणाविद्येत्यर्थ। तस्माज्जाताः प्रधानजाः। ननु तर्हि किञ्चित्प्रयोजनमुद्दिश्य करोति चेदनाप्तकामोऽय स्यादित्यत आह — स्वभावत. स्वभावात् प्रयोजनमन्तरेण लीलाकैवल्यन्यायेनेत्यर्थः। देव. स्वयप्रकाशः एकः भेदगन्धरहितः समावृणोति सम्यगावृणोतीव भेदाभावात्। सः भेदगन्धशून्यो व्यापी नः अस्माक। दधातु धारयतु ब्रह्म सर्वस्मादधिक अव्ययं व्ययशून्य अविनाशीत्यर्थ। स देवोऽस्माक ब्रह्मसाक्षात्कार करोत्वित्यर्थ.। शनन्द

२ एको देव सर्वभूतेषु गूढः
सर्वव्यापि सर्वभूतान्तरात्मा।

---

* विज्ञान श्वेउ ६।१ (पृ १६१७) इत्यत्र द्रष्टव्यम्।

(१) श्वेउ ६।१०, शनन्द स्वमावृ (समावृ), विज्ञान १।४।१, २३, २।२।११

(२) श्वेउ ६।११, ब्रशकर १।१।४ (पृ ७०), १।१।१९, १।४।१०, २।३।१७, ३।३।३५, रामानुज १।१।४ (पृ १५३), २।१।१५, ब्रमध्व १।१।११, श्रीकर १।१।१ (पृ १९), १।१।१२, १।३।७, ३३।३५, ३।४।४४, ४।४।४, वल्लभ ४।४।१४, विज्ञान. १।१।२ (पृ ६१), १।१।४ (पृ ९२, ९८), १।१।१६, २१, ३।२।१६, ३।३।३९, बलदेव १।१।११

कर्माध्यक्ष' सर्वभूताधिवास
साक्षी चेता केवलो निर्गुणश्च ॥

( १ ) ननु प्रार्थ्यप्रार्थनादिभेदवान् किमयमित्यत आह — एक' भेदगन्धशून्य । नन्वय चेत्प्रतीत, कथ भेदगन्धशून्य., न चेत् नतरामित्यत आह—देव. स्वयप्रकाशः । ननु नाऽऽकाशे स्वयप्रकाशः, तद्वेद्याना सुखदु खादीनामभावादित्यत आह — सर्वभूतेषु चतुर्विधेषु जीवजातिभेदेषु । अयमर्थ — मा सन्त्वाकाशे सुखादयः, प्राणिषु सत्त्वेन स्वयप्रकाशेन साक्षिचैतन्येन तेषामुपलभ्यमानत्वान्न स्वयप्रकाश साक्षिचैतन्य नास्तीति । ननु यद्यस्ति, कस्मादाबालगोपाल न प्रतीयते इत्यत आह — गूढः अनाद्यविद्यया अहममाभिमानेन च सवृत. । ननु वस्त्रादिसवृताना मण्यादीना यथा परिच्छेदो दृष्ट, तद्वदस्यापि स्यादित्यत आह — सर्वव्यापी आकाशवत्सर्वत्र व्याप्य वर्तमानः । ननु तद्वदेव अनात्मा स्यादित्यत आह—सर्वभूतान्तरात्मा, सर्व भूतानां चतुर्विधप्राणिना बुद्धेरभ्यन्तरः ( अन्तरात्मा ) आत्मा अस्मच्छब्दप्रत्ययव्यवहारयोग्य. सर्वभूतान्त रात्मा । अन्तरशब्दो बुद्धिव्यावृत्त्यर्थ. । ननु तथा चेत्सुखदुःखयोर्भोक्ता ससार्येवायमित्यत आह —कर्माध्यक्ष. कर्मणा शुभाशुभफलाना धर्माधर्मरूपाणामध्यक्षो नियन्ता । तथा चेन्नैयायिकाद्यभिमतस्तटस्थ एवायमित्यत आह — सर्वभूताधिवासः । सर्वाणि भूतान्यात्मत्वेनाधिकृत्य वसतीति सर्वभूताधिवास. । सर्वात्मस्वरूप इत्यर्थः । ननु सर्वात्मा चेदयमह कर्ता भोक्तेत्यादिप्रत्ययैरनुभूयमान कथ स्वयप्रकाश' स्यादित्यत आह — साक्षी अह सुखी दु.खीत्यादिप्रत्ययाना द्रष्टा । यथा लोके विवदमानाना केषाचित्सुखदुःखभाजामन्यः सुखदुःखरहितस्तेषा द्रष्टा साक्षी । ननु साक्षी चेदयमात्मा, करणादीनामपि स्यादित्यत आह — चेता केवल' बोद्धैव, न तु शरीरादिमान् । ननु बोद्धा चेज्ज्ञानगुणोऽय स्यादित्यत आह—निर्गुणश्च । गुणगुण्यादिभेदशून्योऽपि चेता केवल इत्यन्वयः । स्वयंप्रकाशमान बोधैकस्वभाव आनन्दात्मेत्यर्थ. ।

शनन्द.

( २ ) भेदस्तूपाधिनिमित्तो मिथ्याज्ञानकल्पितः, न पारमार्थिक', 'एको देवः०' इत्यादिश्रुतिभ्यः ।

ब्रशकर १।४।१०

( ३ ) 'साक्षी चेता केवलो निर्गुणश्च' इत्यादिश्रुतिषु या अन्यधर्मराहित्यलक्षणा केवलता उक्ता, सा लीलात्मिकैव । लीलाविशिष्टमेव शुद्ध पर ब्रह्म, न कदाचित् तद्रहितमित्यर्थ' पर्यवस्यति । तेन स्वरूपात्मकत्व लीलाया. पर्यवस्यति ।

वल्लभ ४।४।१४

[१]एको वशी निष्क्रियाणा बहूना-
मेक बीज बहुधा य करोति ।
तमात्मस्थ येऽनुपश्यन्ति धीरा-
स्तेषा सुख शाश्वत नेतरेषाम् ॥

नन्वेकोऽय देवो यैर्ज्ञातस्तेषा को लाभ इतरेषा च का हानिरित्यत आह—एक. भेदरहित वशी सर्ववशीकरणवान् निष्क्रियाणा क्रियारहिताना जडानामित्यर्थः । बहूना अनेकेषाम् । सर्वजडाना नियन्तेत्यर्थ । कथ नियन्तेत्यत आह—एक आवरणरूपेण भेदशून्य अविद्या स्वरूप बीज अनेकविक्षेपाङ्कुरभूससारवृक्षजनक बहुधा अनेकै' प्रकारैर्भूतभौतिकै. कामादृष्टादिभिश्च य. प्रसिद्धः करोति । स्पष्टम् । त बीजस्य बहुधा कर्तार आत्मस्थ स्वान्त करणे वर्तमान ये अधिकारिण. । अनुपश्यन्ति वेदान्तवाक्यश्रवणमनु वय ब्रह्म स्म इति साक्षात्कुर्वन्ति धीरा ससारसमुद्रमहोर्मिभूतैः कामक्रोधादिभिरविकम्पितात्मस्वभावाः, विजितेन्द्रिया इत्यर्थः । तेषा वय ब्रह्मेतिबुद्धिमतां सुख अनुकूलवेदनीय शाश्वत शश्वत् निरन्तर वर्तमान अविनाश्यानन्दात्मस्वरूपम् । आविर्भवतीति शेषः । नेतरेषा वय ब्रह्म स्म इतिबुद्धिरहिताना सुख न, कुत शाश्वत सुखमित्यर्थ. ।

शनन्द.

[२]नित्यो नित्यानां चेतनश्चेतनाना-
मेको बहूनां यो विदधाति कामान् ।
( * तमात्मस्थ येऽनु पश्यन्ति धीरा

* () इतिचिह्नस्थितो भाग उपलब्धपुस्तकेषु नास्ति । काउ ५।१२, १३ (पृ १४३१) इत्येतदत्रानुसधीयताम् ।

(१) श्वेउ ६।१०, ब्रशकर २।१।१४, विज्ञान १।१।२ (पृ ३९)

(२) श्वेउ ६।१३, शनन्द धिगम्य ( भिपन्न )

स्तेषां शान्तिः शाश्वती नेतरेषाम् ॥
तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् ।
कथं नु तद्विजानीयां किमु भाति विभाति वा ॥)
तत्कारणं साख्ययोगाधिगम्यं
ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥

(१) ननु तर्हि नित्यश्चेतनः कश्चनाहमिति ज्ञातव्यः, जीवश्च तथेत्यत आह — नित्यः अविनाशी नित्यानां अविनाशिनामाकाशादीनां लोकप्रसिद्धानां मध्ये। तथाऽपि चेतनवर्गे कथं प्राधान्यमित्यत आह— चेतनः नित्यज्ञानस्वरूपः चेतनानां सोपाधिकानां जीवानां ज्ञानवतां मध्ये, एकः भेदशून्यः बहूनां अनेकेषां देवादीनां, यः प्रसिद्धः विदधाति विशेषेण धारयति प्रयच्छतीत्यर्थः। कामान्, काम्यन्ते इति कामा भोगाः, तान्, सुखदुःखरूपाणि फलानीत्यर्थः। (तं नित्यानां नित्यं चेतनानां चेतनम् आत्मस्थं येऽनुपश्यन्ति धीराः, तेषां शान्तिः शाश्वती नेतरेषाम्। शान्तिरविद्यानिवृत्तिः। शाश्वती शश्वद्वर्तमाना। अविद्यायाः पुनरुद्गमरहितः आत्यन्तिको मोक्ष इत्यर्थः। व्याख्यातमन्यत्। ननु यच्छश्वत्सुखरूपं, तद्वाङ्मनसातीतस्वरूपं वाचा चाऽयमात्माऽभिधीयते इत्यत आह — तदेतत् एतदात्मस्वरूपं वाङ्मनसातीतं ब्रह्म प्रसिद्धं इति वक्ष्यमाणेन प्रकारेण मन्यन्ते विद्वांसो जानन्ति। तन्मननप्रकारमाह — अनिर्देश्यम्। निर्देशो वाग्व्यापारः, तद्योग्यं निर्देश्यं, तद्रहितमनिर्देश्यम्। उपलक्षणमिदम्। बाह्यान्तःकरणव्यापाराणामविषयः। तर्हि किमसत्, नेत्याह — परमं उत्कृष्टं निरुपमं अवधिशून्यमित्यर्थः। किम्। सुखं आबालगोपालं प्रसिद्धं, यदुद्दिश्य सर्वाश्चेष्टाः सर्वस्य। कथं नु केन प्रकारेण। नु वितर्के। तत् अनिर्देश्यं परमं सुखमहमधिकारी विजानीयां विशेषेण ज्ञानं कुर्याम्। ननु को विचार उपाये, तज्ज्ञानेन तज्ज्ञेयमित्यत आह — किं तज्ज्ञानस्योपायत्वेऽपि। किं विचारे। उ अपौ। ब्रह्मज्ञानेनापि ब्रह्म किं भाति प्रतीयते प्रकटीभवति, विभाति वा विविधं विरुद्धं विपरीतं वेत्यर्थः, भाति। व्याख्यातम्। वाशब्दः पक्षान्तरे। अयमर्थः — ब्रह्मज्ञानेन चेद्ब्रह्म प्रतीयते, न वाङ्मनसातीतं, तन्न प्रतीयते चेद्ब्रह्मज्ञानवैयर्थ्याच्छास्त्राप्रामाण्यं, अतोऽत्र विचारः, तेन ब्रह्मज्ञाने ब्रह्मबोधोपाये सति असत्यपि अतिसूक्ष्मबुद्धेरधिकारिणः कथं नु तद्विजानीयामिति चिन्ता युक्तेति।) ननु 'यतो वाचो निवर्तन्ते' इति 'यो वेद निहितं गुहायाम्' इति वचनयोर्विरोधे अस्तु शास्त्रमप्रमाणं, न करणीया च मोक्षाकाङ्क्षेत्यत आह— तत् प्रसिद्धं कारणं जगत्सृष्टिस्थितिसंहाराणां कर्तृ साख्ययोगाधिगम्यम्। सम्यक्ख्यायते प्रकाश्यते आत्मतत्त्वं येन विज्ञानेन, तत्सांख्यम्। योगो जीवपरमात्मनोस्तादात्म्यज्ञानफलोऽष्टाङ्गयोगरूपो वैदिककर्मानुष्ठानादिरूपो वा। अधिगम्यं ताभ्यां अहं ब्रह्मास्मीत्याधिक्येनातिशयेन साक्षात्कर्तुं शक्यम्। साख्ययोगाभिपन्नमिति वा पाठः। ज्ञात्वा देवं मुच्यते सर्वपाशैः। व्याख्यातम्। अयमर्थः— शाब्दप्रमाणजन्याऽऽत्मान्तःकरणवृत्तिर्जायते, न कदाचिदप्यात्मा (न?) घटसुखादिवच्छब्दस्य वाऽन्यस्य प्रमाणस्य वा विषयः, तेन विरोधाभावान्न शास्त्राप्रामाण्यं, नापि मोक्षाकाङ्क्षापरित्याग इति।

शंकरानन्द.

इत्यपि पाठः, अद्याकर २।१।३ धिगम्य (भिपन्न), भास्कर ३।२।१८, रामानुज १।१।१ (पृ. ६१, ११६), २।१।२२, २।३।१८, ४३, ३।२।२६, निबार्क २।३।१७, मध्व. २।३।१७, २८, श्रीकंठ १।१।२१ (पृ २५०), २।३।१८, श्रीकर. १।१।७३, विज्ञान १।१।२ (पृ ३८, ५६), १।१।५ (पृ १२८, १२९), २।२।४१, २।३।४३, ३।२।३१, ३९, ३।३।४१, ४।१।३, बलदेव. १।१।१, २।१।३

(२) यत्तु दर्शनमुक्तम् 'तत्कारणं साख्ययोगाभिपन्नम्' इति, वैदिकमेव तत्र ज्ञानं ध्यानं च साख्ययोगशब्दाभ्यामभिलप्यते प्रत्यासत्तेरित्यवगन्तव्यम्।

ब्रह्मकर २।१।३

(३) अचिदशावत्स्वरूपान्यथात्वाभावाभिप्राया उत्पत्तिप्रतिषेधवादिन्यो नित्यत्ववादिन्यश्च 'न जायते म्रियते' (काठ २।१८) इत्याद्याः, 'नित्यो नित्यानाम्' इत्याद्याश्च श्रुतयः। २।३।१८

'नित्यो नित्यानां कामान्' इत्यादिश्रुतिभ्य ईश्वराद्भेदस्य आत्मना बहुत्वनित्यत्वयोश्चाभिधीयमानत्वात्। रामानुज २।३।४३

( ४ ) न चैव 'आदिः स संयोगनिमित्तहेतु' परस्त्रिकालादकलोऽपि दृष्टः ' इत्यादिश्रुतिविरोधात्साख्य योगयोरप्रामाण्यमेवास्त्विति वाच्यम् । 'तत्कारणं साख्ययोगाधिगम्य ज्ञात्वा देव मुच्यते सर्वपाशैः ' इति श्वेताश्वतरादिश्रुतिभ्यः 'नास्ति साख्यसम ज्ञान नास्ति योगसम बलम् ' इत्यादिस्मृतिभ्यश्च तत्प्रामाण्यसिद्धेः। न पुनरीश्वरमेव परमार्थतोऽपि साख्या नाङ्गीकुर्वन्ति, 'तत्कारण सांख्ययोगाधिगम्यम् ' इत्युक्तश्रुत्यादिभिस्तदभ्युपगमावगमात् ।

विज्ञान १।१।५ ( पृ १२८, १२९ )

* न तत्र सूर्यो भाति न चन्द्रतारक
नेमा विद्युतो भान्ति कुतोऽयमग्नि ।
तमेव भान्तमनुभाति सर्वं
तस्य भासा सर्वमिद विभाति ॥

ननु वस्तुषु विचित्रा शक्तयो दृश्यन्ते कालनिमित्तादियोगात्, यथा भानोर्भाभिः पूरिते देशे चन्द्रतारकाग्न्यादीना घटादेरप्रकाशकत्व स्वस्यापि तेजोभिभवश्च, तदभावे वैपरीत्य, तथा आत्मनि स्वयप्रकाशे आत्माकारवृत्तौ प्रतीयमाने वाङ्मनसातीतेऽप्यस्त्वादित्यादि भाभि॰ प्रतीयमानत्वमित्यत आह——न तत्र तस्मिन्ना त्मस्वरूपविषये सूर्यः भानु भाति न प्रकाशते। न चन्द्रतारकम् । चन्द्रश्च तारकाश्च चन्द्रतारक सचन्द्रमुडुमण्डल, न भातीत्यनुषङ्ग. । नेमाः प्रत्यक्षा॰ मेघमण्डलस्था. पीतादिरूपा. विद्युत अचिरप्रभा भान्ति न प्रकाशन्ते। कुतोऽयमग्नि॰ । अय प्रत्यक्षो भौमो वैश्वानरः कुतो भातीत्यनुषङ्ग. । ननु तस्मिन्विषये न भान्त्येते चेत्तदत्यन्त तमस्तोमरूपमित्यत आह —— तमेव सूर्यादेरविषयमेव भान्त प्रकाश कुर्वन्त अनु पश्चात् भाति प्रकाशते सर्वे चन्द्रसूर्यादिक ज्योतिर्जातम् । ननु राजान गच्छन्तमनु गच्छति चेद्भृत्यादिः, सोऽपि स्वतन्त्रो गन्ता स्यात्, तथा चाऽऽत्मा प्रकाशको यथा, तथा सूर्यादिकमपि प्रकाशक स्वतन्त्र, तथा च प्रकाशकानामात्मना सममात्यन्तिको भेदः, यथा तेषा तथा जडानामपि स्यादित्यत आह —— तस्य प्रकाशात्मन॰ भासा दीप्त्या तद्बोधव्याप्त्येत्यर्थः । सर्वं प्रकाश्य प्रकाशक च निखिल इद सूर्यादि घटपटादि च प्रत्यक्ष विभाति विविध इद प्रकाश्य इद प्रकाशक च भाति प्रकाशते, न स्वतन्त्र, ततो न भेदशङ्केत्यर्थः ।

शनन्द.

एको हसो भुवनस्यास्य मध्ये
स एवाग्नि सलिले सनिविष्ट. ।
तमेव विदित्वाऽति मृत्युमेति
नान्य पन्था विद्यतेऽयनाय ॥

(१) ननु यथा सूर्यादीना सर्वप्रकाशकाना सजातीयविजातीयभेदो दृष्टः, तद्वदस्याप्यस्त्वित्यत आह —— एकः स्वगतसजातीयविजातीयभेदशून्यः हस आत्मज्ञानेन भेद हन्तीति हस॰ भुवनस्यास्य मध्ये अस्य प्रत्यक्षस्यैक देशस्य भुवनस्य लोकस्य कर्मफलस्य मध्येऽन्तः । इदानीं चैतन्यस्य विशेषत. अग्नौ सलिले च सनिधिं दर्शयितुमाह——स एव प्रसिद्धो हस एव, न त्वन्य, अग्निः अपा जनकस्तेजोरूप. सलिले नीरे स्वकार्ये सनिविष्टः कारणरूपेण सम्यक् निवेशन कृतवान् । तमेव विदित्वाऽति मृत्युमेति नान्यो हेतुर्विद्यते ईशनाय । हेतु. कारणभूत. । ईशनाय ईश्वरत्वाय मोक्षायेत्यर्थ ।

शनन्द.

( २ ) एव च सति मुख्यकल्पानुकल्परूपेणैव ब्रह्मात्मज्ञानजीवतत्त्वज्ञानयोर्मोक्षहेतुत्वम् । विकल्पोऽप्यत्र न शास्त्रीयः, येनोभयोरशास्त्रार्थत्व स्यात्, किं तु शक्ताशक्तभेदेन व्यवस्थितविकल्प एव । अत उभयोरनुष्ठानेऽपि न क्षति । 'नान्य. पन्था विद्यतेऽयनाय' इत्यादिश्रुतयश्च मुख्यकल्पपरा. । यथा हि अमुकदेशगमनेऽयमेव पन्था नान्य इति निरुपद्रवशीघ्रादिरूपैः प्रकृष्ट पन्था स्तूयते मुख्यत्वाभिप्रायेण, न तु सोपद्रववक्रादिवर्त्मान्तर प्रतिषिध्यते, तथैव

---

* काउ ५।१५ ( पृ १४३२ ) इत्यत्रापि व्याख्यानानि द्रष्टव्यानि । स्थलनिर्देशादिक च तत्रैव द्रष्टव्यम् ।

(१) श्वेउ ६।१४

* श्वेउ ३।८ ( पृ १५९५ ) इत्येतदनुसधेयम् ।

(१) श्वेउ ६।१५, शनन्द नान्य पन्था विद्यतेऽयनाय ( नान्यो हेतुर्विद्यत ईशनाय ), ब्रशकर १।३।८, ३९, भास्कर १।१।३, रामानुज १।४।१९, ब्रमध्व. ३।३।४८, श्रीकर १।१।३०, वल्लभ १।४।१९, ३।३।३३; विज्ञान ३।२।२३, ३।३।४, २४, ४२, ४७, ३।४।८.

निष्प्रतिबन्धाद्यशेषगुणैर्मोक्षवर्त्मतया स्तूयते ब्रह्मज्ञान मुख्यत्वाभिप्रायेण, न तु सप्रतिबन्धादिरूपतया मन्दो मोक्षपन्था. केवलजीवतत्त्वज्ञानरूपः प्रतिषिध्यते इति।

विज्ञान. ३।३।४२

[1] स विश्वकृद्विश्वविदात्मयोनि-
ज्ञः कालकालो गुणी सर्वविद्य ।
प्रधानक्षेत्रज्ञपतिर्गुणेशः
संसारमोक्षस्थितिबन्धहेतु ॥

ननु यः सर्वात्मा सर्वेशो बन्धमोक्षादिकारण, त ज्ञात्वा मृत्युमत्येति, न चाय स इत्यत आह—स प्रसिद्ध. विश्वकृत् सर्वस्य कर्ता विश्ववित् सर्वज्ञ. आत्मयोनिः। स्वयमेव कारण स्वस्य, अजात इत्यर्थ. । अथवा आत्मा अन्तःकरण ज्ञानक्रियाशक्तिर्हिरण्यगर्भ इत्यर्थः। तस्य योनिः कारणम् । तर्ह्यव्याकृतमेतदित्यत आह— ज्ञ. बोधैकस्वभावः। बोधाना कालग्रस्तत्वादयमपि तथेत्यत आह—कालकालः विनाशकस्य विनाशक । तर्हि कोपकालाग्निरुद्रः कश्चनेत्यत आह — गुणी सर्वेषां गुणानामाश्रयभूत. । तर्ह्यस्तु जीवविशेष. कश्चन तथेत्यत आह — सर्ववित् सर्वज्ञः । नात्राप्युपचारः शङ्कितु शक्यः, विश्वविच्छब्दस्योपचरितत्वेन शङ्कितस्योपर्यस्यागमनात् । यः प्रसिद्धः सर्वेषु वेदान्तेषु । तथाप्यविद्याजीवयो. स्वातन्त्र्ये नायमेवरूप इत्यत आह — प्रधानक्षेत्रज्ञपति. । प्रधान माया, क्षेत्रज्ञो जीवः, तयो. पति. पालयिता । ननु गुणैरेव लोहितादिभिस्तौ भोग्य भोक्तृभावेन पाल्येते इत्यत आह— गुणेश. । गुणाना लोहितशुक्लकृष्णाना ईशो नियन्ता गुणेश. । नन्वस्तु गुणेश., बन्धमोक्षस्थितिकारण यत्, तदेव निरङ्कुशं नियन्तृ, न तु गुणाना नियन्तेत्यत आह—ससारमोक्षस्थितिबन्धहेतु. । ससारः अध्यात्ममधिभूत चाहममाभिमान, तस्मान्मोक्ष॰ स्वयप्रकाशमानानन्दात्माभिव्यक्ति, तत्र स्थिति. सस्काराविद्याया. सकार्याया दाहरूपे पुनरुत्थानाभावरूपा, बन्ध. ससारबन्ध. अहममाभिमानस्य दार्ढ्यं स्वयप्रकाशमानानन्दात्मज्ञानशून्यत्वे नाह सुखी दु.खीदमद्य मया लब्धमित्यादिप्रत्ययसतान इत्यर्थ. । ससारमोक्षस्थितिबन्धस्य हेतु॰ कारण ससार मोक्षस्थितिबन्धहेतु ।

ज्ञानन्द

[2] स तन्मयो ह्यमृत ईशसस्थो
ज्ञ सर्वगो भुवनस्यास्य गोप्ता ।
य ईशे अस्य जगतो नित्यमेव
नान्यो हेतुर्विद्यत ईशनाय ॥

एव चेत्प्रधानक्षेत्रज्ञयोर्भिन्नोऽयमात्मेत्यत आह — स प्रसिद्ध. ईश्वर तन्मय तत्प्रधान प्रधानक्षेत्रज्ञरूप इत्यर्थः। हि प्रसिद्धः अमृतः मरणधर्मरहित॰ ईशसस्थ ईशे आत्मस्वरूपे भूम्नि स्वे महिम्नि सस्था सम्यगवस्थान स्थितिर्यस्य स ईशसस्थः। अचेतनत्व वारयति— ज्ञः बोधैकस्वभाव । परिच्छेद वारयति — सर्वगः त्रिविधपरिच्छेदशून्य. । भुवनस्य लोकस्य कर्मफलरूपस्य अस्य विविधप्रत्ययगम्यस्य गोप्ता रक्षिता । य॰ प्रसिद्ध॰ ईशे ईष्टे । गोप्तृणामपि नियन्तृत्व केषाचिन्न दृष्ट, तथा अय मा भूदिति य ईश इत्यभिधानम् । तथाऽप्येकदेशस्येशितृत्वमिति मतिं वारयति—अस्य विविधप्रत्ययगम्यस्य जगत. सायुज्यस्य कार्यस्य नित्यमेव सदैव । ननु न एवकार सहामहे, स्वकार्ये प्रत्यन्यस्यापि हेतोरीशितृत्वादित्यत आह — नान्यः एतस्मादात्मनो व्यतिरिक्त. हेतु कारणभूतः विद्यते नास्ति ईशनाय नियमनाय, सर्वात्मकत्वादीश्वरस्य ।

ज्ञानन्द.

[3] यो ब्रह्माण विदधाति पूर्वं
यो वै वेदाश्च प्रहिणोति तस्मै ।

(१) श्वेउ ६।१६, रामानुज १।१।१ (पृ ११६, १२३), १।१।४ (पृ १६२), १।४।८, २।१।२२, ३।२।२६, श्रीकठ १।१।२ (पृ ११७), २।१।२२, ३।२।१५, ३।३।४०, श्रीकर १।१।१ (पृ २०), १।१।२ (पृ. ३१), १।१।३ (पृ ३९), १।१।४ (पृ ५३, ५४), १।१।६, ११, १३ (पृ ६३), १।१।१९, १।२।१९, १।४।३, १६, २२, २।१।४, १२, ३३, ३५, २।२।३८, २।३।२६, २।४।१८, ३।२।१, ७, १५, २६, ३।३।५१, ६२, ३।४।४९, ४।१।४, १८, विज्ञान १।१।५ (पृ १२५), १।३।४३, १।४।३, २।१।३० गुणी (वशी), बलदेव १।१।१, १।४।२६, २।१।१७, ३।२।५

(१) श्वेउ ६।१७

(२) श्वेउ ६।१८, ब्रह्मकर १।३।३०, १।४।१,

तं ह देवमात्मबुद्धिप्रकाशं
मुमुक्षुर्वै शरणमहं प्रपद्ये ॥

अस्येश्वरस्य ज्ञाने कारणत्वेन तत्प्रसादे तृतीयेऽध्याये उक्तेऽप्युपायः प्रसङ्गात्पुनः सक्षेपेणात्राभिधीयते—य प्रसिद्ध. ब्रह्माण हिरण्यगर्भं विदधाति विविधसामर्थ्ययुक्त दधाति उत्पादयतीत्यर्थः । * यो वै वेदाश्च प्रसिद्ध स्मर्यमाणः ऋग्वेदादीनपि प्रहिणोति प्रकर्षेण समर्पयति तस्मै ब्रह्मणे । त ह पूर्वोक्त प्रसिद्ध देव स्वयप्रकाश आत्मबुद्धिप्रकाश स्वबुद्धिसाक्षिण मुमुक्षुर्वै मोक्षार्थी प्रसिद्ध शरण रक्षितार अह मुमुक्षु प्रपद्ये शरण प्राप्तोऽस्मि । शनन्द

[1]निष्कल निष्क्रियं शान्त निरवद्य निरञ्जनम् ।
अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् ॥

( १ ) शरण्यस्य स्वरूपमाह—निष्कलम् । निर्गताः प्राणाद्या कला यस्मात्त निष्कलम् । ननु क्रियावत्त्वात्कलावत्त्व स्यादित्यत आह—निष्क्रिय क्रियाशून्यम् । ननु परिणामित्वादस्तु क्रियाऽपीत्यत आह—शान्त अपरिणामिनम् । नन्वविद्यादोषदूषितत्वेन परिणामी स्यादित्यत आह—निरवद्यम् । निर्गतं अवद्य दुष्टत्व अविद्यादिरूपो दोष' यस्मात्त निरवद्यम् । ननु सकारणानां दुष्टत्वमपि दृष्टमित्यत आह—निरञ्जनम् । निर्गत अञ्जन कारण यस्मात्स निरञ्जन', त निरञ्जनम् । अमृतस्य अविनाशिनो मोक्षस्य पर उत्कृष्ट सेतु विधारणरूप मोक्षमर्यादाकारणमित्यर्थः । तत्र दृष्टान्तः—दग्धेन्धनमिव भस्मीकृतमहाकाष्ठसचय यथा अनल वैश्वानरम् । शरण प्रपद्ये इति पूर्वेणान्वयः ।

शनन्द.

( २ ) अवद्य निन्द्यमुच्यते । अञ्जनमविद्या, सा च जीवानां, 'अविद्यायामन्तरे वर्तमाना.' इति श्रुते ।

भास्कर. १।४।२१

( ३ ) शक्तिसकोचतया सृष्टे प्राक् परमेश्वरस्य निर्गुणत्वात् 'निष्कल निष्क्रिय शान्तम्' इत्यादि-निर्गुणश्रुतीना तत्कालपरत्वम् । 'स ईक्षाचक्रे' इत्यादि-सगुणश्रुतीना सृष्ट्युन्मुखपरमेश्वरशक्तिविकासकालपरत्वम् । श्रीकर १।१।२ ( पृ. ३१ )

[2]यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवा. ।
तदा देवमविज्ञाय दु खस्यान्तो भविष्यति ॥

ननु ब्रह्मज्ञानार्थमय श्रम', तच्च दु खविघातार्थं, स चेदन्यत सिद्ध., किमनेनाकिंचित्करेणेत्यत आह—यदा यस्मिन्काले चर्मवत् यथा चर्म आकाश अमूर्तं नभ वेष्टयिष्यन्ति वेष्टन करिष्यन्ति मानवाः मनोर्जाताः, तदा तस्मिन्काले देव स्वयप्रकाश अविज्ञाय अह ब्रह्मास्मीति विशेषेण अज्ञात्वा दु खस्य आध्यात्मिकाधिभौतिकाधिदैविकभेदभिन्नप्रतिकूलवेदनीयस्य अन्तः विनाशः भविष्यति । स्पष्टम् ।

शनन्द.

श्वेताश्वतर उपनिषत्प्रवक्ता, उपनिषद
अधिकारी देवगुरुभक्त

[3]तप प्रभावाद्देवप्रसादाच्च
ब्रह्म ह श्वेताश्वतरोऽथ विद्वान् ।
अत्याश्रमिभ्य' परम पवित्रं
प्रोवाच सम्यगृषिसंघजुष्टम् ॥

---

* 'पूर्व' पदव्याख्यानमुच्छिन्नमिति भाति ।
भास्कर १।३।३०, रामानुज १।३।१२, २९, ४।३।८, श्रीकठ १।१।३ ( पृ १६० ), १।३।२९, श्रीकर १।१।३ ( पृ ३८ ), १।३।३०, १।४।१, २।१।१, ४, ४।३।८, ४।४।१२, १७ ह ( हि ), विज्ञान १।३।३०, १।४।१७, बलदेव १।३।३०

(१) श्वेउ ६।१९, ब्रशकर १।१।१२, १।४।२३, २।१।२६, ४।३।१४, भास्कर १।४।२१, २।१।२६, रामानुज १।१।१ ( पृ ६, १४, १९, ६० ), १।१।२१, १।४।२३, २७, ३।२।१७, ३०, निंबार्क ३।२।१७, श्रीकठ १।१।२ ( पृ १२० ),२।२।३८, ३।२।११, १५, १७, ३।३।४०, ४।४।१०, श्रीकर १।१।२ ( पृ २९, ३१ ), १।१।५ ( पृ ५३ ), १।२।९, १।४।२३, २।१।११, ३२, ३५, ३।२।११, १५, १७, ३०, ३।३।४०, ४।१।१८, ४।४।४, वल्लभ १।१।५, विज्ञान १।१।४ (पृ ९२), २।१।२१, २६, ३।२।३१, बलदेव २।१।२७

(१) श्वेउ ६।२०, श्रीकठ १।१।४ ( पृ १८९ ), १।१।१७ ( पृ २३५ ), ३।२।३५, ४।२।१६ देवम ( शिवम ), श्रीकर १।१।४ ( पृ ४७ ) श्रीकठवत्
(२) श्वेउ ६।२१, शनन्द ब्रह्म ह ( ब्रह्मवित् ); भास्कर ३।४।२६

( १ ) एतद्विज्ञान नाल्पभाग्याना सुलभमित्याह— तपःप्रभावात्, तपसः कृच्छ्रचान्द्रायणादे स्वधर्मानुष्ठानस्य वा प्रभाव सामर्थ्य, तस्मात्। देवप्रसादात् (च) देवस्य स्वयप्रकाशस्याऽऽनन्दात्मनः प्रसादात् अनुग्रहादपि। अथवा देवस्य द्योतनात्मकस्यान्तःकरणस्य प्रसादात् नैर्मल्यादपि। चकारो वेदानुवचनादीना समुच्चयार्थः। ब्रह्मवित्, ब्रह्म वेदशब्द साङ्ग सम्यग्वेत्तीति ब्रह्मवित् ईश्वरसम इत्यर्थ। तत्र नामकथनेनैवोपपत्तिमाह — श्वेताश्वतर·। श्वेता. अवदाता. सदाऽन्तर्मुखत्वेन विपरीतप्रवृत्तिरहिताः अश्वा इन्द्रियाणि यस्य स श्वेताश्व, अतिशयेन श्वेताश्व. श्वेताश्वतरः। अष्टाङ्गयोगनिरत इत्यर्थ। ननु समग्रविद्यावित्त्व अष्टाङ्गयोगनिरतत्व वा अस्त्यनेकेषा ब्रह्मज्ञानशून्य श्रमकर, तथा चान्येभ्यो नास्य कश्चिद्विशेष इत्यत आह — अथ साधनचतुष्टयसपत्त्यनन्तरम्। विद्वान् स्वयप्रकाशमानानन्दात्मसाक्षात्कारवान्। विद्वानित्यनन्तरमथशब्द उक्तार्थोऽवतारणीय। यथापाठे स्वेनैवार्थस्याग्रहे शब्दजालाष्टाङ्गयोगनिरतेभ्यो वैलक्षण्यार्थोऽप्यर्थो वा व्याख्येय.। अत्याश्रमिभ्य., अति तुरीयस्य तुरीयो भेदः पारमहस्यलक्षण सर्वात्कृष्ट· आश्रम प्रसिद्धो येषामस्ति ते अत्याश्रमिण., तेभ्य. साधनचतुष्टयसपत्त्यनन्तर परम उत्कृष्ट, उत्कृष्टपुरुषार्थप्राप्त्युपायत्वात्। पवित्र शुद्धिकारण अशेषपापबीजाविद्यादाहकत्वात्। विशेषणसामर्थ्याद्विशेष्यमनुक्तमपि ब्रह्मज्ञान लभ्यते। प्रोवाच प्रकर्षेण दयार्द्रचित्तत्वादिना ससारसागरपरप्राप्त्युपायमुक्तवान्। सम्यक् स समीचीन स्वयप्रकाशमानानन्दात्मानमञ्चति गच्छतीति सम्यक्। ऋषिसघजुष्ट, ऋषयो नारायणनारदव्यासादय., तेषा सघा· समूहा·, तै. प्रीतान्त.करणैः सेवित ऋषिसघजुष्टम्। शनन्द.

( २ ) यदप्युच्यते — श्वेताश्वतराणा मन्त्र. 'तप. प्रभावाद्देवप्रसादाच . . सम्यगृषिसङ्घजुष्टम्' इति त्यक्तसर्वकर्मणा केवलादेव ज्ञानादपवर्ग दर्शयतीति, तदप्यसत्, मन्त्रार्थापरिज्ञानात्। यदि तावदाश्रमानतिक्रम्य ये वर्तन्ते, ते अत्याश्रमिण एव प्रसज्यन्ते, तदा न तेषा योग्यत्व, प्रायश्चित्तभाक्त्वात्। अथोत्पन्नज्ञाना, तदा प्रोवाचेति विरुद्धम्। तस्मात् 'अतिसुपूजितार्थात्' इति निरुक्तकारवचनात् पूजिताश्रमिणो वृत्तस्वाध्यायसपन्ना निर्दिश्यन्ते, तेभ्य. प्रोवाचेति मन्त्रार्थ। तथा च— 'वेदान्ते परम गुह्य पुराकल्पप्रचोदितम्। नाप्रशान्ताय दातव्य नापुत्रशिष्याय वा पुन.॥' (इति) पुत्रशिष्यातिरिक्तेभ्यो न दातव्यमिति नियमयन् एतमेवार्थं दर्शयति। भास्कर ३।४।२६

* [1]वेदान्ते परम गुह्य पुराकल्पे प्रचोदितम्।
नाप्रशान्ताय दातव्य नापुत्रायाशिष्याय वा
पुन ॥

इमानि विशेषणानि यथाकथचिन्मन्त्रसाध्यादिफलानामपि स्यु·, ततोऽप्यत्यन्तासाधारण विशेषणमाह — वेदान्ते, वेदाना ऋगादीना अनेकशाखाभेदभिन्नाना अन्ता. अवसानानि प्राप्याणीत्यर्थ.। ते वेदान्ता, तज्जातौ वेदान्ते। तत्रापि सन्ति सहस्रमुपासनानि वितानानि चेत्याह — परम उत्कृष्टम्। उत्कृष्टत्वमपि दहरोपासनादावस्त्येव, तद्व्यावृत्त्यर्थमाह — गुह्य गोप्य दहरोपासनादिसाध्यम्। कथमदोऽवसीयते इत्यत आह— पुराकल्पप्रचोदितम्। पुराकल्प. अर्थवाद. गो (स चो) पादेयत्वेन बोधितप्रवेशनियमनलक्षण पञ्चविध., तेन प्रचोदित प्रकर्षेणोपादेयत्वेन बोधितम्। अर्थवाद. स्तावकः यस्तूयते तद्विधीयते इत्यर्थ। इदानीं श्रुति. सानुक्रोश प्राप्तब्रह्मज्ञानानुररीकृत्याऽऽह — नाप्रशान्ताय। प्रकर्षेण मन पूर्वा शान्तिर्यस्य स प्रशान्त, तद्व्यतिरिक्त अप्रशान्त, तस्मै दातव्य यच्छ्वेताश्वतरोऽत्याश्रमिभ्य उक्तवान् श्रुतिसारसर्वस्व पुरुषार्थनिदानभूत, तच्छुन इव पायस न देयम्। एव चेत्प्रशान्तायानुपसन्नायापि देयमित्यर्थत. प्राप्त, तद्वारयति — नापुत्रायाशिष्याय वै पुन.। पुत्रो ब्राह्मादिविवाहजायां पत्न्यां जात औरसो लोकयस्तनय.। दृष्टान्तोऽय, यथाऽस्मिन्नुपसन्नेऽनुराग., तथा अन्यस्मिन्नपि चेज्जायते अधिकारिणि, स त्वनुशासनयोग्य.। न पुत्रः अपुत्रः, न शिष्यः अशिष्य.। अपुत्र. अशिष्यः,

* पूर्वमन्त्रगत भास्करभाष्य द्रष्टव्यम्।

(१) श्वेउ ६।२२, शनन्द कल्पे प्र (कल्पप्र) वा (वै), भास्कर ३।४।२६ कल्पे प्र (कल्पप्र) त्रायाशि (त्रशि), बलदेव ३।४।५०.

तस्मै अपुत्रायाशिष्याय वै प्रसिद्धाय गुरुशिष्याध्यायादौ। पुन.शब्दोऽप्यर्थ एवार्थो वा। अप्रशान्ताय न दातव्य, अपुत्रायाशिष्याय प्रसिद्धायापि न दातव्यमित्यनुषङ्गः। अधिकारिणे पुत्रवत् प्रियाय देय, नेतरस्मै इत्यर्थः।

शनन्द.

**यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।**
**तस्यैते कथिता ह्यर्था प्रकाशन्ते महात्मन**
**प्रकाशन्ते महात्मन इति ॥**

ननु उपसन्नाय देयमित्यर्थादुक्त, कीदृश्युपसत्तिः किंप्रयोजना चेत्यत आह—यस्य प्रसिद्धस्याधिकारिण. देवे हरौ हरे अन्यस्मिन्वा आरोपितचैतन्ये शालग्रामादौ परा निरतिशया अयमेव मे सर्वे पुरुषार्थजात दास्यति, अस्मिन्सतुष्टे अह कृतकृत्य. स्या, विपर्यये विपर्यय इत्यादिरूपा भक्ति' आस्तिक्यबुद्ध्यादियुक्ता भजनक्रिया। कायेन्द्रियमनसा तस्मिन्समर्पणमित्यर्थ.। सेय यथा दृष्टान्ते देवे उक्ते, तथा दार्ष्टान्तिके गुरौ ब्रह्मज्ञानोपदेष्टरि। गुरो रर्थस्य साधको गुरुः, तस्मिन्गुरौ। देवे रुष्टे गुरुस्त्राता, गुरौ रुष्टे न देवोऽपि यतः, ततो देवस्यापि वरमवज्ञा करणीया, न गुरोरित्यर्थः। तस्य गुरुभक्तस्य एते कथिता हि उक्ता प्रसिद्धा उपायोपेयभूताः प्रत्यक्षा इव अर्थाः विषयप्रयोजनरूपाः प्रकाशन्ते इदमनेनेत्थमिति प्रतीयन्ते महात्मन. महान् गर्वादिरहितः आत्मा अन्तःकरण यस्य स महात्मा, तस्य। इति उपनिषत्समाप्तौ।

शनन्द.

योऽस्ति स्फुरन्नविरत हृदयाब्जमध्ये
हसो नृकान्तारमदो विगाह्य।
पिबन्नमु भेदमनीशमीशः
प्रीत. स भूयादमुना कृतेन ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यानन्दात्मपूज्य-
पादशिष्यस्य शकरभगवत. कृतौ श्वेताश्व
तरोपनिषद्दीपिका समाप्ता ॥

**इति षष्ठोऽध्याय ॥**

(१) श्वेउ ६।२३, शनन्द त्मन . त्मन इति (त्मन इति), **रामानुज** ३।४।४६, **ब्रमध्व** १।१।१, **श्रीकर** १।१।१(पृ ९), ३।४।४७, **विज्ञान** १।१।१ (पृ २८), **बलदेव** ३।३।६४, ३।४।५०

## श्वेताश्वतरोपनिषत्समाप्ता।

# ※ नारायणोपनिषत्

महतो महीयान् ज्योति प्रविष्ट प्रजापति सर्वव्यापी आदित्यप्रकाशक परमाक्षर जगत जीवानां च स्रष्टा चराचरप्रविष्ट ऋतसत्यरूप इष्टापूर्तधर्ता अग्न्यादित्यवाय्वादिदेवरूप विद्युत्पुरुष कालकर यशोनामा अदृश्य विभु अमृतत्वप्रदज्ञानविषय हिरण्य-गर्भः परम ब्रह्म

[1]अम्भस्य पारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान् ।
शुक्रेण ज्योतीꣳषि समनुप्रविष्टः प्रजापति-श्चरति गर्भे अन्त ॥

*'इय नारायणीयाख्या याज्ञिक्युपनिषदपि खिलकाण्ड रूपा, तल्लक्षणोपेतत्वात् । कर्मोपासनाब्रह्मकाण्डेषु त्रिष्वपि यद्यद्वक्तव्यमवशिष्ट तस्य सर्वस्याभिधानेन प्रकीर्णरूपत्व खिलत्वम् । . तत्र कर्मणा बाहुल्याद्याज्ञिकीत्युच्यते । तदीयपाठसप्रदाय उपक्रमे ब्रह्मतत्त्वाभिधानादुपसहारे च ब्रह्मज्ञानसाधनाना सत्यादीना सन्यासान्तानामभिधानादुप-निषदित्युच्यते । तदीयपाठसप्रदायस्तु देशविशेषेषु बहुविध उपलभ्यते । तत्र यद्यपि शाखाभेद कारण तथापि तैत्ति-रीयशाखाध्यापकैस्तत्तद्देशनिवासिभि शिष्टैरादृतत्वात्सर्वोऽपि पाठ उपादेय एव । तत्र द्रविडाना चतु षष्ट्यनुवाकपाठ । आन्ध्राणामशीत्यनुवाकपाठ । कर्णाटेषु केषाञ्चिच्चतु सप्तति-पाठ । अपरेषा नवाशीतिपाठ ।' इति सायणाचार्यै तैत्तिरीयारण्यकभाष्ये नारायणीयोपनिषद्व्याख्यानप्रस्तावे अभिहितम् । अस्माभि अशीत्यनुवाकपाठ अत्रोद्धृत समधिकमन्त्रोद्धारणोद्देशासिद्धे । नवाशीतिपाठस्तु नोप-लब्धोऽस्माभि, अन्यथा स एव अत्रोद्धृतोऽभविष्यत् ।

(१) **नाउ** १।१, **रामानुज** २।३।१८ प्रसूती (प्रसूति.) व्यचसर्ज (विससर्ज), ३।२।३०, **ब्रमध्व** १।१।१ व्यचसर्ज (व्यससर्ज), **श्रीकठ** १।१।१७ ब्रमध्ववत्, **श्रीकर** १।१।१७, २७ (पृ ८६), २।३।१६ ब्रमध्ववत्, **वल्लभ** ३।३।३, २४, ३३, ५४, ३।४।१, **बलदेव** २।३।१६ ब्रमध्ववत्

यस्मिन्निदꣳ स च वि चैति सर्वं यस्मिन्देवा अधि विश्वे निषेदु ।
तदेव भूतं तदु भव्यमा इद तदक्षरे परमे व्योमन् ॥
येनाऽऽवृत ख च दिव मही च येनाऽऽदित्य-स्तपति तेजसा भ्राजसा च ।
यमन्त समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजा ॥
यत प्रसूता जगत प्रसूती तोयेन जीवान् व्यचसर्ज भूम्याम् ।
यदोषधीभि पुरुषान्पशूꣳश्च विवेश भूतानि चराचराणि ॥

'नेतरोऽनुपपत्ते.' — ब्रह्मण परमशिवस्य सम न्वयसिद्ध जगत्कारणत्वादिक लक्षण प्रधानजीवयोर्न व्यभिचरतीति स्थापितम् । अत पर कथ जीवसमष्टि-रूपस्य हिरण्यगर्भस्य जगत्कारणत्वादिक श्रूयत इत्यत आह—नेतर इति । 'यत प्रसूता जगतः प्रसूती तोयेन जीवान्व्यससर्ज भूम्याम् । यदोषधीभि. पुरुषान्पशूꣳश्च विवेश भूतानि चराचराणि ।।' इति महोपनिषदि श्रूयतेऽस्य विषय । अत्र सकलजगत्प्रसूत्यादिहेतुत्वेन श्रूयमाण. पुरुष परमेश्वरो वाऽन्यो वेति सशय । हिरण्यगर्भ इति पूर्व पक्ष. । कथम् । तल्लिङ्गात् । 'एकार्णवे तु त्रैलोक्ये ब्रह्मा नारायणात्मक' । भोगिशय्यायुत. शेते त्रैलोक्यग्रासबृंहित ॥' इति पुराणवचनात् ब्रह्मणः समुद्रशायित्वमवगम्यते । तदिह श्रूयते तल्लिङ्ग 'यमन्त. समुद्रे कवयो वयन्ति' इति । 'प्रजापतिश्चरति गर्भे अन्त' ' इति स एवोपक्रमे सर्वानुप्रविष्टतयाऽवगम्यते । उपसहारे च 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिव च पृथिवीं च' इत्यादिना तस्यैव कारणत्वमव-गम्यते । तस्मादुपक्रमोपसहारसिद्धस्य हिरण्यगर्भस्याबा न्तरसिद्धधर्मोपपत्ति. । किं च तत्प्रतिपादनप्रदेशान्तरोप

सहारश्च कृत । 'अद्भ्य. सभूतो हिरण्यगर्भं इत्यष्टौ' इति । 'अद्भ्य सभूत' इत्यत्र प्रजापतिरेव हि प्रतिपाद्य । ' प्रजापतिश्चरति गर्भे अन्त ' इति दर्शनात् । 'हिरण्यगर्भं समवर्तताग्रे' इत्यत्रापि 'प्रजापतिर्वै हिरण्यगर्भ. ' इति श्रवणात् । ततो हिरण्यगर्भ एव जगत्प्रसूतिहेतुत्वादिनाऽत्र प्रतिपाद्यते इति प्राप्ते ब्रूम — परमेश्वरादितरो भिन्नो हिरण्यगर्भोऽत्र न प्रतिपाद्य. । जगत्प्रसूतिहेतुत्वादीना परमेश्वरधर्माणा तस्मिन्ननुपपत्ते' । ' यत प्रसूता जगत प्रसूती' इत्यारभ्य जगत्प्रसूतिहेतोस्तस्य ' अतः पर नान्यदणीयस हि परात्पर यन्महतो महान्तम् । यदेकमव्यक्तमनन्तरूप विश्व पुराण तमसः परस्तात् ॥ ' इत्यादिना सर्वोत्कृष्टत्व तमस. प्रकृति मण्डलात्परत्व चावगम्यते । तदण्डान्तर्वर्तिनो हिरण्यगर्भस्य न सभवति । किंच ' य एन विदुरमृतास्ते भवन्ति ' इत्यस्य ज्ञानादमृतत्व मुक्तिरभिधीयते । तन्न हिरण्यगर्भे सभवति । परमेश्वरस्य हि मुक्तिहेतुत्वमसाधारण लिङ्गम् । ' यदा चर्मवदाकाश वेष्टयिष्यन्ति मानवाः । तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥' इति श्रवणात् । यदुक्तमुपक्रमोपसहारसिद्ध इति तदप्रयोजकम् । अनुपपत्त्या प्रजापतिधातृशब्दौ हिरण्यगर्भं विहाय प्रजाना पशूना पतिं जगद्धारक परमेश्वरमेव प्रतिपादयत' । अद्भ्य. सभूतो हिरण्यगर्भं इत्युभयत्रापि परमेश्वर एव प्रतिपाद्यः । ' य ईशे अस्य द्विपदश्चतुष्पद ' ' आदित्यवर्णं तमस. परस्तात्' इति विश्वेश्वरत्वविश्वातीतत्वलिङ्गात् । ततो जगत्कारणत्वादिना प्रजापतिशब्दवाच्य परमेश्वरो न हिरण्यगर्भ' ।

१।१।१७

' भेदव्यपदेशाच्च ' — परमेश्वरेण हिरण्यगर्भस्याभेदाज्जगत्कारणत्वमस्त्वित्याशङ्क्याह — भेदेति । अस्यां महोपनिषदि परमेश्वरहिरण्यगर्भयो. भेदो व्यपदिश्यते कारणत्वेन कार्यत्वेन च ' यो देवाना प्रथम पुरस्ताद्विश्वाधिको रुद्रो महर्षि. । हिरण्यगर्भं पश्यत जायमानम् ' (नाउ १२।३) इति । अतो हिरण्यगर्भादे सर्वप्रपञ्चस्य कारणत्वमीश्वरस्येति सिद्धम् । १।१।१८

' कामाच्च नानुमानापेक्षा ' — पुनराशङ्क्याह— ' प्रजापतिरकामयत प्रजा. सृजेयेति' ( तैस ३।१।१ ) इति सर्वत्र श्रुतिषु सकल्पो हिरण्यगर्भस्य जगत्सृष्टौ श्रूयते । तथाऽपि तस्य जगत्कारणत्वे अनुमानापेक्षा युक्त्यपेक्षा नास्ति, तस्य कामस्यावान्तरसृष्टिविषयत्वात् । परमेश्वरस्यैव हिरण्यगर्भात्मना अवान्तरसृष्टिश्चेति वक्ष्यति—' सज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्' ( ब्रसू २।४।२० ) इति ।

१।१।१९

' अस्मिन्नस्य च तद्योग शास्ति ' — ' अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' ( छाउ ६।३।२ ) इति हिरण्यगर्भरूपेणात्मना प्रपञ्चानुप्रविष्टस्य परमेश्वरस्य नामरूपकर्तृत्वश्रवणात् अनयोरभेद एवाभ्युपेय इत्यत आह– अस्मिन् उपनिषत्तन्त्रे एव अस्य हिरण्यगर्भस्य तद्योग तस्य परमेश्वरस्य शेषत्वसबन्ध शास्ति मन्त्रभाग — ' ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिः ' ( नाउ. २१ ) इति । अत' परमेश्वर एव जगत्कारण, तच्छेषभूतो हिरण्यगर्भ इति सिद्धम् ।

श्रीकठ १।१।२०

अत परं नान्यदणीयस हि परात्परं यन्म
हतो महान्तम् ।
यदेकमव्यक्तमनन्तरूप विश्व पुराण तमसः
परस्तात् ॥ १ ॥
तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं
कवीनाम् ।
इष्टापूर्तं बहुधा जात जायमानं विश्व बिभर्ति
भुवनस्य नाभि ॥
तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमा ।
तदेव शुक्रममृतं तद्ब्रह्म तदाप स प्रजापति. ॥
सर्वे निमेषा जज्ञिरे विद्युत पुरुषादधि ।
कला मुहूर्ता काष्ठाश्चाहोरात्राश्च सर्वश' ॥
अर्धमासा मासा ऋतव सवत्सरश्च कल्पन्ताम् ।
स आप प्रदुघे उभे इमे अन्तरिक्षमथो सुव' ॥

(१) नाउ १।२, रामानुज १।१।१ ( पृ ११० ), १।१।२१, २।२।३, ३।२।३५, ४०, ब्रमध्व १।१।१, १२, १।२।१, श्रीकर १।१।२ ( पृ ३५ ), २।२।३, ३।२।४०

नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् ।
न तस्येशे कश्चन तस्य नाम महद्यश ॥ २ ॥
न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति ॥
अद्भ्य सम्भूतो + हिरण्यगर्भ * इति अष्टौ ॥
एष हि देव प्रदिशोऽनु सर्वा' पूर्वो हि जात. स उ गर्भे अन्त ।
स विजायमान. स जनिष्यमाण' प्रत्यङ् मुखास्तिष्ठति विश्वतोमुख. ॥
विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् ।
स बाहुभ्या नमति स पतत्रैर्द्यावापृथिवी जनयन्देव एक ॥

वेना मन्त्र [illegible] विभो द्रष्टा तदभाव
[illegible] प्रथमज
[illegible] सर्वलोकव्यापक आत्मनै
वात्मव्यापक'

वेनस्तत्पश्यन्विश्वा भुवनानि विद्वान्यत्र विश्व भवत्येकनीळम् ।
यस्मिन्निदं सं च वि चैकं स ओतः प्रोतश्च विभु प्रजासु ॥
प्र तद्वोचे अमृतं नु विद्वान्गन्धर्वो नाम निहित गुहासु । ३ ॥
त्रीणि पदा निहिता गुहासु यस्तद्वेद सवितु' पिता सत् ॥

+ [illegible] प्रथम श्रा २५३–५४ पृष्ठयोर्द्रष्टव्या ।
* [illegible] मन्त्रा १९८–९५ पृष्ठयोर्द्रष्टव्या ।

(१) नाउ १।३, रामानुज १।१।१ ( पृ ११० ), ३।२।३५, ब्रमसूत्र २।१।१९, श्रीकठ १।१।१७ १।४।२३ पृथिवी ( भूमी ), २।१।२४, ३।२।२६, ३५ ४।२।१४ पृथिवी ( भूमी ), ४।४।१५, १७, श्रीकर. १।१।२ ( पृ ३१ ), १।४।२३, २।१।२४, ३।२।३५, ३।३।१९, ४।४।१७ एष हि देव ( एषोऽस्मि देव ), वल्लभ ३।४।१७

(२) नाउ १।८, श्रीकठ. ८।८।१५, २२, श्रीकर ३।३।८५, ८।८।१६

स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा ।
यत्र देवा अमृतमानशानास्तृतीये धामान्यभ्यैरयन्त ॥
परि द्यावापृथिवी यन्ति सद्य परि लोकान्परि दिशः परि सुव ।
ऋतस्य तन्तुं विततं विचृत्य तदपश्यत्तदभवत्प्रजासु ॥
परीत्य लोकान्परीत्य भूतानि परीत्य सर्वा प्रदिशो दिशश्च ।
प्रजापति प्रथमजा ऋतस्याऽऽत्मनात्मानमभिसबभूव ॥

ब्रह्मज्ञानजपस्नानादिकर्माङ्गमन्त्रा — मेधाजीवनादिप्रार्थना, सदसस्पति अग्निश्च देवता

सदसस्पतिमद्भुत प्रियमिन्द्रस्य काम्यम् ।
सनिं मेधामयासिषम् ॥
उद्दीप्यस्व जातवेदोऽपघ्नन्निर्ऋतिं मम । ४ ॥
पशूꣳश्च मह्यमावह जीवन च दिशो दिश ॥
मा नो हिꣳसीज्जातवेदो गामश्वं पुरुषं जगत् ।
अबिभ्रदग्न आगहि श्रिया मा परिपातय ॥

द्वादश गायत्रीमन्त्रा -- पुरुषरूपाः रुद्रदन्तिनन्दिषण्मुखगरुडा , वेदनारायणवज्रनखभास्करवैश्वानरकात्यायनरूपा क्रमेण ब्रह्मविष्णुनारसिंहादित्याग्निदुर्गा

पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि ।
तन्नो रुद्र प्रचोदयात् ॥
तत्पुरुषाय विद्महे महादेवाय धीमहि ।
तन्नो रुद्र प्रचोदयात् ॥
तत्पुरुषाय विद्महे वक्रतुण्डाय धीमही ।
तन्नो दन्ति. प्रचोदयात् ॥
तत्पुरुषाय विद्महे चक्रतुण्डाय धीमही । ५ ॥
तन्नो नन्दि प्रचोदयात् ॥

(१) नाउ १।५–१०

तत्पुरुषाय विद्महे महासेनाय धीमहि ।
तन्नः षण्मुख प्रचोदयात् ॥
तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि ।
तन्नो गरुड प्रचोदयात् ॥
वेदात्मनाय विद्महे हिरण्यगर्भाय धीमहि ।
तन्नो ब्रह्म प्रचोदयात् ॥
नारायणाय विद्महे वासुदेवाय धीमहि ।
तन्नो विष्णु प्रचोदयात् ॥
वज्रनखाय विद्महे तीक्ष्णदꣳष्ट्राय धीमहि । ६ ॥
तन्नो नारसिꣳह प्रचोदयात् ॥
भास्कराय विद्महे महद्युतिकराय धीमहि ।
तन्नो आदित्य प्रचोदयात् ॥
वैश्वानराय विद्महे लालीलाय धीमहि ।
तन्नो अग्नि प्रचोदयात् ॥
कात्यायनाय विद्महे कन्यकुमारि धीमहि ।
तन्नो दुर्गि प्रचोदयात् ॥

स्नानविधिमन्त्रा

( प्रथमानुवाकसमाप्तिपर्यन्तम् )

दूर्वाभिमन्त्रण, मृत्तिकाभिमन्त्रण, इन्द्रादीना अभयस्वस्तिपोषाद्यर्थं प्रार्थना, सदसद्योनिप्रकाशकब्रह्मस्मरण, मृत्तिकाशुद्धिहेतु पृथिवीप्रार्थनम्

सहस्रपरमा देवी शतमूला शताङ्कुरा ।
सर्वꣳ हरतु मे पापं दूर्वा दु स्वप्ननाशिनी ॥
काण्डात्काण्डात्प्ररोहन्ती परुष परुषः परि । ७ ॥
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥
या शतेन प्रतनोषि सहस्रेण विरोहसि ।
तस्यास्ते देवीष्टके विधेम हविषा वयम् ॥
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुधरा ।
शिरसा धारयिष्यामि रक्षस्व मा पदे पदे ॥
भूमिर्धेनुर्धरणी लोकधारिणी ।
उद्धृताऽसि वराहेण कृष्णेन शतबाहुना ॥
मृत्तिके हन मे पाप यन्मया दुष्कृतं कृतम् ।
मृत्तिके ब्रह्मदत्ताऽसि काश्यपेनाभिमन्त्रिता ।
मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् ॥ ८ ॥
मृत्तिके प्रतिष्ठिते सर्वं तन्मे निर्णुद मृत्तिके ।
तया हतेन पापेन गच्छामि परमा गतिम् ॥
यत इन्द्र भयामहे ततो नो अभयं कृधि ।
मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि ॥
स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी ।
वृषेन्द्र पुर एतु न स्वस्तिदा अभयकरः ॥
स्वस्ति न इन्द्रो वृद्धश्रवा स्वस्ति नः पूषा विश्ववेदा ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमि स्वस्ति नो बृहस्पतिर्दधातु ॥
आपान्तमन्युस्तृपलप्रभर्माधुनि शिमीवाञ्छरुमाꣳ ऋजीषी ।
सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभु ॥ ९ ॥
ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमत सुरुचो वेन आव ।
स बुध्निया उपमा अस्य विष्ठा सतश्च योनिमसतश्च विव ॥
स्योना पृथिवि भवा नृक्षरा निवेशनी ।
यच्छा न शर्म सप्रथा ॥
गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीꣳ सर्वभूताना तामिहोपह्वये श्रियम् ॥

मृत्तिकोपलेपनानन्तर जलप्रवेशनमन्त्रा —विष्णुमुखादिदेवस्मरण, इन्द्रादिप्रार्थना

श्रीर्मे भजतु । अलक्ष्मीर्मे नश्यतु । विष्णुमुखा वै देवाश्छन्दोभिरिमाँल्लोकाननपजय्यमभ्यजयन् ।
महाꣳ इन्द्रो वज्रबाहु षोडशी शर्म यच्छतु ॥ १० ॥
[1]स्वस्ति नो मघवा करोतु हन्तु पाप्मान योऽस्मान्द्वेष्टि ॥

(१) नाउ १।११, श्रीकर १।२।१ ( पृ ९६ ), १।२।२ ( पृ ९८ )

सोमान२ स्वरण कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजम् । शरीरं यज्ञशमल कुसीद तस्मिन्त्सीदतु योऽस्मान्द्वेष्टि ॥

जानुदघ्नजले प्रविश्य पठनीया मन्त्रा —पवित्रचरण, इन्द्रस्य अभयार्थं प्रार्थना

चरण पवित्र वितत पुराण येन पूतस्तरति दुष्कृतानि ।
तेन पवित्रेण शुद्धेन पूता अति पाप्मानमरातिं तरेम ॥
सजोषा इन्द्र सगणो मरुद्भि सोम पिब वृत्र हञ्छूर विद्वान् ।
जहि शत्रू२ रप मृधो नुदस्वाथाभय कृणुहि विश्वतो नः ॥

नाभिदघ्नजले स्थित्वा जप्या मन्त्रा — आप सुमित्रा 'ज्ञानप्राप्तये कर्मकर्तृपोषका शिवतमरसा', वरुणादि-प्रार्थना पापक्षयार्थं, जलस्थदेवतानमस्कार, सदोषजलापनयनम्

सुमित्रा न आप ओषधय सन्तु दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्म ॥
आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । ११ ॥
[१]महे रणाय चक्षसे ॥
यो वः शिवतमो रसस्तस्य भाजयतेह न ।
उशतीरिव मातर ॥
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः ॥
हिरण्यशृङ्ग वरुणं प्रपद्ये तीर्थं मे देहि याचितः ।
यन्मया भुक्तमसाधूना पापेभ्यश्च प्रतिग्रह' ॥
यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम् ।
तन्न इन्द्रो वरुणो बृहस्पति सविता च पुनन्तु पुनः पुनः ॥
नमोऽग्नयेऽप्सुमते नम इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽद्भ्यः ॥ १२ ॥

(१) नाउ १।१२-१३

यदपा क्रूरं यदमेध्यं यदशान्त तदपगच्छतात् ॥

निमज्जनमन्त्रा — वरुणराजप्रार्थना पापनाशब्रह्म-लोकप्राप्त्याद्यर्थं गङ्गादितीर्थानामावाहनम्

अत्याशनादतीपानाद्यच्च उग्रात्प्रतिग्रहात् ।
तन्नो वरुणो राजा पाणिना ह्यवमर्शतु ॥
सोऽहमपापो विरजो निर्मुक्तो मुक्तकिल्बिषः ।
नाकस्य पृष्ठमारुह्य गच्छेद्ब्रह्म सलोकताम् ॥
यश्चाप्सु वरुण. स पुनात्वघमर्षण ॥
इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोम२ सचता परुष्णिया ।
असिक्निया मरुद्वृधे वितस्तयाऽऽर्जीकीये शृणुह्या सुषोमया ॥

जले निमग्नस्य प्राणायामार्थं अघमर्षणमन्त्रा — तपस सृष्टि ऋतसत्यादिक्रमेण

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत ।
ततो रात्रिरजायत तत समुद्रो अर्णवः । १३ ॥
[१]समुद्रादर्णवादधि संवत्सरो अजायत ।
अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥
सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।
दिव च पृथिवीं चान्तरिक्षमथो सुव ॥

अघमर्षणानन्तर अवगाहनार्था मन्त्रा — वरुणवसूना जलशुद्धिस्वर्गप्राप्त्याद्यर्थं प्रार्थना

यत्पृथिव्या२ रज स्वमान्तरिक्षे विरोदसी ।
इमा२स्तदापो वरुण पुनात्वघमर्षण ॥
पुनन्तु वसव पुनातु वरुण पुनात्वघमर्षणः ।
एष भूतस्य मध्ये भुवनस्य गोप्ता ॥
एष पुण्यकृता लोकानेष मृत्योर्हिरण्मयम् ।
द्यावापृथिव्योर्हिरण्मय२ स२श्रित२ सुवः ॥ १४ ॥
[२]स न सुव स२शिशाधि ॥

(१) नाउ १।१४, भास्कर १।३।३०, २।१।३६, रामानुज १।४।१०, २७, २।१।३५, निंबार्क १।३।३०, २।१।३४, ब्रमध्व १।३।२८, श्रीकठ १।१।१७, १।३।२९, श्रीकर १।१।१७, १।३।३०, २।१।७, ३५, २।४।१६, ४।४।१८, वल्लभ १।३।३०, विज्ञान २।२।२९

(२) नाउ १।१५.

स्नातवत आचमनमन्त्रा — कर्मकर्तु ज्योति राश्मता ब्रह्मरूपता च

आर्द्रं ज्वलति ज्योतिरहमस्मि । ज्योतिर्ज्वलति ब्रह्माहमस्मि । योऽहमस्मि ब्रह्माहमस्मि । अहमस्मि ब्रह्माहमस्मि । अहमेवाहं मा जुहोमि स्वाहा ॥

आचमनोत्तरस्नानमन्त्रौ—स्तैन्यादिमहापाप-मुक्तिप्रार्थना

अकार्यकार्यवकीर्णी स्तेनो भ्रूणहा गुरुतल्पग ।
वरुणोऽपामघमर्षणस्तस्मात्पापात्प्रमुच्यते ॥
रजोभूमिस्त्व मा॰ रोदयस्व प्रवदन्ति धीराः ॥

स्नानादूर्ध्वं जप्यो मन्त्र — समुद्रो भुवनराजा

आक्रान्त्समुद्र प्रथमे विधर्मञ्जनयन्प्रजा भुवनस्य राजा ।
वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे सुवान इन्दु ॥ १५ ॥ ॥ १ ॥

अनिष्टपरिहारार्थं जप्या मन्त्रा — दुर्गदुरिततारकोऽग्नि, शरण्याऽग्निवर्णा दुर्गा देवी, आराध्या इन्द्रविष्णवादय

जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।
स न पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरिताऽत्यग्नि ॥
तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्म-फलेषु जुष्टाम् ।
दुर्गां देवी॰ शरणमह प्रपद्ये सुतरसि तरसे नम ॥
अग्ने त्व पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा ।
पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शयो' ॥
विश्वानि नो दुर्गहा जातवेद सिन्धु न नावा दुरिताऽतिपर्षि ।
अग्ने अत्रिवन्मनसा गृणानोऽस्माकं बोध्यविता तनूनाम् ॥
पृतनाजित॰ सहमानमुग्रमग्नि॰ हुवेम परमात्स-धस्थात् ।
स न' पर्षदति दुर्गाणि विश्वा क्षामद्देवो अति-दुरिताऽत्यग्नि ॥ १ ॥
प्रत्नोषि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि ।
स्वा चाग्ने तनुव पिप्रयस्वास्मभ्य च सौभग-मायजस्व ॥
गोभिर्जुष्टमयुजो निषिक्त तवेन्द्र विष्णोरनु-संचरेम ।
नाकस्य पृष्ठमभि सवसानो वैष्णवीं लोक इह मादयन्ताम् ॥ २ ॥

अन्नहोममन्त्रा — भूरादिव्याहृत्यात्मक अन्न, अग्नि-पृथिव्यादिदेवताभ्य स्वाहाकरण नमस्करण च पितृभ्य स्वधाकरण च

भूरन्नमग्नये पृथिव्यै स्वाहा । भुवोऽन्न वायवेऽन्तरिक्षाय स्वाहा । सुवरन्नमादित्याय दिवे स्वाहा । भूर्भुव सुवरन्न चन्द्रमसे दिग्भ्य स्वाहा । नमो देवेभ्य । स्वधा पितृभ्य । भूर्भुवः सुवरन्न-मोम् ॥ ३ ॥

पापक्षयार्थहोममन्त्राः — अग्निपृथिव्यादिदेवताभ्य स्वाहाकरण नमस्करण च पितृभ्य स्वधाकरण च

भूरग्नये पृथिव्यै स्वाहा । भुवो वायवेऽन्तरिक्षाय स्वाहा । सुवरादित्याय दिवे स्वाहा । भूर्भुव सुव-श्चन्द्रमसे दिग्भ्यः स्वाहा । नमो देवेभ्य' । स्वधा पितृभ्य. । भूर्भुवः सुवरग्न ओम् ॥ ४ ॥

महत्कामस्य होममन्त्रा — व्याहृतिचतुष्टय, अग्नि पृथिव्यादयो महत्सहितादेवता

भूरग्नये च पृथिव्यै च महते च स्वाहा । भुवो वायवे चान्तरिक्षाय च महते च स्वाहा । सुवरादित्याय च दिवे च महते च स्वाहा । भूर्भुव सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा । नमो देवेभ्य । स्वधा पितृभ्य. । भूर्भुव' सुवर्महरोम् ॥ ५ ॥

(१) नाउ २-८

सानर्थ बन्धनिवारकहोममन्त्रा -- अग्न्यादयो देवता

पाहि नो अग्न एनसे स्वाहा । पाहि नो विश्ववेदसे स्वाहा । यज्ञं पाहि विभावसो स्वाहा । सर्वं पाहि शतक्रतो स्वाहा ॥ ६ ॥

पाहि नो अग्न एकया । पाह्युत द्वितीयया । पाह्यूर्जं तृतीयया । पाहि गीर्भिश्चतसृभिर्वसो स्वाहा ॥ ७ ॥

प्रज्ञामेधादिप्राप्तिफलकजपमन्त्र -- विश्वरूप प्रणव, ऋषिदेवपितृप्रणाम, इन्द्र उपनिषद्रूपता

यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्यश्छन्दाꣳस्याविवेश । सचाꣳ शिक्य पुरोवाचोपनिषदिन्द्रो ज्येष्ठ इन्द्रियाय ऋषिभ्य । नमो देवेभ्य । स्वधा पितृभ्य । भूर्भुव. सुवश्छन्द ओम् ॥ ८ ॥

वेदधारणफलकजपमन्त्र -- ब्रह्मनमस्कार

नमो ब्रह्मणे धारण मे अस्तु । अनिराकरण धारयिता भूयासम् । कर्णयो श्रुत मा च्योढ्वम् । ममामुष्य ओम् ॥ ९ ॥

ऋतसत्यश्रुतशान्त्यादि तप

ऋत तप सत्य तप. श्रुत तप शान्त तपो दमस्तप: शमस्तपो दानं तपो यज्ञ तपो भूर्भुव' सुवर्ब्रह्मैतदुपास्यैतत्तप. ॥ १० ॥

पुण्यप्रशसा पापनिषेधश्च

यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येव पुण्यस्य कर्मणो दूराद्गन्धो वाति । यथाऽसिधारां कर्तेऽवहितामवक्रामे यद्युवे युवे ह वा विह्वयिष्यामि कर्तं पतिष्यामि । इत्येवममृतादात्मानं जुगुप्सेत् ॥ ११ ॥

आत्मदर्शनोपाय धातु प्रसाद, सप्तप्राणार्चिसमिल्लोकाना प्रभव ब्रह्मादिविभूतिरूप ईश

अणोरणीयान्महतो महीयानात्मा गुहाया निहितोऽस्य जन्तो ।
तमक्रतु पश्यति वीतशोको धातु. प्रसादान्महिमानमीशम् ॥
सप्त प्राणा प्रभवन्ति तस्मात्सप्तार्चिष. समिध. सप्त जिह्वाः ।
सप्त इमे लोका येषु चरन्ति प्राणा गुहाशयान्निहिता सप्त सप्त ॥
अत समुद्रा गिरयश्च सर्वेऽस्मात्स्यन्दन्ते सिन्धव. सर्वरूपाः ।
अतश्च विश्वा ओषधयो रसाच्च येनैष भूतस्तिष्ठत्यन्तरात्मा ॥
ब्रह्मा देवाना पदवी. कवीनामृषिर्विप्राणा महिषो मृगाणाम् ।
श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ सोम पवित्रमत्येति रेभन् ॥

अजा प्रजावती भोग्या, अजाश्च भोक्तार

अजामेका लोहितशुक्लकृष्णां बह्वीं प्रजा जनयन्तीꣳ सरूपाम् ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येना भुक्तभोगामजोऽन्य ॥ १ ॥

हसादिरूपेण द्युलोकादिषु स्थित ऋत बृहत्

हꣳस. शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥
घृत मिमिक्षिरे घृतमस्य योनिर्घृते श्रितो घृतमुवस्य धाम ।

---

(१) नाउ ९, श्रीकर १।२।१ (पृ ९५), १।२।४
(२) नाउ १०
(३) नाउ ११, वल्लभ २।३।२६
(४) नाउ १२।१, भास्कर १।४।८; रामानुज १।१।१ (पृ ११७), १।४।९, श्रीकठ १।१।१ (पृ ९७), १।१।४ (पृ १८०), १।१।५, १।२।८, १।४।९, ३।२।३६, श्रीकर १।१।१ (पृ ३, ५, १३, २१, २८), १।१।२ (पृ ३०), १।१।३ (पृ ४०, ४३), १।१।४ (पृ ४४, ४५), १।१।५ (पृ ५३), १।१।६, ९, ११, १९, २६, २८, १।२।५ (पृ १०३), १।२।८, ९, ११, १९, २१, १।४।५, ९, १०, २।१।४, ८, १२, २७, २।३।१८, २।४।१३, ३।२।३, २३, ३०, ३५, ३६, ३।३।१९, ४।२।१५, विज्ञान ३।४।१६

(१) नाउ. १२।२

अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ॥

घृतप्रिय अग्नि महोदेवः वृषभ , घृतप्रशसा

समुद्रादूर्मिर्मधुमा॒ उदारदुपा॒शुना सममृतत्वमानट् ।

घृतस्य नाम गुह्य यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥

वय नाम प्रब्रवामा घृतेनास्मिन्यज्ञे धारयामा नमोभि ।

उप ब्रह्मा शृणवच्छस्यमान चतु शृङ्गोऽवमीद्गौर एतत् ॥

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।

त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्या॒ आविवेश ॥ २ ॥

[1]त्रिधा हितं पाणिभिर्गुह्यमान गवि देवासो घृतमन्वविन्दन् ।

(१) नाउ १।२।३, ब्रशकर ३।४।२०, रामानुज १।१।१ (पृ १२८), ३।३।४, ४३, ४।३।९ दह ( दहरं ) परमेश्म ( परवेश्म ), ब्रमध्व १।३।१७ दह ( दहर ), श्रीकठ १।१।४ ( पृ १८२ ), १।१।१८, १।२।३, १३, १९, २७, १।३।१२, १६, १।४।२४, २५, २।१।१, २२, ३।२।३१, ३५, ३।३।१, ३८, ३।४।८, ४।१।३, ५, ४।२।१६, ४।३।१४, १५ विश्वाधियो ( विश्वाधिको ) दह (दहर) विपाप (विपाप्म) मेश्म (वेश्म ); श्रीकर १।१।१ (पृ ७, ८, १३, २७), १।१।२ (पृ ३५), १।१।३ (पृ ३८, ४३ ), १।१।४ ( पृ ४५, ४८ ), १।१।१६, १८, २७ ( पृ ८६ ), १।२।१, २, ३, ५, ६, ७, ८, १३, १८, ३०, १।३।१, १३, १७, २१, ४०, १।४।२४, २८, २।१।१, ४, १४, २३, २।२।३७, ४२, २।३।२६, ४२, २।४।१, ३।२।११, १२, १५, ३०, ३१, ३५, ३।३।१८, २२, ३८, ३९, ४२, ४३, ४४, ५३, ६०, ६१, ३।४।१, ८, १५, १८, २१, २५, ४५, ५२, ४।१।३, ४।३।६, १६, ४।४।१२, १७, २०, २२ विश्वाधियो ( विश्वाधिको ), दह ( दहर ) विपाप ( विपाप्म ) न सर्वत्र, मेश्म ( वेश्म ), बलदेव ३।४।१२, १३

इन्द्र एक॒ सूर्य एकं जजान वेनादेक॒ स्वधया निष्टतक्षुः ॥

महर्षि हिरण्यगर्भजन्मद्रष्टा शुभबुद्धिसयोजक रुद्र , परतम पुरुष

यो देवानां प्रथमं पुरस्ताद्विश्वाधियो रुद्रो महर्षि ।

हिरण्यगर्भं पश्यत जायमान॒ स नो देवः शुभया स्मृत्या सयुनक्तु ॥

यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।

वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥

सन्यासयोगादेव मुक्ति अमृतत्वरूपा

न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ।

परेण नाकं निहित गुहायां विभ्राजदेतद्यतयो विशन्ति ॥

वेदान्तविज्ञानसुनिश्चितार्थाः सन्यासयोगाद्यतयः शुद्धसत्त्वाः ।

ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे ॥

उपास्य हृदयाकाशान्त स्थ, प्रणवात् पर परमेश्वर

दह्र विपापं परमेश्मभूतं यत्पुण्डरीक पुरमध्यस॒स्थम् ।

तत्रापि दह्र गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम् ॥

‘ प्रसिद्धेश्च ’ — ‘ दह्र विपाप्म परवेश्मभूत यत् पुण्डरीक पुरमध्यसस्थम् । तत्रापि दह्र गगन विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम् ॥ ’ इति महोपनिषदि, ‘ हृत्पुण्डरीक विरजम् ’ इत्यारभ्य — ‘ उमासहाय परमेश्वरं प्रभु त्रिलोचन नीलकण्ठ प्रशान्तम् । ध्यात्वा ’ इत्यादि कैवल्योपनिषदि च परमेश्वरस्योमासखस्य दहरपुण्डरीकमध्यवर्तित्वेनोपास्यत्व प्रसिद्धम् । ततोऽपि परमेश्वरो दहराकाशः ।

ननु दहरपुण्डरीकमध्ये दहराकाशान्तर्वर्तित्वेनोपास्यत्व 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशान.' इत्याद्युपनिषदन्तरे प्रसिद्ध परमेश्वरस्य इह दहराकाशत्वेनेति विरोध इति चेत् —– तत्रापि दहराकाशमध्यवर्ती न परमेश्वर उपास्य॰, किं तु दहराकाशे परमेश्वरधर्माणामपहतपाप्मत्वादीना सबन्धप्रतीते. दहराकाशत्वमप्यस्य चिदम्बररूपतयेति न विरोध ।

श्रीकठ १।३।१६

**यो वेदादौ स्वर. प्रोक्तो वेदान्ते च प्रतिष्ठित ।**
**तस्य प्रकृतिलीनस्य यः पर स महेश्वर ॥ ३ ॥ ॥ १२ ॥**

ब्रह्मतत्त्वस्य परमात्मन नारायणस्य स्वहृदये अग्निशिखाया उपासना

**सहस्रशीर्षं देव विश्वाक्षं विश्वशभुवम् ।**
**विश्वं नारयण देवमक्षरं परमं पदम् ॥**
**विश्वत परमान्नित्यं विश्व नारायण॰ हरिम् ।**
**विश्वमेवेद पुरुषस्तद्विश्वमुपजीवति ॥**
**पतिं विश्वस्याऽऽत्मेश्वर॰ शाश्वत॰ शिवमच्युतम् ।**
**नारायण महाज्ञेयं विश्वात्मानं परायणम् ॥**
**नारायण परो ज्योतिरात्मा नारायण पर. ।**
**नारायण परं ब्रह्मतत्त्व नारायण. पर ।**
**नारायण परो ध्याता ध्यानं नारायण पर ॥**
**यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । १ ॥**

(१) 'लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि' — तैत्तिरीयके दहरविद्यानन्तरमधीयते —– 'सहस्रशीर्षं देव विश्वाक्ष विश्वशभुवम् । विश्व नारायण देवमक्षर परम प्रभुम् ॥' (नाउ १३।१) इत्यारभ्य 'सोऽक्षर॰ परम स्वराट्' (नाउ १३।२) इत्यन्तम् । तत्र सशय किं पूर्वप्रकृतविद्यैकविद्यात्वेन तदुपास्यविशेषनिधारणमनन क्रियत उत सर्ववेदान्तोदितपरविद्योपास्यविशेषनिधारणमिति । किं युक्तम् । दहरविद्योपास्यविशेषनिर्धारणमिति । कुत । प्रकरणात् । पूर्वस्मिन्ननुवाके दहरविद्या हि प्रकृता 'दहर विपाप परवेश्मभूत यत्पुण्डरीक पुरमध्यसस्थम् । तत्रापि दहर गगन विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम्' (नाउ १२।३) इति अस्मिन्ननुवाके 'पद्मकोशप्रतीकाश हृदय चाप्यधोमुखम्' (नाउ १३।२) इति दहरपुण्डरीकाभिधानमस्य नारायणानुवाकस्य दहरविद्योपास्यविशेषनिर्धारणार्थत्वमुपोद्बलयतीति । एव प्राप्त प्रचक्ष्महे– लिङ्गभूयस्त्वादिति । अस्य निखिलपरविद्यासाधारणविशेषनिर्धारणार्थत्वे भूयासि लिङ्गानि दृश्यन्ते । तथा हि परविद्यास्वक्षरशिवशभुपरब्रह्मपरज्योति परतत्त्वपरमात्मादिशब्दनिर्दिष्टमुपास्य वस्त्विह तैरेव शब्दैरनूद्य तस्य नारायणत्व विधीयते । भूयसीषु विद्यासु श्रुत तन्नूद्य नारायणत्वविधानभूयस्त्व नारायण एव सर्वविद्यासु सत्यमस्थूलत्वादिविशेषितानन्दादिगुणक पर ब्रह्मेति विशेषनिर्णये भूयो बहुतर लिङ्ग भवति । अत्र लिङ्गशब्द चिह्नपर्याय । चिह्नभूत वाक्य बहुतरमस्तीत्यर्थ । तद्धि प्रकरणाद्बलीय । तदप्युक्त प्रथम काण्ड 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' (जैसू ३।३।१४) इति ।

यत्तूक्त 'पद्मकोशप्रतीकाशम् (नाउ १३।२) इत्यादिवचन दहरविद्याशेषत्वमस्योपोद्बलयतीति तत्र । बलीयसा प्रमाणेन सर्वविद्योपास्यविशेषनिर्धारणार्थत्वेऽवधृते सति दहरविद्यायामपि तस्यैव नारायणस्यानुप्रवेशनात् तद्वचनोपपत्ते । न च 'सहस्रशीर्षम्' (नाउ १३।१) इत्यादिद्वितीयानिर्देशेन पूर्वानुवाकोदितोपासिना सबन्ध शङ्कनीय. । 'तस्मिन्यदन्तस्तदुपासितव्यम्' (नाउ १२।३) इत्युपासिगतेन कृत्प्रत्ययेनोपास्यस्य कर्मणोऽभिहितत्वा त्तदुपास्ये द्वितीयानुपपत्तेः । 'विश्वमेवेद पुरुष' (नाउ. १३।१)। 'तत्त्व नारायणः पर॰' (नाउ. १३।१) इत्यादिप्रथमानिर्देशाच्च प्रथमार्थे द्वितीया वेदितव्या । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायण स्थित' 'तस्याः शिखाया मध्ये परमात्मा व्यवस्थित । स ब्रह्म

(१) नाउ १३।१, रामानुज १।१।१ (पृ ११६, १२३), १।१।१२, २।२।३५, ४२, ३।२।२६, ३६, ४३ पदम् (प्रभुम्) जगत्सर्वं (जगत्यस्मिन्), ब्रमध्व १।३।२, ८, १६, २।२।५, श्रीकठ १।१।१ (पृ ९१), १।२।३, ४, ५, ८, १।३।१२, ३।२।३५, ४।३।१४, श्रीकर १।१।१ (पृ १७), १।१।४ (पृ ४४), १।२।१, ३, ५, १।३।१३, २।२।३७, ४१, ४२, २।३।३८, ३।२।११, ३५, ३।३।३४, ४३, ४।३।१६, ४।४।२२, वल्लभ ४।४।१४ परमान्नित्य (परम नित्य)

स शिव. सेन्द्रः सोऽक्षरः परम स्वराट् ॥' ( नाउ १३।२ ) इति निर्देशै सर्वस्मात्परो नारायण एव सर्वत्रोपास्य इति निर्णीयमानत्वाच्च प्रथमार्थे द्वितीयेति निश्चीयते । रामानुज ३।३।४३

( २ ) 'अनुपपत्तेस्तु न शारीरः' — इह सामान्येन जीवस्योपास्यत्व नास्ति, किन्तूपासकत्वमिति निरूपितम् । पुनरपि सकलजीवसमष्टिरूपहिरण्यगर्भोपादानभूतस्य नारायणस्यापि विश्वाधिकब्रह्मविषयकमुपासकत्वं, नोपास्यत्वमित्यभिधातुमिदमधिकरणमारभ्यते — अनुपपत्तेरिति । अस्य महोपनिषदि श्रूयते विषय. 'पतिं विश्वस्यात्मेश्वर शाश्वत शिवमच्युतम् । नारायण महाज्ञेयम्' इत्यादि । अत्र विश्वपतित्वादिलक्षणयुक्ततया नारायण शब्दवाच्यो मूर्त्यात्मा परमेश्वरोऽन्यो वेति सदेह॰ । 'सह स्रशीर्षं देव' इत्यारभ्य सहस्रशीर्षत्वादिविधेयत्वेन नारायणस्य मूर्त्यात्मन एवोद्देश्यत्वेनाभ्यासात्, 'समुद्रेऽन्त विश्वशम्भुवम्' इति समुद्रशायित्वादितल्लिङ्गाच्च, तत्पर्यायवाचकाच्युतहरिशब्दादिप्रयोगाच्च, नारायण एव मूर्त्यात्मा विश्वपतित्वादिना लिङ्गेन प्रतिपाद्यत इति पूर्व. पक्ष॰ । सिद्धान्तस्तु — नारायणात्मा महेश्वर इति । कुत । विश्वपतित्वादीना परमेश्वरधर्माणां तदर्थान्तरे नारायणेऽनुपपत्तेः । 'पशूना पतये' 'वृक्षाणा पतये' ' जगता पतये ' इत्यादिना परमेश्वर एव निखिलभुवनाधिपत्यमभ्यस्यते । ' एको हि रुद्रो न द्वितीयाय तस्थुर्य इमाल्लोकानीशत ईशिनीभि ' ( श्वेउ ३।२ ) इति रुद्रव्यतिरिक्तस्य जगदीश्वरत्व निषिध्यते । ' विश्वाधिको रुद्र ' ( नाउ १२।२ ) इति विश्वाधिकत्व च तस्यैव श्रूयते । अतो विश्वपतित्वादिलक्षणो नारायणात्मा परमेश्वर इति समीचीनम् । १।२।३

' कर्मकर्तृव्यपदेशात् ' — ननु 'नारायणात्मा' इति नारायणान्तर्यामी परमेश्वर इति हृदयम् । तदयुक्त, 'नारायणपरं ब्रह्म' इति नारायणस्य परब्रह्मभावमुक्त्वा, 'पद्मकोशप्रतीकाशम्' इत्यादिना पुरुषस्य हृदयपुण्डरीक स्थानमुक्त्वा 'तस्य मध्ये वह्निशिखा' इत्यादिना जीवस्वरूपमुक्त्वा 'तस्याः शिखाया मध्ये परमात्मा व्यवस्थित.' इति परमात्मत्वेन जीवान्तर्यामित्वेन तस्योपास्यत्वमवगम्यते । 'स ब्रह्मा स शिवः' इत्यादिना तद्विभूतित्व ब्रह्मशिवादीनामुच्यते । अतो नारायण एव विश्वपतिः परब्रह्मभूतो जीवान्तर्यामित्वेनोपास्य इति तदात्मकत्वेन तदधिकत्वं तदुपास्यत्व च परमेश्वरस्य वक्तुमयुक्तमित्यत आह — कर्मेति । कर्मत्व कर्तृत्व च व्यपदिश्यते तत्र ध्यातृध्येययो. परमेश्वरनारायणयो. । कथ ? ' पद्मकोशप्रतीकाशम् ' इति प्रकृतस्य नारायणस्यैव हृदयमुच्यते ' परमात्मा व्यवस्थित ' इति परमेश्वर एव परमात्मा तदन्तर्वर्तितया ध्येयत्वेनोच्यते । ततो ध्यातृत्वेन नारायणस्य ध्येयत्वेन परमेश्वरस्य च कर्मत्व कर्तृत्व च व्यपदिश्यते । अतो नारायणादन्य एवोपास्यः परमात्मा । ' स ब्रह्मा स शिव ' इत्यादिना ब्रह्मविष्णुरुद्रेन्द्रादिप्रपञ्चविभूतिविशिष्टत्व परमेश्वरस्योपदिश्यते । अत्र विष्णोरग्रहणेऽपि कैवल्योपनिषदि श्रूयते—' हृत्पुण्डरीक विरज ' इत्यादिना हृदयपुण्डरीक प्रस्तुत्य, ' उमासहाय परमेश्वर प्रभु त्रिलोचन नीलकण्ठ प्रशान्तम् । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥ स ब्रह्मा स शिवः सेन्द्र सोऽक्षर॰ परम. स्वराट् । स एव विष्णु॰ स प्राण स कालोऽग्निः' ( कैउ १।७,८ ) इत्यादि । तन्न्यायोऽत्राध्याहार्यः । 'यो वै रुद्र स भगवान् भूर्भुवःसुवर्यश्च ब्रह्मा तस्मै वै नमो नम यश्च विष्णु यश्च महेश्वर॰ ' इत्याद्यथर्वश्रुतिरपि द्रष्टव्या । अत्र विभूतित्वेन ब्रह्मशिवयोर्मध्ये विष्णोरग्रहण परमेश्वरोपासकतया तस्य प्रस्तुतत्वादित्यविरोध । १।२।४

' शब्दविशेषात् ' —'सहस्रशीर्षा पुरुष. ' इत्यारभ्य प्रस्तुतस्य पुरुषस्य 'पादोऽस्य विश्वा भूतानि' इति निजैकांशजगद्विशिष्टत्वमुच्यते । 'सहस्रशीर्षं देवम् ' इति स एवात्र नारायण इति बोध्यते । स चाय ' नारायणपरं ब्रह्म ' इति ब्रह्मत्वेनोच्यते । ब्रह्मैव हि सर्वोपास्यम् । कथमस्य तथाभूतस्यान्य प्रत्युपासकत्वमित्यत आह — शब्देति । 'नारायणपर ब्रह्म' इति शब्दविशेष एव नारायणात् परमिति ब्रह्म प्रतिपादयति । अतो नारायणादन्यदेव परं ब्रह्मोपास्यम् । परब्रह्मण सहस्रशीर्षत्वादिविशिष्टपुरुषरूपेण जगदुपादानत्वात् । परब्रह्मात्मकस्य तस्य जगदाकारत्वमिति वक्ष्यामः ' प्रकृतिश्च ' ( ब्रसू २।१।२३ ) इत्यधिकरणे । १।२।५

'स्मृतेश्च' — नारायणस्योपासकत्वे प्रमाणान्तरमाह — स्मृतेश्चेति । 'एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः । दर्शयामास पार्थाय परम रूपमैश्वरम् ॥' ( भ गी ११।९ ) इति स्मृतेश्च महायोगस्वामिनो नारायणस्य परमेश्वरविषयो योग॰ समाधिरभिव्यज्यते । अत्र, 'अह यथावदाराध्य. कृष्णेनाक्लिष्टकर्मणा । तस्मादिष्टतम. कृष्णादन्यो मम न विद्यते ॥' इति अश्वत्थामान प्रति परमेश्वरवचन च । तस्मादन्यन्नारायणादुपास्य पर ब्रह्म । १।२।६

'अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेव व्योमवच्च ' — पुनरनुपपत्तिमाशङ्क्याह — अर्भकौकस्त्वादिति । 'नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा । तस्याः शिखाया मध्ये परमात्मा व्यवस्थित ॥' इति स्वल्पवह्निशिखान्तर्वर्तितया स्वल्पाश्रयत्वादल्पत्वव्यपदेशाच्चाय व्यापी न परमेश्वर इति चेत् — न, उपास्यत्वात् तथाव्यपदेश । न स्वरूपाल्पत्वात् व्योमवत् स्वरूपमहत्त्वस्य सिद्धत्वात् — यथा घटादिषूपहितस्य व्योम्नस्तदुपाधिवशादल्पत्व स्वरूपतो महत्त्व च । ततो न विरोधः । १।२।७

'सभोगप्राप्तिरिति चेन्न वैशेष्यात्' —पुनराशङ्क्य परिहरति — सभोगेति । यदुक्त 'नारायणपर ब्रह्म' इति नारायणात् पर तदुपास्य ब्रह्म, तदेव हि 'ऋत सत्य पर ब्रह्म पुरुष कृष्णपिङ्गलम् । ऊर्ध्वरेत विरूपाक्ष' इत्युच्यते । तत्र परमशक्त्युमाशबलाकारतया कृष्णपिङ्गल कृशानुरेतस्कतया चोर्ध्वरेतस्क, त्रिलोचनतया विरूपाक्ष, पुरि पूर्वोक्तदहरपुण्डरीके शेत इति पुरुष, ऋत सत्य मनोवाग्विपर्यासरहित पर ब्रह्म, इति लक्षणम् । अतोऽस्य त्रिलोचनत्वादिलक्षणशरीरसबन्धात् शरीरगतसुखदुःखादिसभोगप्राप्तिरिति चेत् —न, वैशेष्यात् । सुखदुःखभोगहेतुभ्यो जीवशरीरेभ्यो ब्रह्मरूपस्यास्ति हि वैशेष्यम् । इच्छागृहीतत्वादस्य, तेषा कर्ममूलत्वाच्च । अत एव श्रूयते परमेश्वरः 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकाम॰ सत्यसकल्प॰' इति ससारिशरीरधर्मरहितत्वेन । न चैव ससारी जीवः । अत एवाप्राकृतानि पापजरामरणशोकादिरहितानि स्वेच्छासपादितानि लीलामङ्गलरूपाणि परमेश्वरस्य 'स्थिरेभिरङ्गै॰ पुरुरूप उग्र' इत्यादिषु स्थिराणि नित्यानि विज्ञायन्ते । अत परब्रह्मण. परमेश्वरस्य जीवाद्वैशेष्यान्न तद्वच्छरीरादिगतदोषापत्ति. । अत्र खलूपक्रमादिभिर्लिङ्गैर्विरूपाक्ष ब्रह्म सर्वोत्कृष्टमुपास्यमिति युक्तमेव । तथा हि उपक्रमे — 'अणोरणीयान्' ( नाउ १२।१ ) इत्यादिना 'महिमानमीशम्' इत्यन्तेन सकलजन्तुहृदयगुहावर्तित्वेन स्वप्रसादातिशयवीतशोकपुरुषदर्शनविषयत्वेन च महिमातिशयवानीश॰ प्रस्तुत । पुन 'सप्त प्राणा. प्रभवन्ति तस्मात्' ( नाउ १२।१ ) इत्यादिना स एव परमशक्तिमान् प्राणादिजगदुपादानत्वेन निरूपित । ततश्च, 'यो देवाना प्रथम पुरस्ताद्विश्वाधिको रुद्रो महर्षि । हिरण्यगर्भं पश्यत जायमानम्' ( नाउ १२।३ ) इति विश्वाधिकत्वेन सर्वज्ञत्वेन सकलकार्यप्रथमहिरण्यगर्भजनकत्वेन च निमित्तभूत परामृष्ट. । स एव तत 'परेण नाकम्' ( नाउ १२।३ ) इति पराकाशगुहावर्ती त्यक्तफलकर्मानुष्ठायिनां वेदान्ततात्पर्यवेदिना यतीना जितेन्द्रियाणां 'परामृतात्परिमुच्यन्ति' ( नाउ १२।३ ) इति परामृतरूपतया प्राप्यत्वेन वर्णित॰ । कस्तत्प्राप्तावुपाय इति प्राप्ते 'दहर विपाप्मम्' इति दहरोपासनमारब्धम् । तत्र 'तस्मिन् यदन्तस्तदुपासितव्यम्' ( नाउ १२।३ ) इति दहरपुण्डरीके यद्वस्तु तदुपास्यमिति सामान्येनोक्तम् । तत् किमित्याकाङ्क्षाया, 'य पर. स. महेश्वर.' ( नाउ १२।३ ) इति महेश्वराख्यं तदुपवर्णितम् । तत् किंरूपमित्याकाङ्क्षायां 'ऋत सत्यम्' ( नाउ २३ ) इत्यादिना विरूपाक्षत्वादिलक्षणरूपमित्युपसहृतम् । तत्रावान्तरवाक्यसिद्धो नारायणः पूर्वाधिकरणन्यायादुपासकत्वेनान्वेतीति युक्तम् । अत्र सर्वेषामुपासनेऽधिकारस्य सद्भावेऽपि नारायणग्रहणमस्याधिक्यार्थम् । तदिहोपास्येन विरूपाक्षेण ब्रह्मणा तदुपासकस्य नारायणस्याभेदभावनया तद्धर्मैरस्य प्रतिपादनमुपादानस्य तदात्मन इति समीचीनम् ।

श्रीकठ १।२।८

**अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥**

(१) नाउ १३.२, रामानुज १।३।१, ३।३।३८, ४३ शिलाभिस्तु ( शिराभिस्तु ) ( स हरि ० ), ब्रमध्व.

अनन्तमव्यय कविꣳ समुद्रेऽन्त विश्वशभुवम् ।
पद्मकोशप्रतीकाशꣳ हृदय चाप्यधोमुखम् ॥
अधो निष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति।
ज्वालमालाकुल भाती विश्वस्याऽऽयतनं महत् ॥
सततꣳ शिलाभिस्तु लम्बत्याकोशसन्निभम् ।
तस्यान्ते सुषिरꣳ सूक्ष्म तस्मिन्सर्वं प्रतिष्ठितम् ॥
तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुख. ।
सोऽग्रभुग्विभजन्तिष्ठन्नाहारमजरः कवि ।
तिर्यगूर्ध्वमध शायी रश्मयस्तस्य सतता ॥
सतापयति स्व देहमापादतलमस्तक' ।
तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थित ॥
नीलतोयदमध्यस्थाद्विद्युल्लेखेव भास्वरा ।
नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा ॥
तस्या शिखाया मध्ये परमात्मा व्यवस्थित ।
स ब्रह्म स शिव स हरि सेन्द्रः सोऽक्षर
परम स्वराट् ॥ २ ॥ ॥ १३ ॥

आदित्यमण्डले उपास्य हिरण्मय सर्वात्मक
ओजोबलादिरूप स्वयभुब्रह्मस्वरूप पुरुष
सायुज्यहेतु

आदित्यो वा एष एतन्मण्डलं तपति । तत्र ता ऋचः । तदृचा मण्डलम् । स ऋचा लोक । अथ य एष एतस्मिन्मण्डलेऽर्चिर्दीप्यते तानि सामानि । स साम्ना लोक । अथ य एष एतस्मिन्मडलेऽर्चिषि पुरुषस्तानि यजूꣳषि । स यजुषा मण्डलम् । स यजुषा लोक' । सैषा त्रय्येव विद्या तपति य एषोऽन्तरादित्ये हिरण्मय पुरुष ॥ १४ ॥

'भेदव्यपदेशाच्चान्य' — महोपनिषदि श्रूयते, 'आदित्यो वा एष एतन्मण्डल तपति' इत्यादि । तत्र 'य एष एतस्मिन् मण्डलेऽर्चिर्दीप्यते' इति मण्डलप्रभामुक्त्वा 'य एष एतस्मिन् मण्डलेऽर्चिषि पुरुष.' इति मण्डलाभिमानिन सूर्यमभिधाय 'य एषोऽन्तरादित्ये हिरण्मय पुरुष' इति हिरण्मय पुरुषमादित्यान्तर्यामिणमुक्त्वा पुन. 'आदित्यो वै तेज ओजो बल यशः' इत्यादिना तस्यादित्यरूपस्य विभूतिमभिधाय 'एष पुरुष एष भूतानामधिपति.' इति भूतपतित्वेन त निर्दिश्य, पुन. किदृश इत्याकाङ्क्षाया 'सर्वो वै रुद्र.' इत्यारभ्य 'हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये' इत्युपसहृतम् । तत्र बाहुग्रहणस्योपलक्षणत्वाद्धिरण्यरूप इति तात्पर्यम् । अतो हिरण्यसदृशरूप उमापतिरादित्यमण्डलवर्तीति सिद्ध्यति । अत्र नीलग्रीवत्वमुमापतित्वमित्यादि विशेषलिङ्ग, परमेश्वरादन्यत्र तस्यायोगात् । पुण्डरीकाक्षत्व साधारण लिङ्ग, नारायणादन्यत्रापि तस्य दर्शनात्, कमललोचना नारी कमललोचनः पुरुष इति । अतो विशेषलिङ्गेन सामान्यलिङ्गस्य बाध. । 'ध्येयः सदा' इत्यादि लोकिक वचन भाक्तमेव । ततो हिरण्यसदृशरूपस्त्रिलोचनो नीलग्रीव उमापति. सकललोककामेश्वर सर्वपाप्मानाघ्रातो भगवान् परमेश्वर आदित्यान्तर्वर्ती सावित्रीप्रतिपाद्यः सर्वेषा मुमुक्षूणा ध्येय इति सिद्धम् ।

श्रीकठ १।१।२२

आदित्यो वै तेज ओजो बल यशश्चक्षु श्रोत्रमात्मा मनो मन्युर्मनुर्मृत्यु सत्यो मित्रो वायुराकाश' प्राणो लोकपाल क' किं क तत्सत्यमन्नममृतो जीवो विश्वः कतम स्वयभु ब्रह्मैतदमृत एष पुरुष एष भूतानामधिपतिः । ब्रह्मण सायुज्यꣳ सलोकतामाप्नोति । एतासामेव देवतानाꣳ सायुज्यꣳ सार्ष्टिताꣳ समानलोकतामाप्नोति य एव वेद । इत्युपनिषत् ॥ १५ ॥

लिङ्गप्रतिष्ठार्थं पापक्षयार्थं च विनियोज्या मन्त्रा —
सोमसूर्यलिङ्गरूप शिव परमात्मा

[२]निधनपतये नम । निधनपतान्तिकाय नमः । ऊर्ध्वाय नमः । ऊर्ध्वलिङ्गाय नमः । हिरण्याय

१।३।१४, २।२।५, श्रीकठ १।२।३, ४, ७, १३, ३।२।३५, श्रीकर १।२।३, ४, ५, ७, ३०, २।३।१८, ३८, ३।३।४३, ४।३।१६

(१) नाउ १४, श्रीकठ १।१।२२, ३।३।२२, श्रीकर १।१।२१, २६ (पृ ८३), ३।३।६, २२, ४।३।१६

(१) नाउ १५, श्रीकठ १।१।२२, श्रीकर. १।१।२१, ३।३।१८, ४१, ४४

(२) नाउ १६, श्रीकर १।१।१ (पृ ८, ११, १४, १५), १।१।२ (पृ ३६), १।१।२६ (पृ ८०), १।२।१ (पृ ९३, ९४, ९५, ९६), १।२।२ (पृ ९८),

नम॰ । हिरण्यलिङ्गाय नम. । सुवर्णाय नम । सुवर्णलिङ्गाय नम । दिव्याय नम । दिव्य लिङ्गाय नम । भवाय नम॰ । भवलिङ्गाय नम । शर्वाय नमः । शर्वलिङ्गाय नम । शिवाय नम । शिवलिङ्गाय नम । ज्वलाय नम । ज्वललिङ्गाय नम । आत्माय नम । आत्मलिङ्गाय नम. । परमाय नम । परमलिङ्गाय नम । एतत्सोमस्य सूर्यस्य सर्वलिङ्ग॰ स्थापयति पाणिमन्त्र पवित्रम् ॥ १६ ।

महादेवस्य पश्चिमोत्तरदक्षिणप्रागूर्ध्ववक्त्राणा क्रमेण नमस्कारार्था मन्त्रा — वामदेव काल॰ बल बलप्रमथन अघोरघोररूप सर्व ईशान महादेव

सद्योजात प्रपद्यामि सद्योजाताय वै नमो नम । भवे भवे नातिभवे भवस्व माम् ॥ भवोद्भवाय नमः ॥ १७ ॥

वामदेवाय नम । ज्येष्ठाय नम । श्रेष्ठाय नम. । रुद्राय नम । कालाय नम । कलविकरणाय नमः । बलविकरणाय नम । बलाय नम । बलप्रमथनाय नम । सर्वभूतदमनाय नम । मनोन्मनाय नम ॥ १८ ॥

अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ।
सर्वेभ्य सर्व शर्वेभ्यो नमस्ते अस्तु रुद्र रूपेभ्य ॥ १९ ॥

तत्पुरुषाय विद्महे महादेवाय धीमहि ।
तन्नो रुद्र प्रचोदयात् ॥ २० ॥

१।२।३, ५, ६, ७, ९, १।३।२२, २।१।४, ३२, २।२।४२, ३।१।९, ३।२।११, १५, २३, ३७, ३।३।३२, ४३, ५३, ३।४।३४, ३९, ४।१।२, ५, ४।३।१६, ४।४।२

(१) नाउ १७, श्रीकर १।२।१ ( पृ ९३, ९४ ), २।२।४४, ३।३।४३

(२) नाउ १८, श्रीकर १।१।११, १।२।१, २।१।३६, २।२।४२

(३) नाउ १९

(४) नाउ २०, श्रीकर २।१।४

ईशान सर्वविद्यानामीश्वर सर्वभूताना ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥ २१ ॥

शिव हिरण्यवर्ण हिरण्यपति अम्बिकापति उमापति कृष्णपिङ्गल ऊर्ध्वरेता सर्व विश्वरूप सत्यपरब्रह्मस्वरूप शतम

नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमो नम ॥ २२ ॥

ऋत॰ सत्य परं ब्रह्म पुरुष कृष्णपिङ्गलम् ।
ऊर्ध्वरेत विरूपाक्ष विश्वरूपाय वै नमो नम ॥ २३ ॥

'दर्शयति च' — श्रुतिरेव विद्यैक्य दर्शयति महोपनिषत्कैवल्योपनिषदोर्दहरविद्यायाम् — 'ऋत सत्य पर ब्रह्म पुरुष कृष्णपिङ्गलम् । ऊर्ध्वरेत विरूपाक्षम्' 'उमा-

(१) नाउ २१, श्रीकठ १।१।३ ( पृ १५८ ), १।१।२०, २।२।३८, श्रीकर १।१।१ ( पृ ७, २७ ), १।१।२ ( पृ ३६ ), १।१।४ ( पृ ५३ ), १।१।११, १३, १६, १९, १।२।१, ८, १।३।११, १३, २४, ३९, ४०, ४३, १।४।१६, २२, २४, २।१।४, १२, २३, २।२।३७, ३८, ४१, ४२, २।३।२६, ३८, ४२, ५०, २।४।१२, ३।१।१४, ३।२।१, १५, २६, ३०, ३७, ३।३।३८, ५१, ३।४।१, ८, ४६, ४।१।३, १६, ४।३।१२, ४।४।२२

(२) नाउ २२, श्रीकठ १।१।२२, ३।३।२२, ३९, ४३, ४।४।२२, श्रीकर १।१।४ ( पृ ४५ ), १।१।११, १३, २१, १।२।८, १।३।६, २२, ४३, २।१।४, २६, २।२।३७, ३८, ४४, ३।२।१४, १५, ३।३।६, २२, ३९, ४३, ५१, ४।३।७, १६, ४।४।४, ७, २२

(३) नाउ २३, श्रीकठ १।१।२ ( पृ ११८ ), १।१।४ ( पृ १८८ ), १।२।८, १।३।१२, ३।३।१, ४, ११, ३९, ४।१।५, ४।३।१४, श्रीकर १।१।२ (पृ ३०), १।१।३ ( पृ ३९ ), १।१।४ ( पृ ४४ ), १।१।५ ( पृ ५४ ), १।१।११, १२, २७, १।२।२, १३, १४, १।३।१३, १।४।२२, २।१।४, १४, २७, २।२।४०, ४१, ४४, २।३।५, २।४।१६, ३।२।७, १४, ३५, ३६, ३।३।१, ४, ११, १५, १७, ३२, ५१, ३।४।३, ४।१।३, ५, ४।२।१६, ४।३।१०, १२, १६, ४।४।२२

सहाय परमेश्वर प्रभु त्रिलोचन नीलकण्ठ प्रशान्तम्' इत्यादिना निर्दिष्टमीश्वरस्य रूपमपेक्ष्य रूपवत्त्वात् पाप्मजरामरणादिप्रसक्तौ छान्दोग्ये—'अथ यदिदमस्मिन्' (छाउ ८।१।१ ) इत्यारभ्य तस्य गुणाष्टकविशिष्टत्व केवलमुच्यते। तत्र तत्र धर्मविशेषापादिका पुन श्रुति' विद्याभेदिकेति शङ्काया अपि नावकाश' । ततश्चोदनाद्यविशेषात् सकलवेदान्तप्रत्ययमेकमेवोपासन, तद्भेदकशब्दान्तराद्यदर्शनात् इति सिद्धम् ।

श्रीकठ ३।३।४

**सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु ।**
**पुरुषो वै रुद्र सन्महो नमो नमः ।**
**विश्व भूतं भुवनं चित्र बहुधा जात जायमान च यत् ।**
**सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥ २४ ॥**

'गतिसामान्यात्' — सच्छब्देन परमेश्वर एव प्रतिपाद्यते न प्रधानमित्याह —गतीति । यथाऽस्यामुपनिषदि सत्पदस्य परमेश्वरवाचित्वेन गतिः तथा श्रुत्यन्तरेऽपि समाना 'पुरुषो वै रुद्र सन्महो नमो नम' इत्यादौ । अत: सत्पदवाच्यः परमेश्वर एव ।

१।१।११

'उभयव्यपदेशात् त्वहिकुण्डलवत्' — ननु 'द्वे वाव ब्रह्मणो रूपे' इत्यादिनोक्त प्रपञ्चस्य ब्रह्मरूपत्व ब्रह्मप्रपञ्चयोराध्यासिकसबन्धेनैव निर्वाह्य, विधान्तरेण तन्निर्वाहासभवात् । ततश्च 'अथात आदेशो नेति नेति' इत्यस्य अध्यस्तप्रपञ्चनिषेधपरत्वमेव युक्तमित्याशङ्क्य विनाप्यध्याससबन्धं स्वाभिमतेन प्रकारेण तन्निर्वाहं वक्ष्यन् प्रथम पक्षान्तरमाह—उभयेति । 'सर्वो वै रुद्रः' 'द्यावापृथिवी जनयन् देव एकः' इत्येकत्वबहुत्वव्यपदेशादहे. कुण्डलभावर्जुभाववत् परमेश्वरस्यैव 'द्वे वाव ब्रह्मणो रूपे' इत्यादिनोक्त. पृथिव्यादिभावसस्थानविशेष. । ३।२।२६

' प्रकाशाश्रयवद्वा तेजस्त्वात् ' — प्रकाशतदाश्रययोर्यथा स्वरूपभेदेऽपि तेजस्त्वयोगेनैक्य, एवमचिद्ब्रह्मणोरेकजातियोगेनेति वा तस्य पृथिव्यादिभावः ।

३।२।२७

' पूर्ववद्वा ' — वाशब्द. पक्षद्वयव्यावृत्त्यर्थ । यथा पूर्वत्र प्रकाशजातिगुणशरीरवद्विशेषणतैकस्वभावतया विशिष्टैकदेशत्वेनाशत्वमुक्त चिद्वस्तुनः, एवमचिद्वस्तुनोऽपि । ' सर्वो वै रुद्र.' इति चिदचिद्वस्तुनोरेकेन शब्देनाभिधान हि शक्यमेकरूपभूतयो' पूर्वोक्तसबन्धे सत्येव । इतरपक्षद्वये ब्रह्मण. सदोषत्व दुर्वारम् । 'यस्य पृथिवी शरीर, यस्यात्मा शरीरम् ' इत्यादिश्रुतेः, ' विद्येति चेतना प्राहुस्तथाऽविद्यामचेतनाम् । विद्याविद्यात्मक सर्वे विश्व विश्वगुरोर्विभो । रूपमेव न सदेहो विश्व तस्य वशे यत ॥ ' इत्यादिपुराणवचनप्रामाण्याच्च चिदचिद्वस्तुनोरष्टमूर्तेर्ब्रह्मणः शरीरता च सिद्धा ।

३।२।२८

' लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ' — इदमुमासहित पर ब्रह्म सर्वास्वपि परविद्यासूपास्यम् । तत्तल्लिङ्गसबन्धिवाक्यभूयस्त्वात् । तथा हि 'सर्वो वै रुद्रः' इत्यादिवाक्ये ' सर्वं खल्विद ब्रह्म तज्जलानिति शान्त उपासीत ' इति शाण्डिल्यविद्योपास्यलिङ्गम् । ' पुरुषो वै रुद्रः ' इति वाक्ये पुरुषसूक्तोपकोसलविद्याद्युपास्यलिङ्गम् । ' सत् ' इत्यत्र ' सदेव सोम्येदमग्र आसीत् ' इति सद्विद्योपास्यलिङ्गम् । ' महः ' इत्यत्र ' मह इति तद्ब्रह्म स आत्मा अङ्गान्यन्या देवताः ' इति व्याहृतिविद्योपास्यलिङ्गम् । 'शतम ह्वदे' इति हृदयद्योतनात् दहरविद्योपास्यलिङ्गम् । ' हिरण्यबाहवे ' इति हिरण्यरूपत्व सवितृमण्डलोपास्यलिङ्गम् । ' उमापतये ' इति सर्वपरविद्योपास्यलिङ्गम् ।

(१) नाउ २४, श्रीकठ १।१।४ ( पृ १८२ ), १।१।११, २२, १।२।१, १९, १।४।२५, २७, २।१।१५, २।२।३८, ४२, ३।२।२६, २८, ३५, ३६, ३।३।२२, ४३, ४।२।१६, ६।३।१५, ४।४।२२, श्रीकर १।१।१ ( पृ ७, २०, २७ ), १।१।२ ( पृ २९, ३१, ३६ ), १।१।३ ( पृ ३७ ), १।१।४ ( पृ ४५, ४७, ४८ ), १।१।११, २२ ( पृ ७८ ), २७ ( पृ ८५ ), १।१।३१, १।२।१८, १।३।१३, २४, १।४।२४, २।१।१, ३, ४, ११, १४, २२, २।२।३८, ४१, ४२, ४४, २।३।१, ५, १८, ४२, ३।१।१, ३।२।३५, ३६, ३।३।२२, ४३, ५१, ३।४।३, ४५, ४।१।३, ५, ४।२।५, १६, ४।४।४, २२

ससाररुग्द्रावकत्वात् रुद्र इत्युच्यते परमात्मा शिव.। एवमुमापते परब्रह्मण· शिवस्य सर्वपरविद्योपास्यत्व वाक्यैरवसीयते। श्रीकठ ३।३।४३

कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे।
वोचेम शतम९ हृदे॥
सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु॥ २५॥

वैकङ्कत्या अग्निहोत्रहवण्या विधि

यस्य वैकङ्कत्यग्निहोत्रहवणी भवति प्रत्येवास्याऽऽहुतयस्तिष्ठन्त्यथो प्रतिष्ठित्यै॥ २६॥

जप्या रक्षोघ्नम न्त्राः— रक्षोघ्न अग्नि

कृणुष्व पाज इति पञ्च *॥ २७॥

---

* कृणुष्व पाज. प्रसितिं न पृथ्वीं याहि राजेवामवा९ इभेन।
तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठै॥
तव भ्रमास आशुया पतन्त्यनुस्पृश धृषता शोशुचान.।
तपू९ष्यग्ने जुह्वा पतङ्गा न सदितो विसृज विश्वगुल्का॥
प्रति स्पशो विसृज तूर्णितमो भवा पायुर्विशो अस्या अदब्ध·।
यो नो दूरे अघश९सो यो अन्त्यग्ने मा किष्टे व्यथिरादधर्षीत्॥
उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्रा९ ओषतात्तिग्महेते।
यो नो अरातिं९ समिधान चक्रे नीचा तं धक्ष्यतस न शुष्कम्॥
ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने।
अव स्थिरा तनुहि यातुजूना जामिमजामिं प्रमृणीहि शत्रून्॥

(१) नाउ २५, श्रीकठ ३।३।४३, श्रीकर ३।३।४३

(२) नाउ. २६.

(३) नाउ २७

क्षेत्रलाभद्वारा जीवनसिद्धिद पृथिवीदेवताको मन्त्र --

देवगन्धर्वादीना सर्वभूताना च माता मेदिनी

अदितिर्देवा गन्धर्वा मनुष्या पितरोऽसुरा। तेषा९ सर्वभूतानां माता मेदिनी महता मही सावित्री गायत्री जगत्युर्वी पृथ्वी बहुला विश्वा भूता कतमा काया सा सत्येत्यमृतेति वसिष्ठ.॥ २८॥

वृष्ट्यभावोपद्रवनिवारको जलदेवताको मन्त्र —

विश्वरूपा सर्वदेवमय्य आप

आपो वा इद९ सर्वम्। विश्वा भूतान्याप.। प्राणा वा आपः। पशव आप। अन्नमाप। अमृतमाप.। सम्राडाप। विराडाप·। स्वराडाप.। छन्दा९स्याप। ज्योती९ष्याप। यजू९ष्याप.। सत्यमाप·। सर्वा देवता आपः। भूर्भुव सुवराप ओम्॥ २९॥

सध्योपासना

( ३०—३६ अनुवाका )

माध्याह्निकसध्यासमये अभिमन्त्रितजलपान-

मन्त्रा -- आप पापशुद्धिहेतव

आप· पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम्।
पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु माम्॥
यदुच्छिष्टमभोज्य यद्वा दुश्चरित मम।
सर्वं पुनन्तु मामापोऽसता च प्रतिग्रह९ स्वाहा॥ ३०॥

सायसध्याकाले प्रात सध्याकाले च अभिमन्त्रित-

जलपानार्थ मन्त्रौ क्रमेण—ज्योतिषि

पापहवनम्

अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्य·। पापेभ्यो रक्षन्ताम्। यदह्ना पापमकार्षम्। मनसा वाचा हस्ताभ्याम्। पद्भ्यामुदरेण शिश्ना। अहस्तदवलुम्पतु। यत्किंच दुरित मयि। इदमह माममृतयोनौ। सत्ये ज्योतिषि जुहोमि स्वाहा॥ ३१॥

---

(१) नाउ २८-३२

सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्य. । पापेभ्यो रक्षन्ताम् । यद्रात्रिया पापमकार्षम् । मनसा वाचा हस्ताभ्याम् । पद्भ्यामुदरेण शिश्ना । रात्रिस्तदवलुम्पतु । यत्किंच दुरित मयि । इदमह माममृतयोनौ । सूर्ये ज्योतिषि जुहोमि स्वाहा ॥ ३२॥

प्रणवस्य देवतर्षिछन्दोविनियोगा

[1]ओमित्येकाक्षरं ब्रह्म । अग्निर्देवता ब्रह्म इत्यार्षम् । गायत्र छन्द परमात्मं सरूपम् । सायुज्यं विनियोगम् ॥ ३३ ॥

सध्यात्रये गायत्र्यावाहन, गायत्र्या ऋषिच्छन्दो देवतागोत्रादीनि

[2]आयातु वरदा देवी अक्षरं ब्रह्म समितम् । गायत्रीं छन्दसा मातेद ब्रह्म जुषस्व मे । यदह्नात्कुरुते पाप तदह्नात्प्रतिमुच्यते । यद्रात्रियात्कुरुते पाप तद्रात्रियात्प्रतिमुच्यते । सर्ववर्णे महादेवि संध्याविद्ये सरस्वति ॥ ३४ ॥

[3]ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धामनामाऽसि विश्वमसि विश्वायु' सर्वमसि सर्वायुरभिभूरोम् । गायत्रीमावाहयामि । सावित्रीमावाहयामि । सरस्वतीमावाहयामि । छन्दर्षीनावाहयामि । श्रियमावाहयामि । गायत्रिया गायत्री च्छन्दो विश्वामित्र ऋषि सविता देवताऽग्निर्मुख ब्रह्मा शिरो विष्णुर्हृदय॰ रुद्रः शिखा पृथिवी योनि प्राणापानव्यानोदानसमाना सप्राणा श्वेतवर्णा सांख्यायनसगोत्रा गायत्री चतुर्वि॰शत्यक्षरा त्रिपदा षट्कुक्षि पञ्चशीर्षोपनयने विनियोग. ॥

प्राणायाममन्त्र --सप्त महाव्याहृतय , सविता धिय प्रेरक , अब्ज्योति प्रणवव्याहृतिरूप ब्रह्म

ओं भूः । ओ भुव. । ओ॰ सुवः । ओं मह । ओं जनः । ओं तप । ओ॰सत्यम् । ओं तत्सवितुर्वरेण्य भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । ओमापो ज्योती रसोऽमृत ब्रह्म भूर्भुव. सुवरोम् ॥ ३५ ॥

(१) नाउ ३३, श्रीकर १।१।१ ( पृ १७, २६ ), १।३।१०, २।३।१

(२) नाउ. ३४

(३) नाउ ३५, श्रीकर १।१।२६ ( पृ ८४ ), २।४।१२, ३।४।२, १९

जपादूर्ध्वं गायत्रीविसर्जनमन्त्र -- उत्तमशिखरगामिनी आयुरादिब्रह्मलोकान्तफलदात्री वेदमाता गायत्री

[1]उत्तमे शिखरे जाते भूम्या पर्वतमूर्धनि ।
ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ देवि यथासुखम् ॥
स्तुतो मया वरदा वेदमाता प्रचोदयन्ती पवने द्विजाता ।
आयु पृथिव्या द्रविण ब्रह्मवर्चस मह्य दत्त्वा प्रजातुं ब्रह्मलोकम् ॥ ३६ ॥

सध्योपासनाऽसमर्थस्य जप्यो आदित्यमन्त्र -- अक्षररूप आदित्य , अब्ज्योति सत्यव्याहृतित्रयरूप ब्रह्म

घृणि सूर्य आदित्यो न प्रभा वात्यक्षरम् । मधु क्षरन्ति तद्रसम् । सत्य वै तद्रसमापो ज्योती रसोऽमृत ब्रह्म भूर्भुव सुवरोम् ॥ ३७ ॥

ब्रह्महत्यादिनिवर्तका त्रिसुपर्णमन्त्रा --मधुसोमात्मक दु स्वप्ननाशक ब्रह्म, सविता दुरितनिवारक , वायुसूर्यनदीप्रभृतीना मधुमयत्वाशा, सोमरूपस्येशस्य ब्रह्मादिविभूतय , हसवस्वादिरूपै द्युलोकादिषु स्थित ऋत बृहत्, घृत धाराभि प्रीयमाण सुपर्ण , त्रिसुपर्णपाठकाना पङ्क्तिपावनत्वम्

ब्रह्ममेतु माम् । मधुमेतु माम् । ब्रह्ममेव मधुमेतु माम् । यास्ते सोम प्रजा वत्सोऽभि सो अहम् । दु.ष्वप्रहन्दुरुष्षह । यास्ते सोम प्राणा॰स्तान् जुहोमि । त्रिसुपर्णमयाचित ब्राह्मणाय दद्यात् । ब्रह्महत्या वा एते घ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति । ते सोमं प्राप्नुवन्ति । आ सहस्रात्पङ्क्तिं पुनन्ति । ओम् ॥ ३८ ॥

(१) नाउ ३६-४५

ह्म मेधया । मधु मेधया । ब्रह्ममेव मधु
ग । अद्या नो देव सवित. प्रजावत्सावी
गम् । परा दुष्ष्वप्निय५ सुव । विश्वानि देव
तर्दुरितानि परासुव । यद्भद्र तन्म आसुव ।
वाता ऋतायते मधु क्षरन्ति सिन्धव ।
ीर्न सन्त्वोषधी· । मधु नक्तमुतोषसि मधुम-
र्थिव५ रज । मधु द्यौरस्तु न. पिता । मधु
ो वनस्पतिर्मधुमा५ अस्तु सूर्य. । माध्वीर्गावो
न्तु न । य इम त्रिसुपर्णमयाचित ब्राह्मणाय
ात् । भ्रूणहत्या वा एते घ्नन्ति । ये ब्राह्मणास्त्रि-
र्णं पठन्ति । ते सोम प्राप्नुवन्ति । आ सहस्रा-
र्क्ति पुनन्ति । ओम् ॥ ३९ ॥

ब्रह्म मेधवा । मधु मेधवा । ब्रह्ममेव मधु
वा । ब्रह्मा देवाना पदवी कवीनामृषिर्विप्राणा
हृषो मृगाणाम् । श्येनो गृध्राणा५ स्वधितिर्वना-
५सोम पवित्रमत्येति रेभन् । ह५स शुचि-
सुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृष-
सदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा
त बृहत् । ऋचे त्वा रुचे त्वा समित्स्रवन्ति
रितो न धेना । अन्तर्हृदा मनसा पूयमाना ।
स्य धारा अभिचाकशीमि । हिरण्ययो वेतसो
स्य आसाम् । तस्मिन्त्सुपर्णो मधुकृत्कुलायी भज-
स्ते मधु देवताभ्य । तस्याऽऽसते हरय सप्त
रे स्वधा दुहाना अमृतस्य धाराम् । य इद
सुपर्णमयाचित ब्राह्मणाय दद्यात् । वीरहत्या वा
ते घ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति । ते
ोम प्राप्नुवन्ति । आ सहस्रात्पङ्क्ति पुनन्ति ।
ओम् ॥ ४० ॥

मेधा देवी

मेधा देवी जुषमाणा न आगाद्विश्वाची भद्रा
सुमनस्यमाना ।
त्वया जुष्टा नुदमाना दुरुक्तान्बृहद्वदेम विदथे
सुवीरा ॥
त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्माऽऽगत-
श्रीरुत त्वया ।
त्वया जुष्टश्चित्र विन्दते वसु सा नो जुषस्व
द्रविणो न मेधे ॥ ४१ ॥

मेधां म इन्द्रो ददातु मेधा देवी सरस्वती ।
मेधा मे अश्विनावुभावाधत्तां पुष्करस्रजौ ॥
अप्सरासु च या मेधा गन्धर्वेषु च यन्मन ।
दैवीं मेधा सरस्वती सा मा मेधा सुरभिर्जु-
षता५ स्वाहा ॥ ४२ ॥

आ मां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा
जगती जगम्या ।
ऊर्जस्वती पयसा पिन्वमाना सा मा मेधा
सुप्रतीका जुषन्ताम् ॥ ४३ ॥
मयि मेधा मयि प्रजां मय्यग्निस्तेजो दधातु ।
मयि मेधा मयि प्रजा मयीन्द्र इन्द्रिय दधातु ।
मयि मेधा मयि प्रजा मयि सूर्यो भ्राजो
दधातु ॥ ४४ ॥

देवो वैवस्वत अमृतरयिदाता

अपैतु मृत्युरमृत न आगन्वैवस्वतो नो अभयं
कृणोतु ।
पर्णं वनस्पतेरिवाभि न शीयता५ रयिः
सचता न शचीपति ॥ ४५ ॥

देवयानेतरेण पथा मृत्युदेवो गच्छतु
इति प्रार्थना

[1]परं मृत्यो अनु परेहि पन्था यस्ते स्व इतरो
देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि मा न प्रजा५
रीरिषो मोत वीरान् ॥ ४६ ॥

मृत्युपापत्राणार्थं प्रजापते वायुप्राणरूपस्य
अग्न्यादीना च प्रार्थना

[2]वात प्राण मनसाऽन्वारभामहे प्रजापतिं यो
भुवनस्य गोपाः ।
स नो मृत्योस्त्रायतां पात्व५हसो ज्योग्जीवा
जरामशीमहि ॥ ४७ ॥
[3]अमुत्रभूयादध यद्यमस्य बृहस्पते अभिशस्तेर-
मुञ्च ।
प्रत्यौहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा
शचीभि. ॥ ४८ ॥

(१) नाउ ४६, श्रीकर ३।३।४४
(२) नाउ ४७.
(३) नाउ. ४८

देवैरनुगतस्य हरे ब्रह्मप्राप्त्यर्थं मार्गरक्षार्थं च प्रार्थना

[1]हरिꣳ हरन्तमनुयन्ति देवा विश्वस्येशान वृषभ मतीनाम् ।
ब्रह्म सरूपमनु मेदमागादयन मा विवधीर्विक्रमस्व ॥ ४९ ॥

अग्न्युपासनया उभयलोकजय, मृत्युतरण च

[2]शल्कैरग्निमिन्धान उभौ लोकौ सनेमहम् ।
उभयोर्लोकयोर्ऋद्ध्वाऽति मृत्यु तराम्यहम् ॥ ५० ॥

मृत्युदेवस्य प्रार्थना

मा छिदो मृत्यो मा वधीर्मा मे बल विवृहो मा प्रमोषी ।
प्रजा मा मे रीरिष आयुरुग्र नृचक्षस त्वा हविषा विधेम ॥ ५१ ॥

आत्मन आत्मीयाना च रक्षार्थं रुद्रप्रार्थना

मा नो महान्तमुत मा नो अर्भक मा न उक्षन्तमुत मा न उक्षितम् ।
मा नो वधी पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिष ॥ ५२ ॥
मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिष. ।
वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते ॥ ५३ ॥

प्रजापते सर्वकामप्राप्तये इन्द्रस्य स्वस्तिकरणाय त्र्यम्बकस्य च मृत्युमोचनाय प्रार्थना

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम् ॥ ५४ ॥
स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी ।
वृषेन्द्र पुर एतु न. स्वस्तिदा अभयकर ॥ ५५ ॥

(१) नाउ ४९, श्रीकर १।२।१ ( पृ ९६ ), २।२।४१
(२) नाउ ५०-५५

[1]त्र्यम्बक यजामहे सुगन्धि पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥ ५६ ॥

यज्ञसामर्थ्यात् सहस्राधिकमृत्युपाशच्छेदाशा

[2]ये ते सहस्रमयुत पाशा मृत्यो मर्त्याय हन्तवे ।
तान्यज्ञस्य मायया सर्वानवयजामहे ॥ ५७ ॥

सर्वपापनिबर्हणार्थो होममन्त्रा —देवमनुष्यपित्रात्मकृतानि ज्ञानाज्ञानकृतानि स्वप्नजाग्रत्सुषुप्तिभवानि पापानि, काम मन्युर्वा एव सर्वपापस्य कर्ता कारयिता च

मृत्यवे स्वाहा । मृत्यवे स्वाहा ॥ ५८ ॥

देवकृतस्यैनसोऽवयजनमसि स्वाहा । मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा । पितृकृतस्यैनसोऽवयजनमसि स्वाहा । आत्मकृतस्यैनसोऽवयजनमसि स्वाहा । अन्यकृतस्यैनसोऽवयजनमसि स्वाहा । अस्मत्कृतस्यैनसोऽवयजनमसि स्वाहा । यद्दिवा च नक्त चैनश्चकृम तस्यावयजनमसि स्वाहा । यत्स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा । यत्सुषुप्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा । यद्विद्वाꣳसश्चाविद्वाꣳसश्चैनश्चकृम तस्यावयजनमसि स्वाहा । एनस एनसोऽवयजनमसि स्वाहा ॥ ५९ ॥

यद्वो देवाश्चकृम जिह्वया गुरुमनसो वा प्रयुती देवहेडनम् ।
अरा वायो नो अभि दुच्छुनायते तस्मिन्तदेनो वसवो निधेतन स्वाहा ॥ ६० ॥

कामोऽकार्षीन्नमो नम । कामोऽकार्षीत् । कामः करोति नाह करोमि । काम कर्ता नाह कर्ता । काम' कारयिता नाहं कारयिता । एष ते काम कामाय स्वाहा ॥ ६१ ॥

मन्युरकार्षीन्नमो नमः । मन्युरकार्षीत् । मन्युः करोति नाहं करोमि । मन्यु कर्ता नाह कर्ता ।

(१) नाउ ५६, श्रीकर २।१।२३, २६, २७, ३।१।१९, १७, ३।२।१५, २३, ३७, ३।३।५३, ३।४।४४, ४।१।१, ४।३।१६, ४।४।२, २२ त्र्यम्बक ( त्रियम्बक ).
(२) नाउ ५७-६४

मन्यु कारयिता नाह कारयिता । एष ते मन्यो मन्यवे स्वाहा ॥ ६२ ॥

विरजाहोम

[illegible]सूने विरजाख्ये तिलहोमे विनियुक्ता मन्त्रा तिलाना पापापहत्व, जातवेदस श्रीकीर्ति-म[illegible]प्रात्यर्थं प्रार्थना, पञ्चप्राणाना मनश्चक्षु-रादीन्द्रियाणा त्वगस्थ्यादिधातूना शिर-पाण्याद्य[illegible]गाना च शुद्धिप्रार्थना, लोहिताक्षि-पुरुषस्य प्रार्थना, पञ्चभूताना मनोवा-क्कायाना आत्मनश्च शुद्धि-प्रार्थना, विरजोविपाप्म-भवनाशा

तिलाञ्जुहोमि सरसा॰ सपिष्टान्गान्धार मम चित्त रमन्तु स्वाहा । गावो * हिरण्य धनमन्न-पान॰ सर्वेषा॰ श्रियै स्वाहा । श्रिय च लक्ष्मिं च पुष्टिं च कीर्तिं चाऽऽनृण्यताम् । ब्रह्मण्य बहुपुत्र-ताम् । श्रद्धामेधे प्रजा सददातु स्वाहा ॥ ६३ ॥

तिला कृष्णास्तिला श्वेतास्तिला सौम्या वशानुगा ।
तिला पुनन्तु मे पाप यत्किंचिद्दुरित मयि स्वाहा ॥

चोरस्यान्न नवश्राद्ध ब्रह्महा गुरुतल्पग ।
गोस्तेय॰ सुरापान भ्रूणहत्या तिला शान्ति॰ शमयन्तु स्वाहा ॥

श्रीश्च लक्ष्मीश्च पुष्टीश्च कीर्तिं चाऽऽनृण्यताम् । ब्रह्मण्यं बहुपुत्रताम् । श्रद्धामेधे प्रज्ञा तु जातवेद. सददातु स्वाहा ॥ ६४ ॥

प्राणापानव्यानोदानसमाना मे शुध्यन्ता ज्योति-रह विरजा विपाप्मा भूयास॰ स्वाहा ॥

वाङ्मनश्चक्षु. श्रोत्रजिह्वाघ्राणरेतो बुद्ध्याकूति. संकल्पा मे शुध्यन्ता ज्योतिरहं विरजा विपाप्मा भूयास॰ स्वाहा ॥

त्वक्चर्ममांसरुधिरमेदोमज्जास्नायवोऽस्थीनि मे शुध्यन्ता ज्योतिरह विरजा विपाप्मा भूयास॰ स्वाहा ॥

शिर पाणिपादपार्श्वपृष्ठोरूदरजङ्घशिश्नोपस्थपायवो मे शुध्यन्ता ज्योतिरह विरजा विपाप्मा भूयास॰ स्वाहा ॥

उत्तिष्ठ पुरुष हरित पिङ्गल लोहिताक्षि देहि देहि ददापयिता मे शुध्यन्ता ज्योतिरह विरजा विपाप्मा भूयास॰ स्वाहा ॥ ६५ ॥

पृथिव्यापस्तेजोवायुराकाशा मे शुध्यन्तां ज्योति-रह विरजा विपाप्मा भूयास॰ स्वाहा ॥

शब्दस्पर्शरूपरसगन्धा मे शुध्यन्ता ज्योतिरह विरजा विपाप्मा भूयास॰ स्वाहा ॥

मनोवाक्कायकर्माणि मे शुध्यन्तां ज्योतिरह विरजा विपाप्मा भूयास॰ स्वाहा ॥

अव्यक्तभावैरहकारैर्ज्योतिरह विरजा विपाप्मा भूयास॰ स्वाहा ॥

आत्मा मे शुध्यन्ता ज्योतिरह विरजा विपाप्मा भूयास॰ स्वाहा ॥

अन्तरात्मा मे शुध्यन्ता ज्योतिरह विरजा विपाप्मा भूयास॰ स्वाहा ॥

परमात्मा मे शुध्यन्ता ज्योतिरह विरजा विपाप्मा भूयास॰ स्वाहा ॥

क्षुधे स्वाहा । क्षुत्पिपासाय स्वाहा । विविट्यै स्वाहा । ऋग्विधानाय स्वाहा । कषोत्काय स्वाहा ।

क्षुत्पिपासामलं ज्येष्ठामलक्ष्मीर्नाशयाम्यहम् ।
अभूतिमसमृद्धिं च सर्वान्निर्णुद मे पाप्मान॰ स्वाहा ॥

अन्नमयप्राणमयमनोमयविज्ञानमयमानन्दमय-मात्मा मे शुध्यन्ता ज्योतिरहं विरजा विपाप्मा भूयास॰ स्वाहा ॥ ६६ ॥

---

* अत्र विरजाहोमे गोहिरण्यपुत्रादिकामनापराणा मन्त्राणा विनियोग दृश्यते । सन्यासविधौ तेषा संगतिर्न जानीम । सायणानुसारेण तु अस्माभि सन्यासपरता कथिता ।

(१) नाउ. ६५, श्रीकर १।२।७ ( पृ १०८ ).

(१) नाउ ६६, श्रीकठ १।१।१२ मयमानन्दमय-मात्मा ( मयानन्दमया ), श्रीकर १।२।७ ( पृ १०८ ), २।४।१५, ३।३।२७, २८

### वैश्वदेव बलिहरण च

वैश्वदेवहोममन्त्रा , बलिहरणमन्त्रा धर्माधर्मादिदेवताका

अग्नये स्वाहा । विश्वेभ्यो देवेभ्य स्वाहा । ध्रुवाय भूमाय स्वाहा । ध्रुवक्षितये स्वाहा । अच्युतक्षितये स्वाहा। अग्नये स्विष्टकृतये स्वाहा । धर्माय स्वाहा । अधर्माय स्वाहा । अद्भ्यः स्वाहा। ओषधिवनस्पतिभ्य स्वाहा । रक्षोदेवजनेभ्य स्वाहा । गृह्याभ्य स्वाहा । अवसानेभ्य स्वाहा । अवसानपतिभ्यः स्वाहा । सर्वभूतेभ्यः स्वाहा । कामाय स्वाहा । अन्तरिक्षाय स्वाहा । यदेजति जगति यच्च चेष्टति नाम्नो भागोऽय नाम्ने स्वाहा । पृथिव्यै स्वाहा । अन्तरिक्षाय स्वाहा। दिवे स्वाहा । सूर्याय स्वाहा । चन्द्रमसे स्वाहा । नक्षत्रेभ्य' स्वाहा । इन्द्राय स्वाहा । बृहस्पतये स्वाहा । प्रजापतये स्वाहा । ब्रह्मणे स्वाहा । स्वधा पितृभ्य' स्वाहा । नमो रुद्राय पशुपतये स्वाहा । देवेभ्य स्वाहा । पितृभ्य स्वधाऽस्तु। भूतेभ्यो नमः । मनुष्येभ्यो हन्ता । प्रजापतये स्वाहा । परमेष्ठिने स्वाहा ।

यथा कूप शतधार सहस्रधारो अक्षित ।
एवा मे अस्तु धान्य॑ सहस्रधारमक्षितम् ॥
धनधान्यै स्वाहा ॥
ये भूता. प्रचरन्ति दिवानक्त बलिमिच्छन्तो वितुदस्य प्रेष्याः ।
तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहा ॥ ६७ ॥

पापक्षयार्थं जप्यो मन्त्र — सर्वभूतस्थित सत्य अब्ज्योतिर्व्याहृतिप्रणवरूप ब्रह्म

ओं तत्सत्यम् । ओं तद्ब्रह्म । ओं तद्वायु । ओं तदात्मा। ओं तत्सर्वम्। ओं तत्पुरोर्नम.। अन्तश्चरति भूतेषु गुहाया विश्वमूर्तिषु । त्व यज्ञस्त्वं वषट्कारस्त्वमिन्द्रस्त्व॑ रुद्रस्त्व विष्णुस्त्व ब्रह्म त्वं प्रजापति । त्व तदाप आपो ज्योती रसोऽमृत ब्रह्म भूर्भुव. सुवरोम् ॥ ६८ ॥

(१) नाउ ६७

(२) नाउ ६८, श्रीकर १।१।१ (पृ ७), १।१।१६, ३।३।३८

### भोजनविधि

( ६९—७७ अनुवाका )

प्राणाहुतिमन्त्रा , भोजनादौ भोजनान्ते च जलप्राशनमन्त्रौ—पञ्चप्राणरूपा श्रद्धा, अन्न जल च अमृतम्

श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि । श्रद्धायामपाने निविष्टोऽमृत जुहोमि । श्रद्धाया व्याने निविष्टोऽमृत जुहोमि । श्रद्धायामुदाने निविष्टोऽमृत जुहोमि । श्रद्धाया॑ समाने निविष्टोऽमृत जुहोमि । ब्रह्मणि म आत्माऽमृतत्वाय । अमृतोपस्तरणमसि । श्रद्धायां प्राणे निविष्टोऽमृत जुहोमि । शिवो मा विशाप्रदाहाय । प्राणाय स्वाहा । श्रद्धायामपाने निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । अपानाय स्वाहा । श्रद्धाया व्याने निविष्टोऽमृत जुहोमि । शिवो मा विशाप्रदाहाय । व्यानाय स्वाहा । श्रद्धायामुदाने निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । उदानाय स्वाहा । श्रद्धाया॑ समाने निविष्टोऽमृत जुहोमि । शिवो मा विशाप्रदाहाय । समानाय स्वाहा । ब्रह्मणि म आत्माऽमृतत्वाय । अमृतापिधानमसि ॥ ६९ ॥

' आमनन्ति चैनमस्मिन् '— तैत्तिरीया एन परमेश्वरमस्मिन्नुपासकशरीरे प्राणाहुतिवेलाया भोक्तृतया ' शिवो मा विशाप्रदाहाय ' इति ( नाउ. ६९ ) ' प्रभु प्रीणाति विश्वभुक् ' ( नाउ ७१ ) इति चामनन्ति । अतः सकलाचार्यमतेन न्यायेन च जाठराग्निरूपेण परमेश्वर एवाराध्य. प्राणाग्निहोत्रेणेति समीचीनम् । श्रीकठ. १।२।३३

भुक्तान्नाभिमन्त्रणमन्त्र

श्रद्धाया प्राणे निविश्यामृत॑ हुतम् । प्राणमन्नेनाऽऽप्यायस्व । श्रद्धायामपाने निविश्यामृत॑ हुतम् । अपानमन्नेनाऽऽप्यायस्व । श्रद्धाया व्याने निविश्यामृत॑ हुतम् । व्यानमन्नेनाऽऽप्यायस्व ।

(१) नाउ ६९, श्रीकठ १।२।३३, श्रीकर १।२।३२.

(२) नाउ ७०

श्रद्धायामुदाने निविश्यामृत॑ हुतम् । उदानमन्नेनाऽऽप्यायस्व । श्रद्धाया॑ समाने निविश्यामृत॑ हुतम् । समानमन्नेनाऽऽप्यायस्व ॥ ७० ॥

भोजनान्ते परमेश्वरानुसधानमन्त्र — भोजने प्रीत ईशः

[1]अङ्गुष्ठमात्र. पुरुषोऽङ्गुष्ठ च समाश्रित' ।
ईश सर्वस्य जगत प्रभु प्रीणाति विश्वभुक् ॥ ७१ ॥

सर्वाङ्गस्वास्थ्यप्रतिपादका मन्त्रा

[2]वाङ्म आसन् । नसो प्राण । अक्ष्योश्चक्षु । कर्णयो. श्रोत्रम् । बाहुवोर्बलम् । ऊरुवोरोज. । अरिष्टा विश्वान्यङ्गानि तनू' । तनुवा मे सह नमस्ते अस्तु मा मा हि॑सी. ॥ ७२ ॥

धनप्राप्त्यर्थं इन्द्रप्रार्थना

[3]वयः सुपर्णा उपसेदुरिन्द्र प्रियमेधा ऋषयो नाधमाना ।
अपध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेऽवबद्धान् ॥ ७३ ॥

हृदयालम्भनमन्त्र —रुद्र प्राणग्रन्थि

[4]प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तक ।
तेनान्नेनाऽऽप्यायस्व ॥ ७४ ॥

' अनवस्थितेरसभवाच्च नेतर '— अस्य महोपनिषदि श्रूयते विषयः— 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठ च समाश्रितः । ईशः सर्वस्य जगतः प्रभु' प्रीणाति विश्वभुक् ॥' इत्यादि । इहाङ्गुष्ठमात्रत्वादिविशिष्ट. परमेश्वरो वाऽन्यो वेति सशयः । प्राणाग्निहोत्रप्रकरणात् ' अङ्गुष्ठमात्र. ' इत्यल्पत्वव्यपदेशाच्च अय प्राणवायुरेव पञ्चानामाहुतीनां भोक्ताऽवगम्यते । न चास्य भोक्तृत्वानुपपत्ति', ' आपश्च पृथिवी चान्नमत्तारौ वह्निमारुतौ ' इत्यादिषु वायोरपि भोक्तृत्वप्रसिद्धे । सर्वथाऽय प्राणवायुरिति पूर्व पक्ष । परमेश्वर एवेति सिद्धान्त., सकलजगदीशत्वविश्वभुक्त्वादीना धर्माणा मन्यत्राभिधानेऽनवस्थानात्, असभवाच्च तत्र तेषाम् । अत ईश्वर एवैतादृशः । तस्य प्राणरूपत्वेनाप्युपास्यत्वमुच्यते, ' प्राणाना ग्रन्थिरसि रुद्रो मा विशान्तक. ' ( नाउ ७४ ) इति प्राणाधारत्वेन तस्य श्रवणात् । अङ्गुष्ठमात्रपरिमाणस्योपास्यत्वादित्यविरोधः । प्राणवायो' भोक्तृत्वसिद्धावपि 'विश्वभुक्' इत्येतत् न सभवति । अतोऽयमीश्वर एव प्राणाग्निहोत्राराध्यत्वेन प्राणरूप प्रतिपाद्यत इति सिद्धम् ।

श्रीकट. १।२।१८

रुद्रस्य विष्णो अग्ने यज्ञस्य च प्रार्थना

[1]नमो रुद्राय विष्णवे मृत्युर्मे पाहि ॥ ७५ ॥
त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ।
त्व वनेभ्यस्त्वमोषधीभ्यस्त्व नृणा नृपते जायसे शुचि ॥ ७६ ॥

शिवेन मे सतिष्ठस्व । स्योनेन मे सतिष्ठस्व । सुभूतेन मे सतिष्ठस्व । ब्रह्मवर्चसेन मे सतिष्ठस्व । यज्ञस्यर्धिमनु सतिष्ठस्व । उप ते यज्ञ नम. । उप ते नम । उप ते नमः ॥ ७७ ॥

सन्यासप्रकरणम्

( ७८ — ८० अनुवाका )

सत्य तप दम शम दान धर्म. प्रजनन अग्न्याधान अग्निहोत्र यज्ञ उपासन च इत्येतानि प्रशस्तानि साधनानि, तेभ्य सन्यास श्रेयान् पर प्रशस्त

[2]सत्य परम् । पर॑ सत्यम् । सत्येन न सुवर्गाल्लोकाच्च्यवन्ते कदाचन । सता॑ हि सत्यम् । तस्मात्सत्ये रमन्ते । तप इति तपो नानशनात्परम् ।

---

(१) नाउ ७१, श्रीकठ. १।२।१८, ३३ प्रभु (प्रभु), श्रीकर १।२।७ ( पृ १०७ ), १।२।१७, ३२, १।३।२४, २५, ३।३।४० प्रभु ( प्रभु )

(२) नाउ ७२

(३) नाउ. ७३

(४) नाउ ७४, ब्रमच्व १।३।१, २।३।१३, श्रीकठ १।२।१८, २।४।९, श्रीकर १।२।१७, ३२, २।४।८, ३।३।११, ४०, ४।२।४

(१) नाउ ७५-७७

(२) नाउ ७८, ब्रशाकर ३।४।२०, भास्कर ३।४।२०, श्रीकर ३।४।१७

यद्धि परं तपस्तद्दुर्धर्षं तद्दुराधर्षम् । तस्मात्तपसि रमन्ते । दम इति नियत ब्रह्मचारिण । तस्माद्दमे रमन्ते । शम इत्यरण्ये मुनय । तस्माच्छमे रमन्ते । दानमिति सर्वाणि भूतानि प्रशꣳसन्ति । दानान्नातिदुश्चरम् । तस्माद्दाने रमन्ते । धर्म इति धर्मेण सर्वमिद परिगृहीतम् । धर्मान्नातिदुष्करम् । तस्माद्धर्मे रमन्ते । प्रजन इति भूयाꣳस । तस्माद्भूयिष्ठा प्रजायन्ते । तस्माद्भूयिष्ठा. प्रजनने रमन्ते । अग्नय इत्याह । तस्मादग्नय आधातव्या' । अग्निहोत्रमित्याह । तस्मादग्निहोत्रे रमन्ते । यज्ञ इति यज्ञो हि देवा । तस्माद्यज्ञे रमन्ते । मानसमिति विद्वाꣳस । तस्माद्विद्वाꣳस एव मानसे रमन्ते । न्यास इति ब्रह्मा । ब्रह्मा हि पर' । परो हि ब्रह्मा । तानि वा एतान्यवराणि पराꣳसि । न्यास एवात्यरेचयत् । य एव वेद । इत्युपनिषत् ॥ ७८ ॥

'विधिर्वा धारणवत्'— ब्रह्मसस्थ इति हिं ब्रह्मणि परिसमाप्तिरनन्यव्यापारतारूप तन्निष्ठत्वमभिधीयते । तच्च त्रयाणामाश्रमाणां न सभवति । स्वाश्रम विहितकर्माननुष्ठाने प्रत्यवायश्रवणात् । परिव्राजकस्य तु सर्वकर्मसन्यासात्प्रत्यवायो न सभवत्यननुष्ठाननिमित्तः । शमदमादिस्तु तदीयो धर्मो ब्रह्मसस्थताया उपोद्बलको न विरोधी । ब्रह्मनिष्ठत्वमेव हि तस्य शमाद्युपबृहित स्वाश्रमविहित कर्म यज्ञादीनि चेतरेषा तद्व्यतिक्रमे च तस्य प्रत्यवाय' । तथा च 'न्यास इति ब्रह्मा । ब्रह्मा हि परः । परो हि ब्रह्मा । तानि वा एतान्यवराणि तपासि न्यास एवात्यरेचयत्' ( नाउ ७८ ) 'वेदान्त विज्ञानसुनिश्चितार्था. सन्यासयोगाद्यतय. शुद्धसत्त्वा' ( मुउ. ३।२।६, नाउ १२।३; कैउ १।३ ) इत्याद्या श्रुतय. । स्मृतयश्च— 'तद्बुद्धयस्तदात्मानस्त न्निष्ठास्तत्परायणा' ( भ गी ५।१७ ) इत्याद्या. ब्रह्मसस्थस्य कर्माभाव दर्शयन्ति । तस्मात्परिव्राजकस्याऽऽश्रममात्रादमृतत्वप्राप्तेर्ज्ञानानर्थक्यप्रसङ्ग इत्येषोऽपि दोषो नावतरति । तदेव परामर्शेऽपीतरेषामाश्रमाणा पारिव्राज्य तावद्ब्रह्मसस्थतालक्षण लभ्येतैव । अनपेक्ष्यैव जाबालश्रुतिमाश्रमान्तरविधायिनीमयमाचार्येण विचार. प्रवर्तितः । विद्यत एव त्वाश्रमान्तरविधिश्रुतिः प्रत्यक्षा । 'ब्रह्मचर्यं समाप्य गृही भवेद्गृही भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा' ( जाउ ४ ) इति । न चेय श्रुतिरनधिकृतविषया शक्या वक्तुम् । अविशेषश्रवणात् । पृथग्विधानाच्चानधिकृतानाम् । 'अथ पुनरेव व्रती वाऽव्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा' ( जाउ ४ ) इत्यादिना । ब्रह्मज्ञानपरिपाकाङ्गत्वाच्च पारिव्राज्यस्य नानधिकृतविषयत्वम् । तच्च दर्शयति 'अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः । शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति' ( जाउ ५ ) इति । तस्मात्सिद्धा ऊर्ध्वरेतसामाश्रमा. । सिद्ध चोर्ध्वरेत॰सु विधानाद्विद्याया. स्वातन्त्र्यमिति ।

ब्रशकर ३।४।२०

प्रजापतिमतम् — सत्यतपोदमादिषु परमेषु साधनेषु श्रेष्ठ परम साधन सन्यास

प्राजापत्यो हाऽऽरुणि सुपर्णेय. प्रजापतिं पितरमुपससार । किं भगवन्त परमं वदन्तीति । तस्मै प्रोवाच । सत्येन वायुरावाति । सत्येनाऽऽदित्यो रोचते दिवि । सत्य वाच. प्रतिष्ठा । सत्ये सर्वं प्रतिष्ठितम् । तस्मात्सत्यं परम वदन्ति । तपसा देवा देवतामग्र आयन् । तपसर्षय. सुवरन्वविन्दन् । तपसा सपत्नान्प्रणुदामारातीः । तपसि सर्वं प्रतिष्ठितम् । तस्मात्तपः परम वदन्ति । दमेन दान्ता किल्बिषमवधून्वन्ति । दमेन ब्रह्मचारिण सुवरगच्छन् । दमो भूतानां दुराधर्षम् । दमे सर्वं प्रतिष्ठितम् । तस्माद्दमः परम वदन्ति । शमेन शान्ता शिवमाचरन्ति । शमेन नाकं मुनयोऽन्वविन्दन् । शमो भूतानां दुराधर्षम् । शमे सर्वं प्रतिष्ठितम् । तस्माच्छमः परम वदन्ति । दान यज्ञाना वरूथं दक्षिणा । लोके दातारꣳ सर्वभूतान्युपजीवन्ति । दानेनारातीरपा-

(१) नाउ ७९, भास्कर ३।३।२४, ३।४।२६, रामानुज १।१।१२, ३।३।२४, ३।४।३५, निंबार्क. ३।४।३५, श्रीकठ ३।३।२४, ३।४।३५, श्रीकर ३।३।९, २४, ३।४।१७, ३४

नुदन्त । दानेन द्विषन्तो मित्रा भवन्ति । दाने सर्व प्रतिष्ठितम् । तस्माद्दानं परमं वदन्ति । धर्मो विश्वस्य जगतः प्रतिष्ठा । लोके धर्मिष्ठं प्रजा उपसर्पन्ति । धर्मेण पापमपनुदति । धर्मे सर्वं प्रतिष्ठितम् । तस्माद्धर्मं परमं वदन्ति । प्रजननं वै प्रतिष्ठा । लोके साधु प्रजायास्तन्तुं तन्वानः पितृणा-मनृणो भवति । तदेव तस्या अनृणम् । तस्मात्प्रजननं परमं वदन्ति । अग्नयो वै त्रयी विद्या । देवयानः पन्था । गार्हपत्य ऋक् पृथिवी रथन्त-रम् । अन्वाहार्यपचनः यजुरन्तरिक्षं वामदेव्यम् । आहवनीयः साम सुवर्गो लोको बृहत् । तस्मा दग्नीन्परमं वदन्ति । अग्निहोत्रं साय प्रातर्गृहाणां निष्कृतिः स्विष्टं सुहुतं यज्ञक्रतूनां प्रायणं सुवर्गस्य लोकस्य ज्योतिः । तस्मादग्निहोत्रं परमं वदन्ति । यज्ञ इति यज्ञेन हि देवा दिवं गताः । यज्ञेनासुरा-नपानुदन्त । यज्ञेन द्विषन्तो मित्रा भवन्ति । यज्ञे सर्वं प्रतिष्ठितम् । तस्माद्यज्ञं परमं वदन्ति । मानसं वै प्राजापत्यं पवित्रम् । मानसेन मनसा साधु पश्यति । मानसा ऋषयः प्रजा असृजन्त । मानसे सर्वं प्रतिष्ठितम् । तस्मान्मानसं परमं वदन्ति । न्यास इत्याहुर्मनीषिणो ब्रह्माणम् । ब्रह्मा विश्वः कतमः स्वयंभुः प्रजापतिः संवत्सर इति ।

आदित्यपुरुष ब्रह्म, आदित्यकृतात् पर्जन्यात्
अन्नलाभात् प्राणधारण तेन च ब्रह्मविद्या-
पर्यन्तपर्यवसान, परमपुरुषज्ञानादेव
मृत्युमुक्ति, प्रणवोपासना

संवत्सरोऽसावादित्यो य एष आदित्ये पुरुषः । स परमेष्ठी ब्रह्माऽऽत्मा । याभिरादित्यस्तपति रश्मिभि स्ताभिः पर्जन्यो वर्षति । पर्जन्येनौषधिवनस्पतय प्रजायन्ते । ओषधिवनस्पतिभिरन्नं भवति । अन्नेन प्राणाः । प्राणैर्बलम् । बलेन तपः । तपसा श्रद्धा । श्रद्धया मेधा । मेधया मनीषा । मनीषया मनः । मनसा शान्तिः । शान्त्या चित्तम् । चित्तेन स्मृतिम् । स्मृत्या स्मारम् । स्मारेण विज्ञानम् । विज्ञानेनाऽऽत्मानं वेदयति । तस्मादन्नं ददन्त्सर्वा-ण्येतानि ददाति । अन्नात्प्राणा भवन्ति भूतानाम् । प्राणैर्मनः । मनसश्च विज्ञानम् । विज्ञानादानन्दो ब्रह्म योनि । स वा एष पुरुषः पञ्चधा पञ्चात्मा । येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं च द्यौश्च दिश-श्चावान्तरदिशाश्च । स वै सर्वमिदं जगत्स भूतं स भव्यं जिज्ञासक्लृप्त ऋतजा रयिष्ठा श्रद्धा सत्यो महस्वान्तपसो वरिष्ठात् । ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाहि विद्वान् । तस्मान्न्या-समेषां तपसामतिरिक्तमाहुः । वसुरण्वो विभूरसि । प्राणे त्वमसि संधाता । ब्रह्मन्त्वमसि विश्वधृत् । तेजोदास्त्वमस्यग्निरसि । वर्चोदास्त्वमसि सूर्यस्य । द्युम्नोदास्त्वमसि चन्द्रमसः । उपयामगृहीतोऽसि । ब्रह्मणे त्वा महसे । ओमित्यात्मानं युञ्जीत । एतद्वै महोपनिषदं देवानां गुह्यम् । य एवं वेद ब्रह्मणो महिमानमाप्नोति । तस्माद्ब्रह्मणो महिमानम् । इत्युपनिषत् ॥ ७९ ॥

विद्वान् सन्यासी यज्ञरूप इत्युपासना

* तस्यैवं विदुषो यज्ञस्याऽऽत्मा यजमानः । श्रद्धा पत्नी । शरीरमिध्मम् । उरो वेदिः । लोमानि बर्हिः । वेदः शिखा । हृदयं यूपः । काम आज्यम् । मन्युः पशुः । तपोऽग्निः । दमः शमयिता दक्षिणा । वाग्घोता । प्राण उद्गाता । चक्षुरध्वर्युः । मनो ब्रह्मा । श्रोत्रमग्नीत् । यावद्ध्रियते सा दीक्षा । यदश्नाति तद्धविः । यत्पिबति तदस्य सोमपानम् । यद्रमते तदु-पसदः । यत्संचरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यः । यन्मुखं तदाहवनीयः । या व्याहृतिराहुतिः । यदस्य विज्ञानं तज्जुहोति । यत्सायं प्रातरत्ति तत्समिधम् । यत्प्रातर्मध्यंदिनं सायं च तानि सवनानि । ये अहोरात्रे ते दर्शपूर्णमासौ । येऽर्धमासाश्च

---

* छान्दो ३।१६।१ ( पृ ८१४ ) इत्यत्र व्याख्यानादिकं द्रष्टव्यम् ।

(१) नाउ. ८०, ब्रशाकर ३।३।२४, भास्कर ३।३।२४, रामानुज ३।३।२४, ४।२।१९ पितृणा (पितॄणा), निंबार्क ३।३।२४, श्रीकंठ ३।३।२४, श्रीकर ३।१।२०, ३।३।२४, ५०, ४।२।१९, वल्लभ ३।४।२४, बलदेव ४।४।४

मासाश्च ते चातुर्मास्यानि । य ऋतवस्ते पशु-बन्धाः । ये सवत्सराश्च परिवत्सराश्च तेऽहर्गणाः। सर्ववेदसं वा एतत्सत्रम् । यन्मरणं तदवभृथ.। एतद्वै जरामर्यमग्निहोत्र॰ सत्रम् । य एव विद्वा नुदगयने प्रमीयते देवानामेव महिमानं गत्वाऽऽ-दित्यस्य सायुज्यं गच्छति। अथ यो दक्षिणे प्रमीयते पितृणामेव महिमान गत्वा चन्द्रमस· सायुज्य॰ सलोकतामाप्नोति। एतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति। तस्माद्ब्रह्मणो महिमान-माप्नोति। तस्माद्ब्रह्मणो महिमानम् ॥ ८० ॥

नारायणोपनिषत्समाप्ता ।



चयन ब्रह्माराधन, सप्रणवाऽऽत्मोपासनाविधि

ब्रह्मयज्ञो वा एष यत्पूर्वेषां चयनम् । तस्माद्यजमानश्चित्वैतानग्नीनात्मानमभिध्यायेत् । स पूर्ण खलु वा अद्धाऽविकलः सपद्यते यज्ञः । क' सोऽभिध्येयोऽयं यः प्राणाख्यः । तस्योपाख्यानम् ॥ १ ॥

बृहद्रथोपाख्यानम्

( १–६ प्रपाठकान्त )

बृहद्रथस्य वनाश्रमस्वीकार , गुरुशाकायन्यदर्शन, आत्मज्ञानवरप्रार्थना

बृहद्रथो वै नाम राजा विराज्ये पुत्रं निधापयित्वा इदमशाश्वत मन्यमान शरीरं वैराग्यमुपेतोऽरण्य निर्जगाम । स तत्र परम तप आस्थायाऽऽदित्यमुदीक्षमाण ऊर्ध्वबाहुस्तिष्ठति । अन्ते सहस्रस्यान्तिकमाजगामाग्निरिवाधूमकस्तेजसा निर्दहन्निवाऽऽत्मविद्भगवान् शाकायन्यः । उत्तिष्ठोत्तिष्ठ वरं वृणीष्वेति राजानमब्रवीत् । स तस्मै नम' कृत्वोवाच । भगवन्नाहमात्मवित् । त्व तत्त्वविच्छुश्रुमो वयम् । स त्व नो ब्रूहीति । एतद्वृत्त पुरस्ताद्दु शक्यमेतत्प्रश्नम् । ऐक्ष्वाकान्यान्कामान्वृणीष्वेति शाकायन्य । शिरसाऽस्य चरणावभिमृशमानो राजेमा गाथां जगाद ॥ २ ॥

कामोपभोगनिन्दा शरीरदोषोपवर्णनसहिता चक्रवर्तिना राज्ञा गन्धर्वासुरादीना महार्णवपर्वतादीना वा क्षयिष्णुत्वविचारोद्बलिता, ससारदोषदर्शन, गुर्वभिगमन ससारतितीर्षया

भगवन्नस्थिचर्मस्नायुमज्जमांसशुक्रशोणितश्लेष्माश्रुदूषिकाविण्मूत्रवातपित्तकफसघाते दुर्गन्धे निःसारेऽस्मिञ्शरीरे किं कामोपभोगैः । कामक्रोधलोभमोहभयविषादेर्ष्येष्टवियोगानिष्टसंप्रयोगक्षुत्पिपासाजरामृत्युरोगशोकाद्यैरभिहतेऽस्मिञ्शरीरे किं कामोपभोगैः ॥ ३ ॥

सर्वं चेद क्षयिष्णु पश्याम । यथेमे दंशमशकादयस्तृणवनस्पतयोद्भूतप्रध्वंसिन' । अथ किमेतैर्वा । परेऽन्ये महाधनुर्धराश्चक्रवर्तिनः केचित्सुद्युम्नभूरिद्युम्नेन्द्रद्युम्नकुवलयाश्वयौवनाश्ववध्र्यश्वाश्वपतिशशबिन्दुहरिश्चन्द्राम्बरीषननक्तुसर्यातिययात्यनरण्यक्षसेनादय । अथ मरुत्तभरतप्रभृतयो राजानो मिषतो बन्धुवर्गस्य महतीं श्रिय त्यक्त्वाऽस्माल्लोकादमु लोक प्रयाता इति । अथ किमेतैर्वा । परेऽन्ये गन्धर्वासुरयक्षराक्षसभूतगणपिशाचोरगग्रहादीनां निरोधं पश्याम । अथ किमेतैर्वा । अन्यानां शोषण महार्णवानाम् । शिखरिणा प्रपतनम् । ध्रुवस्य प्रचलनम् । व्रश्चन वातरज्जूनाम् । निमज्जन पृथिव्या । स्थानादपसरणं सुराणाम् । इत्येतद्विधेऽस्मिन्संसारे कि कामोपभोगैर्यैरेवाशितस्यासकृदिहाऽऽवर्तनं दृश्यते । इत्युद्धर्तुमर्हसि । अन्धोदपानस्थो भेक

---

* यद्यपि अस्माभि उपनिषत्काण्डे ता एव उपनिषद सगृहीता' याः शंकरभगवत्पूज्यपादै व्याख्याता , यासां वा वाक्यानि विषयतया ब्रह्मसूत्रभाष्यकृद्भिरुद्धृतानि । इयं तूपनिषत् न शंकरेण व्याख्याता न चास्या वाक्यानि ब्रह्मसूत्रविषयतया समुद्धृतानि केनापि भाष्यकृता । तथापि अस्या उपनिषद अत्र संग्रह कृत पाश्चात्यैः मोक्षमुलरादिभि' अस्या' प्राचीनासूपनिषत्सु संग्रहणात् । ' मघाद्य श्रविष्ठार्धं आग्नेय क्रमेणोत्क्रमेण सार्पाद्य श्रविष्ठार्धान्तं सौम्यं ' ( ६।१४ ) इति वाक्यलिङ्गात् अयनद्वयारम्भगणनायाः ख्रैस्ताब्दपूर्वसप्तदशशत- ( १७०० ) सवत्सरकालभावित्वेन तिलकोपाह्वेन गङ्गाधरसूनुना बालेन निश्चितत्वाच्च ।

(१) मैत्र १।१-४.

इवाहमस्मिन्सꣳसारे भगवꣳस्त्वं नो गतिस्त्व नो गति ॥ ४ ॥

इति प्रथम. प्रपाठक. ॥

---

## द्वितीयः प्रपाठकः

सप्रसाद तमोनाशक ज्योति स्वभाव आत्मा

[१]अथ भगवाञ्शाकायन्य सुप्रीतस्त्वब्रवीद्राजानम्। महाराज बृहद्रथेक्ष्वाकुवꣳशध्वज शीघ्रमात्मज्ञ कृतकृत्यस्त्व मरुन्नाम्नेति विश्रुतोऽसीति। अय वाव खल्वात्मा ते। य कतमो भगवा इति। तꣳ होवाचेति ॥ १ ॥

अथ य एष उच्छ्वासाविष्टम्भनेनोर्ध्वमुत्क्रान्तो व्ययमानोऽव्ययमानस्तम प्रणुदत्येष आत्मा। इत्याह भगवान्मैत्रि। इत्येवꣳ ह्याह। अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति। एष आत्मेति होवाच। एतदमृतमभयमेतद्ब्रह्मेति ॥ २ ॥

अचेतनस्य शरीरस्य प्रचोदयिता अज प्रपञ्चातीत आत्मा

अथ खल्विय ब्रह्मविद्या सर्वोपनिषद्विद्या वा राजन्। अस्माक भगवता मैत्रिणाऽऽख्याता। अह ते कथयिष्यामीति। अथापहतपाप्मानस्तिग्म तेजसा ऊर्ध्वरेतसो वालखिल्या इति श्रूयन्ते। अथ क्रतु प्रजापतिमब्रुवन्। भगवञ्शकटमिवाचेतनमिदꣳ शरीरम्। कस्यैष खल्वीदृशो महिमाऽतीन्द्रियभूतस्य येनैतद्विधमेतच्चेतनवत्प्रतिष्ठापितम्। प्रचोदयिता वाऽस्य यद्भगन्वेत्सि तदस्माक ब्रूहीति। तान्होवाचेति ॥ ३ ॥

यो ह खलु वावोपरिस्थ श्रूयते गुणेष्विवोर्ध्व रेतस स वा एष शुद्ध पूत शून्य शान्तोऽप्राणो निरात्माऽनन्तोऽक्षय्यः स्थिर. शाश्वतोऽज' स्वतन्त्र स्वे महिम्नि तिष्ठति। अजेनेदꣳ शरीरं चेतनवत्प्रतिष्ठापितम्। प्रचोदयिता वैषोऽप्यस्येति। ते होचुर्भगवन्कथमनेनेदृशेनानिष्ठेनैतद्विधमिद चेतनवत्प्रतिष्ठापित प्रचोदयिता वैषोऽस्य कथमिति। तान्होवाच ॥ ४ ॥

अचेतनस्य शरीरस्य प्रचोदयिता पुरुषसज्ञ चेतामात्र विश्वाख्य प्रजापति क्षेत्रज्ञ सकल्पाध्यवसायाभिमानलिङ्ग आत्मा

स वा एष सूक्ष्मोऽग्राह्योऽदृश्य' पुरुषसज्ञोऽबुद्धिपूर्वमिहैवाऽऽवर्ततेऽꣳशेनेति। सुप्तस्येवाबुद्धिपूर्वं विबोध एवमिति। अथ यो ह खलु वावैतस्य सोꣳशोऽयं यश्चेतामात्रः प्रतिपूरुष क्षेत्रज्ञ सकल्पाध्यवसायाभिमानलिङ्ग प्रजापतिर्विश्वाख्य। चेतनेनेदꣳ शरीरं चेतनवत्प्रतिष्ठापित प्रचोदयिता वैषोऽप्यस्येति। ते होचु । भगवन्यद्यनेनेदृशेनानिष्ठेनैतद्विधमिद चेतनवत्प्रतिष्ठापित प्रचोदयिता वैषोऽस्य कथमिति। तान्होवाचेति ॥ ५ ॥

प्रजापति स्रष्टा सृष्टप्रजासु प्रविष्ट प्राणरूपेण वैश्वानराग्निरूपो भोक्ता शरीररथस्थो रथी आत्मा

[१]प्रजापतिर्वा एकोऽग्रेऽतिष्ठत्। स नारमतैक। सोत्मानमभिध्यात्वा बह्वी प्रजा असृजत। ता अश्मेवाप्रबुद्धा अप्राणा स्थाणुरिव तिष्ठमाना अपश्यत्। स नारमत। सोऽमन्यत। एतासा प्रतिबोधनायाभ्यन्तरं विविशामि। सवायुरिवात्मान कृत्वाऽभ्यन्तरं प्राविशत्। स एको नाशकत्। स पञ्चधाऽऽत्मान विभज्योच्यते य प्राणोऽपान. समान उदानो व्यान इति। अथाय य ऊर्ध्वमुत्क्रामत्येष वाव स प्राण। अथ योऽयमवाङ्सक्रामत्येष वाव सोऽपान। अथ येन वैताऽनुगृहीतेत्येष वाव स व्यान। अथ योऽयꣳ स्थविष्ठो धातुरन्नस्यापाने प्रापयत्यणिष्ठो वाऽङ्गेऽङ्गे समानयत्येष वाव स समानसंज्ञ'। उत्तरं व्यानस्य रूप चैतेषामन्तरा प्रसूतिरेवोदानस्य। अथ योऽय पीताशितमुद्गिरति निगिरतीति वावैष स उदानः। अथोपाꣳशुरन्तर्याममभिभवत्यन्तर्याम उपाꣳशु च। एतयोरन्तराले चौष्ण्य

(१) मैउ २।१–५

(१) मैउ २।६, विज्ञान २।३।४१ सोत्मान ( स आत्मान ) विविशामि ( विशामि )

प्राप्नुवन् । यदौष्ण्यं स पुरुष । अथ यः पुरुषः सोऽग्निर्वैश्वानर । अन्यत्राप्युक्तम् । अयमग्निर्वैश्वानरो योऽयमन्त पुरुषे । येनेदमन्न पच्यते यदिदमश्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति । स यदोत्क्रमिष्यन्भवति नैन घोष शृणोति । स वा एष पञ्चधाऽऽत्मान विभज्य निहितो गुहायाम् । मनोमय प्राणशरीरो भारूपः सत्यसकल्प आकाशात्मेति । स वा एषोऽस्माद्धृदन्तरादकृतार्थोऽमन्यतार्थानश्नानीति । अत स्वानीमानि भित्त्वोदित पञ्चभी रश्मिभिर्विषयानत्ति । इति बुद्धीन्द्रियाणि यानीमान्येतान्यस्य रश्मयः । कर्मेन्द्रियाण्यस्य हया । रथः शरीरम् । मनो नियन्ता । प्रकृतिमयोऽस्य प्रतोद । अनेन खल्वीरित परिभ्रमतीद शरीरं चक्रमिव मृत्पचेन । इद शरीर चेतनवत्प्रतिष्ठापित प्रचोदयिता वैषोऽप्यस्येति ॥ ६ ॥

(१) (२) ...समना गुणातत

(३) (४) आत्मा

स वा एष आत्मेत्येहोशन्ति कवयः सितासितै कर्मफलैरनभिभूत इव प्रतिशरीरेषु चरति । अव्यक्तत्वात्सौक्ष्म्याद्दृश्यत्वादग्राह्यत्वान्निर्ममत्वाच्चानवस्थोऽसति कर्ताऽकर्तैवावस्थ । स वा एष शुद्ध स्थिरोऽचलश्चालेप्योऽव्यग्रो निस्पृहः प्रेक्षकवदवस्थितः स्वस्थश्च । ऋतभुग्गुणमयेन पटेनाऽऽत्मानमन्तार्धायावस्थित इत्यवस्थित इति ॥ ७ ॥

इति द्वितीयः प्रपाठकः ॥

---

## तृतीयः प्रपाठकः

नानात्वमापन्न प्राकृतगुणै कर्मफलैरभिभूत शरीरी संसारी अन्तःस्थपरमात्मानभिज्ञ भूतात्मा, चतुर्जाल नानात्व, कर्मफलानभिभूतश्चिदात्मा, राजसतामसदोषपूर्ण घृणागोचर शरीरम्

(१) ते होचुर्भगवन्यद्येवमस्याऽऽत्मनो महिमान सूचयसीत्यन्यो वा पर कोऽयमात्माख्यो योऽय सितासितै कर्मफलैरभिभूयमान सदसद्योनिमापद्यत इति । अवाञ्च्योर्ध्वा वा गतिर्द्वन्द्वैरभिभूयमान परिभ्रमति ॥ १ ॥

(२) अस्ति खल्वन्योऽपरो भूतात्माख्यो योऽय सितासितै कर्मफलैरभिभूयमानः सदसद्योनिमापद्यत इति । अवाञ्च्योर्ध्वा वा गतिरभिभूयमानः परिभ्रमतीति । अस्योपव्याख्यानम् । पञ्चतन्मात्रा भूतशब्देनोच्यन्ते । अथ पञ्चमहाभूतानि भूतशब्देनोच्यन्ते । अथ तेषा यत्समुदय तच्छरीरमित्युक्तम् । अथ यो ह खलु वाव शरीर इत्युक्त स भूतात्मेत्युक्तम् । अथामृतोऽस्याऽऽत्मा बिन्दुरिव पुष्कर इति । स वा एषोऽभिभूतः प्राकृतैर्गुणैरिति । अथोऽभिभूतत्वात्संमूढत्व प्रयात । संमूढत्वादात्मस्थं प्रभु भगवन्त कारयितारं नापश्यत् । गुणौघैरुह्यमान कलुषीकृतश्चास्थिरश्चञ्चलो लुप्यमानः सस्पृहो व्यग्रश्चाभिमानित्व प्रयात इति । अहं सो ममेदमित्येव मन्यमानो निबध्नात्यात्मनाऽत्मानं जालेनेव खचर कृतस्यानुफलैरभिभूयमान सदसद्योनिमापद्यत इति । अवाञ्च्योर्ध्वा वा गतिर्द्वन्द्वैरभिभूयमान परिभ्रमतीति । कतम एष इति । तान्होवाचेति ॥ २ ॥

(३) अथान्यत्राप्युक्तम् । य कर्ता सोऽय वै भूतात्मा करणै कारयिताऽन्त पुरुष । अथ यथाऽग्निनाऽयस्पिण्डोऽन्यो वाऽभिभूत कर्तृभिर्हन्यमानो नानात्वमुपैति । एव वाव खल्वसौ भूतात्माऽन्तः पुरुषेणाभिभूतो गुणैर्हन्यमानो नानात्वमुपैति । चतुर्जाल चतुर्दशविध चतुरशीतिधा परिणतं भूतगणम् । एतद्वै नानात्वस्य रूपम् । तानि ह वा एतानि गुणानि पुरुषेणेरितानि चक्रमिव मृत्पचेनेति । अथ यथाऽयस्पिण्डे हन्यमानेनाग्निरभिभूयत्येव नाभिभूयत्यसौ पुरुष । अभिभूयत्यय भूतात्मोपसंश्लिष्टत्वादिति ॥ ३ ॥

---

(१) मैउ २।७ (२) मैउ ३।१

(१) मैउ ३।२, विज्ञान २।४।७ पञ्चतन्मात्रा भूतशब्देनोच्यन्ते । अथ ( भूतानि पञ्चतन्मात्राणि )

(२) मैउ ३।३-५.

अथान्यत्राप्युक्तम् । शरीरमिदं मैथुनादेवोद्भूत९ संवृद्ध्युपेत निरयेऽथ मूत्रद्वारेण निष्क्रान्तमस्थिभिश्चित मा९सेनानुलिप्त चर्मणाऽवनद्ध विण्मूत्रपित्तकफमज्जामेदोवसाभिरन्यैश्चाऽऽमयैर्बहुभि. परिपूर्ण कोश इव वसुनेति ॥ ४ ॥

अथान्यत्राप्युक्तम् । समोहो भय विषादो निद्रा तन्द्री प्रमादो जरा शोक क्षुत्पिपासा कार्पण्यं क्रोधो नास्तिक्यमज्ञानं मात्सर्यं नैष्कारुण्य मूढत्व निर्व्रीडत्वं निराकृतित्वमुद्धतत्वमसमत्वमिति तामसानि । अथ तृष्णा स्नेहो रोगो लोभो हि९सा रतिर्दृष्टिर्व्यावृतत्वमीर्ष्याऽकाममस्थिरत्व चलत्वं व्यग्रत्व जिगीषाऽर्थोपार्जन मित्रानुग्रहण परिग्रहावलम्बोऽनिष्टेष्विन्द्रियार्थेषु द्विष्टिरिष्टेष्वभिष्वङ्ग. शुक्तस्वरोऽन्नतमस्त्विति राजसानि ।एतै परिपूर्ण एतैरभिभूत इत्ययं भूतात्मा । तस्मान्नानारूपाण्याप्नोतीत्याप्नोतीति ॥ ५ ॥

इति तृतीय. प्रपाठक.

---

## चतुर्थः प्रपाठकः

जीवस्य भूतात्मन अविद्यारूपो मायामय सदसत्कर्मफलमयो बन्ध

[1]ते ह खलु वावोर्ध्वरेतसोऽतिविस्मिता अभिसमेत्योचुर्भगवन्नमस्तेऽस्त्वनुशाधि । त्वमस्माक गतिरन्या न विद्यत इति। अस्य को विधिर्भूतात्मनो येनेद९ हित्वाऽऽत्मन्नेव सायुज्यमुपैति । तान्होवाचेति ॥ १ ॥

अथान्यत्राप्युक्तम् । महानदीषूर्मय इवानिवर्तकमस्य यत्पुराकृतं, समुद्रवेलेव दुर्निवार्यमस्य मृत्योरागमन, सदसत्फलमयै पाशै पङ्गुरिव बद्ध बन्धनस्थस्येवास्वातन्त्र्य, यमविषयस्थस्येव बहुभयावस्थ, मदिरोन्मत्त इव मोहमदिरोन्मत्तं, पाप्मना गृहीत इव भ्राम्यमाण, महोरगदष्ट इव विषयदष्ट, महान्धकारमिव रागान्ध, इन्द्रजालमिव मायामय, स्वप्न इव मिथ्यादर्शन, कदलीगर्भ इवासारं, नट इव क्षणवेष, चित्रभित्तिरिव मिथ्यामनोरममिति । अथोक्तम् ।

शब्दस्पर्शादयो ह्यर्था मर्त्येऽनर्था इवाऽऽस्थिताः ।
येषा९ सक्तस्तु भूतात्मा न स्मरेत्परम पदम् ॥ २ ॥

बन्धक्षयहेतव आत्मविद्यासाधानानि वेदविद्या स्वधर्माचरण स्वाश्रमानुरूप तपश्चेति

अयं वाव खल्वस्य प्रतिविधिर्भूतात्मनो यद्वेदविद्याधिगम स्वधर्मस्यानुचरण स्वाश्रमेष्वेवानुक्रण९ स्वधर्मस्य वा । एतद्व्रतम् । स्तम्बशाखेवापराणि । अनेनोर्ध्वभाग्भवति । अन्यथाऽवाङ्पतति । एष स्वधर्मोऽभिहितो यो वेदेषु । न स्वधर्मातिक्रमेणाऽश्रमी भवति । आश्रमेष्वेवानवस्थस्तपस्वी वेत्युच्यत इत्येतदयुक्तम् । नातपस्कस्याऽऽत्मज्ञानेऽधिगम कर्मसिद्धिर्वेति । एव९ ह्याह ।

तपसा प्राप्यते सत्त्व९ सत्त्वात्सप्राप्यते मन ।
मनस प्राप्यते ह्यात्मा यमाप्त्वा न निवर्तत इति ॥ ३ ॥

तपोविद्याचिन्तनरूपसाधनत्रयवती ब्रह्मोपासना मुक्तिसाधनम्

अस्ति ब्रह्मेति ब्रह्मविद्याविदब्रवीत् । ब्रह्मद्वारमिदमित्येवैतदाह यस्तपसाऽपहतपाप्मा । ॐ ब्रह्मणो महिमेत्येवैतदाह य सुयुक्तोऽजस्रं चिन्तयति । तस्माद्विद्यया तपसा चिन्तया चोपलभ्यते ब्रह्म । स ब्रह्मण पर एता भवत्यधिदैवत्व देवेभ्यश्च । इत्यक्षय्यमपरिमितमनामय९ सुखमश्नुते य एव विद्वाननेन त्रिकेण ब्रह्मोपास्ते । अथ यैः परिपूर्णोऽभिभूतोऽय९ रथितश्च तैर्वैव मुक्तस्त्वात्मन्नेव सायुज्यमुपैति ॥ ४ ॥

अग्निवाय्वादित्यकालप्राणान्नब्रह्मरुद्रविष्ण्वादिरूपाणा ध्येयाना ब्रह्मैकरूपत्वम्

ते होचुर्भगवन्नभिवाद्यसीत्यभिवाद्यसीति । निहितमस्माभिरेतद्यथावदुक्त मनसीति । अथोत्तरं प्रश्नमनुब्रूहीति । अग्निर्वायुरादित्य कालो यः

---

(१) मैउ ४।१-६

प्राणोऽन्न ब्रह्मा रुद्रो विष्णुरित्येकेऽन्यमभिध्यायन्ति । एकेऽन्यम् । श्रेय. कतमो य सोऽस्माकं ब्रूहीति । तान्होवाचेति ।। ५ ।।

ब्रह्मणो वावैता अग्न्यास्तनव परस्यामृतस्या शरीरस्य । तस्यैव लोके प्रतिमोदतीह यो यस्यानुनुषक्त इत्येवꣳ ह्याह । ब्रह्म खल्विद वाव सर्वम् । या वाऽस्या अग्न्यास्तनवस्ता अभिध्यायेद्चर्चयेन्निह्नुयाच्च । अतस्ताभि सहैवोपर्युपरि लोकेषु चरति । अथ कृत्स्नक्षय एकत्वमेति पुरुषस्य पुरुषस्य ।। ६ ।।

इति चतुर्थः प्रपाठक ।।

---

## पञ्चमः प्रपाठकः

परमात्मन कौत्सायनी स्तुति

[१]अथ यथेय कौत्सायनी स्तुति ।
त्व ब्रह्मा त्व च वै विष्णुस्त्वꣳ रुद्रस्त्व प्रजापति. ।
त्वमग्निर्वरुणो वायुस्त्वमिन्द्रस्त्व निशाकर ।।
त्व मनुस्त्व यमस्त्व पृथिवी त्व विश्व स्त्वमथाच्युतः ।
स्वार्थे स्वाभाविकेऽर्थे च बहुधा सꣳस्थितिस्त्वयि ।।
विश्वेश्वर नमस्तुभ्यं विश्वात्मा विश्वकर्मकृत् ।
विश्वभुग्विश्वमायुस्त्व विश्वक्रीडारतिप्रभु ।।
नम शान्तात्मने तुभ्य नमो गुह्यतमाय च ।
अचिन्त्यायाप्रमेयाय अनादिनिधनाय चेति ।।१।।

सृष्टिः तमोरज सत्त्वमितिक्रमेण, ब्रह्मविणुरुद्राणा रूपैरुद्भूत भूताधिप आत्मा

[२]तमो वा इदमग्र आसीदेकम् । तत्परे स्यात् । तत्परेणेरित विषमत्वं प्रयाति । एतद्रूप वै रजः । तद्रज. खल्वीरित विषमत्व प्रयाति । एतद्वै सत्त्वस्य रूपम् । तत्सत्त्वमेवेरितꣳ रस' सम्प्रास्रवत् । सोऽꣳशोऽयं यश्चेतामात्र प्रतिपुरुष क्षेत्रज्ञ सकल्पाध्यवसायाभिमानलिङ्ग प्रजापतिर्विश्वा । इत्यस्य प्रागुक्ता एतास्तनव । अथ यो ह खलु वावास्य तामसोऽꣳशोऽसौ स ब्रह्मचारिणो योऽय रुद्रः । अथ यो ह खलु वावास्य राजसोऽꣳशोऽसौ स ब्रह्मचारिणो योऽय ब्रह्मा । अथ यो ह खलु वावास्य सात्त्विकोऽꣳशोऽसौ स ब्रह्मचारिणो योऽय विष्णु. । स वा एष एकस्त्रिधा भूतोऽष्टधैकादशधा द्वादशधाऽपरिमितधा वोद्भूत । उद्भूतत्वात् । भूत भूतेषु चरति प्रविष्ट स भूतानामधिपतिर्बभूव । इत्यसा आत्माऽन्तर्बहिश्चान्तर्बहिश्च ।। २ ।।

इति पञ्चम प्रपाठक ।।

---

(१) मैउ ५।१

(२) मैउ ५।२, विज्ञान १।१।५ ( पृ १२४ ) तमो वा इदमग्र आसीत् ( तमो वा इदमेकमासत ), २।१।२ ( तमो वा इदमेकमासत तत्परे स्यात् तत्परेणेरित विषमत्व प्रयात्येतद्वै रजसो रूप तद्रज खल्वीरित विषमत्व प्रयात्येतद्वै सत्त्वस्य रूप तत्सत्त्वमेवेरित रसः सम्प्रास्रवत् तत्सांशोऽय यश्चेतामात्र प्रतिपुरुष क्षेत्रज्ञ सकल्पाध्यवसायलिङ्ग प्रजापतिस्तस्य प्रोक्ता अग्न्यास्तनवो ब्रह्म रुद्रो विष्णुरिति अथ यो ह खलु वाऽस्य राजसोंऽशोऽसौ वाव समीप ब्रह्माऽथ यो ह खलु वाऽस्य तमोंऽशोऽसौ वाव स योऽय रुद्र अथ यो ह खलु वास्य सात्त्विकोंऽशोऽसौ वाव स योऽय विष्णु स वा एष एकस्त्रिधाभूतोऽष्टधा एकादशधा द्वादशधाऽपरिमितधा वोद्भूत उद्भूतत्वाद्भूतेषु चरति प्रविष्ट स भूतानामधिपतिर्बभूव इत्यसावात्माऽन्तर्बहिश्चान्तर्बहिश्च ), २।१।३ ( तम एवेदमग्र आसीत्तत्परेणेरित विषमत्व प्रयाति ) एतावदेव, २।१।१६ ( तम एवेदमग्र आसीत्तत्तम परे स्यात् ) एताव देव, २।१।१८ (तमो वा इदमेकमास तत्परे स्यात् तत्परेणेरित विषमत्व प्रयाति ) एतावदेव, २।३।४४ ( तत्सत्त्वमेवेरित अग्न्यास्तनवो ब्रह्मा रुद्रो विष्णु ) एतावदेव

## षष्ठः प्रपाठकः

आत्मा द्विधाभूत अन्त प्राण बहिरादित्य इति, प्रणवव्याहृतिसावित्रीभिरुपासनमात्मन , मूर्तामूर्ते ब्रह्म, अश्वत्थनामा ब्रह्मवृक्ष , आदित्यहृद-ययो स्थित पुरुष

[1]द्विधा वा एष आत्मान बिभर्त्यय य प्राणो यश्चासा आदित्य. । अथ द्वौ वा एता अस्य पन्थाना अन्तर्बहिश्च । अहोरात्रेणैतौ व्यावर्तेते। असौ वा आदित्यो बहिरात्मा । अन्तरात्मा प्राण' । अतो बहिरात्मक्या गत्याऽन्तरात्मनोऽनुमीयते गति । इत्येवꣳ ह्याह । अथ य कश्चिद्विद्वानपहतपाप्माऽक्षाध्यक्षोऽवदातमनास्तन्निष्ठ आवृत्तचक्षु सो अन्तरात्मक्या गत्या बहिरात्मनोऽनुमीयते गति । इत्येवꣳ ह्याह । अथ य एषोऽन्त रादित्ये हिरण्मय पुरुषो यः पश्यतीमा हिरण्यवस्थात्स एषोऽन्तरे हृत्पुष्करे एवाश्रितोऽन्नमत्ति ॥ १ ॥

अथ य एषोऽन्तरे हृत्पुष्कर एवाऽऽश्रितोऽन्नमत्ति स एषोऽग्निर्दिवि श्रित सौर कालाख्योऽदृश्य सर्वभूतान्यन्नमत्तीति । क पुष्कर किंमयो वेति । इदं वाव तत्पुष्करं योऽयमाकाश । अस्येमाश्चतस्रो दिशश्चतस्र उपदिशो दलसꣳस्था आसम् । अर्वाग्विचरत एतौ प्राणादित्यौ । एतौ उपासीतो मित्येतदक्षरेण व्याहृतिभिः सावित्र्या चेति ॥ २ ॥

द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च । अथ यन्मूर्तं तदसत्यं यदमूर्तं तत्सत्यम् । तद्ब्रह्म । तज्ज्योतिः । यज्ज्योति स आदित्यः । स वा एष ओमित्येतदात्माऽभवत् । स त्रेधाऽऽत्मान व्यकुरुत। ओमिति तिस्रो मात्रा' । एताभि' सर्वमिदमोत प्रोत चैवास्मीत्येवꣳ ह्याह । एतद्वा आदित्य ओमित्येव ध्यायताऽऽत्मानं युञ्जीतेति ॥ ३ ॥

अथान्यत्राप्युक्तम् । अथ खलु य उद्गीथः स प्रणवो य' प्रणव. स उद्गीथ इति । असौ वा आदित्य उद्गीथः । एष प्रणव इत्येवꣳ ह्याह । उद्गीथ प्रणवाख्य प्रणेतारं भारूपं विगतनिद्रं विजरं विमृत्यु त्रिपद त्र्यक्षरं पुन पञ्चधा ज्ञेय निहितं गुहायामित्येवꣳ ह्याह । ऊर्ध्वमूलं त्रिपाद्ब्रह्म । शाखा आकाशवाय्वग्न्युदकभूम्यादय' । एकोऽश्वत्थनामा । एतद्ब्रह्म । एतस्यैतत्तेजो यद्सा आदित्य । ओमित्येतदक्षरस्य चैतत् । तस्मादोमित्यनेनैतदुपासीताजस्रमिति । एकोऽस्य संबोधयितेत्येवꣳ ह्याह् ।

एतदेवाक्षर पुण्यमेतदेवाक्षरं परम् ।
एतदेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ ४ ॥

प्रणवद्वारा उपास्या स्वनवत्त्वादय आत्मनस्तनव

अथान्यत्राप्युक्तम् । स्वनवत्येषाऽस्य तनूर्योमिति । स्त्रीपुनपुसकेति लिङ्गवत्येषा । अथाग्निर्वायुरादित्य इति भास्वत्येषा । अथ ब्रह्मा रुद्रो विष्णुरित्यधिपतिवत्येषा । अथ गार्हपत्यो दक्षिणाग्निराहवनीय इति मुखवत्येषा । अथ ऋग्यजु सामेति विज्ञानवत्येषा । अथ भूर्भुवः स्वरिति लोकवत्येषा । अथ भूत भव्यं भविष्यदिति कालवत्येषा । अथ प्राणोऽग्नि सूर्य इति प्रतापवत्येषा । अथान्नमापश्चन्द्रमा इत्याप्यायनवत्येषा । अथ बुद्धिर्मनोऽहंकार इति चेतनवत्येषा । अथ प्राणोऽपानो व्यान इति प्राणवत्येषा । इत्यत ओमित्युक्तेनैता प्रस्तुता अर्चिता अर्पिता भवन्ति । इत्येवꣳ ह्याह् । एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोमित्येतदक्षरमिति ॥ ५ ॥

व्याहृत्युपासना, प्रजापते व्याहृतिरूपतनो अवयवा , प्रजापते सूर्यरूपा तनू

अथाव्याहृत वा इदमासीत् । स सत्य प्रजापतिस्तपस्तप्त्वाऽनुव्याहरद्भूर्भुव. स्वरिति । एषैवास्य प्रजापते. स्थविष्ठा.तनूर्या लोकवतीति । स्वरित्यस्याः शिर । नाभिर्भुव । भू पादाः । आदित्यश्चक्षु' । चक्षुरायत्ता हि पुरुषस्य महती मात्रा । चक्षुषा ह्यय मात्राश्चरति । सत्यं वै चक्षु' । अक्षिण्यवस्थितो हि पुरुष सर्वार्थेषु चरति । एतस्माद्भूर्भुव स्वरित्युपासीत। अनेन हि प्रजापतिर्विश्वात्मा विश्वचक्षुरिवोपासितो भवति । इत्येवꣳ ह्याह ।

(१) मैउ ६।१-२९

एषा वै प्रजापतेर्विश्वभृत्तनूः । एतस्यामिदꣳसर्वमन्तर्हितम् । अस्मिꣳश्च सर्वस्मिन्नेषाऽन्तर्हितेति । तस्मादेषोपासीत ॥ ६ ॥

सावित्रीव्याख्यान, भर्गादित्यसवितृपवनापशब्दाना निर्वचनानि, द्वैताद्वैते च आत्मन स्वरूपम्

तत्सवितुर्वरेण्यमिति । असौ वा आदित्य सविता । स वा एवं प्रवरणीय आत्मकामेनेत्याहुर्ब्रह्मवादिन । अथ भर्गो देवस्य धीमहीति । सविता वै देव । ततो योऽस्य भर्गाख्यस्त चिन्तयामीत्याहुर्ब्रह्मवादिन । अथ धियो यो न प्रचोदयादिति । बुद्धयो वै धिय । ता योऽस्माकं प्रचोदयादित्याहुर्ब्रह्मवादिन । अथ भर्ग इति । यो ह वा अमुष्मिन्नादित्ये निहितस्तारकोऽक्षिणि वैष भर्गाख्यः । भाभिर्गतिरस्य हीति भर्ग । भर्जयतीति वैष भर्ग इति रुद्रो ब्रह्मवादिन । अथ भ इति भासयतीमाँल्लोकान् । र इति रञ्जयतीमानि भूतानि । ग इति गच्छन्त्यस्मिन्नागच्छन्त्यस्मादिमा प्रजा । तस्माद्भरगत्वाद्भर्ग । शश्वत्सूयमानात्सूर्यः । सवनात्सविता । आदानादादित्य । पवनात्पावनः । अथाऽऽपोऽप्यायनादित्येवꣳह्याह । खल्वात्मन आत्मा नेताऽमृताख्यश्चेता मन्ता गन्तोत्स्रष्टाऽऽनन्दयिता कर्ता वक्ता रसयिता घ्राता द्रष्टा श्रोता स्पृशति च विभुर्विग्रहे सन्निविष्ठः । इत्येवꣳह्याह । अथ यत्र द्वैतीभूतं विज्ञान तत्र हि शृणोति पश्यति जिघ्रति रसयति चैव स्पर्शयति । सर्वमात्मा जानीतेति । यत्राद्वैतीभूत विज्ञान कार्यकारणकर्मनिर्मुक्त निर्वचनमनौपम्य निरुपाख्यम् । किं तत् । अवाच्यम् ॥ ७ ॥

परमात्मा ईशानप्रजापतिविष्ण्वादिरूप, आत्मज्ञानार्थसंन्यासविधि, आदित्य प्राणरूप

एष हि खल्वात्मेशानः शंभुर्भवो रुद्र प्रजापतिर्विश्वसृग्घिरण्यगर्भः सत्य प्राणो हꣳस शास्ता विष्णुर्नारायणोऽर्कः सविता धाता विधाता सम्राडिन्द्र इन्दुरिति । य एष तपत्यग्निरिवाग्निना पिहितः सहस्राक्षेण हिरण्मयेनाण्डेन । एष वाव जिज्ञासितव्योऽन्वेष्टव्यः सर्वभूतेभ्योऽभय दत्त्वाऽरण्य गत्वाऽथ बहिः कृत्वेन्द्रियार्थान्स्वाच्छरीरादुपलभेतैनमिति ।

विश्वरूपꣳ हरिणं जातवेदसं परायण ज्योतिरेकं तपन्तम् ।
सहस्ररश्मि शतधा वर्तमान प्राण प्रजानामुदयत्येष सूर्यः ॥ ८ ॥

आत्मोपासकस्य भोजनविधि

तस्माद्वा एष उभयात्मैवविदात्मन्नेवाभिध्यायत्यात्मन्नेव यजति । इति ध्यान प्रयोगस्थ मनो विद्वद्भि ष्टुतम् । मन पूतिमुच्छिष्टोपहतमित्यनेन तत्पावयेत् । उच्छिष्टोच्छिष्टोपहत यच्च पापेन दत्त मृतसूतकाद्वा । वसो पवित्रमग्नि सवितुश्च रश्मय पुनन्त्वन्न मम दुष्कृतं च यदन्यत् । अद्भि पुरस्तात्परिदधाति । प्राणाय स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा समानाय स्वाहोदानाय स्वाहेति पञ्चभिरभिजुहोति । अथावशिष्टं यतवाग्अश्नाति । अतोऽद्भिर्भूय एवोपरिष्टात्परिदधाति । आचान्तो भूत्वाऽऽत्मेज्यान प्राणोऽग्निर्विश्वोऽसीति च द्वाभ्यामात्मानमभिध्यायेत् ।

प्राणोऽग्नि परमात्मा वै पञ्चवायु समाश्रित ।
स प्रीत प्रीणातु विश्व विश्वभुक् ॥
विश्वोऽसि वैश्वानरोऽसि विश्व त्वया धार्यते जायमानम् ।
विशन्तु त्वामाहुतयश्च सर्वा प्रजास्तत्र यत्र विश्वामृतोऽसीति ॥

एव न विधिना खल्वनेनात्ताऽन्नत्व पुनरुपैति ॥ ९ ॥

भोक्तृभोज्यरूप विश्वविभाग, आत्मयाजी आत्मयज्ञश्च

अथापरं वेदितव्यम् । उत्तरो विकारोऽस्याऽऽत्मयज्ञस्य यथाऽन्नमन्नादश्चेति । अस्योपव्याख्यानम् । पुरुषश्चेता प्रधानान्त स्थ । स एव भोक्ता प्राकृतमन्न भुङ्क्त इति । तस्याय भूतात्मा ह्यन्नम् । अस्य कर्ता प्रधान । तस्मात्त्रिगुण भोज्यम् । भोक्ता पुरुषोऽन्त स्थ । अत्र दृष्ट नाम प्रत्ययम् । यस्माद्बीजसभवा हि पशवस्तस्माद्बीज भोज्यम् । अनेनैव

प्रधानस्य भोज्यत्व व्याख्यातम् । तस्माद्भोक्ता पुरुष । भोज्या प्रकृति । तत्स्थो भुङ्क्त इति । प्राकृतमन्न त्रिगुणभेदपरिणामत्वान्महदाद्यं विशेषान्त लिङ्गम् । अनेनैव चतुर्दशविधस्य मार्गस्य व्याख्या कृता भवति । सुखदु खमोहसज्ञ५ ह्यन्नभूतमिदं जगत् । न हि बीजस्य स्वादुपरिग्रहोऽस्तीति यावन्न प्रसूति । तस्याप्येवं तिसृष्ववस्थास्वन्नत्व भवति । कौमारं यौवनं जरा । परिणामत्वात्तदन्नत्वम् । एवं प्रधानस्य व्यक्ततां गतस्योपलब्धिर्भवति । तत्र बुद्ध्यादीनि स्वादुनि भवन्ति । अध्यवसायसकल्पाभिमाना इति । अथेन्द्रियार्थान्पञ्च स्वादुनि भवन्ति । एव सर्वाणीन्द्रियकर्माणि प्राणकर्माणि । एव व्यक्तमन्नमव्यक्तमन्नम् । अस्य निर्गुणो भोक्ता । भोक्तृत्वाच्चैतन्यं प्रसिद्ध तस्य । यथाऽग्निर्वै देवानामन्नाद सोमोऽन्नम् । अग्निनैवान्नमित्येववित् । सोमसज्ञोऽय भूतात्माऽग्निसंज्ञोऽप्यव्यक्तमुख इति । वचनात्पुरुषो ह्यव्यक्तमुखेन त्रिगुण भुङ्क्त इति । यो हैवं वेद सन्यासी योगी चाऽऽत्मयाजी चेति । अथ यद्वन्न कश्चिच्छून्यागारे कासिन्य प्रविष्टा. स्पृशतीन्द्रियार्था५स्तद्वद्यो न स्पृशति प्रविष्टान्सन्यासी योगी चाऽऽत्मयाजी चेति ॥ १० ॥

अन्ने ब्रह्मदृष्टि , अन्नमहिमा

परं वा एतदात्मनो रूपं यदन्नम् । अन्नमयो ह्ययं प्राण । अथ न यद्यश्नात्यमन्ताऽश्रोताऽस्प्रष्टाऽद्रष्टाऽवक्ताऽघ्राताऽरसयिता भवति । प्राणा५श्चोत्सृजति । इत्येव५ ह्याह । अथ यदि खल्वश्नाति प्राणसमृद्धो भूत्वा मन्ता भवति श्रोता भवति स्प्रष्टा भवति वक्ता भवति रसयिता भवति घ्राता भवति द्रष्टा भवतीति । एव५ ह्याह ।

अन्नाद्वै प्रजाः प्रजायन्ते या. काश्चित्पृथिवीश्रिता ।
अतोऽन्नेनैव जीवन्त्यथैतदपियन्त्यन्ततः ॥ ११ ॥

अथान्यत्राप्युक्तम् । सर्वाणि ह वा इमानि भूतान्यहरहः प्रपतन्त्यन्नमभिजिघृक्षमाणानि । सूर्यो रश्मिभिराददात्यन्नम् । तेनासौ तपति । अन्नेनाभिषिक्ता पचन्तीमे प्राणा । अग्निर्वा अन्नेनाभिज्वलति । अन्नकामेनेदं प्रकल्पित ब्रह्मणा । अतोऽन्नमात्मेत्युपासीत । इत्येव५ ह्याह ।

अन्नाद्भूतानि जायन्ते जातान्यन्नेन वर्धन्ते ।
अद्यतेऽत्ति च भूतानि तस्मादन्न तदुच्यते ॥ १२ ॥

अथान्यत्राप्युक्तम् । विश्वभृद्वै नामैषा तनूर्भगवतो विष्णोर्यदिदमन्नम् । प्राणो वा अन्नस्य रसः । मन प्राणस्य । विज्ञान मनस । आनन्द विज्ञानस्येति । अन्नवान्प्राणवान्मनस्वान्विज्ञानवानानन्दवा५श्च भवति यो हैवं वेद । यावन्तीह वै भूतान्यन्नमदन्ति तावत्स्वन्त स्थोऽन्नमत्ति यो हैव वेद ।

अन्नमेव विजरन्नमन्न५ सवनन स्मृतम् ।
अन्न पशूना प्राणोऽन्नं ज्येष्ठमन्न भिषक्स्मृतम् ॥ १३ ॥

काल आदित्यमूलक आदित्यात्मको वा सवत्सररूप ब्रह्मत्वेनोपास्य

अथान्यत्राप्युक्तम् । अन्नं वा अस्य सर्वस्य योनि' । कालश्चान्नस्य । सूर्यो योनि कालस्य । तस्यैतद्रूप यन्निमेषादिकालात्सभृत द्वादशात्मकं वत्सरम् । एतस्याऽऽग्नेयमर्धमर्धं वारुणम् । मघाद्य५ श्रविष्ठार्धमाग्नेय क्रमेण । उत्क्रमेण सार्पाद्य५ श्रविष्ठार्धान्त५ सौम्यम् । तत्रैकैकमात्मनो नवा५शक सचारकविधम् । सौक्ष्म्यत्वादेतत्प्रमाणम् । अनेनैव प्रमीयते हि काल । न विना प्रमाणेन प्रमेयस्योपलब्धि. । प्रमेयोऽपि प्रमाणता पृथक्त्वादुपैत्यात्मसबोधनार्थम् । इत्येव५ ह्याह । यावत्यो वै कालस्य कलास्तावतीषु चरत्यसौ । यः काल ब्रह्मेत्युपासीत कालस्तस्यातिदूरमपसरति । इत्येव५ह्याह ।

कालात्स्रवन्ति भूतानि कालाद्वृद्धिं प्रयान्ति च ।
काले चास्त नियच्छन्ति कालो मूर्तिरमूर्तिमान् ॥ १४ ॥

द्वे वाव ब्रह्मणो रूपे कालश्चाकालश्च । अथ यः प्रागादित्यात्सोऽकालोऽकल' । अथ य आदित्याद्यः स काल. सकल. । सकलस्य वा एतद्रूप यत्सं-

त्सरः । संवत्सरात्खल्वेवेमाः प्रजा प्रजायन्ते । संवत्सरेणेह वै जाता विवर्धन्ते । संवत्सरे प्रत्यस्तं यन्ति । तस्मात्संवत्सरो वै प्रजापतिः कालोऽन्नं ब्रह्मनीडमात्मा च । इत्येवं ह्याह ।

काल पचति भूतानि सर्वाण्येव महात्मनि ।
यस्मिंस्तु पच्यते कालो य स्तं वेद स वेदवित् ॥ १५ ॥

विग्रहवानेष कालः सिन्धुराज प्रजानाम् । एष तत्स्थः सविताख्य । यस्मादेवेमे चन्द्रर्क्षग्रहसंवत्सरादय सूयन्ते । अथैभ्यः सर्वमिदम् । अत्र वा यत्किंचिच्छुभाशुभ दृश्येतेह लोके तदेतेभ्य । तस्मादादित्यात्मा ब्रह्म । अथ कालसंज्ञमादित्यमुपासीत । आदित्यो ब्रह्मेत्येके । अथैवं ह्याह ।

होता भोक्ता हविर्मन्त्रो यज्ञो विष्णु प्रजापति ।
सर्व कश्चित्प्रभु साक्षी योऽमुष्मिन्भाति मण्डले ॥ १६ ॥

अग्न्यादित्यहृदयेषु एकत्वेनोपास्य अनन्त आकाशात्मा परमात्मा ब्रह्म

ब्रह्म ह वा इदमग्र आसीदेकोऽनन्तः प्रागनन्तो दक्षिणतोऽनन्त प्रतीच्यनन्त उदीच्यनन्त ऊर्ध्वं चावाङ्च सर्वतोऽनन्तः । न ह्यस्य प्राच्यादिदिशः कल्पन्ते । अथ तिर्यग्वाऽवाङ्वोर्ध्वं वाऽनूह्य एष परमात्माऽपरिमितोऽजोऽतर्क्योऽचिन्त्य । एष आकाशात्मा । एवैष कृत्स्नक्षय एको जागर्ति । इत्येतस्मादाकाशादेष खल्विद चेतामात्रं बोधयति । अनेनैव चेद ध्यायते । अस्मिंश्च प्रत्यस्तं याति । अस्यैतद्भास्वरं रूप यदमुष्मिन्नादित्ये तपति । अग्नौ चाधूमके यज्ज्योतिश्चित्रतरम् । उदरस्थोऽथ वा यः पचत्यन्नम् । इत्येवं ह्याह । यश्चैषोऽग्नौ यश्चायं हृदये यश्चासावादित्ये स एष एक इति । एकस्य हैकत्वमेति य एवं वेद ॥ १७ ॥

षडङ्गो योग ब्रह्मदर्शनोपाय

तथा तत्प्रयोगकल्पः । प्राणायाम प्रत्याहारो ध्यानं धारणा तर्कः समाधिः षडङ्ग इत्युच्यते योगः । अनेन यदा पश्यन्पश्यति रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्म योनिम् । तदा विद्वान्पुण्यपापे विहाय परेऽव्यये सर्वमेकीकरोति । एवं ह्याह ।

यथा पर्वतमादीप्तं नाऽऽश्रयन्ति मृगद्विजा ।
तद्वद्ब्रह्मविदो दोषा नाऽऽश्रयन्ति कदाचन ॥ १८ ॥

आत्मदर्शनावस्था

अथान्यत्राप्युक्तम् । यदा वै बहिर्विद्वान्मनो नियम्येन्द्रियार्थांश्च प्राणो निवेशयित्वा नि सकल्पस्ततस्तिष्ठेत् । अप्राणादिह यस्मात्संभूत प्राणसंज्ञको जीवस्तस्मात्प्राणो वै तुर्याख्ये धारयेत्प्राणम् । इत्येवं ह्याह ।

अचित्त चित्तमध्यस्थमचिन्त्य गुह्यमुत्तमम् ।
तत्र चित्त निधायेत तच्च लिङ्ग निराश्रयम् ॥ १९ ॥

अथान्यत्राप्युक्तम् । अत पराऽस्य धारणा तालुरसनाग्रनिपीडनाद्वाङ्मनःप्राणनिरोधनात् ब्रह्म तर्केण पश्यति । यदाऽऽत्मनाऽऽत्मानमणोरणीयांसं द्योतमान मन क्षयात्पश्यति तदाऽऽत्मनाऽऽत्मान दृष्ट्वा निरात्मा भवति । निरात्मकत्वादसंख्योऽयोनिश्चिन्त्य । मोक्षलक्षणमित्येतत्पर रहस्यम् । इत्येवं ह्याह ।

चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम् ।
प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमव्ययमश्नुते ॥ इति ॥ २० ॥

सुषुम्नाख्यया नाड्या ऊर्ध्वोत्क्रमणविधि कैवल्यफलक

अथान्यत्राप्युक्तम् । ऊर्ध्वगा नाडी सुषुम्नाख्या प्राणसंचारिणी ताल्वन्तर्विच्छिन्ना । तया प्राणोंकारमनोयुक्तयोर्ध्वमुत्क्रमेत्ताल्वध्यग्र परिवर्त्य चेन्द्रियाण्यसंयोज्य । महिमा महिमान निरीक्षेत । ततो निरात्मकत्वमेति निरात्मकत्वान्न सुखदु खभाग्भवति । केवलत्व लभते । इत्येवं ह्याह ।

परः पूर्वं प्रतिष्ठाप्य निगृहीतानिलं तत. ।
तीर्त्वा पारमपारेण पश्चाद्युञ्जीत मूर्धनि ॥ २१ ॥

द्वे ब्रह्मणी शब्दब्रह्म पर ब्रह्म च विष्णुसंज्ञितम्

अथान्यत्राप्युक्तम् । द्वे वाव ब्रह्मणी अभिध्येये शब्दश्चाशब्दश्च । अथ शब्देनैवाशब्दमाविष्क्रियते ।

अथ तत्रोमिति शब्द । अनेनोर्ध्वमुत्क्रान्तोऽशब्दे निधनमेति । अथ हैषा गति । एतदमृतम् । एतत्सायुज्यत्वं निर्वृतत्व तथा चेति । अथ यथोर्णनाभिस्तन्तुनोर्ध्वमुत्क्रान्तोऽवकाश लभतीत्येव वाव खल्वसावभिध्यातोमित्यनेनोर्ध्वमुत्क्रान्त. स्वातन्त्र्य लभते । अन्यथा परे शब्दवादिन श्रवणाङ्गुष्ठयोगेनान्तर्हृदयाकाशशब्दमाकर्णयन्ति । सप्तविधेय तस्योपमा । यथा नद्यः किङ्किणी का॰स्यचक्रकभेकवि.कृन्धिका वृष्टिर्निवाते वदतीति । तं पृथग्लक्षणमतीत्य परेऽशब्देऽव्यक्ते ब्रह्मण्यस्त गता । तत्र तेऽपृथग्धर्मिणोऽपृथग्विवेक्या यथा संपन्ना मधुत्वं नाना रसा । इत्येव॰ह्याह ।

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णात परं ब्रह्माधिगच्छति ॥ २२ ॥

अथान्यत्राप्युक्तम् । य शब्दस्तदोमित्येतदक्षरम् । यदस्याग्र तच्छान्तमशब्दमभयमशोकमानन्द तृप्त॰स्थिरमचलममृतमच्युत ध्रुव विष्णुसञ्ज्ञितम् । सर्वापरत्वाय तदेत उपासीत । इत्येव॰ ह्याह ।

योऽसौ परापरो देवा ओंकारो नाम नामत. ।
नि शब्द शून्यभूतस्तु मूर्ध्नि स्थाने ततोऽभ्यसेत् ॥ २३ ॥

ब्रह्मात्मदर्शन, मुक्ति, योग

अथान्यत्राप्युक्तम् । धनु शरीरम् । ओमित्येतच्छर । शिखाऽस्य मन । तमोलक्षण भित्त्वा तमोऽतमाविष्टमागच्छति । अथाऽऽविष्ट भित्त्वा अलातचक्रमिव स्फुरन्तमादित्यवर्णमूर्जस्वन्त ब्रह्म तमस. पर्यमपश्यत् । यदमुष्मिन्नादित्येऽथ सोमेऽग्नौ विद्युति विभाति । अथ खल्वेन दृष्ट्वाऽमृतत्व गच्छति । इत्येव॰ ह्याह ।

ध्यानमन्त परे तत्त्वे लक्ष्येषु च निधीयते ।
अतोऽविशेषविज्ञान विशेषमुपगच्छति ॥
मानसे च विलीने तु यत्सुखं चाऽऽत्मसाक्षिकम् ।
तद्ब्रह्म चामृत॰ शुक्र॰ सा गतिर्लोक एव स ॥ २४ ॥

अथान्यत्राप्युक्तम् । निद्रेवान्तर्हितेन्द्रिय शुद्धितमया धिया स्वप्न इव यः पश्यतीन्द्रियबिलेऽविवश प्रणवाख्य प्रणेतारं भारूपं विगतनिद्र विजरं विमृत्यु विशोक च । सोऽपि प्रणवाख्य प्रणेता भारूपो विगतनिद्रो विजरो विमृत्युर्विशोको भवति । इत्येव॰ ह्याह ।

एव प्राणमथोंकार यस्मात्सर्वमनेकधा ।
युनक्ति युञ्जते वाऽपि तस्माद्योग इति स्मृत ॥
एकत्व प्राणमनसोरिन्द्रियाणा तथैव च ।
सर्वभावपरित्यागो योग इत्यभिधीयते ॥ २५ ॥

आत्मरूपाग्नौ होम, विष्णो परम पदम्

अथान्यत्राप्युक्तम् । यथा वाऽप्सुचारिण. शाकुनिकः सूत्रयन्त्रेणोद्धृत्योदरेऽग्नौ जुहोत्येव वाव खल्विमान् प्राणानोमित्यनेनोद्धृत्यानामयेऽग्नौ जुहोति । अतस्तप्तोर्वीव स । अथ यथा तप्तोर्विसर्पिस्तृणकाष्ठस॰स्पर्शेनोज्ज्वलनीत्येव वाव खल्वसावप्राणाख्य. प्राणस॰स्पर्शेनोज्ज्वलति । अथ यदुज्ज्वलत्येतद्ब्रह्मणो रूप च । एतद्विष्णो परमं पद च । एतद्रुद्रस्य रुद्रत्वम् । एतत्तदपरिमितधा चाऽऽत्मान विभज्य पूरयतीमाँल्लोकान् । इत्येव॰ ह्याह ।

वह्नेश्च यद्वत्खलु विस्फुलिङ्गा सूर्यान्मयूखाश्च तथैव तस्य ।
प्राणादयो वै पुनरेव तस्मादभ्युच्चरन्तीह यथाक्रमेण ॥ २६ ॥

हृदन्तर्ज्योति आत्मा, चित्तलय

अथान्यत्राप्युक्तम् । ब्रह्मणो वावैतत्तेज परस्यामृतस्याशरीरस्य यच्छरीरस्यौष्ण्यमस्यैतद्घृतम् । अथाऽऽवि सन्नभसि निहित वा । एतदेकाग्रेणैवमन्तर्हृदयाकाश विनुदन्ति यत्तस्य ज्योतिरिव सपद्यतीत्यतस्तद्भावमचिरेणैति । भूमावयस्पिण्ड निहित यथाऽचिरेणैति भूमित्वम् । मृद्वत्स॰स्थमयस्पिण्ड यथाऽग्न्ययस्कारादयो नाभिभवन्ति । प्रणश्यति चित्त तथाऽऽश्रयेण सहैवम् । इत्येव॰ ह्याह ।

हृद्याकाशमय कोशमानन्द परमालयम् ।
स्व योगश्च ततोऽस्माक तेजश्चैवाग्निसूर्ययो. ॥२७॥

ब्रह्मज्ञानकारण योगविशेष , योगाधिकार ,
ब्रह्मविद्याधिकार

अथान्यत्राप्युक्तम्। भूतेन्द्रियार्थानतिक्रम्य तत प्रव्रज्याज्यं धृतिदण्ड धनुर्गृहीत्वाऽनभिमानमयेन चैवेषुणा त ब्रह्मद्वारपारं निहत्याऽऽद्यं संमोह-मौली तृष्णेर्ष्याकुण्डली तन्द्रीराघवेत्र्यभिमाना-ध्यक्ष क्रोधज्य प्रलोभदण्ड धनुर्गृहीत्वेच्छामयेन चैवेषुणेमानि खलु भूतानि हन्ति। तं हत्वोंकार-प्लवेनान्तर्हृदयाकाशस्य पारं तीर्त्वाऽऽविर्भूतेऽन्तरा-काशे शनकैरवटैवावटकृद्धातुकाम सविशत्येव ब्रह्मशाला विशेत्। ततश्चतुर्जाल ब्रह्मकोश प्रणु देद्गुर्वागमेनेति। अत शुद्ध पूत शून्य शान्तो-ऽप्राणो निरात्माऽनन्तोऽक्षय्य स्थिरः शाश्वतोऽज स्वतन्त्र स्वे महिम्नि तिष्ठति। अत स्वे महिम्नि तिष्ठमान दृष्ट्वाऽऽवृत्तचक्रमिव सचारचक्रमालोक-यति। इत्येवं ह्याह।

षड्भिर्मासैस्तु युक्तस्य नित्यमुक्तस्य देहिन ।
अनन्त. परमो गुह्य सम्यग्योग प्रवर्तते ॥
रजस्तमोभ्या विद्धस्य सुसमिद्धस्य देहिन ।
पुत्रदारकुटुम्बेषु सक्तस्य न कदाचन ॥ २८ ॥

एवमुक्त्वाऽन्तर्हृदय शाकायन्यस्तस्मै नमस्कृ-त्वाऽनया ब्रह्मविद्यया राजन्ब्रह्मण पन्थानमारूढा पुत्रा प्रजापतेरिति। सतोष द्वन्द्वतितिक्षां शान्त-त्व योगाभ्यासादवाप्नोतीति। एतद्गुह्यतम नापुत्राय नाशिष्याय नाशान्ताय कीर्तयेदिति। अनन्य-भक्ताय सर्वगुणसपन्नाय दद्यात् ॥ २९ ॥

ब्रह्मज्ञानसाधन, बद्धलक्षण, मुक्तिलक्षण, मन -
स्वरूप, ब्रह्मलोकमार्ग,

ॐ शुचौ देशे शुचि सत्त्वस्थ सदधीयान सद्वादी सद्ध्यायी सद्याजी स्यादिति। अत सद्ब्रह्मणि सत्यभिलाषिणि निर्वृत्तोऽन्यस्तत्फलच्छिन्नपाशो निराश परेष्वात्मवद्विगतभयो निष्कामो ऽक्षय्यमपरिमितं सुखमाक्रम्य तिष्ठति। परम वै शेवधेरिव परस्योद्धरण यन्निष्कामत्वम्। स हि सर्वकाममयः पुरुषोऽध्यवसायसकल्पाभिमानलिङ्गो बद्ध'। अतस्तद्विपरीतो मुक्त। अत्रैक आहु। गुण. प्रकृतिभेदवशादध्यवसायात्मबन्धमुपागत। अध्य वसायस्य दोषक्षयाद्विमोक्ष। मनसा ह्येव पश्यति मनसा शृणोति। काम सकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव। गुणौघैरुह्यमान कलुषीकृतश्चास्थिरश्चञ्चलो लुप्यमान सस्पृहो व्यग्रश्चाभिमानित्व प्रयात इति। अहं सो ममेदमित्येव मन्यमानो निबध्नात्या-त्मनाऽऽत्मान जालेनेव खचर। अत पुरुषोऽध्य-वसायसकल्पाभिमानलिङ्गो बद्ध। अतस्तद्वि-परीतो मुक्त। तस्मान्निरध्यवसायो निसकल्पो निरभिमानस्तिष्ठेत्। एतन्मोक्षलक्षणम्। एषाऽत्र ब्रह्मपदवी। एषोऽत्र द्वारविवर। अनेनास्य तमसः पारं गमिष्यति। अत्र हि सर्वे कामा समाहिता इति। अत्रोदाहरन्ति।

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह।
बुद्धिश्च न विचेष्टते तामाहु परमा गतिम् ॥

एतदुक्त्वाऽन्तर्हृदय शाकायन्यस्तस्मै नमस्कृत्वा यथावदुपचारी कृतकृत्यो मरुदुत्तरायण गत। न ह्यत्रोद्वर्त्मना गति'। एषोऽत्र ब्रह्मपथ सौरं द्वारं भित्त्वोर्ध्वेन विनिर्गत इति। अत्रोदाहरन्ति।

अनन्ता रश्मयस्तस्य दीपवद्य स्थितो हृदि।
सितासिता कद्रुनीला कपिला मृदुलोहिता ॥
ऊर्ध्वमेक स्थितस्तेषा यो भित्त्वा सूर्यमण्डलम्।
ब्रह्मलोकमतिक्रम्य तेन यान्ति परा गतिम् ॥
यदस्यान्यद्रश्मिशतमूर्ध्वमेव व्यवस्थितम्।
तेन देवनिकायाना स्वधामानि प्रपद्यते ॥
ये नैकरूपाश्चाधस्ताद्रश्मयोऽस्य मृदुप्रभा'।
इह कर्मोपभोगाय तै ससरति सोऽवश ॥
तस्मात्सर्गस्वर्गापवर्गहेतुर्भगवानसावादित्य
इति ॥ ३० ॥

इन्द्रियाणा उद्गमहेतु नियन्ता च आत्मा,
इन्द्रियबुद्ध्यादीनि आत्मलिङ्गानि

'किमात्मकानि वा एतानीन्द्रियाणि प्रचरन्ति।

(१) मैउ ६।३०, श्रीकठ ४।२।१३ ' ऊर्ध्वमेक स्थित ' इत्यादिश्लोक ' स्मर्यते च ' इत्युक्त्वा समुद्धृत।

(१) मैउ ६।३१-३६

उद्गन्ता चैतेषामिह को नियन्ता वेत्याह । प्रत्याहाऽऽत्मात्मकानि । इत्यात्मा ह्येषामुद्गन्ता नियन्ता वा । अप्सरसो भानवीयाश्च मरीचयो नाम । अथ पञ्चमी रश्मिभिर्विषयानत्ति । कतम आत्मेति । योऽयं शुद्धः पूतः शून्य शान्तादिलक्षणोक्तः स्वकैर्लिङ्गैरुपगृह्य । तस्यैतल्लिङ्गमलिङ्गस्याग्नेर्यदौष्ण्यमाविष्टं चापां य शिवतमो रस इत्येके । अथ वाक्श्रोत्रं चक्षुर्मनः प्राण इत्येके । अथ बुद्धिर्धृतिः स्मृतिः प्रज्ञानमित्येके । अथ ते वा एतस्यैव यथैवेह बीजस्याङ्कुरा वाऽथ धूमार्चिर्विष्फुलिङ्गा इवाग्नेश्चेति । अत्रोदाहरन्ति ।

वह्नेश्च यद्वत्खलु विष्फुलिङ्गा सूर्यान्मयूखाश्च तथैव तस्य ।
प्राणादयो वै पुनरेव तस्मादभ्युच्चरन्तीह यथाक्रमेण ॥ ३१ ॥

सर्वलोकभूतवेदादीना उद्भवस्थान आत्मा

तस्माद्वा एतस्मादात्मनि सर्वे प्राणा सर्वे लोकाः सर्वे वेदा सर्वे देवा सर्वाणि च भूतान्युच्चरन्ति । तस्योपनिषत्सत्यस्य सत्यमिति । अथ यथाऽऽर्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा निश्चरन्त्येव वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्योपनिषद श्लोका सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि विश्वा भूतानि ॥ ३२ ॥

सवत्सरप्राणादिरूपे चित्याग्न्युपासना

पञ्चेष्टको वा एषोऽग्नि सवत्सर । तस्येमा इष्टका यो वसन्तो ग्रीष्मो वर्षा शरद्धेमन्त । स शिर पक्षसीपृष्ठपुच्छवानेषोऽग्नि पुरुषविद् । सेयं पृथिवी प्रजापतेः प्रथमा चितिः । करैर्यजमानमन्तरिक्षमुत्क्षिप्त्वा वायवे प्रायच्छत् । प्राणो वै वायु । प्राणोऽग्नि । तस्येमा इष्टका य प्राणोऽपानो व्यानः समान उदान । स शिर पक्षसीपृष्ठपुच्छवानेषोऽग्नि पुरुषविद् । तदिदमन्तरिक्ष प्रजापतेर्द्वितीया चितिः । करैर्यजमान दिवमुत्क्षिप्त्वेन्द्राय प्रायच्छत् । असौ वा आदित्य इन्द्र । सैषोऽग्निः । तस्येमा इष्टका यदृग्यजु सामाथर्वाङ्गिरस इतिहास पुराणम् । स शिर पक्षसीपृष्ठपुच्छवानेषोऽग्नि पुरुषविद् । सैषा द्यौः प्रजापतेस्तृतीया चितिः । करैर्यजमानस्याऽऽत्मविदेऽवदान करोति । अथाऽऽत्मविदुत्क्षिप्य ब्रह्मणे प्रायच्छत् । तत्राऽऽनन्दी मोदी भवति ॥ ३३ ॥

अग्नित्रयोपासना, जाठराग्न्युपासना, चित्तशुद्धि, समाधि, ब्रह्मविद्याङ्गभूता अग्न्युपासना

पृथिवी गार्हपत्य । अन्तरिक्ष दक्षिणाग्निः । द्यौराहवनीय । तत एव पवमानपावकशुचय आविष्कृतमेतेनास्य यज्ञम् । यत पवमानपावकशुचिसंघातो हि जाठर । तस्मादग्निर्यष्टव्यश्चेतव्यः स्तोतव्योऽभिध्यातव्य । यजमानो हविर्गृहीत्वा देवताभिध्यानमिच्छति ।

हिरण्यवर्णः शकुनो हृद्यादित्ये प्रतिष्ठितः ।
मद्गुह्ँसस्तेजोवृष सोऽस्मिन्नग्नौ यजामहे ॥

इति चापि मन्त्रार्थं विचिनोति । तत्सवितुर्वरेण्य भर्गोऽस्याभिध्येयम् । यो बुद्ध्यन्तस्थो ध्यायी ह मन शान्तिपदमनुसरति । आत्मन्येव धत्ते । अत्रेमे श्लोका भवन्ति ।

यथा निरिन्धनो वह्नि स्वयोनावुपशाम्यते ।
तथा वृत्तिक्षयाच्चित्त स्वयोनावुपशाम्यते ॥
स्वयोनावुपशान्तस्य मनस सत्यकामत ।
इन्द्रियार्थविमूढस्यानृताः कर्मवशानुगा ॥
चित्तमेव हि सँसारं तत्प्रयत्नेन शोधयेत् ।
यच्चित्तस्तन्मयो भवति गुह्यमेतत्सनातनम् ॥
चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम् ।
प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमव्ययमश्नुते ॥
समासक्त यथा चित्त जन्तोर्विषयगोचरे ।
यद्येव ब्रह्मणि स्यात्तत्को न मुच्येत बन्धनात् ॥
मनो हि द्विविध प्रोक्तँ शुद्ध चाशुद्धमेव च ।
अशुद्ध कामसपर्काच्छुद्ध कामविवर्जितम् ॥
लयविक्षेपरहित मनः कृत्वा सुनिश्चलम् ।
यदा यात्यमनीभाव तदा तत्परमं पदम् ॥
तावन्मनो निरोद्धव्यं हृदि यावत्क्षयं गतम् ।
एतज्ज्ञान च मोक्षं च शेषान्ये ग्रन्थविस्तराः ॥

समाधिनिर्धौतमलस्य चेतसो निवेशितस्याऽऽत्मनि यत्सुखं भवेत् ।
न शक्यते वर्णयितुं गिरा तदा स्वय तदन्तःकरणेन गृह्यते ॥
अपामापोऽग्निरग्नौ वा व्योम्नि व्योम न लक्षयेत् ।
एवमन्तर्गत यस्य मन स परिमुच्यते ॥
मन एव मनुष्याणा कारण बन्धमोक्षयोः ।
बन्धाय विषयासङ्गि मोक्षे निर्विषय स्मृतम् ॥ इति ॥

अतोऽनग्निहोत्र्यनग्निचिदज्ञानभिध्यायिनां ब्रह्मणः पदव्योमानुस्मरण विरुद्धम् । तस्मादग्निर्यष्टव्यश्चेतव्य. स्तोतव्योऽभिध्यातव्य. ॥ ३४ ॥

अग्निवाय्वादित्यब्रह्मणामुपस्थान, आदित्ये ब्रह्मोपासना, अब्ज्योति प्रणवव्याहृतिरूप ब्रह्म

नमोऽग्नये पृथिवीक्षिते लोकस्मृते लोकमस्मै यजमानाय धेहि । नमो वायवेऽन्तरिक्षक्षिते लोकस्मृते लोकमस्मै यजमानाय धेहि । नम आदित्याय दिविक्षिते लोकस्मृते लोकमस्मै यजमानाय धेहि । नमो ब्रह्मणे सर्वक्षिते सर्वस्मृते सर्वमस्मै यजमानाय धेहि । हिरण्मयेन पात्रेण सत्यस्यापिहित मुखम् । तत्त्व पूषन्नपावृणु सत्यधर्माय विष्णवे । योऽसा आदित्ये पुरुष. सोऽसा अहमिति । एष ह वै सत्यधर्मो यदादित्यस्याऽऽदित्यत्वम् । तच्छुक्लं पुरुषमलिङ्ग नभसोऽन्तर्गतस्य तेजसोऽंशमात्रम् । एतद्यदादित्यस्य मध्य इवेत्यक्षिण्यग्नौ च । एतद्ब्रह्म एतदमृतम् । एतद्भर्गः । एतत्सत्यधर्मो नभसोऽन्तर्गतस्य तेजसोऽंशमात्रमेतद्यदादित्यस्य मध्येऽमृतम् । यस्य हि सोम. प्राणा वाऽप्यङ्कुरा' । एतद्ब्रह्म । एतदमृतम् । एतद्भर्गः । एतत्सत्यधर्मो नभसोऽन्तर्गतस्य तेजसोऽंशमात्रमेतद्यदादित्यस्य मध्ये यजुर्दीप्यति । ओमापो ज्योती रसोऽमृत ब्रह्म भूर्भुवः स्वरोम् ।
अष्टपादं शुचिं हंस त्रिसूत्रमणुमव्ययम् ।
द्विधर्मोन्ध तेजसेद्धं सर्वं पश्यन्पश्यति ॥



नभसोऽन्तर्गतस्य तेजसोऽंशमात्रमेतद्यदादित्यस्य मध्ये उदित्वा मयूखे भवतः । एतत्सवित्सत्यधर्म' । एतद्यजु । एतत्तप' । एतदग्निः । एतद्वायुः । एतत्प्राण । एतदाप. । एतच्चन्द्रमाः । एतच्छुक्रम् । एतदमृतम् । एतद्ब्रह्मविषयम् । एतद्भानुरर्णव । तस्मिन्नेव यजमाना. सैन्धव इव व्लीयन्ते । एषा वै ब्रह्मैकता । अत्र हि सर्वे कामा. समाहिता इति । अत्रोदाहरन्ति ।
अंशुधारय इवाणुवातेरित संस्फुरत्यसावन्तर्गं सुराणाम् ।
यो हैववित्स सवित्स द्वैतवित्सैकधामेत स्यात्तदात्मकश्च ॥
ये बिन्दव इवाभ्युच्चरन्त्यजस्र विद्युदिवाभ्रार्चिष. परमे व्योमन् ।
तेऽर्चिषो वै यशस आश्रयवशाज्जटाभिरूपा इव कृष्णवर्त्मन ॥ ३५ ॥

शान्तसमृद्धे द्वे ब्रह्मरूपे, पुण्यलोकसाधनानि अग्निहोत्रादीनि कर्माणि

द्वे वाव खल्वेते ब्रह्मज्योतिषो रूपके । शान्तमेकं समृद्ध चैकम् । अथ यच्छान्तं तस्याऽऽधारं खम् । अथ यत्समृद्धमिदं तस्यान्नम् । तस्मान्मन्त्रौषधाज्यामिषपुरोडाशस्थालीपाकादिभिर्यष्टव्यमन्तर्वेद्याम् । आस्न्यवशिष्टैरन्नपानैश्चाऽऽस्यमाहवनीयमिति मत्वा । तेजस समृद्ध्यै पुण्यलोकविजित्यर्थाय । अमृतत्वाय च । अत्रोदाहरन्ति । अग्निहोत्रं जुहुयात्स्वर्गकाम । यमराज्यमग्निष्टोमेनाभियजति । सोमराज्यमुक्थेन । सूर्यराज्यं षोडशिना । स्वाराज्यमतिरात्रेण । प्राजापत्यमासहस्रसवत्सरान्तक्रतुनेति ।
वर्त्याधारस्नेहयोगाद्यथा दीपस्य संस्थिति ।
अन्तर्याण्डोपयोगादिमौ स्थितावात्मशुची तथा ॥ ३६ ॥

अपरिमिततेजस उपासना प्रणवसहिता, यज्ञेन अन्नप्राप्ति

[१]तस्मादोमित्यनेनैतदुपासीतापरिमित तेजः ।

---

(१) मैउ ६।३७, विज्ञान ३।१।१३, ४।२।१९

तत्त्रेधाऽभिहितमग्नावादित्ये प्राणे। अथैषा नाड्य-न्नबहुमित्येषाऽग्नौ हुतमादित्य गमयति। अथ यो रसोऽस्रवत्स उद्गीथ वर्षति। तेनेमे प्राणाः। प्राणेभ्यः प्रजा इति। अत्रोदाहरन्ति। यद्धविरग्नौ हूयते तदादित्यं गमयति। तत्सूर्यो रश्मिभिर्व-र्षति। तेनान्न भवति। अन्नाद्भूतानामुत्प-त्तिरिति। एवꣳ ह्याह।

अग्नौ प्रास्ताऽऽहुति सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्न तत. प्रजा ॥ ३७ ॥

उपासनायुक्त ब्रह्मज्ञानपर्यवसायि अग्निहोत्र,
अच्युतरूप महोदेवरूप ब्रह्म

ॐअग्निहोत्र जुह्वानो लोभजाल भिनत्ति। अतः संमोह छित्त्वा न क्रोधान्स्तुन्वानः काममभिध्याय-मानस्ततश्चतुर्जालं ब्रह्मकोशं भिन्दद्त परमाका-शमत्र हि सौरसौम्याग्नेयसात्त्विकानि मण्डलानि भित्त्वा ततः शुद्ध' सत्त्वान्तरस्थमचलममृतमच्युतं ध्रुव विष्णुसञ्ज्ञितꣳ सर्वापरं धाम सत्यकामसर्वज्ञ-त्वसयुक्तꣳ स्वतन्त्रं चैतन्यꣳ स्वे महिम्नि तिष्ठमानं पश्यति। अत्रोदाहरन्ति।

रविमध्ये स्थित सोमः सोममध्ये हुताशन।
तेजोमध्ये स्थितꣳ सत्त्वꣳ सत्त्वमध्ये स्थितोऽ-च्युतः॥

शरीरप्रादेशाङ्गुष्ठमात्रमणोरप्यणुं ध्यात्वाऽत परमता गच्छति। अत्र हि सर्वे कामा' समाहिता इति। अत्रोदाहरन्ति।

अङ्गुष्ठप्रादेशशरीरमात्र प्रदीपप्रतापवद्द्वि-स्त्रिधा हि।
तद्ब्रह्माभिष्टूयमान महो देवो भुवनान्याविवेश॥
ॐ नमो ब्रह्मणे नम ॥ ३८ ॥

इति षष्ठः प्रपाठक' ॥

---

(१) मैउ ६।३८

## सप्तमः प्रपाठकः

सवितरि परमात्मोपासना, सत्यनभ स्थ विश्वरूप
आत्मा

ॐअग्निर्गायत्र त्रिवृद्रथन्तरं वसन्त. प्राणो नक्ष-त्राणि वसव पुरस्तादुद्यन्ति। तपन्ति वर्षन्ति स्तुव-न्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति। अचिन्त्योऽमूर्तो गभीरो गुप्तोऽनवद्यो घनो गहनो निर्गुण. शुद्धो भास्वरो गुणभुगभयोऽनिर्वृत्तिर्योगीश्वरः सर्वज्ञो मघोऽप्रमेयोऽनाद्यन्त. श्रीमानजो धीमाननिर्देश्य. सर्वसृक्सर्वस्याऽऽत्मा सर्वभुक्सर्वस्येशान. सर्वस्या-ऽन्तरान्तर. ॥ १ ॥

इन्द्रस्त्रिष्टुप्पञ्चदशो बृहद्ग्रीष्मो व्यान सोमो रुद्रा दक्षिणत उद्यन्ति। तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति। अनाद्यन्तोऽपरिमि-तोऽपरिच्छिन्नोऽपरप्रयोज्यः स्वतन्त्रोऽलिङ्गोऽमूर्तो-ऽनन्तशक्तिर्धाता भास्करः ॥ २ ॥

मरुतो जगती सप्तदशो वैरूपं वर्षा अपानः शुक्र आदित्या पश्चादुद्यन्ति। तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति। तच्छान्त-मशब्दमभयमशोकमानन्द तृप्तꣳ स्थिरमचलममृत-मच्युत ध्रुव विष्णुसञ्ज्ञितꣳ सर्वापरं धाम ॥ ३ ॥

विश्वे देवा अनुष्टुबेकविꣳशो वैराज. शरत्समानो वरुणः साध्या उत्तरत उद्यन्ति। तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति। अन्तःशुद्ध पूतः शून्य. शान्तोऽप्राणो निरात्माऽनन्त' ॥ ४ ॥

मित्रावरुणौ पङ्क्तिस्त्रिणवत्रयस्त्रिꣳशौ शाक्कर-रैवते हेमन्तशिशिरा उदानोऽङ्गिरसश्चन्द्रमा ऊर्ध्वा उद्यन्ति। तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्त-र्विवरेणेक्षन्ति। प्रणवाख्य प्रणेतारं भारूपं विगत-निद्र विजरं विमृत्यु विशोकम् ॥ ५ ॥

शनिराहुकेतूरगरक्षोयक्षनरविहगशरभेभादयो ऽधस्तादुद्यन्ति। तपन्ति वर्षन्ति स्तुवन्ति पुनर्विश-न्त्यन्तर्विवरेणेक्षन्ति। य प्राज्ञो विधरणः सर्वान्त-रोऽक्षरः शुद्ध पूतो भान्तः क्षान्तः शान्त. ॥ ६ ॥

---

(१) मैउ ७।१-१०.

एष हि खल्वात्माऽन्तर्हृदयेऽणीयानिद्धोऽग्निरिव विश्वरूप.। अस्यैवान्नमिदꣳ सर्वम् । अस्मिन्नोता इमा प्रजा । एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविचिकित्सोऽविपाश सत्यसकल्प: सत्यकाम । एष परमेश्वर । एष भूताधिपति । एष भूतपाल.। एष सेतुर्विधरणः । एष हि खल्वात्मेशान. शम्भुर्भवो रुद्र प्रजापतिर्विश्वसृग्घिरण्यगर्भ मत्यं प्राणो हꣳस. शास्ताऽच्युतो विष्णुर्नारायण । यश्चैषोऽग्नौ यश्चायꣳ हृदये यश्चासावादित्ये स एष एक । तस्मै ते विश्वरूपाय सत्ये नभसि हिताय नम' ॥ ७ ॥

ज्ञानोपसर्गा

नाम्तिकप्रकाशनरकादिभि ससर्ग परिहार्य, बृहस्पतिप्रणीत नास्तिकशास्त्र, विद्याऽविद्याभेद, अवैदिकाध्ययननिषेध

अथेदानीं ज्ञानोपसर्गा' । राजन्मोहजालस्यैष वै योनिर्यदस्वर्ग्यै मह स्वर्ग्यस्य । एष वाटये पुरस्तादुक्तेऽप्यध.स्तम्बेनाऽऽश्लिष्यन्ति । अथ ये चान्ये ह नित्यप्रमुदिता नित्यप्रवसिता नित्ययाचनका नित्यꣳ शिल्पोपजीविन.। अथ ये चान्ये ह पुरयाचका अयाज्ययाजकाः शूद्रशिष्या. शूद्राश्च शास्त्रविद्वाꣳस.। अथ ये चान्ये ह चाटजटनटभटप्रव्रजितरङ्गावतारिणो राजकर्मणि पतितादय. । अथ ये चान्ये ह यक्षराक्षसभूतगणपिशाचोरगग्रहादीनामर्थं पुरस्कृत्य शमयाम इत्येव ब्रुवाणा । अथ ये चान्ये ह वृथा कषायकुण्डलिन कापालिनः। अथ ये चान्ये ह वृथातर्कदृष्टान्तकुहकेन्द्रजालैर्वैदिकेषु परिस्थातुमिच्छन्ति । तै सह न सवसेत्। प्रकाशभूता वै ते तस्करा अस्वर्ग्या । इत्येवꣳ ह्याह ।

नैरात्म्यवादकुहकैर्मिथ्यादृष्टान्तहेतुभि ।
भ्राम्यल्लोको न जानाति वेदविद्यान्तरं तु यत् ॥ ८ ॥

बृहस्पतिर्वै शुक्रो भूत्वेन्द्रस्याभयायासुरेभ्य क्षयायेमामविद्यामसृजत्। तया शिवमशिवमित्युदिशन्ति। अशिवꣳ शिवमिति। वेदादिशास्त्रहिꣳसकधर्माभिध्यानमस्त्विति वदन्ति । अतो नैनामभिधीयेत। अन्यथैषा वन्ध्येवैषा रतिमात्रं फलमस्या वृत्तच्युतस्येव नाऽऽरम्भणीया। इत्येवꣳ ह्याह ।

दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता ।
विद्याभीप्सित नचिकेतसं मन्ये न त्वा कामा बह्वो लोलुपन्ते ॥

विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥
अविद्यायामन्तरे वेष्ट्यमाना स्वयधीरा. पण्डितमन्यमाना. ।
दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धा ॥ ९ ॥

देवासुरा ह वै य आत्मकामा ब्रह्मणोऽन्तिक प्रयातास्तस्मै नमस्कृत्वोचु. । भगवन्वयमात्मकामा'। स त्व नो ब्रूहि। इत्यतश्चिरं ध्यात्वाऽमन्यत। अन्यतात्मानो वै तेऽसुरा । अतोऽन्यतममेतेषामुक्तम् । तदिमे मूढा उपजीवन्त्यभिष्वङ्गिणस्तर्याभिघातिनोऽनृताभिशꣳसिन । सत्यमिवानृत पश्यन्ति इन्द्रजालवदिति। अतो यद्वेदेष्वभिहित तत्सत्यम्। यद्वेदेषूक्तं तद्विद्वाꣳस उपजीवन्ति । तस्माद्ब्राह्मणो नावैदिकमधीयीत । अयमर्थ. स्यादिति ॥ १० ॥

परतेजोरूपस्य ब्रह्मण सप्रणवोपासना, चाक्षुषपुरुषस्य सपत्नीकस्य हृदये स्थिति, अवस्थात्रयातीत तुरीय ब्रह्म, द्वैत अद्वैत च

ब्रह्म

एतद्वाव तत्स्वरूपं नभसः खेऽन्तर्भूतस्य यत्परं तेज। तत्त्रेधाऽभिहितमग्नौ आदित्ये प्राण। एतद्वाव तत्स्वरूप नभस खेऽन्तर्भूतस्य यदोमित्येतदक्षरम्। अनेनैव तदुद्बुध्यत्युदयत्युच्छ्वस(सि)ति । अजस्र ब्रह्मधीयालम्ब वाऽत्रैव । एतत्समीरणे

(१) मैउ ७।११, श्रीकर २।३।२९ ( न पश्यो मृत्यु पश्यति न रोग नोत दु खताम् । सर्वꣳ ह पश्य (?) पश्यति सर्वमाप्नोति सर्वश ॥ ) एतावदेव

प्रकाशप्रक्षेपकौष्ण्यस्थानीयमेतद्धूमस्येव समीरणे नभसि प्रशाखयैवोत्क्रम्य स्कन्धात्स्कन्धमनुसरति। अप्सु प्रक्षेपको लवणस्येव। घृतस्य चौष्ण्यमिव। अभिध्यातुर्विस्तृतिरिव। एतदित्यत्रोदाहरन्ति। अथ कस्मादुच्यते वैद्युत। यस्मादुच्चारितमात्र एव सर्वꣳ शरीरं विद्योतयति। तस्मादोमित्यनेनैतदुपासीतापरिमित तेज.।

पुरुषश्चाक्षुषो योऽय दक्षिणेऽक्षिण्यवस्थितः।
इन्द्रोऽयमस्य जायेयꣳ सव्ये चाक्षिण्यवस्थिता॥
समागमस्तयोरेव हृदयान्तर्गते सुषौ।
तेजस्तल्लोहितस्यात्र पिण्ड एवोभयोस्तयो.॥
हृदयादायता तावच्चक्षुष्यस्मिन्प्रतिष्ठिता।
सारणी सा तयोर्नाडी द्वयोरेका द्विधा सती॥
मन कायाग्निमाहन्ति स प्रेरयति मारुतम्।
मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्॥
खजाग्नियोगाद्धृदि संप्रयुक्तमणोर्ह्यणुर्द्विरणुः कण्ठदेशे।
जिह्वाग्रदेशे त्र्यणुक च विद्धि विनिर्गत मातृकमेवमाहु॥
न पश्यन्मृत्यु पश्यति न रोग नोत दु खताम्।
सर्वꣳ हि पश्यन्पश्यति सर्वमाप्नोति सर्वशः॥
चाक्षुष' स्वप्नचारी च सुप्त. सुप्तात्परश्च य.।
भेदाश्चैतेऽस्य चत्वारस्तेभ्यस्तुर्यं महत्तरम्॥
त्रिष्वेकपाच्चरेद्ब्रह्म त्रिपाच्चरति चोत्तरे।
सत्यानृतोपभोगार्थो द्वैतीभावो महात्मन इति।
द्वैतीभावो महात्मन इति॥ ११॥

इति सप्तम प्रपाठकः॥

## मैत्रायण्युपनिषत्समाप्ता।



# जाबालोपनिषत्

कुरुक्षेत्रमहिमा, सर्वं गम्यमान स्थान कुरुक्षेत्रत्वेनोपास्य, अविमुक्ते कुरुक्षेत्रे तारकब्रह्मोपदेश रुद्रकृत मरण-काले, अविमुक्तक्षेत्रनिषेणविधि मुक्त्यर्थम्

ॐ बृहस्पतिरुवाच याज्ञवल्क्यम्[1] । यदनु कुरुक्षेत्रं देवाना देवयजनं सर्वेषा भूताना ब्रह्मसदनम् । अविमुक्त वै कुरुक्षेत्र देवाना देवयजन सर्वेषां भूतानां ब्रह्मसदनम् । तस्माद्यत्र क्वचन गच्छति तदेव मन्येत तदविमुक्तमेव । इद वै कुरुक्षेत्र देवाना देवयजन सर्वेषा भूताना ब्रह्मसदनम् । अत्र हि जन्तो प्राणेषूत्क्रममाणेषु रुद्रस्तारक ब्रह्म व्याचष्टे येनासावमृतीभूत्वा मोक्षीभवति । तस्मादविमुक्तमेव निषेवेत । अविमुक्त न विमुञ्चेत् । एवमेवैतद्याज्ञवल्क्यः ॥

अविमुक्तक्षेत्रे वाराणस्यां आत्मोपासनविधि , वाराणसी-पदनिरुक्ति

अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यम्[2] । य एषोऽनन्तोऽव्यक्त आत्मा तं कथमह विजानीयामिति । स होवाच याज्ञवल्क्य । सोऽविमुक्त उपास्य' । य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति । सोऽविमुक्त कस्मिन्प्रतिष्ठित इति । वरणायां नास्या च मध्ये प्रतिष्ठित इति । का वै वरणा का च नासीति । सर्वानिन्द्रियकृतान्दोषान्वारयतीति तेन वरणा भवति । सर्वानिन्द्रियकृतान्पापान्नाशयतीति तेन नासी भवतीति । कतमच्चास्य स्थान भवतीति । भ्रुवोर्घ्राणस्य च य संधि स एष द्योर्लोकस्य परस्य च सधिर्भवतीति । एतद्वै संधिं सध्या ब्रह्मविद उपासत इति । सोऽविमुक्त उपास्य इति । सोऽविमुक्त ज्ञानमाचष्टे यो वैतदेव वेदेति ॥

' आमनन्ति चैनमस्मिन् ' — आमनन्ति चैन परमेश्वर अस्मिन् मूर्धचुबुकान्तराले जाबाला. —' य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति । सोऽविमुक्त कस्मिन्प्रतिष्ठित इति । वरणायां नास्या च मध्ये प्रतिष्ठित इति । का वै वरणा का च नासी ' इति । तत्र च इमामेव नासिका सर्वाणीन्द्रियकृतानि पापानि वारयतीति सा वरणा, सर्वाणीन्द्रियकृतानि पापानि नाशयतीति सा नासी इति वरणानासीति निरुच्य पुनरामनन्ति— 'कतमच्चास्य स्थान भवतीति । भ्रुवोर्घ्राणस्य च यः सधिः स एष द्युलोकस्य परस्य च सधिर्भवति ' इति । तस्मादुपपन्ना परमेश्वरे प्रादेशमात्रश्रुतिः ।

ब्रशकर १।२।३२

शतरुद्रियजपविधि

अथ हैनं ब्रह्मचारिण ऊचु[1] । किंजप्येनामृतत्व ब्रूहीति । स होवाच याज्ञवल्क्य' शतरुद्रियेणेति । एतान्येव ह वा अमृतस्य नामधेयानि । एतैर्ह वा अमृतो भवतीति । एवमेवैतद्याज्ञवल्क्य' ॥

सन्यासविधि वैराग्यकाले, सन्यासप्रयोगविधि

अथ हैन जनको वैदेहो याज्ञवल्क्यमुपसमेत्योवाच[2] । भगवन् सन्यास ब्रूहीति । स होवाच

---

(१) जाउ १ , श्रीकठ ४।२।१६

(२) जाउ २ , ब्रशकर १।२।३२ द्योर्लोकस्य ( द्युलोकस्य ), श्रीकर १।२।३२ वरणायां ( वरुणाया ) वरणा ( वरुणा ) द्योर्लोकस्य ( द्युलोकस्य ), वल्लभ १।२।३२ सोऽविमुक्ते ( योऽविमुक्ते ) भ्रुवोर्घ्राणस्य ( भ्रुवो प्राणस्य ) द्योर्लोकस्य ( द्यौर्लोकस्य )

(१) जाउ ३ , श्रीकठ १।१।२२, १।२।१९, ४।१।१६ हैन ( हैव ) किंजप्येना ( भगवन् किंजप्येना ) एतान्येव ह ( एतानि ह ), श्रीकर १।१।२२, १।२।१३, ४।१।१६

(२) जाउ ४ , ब्रशकर ३।४।१७, २०, ४० अथ पुनरव्रती वा व्रती वा ( अथ पुनरेव व्रती वाऽव्रती वा ), भास्कर ३।४।२६, ४० वोत्सन्नाग्निरनग्निको (वोत्सन्नाग्निको)

याज्ञवल्क्य । ब्रह्मचर्यं समाप्य गृही भवेत् । गृही भूत्वा वनी भवेत् । वनी भूत्वा प्रव्रजेत् । यदि वेतरथा, ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा । अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत् । तद्धैके प्राजापत्यामेवेष्टिं कुर्वन्ति । तदु तथा न कुर्यात् । आग्नेयीमेव कुर्यात् । अग्निर्हि वै प्राण । प्राणमेवैतया करोति । त्रैधातवीयामेव कुर्यात् । एतयैव त्रयो धातवो यदुत सत्त्व रजस्तम इति । 'अय ते योनिर्ऋत्वियो यतो जातो अरोचथा । त जानन्नग्न आरोहाथा नो वर्धय रयिम् ॥' इत्यनेन मन्त्रेणाग्निमाजिघ्रेत् । एष वा अग्नेर्योनिर्य प्राण. । प्राण गच्छ स्वाहेत्येवमेवैतदाह । ग्रामादग्निमाहृत्य पूर्ववदग्निमाघ्रापयेत् । यद्यग्निं न विन्देदप्सु जुहुयात् । आपो वै सर्वा देवता । सर्वाभ्यो देवताभ्यो जुहोमि स्वाहेति हुत्वोद्धृत्य प्राश्नीयात्साज्य हविरनामयम् । मोक्षमन्त्रस्त्रयी । एवं विन्देत् । तद्ब्रह्मैतदुपासितव्यम् । एवमेवैतद्भगवन् । इति वै याज्ञवल्क्यः ॥

(१) 'ऊर्ध्वरेत.सु च शब्दे हि'—— ऊर्ध्वरेतःसु च आश्रमेषु विद्या श्रूयते । न च तत्र कर्माङ्गत्व विद्याया उपपद्यते, कर्माभावात् । न ह्यग्निहोत्रादीनि वैदिकानि कर्माणि तेषां सन्ति । स्यादेतत् । ऊर्ध्वरेतस आश्रमा न श्रूयन्ते वेदे इति, तदपि नास्ति । तेऽपि हि वैदिकेषु शब्देष्ववगम्यन्ते—— 'त्रयो धर्मस्कन्धा' (छाउ २।२३।१) 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' (छाउ ५।१०।१) 'तपःश्रद्धे ये ह्युपवसन्त्यरण्ये' (मुउ १।२।११) 'एतमेव प्रव्राजिनो लोकमिच्छन्त. प्रव्रजन्ति' (बृउ ४।४।२२) 'ब्रह्मचर्यादेव प्रव्रजेत्' इत्येवमादिषु । प्रतिपन्नाप्रतिपन्नगार्हस्थ्याना अपाकृतानपाकृतर्णत्रयाणा च ऊर्ध्वरेतस्त्व श्रुतिस्मृतिप्रसिद्धम् । तस्मादपि स्वातन्त्र्य विद्याया. ।

* ब्रशकर. ३।४।१७

(२) या तु जाबालश्रुतिरुदाह्रियते—— 'ब्रह्मचर्यं समाप्य वोत्सन्नाग्निको वा' (इति), नासौ अप्रमाणीक्रियते, स्मृतिभाष्यकारैरुदाहृतत्वात्, त्रिदण्डपक्षेऽप्युपपन्नत्वात् । अत्रापि कर्मत्यागो नास्ति । न हि प्रव्रजितशब्दस्त्यागार्थ, अर्थान्तरे रूढत्वात् । यत्पुनरत्र 'अयज्ञोपवीती कथ ब्राह्मण. स्यात्' इति पठ्यते, तत् संदिग्ध, पुरस्ताच्चोपवीतन्यासत्यागयोरभावात् । कथमकस्मादेवमाशङ्कावचनमुत्तिष्ठेत । ब्राह्मणपद चानर्थकम् । क्षत्रियादिरपि कथमयमयज्ञोपवीती स्यात् । अतिदुर्विदग्धेन केनापि इदं वाक्य प्रक्षिप्तमित्याशङ्कामहे । तस्मान्न स्मृ(श्रु)तौ क्वचित् कर्मतत्साधनत्यागाशा कर्तव्या । भास्कर ३।४।२६

(३) 'वीरहा वा एष देवाना योऽग्निमुद्वासयते' इत्यग्न्युद्वासननिषेधात् ब्रह्मचर्यादेव पारिव्राज्य, न गार्हस्थ्यात्परमिति केचित् । तथा सति 'वनी भूत्वा प्रव्रजेत्' 'उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इत्यादिविधिवैयर्थ्यं स्यात् । अतो ब्रह्मचर्यादेव प्रव्रजेदिति वा, वनी भूत्वा प्रव्रजेदिति वा न निर्बन्ध कार्यः । ब्रह्मचर्यादेव प्रव्रजेदिति वदतामयमभिप्रायः——साग्निरनग्निकश्चेति द्वावेवाश्रमौ । तत्र ब्रह्मचारी परिव्राट् च अनग्निः, गृहस्थो वानप्रस्थश्च साग्निः । अग्निमाधायोद्वास्य पारिव्राज्यात् ब्रह्मचर्यात्पारिव्राज्यमेवातीव मुख्यमिति, अन्यथा श्रुतिविरोधापत्तेः । अत. सर्वाश्रमधर्मसिद्धि. । श्रीकठ ३।४।२०

यज्ञोपवीतत्यागविधि सन्यासिना, मरणविधि पञ्चविधाभि, परिव्राजकधर्मा

**अथ हैनमत्रि. पप्रच्छ याज्ञवल्क्यम् । पृच्छामि**

शेष ब्रशाकरवत्, रामानुज ३।४।२० गृही भूत्वा वनी भवेत् (गृहात्), श्रीकठ ३।४।२० गृही भूत्वा वनी भवेत् (गृही वा), ३।४।४० गृही भूत्वा वनी भवेत् (गृहाद्वा), श्रीकर ३।४।१८ ३।४।२१ रामानुजवत्, ३।४।४०, वल्लभ ३।४।७, १३, १७, १८, १९ गृहाद्वा वनाद्वा (गृहाद्वनाद्वा) शेष रामानुजवत्, विज्ञान ३।४।२२ यदि वेत (यदि चेत) शेष रामानुजवत्, बलदेव ३।४।३९, ४९

* नाउ ७८ (पृ १६५०) इत्यत्रापि ब्रशकरभाष्य द्रष्टव्यम् ।

(१) जाउ ५, ब्रशकर २।१।३, ३।४।२०, भास्कर.

त्वा याज्ञवल्क्य । अयज्ञोपवीती कथ ब्राह्मण इति । स होवाच याज्ञवल्क्य । इदमेवास्य तद्यज्ञोपवीत य आत्मा । प्राश्याऽऽचम्याय विधि परिव्राजकानाम् । वीराध्वने वाऽनाशके वाऽपा प्रवेशे वा अग्निप्रवेशे वा महाप्रस्थाने वा । अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रह शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति । यद्यातुर स्यान्मनसा वाचा वा संन्यसेत् । एष पन्था ब्रह्मणा ह्यानुवित्तस्तेनैति सन्यासी ब्रह्मविदिति । एवमेवैष भगवन् । इति वै याज्ञवल्क्यः ॥

परमहससस्वरूपम्

तत्र परमहसा नाम संवर्तकारुणिश्वेतकेतुदुर्वासऋभुनिदाघजडभरतदत्तात्रेयरैवतकप्रभृतयोऽव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्त । त्रिदण्डं कमण्डलु शिक्य पात्रं जलपवित्र शिखां यज्ञोपवीत चेत्येतत्सर्वं भूः स्वाहेत्यप्सु परित्यज्याऽऽत्मानमन्विच्छेत् । यथा जातरूपधरो निर्द्वन्द्वो निष्परिग्रहस्तत्त्वब्रह्ममार्गे सम्यक्सपन्न शुद्धमानस' प्राणसधारणार्थं यथोक्तकाले विमुक्तो भैक्षमाचरन्नुदरपात्रेण लाभालाभयोः समो भूत्वा शुन्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रगृहनदीपुलिनगिरिकुहरकन्दरकोटरनिर्झरस्थण्डिलेष्वनिकेतवास्यप्रयत्नो निर्मम शुक्लध्यानपरायणोऽध्यात्मनिष्ठोऽशुभकर्मनिर्मूलनपर सन्यासेन देहत्याग करोति स परमहसो नाम स परमहसो नामेति ॥

'शुक्लध्यानपरायणः' इति जाबालोपनिषदि शुक्लशरीररुद्रध्यानस्यैव मुमुक्षूणां विधेयत्वेन दर्शनात् तस्यैव ब्रह्मविष्ण्वादेरप्यधिकत्वम् ।

श्रीकर १।१।३ ( पृ ४० )

---

३।४।२६ कथ ब्राह्मणः + ( स्यात् ), **विज्ञान** ३।४।२०

(१) **जाउ. ६, श्रीकर** १।१।३ ( पृ ४० ), **विज्ञान** १।१।१ ( पृ २९ ), **बलदेव** ३।४।४९.

देवतात्मभावोपासना

* [१] त्व वा अहमस्मि भगवो देवतेऽह वै त्वमसि ॥

( १ ) ' व्यतिहारो विशिंषन्ति हीतरवत् ' — यथा 'तद्योऽह सोऽसौ योऽसौ सोऽहम् ' ( ऐआ २।२।४ ) इत्यादित्यपुरुष प्रकृत्य ऐतरेयिण' समामनन्ति । तथा जाबालाः ' त्व वा अहमस्मि भगवो देवतेऽह वै त्वमसि ' इति । तत्र सशय.—किमिह व्यतिहारेणोभयरूपा मति. कर्तव्या, उत एकरूपैवेति । व्यतिहारोऽयमाध्यानाय आम्नायते इतरवत्, यथेतरे गुणाः सर्वात्मत्वप्रभृतय आध्यानायाऽऽम्नायन्ते, तद्वत् । तथा हि विशिंषन्ति समाम्नातार उभयोच्चारणेन त्वमहमस्मि अह च त्वमसीति । तच्च उभयरूपाया मतौ कर्तव्यायामर्थवद्भवति । अन्यथा हि इद विशेषेणोभयाम्नानमनर्थक स्यात्, एकेनैव कृतत्वात् । ननु उभयाम्नानस्यार्थविशेषे परिकल्प्यमाने देवतायाः ससार्यात्मत्वापत्तेर्निकर्ष प्रसज्येतेत्युक्तम् । नैष दोष., ऐकात्म्यस्यैव अनेन प्रकारेणानुचिन्त्यमानत्वात् । नन्वेव सति स एवैकत्वदृढीकार आपद्येत । न वयमेकत्वदृढीकार वारयामः । किं तर्हि । व्यतिहारेणेह द्विरूपा मतिः कर्तव्या वचनप्रामाण्यात्, नैकरूपा इत्येतावदुपपादयाम. । ३।३।३७

'आत्मेति तूपगच्छन्ति ग्राहयन्ति च ' —य' शास्त्रोक्तविशेषण परमात्मा, स किं अहमिति ग्रहीतव्य,

---

* वाक्यमिदमुद्धृतवद्भि· सर्वैर्भाष्यकारै अरवतरणे ' जाबाला ' इत्युक्तम् । जाबालोपनिषदि वाक्यमिद नोपलभामहे । वराहोपनिषदि तु ( २।३४ ) ' त्व वाऽहमस्मि भगवो देवतेऽह वै त्वमसि ' इत्याकार पाठभेदेनोपलभ्यते । जाबालीयत्वनिर्देशात् अत्रैव सगृहीतम् ।

(१) **ब्रशकर** ३।३।३७ ४।१।३ त्वमसि+ ( देवते ), **भास्कर** ३।३।३७ ४।१।३ त्वमसि + ( देवते ); **रामानुज** १।१।१ ( पृ १७ ) वा अह ( चाह ) त्वमसि + ( भगवो देवते ), ३।३।३७ वा अह ( वाऽह ) त्वमसि + ( भगवो देवते ), ४।१।३ त्वमसि+ ( भगवो देवते ), **श्रीकर** ३।३।३७ वा अह ( वाऽह ) त्वमसि + ( भगवो देवते ), ४।१।४ त्वमसि + ( भगवो देवते ), **विज्ञान** ३।३।३७

किंवा मदन्य इत्येतद्विचारयति । कथ पुनरात्मशब्दे प्रत्यगात्मविषये श्रूयमाणे सशय इति । उच्यते—अयमात्मशब्दो मुख्य. शक्यतेऽभ्युपगन्तु सति जीवेश्वरयोरभेदसभवे, इतरथा तु गौणोऽयमभ्युपगन्तव्य इति मन्यते । किं तावत्प्राप्तम् । नाहमिति ग्राह्य. । न हि अपहतपाप्मत्वादिगुणो विपरीतगुणत्वेन शक्यते ग्रहीतु, विपरीतगुणो वा अपहतपाप्मत्वादिगुणत्वेन । अपहत पाप्मत्वादिगुणश्च परमेश्वर , तद्विपरीतगुणस्तु शारीरः । ईश्वरस्य च ससार्यात्मत्वे ईश्वराभावप्रसङ्गः । ततः शास्त्रानर्थक्यम् । ससारिणोऽपीश्वरात्मत्वे अधिकार्यभावात् शास्त्रानर्थक्यमेव । प्रत्यक्षादिविरोधश्च । अन्यत्वेऽपि तादात्म्यदर्शन शास्त्रात्कर्तव्य प्रतिमादिष्विव विष्ण्वादिदर्शनमिति चेत्, काममेव भवतु । न तु ससारिणो मुख्य आत्मा ईश्वर इत्येतन्न प्रापयितव्यम् । एव प्राप्ते ब्रूम·—आत्मेत्येव परमेश्वर प्रतिपत्तव्य. । तथा हि परमेश्वरप्रक्रियायां जाबाला आत्मत्वेनैव एत मुपगच्छन्ति—'त्व वा अहमस्मि भगवो देवतेऽह वै त्वमसि देवते' इति । तथा अन्येऽपि 'अह ब्रह्मास्मि' इत्येवमादय आत्मत्वोपगमा द्रष्टव्या । ग्राहयन्ति च आत्मत्वेनैवेश्वर वेदान्तवाक्यानि ।

* ब्रशकर. ४।१।३

( २ ) केचित्तु 'व्यतिहारो०' 'सैव हि सत्यादय' इति सूत्रद्वयमधिकरणद्वय वर्णयन्ति, तत् 'सर्वं खल्विद ब्रह्म' ( छाउ ३।१४।१ ) इत्यवगतसर्वात्मभावविषयत्वादस्य वाक्यस्य नात्र प्रतिपादनीयमपूर्वमस्तीत्यनादरणीयम् । न च सर्वात्मत्वानुसधानातिरेकेण परस्मिन्ब्रह्मणि जीवत्वानुसधान जीवे च परब्रह्मत्वानुसधान तथ्य सभवति । ३।३।३७

* भास्कर ब्रशकरवत् । श्रीकठ छाउ ६।८।७ ( पृ ९१५ ) इत्यत्र द्रष्टव्यम् ।

उपासिता प्रत्यगात्मा स्वशरीरस्य स्वय यथा आत्मा, तथा स्वात्मनोऽपि पर ब्रह्म आत्मेत्येवोपासीतेत्यर्थः । कुत· । एव ह्युपगच्छन्ति पूर्वे उपासितार·—'त्व वा अहमस्मि भगवो देवतेऽह वै त्वमसि' इति । उपासितुरर्थान्तरभूत ब्रह्म उपासितार. अहमिति कथमभ्युपगच्छन्तीत्यत्राऽऽह—ग्राहयन्ति चेति । इममर्थमविरुद्धमुपासितॄन् ग्राहयन्ति शास्त्राणि । तान्प्रत्युपपादयन्तीत्यर्थ. । 'य आत्मनि तिष्ठन्०' इति च सर्वस्य चिदचिद्वस्तुन. तज्जत्वात्तल्लत्वात्तदनत्वात्तन्नियाम्यत्वात्तच्छरीरत्वाच्च सर्वस्यायमात्मा, अत स त आत्मा, अतो यथा प्रत्यगात्मनः स्वशरीर प्रत्यात्मत्वात् देवोऽह, मनुष्योऽहमित्यनुसधान, तथा प्रत्यगात्मनोऽप्यात्मत्वात्परमात्मन तस्याप्यहमित्येवानुसधान युक्तमित्येव शास्त्रैरुपपादितम् । सर्वबुद्धीना ब्रह्मैकनिष्ठत्वेन सर्वशब्दाना ब्रह्मैकनिष्ठत्वमभ्युपगच्छन्त. 'त्व वा अहमस्मि०' इति व्यतिहारेणोक्त· ।

* रामानुज. ४।१।३

( ३ ) न अखण्डतया जीवस्य ब्रह्मात्मत्व, यतः व्यतिहारः परस्परव्यत्ययेनाभेदोपदेश. अस्ति । यथा ऐतरयके—'तद्योऽह सोऽसौ०' इति, जाबाले च 'त्व वा अहमस्मि०' इति । एव श्रुत्यन्तरेष्वपि । स चायं व्यतिहारः अत्यन्ताभेदे सति अयुक्त. स्यात् । कुतः । हि यस्मात् इतरत् वस्तु इतरेण श्रुतय. सर्वाः विशिंषन्ति । यथा—'यो वै प्राणः सा प्रज्ञा, या वा प्रज्ञा स प्राणः०' ( कौउ ३।३ ) इति । व्यतिहारस्य च प्रयोजन जीवे ब्रह्मसाम्यप्रतिपादनद्वारा ब्रह्मोपासन जीवस्याससारित्वप्रतिपादन चेति ।

विज्ञान ३।३।३७

*श्रीकर ३।३।३७ इत्यत्र रामानुजस्य अक्षरशोऽनुवाद ।

# इति जाबालोपनिषत्समाप्ता ।

# कैवल्योपनिषत्

---

परमेष्ठिप्रोक्ता ब्रह्मविद्या

श्रद्धा भक्ति ध्यान सन्यासश्च मोक्षसाधनम्

ॐ [1]अथाश्वलायनो भगवन्त परमेष्ठिनमुप-समेत्योवाच ।

अधीहि भगवन्ब्रह्मविद्यां वरिष्ठा
सदा सद्भिः सेव्यमानां निगूढाम् ।
यथा चिरात्सर्वपाप व्यपोह्य
परात्परं पुरुष याति विद्वान् ।
तस्मै स होवाच पितामहश्च
श्रद्धाभक्तिध्यानयोगादवेहि ॥
[2]न कर्मणा न प्रजया धनेन
त्यागेनैके अमृतत्वमानशुः ।
परेण नाकं निहित गुहाया
विभ्राजते यद्यतयो विशन्ति ॥
[3]वेदान्तविज्ञानसुनिश्चितार्था
संन्यासयोगाद्यतय शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु परान्तकाले
परामृतात्परिमुच्यन्ति सर्वे ॥

(१) कैउ १।१, श्रीकठ ३।४।२७, श्रीकर १।१।१ ( पृ ८, १३ ), १।१।४, १।४।२२ ( पृ १७४, १७६, १७७ ), २।१।११, २२, २।३।३६, ३।१।१७, ३।२।४, २३, ३।३।१४, ३२, ५१, ३।४।१, २७, ३९, ५२, ४।१।१५, ४।४।२२, वल्लभ ३।२।२४, विज्ञान १।१।४ ( पृ. १२० ), बलदेव ३।२।२४, ३।३।५४

(२) कैउ १।२, श्रीकर ३।१।१०, ३।३।८ नाक ( साक ) जते यद्यतयो ( जदेतद्यतयो ), वल्लभ ३।४।८, १३, विज्ञान. १।१।१ ( पृ १५ ), ३।४।८, ३३

(३) कैउ १।३, श्रीकर ३।३।८, १८, ३।४।४८, ४९ शेष स्थलनिर्देशादिक मुउ ३।२।६ ( पृ. १४८४ ) इत्यत्र द्रष्टव्यम् ।

ध्येय शिव उमासहित हृदये, परमात्मन शिवस्य ब्रह्मेन्द्रादिदेवरूपता, परमात्मज्ञान मुक्तिसाधन, प्रणवस्य ध्यानसाधनता

[1]विविक्तदेशे च सुखासनस्थः
शुचि समग्रीवशिरःशरीरः ।
अत्याश्रमस्थ सकलेन्द्रियाणि
निरुध्य भक्त्या स्वगुरुं प्रणम्य ॥
[2]हृत्पुण्डरीकं विरज विशुद्ध
विचिन्त्य मध्ये विशद विशोकम् ।
अचिन्त्यमव्यक्तमनन्तरूप
शिव प्रशान्तममृत ब्रह्मयोनिम् ॥
[3]तमादिमध्यान्तविहीनमेक
विभु चिदानन्दमरूपमद्भुतम् ।
उमासहाय परमेश्वरं प्रभु
त्रिलोचन नीलकण्ठ प्रशान्तम् ।
ध्यात्वा मुनिर्गच्छति भूतयोनिं
समस्तसाक्षिं तमसः परस्तात् ॥

(१) कैउ १।४, श्रीकठ ४।१।७, ११ देशे च ( देशे तु ) अत्याश्रम ( अन्त्याश्रम ), श्रीकर १।१।१ ( पृ ९ ), ३।२।५, ३।४।४८, ४९, ४।१।७, ८

(२) कैउ १।५, श्रीकठ १।२।४, १।३।१६, ३।३।३८, ४।१।७, ४।२।१६ अचिन्त्य न्तरूप (अनन्त-मव्यक्तमचिन्त्यरूप ), श्रीकर १।१।१ ( पृ ८ ), १।१।३ ( पृ ४२ ), १।१।२५, २६, १।२।७, १४, १७, १।३।२१, २।१।२६, ३।२।११, १२, १४, ३।३।४, २२, ३८, ५९, ६१, ३।४।५२, ४।१।३, ८, ४।२।१६, ४।३।१६ न्तरूप ( न्तबोध )

(३) कैउ १।६, श्रीकठ १।१।४ ( पृ १८७ ), १।२।४, ९ ( पृ ३४४ ), १।३।१६, १।४।२८, २।१।३२, ३।२।३१, ३५, ३।३।१४, ३८, ३९, ४।१।७, ८, ४।४।२२, श्रीकर १।१।१ ( पृ ५, ९, १५, १८, १९, २७ ), १।१।३ ( पृ ४०, ४३ ), १।१४ ( पृ ४५, ४७,

'योनिश्च हि गीयते' — साक्षात्परमेश्वर एव भूतयोनिरित्युच्यते। 'उमासहाय परमेश्वर प्रभु त्रिलोचन नील कण्ठ प्रशान्तम्। ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्त साक्षिं तमस॰ परस्तात् ॥' इति समस्तसाक्षिणः सर्वज्ञस्य तमसः परस्य विश्वोत्तीर्णस्य परमशक्त्या उमया सहितस्य विशिष्टस्य परमेश्वरस्यैव भूतयोनित्व भूतप्रकृतित्व च गीयते। ततश्चोपादानमपि निमित्त पर ब्रह्मैव।

१।४।२८

'आदरादलोप.' — ननु प्रियशिरस्त्वादीनामिव नीलकण्ठत्वादीनामवयवाना ब्रह्मस्वरूपान्तर्भावे तस्योपचयापचयप्रसक्तिरित्यतो नीलकण्ठत्वादिक लुप्यत इत्यत आह — आदरादिति। पूर्वत्र नीलकण्ठत्वादिविशिष्ट रूपमुमाभिधानपरमशक्तिसाहित्य सत्यसकल्पत्वादिगुणजात च निरूपितम्। इह तेषां परब्रह्मणि लोपोऽस्ति कदाचित्, अथवा कदाचिदपि न लोप इति सशयः। किं तावत् प्राप्तम्? उपासनार्थे परब्रह्मणि कल्पितत्वात् तेषा कदाचिल्लोप इति प्राप्ते ब्रूमः — परब्रह्मण उमासहित त्वादीनां सर्वत्र श्रुतिष्वभ्यासादादरादलोप एव। अत एवालुप्तशक्तिकमुच्यते पर ब्रह्म। कुत्रादरादभ्यास इति चेत् — सर्वत्रैव। 'कृष्णपिङ्गल विरूपाक्ष' इति शक्तिसाहित्ये त्रिलोचनत्वे च सिद्धेऽपि पुनरादरार्थे हि 'उमासहाय परमेश्वर प्रभु त्रिलोचन' इत्यभ्यस्तम्। सवितृमण्डलविद्याया च 'नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये' इति ह्यादरार्थमुमापतित्वमभ्यस्तम्। अन्यत्र 'नीलग्रीवो विलोहितः, नीलग्रीवाय च शितिकण्ठाय च' इत्यादिषु नीलग्रीवत्वमीश्वरस्यादरादभ्यस्तम्। सत्यसकल्पत्वादीनामेकत्र सिद्धानामन्यत्र पुनर्वचनमादरार्थमेव। तस्मादुमापतित्वादीनामभ्यासादादरादलोप एव परब्रह्मण इति। धर्मब्रह्मणोः प्रमाणान्तरागम्ययोर्यादृशं स्वरूपमभिधत्ते भगवती श्रुतिस्तादृशमेवाभ्युपेय श्रुतिप्रामाण्यावलम्बिनाम्। अन्यथा तद्विरुद्धतर्कावलम्बने जगदुपादानत्वादिक न सिद्ध्येत्। अतः श्रुतिरेव च 'सत्य ज्ञानमनन्त ब्रह्म' इति सत्यज्ञानाकारमपरिच्छिन्नं ब्रह्मेत्युक्त्वा 'ऋत सत्य पर ब्रह्म पुरुष कृष्णपिङ्गलम्। ऊर्ध्वरेत विरूपाक्ष ॥' इत्यादिना तस्यैव त्रिलोचनत्वपरमशक्त्युमाशबलितत्वरूप विशिष्टमभिधत्ते। पुनश्च तस्य 'स एको ब्रह्मण आनन्दः' इति निरतिशयानन्दत्वमाह। तस्यैव च 'आकाशशरीर ब्रह्म। सत्यात्म प्राणाराम मनआनन्दम्। शान्तिसमृद्धममृतम्' इत्यादिना चित्प्रकाशरूपत्वमात्मारामत्व, बाह्यकरणनिरपेक्षान्त करणैकानुभूयमानपरमानन्दविलासत्व, उपशान्तसकलोपद्रवकलङ्कत्वमनादिमुक्तत्व च प्रकाशयति। अस्य हि विरूपाक्षत्वादिलक्षणशरीरसबन्धेन जीववत् प्रसक्तान् दोषांश्च 'अपहतपाप्मा' इत्यादिना निराकरोति। 'यः सर्वज्ञ॰ सर्ववित्' 'पराऽस्य शक्तिः' 'पशूना पतये' इत्यादिभिरस्य सर्वज्ञत्वसर्वशक्तित्वस्वतन्त्रत्वादिक च निरूपयति। एव श्रुतिरेव सकलप्रमाणशेखरस्थानीया, सत्यज्ञानानन्दमपरिच्छिन्नस्वरूप सर्वज्ञ नित्यतृप्त स्वतन्त्र अनादिप्रकाश अनन्तालुप्तशक्तिक आत्माराम अन्तरनुभवैकविषयपरमानन्द उपशान्त अमृत नीलकण्ठ विरूपाक्ष उमासहित पर ब्रह्म सर्वात्मक मुक्तिसाधकमिति सर्वत्र घोषयन्ती केन निवार्यते। तत. परब्रह्मण उक्तस्वरूपधर्माणामलोप एव।

श्रीकठ ३।३।३९

स[1] ब्रह्मा स शिव॰ सेन्द्र॰ सोऽक्षर. परमः स्वराट्।
स एव विष्णु॰ स प्राण॰ स कालोऽग्नि स चन्द्रमा ॥

५२), १।१।११, १२, १३ (पृ ६३), १।१।२२, २४, २५, २६, २७, १।२।३, ९, १४, २१, १।३।७, १७, २१, १।४।२२ (पृ १७५, १७७), १।४।२८, २।१।११, २६, ३५, २।२।३७, ४२ (पृ २४६), ३।१।१७, ३।२।७, ११, १२, १४, २०, २६, ३१, ३५, ३।३।४, ११, १७, १८, २२, ३८, ३९, ५६, ५९, ६०, ६१, ३।४।५२, ४।१।३, ८, ४।२।१७, ४।३।१६, ४।४।७, २२

(१) कैउ १७, श्रीकर १।१।१ (पृ २७), १।१।२ (पृ ३६), १।१।४ (पृ ८५), १।१।११, २२, ३२, १।२।३, ५, १।३।३९, १।४।२२ (पृ १७५), २।१।२२, २।२।३७, २।३।१, १८, ३८, ३।१।१४, ३।३।११, १७, ४।४।२२, विज्ञान २।३।४३

[1] स एव सर्वं यद्भूत यच्च भव्यं सनातनम् ।
ज्ञात्वा तं मृत्युमत्येति नान्य पन्था विमुक्तये ॥
[2] सर्वभूतस्थमात्मान सर्वभूतानि चात्मनि ।
संपश्यन्ब्रह्म परम याति नान्येन हेतुना ॥
[3] आत्मानमरणिं कृत्वा प्रणव चोत्तरारणिम् ।
ज्ञाननिर्मथनाभ्यासात्पापं दहति पण्डित ॥

'अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्' — कासुचिच्छाखासु श्रूयमाणा उपासनाङ्गावबद्धा सर्वासूपासनास्वङ्गत्वेनोपसहार्या न वेति सशय· । तथा हि-- 'आत्मानमरणिं कृत्वा प्रणव चोत्तरारणिम् । ध्याननिर्मथनादेव पाश दहति पण्डितः ॥' इति कैवल्योपनिषदि दहरोपासनायां प्रणवाभ्यास. श्रूयते । 'अग्नि' इत्यादिना भस्म गृहीत्वा विमृज्याङ्गानि सस्पृशेत् । 'तस्माद्व्रतमेतत् पाशुपत पशुपाशविमोक्षाय' इति अथर्वशिरसि पाशुपतविद्याया भस्मोद्धूलन श्रूयते । अन्यत्र 'तिस्रो रेखा प्रकुर्वीत' इति त्रिपुण्ड्रधारणविधि श्रूयते । तस्य 'शिवसायुज्यम्' इति फलश्रवणात् परविद्याङ्गत्वम् । तदेव विद्याङ्गावबद्धा· यासु शाखासु श्रुतास्तासु विहितेषूपासनेषूपासकै. कार्या सनिधानात् न सर्वत्र इति प्राप्ते ब्रूम । भस्मोद्धूलनादय उपासनाङ्गावबद्धा यासु शाखासु श्रुतास्तास्वेवेति न नियमः । किंतु प्रतिवेद सर्वासु शाखासु सर्वैरपि ब्रह्मोपासकै कार्या एवेति श्रुत्या सनिधेर्बाध. ।

श्रीकठ ३।३।५३

जाग्रत्स्वप्नसुषुप्तिजन्मान्तररूपावस्थायुक्त जीव, जीव एव अखण्डबोधाश्रय पुरत्रयलयाधार, प्राणादीनामाकाशादीना च आत्मन सृष्टि

[1] स एव मायापरिमोहितात्मा
शरीरमास्थाय करोति सर्वम् ।
स्त्रियन्नपानादिविचित्रभोगै
स एव जाग्रत्परितृप्तिमेति ॥
[2] स्वप्ने स जीव सुखदु खभोक्ता
स्वमायया कल्पितजीवलोके ।
सुषुप्तिकाले सकले विलीने
तमोभिभूत सुखरूपमेति ॥
[3] पुनश्च जन्मान्तरकर्मयोगात्
स एव जीव स्वपिति प्रबुद्ध ।
पुरत्रये क्रीडति यश्च जीव
स्तत सुजात सकल विचित्रम् ।
आधारमानन्दमखण्डबोध
यस्मिँल्लय याति पुरत्रय च ॥
[4] एतस्माज्जायते प्राणो मन सर्वेन्द्रियाणि च ।
ख वायुर्ज्योतिराप पृथिवी विश्वस्य धारिणी ॥

मोक्षसाधन जीवपरमात्मनोरभेदज्ञानम्

[5] यत्पर ब्रह्म सर्वात्मा विश्वस्याऽऽयतन महत् ।

(१) कैउ १।८, श्रीकर १।१।४ ( पृ ४५ ), १।१।११, २२, २७, १।२।३, १।४।२२ ( पृ १७६ ), २।३।१, १८, ३८, ३।१।१४, ३।३।१७, विज्ञान १।१।४ ( पृ १११ )

(२) कैउ १।९, श्रीकर १।३।३९, १।४।५, ३।३।१७, ४।३।१६, विज्ञान १।१।३ ( पृ ९१ )

(३) कैउ १।१०, श्रीकठ १।१।१ ( पृ ९८ ), ३।३।५३, ४।१।१६ ज्ञाननिर्मथनाभ्यासात्पाप ( ध्याननिर्मथनादेव पाश ), श्रीकर १।१।४ ( पृ ४७ ), १।३।६, १।४।२२ ( पृ १७८ ), २।१।११, २।२।४२ ( पृ २४७ ), २।३।३६, ३।१।१७, ३।२।४, ३।३।१४, १९, ५३, ३।४।१, ४९, ५२, ४।१।३, ८, १५, ४।२।१५, ४।४।२२ ज्ञान ( ध्यान ) इति क्वचित्पाठ, पाप ( पाश )

(१) कैउ १।११, विज्ञान २।३।४३, ३।३।३६, ४।१।५

(२) कैउ १।१२, श्रीकर १।१।१३ ( पृ ६२ ), २।३।३५, ३।२।७, विज्ञान १।१।३ ( पृ ७४ ), १।२।८, १।४।१७, ३।२।३, ३२ स्वप्ने स ( स एव )

(३) कैउ १।१३, विज्ञान १।१।२ ( पृ ३२ )

(४) कैउ १।१४, श्रीकर १।१।२३, २८, १।३।१, १०, २।१।१४, २।२।३९, २।३।१, ९, ४।४।७, विज्ञान १।१।२ ( पृ ३२ )

(५) कैउ १।१५, रामानुज १।१।१ ( पृ ७८ ), श्रीकर १।१।६, २३, १।३।१, १०, १।४।२२ ( पृ १७५ ), २।१।१४, २।२।२७, ३९, ४५, २।३।१, ९, १८, ३।१।१, ४।२।१४, ४।३।१५, ४।४।७ स त्वमेव ( तत्त्व-

सूक्ष्मात्सूक्ष्मतरं नित्यं स त्वमेव त्वमेव तत् ॥
जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते ।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥
[2]त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ।
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदा-
शिवः ॥
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥ १ ॥
[4]अणोरणीयानहमेव तद्व-
न्महानहं विश्वमहं विचित्रम् ।
पुरातनोऽहं पुरुषोऽहमीशो
हिरण्मयोऽहं शिवरूपमस्मि ॥
[5]अपाणिपादोऽहमचिन्त्यशक्तिः
पश्याम्यचक्षुः स शृणोम्यकर्णः ।
अहं विजानामि विविक्तरूपो
न चास्ति वेत्ता मम चित्सदाहम् ।
वेदैरनेकैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ॥

मेव ); विज्ञान १।१।४ ( पृ ९५ ), १।३।१ विश्वस्या ( सर्वस्या ) स त्वमेव ( तत्त्वमेव )
(१) कैउ १।१६, विज्ञान ३।२।१०
(२) कैउ १।१७, श्रीकर १।१।१ ( पृ २७ ), ४।४।१९ यद्भोग्यं ( यद्भोज्य ), विज्ञान १।१।२ ( पृ ३९, ४१ ), १।४।२२, ३।२।३६
(३) कैउ १।१८, श्रीकर १।१।१ ( पृ २७ ), ४।४।१९
(४) कैउ २।१, श्रीकर १।१।२७ ( पृ ८५ ), १।३।२३, २।१।४, ३।२।३४, ३।३।५१, ४।४।४, १९
(५) कैउ २।२, श्रीकर १।१।२ ( पृ ३० ), १।१।५ ( पृ ५४ ), १।१।२१, २।१।१३, २७, ३।३।७, ४।४।७, बलदेव १।२।३३

[1]न पुण्यपापे मम नास्ति नाशो
न जन्म देहेन्द्रियबुद्धिरस्ति ।
न भूमिरापो न च वह्निरस्ति
न चानिलो मेऽस्ति न चाम्बरं च ॥
[2]एवं विदित्वा परमात्मरूपं
गुहाशयं निष्कलमद्वितीयम् ।
समस्तसाक्षिं सदसद्विहीनं
प्रयाति शुद्धं परमात्मरूपम् ॥

शतरुद्रीयपठनविधिः पापनाशफलं

[3]यः शतरुद्रीयमधीते सोऽग्निपूतो भवति । सुरापानात्पूतो भवति । ब्रह्महत्यात्पूतो भवति । कृत्याकृत्यात्पूतो भवति । तस्मादविमुक्तमाश्रितो भवति । अत्याश्रमी सर्वदा सकृद्वा जपेत् ।
अनेन ज्ञानमाप्नोति संसारार्णवनाशनम् ।
तस्मादेवं विदित्वैनं कैवल्यं फलमश्नुते
कैवल्यं फलमश्नुत इति ॥ २ ॥

(१) कैउ २।३, श्रीकर १।१।२३
(२) कैउ २।४, श्रीकर १।२।११
(३) कैउ २।५, श्रीकठ ४।१।१६ ( यः शतरुद्रीयं ब्राह्मणो नित्यमधीते सोऽग्निपूतो भवति । स वायुपूतो भवति । सुरापानात्पूतो भवति । ब्रह्महत्यायाः पूतो भवति । अत्याश्रमी सर्वदा सकृद्वा जपेत् । परमं ज्ञानमाप्नोति संसारार्णवनाशनम् ), श्रीकर ४।१।१६ ( यः शतरुद्रीयं ब्राह्मणो नित्यमधीते सोऽग्निपूतो भवति । स वायुपूतो भवति । सुरापानात्पूतो भवति । स्वर्णस्तेयात्पूतो भवति । ब्रह्महत्यायाः पूतो भवति । तस्मादविमुक्तमाश्रितो भवति । अत्याश्रमी सर्वदा सकृद्वा जपेत् । अनेन ज्ञानमाप्नोति संसारार्णवतारकं । तस्मादेवं विदित्वैनं कैवल्यं पदमश्नुते ॥ )

कैवल्योपनिषत्समाप्ता ।



# अथर्वशिरउपनिषत्

रुद्र सर्वरूप सर्वतर्पक सर्वदेवध्येय, रुद्रज्ञान सर्वदेवसर्ववेदज्ञानरूपम्

ॐ [1]देवा ह वै स्वर्गं लोकमायन्। ते देवा रुद्रमपृच्छन्को भवानिति। सोऽब्रवीत्। अहमेकः प्रथममास वर्तामि च भविष्यामि च। नान्यः कश्चिन्मत्तो व्यतिरिक्त इति। सोऽन्तरादन्तरं प्राविशत्। दिशो व्यन्तरं प्राविशत्। सोऽहं नित्यानित्यो व्यक्ताव्यक्तो ब्रह्माहं ब्रह्माहं प्राञ्च प्रत्यञ्चोऽहं दक्षिणाञ्च उदञ्चोऽहमधश्चोर्ध्वश्चाहं दिशश्च प्रदिशश्चाहं पुमानपुमान्स्त्रियश्चाहं सावित्र्यहं गायत्र्यहं त्रिष्टुब्जगत्यनुष्टुप्चाहं छन्दोऽहं सत्योऽहं गार्हपत्यो दक्षिणाग्निराहवनीयोऽहं गौरहं गौर्यहमृगहं यजुरहं सामाहमथर्वाङ्गिरसोऽहं ज्येष्ठोऽहं श्रेष्ठोऽहं वरिष्ठोऽहमापोऽहं तेजोऽहं गुह्योऽहमरण्योऽहमक्षरमहं क्षरमहं पुष्करमहं पवित्रमहमग्रं च मध्यं च बहिश्च पुरस्ताज्ज्योतिरित्यहमेव सर्वे। व्योममेव स। सर्वे समा। यो मा वेद स देवान्वेद स सर्वांश्च वेदान्साङ्गानपि। ब्रह्म ब्राह्मणैश्च गा गोभिर्ब्राह्मणान्ब्राह्मण्येन हविर्हविषाऽऽयुरायुषा सत्येन सत्यं धर्मेण धर्मं तर्पयामि स्वेन तेजसा। ततो ह वै ते देवा रुद्रमपृच्छन्। ते देवा रुद्रमपश्यन्। ते देवा रुद्रमध्यायन्। ते देवा ऊर्ध्वबाहवो रुद्रं स्तुन्वन्ति ॥ १ ॥

'तदुपर्यपि बादरायणः सम्भवात्' — ब्रह्मोपासने देवानामप्यधिकारोऽस्ति। कुतः। तेषामर्थित्वसम्भवात्। न च परमेश्वरस्य देवाना च पद समान, यत. सामान्येन सुखवाचकोऽपि स्वर्गशब्द. प्रकरणादिना विशेषमभिधत्ते, यथेश्वरशब्द. स्वामिमात्रवाचकः प्रकरणवशात् 'उपेयादीश्वर चैव योगक्षेमार्थसिद्धये' इत्यादिषु जनपदाधिपतिमात्रवाची राजविषयः, ब्रह्मणः प्रकरणे पुनरयं निरतिशयैश्वर्यवाची तद्विषयो भवति, तथा सुखमात्रवाचकः स्वर्गशब्दः प्रकरणेन प्रमाणान्तरोपपत्त्या च देवानां पद क्षयिष्णुत्वसातिशयत्वादिदोषकलुषित स्वल्पसुखमभिधत्ते। परब्रह्मणः शिवस्य पद तु निरतिशयसुखसुखस्वरूपमनावृत्तिलक्षणमेव ब्रूते।

१।३।२५

'अवस्थितेरिति काशकृत्स्नः' — 'देवा ह वै स्वर्गं लोकमगमस्ते देवा रुद्रमपृच्छन् को भवानिति। सोऽब्रवीत् अहमेक. प्रथममास वर्तामि च भविष्यामि च।

---

(१) शिरउ १, श्रीकठ १।२।१, १९ १।३।२५ रुद्रमध्यायन् ( रुद्र ध्यायन्ति ) १।४।२२ ( देवा ह वै स्वर्गं लोकमगमस्ते देवा रुद्रमपृच्छन् को भवानिति। सोऽब्रवीत्। अहमेक प्रथममास वर्तामि च भविष्यामि च नान्य कश्चिन्मत्तो व्यतिरिक्त इति। सोऽन्तरादन्तर प्राविशद्दिशा चान्तर स प्राविशत् सोऽहं नित्यानित्यो ब्रह्माहं ब्रह्माहं प्राञ्च प्रत्यञ्चोऽहं दक्षिणाञ्चोदञ्चोऽहमधश्चोर्ध्वं च दिशश्च विदिशश्चाहं पुमानहं स्त्री चाहं गायत्र्यहं सावित्र्यहं त्रिष्टुब्जगत्यनुष्टुप् चाहं छन्दोऽहं गार्हपत्योऽहं दक्षिणाग्निराहवनीयोऽहं सत्योऽहं गौरहं गौर्यहं ज्येष्ठोऽहं श्रेष्ठोऽहं वरिष्ठोऽहमापोऽहं तेजोऽहमृग्यजुःसामाथर्वाङ्गिरसोऽहं क्षरमहमक्षरमहं गुह्योऽहमरण्योऽहं पुष्करमहं पवित्रमहमग्र च मध्य च बहिश्च पुरस्ताज्ज्योतिरित्यहमेव सर्वं च मा यो वेद स सर्वान् देवान् वेद ) ३।२।११ दिशो व्यन्तर ( दिशश्चान्तर ) ३।२।४० स देवान् वेद ( स सर्वान् देवान् वेद ) ३।३।२३, ४।४।२२ ( परमेश्वरोऽहं पुष्करमहं पवित्रमहमग्र च मध्य च बहिश्च पुरस्ताज्ज्योतिरित्यहमेक सर्वे च मामेव च मा यो वेद स सर्वान् देवान् वेद ), श्रीकर १।१।१ ( पृ, ९, ११, १९, २०, २७ ), १।१।२ ( पृ ३६ ), १।१।४ ( पृ ४४ ), १।१।११, २२, १।२।४, १८, १।३।७, २६, १।४।२२, ७५, २।१।२२, २।२।३९, २।३।५०, २।४।१६, ३।१।१४, ३।२।३६, ४०, ३।३।२३, ३५, ४।३।१६, ४।४।२२ लोकमायन् ( लोकमगमन् ) दिशो व्यन्तर ( दिशश्चान्तर )

नान्यः कश्चिन्मत्तो व्यतिरिक्ति इति । सोऽन्तरादन्तर प्राविशत् । दिशा चान्तर स प्राविशत् । सोऽह नित्या नित्यो ब्रह्माह ब्रह्माह प्राञ्च॰ प्रत्यञ्चोऽह दक्षिणाञ्चोदञ्चो ऽहमधश्चोर्ध्व च दिशश्च विदिशश्चाह पुमानह स्त्री चाह गायत्र्यह सावित्र्यह त्रिष्टुब्जगत्यनुष्टुप् चाह छन्दोऽह गार्हपत्योऽह दक्षिणाग्निराहवनीयोऽह सत्योऽह गौरह गौर्यह ज्येष्ठोऽह श्रेष्ठोऽह वरिष्ठोऽहमापोऽह तेजोऽहमृग्यजुः सामाथर्वाङ्गिरसोऽह क्षरमहमक्षरमह गुह्योऽहमरण्योऽह पुष्करमह पवित्रमहमग्र च मध्य च बहिश्च पुरस्ताज्ज्योतिरित्यहमेव सर्वे च मा यो वेद स सर्वान् देवान् वेद' इत्यन्तेन । द्वितीयखण्डे च सर्वानुप्रवेशादेव 'यो वै रुद्रः स भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः' ।

श्रीकठ १।४।२२

रुद्रनमस्कारा, रुद्रः सर्वदेवरूप

ओं यो वै रुद्रः स भगवान्यश्च ब्रह्मा तस्मै वै नमो नम॰ । ओं यो वै रुद्र. स भगवान्यश्च विष्णुस्तस्मै वै नमो नमः । ओं यो वै रुद्रः स भगवान्यश्च स्कन्दस्तस्मै वै नमो नम । ओं यो वै रुद्र॰ स भगवान्यश्चेन्द्रस्तस्मै वै नमो नम. । ओं यो वै रुद्र स भगवान्यश्चाग्निस्तस्मै वै नमो नम. । ओं यो वै रुद्र स भगवान्यश्च वायुस्तस्मै वै नमो नम । ओं यो वै रुद्र स भगवान्यश्च सूर्यस्तस्मै वै नमो नमः । ओं यो वै रुद्र. स भगवान्यश्च सोमस्तस्मै वै नमो नम । ओं यो वै रुद्रः स भगवान्ये चाष्टौ ग्रहास्तस्मै वै नमो नम । ओं यो वै रुद्र स भगवान्ये चाष्टौ प्रतिग्रहास्तस्मै वै नमो नम॰ । ओं यो वै रुद्र स भगवान्या च भूस्तस्मै वै नमो नम । ओं यो वै रुद्र. स भगवान्या च भुवस्तस्मै वै नमो नमः । ओं यो वै रुद्रः स भगवान्या च स्वस्तस्मै वै नमो नम॰ । ओं यो वै रुद्रः स भगवान्या च पृथिवी तस्मै वै नमो नम॰ । ओं यो वै रुद्रः स भगवान्यच्चान्तरिक्ष तस्मै वै नमो नम॰ । ओं यो वै रुद्र॰ स भगवान्या च द्यौस्तस्मै वै नमो नम॰ । ओं यो वै रुद्र. स भगवान्याश्चाऽऽपस्तस्मै वै नमो नम । ओं यो वै रुद्र स भगवान्यच्च तेजस्तस्मै वै नमो नम॰ । ओं यो वै रुद्र स भगवान्यच्चाऽऽकाशं तस्मै वै नमो नमः । ओं यो वै रुद्र स भगवान्यश्च कालस्तस्मै वै नमो नम । ओं यो वै रुद्रः स भगवान्यश्च यमस्तस्मै वै नमो नम । ओं यो वै रुद्र स भगवान्यश्च मृत्युस्तस्मै वै नमो नम । ओं यो वै रुद्रः स भगवान्यच्चामृत तस्मै वै नमो नम । ओं यो वै रुद्र स भगवान्यच्च विश्वं तस्मै वै नमो नम । ओं यो वै रुद्र स भगवान्यच्च स्थूल तस्मै वै नमो नम । ओं यो वै रुद्र॰ स भगवान्यच्च सूक्ष्मं तस्मै वै नमो नमः । ओं यो वै रुद्र स भगवान्यच्च शुक्ल तस्मै वै नमो नम । ओं यो वै रुद्रः स भगवान्यच्च कृष्ण तस्मै वै नमो नम । ओं यो वै रुद्रः स भगवान्यच्च कृत्स्नं तस्मै वै नमो नम । ओं यो वै रुद्र स भगवान्यच्च सत्य तस्मै वै नमो नम । ओं यो वै रुद्र स भगवान्यच्च सर्वं तस्मै वै नमो नम ॥ २ ॥

विश्वरूप, सूक्ष्म पुरुष, महाग्रास, हृदयस्थः देव

भूस्त आदि॰ । मध्य भुवस्ते । स्वस्ते शीर्षम् । विश्वरूपोऽसि । ब्रह्मैकस्त्व द्विधा त्रिधा बद्धस्त्वं शान्तिस्त्व पुष्टिस्त्व हुतमहुत दत्तमदत्त सर्वमसर्वं विश्वमविश्व कृतमकृत परमपरं परायणं च त्वम् ।

अपाम सोममभृता अभूमागन्म ज्योतिरविदाम देवान् ।

किं नूनमस्मान्कृणवदराति किमु धूर्तिरमृत मर्त्यस्य ॥

सोमसूर्य. पुरस्तात् । सूक्ष्म. पुरुषः सर्वम् । जगद्धित वा एतदक्षरं प्राजापत्यं सौम्य सूक्ष्मं

(१) शिरउ २, श्रीकठ ५।१।४ ( पृ १८२ ), ९।२।४, १९, ३।२।३६, ४० ( यो वै रुद्र. स भगवान् भूर्भुव सुवर्यश्च ब्रह्मा तस्मै वै नमो नमः, यश्च विष्णु, यश्च महेश्वर इ० ), श्रीकर २।४।१६, ३।२।४०, ४।४।२२

(१) शिरउ ३, श्रीकठ १।१।२ ( पृ १२६ ), ९।२।९ ( तस्मा उपसहर्त्रे महाग्रासाय वै नम ) एतावदेव

पुरुष ग्राह्यमग्राह्येण भाव भावेन सौम्यं सौम्येन सूक्ष्म सूक्ष्मेण वायव्यं वायव्येन ग्रसति । तस्मै महाग्रासाय वै नमो नम ।

हृदिस्था देवता· सर्वा हृदि प्राणा प्रतिष्ठिता· ।
हृदि त्वमसि यो नित्य तिस्रो मात्रा परस्तु स·॥

ओंकार , प्रणव , सर्वव्यापी, अनन्त , तार, शुक्ल, सूक्ष्म, वैद्युत, पर ब्रह्म, एक , रुद्र , ईशान , भगवान् महेश्वर , इति सज्ञाना निरुक्तिसहित रुद्रचरितम्

तस्योत्तरतः शिरो दक्षिणत पादौ । य उत्तरत स ओंकार । य ओंकार स प्रणव । य प्रणव स सर्वव्यापी । य स्सर्वव्यापी सोऽनन्त । योऽनन्तस्तत्तारम् । यत्तार तच्छुक्लम् । यच्छुक्ल तत्सूक्ष्मम् । यत्सूक्ष्म तद्वैद्युतम् । यद्वैद्युत तत्परं ब्रह्म । यत्परं ब्रह्म स एक । य एक स रुद्र· । यो रुद्र· स ईशान· । य ईशान· स भगवान्महेश्वर ॥ ३ ॥

अथ[1] कस्मादुच्यत ओंकारः । यस्मादुच्चार्यमाण एव प्राणानूर्ध्वमुत्क्रामयति तस्मादुच्यत ओंकार । अथ कस्मादुच्यते प्रणव । यस्मादुच्चार्यमाण एव ऋग्यजु सामाथर्वाङ्गिरसो ब्रह्म ब्राह्मणेभ्य प्रणामयति नामयति च तस्मादुच्यते प्रणव । अथ कस्मादुच्यते सर्वव्यापी । यस्मादुच्चार्यमाण एव यथा स्नेहेन पललपिण्डमिव शान्तरूपमोतप्रोतमनुप्राप्तो व्यतिसृष्टश्च तस्मादुच्यते सर्वव्यापी । अथ कस्मादुच्यतेऽनन्त । यस्मादुच्चार्यमाण एव तिर्यगूर्ध्वमधस्ताच्चास्यान्तो नोपलभ्यते तस्मादुच्यतेऽनन्तः । अथ कस्मादुच्यते तारम् । यस्मादुच्चार्यमाण एव गर्भजन्म व्याधिजरामरणससारमहाभयात्तारयति त्रायते तस्मादुच्यते तारम् । अथ कस्मादुच्यते शुक्लम् । यस्मादुच्चार्यमाण एव क्रन्दते क्लामयते तस्मादुच्यते शुक्लम् । अथ कस्मादुच्यते सूक्ष्मम् । यस्मादुच्चार्यमाण एव सूक्ष्मो भूत्वा शरीराण्यधितिष्ठति सर्वाणि चाङ्गान्यभिमृशति तस्मादुच्यते सूक्ष्मम् । अथ कस्मादुच्यते वैद्युतम् । यस्मादुच्चार्यमाण एवाव्यक्ते महति तमसि द्योतयते तस्मादुच्यते वैद्युतम् । अथ कस्मादुच्यते पर ब्रह्म । यस्मात्परमपरं परायण च बृहत् बृहत्या बृहयति तस्मादुच्यते परं ब्रह्म । अथ कस्मादुच्यत एक· । य सर्वान्प्राणान्सभक्ष्य सभक्षणेनाज ससृजति विसृजति च । तीर्थमेके व्रजन्ति तीर्थमेके दक्षिणा प्रत्यञ्च उदञ्च प्राञ्चोऽभिव्रजन्त्येके तेषा सर्वेषामिह सगति । साक स एको भूतश्चरति प्रजानस्तस्मादुच्यत एक । अथ कस्मादुच्यते रुद्र । यस्मादृषिभिर्नान्यैर्भक्तैर्द्रुतमस्य रूपमुपलभ्यते तस्मादुच्यते रुद्र । अथ कस्मादुच्यत ईशान । य सर्वान्देवानीशत ईशनीभिर्जननीभिश्च शक्तिभि । 'अभि त्वा शूर नोनुमोऽदुग्धा इव धेनव । ईशानमस्य जगत· स्वर्दृशमीशानमिन्द्र तस्थुष ॥' इति तस्मादुच्यत ईशान । अथ कस्मादुच्यते भगवान्महेश्वर । यस्माद्भक्ता ज्ञानेन भजत्यनुगृह्णाति च वाच ससृजति विसृजति च य सर्वान्भावान्परित्यज्याऽऽत्मज्ञानेन योगैश्वर्येण महति महीयते तस्मादुच्यते भगवान्महेश्वर· । तदेतद्रुद्रचरितम् ॥ ४ ॥

रुद्रज्ञानात् पशुपाशमोक्ष

एषोऽह देव· प्रदिशो नु सर्वा
पूर्वो ह जात स उ गर्भे अन्त ।

(१) शिरउ ४, श्रीकठ ३।२।१५ (अथ कस्मादुच्यते महादेवो य सर्वान् भावान् परित्यज्यात्मज्ञानयोगैश्वर्ये महति महीयते तस्मादुच्यते महादेव ) एतावदेव, श्रीकर १।१।२ (पृ ३५) १।१।११, ३।२।१५ श्रीकठवत्

(१) शिरउ ५, श्रीकठ १।१।२ ( पृ १२४) (एक एव रुद्रो न द्वितीयाय तस्थु , तुरीयमिम लोकमीशत ईशनीयुर्जननीयुर्य सर्वाँल्लोकानीशत ईशनीभिर्जननीभि ) एतावदेव, (पृ १२६ )(य इमाँल्लोकानीशत ईशनीभि ) एतावदेव, ३।३।५३ ( तस्माद्व्रतमेतत्पाशुपत पशुपाशविमोक्षाय ) एतावदेव, ३।४।४८ ( तृष्णा छित्वा हेतुजालस्य मूल बुद्धया सचिन्त्य स्थापयित्वा च रुद्रे । रुद्र एकत्वमाहु । रुद्र शाश्वत वै पुराणमिषमूर्जं तपसा नियच्छत व्रतमेतत्पाशुपतम् ), श्रीकर १।१।१ (पृ ३, ९, २७), १।२।१, १।२।७, ३।२।११, ३।३।३२, ५३ विश्व

स एव जात. स जनिष्यमाणः
प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः ॥
एको रुद्रो न द्वितीयाय तस्थौ
य इमांल्लोकानीशत ईशनीभिः ।
प्रत्यङ्जनास्तिष्ठति संचुकोचान्तकाले
संसृज्य विश्वा भुवनानि गोप्ता ॥
यो योनिं योनिमधितिष्ठत्येको
येनेद संचरति विचरति सर्वम् ।
तमीशानं वरद देवमीड्य
निचाय्येमां शान्तिमत्यन्तमेति ॥
क्षमां हित्वा हेतुजालस्य मूलं
बुद्धया सचित स्थापयित्वा तु रुद्रे
रुद्रमेकत्वमाहुः ।
शाश्वत वै पुराणमिषमूर्जेन
पशवोऽनुनामयन्त मृत्युपाशान् ।
तदेतेनाऽऽत्मन्नेतेनार्धचतुर्थमात्रेण
शान्ति संसृजति पाशविमोक्षणम् ॥

प्रणवमात्राचतुष्टयफलानि

या सा प्रथमा मात्रा ब्रह्मदेवत्या रक्ता वर्णेन, यस्ता ध्यायते नित्यं स गच्छेद्ब्राह्म पदम् । या सा द्वितीया मात्रा विष्णुदेवत्या कृष्णा वर्णेन, यस्ता ध्यायते नित्यं स गच्छेद्वैष्णवं पदम् । या सा तृतीया मात्रेशानदेवत्या कपिला वर्णेन, यस्ता ध्यायते नित्यं स गच्छेदैशान पदम् । या साऽर्ध-चतुर्थी मात्रा सर्वदेवत्याऽव्यक्तीभूता खं विचरति शुद्धस्फटिकसनिभा वर्णेन, यस्ता ध्यायते नित्य स गच्छेत्पदानामकम् । तदेतदुपासीत । मुनयोऽवाग्वदन्ति । न तस्य ग्रहणम् । अय पन्था विहित उत्तरेण, येन देवा यान्ति, येन पितर., येन ऋषय', परमपरं परायण चेति ।

हृदये देवदर्शन तृष्णादिच्छेदेन

वालाग्रमात्र हृदयस्य मध्ये
विश्व देवं जातरूप वरेण्यम् ।
तमात्मस्थं ये नु पश्यन्ति धीरा-
स्तेषां शान्तिर्भवति नेतरेषाम् ॥
यस्मिन्क्रोधं या च तृष्णा क्षमां च
तृष्णां हित्वा हेतुजालस्य मूलम् ।
बुद्धया संचितं स्थापयित्वा तु रुद्रे
रुद्रमेकत्वमाहु ।
रुद्रो हि शाश्वतेन पुराणेनेषमूर्जेण तपसा
नियन्ता ॥

भस्मधारणविधि

अग्निरिति भस्म । वायुरिति भस्म । जलमिति भस्म । स्थलमिति भस्म । व्योमेति भस्म । सर्वं ह वा इद भस्म । मन एतानि चक्षूंषि । यस्माद्व्रतमिदं पाशुपत यद्भस्मनाऽङ्गानि सस्पृशेत्तस्माद्ब्रह्म । तदेतत्पाशुपत पशुपाशविमोक्षणाय ॥ ५ ॥

'मौनवदितरेषामप्युपदेशात्' — अथर्वशिरसि श्रूयते — 'तृष्णां छित्वा हेतुजालस्य मूल बुद्धया सचिन्त्य स्थापयित्वा च रुद्रे । रुद्र एकत्वमाहु । रुद्र शाश्वत वै पुराणमिषमूर्जं तपसा नियच्छत व्रतमेतत् पाशुपतम्' इति । तत्पाशुपतव्रतमथर्वशिरसि श्रुत पुराणेषु च प्रसिद्धमेव । तन्निष्ठानां विद्याप्राप्तिर्मुक्तिश्च संभवति न वेति सशयः । किं प्राप्तम् ? आश्रमेष्वनन्तर्भावात्, अवसानदर्शनात्, पुत्राद्यर्थं कृष्णादिभिरनुष्ठितत्वात् अवान्तरफलसिद्धिमन्तरेण तेषां न मोक्षसिद्धिरस्ति । इति प्राप्ते ब्रूम.—तेषामत्यन्तव्रतधारिणां मुक्तिरेव फल सभवति । विद्यासपत्तिश्च परब्रह्मणो रुद्रस्यानुसधानरूपा । मुनिधर्मवदितरेषामपि भिक्षाचर्यशमदमादीनां परधर्माणा पाशुपताख्ये व्रतेऽप्युपदेशात् तन्निष्ठानामपि 'रुद्र एकत्वमाहु. । रुद्र शाश्वत वै पुराणमिषमूर्जं तपसा नियच्छत व्रतमेतत् पाशुपतम् .. अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि सस्पृशेत् तस्माद्व्रतमेतत्पाशुपत पशुपाशविमोक्षाय' इति रुद्रध्यानस्य पाशविच्छेदरूपस्य मोक्षफलस्य सबन्धावगमाच्च । अतो यावदायुष पाशुपतव्रतधारिणां मुक्तिरेव फलम् ।

श्रीकंठ. ३।४।४९

---

देव जातरूपं ( विश्वेदेव जातवेदस ) शान्तिर्भवति ( शान्तिः शाश्वत )

सर्वव्यापी नागधारी विश्वस्रष्टा रुद्र नमस्कार्य

[१]यो अग्नौ रुद्रो यो अप्स्वन्तर्य ओषधीवीरुध आविवेश ।
य इमा विश्वा भूतानि चाक्लृपे तस्मै रुद्राय नमो अस्त्वग्नये ॥
यो रुद्रो अग्नौ यो रुद्र ओषधीर्वीरुध आविवेश ।
यो रुद्र इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय वै नमो नम ॥
यो रुद्रो अप्सु यो रुद्र ओषधीषु यो वनस्पतिषु ।
येन रुद्रेण जगदूर्ध्वं धारित पृथिवी द्विधा त्रिधर्ता धारिता नागा येऽन्तरिक्षे तस्मै रुद्राय वै नमो नमः ॥

शिर देवकोश प्राणरक्षित

मूर्धानमस्य संसीव्याथर्वा हृदय च यत् ।
मस्तिष्कादूर्ध्व प्रैरयत्पवमानोऽधि शीर्षत ॥
तद्वा अथर्वणः शिरो देवकोशः समुब्जित ।
तत्प्राणो अभिरक्षति शिरो अन्नमथो मनः ॥

सर्वगोप्ता सहस्रपादेकमूर्धा पर रुद्र

नव दिवो देवजनेन गुप्ता नवान्तरिक्षाणि नव भूम इमाः ।
यस्मिन्निद सर्वमोतप्रोत यस्मादन्यन्न परं किंचनास्ति ॥
न तस्मात्पूर्वं न परं तदस्ति न भूत नोत भव्यं यदासीत् ।
सहस्रपादेकमूर्ध्ना व्याप्तं स एवेदमावरीवर्ति भूतम् ॥

कालव्यापकात् रुद्रात् सृष्टि, सत्य परम तप, अब्ज्योतिर्व्याहृतिप्रणवरूप ब्रह्म

अक्षरात्सजायते काल॰ कालाद्व्यापक उच्यते ।
व्यापको हि भगवान्रुद्रो भोगायमानो यदा शेते रुद्रस्तदा संहार्यते प्रजा ॥
उच्छ्वसिते तमो भवति । तमस आप । अप्स्वङ्गुल्या मथिते मथितम् । शिशिरे शिशिरम् । मथ्यमान फेनो भवति । फेनादण्ड भवति । अण्डाद्ब्रह्मा भवति । ब्रह्मणो वायु । वायोरोंकार । ओंकारात्सावित्री । सावित्र्या गायत्री । गायत्र्या लोका भवन्ति । अर्चयन्ति तप सत्य मधु क्षरन्ति यद्ध्रुवम् । एतद्धि परम तप आपो ज्योती रसोऽमृत ब्रह्मभूर्भुव स्वरों नम इति ॥ ६ ॥

अथर्वशिरस अध्ययनविधि फलनिरूपणसहित

[१]य इदमथर्वशिरो ब्राह्मणोऽधीते । अश्रोत्रिय॰ श्रोत्रियो भवति । अनुपनीत उपनीतो भवति । सोऽग्निपूतो भवति । स वायुपूतो भवति । स सूर्यपूतो भवति । स सोमपूतो भवति । स सत्यपूतो भवति । स सर्वपूतो भवति । स सर्वैर्देवैर्ज्ञातो भवति । स सर्वैर्वेदैरनुध्यातो भवति । स सर्वेषु तीर्थेषु स्नातो भवति । तेन सर्वैः क्रतुभिरिष्ट भवति । गायत्र्या॰ षष्टिसहस्राणि जप्तानि भवन्ति । इतिहासपुराणाना रुद्राणा शतसहस्राणि जप्तानि भवन्ति । प्रणवानामयुत जप्त भवति । आ चक्षुष॰ पङ्क्तिं पुनाति । आ सप्तमात्पुरुषयुगान्पुनाति । इत्याह भगवान् । अथर्वशिरः सकृज्जप्त्वैव शुचि पूत कर्मण्यो भवति । द्वितीयं जप्त्वा गणाधिपत्यमवाप्नोति । तृतीयं जप्त्वैवमेवानुप्रविशत्यों सत्यमों सत्यम् ॥ ७ ॥

---

(१) शिरउ ६, श्रीकर १।१।१ (पृ. २७), १।१।४, २२, २७, १।२।१८, २६, २।१।५, २२, २।२।२, ३६, ४२, २।३।१, ९, ११, २।४।१२, १६, ३।१।१४, ३।२।११, ४०, ३।३।३५, ३।४।४५, ४।१।३, ६, ४।२।५ (यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु) एतावदेव

(१) शिरउ ७, श्रीकठ ४।१।१६ (योऽथर्वशिरस ब्राह्मणो नित्यमधीते सकृज्जप्त्वा शुचि पूत॰ कर्मण्यो भवति द्वितीय जप्त्वा गाणपत्यमाप्नोति तृतीय जप्त्वा देवमेवानुप्रविशति), श्रीकर ४।४।१६

# अथर्वशिरउपनिषत्समाप्ता ।

# अथर्वशिखोपनिषत्

अथर्वप्रोक्ता प्रणवोपासना

चतुष्पात् अक्षर प्रणवात्मक पर ब्रह्म, मात्राचतुष्टय-स्वरूप , प्रणवोच्चारविधि

[1]अथ हैन पैप्पलादोऽङ्गिराः सनत्कुमारश्चाथर्वाण-मुवाच । भगवन् किमादौ प्रयुक्तं ध्यान ध्यायितव्य, किं तद्ध्यानं, को वा ध्याता, कश्च ध्येयः । स एभ्योऽथर्वा प्रत्युवाच । ओमित्येतदक्षरमादौ प्रयुक्त ध्यान ध्यायितव्यमिति । एतदक्षरं परं ब्रह्म । अस्य पादाश्चत्वारो वेदा· । चतुष्पादिद-मक्षरं परं ब्रह्म । पूर्वाऽस्य मात्रा पृथिव्यकार स ऋग्भिर्ऋग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्य । द्वितीयान्तरिक्षं स उकार स यजुर्भिर्यजुर्वेदो विष्णू रुद्रास्त्रिष्टुब्दक्षिणाग्नि । तृतीया द्यौ· स मकारः स सामभि· सामवेदो रुद्र आदित्या जग-त्याहवनीय· । याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा सोमलोक ओंकार साऽथर्वणैर्मन्त्रैरथर्ववेद· संव-र्तकोऽग्निर्मरुतो विराडेकर्षिर्भास्वती स्मृता । प्रथमा रक्तपीता महद्ब्रह्मदैवत्या । द्वितीया विद्युमती कृष्णा विष्णुदैवत्या । तृतीया शुभाशुभा शुक्ला रुद्रदैवत्या । याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा विद्युमती सर्व वर्णा पुरुषदैवत्या । स एष ह्योंकारश्चतुरक्षरश्चतु-ष्पादश्चतु शिरश्चतुर्थमात्रः । स्थूलमेतद्ध्रस्वदीर्घ-प्लुतम् । ॐ ॐ ॐ इति त्रिरुक्त्वा चतुर्थ शान्त आत्मा प्लुतप्रणवप्रयोगेण समस्तमोमिति प्रयुक्तमात्मज्योति· सकृदावर्तते । सकृदुच्चारित मात्रेणोर्ध्वमुन्नामयतीत्योंकारः । प्राणान् सर्वान् प्रलीयत इति प्रलयः । प्राणान् सर्वान् परमात्मनि प्रणामयतीत्येतस्मात्प्रणव· । चतुर्धाऽवस्थित इति सर्वदेववेदयोनि सर्ववाच्यवस्तु प्रणवात्मकम् ॥१॥

(१) शिखाउ १ , श्रीकर ३।३।३८

प्रणवे तारविष्णुब्रह्मप्रकाशमहादेवरूपताया सधानम्

[1]देवाश्चेति सधत्ताम् । सर्वेभ्यो दु खभयेभ्यः सतारयतीति तारणात्तार । सर्वे देवा सविशन्तीति विष्णु· । सर्वाणि बृहयतीति ब्रह्मा । सर्वेभ्योऽन्तः-स्थानेभ्यो ध्येयेभ्यः प्रदीपवत् प्रकाशयतीति प्रकाश· । प्रकाशेभ्य सदोमित्यन्त शरीरे विद्यु-द्वद्द्योतयति मुहुर्मुहुरिति विद्युद्वत्प्रतीया दिशं भित्त्वा सर्वाँल्लोकान् व्याप्नोति व्यापयतीति व्याप-नाद्व्यापी महादेवः ॥ २ ॥

तुरीय ब्रह्म, ध्याता ध्यान ध्येयश्च, शिवध्यानविधि , मुक्तिफलम्

[2]पूर्वाऽस्य मात्रा जागर्ति जागरितं द्वितीया स्वप्नं तृतीया सुषुप्तिश्चतुर्थी तुरीयम् । मात्रा मात्रा प्रति-मात्रागता सम्यक् समस्तानपि पादान् जयतीति स्वयंप्रकाश स्वयं ब्रह्म भवतीति । एष सिद्धिकर एतस्माद्ध्यानादौ प्रयुज्यते । सर्वकरणोपसहारत्वा-द्धार्यधारणाद्ब्रह्म तुरीयम् । सर्वकरणानि मनसि सप्रतिष्ठाप्य ध्यान विष्णु , प्राणं मनसि सह करणैः सप्रतिष्ठाप्य ध्याता रुद्र·, प्राणं मनसि सह करणै-

(१) शिखाउ २

(२) शिखाउ ३, श्रीकठ १।१।४ ( पृ १८७, १८९ ), १।१।७, १।२।९, १।३।२३, २।३।१४, १५, ३।२।३५, ३।३।१५, १७, ४।१।३, ८, ४।२।१६, **श्रीकर.** १।१।१ ( पृ ४, १३, १७, २७, २८ ), १।१।२ ( पृ ३५, ३६ ), १।१।४ ( पृ ४७, ५२ ), १।१।७, ८, ११, २७, ३०, ३१, १।२।३, ४, ७, १३, १।३।६, १३, २१, २४, १।४।२२, २३, २।१।१, ४, २।२।३७, ४०, ४१, ४२, २।३।८, १३, १८, २।४।१६, ३।१।७, ३।२।२६, ३५, ३।३।१५, २३, ३८, ४२, ४।१।३, ४।२।१६, ४।३।९, १६, ४।४।९, १७, १८, ४।४।२२

नीदान्ते परमात्मनि संप्रतिष्ठाप्य ध्यायीतेशानं प्रध्यायितव्यम्। सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैः। न कारणं कारणानां ध्याता। कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शम्भुराकाशमध्ये ध्रुवम्।

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरः शिव एव च।
पञ्चधा पञ्चदैवत्यं प्रणवं परिपठ्यते॥

स्वल्पाऽधिकं क्षणमेकं क्रतुशतस्यापि चतुःसप्तत्या यत्फलं तदवाप्नोति कृत्स्नमोंकारगतिं च सर्वध्यानयोगज्ञानानां यत् फलम्। ओंकारो वेदपर ईशो वा शिव एको ध्येयः शिवंकरः सर्वमन्यत्परित्यज्य। समाप्ताऽथर्वशिखा। एतामधीत्य द्विजो गर्भवासाद्विमुक्तो विमुच्यते। एतामधीत्य द्विजो गर्भवासाद्विमुक्तो विमुच्यत इति। ओं सत्यम्। इत्युपनिषत्॥ ३॥

'विपर्ययेण क्रमोऽत उपपद्यते च' — इह पूर्वाधिकरणे निरूपितः सृष्टिक्रम उपपद्यते न वेति संदेहः। नोपपद्यत इति पूर्वः पक्षः। तथा हि — मुण्डकोपनिषदि 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी॥' (मुण्ड. २।१।३) इति प्राणादीनां वियदादिभ्यः पूर्वमुत्पत्तिः श्रूयते। अथर्वशिखायां च 'ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैः' इति सहोत्पत्तिर्ब्रह्मादीनां भूतेन्द्रियाणां चाम्नायते। अत आकाशादेः पूर्वोक्तसृष्टिक्रमो नोपपद्यत इत्युच्यते। सिद्धान्तस्तु उपपद्यते पूर्वोक्तसृष्टिक्रमः। 'अन्नमयं हि सोम्य मन आपोमयः प्राणः तेजोमयी वाक्' इति प्राणादीनां भौतिकत्वश्रवणात् भूते[illegible] [illegible]। ब्रह्मादीनां सहोत्पत्तिस्तु [illegible]। अतः पूर्वोक्तक्रमे न विरोधः।

श्रीकण्ठ. २।३।१५

अथर्वशिखोपनिषत्समाप्ता।



